# THE MAHÁBHÁRATA,

## AN EPIC POEM,

WRITTEN BY

THE CELEBRATED VEDA VYA'SA RISHI.

### VOL. II.

CONTAINING

PART IV.—VIRAT PARVA.
V.—UDJO'GA PARVA.
VI.—BHISMA PARVA.
VII.—DRONA PARVA.

EDITED AND CAREFULLY COLLATED WITH THE BEST MANUSCRIPTS IN THE LIBRARY OF THE SANSCRITA COLLEGE OF CALCUTTA, BY NIMACHAND SIROMANI AND NANDA GOPA'LA PANDITS.

COMMENCED UNDER THE COMMITTEE OF PUBLIC INSTRUCTION, AND, UPON THE SUSPENSION OF ITS ORIENTAL PUBLICATIONS, COMPLETED UNDER THE AUSPICES OF THE ASIATIC SOCIETY OF BENGAL.

Calcutta:
PRINTED AT THE BAPTIST MISSION PRESS, CIRCULAR ROAD.
1836.

# श्रीमहाभारतं

श्रीमन्महर्षिवेदव्यासविरचिता

श्रीमन्महाभारतसंहिता

विराटोद्योगभीष्मद्रोणपर्व्वघटितः

द्वितीयखण्डः ।

साधारणविद्योन्नत्यर्थकसमितिधनव्ययेन मुद्रितुमारब्धस्यासमाप्तत्वात्
एसियाटिक्सोसैटाख्यगौडदेशीयसभाध्यक्षेण प्रेरितः

कलिकाताख्य राजधान्यां
एसियाटिक सोसाइटी मुद्रायन्त्रालये
मुद्रितः

तत्सम्बन्धीयपण्डिताभ्यां संशोधितश्च

शकाब्दाः १७५७
इ० १८३६

# श्रीमहाभारतं

## ॥ विराटपर्व्व ॥

॥ नमो गणेशाय ॥ नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
॥ जनमेजय उवाच ॥ कथं विराटनगरे मम पूर्व्वपितामहाः। अज्ञातवासमुषिता दुर्य्योधनभयार्द्दिताः।
पतिव्रता महाभागा सततं ब्रह्मवादिनी। द्रौपदी च कथं ब्रह्मन्नज्ञाता दुःखिताऽवसत्।
॥ वैशम्पायन उवाच ॥ यथा विराटनगरे तव पूर्व्वपितामहाः। अज्ञातवासमुषितास्तच्छृणुष्व नराधिप।
तथा तु स वराँल्लब्ध्वा धर्म्माद्धर्म्मभृतां वरः। गत्वाश्रमं ब्राह्मणेभ्य आचख्यौ सर्व्वमेव तत्।
कथयित्वा तु तत्सर्व्वं ब्राह्मणेभ्यो युधिष्ठिरः। अरणीसहितं तस्मै ब्राह्मणाय न्यवेदयत्। ५
ततो युधिष्ठिरो राजा धर्म्मपुत्त्रो महामनाः। सन्निवर्त्त्यानुजान् सर्व्वानिति होवाच भारत।
द्वादशेमानि वर्षाणि राज्यविप्रोषिता वयं। त्रयोदशोऽयं सम्प्राप्तः कृच्छ्रात् परमदुर्व्वसः।
स साधु कौन्तेय इतो वासमर्ज्जुन रोचय। सम्वत्सरमिमं यत्र वसेमाविदिताः परैः।
॥ अर्ज्जुन उवाच ॥ तस्यैव वरदानेन धर्म्मस्य मनुजाधिप। अज्ञाता विचरिष्यामो नराणां नात्र संशयः।
किन्तु वासाय राष्ट्राणि कीर्त्तयिष्यामि कानिचित्। रमणीयानि गुप्तानि तेषां किञ्चित् स्म रोचय। १०
सन्ति रम्या जनपदा बह्वन्नाः परितः कुरून्। पाञ्चालाश्चेदिमत्स्याश्च शूरसेनाः पटच्चराः।
दशार्णा नवराष्ट्राश्च मल्लाः शाल्वा युगन्धराः। कुन्तिराष्ट्रञ्च विपुलं सुराष्ट्रावन्तयस्तथा।
एतेषां कतमो राजन्निवासस्तव रोचते। यत्र वत्स्यामहे राजन् सम्वत्सरमिमं वयं।
॥ युधिष्ठिर उवाच ॥ श्रुतमेतन्महाबाहो यथा स भगवान् प्रभुः। अब्रवीत् सर्व्वभूतेशस्तत्तथा न तदन्यथा।
अवश्यन्त्वेव वासार्थं रमणीयं शिवं सुखं। सम्मन्त्र्य सहितैः सर्व्वैर्व्वस्तव्यमकुतोभयैः। १५
मत्स्यो विराटो बलवानभिरक्षोऽथ पाण्डवान्। धर्म्मशीलो वदान्यश्च वृद्धश्च सततं प्रियः।
विराटनगरे तात सम्वत्सरमिमं वयं। कुर्व्वन्तस्तस्य कर्म्माणि विहरिष्याम भारत।
यानि यानि च कर्म्माणि तस्य वक्ष्यामहे वयं। आसाद्य मत्स्यं तत् कर्म्म प्रब्रूत कुरुनन्दनाः।
॥ अर्ज्जुन उवाच ॥ नरदेव कथं तस्य राष्ट्रे कर्म्म करिष्यसि। विराटनगरे साधो रंस्यसे केन कर्म्मणा।
मृदुर्व्वदान्यो ह्रीमांश्च धार्म्मिकः सत्यविक्रमः। राजंस्त्वमापदा क्लिष्टः किन्नु करिष्यसि पाण्डव। २०

न दुःखमुचितं किञ्चिद्राजा वेद यथा जनः । स इमामापदं प्राप्य कथं घोरां तरिष्यसि ।
॥ युधिष्ठिर उवाच ॥ शृणुध्वं यत्करिष्यामि कर्म्म वै कुरुनन्दनाः । विराटमनुसम्प्राप्य राजानं पुरुषर्षभाः ।
सभास्तारो भविष्यामि तस्य राज्ञो महात्मनः । कङ्को नाम द्विजो भूत्वा मताक्षः प्रियदेवनः ।
वैदूर्य्यान् काञ्चनान् दान्तान् फलैर्ज्योतीरसैः सह । कृष्णाक्षाल्लोहिताक्षांश्च निर्व्वर्त्स्यामि मनोरमान् ।
विराटराजं रमयन् सामात्यं सहबान्धवं । न च मां वेत्स्यते कश्चित्तोषयिष्ये च तं नृपं । २५
आसं युधिष्ठिरस्याहं पुरा प्राणसमः सखा । इति वक्ष्यामि राजानं यदि मां सोऽनुयोक्ष्यते ।
इत्येतद्वो मया ख्यातं विहरिष्याम्यहं यथा । वृकोदर विराटे त्वं रंस्यसे केन हेतुना ।
इति श्रीमहाभारते विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि युधिष्ठिरादिमन्त्रणे प्रथमोऽध्यायः ॥ १ ॥
॥ भीमसेन उवाच ॥ पौरोगवो ब्रुवाणोऽहं बल्लवो नाम भारत । उपस्थास्यामि राजानं विराटमिति मे मतिः ।
सूपानस्य करिष्यामि कुशलोऽस्मि महानसे । कृतपूर्व्वाणि यान्यस्य व्यञ्जनानि सुशिक्षितैः ।
तानप्यभिभविष्यामि प्रीतिं सञ्जनयन्नहं । आहरिष्यामि दारूणां निचयान्महतोऽपि च । १०
यत्प्रेक्ष्य विपुलं कर्म्म राजा संयोक्ष्यते स मां । अमानुषाणि कुर्व्वाणस्तानि कर्म्माणि भारत ।
राज्ञस्तस्य परिप्रेष्या मंस्यन्ते मां यथा नृपं । भक्ष्यान्नरसपानानां भविष्यामि तथेश्वरः ।
द्विपा वा बलिनो राजन् वृषभा वा महाबलाः । विनिग्राह्या यदि मया निग्रहीष्यामि तानपि ।
ये च केचिन्नियोत्स्यन्ति समाजेषु नियोधकाः । तानहं निहनिष्यामि रतिं तस्य विवर्द्धयन् ।
न त्वेतान् युध्यमानान् वै हनिष्यामि कथञ्चन । अथ तान् पातयिष्यामि यथा यास्यन्ति न क्षयं । १५
आरालिको गोविकर्त्ता सूपकर्त्ता नियोधकः । आसं युधिष्ठिरस्याहमिति वक्ष्यामि पृच्छतः ।
आत्मानमात्मना रक्षंश्चरिष्यामि विशाम्पते । इत्येतत् प्रतिजानामि विहरिष्याम्यहं यथा ।
॥ युधिष्ठिर उवाच ॥ यमग्निर्ब्राह्मणो भूत्वा समागच्छन्नृणां वरं । दिधक्षुः खाण्डवं दावं दाशार्हसहितं पुरा ।
महाबलं महाबाहुमजितं कुरुनन्दनं । सोऽयं किङ्कर्म्म कौन्तेयः करिष्यति धनञ्जयः ।
सोऽयमासाद्य तं दावं तर्पयामास पावकं । विजित्यैकरथेनैव हत्वा पन्नगराक्षसान् । २०
वासुकेः सर्पराजस्य स्वसारं हृतवांश्च यः । श्रेष्ठो यः प्रतियोधानां सोऽर्ज्जुनः किङ्करिष्यति ।
सूर्य्यः प्रतपतां श्रेष्ठो द्विपदां ब्राह्मणो वरः । आशीविषश्च सर्प्पाणामग्निस्तेजस्विनां वरः ।
आयुधानां वरं वज्रं ककुद्मी च गवां वरः । ह्रदानामुदधिः श्रेष्ठः पर्ज्जन्यो वर्षतां वरः ।
धृतराष्ट्रश्च नागानां हस्तिष्वैरावणो वरः । पुत्त्रः प्रियाणामधिको भार्य्या च सुहृदां वरा ।
यथैतानि विशिष्टानि जात्यां जात्यां वृकोदर । एवं युवा गुडाकेशः श्रेष्ठः सर्व्वधनुष्मतां । २५
सोऽयमिन्द्रादनवरो वासुदेवान्महाद्युतिः । गाण्डीवधन्वा बीभत्सुः श्वेताश्वः किङ्करिष्यति ।
उषित्वा पञ्चवर्षाणि सहस्राक्षस्य वेश्मनि । अस्त्रयोगं समासाद्य स्ववीर्य्यान्मानुषाद्भुतं ।
दिव्यान्यस्त्राणि चाप्तानि देवरूपेण भास्वता । यं मन्ये द्वादशं रुद्रमादित्यानां त्रयोदशं । वसूनां नवमं मन्ये ग्रहाणां दशमं तथा ।

यस्य बाहू समौ दीर्घौ ज्याघातकठिनत्वचौ। दक्षिणे चैव सव्ये च गवामिव वहः कृतः।

हिमवानिव शैलानां समुद्रः सरितामिव। त्रिदशानां यथा शक्रो वसूनामिव हव्यवाट्। ५०

मृगाणामिव शार्दूलो गरुडः पततामिव। वरः सन्नह्यमानानां सोऽर्ज्जुनः किङ्करिष्यति।

॥ अर्ज्जुन उवाच ॥ प्रतिज्ञां षण्ढकोऽस्मीति करिष्यामि महीपते। ज्याघातौ हि महान्तौ मे संवर्त्तुं नृप दुष्करौ।

वलयैश्छादयिष्यामि बाहू किणकृताविमौ। कर्णयोः प्रतिमुच्याहं कुण्डले ज्वलनप्रभे।

पिनद्धकम्बुः पाणिभ्यां तृतीयां प्रकृतिं गतः। वेणीकृतशिरा राजन्नाम्ना चैव बृहन्नला।

पठन्नाख्यायिकाश्चैव स्त्रीभावेन पुनःपुनः। रमयिष्ये महीपालमन्यांश्चान्तःपुरे जनान्। ५५

गीतं नृत्यं विचित्रञ्च वादित्रं विविधं तथा। शिक्षयिष्याम्यहं राजन् विराटस्य पुरस्त्रियः।

प्रजानां समुदाचारं बहुकर्म्म कृतं वदन्। छादयिष्यामि कौन्तेय माययात्मानमात्मना।

युधिष्ठिरस्य गेहे वै द्रौपद्याः परिचारिका। उषिताऽस्मीति वक्ष्यामि पृष्टो राज्ञा च पाण्डव।

एतेन विधिना छन्नः कृतकेन यथाऽनलः। विहरिष्यामि राजेन्द्र विराटभवने सुखं।

इत्येवमुक्त्वा पुरुषप्रवीरस्तथाऽर्ज्जुनो धर्म्मभृतां वरिष्ठः। वाक्यं तथाऽसौ विरराम भूयो नृपोऽपरं भ्रातरमाबभाषे। ६०

इति श्रीमहाभारते विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि युधिष्ठिरादिमन्त्रणे द्वितीयोऽध्यायः॥ २ ॥

॥ युधिष्ठिर उवाच॥ किं त्वं नकुल कुर्व्वाणस्तत्र तात चरिष्यसि। कर्म्म तत् त्वं समाचक्ष्व राज्ये तस्य महीपतेः। सुकुमारश्च शूरश्च दर्शनीयः सुखोचितः।

॥ नकुल उवाच॥ अश्वबन्धो भविष्यामि विराटनृपतेरहं। सर्व्वथा ज्ञानसम्पन्नः कुशलः परिरक्षणे।

ग्रन्थिको नाम नाम्नाऽहं कर्म्मैतत् सुप्रियं मम। कुशलोऽस्म्यश्वशिक्षायां तथैवाश्वचिकित्सने।

प्रियाश्च सततं मेऽश्वाः कुरुराज यथा तव। ये मामामन्त्रयिष्यन्ति विराटनगरे जनाः।

तेभ्य एवं प्रवक्ष्यामि विहरिष्याम्यहं यथा। पाण्डवेन त्वहं तात अश्वेष्वधिकृतः पुरा। विराटनगरे छन्नश्चरिष्यामि महीपते। ६५

॥ युधिष्ठिर उवाच ॥ सहदेव कथं तस्य समीपे विहरिष्यसि। किं वा त्वं कर्म्म कुर्व्वाणः प्रच्छन्नो विहरिष्यसि।

॥ सहदेव उवाच ॥ गोसङ्ख्याता भविष्यामि विराटस्य महीपतेः। प्रतिषेद्धा च दोग्धा च सङ्ख्याने कुशलो गवां।

तन्तिपाल इतिख्यातो नाम्नाऽहं विदितस्त्वथ। निपुणञ्च चरिष्यामि व्येतु ते मानसो ज्वरः।

अहं हि सततं गोषु भवता प्रहितः पुरा। तत्र मे कौशलं सर्व्वमवबुद्धं विशाम्पते।

लक्षणञ्चरितं चापि गवां यच्चापि मङ्गलं। तत्सर्व्वं मे सुविदितमन्यच्चापि महीपते। ७०

वृषभानपि जानामि राजन् पूजितलक्षणान्। येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते।

सोऽहमेवं चरिष्यामि प्रीतिरत्र हि मे सदा। न च मां वेत्स्यते कश्चित्तोषयिष्ये च पार्थिवं।

॥ युधिष्ठिर उवाच ॥ इयं हि नः प्रिया भार्य्या प्राणेभ्योऽपि गरीयसी। मातेव परिपाल्या च पूज्या ज्येष्ठेव च स्वसा।

केन स्म द्रौपदी कृष्णा कर्म्मणा विचरिष्यति। न हि किञ्चिद्विजानाति कर्म्म कर्त्तुं यथा स्त्रियः।

सुकुमारी च बाला च राजपुत्री यशस्विनी। पतिव्रता महाभागा कथन्नु विचरिष्यति। ७५

माल्यगन्धानलङ्कारान् वस्त्राणि विविधानि च । एतान्येवाभिजानामि यतो जाता हि भाविनी ।

॥ द्रौपद्युवाच ॥ सैरिन्ध्री रक्षिता लोके भुजिष्याः सन्ति भारत । नैवमन्याः स्त्रियो यान्ति इति लोकस्य निश्चयः ।

साऽहं ब्रुवाणा सैरिन्ध्री कुशला केशकर्म्मणि । युधिष्ठिरस्य गेहे वै द्रौपद्याः परिचारिका ।

उषिताऽस्मीति वक्ष्यामि पृष्टा राज्ञा च भारत । आत्मगुप्ता चरिष्यामि यन्मां त्वं परिपृच्छसि ।

सुदेष्णां प्रत्युपस्थास्ये राजभार्य्यां यशस्विनीं । सा रक्षिष्यति मां प्राप्तां माभूत्ते दुःखमीदृशं । ८०

॥ युधिष्ठिर उवाच ॥ कल्याणं भाषसे कृष्णे कुले जाताऽसि भाविनि । न पापमभिजानासि साध्वी साधुव्रते स्थिता ।

यथा न दुर्हृदः पापा भवन्ति सुखिनः पुनः । कुर्य्यास्तथा त्वं कल्याणि लक्षयेयुर्न ते यथा ।

इति श्रीमहाभारते विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि युधिष्ठिरादिमन्त्रणे तृतीयोऽध्यायः ॥ ३ ॥

॥ युधिष्ठिर उवाच ॥ कर्म्माण्युक्तानि युष्माभिर्यानि यानि करिष्यथ । मम चापि यथा बुद्धिरुचिता विधिनिश्चयात् ।

पुरोहितोऽयमस्माकमग्निहोत्राणि रक्षतु । सूतपौरोगवैः सार्द्धं द्रुपदस्य निवेशने ।

इन्द्रसेनमुखाश्चेमे रथानादाय केवलान् । यान्तु द्वारवतीं शीघ्रमिति मे वर्त्तते मतिः । ८५

इमाश्च नार्य्यो द्रौपद्याः सर्व्वाश्च परिचारिकाः । पञ्चालानेव गच्छन्तु सूतपौरोगवैः सह ।

सर्व्वैरपि च वक्तव्यं न प्राज्ञायन्त पाण्डवाः । गता ह्यस्मानपाकीर्य्य सर्व्वे द्वैतवनादिति ।

॥ वैशम्पायन उवाच ॥ एवं तेऽन्योऽन्यमामन्त्र्य कर्म्माण्युक्त्वा पृथक्पृथक् । धौम्यमामन्त्रयामासुः स च तानब्रवीत् ।

॥ धौम्य उवाच ॥ विहितं पाण्डवाः सर्व्वं ब्राह्मणेषु सुहृत्सु च । याने प्रहरणे चैव तथैवाग्निषु भारत ।

त्वया रक्षा विधातव्या कृष्णायाः फाल्गुनेन च । विदितं वो यथा सर्व्वं लोकवृत्तमिदं तव । ९०

विदिते चापि वक्तव्यं सुहृद्भिरनुरागतः । एष धर्म्मश्च कामश्च अर्थश्चैव सनातनः ।

अतोऽहमपि वक्ष्यामि हेतुमत्र निबोधत । हन्तेमां राजवसतिं राजपुत्रा ब्रवीम्यहं ।

यथा राजकुलं प्राप्य सर्व्वान् दोषांस्तरिष्यथ । दुर्व्वसन्त्वेव कौरव्या जानता राजवेश्मनि ।

अमानितैर्म्मानितैर्व्वा अज्ञातैः परिवत्सरं । ततश्चतुर्दशे वर्षे चरिष्यथ यथासुखं ।

दिष्टद्वारो लभेत् द्रष्टुं राजस्वेषु न विश्वसेत् । तदेवासनमन्विच्छेद्यत्र नाभिषजेत् परः । ९५

यो न यानं न पर्य्यङ्कं न पीठं न गजं रथं । आरोहेत् सम्मतोऽस्मीति स राजवसतिं वसेत् ।

अथ यत्रैनमासीनं शङ्केरन् दुष्टचारिणः । न तत्रोपविशेद्यो वै स राजवसतिं वसेत् ।

न चानुशिष्याद्राजानमपृच्छन्तं कदाचन । तूष्णीं त्वेनमुपासीत काले समभिपूजयेत् ।

असूयन्ति हि राजानो जनाननृतवादिनः । तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा ।

नैषां दारेषु कुर्व्वीत मैत्रीं प्राज्ञः कदाचन । अन्तःपुरचरा ये च द्वेष्टि यानहिताश्च ये । १००

विदिते चास्य कुर्व्वीत कार्य्याणि सुलघून्यपि । एवं विचरतो राज्ञि न क्षतिर्जायते क्वचित् ।

गच्छन्नपि परां भूमिमपृष्टो ह्यनियोजितः । जात्यन्ध इव मन्येत मर्य्यादामनुचिन्तयन् ।

न हि पुत्त्रं न नप्तारं न भ्रातरमरिन्दमाः । समतिक्रान्तमर्य्यादं पूजयन्ति नराधिपाः ।

यत्नाच्चोपचरेदेनमग्निवद्देववच्चिह । अनृतेनोपचीर्णो हि हन्यादेव न संशयः ।

यद्यद्भर्त्ताऽनुयुञ्जीत तत्तदेवानुवर्त्तयेत्। प्रमादमवलेपञ्च कोपञ्च परिवर्ज्जयेत्। १०५
समर्थनासु सर्व्वासु हितञ्च प्रियमेव च। संवर्णयेत्तदेवास्य प्रियादपि हितं वदेत्।
अनुकूलो भवेच्चास्य सर्व्वार्थेषु कथासु च। अप्रियं चाहितं यत्स्यात्तदस्मै नानुवर्णयेत्।
नाहमस्य प्रियोऽस्मीति मत्वा सेवेत पण्डितः। अप्रमत्तश्च सततं हितं कुर्य्यात् प्रियञ्च यत्।
नास्यानिष्टानि सेवेत नाहितैः सह संवसेत्। स्वस्थानाच्च विकम्पेत स राजवसतिं वसेत्।
दक्षिणं वाऽथ वामं वा पार्श्वमासीत पण्डितः। रक्षिणां ह्यात्तशस्त्राणां स्थानं पश्चाद्विधीयते। ११०
नित्यं हि प्रतिषिद्धन्तु पुरस्तादासनं महत्। न च सन्दर्शने किञ्चित् प्रवृत्तमपि संजपेत्।
अपि ह्येतद्दरिद्राणां व्यलीकं स्थानमुत्तमं। न मृषाऽभिहितं राज्ञां मनुष्येषु प्रकाशयेत्।
असूयन्ति हि राजानो नराननृतवादिनः। तथैव चावमन्यन्ते नरान् पण्डितमानिनः।
शूरोऽस्मीति न दृप्तः स्याद्बुद्धिमानिति वा पुनः। प्रियमेवाचरन् राज्ञः प्रियो भवति भोगवान्।
ऐश्वर्य्यं प्राप्य दुष्प्रापं प्रियं प्राप्य च राजतः। अप्रमत्तो भवेद्राज्ञः प्रियेषु च हितेषु च। ११५
यस्य कोपो महाबाधः प्रसादश्च महाफलः। कस्तस्य मनसाऽपीच्छेदनर्थं प्राज्ञसम्मतः।
न चोष्ठौ न भुजौ जानू न च वाक्यं समाक्षिपेत्। सदा वातञ्च वाचञ्च ष्ठीवनञ्चाचरेच्छनैः।
हास्यवस्तुषु चाप्यस्य वर्त्तमानेषु केषुचित्। नातिगाढं प्रहृष्येत न चाप्युन्मत्तवद्धसेत्।
न चातिधैर्य्येण चरेद्गुरुतां हि व्रजेत्ततः। स्मितन्तु मृदुपूर्व्वेण दर्शयेदप्रमादजं।
लाभे न हर्षयेद्यस्तु न व्यथेद्योऽवमानितः। असंमूढश्च यो नित्यं स राजवसतिं वसेत्। १२०
राजानं राजपुत्त्रं वा संवर्त्तयति यः सदा। अमात्यः पण्डितो भूत्वा स चिरं तिष्ठते प्रियः।
प्रगृहीतश्च योऽमात्यो निगृहीतश्च कारणैः। न निर्वदति राजानं लभते सम्पदं पुनः।
प्रत्यक्षञ्च परोक्षञ्च गुणवादी विचक्षणः। उपजीवी भवेद्राज्ञो विषये योऽपि वा भवेत्।
अमात्यो हि बलाद्भोक्तुं राजानं प्रार्थयेत्तु यः। न स तिष्ठेच्चिरं स्थाने गच्छेच्च प्राणसंशयं।
श्रेयः सदात्मनो दृष्ट्वा परं राज्ञा न संवदेत्। विशेषयेच्च राजानं योग्यभूमिषु सर्व्वदा। १२५
अम्लानो बलवाञ्छूरश्छायेवानुगतः सदा। सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत्।
अन्यस्मिन् प्रेष्यमाणे तु पुरस्ताद्यः समुत्पतेत्। अहं किं करवाणीति स राजवसतिं वसेत्।
आन्तरे चैव बाह्ये च राज्ञा यश्चैव सर्व्वदा। आदिष्टो नैव कम्पेत स राजवसतिं वसेत्।
यो वै गृहेभ्यः प्रवसन् प्रियाणां नानुसंस्मरेत्। दुःखेन सुखमन्विच्छेत् स राजवसतिं वसेत्।
समवेशं न कुर्व्वीत नोच्चैः सन्निहितो हसेत्। न मन्त्रं बहुधा कुर्य्यादेवं राज्ञः प्रियो भवेत्। १३०
न कर्म्मणि नियुक्तः सन् धनं किञ्चिदुपस्पृशेत्। प्राप्नोति हि हरन् द्रव्यं बन्धनं यदिवा वधं।
यानं वस्त्रमलङ्कारं यच्चान्यत् सम्प्रयच्छति। तदेव धारयेन्नित्यमेवं प्रियतरो भवेत्।

एवं संयम्य चित्तानि यत्नतः पाण्डुनन्दनाः। सम्वत्सरमिमं तातास्तथाशीला बुभूषवः। अथ स्वविषयं प्राप्य यथाकामं चरिष्यथ।

॥ युधिष्ठिर उवाच ॥ अनुशिष्टाः स्म भद्रन्ते नैतद्वक्ताऽस्ति कश्चन । कुन्तीमृते मातरं नो विदुरं वा महामतिं ।
यदेवानन्तरं कार्य्यं तद्भवान् वक्तुमर्हति । तारणायास्य दुःखस्य प्रस्थानाय जयाय च । १२५
॥ वैशम्पायन उवाच ॥ एवमुक्तस्ततो राज्ञा धौम्योऽथ द्विजसत्तमः । अकरोद्विधिवत्सर्व्वं प्रस्थाने यद्विधीयते ।
तेषां समिध्य तानग्नीन्मन्त्रवच्च जुहाव सः । समृद्धिवृद्धिलाभाय पृथिवीविजयाय च ।
अग्नीन् प्रदक्षिणीकृत्य ब्राह्मणांश्च तपोधनान् । याज्ञसेनीं पुरस्कृत्य षडेवाथ प्रवव्रजुः ।
गतेषु तेषु वीरेषु धौम्योऽथ जपताम्वरः । अग्निहोत्राण्युपादाय पाञ्चालानभ्यगच्छत ।
इन्द्रसेनादयश्चैव यथोक्ताः प्राप्य यादवान् । रथानश्वांश्च रक्षन्तः सुखमूषुः सुसंवृताः । १३०
इति श्रीमहाभारते विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि धौम्योपदेशे चतुर्थोऽध्यायः ॥ ४ ॥
॥ वैशम्पायन उवाच ॥ ते वीरा बद्धनिस्त्रिंशास्तथाबद्धकलापिनः । बद्धगोधाङ्गुलित्राणाः कालिन्दीमभितो ययुः ।
ततस्ते दक्षिणं तीरमन्वगच्छन् पदातयः । निवृत्ता वनवासाद्वै स्वराष्ट्रं प्रेप्सवस्तदा ।
वसन्तो गिरिदुर्गेषु वनदुर्गेषु धन्विनः । विध्यन्तो मृगजातानि महेष्वासा महाबलाः ।
उत्तरेण दशार्णांस्ते पञ्चालान् दक्षिणेन च । अन्तरेण यकृल्लोमाञ्छूरसेनांश्च पाण्डवाः ।
लुब्धा ब्रुवाणा मत्स्यस्य विषयं प्राविशन् वनात् । धन्विनो बद्धनिस्त्रिंशा विवर्णाः श्मश्रुधारिणः । १३५
ततो जनपदं प्राप्य कृष्णा राजानमब्रवीत् । पश्यैकपद्यो दृश्यन्ते क्षेत्राणि विविधानि च ।
व्यक्तं दूरे विराटस्य राजधानी भविष्यति । वसामेहापरां रात्रिं बलवान् मे परिश्रमः ।
॥ युधिष्ठिर उवाच ॥ धनञ्जय समुद्यम्य पाञ्चालीं वह भारत । राजधान्यां निवत्स्यामो विमुक्ताश्च वनादितः ।
॥ वैशम्पायन उवाच ॥ तामादायार्ज्जुनस्तूर्णं द्रौपदीं गजराडिव । संप्राप्य नगराभ्यासमवातारयदर्ज्जुनः ।
स राजधानीं संप्राप्य कौन्तेयोऽर्ज्जुनमब्रवीत् । क्वायुधानि समासज्य प्रवेक्ष्यामः पुरं वयं । १४०
सायुधाश्च प्रवेक्ष्यामो वयं तात पुरं यदि । समुद्वेगं जनस्यास्य करिष्यामो न संशयः ।
गाण्डीवञ्च महद्गाढं लोके च विदितं नृणां । तच्चेदायुधमादाय गच्छामो नगरं वयं ।
क्षिप्रमस्मान् विजानीयुर्म्मनुष्या नात्र संशयः । ततो द्वादशवर्षाणि प्रवेष्टव्यं वने पुनः । एकस्मिन्नपि विज्ञाते प्रतिज्ञातं हि नस्तथा ।
॥ अर्ज्जुन उवाच ॥ इयं कूटे मनुष्येन्द्र गहना महती शमी । भीमशाखा दुरारोहा श्मशानस्य समीपतः ।
न चापि विद्यते कश्चित् मनुष्य इति मे मतिः । योऽस्मान्निदधतो द्रष्टा भवेच्छस्त्राणि पाण्डवाः । १४५
उत्पथे हि वने जाता मृगव्यालनिषेविते । समीपे च श्मशानस्य गहनस्य विशेषतः ।
समाधायायुधं शम्यां गच्छामो नगरं प्रति । एवमत्र यथायोगं विहरिष्याम भारत ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा स राजानं धर्म्मराजं युधिष्ठिरं । प्रचक्रमे निधानाय शस्त्राणां भरतर्षभ ।
येन देवान्मनुष्यांश्च सर्व्वांश्चैकरथोऽजयत् । स्फीतान् जनपदांश्चान्यानजयत् कुरुपुङ्गवः ।
तदुदारं महाघोषं सपत्नबलसूदनं । अपज्यमकरोत् पार्थो गाण्डीवं सुभयङ्करं । १५०
येन वीरः कुरुक्षेत्रमभ्यरक्षत् परन्तपः । अमुञ्चद्धनुषस्तस्य ज्यामक्षय्यां युधिष्ठिरः ।

पाञ्चालान् येन सङ्ग्रामे भीमसेनोऽजयत्प्रभुः। प्रत्यषेधद्बहूनेकः सपत्नांश्चैव दिग्जये।
निशम्य यस्य विस्फारं व्यद्रवन्त रणात् परे। पर्व्वतस्येव दीर्णस्य विस्फोटमशनेरिव।
सैन्धवं येन राजानं पर्य्यामृषत चानघः। ज्यापाशं धनुषस्तस्य भीमसेनोऽवतारयत्।
अजयत्पश्चिमामाशां धनुषा येन पाण्डवः। माद्रीपुत्रो महाबाहुस्ताम्राक्षो मितभाषिता। १६५
तस्य मौर्व्वीमपाकर्षच्छूरः सङ्क्रन्दनो युधि। कुले नास्ति समो रूपे यस्येति नकुलः स्मृतः।
दक्षिणां दक्षिणाचारो दिशं येनाजयत् प्रभुः। अपज्यमकरोद्वीरः सहदेवस्तदायुधं।
खड्गांश्च दीप्तान् दीर्घांश्च कलापांश्च महाधनान्। विपाठान् क्षुरधारांश्च धनुर्भिर्निदधुः सह।
॥ वैशम्पायन उवाच॥ अथान्वशासन्नकुलं कुन्तीपुत्रो युधिष्ठिरः। आरुह्येमां शमीं वीर धनूंष्येतानि निक्षिप।
तामुपारुह्य नकुलो धनूंषि निदधे स्वयं। यानि तस्यावकाशानि दिव्यरूपाण्यमन्यत। १७०
यत्र चापश्यत स वै तिरोवर्षाणि वर्षति। तत्र तानि दृढैः पाशैः सुगाढं पर्य्यबन्धत।
शरीरञ्च मृतस्यैकं समबध्नन्त पाण्डवाः। विवर्ज्जयिष्यन्ति नरा दूरादेव शमीमिमां।
आबद्धं शवमत्रेति गन्धमाघ्राय पूतिकं। अशीतिशतवर्षेयं माता न इति वादिनः।
कुलधर्म्मोऽयमस्माकं पूर्व्वैराचरितोऽपि वा। समासज्याथ वृक्षेऽस्मिन्निति वै व्याहरन्ति ते।
आगोपालाविपालेभ्य आचक्षाणाः परन्तप। आजग्मुर्नगराभ्याशं पार्थाः शत्रुनिबर्हणाः। १७५
जयो जयन्तो विजयो जयत्सेनो जयद्बलः। इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः।
ततो यथाप्रतिज्ञाभिः प्राविशन्नगरं महत्। अज्ञातचर्य्यां वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशं।
इति श्रीमहाभारते विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि अस्त्रसंस्थापने पञ्चमोऽध्यायः॥ ५॥
॥ वैशम्पायन उवाच॥ विराटनगरं रम्यं गच्छमानो युधिष्ठिरः। अस्तुवन्मनसा देवीं दुर्गां त्रिभुवनेश्वरीं।
यशोदागर्भसम्भूतां नारायणवरप्रियां। नन्दगोपकुले जातां मङ्गल्यां कुलवर्द्धनीं।
कंसविद्रावणकरीमसुराणां क्षयङ्करीं। शिलातटविनिक्षिप्तामाकाशं प्रति गामिनीं। १८०
वासुदेवस्य भगिनीं दिव्यमाल्यविभूषितां। दिव्याम्बरधरां देवीं खड्गखेटकधारिणीं।
भारावतरणे पुण्ये ये स्मरन्ति सदा शिवां। तान् वै तारयते पापात्पङ्के गामिव दुर्ब्बलां।
स्तोतुं प्रचक्रमे भूयो विविधैः स्तोत्रसम्भवैः। आमन्त्र्य दर्शनाकाङ्क्षी राजा देवीं सहानुजः।
नमोऽस्तु वरदे कृष्णे कुमारि ब्रह्मचारिणि। बालार्कसदृशाकारे पूर्णचन्द्रनिभानने।
चतुर्भुजे चतुर्व्वक्त्रे पीनश्रोणिपयोधरे। मयूरपिच्छवलये केयूराङ्गदधारिणि। १८५
भासि देवि यथापद्मा नारायणपरिग्रहः। स्वरूपं ब्रह्मचर्य्यञ्च विशदं तव खेचरि।
कृष्णच्छविसमा कृष्णा सङ्कर्षणसमानना। बिभ्रती विपुलौ बाहू शक्रध्वजसमुच्छ्रयौ।
पात्री च पङ्कजी घण्टी स्त्रीविशुद्धा च या भुवि। पाशन्धनुर्महाचक्रं विविधान्यायुधानि च।
कुण्डलाभ्यां सुपूर्णाभ्यां कर्णाभ्याञ्च विभूषिता। चन्द्रविस्पर्द्धिना देवि मुखेन त्वं विराजसे।
मुकुटेन विचित्रेण केशबन्धेन शोभिना। भुजङ्गाभोगवासेन श्रोणिसूत्रेण राजता। १९०

विभ्राजसे चावबद्धेन भोगेनेवेह मन्दरः । ध्वजेन शिखिपिच्छानामुच्छ्रितेन विराजसे ।
कौमारं व्रतमास्थाय त्रिदिवं पावितं त्वया । तेन त्वं स्तूयसे देवि त्रिदशैः पूज्यसेऽपि च ।
त्रैलोक्यरक्षणार्थाय महिषासुरनाशिनि । प्रसन्ना मे सुरश्रेष्ठे दयां कुरु शिवा भव ।
जया त्वं विजया चैव सङ्ग्रामे च जयप्रदा । ममापि विजयं देहि वरदा त्वञ्च साम्प्रतं ।
विन्ध्ये चैव नगश्रेष्ठे तव स्थानं हि शाश्वतं । कालि कालि महाकालि सीधुमांसपशुप्रिये । १९५
कृतानुयात्रा भूतैस्त्वं वरदा कामचारिणि । भारावतारे ये च त्वां संस्मरिष्यन्ति मानवाः ।
प्रणमन्ति च ये त्वां हि प्रभाते तु नरा भुवि । न तेषां दुर्लभं किञ्चित् पुत्रतो धनतोऽपि वा ।
दुर्गात्तारयसे दुर्गे तत्त्वं दुर्गा स्मृता जनैः । कान्तारेष्ववसन्नानां मग्नानाञ्च महार्णवे ।
दस्युभिर्वा निरुद्धानां त्वं गतिः परमा नृणां । जलप्रतरणे चैव कान्तारेष्वटवीषु च ।
ये स्मरन्ति महादेवि न च सीदन्ति ते नराः । त्वं कीर्त्तिः श्रीर्धृतिः सिद्धिर्ह्रीर्विद्या सन्ततिर्मतिः । २००
सन्ध्या रात्रिः प्रभा निद्रा ज्योत्स्ना कान्तिः क्षमा दया । नृणाञ्च बन्धनं मोहं पुत्रनाशं धनक्षयं । व्याधिं मृत्युं भयञ्चैव पूजिता नाशयिष्यसि ।
सोऽहं राज्यात् परिभ्रष्टः शरणं त्वां प्रपन्नवान् । प्रणतश्च यथा मूर्द्ध्ना तव देवि सुरेश्वरि ।
त्राहि मां पद्मपत्राक्षि सत्ये सत्या भवस्व नः । शरणं भव मे दुर्गे शरण्ये भक्तवत्सले ।
एवं स्तुता हि सा देवी दर्शयामास पाण्डवं । उपगम्य तु राजानमिदं वचनमब्रवीत् ।
॥ देव्युवाच ॥ शृणु राजन्महाबाहो मदीयं वचनं प्रभो । भविष्यत्यचिरादेव सङ्ग्रामे विजयस्तव । २०५
मम प्रसादान्निर्ज्जित्य हत्वा कौरववाहिनीं । राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे मेदिनीं पुनः ।
भ्रातृभिः सहितो राजन् प्रीतिं प्राप्स्यसि पुष्कलां । मत्प्रसादाच्च ते सौख्यमारोग्यञ्च भविष्यति ।
ये च सङ्कीर्त्तयिष्यन्ति लोके विगतकल्मषाः । तेषां तुष्टा प्रदास्यामि राज्यमायुर्व्वपुः सुतं ।
प्रवासे नगरे वाऽपि सङ्ग्रामे शत्रुसङ्कटे । अटव्यां दुर्गकान्तारे सागरे गहने गिरौ ।
ये स्मरिष्यन्ति मां राजन् यथाऽहं भवता स्मृता । न तेषां दुर्लभं किञ्चिदस्मिंल्लोके भविष्यति । २१०
इदं स्तोत्रवरं भक्त्या शृणुयाद्वा पठेत वा । तस्य सर्व्वाणि कार्य्याणि सिद्धिं यास्यन्ति पाण्डवाः ।
मत्प्रसादाच्च वः सर्व्वान् विराटनगरे स्थितान् । न प्रज्ञास्यन्ति कुरवो नरा वा तन्निवासिनः ।
इत्युक्त्वा वरदा देवी युधिष्ठिरमरिन्दमं । रक्षां कृत्वा च पाण्डूनां तत्रैवान्तरधीयत ।
इति श्रीमहाभारते विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि श्रीदुर्गास्तवे षष्ठोऽध्यायः ॥ ६ ॥

॥ वैशम्पायन उवाच ॥ ततो विराटं प्रथमं युधिष्ठिरो राजा सभायामुपविष्टमाव्रजत् । वैदूर्य्यरूपान् प्रतिमुच्य काञ्चनान् क्षान् स कक्षे परिगृह्य वाससा । २११
नराधिपो राष्ट्रपतिं यशस्विनं महायशाः कौरववंशवर्द्धनः । महानुभावो नरराजसत्कृतो दुरासदस्तीक्ष्णविषो यथोरगः ।
बलेन रूपेण नरर्षभो महानपूर्व्वरूपेण यथाऽमरस्तथा । महाभ्रजालैरिव संवृतो रविर्यथाऽनलो भस्मवृतश्च वीर्य्यवान् ।
तमापतन्तं प्रसमीक्ष्य पाण्डवं विराटराडिन्दुमिवाभ्रसंवृतं । सभागतं पूर्णशशिप्रभाननं महानुभावं नचिरेण दृष्टवान् ।

मन्त्रिद्विजान् सूतमुखान् विशस्तथा ये चापि केचित् परितः समासते। पप्रच्छ कोऽयं प्रथमं समेयिवान् नृपोपमोऽयं समवेक्षते सभां।

न तु द्विजोऽयं भविता नरोत्तमः पतिः पृथिव्या इति मे मनोगतं। न चास्य दासो न रथो न कुञ्जरः समीपतो भ्राजति चायमिन्द्रवत्।

शरीरलिङ्गैरुपसूचितो ह्ययं मूर्द्धाभिषिक्तोऽयमिति मे मनोगतं। समीपमायाति च मे गतव्यथो यथा गजस्तामरसीं मदोत्कटः। २२०

वितर्कयन्तन्तु नरर्षभस्तथा युधिष्ठिरोऽभ्येत्य विराटमब्रवीत्। सम्राड्विजानात्विह जीवनार्थिनं विनष्टसर्व्वस्वमुपागतं द्विजं।

इहाहमिच्छामि तवानघान्तिके वस्तुं यथा कामचरस्तथा विभो। तमब्रवीत् स्वागतमित्यनन्तरं राजा प्रहृष्टः प्रतिसङ्गृहाण च।

तं राजसिंहं प्रतिगृह्य राजा प्रीत्यात्मना चैवमिदं बभाषे। कामेन ताताभिवदाम्यहं त्वां कस्यासि राज्ञो विषयादिहागतः। गोत्रञ्च नामापि च शंस तत्त्वतः किं चाऽपि शिल्पं तव विद्यते कृतं।

॥ युधिष्ठिर उवाच ॥ युधिष्ठिरस्यासमहं पुरा सखा वैयाघ्रपद्यः पुनरस्मि विप्रः। अक्षान् प्रवेप्तुं कुशलोऽस्मि देविता कङ्केति नाम्नाऽस्मि विराट विश्रुतः।

॥ विराट उवाच ॥ ददानि ते हन्त वरं यमिच्छसि प्रशाधि मत्स्यान् वशगो ह्यहं तव। प्रियाश्च धूर्त्ता मम देविनः सदा भवांश्च देवोपम राज्यमर्हति। २२५

॥ युधिष्ठिर उवाच ॥ आप्तो विवादः प्रथमं विशाम्पते न विद्यते कश्चन मत्स्य हीनतः। न मे जितः कश्चन धारयेद्धनं वरो ममैषोऽस्तु तव प्रसादजः।

॥ विराट उवाच ॥ हन्यामवध्यं यदि तेऽप्रियञ्चरेत् प्रव्राजयेयं विषयाद्द्विजांस्तथा। शृण्वन्तु मे जानपदाः समागताः कङ्को यथाऽहं विषये प्रभुस्तथा।

समानयानो भविताऽसि मे सखा प्रभूतवस्त्रो बहुपानभोजनः। पश्येस्त्वमन्तश्च बहिश्च सर्व्वदा कृतञ्च ते द्वारमपावृतं मया।

ये त्वाऽनुवादेयुरवृत्तिकर्षिता ब्रूयाश्च तेषां वचनेन मां सदा। दास्यामि सर्व्वं तदहं न संशयो न ते भयं विद्यति सन्निधौ मम।

॥ वैशम्पायन उवाच ॥ एवं स लब्ध्वा तु वरं समागमं विराटराजेन नरर्षभस्तदा। उवास धीरः परमार्चितः सुखी न चापि कश्चिच्चरितं बुबोध तत्। २३०

इति श्रीमहाभारते विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि युधिष्ठिरप्रवेशे सप्तमोऽध्यायः॥ ७॥

॥ वैशम्पायन उवाच ॥ अथापरो भीमबलः श्रिया ज्वलन्नुपाययौ सिंहविलासविक्रमः। खजाञ्च दर्व्वीञ्च करेण धारयन्नसिञ्च कालाङ्गमकोशमव्रणं।

स सूदरूपः परमेण वर्च्चसा रविर्यथा लोकमिमं प्रकाशयन्। सुकृष्णवासा गिरिराजसारवांस्तं मत्स्यराजं समुपेत्य तस्थिवान्।

तं प्रेक्ष्य राजानमिवान्तिकागतं ततोऽब्रवीज्जानपदान् समागतान्। सिंहोन्नतांसोऽयमतीव रूपवान् प्रदृश्यते को नु नरर्षभो युवा।

अदृष्टपूर्व्वः पुरुषो रविर्यथा वितर्कयन्नास्य लभामि निश्चयं। तथाऽस्य चित्तं ह्यपि संवितर्कयन्नरर्षभस्यास्य न यामि तत्त्वतः।

दृष्ट्वैव चैनं न विचारयाम्यहं गन्धर्व्वराजो यदि वा पुरन्दरः । जानीत कोऽयं मम दर्शने स्थितो यदीप्सितं तल्लभतां च मा चिरं । २२५

विराटवाक्येन च तेन चोदिता नरा विराटस्य सुशीघ्रगामिनः । उपेत्य कौन्तेयमथाब्रुवंस्तदा यथा स राजाऽवदद्च्युतानुजं ।

ततो विराटं समुपेत्य पाण्डवस्त्वदीनरूपं वचनं महामनाः । उवाच सूदोऽस्मि नरेन्द्र बल्लवो भजस्व मां व्यञ्जनकारमुत्तमं ।

॥ विराट उवाच ॥ न सूदतां बल्लव श्रद्दधामि ते सहस्रनेत्रप्रतिमो विराजसे । श्रिया च रूपेण च विक्रमेण च प्रभासि त्वं नृवरो नरेष्विव ।

॥ भीम उवाच ॥ नरेन्द्र सूदः परिचारकोऽस्मि ते जानामि सूपान् प्रथमं न केवलान् । आस्वादिता ये नृपते पुराऽभवन् युधिष्ठिरेणापि नृपेण सर्व्वशः ।

बलेन तुल्यश्च न विद्यते मया नियुद्धशीलश्च सदैव पार्थिव । गजैश्च सिंहैश्च समेयिवानहं सदा करिष्यामि तवानघ प्रियं । २३०

॥ विराट उवाच ॥ ददामि ते हन्त वरान्महानसे तथाऽधिकुर्य्याः कुशलं प्रभाषसे । न चैव मन्ये तव कर्म्म यत्समं समुद्रनेमिं पृथिवीं त्वमर्हसि ।

यथाहि कामो भवतस्तथा कृतं महानसे त्वं भव मे पुरस्कृतः । नराश्च ये तत्र समाहिताः पुरा भवांश्च तेषामधिपो मया कृतः ।

॥ वैशम्पायन उवाच ॥ तथा स भीमो विहितो महानसे विराटराज्ञो दयितोऽभवद्दृढं । उवास राजन्न च तं पृथग्जनो बुबोध तत्रानुचराश्च केचन ।

इति श्रीमहाभारते विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि भीमप्रवेशे अष्टमोऽध्यायः ॥ ८ ॥

॥ वैशम्पायन उवाच ॥ ततः केशान् समुत्क्षिप्य वेल्लिताग्राननिन्दितान् । कृष्णान् सूक्ष्मान् मृदून् दीर्घान् समुद्ग्रथ्य शुचिस्मिता ।

जुगूहे दक्षिणे पार्श्वे मृदूनसितलोचना । वासश्च परिधायैकं कृष्णा सुमलिनं महत् । २३५

कृत्वा वेशञ्च सैरिन्ध्र्यास्ततो व्यचरदार्त्तवत् । तां नराः परिधावन्तः स्त्रियश्च समुपाद्रवन् ।

अपृच्छंश्चैव तां दृष्ट्वा का त्वं किञ्च चिकीर्षसि । सा तानुवाच राजेन्द्र सैरिन्ध्र्यहमिहागता ।

कर्म्म चेच्छामि वै कर्त्तुं तस्य यो मां युयुक्षति । तस्या रूपेण वेशेन श्लक्ष्णया च तथा गिरा ।

न श्रद्दधत तां दासीमन्नहेतोरुपस्थितां । विराटस्य तु कैकेयी भार्य्या परमसम्मता ।

आलोकयन्ती ददृशे प्रासादाद्द्रुपदात्मजां । सा समीक्ष्य तथारूपामनाथामेकवाससं । २४०

समाहूयाब्रवीद्भद्रे का त्वं किञ्च चिकीर्षसि । सा तामुवाच राजेन्द्र सैरिन्ध्र्यहमुपागता । कर्म्म चेच्छाम्यहं कर्त्तुं तस्य यो मां युयुक्षति ।

॥ सुदेष्णोवाच ॥ नैवंरूपा भवन्त्येव यथा वदसि भाविनि । प्रेषयन्ती च वै दासीर्दासांश्च विविधान्बहून् ।

नोच्चगुल्फा संहतोरुस्त्रिगम्भीरा षडुन्नता । रक्ता पञ्चसु रक्तेषु हंसगद्गदभाषिणी ।

सुकेशी सुस्तनी श्यामा पीनश्रोणिपयोधरा । तेन तेनैव सम्पन्ना काश्मीरीव तुरङ्गमी ।

अरालपक्ष्मनयना बिम्बोष्ठी तनुमध्यमा । कम्बुग्रीवा गूढशिरा पूर्णचन्द्रनिभानना । २४५

शारदोत्पलपत्राक्षी शारदोत्पलगन्धया। शारदोत्पलसेविन्या रूपेण सदृशी श्रिया।
का त्वं ब्रूहि यथा भद्रे नासि दासी कथञ्चन। यक्षी वा यदि वा देवी गन्धर्व्वी यदि वाऽप्सराः।
देवकन्या भुजङ्गी वा नगरस्याथ देवता। विद्याधरी किन्नरी वा यदि वा रोहिणी स्वयं।
अलम्बुषा मिश्रकेशी पुण्डरीकाऽथ मालिनी। इन्द्राणी वारुणी वा त्वं त्वष्टुर्धातुः प्रजापतेः। देव्यो देवेषु विख्यातास्तासां त्वं कतमा शुभे।
॥ द्रौपद्युवाच॥ नास्मि देवी न गन्धर्व्वी नासुरी न च राक्षसी। सैरिन्ध्री तु भुजिष्याऽस्मि सत्यमेतद्ब्रवीमि ते। २१०
केशान् जानाम्यहं कर्त्तुं पिंषे साधु विलेपनं। मल्लिकोत्पलपद्मानां चम्पकानां तथा शुभे।
ग्रन्थयिष्ये विचित्राश्च स्रजः परमशोभनाः। आराधयं सत्यभामां कृष्णस्य महिषीं प्रियां।
कृष्णाञ्च भार्य्यां पाण्डूनां कुरूणामेकसुन्दरीं। तत्र तत्र चराम्येवं लभमाना सुभोजनं।
वासांसि यावन्ति लभे तावत्तावद्रमे तथा। मालिनीत्येव मे नाम स्वयं देवी चकार सा। साऽहमद्यागता देवि सुदेष्णे त्वन्निवेशनं।
॥ सुदेष्णोवाच॥ मूर्ध्नि त्वां वासयेयं वै संशयो मे न विद्यते। न चेदिच्छति राजा त्वां गच्छेत् सर्व्वेण चेतसा। २१५
स्त्रियो राजकुले याश्च याश्चेमा मम वेश्मनि। प्रसक्तास्त्वां निरीक्षन्ते पुमांसं कं न मोहयेः।
वृक्षांश्चावस्थितान् पश्य य इमे मम वेश्मनि। तेऽपि त्वां सन्नमन्तीव पुमांसं कं न मोहयेः।
राजा विराटः सुश्रोणि दृष्ट्वा वपुरमानुषं। विहाय मां वरारोहे गच्छेत् सर्व्वेण चेतसा।
यं हि त्वमनवद्याङ्गी तरलायतलोचने। प्रसक्तमभिवीक्षेथाः स कामवशगो भवेत्।
यश्च त्वां सततं पश्येत् पुरुषश्चारुहासिनि। एवं सर्व्वानवद्याङ्गि स चानङ्गवशो भवेत्। २२०
अध्यारोहेद्यथा वृक्षान्वधायैवात्मनो नरः। राजवेश्मनि ते सुभ्रु रोहितं स्यात्तथा मम।
यथा च कर्कटी गर्भमाधत्ते मृत्युमात्मनः। तथाविधमहं मन्ये वासं तव शुचिस्मिते।
॥ द्रौपद्युवाच॥ नास्मि लभ्या विराटेन न चान्येन कदाचन। गन्धर्व्वाः पतयो मह्यं युवानः पञ्च भाविनि।
पुत्रा गन्धर्व्वराजस्य महासत्त्वस्य कस्यचित्। रक्षन्ति ते च मां नित्यं दुःखाचारा तथा न्वहं।
यो मे न दद्यादुच्छिष्टं न च पादौ प्रधावयेत्। प्रीयेरंस्तेन वासेन गन्धर्व्वाः पतयो मम। २२५
यो हि मां पुरुषो गृध्येद्यथाऽन्याः प्राकृताः स्त्रियः। तामेव निवसेद्रात्रिं प्रविश्य च परां तनुं।
न चाप्यहं चालयितुं शक्या केनचिदङ्गने। दुःखशीला हि गन्धर्व्वास्ते च मे बलवत्प्रियाः। प्रच्छन्नाश्चापि रक्षन्ति ते मां नित्यं शुचिस्मिते।
॥ सुदेष्णोवाच॥ एवं त्वां वासयिष्यामि यथा त्वं नन्दिनीच्छसि। न च पादौ न चोच्छिष्टं प्रक्ष्यसि त्वं कथञ्चन।
॥ वैशम्पायन उवाच॥ एवं कृष्णा विराटस्य भार्य्यया परिसान्त्विता। उवास नगरे तस्मिन् पतिधर्म्मवती सती। न चैनां वेद तत्रान्यस्तत्त्वेन जनमेजय।
इति श्रीमहाभारते विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि द्रौपदीप्रवेशे नवमोऽध्यायः॥ ९॥
॥ वैशम्पायन उवाच॥ सहदेवोऽपि गोपानां कृत्वा वेशमनुत्तमं। भाषाञ्चैषां समास्थाय विराटं समुपाययौ। २३०

गोष्ठमासाद्य तिष्ठन्तं भवनस्य समीपतः। राजाऽथ दृष्ट्वा पुरुषान् प्राहिणोज्जातविस्मयः।

तमायान्तमभिप्रेक्ष्य भ्राजमानं नरर्षभं। समुपस्थाय वै राजा पप्रच्छ कुरुनन्दनं।

कस्य वा त्वं कुतो वा त्वं किं वा तात चिकीर्षसि। न हि मे दृष्टपूर्व्वस्त्वं तत्त्वं ब्रूहि नरर्षभ।

सम्प्राप्य राजानममित्रतापनं ततोऽब्रवीन्मेघमहौघनिस्वनः। वैश्योऽस्मि नाम्नाऽहमरिष्टनेमिर्गोसङ्ख्य आसं कुरुपुङ्गवानां।

वस्तुं त्वयीच्छामि विशां वरिष्ठ तान् राजसिंहान्नहि वेद्मि पार्थान्। न शक्यते जीवितुमन्यकर्म्मणा न च त्वदन्यो मम रोचते नृपः। ८५

॥ विराट उवाच॥ त्वं ब्राह्मणो यदि वा क्षत्रियोऽसि समुद्रनेमीश्वररूपवानसि। आचक्ष्व मे तत्त्वममित्रकर्षण न वैश्यकर्म्म त्वयि विद्यते क्षमं।

कस्यासि राज्ञो विषयादिहागतः किं वाऽपि शिल्पं तव विद्यते कृतं। कथं त्वमस्मासु निवत्स्यसे सदा वदस्व किञ्चापि तवेह वेतनं।

॥ सहदेव उवाच॥ पञ्चानां पाण्डुपुत्राणां ज्येष्ठो भ्राता युधिष्ठिरः। तस्याष्टशतसाहस्रा गवां वर्गाः शतं शतं।

अपरे दशसाहस्रा द्विस्तावन्तस्तथा परे। तेषां गोसङ्ख्य आसं वै तन्तिपालेति मां विदुः।

भूतं भव्यं भविष्यञ्च यच्च सङ्ख्यागतं गवां। न मेऽस्त्यविदितं किञ्चित् समन्ताद्दशयोजनं। ९०

गुणाः सुविदिता ह्यासन्मम तस्य महात्मनः। आसीच्च स मया तुष्टः कुरुराजो युधिष्ठिरः।

क्षिप्रञ्च गावो बहुला भवन्ति न तासु रोगो भवतीह कश्चन। तैस्तैरुपायैर्व्विदितं ममैतदेतानि शिल्पानि मयि स्थितानि।

ऋषभांश्चापि जानामि राजन् पूजितलक्षणान्। येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते।

॥ विराट उवाच॥ शतं सहस्राणि समाहितानि सवर्णवर्णस्य विमिश्रितान् गुणैः। पशून् सपालान् भवते ददाम्यहं त्वदाश्रया मे पशवो भवन्त्विह।

॥ वैशम्पायन उवाच॥ तथा स राज्ञो विदितो विशाम्पतेरुवास तत्रैव सुखं नरोत्तमः। न चैनमन्येऽपि विदुः कथञ्चन प्रादाच्च तस्मै भरणं यथेप्सितं। ९५

इति श्रीमहाभारते विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि सहदेवप्रवेशे दशमोऽध्यायः॥ १०॥

॥ वैशम्पायन उवाच॥ अथापरोऽदृश्यत रूपसम्पदा स्त्रीणामलङ्कारधरो बृहत्पुमान्। प्राकारवप्रे प्रतिमुच्य कुण्डले दीर्घे च कम्बूपरि हाटके शुभे।

बहूंश्च दीर्घान् प्रविकीर्य्य मूर्द्धजान्महाभुजो वारणतुल्यविक्रमः। गतेन भूमिं प्रतिकम्पयंस्तदा विराटमासाद्य सभासमीपतः।

तं प्रेक्ष्य राजोपगतं सभातले व्याजात् प्रतिच्छन्नमरिप्रमाथिनं। विराजमानं परमेण वर्चसा सुतं महेन्द्रस्य गजेन्द्रविक्रमं।

सर्व्वानपृच्छच्च सभाऽनुचारिणः कुतोऽयमायाति पुरा न मे श्रुतः। न चैनमूचुर्व्विदितं तदा नराः सविस्मयं वाक्यमिदं नृपोऽब्रवीत्। १००

सत्त्वोपपन्नः पुरुषोऽमरोपमः श्यामो युवा वारणयूथपोपमः। आमुच्य कम्बूपरि हाटके शुभे विमुच्य वेणीमपिनह्य कुण्डले।

स्रग्वी सुकेशः परिधाय चान्यथा समुद्गतो धन्वी कवची शरी तथा। आरुह्य यानं परिधावतां भवान् सुतैः समो मे भव वा मया समः।

वृद्धो ह्यहं वै परिहर्त्तुकामः सर्व्वान् मत्स्यांस्तरसा पालयस्व। नैवंविधाः क्लीवरूपा भवन्ति कथञ्चनेति प्रतिभाति मे मनः।

॥ अर्ज्जुन उवाच॥ गायामि नृत्याम्यथ वादयामि भद्रोऽस्मि नृत्ये कुशलोऽस्मि गीते। त्वमुत्तरायै प्रदिशस्व मां स्वयं भवामि देव्या नरदेव नर्त्तकः। ३०५

इदन्तु रूपं मम येन किन्तव प्रकीर्त्तयित्वा भृशशोकवर्द्धनं। बृहन्नलां मां नरदेव विद्धि सुतं सुतां वा पितृमातृवर्ज्जितां।

॥ विराट उवाच॥ ददामि ते हन्त वरं बृहन्नले सुताञ्च मे नर्त्तय याश्च तादृशीः। इदन्तु ते कर्म्म समं न मे मतं समुद्रनेमिं पृथिवीं त्वमर्हसि।

॥ वैशम्पायन उवाच॥ बृहन्नलां तामभिवीक्ष्य मत्स्यराट् कलासु नृत्येषु तथैव वादिते। सम्मन्त्र्य राजा विविधैः स्वमन्त्रिभिः परीक्ष्य चैनं प्रमदाभिराशु वै।

अपुंस्त्वमप्यस्य निशम्य च स्थिरं ततः कुमारीपुरमुत्ससर्ज्ज तं। स शिक्षयामास च गीतवादितं सुतां विराटस्य धनञ्जयः प्रभुः।

सखीश्च तस्याः परिचारिकास्तथा प्रियश्च तासां स बभूव पाण्डवः। ३१०

तथा स सत्रेण धनञ्जयो वसन् प्रियाणि कुर्व्वन् सह ताभिरात्मवान्। तथागतं तत्र न जज्ञिरे जना बहिश्चरा वाऽप्यथ वाऽन्तरेचराः।

इति श्रीमहाभारते विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि अर्ज्जुनप्रवेशे एकादशोऽध्यायः॥ ११ ॥

॥ वैशम्पायन उवाच॥ अथापरोऽदृश्यत पाण्डवः प्रभुर्विराटराजं तरसा समेयिवान्। तमापतन्तं ददृशे पृथग्जनो विमुक्तमभ्रादिव सूर्य्यमण्डलं।

स वै हयानैक्षत तांस्ततस्ततः समीक्षमाणञ्च ददर्श मत्स्यराट्। ततोऽब्रवीत्ताननुगान्नरेश्वरः कुतोऽयमायाति नरोऽमरप्रभः।

अयं हयानीक्षति मामकान् दृढं ध्रुवं हयज्ञो भविता विचक्षणः। प्रवेश्यतामेष समीपमाशु मे विभाति वीरो हि यथाऽमरस्तथा।

अभ्येत्य राजानममित्रहाऽब्रवीज्जयोऽस्तु ते पार्थिव भद्रमस्तु च। हयेषु युक्तो नृप सम्मतः सदा तवाश्वसूतो निपुणो भवाम्यहं। ३१५

॥ विराट उवाच॥ ददामि यानानि धनं निवेशनं ममाश्वसूतो भवितुं त्वमर्हसि। कुतोऽसि कस्यासि कथं त्वमागतः प्रब्रूहि शिल्पं तव विद्यते च यत्।

॥ नकुल उवाच॥ पञ्चानां पाण्डुपुत्राणां ज्येष्ठो भ्राता युधिष्ठिरः। तेनाहमश्वेषु पुरा नियुक्तः शत्रुकर्षण।
अश्वानां प्रकृतिं वेद्मि विनयञ्चापि सर्व्वशः। दुष्टानां प्रतिपत्तिञ्च कृत्स्नञ्चैव चिकित्सितं।

न कातरं स्यान्मम जातु वाहनं न मेऽस्ति दुष्टा वडवा कुतो हयाः। जनस्तु मामाह स चापि पाण्डवो युधिष्ठिरो ग्रन्थिकमेव नामतः।

॥ विराट उवाच ॥ यदस्ति किञ्चिन्मम वाजिवाहनं तदस्तु सर्व्वं त्वदधीनमद्य वै। ये चापि केचिन्मम वाजियोजकास्त्वदाश्रयाः सारथयश्च सन्तु मे। २९०

इदं तवेष्टं यदि वै सुरोपम ब्रवीहि यत्ते प्रसमीक्षितं वसु। न तेऽनुरूपं हयकर्म्म विद्यते प्रभासि राजेव हि सम्मतो मम।

युधिष्ठिरस्येव हि दर्शनेन मे समन्तवेदं प्रियमत्र दर्शनं। कथन्तु भृत्यैः स विनाकृतो वने वसत्यनिन्द्यो रमते च पाण्डवः।

॥ वैशम्पायन उवाच ॥ तथा स गन्धर्व्ववरोपमो युवा विराटराज्ञा मुदितेन पूजितः। न चैनमन्येऽपि विदुः कथञ्चन प्रियाभिरामं विचरन्तमन्तरा।

एवं हि मत्स्ये न्यवसन्त पाण्डवा यथाप्रतिज्ञाभिरमोघदर्शनाः। अज्ञातचर्य्यां व्यचरन् समाहिताः समुद्रनेमीपतयोऽतिदुःखिताः।

इति श्रीमहाभारते विराटपर्व्वणि पाण्डवप्रवेशपर्व्वणि नकुलप्रवेशे द्वादशोऽध्यायः समाप्तञ्च पाण्डवप्रवेशपर्व्व॥ १२ ॥

## ॥ अथ समयपालनपर्व्व ॥ १ ॥

॥ जनमेजय उवाच ॥ एवं ते मत्स्यनगरे प्रच्छन्नाः कुरुनन्दनाः। अत ऊर्द्ध्वं महावीर्य्याः किमकुर्व्वत वै द्विज। २९५

॥ वैशम्पायन उवाच ॥ एवं मत्स्यस्य नगरे प्रच्छन्नाः कुरुनन्दनाः। आराधयन्तो राजानं यदकुर्व्वत तच्छृणु।

तृणविन्दुप्रसादाच्च धर्म्मस्य च महात्मनः। अज्ञातवासमेवन्तु विराटनगरेऽवसन्।

युधिष्ठिरः सभास्तारो मत्स्यानामभवत् प्रियः। तथैव च विराटस्य सपुत्त्रस्य विशाम्पते।

स चाक्षहृदयज्ञस्तं क्रीडयामास पाण्डवः। अक्षवत्यां यथाकामं सूत्रबद्धानिव द्विजान्।

अज्ञातश्च विराटस्य विजित्य वसु धर्म्मराट्। भ्रातृभ्यः पुरुषव्याघ्रो यथाऽर्हं संप्रयच्छति। ३००

भीमसेनोऽपि मांसानि भक्ष्याणि विविधानि च। अतिसृष्टानि मत्स्येन विक्रीणीते युधिष्ठिरे।

वासांसि परिजीर्णानि लब्धान्यन्तःपुरेऽर्ज्जुनः। विक्रीणानश्च सर्व्वेभ्यः पाण्डवेभ्यः प्रयच्छति।

सहदेवोऽपि गोपानां वेशमास्थाय पाण्डवः। दधि क्षीरं घृतञ्चैव पाण्डवेभ्यः प्रयच्छति।

नकुलोऽपि धनं लब्ध्वा कृते कर्म्मणि वाजिनां। तुष्टे तस्मिन्नरपतौ पाण्डवेभ्यः प्रयच्छति।

कृष्णा तु सर्व्वान् भ्रातॄंस्तान्निरीक्षन्ती तपस्विनी। यथा पुनरविज्ञाता तथा चरति भामिनी। ३०५

एवं सम्पादयन्तस्ते तदाऽन्योऽन्यं महारथाः। विराटनगरे चेरुः पुनर्गर्भधृता इव।

साशङ्का धार्त्तराष्ट्रस्य भयात् पाण्डुसुतास्तदा। प्रेक्षमाणास्तदा कृष्णामूषुश्छन्ना नराधिपाः।

अथ मासे चतुर्थे तु ब्रह्मणः सुमहोत्सवः। आसीत् समृद्धो मत्स्येषु पुरुषाणां सुसम्मतः।

तत्र मल्लाः समापेतुर्दिग्भ्यो राजन् सहस्रशः। समाजे ब्रह्मणो राजन् यथा पशुपतेरिव।

महाकाया महावीर्य्याः कालखञ्जा इवासुराः। वीर्य्योन्मत्ता बलोदग्रा राज्ञा समभिपूजिताः। ३१०

सिंहस्कन्धकटिग्रीवाः स्ववदाता मनस्विनः। असकृल्लब्धलक्षास्ते रङ्गे पार्थिवसन्निधौ।

तेषामेको महानासीत् सर्व्वमल्लानथाह्वयत्। आवल्गमानं तं रङ्गे नोपतिष्ठति कश्चन।

यदा सर्व्वे विमनसस्ते मल्ला हतचेतसः। अथ सूदेन तं मल्लं योधयामास मत्स्यराट्।

चोद्यमानस्तदा भीमो दुःखेनैवाकरोन्मतिं। न हि शक्नोति विवृते प्रत्याख्यातुं नराधिपं।
ततः स पुरुषव्याघ्रः शार्दूलशिथिलं चरन्। प्रविवेश महारङ्गं विराटमभिपूजयन्। २४५
बबन्ध कक्षां कौन्तेयस्ततः संहर्षयन् जनं। ततस्तु वृत्रसङ्काशं भीमो मल्लं समाह्वयत्।
जीमूतं नाम तं तत्र मल्लं प्रख्यातविक्रमं। तावुभौ सुमहोत्साहावुभौ भीमपराक्रमौ।
मत्ताविव महाकायौ वारणौ षष्टिहायनौ। ततस्तौ नरशार्दूलौ बाहुयुद्धं समीयतुः।
वीरौ परमसंहृष्टावन्योऽन्यजयकाङ्क्षिणौ। आसीत् सुभीमः सम्पातो वज्रपर्व्वतयोरिव।
उभौ परमसंहृष्टौ बलेनातिबलावुभौ। अन्योऽन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ। २५०
उभौ परमसंहृष्टौ मत्ताविव महागजौ। कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुसङ्कटैः।
सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा। क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिस्वनैः।
तलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च। शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः।
जानुभिश्चाश्मनिर्घोषैः शिरोभिश्चावघट्टनैः। तद्युद्धमभवद्घोरमशस्त्रं बाहुतेजसा।
बलप्राणेन शूराणां समाजोत्सवसन्निधौ। अरज्यत जनः सर्व्वः सोत्कृष्टनिनदोत्थितः। २५५
बलिनोः संयुगे राजन् वृत्रवासवयोरिव। प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः।
आकर्षतुरथान्योऽन्यं जानुभिश्चापि जघ्नतुः। ततः शब्देन महता भर्त्सयन्तौ परस्परं।
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ। बाहुभिः समसज्जेतामायसैः परिघैरिव।
चकर्ष दोर्भ्यामुत्पाट्य भीमो मल्लममित्रहा। विनदन्तमभिक्रोशन् शार्दूल इव वारणं।
समुद्यम्य महाबाहुर्भ्रामयामास वीर्य्यवान्। ततो मल्लाश्च मत्स्याश्च विस्मयं चक्रिरे परं। २६०
भ्रामयित्वा शतगुणं गतसत्त्वमचेतनं। प्रत्यपिंषन्महाबाहुर्मल्लं भुवि वृकोदरः।
तस्मिन् विनिहते वीरे जीमूते लोकविश्रुते। विराटः परमं हर्षमगच्छद्बान्धवैः सह।
प्रहर्षात् प्रददौ वित्तं बहु राजा महामनाः। बल्लवाय महारङ्गे यथा वैश्रवणस्तथा।
एवं स सुबहून् मल्लान् पुरुषांश्च महाबलान्। विनिघ्नन् मत्स्यराजस्य प्रीतिमाहरदुत्तमां।
यदाऽस्य तुल्यः पुरुषो न कश्चित्तत्र विद्यते। ततो व्याघ्रैश्च सिंहैश्च द्विरदैश्चाप्ययोधयत्। २६५
पुनरन्तःपुरगतः स्त्रीणां मध्ये वृकोदरः। योध्यते स विराटेन सिंहैर्मत्तैर्महाबलैः।
वीभत्सुरपि गीतेन स्वनृत्येन च पाण्डवः। विराटं तोषयामास सर्व्वाश्चान्तःपुरस्त्रियः।
अश्वैर्विनीतैर्जवनैस्तत्र तत्र समागतैः। तोषयामास राजानं नकुलो नृपसत्तमं।
तस्मै प्रदेयं प्रायच्छत् प्रीतो राजा धनं बहु। विनीतान् वृषभान् दृष्ट्वा सहदेवस्य चाभितः।
धनं ददौ बहुविधं विराटः पुरुषर्षभः। द्रौपदी प्रेक्ष्य तान् सर्व्वान् क्लिश्यमानान्महारथान्। २७०
नातिप्रीतमना राजन्निश्वासपरमाऽभवत्। एवं ते न्यवसंस्तत्र प्रच्छन्नाः पुरुषर्षभाः।
कर्म्माणि तस्य कुर्व्वाणा विराटनृपतेस्तदा।

इति श्रीमहाभारते विराटपर्व्वणि समयपालनपर्व्वणि जीमूतवधे त्रयोदशोऽध्यायः समाप्तञ्च समयपालनपर्व्व॥ १३ ॥

## ॥ अथ कीचकवधपर्व्व ॥ २ ॥

॥ वैशम्पायन उवाच ॥ वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा । महारथेषु छन्नेषु मासा दश समाययुः ।
याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती विशाम्पते । अवसत् परिचारार्हा सुदुःखं जनमेजय ।
तथा चरन्तीं पाञ्चालीं सुदेष्णाया निवेशने । तां देवीं तोषयामास तथा चान्तःपुरे स्त्रियः । ३७५
तस्मिन् वर्षे गतप्राये कीचकस्तु महाबलः । सेनापतिर्विराटस्य ददर्श द्रुपदात्मजां ।
तां दृष्ट्वा देवगर्भाभां चरन्तीं देवतामिव । कीचकः कामयामास कामबाणप्रपीडितः ।
स तु कामाग्निसन्तप्तः सुदेष्णामभिगम्य वै । प्रहसन्निव सेनानीरिदं वचनमब्रवीत् ।

नेयं मया जातु पुरेह दृष्टा राज्ञो विराटस्य निवेशने शुभा । रूपेण चोन्मादयतीव मां भृशं गन्धेन जाता मदिरेव भाविनी ।

का देवरूपा हृदयङ्गमा शुभा आचक्ष्व मे कस्य कुतोऽत्र शोभने । चित्तं हि निर्मथ्य करोति मां वशे न चान्यदत्रौषधमस्ति मे मतं । ३८०

अहो तवेयं परिचारिका शुभा प्रत्यग्ररूपा प्रतिभाति मामियं । अयुक्तरूपं हि करोति कर्म ते प्रशास्तु मां यच्च ममास्ति किञ्चन ।

प्रभूतनागाश्वरथं महाजनं समृद्धियुक्तं बहुपानभोजनं । मनोहरं काञ्चनचित्रभूषणं गृहं महच्छोभयतामियं मम ।

ततः सुदेष्णामनुमन्त्र्य कीचकस्ततः समभ्येत्य नराधिपात्मजां । उवाच कृष्णामभिसान्त्वयंस्तदा मृगेन्द्रकन्यामिव जम्बुको वने ।

॥ कीचक उवाच ॥ का त्वं कस्यासि कल्याणि कुतो वा त्वं वरानने । प्राप्ता विराटनगरं तत्त्वमाचक्ष्व शोभने ।
रूपमग्र्यं तथा कान्तिः सौकुमार्य्यमनुत्तमं । कान्त्या विभाति वक्त्रं ते शशाङ्क इव निर्म्मलं । ३८५
नेत्रे सुविपुले सुभ्रु पद्मपत्रनिभे शुभे । वाक्यं ते चारुसर्व्वाङ्गि परपुष्टरुतोपमं ।
एवंरूपा मया नारी काचिदन्या महीतले । न दृष्टपूर्व्वा सुश्रोणि यादृशी त्वमनिन्दिते ।
लक्ष्मीः पद्मालया का त्वमथ भूतिः सुमध्यमे । ह्रीः श्रीः कीर्त्तिरथो कान्तिरासां का त्वं वरानने ।
अतीव रूपिणी किन्त्वमनङ्गाङ्गविहारिणी । अतीव भ्राजसे सुभ्रु प्रभेवेन्दोरनुत्तमा ।
अपि चेक्षणपक्ष्माणां स्मितज्योत्स्नोपमं शुभं । दिव्यांशुरश्मिभिर्वृत्तं दिव्यकान्तिमनोरमं । ३९०
निरीक्ष्य वक्त्रचन्द्रं ते लक्ष्म्याऽनुपमया युतं । कृत्स्ने जगति को नेह कामस्य वशगो भवेत् ।
हाराळङ्कारयोग्यौ तु स्तनौ चोभौ सुशोभनौ । सुजातौ सहितौ लक्ष्म्या पीनौ वृत्तौ निरन्तरौ ।
कुड्मलाम्बुरुहाकारौ तव सुभ्रु पयोधरौ । कामप्रतोदाविव मां तुदतश्चारुहासिनि ।
वलीविभङ्गचतुरं स्तनभारविनामितं । कराग्रसम्मितं मध्यं तवेदं तनुमध्यमे ।
दृष्ट्वैव चारुजघनं सरित्पुलिनसन्निभं । कामव्याधिरसाध्यो मामप्याक्रामति भामिनि । ३९५
जज्वाल चाग्निमदनो दावाग्निरिव निर्द्दयः । त्वत्सङ्गमाभिसङ्कल्पविवृद्धो मां दहत्ययं ।
आत्मप्रदानवर्षेण सङ्गमाम्भोधरेण च । शमयस्व वरारोहे ज्वलन्तं मन्मथानलं ।
मच्चित्तोन्मादनकरा मन्मथस्य शरोत्कराः । त्वत्सङ्गमेन शमितास्तीव्राः शशिनिभानने ।

मथ्य विदार्य्य हृदयमिदं निर्द्दयवेगिता। प्रविष्टा ह्यसितापाङ्गि प्रचण्डाश्चण्डदारुणाः।

अत्युन्मादसमारम्भाः प्रीत्युन्मादकरा मम। आत्मप्रदानसम्भोगैर्म्मामुद्धर्त्तुमिहार्हसि। ४००

चित्रमाल्याम्बरधरा सर्व्वाभरणभूषिता। कामं प्रकामं सेव त्वं मया सह विलासिनि।

नार्हसीहासुखं वस्तुं सुखार्हा सुखवर्ज्जिता। प्राप्नुह्यनुत्तमं सौख्यं मत्तस्त्वं मत्तगामिनि।

स्वादून्यमृतकल्पानि पेयानि विविधानि च। पिवमाना मनोज्ञानि रममाणा यथासुखं।

भोगोपचारान् विविधान् सौभाग्यं चाप्यनुत्तमं। पानं पिव महाभागे भोगैश्चानुत्तमैः शुभैः।

इदं हि रूपं प्रथमं तवं वयो, निरर्थकं केवलमद्य भाविनि। अधार्य्यमाणा स्रगिवोत्तमा शुभा न शोभसे सुन्दरि शोभना सती। ४१०

त्यजामि दारान्मम ये पुरातना भवन्तु दास्यस्तव चारुहासिनि। अहञ्च ते सुन्दरि दासवत्स्थितः सदा भविष्ये वशगो वरानने।

‖ द्रौपद्युवाच ‖ अप्रार्थनीयामिह मां सूतपुत्राभिमन्यसे। निहीनवर्णां सैरिन्ध्रीं बीभत्सां केशकारिणीं।

परदाराऽस्मि भद्रन्ते न युक्तं तव साम्प्रतं। दयिताः प्राणिनां दारा धर्म्मं समनुचिन्तय।

परदारे न ते बुद्धिर्ज्जातु कार्य्या कथञ्चन। विवर्ज्जनं ह्यकार्य्याणामेतत् सुपुरुषव्रतं।

मिथ्याऽभिगृध्नो हि नरः पापात्मा मोहमास्थितः। अयशः प्राप्नुयाद्घोरं महद्वा प्राप्नुयाद्भयं। ४१५

‖ वैशम्पायन उवाच ‖ एवमुक्तस्तु सैरिन्ध्र्या कीचकः काममोहितः। जानन्नपि सुदुर्व्बुद्धिः परदाराभिमर्षणे।

दोषान् बहून् प्राणहरान् सर्व्वलोकविगर्हितान्। प्रोवाचेदं सुदुर्व्बुद्धिर्द्रौपदीमजितेन्द्रियः।

नार्हस्येवं वरारोहे प्रत्याख्यातुं वरानने। मां मन्मथसमाविष्टं त्वत्कृते चारुहासिनि।

प्रत्याख्याय च मां भीरु वशगं प्रियवादिनं। नूनं त्वमसितापाङ्गि पश्चात्तापं करिष्यसि।

अहं हि सुभ्रु राज्यस्य कृत्स्नस्यास्य सुमध्यमे। प्रभुर्व्वासयिता चैव वीर्य्ये चाप्रतिमः क्षितौ। ४२०

पृथिव्यां मत्समो नास्ति कश्चिदन्यः पुमानिह। रूपयौवनसौभाग्यैर्भोगैश्चानुत्तमैः शुभैः।

सर्व्वकामसमृद्धेषु भोगेष्वनुपमेष्विह। भोक्तव्येषु च कल्याणि कस्माद्दास्ये रता ह्यसि।

मया दत्तमिदं राज्यं स्वामिन्यसि शुभानने। भजस्व मां वरारोहे भुङ्क्ष्व भोगाननुत्तमान्।

एवमुक्ता तु सा साध्वी कीचकेनाशुभं वचः। कीचकं प्रत्युवाचेदं गर्हयन्त्यस्य तद्वचः।

‖ सैरिन्ध्र्युवाच ‖ मा सूतपुत्र मुह्यस्व माऽद्यात्याक्षीः स्वजीवितं। जानीहि पञ्चभिर्घोरैर्न्नित्यं मामभिरक्षितां। ४२५

न चाप्यहं त्वया लभ्या गन्धर्व्वाः पतयो मम। ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः।

अशक्यरूपं पुरुषैरध्वानं गन्तुमिच्छसि। यथा निश्चेतनो बालः कूलस्थः कूलमुत्तरं। तर्त्तुमिच्छति मन्दात्मा तथा त्वं कर्त्तुमिच्छसि।

अन्तर्म्महीं वा यदि वोर्द्ध्वमुत्पतेः समुद्रपारं यदि वा प्रधावसि। तथाऽपि तेभ्यो न विमोक्षमर्हसि प्रमाथिनो देवसुता हि खेचराः।

त्वं कालरात्रीमिव कश्चिदातुरः किं मां दृढं प्रार्थयसेऽद्य कीचक। किं मातुरङ्के शयितो यथा शिशुश्चन्द्रं जिघृक्षुरिव मन्यसे हि मां।

तेषां प्रियां प्रार्थयतो न ते भुवि गत्वा दिवं वा शरणं भविष्यति। न वर्त्तते कीचक ते दृश्यते शुभं या तेन सञ्जीवनमर्थयेत। ॥१०

इति श्रीमहाभारते विराटपर्व्वणि कीचकबधपर्व्वणि कीचककृष्णासंवादे चतुर्दशोऽध्यायः॥ १४ ॥

॥ वैशम्पायन उवाच॥ प्रत्याख्यातो राजपुत्र्या सुदेष्णां कीचकोऽब्रवीत्। अमर्य्यादेन कामेन घोरेणाभिपरिप्लुतः।

॥ कीचक उवाच॥ यथा कैकेयि सैरिन्ध्री समेयात्तद्विधीयतां। येनोपायेन सैरिन्ध्री भजेन्मां गजगामिनी। तां सुदेष्णे परीप्सस्व मोहात् प्राणान् प्रहासिषं।

॥ वैशम्पायन उवाच॥ तस्य सा बहुशः श्रुत्वा वाचं विलपतस्तदा। विराटमहिषी देवी कृपाञ्चक्रे मनस्विनी।

स्वमर्थमभिसन्धाय तस्यार्थमनुचिन्त्य च। उद्वेगञ्चैव कृष्णायाः सुदेष्णा सूतमब्रवीत्।

॥ सुदेष्णोवाच॥ पर्व्वणि त्वं समुद्दिश्य सुरामन्नञ्च कारय। तत्रैनां प्रेषयिष्यामि सुराहारीं तवान्तिकं। ॥१५

तत्र सम्प्रेषितामेनां विजने निरवग्रहे। सान्त्वयेथा यथाकामं सान्त्व्यमाना रमेद्यदि।

॥ वैशम्पायन उवाच॥ इत्युक्तः स विनिष्क्रम्य भगिन्या वचनात्तदा। सुरामाहारयामास राजार्हां सुपरिष्कृतां।

मत्स्यांश्च विविधाकारान् बहूंश्चोच्चावचांस्तदा। कारयामास कुशलैरन्नपानं सुशोभनं।

तस्मिन् कृते तदा देवी कीचकेनोपमन्त्रिता। सुदेष्णा प्रेषयामास सैरिन्ध्रीं कीचकालयं।

॥ सुदेष्णोवाच॥ उत्तिष्ठ गच्छ सैरिन्ध्रि कीचकस्य निवेशनं। पानमानय कल्याणि पिपासा मां प्रबाधते। ॥२०

॥ सैरिन्ध्र्युवाच॥ न गच्छेयमहं तस्य राजपुत्रि निवेशनं। त्वमेव राज्ञि जानासि यथा स निरपत्रपः।

न चाहमनवद्याङ्गि तव वेश्मनि भाविनि। कामवृत्ता भविष्यामि पतीनां व्यभिचारिणी।

त्वं चैव देवि जानासि यथा स समयः कृतः। प्रविशन्त्या मया पूर्व्वं तव वेश्मनि भाविनि।

कीचकस्तु सुकेशान्ते मूढो मदनदर्पितः। सोऽवमंस्यति मां दृष्ट्वा न यास्ये तत्र शोभने।

सन्ति बह्व्यस्तव प्रेष्या राजपुत्रि वशानुगाः। अन्यां प्रेषय भद्रन्ते स हि मामवमंस्यते। ॥२५

॥ सुदेष्णोवाच॥ नैवं त्वां जातु हिंस्यात्स इतः संप्रेषिता मया। इत्युक्त्वा प्रददौ पात्रं सपिधानं हिरण्मयं।

सा शङ्कमाना रुदती दैवं शरणमीयुषी। प्रातिष्ठत सुराहारी कीचकस्य निवेशनं।

॥ सैरिन्ध्र्युवाच॥ यथाऽहमन्यं भर्त्तृभ्यो नाभिजानामि कञ्चन। तेन सत्येन मां प्राप्तां माकुर्य्यात् कीचको वशे।

॥ वैशम्पायन उवाच॥ उपातिष्ठत सा सूर्य्यं मुहूर्त्तमबला ततः। स तस्यास्तनुमध्यायाः सर्व्वं सूर्य्योऽवबुद्धवान्।

अन्तर्हितं ततस्तस्या रक्षो रक्षार्थमादिशत्। तच्चैनां नाजहात्तत्र सर्व्वावस्थास्वनिन्दितां। ॥३०

तां मृगीमिव संत्रस्तां दृष्ट्वा कृष्णां समीपगां। उदतिष्ठन्मुदा सूतो नावं लब्ध्वेव पारगः।

इति श्रीमहाभारते विराटपर्व्वणि कीचकबधपर्व्वणि द्रौपदीसुराहरणे पञ्चदशोऽध्यायः॥ १५ ॥

॥ कीचक उवाच॥ स्वागतं ते सुकेशान्ते सुव्युष्टा रजनी मम। स्वामिनी त्वमनुप्राप्ता प्रकुरुष्व मम प्रियं।

सुवर्णमालाः कम्बूंश्च कुण्डले परिहाटके। नानापत्तनजे शुभ्रे मणिरत्नञ्च शोभनं।

आहरन्तु च वस्त्राणि कौशिकान्यजिनानि च। अस्ति मे शयनं दिव्यं त्वदर्थमुपकल्पितं। एहि तत्र मया सार्द्धं पिबस्व मधु माधवीं।

॥ द्रौपद्युवाच ॥ अप्रैषीद्राजपुत्त्री मां सुराहारीं तवान्तिकं । पानमाहर मे क्षिप्रं पिपासा मेति चाब्रवीत् । ४८५

॥ कीचक उवाच ॥ अन्या भद्रे नयिष्यन्ति राजपुत्त्र्याः प्रतिश्रुतं । इत्येनां दक्षिणे पाणौ सूतपुत्त्रः परामृषत् ।

॥ द्रौपद्युवाच ॥ यथैवाहं नाभिचरे कदाचित् पतीन्मदादेमनसाऽपि जातु । तेनैव सत्येन वशीकृतं त्वां द्रक्ष्यामि पाप परिकृष्यमाणं ।

॥ वैशम्पायन उवाच ॥ स तामभिप्रेक्ष्य विशालनेत्रां जिघृक्षमाणः परिभर्त्सयन्तीं । जग्राह तामुत्तरवस्त्रदेशे स कीचकस्तां सहसाक्षिपन्तीं ।

प्रगृह्यमाणा तु महाजवेन मुहुर्विनिश्वस्य च राजपुत्त्री । चिक्षेप तं गाढमभ्यस्यमाणा प्रवेपमानाऽतिरुषा सुभाङ्गी । तया समाक्षिप्ततनुः स पापः पपात शाखीव निकृत्तमूलः ।

सा गृहीता विधुन्वाना भूमावाक्षिप्य कीचकं । सभां शरणमागच्छद्यत्र राजा युधिष्ठिरः । ४९०

तां कीचकः प्रधावन्तीं केशपाशे परामृशत् । अथैनां पश्यतो राज्ञः पातयित्वा पदाऽवधीत् ।

तस्या योऽसौ तदाऽर्केण राक्षसः सन्नियोजितः । स कीचकमपोवाह वातवेगेन भारत ।

स पपात तदा भूमौ रक्षोबलसमाहतः । विघूर्णमानो निश्चेष्टश्छिन्नमूल इव द्रुमः ।

तां चासीनौ ददृशतुर्भीमसेनयुधिष्ठिरौ । अमृष्यमाणौ कृष्णायाः कीचकेन पराभवं ।

तस्य भीमो बधं प्रेप्सुः कीचकस्य दुरात्मनः । दन्तैर्दन्तांस्तदा रोषान्निष्पिपेष महामनाः । ४९५

धूमच्छायामभजतां नेत्रे चोच्छ्रितपक्ष्मणी । सस्वेदा भ्रुकुटी चोग्रा ललाटे समवर्त्तत ।

हस्तेन ममृदे चैव ललाटं परवीरहा । भूयश्च त्वरितः क्रुद्धः सहसोत्थातुमैच्छत ।

अथावमृद्नादङ्गुष्ठमङ्गुष्ठेन युधिष्ठिरः । प्रबोधनभयाद्राजा भीमं तं प्रत्यषेधयत् ।

तं मत्तमिव मातङ्गं वीक्षमाणं वनस्पतिं । स तमावारयामास भीमसेनं युधिष्ठिरः ।

आलोकयसि किं वृक्षं सूद दारुकृतेन वै । यदि ते दारुभिः कृत्यं बहिर्वृक्षान्निगृह्यतां । ५००

सा सभाद्वारमासाद्य रुदती मत्स्यमब्रवीत् । अवेक्षमाणा सुश्रोणी पतींस्तान्दीनचेतसः ।

आकारमभिरक्षन्ती प्रतिज्ञां धर्म्मसंहितां । दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा ।

॥ द्रौपद्युवाच ॥ येषां वैरी न स्वपिति षष्ठेऽपि विषये वसन् । तेषां मां मानिनीं भार्य्यां सूतपुत्त्रः पदाऽवधीत् ।

ये दद्युर्न च याचेयुर्ब्रह्मण्याः सत्यवादिनः । तेषां मां मानिनीं भार्य्यां सूतपुत्त्रः पदाऽवधीत् ।

येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयतेऽनिशं । तेषां मां मानिनीं भार्य्यां सूतपुत्त्रः पदाऽवधीत् । ५०५

ये च तेजस्विनो दान्ता बलवन्तोऽतिमानिनः । तेषां मां मानिनीं भार्य्यां सूतपुत्त्रः पदाऽवधीत् ।

सर्व्वलोकमिमं हन्युर्धर्म्मपाशसितास्तु ये । तेषां मां मानिनीं भार्य्यां सूतपुत्त्रः पदाऽवधीत् ।

शरणं ये प्रपन्नानां भवन्ति शरणार्थिनां । चरन्ति लोके प्रच्छन्नाः क नु तेऽद्य महारथाः ।

कथन्ते सूतपुत्त्रेण बध्यमानां प्रियां सतीं । मर्षयन्ति यथा क्लीवा बलवन्तोऽमितौजसः ।

क नु तेषाममर्षश्च वीर्य्यन्तेजश्च वर्त्तते । न परीप्सन्ति ये भार्य्यां बध्यमानां दुरात्मना । ५१०

मया तु शक्यं किङ्कर्त्तुं विराटे धर्म्मदूषके । यः पश्यन्मां मर्षयति बध्यमानामनागसं ।

न राजा राजवत्किञ्चित् समाचरति कीचके। दस्यूनामिव धर्म्मस्ते न हि संसदि शोभते।
नाहमेतेन युक्ता वै हन्तुं मत्स्य तवान्तिके। सभासदस्तु पश्यन्तु कीचकस्य व्यतिक्रमं।
कीचको न च धर्मज्ञो न च मत्स्यः कथञ्चन। सभासदोऽप्यधर्म्मज्ञा य एनं पर्य्युपासते।
॥ वैशम्पायन उवाच ॥ एवंविधैर्व्वचोभिः सा तदा कृष्णाऽश्रुलोचना। उपालभत राजानं मत्स्यानां वरवर्णिनी। ८५
॥ विराट उवाच ॥ परोक्षं नाभिजानामि विग्रहं युवयोरहं। अर्थतत्त्वमविज्ञाय किन्नु स्यात् कौशलं मम।
॥ वैशम्पायन उवाच ॥ ततस्तु सभ्या विज्ञाय कृष्णां भूयोऽभ्यपूजयन्। साधुसाध्विति चाप्याहुः कीचकं च व्यगर्हयन्।
॥ सभ्या ऊचुः ॥ यस्येयं चारुसर्व्वाङ्गी भार्य्या स्यादायतेक्षणा। परो लाभस्तु तस्य स्यान्न च शोचेत् कथञ्चन।
न हीदृशी मनुष्येषु सुलभा वरवर्णिनी। नारी सर्व्वानवद्याङ्गी देवीं मन्यामहे वयं।
॥ वैशम्पायन उवाच ॥ एवं संपूजयन्तस्ते कृष्णां प्रेक्ष्य सभासदः। युधिष्ठिरस्य कोपात्तु ललाटे स्वेद आगमत्। ९०
अथाऽब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियां। गच्छ सैरिन्ध्रि मात्रस्थाः सुदेष्णाया निवेशनं।
भर्त्तारमनुरुध्यन्त्यः क्लिश्यन्ते वीरपत्नयः। शुश्रूषया क्लिश्यमानाः पतिलोकं जयन्त्युत।
मन्ये न कालं क्रोधस्य पश्यन्ति पतयस्तव। तेन त्वां नाभिधावन्ति गन्धर्व्वाः सूर्य्यवर्चसः।
अकालज्ञाऽसि सैरिन्ध्रि शैलूषीव विरोदिषि। विघ्नं करोषि मत्स्यानां दीव्यतां राजसंसदि।
गच्छ सैरिन्ध्रि गन्धर्व्वाः करिष्यन्ति तव प्रियं। व्यपनेष्यन्ति ते दुःखं येन ते विप्रियं कृतं। ९५
॥ सैरिन्ध्र्युवाच ॥ अतीव तेषां घृणिनामर्थेऽहं धर्म्मचारिणी। तस्य तस्यैव ते वध्या येषां ज्येष्ठोऽक्षदेविता।
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा प्राद्रवत्कृष्णा सुदेष्णाया निवेशनं। केशान्मुक्त्वा च सुश्रोणी संरम्भाल्लोहितेक्षणा।
शुशुभे वदनं तस्या रुदन्त्याः सुचिरं तदा। मेघलेखाविनिर्म्मुक्तं दिवीव शशिमण्डलं।
॥ सुदेष्णोवाच ॥ कस्त्वाऽवधीद्वरारोहे कस्माद्रोदिषि शोभने। कस्याद्य न सुखं भद्रे केन ते विप्रियं कृतं।
॥ द्रौपद्युवाच ॥ कीचको माऽवधीत्तत्र सुराहारीं गतान्तव। सभायां पश्यतो राज्ञो यथैव विजने वने। १००
॥ सुदेष्णोवाच ॥ घातयामि सुकेशान्ते कीचकं यदि मन्यसे। योऽसौ त्वां कामसंमत्तो दुर्ल्लभामभिमन्यते।
॥ सैरिन्ध्र्युवाच ॥ अन्ये चैव वधिष्यन्ति येषामागः करोति सः। मन्ये चैवाद्य सुव्यक्तं यमलोकं गमिष्यति।
इति श्रीमहाभारते विराटपर्व्वणि कीचकवधपर्व्वणि द्रौपदीपरिभवे षोडशोऽध्यायः॥ १६ ॥
॥ वैशम्पायन उवाच ॥ सा हता सूतपुत्रेण राजपुत्री यशस्विनी। वधं कृष्णा परीप्सन्ती सेनावाहस्य भामिनी।
जगामावासमेवाथ तदा सा द्रुपदात्मजा। कृत्वा शौचं यथान्यायं कृष्णा सा तनुमध्यमा।
गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा। चिन्तयामास रुदती तस्य दुःखस्य निर्णयं। १०५
किं करोमि क्व गच्छामि कथं कार्य्यं भवेन्मम। इत्येवं चिन्तयित्वा सा भीमं वै मनसाऽगमत्।
नान्यः कर्त्ता ऋते भीमान्ममाद्य मनसः प्रियं। तत उत्थाय रात्रौ सा विहाय शयनं स्वकं।
प्राद्रवन्नाथमिच्छन्ती कृष्णा नाथवती सती। भवनं भीमसेनस्य क्षिप्रमायतलोचना। दुःखेन महता युक्ता मानसेन मनस्विनी।
॥ सैरिन्ध्र्युवाच ॥ तस्मिन् जीवति पापिष्ठे सेनावाहे मम द्विषि। तत्कर्म्म कृतवानद्य कथं निद्रां निषेवसे।

॥ वैशम्पायन उवाच ॥ एवमुक्त्वाऽथ तां शालां प्रविवेश मनस्विनी । यस्यां भीमस्तथा शेते मृगराज इव श्वसन् ।    ५१०
तस्या रूपेण सा शाला भीमस्य च महात्मनः । सम्मूर्च्छितेव कौरव्य प्रजज्वाल च तेजसा । सा वै महानसं प्राप्य भीमसेनं शुचि
स्मिता ।
सर्व्वश्वेतेव माहेयी वने जाता त्रिहायनी । उपातिष्ठत पाञ्चाली वाशितेव नरर्षभं ।
सा लतेव महाशालं फुल्लं गोमतितीरजं । परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनं ।
बाहुभ्यां परिरभ्यैनं प्राबोधयदनिन्दिता । सिंहं सुप्तं वने दुर्गे मृगराजवधूरिव ।
भीमसेनमुपाश्लिष्यद्धस्तिनीव महागजं । वीणेव मधुरालापा गान्धारं साधुमूर्च्छती । अभ्यभाषत पाञ्चाली भीमसेनमनि
न्दिता ।    ५१५
उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन यथा मृतः । नामृतस्य हि पापीयान् भार्य्यामालभ्य जीवति ।
स सम्प्रहाय शयनं राजपुत्र्या प्रबोधितः । उपातिष्ठत मेघाभः पर्य्यङ्के सोपसंग्रहे ।
अथाब्रवीद्राजपुत्रीं कौन्तेयो महिषीं प्रियां । केनास्यर्थेन संप्राप्ता त्वरितेव ममान्तिकं ।
न ते प्रकृतिमान् वर्णः कृशा पाण्डुश्च लक्ष्यसे । आचक्ष्व परिशेषेण सर्व्वं विद्यामहं यथा ।
सुखं वा यदि वा दुःखं द्वेष्यं वा यदि वा प्रियं । यथावत्सर्व्वमाचक्ष्व श्रुत्वा ज्ञास्यामि यत् क्षमं ।    ५२०
अहमेव हि ते कृष्णे विश्वास्यः सर्व्वकर्म्मसु । अहमापत्सु चापि त्वां मोक्षयामि पुनः पुनः ।
शीघ्रमुक्त्वा यथाकामं यत्ते कार्य्यं विवक्षितं । गच्छ वै शयनायैव पुरा नान्येन बुध्यते ।
इति श्रीमहाभारते विराटपर्व्वणि कीचकवधपर्व्वणि द्रौपदीभीमसंवादे सप्तदशोऽध्यायः ॥ १७ ॥
॥ द्रौपद्युवाच ॥ अशोच्यत्वं कुतस्तस्या यस्या भर्त्ता युधिष्ठिरः । जानन् सर्व्वाणि दुःखानि किं मां त्वं परिपृच्छसि ।
यन्मां दासीप्रवादेन प्रातिकामी तदाऽनयत् । सभापरिषदो मध्ये तन्मां दहति भारत ।
पार्थिवस्य सुता नाम काऽनुजीवति मादृशी । अनुभूयेदृशं दुःखमन्यत्र द्रौपदीं प्रभो ।    ५२५
वनवासगतायाश्च सैन्धवेन दुरात्मना । परामर्शो द्वितीयो वै सोढुमुत्सहते तु का ।
मत्स्यराज्ञः समक्षन्तु तस्य धूर्त्तस्य पश्यतः । कीचकेन पदाम्पृष्टा का नु जीवति मादृशी ।
एवं बहुविधैः क्लेशैः क्लिश्यमानाञ्च भारत । न मां जानासि कौन्तेय किं फलं जीवितेन मे ।
योऽयं राज्ञो विराटस्य कीचको नाम भारत । सेनानीः पुरुषव्याघ्र श्यालः परमदुर्म्मतिः ।
स मां सैरिन्ध्रिवेशेन वसन्तीं राजवेश्मनि । नित्यमेवाह दुष्टात्मा भार्य्या मम भवेति वै ।    ५३०
तेनोपमन्त्र्यमाणाया वधार्हेण सपत्नहन् । कालेनेव फलं पक्वं हृदयं मे विदीर्य्यते ।
भ्रातरञ्च विगर्हस्व ज्येष्ठं दुर्द्यूतदेविनं । यस्यास्मि कर्म्मणा प्राप्ता दुःखमेतदनन्तकं ।
को हि राज्यं परित्यज्य सर्व्वस्वं चात्मना सह । प्रव्रज्यायैव दीव्येत विना दुर्द्यूतदेविनं ।
यदि निष्कसहस्रेण यच्चान्यत्सारवद्धनं । सायं प्रातरदेविष्यदपि संवत्सरान् बहून् ।
रुक्मं हिरण्यं वासांसि यानं युग्यमजाविकं । अश्वाश्वतरसङ्घांश्च न जातु क्षयमावहेत् ।    ५३५
सोऽयं द्यूतप्रवादेन श्रिया प्रत्यवरोपितः । तूष्णीमास्ते यथा मूढः स्वानि कर्म्माणि चिन्तयन् ।

दशनागसहस्राणि पद्मानां हेममालिनां । यं यान्तमनुयान्तीह सोऽयं द्यूतेन जीवति ।
रथाः शतसहस्राणि नृपाणाममितौजसां । उपासन्त महाराजमिन्द्रप्रस्थे युधिष्ठिरं ।
शतं दासीसहस्राणां यस्य नित्यं महानसे । पात्रीहस्तं दिवारात्रमतिथीन् भोजयत्युत ।
एष निष्कसहस्राणि प्रदाय ददतांवरः । द्यूतजेन ह्यनर्थेन महता समुपाश्रितः । ५४०
एनं हि स्वरसम्पन्ना बहवः सूतमागधाः । सायम्प्रातरुपातिष्ठन् सुमृष्टमणिकुण्डलाः ।
सहस्रमृषयो यस्य नित्यमासन् सभासदः । तपःश्रुतोपसम्पन्नाः सर्व्वकामैरुपस्थिताः ।
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः । त्रिंशद्दासीक एकैको यान् बिभर्त्ति युधिष्ठिरः ।
अप्रतिग्राहिणाञ्चैव यतीनामूर्द्धरेतसां । दश चापि सहस्राणि सोऽयमास्ते नरेश्वरः ।
आनृशंस्यमनुक्रोशं संविभागस्तथैव च । यस्मिन्नेतानि सर्व्वाणि सोऽयमास्ते नरेश्वरः । ५४५
अन्धान् वृद्धांस्तथाऽनाथान् बालान् राष्ट्रेषु दुर्गतान् । बिभर्त्ति विविधान् राजा धृतिमान् सत्यविक्रमः ।
संविभागमना नित्यमानृशंस्याद्युधिष्ठिरः । स एष निरयं प्राप्तो मत्स्यस्य परिचारकः ।
सभायां देविता राज्ञः कङ्को ब्रूते युधिष्ठिरः । इन्द्रप्रस्थे निवसतः समये यस्य पार्थिवाः ।
आसन् बलिभृतः सर्व्वे सोऽद्यान्यैर्भृतिमिच्छति । पार्थिवाः पृथिवीपाला यस्यासन् वशवर्त्तिनः ।
स वशे विवशो राजा परेषामद्य वर्त्तते । प्रताप्य पृथिवीं सर्व्वां रश्मिवानिव तेजसा । ५५०
सोऽयं राज्ञो विराटस्य सभास्तारो युधिष्ठिरः । समुपासत राजानः सभायामृषिभिः सह ।
तमुपासीनमद्यान्यं पश्य पाण्डव पाण्डवं । सदस्यं समुपासीनं परस्य प्रियवादिनं ।
दृष्ट्वा युधिष्ठिरं कोपो वर्द्धते मामसंशयं । अतदर्हं महाप्राज्ञं जीवितार्थेऽभिसंस्थितं ।
दृष्ट्वा कस्य न दुःखं स्याद्धर्म्मात्मानं युधिष्ठिरं । उपास्ते स्म सभायां यं कृत्स्नावीरवसुन्धरा ।
तमुपासीनमप्यन्यं पश्य भारत भारतं । एवं बहुविधैर्दुःखैः पीड्यमानामनाथवत् । ५५५
शोकसागरमध्यस्थां किं मां भीम न पश्यसि ।

इति श्रीमहाभारते विराटपर्व्वणि कीचकवधपर्व्वणि द्रौपदीभीमसंवादेऽष्टादशोऽध्यायः ॥ १८ ॥

॥ द्रौपद्युवाच ॥ इदन्तु मे महद्दुःखं यत्प्रवक्ष्यामि भारत । न मेऽभ्यसूया कर्त्तव्या दुःखादेतद्ब्रवीम्यहं ।
सूदकर्म्मणि हीने त्वमसमे भरतर्षभ । ब्रुवन् बल्लवजातीयः कस्य शोकं न वर्द्धयेः ।
सूपकारं विराटस्य बल्लवं त्वां विदुर्ज्जनाः । प्रेष्यत्वं समनुप्राप्तं ततो दुःखतरं नु किं ।
यदा महानसे सिद्धे विराटमुपतिष्ठसे । ब्रुवाणो बल्लवः सूदस्तदा सीदति मे मनः । ५६०
यदा प्रहृष्टः सम्राट् त्वां संयोधयति कुञ्जरैः । हसन्त्यन्तःपुरे नार्य्यो मम तूद्विजते मनः ।
शार्दूलैर्महिषैः सिंहैरागारे योध्यसे यदा । कैकेय्याः क्रियमाणायास्तदा मे कश्मलोऽभवत् ।
तत उत्थाय कैकेयी सर्व्वास्ताः प्रत्यभाषत । प्रेष्याः समुत्थिताश्चापि कैकेयीन्ताः स्त्रियोऽब्रुवन् ।
प्रेक्ष्य मामनवद्याङ्गीं कश्मलोपहतामिव । स्नेहात् संवासजाद्धर्म्मात् सूदमेषा शुचिस्मिता ।
योध्यमानं महावीर्य्यैरियं समनुशोचति । कल्याणरूपा सैरिन्ध्री बल्लवश्चापि सुन्दरः । ५६५

स्त्रीणां चित्तं च दुर्ज्ञेयं युक्तरूपौ च मे मतौ। वैरिन्ध्रीप्रियसंवासान्नित्यं करुणवादिनी।
अस्मिन् राजकुले चोभौ तुल्यकालनिवासिनौ। इति ब्रुवाणा वाक्यानि सा मां नित्यमतर्ज्जयत्।
क्रुध्यन्तीं मांश्च सम्प्रेक्ष्य समशङ्कत मां त्वयि। तस्यां तथा ब्रुवन्त्यान्तु दुःखं मां महदाविशत्।
त्वय्येवं निरयम्प्राप्ते भीमे भीमपराक्रमे। शोके यौधिष्ठिरे मग्ना नाहं जीवितुमुत्सहे।
यः सदेवान्मनुष्यांश्च सर्व्वांस्चैकरथोऽजयत्। सोऽयं राज्ञो विराटस्य कन्यानां नर्त्तको युवा।　　५७०
योऽतर्पयदमेयात्मा खाण्डवे जातवेदसं। सोऽन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः।
यस्माद्भयममित्राणां सदैव पुरुषर्षभात्। स लोकपरिभूतेन वेशेनास्ते धनञ्जयः।
यस्य ज्याक्षेपकठिनौ बाहू परिघसन्निभौ। स शङ्खपरिपूर्णाभ्यां शोचन्नास्ते धनञ्जयः।
यस्य ज्यातलनिर्घोषात् समकम्पन्त शत्रवः। स्त्रियो गीतस्वनन्तस्य मुदिताः पर्य्युपासते।
किरीटं सूर्य्यसङ्काशं यस्य मूर्द्धन्यशोभत। वेणीविकृतकेशान्तः सोऽयमद्य धनञ्जयः।　　५७५
तं वेणीकृतकेशान्तं भीमधन्वानमर्ज्जुनं। कन्यापरिवृतं दृष्ट्वा भीम सीदति मे मनः।
यस्मिन्नस्त्राणि दिव्यानि समस्तानि महात्मनि। आधारः सर्व्वविद्यानां स धारयति कुण्डले।
यस्य राजसहस्राणि तेजसाऽप्रतिमानि वै। समरे नाभ्यवर्त्तन्त वेलामिव महार्णवः।
सोऽयं राज्ञो विराटस्य कन्यानां नर्त्तको युवा। आस्ते वेशप्रतिच्छन्नः कन्यानां परिचारकः।
यस्य स्म रथघोषेण समकम्पत मेदिनी। सपर्व्वतवना भीमा सहस्थावरजङ्गमा।　　५८०
यस्मिन् जाते महाभागे कुन्त्याः शोको व्यनश्यत। स शोचयति मामद्य भीमसेन तवानुजः।
भूषितं तमलङ्कारैः कुण्डलैः परिहाटकैः। कम्बुपाणिनमायान्तं दृष्ट्वा सीदति मे मनः।
यस्य नास्ति समो वीर्य्ये कश्चिदुर्व्व्यां धनुर्द्धरः। सोऽद्य कन्यापरिवृतो गायन्नास्ते धनञ्जयः।
धर्म्मे शौर्य्ये च सत्ये च जीवलोकस्य सम्मतं। स्त्रीवेशविकृतं पार्थं दृष्ट्वा सीदति मे मनः।
यदा ह्येनं परिवृतं कन्याभिर्देवरूपिणं। प्रभिन्नमिव मातङ्गं परिकीर्णं करेणुभिः।　　५८५
मत्स्यमर्थपतिं पार्थं विराटं समुपस्थितं। पश्यामि तूर्य्यमध्यस्थं दिशो नश्यन्ति मे तदा।
नूनमार्य्या न जानाति कृच्छ्रं प्राप्तं धनञ्जयं। अजातशत्रुं कौरव्यं मग्नं दुर्द्यूतदेविनं।
तथा दृष्ट्वा यवीयांसं सहदेवं गवाम्पतिं। गोषु गोवेशमायान्तं पाण्डुभूताऽस्मि भारत।
सहदेवस्य वृत्तानि चिन्तयन्ती पुनःपुनः। न निद्रामभिगच्छामि भीमसेन कुतो रतिं।
न विन्दामि महाबाहो सहदेवस्य दुष्कृतं। यस्मिन्नेवंविधं दुःखं प्राप्नुयात् सत्यविक्रमः।　　५९०
दूयामि भरतश्रेष्ठ दृष्ट्वा ते भ्रातरम्प्रियं। गोषु गोवृषसङ्काशं मत्स्येनाभिनिवेशितं।
संरब्धं रक्तनेपथ्यं गोपालानां पुरोगमं। विराटमभिनन्दन्तमथ मे भवति ज्वरः।
सहदेवं हि मे वीरं नित्यमार्य्या प्रशंसति। महाभिजनसम्पन्नः शीलवान् वृत्तवानिति।
ह्रीनिषेवो मधुरवाक् धार्म्मिकश्च प्रियश्च मे। स तेऽरण्येषु वोढव्यो याज्ञसेनि क्षपास्वपि।
सुकुमारश्च शूरश्च राजानं चाप्यनुव्रतः। ज्येष्ठापचायिनं वीरं स्वयं पाञ्चालि भोजयेः।　　५९५

इत्युवाच हि मां कुन्ती रुदती पुत्रगृद्धिनी । प्रव्रजन्तं महारण्यं तं परिष्वज्य तिष्ठती ।
तं दृष्ट्वा व्यापृतं गोषु वत्सचर्म्मक्षपाशयं । सहदेवं युधां श्रेष्ठं किन्नु जीवामि पाण्डव ।
यस्त्रिभिर्नित्यसम्पन्नो रूपेणास्त्रेण मेधया । सोऽश्वबन्धो विराटस्य पश्य कालस्य पर्य्ययं ।
अभ्यकीर्य्यन्त वृन्दानि दामग्रन्थिमुदीक्षतं । विनयन्तं जवेनाश्वान् महाराजस्य पश्यतः ।
अपश्यमेनं श्रीमन्तं मत्स्यं भ्राजिष्णुमुत्तमं । विराटमुपतिष्ठन्तं दर्शयन्तञ्च वाजिनः । १००
किन्नु मां मन्यसे पार्थ सुखिनीति परन्तप । एवं दुःखशताविष्टा युधिष्ठिरनिमित्ततः ।
अतः प्रतिविशिष्टानि दुःखान्यन्यानि भारत । वर्त्तन्ते मयि कौन्तेय वक्ष्यामि शृणु तान्यपि ।
युष्मासु ध्रियमाणेषु दुःखानि विविधान्युत । शोषयन्ति शरीरं मे किं नु दुःखमतः परं ।
इति श्रीमहाभारते विराटपर्व्वणि कीचकवधपर्व्वणि द्रौपदीभीमसंवादे एकोनविंशोऽध्यायः ॥ १९ ॥
॥ द्रौपद्युवाच ॥ अहं सैरिन्ध्रिवेशेन चरन्ती राजवेश्मनि । शौचदाऽस्मि सुदेष्णाया अक्षधूर्त्तस्य कारणात् ।
विक्रियां पश्य मे तीव्रां राजपुत्र्याः परन्तप । आसे कालमुदीक्षन्ती सर्व्वं दुःखं किलान्तवत् । १०५
अनित्या किल मर्त्त्यानामर्थसिद्धिर्जयाजयौ । इति कृत्वा प्रतीक्षामि भर्त्तॄणामुदयं पुनः ।
चक्रवत् परिवर्त्तन्ते ह्यर्थाश्च व्यसनानि च । इति कृत्वा प्रतीक्षामि भर्त्तॄणामुदयं पुनः ।
य एव हेतुर्भवति पुरुषस्य जयावहः । पराजये च हेतुश्च स इति प्रतिपालये ।
किं मां न प्रतिजानीषे भीमसेन मृतामिव । दत्त्वा याचन्ति पुरुषा हत्वा वध्यन्ति चापरे ।
पातयित्वा च पात्यन्ते परैरिति च मे श्रुतं । न दैवस्यातिभारोऽस्ति न चैवास्यातिवर्त्तनं । ११०
इति चाप्यागमं भूयो दैवस्य प्रतिपालये । स्थितं पूर्व्वं जलं यत्र पुनस्तत्रैव गच्छति ।
इति पर्य्यायमिच्छन्ती प्रतीक्षे उदयं पुनः । दैवेन किल यस्यार्थः सुनीतोऽपि विपद्यते ।
दैवस्य चागमे यत्नस्तेन कार्य्यो विजानता । यत्तु मे वचनस्यास्य कथितस्य प्रयोजनं ।
पृच्छ मां दुःखितां तत्त्वं पृष्टा चात्र ब्रवीमि ते । महिषी पाण्डुपुत्राणां दुहिता द्रुपदस्य च ।
इमामवस्थां सम्प्राप्ता मदन्या का जिजीविषेत् । कुरून् परिभवेत् सर्व्वान् पाञ्चालानपि भारत । ११५
पाण्डवेयांश्च सम्प्राप्तो मम क्लेशो ह्यरिन्दम । भ्रातृभिः श्वशुरैः पुत्रैर्बहुभिः परिवारिता ।
एवं समुदिता नारी कान्वन्या दुःखिता भवेत् । नूनं हि बालया धातुर्मया वै विप्रियं कृतं ।
यस्य प्रसादाद्दुर्नीतं प्राप्ताऽस्मि भरतर्षभ । वर्णावकाशमपि मे पश्य पाण्डव यादृशं ।
तादृशो मे न तत्रासीत् दुःखे परमके तदा । त्वमेव भीम जानीषे यन्मे पार्थ सुखं पुरा ।
साऽहन्दासीत्वमापन्ना न शान्तिमवशा लभे । नादैविकमहं मन्ये यत्र पार्थो धनञ्जयः । १२०
भीमधन्वा महाबाहुरास्ते शान्त इवानलः । अशक्या वेदितुं पार्थ प्राणिनां वै गतिर्नरैः ।
विनिपातमिमं मन्ये युष्माकं ह्यविचिन्तितं । यस्या मम मुखप्रेक्षा यूयमिन्द्रसमाः सदा ।
सा प्रेक्षे मुखमन्यासामवराणां वरा सती । पश्य पाण्डव मेऽवस्थां यथा नार्हामि वै तथा ।
युष्मासु ध्रियमाणेषु पश्य कालस्य पर्य्ययं । यस्याः सागरपर्य्यन्ता पृथिवी वशवर्त्तिनी ।

आसीत्साऽद्य सुदेष्णाया भीताऽहं वशवर्त्तिनी। यस्याः पुरःसरा आसन् पृष्ठतश्चानुगामिनः। ६२०
साऽहमद्य सुदेष्णायाः पुरः पश्चाच्च गामिनी। इदन्तु दुःखं कौन्तेय ममासह्यं निबोध तत्।
या न जातु स्वयं पिंषे गात्रोद्वर्त्तनमात्मनः। अन्यत्र कुन्त्या भद्रन्ते सा पिनष्म्यद्य चन्दनं।
पश्य कौन्तेय पाणी मे नैवाभूतां हि यौ पुरा। इत्यस्य दर्शयामास किणबद्धौ करावुभौ।
बिभेमि कुन्त्या या नाहं युष्माकं वा कदाचन। साऽद्याग्रतो विराटस्य भीता तिष्ठामि किङ्करी।
किं नु वक्ष्यति सम्राण्मां वर्णकः सुकृतो न वा। नान्यपिष्टं हि मत्स्यस्य चन्दनं किल रोचते। ६२५
॥ वैशम्पायन उवाच ॥ सा कीर्त्तयन्ती दुःखानि भीमसेनस्य भामिनी। रुरोद शनकैः कृष्णा भीमसेनमुदीक्षती।
सा वाष्पकलया वाचा निःश्वसन्ती पुनःपुनः। हृदयं भीमसेनस्य घट्टयन्तीदमब्रवीत्।
॥ द्रौपद्युवाच ॥ नाल्पं कृतं मया भीम देवानां किल्बिषं पुरा। अभाग्या यत्र जीवामि कर्त्तव्ये सति पाण्डव।
॥ वैशम्पायन उवाच ॥ ततस्तस्याः करौ सूक्ष्मौ किणबद्धौ वृकोदरः। मुखमानीय वै पत्न्या रुरोद परवीरहा।
तौ गृहीत्वा च कौन्तेयो वाष्पमुत्सृज्य वीर्य्यवान्। ततः परमदुःखार्त्त इदं वचनमब्रवीत्। ६३०
इति श्रीमहाभारते विराटपर्व्वणि कीचकवधपर्व्वणि द्रौपदीभीमसंवादे विंशोऽध्यायः ॥ २० ॥
॥ भीमसेन उवाच ॥ धिगस्तु मे बाहुबलं गाण्डीवं फाल्गुनस्य च। यत्ते रक्तौ पुरा भूत्वा पाणी कृतकिणाविमौ।
सभायान्तु विराटस्य करोमि कदनं महत्। तत्र मे कारणं भाति कौन्तेयो यत् प्रतीक्षते।
अथ वा कीचकस्याहं पोथयामि पदा शिरः। ऐश्वर्य्यमदमत्तस्य क्रीडन्निव महाद्विपः।
अपश्यन्त्वां यदा कृष्णे कीचकेन पदाहतां। तदैवाहं चिकीर्षामि मत्स्यानां कदनं महत्।
तत्र मां धर्म्मराजस्तु कटाक्षेण न्यवारयत्। तदहन्तस्य विज्ञाय स्थित एवास्मि भामिनि। ६३५
यच्च राष्ट्रात् प्रच्यवनं कुरूणामवधश्च यः। सुयोधनस्य कर्णस्य शकुनेः सौबलस्य च।
दुःशासनस्य पापस्य यन्मया न हृतं शिरः। तन्मे दहति गात्राणि हृदि शल्यमिवार्पितं।
मा धर्म्मं जहि सुश्रोणि क्रोधं जहि महामते। इदन्तु समुपालम्भं त्वत्तो राजा युधिष्ठिरः।
शृणुयाद्यदि कल्याणि कृत्स्नं जह्यात् स जीवितं। धनञ्जयो वा सुश्रोणि यमौ वा तनुमध्यमे।
लोकान्तरगतेष्वेषु नाहं शक्ष्यामि जीवितुं। पुरा सुकन्या भार्य्या च भार्गवं च्यवनं वने। ६४०
वल्मीकभूतं शाम्यन्तमन्वपद्यत भामिनी। नारायणी चेन्द्रसेना रूपेण यदि ते श्रुता।
पतिमन्वचरद्वृद्धं पुरा वर्षसहस्रिणं। दुहिता जनकस्यापि वैदेही यदि ते श्रुता।
पतिमन्वचरत्सीता महारण्यनिवासिनं। रक्षसा निग्रहं प्राप्य रामस्य महिषी प्रिया।
क्लिश्यमानाऽपि सुश्रोणी राममेवान्वपद्यत। लोपामुद्रा तथा भीरु वयोरूपसमन्विता।
अगस्त्यमन्वयाद्धित्वा कामान् सर्व्वानमानुषान्। द्युमत्सेनसुतं वीरं सत्यवन्तमनिन्दिता। ६४५
सावित्र्यनुचचारैका यमलोकं मनस्विनी। यथैताः कीर्त्तिता नार्य्यो रूपवत्यः पतिव्रताः।
तथा त्वमपि कल्याणि सर्व्वैः समुदिता गुणैः। मा दीर्घं क्षम कालन्त्वं मासमर्द्धञ्च सम्मितं।
पूर्णे त्रयोदशे वर्षे राज्ञां राज्ञी भविष्यसि।

॥ द्रौपद्युवाच ॥ आर्त्तयैतन्मया भीम कृतं वाष्पप्रमोचनं । अपारयन्त्या दुःखानि न राजानमुपालभे ।
किमुक्तेन व्यतीतेन भीमसेन महाबल । प्रत्युपस्थितकालस्य कार्य्यस्यानन्तरो भव । ६६०
ममेह भीम कैकेयी रूपाभिभवशङ्कया । नित्यमुद्विजते राजा कथं नेयादिमामिति ।
तस्या विदित्वा तं भावं स्वयं चानृतदर्शनः । कीचकोऽयं सुदुष्टात्मा सदा प्रार्थयते हि मां ।
तमहं कुपिता भीम पुनः कोपं नियम्य च । अब्रुवं कामसंमूढमात्मानं रक्ष कीचक ।
गन्धर्व्वाणामहं भार्य्या पञ्चानां महिषी प्रिया । ते त्वां निहन्युः कुपिताः शूराः साहसकारिणः ।
एवमुक्तः सुदुष्टात्मा कीचकः प्रत्युवाच ह । नाहं बिभेमि सैरिन्ध्रि गन्धर्व्वाणां शुचिस्मिते । ६६५
शतं शतसहस्राणि गन्धर्व्वाणामहं रणे । समागतं हनिष्यामि त्वम्भीरु कुरु मे क्षणं ।
इत्युक्ते चाब्रुवं मत्तं कामातुरमहं पुनः । न त्वम्प्रतिबलस्तेषां गन्धर्व्वाणां यशस्विनां ।
धर्म्मे स्थिताऽस्मि सततं कुलशीलसमन्विता । नेच्छामि कञ्चिद्बध्यन्तं तेन जीवसि कीचक ।
एवमुक्तः स दुष्टात्मा प्राहसत् स्वनवत्तदा । अथ मां तत्र कैकेयी प्रैषयत् प्रणयेन तु
तेनैव देशिता पूर्व्वं भ्रातृप्रियचिकीर्षया । सुरामानय कल्याणि कीचकस्य निवेशनात् । ६७०
सूतपुत्रस्तु मां दृष्ट्वा महत् सान्त्वमवर्त्तयत् । सान्त्वे प्रतिहते क्रुद्धः परामर्षमनाऽभवत् ।
विदित्वा तस्य सङ्कल्पं कीचकस्य दुरात्मनः । तथाऽहं राजशरणं जवेनैव प्रधाविता ।
सन्दर्शने तु मां राज्ञः सूतपुत्रः परामृषत् । पातयित्वा तु दुष्टात्मा पदाऽहन्तेन ताडिता ।
प्रेक्षते स्म विराटस्तु कङ्कस्तु बहवो जनाः । रथिनः पीठमर्द्दाश्च हस्त्यारोहाश्च नैगमाः ।
उपालब्धो मया राजा कङ्कश्चापि पुनः पुनः । ततो न वारितो राज्ञा न तस्य विनयः कृतः । ६७५
योऽयं राज्ञो विराटस्य कीचको नाम सारथिः । त्यक्तधर्म्मा नृशंसश्च नरस्त्रीसम्मतः प्रियः ।
शूरोऽभिमानी पापात्मा सर्व्वार्थेषु च मुग्धवान् । दारामर्षी महाभाग लभतेऽर्थान् बहूनपि ।
आहरेदपि वित्तानि परेषां क्रोशतामपि । न तिष्ठति स्म सन्मार्गे नच धर्म्मं बुभूषति ।
पापात्मा पापभावश्च कामवाणवशानुगः । अविनीतश्च दुष्टात्मा प्रत्याख्यातः पुनःपुनः ।
दर्शने दर्शने हन्याद्यदि जह्यां च जीवितं । तद्धर्म्मे यतमानानां महान् धर्म्मो नशिष्यति । ६८०
समयं रक्षमाणानां भार्य्या वो न भविष्यति । भार्य्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः । आत्मा हि जायते तस्यां तेन जायां विदुर्बुधाः ।
भर्त्ता तु भार्य्यया रक्ष्यः कथञ्जायान्ममोदरे । वदतां वर्णधर्म्मांश्च ब्राह्मणानामिति श्रुतं ।
क्षत्रियस्य सदा धर्म्मो नान्यः शत्रुनिबर्हणात् । पश्यतो धर्म्मराजस्य कीचको माम्पदाऽवधीत् ।
तव चैव समक्षं वै भीमसेन महाबल । त्वया ह्यहं परित्राता तस्माद्घोराज्जटासुरात् । ६८५
जयद्रथन्तथैव त्वमजैषीर्भ्रातृभिः सह । जहीममपि पापिष्ठं योऽयं मामवमन्यते ।
कीचको राजवाल्लभ्याच्छोककृन्मम भारत । तमेवं कामसंमत्तं भिन्धि कुम्भमिवाश्मनि ।
यो निमित्तमनर्थानां बहूनां मम भारत । तञ्चेज्जीवन्तमादित्यः प्रातरभ्युदयिष्यति ।

विषमालोड्य पास्यामि मा कीचकवशङ्गमं। श्रेयो हि मरणं मह्यम्भीमसेन तवाग्रतः।

॥ वैशम्पायन उवाच ॥ इत्युक्त्वा प्राहदत्कृष्णा भीमस्योरःसमाश्रिता। भीमश्च तामपरिष्वज्य महत्सान्त्वं प्रयुज्य च। ६९०

आश्वासयित्वा बहुशो भृशमार्त्तां सुमध्यमां। हेतुतत्त्वार्थसंयुक्तैर्व्वचोभिर्द्रुपदात्मजां।

प्रमृज्य वदनं तस्याः पाणिनाऽश्रुसमाकुलं। कीचकं मनसाऽगच्छत् सृक्कणी परिसंलिहन्।

उवाच चैनां दुःखार्त्तां भीमः क्रोधसमन्वितः।

इति श्रीमहाभारते विराटपर्व्वणि कीचकवधपर्व्वणि द्रौपदीसान्त्वने एकविंशोऽध्यायः॥ २१ ॥

॥ भीमसेन उवाच ॥ तथा भद्रे करिष्यामि यथा त्वम्भीरु भाषसे। अद्य तं सूदयिष्यामि कीचकं सहबान्धवं।

अस्याः प्रदोषे शर्व्वर्य्याः कुरुष्वानेन सङ्गतं। दुःखं शोकञ्च निर्द्धूय याज्ञसेनि शुचिस्मिते। ६९५

यैषा नर्त्तनशालेह मत्स्यराजेन कारिता। दिवाऽत्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहं।

तत्रास्ति शयनं दिव्यं दृढाङ्गं सुप्रतिष्ठितं। तत्रास्य दर्शयिष्यामि पूर्व्वप्रेतान् पितामहान्।

यथा च त्वां न पश्येयुः कुर्व्वाणां तेन संविदं। कुर्य्यास्तथा त्वं कल्याणि यथा सन्निहितो भवेत्।

॥ वैशम्पायन उवाच ॥ तथा तौ कथयित्वा तु वाष्पमुत्सृज्य दुःखितौ। रात्रिशेषं तमत्युग्रं धारयामासतुर्हृदि।

तस्यां रात्र्यां व्यतीतायां प्रातरुत्थाय कीचकः। गत्वा राजकुलायैव द्रौपदीमिदमब्रवीत्। ७००

सभायां पश्यतो राज्ञः पातयित्वा पदाऽहनं। न चैवालभथे त्राणमभिपन्ना बलीयसा।

प्रवादेनेह मत्स्यानां राजा नाम्नाऽयमुच्यते। अहमेव हि मत्स्यानां राजा वै वाहिनीपतिः।

मां सुखं प्रतिपद्यस्व दासो भीरु भवामि ते। अह्नाय तव सुश्रोणि शतं निष्कं ददाम्यहं।

दासीशतञ्च ते दद्यां दासानामपि चापरं। रथं चाश्वतरीयुक्तमस्तु नौ भीरु सङ्गमः।

॥ द्रौपद्युवाच ॥ एवं मे समयं त्वद्य प्रतिपद्यस्व कीचक। न त्वां सखा वा भ्राता वा जानीयात्सङ्गतं मया। ७०५

अनुप्रवादाद्भीताऽस्मि गन्धर्व्वाणां यशस्विनां। एवं मे प्रतिजानीहि ततोऽहं वशगा तव।

॥ कीचक उवाच ॥ एवमेतत् करिष्यामि यथा सुश्रोणि भाषसे। एको भद्रे गमिष्यामि शून्यमावसथं तव।

समागमार्थं रम्भोरु त्वया मदनमोहितः। यथा त्वां नैव पश्येयुर्गन्धर्व्वाः सूर्य्यवर्च्चसः।

॥ द्रौपद्युवाच ॥ यदेतन्नर्त्तनागारं मत्स्यराजेन कारितं। दिवाऽत्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहं।

तमिस्रे तत्र गच्छेथा गन्धर्व्वास्तन्न जानते। तत्र दोषः परिहृतो भविष्यति न संशयः। ७१०

॥ वैशम्पायन उवाच ॥ तमर्थमभिजल्पन्त्याः कृष्णायाः कीचकेन ह। दिवसार्द्धं समभवन्मासेनैव समं नृप।

ततः सा भीमसेनस्य तमर्थं प्रत्यवेदयत्। कीचकोऽथ गृहं गत्वा भृशं हर्षपरिप्लुतः।

सैरिन्ध्रीरूपिणं मूढो मृत्युं तन्नावबुद्धवान्। गन्धाभरणमाल्येषु व्यासक्तः सविशेषतः।

अलञ्चक्रे तदात्मानं सत्वरं काममोहितः। तस्य तत् कुर्व्वतः कर्म्म कालो दीर्घ इवाभवत्।

अनुचिन्तयतश्चापि तामेवायतलोचनां। आसीदभ्यधिका चापि श्रीः श्रियं प्रमुमुक्षतः। ७१५

निर्व्वाणकाले दीपस्य वर्त्तीमिव दिधक्षतः। कृतसम्प्रत्ययस्तस्याः कीचकः काममोहितः।

नाजानाद्दिवसं यान्तं चिन्तयानः समागमं। ततस्तु द्रौपदी गत्वा तदा भीमं महानसे।

उपातिष्ठत कल्याणी कौरव्यं पतिमन्तिकं । तमुवाच सुकेशान्ता कीचकस्य मया कृतः ।
सङ्गमो नर्त्तनागारे यथाऽवोचः परन्तप । शून्यं स नर्त्तनागारमागमिष्यति कीचकः ।
एको निशि महाबाहो कीचकं तं निसूदय । तं सूतपुत्रं कौन्तेय कीचकं मदद्र्प्पितं । ७२०
गत्वा त्वं नर्त्तनागारं निर्ज्जीवं कुरु पाण्डव । दर्पाच्च सूतपुत्त्रोऽसौ गन्धर्व्वानवमन्यते ।
तं त्वं प्रहरतां श्रेष्ठ ह्रदान्नागमिवोद्धर । अश्रु दुःखाभिभूताया मम मार्ज्जस्व भारत ।
आत्मनश्चैव भद्रन्ते कुरु मानं कुलस्य च ।
॥ भीमसेन उवाच ॥ एवं करोम्यहं भद्रे यथा त्वं भीरु भाषसे । स्वागतं ते वरारोहे यन्मां वेदयसे प्रियं ।
न ह्यन्यं कञ्चिदिच्छामि सहायं वरवर्णिनि । या मे प्रीतिस्त्वयाख्याता कीचकस्य समागमे । ७२५
हत्वा हिडिम्बं सा प्रीतिर्ममासीद्वरवर्णिनि । सत्यं भ्रातॄंश्च धर्म्मञ्च पुरस्कृत्य ब्रवीमि ते ।
कीचकं निहनिष्यामि वृत्रं देवपतिर्य्यथा । तं गह्वरे प्रकाशे वा पोथयिष्यामि कीचकं ।
अथ चेदपि योत्स्यन्ति हिंसे मत्स्यानपि ध्रुवं । ततो दुर्य्योधनं हत्वा प्रतिपत्स्ये वसुन्धरां ।
कामं मत्स्यमुपास्तां हि कुन्तीपुत्रो युधिष्ठिरः ।
॥ द्रौपद्युवाच ॥ यथा न संत्यजेथास्त्वं सत्यं वै मत्कृते विभो । निगूढस्त्वं तथा पार्थ कीचकं तं निसूदय । ७३०
॥ भीमसेन उवाच ॥ एवमेतत् करिष्यामि यथा त्वं भीरु भाषसे । अद्य तं सूदयिष्यामि कीचकं सह बान्धवैः ।
अदृश्यमानस्तस्याद्य तमस्विन्यामनिन्दिते । नागो बिल्वमिवाक्रम्य पोथयिष्याम्यहं शिरः ।
अलभ्यामिच्छतस्तस्य कीचकस्य दुरात्मनः ।
॥ वैशम्पायन उवाच ॥ भीमोऽथ प्रथमं गत्वा रात्रौ छन्न उपाविशत् । मृगं हरिरिवादृश्यः प्रत्याकाङ्क्षत कीचकं ।
कीचकश्चाप्यलङ्कृत्य यथाकाममुपागमत् । तां वेलां नर्त्तनागारं पाञ्चालीसङ्गमाशया । ७३५
मन्यमानः स सङ्केतमागारं प्राविशत्ततः । प्रविश्य च स तद्वेश्म तमसा संवृतं महत् ।
पूर्व्वागतं ततस्तत्र भीममप्रतिमौजसं । एकान्तावस्थितं चैनमाससाद सुदुर्म्मतिः ।
शयानं शयने तत्र सूतपुत्त्रः परामृशत् । जाज्वल्यमानं कोपेन कृष्णाधर्षणजेन ह ।
उपसङ्गम्य चैवैनं कीचकः काममोहितः । हर्षोन्मथितचित्तात्मा स्मयमानोऽभ्यभाषत ।
प्रापितन्ते मया वित्तं बहुरूपमनन्तकं । त्वत्कृते धनरत्नाढ्यं दासीशतपरिच्छदं । ७४०
रूपलावण्ययुक्ताभिर्युवतीभिरलङ्कृतं । गृहं चान्तःपुरं सुभ्रु क्रीडारतिविराजितं ।
तत्सर्व्वं त्वां समुद्दिश्य सहसाऽहमुपागतः । अकस्मात् मां प्रशंसन्ति सदा गृहगताः स्त्रियः ।
सुवासा दर्शनीयश्च नाऽन्योऽस्ति त्वादृशः पुमान् ।
॥ भीमसेन उवाच ॥ दिष्ट्या त्वं दर्शनीयोऽद्य दिष्ट्यात्मानं प्रशंससि । ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्व्वो न कर्हिचित् ।
स्पर्शं वेत्सि विदग्धस्त्वं कामधर्म्मविचक्षणः । स्त्रीणां प्रीतिकरो नान्यस्त्वत्समः पुरुषस्त्विह । ७४५
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा तं महाबाहुर्भीमो भीमपराक्रमः । सहसोत्पत्य कौन्तेयः प्रहस्येदमुवाच ह ।
अद्य त्वां भगिनी पापं कृष्यमाणं मया भुवि । द्रक्ष्यतेऽद्रिप्रतीकाशं सिंहेनेव महागजं ।

निराबाधा त्वयि हते सैरिन्ध्री विचरिष्यति। सुखमेव चरिष्यन्ति सैरिन्ध्र्याः पतयः सदा।
ततो जग्राह केशेषु माल्यवत्सु महाबलः। स केशेषु परामृष्टो बलेन बलिनाम्वरः।
आक्षिप्य केशान्वेगेन बाह्वोर्जग्राह पाण्डवं। बाहुयुद्धं तयोरासीत् क्रुद्धयोर्नरसिंहयोः। १५०
वसन्ते वासिताहेतोर्बलवद्गजयोरिव। कीचकानान्तु मुख्यस्य नराणामुत्तमस्य च।
वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः। अन्योऽन्यमभिसंरब्धौ परस्परजयैषिणौ।
ततः समुद्यम्य भुजौ पञ्चशीर्षाविवोरगौ। नखदंष्ट्राभिरन्योऽन्यं घ्नतः क्रोधविषोद्धतौ।
वेगेनाभिहतो भीमः कीचकेन बलीयसा। स्थिरप्रतिज्ञः स रणे पदान्न चलितः पदं।
तावन्योऽन्यं समाश्लिष्य प्रकर्षन्तौ परस्परं। उभावपि प्रकाशेते प्रवृद्धौ वृषभाविव। १५५
तयोर्ह्यासीत् सुतुमुलः सम्प्रहारः सुदारुणः। नखदन्तायुधवतोर्व्याघ्रयोरिव दृप्तयोः।
अभिपत्याथ बाहुभ्यां प्रत्यगृह्णादमर्षितः। मातङ्ग इव मातङ्गं प्रभिन्नकरटामुखं।
स चाप्येनं तदा भीमः प्रतिजग्राह वीर्य्यवान्। तमाक्षिपत् कीचकोऽथ बलेन बलिनां वरः।
तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा। शब्दः समभवद्घोरो वेणुस्फोटसमो युधि।
अथैनमाक्षिप्य बलाद्गृहमध्ये वृकोदरः। धूनयामास वेगेन वायुश्चण्ड इव द्रुमं। १६०
भीमेन च परामृष्टो दुर्ब्बलो बलिना रणे। व्यसन्दत यथाप्राणं विचकर्ष च पाण्डवं।
ईषदाकलितं चापि क्रोधात् द्रुतपदं स्थितं। कीचको बलवान् भीमं जानुभ्यामाक्षिपद्भुवि।
पातितो भुवि भीमस्तु कीचकेन बलीयसा। उत्पपाताथ वेगेन दण्डपाणिरिवान्तकः।
स्पर्द्धया च बलोन्मत्तौ तावुभौ सूतपाण्डवौ। निशीथे पर्य्यकर्षेतां बलिनौ निर्जने स्थले।
ततस्तद्भवनश्रेष्ठं प्राकम्पत मुहुर्मुहुः। बलवच्चापि संक्रुद्धावन्योऽन्यं प्रति गर्ज्जतां। १६५
तलाभ्यां स तु भीमेन वक्षस्यभिहतो बली। कीचको रोषसन्तप्तः पदान्न चलितः पदं।
मुहूर्त्तं तु स तं वेगं सहित्वा भुवि दुःसहं। बलादहीयत तदा सूतो भीमबलार्दितः।
तं हीयमानं विज्ञाय भीमसेनो महाबलः। वक्षस्यानीय वेगेन ममर्द्दैनं विचेतसं।
क्रोधाविष्टो विनिःश्वस्य पुनश्चैनं वृकोदरः। जग्राह जयतां श्रेष्ठः केशेष्वेव तदा भृशं।
गृहीत्वा कीचकं भीमो विरुराव महाबलः। शार्दूलः पिशिताकाङ्क्षी गृहीत्वेव महामृगं। १७०
तत एनं परिश्रान्तमुपलभ्य वृकोदरः। योक्त्रयामास बाहुभ्यां पशुं रशनया यथा।
नदन्तञ्च महानादं भिन्नभेरीसमस्वनं। भ्रामयामास सुचिरं विस्फुरन्तमचेतसं।
प्रगृह्य तरसा दोर्भ्यां कण्ठं तस्य वृकोदरः। अपीडयत कृष्णायास्तदा कोपोपशान्तये।
अथ तम्भग्नसर्व्वाङ्गं व्याविद्धनयनाम्बरं। आक्रम्य च कटीदेशे जानुना कीचकाधमं।
अपीडयत बाहुभ्यां पशुमारममारयत्। तं विषीदन्तमाज्ञाय कीचकं पाण्डुनन्दनः। १७५
भूतले भ्रामयामास वाक्यं चेदमुवाच ह। अद्याहमनृणो भूत्वा भ्रातुर्भार्य्यापहारिणं। शान्तिं लब्धाऽस्मि परमां हत्वा सैरिन्ध्रि कण्टकं।

इत्येवमुक्त्वा पुरुषप्रवीरस्तं कीचकं क्रोधसरागनेत्रः। आस्रस्तवस्त्राभरणं स्फुरन्तमुद्भ्रान्तनेत्रं व्यसुमुत्ससर्ज।
निष्पिष्य पाणिना पाणिं सन्दष्टौष्ठपुटं बली। समाक्रम्य च संक्रुद्धो बलेन बलिनां वरः।
तस्य पादौ च पाणी च शिरो ग्रीवाञ्च सर्व्वशः। काये प्रवेशयामास पशोरिव पिनाकधृक्।
तं संमथितसर्व्वाङ्गं मांसपिण्डोपमं कृतं। कृष्णाया दर्शयामास भीमसेनो महाबलः। ७८०
उवाच च महातेजा द्रौपदीं योषितां वरां। पश्येनमेहि पाञ्चालि कामुकोऽयं यथाकृतः।
एवमुक्त्वा महाराज भीमो भीमपराक्रमः। पादेन पीडयामास तस्य कायं दुरात्मनः।
ततोऽग्निं तत्र प्रज्वाल्य दर्शयित्वा तु कीचकं। पाञ्चालीं स तदा वीर इदं वचनमब्रवीत्।
प्रार्थयन्ति सुकेशान्ते ये त्वां शीलगुणान्वितां। एवन्ते भीरु वध्यन्ते कीचकः शोभते यथा।
तत् कृत्वा दुष्करं कर्म्म कृष्णायाः प्रियमुत्तमं। तथा स कीचकं हत्वा गत्वा रोषस्य वै शमं। ७८५
आमन्त्र्य द्रौपदीं कृष्णां क्षिप्रमायान्महानसं। कीचकं घातयित्वा तु द्रौपदी योषितां वरा।
प्रहृष्टा गतसन्तापा सभापालानुवाच ह। कीचकोऽयं हतः शेते गन्धर्व्वैः पतिभिर्म्मम।
परस्त्रीकामसंमत्तस्तत्रागच्छत पश्यत। तच्छ्रुत्वा भाषितं तस्या नर्त्तनागाररक्षिणः।
सहसैव समाजग्मुरादायोल्काः सहस्रशः। ततो गत्वाऽथ तद्वेश्म कीचकं विनिपातितं।
गतासुं ददृशुर्भूमौ रुधिरेण समुक्षितं। पाणिपादविहीनन्तु दृष्ट्वा च व्यथिताऽभवन्। ७९०
निरीक्षन्ति ततः सर्व्वे परं विस्मयमागताः। अमानुषकृतं कर्म्म तं दृष्ट्वा विनिपातितं।
क्वास्य ग्रीवा क्व चरणौ क्व पाणी क्व शिरस्तथा। इति स्म तं परीक्षन्ते गन्धर्व्वेण हतं तदा।
इति श्रीमहाभारते विराटपर्व्वणि कीचकवधपर्व्वणि कीचकवधे द्वाविंशोऽध्यायः॥ २२ ॥
॥ वैशम्पायन उवाच ॥ तस्मिन्काले समागम्य सर्व्वे तत्रास्य बान्धवाः। रुरुदुः कीचकं दृष्ट्वा परिवार्य्य समन्ततः।
सर्व्वे संहृष्टरोमाणः सन्त्रस्ताः प्रेक्ष्य कीचकं। तथा सम्भिन्नसर्व्वाङ्गं कूर्म्मं स्थल इवोद्धृतं।
पोथितं भीमसेनेन तमिन्द्रेणेव दानवं। संस्कारयितुमिच्छन्तो बहिर्नेतुं प्रचक्रमुः। ७९५
ददृशुस्ते ततः कृष्णां सूतपुत्राः समागताः। अदूराच्चानवद्याङ्गीं स्तम्भमालिङ्ग्य तिष्ठतीं।
समवेतेषु सर्व्वेषु तामूचुरुपकीचकाः। हन्यतां शीघ्रमसती यत्कृते कीचको हतः।
अथ वा नैव हन्तव्या दह्यतां कामिना सह। मृतस्यापि प्रियं कार्य्यं सूतपुत्रस्य सर्व्वथा।
ततो विराटमूचुस्ते कीचकोऽस्याः कृते हतः। सहानेनाद्य दह्येम तदनुज्ञातुमर्हसि।
पराक्रमन्तु सूतानां मत्वा राजाऽन्वमोदत। सैरिन्ध्र्याः सूतपुत्रेण सह दाहं विशाम्पतिः। ८००
तां समासाद्य वित्रस्तां कृष्णां कमललोचनां। मोमुह्यमानां ते तत्र जगृहुः कीचका भृशं।
ततस्तु तां समारोप्य निबध्य च सुमध्यमां। जग्मुरुद्यम्य ते सर्व्वे श्मशानाभिमुखास्तदा।
ह्रियमाणा तु सा राजन् सूतपुत्रैरनिन्दिता। प्राक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती।
॥ द्रौपद्युवाच ॥ जयो जयन्तो विजयो जयत्सेनो जयद्बलः। ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति मां।
येषां ज्यातलनिर्घोषो विस्फूर्जितमिवाशनेः। व्यश्रूयत महायुद्धे भीमघोषस्तरस्विनां। ८०५

रथघोषश्च बलवान् गन्धर्व्वाणां तरस्विनां। ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति मां।
॥ वैशम्पायन उवाच ॥ तस्यास्ताः कृपणा वाचः कृष्णायाः परिदेविताः। श्रुत्वैवाभ्यपतद्भीमः शयनादविचारयन्।
॥ भीमसेन उवाच ॥ अहं शृणोमि ते वाचं त्वया सैरिन्ध्रि भाषितां। तस्मात्ते सूतपुत्रेभ्यो भयं भीरु न विद्यते।
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा स महाबाहुर्विजजृम्भे जिघांसया। ततः स व्यायतं कृत्वा वेशं विपरिवर्त्य च।
अद्वारेणाभ्यवस्कन्द्य निर्जगाम बहिस्तदा। स भीमसेनः प्राकारमारुह्य तरसा द्रुतं। ८१०
श्मशानाभिमुखः प्रायाद्यत्र ते कीचका गताः। स लङ्घयित्वा प्राकारं निःसृत्य च पुरोत्तमात्।
जवेन पतितो भीमः सूतानामग्रतस्तदा। चितासमीपे गत्वा स तत्रापश्यद्वनस्पतिं।
तालमात्रं महास्कन्धमूर्द्धशुष्कं विशाम्पते। तं नागवदुपक्रम्य बाहुभ्यां परिरभ्य च।
स्कन्धमारोपयामास दशव्यामं परन्तप। स तं वृक्षं दशव्यामं सस्कन्धविटपं बली।
प्रगृह्याभ्यद्रवत्सूतान् दण्डपाणिरिवान्तकः। ऊरुवेगेन तस्याथ न्यग्रोधाश्वत्थकिंशुकाः। ८१५
भूमौ निपतिता वृक्षाः सङ्घशस्तत्र शेरते। तं सिंहमिव संक्रुद्धं दृष्ट्वा गन्धर्व्वमागतं।
वित्रेसुः सर्व्वशः सूता विषादभयकम्पिताः। तमन्तकमिवायान्तं गन्धर्व्वं प्रेक्ष्य ते तदा।
दिधक्षन्तस्तदा ज्येष्ठं भ्रातरं ह्युपकीचकाः। परस्परमथोचुस्ते विषादभयकम्पिताः।
गन्धर्व्वो बलवानेति क्रुद्ध उद्यम्य पादपं। सैरिन्ध्री मुच्यतां शीघ्रं यतो नो भयमागतं।
ते तु दृष्ट्वा तदाविद्धं भीमसेनेन पादपं। विमुच्य द्रौपदीं तत्र प्राद्रवन्नगरं प्रति। ८२०
द्रवतस्तांस्तु सम्प्रेक्ष्य स वज्री दानवानिव। शतं पञ्चाधिकं भीमः प्राहिणोद्यमसादनं।
वृक्षेण तेन राजेन्द्र प्रभञ्जनसुतो बली। तत आश्वासयत् कृष्णां स विमुच्य विशाम्पते।
उवाच च महाबाहुः पाञ्चालीं तत्र द्रौपदीं। अश्रुपूर्णमुखीं दीनां दुर्द्धर्षः स वृकोदरः।
एवन्ते भीरु वध्यन्ते ये त्वां क्लिश्यन्त्यनागसं। प्रैहि त्वं नगरं कृष्णे न भयं विद्यते तव।
अन्येनाहं गमिष्यामि विराटस्य महानसं। ८२५
॥ वैशम्पायन उवाच ॥ पञ्चाधिकं शतं तच्च निहतं तत्र भारत। महावनमिव छिन्नं शिश्ये विगलितद्रुमं।
एवन्ते निहता राजन् शतं पञ्च च कीचकाः। स च सेनापतिः पूर्व्वमित्येतत् सूतषट्शतं।
तद्दृष्ट्वा महदाश्चर्य्यं नरा नार्य्यश्च सङ्गताः। विस्मयं परमं गत्वा नोचुः किञ्चन भारत।
इति श्रीमहाभारते विराटपर्व्वणि कीचकवधपर्व्वणि उपकीचकवधे त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ वैशम्पायन उवाच ॥ ते दृष्ट्वा निहतान् सूतान् राज्ञे गत्वा न्यवेदयन्। गन्धर्व्वैर्निहता राजन् सूतपुत्रा महाबलाः।
यथा वज्रेण वै दीर्णं पर्व्वतस्य महच्छिरः। व्यतिकीर्णाः प्रदृश्यन्ते तथा सूता महीतले। ८३०
सैरिन्ध्री च विमुक्ताऽसौ पुनरायाति ते गृहं। सर्व्वं संशयितं राजन् नगरन्ते भविष्यति।
यथारूपा च सैरिन्ध्री गन्धर्व्वाश्च महाबलाः। पुंसामिष्टश्च विषयो मैथुनाय न संशयः।
यथा सैरिन्ध्रिदोषेण न ते राजन्निदं पुरं। विनाशमेति वै क्षिप्रं तथा नीतिर्व्विधीयतां।
तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः। अब्रवीत् क्रियतामेषां सूतानां परमा क्रिया।

एकस्मिन्नेव ते सर्व्वे सुसमिद्धे हुताशने। दह्यन्तां कीचकाः शीघ्रं रत्नैर्गन्धैश्च सर्व्वशः। ८३५

सुदेष्णामब्रवीद्राजा महिषीं जातसाध्वसः। सैरिन्ध्रीमागतां ब्रूया ममैव वचनादिदं।

गच्छ सैरिन्ध्रि भद्रन्ते यथाकामं वरानने। बिभेति राजा सुश्रोणि गन्धर्व्वेभ्यः पराभवात्।

न हि त्वामुत्सहे वक्तुं स्वयं गन्धर्व्वरक्षितां। स्त्रियास्त्वदोषस्तां वक्तुमतस्त्वां प्रब्रवीम्यहं।

॥ वैशम्पायन उवाच ॥ अथ मुक्ता भयात् कृष्णा सूतपुत्रान्निरस्य च। मोक्षिता भीमसेनेन जगाम नगरं प्रति।

त्रासितेव मृगी बाला शार्दूलेन मनस्विनी। गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा। ८४०

तां दृष्ट्वा पुरुषा राजन् प्राद्रवन्त दिशो दश। गन्धर्व्वाणां भयत्रस्ताः केचिद्दृष्ट्वा न्यमीलयन्।

ततो महानसद्वारि भीमसेनमवस्थितं। ददर्श राजन् पाञ्चाली यथा मत्तं महाद्विपं।

तं विस्मयन्ती शनकैः संज्ञाभिरिदमब्रवीत्। गन्धर्व्वराजाय नमो येनास्मि परिमोचिता।

॥ भीम उवाच ॥ ये पुरा विचरन्तीह पुरुषा वशवर्त्तिनः। तस्यास्ते वचनं श्रुत्वा त्वनृणा विहरन्त्यतः।

॥ वैशम्पायन उवाच ॥ ततः सा नर्त्तनागारे धनञ्जयमपश्यत। राज्ञः कन्या विराटस्य नर्त्तयानं महाभुजं। ८४५

ततस्ता नर्त्तनागाराद्विनिष्क्रम्य सहार्ज्जुनाः। कन्या ददृशुरायान्तीं क्लिष्टां कृष्णामनागसं।

दृष्ट्वा तामेत्य सर्व्वास्ता इदमूचुः सहर्षिताः।

॥ कन्या ऊचुः ॥ दिष्ट्या सैरिन्ध्रि मुक्ताऽसि दिष्ट्याऽसि पुनरागता। दिष्ट्या विनिहताः सूता ये त्वां क्लिश्यन्त्यनागसं।

॥ बृहन्नलोवाच ॥ कथं सैरिन्ध्रि मुक्ताऽसि कथं पापाश्च ते हताः। इच्छामि वै तव श्रोतुं सर्व्वमेव यथातथं।

॥ सैरिन्ध्र्युवाच ॥ बृहन्नले किन्नु तव सैरिन्ध्र्या कार्य्यमद्य वै। या त्वं वससि कल्याणि सदा कन्यापुरे सुखे। ८५०

नहि दुःखमवाप्नोषि सैरिन्ध्री यदुपाश्नुते। तेन मां दुःखितामेवं पृच्छसे प्रहसन्निव।

॥ बृहन्नलोवाच ॥ बृहन्नलाऽपि कल्याणि दुःखमाप्नोत्यनुत्तमं। तिर्य्यग्योनिगता बाले नचैनामवबुध्यसे।

त्वया सहोषिता चास्मि त्वं च सर्व्वैः सहोषिता। क्लिश्यन्त्यां त्वयि सुश्रोणि को नु दुःखं न चिन्तयेत्।

न तु केनचिदत्यन्तं कस्यचिद्धृदयं क्वचित्। वेदितुं शक्यते नूनं तेन मां नावबुध्यसे।

॥ वैशम्पायन उवाच ॥ ततः सहैव कन्याभिर्द्रौपदी राजवेश्म तत्। प्रविवेश सुदेष्णायाः समीपमुपगामिनी। ८५५

तामब्रवीद्राजपत्नी विराटवचनादिदं। सैरिन्ध्रि गम्यतां शीघ्रं यत्र कामयसे गतिं।

राजा बिभेति ते भद्रे गन्धर्व्वेभ्यः पराभवात्। त्वञ्चापि तरुणी सुभ्रु रूपेणाप्रतिमा भुवि।

पुंसामिष्टश्च विषयो गन्धर्व्वाश्चातिकोपनाः।

॥ सैरिन्ध्र्युवाच ॥ त्रयोदशाहमात्रं मे राजा क्षाम्यतु भामिनि। कृतकृत्या भविष्यन्ति गन्धर्व्वास्ते न संशयः।

ततो मामुपनेष्यन्ति करिष्यन्ति च ते प्रियं। ध्रुवञ्च श्रेयसा राजा योक्ष्यते सह बान्धवैः। ८६०

इति श्रीमहाभारते विराटपर्व्वणि कीचकवधपर्व्वणि कीचकदाहे चतुर्विंशोऽध्यायः॥ २४ ॥ समाप्तञ्च कीचकवधपर्व्व॥

## ॥ अथ गोहरणपर्व्व ॥ ३ ॥

॥ वैशम्पायन उवाच ॥ कीचकस्य तु घातेन सानुजस्य विशाम्पते। अत्याहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः।

तस्मिन् पुरे जनपदे सञ्जल्पोऽभूच्च सर्व्वशः। शौर्य्याद्धि वल्लभो राज्ञो मत्स्यानाञ्च कीचकः।
आसीत् प्रहर्त्ता सैन्यानां दारामर्षी च दुर्म्मतिः। स हतः खलु पापात्मा गन्धर्व्वैर्दुष्टपूरुषः।
इत्यजल्पन्महाराज परानीकविनाशनं। देशे देशे मनुष्याश्च कीचकं दुष्प्रधर्षणं।
अथ वै धार्त्तराष्ट्रेण प्रयुक्ता ये वहिश्चराः। मृगयित्वा बहून् ग्रामान् राष्ट्राणि नगराणि च। ८६५
संविधाय यथादृष्टं यथादेशप्रदर्शनं। कृतकृत्या न्यवर्त्तन्त ते चरा नगरं प्रति।
तत्र दृष्ट्वा तु राजानं कौरव्यं धृतराष्ट्रजं। द्रोणकर्णकृपैः सार्द्धं भीष्मेण च महात्मना।
सङ्गतं भ्रातृभिश्चापि त्रिगर्त्तैश्च महारथैः। दुर्य्योधनं सभामध्ये आसीनमिदमब्रुवन्।
॥ चरा ऊचुः ॥ कृतोऽस्माभिः परो यत्नस्तेषामन्वेषणे सदा। पाण्डवानां मनुष्येन्द्र तस्मिन्महति कानने।
निर्जने मृगसङ्कीर्णे नानाद्रुमलताकुले। लताप्रतानबहुले नानागुल्मसमावृते। ८७०
न च विद्मो गता येन पार्थाः स्युर्दृढविक्रमाः। मार्गमाणाः पदन्यासं तेषु तेषु तथा तथा।
गिरिकूटेषु दुर्गेषु नानाजनपदेषु च। जनाकीर्णेषु देशेषु कटकेषु पुरेषु च।
नरेन्द्र बहुशोऽन्विष्टा नैव विद्मश्च पाण्डवान्। अत्यन्तं वा विनष्टास्ते भद्रन्तुभ्यं नरर्षभ।
वर्त्मन्यन्वेष्यमाणा वै रथिनां रथिसत्तम। न हि विद्मो गतिं तेषां वासं हि नरसत्तम।
कञ्चित् कालं मनुष्येन्द्र सूतानामनुगा वयं। मृगयित्वा यथान्यायं विदितार्थाः स्म तत्त्वतः। ८७५
प्राप्ता द्वारवतीं सूता विना पार्थैः परन्तप। न तत्र कृष्णा राजेन्द्र पाण्डवाश्च महाव्रताः।
सर्व्वथा विप्रनष्टास्ते नमस्ते भरतर्षभ। न हि विद्मो गतिं तेषां वासं वाऽपि महात्मनां।
पाण्डवानां प्रवृत्तिश्च विद्मः कर्म्मापि वा कृतं। स नः शाधि मनुष्येन्द्र अत ऊर्द्ध्वं विशाम्पते।
अन्वेषणे पाण्डवानां भूयः किं करवामहे। इमाञ्च नः प्रियां वीर वाचं भद्रवतीं शृणु।
येन त्रिगर्त्ता निहता बलेन महता नृप। सूतेन राज्ञो मत्स्यस्य कीचकेन पुनः पुनः। ८८०
स हतः पतितः शेते गन्धर्व्वैर्निशि भारत। अदृश्यमानैर्दुष्टात्मा भ्रातृभिः सह सोदरैः।
प्रियमेतदुपश्रुत्य शत्रूणाञ्च पराभवं। कृतकृत्यश्च कौरव्य विधत्स्व यदनन्तरं।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि चारप्रत्यागमने पञ्चविंशोऽध्यायः॥ २५ ॥
॥ वैशम्पायन उवाच ॥ ततो दुर्य्योधनो राजा श्रुत्वा तेषां वचस्तदा। चिरमन्तर्मना भूत्वा प्रत्युवाच सभासदः।
सुदुःखा खलु कार्य्याणां गतिर्विज्ञातुमन्ततः। तस्मात् सर्व्वे निरीक्षध्वं क्व नु ते पाण्डवा गताः।
अल्पावशिष्टं कालस्य गतभूयिष्ठमन्ततः। तेषामज्ञातचर्य्यायामस्मिन्वर्षे त्रयोदशे। ८८५
अस्य वर्षस्य शेषञ्चेत् व्यतीयुरिह पाण्डवाः। निवृत्तसमयास्ते हि सत्यव्रतपरायणाः।
क्षरन्त इव नागेन्द्राः सर्व्वे ह्याशीविषोपमाः। दुःखा भवेयुः संरब्धाः कौरवान् प्रति ते ध्रुवं।
सर्व्वे कालस्य वेत्तारः कृच्छ्ररूपधराः स्थिताः। प्रविशेयुर्जितक्रोधास्तावदेव पुनर्व्वनं।
तस्मात् क्षिप्रं बुभुत्सध्वं यथा तेऽत्यन्तमव्ययं। राज्यं निर्द्वन्द्वमव्यग्रं निःसपत्नं चिरं भवेत्।
अथाब्रवीत्ततः कर्णः क्षिप्रं गच्छन्तु भारत। अन्ये धूर्त्ता नरा दक्षा निभृताः साधुकारिणः। ८९०

चरन्तु देशान् संवीताः स्फीतान् जनपदाकुलान्। तत्र गोष्ठीषु रम्यासु सिद्धप्रव्रजितेषु च।
परिचारेषु तीर्थेषु विविधेष्वाकरेषु च। विज्ञातव्या मनुष्यैस्तैस्तर्कया सुविनीतया।
विविधैस्तत्परैः सम्यक् तज्ज्ञैर्निपुणसंवृतैः। अन्वेष्टव्याः सुनिपुणैः पाण्डवाश्छन्नवासिनः।
नदीकुञ्जेषु तीर्थेषु ग्रामेषु नगरेषु च। आश्रमेषु च रम्येषु पर्व्वतेषु गुहासु च।
अथाग्रजानन्तरजः पापभावानुरागवान्। ज्येष्ठं दुःशासनस्तत्र भ्राता भ्रातरमब्रवीत्। ८९५
येषु नः प्रत्ययो राजंश्चारेषु मनुजाधिप। ते यान्तु दत्तदेया वै भूयस्तान्परिमार्गितुं।
एतच्च कर्णो यत्प्राह सर्व्वमीहामहे तथा। यथोद्दिष्टं चराः सर्व्वे मृगयन्तु ततस्ततः।
एते चान्ये च भूयांसो देशाद्देशं यथाविधि। न तु तेषां गतिर्वासः प्रवृत्तिश्चोपलभ्यते।
अत्यन्तं वा निगूढास्ते पारं वोर्म्मिमतो गताः। व्यालैश्चापि महारण्ये भक्षिताः शूरमानिनः।
अथ वा विषमं प्राप्य विनष्टाः शाश्वतीः समाः। तस्मान्मानसमव्यग्रं कृत्वा त्वं कुरुनन्दन। ९००
कुरु कार्य्यं महोत्साहं मन्यसे यन्नराधिप।

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि कर्णदुःशासनवाक्ये षड्विंशोऽध्यायः॥ २६ ॥

॥ वैशम्पायन उवाच ॥ अथाब्रवीन्महावीर्य्यो द्रोणस्तत्त्वार्थदर्शिवान्। न तादृशा विनश्यन्ति न प्रयान्ति पराभवं।
शूराश्च कृतविद्याश्च बुद्धिमन्तो जितेन्द्रियाः। धर्म्मज्ञाश्च कृतज्ञाश्च धर्म्मराजमनुव्रताः।
नीतिधर्म्मार्थतत्त्वज्ञं पितृवच्च समाहिताः। धर्म्मे स्थितं सत्यधृतिं ज्येष्ठं ज्येष्ठानुयायिनः।
अनुव्रता महात्मानं भ्रातरो भ्रातरं नृप। अजातशत्रुं श्रीमन्तं सर्व्वभ्रातृननुव्रतं। ९०५
तेषां तथाविधेयानां निभृतानां महात्मनां। किमर्थं नीतिमान् पार्थः श्रेयो नैषां करिष्यति।
तस्माद्यत्नात् प्रतीक्षन्ते कालस्योदयमागतं। न हि ते नाशमृच्छेयुरिति पश्याम्यहं धिया।
साम्प्रतं चैव यत्कार्य्यं तच्च क्षिप्रमकालिकं। क्रियतां साधु सञ्चिन्त्य वासश्चैषां प्रचिन्त्यतां।
यथावत्पाण्डुपुत्त्राणां सर्व्वार्थेषु धृतात्मनां। दुर्ज्ञेयाः खलु शूरास्ते दुरापास्तपसावृताः।
शुद्धात्मा गुणवान् पार्थः सत्यवान्नीतिमान् शुचिः। तेजोराशिरसंख्येयो गृह्णीयादपि चक्षुषा। ९१०
विज्ञाय क्रियतां तस्माद्भूयश्च मृगयामहे। ब्राह्मणैश्चारकैः सिद्धैर्ये चान्ये तद्विदो जनाः।

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि चारप्रत्याचारे द्रोणवाक्ये सप्तविंशोऽध्यायः॥ २७ ॥

॥ वैशम्पायन उवाच ॥ ततः शान्तनवो भीष्मो भरतानां पितामहः। श्रुतवान् देशकालज्ञस्तत्त्वज्ञः सर्व्वधर्म्मवित्।
आचार्य्यवाक्योपरमे तद्वाक्यमभिसन्दधत्। हितार्थं समुवाचेमां भारतीं भरतान् प्रति।
युधिष्ठिरे समासक्तां धर्म्मज्ञे धर्म्मसंवृतां। असत्सु दुर्लभां नित्यं सतां चाभिमतां सदा।
भीष्मः समवदत्तत्र गिरं साधुभिरर्च्चितां। यथैष ब्राह्मणः प्राह द्रोणः सर्व्वार्थतत्त्ववित्। ९१५
सर्व्वलक्षणसम्पन्नाः साधुव्रतसमन्विताः। श्रुतव्रतोपपन्नाश्च नानाश्रुतिसमन्विताः।
वृद्धानुशासने युक्ताः सत्यव्रतपरायणाः। समयं समयज्ञास्ते पालयन्तः शुचिव्रताः।
क्षत्त्रधर्म्मरता नित्यं केशवानुगताः सदा। प्रवीरपुरुषास्ते वै महात्मानो महाबलाः।

नावसीदितुमर्हन्ति उद्वहन्तः सतां धुरं। धर्म्मतश्चैव गुप्तास्ते सुवीर्य्येण च पाण्डवाः।
न नाशमधिगच्छेयुरिति मे धीयते मतिः। तत्र बुद्धिं प्रवक्ष्यामि पाण्डवान्प्रति भारत। ९२०
न तु नीतिः सुनीतस्य शक्यतेऽन्वेषितुं परैः। यत्तु शक्यमिहास्माभिस्तान्वै सञ्चिन्त्य पाण्डवान्।
बुद्ध्या प्रयुक्तं न द्रोहात् प्रवक्ष्यामि निबोध तत्। न त्वियं मादृशैर्नीतिस्तस्य वाच्या कदाचन।
सा त्वियं साधु वक्तव्या न त्वनीतिः कथञ्चन। वृद्धानुशासने तात तिष्ठता सत्यशीलिना।
अवश्यं त्विह धीरेण सभामध्ये विवक्षता। यथार्थमिह वक्तव्यं सर्व्वथा धर्म्मलिप्सया।
तत्र नाहं तथा मन्ये यथाऽयमितरो जनः। निवासं धर्म्मराजस्य वर्षेऽस्मिन्वै त्रयोदशे। ९२५
तत्र तात न तेषां हि राज्ञां भाव्यमसाम्प्रतं। पुरे जनपदे चापि यत्र राजा युधिष्ठिरः।
दानशीलो वदान्यश्च निभृतो ह्रीनिषेवकः। जनो जनपदे भाव्यो यत्र राजा युधिष्ठिरः।
प्रियवादी सदा दान्तो भव्यः सत्यपरो जनः। हृष्टः पुष्टः शुचिर्दक्षो यत्र राजा युधिष्ठिरः।
नासूयको न चापीर्षुर्नाभिमानी न मत्सरी। भविष्यति जनस्तत्र स्वयं धर्म्ममनुव्रतः।
ब्रह्मघोषाश्च भूयांसः पूर्णाहुत्यस्तथैव च। क्रतवश्च भविष्यन्ति भूयांसो भूरिदक्षिणाः। ९३०
सदा च तत्र पर्ज्जन्यः सम्यग्वर्षी न संशयः। सम्पन्नशस्या च मही निरातङ्का भविष्यति।
फलवन्ति च धान्यानि रसवन्ति फलानि च। गन्धवन्ति च माल्यानि शुभशब्दा च भारती।
वायुश्च सुखसंस्पर्शो निष्प्रतीपञ्च दर्शनं। भयं नाभ्याविशेत्तत्र यत्र राजा युधिष्ठिरः।
गावश्च बहुलास्तत्र न कृशा न च दुर्ब्बलाः। पयांसि दधि सर्पींषि रसवन्ति हितानि च।
गुणवन्ति च पेयानि भोज्यानि रसवन्ति च। तत्र देशे भविष्यन्ति यत्र राजा युधिष्ठिरः। ९३५
रसाः स्पर्शाश्च गन्धाश्च शब्दाश्चापि गुणान्विताः। दृश्यानि च प्रसन्नानि यत्र राजा युधिष्ठिरः।
धर्म्माश्च तत्र सर्व्वैस्तु सेविताश्च द्विजातिभिः। स्वैः स्वैर्गुणैश्च संयुक्ता अस्मिन्वर्षे त्रयोदशे।
देशे तस्मिन् भविष्यन्ति तात पाण्डवसंयुते। सम्प्रीतिमान् जनस्तत्र सन्तुष्टः शुचिरव्ययः।
देवताऽतिथिपूजासु सर्व्वभावानुरागवान्। इष्टदानो महोत्साहः स्वस्वधर्म्मपरायणः।
अशुभद्विट्शुभप्रेप्सुर्नित्ययज्ञः शुभव्रतः। भविष्यति जनस्तत्र यत्र राजा युधिष्ठिरः। ९४०
त्यक्तवाक्यानृतस्तात शुभकल्याणमङ्गलः। शुभार्थेप्सुः शुभमतिर्यत्र राजा युधिष्ठिरः।
भविष्यति जनस्तत्र नित्यञ्चेष्टप्रियव्रतः। धर्म्मात्मा शक्यते ज्ञातुं नापि तात द्विजातिभिः।
किं पुनः प्राकृतैस्तात पार्थो विज्ञायते क्वचित्। यस्मिन् सत्यं धृतिर्दानं परा शान्तिर्ध्रुवा क्षमा।
ह्रीः श्रीः कीर्त्तिः परन्तेज आनृशंस्यमथार्ज्जवं। तस्मात्तत्र निवासन्तु छन्नं यत्नेन धीमतः।
गतिञ्च परमां तत्र नोत्सहे वक्तुमन्यथा। एवमेतत्तु सञ्चिन्त्य यत्कृतं मन्यसे हितं। ९४५
तत् क्षिप्रं कुरु कौरव्य यद्येवं श्रद्दधासि मे।

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि चारप्रत्याचारे भीष्मवाक्ये अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ वैशम्पायन उवाच ॥ ततः शारद्वतो वाक्यमित्युवाच कृपस्तदा। युक्तं प्राप्तञ्च वृद्धेन पाण्डवान्प्रति भाषितं।

धर्म्मार्थसहितं श्लक्ष्णं तत्त्वतश्च सहेतुकं। तत्रानुरूपं भीष्मेण ममाप्यत्र गिरं शृणु।
तेषाञ्चैव गतिस्तीर्थैर्वासश्चैषां प्रचिन्त्यतां। नीतिर्विधीयतां चापि साम्प्रतं या हिता भवेत्।
नावज्ञेयो रिपुस्तात प्राकृतोऽपि बुभूषता। किं पुनः पाण्डवास्तात सर्व्वास्त्रकुशला रणे। ९९०
तस्मात् सत्त्वं प्रविष्टेषु पाण्डवेषु महात्मसु। गूढभावेषु छन्नेषु काले चोदयमागते।
स्वराष्ट्रे परराष्ट्रे च ज्ञातव्यं बलमात्मनः। उदयः पाण्डवानाञ्च प्राप्ते काले न संशयः।
निवृत्तसमयाः पार्था महात्मानो महाबलाः। महोत्साहा भविष्यन्ति पाण्डवा ह्यमितौजसः।
तस्माद्बलञ्च कोषञ्च नीतिश्चापि विधीयतां। यथाकालोदये प्राप्ते सम्यक्तैः सन्दधामहे।
तात बुध्यामि तत्सर्व्वं बुध्यस्व बलमात्मनः। नियतं सर्व्वमित्रेषु बलवत्सु बलेषु च। ९९५
उच्चावचं बलं ज्ञात्वा मध्यस्थञ्चापि भारत। प्रहृष्टमप्रहृष्टञ्च सन्दधामस्तथा परैः।
साम्ना भेदेन दानेन दण्डेन बलिकर्म्मणा। न्यायेनाक्रम्य च परान् बलाच्चानम्य दुर्ब्बलान्।
सान्त्वयित्वा तु मित्राणि बलञ्चाभाष्यतां सुखं। सकोषबलसंवृद्धः सम्यक् सिद्धिमवाप्स्यसि।
योत्स्यसे चापि बलिभिररिभिः प्रत्युपस्थितैः। अन्यैस्त्वं पाण्डवैर्व्वाऽपि हीनैश्च बलवाहनैः।
एवं सर्व्वं विनिश्चित्य व्यवसायं स्वधर्म्मतः। यथाकालं मनुष्येन्द्र चिरं सुखमवाप्स्यसि। ९००
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि चारप्रत्याचारे कृपवाक्ये एकोनत्रिंशोऽध्यायः ॥ २९ ॥
॥ वैशम्पायन उवाच ॥ अथ राजा त्रिगर्त्तानां सुशर्म्मा रथयूथपः। प्राप्तकालमिदं वाक्यमुवाच त्वरितो बली।
असकृन्निकृतः पूर्व्वं मत्स्यशाल्वेयकैः प्रभो। सूतेनैव च मत्स्यस्य कीचकेन पुनः पुनः।
बाधितो बन्धुभिः सार्द्धं बलाद्बलवतां विभो। स कर्णमभ्युदीक्ष्याथ दुर्य्योधनमभाषत।
असकृन्मत्स्यराज्ञा मे राष्ट्रं बाधितमोजसा। प्रणेता कीचकस्तस्य बलवानभवत्पुरा।
क्रूरोऽमर्षी स दुष्टात्मा भुवि प्रख्यातविक्रमः। निहतः स तु गन्धर्व्वैः पापकर्म्मा नृशंसवान्। ९०५
तस्मिन् विनिहते राजा हतदर्पो निराश्रयः। भविष्यति निरुत्साहो विराट इति मे मतिः।
तत्र यात्रा मम मता यदि ते रोचतेऽनघ। कौरवाणाञ्च सर्व्वेषां कर्णस्य च महात्मनः।
एतत्प्राप्तमहं मन्ये कार्य्यमात्ययिकं हि नः। राष्ट्रं तस्याभियास्यामो बहुधान्यसमाकुलं।
आददामोऽस्य रत्नानि विविधानि वसूनि च। ग्रामान् राष्ट्राणि वा तस्य हरिष्यामो विभागशः।
अथ वा गोसहस्राणि शुभानि च बहूनि च। विविधानि हरिष्यामः प्रतिपीड्य पुरं बलात्। ९८०
कौरवैः सह सङ्गत्य त्रिगर्त्तैश्च विशाम्पते। गास्तस्यापहरामोऽद्य सह सर्व्वैः सुसंहताः।
संविभागेन कृत्वा तु निबध्नीमोऽस्य पौरुषं। हत्वा चास्य चमूं कृत्स्नां वशमेवानयामहे।
तं वशे न्यायतः कृत्वा सुखं वत्स्यामहे वयं। भवतो बलवृद्धिश्च भविष्यति न संशयः।
तच्छ्रुत्वा वचनं तस्य कर्णो राजानमब्रवीत्। सूक्तं सुशर्म्मणा वाक्यं प्राप्तकालं हितं च नः।
तस्मात् क्षिप्रं विनिर्य्यामो योजयित्वा वरूथिनीं। विभज्य चाप्यनीकानि यथा वा मन्यसेऽनघ। ९८५
प्राज्ञो वा कुरुवृद्धोऽयं सर्व्वेषां नः पितामहः। आचार्य्यश्च यथा द्रोणः कृपः शारद्वतस्तथा।

मन्यन्ते ते यथा सर्व्वे तथा यात्रा विधीयतां । सम्भाव्य चाद्य निर्य्यामः साधनार्थं महीपते ।
किञ्च नः पाण्डवैः कार्य्यं हीनार्थबलपौरुषैः । अत्यन्तं वा प्रनष्टास्ते प्राप्ता वाऽपि यमक्षयं ।
यामो राजन्निरुद्विग्ना विराटनगरं वयं । आदास्यामो हि गास्तस्य विविधानि वसूनि च ।
॥ वैशम्पायन उवाच ॥ ततो दुर्य्योधनो राजा वाक्यमादाय तस्य तत् । वैकर्त्तनस्य कर्णस्य क्षिप्रमाज्ञापयत् स्वयं । ९९०
शासने नित्यसंयुक्तं दुःशासनमनन्तरं । सह वृद्धैस्तु सम्मन्त्र्य क्षिप्रं योजय वाहिनीं ।
यथोद्देशञ्च गच्छामः सहितास्तत्र कौरवैः । सुशर्म्मा च यथोद्दिष्टं देशं यातु महारथः ।
त्रिगर्त्तैः सहितो राजा समग्रबलवाहनः । प्रागेव हि सुसंवीतो मत्स्यस्य विषयं प्रति ।
जघन्यतो वयं तत्र यास्यामो दिवसान्तरे । विषयं मत्स्यराजस्य सुसमृद्धं सुसंहताः ।
ते यान्तु सहितास्तत्र विराटनगरं प्रति । क्षिप्रं गोपान् समासाद्य गृह्णन्तु विपुलं धनं । ९९५
गवां शतसहस्राणि श्रीमन्ति गुणवन्ति च । वयमप्यनुगृह्णीमो द्विधा कृत्वा वरूथिनीं ।
॥ वैशम्पायन उवाच ॥ ते स्म गत्वा यथोद्दिष्टां दिशं वह्नेर्महीपते । सन्नद्धा रथिनः सर्व्वे सपदाता बलोत्कटाः ।
प्रतिवैरं चिकीर्षन्तो गोषु गृद्धा महाबलाः । आदातुं गाः सुशर्म्माऽथ कृष्णपक्षस्य सप्तमीं ।
अपरे दिवसे सर्व्वे राजन् सम्भूय कौरवाः । अष्टम्यान्ते न्यगृह्णन्त गोकुलानि सहस्रशः ।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि सुशर्म्मादिमत्स्यदेशयाने त्रिंशोऽध्यायः ॥ ३० ॥
॥ वैशम्पायन उवाच ॥ ततस्तेषां महाराज तत्रैवामिततेजसां । छद्मलिङ्गप्रविष्टानां पाण्डवानां महात्मनां । १०००
व्यतीतः समयः सम्यक् वसतां वै पुरोत्तमे । कुर्व्वतां तस्य कर्म्माणि विराटस्य महीपतेः ।
कीचके तु हते राजा विराटः परवीरहा । परां सम्भावनाञ्चक्रे कुन्तीपुत्रेषु वीर्य्यवान् ।
ततस्त्रयोदशस्यान्ते तस्य वर्षस्य भारत । सुशर्म्मणा गृहीतन्तद्गोधनं तरसा बहु ।
ततो जवेन महता गोपः पुरमथाव्रजत् । स दृष्ट्वा मत्स्यराजञ्च रथात् प्रस्कन्द्य कुण्डली ।
शूरैः परिवृतं योधैः कुण्डलाङ्गदधारिभिः । संवृतं मन्त्रिभिः सार्द्धं पाण्डवैश्च महात्मभिः । १००५
तं सभायां महाराजमासीनं राष्ट्रवर्द्धनं । सोऽब्रवीदुपसङ्गम्य विराटं प्रणतस्तदा ।
अस्मान् युधि विनिर्ज्जित्य परिभूय सबान्धवान् । गवां शतसहस्राणि त्रिगर्त्ताः कालयन्ति ते ।
तान् परीप्सस्व राजेन्द्र मा नेशुः पशवस्तव । तच्छ्रुत्वा नृपतिः सेनां मत्स्यानां समयोजयत् ।
रथनागाश्वकलिलां पत्तिध्वजसमाकुलां । राजानो राजपुत्राश्च तनुत्राण्यथ भेजिरे ।
भानुमन्ति विचित्राणि शूरसेव्यानि भागशः । सवज्रायसगर्भन्तु कवचं तत्र काञ्चनं । १०१०
विराटस्य प्रियो भ्राता शतानीकोऽभ्यहारयत् । सर्व्वपारसवं वर्म्म कल्याणपटलं दृढं ।
शतानीकादवरजो मदिराक्षोऽभ्यहारयत् । शतसूर्य्यं शतावर्त्तं शतबिन्दु शताक्षिमत् ।
अभेद्यकल्पं मत्स्यस्य राजा कवचमाहरत् । उत्सेधे यस्य पद्मानि शतं सौगन्धिकानि च ।
सुवर्णपृष्ठं सूर्य्याभं सूर्य्यदत्तोऽभ्यहारयत् । दृढमायसगर्भञ्च श्वेतं वर्म्म शताक्षिमत् ।
विराटस्य सुतो ज्येष्ठो वीरः शङ्खोऽभ्यहारयत् । शतशश्च तनुत्राणि यथास्वन्ते महारथाः । १०१५

योत्स्यमाना अनह्यन्त देवरूपाः प्रहारिणः। सूपस्करेषु शुभ्रेषु महत्सु च महारथाः।
पृथक्काञ्चनसन्नाहान् रथेष्वश्वानयोजयन्। सूर्य्यचन्द्रप्रतीकाशे रथे दिव्ये हिरण्मये।
महानुभावो मत्स्यस्य ध्वज उच्छिश्रिये तदा। अथान्यान् विविधाकारान् ध्वजान् हेमपरिष्कृतान्।
यथास्वं क्षत्रियाः शूरा रथेषु समयोजयन्। अथ मत्स्योऽब्रवीद्राजा शतानीकं जघन्यजं। १०१०
कङ्कबल्लवगोपाला दामग्रन्थिश्च वीर्य्यवान्। युध्येयुरिति मे बुद्धिर्वर्त्तते नात्र संशयः।
एतेषामपि दीयन्तां रथा ध्वजपताकिनः। कवचानि विचित्राणि दृढानि च मृदूनि च।
प्रतिमुञ्चन्तु गात्रेषु दीयन्तामायुधानि च। वीराङ्गरूपाः पुरुषा नागराजकरोपमाः।
नेमे जातु न युध्येयुरिति मे धीयते मतिः। एवं श्रुत्वा तु नृपतेर्वाक्यं त्वरितमानसः।
शतानीकस्तु पार्थेभ्यो रथान् राजन् समादिशत्। सहदेवाय राज्ञे च भीमाय नकुलाय च।
तान्प्रहृष्टांस्ततः सूता राजभक्तिपुरस्कृताः। निर्द्दिष्टा नरदेवेन रथान् शीघ्रमयोजयन्। १०१५
कवचानि विचित्राणि मृदूनि च दृढानि च। विराटः प्रादिशद्यानि तेषामक्लिष्टकर्मणां।
तान्यामुच्य शरीरेषु दंशितास्ते परन्तपाः। रथान् हयैः सुसम्पन्नानास्थाय च नरोत्तमाः।
निर्ययुर्मुदिताः पार्थाः शत्रुसङ्घावमर्द्दिनः। तरस्विनश्छन्नरूपाः सर्व्वे युद्धविशारदाः।
रथान्हेमपरिष्कृतानास्थाय च महारथाः। विराटमन्वयुः पार्थाः सहिताः कुरुपुङ्गवाः।
चत्वारो भ्रातरः शूराः पाण्डवाः सत्यविक्रमाः। भीमाश्च मत्तमातङ्गाः प्रभिन्नकरटामुखाः। १०२०
क्षरन्तश्चैव नागेन्द्राः सुदन्ताः षष्टिहायनाः। आरूढा युद्धकुशलैः शिक्षिता हस्तिसादिभिः।
राजानमन्वयुः पश्चाच्चलन्त इव पर्व्वताः। विशारदानां मुख्यानां हृष्टानाञ्चानुयायिनां।
अष्टौ रथसहस्राणि दशनागशतानि च। षष्टिश्चाश्वसहस्राणि मत्स्यानामभिनिर्ययुः।
तदनीकं विराटस्य शुशुभे भरतर्षभ। सम्प्रयान्तं तदा राजन्निरीक्षन्तं गवां पदं।
तद्बलाग्र्यं विराटस्य सम्प्रस्थितमशोभत। दृढायुधजनाकीर्णं गजाश्वरथसङ्कुलं। १०२५
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि मत्स्यरथारोहणे एकत्रिंशोऽध्यायः ‖ ३१ ‖
‖ वैशम्पायन उवाच ‖ निर्याय नगराच्छूरा व्यूढानीकाः प्रहारिणः। त्रिगर्त्तानस्पृशन्मत्स्याः सूर्य्ये परिणते सति।
ते त्रिगर्त्ताश्च मत्स्याश्च संरब्धा युद्धदुर्मदाः। अन्योऽन्यमभिगर्जन्तो गोषु गृद्धा महाबलाः।
भीमाश्च मत्तमातङ्गास्तोमराङ्कुशचोदिताः। ग्रामणीयैः समारूढाः कुशलैर्हस्तिसादिभिः।
तेषां समागमो घोरस्तुमुलो लोमहर्षणः। घ्नतां परस्परं राजन् यमराष्ट्रविवर्द्धनः।
देवासुरसमो राजन्नासीत् सूर्य्येऽवलम्बति। पदातिरथनागेन्द्रहयारोहबलौघवान्। १०३०
अन्योऽन्यमभ्यापततां निघ्नतां चेतरेतरं। उदतिष्ठद्रजो भौमं न प्राज्ञायत किञ्चन।
पक्षिणश्चापतन्भूमौ सैन्येन रजसावृताः। इषुभिर्व्यतिसर्पद्भिरादित्योऽन्तरधीयत।
खद्योतैरिव संयुक्तमन्तरीक्षं व्यराजत। रुक्मपृष्ठानि चापानि व्यतिषक्तानि धन्विनां।
पततां लोकवीराणां सव्यदक्षिणमस्यतां। रथा रथैः समाजग्मुः पादातैश्च पदातयः।

सादिनः सादिभिश्चैव गजैश्चापि महागजाः। असिभिः पट्टिशैः प्रासैः शक्तिभिस्तोमरैरपि। १०४५
संरब्धाः समरे राजन्निजघ्नुरितरेतरं। निघ्नन्तः समरेऽन्योऽन्यं शूराः परिघबाहवः।
नशेकुरभिसंरब्धाः शूरान्कर्त्तुं पराङ्मुखान्। कृत्तोत्तरोष्ठं सुनसं कृत्तकेशमलङ्कृतं।
अदृश्यत शिरश्छिन्नं रजोध्वस्तं सकुण्डलं। अदृश्यन्त च गात्राणि शरैश्छिन्नानि भागशः।
शालस्कन्धनिकाशानि क्षत्त्रियाणां महामृधे। नागभोगनिकाशैश्च बाहुभिश्चन्दनोचितैः।
आस्तीर्णा वसुधा भाति शिरोभिश्च सकुण्डलैः। रथिनां रथिभिश्चात्र सम्प्रहारोऽभ्यवर्त्तत। १०५०
सादिभिः सादिनाञ्चापि पदातीनां पदातिभिः। उपशाम्यद्रजो भौमं रुधिरेण प्रसर्पता।
कश्मलञ्चाविशद्घोरं निर्मर्य्यादमवर्त्तत। उपाविशन्गरुत्मन्तः शरैर्गाढं प्रवेजिताः।
अन्तरीक्षे गतिर्येषां दर्शनञ्चाप्यरुध्यत। ते घ्नन्तः समरेऽन्योऽन्यं शूराः परिघबाहवः।
नशेकुरतिसंरब्धाः शूरान्कर्त्तुं पराङ्मुखान्। शतानीकः शतं हत्वा विशालाक्षश्चतुःशतं।
प्रविष्टौ महतीं सेनां त्रिगर्त्तानां महारथौ। तौ प्रविष्टौ महासेनां बलवन्तौ मनस्विनौ। १०५५
आर्च्छेतां बाहुसंरम्भात् केशाकेशि रथारथि। लक्षयित्वा त्रिगर्त्तानां तौ प्रविष्टौ रथव्रजं।
अग्रतः सूर्य्यदत्तश्च मदिराक्षश्च पृष्ठतः। विराटस्तत्र संग्रामे हत्वा पञ्च शतान् रथान्।
हयानाञ्च शतान्यष्टौ हत्वा पञ्च महारथान्। चरन्स विविधान्मार्गान्रथेन रथसत्तमः।
त्रिगर्त्तानां सुशर्म्माणमार्च्छद्रुक्मरथं रणे। तौ व्यवाहरतां तत्र महात्मानौ महाबलौ।
अन्योऽन्यमभिगर्जन्तौ गोष्ठेषु वृषभाविव। ततो राजा त्रिगर्त्तानां सुशर्म्मा युद्धदुर्म्मदः। १०६०
मत्स्यं समीयाद्राजानं द्वैरथेन नरर्षभः। ततो रथाभ्यां रथिनौ व्यतीयतुरमर्षणौ।
शरान् व्यसृजतां शीघ्रं तोयधारा घना इव। अन्योऽन्यं चापि संरब्धौ विचेरतुरमर्षणौ।
कृतास्त्रौ निशितैर्ब्बाणैरसिशक्तिगदाभृतौ। ततो राजा सुशर्म्माणं विव्याध दशभिः शरैः।
पञ्चभिः पञ्चभिश्चास्य विव्याध चतुरो हयान्। तथैव मत्स्यराजानं सुशर्म्मा युद्धदुर्म्मदः।
पञ्चाशद्भिः शितैर्ब्बाणैर्व्विव्याध परमास्त्रवित्। ततः सैन्यं महाराज मत्स्यराजसुशर्म्मणोः। १०६५
नाभ्यजानत्तदाऽन्योऽन्यं सैन्येन रजसा वृतं।

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि सुशर्म्मविराटयुद्धे द्वात्रिंशोऽध्यायः॥ ३२ ॥

॥ वैशम्पायन उवाच॥ तमसाऽभिप्लुते लोके रजसा चैव भारत। अतिष्ठन्वै मुहूर्त्तन्तु व्यूढानीकाः प्रहारिणः।
ततोऽन्धकारं प्रणुदन्नुदतिष्ठत चन्द्रमाः। कुर्व्वाणो विमलां रात्रिं नन्दयन् क्षत्त्रियान् युधि।
ततः प्रकाशमासाद्य पुनर्युद्धमवर्त्तत। घोररूपं ततस्तस्मिन् नावेक्षन्त परस्परं।
ततः सुशर्म्मा त्रैगर्त्तः सह भ्रात्रा यवीयसा। अभ्यद्रवन्मत्स्यराजं रथव्रातेन सर्व्वशः। १०७०
ततो रथाभ्यां प्रस्कन्द्य भ्रातरौ क्षत्त्रियर्षभौ। गदापाणी सुसंरब्धौ समभ्यद्रवतां रथान्।
तथैव तेषान्तु बलानि तानि क्रुद्धान्यथान्योऽन्यमभिद्रवन्ति। गदाऽसिखड्गैश्च परश्वधैश्च प्रासैश्च तीक्ष्णाग्रसुपीतधारैः।

ततस्तु मत्स्यस्य बलेन राजा सर्व्वं त्रिगर्त्ताधिपतिः सुशर्म्मा। प्रमथ्य जित्वा च प्रसह्य मत्स्यं विराटमोजस्विनमभ्यधावत्।

तौ निहत्य पृथग्धुर्य्यावुभौ तौ पार्ष्णिसारथी। विरथं मत्स्यराजानं जीवग्राहमगृह्णतां।

तमुन्मथ्य सुशर्म्माऽथ युवतीमिव कामुकः। स्यन्दने स्वे समारोप्य प्रययौ शीघ्रवाहनः। १०७५

तस्मिन् गृहीते विरथे विराटे बलवत्तरे। प्राद्रवन्त भयात् मत्स्यास्त्रिगर्त्तैरर्द्दिता भृशं।

तेषु सन्त्रास्यमानेषु कुन्तीपुत्रो युधिष्ठिरः। प्रत्यभाषन्महाबाहुं भीमसेनमरिन्दमं।

मत्स्यराजः परामृष्टस्त्रिगर्त्तेन सुशर्म्मणा। तं मोचय महाबाहो न गच्छेद्द्विषतां वशं।

उषिताः स्म सुखं सर्व्वे सर्व्वकामैः सुपूजिताः। भीमसेन त्वया कार्य्या तस्य वासस्य निष्कृतिः।

॥ भीमसेन उवाच। अहमेनं परित्रास्ये शासनात्तव पार्थिव। पश्य मे सुमहत्कर्म्म युध्यतः सह शत्रुभिः। १०८०

स्वबाहुबलमाश्रित्य तिष्ठ त्वं भ्रातृभिः सह। एकान्तमाश्रितो राजन् पश्य मेऽद्य पराक्रमं।

सुस्कन्धोऽयं महावृक्षो गदारूप इव स्थितः। एनमेव समारुज्य द्रावयिष्यामि शात्रवान्।

॥ वैशम्पायन उवाच॥ तं मत्तमिव मातङ्गं वीक्षमाणं वनस्पतिं। अब्रवीद्भ्रातरं वीरं धर्म्मराजो युधिष्ठिरः।

मा भीम साहसं कार्षीस्तिष्ठत्वेष वनस्पतिः। मा त्वां वृक्षेण कर्म्माणि कुर्व्वाणमतिमानुषं।

जनाः समवबुध्येरन् भीमोऽयमिति भारत। अन्यदेवायुधं किञ्चित् प्रतिपद्यस्व मानुषं। १०८५

चापं वा यदि वा शक्तिं निस्त्रिंशं वा परश्वधं। यदेव मानुषं भीम भवेदन्यैरलक्षितं।

तदेवायुधमादाय मोचयाशु महीपतिं। यमौ च चक्ररक्षौ ते भवितारौ महाबलौ। सहिताः समरे तत्र मत्स्यराजं परीप्सत।

॥ वैशम्पायन उवाच॥ एवमुक्तस्तु वेगेन भीमसेनो महाबलः। गृहीत्वा तु धनुःश्रेष्ठं जवेन सुमहाजवः।

व्यमुञ्चच्छरवर्षाणि सतोय इव तोयदः। तं भीमो भीमकर्म्माणं सुशर्म्माणमथाद्रवत्।

विराटं समवीक्ष्यैनं तिष्ठतिष्ठेति चावदत्। सुशर्म्मा चिन्तयामास कालान्तकयमोपमं। १०९०

तिष्ठतिष्ठेति भाषन्तं पृष्ठतो रथपुङ्गवः। पश्यतां सुमहत् कर्म्म महद्युद्धमुपस्थितं।

परावृत्तो धनुर्गृह्य सुशर्म्मा भ्रातृभिः सह। निमेषान्तरमात्रेण भीमसेनेन ते रथाः।

रथानाञ्च गजानाञ्च वाजिनाञ्च ससादिनां। सहस्रशतसङ्घाताः शूराणामुग्रधन्विनां। पातिता भीमसेनेन विराटस्य समीपतः।

पत्तयो निहतास्तेषां गदां गृह्य महात्मना। तद्दृष्ट्वा तादृशं युद्धं सुशर्म्मा युद्धदुर्म्मदः।

चिन्तयामास मनसा किं शेषं हि बलस्य मे। अपरो दृश्यते सैन्ये पुरा मग्नो महाबले। १०९५

आकर्णपूर्णेन तदा धनुषा प्रत्यदृश्यत। सुशर्म्मा सायकांस्तीक्ष्णान् क्षिपते च पुनःपुनः।

ततः समस्तास्ते सर्व्वे तुरगानभ्यचोदयन्। दिव्यमस्त्रं विकुर्व्वाणास्त्रिगर्त्तान् प्रत्यमर्षणाः।

तान्निवृत्तरथान् दृष्ट्वा पाण्डवान् सा महाचमूः। वैराटिः परमक्रुद्धो युयुधे परमाद्भुतं।

सहस्रमवधीत्तत्र कुन्तीपुत्रो युधिष्ठिरः। भीमः सप्त सहस्राणि यमलोकमदर्शयत्।
नकुलश्चापि सप्तैव शतानि प्राहिणोच्छरैः। शतानि त्रीणि शूराणां सहदेवः प्रतापवान्। ११००
युधिष्ठिरसमादिष्टो निजघ्ने पुरुषर्षभः। ततोऽभ्यपतदत्युग्रः सुशर्म्माणमुदायुधः। हत्वा तां महतीं सेनां त्रिगर्त्तानां महारथ।
ततो युधिष्ठिरो राजा त्वरमाणो महारथः। अभिपत्य सुशर्म्माणं शरैरभ्याहनद्भृशं।
युधिष्ठिरसमादिष्टो निजघ्ने पुरुषर्षभः। सुशर्म्माऽपि सुसंरब्धस्त्वरमाणो युधिष्ठिरं।
अविध्यन्नवभिर्वाणैश्चतुर्भिश्चतुरो हयान्। ततो राजन्नाशुकारी कुन्तीपुत्रो वृकोदरः।
समासाद्य सुशर्म्माणमश्वानस्य व्यपोथयत्। पृष्ठगोपौ च तस्याथ हत्वा परमसायकैः। ११०५
अथास्य सारथिं क्रुद्धो रथोपस्थादपातयत्। चक्ररक्षश्च शूरो वै मदिराक्षोऽतिविश्रुतः।
समायाद्विरथं दृष्ट्वा त्रिगर्त्तं प्राहरत्तदा। ततो विराटः प्रस्कन्द्य रथादथ सुशर्म्मणः।
गदां तस्य परामृश्य तमेवाभ्यद्रवद्बली। स चचार गदापाणिर्वृद्धोऽपि तरुणो यथा।
पलायमानं त्रैगर्त्तं दृष्ट्वा भीमोऽभ्यभाषत। राजपुत्र निवर्त्तस्व न ते युक्तं पलायनं।
अनेन वीर्य्येण कथं गास्त्वं प्रार्थयसे बलात्। कथं चानुचरांस्त्यक्त्वा शत्रुमध्ये विषीदसि। १११०
इत्युक्तः स तु पार्थेन सुशर्म्मा रथयूथपः। तिष्ठ तिष्ठेति भीमं स सहसाऽभ्यद्रवद्बली।
भीमस्तु भीमसङ्काशो रथात् प्रस्कन्द्य पाण्डवः। प्राद्रवत्तूर्णमव्यग्रो जीवितेप्सुः सुशर्म्मणः।
तं भीमसेनो धावन्तमभ्यधावत वीर्य्यवान्। त्रिगर्त्तराजमादातुं सिंहः क्षुद्रमृगं यथा।
अभिद्रुत्य सुशर्म्माणं केशपक्षे परामृशत्। समुद्यम्य तु रोषात्तं निष्पिपेष महीतले।
पदा मूर्द्ध्नि महाबाहुः प्राहरद्विलपिष्यतः। तस्य जानुं ददौ भीमो जघ्ने चैनमरत्निना। १११५
स मोहमगमद्राजा प्रहारवरपीडितः। तस्मिन् गृहीते विरथे त्रिगर्त्तानां महारथे।
अभज्यत बलं सर्व्वं त्रैगर्त्तं तद्भयातुरं। निवर्त्त्य गास्ततः सर्व्वाः पाण्डुपुत्रा महारथाः।
अवजित्य सुशर्म्माणं धनं चादाय सर्व्वशः। स्वबाहुबलसम्पन्ना ह्रीनिषेवा यतव्रताः।
विराटस्य महात्मानः परिक्लेशविनाशनाः। स्थिताः समक्षन्ते सर्व्वे त्वथ भीमोऽभ्यभाषत।
नायं पापसमाचारो मत्तो जीवितुमर्हति। किन्तु शक्यं मया कर्त्तुं यद्राजा सततं घृणी। ११२०
गले गृहीत्वा राजानमानीय विवशं वशं। तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः।
रथमारोपयामास विसंज्ञं पांशुगुण्ठितं। अभ्येत्य रणमध्यस्थमभ्यगच्छद्युधिष्ठिरं।
दर्शयामास भीमस्तु सुशर्म्माणं नराधिपं। प्रोवाच पुरुषव्याघ्रो भीममाहवशोभिनं।
तं राजा प्राहसद्दृष्ट्वा मुच्यतां वै नराधमः। एवमुक्तोऽब्रवीद्भीमः सुशर्म्माणं महाबलं।
॥ भीम उवाच ॥ जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु। दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च। ११२५
एवन्ते जीवितं दद्यामेष युद्धजितो विधिः। तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः।
॥ युधिष्ठिर उवाच ॥ मुञ्च मुञ्चाधमाचारं प्रमाणं यदि ते वयं। दासभावं गतो ह्येष विराटस्य महीपतेः।
अदासो गच्छ मुक्तोऽसि मैवं कार्षीः कदाचन।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि सुशर्म्मनिग्रहे त्रयस्त्रिंशोऽध्यायः॥ ३३ ॥

॥ वैशम्पायन उवाच ॥ एवमुक्ते तु सव्रीडः सुशर्म्माऽऽसीदधोमुखः । स मुक्तोऽभ्येत्य राजानमभिवाद्य प्रतस्थिवान् ।

विसृज्य तु सुशर्म्माणं पाण्डवास्ते हतद्विषः । स्वबाहुबलसम्पन्ना ह्रीनिषेवा यतव्रताः । १२३०

सङ्ग्रामशिरसो मध्ये तां रात्रिं सुखिनोऽवसन् । ततो विराटः कौन्तेयानतिमानुषविक्रमान् ।

अर्च्चयामास वित्तेन मानेन च महारथान् ।

॥ विराट उवाच ॥ यथैव मम रत्नानि युष्माकं तानि वै तथा । कार्य्यं कुरुत वै सर्व्वे यथाकामं यथासुखं ।

ददाम्यलङ्कृताः कन्या वसूनि विविधानि च । मनसश्चाप्यभिप्रेतं यद्वः शत्रुनिवर्हणाः ।

युष्माकं विक्रमादद्य मुक्तोऽहं स्वस्तिमानिह । तस्माद्भवन्तो मत्स्यानामीश्वराः सर्व्व एव हि । १२३५

॥ वैशम्पायन उवाच ॥ तथेतिवादिनं मत्स्यं कौरवेयाः पृथक् पृथक् । ऊचुः प्राञ्जलयः सर्व्वे युधिष्ठिरपुरोगमाः ।

प्रतिनन्दाम ते वाक्यं सर्व्वञ्चैव विशाम्पते । एतेनैव प्रतीताः स्म यत्त्वं मुक्तोऽद्य शत्रुभिः ।

ततोऽब्रवीत् प्रीतमना मत्स्यराजो युधिष्ठिरं । पुनरेव महाबाहुर्व्विराटो राजसत्तमः ।

एहि त्वामभिषेक्ष्यामि मत्स्यराजस्तु नो भवान् । मनसश्चाप्यभिप्रेतं यत्तेऽहं भुवि दुर्लभं ।

तत्तेऽहं सम्प्रदास्यामि सर्व्वमर्हति नो भवान् । रत्नानि गाः सुवर्णञ्च मणिमुक्तमथापि च । १२४०

वैयाघ्रपद्य विप्रेन्द्र सर्व्वथैव नमोऽस्तु ते । त्वत्कृते ह्यद्य पश्यामि राज्यं सन्तानमेव च ।

यतश्च जातसंरम्भो न च शत्रुवशङ्गतः । ततो युधिष्ठिरो मत्स्यं पुनरेवाभ्यभाषत ।

प्रतिनन्दामि ते वाक्यं मनोज्ञं मत्स्य भाषसे । आनृशंस्यपरो नित्यं सुसुखी सततं भव ।

गच्छन्तु दूतास्त्वरितं नगरं तव पार्थिव । सुहृदां प्रियमाख्यातुं घोषयन्तु च ते जयं ।

ततस्तद्वचनान्मत्स्यो दूतान् राजा समादिशत् । आचक्षध्वं पुरं गत्वा सङ्ग्रामे विजयं मम । १२४५

कुमार्य्यः समलङ्कृत्य पर्य्यागच्छन्तु मे पुरात् । वादित्राणि च सर्व्वाणि गणिकाश्च स्वलङ्कृताः ।

एतामाज्ञां ततः श्रुत्वा राज्ञा मत्स्येन चोदिताः । तामाज्ञां शिरसा कृत्वा प्रस्थिता हृष्टमानसाः ।

ते गत्वा तत्र तां रात्रिमथ सूर्य्योदयं प्रति । विराटस्य पुराभ्याशे दूता जयमघोषयन् ।

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि विराटजयघोषे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ वैशम्पायन उवाच ॥ याते त्रिगर्त्तान्मत्स्ये तु पशूंस्तान्वै परीप्सति । दुर्य्योधनः सहामात्यो विराटमुपयादथ ।

भीष्मो द्रोणश्च कर्णश्च कृपश्च परमास्त्रवित् । द्रौणिश्च सौबलश्चैव तथा दुःशासनः प्रभो । १२५०

विविंशतिर्व्विकर्णश्च चित्रसेनश्च वीर्य्यवान् । दुर्मुखो दुःसहश्चैव ये चैवान्ये महारथाः ।

एते मत्स्यानुपागम्य विराटस्य महीपतेः । घोषान्विद्राव्य तरसा गोधनं जह्रुरोजसा ।

षष्टिं गवां सहस्राणि कुरवः कालयन्ति च । महता रथवंशेन परिवार्य्य समन्ततः ।

गोपालानान्तु घोषस्य हन्यतां तैर्महारथैः । आरावः सुमहानासीत् सम्प्रहारे भयङ्करे ।

गोपाध्यक्षो भयत्रस्तो रथमास्थाय सत्वरः । जगाम नगरायैव परिक्रोशंस्तदार्त्तवत् । १२५५

संप्रविश्य पुरं राज्ञो नृपवेश्माभ्ययात्ततः । अवतीर्य्य रथात्तूर्णमाख्यातुं प्रविवेश ह ।

दृष्ट्वा भूमिञ्जयं नाम पुत्रं मत्स्यस्य मानिनं । तस्मै तत् सर्व्वमाचष्ट राष्ट्रस्य पशुकर्षणं ।

षष्टिं गवां सहस्राणि कुरवः कालयन्ति ते । तद्विजेतुं समुत्तिष्ठ गोधनं राष्ट्रवर्द्धन ।
राजपुत्र हितप्रेप्सुः क्षिप्रं निर्याहि च स्वयं । त्वां हि मत्स्यो महीपालः शून्यपालमिहाकरोत् ।
त्वया परिषदो मध्ये श्लाघते स नराधिपः । पुत्रो ममानुरूपश्च शूरश्चेति कुलोद्वहः । ११६०
इष्वस्त्रे निपुणो योधः सदा वीरश्च मे सुतः । तस्य तत्सत्यमेवास्तु मनुष्येन्द्रस्य भाषितं ।
आवर्त्तय कुरून् जित्वा पशून् पशुमतांवर । निर्द्दहैषामनीकानि भीमेन शरतेजसा ।
धनुश्च्युतै रुक्मपुङ्खैः शरैः सन्नतपर्व्वभिः । द्विषतां भिन्ध्यनीकानि गजानामिव यूथपः ।
पाशोपधानां ज्यातन्त्रीं चापदण्डां महास्वनां । शरवर्णां धनुर्व्वीणां शत्रुमध्ये प्रवादय ।
श्वेता रजतसङ्काशा रथे युज्यन्तु ते हयाः । ध्वजञ्च सिंहसौवर्णमुच्छ्रयन्तु तव प्रभो । ११६५
रुक्मपुङ्खाः प्रसन्नाग्रा मुक्ता हस्तवता त्वया । छादयन्तु शराः सूर्य्यं राज्ञां मार्गनिरोधकाः ।
रणे जित्वा कुरून् सर्व्वान् वज्रपाणिरिवासुरान् । यशो महदवाप्य त्वं प्रविशेदं पुरं पुनः ।
त्वं हि राष्ट्रस्य परमा गतिर्म्मत्स्यपतेः सुतः । यथा हि पाण्डुपुत्राणामर्ज्जुनो जयतां वरः ।
एवमेव गतिर्नूनं भवान् विषयवासिनां । गतिमन्तो भवन्त्वद्य सर्व्वे विषयवासिनः ।
॥ वैशम्पायन उवाच ॥ स्त्रीमध्य उक्तस्तेनासौ तद्वाक्यमभयङ्करं । अन्तःपुरे श्लाघमान इदं वचनमब्रवीत् । ११७०
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि उत्तरप्रशंसायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
॥ उत्तर उवाच ॥ अद्याहमनुगच्छेयं दृढधन्वा गवां पदं । यदि मे सारथिः कश्चिद्भवेदश्वेषु कोविदः ।
तन्त्वहं नावगच्छामि यो मे यन्ता भवेन्नरः । पश्यध्वं सारथिं क्षिप्रं मम युक्तं प्रयास्यतः ।
अष्टाविंशतिरात्रं वा मासं वा नूनमन्ततः । यत्तदासीन्महद्युद्धं तत्र मे सारथिर्हतः ।
स लभेयं यदा त्वन्यं हययानविदं नरं । त्वरावानद्य यात्वाऽहं समुच्छ्रितमहाध्वजं ।
विगाह्य तत्परानीकं गजवाजिरथाकुलं । शस्त्रप्रतापनिर्व्वीर्य्यान् कुरून् जित्वानये पशून् । ११७५
दुर्य्योधनं शान्तनवं कर्णं वैकर्त्तनं कृपं । द्रोणञ्च सहपुत्रेण महेष्वासान् समागतान् ।
वित्रासयित्वा सङ्ग्रामे दानवानिव वज्रभृत् । अनेनैव मुहूर्त्तेन पुनः प्रत्यानये पशून् ।
शून्यमासाद्य कुरवः प्रयान्त्यादाय गोधनं । किन्नु शक्यं मया कर्त्तुं यदहं तत्र नाभवं ।
पश्येयुरद्य मे वीर्य्यं कुरवस्ते समागताः । किन्नु पार्थोऽर्ज्जुनः साक्षादयमस्मान् प्रबाधते ।
॥ वैशम्पायन उवाच ॥ श्रुत्वा तदर्ज्जुनो वाक्यं राज्ञः पुत्रस्य भाषतः । अतीतः समये काले प्रियां भार्य्यामनिन्दितां । ११८०
द्रुपदस्य सुतां तन्वीं पाञ्चालीं पावकात्मजां । सत्यार्जवगुणोपेतां भर्त्तुः प्रियहिते रतां ।
उवाच रहसि प्रीतः कृष्णां सर्व्वार्थकोविदः । उत्तरं ब्रूहि कल्याणि क्षिप्रं मद्वचनादिदं ।
अयं वै पाण्डवस्यासीत्सारथिः सम्मतो दृढः । महायुद्धेषु संसिद्धः स ते यन्ता भविष्यति ।
॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं स्त्रीषु भाषतश्च पुनः पुनः । न सा ऽमर्षत पाञ्चाली बीभत्सोः परिकीर्त्तनं ।
अथैनमुपसङ्क्रम्य स्त्रीमध्यात् सा तपस्विनी । व्रीडमानेव शनकैरिदं वचनमब्रवीत् । ११८५
योऽसौ बृहद्वारणाभो युवा सुप्रियदर्शनः । बृहन्नलेति विख्यातः पार्थस्यासीत् स सारथिः ।

धनुष्मनवरश्चासीत्तस्य शिष्यो महात्मनः । दृष्टपूर्व्वो मया वीर चरन्त्या पाण्डवान्प्रति ।
यदा तत्पावको दावमदहत् खाण्डवं वनं । अर्ज्जुनस्य तदाऽनेन संगृहीता हयोत्तमाः ।
तेन सारथिना पार्थः सर्व्वभूतानि सर्व्वशः । अजयत् खाण्डवप्रस्थे न हि यन्ताऽस्ति तादृशः ।
॥ उत्तर उवाच ॥ सैरिन्ध्रि जानासि तथा युवानं नपुंसको नैव भवेद्यथाऽसौ । अहं न शक्नोमि बृहन्नलां शुभे वक्तुं स्वयं यन्तृ हयान्ममेति वै । ११९०
॥ द्रौपद्युवाच ॥ येयं कुमारी सुश्रोणी भगिनी ते यवीयसी । अस्याः स वीर वचनं करिष्यति न संशयः ।
यदि वै सारथिः स स्यात् कुरून् सर्व्वान्न संशयः । जित्वा गाश्च समादाय ध्रुवमागमनं भवेत् ।
एवमुक्तः स सैरिन्ध्र्या भगिनीं प्रत्यभाषत । गच्छ त्वमनवद्याङ्गि तामानय बृहन्नलां ।
सा भ्रात्रा प्रेषिता शीघ्रमगच्छन्नर्त्तनागृहं । यत्रास्ते स महाबाहुश्छन्नः सत्रेण पाण्डवः ।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि बृहन्नलासारथ्यकथने षट्त्रिंशो ऽध्यायः ॥ ३६ ॥
॥ वैशम्पायन उवाच ॥ सा प्राद्रवत्काञ्चनमाल्यधारिणी ज्येष्ठेन भ्रात्रा प्रहिता यशस्विनी । सुदक्षिणा वेदिविलग्नमध्या सा पद्मपत्राभनिभा शिखण्डिनी । ११९५
तन्वी शुभाङ्गी मणिचित्रमेखला मत्स्यस्य राज्ञो दुहिता श्रिया वृता । तन्नर्त्तनागारमरालपक्ष्मा शतह्रदा मेघमिवाभ्यपद्यत ।
सा हस्तिहस्तोपमसंहतोरुः स्वनिन्दिता चारुदती सुमध्यमा । आसाद्य तं वै वरमाल्यधारिणी पार्थं शुभा नागवधूरिव द्विपं ।
सा रत्नभूता मनसः प्रियाऽर्च्चिता सुता विराटस्य यथेन्द्रलक्ष्मीः । सुदर्शनीया प्रमुखे यशस्विनी प्रत्यब्रवीदर्ज्जुनमायतेक्षणा ।
सुसंहतोरुं कनकोज्ज्वलत्वचं पार्थः कुमारीं स तदाऽभ्यभाषत । किमागमः काञ्चनमाल्यधारिणि मृगाक्षि किन्त्वं त्वरितेव भाविनी ।
किं ते मुखं सुन्दरि न प्रसन्नमाचक्ष्व तत्त्वं मम शीघ्रमङ्गने । १२००
॥ वैशम्पायन उवाच ॥ स तां दृष्ट्वा विशालाक्षीं राजपुत्रीं सखीं सखा । प्रहसन्नब्रवीद्राजन्किमागमनमित्युत ।
तमब्रवीद्राजपुत्री समुपेत्य नरर्षभं । प्रणयं भावयन्ती सा सखीमध्य इदं वचः ।
गावो राष्ट्रस्य कुरुभिः काल्यन्ते नो बृहन्नले । तान् विजेतुं मम भ्राता प्रयास्यति धनुर्द्धरः ।
नचिरं निहतस्तस्य सङ्ग्रामे रथसारथिः । तेन नास्ति समः सूतो योऽस्य सारथ्यमाचरेत् ।
तस्मै प्रयतमानाय सारथ्यार्थं बृहन्नले । आचचक्षे हयज्ञाने सैरिन्ध्री कौशलं तव । १२०५
अर्ज्जुनस्य किलासीस्त्वं सारथिर्दयितः पुरा । त्वयाऽजयत् सहायेन पृथिवीं पाण्डवर्षभः । सा सारथ्यं मम भ्रातुः कुरु साधु बृहन्नले ।
दूराद्दूरतरं गावो ह्रियन्ते कुरुभिर्हि नः । अथैतद्वचनं मेऽद्य नियुक्ता न करिष्यसि ।
प्रणयादुच्यमाना त्वं परित्यक्ष्यामि जीवितं । एवमुक्तस्तु सुश्रोण्या तया सख्या परन्तपः ।
जगाम राजपुत्रस्य सकाशममितौजसः । तमाव्रजन्तं त्वरितं प्रभिन्नमिव कुञ्जरं ।

अन्वगच्छद्विशालाक्षी शिशुं गजवधूरिव। दूरादेव तु तां प्रेक्ष्य राजपुत्रोऽभ्यभाषत। १२१०
त्वया सारथिना पार्थः खाण्डवेऽग्निमतर्पयत्। पृथिवीमजयत् कृत्स्नां कुन्तीपुत्रो धनञ्जयः।
सैरिन्ध्री त्वां समाचष्टे सा हि जानाति पाण्डवान्। संयच्छ मामकानश्वांस्तथैव त्वं बृहन्नले।
कुरुभिर्योत्स्यमानस्य गोधनानि परीप्सतः। अर्ज्जुनस्य किलासीस्त्वं सारथिर्दयितः पुरा।
तथाऽजयत्सहायेन पृथिवीं पाण्डवर्षभः। एवमुक्ता प्रत्युवाच राजपुत्रं बृहन्नला।
का शक्तिर्मम सारथ्यं कर्त्तुं सङ्ग्राममूर्द्धनि। गीतं वा यदि वा नृत्यं वादित्रं वा पृथग्विधं। १२१५
तत्करिष्यामि भद्रन्ते सारथ्यं तु कुतो मम।
॥ उत्तर उवाच ॥ बृहन्नले गायनो वा नर्त्तनो वा पुनर्भव। क्षिप्रं मे रथमास्थाय निगृह्णीष्व हयोत्तमान्।
॥ वैशम्पायन उवाच ॥ स तत्र नर्म्मसंयुक्तमकरोत् पाण्डवो बहु। उत्तरायाः प्रमुखतः सर्व्वं जानन्नरिन्दमः।
ऊर्द्धमुत्क्षिप्य कवचं शरीरे प्रत्यमुञ्चत। कुमार्यस्तत्र तं दृष्ट्वा प्राहसन् पृथुलोचनाः।
स तु दृष्ट्वा विमुह्यन्तं स्वयमेवोत्तरस्ततः। कवचेन महार्हेण समनह्यद्बृहन्नलां। १२२०
स बिभ्रत् कवचञ्चाग्र्यं स्वयमप्यंशुमत्तरं। ध्वजञ्च सिंहमुच्छ्रित्य सारथ्ये समकल्पयत्।
धनूंषि च महार्हाणि बाणांश्च रुचिरान् बहून्। आदाय प्रययौ वीरः स बृहन्नलसारथिः।
अथोत्तरा च कन्याश्च सख्यस्तामब्रुवंस्तदा। बृहन्नले आनयेथा वासांसि रुचिराणि च।
पाञ्चालिकार्थं चित्राणि सूक्ष्माणि च मृदूनि च। विजित्य सङ्ग्रामगतान् भीष्मद्रोणमुखान् कुरून्।
एवं ता ब्रुवतीः कन्याः सहिताः पाण्डुनन्दनः। प्रत्युवाच हसन् पार्थो मेघदुन्दुभिनिःस्वनः। १२२५
॥ बृहन्नलोवाच ॥ यद्युत्तरोऽयं सङ्ग्रामे विजेष्यति महारथान्। अथाहरिष्ये वासांसि दिव्यानि रुचिराणि च।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु बीभत्सुस्ततः प्राचोदयद्धयान्। कुरूनभिमुखः शूरो नानाध्वजपताकिनः।
तमुत्तरं वीक्ष्य रथोत्तमे स्थितं बृहन्नलया सहितं महाभुजं। स्त्रियश्च कन्याश्च द्विजाश्च सुव्रताः प्रदक्षिणं चक्रुरथोचुर
ङ्गनाः।
यदर्ज्जुनस्यर्षभतुल्यगामिनः पुराऽभवत् खाण्डवदाहमङ्गलं। कुरून् समासाद्य रणे बृहन्नले सहोत्तरेणाद्य तदस्तु मङ्गलं।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि उत्तरनिर्याणे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
॥ वैशम्पायन उवाच ॥ स राजधान्या निर्याय वैराटिरकुतोभयः। प्रयाहीत्यब्रवीत् सूतं यत्र ते कुरवो गताः। १२३०
समवेतान् कुरून् सर्व्वान् जिगीषूनवजित्य वै। गाश्चैषां क्षिप्रमादाय पुनरेष्यामि स्वं पुरं।
ततस्तांश्चोदयामास सदश्वान् पाण्डुनन्दनः। ते हया नरसिंहेन चोदिता वातरंहसः।
आलिखन्त इवाकाशमूहुः काञ्चनमालिनः। नातिदूरमथो गत्वा मत्स्यपुत्रधनञ्जयौ।
अवेक्षेतामभित्रघ्नौ कुरूणां बलिनां बलं। श्मशानमभितो गत्वा आससाद कुरूनथ।
तां शमीमन्ववेक्षेतां व्यूढानीकांश्च सर्व्वशः। तदनीकं महत्तेषां विबभौ सागरोपमं। १२३५
सर्पमाणमिवाकाशे वनं बहुलपादपं। ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता।
दृष्टिप्रणाशो भूतानां दिवस्पृक् कुरुसत्तम। तदनीकं महद्दृष्ट्वा गजाश्वरथसङ्कुलं।

कर्णदुर्य्योधनकृपैर्गुप्तं शान्तनवेन च । द्रोणेन च सपुत्त्रेण महेष्वासेन धीमता ।
हृष्टरोमा भयोद्विग्नः पार्थं वैराटिरब्रवीत् ।
॥ उत्तर उवाच ॥ नोत्सहे कुरुभिर्योद्धुं रोमहर्षं हि पश्य मे । बहुप्रवीरमत्युग्रं देवैरपि दुरासदं । १२४०
प्रतियोद्धुं न शक्ष्यामि कुरुसैन्यमनन्तकं । नाशंसे भारतीं सेनां प्रवेष्टुं भीमकार्मुकां ।
रथनागाश्वकलिलां पत्तिध्वजसमाकुलां । दृष्ट्वैव हि परानाजौ मनः प्रव्यथतीव मे ।
यत्र द्रोणश्च भीष्मश्च कृपः कर्णो विविंशतिः । अश्वत्थामा विकर्णश्च सोमदत्तश्च वाह्लिकः ।
दुर्य्योधनस्तथा वीरो राजा च रथिनां वरः । द्युतिमन्तो महेष्वासाः सर्व्वे युद्धविशारदाः ।
दृष्ट्वैव हि कुरूनेतान् व्यूढानीकान्प्रहारिणः । हृषितानि च रोमाणि कश्मलञ्चागतं मम । १२४५
॥ वैशम्पायन उवाच ॥ अविजातो विजातस्य मौर्ख्याद्धूर्त्तस्य पश्यतः । परिदेवयते मन्दः सकाशे सव्यसाचिनः ।
त्रिगर्त्तान्मे पिता यातः शून्ये सम्प्रणिधाय मां । सर्व्वां सेनामुपादाय न मे सन्तीह सैनिकाः ।
सोऽहमेको बहून् बालः कृतास्त्रानकृतश्रमः । प्रतियोद्धुं न शक्ष्यामि निवर्त्तस्व बृहन्नले ।
॥ बृहन्नलोवाच ॥ भयेन दीनरूपोऽसि द्विषतां हर्षवर्द्धनः । न च तावत् कृतं कर्म परैः किञ्चित् रणाजिरे ।
स्वयमेव च मामात्थ वह मां कौरवान्प्रति । सोऽहं त्वां तत्र नेष्यामि यत्रैते बहुला ध्वजाः । १२५०
मध्यमामिषगृध्राणां कुरूणामाततायिनां । नेष्यामि त्वां महाबाहो पृथिव्यामपि युध्यतां ।
तथा स्त्रीषु प्रतिश्रुत्य पौरुषं पुरुषेषु च । कत्थमानोऽभिनिर्य्याय किमर्थं न युयुत्ससे ।
न चेद्विजित्य गास्तास्त्वं गृहान्वै प्रतियास्यसि । प्रहसिष्यन्ति वीरास्त्वां नरा नार्य्यश्च सङ्गताः ।
अहमप्यत्र सैरिन्ध्र्या ख्यातः सारथ्यकर्म्मणि । न च शक्ष्याम्यनिर्ज्जित्य गाः प्रयातुं पुरं प्रति ।
स्तोत्रेण चैव सैरिन्ध्र्यास्तव वाक्येन तेन च । कथं न युध्येयमहं कुरून् सर्व्वान् स्थिरो भव । १२५५
॥ उत्तर उवाच ॥ कामं हरन्तु मत्स्यानां भूयांसः कुरवो धनं । प्रहसन्तु च मां नार्य्यो नरा वाऽपि बृहन्नले ।
सङ्ग्रामे न च कार्य्यं मे गावो गच्छन्तु चापि मे । शून्यं मे नगरञ्चापि पितुश्चैव बिभेम्यहं ।
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा प्राद्रवद्भीतो रथात् प्रस्कन्द्य कुण्डली । त्यक्त्वा मानं च दर्पञ्च विसृज्य सशरं धनुः ।
॥ बृहन्नलोवाच ॥ नैष शूरैः स्मृतो धर्म्मः क्षत्त्रियस्य पलायनं । श्रेयस्तु मरणं युद्धे न भीतस्य पलायनं ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु कौन्तेयः सोऽवप्लुत्य रथोत्तमात् । तमन्वधावद्धावन्तं राजपुत्त्रं धनञ्जयः । १२६०
दीर्घां वेणीं विधुन्वानः साधु रक्ते च वाससी । विधूय वेणीं धावन्तमजानन्तोऽर्जुनं तदा ।
सैनिकाः प्राहसन् केचित्तथारूपमवेक्ष्य तं । तं शीघ्रमभिधावन्तं सम्प्रेक्ष्य कुरवोऽब्रुवन् ।
क एष वेशसंच्छन्नो भस्मनेव हुताशनः । किञ्चिदस्य यथा पुंसः किञ्चिदस्य यथा स्त्रियः ।
सारूप्यमर्ज्जुनस्यैव क्लीवरूपं बिभर्त्ति च । तदेवैतच्छिरोग्रीवं तौ बाहू परिघोपमौ ।
तद्वदेवास्य विक्रान्तं नायमन्यो धनञ्जयात् । अमरेष्विव देवेन्द्रो मानुषेषु धनञ्जयः । १२६५
एकः कोऽस्मानुपायायादन्यो लोके धनञ्जयात् । एकः पुत्त्रो विराटस्य शून्ये सन्निहितः पुरे ।
स एष किल निर्य्यातो बालभावान्न पौरुषात् । सत्त्रेण नूनं छन्नं हि चरन्तं पार्थमर्ज्जुनं ।

उत्तरः सारथिं कृत्वा निर्यातो नगराद्बहिः। स नो मन्यामहे दृष्ट्वा भीत एव पलायते।
तन्नूनमेव धावन्तं जिघृक्षति धनञ्जयः।
॥ वैशम्पायन उवाच ॥ इति स्म कुरवः सर्व्वे विमृशन्तः पृथक् पृथक्। न च व्यवसितुं किञ्चिदुत्तरं शक्नुवन्ति ते। १२७०
छन्नं तथा तं सत्रेण पाण्डवं प्रेक्ष्य भारत। उत्तरन्तु प्रधावन्तमभिद्रुत्य धनञ्जयः।
गत्वा पदशतं तूर्णं केशपक्षे परामृशत्। सोऽर्ज्जुनेन परामृष्टः पर्य्यदेवयदार्त्तवत्।
बहुलं कृपणञ्चैव विराटस्य सुतस्तदा।
॥ उत्तर उवाच ॥ शृणुयास्त्वं हि कल्याणि बृहन्नले सुमध्यमे। निवर्त्तय रथं क्षिप्रं जीवन् भद्राणि पश्यति।
शातकुम्भस्य शुद्धस्य शतं निष्कान् ददामि ते। मणीनष्टौ च वैदूर्य्यान् हेमबद्धान्महाप्रभान्। १२७५
हेमदण्डप्रतिच्छन्नं रथं युक्तञ्च सुव्रतैः। मत्तांश्च दश मातङ्गान् मुञ्च मान्त्वं बृहन्नले।
॥ वैशम्पायन उवाच ॥ एवमादीनि वाक्यानि विलपन्तमचेतसं। प्रहस्य पुरुषव्याघ्रो रथस्यान्तिकमानयत्।
अथैनमब्रवीत् पार्थो भयार्त्तं नष्टचेतसं। यदि नोत्सहसे योद्धुं शत्रुभिः शत्रुकर्षण।
एहि मे त्वं हयान् यच्छ युध्यमानस्य शत्रुभिः। प्रयाह्येतद्रथानीकं मद्बाहुबलरक्षितः।
अप्रधृष्यतमं घोरं गुप्तं वीरैर्महारथैः। माभैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परन्तप। १२८०
कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि। अहं वै कुरुभिर्योत्स्ये विजेष्यामि च ते पशून्।
प्रविश्यैतद्रथानीकमप्रधृष्यं दुरासदं। यन्ता भव नरश्रेष्ठ योत्स्येऽहं कुरुभिः सह।
एवं ब्रुवाणो बीभत्सुर्व्वैराटिमपराजितः। समाश्वास्य मुहूर्त्तन्तमुत्तरं भरतर्षभ।
तत एनं विचेष्टन्तमकामं भयपीडितं। रथमारोपयामास पार्थः प्रहरताम्वरः।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि उत्तराश्वासने अष्टात्रिंशोऽध्यायः॥ ३८ ॥
॥ वैशम्पायन उवाच ॥ तं दृष्ट्वा क्लीववेशेन रथस्थं नरपुङ्गवं। शमीमभिमुखं यान्तं रथमारोप्य चोत्तरं। १२८५
भीष्मद्रोणमुखास्तत्र कुरवो रथिसत्तमाः। वित्रस्तमनसः सर्व्वे धनञ्जयकृताद्भयात्।
तानवेक्ष्य हतोत्साहानुत्पातानपि चाद्भुतान्। गुरुः शस्त्रभृतां श्रेष्ठो भारद्वाजोऽभ्यभाषत।
चण्डाश्च वाताः संवान्ति रूक्षाः शर्करवर्षिणः। भस्मवर्णप्रकाशेन तमसा संवृतं नभः।
रूक्षवर्णाश्च जलदा दृश्यन्ते ऽद्भुतदर्शनाः। प्रसरन्ति च कोशेभ्यः शस्त्राणि विविधानि च।
शिवाश्च विनदन्त्येता दीप्तायां दिशि दारुणाः। हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्यकम्पिताः। १२९०
यादृशान्यत्र रूपाणि सन्दृश्यन्ते बहूनि च। यत्ता भवन्तस्तिष्ठन्तु साध्वसं समुपस्थितं।
रक्षध्वमपि चात्मानं व्यूहध्वं वाहिनीमपि। वैशसञ्च प्रतीक्षध्वं रक्षध्वञ्चापि गोधनं।
एष वीरो महेष्वासः सर्व्वशस्त्रभृताम्वरः। आगतः क्लीववेशेन पार्थो नास्त्यत्र संशयः।
नदीज लङ्केशवनारिकेतुर्नगाह्वयो नाम नगारिसूनुः। एषोऽङ्गनावेशधरः किरीटी जित्वा वयं नेष्यति चाद्य गा वः।
स एष पार्थो विक्रान्तः सव्यसाची परन्तपः। नायुद्धेन निवर्त्तेत सर्व्वैरपि सुरासुरैः। १२९५

द्रोणितश्च वने शूरो वासवेनापि शिक्षितः । अमर्षवशमापन्नो वासवप्रतिमो युधि ।
नेहास्य प्रतियोद्धारमहं पश्यामि कौरवाः । महादेवोऽपि पार्थेन श्रूयते युधि तोषितः ।
किरातवेशप्रच्छन्नो गिरौ हिमवति प्रभुः ।
॥ कर्ण उवाच ॥ सदा भवान्फाल्गुनस्य गुणैरस्मान्विकत्थसे । न चार्जुनः कलापूर्णो मम दुर्य्योधनस्य च ।
॥ दुर्य्योधन उवाच ॥ यद्येष पार्थो राधेय कृतं कार्य्यं भवेन्मम । ज्ञाताः पुनश्चरिष्यन्ति द्वादशाब्दान्विशाम्पते । १२००
अथैष कश्चिदेवान्यः क्लीववेशेन मानवः । शरैरेनं सुनिशितैः पातयिष्यामि भूतले ।
॥ वैशम्पायन उवाच ॥ तस्मिन् ब्रुवति तद्वाक्यं धार्त्तराष्ट्रे परन्तप । भीष्मो द्रोणः कृपो द्रौणिः पौरुषन्तदपूजयन् ।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि अर्ज्जुनप्रशंसायां एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ वैशम्पायन उवाच ॥ तां शमीमुपसङ्गम्य पार्थो वैराटिमब्रवीत् । सुकुमारं समाज्ञाय सङ्ग्रामे नातिकोविदं ।
समादिष्टो मया क्षिप्रं धनूंष्यवहरोत्तर । नेमानि हि त्वदीयानि सोढुं शक्ष्यन्ति मे बलं ।
भारञ्चापि गुरुं वोढुं कुञ्जरान्वा प्रमर्द्दितुं । मम वा बाहुविक्षेपं शत्रूनिह विजेष्यतः । १२०५
तस्माद्भूमिञ्जयारोह शमीमेतां पलाशिनीं । अस्यां हि पाण्डुपुत्राणां धनूंषि निहितान्युत ।
युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा । ध्वजाः शराश्च शूराणां दिव्यानि कवचानि च ।
अत्र चैतन्महावीर्य्यं धनुः पार्थस्य गाण्डिवं । एकं शतसहस्रेण सम्मितं राष्ट्रवर्द्धनं ।
व्यायामसहमत्यर्थं तृणराजसमं महत् । सर्व्वायुधमहामात्रं शत्रुसम्बाधकारकं ।
सुवर्णविकृतं दिव्यं श्लक्ष्णमायतमव्रणं । अलम्भारं गुरुं वोढुं दारुणं चारुदर्शनं । १२१०
तादृशान्येव सर्व्वाणि बलवन्ति दृढानि च । युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि अर्ज्जुनायुधकथने चत्वारिंशोऽध्यायः ॥ ४० ॥
॥ उत्तर उवाच ॥ अस्मिन् वृक्षे किलोद्बद्धं शरीरमिति नः श्रुतं । तदहं राजपुत्रः सन् स्पृशेयं पाणिना कथं ।
नैवंविधं मया युक्तमालब्धुं क्षत्रयोनिना । महता राजपुत्रेण मन्त्रयज्ञविदा सता ।
स्पृष्टवन्तं शरीरं मां शववाहमिवाशुचिं । कथं वा व्यवहार्य्यं वै कुर्व्वीथास्त्वं बृहन्नले ।
॥ बृहन्नलोवाच ॥ व्यवहार्य्यश्च राजेन्द्र शुचिश्चैव भविष्यसि । धनूंष्येतानि मा भैस्त्वं शरीरं नात्र विद्यते । १२१५
दायादं मत्स्यराजस्य कुले जातं मनस्विनं । त्वां कथं निन्दितं कर्म्म कारयेयं नृपात्मज ।
॥ वैशम्पायन उवाच ॥ एवमुक्तः स पार्थेन रथात् प्रस्कन्द्य कुण्डली । आरुरोह शमीवृक्षं वैराटिरवशस्तदा ।
तमन्वशासत् शत्रुघ्नो रथे तिष्ठन् धनञ्जयः । अवरोपय वृक्षाग्रात् धनूंष्येतानि माचिरं ।
परिवेष्टनमेतेषां क्षिप्रं चैव व्यपानुद । सोऽपहृत्य महार्हाणि धनूंषि पृथुवक्षसां ।
परिवेष्टनपत्राणि विमुच्य समुपानयत् । तथा सन्नहनान्यस्य परिमुच्य समन्ततः । १२२०
अपश्यद्गाण्डिवं तत्र चतुर्भिरपरैः सह । तेषां विमुच्यमानानां धनुषामर्कवर्चसां ।
विनिश्चेरुः प्रभा दिव्या ग्रहाणामुदयेष्विव । स तेषां रूपमालोक्य भोगिनामिव जृम्भतां ।

हृष्टरोमा भयोद्विग्नः क्षणेन समपद्यत। संस्पृश्य तानि चापानि भानुमन्ति बृहन्ति च।
वैराटिरर्ज्जुनं राजन्निदं वचनमब्रवीत्।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि अस्त्रारोपणे एकचत्वारिंशोऽध्यायः॥ ४१ ॥
॥ उत्तर उवाच॥ बिन्दवो जातरूपस्य शतं यस्मिन्निपातिताः। सहस्रकोटिसौवर्णाः कस्यैतद्धनुरुत्तमं। १२२५
वारणा यस्य सौवर्णाः पृष्ठे भासन्ति दंशिताः। सुपार्श्वं सुग्रहञ्चैव कस्यैतद्धनुरुत्तमं।
तपनीयस्य शुद्धस्य पृष्ठे यस्येन्द्रगोपकाः। पृष्ठे विभक्ताः शोभन्ते कस्यैतद्धनुरुत्तमं।
सूर्य्या यत्र च सौवर्णास्त्रयो भासन्ति दंशिताः। तेजसा प्रज्वलन्तो हि कस्यैतद्धनुरुत्तमं।
शलभा यत्र सौवर्णास्तपनीयविभूषिताः। सुवर्णमणिचित्रञ्च कस्यैतद्धनुरुत्तमं।
इमे च कस्य नाराचाः सहस्रा लोमवाहिनः। समन्तात् कलधौताग्रा उपासङ्गे हिरण्मये। १२३०
विपाठाः पृथवः कस्य गार्द्ध्रपत्राः शिलाशिताः। हारिद्रवर्णाः सुमुखाः पीताः सर्व्वायसाः शराः।
कस्यायमसितश्चापः पञ्चशार्दूललक्षणः। वराहकर्णव्यामिश्रान् शरान् धारयते दश।
कस्येमे पृथवो दीर्घाश्चन्द्रबिम्बार्द्धदर्शनाः। शतानि सप्त तिष्ठन्ति नाराचा रुधिराशनाः।
कस्येमे शुकपत्राभैः पूर्व्वैरर्द्धैः सुवाससः। उत्तरैरायसैः पीतैर्हेमपुङ्खैः शिलाशितैः।
गुरुभारसहो दिव्यः शात्रवाणां भयङ्करः। कस्यायं सायको दीर्घः शिलीपृष्ठः शिलीमुखः। १२३५
वैयाघ्रकोषे निहितो हेमचित्रत्सरुर्महान्। पृथुलश्चित्रकोषश्च किङ्किणीसायको महान्।
कस्य हेमत्सरुर्दिव्यः खड्गः परमनिर्म्मलः। कस्यायं विमलः खड्गो गव्ये कोषे समर्पितः।
हेमत्सरुरनाधृष्यो नैषध्यो भारसाधनः। कस्य पाञ्चनखे कोषे सायको हेमविग्रहः।
प्रमाणरूपसम्पन्नः पीत आकाशसन्निभः। कस्य हेममये कोषे सुतप्ते पावकप्रभे।
निस्त्रिंशोऽयं गुरुः पीतः शैक्यः परनिर्व्रणः। कस्यायमसितः खड्गो हेमबिन्दुभिरावृतः। १२४०
आशीविषसमस्पर्शः परकायप्रभेदनः। गुरुभारसहो दिव्यः सपत्नानां भयप्रदः।
निर्द्दिशस्व यथातत्त्वं मया पृष्टा बृहन्नले। विस्मयो मे परो जातो दृष्ट्वा सर्व्वमिदं महत्।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि उत्तरशस्त्रदर्शने द्विचत्वारिंशोऽध्यायः॥ ४२ ॥
॥ बृहन्नला उवाच॥ यन्मां पूर्व्वमिहापृच्छः शत्रुसेनापहारिणं। गाण्डीवमेतत्पार्थस्य लोकेषु विदितं धनुः।
सर्व्वायुधमहामात्रं शातकुम्भपरिष्कृतं। एतत्तदर्ज्जुनस्यासीत् गाण्डीवं परमायुधं।
यत्तच्छतसहस्रेण सम्मितं राष्ट्रवर्द्धनं। येन देवान् मनुष्यांश्च पार्थो विजयते मृधे। १२४५
चित्रमुच्चावचैर्व्वर्णैः श्लक्ष्णमायतमव्रणं। देवदानवगन्धर्व्वैः पूजितं शाश्वतीः समाः।
एतद्वर्षसहस्रन्तु ब्रह्मा पूर्व्वमधारयत्। ततोऽनन्तरमेवाथ प्रजापतिरधारयत।
त्रीणि पञ्चशतं चैव शक्रोऽशीतिं च पञ्च च। सोमः पञ्चशतं राजा तथैव वरुणः शतं।
पार्थः पञ्च च षष्टिञ्च वर्षाणि श्वेतवाहनः। महावीर्य्यं महादिव्यमेतत्तद्धनुरुत्तमं।
एतत्पार्थमनुप्राप्तं वरुणाच्चारुदर्शनं। पूजितं सुरमर्त्त्येषु बिभर्त्ति परमं वपुः। १२५०

सुपार्श्वं भीमसेनस्य जातरूपग्रहं धनुः । येन पार्थोऽजयत् कृत्स्नां दिशं प्राचीं परन्तपः ।
इन्द्रगोपकचित्रञ्च यदेतच्चारुदर्शनं । राज्ञो युधिष्ठिरस्यैतद्वैराटे धनुरुत्तमं ।
सूर्य्या यस्मिंस्तु सौवर्णाः प्रकाशन्ते प्रकाशिनः । तेजसा प्रज्वलन्तो वै नकुलस्यैतदायुधं ।
शलभा यत्र सौवर्णास्तपनीयविचित्रिताः । एतन्माद्रीसुतस्यापि सहदेवस्य कार्मुकं ।
ये त्विमे क्षुरसङ्काशाः सहस्रा लोमवाहिनः । एतेऽर्ज्जुनस्य वैराटे शराः सर्पविषोपमाः । १२५५
एते ज्वलन्तः सङ्ग्रामे तेजसा शीघ्रगामिनः । भवन्ति वीरस्याक्षय्या व्यूहतः समरे रिपून् ।
ये चेमे पृथवो दीर्घाश्चन्द्रबिम्बार्द्धदर्शनाः । एते भीमस्य निशिता रिपुक्षयकराः शराः ।
हारिद्रवर्णा ये त्वेते हेमपुङ्खाः शिलाशिताः । नकुलस्य कलापोऽयं पञ्चशार्दूललाञ्छनः ।
येनासौ व्यजयत् कृत्स्नां प्रतीचीं दिशमाहवे । कलापो ह्येष तस्यासीन्माद्रीपुत्रस्य धीमतः ।
ये त्विमे भास्कराकाराः सर्व्वपारसवाः शराः । एते चित्रक्रियोपेताः सहदेवस्य धीमतः । १२६०
ये त्विमे निशिताः पीताः पृथवो दीर्घवाससः । हेमपुङ्खास्त्रिपर्व्वाणो राज्ञ एते महाशराः ।
यस्त्वयं सायको दीर्घः शिलीपृष्ठः शिलीमुखः । अर्ज्जुनस्यैष सङ्ग्रामे गुरुभारसहो दृढः ।
वैयाघ्रकोशः सुमहान् भीमसेनस्य सायकः । गुरुभारसहो दिव्यः शात्रवाणां भयङ्करः ।
सुफलश्चित्रकोशश्च हेमत्सरुरनुत्तमः । निस्त्रिंशः कौरवस्यैष धर्म्मराजस्य धीमतः ।
यस्तु पाञ्चनखे कोशे निहितश्चित्रयोधने । नकुलस्यैष निस्त्रिंशो गुरुभारसहो दृढः । १२६५
यस्त्वयं विपुलः खड्गो गव्ये कोशे समर्पितः । सहदेवस्य विद्ध्येनं सर्व्वभारसहं दृढं ।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि उत्तरस्याशस्त्रदर्शने द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
॥ उत्तर उवाच ॥ सुवर्णविकृतानीमान्यायुधानि महात्मनां । रुचिराणि प्रकाशन्ते पार्थानामाशुकारिणां ।
क्व नु स्विदर्ज्जुनः पार्थः कौरव्यो वा युधिष्ठिरः । नकुलः सहदेवश्च भीमसेनश्च पाण्डवः ।
सर्व्व एव महात्मानः सर्व्वामित्रविनाशनाः । राज्यमक्षैः पराकीर्य्य न श्रूयन्ते कथञ्चन ।
द्रौपदी क्व च पाञ्चाली स्त्रीरत्नमिति विश्रुता । जितानक्षैस्तदा कृष्णा तानेवान्वगमद्वनं । १२७०
॥ अर्ज्जुन उवाच ॥ अहमस्म्यर्ज्जुनः पार्थः सभास्तारो युधिष्ठिरः । बल्लवो भीमसेनस्तु पितुस्ते रसपाचकः ।
अश्वबन्धोऽथ नकुलः सहदेवस्तु गोकुले । सैरिन्ध्रीं द्रौपदीं विद्धि यत्कृते कीचका हताः ।
॥ उत्तर उवाच ॥ दश पार्थस्य नामानि यानि पूर्व्वं श्रुतानि मे । प्रब्रूयास्तानि यदि मे श्रद्दध्यां सर्व्वमेव ते ।
॥ अर्ज्जुन उवाच ॥ हन्त तेऽहं समाचक्षे दश नामानि यानि वै । वैराटे शृणु तानि त्वं यानि पूर्व्वं श्रुतानि ते ।
एकाग्रमानसो भूत्वा शृणु सर्व्वं समाहितः । अर्ज्जुनः फाल्गुनो जिष्णुः किरीटी श्वेतवाहनः । १२७५
वीभत्सुर्व्विजयः कृष्णः सव्यसाची धनञ्जयः ।
॥ उत्तर उवाच ॥ केनासि विजयो नाम केनासि श्वेतवाहनः । किरीटी नाम केनासि सव्यसाची कथं भवान् ।
अर्ज्जुनः फाल्गुनो जिष्णुः कृष्णो वीभत्सुरेव च । धनञ्जयश्च केनासि ब्रूहि तन्मम तत्त्वतः ।
श्रुता मे तस्य वीरस्य केवला नामहेतवः । तत्सर्व्वं यदि मां ब्रूयाः श्रद्दध्यां सर्व्वमेव ते ।

॥ अर्ज्जुन उवाच ॥ सर्व्वान् जनपदान् जित्वा वित्तमादाय केवलं। मध्ये धनस्य तिष्ठामि तेनाहुर्म्मां धनञ्जयं। ११८०

अभिप्रयामि सङ्ग्रामे यदहं युद्धदुर्म्मदान्। नाजित्वा विनिवर्त्तामि तेन मां विजयं विदुः।

श्वेताः काञ्चनसन्नाहा रथे युज्यन्ति मे हयाः। सङ्ग्रामे युध्यमानस्य तेनाहं श्वेतवाहनः।

उत्तराभ्यां फल्गुनीभ्यां नक्षत्राभ्यामहं दिवा। जातो हिमवतः पृष्ठे तेन मां फाल्गुनं विदुः।

पुरा शक्रेण मे दत्तं युध्यतो दानवर्षभैः। किरीटं मूर्द्ध्नि सूर्य्याभं तेनाहुर्म्मां किरीटिनं।

न कुर्य्यां कर्म्म बीभत्सं युध्यमानः कथञ्चन। तेन देवमनुष्येषु बीभत्सुरिति विश्रुतः। ११८५

उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे। तेन देवमनुष्येषु सव्यसाचीति मां विदुः।

पृथिव्यां चतुरन्तायां वर्णो मे दुर्ल्लभः समः। करोमि कर्म्म शुक्लञ्च तेन मामर्ज्जुनं विदुः।

अहं दुरापो दुर्द्धर्षो दमनः पाकशासनिः। तेन देवमनुष्येषु जिष्णुर्नामाऽस्मि विश्रुतः।

कृष्ण इत्येव दशमं नाम चक्रे पिता मम। कृष्णावदातस्य सतः प्रियत्वाद्बालकस्य वै।

॥ वैशम्पायन उवाच ॥ ततः स पार्थं वैराटिरभ्यवादयदन्तिकात्। अहं भूमिञ्जयो नाम नाम्नाऽहमपि चोत्तरः। ११९०

दिष्ट्या त्वां पार्थ पश्यामि स्वागतं ते धनञ्जय। लोहिताक्ष महाबाहो नागराजकरोपम।

यदज्ञानादवोचं त्वां क्षन्तुमर्हसि तन्मम। यतस्त्वया कृतं पूर्व्वं चित्रं कर्म्म सुदुष्करं।

अतो भयं व्यतीतं मे प्रीतिश्च परमा त्वयि।

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि अर्ज्जुनपरिचये चतुश्चत्वारिंशोऽध्यायः॥ ४४॥

॥ उत्तर उवाच ॥ आस्थाय रुचिरं वीर रथं सारथिना मया। कतमं यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया।

॥ अर्ज्जुन उवाच ॥ प्रीतोऽस्मि पुरुषव्याघ्र न भयं विद्यते तव। सर्व्वान्नुदामि ते शत्रून् रणे रणविशारद। ११९५

स्वस्थो भव महाबाहो पश्य मां शत्रुभिः सह। युध्यमानं विमर्द्देऽस्मिन् कुर्व्वाणं भैरवं महत्।

एतान्सर्व्वानुपासङ्गान् क्षिप्रं बध्नीहि मे रथे। एकञ्चाहर निस्त्रिंशं जातरूपपरिष्कृतं।

॥ वैशम्पायन उवाच ॥ अर्ज्जुनस्य वचः श्रुत्वा त्वरावानुत्तरस्तदा। अर्ज्जुनस्यायुधान् गृह्य शीघ्रेणावतरत्ततः।

॥ अर्ज्जुन उवाच ॥ अहं वै कुरुभिर्य्योत्स्याम्यवजेष्यामि ते पशून्। सङ्कल्पपक्षविक्षेपं बाहुप्राकारतोरणं।

त्रिदण्डतूणसम्बाधमनेकध्वजसङ्कुलं। ज्याक्षेपणं क्रोधकृतं नेमीनिनददुन्दुभिं। १२००

नगरं ते मया गुप्तं रथोपस्थं भविष्यति। अधिष्ठितो मया संख्ये रथो गाण्डीवधन्वना।

अजेयः शत्रुसैन्यानां वैराटे व्येतु ते भयं।

॥ उत्तर उवाच ॥ बिभेमि नाहमेतेषां जानामि त्वां स्थिरं युधि। केशवेनापि सङ्ग्रामे साक्षादिन्द्रेण वा समं।

इदन्तु चिन्तयन्नेवं परिमुह्यामि केवलं। निश्चयञ्चापि दुर्म्मेधा न गच्छामि कथञ्चन।

एवं युक्ताङ्गरूपस्य लक्षणैः सूचितस्य च। केन कर्म्मविपाकेन क्लीवत्वमिदमागतं। १२०५

मन्ये त्वां क्लीववेशेन चरन्तं शूलपाणिनं। गन्धर्व्वराजप्रतिमं देवं वाऽपि शतक्रतुं।

॥ अर्ज्जुन उवाच ॥ भ्रातुर्न्नियोगात् ज्येष्ठस्य संवत्सरमिदं व्रतं। चरामि व्रतचर्य्यञ्च सत्यमेतद्ब्रवीमि ते।

नास्मि क्लीवो महाबाहो परवान्धर्म्मसंयुतः। समाप्तव्रतमुत्तीर्णं विद्धि मां त्वं नृपात्मज।

॥ उत्तर उवाच ॥ परमोऽनुग्रहो मेऽद्य यतस्तर्को न मे वृथा । नहीदृशाः क्लीवरूपा भवन्ति तु नरोत्तम ।
सहायवानस्मि रणे युध्येयममरैरपि । साध्वसं हि प्रनष्टं मे किं करोमि ब्रवीहि मे । ४१०
अहन्ते संग्रहीष्यामि हयान्शत्रुरथारुजान् । शिक्षितो ह्यस्मि सारथ्ये तीर्थतः पुरुषर्षभ ।
दारुको वासुदेवस्य यथा शक्रस्य मातलिः । तथा मां विद्धि सारथ्ये शिक्षितं नरपुङ्गव ।
यस्य याते न पश्यन्ति भूमौ क्षिप्तं पदं पदं । दक्षिणां यो धुरं युक्तः सुग्रीवसदृशो हयः ।
योऽयं धुरं धुर्य्यवरो वामं वहति शोभनः । तं मन्ये मेघपुष्पस्य जवने सदृशं हयं ।
योऽयं काञ्चनसन्नाहः पार्ष्णिं वहति शोभनः । समं शैव्यस्य तं मन्ये जवेन बलवत्तरं । १४१५
योऽयं वहति मे पार्ष्णिं दक्षिणामभितः स्थितः । बलाहकादभिमतः स जवे वीर्य्यवत्तरः ।
त्वामेवायं रथो वोढुं सङ्ग्रामेऽर्हति धन्विनं । त्वञ्चेमं रथमास्थाय योद्धुमर्हो मतो मम ।
॥ वैशम्पायन उवाच ॥ ततो विमुच्य बाहुभ्यां वलयानि स वीर्य्यवान् । चित्रे काञ्चनसन्नाहे प्रत्यमुञ्चत्तदा शुभे ।
कृष्णान् भङ्गिमतः केशान् श्वेतेनोद्ग्रथ्य वाससा । अथासौ प्राङ्मुखो भूत्वा शुचिः प्रयतमानसः ।
अपि दध्यौ महाबाहुः सर्व्वास्त्राणि रथोत्तमे । ऊचुश्च पार्थं सर्व्वाणि प्राञ्जलीनि नृपात्मजं । १४२०
इमे स्म परमोदाराः किङ्कराः पाण्डुनन्दन । प्रणिपत्य ततः पार्थः समालभ्य च पाणिना ।
सर्व्वाणि मानसानीह भवतेत्यभ्यभाषत । प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनोऽभवत् ।
अधिज्यन्तरसा कृत्वा गाण्डीवं व्याक्षिपद्धनुः । तस्य विक्षिप्यमाणस्य धनुषोऽभून्महाध्वनिः ।
यथा शैलस्य महतः शैलेनैवावजघ्नतः । सनिर्घाताऽभवद्भूमिर्दिक्षु वायुर्ववौ भृशं ।
पपात महती चोल्का दिशो न प्रचकाशिरे । भ्रान्तध्वजं खन्तदासीत् प्रकम्पितमहाद्रुमं । १४२५
तं शब्दं कुरवोऽजानन् विस्फोटमशनेरिव । यदर्ज्जुनो धनुःश्रेष्ठं बाहुभ्यामाक्षिपद्रथे ।
॥ उत्तर उवाच ॥ एकस्त्वं पाण्डवश्रेष्ठ बहूनेतान्महारथान् । कथं जेष्यसि सङ्ग्रामे सर्व्वशस्त्रास्त्रपारगान् ।
असहायोऽसि कौन्तेय ससहायाश्च कौरवाः । अतएव महाबाहो भीतस्तिष्ठामि तेऽग्रतः ।
उवाच पार्थो मा भैषीः प्रहस्य स्वनवत्तदा । युध्यमानस्य मे वीर गन्धर्व्वैः सुमहाबलैः ।
सहायो घोषयात्रायां कस्तदासीत् सखा मम । तथा प्रतिभये तस्मिन् देवदानवसङ्कुले । १४३०
खाण्डवे युध्यमानस्य कस्तदासीत् सखा मम । निवातकवचैः सार्द्धं पौलोमैश्च महाबलैः ।
युध्यतो देवराजार्थे कः सहायस्तदाऽभवत् । स्वयम्बरे तु पाञ्चाल्या राजभिः सह संयुगे ।
युध्यतो बहुभिस्तात कः सहायस्तदाऽभवत् । उपजीव्य गुरुं द्रोणं शक्रं वैश्रवणं यमं ।
वरुणं पावकञ्चैव कृपं कृष्णं च माधवं । पिनाकपाणिनं चैव कथमेतान्न योधये ।
रथं वाहय मे शीघ्रं व्येतु ते मानसो ज्वरः । १४३५

इतिश्री महाभारते विराटपर्व्वणि गोहरणपर्व्वणि अर्ज्जुनयुद्धारम्भे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

॥ वैशम्पायन उवाच ॥ उत्तरं सारथिं कृत्वा शमीं कृत्वा प्रदक्षिणां । आयुधं सर्व्वमादाय प्रययौ पाण्डुनन्दनः ।
ध्वजं सिंहं रथात्तस्मादपनीय महारथः । प्रणिधाय शमीमूले प्रायादुत्तरसारथिः ।

दैवीं मायां रथेयुक्तां विहितां विश्वकर्म्मणा। काञ्चनं सिंहलाङ्गूलं ध्वजं वानरलक्षणं।
मनसा चिन्तयामास प्रसादं पावकस्य च। स च तच्चिन्तितं ज्ञात्वा ध्वजे भूतान्यदेशयत्।
सपताकं विचित्राङ्गं सोपासङ्गं हिरण्मयं। खात्पपात रथस्तूर्णं दिव्यरूपं मनोरथं। १४४०
रथं तमागतं दृष्ट्वा दक्षिणं प्राकरोत्तदा। रथमास्थाय बीभत्सुः कौन्तेयः श्वेतवाहनः
बद्धगोधाङ्गुलित्राणः प्रगृहीतशरासनः। ततः प्रायादुदीचीं च कपिप्रवरकेतनः।
स्वनवन्तं महाशङ्खं बलवानरिमर्द्दनः। प्राधमद्बलमास्थाय द्विषतां लोमहर्षणं।
ततस्ते जवना धुर्य्या जानुभ्यामगमन्महीं। उत्तरश्चापि सन्त्रस्तो रथोपस्थ उपाविशत्।
संस्थाप्य चाश्वान् कौन्तेयः समुद्यम्य च रश्मिभिः। उत्तरं च परिष्वज्य समाश्वासयदर्ज्जुनः। १४४५
॥ अर्ज्जुन उवाच ॥ माभैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परन्तप। कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि।
श्रुतास्ते शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः। कुञ्जराणां च नदतां व्यूढानीकेषु तिष्ठतां।
स त्वं कथमिहानेन शङ्खशब्देन भीषितः। विषण्णरूपो वित्रस्तः पुरुषः प्राकृतो यथा।
॥ उत्तर उवाच ॥ श्रुता मे शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः। कुञ्जराणां च नदतां व्यूढानीकेषु तिष्ठतां।
नैवंविधः शङ्खशब्दः पुरा जातु मया श्रुतः। ध्वजस्य चापिरूपं मे दृष्टपूर्व्वं नहीदृशं। १४५०
धनुषश्चापि निर्घोषः श्रुतपूर्व्वो न मे क्वचित्। अस्य शङ्खस्य शब्देन धनुषो निःस्वनेन च।
अमानुषेण शब्देन भूतानां ध्वजवासिनां। रथस्य च निनादेन मनो मुह्यति मे भृशं।
व्याकुलाश्च दिशः सर्व्वा हृदयं व्यथतीव मे। ध्वजेन पिहिताः सर्व्वा दिशो न प्रतिभान्ति मे।
गाण्डीवस्य च शब्देन कर्णौ मे बधिरीकृतौ।
॥ अर्ज्जुन उवाच ॥ एकान्तं रथमास्थाय पद्भ्यां त्वमवपीडय। दृढं च रश्मीन् संयच्छ शङ्खं ध्मास्याम्यहं पुनः। १४५५
॥ वैशम्पायन उवाच ॥ ततः शङ्खमुपाध्मासीद्दारयन्निव पर्व्वतान्। द्विषतां दुःखजननं सुहृदां हर्षवर्द्धनं।
गुहा गिरीणां च तदा दिशः शैलांस्तथैव च। उत्तरश्चापि संलीनो रथोपस्थ उपाविशत्।
तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च। गाण्डीवस्य च शब्देन पृथिवी समकम्पत।
तं समाश्वासयामास पुनरेव धनञ्जयः।
॥ द्रोणउवाच ॥ यथा रथस्य निर्घोषो यथा मेघ उदीर्य्यते। प्रकम्पते यथा भूमिर्नैषोऽन्यः सव्यसाचिनः। १४६०
शस्त्राणि न प्रकाशन्ते न प्रहृष्यन्ति वाजिनः। अग्नयश्च न भासन्ते समिद्धास्तन्न शोभनं।
प्रत्यादित्यं च नः सर्व्वे मृगा घोरप्रवादिनः। ध्वजेषु च निलीयन्ते वायसास्तन्न शोभनं।
शकुनाश्चापसव्या नो वेदयन्ति महद्भयं। गोमायुरेष सेनाया रुवन्मध्ये प्रधावति।
अनाहतश्च निष्क्रान्तो महद्वेदयते भयं। भवतां रोमकूपानि प्रहृष्टान्युपलक्षये।
ध्रुवं विनाशो युद्धेषु क्षत्रियाणां प्रदृश्यते। ज्योतींषि न प्रकाशन्ते दारुणा मृगपक्षिणः। १४६५
उत्पाता विविधा घोरा दृश्यन्ते क्षत्रनाशनाः। विशेषत इहास्माकं निमित्तानि विनाशने।
उल्काभिश्च प्रदीप्ताभिर्ब्बाध्यते पृतना तव। वाहनान्यप्रहृष्टानि रुदन्तीव विशाम्पते।

उपासंते च सैन्यानि गृध्राश्च समन्ततः। तथैव वाहिनीं दृष्ट्वा पार्थवाणप्रपीडितां।
पराभूता च नः सेना न कश्चिद्योद्धुमिच्छति। विवर्णमुखभूयिष्ठाः सर्व्वे योधा विचेतसः।
गाश्च प्रस्थाप्य तिष्ठामो व्यूढानीकाः प्रहारिणः। १४७०

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि उत्पातदर्शने षट्चत्वारिंशोऽध्यायः॥ ४६ ॥

॥ वैशम्पायन उवाच॥ अथ दुर्य्योधनो राजा समरे भीष्ममब्रवीत्। द्रोणं च रथशार्दूलं कृपं च सुमहारथं।
उक्तोऽयमर्थ आचार्य्यो मया कर्णेन चासकृत्। पुनरेव च वक्ष्यामि नहि तृप्यामि तं ब्रुवन्।
पराजितैर्हि वस्तव्यं तैश्च द्वादशवत्सरान्। वने जनपदेऽज्ञातैरेष एव पणो हि नः।
तेषां न तावन्निर्व्वृत्तं वर्त्तते तु त्रयोदशं। अज्ञातवासो बीभत्सुरथास्माभिः समागतः।
अनिर्व्वृत्तेऽपि निर्व्वासे यदि बीभत्सुरागतः। पुनर्द्वादशवर्षाणि वने वत्स्यन्ति पाण्डवाः। १४७५
लोभाद्वा ते न जानीयुरस्मान्वा मोह आविशत्। हीनातिरिक्तमेतेषां भीष्मो वेदितुमर्हति।
अर्थानां हि पुनर्द्वैधे नित्यं भवति संशयः। अन्यथा चिन्तितो ह्यर्थः पुनर्भवति चान्यथा।
स्वार्थे सर्व्वे विमुह्यन्ति येऽपि धर्म्मविदो जनाः। उत्तरं मार्गमाणानां मत्स्यानाञ्च युयुत्सतां।
यदि बीभत्सुरायातस्तदा कस्यापराध्नुमः। त्रिगर्त्तानां वयं हेतोर्मत्स्यान् योद्धुमिहागताः।
मत्स्यानां विप्रकारांस्ते बहूनस्मानकीर्त्तयन्। तेषां भयाभिभूतानां तदस्माभिः प्रतिश्रुतं। १४८०
प्रथमं तैर्ग्रहीतव्यं मत्स्यानां गोधनं महत्। सप्तम्यामपराह्णे वै तथा नस्तैः समाहितं।
अष्टम्यां पुनरस्माभिरादित्यस्योदयं प्रति। इमा गावो ग्रहीतव्या गते मत्स्ये गवाम्पदं।
ते वा गाश्चानयिष्यन्ति यदि वा स्युः पराजिताः। अस्मान्वाप्युपसन्धाय कुर्य्युर्मत्स्येन सङ्गतं।
अथवा तानपाहाय मत्स्यो जनपदैः सह। सर्व्वया सेनया सार्द्धं संवृतो भीमरूपया।
आयातः केवलां रात्रिमस्मान् योद्धुमुपागतः। तेषामेव महावीर्य्यः कश्चिदेव पुरःसरः। १४८५
अस्मान् योद्धुमुपायातो मत्स्यो वा हि स्वयं भवेत्। यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः।
सर्व्वैर्योद्धव्यमस्माभिरिति नः समयः कृतः। अथ कस्मात् स्थिता ह्येते रथेषु नरसत्तमाः।
भीष्मो द्रोणः कृपश्चैव विकर्णो द्रौणिरेव च। सम्भ्रान्तमनसः सर्व्वे काले ह्यस्मिन्महारथाः।
नान्यत्र युद्धाच्छ्रेयोऽस्ति तथात्मा प्रणिधीयतां। आच्छिन्ने गोधनेऽस्माकमपि देवेन वज्रिणा।
यमेन वाऽपि सङ्ग्रामे को हास्तिनपुरं व्रजेत्। शरैरेभिः प्रणुन्नानां भग्नानां गहने वने। १४९०
को हि जीवेत्पदातीनां भवेदश्वेषु संशयः। आचार्य्यं पृष्ठतः कृत्वा तथा नीतिर्विधीयतां।
जानाति हि मतं तेषां मनस्त्रासयतीव नः। अर्ज्जुने चास्य सम्प्रीतिरधिकामुपलक्षये।
इष्टा हि पाण्डवा नित्यमाचार्य्यस्य विशेषतः। तथा हि दृष्ट्वा बीभत्सुमुपायान्तं प्रशंसति।
यथा सेना न भज्येत तथा नीतिर्विधीयतां। हेषितं ह्युपशृण्वाने द्रोणे सर्व्वं विघट्टितं।
अदेशिका महारण्ये ग्रीष्मे शत्रुवशङ्गता। यथा न विभ्रमेत्सेना तथा नीतिर्विधीयतां। १४९५
इष्टा हि पाण्डवा नित्यमाचार्य्यस्य विशेषतः। आसयन्नपरार्थाश्च कथ्यते स्म स्वयं तथा।

अश्वानां हेषितं श्रुत्वा कः प्रशंसापरो भवेत्। स्थाने वाऽपि व्रजन्तो वा सदा हेषन्ति वाजिनः।
सदा च वायवो वान्ति नित्यं वर्षति वासवः। स्तनयित्नोश्च निर्घोषः श्रूयते बहुशस्तथा।
किमत्र कार्य्यं पार्थस्य कथं वा स प्रशस्यते। अन्यत्र कामाद्द्वेषाद्वा रोषाद्वाऽस्मासु केवलात्।
आचार्य्या वै कारुणिकाः प्राज्ञाश्चापायदर्शिनः। नैते महाभये प्राप्ते सम्प्रष्टव्याः कथञ्चन। १५००
प्रासादेषु विचित्रेषु गोष्ठीषूपवनेषु च। कथा विचित्राः कुर्व्वाणाः पण्डितास्तत्र शोभनाः।
बह्वन्याश्चर्य्यरूपाणि कुर्व्वन्तो जनसंसदि। इष्वास्त्रे चापसन्धाने पण्डितास्तत्र शोभनाः।
परेषां विवरज्ञाने मनुष्यचरितेषु च। हस्त्यश्वरथचर्य्यासु खरोष्ट्राजाविकर्म्मणि।
गोधनेषु प्रतोलीषु वरद्वारमुखेषु च। अन्नसंस्कारदोषेषु पण्डितास्तत्र शोभनाः।
पण्डितान् पृष्ठतः कृत्वा परेषां गुणवादिनः। विधीयतां तथा नीतिर्य्यथा वध्येत वै परः। १५०५
गावश्च सम्प्रतिष्ठाप्य सेनां व्यूह्य समन्ततः। आरक्षाश्च विधीयन्तां यत्र योत्स्यामहे परान्।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि दुर्य्योधनवाक्ये सप्तचत्वारिंशोऽध्यायः॥ ४७॥
॥ कर्ण उवाच ॥ सर्व्वानायुष्मतो भीतान् सन्त्रस्तानिव लक्षये। अयुद्धमनसश्चैव सर्व्वांश्चैवानवस्थितान्।
यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः। अहमावारयिष्यामि वेलेव मकरालयं।
मम चापप्रयुक्तानां शराणां नतपर्व्वणां। नावृत्तिर्गच्छतामस्ति सर्पाणामिव सर्पतां।
रुक्मपुङ्खाः सुतीक्ष्णाग्रा मुक्ता हस्तवता मया। छादयन्तु शराः पार्थं शलभा इव पादपं। १५१०
शराणां पुङ्खसक्तानां मौर्व्व्याऽभिहतया दृढं। श्रूयतां तलयोः शब्दो भेर्य्योराहतयोरिव।
समाहितो हि बीभत्सुर्व्वर्षाण्यष्टौ च पञ्च च। जातस्नेहश्च युद्धेऽस्मिन् मयि सम्प्रहरिष्यति।
पात्रीभूतश्च कौन्तेयो ब्राह्मणो गुणवानिव। शरौघान् प्रतिगृह्णातु मया मुक्तान् सहस्रशः।
एष चैव महेष्वासस्त्रिषु लोकेषु विश्रुतः। अहं चापि नरश्रेष्ठादर्जुनान्नावरः क्वचित्।
इतश्चेतश्च निर्मुक्तैः काञ्चनैर्गार्द्धवाजितैः। दृश्यतामद्य वै व्योम खद्योतैरिव संवृतं। १५१५
अद्याहमृणमक्षय्यं पुरा वाचा प्रतिश्रुतं। धार्त्तराष्ट्रस्य दास्यामि निहत्य समरेऽर्जुनं।
अन्तराच्छिद्यमानानां पुङ्खानां व्यतिशीर्य्यतां। शलभानामिवाकाशे प्रचारः सम्प्रदृश्यतां।
इन्द्राशनिसमस्पर्शं महेन्द्रसमतेजसं। अर्द्दयिष्याम्यहं पार्थमुल्काभिरिव कुञ्जरं।
रथादतिरथं शूरं सर्व्वशस्त्रभृतां वरं। विवशं पार्थमादास्ये गरुत्मानिव पन्नगं।
तमग्निमिव दुर्द्धर्षं असिशक्तिशरेन्धनं। पाण्डवाग्निमहं दीप्तं प्रदहन्तमिवाहितान्। १५२०
अश्ववेगपुरोवातो रथौघस्तनयित्नुमान्। शरधारो महामेघः शमयिष्यामि पाण्डवं।
मत्कार्मुकविनिर्मुक्ताः पार्थमाशीविषोपमाः। शराः समभिसर्प्पन्तां वल्मीकमिव पन्नगाः।
सुतेजनै रुक्मपुङ्खैः सुधौतैर्नतपर्व्वभिः। आचितं पश्य कौन्तेयं कर्णिकारैरिवाचलं।
जामदग्न्यान्मया ह्यस्त्रं यत् प्राप्तमृषिसत्तमात्। तदुपाश्रित्य वीर्य्यञ्च युध्येयममरैरपि।
ध्वजाग्रे वानरस्तिष्ठन् भल्लेन निहतो मया। अद्यैव पततां भूमौ विनदन् भैरवान् रवान्। १५२५

अथो मया विपन्नानां भूतानां ध्वजवासिनां । दिशः प्रतिष्ठमानानामस्तु शब्दो दिवङ्गमः ।
अद्य दुर्य्योधनस्याहं शल्यं हृदि चिरस्थितं । समूलमुद्धरिष्यामि बीभत्सुं पातयन् रथात् ।
हताश्वं विरथं पार्थं पौरुषे पर्य्यवस्थितं । निश्वसन्तं यथा नागमद्य पश्यन्तु कौरवाः ।
कामं गच्छन्तु कुरवो धनमादाय केवलं । रथेषु वाऽपि तिष्ठन्तो युद्धं पश्यन्तु मामकं ।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि कर्णविकत्थने अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

॥ कृप उवाच ॥ सदैव तव राधेय युद्धे क्रूरतरा मतिः । अर्थानां प्रकृतिं वेत्सि नानुबन्धमवेक्षसे । १५१०
माया हि बहवः सन्ति शास्त्रमाश्रित्य चिन्तिताः । तेषां युद्धन्तु पापिष्ठं वेदयन्ति पुराविदः ।
देशकालेन संयुक्तं युद्धं विजयदं भवेत् । हीनकालं तदेवेह फलं न लभते पुनः ।
देशे काले च विक्रान्तं कल्याणाय विधीयते । आनुकूल्येन कार्य्याणामन्तरं संविधीयते ।
भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः । परिचिन्त्य तु पार्थेन सन्निपातो न नः क्षमः ।
एकः कुरूनभ्यरक्षदेकश्चाग्निमतर्पयत् । एकश्च पञ्चवर्षाणि ब्रह्मचर्य्यमधारयत् । १५१५
एकः सुभद्रामारोप्य द्वैरथे कृष्णमाह्वयत् । एकः किरातरूपेण स्थितं रुद्रमयोधयत् ।
अस्मिन्नेव वने पार्थो हृतां कृष्णामवाजयत् । एकश्च पञ्चवर्षाणि शक्रादस्त्राण्यशिक्षत ।
एकः सोऽयमरिं जित्वा कुरूणामकरोद्यशः । एको गन्धर्व्वराजानं चित्रसेनमरिन्दमं ।
विजिग्ये तरसा संख्ये सेनां प्राप्य सुदुर्ज्जयां । तथा निवातकवचाः कालकञ्जाश्च दानवाः ।
दैवतैरप्यवध्यास्ते एकेन युधि पातिताः । एकेन हि त्वया कर्ण किं नामेह कृतं पुरा । १५२०
एकैकेन यथा तेषां भूमिपाला वशे कृताः । इन्द्रोऽपि नहि पार्थेन संयुगे योद्धुमर्हति ।
यस्तेनाशंसते योद्धुं कर्त्तव्यं तस्य भेषजं । आशीविषस्य क्रुद्धस्य पाणिमुद्यम्य दक्षिणं ।
अवमुच्य प्रदेशिन्या दंष्ट्रामादातुमिच्छसि । अथवा कुञ्जरं मत्तमेक एव चरन् वने ।
अनङ्कुशः समारुह्य नगरं गन्तुमिच्छसि । समिद्धं पावकं वाऽपि घृतमेदोवसाहुतं ।
घृताक्तश्चीरवासास्त्वं मध्येनोत्तर्त्तुमिच्छसि । आत्मानं कः समुद्बध्य कण्ठे बध्वा महाशिलां । १५२५
समुद्रं प्रतरेद्दोर्भ्यां तत्र किं नाम पौरुषं । अकृतास्त्रः कृतास्त्रं वै बलवन्तं सुदुर्व्वलः ।
तादृशं कर्ण यः पार्थं योद्धुमिच्छेत् स दुर्मतिः । अस्माभिरेष निकृतो वर्षाणीह त्रयोदश ।
सिंहः पाशविनिर्मुक्तो न नः शेषं करिष्यति । एकान्ते पार्थमासीनं कूपेऽग्निमिव संवृतं ।
अज्ञानादभ्यवस्कन्द्य प्राप्ताः स्मो भयमुत्तमं । सह युध्यामहे पार्थमागतं युद्धदुर्मदं ।
सैन्यास्तिष्ठन्तु सन्नद्धा व्यूढानीकाः प्रहारिणः । द्रोणो दुर्य्योधनो भीष्मो भवान् द्रौणिस्तथा वयं । १५३०
सर्व्वे युध्यामहे पार्थं कर्ण मा साहसं कृथाः । वयं व्यवसिताः पार्थं वज्रपाणिमिवोद्धतं ।
षड्रथाः प्रतियुध्येम तिष्ठेम संहता यदि । व्यूढानीकानि सैन्यानि यत्ताः परमधन्विनः ।
युध्यामहेऽर्ज्जुनं संख्ये दानवा इव वासवं ।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि कृपवाक्ये एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

॥ अश्वत्थामोवाच ॥ न च तावज्जिता गावो न च सीमान्तरङ्गताः । न हास्तिनपुरं प्राप्तास्त्वञ्च कर्ण विकत्थसे ।
सङ्ग्रामान् सुबहून् जित्वा लब्ध्वा च विपुलं धनं । विजित्य च परां सेनां नाहुः किञ्चन पौरुषं । २५५५
दहत्यग्निरवाक्यस्तु तूष्णीं भाति दिवाकरः । तूष्णीं धारयते लोकान् वसुधा सचराचरान् ।
चातुर्व्वर्ण्यस्य कर्म्माणि विहितानि स्वयम्भुवा । धनं यैरधिगन्तव्यं यच्च कुर्व्वन्न दुष्यति ।
अधीत्य ब्राह्मणो वेदान् याजयेत यजेत च । क्षत्त्रियो धनुराश्रित्य यजेतैव न याजयेत् ।
वैश्योऽधिगम्य वित्तानि ब्रह्मकर्म्माणि कारयेत् । शूद्रः शुश्रूषणं कुर्य्यात्त्रिषु वर्णेषु नित्यशः ।
वन्दनायोगविधिभिर्व्वैतसीं वृत्तिमाश्रिताः । २५६०
वर्त्तमाना यथाशास्त्रं प्राप्य चापि महीमिमां । सत्कुर्व्वन्ति महाभागा गुरून् सुविगुणानपि ।
प्राप्य द्यूतेन को राज्यं क्षत्त्रियस्तोष्टुमर्हति । तथा नृशंसरूपोऽयं धार्त्तराष्ट्रस्य निर्घृणः ।
तथाऽभिगम्य वित्तानि को विकत्थेद्विचक्षणः । निकृत्या वञ्चनायोगैश्चरन् वैतंसिको यथा ।
कतमद्द्वैरथं युद्धं यत्राजैषीर्द्धनञ्जयं । नकुलं सहदेवं वा धनं येषां त्वया हृतं ।
युधिष्ठिरो जितः कस्मिन् भीमो वा बलिनां वरः । इन्द्रप्रस्थं त्वया कस्मिन् सङ्ग्रामे विजितं पुरा । २५६५
तथैव कतमद्युद्धं यस्मिन् कृष्णा जिता पुरा । एकवस्त्रा सभां नीता दुष्टकर्म्मन् रजस्वला ।
मूलमेषां महत् कृत्तं सारार्थी चन्दनं यथा । कर्म्म कारयिथाः सूत तत्र किं विदुरोऽब्रवीत् ।
यथाशक्ति मनुष्याणां शममालक्षयामहे । अन्येषां चैव सत्त्वानामपि कीटपिपीलिके ।
द्रौपद्यास्तं परिक्लेशं न क्षन्तुं पाण्डवोऽर्हति । क्षयाय धार्त्तराष्ट्राणां प्रादुर्भूतो धनञ्जयः ।
त्वं पुनः पण्डितो भूत्वा वाचं वक्तुमिहेच्छसि । वैरान्तकरणो जिष्णुर्न नः शेषं करिष्यति । २५७०
नैष देवान्न गन्धर्व्वान्नासुरान्न च राक्षसान् । भयादिह न युध्येत कुन्तीपुत्त्रो धनञ्जयः ।
यं यमेषोऽभिसंक्रुद्धः सङ्ग्रामे निपतिष्यति । वृक्षं गरुत्मान्वेगेन विनिहत्य तमेष्यति ।
त्वत्तो विशिष्टं वीर्य्येण धनुष्यमरराट्समं । वासुदेवसमं युद्धे पार्थं को वा न पूजयेत् ।
दैवेन दैवं युध्येत मानुषेण च मानुषं । अस्त्रं ह्यस्त्रेण यो हन्यात्कोऽर्जुनेन समः पुमान् ।
पुत्त्रादनन्तरः शिष्य इति धर्म्मविदो विदुः । एतेनापि निमित्तेन प्रियो द्रोणस्य पाण्डवः । २५७५
यथा त्वमकरोर्द्यूतमिन्द्रप्रस्थं यथाऽहरः । यथाऽनैषीः सभां कृष्णां तथा युध्यस्व पाण्डवं ।
अयं ते मातुलः प्राज्ञः क्षत्त्रधर्म्मस्य कोविदः । दुर्द्यूतदेवी गान्धारः शकुनिर्युध्यतामिह ।
नाक्षान् क्षिपति गाण्डीवं न कृतं द्वापरं न च । ज्वलतो निशितान् वाणांस्तीक्ष्णान् क्षिपति गाण्डिवं ।
न हि गाण्डीवनिर्मुक्ता गार्द्धपत्त्राः सुतेजनाः । नान्तरेष्ववतिष्ठन्ते गिरीणामपि दारणाः ।
अन्तकः पवनो मृत्युस्तथाऽग्निर्व्वडवामुखः । कुर्य्युरेते क्वचिच्छेषं न तु क्रुद्धो धनञ्जयः । २५८०
यथा सभायां द्यूतं त्वं मातुलेन सहाकरोः । तथा युध्यस्व सङ्ग्रामे सौबलेन सुरक्षितः ।
युध्यन्तां कामतो योधा नाहं योत्स्ये धनञ्जयं । मत्स्यो ह्यस्माभिरायोध्यो यद्यागच्छेद्गवां पदं ।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि अश्वत्थामभर्त्सनवाक्ये पञ्चाशोऽध्यायः ॥ ५० ॥

॥ भीष्म उवाच ॥ साधु पश्यति वै द्रोणिः कृपश्च साधु पश्यति । कर्णस्तु क्षत्रधर्म्मेण केवलं योद्धुमिच्छति ।
आचार्य्यो नाभिषक्तव्यः पुरुषेण विजानता । देशकालौ तु सम्प्रेक्ष्य योद्धव्यमिति मे मतिः ।
यस्य सूर्य्यसमाः पञ्च सपत्नाः स्युः प्रहारिणः । कथमभ्युदये तेषां न प्रमुह्येत पण्डितः । १५८५
स्वार्थे सर्व्वे विमुह्यन्ति येऽपि धर्म्मविदो जनाः । तस्माद्राजन् ब्रवीम्येतद्वाक्यं ते यदि रोचते ।
कर्णो हि यदवोचत्त्वां तेजःसञ्जननाय तत् । आचार्य्यपुत्त्रः क्षमतां महत् कार्य्यमुपस्थितं ।
नायं कालो विरोधस्य कौन्तेये समुपस्थिते । क्षन्तव्यं भवता सर्व्वमाचार्य्येण कृपेण च ।
भवतां हि कृतास्त्रत्वं यथादित्ये प्रभा तथा । यथा चन्द्रमसो लक्ष्मीः सर्व्वथा नापकृष्यते ।
एवं भवत्सु ब्राह्मण्यं ब्रह्मास्त्रञ्च प्रतिष्ठितं । चत्वार एकतो वेदाः क्षात्त्रमेकत्र दृश्यते । १५९०
नैतत्समस्तमुभयं कस्मिंश्चिदनुशुश्रुम । अन्यत्र भारताचार्य्यात् सपुत्त्रादिति मे मतिः ।
ब्रह्मास्त्रं ब्रह्म वेदाश्च नैतदन्यत्र दृश्यते । अन्यत्र भारताचार्य्यात् द्रोणात् पुरुषसत्तमात् ।
वेदान्ताश्च पुराणानि इतिहासं पुरातनं । जामदग्न्यमृते राजन् को द्रोणादधिको भवेत् ।
आचार्य्यपुत्त्रः क्षमतां नायं कालस्य भेदने । सर्व्वे संहत्य युध्यामः पाकशासनिमागतं ।
बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः । मुख्यो भेदो हि तेषान्तु पापिष्ठो विदुषां मतः । १५९५
॥ द्रौणिरुवाच ॥ नैवं न्याय्यमिदं वाक्यमस्माकं पुरुषर्षभ । किन्तु रोषपरीतेन गुरुणा भाषिता गुणाः ।
शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि । सर्व्वथा सर्व्वयत्नेन पुत्त्रे शिष्ये हितं वदेत् ।
॥ दुर्य्योधन उवाच ॥ आचार्य्य एव क्षमतां शान्तिरस्मिन्विधीयतां । अभिद्यमाने तु गुरौ तद्वृत्तं रोषकारितं ।
॥ वैशम्पायन उवाच ॥ ततो दुर्य्योधनो द्रोणं क्षमयामास भारत । सह कर्णेन भीष्मेण कृपेण च महात्मना ।
॥ द्रोण उवाच ॥ यदेतत्प्रथमं वाक्यं भीष्मः शान्तनवोऽब्रवीत् । तेनैवाहं प्रसन्नो वै नीतिरत्र विधीयतां । १६००
यथा दुर्य्योधनं पार्थो नोपसर्पति सङ्गरे । यथा दुर्य्योधनो राजा न गच्छेद्द्विषतां वशं ।
साहसाद्यदि वा मोहात्तथा नीतिर्विधीयतां । वनवासे ह्यनिर्वृत्ते दर्शयेन्न स्वमर्ज्जुनः ।
धनञ्चालभमानोऽत्र नाद्य तत् क्षन्तुमर्हति । यथा नायं समायुञ्ज्याद्धार्त्तराष्ट्रं कथञ्चन ।
न च सेना पराजय्यात्तथा नीतिर्व्विधीयतां । उक्तं दुर्य्योधनेनापि पुरस्ताद्वाक्यमीदृशं ।
तदनुस्मृत्य गाङ्गेय यथावद्वक्तुमर्हति । १६०५
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि द्रोणवाक्ये एकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ भीष्म उवाच ॥ कलाकाष्ठाश्च युज्यन्ते मुहूर्त्ताश्च दिनानि च । अर्द्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा ।
ऋतवश्चापि युज्यन्ते तथा सम्वत्सरा अपि । एवं कालविभागेन कालचक्रं प्रवर्त्तते ।
तेषां कालातिरेकेण ज्योतिषाञ्च व्यतिक्रमात् । पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः ।
एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः । त्रयोदशानां वर्षाणामिति मे वर्त्तते मतिः ।
सर्व्वं यथावच्चरितं यद्यदेभिः परिश्रुतं । एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः । १६१०
सर्व्वे चैव महात्मानः सर्व्वे धर्म्मार्थकोविदाः । येषां युधिष्ठिरो राजा कस्माद्धर्म्मेऽपराध्नुयुः ।

अलुब्धाश्चैव कौन्तेयाः कृतवन्तश्च दुष्करं। न चापि केवलं राज्यमिच्छेयुस्तेऽनुपायतः।
तदैव ते हि विक्रान्तुमीषुः कौरवनन्दनाः। धर्म्मपाशनिबद्धास्ते न चेलुः क्षत्रियव्रतात्।
यश्चानृत इति ख्यायात् स गच्छेत्पराभवं। वृणुयुर्मरणं पार्था नानृतत्वं कथञ्चन।
प्राप्ते काले तु प्राप्तव्यं नोत्सृजेयुर्नरर्षभाः। अपि वज्रभृता गुप्तं तथावीर्य्या हि पाण्डवाः। १९१५
प्रतियुध्येम समरे सर्व्वशस्त्रभृतां वरं। तस्माद्यदत्र कल्याणं लोके सद्भिरनुष्ठितं।
तत्संविधीयतां शीघ्रं मा नो ह्यर्थोऽभ्यगात्परं। न हि पश्यामि सङ्ग्रामे कदाचिदपि कौरव।
एकान्तसिद्धिं राजेन्द्र सम्प्राप्तश्च धनञ्जयः। सम्प्रवृत्ते तु सङ्ग्रामे भावाभावौ जयाजयौ।
अवश्यमेकं स्पृशतो दृष्टमेतदसंशयं।
तस्माद्युद्धोचितं कर्म्म कर्म्म वा धर्म्मसंहितं। क्रियतामाशु राजेन्द्र सम्प्राप्तो हि धनञ्जयः। १९२०
॥ दुर्य्योधन उवाच ॥ नाहं राज्यं प्रदास्यामि पाण्डवानां पितामह। युद्धोपचारिकं यत्तु तच्छीघ्रं संविधीयतां।
॥ भीष्म उवाच ॥ अत्र या मामिका बुद्धिः श्रूयतां यदि रोचते। सर्व्वथा हि मया श्रेयो वक्तव्यं कुरुनन्दन।
क्षिप्रं बलं चतुर्भागं गृह्य गच्छ पुरं प्रति। ततोऽपरश्चतुर्भागो गाः समादाय गच्छतु।
वयं त्वर्द्धेन सैन्येन प्रतियोत्स्याम पाण्डवं। अहं द्रोणश्च कर्णश्च द्रौणिः शारद्वतस्तथा।
प्रतियोत्स्याम बीभत्सुमागतं कृतनिश्चयं। मत्स्यं वा पुनरायातमागतं वा शतक्रतुं। अहमावारयिष्यामि वेलेव मकरालयं। १९२५
॥ वैशम्पायन उवाच ॥ तद्वाक्यं रुरुचे तेषां भीष्मेणोक्तं महात्मना। तथैव कृतवान् राजा कौरवाणामनन्तरं।
भीष्मः प्रस्थाप्य राजानं गोधनं तदनन्तरं। सेनामुख्यान् व्यवस्थाप्य व्यूहितुं सम्प्रचक्रमे।
॥ भीष्म उवाच ॥ आचार्य्य मध्ये तिष्ठ त्वमश्वत्थामा तु सव्यतः। कृपः शारद्वतो धीमान् पार्श्वं रक्षतु दक्षिणं।
अग्रतः सूतपुत्रस्तु कर्णस्तिष्ठतु दंशितः। अहं सर्व्वस्य सैन्यस्य पश्चात्स्थास्यामि पालयन्।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि भीष्मसैन्यव्यूहे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ वैशम्पायन उवाच ॥ तथा व्यूढेष्वनीकेषु कौरवाणां महारथैः। उपायादर्ज्जुनस्तूर्णं रथघोषेण नादयन्। १९३०
ददृशुस्ते ध्वजाग्रं वै शुश्रुवुश्च रथस्वनं। दोधूयमानस्य भृशं गाण्डीवस्य च निःस्वनं।
ततः सर्व्वं समालोक्य द्रोणो वचनमब्रवीत्। महारथमनुप्राप्तं दृष्ट्वा गाण्डीवधन्विनं।
॥ द्रोण उवाच ॥ एतद्ध्वजाग्रं पार्थस्य दूरतः संप्रकाशते। एष घोषः सरथजो रोरवीति च वानरः।
वानरः सर्व्वसेनायां करोति भयमुत्तमं। एष तिष्ठन् रथश्रेष्ठे रथे च रथिनाम्वरः।
उत्कर्षति धनुःश्रेष्ठं गाण्डीवमशनिस्वनं। इमौ हि बाणौ सहितौ पादयोर्मे व्यवस्थितौ। १९३५
अपरौ चाप्यतिक्रान्तौ कर्णौ संस्पृश्य मे शरौ। निरुष्य हि वने वासं कृत्वा कर्म्मातिमानुषं।
अभिवादयते पार्थः श्रोत्रे च परिपृच्छति। चिरदृष्टोऽयमस्माभिः प्रज्ञावान् बान्धवप्रियः।
अतीव ज्वलितो लक्ष्म्या पाण्डुपुत्रो धनञ्जयः।
रथी शरी चारुतली निषङ्गी शङ्खी पताकी कवची किरीटी। खड्गी च धन्वी विरराज पार्थः शिखी घृतस्रुग्भिरिवावसिक्तः।
॥ वैशम्पायन उवाच ॥ ततोऽर्ज्जुनः कुरून् दृष्ट्वा सङ्ग्रामे समवस्थितान्। तत्कालसदृशं वाक्यं मत्स्यपुत्रमभाषत। १९४०

॥ अर्ज्जुन उवाच ॥ इषुपाते च सेनायां हयान्संयच्छ सारथे। यावत्समीक्षे सैन्येऽस्मिन् क्वासौ कुरुकुलाधमः ।
सर्व्वानेताननादृत्य दृष्ट्वा तमतिमानिनं । तस्य मूर्द्ध्नि पतिष्यामि तत एते पराजिताः ।
एष व्यवस्थितो द्रोणो द्रौणिश्च तदनन्तरः । भीष्मः कृपश्च कर्णश्च महेष्वासा व्यवस्थिताः ।
राजानं नात्र पश्यामि गाः समादाय गच्छति । दक्षिणं मार्गमास्थाय शङ्के जीवपरायणः ।
उत्सृज्यैतद्रथानीकं गच्छ यत्र सुयोधनः । तत्रैव योत्स्ये वैराटे नास्ति युद्धं निरामिषं । १६४५
तं जित्वा विनिवर्त्तिष्ये गाः समादाय सर्व्वशः ।
॥ वैशम्पायन उवाच ॥ एवमुक्तः स वैराटिर्हयान्संयम्य यत्नतः । नियम्य च ततो रश्मीन् यत्र ते कुरुपुङ्गवाः ।
अचोदयत्ततो वाहान् यतो राजा सुयोधनः । उत्सृज्य रथवंशन्तु प्रयाते श्वेतवाहने ।
अभिप्रायं विदित्वा तं कृपो वचनमब्रवीत् । नैषोऽन्तरेण राजानं बीभत्सुः स्थातुमिच्छति ।
तस्य पार्ष्णिं ग्रहीष्यामो जवेनाभिप्रयास्यतः । नह्येनमतिसंक्रुद्धमेको युध्येत संयुगे । १६५०
अन्यो देवात्सहस्राक्षात् कृष्णाद्वा देवकीसुतात् । आचार्य्याच्च सपुत्राद्वा भारद्वाजान्महारथात् ।
किं नो गावः करिष्यन्ति धनं वा विपुलं तथा । दुर्य्योधनः पार्थजले पुरा नौरिव मज्जति ।
तथैव गत्वा बीभत्सुर्नाम विश्राव्य चात्मनः । शलभैरिव तां सेनां शरैः शीघ्रमवाकिरत् ।
कीर्य्यमाणाः शरौघैस्तु योधास्ते पार्थचोदितैः । नापश्यन्नावृतां भूमिमन्तरीक्षञ्च पत्रिभिः ।
तेषामापततां युद्धे नापयाने ऽभवन्मतिः । शीघ्रत्वमेव पार्थस्य पूजयन्ति स्म चेतसा । १६५५
ततः शङ्खं प्रदध्मौ स द्विषतां लोमहर्षणं । विस्फार्य्य च धनुःश्रेष्ठं ध्वजे भूतान्यचोदयत् ।
तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च । गाण्डीवस्य च घोषेण पृथिवी समकम्पत ।
अमानुषाणां सर्व्वेषां भूतानां ध्वजवासिनां । ऊर्द्ध्वं पुच्छान्विधुन्वाना धावमानाः समन्ततः ।
गावः प्रतिन्यवर्त्तन्त दिशमास्थाय दक्षिणां ।

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि गोनिवर्त्तने त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

॥ वैशम्पायन उवाच ॥ स शत्रुसेनां तरसा प्रणुद्य गास्ता विजित्याऽथ धनुर्द्धराग्र्यः । दुर्य्योधनायाभिमुखः प्रयातो भूयो रणं सोऽभिचिकीर्षमाणः । १६६०
गोषु प्रयातासु जवेन मत्स्यान् किरीटिनं कृतकार्य्यञ्च मत्वा । दुर्य्योधनायाऽभिमुखं प्रयातं कुरुप्रवीराः सहसाऽभिपेतुः ।
तेषामनीकानि बहूनि गाढं व्यूढानि दृष्ट्वा बहुलध्वजानि । मत्स्यस्य पुत्रं द्विषतां निहन्ता वैराटिमामन्त्र्य ततोऽभ्युवाच ।
एतेन तूर्णं प्रतिपादयेमान् श्वेतान् हयान् काञ्चनरश्मियोक्त्रान् । जवेन सर्व्वेण कुरु प्रयत्नमासादयेयं कुरुसिंहवृन्दं ।
गजो गजेनेव मया दुरात्मा योद्धुं समाकाङ्क्षति सूतपुत्रः । तमेव मां प्रापय राजपुत्र दुर्य्योधनोपाश्रयजातदर्प्पं ।
स तैर्हयैर्वातजवैर्बृहद्भिः पुत्रो विराटस्य सुवर्णकक्षैः । व्यध्वंसयत्तद्रथिनामनीकं ततोऽवहत्पाण्डवमाजिमध्ये । १६६५
तं चित्रसेनो विशिखैर्व्विपाठैः संग्रामजिच्छत्रुसहो जयश्च । प्रत्युद्ययुर्भारतमापतन्तं महारथाः कर्णमभीप्समानाः ।
ततः स तेषां पुरुषप्रवीरः शरासनार्च्चिःशरवेगतापः । व्रातं रथानामदहत्समन्युर्व्वनं यथाऽग्निः कुरुपुङ्गवानां ।
तस्मिंस्तु युद्धे तुमुले प्रवृत्ते पार्थं विकर्णोऽतिरथं रथेन । विपाठवर्षेण कुरुप्रवीरो भीमेन भीमानुजमाससाद ।

ततो विकर्णस्य धनुर्विकृष्य जाम्बूनदाग्र्योपचितं दृढज्यं। अपातयत्तं ध्वजमस्य मथ्य च्छिन्नध्वजः सोऽप्यपयाज्जवेन।
तं शात्रवाणां गणबाधितारं कर्म्माणि कुर्व्वन्तममानुषाणि। शत्रुन्तपः पार्थममृष्यमाणः समार्द्दयच्छरवर्षेण पार्थं। १६७०
स तेन राज्ञाऽतिरथेन विद्धो विगाहमानो ध्वजिनीं कुरूणां। शत्रुन्तपं पञ्चभिराशु विद्ध्वा ततोऽस्य सूतं दशभिर्जघान।
ततः स विद्धो भरतर्षभेण बाणेन गात्रावरणातिगेन। गतासुराजौ निपपात भूमौ नगो नगाग्रादिव वातरुग्णः।
नरर्षभास्तेन नरर्षभेण वीरा रणे वीरतरेण भग्नाः। चकम्पिरे वातवशेन काले प्रकम्पितानीव महावनानि।
हतास्तु पार्थेन नरप्रवीराः गतासवोर्व्व्यां सुषुपुः सुवेशाः। वसुप्रदा वासवतुल्यवीर्य्याः पराजिता वासवजेन संख्ये।
सुवर्णकार्ष्णायसवर्म्मनद्धा नागा यथा हैमवताः प्रवृद्धाः। तथा स शत्रून् समरे विनिघ्नन् गाण्डीवधन्वा पुरुषप्रवीरः। १६७५
चचार संख्ये विदिशो दिशश्च दहन्निवाग्निर्व्वनमातपान्ते। प्रकीर्णपर्णानि यथा वसन्ते विशातयित्वा पवनोऽम्बुदांश्च।
तथा सपत्नान्विकिरन् किरीटी चचार संख्येऽतिरथो रथेन। शोणाश्ववाहस्य हयान्निहत्य वैकर्त्तनभ्रातुरदीनसत्वः।
एकेन संग्रामजितः शरेण शिरो जहाराशु किरीटमाली। तस्मिन् हते भ्रातरि सूतपुत्रो वैकर्त्तनो वीर्य्यमथाददानः।
प्रगृह्य दन्ताविव नागराजो महर्षभं व्याघ्र इवाभ्यधावत्। स पाण्डवं द्वादशभिः पृषत्कैर्व्वैकर्त्तनः शीघ्रमथो जघान।
विव्याध गात्रेषु हयांश्च सर्व्वान्विराटपुत्रञ्च करे निजघ्ने। तमापतन्तं सहसा किरीटी वैकर्त्तनं वै तरसाऽभिपत्य। १६८०
प्रगृह्य वेगं न्यपतज्जवेन नागं गरुत्मानिव चित्रपक्षः। तावुत्तमौ सर्व्वधनुर्द्धराणां महाबलौ सर्व्वसपत्नसाहौ।
कर्णस्य पार्थस्य निशम्य युद्धं दिदृक्षमाणाः कुरवोऽवतस्थुः। स पाण्डवस्तूर्णमुदीर्णकोपः कृतागसं कर्णमुदीक्ष्य हर्षात्।
क्षणेन साश्वं सरथं ससूतमन्तर्द्दधे घोरशरौघवृष्ट्या। ततः सुविद्धाः सरथाः सनागा योधा विनेदुर्भरतर्षभाणां।
अन्तर्हिता भीष्ममुखाः सहाश्वाः किरीटिना कीर्णरथाः पृषत्कैः। स चापि तानर्ज्जुनबाहुमुक्तान् शराञ्छरौघैः प्रतिहत्य वीरः।
तस्थौ महात्मा सधनुः सबाणः सविस्फुलिङ्गोऽग्निरिवाशु कर्णः। ततस्त्वभूद्वै तलतालशब्दः सशङ्खभेरीपणवप्रणादः। १६८५
प्रक्ष्वेडितज्यातलनिःस्वनन्तं वैकर्त्तनं पूजयतां कुरूणां। उद्धूतलाङ्गूलमहापताकध्वजोत्तमांसाकुलभीषणान्तं।
गाण्डीवनिर्घोषकृतप्रणादं किरीटिनं प्रेक्ष्य ननाद कर्णः। स चापि वैकर्त्तनमर्द्दयित्वा साश्वं ससूतं सरथं पृषत्कैः।
तमाववर्ष प्रसभं किरीटी पितामहं द्रोणकृपौ च दृष्ट्वा। स चापि पार्थं बहुभिः पृषत्कैर्व्वैकर्त्तनो मेघ इवाभ्यवर्षत्।
तथैव कर्णञ्च किरीटमाली संच्छादयामास शितैः पृषत्कैः। तयोः सुतीक्ष्णान्सृजतोः शरौघान् महाशरौघास्त्रविवर्द्धने रणे।
रथे विलग्नाविव चन्द्रसूर्य्यौ घनान्तरेणानुददर्श लोकः। अथाशुकारी चतुरो हयांश्च पार्थस्य विव्याध शरैस्तु कर्णः। १६९०
त्रिभिश्च यन्तारममृष्यमाणो विव्याध तूर्णं त्रिभिरेव केतुं। ततोऽभिविद्धः समरावमर्द्दी प्रबोधितः सिंह इव प्रसुप्तः।
गाण्डीवधन्वा प्रवरः कुरूणामजिह्मगैः कर्णमियाय जिष्णुः। शरास्त्रवृष्ट्या निहतो महात्मा प्रादुश्चकारातिमनुष्यकर्म्म।
प्राच्छादयत्कर्णरथं पृषत्कैर्लोकानिमान् सूर्य्य इवांशुजालैः। स हस्तिनेवाभिहतो गजेन्द्रः प्रगृह्य भल्लान्निशितान्निषङ्गात्।
आकर्णपूर्णञ्च धनुर्व्विकृष्य विव्याध गात्रेष्वथ सूतपुत्रं। अथास्य बाहूरुशिरोललाटं ग्रीवावराङ्गानि परावमर्द्दी।
शितैश्च बाणैर्युधि निर्ब्बिभेद गाण्डीवमुक्तैरशनिप्रकाशैः। स पार्थमुक्तैर्व्विशिखैः प्रणुन्नो गजो गजेनेव जितस्तरस्वी। विहाय
संग्रामशिरः प्रयातो वैकर्त्तनः पाण्डवबाणतप्तः। १६९५

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि कर्णापयाने चतुःपञ्चाशोऽध्यायः॥ ५४ ॥

॥ वैशम्पायन उवाच ॥ अपयाते तु राधेये दुर्य्योधनपुरोगमाः। अनीकेन यथास्वेन शनैरार्च्छन्त पाण्डवं।

बहुधा तस्य सैन्यस्य व्यूढस्यापततः शरैः । अपासरत्त वेगं स वेलेव तु महोदधेः ।
ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः । दिव्यमस्त्रं प्रकुर्व्वाणः प्रत्यायाद्रथसत्तमः ।
यथा रश्मिभिरादित्यः प्राच्छादयत मेदिनीं । तथा गाण्डीवनिर्मुक्तैः शरैः पार्थो दिशो दश ।
न रथानां न चाश्वानां न गजानां न वर्म्मणां । अनिविद्धं शितैर्बाणैरासीद्द्व्यङ्गुलमन्तरं । १०००
दिव्ययोगाच्च पार्थस्य हयानामुत्तरस्य च । शिक्षाशिल्पोपपन्नत्वादस्त्राणाञ्च परिक्रमात् ।
वीर्य्यवत्त्वं द्रुतं चास्य दृष्ट्वा जिष्णोरपूजयन् । कालाग्निमिव बीभत्सुं निर्द्दहन्तमिव प्रजाः ।
नारयः प्रेक्षितुं शेकुर्ज्वलन्तमिव पावकं । तानि पत्नान्यनीकानि रेजुरर्ज्जुनमार्गणैः ।
शैलं प्रति बलाभ्राणि व्याप्तानीवार्करश्मिभिः । अशोकानां वनानीव फुल्लानि कुसुमैः शुभैः ।
रेजुः पार्थशरैस्तत्र तदा सैन्यानि भारत । सक्तोऽर्ज्जुनशरैः शीर्णं शुष्यत्पुष्पं हिरण्मयं । १००५
छत्राणि च पताकाश्च खे दधार सदागतिः । स्वबलत्रासनास्त्रस्ताः परिपेतुर्दिशो दश ।
रथाङ्गदेशानादाय पार्थच्छिन्नधुरा हयाः । कर्णकक्षविषाणेषु मन्तरोष्ठेषु चैव ह ।
मर्म्मस्थङ्गेषु चाहत्यापातयत्समरे गजान् । कौरवाग्र्यगजानान्तु शरीरैर्गतचेतसां ।
क्षणेन संवृता भूमिर्मेघैरिव नभस्तलं । युगान्तसमये सर्व्वं यथा स्थावरजङ्गमं ।
कालश्चयमशेषेण दहत्यग्रशिखः शिखी । तद्वत्पार्थो महाराज ददाह समरे रिपून् । १०१०
ततः सर्व्वास्त्रतेजोभिर्धनुषो निःस्वनेन च । शब्देनामानुषाणाञ्च भूतानां ध्वजवासिनां ।
भैरवं शब्दमत्यर्थं वानरस्य च कुर्व्वतः । देवारिपाञ्च बीभत्सुस्तस्मिन्दौर्य्योधने बले ।
भयमुत्पादयामास बलवानरिमर्द्दनः । रथशक्तिमभिचार्यां प्रागेव निपतद्भुवि ।
सोऽव्ययात्महता पश्चात्सहसाचाभ्युपेयिवान् । शरव्रातैः सुतीक्ष्णाग्रैः समादिष्टैः खगैरिव
अर्ज्जुनस्तु खमावव्रे लोहितप्राशनैः खगैः । नभमध्ये यथार्कस्य रश्मयस्तिग्मतेजसः । १०१५
दिशास्तु च तथा राजन्नसंख्याताः शरास्तदा । सकृदेवागतं शेकू रथमभ्यर्चितुं परे ।
सकृच्च पुनरश्वैस्तु रथात्सोऽतिप्रपादयेत् । ते शरा द्विट्शरीरेषु यथैव न ससर्ज्जिरे ।
द्विषनीकेषु बीभत्सोर्न सरज्जे रथस्तदा । स तद्विक्षोभयामास परानिबलमञ्जसा ।
अनन्तभोगो भुजगः क्रीडन्निव महार्णवे । अस्यतो नित्यमत्यर्थं सर्व्वमेवातिगस्तथा ।
अश्रुतः श्रूयते भूतैर्धनुर्घोषः किरीटिनः । सन्नतास्तत्र मातङ्गा बाणैरल्पान्तरान्तरे । १०२०
संवृतास्तेन दृश्यन्ते मेघा इव गभस्तिभिः । दिशोऽनुभ्रमतः सर्व्वाः सव्यदक्षिणमस्यतः ।
सततं दृश्यते युद्धे सायकासनमण्डलं । पतन्त्यरूपेषु यथा चक्षूंषि न कदाचन ।
नालक्ष्येषु शराः पेतुस्तथा गाण्डीवधन्वनः । मार्गो गजसहस्रस्य युगपद्गच्छतो वने ।
यथा भवेत्तथा जज्ञे रथमार्गः किरीटिनः । नूनं पार्थजयैषिणा शक्रः सर्व्वामरैः सह ।
हन्यमानान्नित्यमन्यन्त पार्थेन निहताः परे । घ्नन्तमत्यर्थमहिताञ्जयन्तञ्च मेनिरे । १०२५
कालमर्ज्जुनरूपेण संहरन्तमिव प्रजाः । कुरुसेनाशरीराणि पार्थेनैवाहतान्यपि ।

भेदुः पार्थहतानीव पार्थकर्म्मानुशासनात्। ओषधीनां शिरांसीव द्विषच्छीर्णानि सोऽन्वयात्।
अवनेशुः कुरूणां हि वीर्य्याण्यर्ज्जुनजाद्भयात्। अर्ज्जुनानिलभिन्नानि वनान्यर्ज्जुनविद्विषां।
चक्रुर्लोहितधाराभिर्धरणीं लोहिताम्बरां। लोहितेन समायुक्तैः पांशुभिः पवनोद्धुतैः।
बभूवुर्लोहितास्तत्र भृशमादित्यरश्मयः। सार्कं खञ्च तत्क्षणेनासीत् सन्ध्यायामिव लोहितं। १०३०
अप्यस्तं प्राप्य सूर्य्योऽपि निवर्त्तेत न पाण्डवः। तान् सर्व्वान् समरे शूरः पौरुषे समवस्थितान्।
दिव्यैरस्त्रैरचिन्त्यात्मा सर्व्वानार्च्छद्धनुर्द्धरान्। स तु द्रोणं त्रिसप्तत्या क्षुरप्राणां समार्पयत्।
दुःसहं दशभिर्बाणैर्द्रौणिमष्टाभिरेव च। दुःशासनं द्वादशभिः कृपं शारद्वतं त्रिभिः।
भीष्मं शान्तनवं षष्ट्या राजानं च शतेन ह। कर्णञ्च कर्णिना कर्णे विव्याध परवीरहा।
तस्मिन् विद्धे महेष्वासे कर्णे सर्व्वास्त्रकोविदे। हताश्वसूते विरथे ततोऽनीकमभज्यत। १०३५
तत् प्रभग्नं बलं दृष्ट्वा पार्थमाजिस्थितं पुरः। अभिप्रायं समाज्ञाय वैराटिः पार्थमब्रवीत्।
॥ उत्तर उवाच ॥ आस्थाय रुचिरं पार्थ रथं सारथिना मया। कतमद्यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया।
॥ अर्ज्जुन उवाच ॥ लोहिताश्वमरिष्टं यं वैयाघ्रमनुपश्यसि। नीलां पताकामाश्रित्य रथे तिष्ठन्तमुत्तर।
कृपस्यैतदनीकाग्र्यं प्रापयस्वैतदेव मां। एतस्य दर्शयिष्यामि शीघ्रास्त्रं दृढधन्विनः।
कमण्डलुर्ध्वजे यस्य शातकुम्भमयः शुभः। आचार्य्य एष हि द्रोणः सर्व्वशस्त्रभृतां वरः। १०४०
सदा ममैष मान्यस्तु सर्व्वशस्त्रभृतामपि। सुप्रसन्नं महावीरं कुरुष्वैनं प्रदक्षिणं।
अत्रैव चावरोहैनमेष धर्म्मः सनातनः। यदि मे प्रथमं द्रोणः शरीरे प्रहरिष्यति।
ततोऽस्य प्रहरिष्यामि नास्य कोपो भवेदिति। अस्याविदूरे च धनुर्ध्वजाग्रे यस्य दृश्यते।
आचार्य्यस्यैष पुत्रो वै अश्वत्थामा महारथः। सदा ममैष मान्यश्च सर्व्वशस्त्रभृतामपि।
एतस्य त्वं रथं प्राप्य निवर्त्तेथाः पुनः पुनः। य एष तु रथानीके सुवर्णकवचावृतः। १०४५
सेनाग्र्येण तृतीयेन व्यावहार्य्येण तिष्ठति। यस्य नागो ध्वजाग्रे वै हेमकेतनसंश्रितः।
धृतराष्ट्रसुतः श्रीमानेष राजा सुयोधनः। एतस्याभिमुखं वीर रथं पररथारुजं।
प्रापयस्वैष राजा हि प्रमाथी युद्धदुर्म्मदः। एष द्रोणस्य शिष्याणां शीघ्रास्त्रे प्रथमो मतः।
एतस्य दर्शयिष्यामि शीघ्रास्त्रं विपुलं रणे। नागकक्षा तु रुचिरा ध्वजाग्रे यस्य तिष्ठति।
एष वैकर्त्तनः कर्णो विदितः पूर्व्वमेव ते। एतस्य रथमास्थाय राधेयस्य दुरात्मनः। १०५०
यत्तो भवेथाः संग्रामे स्पर्द्धते हि सदा मया। यस्तु नीलानुसारेण पञ्चतारेण केतुना।
हस्तावापी बृहद्धन्वा रथे तिष्ठति वीर्य्यवान्। यस्य तारार्कचित्रोऽसौ रथे ध्वजवरः स्थितः।
यस्यैतत् पाण्डुरं छत्रं विमलं मूर्द्ध्नि तिष्ठति। महतो रथवंशस्य नानाध्वजपताकिनः।
बलाहकाग्रे सूर्य्यो वा य एष प्रमुखे स्थितः। हैमं चन्द्रार्कसङ्काशं कवचं यस्य दृश्यते।
जातरूपशिरस्त्राणं मनस्तापयतीव मे। एष शान्तनवो भीष्मः सर्व्वेषां नः पितामहः। १०५५
राजश्रियाऽभिवृद्धस्य दुर्य्योधनवशानुगः। पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत्।

एतेन युध्यमानस्य यत्तः संयच्छ मे हयान्। ततोऽभ्यवाहयद्व्यो वैराटिः सव्यसाचिनं।
यत्रातिष्ठत् कृपो राजन् योत्स्यमानो धनञ्जयं।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि अर्ज्जुनकृपसङ्ग्रामे पञ्चपञ्चाशोऽध्यायः॥ ५५॥
॥ वैशम्पायन उवाच॥ तान्यनीकान्यदृश्यन्त कुरूणामुग्रधन्विनां। संसर्पन्तो यथा मेघा घर्म्मान्ते मन्दमारुताः।
अभ्याशे वाजिनस्तस्थुः समारूढाः प्रहारिभिः। भीमरूपाश्च मातङ्गास्तोमराङ्कुशचोदिताः। १७१०
महामात्रैः समारूढा विचित्रकवचोज्ज्वलाः। ततः शक्रः सुरगणैः समारुह्य सुदर्शनं।
सहोपायात्तदा राजन् विश्वाश्विमरुतां गणैः। तद्देवयक्षगन्धर्व्वमहोरगसमाकुलं।
शुशुभेऽभ्रविनिर्मुक्तं ग्रहाणामिव मण्डलं। अस्त्राणाञ्च बलं तेषां मनुष्येषु प्रयुञ्जतां।
तच्च घोरं महद्युद्धं कृपार्ज्जुनसमागमे। द्रष्टुमभ्यागता देवा विमानैः स्वैः पृथक् पृथक्।
शतं शतसहस्राणां यत्र स्थूणा हिरण्मयी। मणिरत्नमयी चान्या प्रासादमुपधारयत्। १७१५
ततः कामगमं दिव्यं सर्व्वरत्नविभूषितं। विमानं देवराजस्य शुशुभे खेचरं शुभं।
तत्र देवास्त्रयस्त्रिंशत्तिष्ठन्ति सहवासवाः। गन्धर्व्वा राक्षसाः सर्प्पाः पितरश्च महर्षिभिः।
तथा राजा वसुमना बलाक्षः सुप्रतर्द्दनः। अष्टकश्च शिविश्चैव ययातिर्नहुषो गयः।
मनुः पूरू रघुर्भानुः कृशाश्वः सगरो नलः। विमानन्देवराजस्य समदृश्यन्त सुप्रभाः।
अग्नेरीशस्य सोमस्य वरुणस्य प्रजापतेः। तथा धातुर्व्विधातुश्च कुबेरस्य यमस्य च। १७२०
अलम्बुषोग्रसेनानां गन्धर्व्वस्य च तुम्बुरोः। यथाभागं यथोद्देशं विमानानि चकाशिरे।
सर्व्वदेवनिकायाश्च सिद्धाश्च परमर्षयः। अर्ज्जुनस्य कुरूणाञ्च युद्धं द्रष्टुमुपागताः।
दिव्यानां तत्र माल्यानां गन्धः पुण्योऽथ सर्व्वशः। प्रससार वसन्तादौ वृक्षाणामिव पुष्पिणां।
आतपत्राणि वासांसि ध्वजाश्च व्यजनानि च। तत्र रत्नानि देवानां समदृश्यन्त तिष्ठतां।
उपाशाम्यद्रजो भौमं सर्व्वं व्याप्तं मरीचिभिः। दिव्यान् गन्धानुपादाय वायुर्योधानसेवत। १७२५
प्रभासितमिवाकाशं चित्ररूपमलङ्कृतं। सम्पतद्भिः स्थितैश्चापि नानारत्नावभासितैः।
विमानैर्व्विविधैश्चित्रैरुपानीतैः सुरोत्तमैः। वज्रभृच्छुशुभे तत्र विमानस्थः सुरैर्वृतः।
बिभ्रन्मालां महातेजाः पद्मोत्पलसमायुतां। विप्रेक्षमाणो बहुभिर्नातृप्यत्सुतमाहवे।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि देवागमने षट्पञ्चाशोऽध्यायः॥ ५६॥
॥ वैशम्पायन उवाच॥ दृष्ट्वा व्यूढान्यनीकानि कुरूणां पाण्डुनन्दनः। तत्र वैराटिमामन्त्र्य पार्थो वचनमब्रवीत्।
जाम्बूनदमयी वेदी ध्वजे यस्य प्रदृश्यते। तस्य दक्षिणतो याहि कृपः शारद्वतो यतः। १७३०
॥ वैशम्पायन उवाच॥ धनञ्जयवचः श्रुत्वा वैराटिस्त्वरितस्तदा। हयान् रजतसङ्काशान् हेमभाण्डानचोदयत्।
आनुपूर्व्व्या तु तत्सर्व्वं जवमास्थाय चोत्तमं। प्राहिणोच्चन्द्रसङ्काशान् कुपितानिव तान् हयान्।
स गत्वा कुरुसेनायाः समीपं हयकोविदः। पुनरावर्त्तयामास तान् हयान् वातरंहसः।
प्रदक्षिणमुपावृत्य मण्डलं सव्यमेव च। कुरून् सम्मोहयामास मत्स्यो यानेन तत्त्ववित्।

कृपस्य रथमास्थाय वैराटिरकुतोभयः। प्रदक्षिणमुपावृत्य तस्थौ तस्याग्रतो बली।
ततोऽर्ज्जुनः शङ्खवरं देवदत्तं महास्वनं। प्रदध्मौ बलमास्थाय नाम विश्राव्य चात्मनः। १७८५
तस्य शब्दो महानासीद्धम्यमानस्य जिष्णुना। तथा वीर्य्यवता संख्ये पर्व्वतस्येव दीर्य्यतः।
पूजयाञ्चक्रिरे शङ्खं कुरवः सहसैनिकाः। अर्ज्जुनेन समाध्मातः शतधा यन्न दीर्य्यते।
दिवमावृत्य शब्दस्तु निवृत्तः शुश्रुवे पुनः। सृष्टो मघवता वज्रः प्रपतन्निव पर्व्वते।
एतस्मिन्नन्तरे वीरो बलदर्प्पसमन्वितः। अमृष्यमाणस्तं शब्दं कृपः शारद्वतस्तथा।
अर्ज्जुनं प्रति संरब्धो युद्धार्थी स महारथः। महोदधिजमादाय दध्मौ वेगेन वीर्य्यवान्। १७९०
स तु शब्देन लोकांस्त्रीनावृत्य रथिनां वरः। धनुरादाय सुमहज्ज्याशब्दमकरोत्तदा।
तौ रथौ सूर्य्यसङ्काशौ योत्स्यमानौ महाबलौ। शारदाविव जीमूतौ व्यरोचेतां व्यवस्थितौ।
ततः शारद्वतस्तूर्णं पार्थं दशभिराशुगैः। विव्याध परवीरघ्नं निशितैर्म्मर्म्मभेदिभिः।
पार्थोऽपि विश्रुतं लोके गाण्डीवं परमायुधं। विकृष्य चिक्षेप बहून्नाराचान्मर्म्मभेदिनः।
तानप्राप्ताञ्छितैर्व्वाणैर्नाराचान् रक्तभोजनान्। कृपश्चिच्छेद पार्थस्य शतशोऽथ सहस्रशः। १७९५
ततः पार्थस्तु संक्रुद्धश्चित्रान्मार्गान्प्रदर्शयन्। दिशः प्रच्छादयामास बाणौघैः प्रदिशस्तथा।
एकच्छायमिवाकाशमकरोत्सर्व्वतः प्रभुः। प्राच्छादयदमेयात्मा पार्थः शरशतैः कृपं।
स शरैरर्द्दितः क्रुद्धः शितैरग्निशिखोपमैः। तूर्णं दशसहस्रेण पार्थमप्रतिमौजसं।
अर्द्दयित्वा महात्मानं ननाद समरे कृपः। ततः कनकपर्व्वाग्रैर्व्वीरः सन्नतपर्व्वभिः।
धनुरादाय विव्याध पार्थं दशभिराशुगैः। त्वरन् गाण्डीवनिर्म्मुक्तैरर्ज्जुनस्तस्य वाजिनः। १८००
चतुर्भिश्चतुरस्तीक्ष्णैरविध्यत् परमेषुभिः। ते हया निशितैर्व्विद्धा ज्वलद्भिरिव पावकैः।
उत्पेतुः सहसा सर्व्वे कृपः स्थानादथाच्यवत्। च्युतङ्गौतममालोक्य स्थानात् कुन्तीसुतस्तदा।
नाविध्यत्परवीरघ्नो रक्षमाणोऽस्य गौरवं। स तु लब्ध्वा पुनः स्थानं गौतमः सव्यसाचिनं।
विव्याध दशभिर्व्वाणैस्त्वरितः कङ्कपत्रिभिः। ततः पार्थो धनुस्तस्य भल्लेन निशितेन च।
चिच्छेदैकेन भूयश्च हस्तावापमथाहरत्। अथास्य कवचं बाणैर्निशितैर्म्मर्म्मभेदिभिः। १८०५
व्यधमन्न च पार्थोऽस्य शरीरमवपीडयत्। तस्य निर्म्मुच्यमानस्य कवचात्काय आबभौ।
समये मुच्यमानस्य सर्पस्येव तनुर्यथा। छिन्ने धनुषि पार्थेन सोऽन्यदादाय कार्म्मुकं।
चकार गौतमः सज्यं तदद्भुतमिवाभवत्। स तदप्यस्य कौन्तेयश्चिच्छेद नतपर्व्वणा।
एवमन्यानि चापानि बहूनि कृतहस्तवत्। शारद्वतस्य चिच्छेद पाण्डवः परवीरहा।
स छिन्नधनुरादाय रथशक्तिं प्रतापवान्। प्राहिणोत्पाण्डुपुत्राय प्रदीप्तामशनीमिव। १८१०
तामर्ज्जुनस्तदायान्तीं शक्तिं हेमविभूषितां। वियद्गतां महोल्काभां चिच्छेद दशभिः शरैः।
साऽपतद्दशधा छिन्ना भूमौ पार्थेन धीमता। युगपच्चैव भल्लैस्तु ततः सज्यधनुः कृपः।
तमाशु निशितैः पार्थं बिभेद दशभिः शरैः। ततः पार्थो महातेजा विशिखानग्नितेजसः।

चिक्षेप समरे क्रुद्धस्तथोदग्रशिलाशिताम्। अथास्य युगमेकेन चतुर्भिश्चतुरो हयान्।
षष्ठेन च शिरः कायाच्छरेण रथसारथेः। त्रिभिस्त्रिवेणुं समरे द्वाभ्यामक्षं महारथः। १८१५
द्वादशेन तु भल्लेन चकर्त्तास्य ध्वजोत्तमं। ततो वज्रनिकाशेन फाल्गुनः प्रहसन्निव।
त्रयोदशेनेन्द्रसमः कृपं वक्षस्यविध्यत। स छिन्नधन्वा विरथो हताश्वो हतसारथिः।
गदापाणिरवप्लुत्य तूर्णं चिक्षेप तां गदां। सा च मुक्ता गदा गुर्वी कृपेण सुपरिष्कृता।
अर्ज्जुनेन शरैर्नुन्ना प्रतिमार्गमथागमत्। ततस्तु योधाः परीप्सन्तः शारद्वतममर्षणं।
सर्व्वतः समरे पार्थं शरवर्षैरवाकिरन्। ततो विराटस्य सुतः सव्यमावृत्य वाजिनः। १८२०
यमकं मण्डलं कृत्वा तान् योधान् प्रत्यवारयत्। ततः कृपमुपादाय विरथं ते नरर्षभाः।
अपजह्रुर्महावेगाः कुन्तीपुत्राद्धनञ्जयात्।

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि कृपापनयने सप्तपञ्चाशोऽध्यायः॥ ५७ ॥

॥ वैशम्पायन उवाच॥ कृपेऽपनीते द्रोणस्तु प्रगृह्य सशरं धनुः। अभ्यद्रवदनाधृष्यः शोणाश्वः श्वेतवाहनं।
स तु रुक्मरथं दृष्ट्वा गुरुमायान्तमन्तिकात्। अर्ज्जुनो जयतां श्रेष्ठ उत्तरं वाक्यमब्रवीत्।
॥ अर्ज्जुन उवाच॥ यत्रैषा काञ्चनी वेदी ध्वजे यस्य प्रकाशते। उच्छ्रिता प्रवरे दण्डे पताकाभिरलङ्कृता। १८२५
तत्र मां वह भद्रं ते द्रोणानीकाय सारथे। अश्वाः शोणाः प्रकाशन्ते बृहन्तश्चारुवाहिनः।
स्निग्धविद्रुमसङ्काशास्ताम्रास्याः प्रियदर्शनाः। युक्ता रथवरे यस्य सर्व्वशिक्षाविशारदाः।
दीर्घबाहुर्महातेजा बलरूपसमन्वितः। सर्व्वलोकेषु विक्रान्तो भारद्वाजः प्रतापवान्।
बुद्ध्या तुल्यो ह्युशनसा बृहस्पतिसमो नये। वेदास्तथैव चत्वारो ब्रह्मचर्य्यं तथैव च।
ससंहाराणि सर्व्वाणि दिव्यान्यस्त्राणि मारिष। धनुर्व्वेदश्च कार्त्स्न्येन यस्मिन्नित्यं प्रतिष्ठितः। १८३०
क्षमा दमश्च सत्यञ्च आनृशंस्यमथार्ज्जवं। एते चान्ये च बहवो यस्मिन्नित्यं द्विजे गुणाः।
तेनाहं योद्धुमिच्छामि महाभागेन संयुगे। तस्मात्त्वं प्रापयाचार्य्यं क्षिप्रमुत्तर वाहय।
॥ वैशम्पायन उवाच॥ अर्ज्जुनेनैवमुक्तस्तु वैराटिर्हेमभूषणान्। चोदयामास तानश्वान् भारद्वाजरथं प्रति।
तमापतन्तं वेगेन पाण्डवं रथिनां वरं। द्रोणः प्रत्युद्ययौ पार्थं मत्तो मत्तमिव द्विपं।
ततः प्राध्मापयच्छङ्खं भेरीशतनिनादिनं। प्रचुक्षुभे बलं सर्व्वमुद्धूत इव सागरः। १८३५
अथ शोणान् सदश्वांस्तान् हंसवर्णैर्मनोजवैः। मिश्रितान् समरे दृष्ट्वा व्यस्मयन्त रणे नराः।
तौ रथौ वीर्य्यसम्पन्नौ दृष्ट्वा सङ्ग्राममूर्द्धनि आचार्य्यशिष्यावजितौ कृतविद्यौ मनस्विनौ।
समाश्लिष्टौ तदाऽन्योन्यं द्रोणपार्थौ महाबलौ। दृष्ट्वा प्राकम्पत मुहुर्भरतानां महद्बलं।
हर्षयुक्तस्ततः पार्थः प्रहसन्निव वीर्य्यवान्। रथं रथेन द्रोणस्य समासाद्य महारथः।
अभिवाद्य महाबाहुः सामपूर्व्वमिदं वचः। उवाच श्लक्ष्णया वाचा कौन्तेयः परवीरहा। १८४०
उषिताः स्मो वने वासं प्रतिकर्म्म चिकीर्षवः। कोपं नार्हसि नः कर्त्तुं सदा समरदुर्ज्जय।
अहन्तु प्रहृते पूर्व्वं प्रहरिष्यामि तेऽनघ। इति मे वर्त्तते बुद्धिस्तद्भवान् कर्त्तुमर्हति।

ततोऽस्मै प्राहिणोद्द्रोणः शरानधिकविंशतिं। अप्राप्तांश्चैव तान्पार्थश्चिच्छेद कृतहस्तवत्।
ततः शरसहस्रेण रथं पार्थस्य वीर्य्यवान्। अवाकिरत्ततो द्रोणः शीघ्रमस्त्रं विदर्शयन्।
हयांश्च रजतप्रख्यान्कङ्कपत्रैः शिलाशितैः। अवाकिरदमेयात्मा पार्थं संकोपयन्निव। १८४५
एवं प्रवृत्ते युद्धे भारद्वाजकिरीटिनोः। समं विमुञ्चतोः संख्ये विशिखान् दीप्ततेजसः।
तावुभौ ख्यातकर्म्माणावुभौ वायुसमौ जवे। उभौ दिव्यास्त्रविदुषावुभावुत्तमतेजसौ।
क्षिपन्तौ शरजालानि मोहयामासतुर्नृपान्। व्यस्मयन्त ततो योधाः ये तत्रासन्समागताः।
शरान् विसृजतोस्तूर्णं साधु साध्वित्यपूजयन्। द्रोणं हि समरे कोऽन्यो योद्धुमर्हति फाल्गुनात्।
रौद्रः क्षत्रियधर्म्मोऽयं गुरुणा यदयुध्यत। इत्यब्रुवन् जनास्तत्र सङ्ग्रामशिरसि स्थिताः। १८५०
वीरौ तावभिसंरब्धौ सन्निकृष्टौ महाभुजौ। छादयेतां शरव्रातैरन्योऽन्यमपराजितौ।
विस्फार्य्य सुमहच्चापं हेमपृष्ठं दुरासदं। भारद्वाजोऽथ संरब्धः फाल्गुनं प्रत्यविध्यत।
स सायकमयैर्जालैरर्ज्जुनस्य रथं प्रति। भानुमद्भिः शिलाधौतैर्भानोराच्छादयत्प्रभां।
पार्थञ्च सुमहाबाहुर्म्महावेगैर्म्महारथः। विव्याध निशितैर्ब्बाणैर्म्मेघो वृष्ट्येव पर्व्वतं।
तथैव दिव्यं गाण्डीवं धनुरादाय पाण्डवः। शत्रुघ्नं वेगवान् हृष्टो भारसाधनमुत्तमं। १८५५
विससर्ज्ज शरांश्चित्रान् सुवर्णविकृतान्बहून्। नाशयञ्छरवर्षाणि भारद्वाजस्य वीर्य्यवान्।
तूर्णं चापविनिर्म्मुक्तैस्तदद्भुतमिवाभवत्। स रथेन चरन् पार्थः प्रेक्षणीयो धनञ्जयः।
युगपद्दिक्षु सर्व्वासु सर्व्वतोऽस्त्राण्यदर्शयत्। एकच्छायमिवाकाशं बाणैश्चक्रे समन्ततः।
नादृश्यत तदा द्रोणो नीहारेणेव संवृतः। तस्याभवत्तदा रूपं संवृतस्य शरोत्तमैः।
जाज्वल्यमानस्य तदा पर्व्वतस्येव सर्व्वतः। दृष्ट्वा तु पार्थस्य रणे शरैः स्वरथमावृतं। १८६०
स विस्फार्य्य धनुःश्रेष्ठं मेघस्तनितनिस्वनं। अग्निचक्रोपमं घोरं व्यकर्षत्परमायुधं।
व्यपातयच्छरांस्तीक्ष्णान्द्रोणः समितिशोभनः। महानभूत्ततः शब्दो वंशानामिव दह्यतां।
जाम्बूनदमयैः पुङ्खैश्चित्रचापविनिर्गतैः। प्राच्छादयदमेयात्मा दिशः सूर्य्यस्य च प्रभां।
ततः कनकपुङ्खानां शराणां नतपर्व्वणां। वियच्चराणां वियति दृश्यन्ते बहवो व्रजाः।
द्रोणस्य पुङ्खसक्ताश्च प्रभवन्तः शरासनात्। एको दीर्घ इवादृश्यदाकाशे संहतः शरः। १८६५
एवं तौ स्वर्णविकृतान्विमुञ्चन्तौ महाशरान्। आकाशं संवृतं वीरावुल्काभिरिव चक्रतुः।
शरास्तयोस्तु विबभुः कङ्कबर्हिणवाससः। पङ्क्त्यः शरदि खस्थानां हंसानां चरतामिव।
युद्धं समभवत्तत्र सुसंरब्धं महात्मनोः। द्रोणपाण्डवयोर्घोरं वृत्रवासवयोरिव।
तौ गजाविव चासाद्य विषाणाग्रैः परस्परं। शरैः पूर्णायतोत्सृष्टैरन्योऽन्यमभिजघ्नतुः।
तौ व्यवाहरतां युद्धे संरब्धौ रणशोभिनौ। उदीरयन्तौ समरे दिव्यान्यस्त्राणि भागशः। १८७०
अथ त्वाचार्य्यमुख्येन शरान्सृष्टान् शिलाशितान्। न्यवारयच्छितैर्ब्बाणैरर्ज्जुनो जयतां वरः।
दर्शयन् वीक्षमाणानामस्त्रमुग्रपराक्रमः। इषुभिस्तूर्णमाकाशं बहुभिश्च समावृणोत्।

जिघांसन्तं नरव्याघ्रमर्जुनं तिग्मतेजसं । आचार्य्यमुख्यः समरे द्रोणः शस्त्रभृताम्वरः ।
अर्जुनेन सहाक्रीडच्छरैः सन्नतपर्व्वभिः । दिव्यान्यस्त्राणि मुञ्चन्तं भारद्वाजो महारणे ।
अस्त्रैरस्त्राणि संवार्य्य फाल्गुनं समयोधयत् । तयोरासीत्सम्प्रहारः क्रुद्धयोर्नरसिंहयोः । १८७५
अमर्षिणोस्तदाऽन्योऽन्यं देवदानवयोरिव । ऐन्द्रं वायव्यमाग्नेयमस्त्रमस्त्रेण पाण्डवः ।
द्रोणेन मुक्तमात्रन्तु ग्रसति स्म पुनःपुनः । एवं शूरौ महेष्वासौ विसृजन्तौ शिताञ्छरान् ।
एकच्छायं चक्रतुस्तावाकाशं शरवृष्टिभिः । तत्रार्जुनेन मुक्तानां पततां वै शरीरिषु ।
पर्व्वतेष्विव वज्राणां शराणां श्रूयते स्वनः । ततो नागा रथाश्चैव वाजिनश्च विशाम्पते ।
शोणिताक्ता व्यदृश्यन्त पुष्पिता इव किंशुकाः । बाहुभिश्च सकेयूरैर्विचित्रैश्च महारथैः । १८८०
सुवर्णचित्रैः कवचैर्ध्वजैश्च विनिपातितैः । योधैश्च निहतैस्तत्र पार्थबाणप्रपीडितैः ।
बलमासीत्समुद्भ्रान्तं द्रोणार्जुनसमागमे । विधुन्वानौ तु तौ तत्र धनुषी भारसाधने ।
आच्छादयेतामन्योऽन्यं ततक्षतुरथेषुभिः । तयोः समभवद्युद्धन्तुमुलं भरतर्षभ ।
द्रोणकौन्तेययोस्तत्र बलिवासवयोरिव । अथ पूर्णायतोत्सृष्टैः शरैः सन्नतपर्व्वभिः ।
व्यदारयेतामन्योऽन्यं प्राणद्यूते प्रवर्त्तिते । अथान्तरीक्षे नादोऽभूत् द्रोणं तत्र प्रशंसतां । १८८५
दुष्करं कृतवान् द्रोणो यदर्ज्जुनमयोधयत् । प्रमाथिनं महावीर्य्यं दृढमुष्टिं दुरासदं ।
जेतारं देवदैत्यानां सर्व्वेषाञ्च महारथं । अविभ्रमञ्च शिक्षाञ्च लाघवं दूरपातितां ।
पार्थस्य समरे दृष्ट्वा द्रोणस्याभूच्च विस्मयः । अथ गाण्डीवमुद्यम्य दिव्यं धनुरमर्षणः ।
विचकर्ष रणे पार्थो बाहुभ्यां भरतर्षभ । तस्य बाणमयं वर्षं शलभानामिवायतिं ।
दृष्ट्वा ते विस्मिताः सर्व्वे साधुसाध्वित्यपूजयन् । न च बाणान्तरे वायुरस्य शक्नोति सर्पितुं । १८९०
अनिशं सन्दधानस्य शरानुत्सृजतस्तथा । ददर्श नान्तरं कश्चित्पार्थस्याददतोऽपि च ।
तथा शीघ्रास्त्रयुद्धे तु वर्त्तमाने सुदारुणे । शीघ्रं शीघ्रतरं पार्थः शरानन्यानुदीरयत् ।
ततः शतसहस्राणि शराणां नतपर्व्वणां । युगपत्प्रापतंस्तत्र द्रोणस्य रथमन्तिकात् ।
आकीर्य्यमाणे द्रोणे तु शरैर्गाण्डीवधन्वना । हाहाकारो महानासीत्सैन्यानां भरतर्षभ ।
पाण्डवस्य तु शीघ्रास्त्रं मघवान् प्रत्यपूजयत् । गन्धर्व्वाप्सरसश्चैव ये च तत्र समागताः । १८९५
ततो वृन्देन महता रथानां रथयूथपः । आचार्य्यपुत्त्रः सहसा पाण्डवं प्रत्यवारयत् ।
अश्वत्थामा तु तत्कर्म्म हृदयेन महात्मनः । पूजयामास पार्थस्य कोपञ्चास्याकरोद्भृशं ।
स मन्युवशमापन्नः पार्थमभ्यद्रवद्रणे । किरञ्छरसहस्राणि पर्ज्जन्य इव वृष्टिमान् ।
आवृत्य तु महाबाहुर्यतो द्रौणिस्ततो हयान् । अन्तरं प्रददौ पार्थो द्रोणस्य व्यपसर्पितुं ।
स तु लब्ध्वाऽन्तरं तूर्णं अपायाज्जवनैर्हयैः । छिन्नवर्म्मध्वजः शूरो निकृत्तः परमेषुभिः । १९००
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि द्रोणापयानेऽष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
॥ वैशम्पायन उवाच ॥ ततो द्रौणिर्महाराज प्रययावर्ज्जुनं रणे । तं पार्थः प्रतिजग्राह वायुवेगमिवोद्धतं ।

शरजालेन महता वर्षमाणमिवाम्बुदं । तयोर्देवासुरसमः सन्निपातो महानभूत् ।
किरतोः शरजालानि वृत्रवासवयोरिव । न स्म सूर्य्यस्तदा भाति न च वाति समीरणः ।
शरजालावृते व्योम्नि छायाभूते समन्ततः । महांश्चटचटाशब्दो योधयोर्हन्यमानयोः ।
दह्यतामिव वेणूनामासीत्परपुरञ्जय । हयानस्यार्ज्जुनः सर्व्वान् कृतवानल्पजीविकान् । १९०५
ते राजन् प्रजानन्त दिशं काञ्चन मोहिताः । ततो द्रौणिर्महावीर्य्यः पार्थस्य विचरिष्यतः ।
विवरं सूक्ष्ममालोक्य ज्यां चिच्छेद क्षुरेण ह । तदस्यापूजयन् देवाः कर्म्म दृष्ट्वातिमानुषं ।
द्रोणो भीष्मश्च कर्णश्च कृपश्चैव महारथः । साधु साध्विति भाषन्तोऽपूजयन् कर्म्म तस्य तत् ।
ततो द्रौणिर्धनुःश्रेष्ठमपकृष्य रथर्षभं । पुनरेवाहनत्पार्थं हृदये कङ्कपत्रिभिः ।
ततः पार्थो महाबाहुः प्रहस्य स्वनवत्तदा । योजयामास नवया मौर्व्या गाण्डीवमोजसा । १९१०
ततोऽर्द्धचन्द्रमावृत्य तेन पार्थः समागमत् । वारणेनेव मत्तेन मत्तो वारणयूथपः ।
ततः प्रववृते युद्धं पृथिव्यामेकवीरयोः । रणमध्ये द्वयोरेवं सुमहल्लोमहर्षणं ।
तौ वीरौ ददृशुः सर्व्वे कुरवो विस्मयान्विताः । युध्यमानौ महावीर्य्यौ यूथपाविव सङ्गतौ ।
तौ समाजघ्नतुर्व्वीरावन्योऽन्यं पुरुषर्षभौ । शरैराशीविषाकारैर्ज्वलद्भिरिव पन्नगैः ।
अक्षय्याविषुधी दिव्यौ पाण्डवस्य महात्मनः । तेन पार्थो रणे शूरस्तस्थौ गिरिरिवाचलः । १९१५
अश्वत्थाम्नः पुनर्ब्बाणाः क्षिप्रमभ्यस्यतो रणे । जग्मुः परिक्षयं शीघ्रमभूत्तेनाधिकोऽर्ज्जुनः ।
ततः कर्णो महाचापं विकृष्याभ्यधिकं तदा । अवाक्षिपत्ततः शब्दो हाहाकारो महानभूत् ।
ततश्चक्षुर्द्दधे पार्थो यत्र विस्फार्य्यते धनुः । ददर्श तत्र राधेयं तस्य कोपो व्यवर्द्धत ।
स रोषवशमापन्नः कर्णमेव जिघांसया । तमैक्षत विवृत्ताभ्यां नेत्राभ्यां कुरुपुङ्गवः ।
तथा तु विमुखे पार्थे द्रोणपुत्रस्य सायकान् । त्वरिताः पुरुषा राजन्नुपाजह्रुः सहस्रशः । १९२०
उत्सृज्य च महाबाहुर्द्रोणपुत्रं धनञ्जयः । अभिदुद्राव सहसा कर्णमेव सपत्नजित् ।
तमभिद्रुत्य कौन्तेयः क्रोधसंरक्तलोचनः । कामयन् द्वैरथं तेन युद्धं वचनमब्रवीत् ।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि अर्ज्जुनाश्वत्थामयुद्धे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
॥ अर्ज्जुन उवाच ॥ कर्ण यत्ते सभामध्ये बहु वाचा विकत्थितं । न मे युधि समोऽस्तीति तदिदं समुपस्थितं ।
सोऽद्य कर्ण मया सार्द्धं व्यवहृत्य महामृधे । ज्ञास्यसे बलमात्मीयं न चान्यानवमन्यसे ।
अवोचः परुषा वाचो धर्म्ममुत्सृज्य केवलं । इदं तु दुष्करं मन्ये यदिदं ते चिकीर्षितं । १९२५
यत्त्वया कथितं पूर्व्वं मामनासाद्य किञ्चन । तदद्य कुरु राधेय कुरुमध्ये मया सह ।
यत्सभायां स पाञ्चालीं क्लिश्यमानां दुरात्मभिः । दृष्टवानसि तस्याद्य फलमाप्नुहि केवलं ।
धर्म्मपाशनिबद्धेन यन्मया मर्षितं पुरा । तस्य राधेय कोपस्य विजयं पश्य मे मृधे ।
वने द्वादशवर्षाणि यानि सोढानि दुर्म्मते । तस्याद्य प्रतिकोपस्य फलमाप्नुहि केवलं ।
एहि कर्ण मया सार्द्धं प्रतियुध्यस्व सङ्गरे । प्रेक्षकाः कुरवः सर्व्वे भवन्तु तव सैनिकाः । १९३०

॥ कर्ण उवाच ॥ ब्रवीषि वाचा यत्पार्थ कर्म्मणा तत्समाचर । अतिशेते हि ते वाक्यं कर्म्मैतत् प्रथितं भुवि ।
यत्त्वया मर्षितं पूर्व्वं तदशक्तेन मर्षितं । इतो गृह्णीमहे पार्थ तव दृष्ट्वा पराक्रमं ।
धर्म्मपाशनिबद्धेन यत्त्वया मर्षितं पुरा । तथैव बद्धमात्मानमबद्धमिव मन्यसे ।
यदि तावद्वने वासो यथोक्तश्चरितस्त्वया । तत्त्वं धर्म्मार्थवित् क्लिष्टः स मया योद्धुमिच्छसि ।
यदि शक्रः स्वयं पार्थ युध्यते तव कारणात् । तथाऽपि न व्यथा काचिन्मम स्याद्विक्रमिष्यतः । १९३५
अयं कौन्तेय कामस्ते न चिरात्समुपस्थितः । योत्स्यसे हि मया सार्द्धमद्य द्रक्ष्यसि मे बलं ।
॥ अर्ज्जुन उवाच ॥ इदानीमेव तावत्त्वमपयातो रणान्मम । तेन जीवसि राधेय निहतस्त्वनुजस्तव ।
भ्रातरं घातयित्वा कस्त्यक्त्वा रणशिरश्च कः । त्वदन्यः कः पुमान् सत्सु ब्रूयादेवं व्यवस्थितः ।
॥ वैशम्पायन उवाच ॥ इति कर्णं ब्रुवन्नेव बीभत्सुरपराजितः । अभ्ययाद्विसृजन् बाणान् कायावरणभेदिनः ।
प्रतिजग्राह तं कर्णः प्रीयमाणो महारथः । महता शरवर्षेण वर्षमाणमिवाम्बुदं । १९४०
उत्पेतुः शरजालानि घोररूपाणि सर्व्वशः । अविध्यदश्वान् बाह्वोश्च हस्तावापं पृथक् पृथक् ।
सोऽमृष्यमाणः कर्णस्य निषङ्गस्यावलम्बनं । चिच्छेद निशिताग्रेण शरेणानतपर्व्वणा ।
उपासङ्गादुपादाय कर्णो बाणानथापरान् । विव्याध पाण्डवं हस्ते तस्य मुष्टिरशीर्य्यत ।
ततः पार्थो महाबाहुः कर्णस्य धनुरच्छिनत् । स शक्तिं प्राहिणोत्तस्मै तां पार्थो व्यधमच्छरैः ।
ततो निपेतुर्ब्बहवो राधेयस्य पदानुगाः । तांश्च गाण्डीवनिर्म्मुक्तैः प्राहिणोद्यमसादनं । १९४५
ततोऽस्याश्वाञ्छरैस्तीक्ष्णैर्ब्बीभत्सुर्भारसाधनैः । आकर्णमुक्तैरभ्यघ्नंस्ते हताः प्रापतन्भुवि ।
अथापरेण बाणेन ज्वलितेन महौजसा । विव्याध कर्णं कौन्तेयस्तीक्ष्णेनोरसि वीर्य्यवान् ।
तस्य भित्त्वा तनुत्राणं कायमभ्यगमच्छरः । ततः स तमसाविष्टो न स्म किञ्चित्प्रजज्ञिवान् ।
स गाढवेदनो हित्वा रणं प्रायादुदङ्मुखः । ततोऽर्ज्जुन उदक्रोशदुत्तरश्च महारथः ।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि कर्णापयाने षष्टितमोऽध्यायः ॥ ६० ॥
॥ वैशम्पायन उवाच ॥ ततो वैकर्त्तनं जित्वा पार्थो वैराटिमब्रवीत् । एतन्मां प्रापयानीकं यत्र तालो हिरण्मयः । १९५०
अत्र शान्तनवो भीष्मो रथेऽस्माकं पितामहः । काङ्क्षमाणो मया युद्धं तिष्ठत्यमरदर्शनः ।
अथ सैन्यं महद्दृष्ट्वा रथनागहयाकुलं । अब्रवीदुत्तरः पार्थमपविद्धः शरैर्भृशं ।
नाहं शक्ष्यामि वीरेह नियन्तुं ते हयोत्तमान् । विषीदन्ति मम प्राणा मनो विह्वलतीव मे ।
अस्त्राणामिह दिव्यानां प्रभावात् सम्प्रयुज्यतां । त्वया च कुरुभिश्चैव द्रवन्तीव दिशो दश ।
गन्धेन मूर्च्छितश्चाहं वसारुधिरमेदसां । द्वैधीभूतं मनो मेऽद्य तव चैव प्रपश्यतः । १९५५
अदृष्टपूर्व्वः शूराणां मया सङ्ख्ये समागमः । गदापातेन महता शङ्खानां निस्वनेन च ।
सिंहनादैश्च शूराणां गजानां बृंहितैस्तथा । गाण्डीवशब्देन भृशमशनिप्रतिमेन च ।
श्रुतिः स्मृतिश्च मे वीर प्रनष्टा मूढचेतसः । अलातचक्रप्रतिमं मण्डलं सततं त्वया ।
व्याक्षिप्यमाणं समरे गाण्डीवञ्च प्रकर्षतः । दृष्टिः प्रचलिता वीर हृदयं दीर्य्यतीव मे ।

वपुर्घोरं तव रणे क्रुद्धस्येव पिनाकिनः। व्यायच्छतस्तव भुजं दृष्ट्वा भीमे भवत्यपि। १९६०

नाददानं न सन्धानं न मुञ्चन्तं शरोत्तमान्। त्वामहं न प्रपश्यामि पश्यन्नपि विचेतनः।

अवसीदन्ति मे प्राणा भूरियं चलतीव च। न च प्रतोदं रश्मींश्च संयन्तुं शक्तिरस्ति मे।

॥ अर्ज्जुन उवाच ॥ माभैषीस्त्वं स्थिरात्मानं त्वयाऽपि नरपुङ्गव। अत्यद्भुतानि कर्म्माणि कृतानि रणमूर्द्धनि।

राजपुत्रोऽसि भद्रन्ते कुले मात्स्यस्य विश्रुते। जातस्त्वं शत्रुदमने नावसादितुमर्हसि।

धृतिं कृत्वा सुविपुलां राजपुत्र रथे पुनः। युध्यमानस्य समरे हयान् संयच्छ शत्रुहन्। १९६५

॥ वैशम्पायन उवाच ॥ एवमुक्त्वा महाबाहुर्व्वैराटिं नरसत्तमः। अर्ज्जुनो रथिनां श्रेष्ठ उत्तरं वाक्यमब्रवीत्।

सेनाग्रमाशु भीष्मस्य प्रापयस्वैतदेव मां। आच्छेत्स्याम्यहमेतस्य धनुर्ज्यामपि चाहवे।

अस्यन्तं दिव्यमस्त्रं मां चित्रमद्य निशामय। शतह्रदामिवायान्तीं स्तनयित्नोरिवाम्बरे।

सुवर्णपृष्ठं गाण्डीवं द्रक्ष्यन्ति कुरवो मम। दक्षिणेनाथ वामेन कतरेण स्विदस्यति।

इति मां सङ्गताः सर्व्वे तर्कयिष्यन्ति शत्रवः। शोणितोदां रथावर्त्तां नागनक्रां दुरत्ययां। १९७०

नदीं प्रस्कन्दयिष्यामि परलोकप्रवाहिनीं। पाणिपादशिरःपृष्ठबाहुशाखानिरन्तरं।

वनं कुरूणां छेत्स्यामि शरैः सन्नतपर्व्वभिः। जयतः कौरवीं सेनामेकस्य मम धन्विनः।

शतं मार्गा भविष्यन्ति पावकस्येव कानने। मया चक्रमिवाविद्धं सैन्यं द्रक्ष्यसि केवलं।

इष्वस्त्रे शिक्षितं चित्रमहं दर्शयिताऽस्मि ते। असम्भ्रान्तो रथे तिष्ठ समेषु विषमेषु च।

दिवमावृत्य तिष्ठन्तं गिरिं भिन्द्यां स्म पत्रिभिः। अहमिन्द्रस्य वचनात् सङ्ग्रामेऽभ्यहनं पुरा। १९७५

पौलोमान् कालकञ्जांश्च सहस्राणि शतानि च। अहमिन्द्राद्दृढां मुष्टिं ब्रह्मणः कृतहस्ततां।

प्रगाढे तुमुलं चित्रमतिविद्धं प्रजापतेः। अहं पारे समुद्रस्य हिरण्यपुरवासिनां।

जित्वा षष्टिं सहस्राणि रथिनामुग्रधन्विनां। शीर्य्यमाणानि कूलानि प्रवृद्धेनेव वायुना।

मया कुरूणां वृन्दानि पात्यमानानि पश्य वै। ध्वजवृक्षं पत्तितृणं रथिसिंहगणायुतं।

वनमादीपयिष्यामि कुरूणामस्त्रतेजसा। तानहं रथनीडेभ्यः शरैः सन्नतपर्व्वभिः। १९८०

यत्तान् सर्व्वानतिबलान् योत्स्यमानानवस्थितान्। एकः सङ्कालयिष्यामि वज्रपाणिरिवासुरान्।

रौद्रं रुद्रादहं ह्यस्त्रं वरुणादपि वारुणं। अस्त्रमाग्नेयमग्नेश्च वायव्यं मातरिश्वनः। वज्रादीनि तथाऽस्त्राणि शक्रादहमवाप्तवान्।

धार्त्तराष्ट्रं वनं घोरं नरसिंहाभिरक्षितं। अहमुत्पाटयिष्यामि वैराटे व्येतु ते भयं।

॥ वैशम्पायन उवाच ॥ एवमाश्वासितस्तेन वैराटिः सव्यसाचिना। व्यवागाहद्रथानीकं भीमं भीष्माभिरक्षितं।

तमायान्तं महाबाहुं जिगीषन्तं रणे कुरून्। अभ्यवारयदव्यग्रः क्रूरकर्म्माऽपगासुतः। १९८५

तस्य जिष्णुरुपावृत्य ध्वजं मूलादपातयत्। विकृष्य कलधौताग्रैः स विद्धः प्रापतद्भुवि।

तं चित्रमाल्याभरणाः कृतविद्या मनस्विनः। आगच्छन् भीमधन्वानं चत्वारश्च महाबलाः।

दुःशासनो विकर्णश्च दुःसहोऽथ विविंशतिः। आगत्य भीमधन्वानं बीभत्सुं पर्य्यवारयन्।

दुःशासनस्तु भल्लेन विद्ध्वा वैराटिमुत्तरं। द्वितीयेनार्ज्जुनं वीरः प्रत्यविध्यत् स्तनान्तरे।

तस्य जिष्णुरुपाहृत्य पृथुधारेण कार्म्मुकं । चकर्त्त गार्द्धपत्रेण जातरूपपरिष्कृतं । १९९०
अथैनं पञ्चभिः पश्चात्प्रत्यविध्यत् स्तनान्तरे । सोऽपयातो रथं हित्वा पार्थबाणप्रपीडितः ।
तं विकर्णः शरैस्तीक्ष्णैर्गार्द्धपत्रैरजिह्मगैः । विव्याध परवीरघ्नमर्ज्जुनं धृतराष्ट्रजः ।
ततस्तमपि कौन्तेयः शरेणानतपर्व्वणा । ललाटेऽभ्यहनत्तूर्णं स विद्धः प्रापतद्रथात् ।
ततः पार्थमभिद्रुत्य दुःसहः सविविंशतिः । अवाकिरच्छरैस्तीक्ष्णैः परीप्सन् भ्रातरं रणे ।
तावुभौ गार्द्धपत्राभ्यां निशिताभ्यां धनञ्जयः । विद्ध्वा युगपदव्यग्रस्तयोर्व्वाहानसूदयत् । १९९५
तौ हताश्वौ विभिन्नाङ्गौ धृतराष्ट्रात्मजावुभौ । अभिपत्य रथैरन्यैरपनीतौ पदानुगैः ।
सर्व्वा दिशश्चाभ्यपतद्बीभत्सुरपराजितः । किरीटमाली कौन्तेयो लब्धलक्षो महाबलः ।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि अर्ज्जुनदुःशासनादियुद्धे एकषष्टोऽध्यायः ॥ ६१ ॥
॥ वैशम्पायन उवाच ॥ अथ सङ्गम्य सर्व्वे ते कौरवाणां महारथाः । अर्ज्जुनं सहिता यत्ताः प्रत्यविध्यन्त भारत ।
स सायकमयैर्ज्जालैः सर्व्वतस्तान्महारथान् । प्राच्छादयदमेयात्मा नीहारेणेव पर्व्वतान् ।
नदद्भिश्च महानागैर्हेषमाणैश्च वाजिभिः । भेरीशङ्खनिनादैश्च स शब्दस्तुमुलोऽभवत् । २०००
नागाश्वकायान्निर्भिद्य लौहानि कवचानि च । पार्थस्य शरजालानि विनिष्पेतुः सहस्रशः ।
त्वरमाणः शरानस्यन् पाण्डवः स बभौ रणे । मध्यन्दिनगतोऽर्च्चिष्मान् शरदीव दिवाकरः ।
उपप्लवन्त वित्रस्ता रथेभ्यो रथिनस्तथा । सादिनश्चाश्वपृष्ठेभ्यो भूमौ चैव पदातयः ।
शरैः संछिद्यमानानां कवचानां महात्मनां । ताम्रराजतलौहानां प्रादुरासीन्महास्वनः ।
छन्नमायोधनं सर्व्वं शरीरैर्गतचेतसां । गजाश्वसादिनां तत्र शितबाणात्तजीवितैः । २००५
रथोपस्थाभिपतितैरास्तृता मानवैर्म्मही । प्रनृत्यतीव सङ्ग्रामे चापहस्तो धनञ्जयः ।
श्रुत्वा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः । त्रस्तानि सर्व्वसैन्यानि व्यपागच्छन् महाहवात् ।
कुण्डलोष्णीषधारीणि जातरूपस्रजस्तथा । पतितानि स्म दृश्यन्ते शिरांसि रणमूर्द्धनि ।
विशिखोन्मथितैर्गात्रैर्बाहुभिश्च सकार्म्मुकैः । सहस्ताभरणैश्चान्यैः प्रच्छन्ना भाति मेदिनी ।
शिरसां पात्यमानानामन्तरा निशितैः शरैः । अश्मवृष्टिरिवाकाशादभवद्भरतर्षभ । २०१०
दर्शयित्वा तथात्मानं रौद्रं रुद्रपराक्रमः । अवरुद्धोऽचरत्पार्थो वर्षाणि त्रिदशानि च ।
क्रोधाग्निमुत्सृजन् घोरो धार्त्तराष्ट्रेषु पाण्डवः । तस्य तद्दहतः सैन्यं दृष्ट्वा घोरं पराक्रमं ।
सर्व्वे शान्तिपरा भूत्वा धार्त्तराष्ट्रस्य पश्यतः । वित्रासयित्वा तत्सैन्यं द्रावयित्वा महारथान् ।
अर्ज्जुनो जयतां श्रेष्ठः पर्य्यवर्त्तत भारत । प्रावर्त्तयन्नदीं घोरां शोणितोदां तरङ्गिणीं ।
अस्थिशैवालसम्बाधां युगान्ते कालनिर्म्मितां । शरचापप्लवां घोरां केशशैवलशाद्वलां । २०१५
तनुत्रोष्णीषसम्बाधां नागकूर्म्मां महाद्विपां । मेदोवसासृक्प्रवहां महाभयविवर्द्धिनीं ।
रौद्ररूपां महाभीमां श्वापदैरभिनादितां । तीक्ष्णशस्त्रमहाग्राहां क्रव्यादगणसेवितां ।
मुक्ताहारोर्म्मिकलिलां चित्रालङ्कारबुद्बुदां । शरसङ्घमहावर्त्तां नागनक्रां दुरत्ययां ।

महारथमहाद्वीपां शङ्खदुन्दुभिनिस्वनां। चकार च तदा पार्थो नदीं दुस्तरशोणितां।
आददानस्य हि शरान् सन्धाय च विमुञ्चतः। विकर्षतश्च गाण्डीवं न किञ्चिद्ददृशे जनः। २०२०
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि अर्ज्जुनसङ्कुलयुद्धे द्विषष्टोऽध्यायः॥ ६२ ॥
॥ वैशम्पायन उवाच॥ ततो दुर्य्योधनः कर्णो दुःशासनविविंशती। द्रोणश्च सह पुत्रेण कृपश्चापि महारथः।
पुनर्य्ययुश्च संरब्धा धनञ्जयजिघांसवः। विस्फारयन्तश्चापानि बलवन्ति दृढानि च।
तान्विकीर्णपताकेन रथेनादित्यवर्च्चसा। प्रत्युद्ययौ महाराज समन्ताद्वानरध्वजः।
ततः कृपश्च कर्णश्च द्रोणश्च रथिनां वरः। तं महास्त्रैर्महावीर्य्याः परिवार्य्य धनञ्जयं।
शरौघान् सम्यगस्यन्तो जीमूता इव वार्षिकाः। ववर्षुः शरवर्षाणि पातयन्तो धनञ्जयं। २०२५
इषुभिर्ब्बहुभिस्तूर्णं समरे लोमवाहिभिः। अदूरात्पर्य्यवस्थाप्य पूरयामासुरादृताः।
तथा तैरवकीर्णस्य दिव्यैरस्त्रैः समन्ततः। न तस्य द्व्यङ्गुलमपि विवृतं सम्प्रदृश्यते।
ततः प्रहस्य बीभत्सुर्दिव्यमैन्द्रं महारथः। अस्त्रमादित्यसङ्काशं गाण्डीवे समयोजयत्।
शररश्मिरिवादित्यः प्रतस्थे समरे बली। किरीटमाली कौन्तेयः सर्व्वान् प्रच्छादयन् कुरून्।
यथा बलाहके विद्युत्पावको वा शिलोच्चये। तथा गाण्डीवमभवदिन्द्रायुधमिवाततं। २०३०
यथा वर्षति पर्ज्जन्ये विद्युद्विभ्राजते दिवि। द्योतयन्ती दिशः सर्व्वाः पृथिवीञ्च समन्ततः।
तथा दश दिशः सर्व्वाः पतद्गाण्डीवमावृणोत्। नागाश्च रथिनः सर्व्वे मुमुहुस्तत्र भारत।
सर्व्वे शान्तिपरा योधाः स्वचित्तानि न लेभिरे। सङ्ग्रामे विमुखाः सर्व्वे योधास्ते हतचेतसः।
एवं सर्व्वाणि सैन्यानि भग्नानि भरतर्षभ। व्यद्रवन्त दिशः सर्व्वा निराशानि स्वजीविते।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि अर्ज्जुनसङ्कुलयुद्धे त्रिषष्टोऽध्यायः॥ ६३ ॥
॥ वैशम्पायन उवाच॥ ततः शान्तनवो भीष्मो भरतानां पितामहः। वध्यमानेषु योधेषु धनञ्जयमुपाद्रवत्। २०३५
प्रगृह्य कार्म्मुकश्रेष्ठं जातरूपपरिष्कृतं। शरानादाय तीक्ष्णाग्रान्मर्म्मभेदान्प्रमाथिनः।
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्द्धनि। शुशुभे स नरव्याघ्रो गिरिः सूर्य्योदये यथा।
प्रध्माय शङ्खं गाङ्गेयो धार्त्तराष्ट्रान्प्रहर्षयन्। प्रदक्षिणमुपावृत्य बीभत्सुं समवारयत्।
तमुदीक्ष्य समायान्तं कौन्तेयः परवीरहा। प्रत्यगृह्णात्प्रहृष्टात्मा धाराधरमिवाचलः।
ततो भीष्मः शरानष्टौ ध्वजे पार्थस्य वीर्य्यवान्। समर्पयन्महावेगान् श्वसमानानिवोरगान्। २०४०
ते ध्वजं पाण्डुपुत्रस्य समासाद्य पतत्त्रिणः। ज्वलन्तं कपिमाजघ्नुः ध्वजाग्रनिलयांश्च तान्।
ततो भल्लेन महता पृथुधारेण पाण्डवः। छत्रं चिच्छेद भीष्मस्य तूर्णं तदपतद्भुवि।
ध्वजं चैवास्य कौन्तेयः शरैरभ्यहनद्दृढं। शीघ्रकृद्रथवाहांश्च तथोभौ पार्ष्णिसारथी।
अमृष्यमाणस्तद्भीष्मो जानन्नपि स पाण्डवं। दिव्येनास्त्रेण महता धनञ्जयमवाकिरत्।
तथैव पाण्डवो भीष्मे दिव्यमस्त्रमुदीरयत्। प्रत्यगृह्णादमेयात्मा महामेघमिवाचलः। २०४५
तयोस्तदभवद्युद्धं तुमुलं लोमहर्षणं। भीष्मस्य सह पार्थेन बलिवासवयोरिव।

प्रेक्षन्ते कुरवः सर्व्वे योधाश्च सहसैनिकाः । भल्लैर्भल्लाः समागम्य भीष्मपाण्डवयोर्युधि ।
अन्तरीक्षे व्यराजन्त खद्योताः प्रावृषीव हि । अग्निचक्रमिवाविद्धं सव्यदक्षिणमस्यतः ।
गाण्डीवमभवद्राजन् पार्थस्य सृजतः शरान् । ततः संछादयामास भीष्मं शरशतैः शितैः ।
पर्व्वतं वारिधाराभिश्छादयन्निव तोयदः । तां स वेलामिवोद्धूतां शरवृष्टिं समुत्थितां । २०५०
व्यधमत्सायकैर्भीष्मः पाण्डवं समवारयत् । ततस्तानि निकृत्तानि शरजालानि भागशः ।
समरेऽच व्यशीर्य्यन्त फाल्गुनस्य रथं प्रति । ततः कनकपुङ्खानां शरवृष्टिं समुत्थितां ।
पाण्डवस्य रथात्तूर्णं शलभानामिवायतिं । व्यधमत्तां पुनस्तस्य भीष्मः शरशतैः शितैः ।
ततस्ते कुरवः सर्व्वे साधुसाध्विति चाब्रुवन् । दुष्करं कृतवान् भीष्मो यदर्जुनमयोधयत् ।
बलवांस्तरुणो दक्षः क्षिप्रकारी धनञ्जयः । कोऽन्यः समर्थः पार्थस्य वेगन्धारयितुं रणे । २०५५
ऋते शान्तनवात् भीष्मात् कृष्णाद्वा देवकीसुतात् । आचार्य्यप्रवराद्वापि भारद्वाजान्महाबलात् ।
अस्त्रैरस्त्राणि संवार्य्य क्रीडन्तौ भरतर्षभौ । चक्षूंषि सर्व्वभूतानां मोहयन्तौ महाबलौ ।
प्राजापत्यं तथैवैन्द्रमाग्नेयं रौद्रदारुणं । कौवेरं वारुणञ्चैव याम्यं वायव्यमेव च ।
प्रयुञ्जानौ महात्मानौ समरे तौ विचेरतुः । विस्मितान्यथ भूतानि तौ दृष्ट्वा संयुगे तदा ।
साधु पार्थ महाबाहो साधु भीष्मेति चाब्रुवन् । नायं युक्तो मनुष्येषु योऽयं संदृश्यते महान् । २०६०
महास्त्राणां सम्प्रयोगः समरे भीष्मपार्थयोः ।
॥ वैशम्पायन उवाच ॥ एवं सर्व्वास्त्रविदुषोरस्त्रयुद्धमवर्त्तत । अस्त्रयुद्धे तु निर्वृत्ते शरयुद्धमवर्त्तत ।
अथ जिष्णुरुपावृत्य क्षुरधारेण कार्मुकं । चकर्त्त भीष्मस्य तदा जातरूपपरिष्कृतं ।
निमेषान्तरमात्रेण भीष्मोऽन्यत्कार्मुकं रणे । समादाय महाबाहुः सज्यं चक्रे महारथः ।
शरांश्च सुबहून् क्रुद्धो मुमोचाशु धनञ्जये । अर्जुनोऽपि शरांस्तीक्ष्णान् भीष्माय निशितान् बहून् । २०६५
चिक्षेप सुमहातेजास्तथा भीष्मश्च पाण्डवे । तयोर्दिव्यास्त्रविदुषोरस्यतोर्निशिताञ्छरान् ।
न विशेषस्तदा राजन् लक्ष्यते स्म महात्मनोः । अथावृणोद्दश दिशः शरैरतिरथस्तदा ।
किरीटमाली कौन्तेयः शूरः शान्तनवस्तथा । अतीव पाण्डवो भीष्मं भीष्मश्चातीव पाण्डवं ।
बभूव तस्मिन् सङ्ग्रामे राजन् लोके तदद्भुतं । पाण्डवेन हताः शूरा भीष्मस्य रथरक्षिणः ।
शेरते स्म तदा राजन् कौन्तेयस्याभितो रथं । ततो गाण्डीवनिर्मुक्ता निरमित्रं चिकीर्षवः । २०७०
आगच्छन्पुङ्खसंश्लिष्टाः श्वेतवाहनपत्रिणः । निष्पतन्तो रथात्तस्य धौता हैरण्यवाससः ।
आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः । तस्य तद्दिव्यमस्त्रं हि विगाढं चित्रमस्यतः ।
प्रेक्षन्ते स्मान्तरीक्षस्थाः सर्व्वे देवाः सवासवाः । तं दृष्ट्वा परमप्रीतो गन्धर्व्वश्चित्रमद्भुतं ।
शशंस देवराजाय चित्रसेनः प्रतापवान् । पश्यैतान्पार्थनिर्मुक्तान्संसक्तानिव गच्छतः ।
चित्ररूपमिदं जिष्णोर्दिव्यमस्त्रमुदीर्य्यतः । नेदं मनुष्याः संदध्युर्न हीदं तेषु विद्यते । २०७५
पौराणानां महास्त्राणां विचित्रोऽयं समागमः । आददानस्य हि शरान् सन्धाय च विमुञ्चतः ।

विकर्षतस्य गाण्डीवं नाम्तरं समदृश्यत। मध्यन्दिनगतं सूर्य्यं प्रतपन्तमिवाम्बरे।
न शक्नुवन्ति सैन्यानि पाण्डवं प्रतिवीक्षितुं। तथैव भीष्मं गाङ्गेयं द्रष्टुं नोत्सहते जनः।
उभौ विश्रुतकर्म्माणावुभौ तीव्रपराक्रमौ। उभौ सदृशकर्म्माणावुभौ युधि सुदुर्ज्जयौ।
इत्युक्तो देवराजस्तु पार्थभीष्मसमागमं। पूजयामास दिव्येन पुष्पवर्षेण भारत। २०८०
ततः शान्तनवो भीष्मो वामं पार्श्वमताडयत्। पश्यतः प्रतिसन्धाय विध्यतः सव्यसाचिनः।
ततः प्रहस्य बीभत्सुः पृथुधारेण कार्म्मुकं। चिच्छेद गार्द्धपत्रेण भीष्मस्यादित्यतेजसः।
अथैनं दशभिर्व्वाणैः प्रत्यविध्यत्स्तनान्तरे। यतमानं पराक्रान्तं कुन्तीपुत्त्रो धनञ्जयः।
स पीडितो महाबाहुर्गृहीत्वा रथकूवरं। गाङ्गेयो युद्धदुर्द्धर्षस्तस्थौ दीर्घमिवान्तरं।
तं विसंज्ञमपोवाह संयन्ता रथवाजिनां। उपदेशमनुस्मृत्य रक्षमाणो महारथं। २०८५
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि भीष्मापयाने चतुःषष्टोऽध्यायः॥ ६४ ॥

॥ वैशम्पायन उवाच ॥ भीष्मे तु सङ्ग्रामशिरो विहाय पलायमाने धृतराष्ट्रपुत्त्रः। उत्सृज्य केतुं निनदन्महात्मा धनुर्व्विगृह्यार्ज्जुनमाससाद।
स भीमधन्वानमुदग्रवीर्य्यं धनञ्जयं शत्रुगणे चरन्तं। आकर्णपूर्णायतचोदितेन विव्याध भल्लेन ललाटमध्ये।
स तेन वाणेन समर्प्पितेन जाम्बूनदाग्रेण सुसंहितेन। रराज राजन् रजनीयकर्म्मा यथैकपर्व्वा रुचिरैकशृङ्गः।
अथास्य वाणेन विदारितस्य प्रादुर्व्वभूवासृगजस्रमुष्णं। स तस्य जाम्बूनदपुङ्खचित्रो भित्वा ललाटं सुविराजते स्म।
स तेन वाणाभिहतस्तरस्वी दुर्य्योधनेनोद्धतमन्युवेगः। शरानुपादाय विषाग्निकल्पान् विव्याध राजानमदीनसत्त्वः। २०९०
दुर्य्योधनश्चापि तमुग्रतेजाः पार्थश्च दुर्य्योधनमेकवीरः। अन्योऽन्यमाजौ पुरुषप्रवीरौ समौ समाजघ्नतुराजमीढौ।
ततः प्रभिन्नेन महागजेन महीधराभेन पुनर्व्विकर्णः। रथैश्चतुर्भिर्गजपादरक्षैः कुन्तीसुतं जिष्णुमथाभ्यधावत्।
समापतन्तं त्वरितं गजेन्द्रं धनञ्जयः कुम्भविभागमध्ये। आकर्णपूर्णेन महायसेन वाणेन विव्याध महाजवेन।
पार्थेन सृष्टः स तु गार्द्धपत्रः आपुङ्खदेशात् प्रविवेश नागं। विदार्य्य शैलप्रवरप्रकाशं यथाऽशनिः पर्व्वतमिन्द्रसृष्टः।
शरप्रतप्तः स तु नागराजः प्रवेपिताङ्गो व्यथितान्तरात्मा। संसीदमानो निपपात मह्यां वज्राहतं शृङ्गमिवाचलस्य। २०९५
निपातिते दन्तिवरे पृथिव्यां त्रासाद्विकर्णः सहसाऽवतीर्य्य। तूर्णं पदान्यष्टशतानि गत्वा विविंशतेः स्यन्दनमारुरोह।
निहत्य नागन्तु शरेण तेन वज्रोपमेनाद्रिवराम्बुदाभं। तथाविधेनैव शरेण पार्थो दुर्य्योधनं वक्षसि निर्व्विभेद।
ततो गजे राजनि चैव भिन्ने भग्ने विकर्णे च सपादरक्षे। गाण्डीवमुक्तैर्व्विशिखैः प्रणुन्नास्ते योधमुख्याः सहसाऽपजग्मुः।
दृष्ट्वैव पार्थेन हतञ्च नागं योधांश्च सर्व्वान् द्रवतो निशम्य। रथं समावृत्य कुरुप्रवीरो रणात्प्रदुद्राव यतो न पार्थः।
तं भीमरूपं त्वरितं द्रवन्तं दुर्य्योधनं शत्रुसहोऽभिषङ्गात्। प्रास्फोटयद्योद्धुमनाः किरीटी वाणेन विद्धं रुधिरं वमन्तं। २१००
॥ अर्ज्जुन उवाच ॥ विहाय कीर्त्तिं विपुलां यशश्च युद्धात्परावृत्य पलायसे किं। न तेऽद्य तूर्य्याणि समाहतानि तथैव राज्यादवरोपितस्य।
युधिष्ठिरस्यास्मि निदेशकारी पार्थस्तृतीयो युधि संस्थितोऽस्मि। तदर्थमावृत्य मुखं प्रयच्छ नरेन्द्र वृत्तं स्मर धार्त्तराष्ट्र।

मोघं तवेदं भुवि नामधेयं दुर्य्योधनेतीह कृतं पुरस्तात्। नहीह दुर्य्योधनता तवास्ति पलायमानस्य रणं विहाय।
न ते पुरस्तादथ पृष्ठतो वा पश्यामि दुर्य्योधन रक्षितारं। अपेहि युद्धात्पुरुषप्रवीर प्राणान् प्रियान् पाण्डवतोऽद्य रक्ष।

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि दुर्य्योधनपलायने पञ्चषष्टोऽध्यायः॥ ६५॥

॥ वैशम्पायन उवाच॥ आहूयमानश्च स तेन संख्ये महात्मना वै धृतराष्ट्रपुत्रः। निवर्त्तितस्तस्य गिराङ्कुशेन महागजो मत्त इवाङ्कुशेन। २२०५
सोऽमृष्यमाणो वचसाऽभिमृष्टो महारथेनातिरथस्तरस्वी। पर्य्याववर्त्ताथ रथेन वीरो भोगी यथा पादतलाभिमृष्टः।
तं प्रेक्ष्य कर्णः परिवर्त्तमानं निवर्त्य संस्तभ्य च विद्धगात्रं। दुर्य्योधनस्योत्तरतोऽभ्यगच्छत्पार्थं नृवीरो युधि हेममाली।
भीष्मस्ततः शान्तनवो विवृत्य हिरण्यकक्ष्यस्त्वरयाऽभिपत्ती। दुर्य्योधनं पश्चिमतोऽभ्यरक्षत्पार्थान्महाबाहुरधिज्यधन्वा।
द्रोणः कृपश्चैव विविंशतिश्च दुःशासनश्चैव विवृत्य शीघ्रं। सर्व्वे पुरस्ताद्विततेषुचापा दुर्य्योधनार्थं त्वरिताभ्युपेयुः।
स तान्यनीकानि निवर्त्तमानान्यालोक्य पूर्णौघनिभानि पार्थः। हंसो यथा मेघमिवापतन्तं धनञ्जयः प्रत्यपतत्तरस्वी। २२१०
ते सर्व्वतः सम्परिवार्य्य पार्थं अस्त्राणि दिव्यानि समाददानाः। ववर्षुरभ्येत्य शरैः समन्तान्मेघा यथा भूधरमम्बुवेगैः।
ततोऽस्त्रमस्त्रेण निवार्य्य तेषां गाण्डीवधन्वा कुरुपुङ्गवानां। संमोहनं शत्रुसहोऽन्यदस्त्रं प्रादुश्चकारैन्द्रिरवारणीयं।
ततो दिशश्चानुदिशो विवृत्य शरैः सुधारैर्निशितैः सुपुङ्खैः। गाण्डीवघोषेण मनांसि तेषां महाबलः प्रव्यथयाञ्चकार।
ततः पुनर्भीमरवं प्रगृह्य दोर्भ्यां महाशङ्खमुदारघोषं। व्यनादयत् स प्रदिशो दिशः खं भुवञ्च पार्थो द्विषतां निहन्ता।
ते शङ्खनादेन कुरुप्रवीराः संमोहिताः पार्थसमीरितेन। उत्सृज्य चापानि दुरासदानि सर्व्वे तदा शान्तिपरा बभूवुः। २२१५
तथा विसंज्ञेषु परेषु पार्थः स्मृत्वा च वाक्यानि तथोत्तरायाः। निर्य्याहि मध्यादिति मत्स्यपुत्त्रमुवाच यावत् कुरवो विसंज्ञाः।
आचार्य्यशारद्वतयोः सुशुक्ले कर्णस्य पीतं रुचिरञ्च वस्त्रं। द्रौणेश्च राज्ञश्च तथैव नीले वस्त्रे समादत्स्व नरप्रवीर।
भीष्मस्य संज्ञान्तु तथैव मन्ये जानाति सोऽस्त्रप्रतिघातमेषः। एतस्य वाहान् कुरु सव्यतस्त्वमेवं हि यातव्यममूढसंज्ञैः।
रश्मीन्समुत्सृज्य ततो महात्मा रथादवप्लुत्य विराटपुत्त्रः। वस्त्राण्युपादाय महारथानां तूर्णं पुनः स्वं रथमारुरोह।
ततोऽन्वशासच्चतुरः सदश्वान् पुत्रो विराटस्य हिरण्यकक्षान्। ते त्वत्यतीयुर्ध्वजिनामनीकं श्वेता वहन्तोऽर्जुनमाजिमध्यात्। २२२०
तथाऽनुयान्तं पुरुषप्रवीरं भीष्मः शरैरभ्यहनत्तरस्वी। स चापि भीष्मस्य हयान्निहत्य विव्याध पार्श्वे दशभिः पृषत्कैः।
ततोऽर्जुनो भीष्ममपास्य युद्धे विद्धास्य यन्तारमरिष्टधन्वा। तस्थौ विमुक्तो रथवृन्दमध्याद्राहुं विदार्य्येव सहस्ररश्मिः।
लब्ध्वा हि संज्ञां तु कुरुप्रवीराः पार्थं निरीक्ष्याथ सुरेन्द्रकल्पं। रणे विमुक्तं स्थितमेकमाजौ स धार्त्तराष्ट्रस्त्वरितं बभाषे।
अयं कथंस्विद्भवतो विमुक्तस्तथा प्रमथ्नीत यथा न मुच्येत्। तमब्रवीत् शान्तनवः प्रहस्य क्व ते गता बुद्धिरभूत् क्व वीर्य्यं।
शान्तिं परां प्राप्य यदा स्थितोऽभूरुत्सृज्य बाणांश्च धनुश्च चित्रं। न त्वेव बीभत्सुरलं नृशंसं कर्त्तुं न पापेऽस्य मनो निविष्टं। २२२५
त्रैलोक्यहेतोर्न जहेत्स्वधर्म्मं सर्व्वे न तस्मान्निहता रणेऽस्मिन्। क्षिप्रं कुरून् याहि कुरुप्रवीर विजित्य गाश्च प्रतियातु पार्थः। मा ते स्वकोऽर्थो निपतेत मोहात्तत्वं विधातव्यमरिष्टवर्त्म।

॥ वैशम्पायन उवाच ॥ दुर्य्योधनस्तस्य तु तन्निशम्य पितामहस्यात्महितं वचोऽथ। अतीतकामो युधि सोऽत्यमर्षी राजा विनिश्वस्य बभूव तूष्णीं।

तद्भीष्मवाक्यं हितमीक्ष्य सर्व्वे धनञ्जयाग्निञ्च विवर्द्धमानं। निवर्त्तनायैव मनो निदध्युर्दुर्य्योधनं ते परिरक्षमाणाः।

तान्प्रस्थितान् प्रीतमनाः स पार्थो धनञ्जयः प्रेक्ष्य कुरुप्रवीरान्। आभाषमाणोऽनुनयं मुहूर्त्तं वचोऽब्रवीत्सम्परिहृत्य भूयः। २२१०

पितामहं शान्तनवञ्च वृद्धं द्रोणं गुरुञ्च प्रणिपत्य मूर्द्ध्ना। द्रौणिं कृपञ्चैव कुरूंश्च मान्याञ्छरैर्व्विचित्रैरभिवाद्य चैव।

दुर्य्योधनस्योत्तमरत्नचित्रं चिच्छेद पार्थो मुकुटं शरेण। आमन्त्र्य वीरांश्च तथैव मान्यान् गाण्डीवघोषेण विनाद्य लोकान्।

स देवदत्तं सहसा विनाद्य विदार्य्य वीरो द्विषतां मनांसि। ध्वजेन सर्व्वानभिभूय शत्रून् सहेमजालेन विराजमानः।

दृष्ट्वा प्रयातांस्तु कुरून् किरीटी हृष्टोऽब्रवीत्तत्र स मत्स्यपुत्रं। आवर्त्तयाश्वान् पशवो जितास्ते याताः परे याहि पुरं प्रहृष्टः।

देवास्तु दृष्ट्वा महदद्भुतं तद्युद्धं कुरूणां सह फाल्गुनेन। जग्मुर्यथा स्वं भवनं प्रतीताः पार्थस्य कर्म्माणि विचिन्तयन्तः। २२१५

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि अर्ज्जुनयुद्धनिवर्त्तने षडधिकषष्टोऽध्यायः॥ ६६ ॥

॥ वैशम्पायन उवाच॥ ततो विजित्य संग्रामे कुरून् स वृषभेक्षणः। समानयामास तदा विराटस्य धनं महत्।

गतेषु च प्रभग्नेषु धार्त्तराष्ट्रेषु सर्व्वशः। वनान्निष्क्रम्य गहनाद्बहवः कुरुसैनिकाः।

भयात्सन्त्रस्तमनसः समाजग्मुस्ततस्ततः। मुक्तकेशास्त्वदृश्यन्त स्थिताः प्राञ्जलयस्तदा।

क्षुत्पिपासापरिश्रान्ता विदेशस्था विचेतसः। ऊचुः प्रणम्य संभ्रान्ताः पार्थं किं करवाम ते।

॥ अर्ज्जुन उवाच ॥ स्वस्ति व्रजत वो भद्रं न भेतव्यं कथञ्चन। नाहमार्त्तान् जिघांसामि भृशमाश्वासयामि वः। २२२०

॥ वैशम्पायन उवाच ॥ तस्य तामभयां वाचं श्रुत्वा योधाः समागताः। आयुःकीर्त्तियशोदाभिस्तमाशीर्भिरनन्दयन्।

ततोऽर्जुनं नागमिव प्रभिन्नमुत्सृज्य शत्रून् विनिवर्त्तमानं। विराटराष्ट्राभिमुखं प्रयान्तं नाशक्नुवंस्तं कुरवोऽभियातुं।

ततः स तन्मेघमिवापतन्तं विद्राव्य पार्थः कुरुमेघसैन्यं। मत्स्यस्य पुत्रं द्विषतां निहन्ता वचोऽब्रवीत्संपरिरभ्य भूयः।

पितुः सकाशे तव तात सर्व्वे वसन्ति पार्था विदितास्तवैव। तान्मा प्रशंसेर्नगरं प्रविश्य भीतः प्रणश्येद्धि स मत्स्यराजः।

मया जिता सा ध्वजिनी कुरूणां मया च गावो विजिता द्विषद्भ्यः। पितुः सकाशं नगरं प्रविश्य त्वमात्मनः कर्म्म कृतं ब्रवीहि। २२२५

॥ उत्तर उवाच ॥ यत्ते कृतं कर्म्म न पारणीयं तत्कर्म्म कर्त्तुं मम नास्ति शक्तिः। न त्वां प्रवक्ष्यामि पितुः सकाशे यावन्न मां वक्ष्यसि सव्यसाचिन्।

॥ वैशम्पायन उवाच ॥ स शत्रुसेनामवजित्य जिष्णुराच्छिद्य सर्व्वञ्च धनं कुरुभ्यः। श्मशानमागत्य पुनः शमीं तामभ्येत्य तस्थौ शरविक्षताङ्गः।

ततः स वह्निप्रतिमो महाकपिः सहैव भूतैर्दिवमुत्पपात। तथैव माया विहिता बभूव ध्वजञ्च सैंहं युयुजे रथे पुनः।

विधाय तच्चायुधमाजिवर्द्धनं कुरूत्तमानामिषुधीः शरांस्तथा। प्रायात्स मत्स्यो नगरं प्रहृष्टः किरीटिना सारथिना महात्मना।

पार्थस्तु कृत्वा परमार्य्यकर्म्म निहत्य शत्रून् द्विषतां निहन्ता। चकार वेणीञ्च तथैव भूयो जग्राह रश्मीन् पुनरुत्तरस्य। २२३०

विवेश हृष्टो नगरं महात्मा बृहन्नलारूपमुपेत्य सारथिः।

॥ वैशम्पायन उवाच ॥ ततो निवृत्ताः कुरवः प्रभग्ना वशमास्थिताः। हस्तिनापुरमुद्दिश्य सर्व्वे दीना ययुस्तदा।

पन्थानमुपसङ्गम्य फाल्गुनो वाक्यमब्रवीत्। राजपुत्र प्रत्यवेक्ष समानीतानि सर्व्वशः।

गोकुलानि महाबाहो वीर गोपालकैः सह । ततोऽपराह्णे यास्यामो विराटनगरं प्रति ।

आश्वास्य पाययित्वा च परिप्लाव्य च वाजिनः । गच्छन्तु त्वरितास्त्विमे गोपालाः प्रेषितास्त्वया । २१५५

नगरे प्रियमाख्यान्तु घोषयन्तु च ते जयं ।

॥ वैशम्पायन उवाच ॥ अथोत्तरस्त्वरमाणः स दूतानाज्ञापयद्वचनात्फाल्गुनस्य । आचक्षध्वं विजयं पार्थिवस्य भग्नाः परे विजिताश्चापि गावः ।

इत्येवं तौ भारतमत्स्यवीरौ संमन्त्र्य सङ्गम्य ततः शमीं तां । अभ्येत्य भूयो विजयेन तृप्तावुत्सृष्टमारोपयतां स्वभाण्डं ।

स शत्रुसेनामभिभूय सर्व्वामाच्छिद्य सर्व्वञ्च धनं कुरुभ्यः । वैराटिरायान्नगरं प्रतीतो बृहन्नलासारथिना प्रवीरः ।

इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि उत्तरागमने सप्तषष्टोऽध्यायः ॥ ६७ ॥

॥ वैशम्पायन उवाच ॥ धनं चापि विजित्याशु विराटो वाहिनीपतिः । विवेश नगरं हृष्टश्चतुर्भिः पाण्डवैः सह । २१६०

जित्वा त्रिगर्त्तान् सङ्ग्रामे गाश्चैवादाय सर्व्वशः । अशोभत महाराज सहपार्थः श्रिया वृतः ।

तमासनगतं वीरं सुहृदां हर्षवर्द्धनं । उपासाञ्चक्रिरे सर्व्वे सह पार्थैः परन्तपाः ।

उपतस्थुः प्रकृतयः समस्ता ब्राह्मणैः सह । सभाजितः ससैन्यस्तु प्रतिनन्द्याथ मत्स्यराट् ।

विसर्ज्जयामास तदा द्विजांश्च प्रकृतीस्तथा । तथा स राजा मत्स्यानां विराटो वाहिनीपतिः ।

उत्तरं परिपप्रच्छ क्व यात इति चाब्रवीत् । आचख्युस्तस्य तत्सर्व्वं स्त्रियः कन्याश्च वेश्मनि । २१६५

अन्तःपुरचराश्चैव कुरुभिर्गोधनं हृतं । विजेतुमभिसंरब्ध एक एवातिसाहसात् ।

बृहन्नलासहायश्च निर्गतः पृथिवीञ्जयः । उपायातानतिरथान् भीष्मं शान्तनवं कृपं ।

कर्णं दुर्य्योधनं द्रोणं द्रोणपुत्रञ्च षड्रथान् ।

॥ वैशम्पायन उवाच ॥ राजा विराटोऽथ भृशाभितप्तः श्रुत्वा सुतं त्वेकरथेन यातं । बृहन्नलासारथिमाजिवर्द्धनं प्रोवाच सर्व्वानथ मन्त्रिमुख्यान् ।

सर्व्वथा कुरवस्ते हि ये चान्ये वसुधाधिपाः । त्रिगर्त्तान्निर्जितान् श्रुत्वा न स्थास्यन्ति कदाचन । २१७०

तस्माद्गच्छन्तु मे योधा बलेन महता वृताः । उत्तरस्य परीप्सार्थं ये त्रिगर्त्तैरविक्षताः ।

हयांश्च नागांश्च रथांश्च शीघ्रं पदातिसङ्घांश्च ततः प्रवीरान् । प्रस्थापयामास सुतस्य हेतोर्विचित्रशस्त्राभरणोपपन्नान् ।

एवं स राजा मत्स्यानां विराटो वाहिनीपतिः । व्यादिदेशाथ तां क्षिप्रं वाहिनीं चतुरङ्गिणीं ।

कुमारमाशु जानीत यदि जीवति वा न वा । यस्य यन्ता गतः षण्डो मन्येऽहं स न जीवति ।

॥ वैशम्पायन उवाच ॥ तमब्रवीद्धर्म्मराजो विहस्य विराटराजं तु भृशाभितप्तं । बृहन्नलासारथिश्चेन्नरेन्द्र परे न नेष्यन्ति तवाद्य गावः । २१७५

सर्व्वान् महीपान् सहितान् कुरूंश्च तथैव देवासुरयक्षनागान् । अलं विजेतुं समरे सुतस्ते स्वनुष्ठितः सारथिना हि तेन ।

॥ वैशम्पायन उवाच ॥ अथोत्तरेण प्रहिता दूतास्ते शीघ्रगामिनः । विराटनगरं प्राप्य विजयं समवेदयन् ।

राज्ञस्तत्सर्व्वमाचख्यौ मन्त्री विजयमुत्तमं । पराजयं कुरूणाञ्चाप्युपायान्तं तथोत्तरं ।

सर्व्वा विनिर्ज्जिता गावः कुरवश्च पराजिताः । उत्तरः सह सूतेन कुशली च परन्तपः ।

॥ युधिष्ठिर उवाच ॥ दिष्ट्या विनिर्ज्जिता गावः कुरवश्च पराजिताः । नाद्भुतं त्वेव मन्येऽहं यत्ते पुत्रोऽजयत् कुरून् । २१८०

ध्रुव एव जयस्तस्य यस्य यन्ता बृहन्नला ।

॥ वैशम्पायन उवाच ॥ ततो विराटो नृपतिः सम्प्रहृष्टतनूरुहः । श्रुत्वा स विजयं तस्य कुमारस्यामितौजसः ।

आच्छादयित्वा दूतांस्तान् मन्त्रिणः सोऽभ्यचोदयत् । राजमार्गाः क्रियन्तां मे पताकाभिरलङ्कृताः ।

पुष्पोपहारैरर्च्च्यन्तां देवताश्चापि सर्व्वशः । कुमारा योधमुख्याश्च गणिकाश्च स्वलङ्कृताः ।

वादित्राणि च सर्व्वाणि प्रत्युद्यान्तु सुतं मम । घण्टावान्माणवः शीघ्रं मत्तमारुह्य वारणं । २१८५

शृङ्गाटकेषु सर्व्वेषु समाख्यातु जयं मम । उत्तरा च कुमारीभिर्ब्बह्वीभिः परिवारिता ।

शृङ्गारवेशाभरणा प्रत्युद्यातु सुतं मम ।

॥वैशम्पायन उवाच॥ श्रुत्वा चेदं वचनं पार्थिवस्य सर्व्वं पुरं स्वस्तिकपाणि भूतं । भेर्य्यश्च तूर्य्याणि च वारिजाश्च वेशैः परार्द्ध्यैः प्रमदाः शुभाश्च ।

तथैव सूतैः सह मागधैश्च नान्दीरवाद्याः पणवास्तूर्य्यवाद्याः । पुराद्विराटस्य महाबलस्य प्रत्युद्ययुः पुत्रमनन्तवीर्य्यं ।

॥ वैशम्पायन उवाच ॥ प्रस्थाप्य सेनां कन्याश्च गणिकाश्च स्वलङ्कृताः । मत्स्यराजो महाप्राज्ञः प्रहृष्ट इदमब्रवीत् । २१९०

अक्षानाहर सैरिन्ध्रि कङ्क द्यूतं प्रवर्त्ततां । तं तथा वादिनं दृष्ट्वा पाण्डवः प्रत्यभाषत ।

न देवितव्यं हृष्टेन कितवेनेति नः श्रुतं । तं त्वामद्य मुदायुक्तं नाहं देवितुमुत्सहे ।

प्रियं तु ते चिकीर्षामि वर्त्ततां यदि मन्यसे ।

॥ विराट उवाच ॥ स्त्रियो गावो हिरण्यञ्च यच्चान्यद्वसु किञ्चन । न मे किञ्चित्त्वया रक्ष्यमन्तरेणापि देवितुं ।

॥ कङ्क उवाच॥ किन्ते द्यूतेन राजेन्द्र बहुदोषेण मानद । देवने बहवो दोषास्तस्मात्तत्परिवर्ज्जयेत् । २१९५

श्रुतस्ते यदि वा दृष्टः पाण्डवेयो युधिष्ठिरः । स राष्ट्रं सुमहत् स्फीतं भ्रातॄंश्च त्रिदशोपमान् ।

राज्यं हारितवान् सर्व्वं तस्माद्द्यूतं न रोचये । अथ वा मन्यसे राजन् दीव्याम यदि रोचते ।

॥ वैशम्पायन उवाच ॥ प्रवर्त्तमाने द्यूते तु मत्स्यः पाण्डवमब्रवीत् । पश्य पुत्रेण मे युद्धे तादृशाः कुरवो जिताः ।

ततोऽब्रवीन्महात्मा स एनं राजा युधिष्ठिरः । बृहन्नला यस्य यन्ता कथं स न जयेद् युधि ।

इत्युक्तः कुपितो राजा मत्स्यः पाण्डवमब्रवीत् । समं पुत्रेण मे षण्ढं ब्रह्मबन्धो प्रशंससि । २२००

वाच्यावाच्यं न जानीषे नूनं मामवमन्यसे । भीष्मद्रोणमुखान् सर्व्वान् कस्मान्न स विजेष्यति ।

वयस्यत्वात्तु ते ब्रह्मन्नपराधमिमं क्षमे । नेदृशं तु पुनर्व्वाच्यं यदि जीवितुमिच्छसि ।

॥ युधिष्ठिर उवाच ॥ यत्र द्रोणस्तथा भीष्मो द्रौणिर्व्वैकर्त्तनः कृपः । दुर्य्योधनश्च राजेन्द्रस्तथाऽन्ये च महारथाः ।

मरुद्गणैः परिवृतः साक्षादपि मरुत्पतिः । कोऽन्यो बृहन्नलायास्तान् प्रतियुध्येत सङ्गतान् ।

यस्य बाहुबले तुल्यो न भूतो न भविष्यति । अतीव समरं दृष्ट्वा हर्षो यस्योपजायते । २२०५

यो जयेत्सहितान् सर्व्वान् ससुरासुरमानवान् । तादृशेन सहायेन कस्मात् स न विजेष्यते ।

॥ विराट उवाच ॥ बहुशः प्रतिषिद्धोऽसि न च वाचं नियच्छसि । नियन्ता चेन्न विद्येत न कश्चिद्धर्म्ममाचरेत् ।

॥ वैशम्पायन उवाच ॥ ततः प्रकुपितो राजा तमक्षेणाहनद् भृशं । मुखे युधिष्ठिरं कोपान्नैवमित्येव भर्त्सयन् ।

बलवत्प्रतिविद्धस्य नस्तः शोणितमागमत्। तदप्राप्तं महीं पार्थः पाणिभ्यां प्रत्यगृह्णत।
अवैक्षत स धर्म्मात्मा द्रौपदीं पार्श्वतः स्थितां। सा ज्ञात्वा तमभिप्रायं भर्त्तुश्चित्तवशानुगा। २२१०
पात्रं गृहीत्वा सौवर्णं जलपूर्णमनिन्दिता। तच्छोणितं प्रत्यगृह्णाद्यत्प्रसुस्राव नस्ततः।
अथोत्तरः शुभैर्गन्धैर्माल्यैश्च विविधैस्तथा। अवकीर्य्यमाणः संहृष्टो नगरं स्वैरमागतः।
सभाज्यमानः पौरैश्च स्त्रीभिर्जानपदैस्तथा। आसाद्य भवनद्वारं पित्रे संप्रत्यवेदयत्।
ततो द्वाःस्थः प्रविश्यैव विराटमिदमब्रवीत्। बृहन्नलासहायस्ते पुत्रो द्वार्य्युत्तरः स्थितः।
ततो हृष्टो मत्स्यराजः क्षत्तारमिदमब्रवीत्। प्रवेश्यतामुभौ तूर्णं दर्शनेप्सुरहं तयोः। २२१५
क्षत्तारं कुरुराजस्तु शनैः कर्णमुपाजपत्। उत्तरः प्रविशत्वेको न प्रवेश्या बृहन्नला।
एतस्य हि महाबाहो व्रतमेतत्समाहितं। यो ममाङ्गे व्रणं कुर्य्याच्छोणितं वाऽपि दर्शयेत्।
अन्यत्र संग्रामगतान्न स जीवेत्कथञ्चन। न मृष्याद्भृशसंक्रुद्धो मां दृष्ट्वा तु सशोणितं।
विराटमिह सामात्यं हन्यात्सबलवाहनं।
॥ वैशम्पायन उवाच ॥ ततो राज्ञः सुतो ज्येष्ठः प्राविशत् पृथिवीञ्जयः। सोऽभिवाद्य पितुः पादौ कङ्कञ्चाप्युपतिष्ठत। २२२०
ततो रुधिरसंयुक्तमनेकाग्रमनागसं। भूमावासीनमेकान्ते सैरिन्ध्र्या प्रत्युपस्थितं।
ततः पप्रच्छ पितरं त्वरमाण इवोत्तरः। केनायं ताडितो राजन् केन पापमिदं कृतं।
॥ विराट उवाच ॥ मयाऽयं ताडितो जिह्मो न चाप्येतावदर्हति। प्रशस्यमाने यत् शूरे त्वयि षण्ढं प्रशंसति।
॥ उत्तर उवाच ॥ अकार्य्यं ते कृतं राजन् क्षिप्रमेव प्रसाद्यतां। मा त्वां ब्रह्मविषं घोरं समूलमिह निर्द्दहेत्।
॥ वैशम्पायन उवाच ॥ स पुत्रस्य वचः श्रुत्वा विराटो राष्ट्रवर्द्धनः। क्षमयामास कौन्तेयं भस्मच्छन्नमिवानलं। २२२५
क्षमयन्तन्तु राजानं पाण्डवः प्रत्यभाषत। चिरं क्षान्तमिदं राजन्न मन्युर्व्विद्यते मम।
यदि ह्येतत्पतेद्भूमौ रुधिरं मम नस्ततः। सराष्ट्रस्त्वं महाराज विनश्येथा न संशयः।
न दूषयामि ते राजन् यद्वै हन्याददूषकं। बलवन्तं प्रभुं राजन् क्षिप्रं दारुणमाप्नुयात्।
॥ वैशम्पायन उवाच ॥ शोणिते तु व्यतिक्रान्ते प्रविवेश बृहन्नला। अभिवाद्य विराटन्तु कङ्कञ्चाप्युपतिष्ठत।
क्षामयित्वा तु कौरव्यं रणादुत्तरमागतं। प्रशशंस ततो मत्स्यः शृण्वतः सव्यसाचिनः। २२३०
त्वया दायादवानस्मि कैकेयीनन्दिवर्द्धन। त्वया मे सदृशः पुत्रो न भूतो न भविष्यति।
पदं पदसहस्रेण यश्चरन्नापराध्नुयात्। तेन कर्णेन ते तात कथमासीत्समागमः।
मनुष्यलोके सकले यस्य तुल्यो न विद्यते। तेन भीष्मेण ते तात कथमासीत्समागमः।
आचार्य्यो वृष्णिवीराणां कौरवाणाञ्च यो द्विजः। सर्व्वक्षत्रस्य चाचार्य्यः सर्व्वशस्त्रभृताम्वरः।
तेन द्रोणेन ते तात कथमासीत्समागमः। आचार्य्यपुत्रो यः शूरः सर्व्वशस्त्रभृतामपि। २२३५
अश्वत्थामेति विख्यातस्तेनासीत्सङ्गरः कथं। रणे यं प्रेक्ष्य सीदन्ति हृतस्वा वणिजो यथा।
कृपेण तेन ते तात कथमासीत्समागमः। पर्व्वतं योऽभिविध्येत राजपुत्रो महेषुभिः।
दुर्य्योधनेन ते तात कथमासीत्समागमः। अवगाढा द्विषन्तो मे सुखो वातोऽभिवाति मां।

यस्त्वं धनमथाजैषीः कुरुभिर्यस्समाहवे। तेषां भयाभिपन्नानां सर्व्वेषां बलशालिनां।
नूनं प्रकाश्य तान् सर्व्वांस्त्वया युधि नरर्षभ। आच्छिन्नं गोधनं सर्व्वं शार्दूलेनामिषं यथा। २२१०
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि विराटोत्तरसंवादे अष्टषष्टोऽध्यायः॥ ६८॥
॥उत्तर उवाच॥ न मया निर्ज्जिता गावो न मया निर्ज्जिताः परे। कृतं तत्सकलं तेन देवपुत्रेण केनचित्।
स हि भीतं द्रवन्तं मां देवपुत्रो न्यवारयत्। स चातिष्ठद्रथोपस्थे वज्रसंहननो युवा।
तेन ते निर्ज्जिता गावः कुरवश्च पराजिताः। तस्य तत् कर्म्म वीरस्य न मया तात तत्कृतं।
स हि शारद्वतं द्रोणं द्रोणपुत्रञ्च षड्रथान्। सूतपुत्रञ्च भीष्मञ्च चकार विमुखान् शरैः।
दुर्य्योधनं विकर्णञ्च सनागमिव यूथपं। प्रभग्नमब्रवीद्भीतं राजपुत्रं महाबलः। २२१५
न हास्तिनपुरे त्राणं तव पश्यामि किञ्चन। व्यायामेन परीप्सस्व जीवितं कौरवात्मज।
न मोक्ष्यसे पलायंस्त्वं राजन् युद्धे मनः कुरु। पृथिवीं भोक्ष्यसे जित्वा हतो वा स्वर्गमाप्स्यसि।
स निवृत्तो नरव्याघ्रो मुञ्चन् वज्रनिभान् शरान्। सचिवैः संवृतो राजा रथे नाग इव श्वसन्।
तं दृष्ट्वा रोमहर्षोऽभूदूरुकम्पश्च मारिष। स तत्र सिंहसङ्काशमनीकं व्यधमच्छरैः।
तत्प्रणुद्य रथानीकं सिंहसंहननो युवा। कुरूंस्तान् प्रहसन् राजन् संस्थितान् हृतवाससः। २२२०
एकेन तेन वीरेण षड्रथाः परिनिर्ज्जिताः। शार्दूलेनेव मत्तेन यथा वनचरा मृगाः।
॥विराट उवाच॥ क्व स वीरो महाबाहुर्देवपुत्रो महायशाः। यो मे धनमथाजैषीत् कुरुभिर्ग्रस्तमाहवे।
इच्छामि तमहं द्रष्टुमर्च्चितुञ्च महाबलं। येन मे त्वञ्च गावश्च रक्षिता देवसूनुना।
॥उत्तर उवाच॥ अन्तर्धानं गतस्तात देवपुत्रो महाबलः। स तु श्वो वा परश्वो वा मन्ये प्रादुर्भविष्यति।
॥वैशम्पायन उवाच॥ एवमाख्यायमानन्तु छन्नं सत्रेण पाण्डवं। वसन्तं तत्र नाज्ञासीद्विराटो वाहिनीपतिः। २२२५
ततः पार्थोऽभ्यनुज्ञातो विराटेन महात्मना। प्रददौ तानि वासांसि विराटदुहितुः स्वयं।
उत्तरा तु महार्हाणि विविधानि नवानि च। प्रतिगृह्याभवत्प्रीता तानि वासांसि भाविनी।
मन्त्रयित्वा तु कौन्तेय उत्तरेण महात्मना। इति कर्त्तव्यतां सर्व्वां राजन् पार्थे युधिष्ठिरे।
ततस्तथा तद्व्यदधाद्यथावत्पुरुषर्षभ। सह पुत्रेण मत्स्यस्य प्रहृष्टा भरतर्षभाः।
इति श्रीमहाभारते विराटपर्व्वणि गोहरणपर्व्वणि विराटोत्तरसंवादे एकोनसप्ततितमोऽध्यायः समाप्तञ्च गोहरण पर्व्व॥ ६९॥

## ॥अथ वैवाहिकपर्व्व॥ ४॥

॥वैशम्पायन उवाच॥ ततस्तृतीये दिवसे भ्रातरः पञ्च पाण्डवाः। स्नाताः शुक्लाम्बरधराः समये चरितव्रताः। २२३०
युधिष्ठिरं पुरस्कृत्य सर्व्वाभरणभूषिताः। द्वारि मत्ता यथा नागा भ्राजमाना महारथाः।
विराटस्य सभां गत्वा भूमिपालासनेष्वथ। निषेदुः पावकप्रख्याः सर्व्वे धिष्ण्येष्विवाग्नयः।
तेषु तत्रोपविष्टेषु विराटः पृथिवीपतिः। आजगाम सभां कर्त्तुं राजकार्य्याणि सर्व्वशः।

भीमतः पाण्डवान् दृष्ट्वा ज्वलतः पावकानिव । मुहूर्त्तमिव च ध्यात्वा सरोषः पृथिवीपतिः ।
अथ मत्स्योऽब्रवीत्कङ्कं देवरूपमवस्थितं । मरुद्गणैरुपासीनं त्रिदशानामिवेश्वरं । २२६५
स किलाक्षातिवापस्त्वं सभास्तारो मया कृतः । अथ राजासने कस्मादुपविष्टस्त्वलङ्कृतः ।
॥ वैशम्पायन उवाच ॥ परिहासेप्सया वाक्यं विराटस्य निशम्य तत् । स्मयमानोऽर्जुनो राजन्निदं वचनमब्रवीत् ।
॥ अर्जुन उवाच ॥ इन्द्रस्यार्द्धासनं राजन्नयमारोढुमर्हति । ब्रह्मण्यः श्रुतवांस्त्यागी यज्ञशीलो दृढव्रतः ।
एष विग्रहवान् धर्म्म एष वीर्य्यवताम्बरः । एष बुद्ध्याऽधिको लोके तपसाञ्च परायणः ।
एषोऽस्त्रं विविधं वेत्ति त्रैलोक्ये सचराचरे । न चैवान्यः पुमान् वेत्ति न वेत्स्यति कदाचन । २२७०
नदेवा नासुराः केचिन्न मनुष्या न राक्षसाः । गन्धर्व्वयक्षप्रवरा सकिन्नरमहोरगाः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः । पाण्डवानामतिरथो यज्वा धर्म्मपरो वशी ।
महर्षिकल्पो राजर्षिः सर्व्वलोकेषु विश्रुतः । बलवान् धृतिमान् दक्षः सत्यवादी जितेन्द्रियः ।
धनैश्च सञ्चयैश्चैव शक्रवैश्रवणोपमः । यथामनुर्महातेजा लोकानां परिरक्षिता ।
एवमेष महातेजाः प्रजानुग्रहकारकः । अयं कुरूणामृषभो धर्म्मराजो युधिष्ठिरः । २२७५
अस्य कीर्त्तिः स्थिता लोके सूर्य्यस्येवोद्यतः प्रभा । संसरन्ति दिशः सर्व्वा यशसोऽस्य इवांशवः ।
उदितस्येव सूर्य्यस्य तेजसो नु गभस्तयः । एनं दशसहस्राणि कुञ्जराणां तरस्विनां ।
अन्वयुः पृष्ठतो राजन् यावदध्यावसत् कुरून् । त्रिंशदेवं सहस्राणि रथाः काञ्चनमालिनः ।
सदश्वैरुपसंपन्नाः पृष्ठतोऽनुययुस्तदा । एनमष्टशताः सूताः सुमृष्टमणिकुण्डलाः ।
अस्तुवन्मागधैः सार्द्धं पुरा शक्रमिवर्षयः । इमं नित्यमुपासन्त कुरवः किङ्करा यथा । २२८०
सर्व्वे च राजन् राजानो धनेश्वरमिवामराः । एष सर्व्वान् महीपालान् करदान्समकारयत् ।
वैश्यानिव महाभागो विवशान् स्ववशानपि । अष्टाशीतिसहस्राणि स्नातकानां महात्मनां ।
उपजीवन्ति राजानमेनं सुचरितव्रतं । एष वृद्धाननाथांश्च पङ्गूनन्धांश्च मानवान् ।
पुत्रवत्पालयामास प्रजा धर्म्मेण वै विभुः । एष धर्म्मे दमे चैव क्रोधे चापि जितव्रतः ।
महाप्रसादो ब्रह्मण्यः सत्यवादी च पार्थिवः । श्रीप्रतापेन चैतस्य तप्यते स सुयोधनः । २२८५
सगणः सह कर्णेन सौबलेनापि वा विभुः । न शक्यन्तेऽस्य गुणाः प्रसङ्ख्यातुं नरेश्वर ।
एष धर्म्मपरो नित्यमानृशंस्यश्च पाण्डवः । एवमुक्तो महाराजः पाण्डवः पार्थिवर्षभः ।
कथं नार्हति राजार्हमासनं पृथिवीपते ।
इति श्रीमहाभारते विराटपर्व्वणि वैवाहिकपर्व्वणि पाण्डवप्रकाशे सप्ततितमोऽध्यायः ॥ ७० ॥
॥ विराट उवाच ॥ यद्येष राजा कौरव्यः कुन्तीपुत्रो युधिष्ठिरः । कतमोऽस्यार्जुनो भ्राता भीमश्च कतमो बली ।
नकुलः सहदेवो वा द्रौपदी वा यशस्विनी । यदा द्यूतजिताः पार्था न प्राज्ञायन्त ते क्वचित् । २२९०
॥ अर्जुन उवाच ॥ य एष बल्लवो ब्रूते सूदस्तव नराधिप । एष भीमो महाराज भीमवेगपराक्रमः ।
एष क्रोधवशान्हत्वा पर्व्वते गन्धमादने । सौगन्धिकानि दिव्यानि कृष्णार्थे समुपाहरत् ।

गन्धर्व्व एष वै हन्ता कीचकानां दुरात्मनां। व्याघ्रानृक्षान् वराहांश्च हतवान् स्त्रीपुरे तव।
यश्चासीदश्वबन्धस्ते नकुलोऽयं परन्तपः। गोसङ्ख्यः सहदेवश्च माद्रीपुत्त्रौ महारथौ।
शृङ्गारवेशाभरणौ रूपवन्तौ यशस्विनौ। महारथसहस्राणां समर्थौ भरतर्षभौ।           २२९५
एषा पद्मपलाशाक्षी सुमध्या चारुहासिनी। सैरिन्ध्री द्रौपदी राजन् यस्यार्थे कीचका हताः।
अर्जुनोऽहं महाराज व्यक्तं ते श्रोत्रमागतः। भीमादवरजः पार्थो यमाभ्यां चापि पूर्व्वजः।
उषिताः स्मो महाराज सुखं तव निवेशने। अज्ञातवासमुषिता गर्भवास इव प्रजाः।
॥ वैशम्पायन उवाच॥ यदाऽर्जुनेन ते वीराः कथिताः पञ्च पाण्डवाः। तदाऽर्जुनस्य वैराटिः कथयामास विक्रमं।
पुनरेव च तान् पार्थान् दर्शयामास चोत्तरः।           २३००
॥ उत्तर उवाच ॥ य एष जाम्बूनदशुद्धगौरतनुर्महान् सिंह इव प्रवृद्धः। प्रचण्डघोणः पृथुदीर्घनेत्रस्ताम्रायताक्षः कुरुराज एषः।
अयं पुनर्मत्तगजेन्द्रगामी प्रतप्तचामीकरशुद्धगौरः। पृथ्वायतांसो गुरुदीर्घबाहुर्वृकोदरः पश्यत पश्यतैनं।
यस्त्वेष पार्श्वेऽस्य महाधनुष्मान् श्यामो युवा वारणयूथपोपमः। सिंहोन्नतांसो गजराजगामी पद्मायताक्षोऽर्जुन एष वीरः।
राज्ञः समीपे पुरुषोत्तमौ तु यमाविमौ विष्णुमहेन्द्रकल्पौ। मनुष्यलोके सकले समोऽस्ति ययोर्न रूपेण बलेन शीले।
आभ्यान्तु पार्श्वे कनकोत्तमाङ्गी यैषा प्रभा मूर्त्तिमतीव गौरी। नीलोत्पलाभा सुरदेवतेव कृष्णा स्थिता मूर्त्तिमतीव लक्ष्मीः।२३०५
॥ वैशम्पायन उवाच ॥ एवं निवेद्य तान् पार्थान् पाण्डवान् पञ्च भूपतेः। ततोऽर्जुनस्य वैराटिः कथयामास विक्रमं।
॥ उत्तर उवाच ॥ अयं स द्विषतां हन्ता मृगाणामिव केशरी। अचरद्रथवृन्देषु निघ्नंस्तांस्तान् वरान् रथान्।
अनेन विद्धो मातङ्गो महानेकेषुणा हतः। सुवर्णकक्ष्यः सङ्ग्रामे दन्ताभ्यामगमन्महीं।
अनेन विजिता गावो जिताश्च कुरवो युधि। अस्य शङ्खप्रणादेन कर्णौ मे बधिरीकृतौ।
॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं श्रुत्वा मत्स्यराजः प्रतापवान्। उत्तरं प्रत्युवाचेममभिपन्नो युधिष्ठिरे।           २३१०
प्रसादनं पाण्डवस्य प्राप्तकालं हि रोचये। उत्तराञ्च प्रयच्छामि पार्थाय यदि मन्यसे।
॥ उत्तर उवाच ॥ आर्य्याः पूज्याश्च मान्याश्च प्राप्तकालं च मे मतं। पूज्यन्तां पूजनार्हाश्च महाभागाश्च पाण्डवाः।
॥ विराट उवाच ॥ अहं खल्वपि सङ्ग्रामे शत्रूणां वशमागतः। मोचितो भीमसेनेन गावश्चापि जितास्तथा।
एतेषां बाहुवीर्य्येण अस्माकञ्च जयो मृधे। एवं सर्व्वे सहामात्याः कुन्तीपुत्त्रं युधिष्ठिरं।
प्रसादयामो भद्रन्ते सानुजं पाण्डवर्षभं। यदस्माभिरजानद्भिः किञ्चिदुक्तो नराधिप।           २३१५
क्षन्तुमर्हति तत्सर्व्वं धर्म्मात्मा ह्येष पाण्डवः।
॥ वैशम्पायन उवाच ॥ ततो विराटः प्रथमं प्रहृष्टः समेत्य राज्ञा समयञ्चकार। राज्यञ्च सर्व्वं विससर्ज तस्मै सदण्डकोषं सपुरं महात्मा।
पाण्डवांश्च ततः सर्व्वान् मत्स्यराजः प्रतापवान्। धनञ्जयं पुरस्कृत्य दिष्ट्यादिष्ट्येति चाब्रवीत्।
समुपाघ्राय मूर्द्धानं संश्लिष्य च पुनःपुनः। युधिष्ठिरञ्च भीमञ्च माद्रीपुत्त्रौ च पाण्डवौ।
नातृप्यद्दर्शने तेषां विराटो वाहिनीपतिः। स प्रीयमाणो राजानं युधिष्ठिरमथाब्रवीत्।           २३२०
दिष्ट्या भवन्तः सम्प्राप्ताः सर्व्वे कुशलिनो वनात्। दिष्ट्या सम्पालितं कृच्छ्रं अज्ञातं वै दुरात्मभिः।

ददस्व राज्यं पार्थाय यच्चान्यदपि किञ्चन। प्रतिगृह्णन्तु तत्सर्व्वं पाण्डवा अविशङ्कया।
उत्तरां प्रतिगृह्णातु सव्यसाची धनञ्जयः। अयं ह्यौपयिको भर्त्ता तस्याः पुरुषसत्तमः।
एवमुक्तो धर्म्मराजः पार्थमैक्षद्धनञ्जयं। ईक्षितश्चार्जुनो भ्रात्रा मत्स्यं वचनमब्रवीत्।
प्रतिगृह्णाम्यहं राजन् स्नुषां दुहितरं तव। युक्त एव हि सम्बन्धो मत्स्यभारतयोरपि। २१३५
इति श्रीमहाभारते विराटपर्व्वणि वैवाहिकपर्व्वणि उत्तराविवाहप्रस्तावे एकसप्ततितमोऽध्यायः ॥ ७१ ॥
॥ विराट उवाच ॥ किमर्थं पाण्डवश्रेष्ठ भार्य्यां दुहितरं मम। प्रतिग्रहीतुं नेमां त्वं मया दत्तामिहेच्छसि।
॥ अर्जुन उवाच ॥ अन्तःपुरेऽहमुषितः सदा पश्यन् सुतां तव। रहस्यञ्च प्रकाशञ्च विश्वस्ता पितृवन्मयि।
प्रियो बहुमतश्चाहं नर्त्तको गीतकोविदः। आचार्य्यवच्च मां नित्यं मन्यते दुहिता तव।
वयःस्थया तया राजन् सह संवत्सरोषितः। अतिशङ्का भवेत् स्थाने तव लोकस्य वा विभो।
तस्मान्निमन्त्रयेऽहन्ते दुहितां मनुजाधिप। शुद्धो जितेन्द्रियो दान्तस्तस्याः शुद्धिः कृता मया। २१४०
स्नुषायां दुहितुर्व्वापि पुत्रे चात्मनि वा पुनः। अत्र शङ्कां न पश्यामि तेन शुद्धिर्भविष्यति।
अभिशापादहं भीतो मिथ्यावादात् परन्तप। स्नुषार्थमुत्तरां राजन् प्रतिगृह्णामि ते सुतां।
स्वस्रीयो वासुदेवस्य साक्षाद्देवशिशुर्य्यथा। दयितश्चक्रहस्तस्य बाल एवास्त्रकोविदः।
अभिमन्युर्म्महाबाहुः पुत्रो मम विशाम्पते। जामाता तव युक्तो वै भर्त्ता च दुहितुस्तव।
॥ विराट उवाच ॥ उपपन्नं कुरुश्रेष्ठे कुन्तीपुत्रे धनञ्जये। य एवं धर्म्मनित्यश्च जातज्ञानश्च पाण्डवः। २१४५
यत् कृत्यं मन्यसे पार्थ क्रियतां तदनन्तरं। सर्व्वे कामाः समृद्धाश्च सम्बन्धी यस्य मेऽर्जुनः।
॥ वैशम्पायन उवाच ॥ एवं ब्रुवति राजेन्द्रे कुन्तीपुत्रो युधिष्ठिरः। अन्वशासत् समं योगं समये मत्स्यपार्थयोः।
ततो मित्रेषु सर्व्वेषु वासुदेवे च भारत। प्रेषयामास कौन्तेयो विराटश्च महीपतिः।
ततस्त्रयोदशे वर्षे निवृत्ते पञ्च पाण्डवाः। उपप्लव्ये विराटस्य समपद्यन्त सर्व्वशः।
अभिमन्युञ्च बीभत्सुरानिनाय जनार्द्दनं। आनर्त्तेभ्योऽपि दाशार्हानानयामास पाण्डवः। २१५०
काशीराजश्च शैव्यश्च प्रीयमाणौ युधिष्ठिरे। अक्षौहिणीभ्यां सहितावागतौ पृथिवीपती।
अक्षौहिण्या च सहितो यज्ञसेनो महाबलः। द्रौपद्याश्च सुता वीरा शिखण्डी चापराजितः।
धृष्टद्युम्नश्च दुर्द्धर्षः सर्व्वशस्त्रभृताम्बरः। समस्ताक्षौहिणीपाला यज्वानो भूरिदक्षिणाः।
वेदाध्ययनसम्पन्नाः सर्व्वे शूरास्तनुत्यजः। तानागतानभिप्रेक्ष्य मत्स्यो धर्म्मभृताम्बरः।
पूजयामास विधिवत् सभृत्यबलवाहनान्। प्रीतोऽभवद्दुहितरं दत्वा तामभिमन्यवे। २१५५
ततः प्रत्युपयातेषु पार्थिवेषु ततस्ततः। तत्रागमद्वासुदेवो वनमाली हलायुधः।
कृतवर्म्मा च हार्द्दिक्यो युयुधानश्च सात्यकिः। अनाधृष्टिस्तथाऽक्रूरः शाम्बो निशठ एव च।
अभिमन्युमुपादाय सह मात्रा परन्तपाः। इन्द्रसेनादयश्चैव रथैस्तैः सुसमाहितैः।
आययुः सहिताः सर्व्वे परिसंवत्सरोषिताः। दशनागसहस्राणि हयानाञ्च दशायुतं।
रथानामर्व्वुदं पूर्णं निखर्व्वञ्च पदातिनां। वृष्ण्यन्धकाश्च बहवो भोजाश्च परमौजसः। २१६०

अभ्ययुर्वृष्णिशार्दूलं वासुदेवं महाद्युतिं। स्त्रियो रत्नानि वासांसि पृथक्पृथगनेकशः।
ततो विवाहो विधिवद्ववृधे मत्स्यपार्थयोः। ततः शङ्खाश्च भेर्य्यश्च गोमुखाडम्बरास्तथा।
पार्थैः संयुज्यमानस्य नेदुर्मत्स्यस्य वेश्मनि। उच्चावचान्मृगान् जघ्नुर्मेध्यांश्च शतशः पशून्।
सुरामैरेयपानानि प्रभूतान्यभ्यहारयन्। गायनाख्यानशीलाश्च नटवैतालिकास्तथा।
स्तुवन्तस्तानुपातिष्ठन् सूताश्च सह मागधैः। सुदेष्णाञ्च पुरस्कृत्य मत्स्यानाञ्च वरस्त्रियः। २२६५
आजग्मुश्चारुसर्व्वाङ्ग्यः सुमृष्टमणिकुण्डलाः। वर्णोपपन्नास्ता नार्य्यो रूपवत्यः स्वलङ्कृताः।
सर्व्वाश्चाभ्यभवत्कृष्णा रूपेण यशसा श्रिया। परिवार्य्योत्तरां तास्तु राजपुत्रीमलङ्कृतां।
सुतामिव महेन्द्रस्य पुरस्कृत्योपतस्थिरे। तां प्रत्यगृह्णात्कौन्तेयः सुतस्यार्थे धनञ्जयः।
सौभद्रस्यानवद्याङ्गीं विराटतनयां तदा। तत्रातिष्ठन्महाराजो रूपमिन्द्रस्य धारयन्।
स्नुषां तां प्रतिजग्राह कुन्तीपुत्रो युधिष्ठिरः। प्रतिगृह्य च तां पार्थः पुरस्कृत्य जनार्द्दनं। २२७०
विवाहं कारयामास सौभद्रस्य महात्मनः। तस्मै सप्तसहस्राणि हयानां वातरंहसां।
द्वे च नागशते मुख्ये प्रादाद्बहुधनं तदा। हुत्वा सम्यक् समिद्धाग्निं अर्चयित्वा द्विजन्मनः।
राज्यं बलञ्च कोषञ्च सर्व्वमात्मानमेव च। कृते विवाहे तु तदा धर्म्मपुत्रो युधिष्ठिरः।
ब्राह्मणेभ्यो ददौ वित्तं यदुपाहरदच्युतः। गोसहस्राणि रत्नानि वस्त्राणि विविधानि च।
भूषणानि च मुख्यानि यानानि शयनानि च। भोजनानि च हृद्यानि पानानि विविधानि च। २२७५
तन्महोत्सवसङ्काशं हृष्टपुष्टजनावृतं। नगरं मत्स्यराजस्य शुशुभे भरतर्षभ।

इति श्रीमहाभारते विराटपर्व्वणि वैवाहिकपर्व्वणि उत्तराविवाहे द्विसप्ततितमोऽध्यायः समाप्तं वैवाहिकपर्व्व समाप्तञ्च विराटपर्व्व॥ ७२॥

अत्र विराटपर्व्वणि अध्यायानां श्लोकानाञ्च व्यासोक्तसङ्ख्याऽधिकसङ्ख्या दृश्यते लिपिकरप्रमादात् कुत्रकुत्राधिक्यं तन्निश्चयो न भवतीति॥

---

# श्रीमहाभारतं

## ॥ उद्योगपर्व्व ॥

॥ श्रीगणेशाय नमः ॥ नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं । देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ।

॥ वैशम्पायन उवाच ॥ कृत्वा विवाहन्तु कुरुप्रवीरास्तदाऽभिमन्योर्मुदिताः स्वपक्षाः । विश्रम्य रात्रावुषसि प्रतीताः सभां
विराटस्य ततोऽभिजग्मुः ।

सभा तु सा मत्स्यपतेः समृद्धा मणिप्रवेकोत्तमरत्नचित्रा । न्यस्तासना माल्यवती सुगन्धा तामभ्ययुस्ते नरराजवृद्धाः ।
अथासनान्याविशतां पुरस्तादुभौ विराटद्रुपदौ नरेन्द्रौ । वृद्धाश्च मान्याः पृथिवीपतीनां पित्रा समं रामजनार्द्दनौ च ।
पाञ्चालराजस्य समीपतस्तु शिनिप्रवीरः सहरौहिणेयः । मत्स्यस्य राज्ञस्तु सुसन्निकृष्टे जनार्दनश्चैव युधिष्ठिरश्च ।
सुताश्च सर्व्वे द्रुपदस्य राज्ञो भीमार्जुनौ माद्रवतीसुतौ च । प्रद्युम्नशाम्बौ च युधि प्रवीरौ विराटपुत्त्रैश्च सहाभिमन्युः । ५
सर्व्वे च शूराः पितृभिः समाना वीर्य्येण रूपेण तथा बलेन । उपाविशन् द्रौपदेयाः कुमाराः सुवर्णचित्रेषु वरासनेषु ।
तथोपविष्टेषु महारथेषु विभ्राजमानाभरणाम्बरेषु । रराज सा राजवती समृद्धा ग्रहैरिव द्यौर्व्विमलैरुपेता ॥

ततः कथास्ते समवाययुक्ताः कृत्वा विचित्राः पुरुषप्रवीराः । तस्थुर्मुहूर्त्तं परिचिन्तयन्तः कृष्णं नृपास्ते समुदीक्षमाणाः ।
कथान्तमासाद्य च माधवेन सङ्घट्टिताः पाण्डवकार्य्यहेतोः । ते राजसिंहाः सहिता ह्यशृण्वन्वाक्यं महार्थञ्च महोदयञ्च ।

॥ श्रीकृष्ण उवाच ॥ सर्व्वैर्भवद्भिर्व्विदितं यथाऽयं युधिष्ठिरः सौबलेनाक्षवत्यां । जितो निकृत्याऽपहृतञ्च राज्यं वनप्रवासे समयः
कृतश्च । १०

शक्तैर्व्विजेतुं तरसा महीं च सत्ये स्थितैः सत्यरथैर्यथावत् । पाण्डोः सुतैस्तद्व्रतमुग्ररूपं वर्षाणि षट्सप्त च चीर्णमग्र्यैः ।
त्रयोदशश्चैव सुदुस्तरोऽयमज्ञायमानैर्भवतां समीपे । क्लेशानसह्यान् विविधान् सहद्भिर्यथोदितं तद्विदितञ्च सर्व्वैः ।
एतैः परप्रेष्यनियोगयुक्तैस्तीर्णो महद्भिः स्वबलेन राजन् । एवं गते धर्म्मसुतस्य राज्ञो दुर्य्योधनस्यापि च यद्धितं स्यात् ।
तच्चिन्तयध्वं कुरुपाण्डवानां धर्म्यञ्च युक्तञ्च यशस्करञ्च । अधर्म्मयुक्तं नच कामयेत राज्यं सुराणामपि धर्म्मराजः ।
धर्म्मार्थयुक्तन्तु महीपतित्वं ग्रामेऽपि कस्मिंश्चिदयं बुभूषेत् । पित्र्यं हि राज्यं विदितं नृपाणां यथाऽपकृष्टं धृतराष्ट्रपुत्त्रैः । १५
मिथ्योपचारेण यथा ह्यनेन कृच्छ्रं महत्प्राप्तमसह्यरूपं । न चापि पार्थो विजितो रणे तैः स्वतेजसा धृतराष्ट्रस्य पुत्त्रैः ।

तथाऽपि राजा सहितः सुहृद्भिरभीप्सतेऽनामयमेव तेषां। यत्तु स्वयं पाण्डुसुतैर्व्विजित्य समाहृतं भूमिपतीन् निपीड्य।
तत्प्रार्थयन्ते पुरुषप्रवीराः कुन्तीसुता माद्रवतीसुतौ च। बालास्त्विमे तैर्व्विविधैरुपायैः संप्रार्थिता हन्तुममित्रसाहैः।
राज्यं जिहीर्षद्भिरसद्भिरुग्रैः सर्व्वं च तद्वो विदितं यथावत्। तेषाञ्च लोभं प्रसमीक्ष्य वृद्धं धर्म्मज्ञतां चापि युधिष्ठिरस्य।
सम्बन्धितां चापि समीक्ष्य तेषां मतिं कुरुध्वं सहिताः पृथक् च। इमे च सत्येऽभिरताः सदैव तं पालयित्वा समयं
यथावत्। २०
अतोऽन्यथा तैरुपचर्य्यमाणा हन्युः समेतान् धृतराष्ट्रपुत्रान्। तैर्व्विप्रकारञ्च निशम्य कार्य्ये सुहृज्जनास्तान् परिवारयेरन्।
युद्धेन बाधेयुरिमांस्तथैव तैर्बाध्यमाना युधि तांश्च हन्युः। तथाऽपि नेमेऽल्पतया समर्थास्तेषां जयायेति भवेन्मतं वः।
समेत्य सर्व्वे सहिताः सुहृद्भिस्तेषां विनाशाय यतेयुरेव। दुर्य्योधनस्यापि मतं यथावन्न ज्ञायते किन्नु करिष्यतीति।
अज्ञायमाने च मते परस्य किं स्यात् समारभ्यतमं मतं वः। तस्मादितो गच्छतु धर्म्मशीलः शुचिः कुलीनः पुरुषोऽ
प्रमत्तः।
दूतः समर्थः प्रशमाय तेषां राज्यार्द्धदानाय युधिष्ठिरस्य। निशम्य वाक्यं तु जनार्द्दनस्य धर्म्मार्थयुक्तं मधुरं समञ्च। २५
समाददे वाक्यमथाग्रजोऽस्य सम्पूज्य वाक्यं तदतीव राजन्।
इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि पुरोहितयाने प्रथमोऽध्यायः ॥ १ ॥
॥ बलदेव उवाच ॥ श्रुतं भवद्भिर्गदपूर्व्वजस्य वाक्यं यथा धर्म्मवदर्थवच्च। अजातशत्रोश्च हितं हितञ्च दुर्य्योधनस्यापि तथैव
राज्ञः।
अर्द्धं हि राज्यस्य विसृज्य वीराः कुन्तीसुतास्तस्य कृते यतन्ते। प्रदाय चार्द्धं धृतराष्ट्रपुत्रः सुखी सहास्माभिरतीव मोदेत्।
लब्ध्वा हि राज्यं पुरुषप्रवीराः सम्यक् प्रवृत्तेषु परेषु चैव। ध्रुवं प्रशान्ताः सुखमाविशेयुस्तेषां प्रशान्तिश्च हितं प्रजानां।
दुर्य्योधनस्यापि मतञ्च वेत्तुं वक्तुं च वाक्यानि युधिष्ठिरस्य। प्रियं मम स्याद्यदि तत्र कश्चिद्व्रजेत् शमार्थं कुरुपाण्डवानां ३०
स भीष्ममामन्त्र्य कुरुप्रवीरं वैचित्रवीर्य्यञ्च महानुभावं। द्रोणं सपुत्रं विदुरं कृपञ्च गान्धारराजञ्च ससूतपुत्रं।
सर्व्वे च येऽन्ये धृतराष्ट्रपुत्रा बलप्रधाना निगमप्रधानाः। स्थिताश्च धर्म्मेषु यथा स्वकेषु लोकप्रवीराः श्रुतकालवृत्ताः।
एतेषु सर्व्वेषु समागतेषु पौरेषु वृद्धेषु च सङ्गतेषु। ब्रवीतु वाक्यं प्रणिपातयुक्तं कुन्तीसुतस्यार्थकरं यथा स्यात्।
सर्व्वास्ववस्थासु च ते न कोप्या ग्रस्तो हि सोऽर्थो बलमाश्रितैस्तैः। प्रियाभ्युपेतस्य युधिष्ठिरस्य द्यूते प्रमत्तस्य हृतं स्वराज्यं।
निवार्य्यमाणश्च कुरुप्रवीरः सर्व्वैः सुहृद्भिर्ह्ययमप्यतज्ज्ञः। गान्धारराजस्य सुतं मताक्षं समाह्वयद्देवितुमाजमीढः। ३५
दुरोदरास्तत्र सहस्रशोऽन्ये युधिष्ठिरो यान् विषहेत जेतुं। उत्सृज्य तान् सौबलमेव चायं समाह्वयत्तेन जितोऽक्षवत्यां।
स दीव्यमानः प्रतिदीव्यदेनं अक्षेषु नित्यं तु पराङ्मुखेषु। संरम्भमाणो विजितः प्रसह्य तत्रापराधः शकुनेर्न कश्चित्।
तस्मात्प्रणम्यैव वचो ब्रवीतु वैचित्रवीर्य्यं बहुसामयुक्तं। तथा हि शक्यो धृतराष्ट्रपुत्रः स्वार्थे नियोक्तुं पुरुषेण तेन।
अयुद्धमाकाङ्क्षत कौरवाणां साम्नैव दुर्य्योधनमाह्वयध्वं। साम्ना जितोऽर्थोऽर्थकरो भवेत युद्धेन यो भवितानेह सोऽर्थः।
॥ वैशम्पायन उवाच ॥ एवं ब्रुवत्येव मधुप्रवीरे शिनिप्रवीरः सहसोत्पपात। तच्चापि वाक्यं परिनिन्द्य तस्य समाददे
वाक्यमिदं समन्युः। ४०

यादृशः पुरुषस्यात्मा तादृशं सम्प्रभाषते। यथारूपोऽन्तरात्मा ते तथा रूपं प्रभाषसे।
सन्ति वै पुरुषाः शूराः सन्ति कापुरुषास्तथा। उभाविमौ दृढौ पक्षौ दृश्येते पुरुषान्प्रति।
एकस्मिन्नेव जायेते कुले क्लीबमहाबलौ। फलाफलवती शाखे यथैकस्मिन् वनस्पतौ।
नाभ्यसूयामि ते वाक्यं ब्रुवतो लाङ्गलध्वज। ये तु शृण्वन्ति ते वाक्यं तानसूयामि माधव।
कथं हि धर्मराजस्य दोषमल्पमपि ब्रुवन्। लभते परिषन्मध्ये व्याहर्त्तुमकुतोभयः। ४५
समाहूय महात्मानं जितवन्तोऽक्षकोविदाः। अनक्षज्ञं यथाश्रद्धं तेषु धर्मजयः कुतः।
यदि कुन्तीसुतं गेहे क्रीडन्तं भ्रातृभिः सह। अभिगम्य जयेयुस्ते तत्तेषां धर्मतो भवेत्।
समाहूय तु कौन्तेयं क्षत्रधर्मरतं सदा। निकृत्या जितवन्तस्ते किन्नु तेषां परं शुभं।
कथं प्रणिपतेच्चायमिह कृत्वा पणं परं। वनवासाद्विमुक्तस्तु प्राप्तः पैतामहं पदं।
यद्ययं परवित्तानि कामयेत युधिष्ठिरः। एवमप्ययमत्यन्तं परं नार्हति याचितुं। ५०
कथञ्च धर्मयुक्तास्ते न च राज्यं जिहीर्षवः। निवृत्तवासान् कौन्तेयान् य आहुर्विदिता इति।
अनुनीता हि भीष्मेण द्रोणेन च महात्मना। न व्यवस्यन्ति पाण्डूनां प्रदातुं पैतृकं पदं।
अहन्तु तान् शितैर्बाणैरनुनीय रणे बलात्। पादयोः पातयिष्यामि कौन्तेयस्य महात्मनः।
अथ ते न व्यवस्यन्ति प्रणिपाताय धीमतः। गमिष्यन्ति सहामात्या यमस्य सदनं प्रति।
न हि ते युयुधानस्य संरब्धस्य युयुत्सतः। वेगं समर्थाः संसोढुं वज्रस्येव महीधराः। ५५
को हि गाण्डीवधन्वानं कश्च चक्रायुधं युधि। माञ्चापि विषहेत् को नु कश्च भीमं दुरासदं।
यमौ च दृढधन्वानौ यमकालोपमद्युती। को जिजीविषुरासीदेद्धृष्टद्युम्नञ्च पार्षतं।
पञ्चेमान्पाण्डवेयांस्तु द्रौपद्याः कीर्त्तिवर्द्धनान्। समप्रमाणान् पाण्डूनां समवीर्यान् मदोत्कटान्।
सौभद्रञ्च महेष्वासममरैरपि दुःसहं। गदप्रद्युम्नशाम्बांश्च कालवज्रानलोपमान्।
ते वयं धृतराष्ट्रस्य पुत्रं शकुनिना सह। कर्णेन तु निहत्याजावभिषेक्ष्याम पाण्डवं। ६०
नाधर्म्मो विद्यते कश्चिच्छत्रून्हत्वाततायिनः। अधर्म्म्यमयशस्यञ्च शात्रवाणां प्रयाचनं।
हृद्गतस्तस्य यः कामस्तं कुरुध्वमतन्द्रिताः। विसृष्टं धृतराष्ट्रेण राज्यं प्राप्नोतु पाण्डवः।
अद्य पाण्डुसुतो राज्यं लभतां वा युधिष्ठिरः। निहता वा मया सर्व्वे स्वप्स्यन्ति वसुधातले।
इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि सात्यकिक्रोधवाक्ये द्वितीयोऽध्यायः॥ २ ॥
॥ द्रुपद उवाच॥ एवमेतन्महाबाहो भविष्यति न संशयः। न हि दुर्य्योधनो राज्यं मधुरेण प्रदास्यति।
अनुवर्त्स्यति तञ्चापि धृतराष्ट्रः सुतप्रियः। भीष्मद्रोणौ च कार्पण्यात् मौर्ख्याद्राधेयसौबलौ। ६५
बलदेवस्य वाक्यन्तु मम ज्ञाने न युज्यते। एतद्धि पुरुषेणाग्रे कार्य्यं सुनयमिच्छता।
न तु वाच्यो मृदुवचो धार्त्तराष्ट्रः कथञ्चन। न हि मार्दवसाध्योऽसौ पापबुद्धिर्मतो मम।
मार्दवं गर्दभे कुर्य्याद्गोषु तीक्ष्णं समाचरेत्। मृदु दुर्य्योधने वाक्यं यो ब्रूयात्पापचेतसि।
मृदु वै मन्यते पापो भाषमाणमशक्तिकं। जितमर्थं विजानीयादबुधो मार्द्दवे सति।

एतच्चैव करिष्यामो यत्नश्च क्रियतामिह। प्रस्थापयामो मित्रेभ्यो बलान्युद्योजयन्तु नः। ७०
शल्यस्य धृष्टकेतोश्च जयत्सेनस्य वा विभो। केकेयानाञ्च सर्व्वेषां दूता गच्छन्तु शीघ्रगाः।
स च दुर्य्योधनो नूनं प्रेरयिष्यति सर्व्वशः। पूर्व्वाभिपन्नाः सन्तश्च भजन्ते पूर्व्वचोदनं।
तत्त्वरध्वं नरेन्द्राणां पूर्व्वमेव प्रचोदने। महद्धि कार्य्यं वोढव्यमिति मे वर्त्तते मतिः।
शल्यस्य प्रेष्यतां शीघ्रं ये च तस्यानुगा नृपा। भगदत्ताय राज्ञे च पूर्व्वसागरवासिने।
अमितौजसे तथोग्राय हार्द्दिक्यायाहुकाय च। दीर्घप्रज्ञाय शूराय रोचमानाय वा विभो। ७५
आनीयतां बृहन्तश्च सेनाबिन्दुश्च पार्थिवः। सेनजित्प्रतिविन्ध्यश्च चित्रवर्मा सुवास्तुकः।
वाह्लीको मुञ्जकेशश्च चैद्याधिपतिरेव च। सुपार्श्वश्च सुबाहुश्च पौरवश्च महारथः।
शकानां पह्लवानाञ्च दरदानाञ्च ये नृपाः। सुरारिश्च नदीजश्च कर्णवेष्टश्च पार्थिवः।
नीलश्च वीरधर्म्मा च भूमिपालश्च वीर्य्यवान्। दुर्जयो दन्तवक्रश्च रुक्मी च जनमेजयः।
आषाढो वायुवेगश्च पूर्व्वपाली च पार्थिवः। भूरितेजा देवकश्च एकलव्यः सहात्मजैः। ८०
कारूषकाश्च राजानः क्षेमधूर्त्तिश्च वीर्य्यवान्। काम्बोजा ऋषिका ये च पश्चिमानूपकाश्च ये।
जयत्सेनश्च काश्यश्च तथा पञ्चनदा नृपाः। क्राथपुत्त्रश्च दुर्द्धर्षः पार्व्वतीयाश्च ये नृपाः।
जानकिश्च सुशर्म्मा च मणिमान्पोतिमत्स्यकः। पांशुराष्ट्राधिपश्चैव धृष्टकेतुश्च वीर्य्यवान्।
पौण्ड्रश्च दण्डधारश्च बृहत्सेनश्च वीर्य्यवान्। अपराजितो निषादश्च श्रेणिमान्वसुमानपि।
बृहद्बलो महौजाश्च बाहुः परपुरञ्जयः। समुद्रसेनो राजा च सह पुत्त्रेण वीर्य्यवान्। ८५
उद्भवः क्षेमकश्चैव वाटधानश्च पार्थिवः। श्रुतायुश्च दृढायुश्च शाल्वपुत्त्रश्च वीर्य्यवान्।
कुमारश्च कलिङ्गानामीश्वरो युद्धदुर्म्मदः। एतेषां प्रेष्यतां शीघ्रमेतद्धि मम रोचते।
अयञ्च ब्राह्मणो विद्वान् मम राजन् पुरोहितः। प्रेष्यतां धृतराष्ट्राय वाक्यमस्मै प्रदीयतां।
यथा दुर्य्योधनो वाच्यो यथा शान्तनवो नृपः। धृतराष्ट्रो यथा वाच्यो द्रोणश्च रथिनां वरः।
इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि पुरोहितयाने तृतीयोऽध्यायः॥ ३ ॥
॥ वासुदेव उवाच ॥ उपपन्नमिदं वाक्यं सोमकानां धुरन्धरे। अर्थसिद्धिकरं राज्ञः पाण्डवस्यामितौजसः। ९०
एतच्च पूर्व्वकार्य्यं नः सुनीतमभिकाङ्क्षतां। अन्यथा ह्याचरन् कर्म्म पुरुषः स्यात् सुबालिशः।
किन्तु सम्बन्धकं तुल्यमस्माकं कुरुपाण्डुषु। यथेष्टं वर्त्तमानेषु पाण्डवेषु च तेषु च।
ते विवाहार्थमानीता वयं सर्व्वे तथा भवान्। कृते विवाहे मुदिता गमिष्यामो गृहान् प्रति।
भवान् वृद्धतमो राज्ञां वयसा च श्रुतेन च। शिष्यवत्ते वयं सर्व्वे भवामिह न संशयः।
भवन्तं धृतराष्ट्रश्च सततं बहु मन्यते। आचार्य्ययोः सखा चासि द्रोणस्य च कृपस्य च। ९५
स भवान् प्रेषयत्वद्य पाण्डवार्थकरं वचः। सर्व्वेषां निश्चितं तन्नः प्रेषयिष्यति यद्भवान्।
यदि तावच्छमं कुर्य्यात् न्यायेन कुरुपुङ्गवः। न भवेत् कुरुपाण्डूनां सौभ्रात्रेण महान् क्षयः।
अथ दर्पान्वितो मोहान्नकुर्य्याद्धृतराष्ट्रजः। अन्येषां प्रेषयित्वा च पश्चादस्मान् समाह्वयेः।

ततो दुर्य्योधनो मन्दः सहामात्यः सबान्धवः। निष्ठामापत्स्यते मूढः क्रुद्धे गाण्डीवधन्वनि।

॥ वैशम्पायन उवाच ॥ ततः सत्कृत्य वार्ष्णेयं विराटः पृथिवीपतिः। गृहान्प्रस्थापयामास सगणं सहबान्धवं। १००

द्वारकान्तु गते कृष्णे युधिष्ठिरपुरोगमाः। चक्रुः साङ्ग्रामिकं सर्व्वं विराटश्च महीपतिः।

ततः सम्प्रेषयामास विराटः सह बान्धवैः। सर्व्वेषां भूमिपालानां द्रुपदश्च महीपतिः।

वचनात् कुरुसिंहानां मत्स्यपाञ्चालयोश्च ते। समाजग्मुर्महीपालाः सम्प्रहृष्टा महाबलाः।

तच्छ्रुत्वा पाण्डुपुत्राणां समागच्छन्महद्बलं। धृतराष्ट्रसुताश्चापि समानिन्युर्महीपतीन्।

समाकुला मही राजन् कुरुपाण्डवकारणात्। तदा समभवत्कृत्स्ना सम्प्रयाणे महीक्षितां। १०५

सङ्कुला च तदा भूमिश्चतुरङ्गबलान्विता। बलानि तेषां वीराणामागच्छन्ति ततस्ततः।

चालयन्तीव गां देवीं सपर्व्वतवनामिमां। ततः प्रज्ञावयोवृद्धं पाञ्चाल्यः स्वपुरोहितं।

कुरुभ्यः प्रेषयामास युधिष्ठिरमते स्थितः।

इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि पाञ्चाल्यपुरोहितयाने चतुर्थोऽध्यायः ॥ ४ ॥

॥ द्रुपद उवाच ॥ भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः। बुद्धिमत्सु नराः श्रेष्ठा नरेष्वपि द्विजातयः।

द्विजेषु वैद्याः श्रेयांसो वैद्येषु कृतबुद्धयः। कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः। ११०

स भवान् कृतबुद्धीनां प्रधान इति मे मतिः। कुलेन च विशिष्टोऽसि वयसा च श्रुतेन च।

प्रज्ञया सदृशश्चासि शुक्रेणाङ्गिरसेन च। विदितञ्चापि ते सर्व्वं यथावृत्तः स कौरवः।

पाण्डवश्च यथावृत्तः कुन्तीपुत्त्रो युधिष्ठिरः। धृतराष्ट्रस्य विदिते वञ्चिताः पाण्डवाः परैः।

विदुरेणानुनीतोऽपि पुत्त्रमेवानुवर्त्तते। शकुनिर्बुद्धिपूर्व्वं हि कुन्तीपुत्त्रं समाह्वयत्।

अनक्षज्ञं मताक्षः सन् क्षत्रवृत्ते स्थितं शुचिं। ते तथा वञ्चयित्वा तु धर्म्मराजं युधिष्ठिरं। ११५

न कस्याञ्चिदवस्थायां राज्यं दास्यन्ति वै स्वयं। भवांस्तु धर्म्मसंयुक्तं धृतराष्ट्रं ब्रुवन्वचः।

मनांसि तस्य योधानां ध्रुवमावर्त्तयिष्यति। विदुरश्चापि तद्वाक्यं साधयिष्यति तावकं।

भीष्मद्रोणकृपादीनां भेदं संजनयिष्यति। अमात्येषु च भिन्नेषु योधेषु विमुखेषु च।

पुनरेकत्रकरणं तेषां कर्म्म भविष्यति। एतस्मिन्नन्तरे पार्थाः सुखमेकाग्रबुद्धयः।

सेनाकर्म्म करिष्यन्ति द्रव्याणां चैव सञ्चयं। भिद्यमानेषु च स्वेषु लम्बमाने तथा त्वयि। १२०

न तथा ते करिष्यन्ति सेनाकर्म्म न संशयः। एतत्प्रयोजनं चात्र प्राधान्येनोपलभ्यते।

सङ्गत्या धृतराष्ट्रश्च कुर्य्याद्धर्म्म्यं वचस्तव। स भवान् धर्म्मयुक्तश्च धर्म्म्यं तेषु समाचरन्।

कृपालुषु परिक्लेशान्पाण्डवीयान् प्रकीर्त्तयन्। वृद्धेषु कुलधर्म्मञ्च ब्रुवन् पूर्व्वैरनुष्ठितं।

विभेत्स्यति मनांस्येषामिति मे नात्र संशयः। न च तेभ्यो भयं तेऽस्ति ब्राह्मणो ह्यसि वेदवित्।

दूतकर्म्मणि युक्तश्च स्थविरश्च विशेषतः। स भवान्पुष्ययोगेन मुहूर्त्तेन जयेन च। १२५

कौरवेयान्प्रयात्वाशु कौन्तेयस्यार्थसिद्धये।

॥ वैशम्पायन उवाच ॥ तथाऽनुशिष्टः प्रययौ द्रुपदेन महात्मना। पुरोधा वृत्तसम्पन्नो नगरं नागसाह्वयं।

शिष्यैः परिवृतो विद्वान् नीतिशास्त्रार्थकोविदः। पाण्डवानां हितार्थाय कौरवान् प्रति जग्मिवान्।

इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि पुरोहितयाने पञ्चमोऽध्यायः॥ ५॥

॥ वैशम्पायन उवाच॥ पुरोहितं ते प्रस्थाप्य नगरं नागसाह्वयं। दूतान् प्रस्थापयामासुः पार्थिवेभ्यस्ततस्ततः।
प्रस्थाप्य दूतानन्यत्र द्वारकां पुरुषर्षभः। स्वयं जगाम कौरव्यः कुन्तीपुत्रो धनञ्जयः। १६०
गते द्वारवतीं कृष्णे बलदेवे च माधवे। सह वृष्ण्यन्धकैः सर्व्वैर्भोजैश्च शतशस्तदा।
सर्व्वमागमयामास पाण्डवानां विचेष्टितं। धृतराष्ट्रात्मजो राजा गूढैः प्रणिहितैश्चरैः।
स श्रुत्वा माधवं यान्तं सदश्वैरनिलोपमैः। बलेन नातिमहता द्वारकामभ्ययात्पुरीं।
तमेव दिवसं चापि कौन्तेयः पाण्डुनन्दनः। आनर्त्तनगरीं रम्यां जगामाशु धनञ्जयः।
तौ यात्वा पुरुषव्याघ्रौ द्वारकां कुरुनन्दनौ। सुप्तं ददृशतुः कृष्णं शयानं चाभिजग्मतुः। १६५
ततः शयाने गोविन्दे प्रविवेश सुयोधनः। उच्छीर्षतश्च कृष्णस्य निषसाद वरासने।
ततः किरीटी तस्यानु प्रविवेश महामनाः। पश्चार्द्धे च स कृष्णस्य प्रह्वोऽतिष्ठत्कृताञ्जलिः।
प्रतिबुद्धः स वार्ष्णेयो ददर्शाग्रे किरीटिनं। स तयोः स्वागतं कृत्वा यथावत्प्रतिपूज्य तौ।
तदागमनजं हेतुं पप्रच्छ मधुसूदनः। ततो दुर्य्योधनः कृष्णमुवाच प्रहसन्निव।
विग्रहेऽस्मिन् भवान् साह्यं मम दातुमिहार्हति। समं हि भवतः सख्यं मयि चैवार्ज्जुनेऽपि च। १७०
तथा सम्बन्धकं तुल्यमस्माकं त्वयि माधव। अहं चाभिगतः पूर्व्वं त्वामद्य मधुसूदन।
पूर्व्वं चाभिगतं सन्तो भजन्ते पूर्व्वसारिणः। त्वञ्च श्रेष्ठतमो लोके सतामद्य जनार्द्दन।
सततं सम्मतश्चैव सद्वृत्तमनुपालय।

॥ कृष्ण उवाच॥ भवानभिगतः पूर्व्वमत्र मे नास्ति संशयः। दृष्टस्तु प्रथमं राजन् मया पार्थो धनञ्जयः।
तव पूर्व्वाभिगमनात्पूर्व्वं चाप्यस्य दर्शनात्। साहाय्यमुभयोरेव करिष्यामि सुयोधन। १७५
प्रवारणन्तु बालानां पूर्व्वं कार्य्यमिति श्रुतिः। तस्मात्प्रवारणं पूर्व्वमर्हः पार्थो धनञ्जयः।
मत्संहननतुल्यानां गोपानामर्ब्बुदं महत्। नारायणा इति ख्याताः सर्व्वे संग्रामयोधिनः।
ते वा युधि दुराधर्षा भवन्त्वेकस्य सैनिकाः। अयुध्यमानः संग्रामे न्यस्तशस्त्रोऽहमेकतः।
आभ्यामन्यतरं पार्थ यत्ते हृद्यतरं मतं। तद्वृणीतां भवानेव प्रवार्य्यस्त्वं हि धर्म्मतः।

॥ वैशम्पायन उवाच॥ एवमुक्तस्तु कृष्णेन कुन्तीपुत्रो धनञ्जयः। अयुध्यमानं संग्रामे वरयामास केशवं। १८०
नारायणममित्रघ्नं कामाज्जातमजं नृषु। सर्व्वक्षत्रस्य पुरतो देवदानवयोरपि।
दुर्य्योधनस्तु तत्सैन्यं सर्व्वमावरयत्तदा। सहस्राणां सहस्रन्तु योधानां प्राप्य भारत।
कृष्णं चापहृतं ज्ञात्वा सम्प्राप परमां मुदं। दुर्य्योधनस्तु तत्सैन्यं सर्व्वमादाय पार्थिवः।
ततोऽभ्ययाद्भीमबलो रौहिणेयं महाबलं। सर्व्वं चागमने हेतुं स तस्मै संन्यवेदयत्। १८५
प्रत्युवाच ततः शौरिर्धार्त्तराष्ट्रमिदं वचः।

॥ बलदेव उवाच॥ विदितं ते नरव्याघ्र सर्व्वं भवितुमर्हति। यन्मयोक्तं विराटस्य पुरा वैवाहिके तदा।

निवृत्तोऽस्मि हृषीकेशस्त्वदर्थं कुरुनन्दन। मया सम्बन्धकं तुल्यमिति राजन् पुनः पुनः।
न च तद्वाक्यमुक्तं वै केशवः प्रत्यपद्यत। नचाहमुत्सहे कृष्णं विना स्थातुमपि क्षणं।
नाहं सहायः पार्थस्य नापि दुर्य्योधनस्य वै। इति मे निश्चिता बुद्धिर्वासुदेवमवेक्ष्य च। १६०
जातोऽसि भारते वंशे सर्व्वपार्थिवपूजिते। गच्छ युध्यस्व धर्म्मेण क्षात्रेण भरतर्षभ।
॥ वैशम्पायन उवाच ॥ इत्येवमुक्तस्तु तदा परिष्वज्य हलायुधं। कृष्णं चापहृतं ज्ञात्वा युद्धान्मेने जितं जयं।
सोऽभ्ययात्कृतवर्म्माणं धृतराष्ट्रसुतो नृपः। कृतवर्म्मा ददौ तस्य सेनामक्षौहिणीं तदा।
स तेन सर्व्वसैन्येन भीमेन कुरुनन्दनः। वृतः परिययौ हृष्टः सुहृदः सम्प्रहर्षयन्।
ततः पीताम्बरधरो जगत्स्रष्टा जनार्दनः। गते दुर्य्योधने कृष्णः किरीटिनमथाब्रवीत्। ६५
अयुध्यमानः कां बुद्धिमास्थायाहं वृतस्त्वया।
॥ अर्ज्जुन उवाच ॥ भवान् समर्थस्तान् सर्व्वान्निहन्तुं नात्र संशयः। निहन्तुमहमप्येकः समर्थः पुरुषर्षभ।
भवांस्तु कीर्त्तिमाल्लोके तद्यशस्त्वां गमिष्यति। यशसा चाहमप्यर्थी तस्मादसि मया वृतः।
सारथ्यन्तु त्वया कार्य्यमिति मे मानसं सदा। चिररात्रेप्सितं कामं तद्भवान् कर्त्तुमर्हति।
॥ वासुदेव उवाच ॥ उपपन्नमिदं पार्थ यत्स्पर्द्धसि मया सह। सारथ्यं ते करिष्यामि कामः सम्पद्यतां तव। १७०
॥ वैशम्पायन उवाच ॥ एवं प्रमुदितः पार्थः कृष्णेन सहितस्तदा। गतो दाशार्हप्रवरैः पुनरायाद्युधिष्ठिरं।
इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि कृष्णसारथ्यस्वीकारे षष्ठोऽध्यायः ॥ ६ ॥
॥ वैशम्पायन उवाच ॥ शल्यः श्रुत्वा तु दूतानां सैन्येन महता वृतः। अभ्ययात्पाण्डवान् राजन् सह पुत्रैर्महारथैः।
तस्य सेनानिवेशोऽभूदध्यर्द्धमिव योजनं। तथा हि विपुलां सेनां बिभर्त्ति स नरर्षभः।
अक्षौहिणीपती राजन् महावीर्य्यपराक्रमः। विचित्रकवचाः शूरा विचित्रध्वजकार्म्मुकाः।
विचित्राभरणाः सर्व्वे विचित्ररथवाहनाः। विचित्रस्रग्धराः सर्व्वे विचित्राम्बरभूषणाः। १७५
स्वदेशवेशाभरणा वीराः शतसहस्रशः। तस्य सेनाप्रणेतारो बभूवुः क्षत्रियर्षभाः।
व्यथयन्निव भूतानि कम्पयन्निव मेदिनीं। शनैर्विश्रामयन् सेनां स ययौ येन पाण्डवः।
ततो दुर्य्योधनः श्रुत्वा महात्मानं महारथं। उपायान्तमभिद्रुत्य स्वयमानर्च भारत।
कारयामास पूजार्थं तस्य दुर्य्योधनः सभाः। रमणीयेषु देशेषु रत्नचित्राः स्वलङ्कृताः।
शिल्पिभिर्व्विविधैश्चैव क्रीडास्तत्र प्रयोजिताः। तत्र माल्यानि मांसानि भक्ष्यं पेयञ्च सत्कृतं। १८०
कूपाश्च विविधाकारा मनोहर्षविवर्द्धनाः। वाप्यश्च विविधाकारा औदकानि गृहाणि च।
स ताः सभाः समासाद्य पूज्यमानो यथाऽमरः। दुर्य्योधनस्य सचिवैर्द्देशे देशे समन्ततः।
आजगाम सभामन्यां देवावसथवर्च्चसं। स तत्र विषयैर्युक्तैः कल्याणैरतिमानुषैः।
मेनेऽभ्यधिकमात्मानमवमेने पुरन्दरं। पप्रच्छ स ततः प्रेष्यान् प्रहृष्टः क्षत्रियर्षभः।
युधिष्ठिरस्य पुरुषाः केऽत्र चक्रुः सभा इमाः। आनीयन्तां सभाकाराः प्रदेयार्हा हि मे मताः। १८५
प्रसादमेषां दास्यामि कुन्तीपुत्रोऽनुमन्यतां। दुर्य्योधनाय तत्सर्व्वं कथयन्ति स्म विस्मिताः।

संप्रहृष्टो यदा शल्यो दित्सुरपि जीवितं। गूढो दुर्य्योधनस्तत्र दर्शयामास मातुलं।
तं दृष्ट्वा मद्रराजश्च ज्ञात्वा यत्नञ्च तस्य तं। परिष्वज्याब्रवीत्प्रीत इष्टोऽर्थो गृह्यतामिति।
॥ दुर्य्योधन उवाच ॥ सत्यवाग्भव कल्याण वरो वै मम दीयतां। सर्व्वसेनाप्रणेता वै भवान् भवितुमर्हति।
॥ वैशम्पायन उवाच ॥ कृतमित्यब्रवीच्छल्यः किमन्यत्क्रियतामिति। कृतमित्येव गान्धारिः प्रत्युवाच पुनः पुनः। १९०
॥ शल्य उवाच ॥ गच्छ दुर्य्योधन पुरं स्वकमेव नरर्षभ। अहं गमिष्ये द्रष्टुं वै युधिष्ठिरमरिन्दमं।
दृष्ट्वा युधिष्ठिरं राजन् क्षिप्रमेष्ये नराधिप। अवश्यं चापि द्रष्टव्यः पाण्डवः पुरुषर्षभः।
॥ दुर्य्योधन उवाच ॥ क्षिप्रमागम्यतां राजन् पाण्डवं वीक्ष्य पार्थिव। त्वय्यधीनाः स्म राजेन्द्र वरदानं स्मरस्व नः।
॥ शल्य उवाच ॥ क्षिप्रमेष्यामि भद्रन्ते गच्छस्व स्वपुरं नृप। परिष्वज्य तथाऽन्योऽन्यं शल्यदुर्य्योधनावुभौ।
स तथा शल्यमामंत्र्य पुनरायात्स्वकं पुरं। शल्यो जगाम कौन्तेयानाख्यातुं कर्म्म तस्य तत्। १९५
उपप्लव्यं स गत्वा तु स्कन्धावारं प्रविश्य च। पाण्डवानथ तान् सर्व्वान् शल्यस्तत्र ददर्श ह।
समेत्य च महाबाहुः शल्यः पाण्डुसुतैस्तदा। पाद्यमर्घ्यञ्च गाञ्चैव प्रत्यगृह्णाद्यथाविधि।
ततः कुशलपूर्व्वं हि मद्रराजोऽरिसूदनः। प्रीत्या परमया युक्तः समाश्लिष्य युधिष्ठिरं।
तथा भीमार्ज्जुनौ कृष्णौ स्वस्रीयौ च यमावुभौ। आसने चोपविविष्टः शल्यः पार्थमुवाच ह।
कुशलं राजशार्दूल कच्चित्ते कुरुनन्दन। अरण्यवासाद्दिष्ट्याऽसि विमुक्तो जयतां वर। २००
सुदुष्करं कृतं राजन्निर्जने वसता त्वया। भ्रातृभिः सह राजेन्द्र कृष्णया चानया सह।
अज्ञातवासं घोरञ्च वसता दुष्करं कृतं। दुःखमेव कुतः सौख्यं भ्रष्टराज्यस्य भारत।
दुःखस्यैतस्य महतो धार्त्तराष्ट्रकृतस्य वै। अवाप्स्यसि सुखं राजन् हत्वा शत्रून् परन्तप।
विदितं ते महाराज लोकतत्त्वं नराधिप। तस्माल्लोभकृतं किञ्चित्तव तात न विद्यते।
राजर्षीणां पुराणानां मार्गमन्विच्छ भारत। दाने तपसि सत्ये च भव तात युधिष्ठिर। २०५
क्षमा दमश्च सत्यञ्च अहिंसा च युधिष्ठिर। अद्भुतश्च पुनर्लोकस्त्वयि राजन् प्रतिष्ठितः।
मृदुर्व्वदान्यो ब्रह्मण्यो दाता धर्म्मपरायणः। धर्म्मास्ते विदिता राजन् बहवो लोकसाक्षिकाः।
स वै जगदिदं तात विदितं ते परन्तप। दिष्ट्या कृच्छ्रमिदं राजन् पारितं भरतर्षभ।
दिष्ट्या पश्यामि राजेन्द्र धर्म्मात्मानं सहानुगं। निस्तीर्णं दुष्करं राजंस्त्वां धर्म्मनिचयं प्रभो।
॥ वैशम्पायन उवाच ॥ ततोऽस्याकथयद्राजा दुर्य्योधनसमागमं। तच्च शुश्रूषितं सर्व्वं वरदानञ्च भारत। २१०
॥ युधिष्ठिर उवाच ॥ सुकृतं ते कृतं राजन् प्रहृष्टेनान्तरात्मना। दुर्य्योधनस्य यद्वीर त्वया वाचा प्रतिश्रुतं।
एकं त्विच्छामि भद्रन्ते क्रियमाणं महीपते। राजन्नकर्त्तव्यमपि कर्त्तुमर्हसि सत्तम।
मम त्ववेक्षया वीर शृणु विज्ञापयामि ते। भवानिह महाराज वासुदेवसमो युधि।
कर्णार्ज्जुनाभ्यां सम्प्राप्ते द्वैरथे राजसत्तम। कर्णस्य भवता कार्य्यं सारथ्यं नात्र संशयः।
तत्र पाल्योऽर्ज्जुनो राजन् यदि मत्प्रियमिच्छसि। तेजोवधश्च ते कार्य्यः सौतेरस्मज्जयावहः। २१५
अकर्त्तव्यमपि ह्येतत् कर्त्तुमर्हसि मातुल।

॥ शल्य उवाच ॥ शृणु पाण्डव भद्रं ते यद्ब्रवीषि दुरात्मनः। तेजोवधनिमित्तं मां सूतपुत्रस्य संयुगे।
अहं तस्य भविष्यामि सङ्ग्रामे सारथिर्ध्रुवं। वासुदेवेन हि समं नित्यं मां स हि मन्यते।
तस्याहं कुरुशार्दूल प्रतीपमहितं वचः। ध्रुवं सङ्कथयिष्यामि योद्धुकामस्य संयुगे।
यथा स हृतदर्पश्च हृततेजाश्च पाण्डव। भविष्यति सुखं हन्तुं सत्यमेतद्ब्रवीमि ते। २२०
एवमेतत्करिष्यामि यथा तात त्वमात्थ मां। यच्चान्यदपि शक्ष्यामि तत्करिष्यामि ते प्रियं।
यच्च दुःखं त्वया प्राप्तं द्यूते वै कृष्णया सह। परुषाणि च वाक्यानि सूतपुत्रकृतानि वै।
जटासुरात्परिक्लेशः कीचकाच्च महाद्युते। द्रौपद्याऽधिगतं सर्व्वं दमयन्त्या यथाऽशुभं।
सर्व्वं दुःखमिदं वीर सुखोदर्कं भविष्यति। नात्र मन्युस्त्वया कार्य्यो विधिर्हि बलवत्तरः।
दुःखानि हि महात्मानः प्राप्नुवन्ति युधिष्ठिर। देवैरपि हि दुःखानि प्राप्तानि जगतीपते। २२५
इन्द्रेण श्रूयते राजन् सभार्य्येण महात्मना। अनुभूतं महद्दुःखं देवराजेन भारत।
इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि शल्यवाक्ये सप्तमोऽध्यायः ॥ ७ ॥
॥ युधिष्ठिर उवाच ॥ कथमिन्द्रेण राजेन्द्र सभार्य्येण महात्मना। दुःखं प्राप्तं परं घोरमेतदिच्छामि वेदितुं।
॥ शल्य उवाच ॥ शृणु राजन् पुरावृत्तमितिहासं पुरातनं। सभार्य्येण यथा प्राप्तं दुःखमिन्द्रेण भारत।
त्वष्टा प्रजापतिर्ह्यासीद्देवश्रेष्ठो महातपाः। स पुत्रं वै त्रिशिरसमिन्द्रद्रोहात्किलासृजत्।
ऐन्द्रं स प्रार्थयत्स्थानं विश्वरूपो महाद्युतिः। तैस्त्रिभिर्वदनैर्घोरैः सूर्य्येन्दुज्वलनोपमैः। २३०
वेदानेकेन सोऽधीते सुरामेकेन चापिबत्। एकेन च दिशः सर्व्वाः पिबन्निव निरीक्षते।
स तपस्वी मृदुर्दान्तो धर्म्मे तपसि चोद्यतः। तपस्तस्य महत्तीव्रं सुदुश्चरमरिन्दम।
तस्य दृष्ट्वा तपोवीर्य्यं सत्यं चामिततेजसः। विषादमगमच्छक्र इन्द्रोऽयं मा भवेदिति।
कथं सज्जेच्च भोगेषु न च तप्येन्महत्तपः। विवर्द्धमानस्त्रिशिराः सर्व्वं हि भुवनं ग्रसेत्।
इति सञ्चिन्त्य बहुधा बुद्धिमान् भरतर्षभ। आज्ञापयत्सोऽप्सरसस्त्वष्टृपुत्रप्रलोभने। २३५
यथा स सज्जेत्त्रिशिराः कामं भोगेषु वै भृशं। क्षिप्रं कुरुत गच्छध्वं प्रलोभयत मा चिरं।
शृङ्गारवेशाः सुश्रोण्यो हारैर्युक्ता मनोहरैः। हावभावसमायुक्ताः सर्व्वाः सौन्दर्य्यशोभिताः।
प्रलोभयत भद्रं वः शमयध्वं भयं मम। अस्वस्थं ह्यात्मनात्मानं लक्षयामि वराङ्गनाः।
भयं तन्मे महाघोरं क्षिप्रं नाशयताबलाः।
॥ अप्सरस ऊचुः ॥ तथा यत्नं करिष्यामः शक्र तस्य प्रलोभने। यथा नावाप्स्यसि भयं तस्माद्बलनिसूदन। २४०
निर्द्दहन्निव चक्षुर्भ्यां योऽसावास्ते तपोनिधिः। तं प्रलोभयितुं देव गच्छामः सहिता वयं।
यतिष्यामो वशे कर्त्तुं व्यपनेतुञ्च ते भयं।
॥ शल्य उवाच ॥ इन्द्रेण तास्त्वनुज्ञाता जग्मुस्त्रिशिरसोऽन्तिकं। तत्र ता विविधैर्भावैर्लोभयन्त्यो वराङ्गनाः।
नित्यं सन्दर्शयामासुस्तथैवाङ्गेषु सौष्ठवं। नाभ्यगच्छत् प्रहर्षन्ताः स पश्यन्सुमहातपाः।
इन्द्रियाणि वशे कृत्वा पूर्णसागरसन्निभः। तास्तु यत्नं परं कृत्वा पुनः शक्रमुपस्थिताः। २४५

कृताञ्जलिपुटाः सर्व्वा देवराजमथाब्रुवन्। न स शक्यः सुदुर्द्धर्षो धैर्य्याच्चालयितुं प्रभो।
यत्ते कार्य्यं महाभाग क्रियतां तदनन्तरं। सम्पूज्याप्सरसः शक्रो विसृज्य च महामतिः।
चिन्तयामास तस्यैव वधोपायं युधिष्ठिर। स तूष्णीं चिन्तयन् वीरो देवराजः प्रतापवान्।
विनिश्चितमतिर्धीमान् वधे त्रिशिरसोऽभवत्। वज्रमस्य क्षिपाम्यद्य स क्षिप्रं न भविष्यति।
शत्रुः प्रवृद्धो नोपेक्ष्यो दुर्ब्बलोऽपि बलीयसा। शास्त्रबुद्ध्या विनिश्चित्य कृत्वा बुद्धिं वधे दृढां। २५०
अथ वैश्वानरनिभं घोररूपं भयावहं। मुमोच वज्रं संक्रुद्धः शक्रस्त्रिशिरसं प्रति।
स पपात हतस्तेन वज्रेण दृढमाहतः। पर्व्वतस्येव शिखरं प्रणुन्नं मेदिनीतले।
तन्तु वज्रहतं दृष्ट्वा शयानमचलोपमं। न शर्म्म लेभे देवेन्द्रो दीपितस्तस्य तेजसा।
हतोऽपि दीप्ततेजाः स जीवन्निव हि दृश्यते। घातितस्य शिरांस्याजौ जीवन्तीवाद्भुतानि वै।
ततोऽतिभीतो रूपात्तु शक्र आस्ते विचारयन्। अथाजगाम परशुं स्कन्धेनादाय वर्द्धकिः। २५५
तदरण्यं महाराज यत्रास्तेऽसौ निपातितः। स भीतस्तत्र तक्षाणं घटमानं शचीपतिः।
अपश्यदब्रवीच्चैनं सत्वरं पाकशासनः। क्षिप्रं छिन्धि शिरांस्यस्य कुरुष्व वचनं मम।
॥ तक्षोवाच ॥ महास्कन्धो भृशं ह्येष परशुर्न भविष्यति। कर्त्तुञ्चाहं न शक्ष्यामि कर्म्म सद्भिर्विगर्हितं।
॥ इन्द्र उवाच ॥ माभैस्त्वं शीघ्रमेतद्वै कुरुष्व वचनं मम। मत्प्रसादाद्धि ते शस्त्रं वज्रकल्पं भविष्यति।
॥ तक्षोवाच ॥ कं भवन्तमहं विद्यां घोरकर्म्माणमद्य वै। एतदिच्छाम्यहं श्रोतुं तत्त्वेन कथयस्व मे। २६०
॥ इन्द्र उवाच ॥ अहमिन्द्रो देवराजस्तक्षन् विदितमस्तु ते। कुरुष्वैतद्यथोक्तं मे तक्षन् मा त्वं विचारय।
॥ तक्षोवाच ॥ क्रूरेण नापत्रपसे कथं शक्रेह कर्म्मणा। ऋषिपुत्त्रमिमं हत्वा ब्रह्महत्याभयं न ते।
॥ शक्र उवाच ॥ पश्चाद्धर्म्मं चरिष्यामि पावनार्थं सुदुश्चरं। शत्रुरेष महावीर्य्यो वज्रेण निहतो मया।
अद्यापि चाहमुद्विग्नस्तक्षन्नस्माद्बिभेमि वै। क्षिप्रं छिन्धि शिरांसि त्वं करिष्येऽनुग्रहं तव।
शिरः पशोस्ते दास्यन्ति भागं यज्ञेषु मानवाः। एष तेऽनुग्रहस्तक्षन् क्षिप्रं कुरु मम प्रियं। २६५
॥ शल्य उवाच ॥ एतच्छ्रुत्वा तु तक्षा स महेन्द्रवचनात्तदा। शिरांस्यथ त्रिशिरसः कुठारेणाच्छिनत्तदा।
निकृत्तेषु ततस्तेषु निष्क्रामंस्त्वण्डजास्त्वथ। कपिञ्जलास्तित्तिराश्च कलविङ्काश्च सर्व्वशः।
येन वेदानधीते स्म पिबते सोममेव च। तस्माद्वक्त्राद्विनिष्पेतुः क्षिप्रं तस्य कपिञ्जलाः।
येन सर्व्वा दिशो राजन् पिबन्निव निरीक्षते। तस्माद्वक्त्राद्विनिष्पेतुस्तित्तिरास्तस्य पाण्डव।
यत्सुरापन्तु तस्यासीद्वक्त्रं त्रिशिरसस्तदा। कलविङ्काः समुत्पेतुः श्येनाश्च भरतर्षभ। २७०
ततस्तेषु निकृत्तेषु विज्वरो मघवानथ। जगाम त्रिदिवं हृष्टस्तक्षाऽपि स्वगृहान्ययौ।
मेने कृतार्थमात्मानं हत्वा शत्रुं सुरारिहा। त्वष्टा प्रजापतिः श्रुत्वा शक्रेणाथ हतं सुतं।
क्रोधसंरक्तनयन इदं वचनमब्रवीत्।
॥ त्वष्टोवाच ॥ तप्यमानं तपो नित्यं क्षान्तं दान्तं जितेन्द्रियं। विनाऽपराधेन यतः पुत्त्रं हिंसितवान्मम।
तस्माच्छक्रविनाशाय वृत्रमुत्पादयाम्यहं। लोकाः पश्यन्तु मे वीर्य्यं तपसश्च बलं महत्। २७५

स च पश्यतु देवेन्द्रो दुरात्मा पापचेतनः। उपस्पृश्य ततः क्रुद्धस्तपस्वी सुमहायशाः।
अग्नौ हुत्वा समुत्पाद्य घोरं वृत्रमुवाच ह। इन्द्रशत्रो विवर्द्धस्व प्रभावात्तपसो मम।
सोऽवर्द्धत दिवं स्तब्ध्वा सूर्य्यवैश्वानरोपमः। किङ्करोमीति चोवाच कालसूर्य्य इवोदितः।
शक्रं जहीति चाप्युक्तो जगाम त्रिदिवं ततः। ततो युद्धं समभवद्वृत्रवासवयोर्महत्।
संक्रुद्धयोर्महाघोरं प्रसक्तं कुरुसत्तम। ततो जग्राह देवेन्द्रं वृत्रो वीरः शतक्रतुं। २८०
अपावृत्याक्षिपद्वक्त्रे शक्रं कोपसमन्वितः। ग्रस्ते वृत्रेण शक्रे तु सम्भ्रान्तास्त्रिदिवेश्वराः।
असृजंस्ते महासत्त्वा जृम्भिकां वृत्रनाशिनीं। विजृम्भमाणस्य ततो वृत्रस्यास्यादपावृतात्।
स्वान्यङ्गान्यभिसंक्षिप्य निष्क्रान्तो बलनाशनः। ततः प्रभृति लोकस्य जृम्भिका प्राणसंश्रिता।
जहृषुश्च सुराः सर्व्वे शक्रं दृष्ट्वा विनिःसृतं। ततः प्रववृते युद्धं वृत्रवासवयोः पुनः।
संरब्धयोस्तदा घोरं सुचिरं भरतर्षभ। यदा व्यवर्द्धत रणे वृत्रो बलसमन्वितः। २८५
त्वष्टुस्तेजोबलाविद्धस्तदा शक्रो न्यवर्त्तत। निवृत्ते च तदा देवा विषादमगमन्परं।
समेत्य सह शक्रेण त्वष्टुस्तेजोविमोहिताः। अमन्त्रयन्त ते सर्व्वे मुनिभिः सह भारत।
किं कार्य्यमिति वै राजन्विचिन्त्य भयमोहिताः। जग्मुः सर्व्वे महात्मानं मनोभिर्व्विष्णुमव्ययं।
उपविष्टा मन्दराग्रे सर्व्वे वृत्रवधेप्सवः।
इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि इन्द्रविजये अष्टमोऽध्यायः॥ ८ ॥
॥ इन्द्र उवाच ॥ सर्व्वं व्याप्तमिदं देवा वृत्रेण जगदव्ययं। न ह्यस्य सदृशं किञ्चित् प्रतीघाताय यद्भवेत्। २९०
समर्थो ह्यभवं पूर्व्वमसमर्थोऽस्मि साम्प्रतं। कथं नु कुर्य्यां भद्रं वो दुर्द्धर्षः स हि मे मतः।
तेजस्वी च महात्मा च युद्धे चामितविक्रमः। ग्रसेत्त्रिभुवनं सर्व्वं सदेवासुरमानुषं।
तस्माद्विनिश्चयमिमं शृणुध्वं त्रिदिवौकसः। विष्णोः क्षयमुपागम्य समेत्य च महात्मना।
तेन संमन्त्र्य वेत्स्यामो वधोपायं दुरात्मनः।
॥ शल्य उवाच ॥ एवमुक्ते मघवता देवाः सर्षिगणास्तदा। शरण्यं शरणं देवं जग्मुर्व्विष्णुं महाबलं। २९५
ऊचुश्च सर्व्वदेवेशं विष्णुं वृत्रभयार्द्दिताः। त्वया लोकास्त्रयः क्रान्तास्त्रिभिर्व्विक्रमणैः पुरा।
अमृतं चाहृतं विष्णो दैत्याश्च निहता रणे। बलिं बद्ध्वा महादैत्यं शक्रो देवाधिपः कृतः।
त्वं प्रभुः सर्व्वदेवानां त्वया सर्व्वमिदं ततं। त्वं हि देवो महादेवः सर्व्वलोकनमस्कृतः।
गतिर्भव त्वं देवानां सेन्द्राणाममरोत्तम। जगद्व्याप्तमिदं सर्व्वं वृत्रेणासुरसूदन।
॥ विष्णुरुवाच ॥ अवश्यं करणीयं मे भवतां हितमुत्तमं। तस्मादुपायं वक्ष्यामि यथाऽसौ न भविष्यति। ३००
गच्छध्वं सर्षिगन्धर्व्वा यत्रासौ विश्वरूपधृक्। साम तस्य प्रयुञ्जध्वं तत एनं विजेष्यथ।
भविष्यति जयो देवाः शक्रस्य मम तेजसा। अदृश्यश्च प्रवेक्ष्यामि वज्रे ह्यस्यायुधोत्तमे।
गच्छध्वमृषिभिः सार्द्धं गन्धर्व्वैश्च सुरोत्तमाः। वृत्रस्य सह शक्रेण सन्धिं कुरुत माचिरं।
॥ शल्य उवाच ॥ एवमुक्ते तु देवेन ऋषयस्त्रिदशास्तथा। ययुः समेत्य सहिताः शक्रं कृत्वा पुरःसरं।

समीपमेत्य च यदा सर्व्व एव महौजसः। तं तेजसा प्रज्वलितं प्रतपन्तं दिशो दश। १०५
ग्रसन्तमिव लोकांस्त्रीन् सूर्य्याचन्द्रमसौ यथा। ददृशुस्ते ततो वृत्रं शक्रेण सह देवताः।
ऋषयोऽथ ततोऽभ्येत्य वृत्रमूचुः प्रियं वचः। व्याप्तं जगदिदं सर्व्वं तेजसा तव दुर्ज्जय।
न च शक्नोषि निर्ज्जेतुं वासवं बलिनाम्बर। युध्यतोश्चापि वां कालो व्यतीतः सुमहानिह।
पीड्यन्ते च प्रजाः सर्व्वाः सदेवासुरमानुषाः। सख्यं भवतु ते वृत्र शक्रेण सह नित्यदा।
अवाप्स्यसि सुखं त्वञ्च शक्रलोकांश्च शाश्वतान्। ऋषिवाक्यं निशम्याथ वृत्रः स तु महाबलः। ११०
उवाच तानृषीन् सर्व्वान् प्रणम्य शिरसाऽसुरः। सर्व्वे यूयं महाभागा गन्धर्व्वाश्चैव सर्व्वशः।
यद्ब्रूथ तच्छ्रुतं सर्व्वं ममापि शृणुतानघाः। सन्धिः कथं वै भविता मम शक्रस्य चोभयोः।
तेजसोर्हि द्वयोर्द्देवाः सख्यं वै भविता कथं।

॥ ऋषय ऊचुः ॥ सकृत्सतां सङ्गतं लिप्सितव्यं ततः परं भविता भव्यमेव। नातिक्रामेत्सत्पुरुषेण सङ्गतं तस्मात् सतां सङ्गतं लिप्सितव्यं।

दृढं सतां सङ्गतं चापि नित्यं ब्रूयाच्चार्थं ह्यर्थकृच्छ्रेषु धीरः। महार्थवत् सत्पुरुषेण सङ्गतं तस्मात् सन्तं न जिघांसेत धीरः।११५
इन्द्रः सतां सम्मतश्च निवासश्च महात्मनां। सत्यवादी ह्यनिन्द्यश्च धर्म्मवित् सूक्ष्मनिश्चयः।
तेन ते सह शक्रेण सन्धिर्भवतु नित्यदा। एवं विश्वासमागच्छ मा ते भूद्बुद्धिरन्यथा।
॥ शल्य उवाच ॥ महर्षिवचनं श्रुत्वा तानुवाच महाद्युतिः। अवश्यं भगवन्तो मे माननीयास्तपस्विनः।
ब्रवीमि यदहं देवास्तत्सर्व्वं क्रियते यदि। ततः सर्व्वं करिष्यामि यद्ब्रूथ मां द्विजर्षभाः।
न शुष्केण न चार्द्रेण नाश्मना न च दारुणा। न शस्त्रेण न वज्रेण न दिवा न तथा निशि। १२०
वध्यो भवेयं विप्रेन्द्राः शक्रस्य सह दैवतैः। एवं मे रोचते सन्धिः शक्रेण सह नित्यदा।
बाढमित्येव ऋषयस्तमूचुर्भरतर्षभ। एवं वृत्ते तु सन्धाने वृत्रः प्रमुदितोऽभवत्।
युक्तः सदाऽभवच्चापि शक्रो हर्षसमन्वितः। वृत्रस्य वधसंयुक्तानुपायाननुचिन्तयन्।
छिद्रान्वेषी समुद्विग्नः सदा वसति देवराट्। स कदाचित् समुद्रान्ते तमपश्यन्महासुरं।
सन्ध्याकाल उपावृत्ते मुहूर्त्ते चातिदारुणे। ततः सञ्चिन्त्य भगवान् वरदानं महात्मनः। १२५
सन्ध्येयं वर्त्तते रौद्रा न रात्रिर्द्दिवसं न च। वृत्रश्चावश्यवध्योऽयं मम सर्व्वहरो रिपुः।
वृत्रं यदि न हन्म्यद्य वञ्चयित्वा महासुरं। महाबलं महाकायं न मे श्रेयो भविष्यति।
एवं सञ्चिन्तयन्नेव शक्रो विष्णुमनुस्मरन्। अथ फेनं तदाऽपश्यत् समुद्रे पर्व्वतोपमं।
नायं शुष्को न चार्द्रोऽयं न च शस्त्रमिदं तथा। एनं क्षेप्स्यामि वृत्रस्य क्षणादेव नशिष्यति।
सवज्रमथ फेनं तं क्षिप्रं वृत्रे निसृष्टवान्। प्रविश्य फेनं तं विष्णुरथ वृत्रं व्यनाशयत्। १३०
निहते तु ततो वृत्रे दिशो वितिमिराभवन्। प्रववौ च शिवो वायुः प्रजाश्च जहृषुस्तथा।
ततो देवाः सगन्धर्व्वा यक्षरक्षोमहोरगाः। ऋषयश्च महेन्द्रं तमस्तुवन्विविधैः स्तवैः।
नमस्कृतः सर्व्वभूतैः सर्व्वभूतान्यसान्त्वयत्। हत्वा शत्रुं प्रहृष्टात्मा वासवः सह दैवतैः।

विष्णुं त्रिभुवनश्रेष्ठं पूजयामास धर्म्मवित्। ततो हते महावीर्य्ये वृत्रे देवभयङ्करे।
अनृतेनाभिभूतोऽभूच्छक्रः परमदुर्म्मनाः। त्रैशीर्षयाऽभिभूतश्च स पूर्व्वं ब्रह्महत्यया। २३५
सोऽन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः। न प्राज्ञायत देवेन्द्रस्त्वभिभूतः स्वकल्मषैः।
प्रतिच्छन्नोऽवसच्चाप्सु चेष्टमान इवोरगः। ततः प्रनष्टे देवेन्द्रे ब्रह्महत्याभयार्द्दिते।
भूमिः प्रध्वस्तसङ्काशा निर्व्वृक्षा शुष्ककानना। विच्छिन्नस्रोतसो नद्यः सरांस्यनुदकानि च।
संक्षोभश्चापि सत्त्वानामनावृष्टिकृतोऽभवत्। देवाश्चापि भृशं त्रस्तास्तथा सर्व्वे महर्षयः।
अराजकं जगत्सर्व्वमभिभूतमुपद्रवैः। ततो भीताभवन् देवाः को नो राजा भवेदिति। २४०
दिवि देवर्षयश्चापि देवराजविनाकृताः। न स्म कश्चन देवानां राज्ये वै कुरुते मतिं।
इति श्रीमहाभारते उद्योगपर्व्वणि सैन्योद्योगपर्व्वणि वृत्रवधे नवमोऽध्यायः॥९॥
॥ शल्य उवाच॥ ऋषयोऽथाब्रुवन् सर्व्वे देवाश्च त्रिदिवेश्वराः। अयं वै नहुषः श्रीमान् देवराज्येऽभिषिच्यतां।
तेजस्वी च यशस्वी च धार्म्मिकश्चैव नित्यदा। ते गत्वा त्वब्रुवन् सर्व्वे राजा नो भव पार्थिव।
स तानुवाच नहुषो देवानृषिगणांस्तथा। पितृभिः सहितान् राजन् परीप्सन् हितमात्मनः।
दुर्ब्बलोऽहं न मे शक्तिर्भवतां परिपालने। बलवान् जायते राजा बलं शक्रे हि नित्यदा। २४५
तमब्रुवन् पुनः सर्व्वे देवा ऋषिपुरोगमाः। अस्माकं तपसा युक्तः पाहि राज्यं त्रिविष्टपे।
परस्परभयं घोरमस्माकं हि न संशयः। अभिषिच्यस्व राजेन्द्र भव राजा त्रिविष्टपे।
देवदानवयक्षाणामृषीणां रक्षसां तथा। पितृगन्धर्व्वभूतानां चक्षुर्व्विषयवर्त्तिनां।
तेज आदास्यसे पश्यन् बलवांश्च भविष्यसि। धर्म्मं पुरस्कृत्य सदा सर्व्वलोकाधिपो भव।
ब्रह्मर्षींश्चापि देवांश्च गोपयस्व त्रिविष्टपे। अभ्यषिच्यत राजेन्द्र ततो राजा त्रिविष्टपे। २५०
धर्म्मं पुरस्कृत्य तदा सर्व्वलोकाधिपोऽभवत्। सुदुर्लभं वरं लब्ध्वा प्राप्य राज्यं त्रिविष्टपे।
धर्म्मात्मा सततं भूत्वा कामात्मा समपद्यत। देवोद्यानेषु सर्व्वेषु नन्दनोपवनेषु च।
कैलासे हिमवत्पृष्ठे मन्दरे श्वेतपर्व्वते। सह्ये महेन्द्रे मलये समुद्रेषु सरित्सु च।
अप्सरोभिः परिवृतो देवकन्यासमावृतः। नहुषो देवराजोऽथ क्रीडन् बहुविधं तदा।
शृण्वन् दिव्या बहुविधाः कथाः श्रुतिमनोहराः। वादित्राणि च सर्व्वाणि गीतञ्च मधुरस्वनं। २५५
विश्वावसुर्नारदश्च गन्धर्व्वाप्सरसां गणाः। ऋतवः षट् च देवेन्द्रं मूर्त्तिमन्त उपस्थिताः।
मारुतः सुरभिर्व्वाति मनोज्ञः सुखशीतलः। एवञ्च क्रीडतस्तस्य नहुषस्य दुरात्मनः।
सम्प्राप्ता दर्शनं देवी शक्रस्य महिषी प्रिया। स तां सन्दृश्य दुष्टात्मा प्राह सर्व्वान् सभासदः।
इन्द्रस्य महिषी देवी कस्मान्मां नोपतिष्ठति। अहमिन्द्रोऽस्मि देवानां लोकानाञ्च तथेश्वरः।
आगच्छतु शची मह्यं क्षिप्रमद्य निवेशनं। तच्छ्रुत्वा दुर्म्मना देवी वृहस्पतिमुवाच ह। २६०
रक्ष मां नहुषाद्ब्रह्मंस्त्वामस्मि शरणं गता। सर्व्वलक्षणसम्पन्नां ब्रह्मंस्त्वं मां प्रभाषसे।
देवराजस्य दयितामत्यन्तसुखभागिनीं। अवैधव्येन युक्तां चाप्येकपत्नीं पतिव्रतां।

उक्तवानसि मां पूर्व्वमृतां तां कुरु वै गिरं। नोक्तपूर्व्वञ्च भगवन् वृथा ते किञ्चिदीश्वर।
तस्मादेतत् भवेत् सत्यं त्वयोक्तं द्विजसत्तम। बृहस्पतिरथोवाच शक्राणीं भयमोहितां।
यदुक्ताऽसि मया देवि सत्यं तद्भविता ध्रुवं। द्रक्ष्यसे देवराजानमिन्द्रं शीघ्रमिहागतं। १६५
न भेतव्यञ्च नहुषात्सत्यमेतद्ब्रवीमि ते। समानयिष्ये शक्रेण न चिराद्भवतीमहं।
अथ शुश्राव नहुषः शक्राणीं शरणं गतां। बृहस्पतेरङ्गिरसश्चुक्रोध स नृपस्तदा।
इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि इन्द्राणीभये दशमोऽध्यायः॥ १०॥

॥ शल्य उवाच॥ क्रुद्धं तु नहुषं दृष्ट्वा देवा ऋषिपुरोगमाः। अब्रुवन् देवराजानं नहुषं घोरदर्शनं।
देवराज जहि क्रोधं त्वयि क्रुद्धे जगद्विभो। त्रस्तं सासुरगन्धर्व्वं सकिन्नरमहोरगं।
जहि क्रोधमिमं साधो न कुप्यन्ति भवद्विधाः। परस्य पत्नी सा देवी प्रसीदस्व सुरेश्वर। १७०
निवर्त्तय मनः पापात्परदाराभिमर्षणात्। देवराजोऽसि भद्रं ते प्रजा धर्म्मेण पालय।
एवमुक्तो न जग्राह तद्वचः काममोहितः। अथ देवानुवाचेदमिन्द्रं प्रति सुराधिपः।
अहल्या धर्षिता पूर्व्वमृषिपत्नी यशस्विनी। जीवतो भर्त्तुरिन्द्रेण स वः किं न निवारितः।
बहूनि च नृशंसानि कृतानीन्द्रेण वै पुरा। वैधर्म्याण्युपधाश्चैव स वः किं न निवारितः।
उपतिष्ठतु देवी मामेतदस्या हितं परं। युष्माकञ्च सदा देवाः शिवमेवं भविष्यति। १७५
॥ देवा ऊचुः॥ इन्द्राणीमानयिष्यामो यथेच्छसि दिवस्पते। जहि क्रोधमिमं वीर प्रीतो भव सुरेश्वर।
॥ शल्य उवाच॥ इत्युक्त्वा तं तदा देवा ऋषिभिः सह भारत। जग्मुर्बृहस्पतिं वक्तुमिन्द्राणीं चाशुभं वचः।
जानीमः शरणं प्राप्तामिन्द्राणीं तव वेश्मनि। दत्ताभयाञ्च विप्रेन्द्र त्वया देवर्षिसत्तम।
ते त्वां देवाः सगन्धर्व्वा ऋषयश्च महाद्युते। प्रसादयन्ति चेन्द्राणी नहुषाय प्रदीयतां।
इन्द्राद्विशिष्टो नहुषो देवराजो महाद्युतिः। वृणोत्विमं वरारोहा भर्त्तृत्वे वरवर्णिनी। १८०
एवमुक्ते तु सा देवी वाष्पमुत्सृज्य सस्वनं। उवाच रुदती दीना बृहस्पतिमिदं वचः।
नाहमिच्छामि नहुषं पतिं देवर्षिसत्तम। शरणागताऽस्मि ते ब्रह्मंस्त्रायस्व महतो भयात्।
॥ बृहस्पतिरुवाच॥ शरणागतां न त्यजेयमिन्द्राणि मम निश्चयः। धर्मज्ञां सत्यशीलाञ्च न त्यजेयमनिन्दिते।
नाकार्य्यं कर्त्तुमिच्छामि ब्राह्मणः सन् विशेषतः। श्रुतधर्म्मा सत्यशीलो जानन्धर्म्मानुशासनं।
नाहमेतत्करिष्यामि गच्छध्वं वै सुरोत्तमाः। अस्मिंश्चार्थे पुरा गीतं ब्रह्मणा श्रूयतामिदं। १८५
न तस्य वीजं रोहति वीजकाले न तस्य वर्षं वर्षति वर्षकाले। भीतं प्रपन्नं प्रददाति शत्रवे न स त्रातारं लभते त्राण-
मिच्छन्।
मोघमन्नं विन्दति चाप्यचेताः स्वर्गाल्लोकाद्भ्रश्यति नष्टचेष्टः। भीतं प्रपन्नं प्रददाति यो वै न तस्य हव्यं प्रतिगृह्णन्ति देवाः।
प्रमीयते चास्य प्रजा ह्यकाले सदा विवासं पितरोऽस्य कुर्व्वते। भीतं प्रपन्नं प्रददाति शत्रवे सेन्द्रा देवाः प्रहरन्त्यस्य वज्रं।
एतदेवं विजानन्वै न दास्यामि शचीमिमां। इन्द्राणीं विश्रुतां लोके शक्रस्य महिषीं प्रियां।
अस्या हितं भवेद्यच्च मम चापि हितं भवेत्। क्रियतां तत्सुरश्रेष्ठा न हि दास्याम्यहं शचीं। १९०

॥ शल्य उवाच ॥ अथ देवाः सगन्धर्व्वा गुरुमाहुरिदं वचः । कथं सुनीतं नु भवेन्मन्त्रयस्व बृहस्पते ।
॥ बृहस्पतिरुवाच ॥ नहुषं याचतां देवी किञ्चित्कालान्तरं शुभा । इन्द्राणी हितमेतद्धि तथाऽस्माकं भविष्यति ।
बहुविघ्नः सुराः कालः कालं कालो नयिष्यति । गर्व्वितो बलवांश्चापि नहुषो वरसंश्रयात् ।
॥ शल्य उवाच ॥ ततस्तेन तथोक्ते तु प्रीता देवास्तदाऽब्रुवन् । ब्रह्मन् साध्विदमुक्तं ते हितं सर्व्वदिवौकसां ।
एवमेतद्द्विजश्रेष्ठ देवी चेयं प्रसाद्यतां । ततः समस्ता इन्द्राणीं देवाश्चाग्निपुरोगमाः । 　३९५
ऊचुर्व्वचनमव्यग्रा लोकानां हितकाम्यया ।
॥ देवा ऊचुः ॥ त्वया जगदिदं सर्वं धृतं स्थावरजङ्गमं । एकपत्न्यसि सत्या च गच्छस्व नहुषं प्रति ।
क्षिप्रं त्वामभिकामश्च विनशिष्यति पापकृत् । नहुषो देवि शक्रश्च सुरैश्वर्य्यमवाप्स्यति ।
एवं विनिश्चयं कृत्वा इन्द्राणी कार्य्यसिद्धये । अभ्यगच्छत सव्रीडा नहुषं घोरदर्शनं ।
दृष्ट्वा तां नहुषश्चापि वयोरूपसमन्वितां । समहृष्यत दुष्टात्मा कामोपहतचेतनः । 　४००
इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि इन्द्राणीकालयाचने एकादशोऽध्यायः ॥ ११ ॥
॥ शल्य उवाच ॥ अथ तामब्रवीद्दृष्ट्वा नहुषो देवराट् तदा । त्रयाणामपि लोकानामहमिन्द्रः शुचिस्मिते ।
भजस्व मां वरारोहे पतित्वे वरवर्णिनि । एवमुक्ता तु सा देवी नहुषेण पतिव्रता ।
प्रावेपत भयोद्विग्ना प्रवाते कदली यथा । प्रणम्य सा हि ब्रह्माणं शिरसा तु कृताञ्जलिः ।
देवराजमथोवाच नहुषं घोरदर्शनं । कालमिच्छाम्यहं लब्धुं त्वत्तः कञ्चित् सुरेश्वर ।
न हि विज्ञायते शक्रः किं वा प्राप्तः क्व वा गतः । तत्त्वमेतत्तु विज्ञाय यदि न ज्ञायते प्रभो । 　४०५
ततोऽहं त्वामुपस्थास्ये सत्यमेतद्ब्रवीमि ते । एवमुक्तः स इन्द्राण्या नहुषः प्रीतिमानभूत् ।
॥ नहुष उवाच ॥ एवं भवतु सुश्रोणि यथा मामिह भाषसे । ज्ञात्वा चागमनं कार्य्यं सत्यमेतदनुस्मरेः ।
नहुषेण विसृष्टा च निश्चक्राम ततः शुभा । बृहस्पतिनिकेतं च सा जगाम यशस्विनी ।
तस्याः संश्रुत्य च वचो देवाश्चाग्निपुरोगमाः । चिन्तयामासुरेकाग्राः शक्रार्थं राजसत्तम ।
देवदेवेन सङ्गम्य विष्णुना प्रभविष्णुना । ऊचुश्चैनं समुद्विग्ना वाक्यं वाक्यविशारदाः । 　४१०
ब्रह्मवध्याभिभूतो वै शक्रः सुरगणेश्वरः । गतिश्च नस्त्वं देवेश पूर्व्वजो जगतः प्रभुः ।
रक्षार्थं सर्व्वभूतानां विष्णुत्वमुपजग्मिवान् । त्वद्वीर्य्यान्निहते वृत्रे वासवो ब्रह्महत्यया ।
वृतः सुरगणश्रेष्ठ मोक्षं तस्य विनिर्द्दिश । तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत् ।
मामेव यजतां शक्रः पावयिष्यामि वज्रिणं । पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः ।
पुनरेष्यति देवानामिन्द्रत्वमकुतोभयः । दुष्कर्म्मभिश्च नहुषो नाशं यास्यति दुर्म्मतिः । 　४१५
कञ्चित्कालमिमं देवा मर्षयध्वमतन्द्रिताः । श्रुत्वा विष्णोः शुभां सत्यां वाणींताममृतोपमां ।
ततः सर्व्वे सुरगणाः सोपाध्यायाः सहर्षिभिः । यत्र शक्रो भयोद्विग्नस्तं देशमुपचक्रमुः ।
तत्राश्वमेधः सुमहान्महेन्द्रस्य महात्मनः । ववृते पावनार्थं वै ब्रह्महत्यापहो नृप ।
विभज्य ब्रह्महत्यान्तु वृक्षेषु च नदीषु च । पर्व्वतेषु पृथिव्याञ्च स्त्रीषु चैव युधिष्ठिर ।

स विभज्य च भूतेषु विसृज्य च सुरेश्वरः। विज्वरो धूतपाप्मा च वासवोऽभवदात्मवान्। ॥४२०
अकम्प्यं नहुषं स्थानाद्दृष्ट्वा बलनिसूदनः। तेजोघ्नं सर्व्वभूतानां वरदानाच्च दुःसहं।
ततः शचीपतिर्द्देवः पुनरेव व्यनश्यत। अदृश्यः सर्व्वभूतानां कालाकाङ्क्षी चचार ह।
प्रनष्टे तु ततः शक्रे शची शोकसमन्विता। हा शक्रेति तदा देवी विललाप सुदुःखिता।
यदि दत्तं यदि हुतं गुरवस्तोषिता यदि। एकभर्तृत्वमेवास्तु सत्यं यद्यस्ति वा मयि।
पुण्यां चेमामहं दिव्यां प्रवृत्तामुत्तरायणे। देवीं रात्रिं नमस्यामि सिध्यतां मे मनोरथः। ॥४२५
प्रयताच्च निशां देवीमुपातिष्ठत तत्र सा। पतिव्रतात्वात्सत्येन सोपश्रुतिमथाकरोत्।
यत्रास्ते देवराजोऽसौ तं देशं दर्शयस्व मे। इत्याहोपश्रुतिं देवीं सत्यं सत्येन दृश्यतां।
इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि उपश्रुतियाचने द्वादशोऽध्यायः ॥ १२ ॥
॥ शल्य उवाच ॥ अथैनां रूपिणीं साध्वीमुपातिष्ठदुपश्रुतिः। तां वयोरूपसम्पन्नां दृष्ट्वा देवीमुपस्थितां।
इन्द्राणी सम्प्रहृष्टात्मा सम्पूज्यैनामथाब्रवीत्। इच्छामि त्वामहं ज्ञातुं का त्वं ब्रूहि वरानने।
॥ उपश्रुतिरुवाच ॥ उपश्रुतिरहं देवि तवान्तिकमुपागता। दर्शनं चैव सम्प्राप्ता तव सत्येन भाविनि। ॥४३०
पतिव्रता च युक्ता च यमेन नियमेन च। दर्शयिष्यामि ते शक्रं देवं वृत्रनिसूदनं।
क्षिप्रमन्वेहि भद्रं ते द्रक्ष्यसे सुरसत्तमं। ततस्तां प्रस्थितां देवीमिन्द्राणी सा समन्वगात्।
देवारण्यान्यतिक्रम्य पर्व्वतांश्च बहूंस्ततः। हिमवन्तमतिक्रम्य उत्तरं पार्श्वमागमत्।
समुद्रञ्च समासाद्य बहुयोजनविस्तृतं। आससाद महाद्वीपं नानाद्रुमलतावृतं।
तत्रापश्यत्सरो दिव्यं शुभं शकुनिभिर्वृतं। शतयोजनविस्तीर्णं तावदेवायतं शुभं। ॥४३५
तत्र दिव्यानि पद्मानि पञ्चवर्णानि भारत। षट्पदैरुपगीतानि प्रफुल्लानि सहस्रशः।
सरसस्तस्य मध्ये तु पद्मिनी महती शुभा। गौरेणोन्नतनालेन पद्मेन महता वृता।
पद्मस्य भित्त्वा नालञ्च विवेश सहिता तया। बिसतन्तुप्रविष्टञ्च तत्रापश्यच्छतक्रतुं।
तं दृष्ट्वा च सुसूक्ष्मेण रूपेणावस्थितं प्रभुं। सूक्ष्मरूपधरा देवी बभूवोपश्रुतिश्च सा।
इन्द्रं तुष्टाव चेन्द्राणी विश्रुतैः पूर्व्वकर्मभिः। स्तूयमानस्ततो देवः शचीमाह पुरन्दरः। ॥४४०
किमर्थमसि सम्प्राप्ता विज्ञातश्च कथं त्वहं। ततः सा कथयामास नहुषस्य विचेष्टितं।
इन्द्रत्वं त्रिषु लोकेषु प्राप्य वीर्य्यसमन्वितः। दर्पाविष्टश्च दुष्टात्मा मामुवाच शतक्रतो।
उपतिष्ठेति स क्रूरः कालञ्च कृतवान्मम। यदि न त्रास्यसि विभो करिष्यति स मां वशे।
एतेन चाहं सम्प्राप्ता नूनं शक्र तवान्तिकं। जहि रौद्रं महाबाहो नहुषं पापनिश्चयं।
प्रकाशयात्मनात्मानं दैत्यदानवसूदनं। तेजः समाप्नुहि विभो देवराज्यं प्रशाधि च। ॥४४५
इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि इन्द्राणीन्द्रस्तवे त्रयोदशोऽध्यायः ॥ १३ ॥
॥ शल्य उवाच ॥ एवमुक्तः स भगवान् शच्या तां पुनरब्रवीत्। विक्रमस्य न कालोऽयं नहुषो बलवत्तरः।

विवर्द्धितश्च ऋषिभिर्हव्यैः कव्यैश्च भाविनि । नीतिमत्र विधास्यामि देवि तां कर्त्तुमर्हसि ।
गुह्यं चैतत्त्वया कार्य्यं नाख्यातव्यं शुभे क्वचित् । गत्वा नहुषमेकान्ते ब्रवीहि च सुमध्यमे ।
ऋषियानेन दिव्येन मामुपैहि जगत्पते । एवं तव वशे प्रीता भविष्यामीति तं वद ।
इत्युक्ता देवराजेन पत्नी सा कमलेक्षणा । एवमस्त्वित्यथोक्त्वा तु जगाम नहुषं प्रति । ४५०
नहुषस्तां ततो दृष्ट्वा स्मयितो वाक्यमब्रवीत् । स्वागतं ते वरारोहे किं करोमि शुचिस्मिते ।
भक्तं मां भज कल्याणि किमिच्छसि मनस्विनि । तव कल्याणि यत्कार्य्यं तत्करिष्ये सुमध्यमे ।
न च व्रीडा त्वया कार्य्या सुश्रोणि मयि विश्वसेः । सत्येन वै शपे देवि करिष्ये वचनं तव ।
॥ इन्द्राण्युवाच ॥ यो मे कृतस्त्वया कालस्तमाकाङ्क्षे जगत्पते । ततस्त्वमेव भर्त्ता मे भविष्यसि सुराधिप ।
कार्य्यञ्च हृदि मे यत्तद्देवराजावधारय । वक्ष्यामि यदि मे राजन् प्रियमेतत्करिष्यसि । ४५५
वाक्यं प्रणयसंयुक्तं ततः स्यां वशगा तव । इन्द्रस्य वाजिनो वाहा हस्तिनोऽथ रथास्तथा ।
इच्छाम्यहमथापूर्व्वं वाहनं ते सुराधिप । यन्न विष्णोर्न रुद्रस्य नासुराणां न रक्षसां ।
वहन्तु त्वां महाभागा ऋषयः सङ्गता विभो । सर्व्वे शिविकया राजन्नेतद्धि मम रोचते ।
नासुरेषु न देवेषु तुल्यो भवितुमर्हसि । सर्व्वेषां तेज आदत्से स्वेन वीर्य्येण दर्शनात् ।
न ते प्रमुखतः स्थातुं कश्चिच्छक्नोति वीर्य्यवान् । ४६०
॥ शल्य उवाच ॥ एवमुक्तस्तु नहुषः प्राहृष्यत तदा किल । उवाच वचनं चापि सुरेन्द्रस्तामनिन्दितां ।
॥ नहुष उवाच ॥ अपूर्व्ववाहनमिदं त्वयोक्तं वरवर्णिनि । दृढं मे रुचितं देवि त्वद्वशोऽस्मि वरानने ।
न ह्यल्पवीर्य्यो भवति यो वाहान् कुरुते मुनीन् । अहं तपस्वी बलवान् भूतभव्यभवत्प्रभुः ।
मयि क्रुद्धे जगन्न स्यान्मयि सर्व्वं प्रतिष्ठितं । देवदानवगन्धर्व्वाः किन्नरोरगराक्षसाः ।
न मे क्रुद्धस्य पर्य्याप्ताः सर्व्वे लोकाः शुचिस्मिते । चक्षुषा यं प्रपश्यामि तस्य तेजो हराम्यहं । ४६५
तस्मात्ते वचनं देवि करिष्यामि न संशयः । सप्तर्षयो मां वक्ष्यन्ति सर्व्वे ब्रह्मर्षयस्तथा ।
पश्य माहात्म्यमस्माकमृद्धिञ्च वरवर्णिनि ।
॥ शल्य उवाच ॥ एवमुक्त्वा तु तां देवीं विसृज्य च वराननां । विमाने योजयित्वा स ऋषीन्नियममास्थितान् ।
अब्रह्मण्यो बलोपेतो मत्तो मदबलेन च । कामवृत्तः स दुष्टात्मा वाहयामास तानृषीन् ।
नहुषेण विसृष्टा च बृहस्पतिमथाब्रवीत् । समयोऽल्पावशेषो मे नहुषेणेह यः कृतः । ४७०
शक्रं मृगय शीघ्रं त्वं भक्तायाः कुरु मे दयां । बाढमित्येव भगवान् बृहस्पतिरुवाच तां ।
न भेतव्यं त्वया देवि नहुषाद्दुष्टचेतसः । न ह्येष स्थास्यति चिरं गत एव नराधमः ।
अधर्म्मज्ञो महर्षीणां वाहनाच्च ततः शुभे । इष्टिञ्चाहं करिष्यामि विनाशायास्य दुर्म्मतेः ।
शक्रञ्चाधिगमिष्यामि माभैस्त्वं भद्रमस्तु ते । ततः प्रज्वाल्य विधिवज्जुहाव परमं हविः ।
बृहस्पतिर्महातेजा देवराजोपलब्धये । हुत्वाऽग्निं सोऽब्रवीद्राजन् शक्रमन्विष्यतामिति । ४७५
तस्माच्च भगवान् देवः स्वयमेव हुताशनः । स्त्रीवेशमद्भुतं कृत्वा तत्रैवान्तरधीयत ।

स दिशः प्रदिशश्चैव पर्व्वतांश्च वनानि च। पृथिवीञ्चान्तरिक्षञ्च विचित्याथ मनोगतिः।
निमेषान्तरमात्रेण बृहस्पतिमुपागमत्।
॥ अग्निरुवाच ॥ बृहस्पते न पश्यामि देवराजमिह क्वचित्। आपः शेषाः सदा चापः प्रवेष्टुं नोत्सहाम्यहं।
न मे तत्र गतिर्ब्रह्मन् किमन्यत्करवाणि ते। तमब्रवीद्देवगुरुरपो विश महाद्युते।　　४८०
॥ अग्निरुवाच ॥ नापः प्रवेष्टुं शक्ष्यामि क्षयो मेऽत्र भविष्यति। शरणं त्वां प्रपन्नोऽस्मि स्वस्ति तेऽस्तु महाद्युते।
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितं। तेषां सर्व्वत्रगन्तेजः स्वासु योनिषु शाम्यति।
इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि बृहस्पत्यग्निसंवादे चतुर्द्दशोऽध्यायः ॥ १४ ॥
॥ बृहस्पतिरुवाच ॥ त्वमग्ने सर्व्वदेवानां मुखं त्वमसि हव्यवाट्। त्वमन्तः सर्व्वभूतानां गूढश्चरसि साक्षिवत्।
त्वामाहुरेकं कवयस्त्वामाहुस्त्रिविधं पुनः। त्वया त्यक्तं जगच्चेदं सद्यो नश्येद्धुताशन।
कृत्वा तुभ्यं नमो विप्राः स्वकर्म्मविजितां गतिं। गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वतीं।　　४८५
त्वमेवाग्ने हव्यवाहस्त्वमेव परमं हविः। यजन्ति सत्रैस्त्वामेव यज्ञैश्च परमाध्वरे।
सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह प्राप्ते काले पचसि पुनः समिद्धः। त्वं सर्व्वस्य भुवनस्य प्रसूतिस्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा।
त्वामग्ने जलदानाहुर्व्विद्युतश्च मनीषिणः। दहन्ति सर्व्वभूतानि त्वत्तो निष्क्रम्य हेतयः।
त्वय्यापो निहिताः सर्व्वास्त्वयि सर्व्वमिदं जगत्। न तेऽस्त्यविदितं किञ्चित् त्रिषु लोकेषु पावक।
स्वयोनिं भजते सर्व्वो विशस्वापोऽविशङ्कितः। अहं त्वां वर्द्धयिष्यामि ब्राह्मैर्मन्त्रैः सनातनैः।　　४९०
एवं स्तुतो हव्यवाट् स भगवान् कविरुत्तमः। बृहस्पतिमथोवाच प्रीतिमान्वाक्यमुत्तमं।
दर्शयिष्यामि ते शक्रं सत्यमेतद्ब्रवीमि ते।
॥ शल्य उवाच ॥ प्रविश्यापस्ततो वह्निः ससमुद्राः सपल्वलाः। आजगाम सरस्तच्च गूढो यत्र शतक्रतुः।
अथ तत्रापि पद्मानि विचिन्वन् भरतर्षभ। अन्वपश्यत् स देवेन्द्रं बिसमध्यगतं तदा।
आगत्य च ततस्तूर्णं तमाचष्ट बृहस्पतेः। अणुमात्रेण वपुषा पद्मतन्त्वाश्रितं प्रभुं।　　४९५
गत्वा देवर्षिगन्धर्व्वैः सहितोऽथ बृहस्पतिः। पुराणैः कर्म्मभिर्द्देवं तुष्टाव बलसूदनं।
महासुरो हतः शक्र नमुचिर्द्दारुणस्त्वया। शम्बरश्च बलश्चैव तथोभौ घोरविक्रमौ।
शतक्रतो विवर्द्धस्व सर्व्वान् शत्रून्निसूदय। उत्तिष्ठ शक्र सम्पश्य देवर्षींश्च समागतान्।
महेन्द्र दानवान् हत्वा लोकास्त्रातास्त्वया विभो। अपां फेनं समासाद्य विष्णुतेजोऽतिबृंहितं।
त्वया वृत्रो हतः पूर्व्वं देवराज जगत्पते।　　५००
त्वं सर्व्वभूतेषु शरण्य ईड्यस्त्वया समं विद्यते नेह भूतं। त्वया धार्य्यन्ते सर्वभूतानि शक्र त्वं देवानां महिमानं चकर्थ।
पाहि सर्व्वान्सलोकांश्च महेन्द्र बलमाप्नुहि। एवं संस्तूयमानश्च सोऽवर्द्धत शनैः शनैः।
स्वञ्चैव वपुरास्थाय बभूव स बलान्वितः। अब्रवीच्च गुरुं देवो बृहस्पतिमवस्थितं।
किं कार्य्यमवशिष्टं वो हतस्त्वाष्ट्रो महासुरः। वृत्रश्च सुमहाकायो यो वै लोकानग्रासयत्।

॥ बृहस्पतिरुवाच ॥ मानुषो नहुषो राजा देवर्षिगणतेजसा । देवराज्यमनुप्राप्तः सर्व्वान्नो बाधते भृशं । ४०५

॥ इन्द्र उवाच ॥ कथञ्च नहुषो राज्यं देवानां प्राप दुर्लभं । तपसा केन वा युक्तः किंवीर्य्यो वा बृहस्पते ।

॥ बृहस्पतिरुवाच ॥ देवा भीताः शक्रमकामयन्त त्वया त्यक्तं महदैन्द्रं पदं तत् । तदा देवाः पितरोऽथर्षयश्च गन्धर्व्वमुख्याश्च समेत्य सर्व्वे ।

गत्वाऽब्रुवन्नहुषं तत्र शक्र त्वं नो राजा भव भुवनस्य गोप्ता । तानब्रवीन्नहुषो नास्मि शक्त आप्यायध्वं तपसा तेजसा मां ।

एवमुक्तैर्वर्द्धितश्चापि देवै राजाऽभवन्नहुषो घोरवीर्य्यः । त्रैलोक्ये च प्राप्य राज्यं महर्षीन् कृत्वा वाहान् याति लोकान् दुरात्मा ।

तेजोहरं दृष्टिविषं सुघोरं मा त्वं पश्येर्नहुषं वै कदाचित् । देवाश्च सर्व्वे नहुषं भयार्त्ता न पश्यन्तो गूढरूपाश्चरन्ति । ४१०

॥ शल्य उवाच ॥ एवं वदत्यङ्गिरसां वरिष्ठे बृहस्पतौ लोकपालः कुबेरः । वैवस्वतश्चैव यमः पुराणो देवश्च सोमो वरुणश्चाजगाम ॥

ते वै समागम्य महेन्द्रमूचुर्द्दिष्ट्या त्वाष्ट्रो निहतश्चैव वृत्रः । दिष्ट्या च त्वां कुशलिनमक्षतञ्च पश्यामो वै निहतारिञ्च शक्र ।

स तान् यथावच्च हि लोकपालान् समेत्य वै प्रीतमना महेन्द्रः । उवाच चैतान् प्रतिभाष्य शक्रः सञ्चोदयिष्यन्नहुषस्यान्तरेण ।

राजा देवानां नहुषो घोररूपस्तत्र साह्यं दीयतां मे भवद्भिः । ते चाब्रुवन्नहुषो घोररूपो दृष्टीविषस्तस्य बिभीम देव ।

त्वं चेद्राजानं नहुषं पराजयेस्ततो वयं भागमर्हाम शक्र । इन्द्रोऽब्रवीद्भवतु भवानपाम्पतिर्यमः कुबेरश्च मयाऽभिषिक्तं । ४१५

सम्प्राप्नुवन्त्वद्य सहैव दैवतैरिपुं जयामो नहुषं घोरदृष्टिं । ततः शक्रं ज्वलनोऽप्याह भागं प्रयच्छ मह्यं भवतस्साह्यं करिष्ये ।

तं प्राह शक्रो भविताऽग्ने तवापि ऐन्द्राग्न्यो वै भाग एको महाक्रतौ ।

॥ शल्य उवाच ॥ एवं सञ्चिन्त्य भगवान् महेन्द्रः पाकशासनः । कुबेरं सर्व्वयक्षाणां धनानाञ्च प्रभुं तथा ।

वैवस्वतं पितॄणाञ्च वरुणञ्चाप्यपां तथा । आधिपत्यं ददौ शक्रः सञ्चिन्त्य वरदस्तथा ।

इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि इन्द्रवरुणादिसंवादे पञ्चदशोऽध्यायः ॥ १५ ॥

॥ शल्य उवाच ॥ अथ सञ्चिन्तयानस्य देवराजस्य धीमतः । नहुषस्य वधोपायं लोकपालैः सहैव तैः । ४२०

तपस्वी तत्र भगवानगस्त्यः प्रत्यदृश्यत । सोऽब्रवीदर्च्य देवेन्द्रं दिष्ट्या वै वर्द्धते भवान् ।

विश्वरूपविनाशेन वृत्रासुरवधेन च । दिष्ट्या च नहुषो भ्रष्टो देवराज्यात्पुरन्दर ।

दिष्ट्या हतारिं पश्यामि भवन्तं बलसूदन ।

॥ इन्द्र उवाच ॥ स्वागतं ते महर्षेऽस्तु प्रीतोऽहं दर्शनात्तव । पाद्यमाचमनीयञ्च गामर्घ्यञ्च प्रतीच्छ मे ।

॥ शल्य उवाच ॥ पूजितं चोपविष्टं तमासने मुनिसत्तमं । पर्य्यपृच्छत देवेशः प्रहृष्टो ब्राह्मणर्षभं । ४२५

एतदिच्छामि भगवन् कथ्यमानं द्विजोत्तम । परिभ्रष्टः कथं स्वर्गान्नहुषः पापनिश्चयः ।

॥ अगस्त्य उवाच ॥ शृणु शक्र प्रियं वाक्यं यथा राजा दुरात्मवान् । स्वर्गाद्भ्रष्टो दुराचारो नहुषो बलदर्पितः ।

श्रमार्त्तास्तु वहन्तस्तं नहुषं पापकारिणं । देवर्षयो महाभागास्तथा ब्रह्मर्षयोऽमलाः ।

पप्रच्छुर्नहुषं देव संशयं जयतां वर । य इमे ब्राह्मणाः प्रोक्ता मन्त्रा वै प्रोक्षणे गवां ।

एते प्रमाणं भवत उताहो नेति वासव। नहुषो नेति तानाह तमसा मूढचेतनः। ५३०

॥ ऋषय ऊचुः ॥ अधर्म्मे संप्रवृत्तस्त्वं धर्म्मं न प्रतिपद्यसे। प्रमाणमेतदस्माकं पूर्व्वं प्रोक्तं महर्षिभिः।

॥ अगस्त्य उवाच ॥ ततो विवदमानः स मुनिभिः सह वासव। अथ मामस्पृशन्मूर्द्धि पादेनाधर्म्मयोजितः।

तेनाभूद्धततेजाश्च निःश्रीकश्च महीपतिः। ततस्तं सहसाविग्नमवोचं भयपीडितं।

यस्मात्पूर्व्वैः कृतं ब्रह्म ब्रह्मर्षिभिरनुष्ठितं। अदुष्टं दूषयसि वै यच्च मूर्द्ध्न्यस्पृशः पदा।

यच्चापि त्वमृषीन्मूढ ब्रह्मकल्पान् दुरासदान्। वाहान् कृत्वा वाहयसि तेन स्वर्गाद्धतप्रभः। ५३५

ध्वंस पाप परिभ्रष्टः क्षीणपुण्यो महीतलं। दशवर्षसहस्राणि सर्परूपधरो महान्।

विचरिष्यसि पूर्णेषु पुनः स्वर्गमवाप्स्यसि। एवं भ्रष्टो दुरात्मा स देवराज्यादरिन्दम।

दिष्ट्या वर्द्धामहे शक्र हतो ब्राह्मणकण्टकः। त्रिपिष्टपं प्रपद्यस्व पाहि लोकान्शचीपते।

जितेन्द्रियो जितामित्रस्स्तूयमानो महर्षिभिः।

॥ शल्य उवाच ॥ ततो देवा भृशं तुष्टा महर्षिगणसंवृताः। पितरश्चैव यक्षाश्च भुजगा राक्षसास्तथा। ५४०

गन्धर्व्वा देवकन्याश्च सर्व्वे चाप्सरसां गणाः। सरांसि सरितः शैलाः सागराश्च विशांपते।

उपागम्याब्रुवन् सर्व्वे दिष्ट्या वर्द्धसि शत्रुहन्। हतश्च नहुषः पापो दिष्ट्याऽगस्त्येन धीमता।

दिष्ट्या पापसमाचारः कृतः सर्पो महीतले।

इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि इन्द्रागस्त्यसंवादे नहुषभ्रंशे षोडशोऽध्यायः ॥ १६ ॥

॥ शल्य उवाच ॥ ततः शक्रः स्तूयमानो गन्धर्व्वाप्सरसां गणैः। ऐरावतं समारुह्य द्विपेन्द्रं लक्षणैर्युतं।

पावकः सुमहातेजा महर्षिश्च बृहस्पतिः। यमश्च वरुणश्चैव कुवेरश्च धनेश्वरः। ५४५

सर्व्वैर्देवैः परिवृतः शक्रो वृत्रनिसूदनः। गन्धर्व्वैरप्सरोभिश्च यातस्त्रिभुवनं प्रभुः।

स समेत्य महेन्द्राण्या देवराजः शतक्रतुः। मुदा परमया युक्तः पालयामास देवराट्।

ततः स भगवांस्तत्र अङ्गिराः समदृश्यत। अथर्व्ववेदमन्त्रैश्च देवेन्द्रं समपूजयत्।

ततस्तु भगवानिन्द्रः प्रहृष्टः समपद्यत। वरञ्च प्रददौ तस्मै अथर्व्वाङ्गिरसे तदा।

अथर्व्वाङ्गिरसो नाम वेदेऽस्मिन् वै भविष्यति। उदाहरणमेतद्धि यज्ञभागञ्च लप्स्यसे। ५५०

एवं सम्पूज्य भगवानथर्व्वाङ्गिरसं तदा। व्यसर्जयन्महाराज देवराजः शतक्रतुः।

सम्पूज्य सर्व्वांस्त्रिदशानृषींश्चापि तपोधनान्। इन्द्रः प्रमुदितो राजा धर्म्मेणापालयत् प्रजाः।

एवं दुःखमनुप्राप्तमिन्द्रेण सह भार्य्यया। अज्ञातवासश्च कृतः शत्रूणां वधकाङ्क्षया।

नात्र मन्युस्त्वया कार्य्यो यत् क्लिष्टोऽसि महावने। द्रौपद्या सह राजेन्द्र भ्रातृभिश्च महात्मभिः।

एवं त्वमपि राजेन्द्र राज्यं प्राप्स्यसि भारत। वृत्रं हत्वा यथा प्राप्तः शक्रः कौरवनन्दन। ५५५

दुराचारश्च नहुषो ब्रह्मद्विट् पापचेतनः। अगस्त्यशापाभिहतो विनष्टः शाश्वतीः समाः।

एवं तव दुरात्मानः शत्रवः शत्रुसूदन। क्षिप्रं नाशं गमिष्यन्ति कर्णदुर्य्योधनादयः।

ततः सागरपर्य्यन्तां भोक्ष्यसे मेदिनीमिमां। भ्रातृभिः सहितो वीर द्रौपद्या च सहानया।

उपाख्यानमिदं शक्रविजयं वेदसम्मितं । राज्ञा व्यूढेष्वनीकेषु श्रोतव्यं जयमिच्छता ।
तस्मात्त्वं श्रावयामि त्वां विजये जयतां वर । संस्तूयमाना वर्द्धन्ते महात्मानो युधिष्ठिर । — ५६०
क्षत्रियाणामभावोऽयं युधिष्ठिर महात्मनां । दुर्य्योधनापराधेन भीमार्जुनबलेन च ।
आख्यानमिन्द्रविजयं य इदं नियतः पठेत् । धूतपाप्मा जितस्वर्गः परत्रेह च मोदते ।
न चारिजं भयं तस्य नापुत्त्रो वा भवेन्नरः । नापदं प्राप्नुयात्काञ्चिद्दीर्घमायुश्च विन्दति ।
सर्व्वत्र जयमाप्नोति न कदाचित् पराजयं ।
॥ वैशम्पायन उवाच ॥ एवमाश्वासितो राजा शल्येन भरतर्षभ । पूजयामास विधिवच्छल्यं धर्मभृतां वरः । — ५६५
श्रुत्वा तु शल्यवचनं कुन्तीपुत्त्रो युधिष्ठिरः । प्रत्युवाच महाबाहुर्मद्रराजमिदं वचः ।
भवान् कर्णस्य सारथ्यं करिष्यति न संशयः । तत्र तेजोवधः कार्य्यः कर्णस्यार्जुनसंस्तवः ।
॥ शल्य उवाच ॥ एवमेतत्करिष्यामि यथा मां सम्प्रभाषसे । यच्चान्यदपि शक्ष्यामि तत्करिष्याम्यहं तव ।
॥ वैशम्पायन उवाच ॥ ततस्त्वामन्त्र्य कौन्तेयाञ्छल्यो मद्राधिपस्तदा । जगाम सबलः श्रीमान् दुर्य्योधनमरिन्दम ।

इति श्रीमहाभारते उद्योगपर्व्वणि सेनोद्योगपर्व्वणि शल्यगमने सप्तदशोऽध्यायः ॥ १७ ॥

॥ वैशम्पायन उवाच ॥ युयुधानस्ततो वीरः सात्वतानां महारथः । महता चतुरङ्गेण बलेनागाद्युधिष्ठिरं । — ५७०
तस्य योधा महावीर्य्या नानादेशसमागताः । नानाप्रहरणा वीराः शोभयाञ्चक्रिरे बलं ।
परश्वधैर्भिन्दिपालैः शूलतोमरमुद्गरैः । परिघैर्यष्टिभिः पाशैः करवालैश्च निर्म्मलैः ।
खड्गकार्मुकनिर्य्यूहैः शरैश्च विविधैरपि । तैलधौतैः प्रकाशद्भिः तदशोभत वै बलं ।
तस्य मेघप्रकाशस्य शस्त्रैस्तैः शोभितस्य च । बभूव रूपं सैन्यस्य मेघस्येव सविद्युतः ।
अक्षौहिणी तु सा सेना तदा यौधिष्ठिरं बलं । प्रविश्यान्तर्दधे राजन् सागरं कुनदी यथा । — ५७५
तथैवाक्षौहिणीं गृह्य चेदीनामृषभो बली । धृष्टकेतुरुपागच्छत्पाण्डवानमितौजसः ।
मागधश्च जयत्सेनो जारासन्धिर्महाबलः । अक्षौहिण्यैव सैन्यस्य धर्मराजमुपागमत् ।
तथैव पाण्ड्यो राजेन्द्र सागरानूपवासिभिः । वृतो बहुविधैर्य्योधैर्युधिष्ठिरमुपागमत् ।
तस्य सैन्यमतीवासीत्तस्मिन् बलसमागमे । प्रेक्षणीयतरं राजन् सुवेशं बलवत्तदा ।
द्रुपदस्याप्यभूत्सेना नानादेशसमागतैः । शोभिता पुरुषैः शूरैः पुत्त्रैश्चास्य महारथैः । — ५८०
तथैव राजा मत्स्यानां विराटो वाहिनीपतिः । पार्व्वतीयैर्महीपालैः सहितः पाण्डवानियात् ।
इतश्चेतश्च पाण्डूनां समाजग्मुर्महात्मनां । अक्षौहिण्यस्तु सप्तैता विविधध्वजसङ्कुलाः ।
युयुत्समानाः कुरुभिः पाण्डवान् समहर्षयन् । तथैव धार्त्तराष्ट्रस्य हर्षं समभिवर्द्धयन् ।
भगदत्तो महीपालः सेनामक्षौहिणीं ददौ । तस्य चीनैः किरातैश्च काञ्चनैरिव संवृतं ।
बभौ बलमनाधृष्यं कर्णिकारवनं यथा । तथा भूरिश्रवाः शूरः शल्यश्च कुरुनन्दन । — ५८५
दुर्य्योधनमुपायातावक्षौहिण्या पृथक् पृथक् । कृतवर्म्मा च हार्दिक्यो भोजान्धकुकुरैः सह ।
अक्षौहिण्यैव सेनाया दुर्य्योधनमुपागमत् । तस्य तैः पुरुषव्याघ्रैर्वनमालाधरैर्बलं ।

अशोभत यथा मत्तैर्व्वनं प्रक्रीडितैर्गजैः। जयद्रथमुखाश्चान्ये सिन्धुसौवीरवासिनः।
आजग्मुः पृथिवीपालाः कम्पयन्त इवाचलान्। तेषामक्षौहिणी सेना बहुला विबभौ तदा।
विधूयमाना वातेन बहुरूप इवाम्बुदः। सुदक्षिणश्च काम्बोजो यवनैश्च शकैस्तथा। ५९०
उपाजगाम कौरव्यमक्षौहिण्या विशाम्पते। तस्य सेनासमावायः शलभानामिवाबभौ।
स च सम्प्राप्य कौरव्यं तत्रैवान्तर्दधे तदा। तथा माहिष्मतीवासी नीलो नीलायुधैः सह।
महीपालो महावीर्य्यैर्द्दक्षिणापथवासिभिः। आवन्त्यौ च महीपालौ महाबलसुसंवृतौ।
पृथगक्षौहिणीभ्यां तावभियातौ सुयोधनं। कैकेयाश्च नरव्याघ्राः सोदर्य्याः पञ्च पार्थिवाः।
संहर्षयन्तः कौरव्यमक्षौहिण्या समाद्रवन्। ततस्ततस्तु सर्व्वेषां भूमिपानां महात्मनां। ५९५
तिस्रोऽन्याः समवर्त्तन्त वाहिन्यो भरतर्षभ। एवमेकादशावृत्ताः सेना दुर्य्योधनस्य ताः।
युयुत्समानाः कौन्तेयान् नानाध्वजसमाकुलाः। न हास्तिनपुरे राजन्नवकाशोऽभवत्तदा।
राज्ञां स्वबलमुख्यानां प्राधान्येनापि भारत। ततः पञ्चनदञ्चैव कृत्स्नञ्च कुरुजाङ्गलं।
तथा रोहितकारण्यं मरुभूमिश्च केवला। अहिच्छत्रं कालकूटं गङ्गाकूलञ्च भारत।
वारणं वाटधानञ्च यामुनश्चैव पर्व्वतः। एष देशः सुविस्तीर्णः प्रभूतधनधान्यवान्। ६००
बभूव कौरवेयाणां बलेनातीव संवृतः। तत्तु सैन्यं तथायुक्तं ददर्श स पुरोहितः।
यः स पाञ्चालराजेन प्रेषितः कौरवान्प्रति।

इति श्रीमहाभारते उद्योगपर्व्वणि पुरोहितसैन्यदर्शने अष्टादशोऽध्यायः समाप्तञ्च सेनोद्योगपर्व्व ॥ १८ ॥

## ॥ अथ सञ्जययानपर्व्व ५ ॥

॥ वैशम्पायन उवाच ॥ स च कौरव्यमासाद्य द्रुपदस्य पुरोहितः। सत्कृतो धृतराष्ट्रेण भीष्मेण विदुरेण च।
सर्व्वं कौशल्यमुक्त्वादौ पृष्ट्वा चैवमनामयं। सर्व्वसेनाप्रणेतॄणां मध्ये वाक्यमुवाच ह।
सर्व्वैर्भवद्भिर्व्विदितो राजधर्म्मः सनातनः। वाक्योपादानहेतोस्तु वक्ष्यामि विदिते सति। ६०५
धृतराष्ट्रश्च पाण्डुश्च सुतावेकस्य विश्रुतौ। तयोः समानं द्रविणं पैतृकं नात्र संशयः।
धृतराष्ट्रस्य ये पुत्त्राः प्राप्तन्तैः पैतृकं पदं। पाण्डुपुत्त्राः कथं नाम न प्राप्ताः पैतृकं वसु।
एवं गते पाण्डवेयैर्व्विदितं वः पुरा यथा। न प्राप्तं पैतृकं द्रव्यं धार्त्तराष्ट्रेण संवृतं।
प्राणान्तिकैरप्युपायैः प्रयतद्भिरनेकशः। शेषवन्तो न शकिता नेतुं वै यमसादनं।
पुनश्च वर्द्धितं राज्यं स्वबलेन महात्मभिः। छद्मनाऽपहृतं क्षुद्रैर्धार्त्तराष्ट्रैः ससौबलैः। ६१०
तदप्यनुमतं कर्म्म यथा युक्तमनेन वै। वासिताश्च महारण्ये वर्षाणीह त्रयोदश।
सभार्य्या क्लेशितैर्व्वीरैः सहभार्य्यैस्तथा भृशं। अरण्ये विविधाः क्लेशाः सम्प्राप्तास्तैः सुदारुणाः।
तथा विराटनगरे योन्यन्तरगतैरिव। प्राप्तः परमसंक्लेशो यथा पापैर्म्महात्मभिः।
ते सर्व्वं पृष्ठतः कृत्वा तत्सर्व्वं पूर्व्वकिल्बिषं। सामैव कुरुभिः सार्द्धमिच्छन्ति कुरुपुङ्गवाः।

तेषाञ्च वृत्तमाज्ञाय वृत्तं दुर्य्योधनस्य च। अनुनेतुमिहार्हन्ति धार्त्तराष्ट्रं सुहृज्जनाः। ६१५
न हि ते विग्रहं वीराः कुर्व्वन्ति कुरुभिः सह। अविनाशेन लोकस्य काङ्क्षन्ते पाण्डवाः स्वकं।
यश्चापि धार्त्तराष्ट्रस्य हेतुः स्याद्विग्रहं प्रति। स च हेतुर्न मन्तव्यो बलीयांसस्तथा हि ते।
अक्षौहिण्यश्च सप्तैव धर्म्मपुत्रस्य सङ्गताः। युयुत्समानाः कुरुभिः प्रतीक्षन्तेऽस्य शासनं।
अपरे पुरुषव्याघ्राः सहस्राक्षौहिणीसमाः। सात्यकिर्भीमसेनश्च यमौ च सुमहाबलौ।
एकादशैताः पृतना एकतश्च समागताः। एकतश्च महाबाहुर्बहुरूपो धनञ्जयः। ६२०
यथा किरीटी सर्व्वाभ्यः सेनाभ्योऽप्यतिरिच्यते। एवमेव महाबाहुर्वासुदेवो महाद्युतिः।
बहुलत्वञ्च सेनानां विक्रमञ्च किरीटिनः। बुद्धिमत्त्वञ्च कृष्णस्य बुद्ध्वा युध्येत को नरः।
ते भवन्तो यथाधर्म्मं यथा समयमेव च। प्रयच्छन्तु प्रदातव्यं मा वः कालोऽत्यगादयं।
इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि पुरोहितवाक्ये एकोनविंशोऽध्यायः॥ १९॥
॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं श्रुत्वा प्रज्ञावृद्धो महाद्युतिः। सम्पूज्यैनं यथाकालं भीष्मो वचनमब्रवीत्।
दिष्ट्या कुशलिनः सर्व्वे सह दामोदरेण ते। दिष्ट्या सहायवन्तश्च दिष्ट्या धर्म्मे च ते रताः। ६२५
दिष्ट्या च सन्धिकामास्ते भ्रातरः कुरुनन्दनाः। दिष्ट्या न युद्धमनसः पाण्डवाः सह बान्धवैः।
भवता सत्यमुक्तन्तु एवमेतन्न संशयः। अतितीक्ष्णन्तु ते वाक्यं ब्राह्मण्यादिति मे मतिः।
असंशयं क्लेशितास्ते वने चेह च पाण्डवाः। प्राप्ताश्च धर्म्मतः सर्व्वं पितुर्धनमसंशयं।
किरीटी बलवान् पार्थः कृतास्त्रश्च महारथः। को हि पाण्डुसुतं युद्धे विषहेत धनञ्जयं।
अपि वज्रधरः साक्षात् किमुतान्ये धनुर्भृतः। त्रयाणामपि लोकानां समर्थ इति मे मतिः। ६३०
भीष्मे ब्रुवति तद्वाक्यं धृष्टमाक्षिप्य मन्युना। दुर्य्योधनं समालोक्य कर्णो वचनमब्रवीत्।
न तन्नाविदितं ब्रह्मन् लोके भूतेन केनचित्। पुनरुक्तेन किन्तेन भाषितेन पुनः पुनः।
दुर्य्योधनार्थे शकुनिर्द्यूते निर्ज्जितवान् पुरा। समयेन गतोऽरण्यं पाण्डुपुत्रो युधिष्ठिरः।
न तं समयमादृत्य राज्यमिच्छन्ति पैतृकं। बलमाश्रित्य मत्स्यानां पञ्चालानाञ्च मूर्खवत्।
दुर्य्योधनो भयाद्विद्वन्न दद्यात् पादमन्ततः। धर्म्मतस्तु महीं कृत्स्नां प्रदद्याच्छत्रवेऽपि च। ६३५
यदि काङ्क्षन्ति ते राज्यं पितृपैतामहं पुनः। यथाप्रतिज्ञं कालं तं चरन्तु वनमाश्रिताः।
ततो दुर्य्योधनस्याङ्के वर्त्तन्तामकुतोभयाः। अधार्म्मिकीं तु मा बुद्धिं मौर्ख्यात् कुर्व्वन्तु केवलं।
अथ ते धर्म्ममुत्सृज्य युद्धमिच्छन्ति पाण्डवाः। आसाद्येमान् कुरुश्रेष्ठान् स्मरिष्यन्ति वचो मम।
॥ भीष्म उवाच ॥ किन्तु राधेय वाचा ते कर्म्म तत् स्मर्त्तुमर्हसि। एक एव यदा पार्थः षड्रथान् जितवान् युधि।
न चेदेवं करिष्यामो यदयं ब्राह्मणोऽब्रवीत्। ध्रुवं युधि हतास्तेन भक्षयिष्याम पांशुकान्। ६४०
॥ वैशम्पायन उवाच ॥ धृतराष्ट्रस्ततो भीष्ममनुमान्य प्रसाद्य च। अवभर्त्स्य च राधेयमिदं वचनमब्रवीत्।
अस्मद्धितं वाक्यमिदं भीष्मः शान्तनवोऽब्रवीत्। पाण्डवानां हितं चैव सर्व्वस्य जगतस्तथा।
चिन्तयित्वा तु पार्थेभ्यः प्रेषयिष्यामि सञ्जयं। स भवान् प्रतियात्वद्य पाण्डवानेव माचिरं।

स तं सत्कृत्य कौरव्यः प्रेषयामास पाण्डवान् । सभामध्ये समाहूय सञ्जयं वाक्यमब्रवीत् ।

इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि सञ्जयाह्वाने विंशोऽध्यायः ॥ २० ॥

॥ धृतराष्ट्र उवाच ॥ प्राप्तानाहुः सञ्जय पाण्डुपुत्त्रानुपप्लव्ये तान् विजानीहि गत्वा । अजातशत्रुञ्च सभाजयेथा दिष्ट्यानघ स्थानमुपस्थितस्त्वं । १४५

सर्व्वान्वदेः सञ्जय स्वस्तिमन्तः कृच्छ्रं वासमतद्दर्हा निरुष्य । तेषां शान्तिर्व्विद्यतेऽस्मासु शीघ्रं मिथ्यापेतानामुपकारिणां सतां ।

नाहं क्वचित्सञ्जय पाण्डवानां मिथ्यावृत्तिं काञ्चन आलपश्यं । सर्व्वां श्रियं ह्यात्मवीर्य्येण लब्धां पर्य्याकार्षुः पाण्डवा मह्यमेव ।

दोषं ह्येषां नाध्यगच्छं परीक्षन्नित्यं कञ्चिद्येन गर्हेम पार्थान् । धर्म्मार्थाभ्यां कर्म्म कुर्व्वन्ति नित्यं सुखप्रिये नानुरुध्यन्ति कामान् ।

घर्म्मं शीतं क्षुत्पिपासे तथैव निद्रां तन्द्रीं क्रोधहर्षौ प्रमादं । धृत्या चैव प्रज्ञया चाभिभूय धर्म्मार्थयोगात प्रयतन्ति पार्थाः ।
त्यजन्ति मित्त्रेषु धनानि काले न संवासाज्जीर्य्यति तेषु मैत्री । यथार्हमानार्थकरा हि पार्थास्तेषां द्वेष्टा नास्त्याजमीढस्य पक्षे । १५०

अन्यत्र पापाद्विषमान्मन्दबुद्धेर्दुर्य्योधनात् क्षुद्रतराच्च कर्णात् । तेषां हीमौ हीनसुखप्रियाणां महात्मनां वर्द्धयतो हि तेजः ।
उत्थानवीर्य्यः सुखमेधमानो दुर्य्योधनः सुकृतं मन्यते तत् । तेषां भागं यच्च मन्येत बालः शक्यं हर्त्तुं जीवतां पाण्डवानां ।
यस्यार्ज्जुनः पदवीं केशवश्च वृकोदरः सात्यकोऽजातशत्रोः । माद्रीपुत्त्रौ सृञ्जयाश्चापि यान्ति पुरा युद्धात्साधु तस्य प्रदानं ।
स ह्येवैकः पृथिवीं सव्यसाची गाण्डीवधन्वा प्रणुदेद्रथस्थः । तथा जिष्णुः केशवोऽप्यप्रधृष्यो लोकत्रयस्याधिपतिर्म्महात्मा ।
तिष्ठेत कस्तस्य मर्त्यः पुरस्ताद्यः सर्व्वलोकेषु वरेण्य एकः । पर्ज्जन्यघोषान् प्रवपञ्छरौघान् पतङ्गसङ्घानिव शीघ्रवेगान् । १५५
दिशं ह्युदीचीमपि चोत्तरान् कुरून् गाण्डीवधन्वैकरथो जिगाय । धनं चैषामाहरत्सव्यसाची सेनानुगान् द्राविडांश्चैव चक्रे ।
यश्चैव देवान् खाण्डवे सव्यसाची गाण्डीवधन्वा प्रजिगाय सेन्द्रान् । उपाहरत् फाल्गुनो जातवेदसे यशोमानं वर्द्धयन्पाण्डवानां ।

गदाभृतां नास्ति समोऽत्र भीमाद्धस्त्यारोहो नास्ति समश्च तस्य । रथेऽर्ज्जुनादाहुरहीनमेनं बाह्वोर्ब्बलेनायुतनागवीर्य्यं ।
सुशिक्षितः कृतवैरस्तरस्वी दहेत क्रुद्धस्तरसा धार्त्तराष्ट्रान् । सदाऽत्यमर्षी बलवान्न शक्यो युद्धे जेतुं वासवेनापि साक्षात् ।
सुचेतसा बलिनौ शीघ्रहस्तौ सुशिक्षितौ भ्रातरौ फाल्गुनेन । श्येनौ यथा पक्षिपूगान् रुजन्तौ माद्रीपुत्त्रौ शेषयतो न शत्रून् । १६०

एतद्बलं पूर्णमस्माकमेवं यत्सत्यं तान् प्राप्य नास्तीति मन्ये । तेषां मध्ये वर्त्तमानस्तरस्वी धृष्टद्युम्नः पाण्डवानामिहैकः ।
सहामात्यः सोमकानां प्रबर्हः सन्त्यक्तात्मा पाण्डवार्थे श्रुतो मे । अजातशत्रुं प्रसहेत कोऽन्यो येषां स स्यादग्रणीर्वृष्णिसिंहः ।
सहोषितश्चरितार्थो वयःस्थो मात्स्येयानामधिपो वै विराटः । स वै सपुत्त्रः पाण्डवार्थे च शश्वद्युधिष्ठिरे भक्त इति श्रुतं मे ।
अवरुद्धा बलिनः केकयेभ्यो महेष्वासा भ्रातरः पञ्च सन्ति । केकयेभ्यो राज्यमाकाङ्क्षमाणा युद्धार्थिनश्चानु वसन्ति पार्थान् ।

सर्व्वे च वीराः पृथिवीपतीनां समानीताः पाण्डवार्थे निविष्टाः । शूरानहं भक्तिमतः शृणोमि प्रीत्या युक्तान् संश्रितान् धर्म्मराजं । ६६५

गिर्य्याश्रया दुर्गनिवासिनश्च योधाः पृथिव्यां कुलजाश्च शुद्धाः । म्लेच्छाश्च नानायुधवीर्य्यवन्तः समागताः पाण्डवार्थे निविष्टाः ।

पाञ्चाल्यश्च राजा समितीन्द्रकल्पो युधि प्रवीरैर्ब्बहुभिः समेतः । समागतः पाण्डवार्थे महात्मा लोकप्रवीरोऽप्रतिवीर्य्यतेजाः ।

अस्त्रं द्रोणादर्ज्जुनाद्वासुदेवात् कृपाद्भीष्माच्चैन वृतं शृणोमि । यन्तं कार्ष्णिप्रतिममाहुरेकं स सात्यकिः पाण्डवार्थे निविष्टः ।

उपाश्रिताश्चेदिकरूषकाश्च सर्व्वोद्योगैर्भूमिपालाः समेताः । तेषां मध्ये सूर्य्यमिवातपन्तं श्रिया वृतं चेदिपतिं ज्वलन्तं ।

अस्तम्भनीयं युधि मन्यमानो ज्यां कर्षतां श्रेष्ठतमं पृथिव्यां । सर्व्वोत्साहं क्षत्रियाणां निहत्य प्रसह्य कृष्णस्तरसा ममर्द्द । ६७०

यशोमानौ वर्द्धयन् पाण्डवानां पुराऽभिनच्छिशुपालं समीक्ष्य । यस्य सर्व्वे वर्द्धयन्ति स्म मानं करूषराजप्रमुखा नरेन्द्राः ।

तमसह्यं केशवं तत्र मत्वा सुग्रीवयुक्तेन रथेन कृष्णं । सम्प्राद्रवंश्चेदिपतिं विहाय सिंहं दृष्ट्वा क्षुद्रमृगा इवान्ये ।

यस्तं प्रतीपस्तरसा प्रत्युदीयादाशंसमानो द्वैरथे वासुदेवं । सोऽशेत कृष्णेन हतः परासुर्व्वातेनेवोन्मथितः कर्णिकारः ।

पराक्रमं मे यदवेदयन्त तेषामर्थे सञ्जय केशवस्य । अनुस्मरंस्तस्य कर्म्माणि विष्णोर्गावल्गणे नाधिगच्छामि शान्तिं ।

न जातु ताञ्छत्रुरन्यः सहेत येषां स स्यादग्रणीर्वृष्णिसिंहः । प्रवेपते मे हृदयं भयेन श्रुत्वा कृष्णावेकरथे समेतौ । ६७५

न चेद्गच्छेत् संगरं मन्दबुद्धिस्ताभ्यां सुतो मे विपरीतचेताः । तदा क्षेमो मे । नोचेत् कुरून् सञ्जय निर्द्दहेतामिन्द्रो विष्णुर्दैत्यसेनां यथैव ।

मतो हि मे शक्रसमो धनञ्जयः सनातनो वृष्णिवीरश्च विष्णुः । धर्म्मारामो ह्रीनिषेवस्तरस्वी कुन्तीपुत्रः पाण्डवोऽजातशत्रुः ।

दुर्य्योधनेन निकृतो मनस्वी नोचेत् क्रुद्धः प्रदहेद्धार्त्तराष्ट्रान् । नाहं तथा ह्यर्ज्जुनाद्वासुदेवाद्भीमाद्वापि यमयोर्व्वा बिभेमि ।

यथा राज्ञः क्रोधदीप्तस्य सूत मन्योरहं भीततरः सदैव । महातपा ब्रह्मचर्य्येण युक्तः सङ्कल्पोऽयं मानसस्तस्य सिध्येत् ।

तस्य क्रोधं सञ्जयाहं समीक्ष्य स्थाने जानन् भृशमस्म्यद्य भीतः । स गच्छ शीघ्रं प्रहितो रथेन पाञ्चालराजस्य चमूंनिवेशनं । ६८०

अजातशत्रुं कुशलं स्म पृच्छेः पुनः पुनः प्रीतियुक्तं वदेस्त्वं । जनार्द्दनं चापि समेत्य तात महामात्रं वीर्य्यवतामुदारं ।

अनामयं मद्वचनेन पृच्छेर्धृतराष्ट्रः पाण्डवैः शान्तिमीप्सुः । न तस्य किञ्चिद्वचनं न कुर्य्यात् कुन्तीपुत्रो वासुदेवस्य सूत ।

प्रियश्चैषामात्मसमश्च कृष्णो विद्वांश्चैषां कर्म्मणि नित्ययुक्तः । समानीतान् पाण्डवान् सृञ्जयांश्च जनार्द्दनं युयुधानं विराटं ।

अनामयं मद्वचनेन पृच्छेः सर्व्वांस्तथा द्रौपदेयांश्च पञ्च । यद्यत्तत्र प्राप्तकालं परेभ्यस्त्वं मन्येथा भारतानां हितञ्च ।

तत्तद्भाषेथाः सञ्जय राजमध्ये न मूर्च्छयेद्यन्न च युद्धहेतुः ।

इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि धृतराष्ट्रकथायामेकविंशोऽध्यायः ॥ २१ ॥

॥ वैशम्पायन उवाच ॥ राज्ञस्तु वचनं श्रुत्वा धृतराष्ट्रस्य सञ्जयः । उपप्लव्यं ययौ द्रष्टुं पाण्डवानमितौजसः । ६८५

स तु राजानमासाद्य कुन्तीपुत्रं युधिष्ठिरं । अभिवाद्य ततः पूर्व्वं सूतपुत्रोऽभ्यभाषत ।

गावल्गणिः सञ्जयः सूतसूनुरजातशत्रुमवदत् प्रतीतः । दिष्ट्या राजंस्त्वामरोगं प्रपश्ये सहायवन्तञ्च महेन्द्रकल्पं ।

अनामयं पृच्छति त्वाऽम्बिकेयो वृद्धो राजा धृतराष्ट्रो मनीषी । कच्चिद्भीमः कुशली पाण्डवाग्र्यो धनञ्जयस्तौ च माद्रीतनूजौ ।

कच्चित्कृष्णा द्रौपदी राजपुत्री सत्यव्रता वीरपत्नी सपुत्रा । मनस्विनी यत्र च वाञ्छसि त्वमिष्टान् कामान् भारत स्वस्तिकामः ।

॥ युधिष्ठिर उवाच ॥ गावल्गणे सञ्जय स्वागतं ते प्रीयामहे ते वयं दर्शनेन । अनामयं प्रतिजाने तवाहं सहानुजैः कुशली चास्मि विद्वन् । ६९०

चिरादिदं कुशलं भारतस्य श्रुत्वा राज्ञः कुरुवृद्धस्य सूत । मन्ये साक्षाद्दृष्टमहं नरेन्द्रं दृष्ट्वैव त्वां सञ्जय प्रीतियोगात् ।

पितामहो नः स्थविरो मनस्वी महाप्राज्ञः सर्व्वधर्म्मोपपन्नः । स कौरव्यः कुशली तात भीष्मो यथा पूर्व्वं वृत्तिरप्यस्य कच्चित् ।

कच्चिद्राजा धृतराष्ट्रः सपुत्रो वैचित्रवीर्य्यः कुशली महात्मा । महाराजो बाह्लिकः प्रातिपेयः कच्चिद्विद्वान् कुशली सूत पुत्र ।

स सोमदत्तः कुशली तात कच्चिद्भूरिश्रवाः सत्यसन्धः शलश्च । द्रोणः सपुत्रश्च कृपश्च विप्रो महेष्वासाः कच्चिदेतेऽप्यरोगाः ।

सर्व्वे कुरुभ्यः स्पृहयन्ति सञ्जय धनुर्द्धरा ये पृथिव्यां प्रधानाः । महाप्राज्ञाः सर्व्वशास्त्रावदाता धनुर्भृतां मुख्यतमाः पृथिव्यां । ६९५

कच्चिन्मानं तात लभन्त एते धनुर्भृतः कच्चिदेतेऽप्यरोगाः । येषां राष्ट्रे निवसति दर्शनीयो महेष्वासः शीलवान् द्रोणपुत्रः ।

वैश्यापुत्रः कुशली तात कच्चिन्महाप्राज्ञो राजपुत्रो युयुत्सुः । कर्णोऽमात्यः कुशली तात कच्चित्सुयोधनो यस्य मन्दो विधेयः ।

स्त्रियो वृद्धा भारतानां जनन्यो महानस्यो दासभार्य्याश्च सूत । वध्वः पुत्रा भागिनेया भगिन्यो दौहित्रा वा कच्चिदप्यव्यलीकाः ।

कच्चिद्राजा ब्राह्मणानां यथावत् प्रवर्त्तते पूर्व्ववत्तात वृत्तिं । कच्चिद्दायान्मामकान् धार्त्तराष्ट्रो द्विजातीनां सञ्जय नोपहन्ति ।

कच्चिद्राजा धृतराष्ट्रः सपुत्र उपेक्षते ब्राह्मणातिक्रमान्वै । स्वर्गस्य कच्चिन्न तथा वर्त्मभूतामुपेक्षते तेषु सदैव वृत्तिं । ७००

एतज्ज्योतिरुत्तमं जीवलोके शुक्लं प्रजानां विहितं विधात्रा । ते चेल्लोभं न नियच्छन्ति मन्दाः कृत्स्नो नाशो भविता कौरवाणां ।

कच्चिद्राजा धृतराष्ट्रः सपुत्रो बुभूषते वृत्तिममात्यवर्गे । कच्चिन्न भेदेन जिजीविषन्ति सुहृद्रूपा दुर्हृदश्चैकमत्यात् ।

कच्चिन्न पापं कथयन्ति तात ते पाण्डवानां कुरवः सर्व एव । द्रोणः सपुत्रश्च कृपश्च वीरो नास्मासु पापानि वदन्ति कच्चित् ।

कच्चिद्राजानं धृतराष्ट्रं सपुत्रं समेत्याहुः कुरवः सर्व्व एव । कच्चिद्दृष्ट्वा दस्युसङ्घान्समेतान् स्मरन्ति पार्थस्य युधाम्प्रणेतुः ।

मौर्व्वीभुजाग्रप्रहितान् स्म तात दोधूयमानेन धनुर्गुणेन । गाण्डीवमुक्तान्स्तनयित्नुघोषानजिह्मगान् कच्चिदनुस्मरन्ति । ७०५

न ह्यपश्यं कञ्चिदहं पृथिव्यां योधं समं वाऽधिकमर्जुनेन । यस्यैकषष्टिर्निशिता तीक्ष्णधाराः सुवाससः सम्मतो हस्तवापः ।

गदापाणिर्भीमसेनस्तरस्वी प्रवेपयञ्छत्रुसङ्घाननीके । नागः प्रभिन्न इव नड्वलेषु चङ्क्रम्यते कच्चिदेनं स्मरन्ति ।

माद्रीपुत्त्रः सहदेवः कलिङ्गान् समागतानजयद्दन्तकूरे । वामेनायं दक्षिणेनैव यो वै महाबलं कच्चिदेनं स्मरन्ति ।

उद्यन्नयं नकुलः प्रेषितोऽयं शिबीं स्त्रिगर्त्तान् सञ्जय पश्यतस्ते । दिशं प्रतीचीं वशमानयन्मे माद्रीसुतं कच्चिदेनं स्मरन्ति ।

पराभवो द्वैतवने य आसीद्दुर्म्मन्त्रिते घोषयात्रागतानां । यत्र मन्दाञ्छत्रुवशं प्रयातानमोचयद्भीमसेनो जयश्च । ७१०

अग्रे पश्चादर्जुनमभ्यरक्षं माद्रीपुत्रौ भीमसेनोऽप्यरक्षत्। गाण्डीवभृच्छत्रुसङ्घानुदस्य स्वस्त्यागमत्कश्चिदेनं स्मरन्ति।
न कर्म्मणा साधुनैकेन नूनं सुखं शक्यं वै भवतीह सञ्जय। सर्व्वात्मना परिजेतुं वयञ्चेन्न शक्नुमो धृतराष्ट्रस्य पुत्रं।

इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि युधिष्ठिरप्रश्ने द्वाविंशोऽध्यायः॥ २२ ॥

॥ सञ्जय उवाच ॥ यथात्थ मे पाण्डव तत्तथैव कुरून् कुरुश्रेष्ठजनञ्च पृच्छसि। अनामयास्तात मनस्विनस्ते कुरुश्रेष्ठान् पृच्छसि पार्थ यांस्त्वं।
सन्त्येव वृद्धाः साधवो धार्त्तराष्ट्रे सन्त्येव पापाः पाण्डव तस्य विद्धि। दद्याद्रिपुभ्योऽपि हि धार्त्तराष्ट्रः कुतो दायाल्लोपयेद्ब्राह्मणानां।
यद्युष्माकं वर्त्तते सोनधर्म्यमद्रुग्धेषु द्रुग्धवत्तन्न साधु। मित्रध्रुक् स्याद्धृतराष्ट्रः सपुत्रो युष्मान् द्विषन् साधुवृत्तानसाधुः। ७१५
न चानुजानाति भृशञ्च तप्यते शोचत्यन्तः स्थविरोऽजातशत्रो। शृणोति हि ब्राह्मणानां समेत्य मित्रद्रोहः पातकेभ्यो गरीयान्।
स्मरन्ति तुभ्यं नरदेव संयुगे युद्धे च जिष्णोश्च युधां प्रणेतुः। समुत्कृष्टे दुन्दुभिशङ्खशब्दे गदापाणिं भीमसेनं स्मरन्ति।
माद्रीसुतौ चापि रणाजिरेषु सर्व्वा दिशः सम्पतन्तौ स्मरन्ति। सेनां वर्षन्तौ शरवर्षैरजस्रं महारथौ समरे दुःप्रकम्पौ।
न त्वेव मन्ये पुरुषस्य राजन्ननागतं ज्ञायते यद्भविष्यं। त्वञ्चेत्तथा सर्व्वधर्म्मोपपन्नः प्राप्तः क्लेशं पाण्डव कृच्छ्ररूपं।
त्वमेवैतत्सर्व्वमतश्च भूयः समीकुर्य्याः प्रज्ञयाऽजातशत्रो। न कामार्थं सन्त्यजेयुर्हि धर्म्मं पाण्डोः सुताः सर्व्व एवेन्द्रकल्पाः। ७२०
त्वमेवैतत्प्रज्ञयाऽजातशत्रो समीकुर्य्या येन शर्म्माप्नुयुस्ते। धार्त्तराष्ट्राः पाण्डवाः सृञ्जयाश्च ये चाप्यन्ये सन्निविष्टा नरेन्द्राः।
यन्मात्रवीद्धृतराष्ट्रो निशायामजातशत्रो वचनं पिता ते। सहामात्यः सहपुत्त्रश्च राजन् समेत्य तां वाचमिमां निबोध।

इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि सञ्जयवाक्ये त्रयोविंशोऽध्यायः॥ २३ ॥

॥ युधिष्ठिर उवाच ॥ समागताः पाण्डवाः सृञ्जयाश्च जनार्द्दनो युयुधानो विराटः। यत्ते वाक्यं धृतराष्ट्रानुशिष्टं गावल्गणे ब्रूहि तत्सूतपुत्त्र।
॥ सञ्जय उवाच ॥ अजातशत्रुञ्च वृकोदरञ्च धनञ्जयं माद्रवतीसुतौ च। आमन्त्रये वासुदेवञ्च शौरिं युयुधानं चेकितानं विराटं।
पञ्चालानामधिपञ्चैव वृद्धं धृष्टद्युम्नं पार्षतं याज्ञसेनिं। सर्व्वे वाचं शृणुतेमां मदीयां वक्ष्यामि यां भूतिमिच्छन् कुरूणां। ७२५
शमं राजा धृतराष्ट्रोऽभिनन्दन्नयोजयत्त्वरमाणो रथं मे। सभ्रातृपुत्त्रस्वजनस्य राज्ञस्तद्रोचतां पाण्डवानां शमोऽस्तु।
सर्व्वैर्धर्म्मैः समुपेतास्तु पार्थाः संस्थानेन मार्द्दवेनार्ज्जवेन। कुले जाता अनृशंसा वदान्या ह्रीनिषेवाः कर्म्मणां निश्चयज्ञाः।
न युज्यते कर्म्म युष्मासु हीनं सत्त्वं हि वस्तादृशं भीमसेनाः। उद्भासते ह्यञ्जनबिन्दुवत्तच्छुभ्रे वस्त्रे यद्भवेत्किल्बिषं वः।
सर्व्वक्षयो दृश्यते यत्र कृत्स्नः पापोदयो निरयोऽभावसंस्थः। कस्तच्च कुर्य्याज्जातु कर्म्म प्रजानन्पराजयो यत्र समो जयश्च।
ते वै धन्या यैः कृतं ज्ञातिकार्य्यं ते वै पुत्त्राः सुहृदो बान्धवाश्च। उपक्रुष्टं जीवितं सन्त्यजेयुर्यतः कुरूणां नियतो वै भवः स्यात्। ७३०
ते चेत् कुरूननुशिष्याथ पार्था निर्णीय सर्व्वान् द्विषतो निगृह्य। समञ्च वस्तज्जीवितं मृत्युना स्याद्यज्जीवध्वं ज्ञातिवधेनसाधु।

को ह्येव युष्मान् सह केशवेन सचेकितान्पार्षतबाहुगुप्तान्। ससात्यकीन्विषहेतेह जेतुं लब्ध्वापि देवान् सचिवानपीन्द्रः।
को वा कुरून्द्रोणभीष्माभिगुप्तानश्वत्थाम्ना शल्यकृपादिभिश्च। रणे विजेतुं विषहेत राजन् राधेयगुप्तान् सह भूमिपालैः।
महद्बलं धार्त्तराष्ट्रस्य राज्ञः को वै शक्तो हन्तुमक्षीयमाणः। सोऽहं जये चैव पराजये च निःश्रेयसं नाधिगच्छामि किञ्चित्।
कथं हि नीचा इव दौष्कुलेया निर्धर्म्मार्थं कर्म्म कुर्य्युश्च पार्थाः। सोऽहं प्रसाद्य प्रणतो वासुदेवं पञ्चालानामधिपं चैव वृद्धं।७२५
कृताञ्जलिः शरणं वः प्रपद्ये कथं स्वस्ति स्यात् कुरुसृञ्जयानां। न ह्येवमेवं वचनं वासुदेवो धनञ्जयो वा जातु किञ्चिन्न
कुर्य्यात्।
प्राणान् ददौ याच्यमानः कुतोऽन्यदेतद्विद्वन् साधनार्थं ब्रवीमि। एतद्राज्ञो भीष्मपुरोगमस्य मतं यद्वः शान्तिरिहोत्तमा स्यात्।
इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि सञ्जयवाक्ये चतुर्व्विंशोऽध्यायः ॥ २४ ॥
॥ युधिष्ठिर उवाच ॥ कां नु वाचं सञ्जय मे शृणोषि युद्धैषिणीं येन युद्धाद्बिभेषि। अयुद्धं वै तात युद्धाद्गरीयः कस्तल्लब्ध्वा
जातु युध्येत सूत।
अकुर्व्वतश्चेत्पुरुषस्य सञ्जय सिध्येत् सङ्कल्पो मनसा यं यमिच्छेत्। न कर्म्म कुर्य्याद्विदितं वै ममैतदन्यत्र युद्धाद्बहु यल्लघीयः।
कुतो युद्धं जातु नरोऽवगच्छेत्को दैवशप्तो हि वृणीत युद्धं। सुखैषिणः कर्म्म कुर्व्वन्ति पार्था धर्म्मादहीनं यच्च लोकस्य
पथ्यं। ७३०
धर्म्मोदयं सुखमाशंसमानाः कृच्छ्रोपायं तत्त्वतः कर्म्म दुःखं। सुखम्प्रेप्सुर्व्विजिघांसुश्च दुःखं य इन्द्रियाणां प्रीतिवशानुगामी।
कामाभिध्या स्वशरीरं दुनोति यया प्रमुक्तो न करोति दुःखं। यथेध्यमानस्य समिद्धतेजसो भूयो बलं वर्द्धति पावकस्य।
कामार्थलाभेन तथैव भूयो न तृप्यते सर्पिषेवाग्निरिद्धः। सम्पश्येमं भोगचयं महान्तं सहास्माभिर्धृतराष्ट्रस्य राज्ञः।
नाश्रेयानीश्वरो विग्रहाणां नाश्रेयान् वै गीतशब्दं शृणोति। नाश्रेयान्वै सेवते माल्यगन्धान्न चाप्यश्रेयाननुलेपनानि।
नाश्रेयान्वै प्रावारान् सन्निवस्ते कथं त्वस्मात्सम्प्रणुदेत् कुरुभ्यः। अत्रैव स्यादबुधस्यैव कामः प्रायः शरीरे हृदयं दुनोति। ७३५
स्वयं राजा विषमस्थः परेषु सामर्थ्यमन्विच्छति तन्न साधु। यथात्मनः पश्यति वृत्तमेव तथा परेषामपि सोऽभ्युपैतु।
आसन्नमग्निन्तु निदाघकाले गम्भीरकक्षे गहने विसृज्य। यथा वृद्धं वायुवशेन शोचेत् क्षेमं मुमुक्षुः शिशिरव्यपाये।
प्राप्तैश्वर्य्यो धृतराष्ट्रोऽद्य राजा लालप्यते सञ्जय कस्य हेतोः। प्रगृह्य दुर्ब्बुद्धिमनार्ज्जवे रतं पुत्रं मन्दं मूढममन्त्रिणन्तु।
अनाप्तवच्चाप्ततमस्य वाचः सुयोधनो विदुरस्यावमन्य। सुतस्य राजा धृतराष्ट्रः प्रियैषी सम्बुध्यमानो विशतेऽधर्म्ममेव।
मेधाविनं ह्यर्थकामं कुरूणां बहुश्रुतं वाग्मिनं शीलवन्तं। स तं राजा धृतराष्ट्रः कुरुभ्यो न सस्मार विदुरं पुत्रकाम्यात्। ७४०
मानघ्नस्यासौ मानकामस्य चेर्ष्योः संरम्भिणश्चार्थधर्म्मातिगस्य। दुर्भाषिणो मन्युवशानुगस्य कामात्मनो दौर्हृदैर्भावितस्य।
अनेयस्याश्रेयसो दीर्घमन्योर्म्मित्रद्रुहः सञ्जय पापबुद्धेः। सुतस्य राजा धृतराष्ट्रः प्रियैषी प्रपश्यमानः प्राजहाद्धर्म्मकामौ।
तदैव मे सञ्जय दीव्यतोऽभून्मतिः कुरूणामागतः स्यादभावः। काव्यां वाचं विदुरो भाषमाणो न विन्दते यद्धृतराष्ट्रात्
प्रशंसां।
क्षत्तुर्य्यदा नान्ववर्त्तन्त बुद्धिं कृच्छ्रं कुरून् सूत तदाऽभ्याजगाम। यावत्प्रज्ञामन्ववर्त्तन्त तस्य तावत्तेषां राष्ट्रवृद्धिर्बभूव।
तदर्थलुब्धस्य निबोध मेऽद्य ये मन्त्रिणो धार्त्तराष्ट्रस्य सूत। दुःशासनः शकुनिः सूतपुत्रो गावल्गणे पश्य सम्मोहमस्य। ७४५

सोऽहं न पश्यामि परीक्षमाणः कथं स्वस्ति स्यात् कुरुसृञ्जयानां । आत्मेश्वर्य्ये धृतराष्ट्रः परेभ्यः प्रव्राजिते विदुरे दीर्घदृष्टौ ।
आशंसते वै धृतराष्ट्रः सपुत्त्रो महाराज्यमसपत्नं पृथिव्यां । तस्मिन् शमः केवलो नोपलभ्यः सर्व्वं स्वकं मद्गतं मन्यतेऽर्थं ।
यत्तत्कर्णो मन्यते पारणीयं युद्धे गृहीतायुधमर्जुनं वै । आसंश्च युद्धानि पुरा महान्ति कथं कर्णो नाभवद्द्वीप एषां ।
कर्णश्च जानाति सुयोधनश्च द्रोणश्च जानाति पितामहश्च । अन्ये च ये कुरवस्तत्र सन्ति यथाऽर्जुनान्नास्त्यपरो धनुर्द्धरः ।
जानन्त्येतत् कुरवः सर्व्व एव ये चाप्यन्ये भूमिपालाः समेताः । दुर्य्योधने राज्यमिहाभवद्यथा अरिन्दमे फाल्गुने विद्यमाने । ७९०
तेनानुबन्धं मन्यते धार्त्तराष्ट्रः शक्यं हर्त्तुं पाण्डवानां ममत्वं । किरीटिना तालमात्रायुधेन तद्वेदिना संयुगं तत्र गत्वा ।
गाण्डीवविस्फारितशब्दमाजावश्रृण्वाना धार्त्तराष्ट्रा ध्रियन्ते । क्रुद्धं न चेदीक्षते भीमसेनं सुयोधनो मन्यते सिद्धमर्थं ।
इन्द्रोऽप्येतन्नोत्सहेत्तात हर्त्तुमैश्वर्य्यं नो जीवति भीमसेने । धनञ्जये नकुले चैव सूत तथा वीरे सहदेवे सहिष्णौ ।
स चेदेतां प्रतिपद्येत बुद्धिं वृद्धो राजा सह पुत्त्रेण सूत । एवं रणे पाण्डवकोपदग्धा न नश्येयुः सञ्जय धार्त्तराष्ट्राः ।
जानासि त्वं क्लेशमस्मासु वृत्तं त्वां पूजयन् सञ्जयाहं क्षमेयं । यच्चास्माकं कौरवैर्भूतपूर्व्वं या नो वृत्तिर्धार्त्तराष्ट्रे तदासीत् ७९५
अद्यापि तत्तत्र तथैव वर्त्ततां शान्तिं गमिष्यामि यथा त्वमात्थ । इन्द्रप्रस्थे भवतु ममैव राज्यं सुयोधनो यच्छतु भारताग्र्यः ।

इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि युधिष्ठिरवाक्ये पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ सञ्जय उवाच ॥ धर्म्मनित्या पाण्डव ते विचेष्टा लोके श्रुता दृश्यते चापि पार्थ । महास्रावं जीवितं चाप्यनित्यं सम्पश्य त्वं पाण्डव मा व्यनीनशः ।
न ते भागं कुरवोऽन्यत्र युद्धात्प्रयच्छेरं स्तुभ्यमजातशत्रो । भैक्ष्येण चर्य्यामन्धकवृष्णिराज्ये श्रेयो मन्ये न तु युद्धेन राज्यं ।
अल्पकालं जीवितं यन्मनुष्ये महास्रावं नित्यदुःखं चलञ्च । भूयश्च तद्वयसो नानुरूपं तस्मात्पापं पाण्डव मा कृथास्त्वं ।
कामा मनुष्यं प्रसजन्त एते धर्म्मस्य ये विघ्नमूलं नरेन्द्र । पूर्व्वं नरस्तान्मतिमान्प्रणिघ्नन् लोके प्रशंसां लभतेऽनवद्यां । ८००
निबन्धनी ह्यर्थतृष्णेह पार्थ तामिच्छतां बाध्यते धर्म्म एव । धर्म्मन्तु यः प्रवृणीते स बुद्धः कामे गृद्धो हीयतेऽर्थानुरोधात् ।
धर्म्मं कृत्वा कर्म्मणां तात मुख्यं महाप्रतापः सवितेव भाति । हीनो हि धर्म्मेण महीमपीमां लब्ध्वा नरः सीदति पापबुद्धिः ।
वेदोऽधीतश्चरितं ब्रह्मचर्य्यं यज्ञैरिष्टं ब्राह्मणेभ्यश्च दत्तं । परं स्थानं मन्यमानेन भूय आत्मा दत्तो वर्षपूगं सुखेभ्यः ।
सुखप्रिये सेवमानोऽतिवेलं योगाभ्यासे यो न करोति कर्म्म । वित्तक्षये हीनसुखोऽतिवेलं दुःखं शेते कामवेगप्रणुन्नः ।
एवं पुनर्ब्रह्मचर्य्याप्रसक्तो हित्वा धर्म्मं यः प्रकरोत्यधर्म्मं । अश्रद्दधत्परलोकाय मूढो हित्वा देहं तप्यते प्रेत्य मन्दः । ८०५
न कर्म्मणां विप्रणाशोऽस्त्यमुत्र पुण्यानां वाऽप्यथवा पापकानां । पूर्व्वं कर्त्तुर्गच्छति पुण्यपापं पश्चात्त्वेनमनुयात्येव कर्त्ता ।
न्यायोपेतं ब्राह्मणेभ्यो यदन्नं श्रद्धापूतं गन्धरसोपपन्नं । अन्वाहार्य्येषूत्तमदक्षिणेषु तथारूपं कर्म्म विख्यायते ते ।
इह क्षेत्रे क्रियते पार्थ कार्य्यं न वै किञ्चित् क्रियते प्रेत्य कार्य्यं । त्वया कृतं पारलोक्यञ्च कर्म्म पुण्यं महत्सद्भिरतिप्रशस्तं ।
जहाति मृत्युञ्च जरां भयञ्च क्षुत्पिपासे मनसश्चाप्रियाणि । न कर्त्तव्यं विद्यते तत्र किञ्चिदन्यत्र वै चेन्द्रियप्रीणनाद्धि ।
एवंरूपं कर्म्मफलं नरेन्द्र मात्रावहं हृदयस्य प्रियेण । स क्रोधजं पाण्डव हर्षजञ्च लोकावुभौ माप्रहासीश्चिराय । ८१०
अन्तं गत्वा कर्म्मणां माप्रजह्याः सत्यं दमञ्चार्जवमानृशंस्यं । अश्वमेधं राजसूयं सचेष्ट्वा पापस्यान्तं कर्म्मणां मा पुनर्गाः ।
तच्चेदेवं द्वेषरूपेण पार्थाः करिष्यध्वं कर्म्म पापं चिराय । निवसध्वं वर्षपूगान्वनेषु दुःखं वासं पाण्डवा धर्म्म एव ।

अप्रश्नश्चैमास्त्र हित्वा पुरस्तादात्माधीनं यद्बलं तेऽतदासीत्। नित्यश्च वश्याः सचिवास्तवेमे जनार्द्दनो युयुधानश्च वीरः।
मत्स्यो राजा रुक्मरथः सपुत्रः प्रहारिभिः सह पुत्रैर्व्विराटः। राजानश्च ये विजिताः पुरस्तात्त्वामेव ते संश्रयेयुः समस्ताः।
महासहायः प्रतपन् बलस्थः पुरस्कृतो वासुदेवार्ज्जुनाभ्यां। वरान् हनिष्यन् द्विषतो रङ्गमध्ये व्यनेष्यथा धार्त्तराष्ट्रस्य दर्पं। ७८९
बलं कस्मादर्द्धयित्वा परस्य निजान् कस्मात्कर्षयित्वा सहायान्। निरुष्य कस्मादब्दपूगान्वनेषु युयुत्ससे पाण्डव हीनकालं।
अप्राज्ञो वा पाण्डव युध्यमानो धर्म्मज्ञो वा भूतिमर्थोऽभ्युपैति। प्रज्ञावान्वा बुध्यमानोऽपि धर्म्मं संरम्भाद्वा सोऽपि भूतेरपैति।
नाधर्म्मे ते धीयते पार्थ बुद्धिर्न संरम्भात् कर्म्म चकर्थ पापं। अथो किं तत्कारणं यस्य हेतोः प्रज्ञाविरुद्धं कर्म्म चिकीर्षसीदं।
अव्याधिजं कटुकं शीर्षरोगि यशोमुषं पापफलोदयञ्च। सतां पेयं यन्न पिबन्त्यसन्तो मन्युं महाराज पिब प्रशाम्य।
पापानुबन्धं को नु तं कामयेत क्षमैव ते ज्यायसी नोत भोगाः। यत्र भीष्मः शान्तनवो हतः स्याद्यत्र द्रोणः सहपुत्रो हतः स्यात्। ७९०
कृपः शल्यः सौमदत्तिर्व्विकर्णो विविंशतिः कर्णदुर्य्योधनौ च। एतान् हत्वा कीदृशं तत्सुखं स्याद्यद्विन्देथास्तदनुब्रूहि पार्थ।
लब्ध्वाऽपीमां पृथिवीं सागरान्तां जरामृत्यू नैव हि त्वं प्रजह्याः। प्रियाप्रिये सुखदुःखे च राजन्नेवं विद्वान्नैव युद्धं कुरु त्वं।
अमात्यानां यदि कामस्य हेतोरेवं युक्तं कर्म्म चिकीर्षसि त्वं। अपक्रामेः सम्प्रदायैव तेषां मागास्त्वं वै देवयानात्पथोऽद्य।
इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि सञ्जयवाक्ये षड्विंशोऽध्यायः॥ २६ ॥
॥ युधिष्ठिर उवाच॥ असंशयं सञ्जय सत्यमेतद्धर्म्मो वरः कर्म्मणां यत्त्वमात्थ। ज्ञात्वा तु मां सञ्जय गर्हयेस्त्वं यदि धर्म्मं यद्यधर्म्मं चरेयं।
यत्राधर्म्मो धर्म्मरूपाणि धत्ते धर्म्मः कृत्स्नो दृश्यतेऽधर्म्मरूपः। बिभ्रद्धर्म्मो धर्म्मरूपं तथा च विद्वांसस्तं सम्प्रपश्यन्ति बुद्ध्या। ७९१
एवं तथैवापदि लिङ्गमेतद्धर्म्माधर्म्मौ नित्यवृत्ती भजेतां। आद्यं लिङ्गं यस्य तस्य प्रमाणमापद्धर्म्मं सञ्जय तन्निबोध।
असत्यामापदि कर्म्मणि वर्त्तमानो विकर्म्मस्थः सञ्जय गर्हये ते। लुप्तायान्तु प्रकृतौ येन कर्म्म निष्पादयेत्तत्परीप्सेद्विहीनः।
प्रकृतिस्थश्चापदि वर्त्तमान उभौ गर्ह्यौ भवतः सञ्जयैतौ। अविनाशमिच्छतां ब्राह्मणानां प्रायश्चित्तं विहितं यद्विधात्रा।
सम्पश्येथाः कर्म्मसु वर्त्तमानान् विकर्म्मस्थान् सञ्जय गर्हयेस्त्वं। मनीषिणां सत्त्वविच्छेदनाय विधीयते सत्सु वृत्तिः सदैव।
अब्राह्मणाः सन्ति तु ये न वैद्याः सर्व्वोत्सङ्गं साधु मन्येत तेभ्यः। तद्भागिनः पितरो ये च पूर्व्वे पितामहा ये च तेभ्यः परेऽन्ये। ८००
प्रज्ञैषिणो ये च हि कर्म्म कुर्व्वन्नान्यं ततो नास्तिकोऽस्मीति मन्ये। यत्किञ्चनेदं वित्तमस्यां पृथिव्यां यद्देवानां त्रिदशानां परं यत्।
प्राजापत्यं त्रिदिवं ब्रह्मलोकं नाधर्म्मतः सञ्जय कामयेयं। धर्म्मेश्वरः कुशलो नीतिमांश्चाप्युपासिता ब्राह्मणानां मनीषी।
नानाविधांश्चैव महाबलांश्च राज्ञो विज्ञानमनुशास्ति कृष्णः। यदि ह्यहं विसृजन् स्यामगर्ह्यो युध्यमानो यदि जह्यां स्वधर्म्मं।
महायशाः केशवस्तद्ब्रवीतु वासुदेवस्तूभयोरर्थकामः। शैनेयोऽयं चेदयश्चान्धकाश्च वार्ष्णेयभोजाः कुकुराः सृञ्जयाश्च।
उपासीना वासुदेवस्य बुद्धिं निगृह्य शत्रून् सुहृदो नन्दयन्ति। वृष्ण्यन्धका ह्युग्रसेनादयो वै कृष्णप्रणीताः सर्व्व एवेन्द्रकल्पाः। ८०१

मनस्विनः सत्यपरायणाश्च महाबला यादवा भोगवन्तः । काश्यो बभ्रुः श्रियमुत्तमाप्तो लब्ध्वा कृष्णं भ्रातरमीशितारं ।
यस्मै कामान्वर्षति वासुदेवो ग्रीष्मात्यये मेघ इव प्रजाभ्यः । ईदृशोऽयं केशवस्तात भूयान् विद्धि ह्येनं कर्मणां निश्चयज्ञं ।

प्रियश्च नः साधुतमश्च कृष्णो नातिक्रमे वचनं केशवस्य ।

इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि युधिष्ठिरवाक्ये सप्तविंशोऽध्यायः ॥ २७ ॥

॥ वासुदेव उवाच ॥ अविनाशं सञ्जय पाण्डवानामिच्छाम्यहं भूतिमेषां प्रियञ्च । तथा राज्ञो धृतराष्ट्रस्य सूत सदा शंसे बहुपुत्रस्य वृद्धिं ।

कामो हि मे सञ्जय नित्यमेव नान्यद्ब्रूयां तान्प्रति शाम्यतेति । राज्ञश्च हि प्रियमेतच्छृणोमि मन्ये चैतत्पाण्डवानां समर्थं । ८१०

सुदुष्करश्चात्र शमो हि नूनं प्रदर्शितः सञ्जय पाण्डवेन । यस्मिन्गृद्धो धृतराष्ट्रः सपुत्रः कस्मादेषां कलहो नावमूर्च्छेत् ।
न त्वं धर्म्मं विचरं सञ्जयेह मत्तश्च जानासि युधिष्ठिराच्च । अथो कस्मात्सञ्जय पाण्डवस्य उत्साहिनः पूरयतः स्वकर्म्म ।
यथाख्यातमावसतः कुटुम्बं पुरा कस्मात्साधु विलोपमात्थ । अस्मिन्विधौ वर्त्तमाने यथावदुच्चावचा मतयो ब्राह्मणानां ।
कर्म्मणाहुः सिद्धिमेके परत्र हित्वा कर्म्म विद्यया सिद्धिमेके । नाभुञ्जानो भक्ष्यभोज्यस्य तृप्येद्विद्वानपीह विदितं ब्राह्मणानां ।

या वै विद्याः साधयन्तीह कर्म्म तासां फलं विद्यते नेतरासां । तत्रेह वै दृष्टफलन्तु कर्म्म पीत्वोदकं शाम्यति तृष्णयार्त्तः । ८११
सोऽयं विधिर्विहितः कर्म्मणैव संवर्त्तते सञ्जय तत्र कर्म्म । तत्र योऽन्यत्कर्म्मणः साधु मन्ये मोघं तस्यालपितं दुर्ब्बलस्य ।
कर्म्मणाऽमी भान्ति देवाः परत्र कर्म्मणैवेह प्लवते मातरिश्वा । अहोरात्रे विदधत्कर्म्मणैव अतन्द्रितो नित्यमुदेति सूर्य्यः ।
मासार्द्धमासानथ नक्षत्रयोगानतन्द्रितश्चन्द्रमाश्चाभ्युपैति । अतन्द्रितो दहते जातवेदाः समिद्धमानः कर्म्म कुर्व्वन् प्रजाभ्यः ।
अतन्द्रिता भारमिमं महान्तं विभर्त्ति देवी पृथिवी बलेन । अतन्द्रिताः शीघ्रमपो वहन्ति सन्तर्पयन्त्यः सर्व्वभूतानि नद्यः ।
अतन्द्रितो वर्षति भूरितेजाः सन्नादयन्नन्तरीक्षं दिशश्च । अतन्द्रितो ब्रह्मचर्य्यं चचार श्रेष्ठत्वमिच्छन्बलभिद्देवतानां । ८२०
हित्वा सुखं मनसश्च प्रियाणि देवः शक्रः कर्म्मणा श्रैष्ठ्यमाप । सत्यधर्म्मौ पालयन्नप्रमत्तो दमन्तितिक्षां समतां प्रियञ्च ।
एतानि सर्व्वाण्युपसेवमानः सदेव राज्यं मघवान्प्राप मुख्यं । बृहस्पतिर्ब्रह्मचर्य्यं चचार समाहितः संशितात्मा यथावत् ।
हित्वा सुखं प्रतिरुध्येन्द्रियाणि तेन देवानामगमद्गौरवं सः । तथा नक्षत्राणि कर्म्मणाऽमुत्र भान्ति रुद्रादित्या वसवोऽथापि विश्वे ।

यमो राजा वैश्रवणः कुवेरो गन्धर्व्वयक्षाप्सरसश्च सूत । ब्रह्मविद्यां ब्रह्मचर्य्यं क्रियाश्च निषेवमाणा ऋषयोऽमुत्र भान्ति ।
जानन्निमं सर्व्वलोकस्य धर्म्मं विप्रेन्द्राणां क्षत्रियाणां विशाञ्च । स कस्मात्त्वं जानतां ज्ञानवान् सन् व्यायच्छसे सञ्जय कौरवार्थे । ८२१

आम्नायेषु नित्यसंयोगमस्य तथाऽश्वमेधे राजसूये च विद्धि । संयुज्यते धनुषा वर्म्मणा च हस्त्यश्वपृष्ठे रथशस्त्रैश्च भूयः ।
ते चेदिमे कौरवाणामुपायमवगच्छेयुरवधेनैव पार्थाः । धर्म्मत्राणं पुण्यमेषां कृतं स्यादार्य्ये वृत्ते भीमसेनं निगृह्य ।
ते चेत्पित्र्ये कर्म्मणि वर्त्तमाना आपद्येरन् दिष्टवशेन मृत्युं । यथाशक्त्या पूरयन्तः स्वकर्म्म तदप्येषां निधनं स्यात् प्रशस्तं ।

उताहो त्वं मन्यसे शाम्यमेव राज्ञां युद्धे वर्त्तते धर्म्मतन्त्रं। अयुद्धे वा वर्त्तते धर्म्मतन्त्रं तथैव ते वाचमिमां शृणोमि।

चातुर्व्वर्ण्यस्य प्रथमं विभागमवेक्ष्य त्वं सञ्जय स्वस्य कर्म्म। निशम्याथो पाण्डवानां स्वकर्म्म प्रशंस वा निन्द वा या मतिस्ते। ८२०

अधीयीत ब्राह्मणो वै यजेत दद्यादियात्तीर्थमुख्यानि चैव। अध्यापयेद्याजयेच्चापि याज्यान् प्रतिग्रहान्वा विदितान्प्रतीच्छेत्।

तथा राजन्यो रक्षणं वै प्रजानां कृत्वा धर्म्मेणाप्रमत्तोऽथ दत्त्वा। यज्ञैरिष्ट्वा सर्व्ववेदानधीत्य दारान् कृत्वा पुण्यकृदा

वसेद्गृहान्।

स धर्म्मात्मा धर्म्ममधीत्य पुण्यं यदिच्छया व्रजति ब्रह्मलोकं। वैश्योऽधीत्य कृषिगोरक्षपण्यैर्व्वित्तं चिन्वन् पालयन्

प्रमत्तः।

प्रियं कुर्व्वन् ब्राह्मणक्षत्रियाणां धर्म्मशीलः पुण्यकृदावसेद्गृहान्। परिचर्य्या वन्दनं ब्राह्मणानां नाधीयीत प्रतिषिद्धोऽस्य यज्ञः।

नित्योत्थितो भूतयेऽतन्द्रितः स्यादेवं स्मृतः शूद्रधर्म्मः पुराणः। एतान् राजा पालयन्नप्रमत्तो नियोजयन् सर्व्व

वर्णान् स्वधर्म्मे। ८२५

अकामात्मा समवृत्तिः प्रजासु नाधार्म्मिकाननुरुध्येत कामान्। श्रेयांस्तस्माद्यदि विद्येत कश्चिदभिज्ञातः सर्व्वधर्म्मोपपन्नः।

स तं दुष्टमनुशिष्यात्प्रजानामेतद्बुध्येन्न च तस्मिन्नसाधुः। यदा गृध्येत्परभूमौ नृशंसो विधिप्रकोपाद्बलमाददानः।

ततो राज्ञां समभवद्युद्धमेतत्तत्र जातं वर्म्म शस्त्रं धनुश्च। इन्द्रेणेदं दस्युवधाय कर्म्म उत्पादितं वर्म्म शस्त्रं धनुश्च।

तत्र पुण्यं दस्युवधेन लभ्यते सोऽयं दोषः कुरुभिस्तीव्ररूपः। अधर्म्मज्ञैर्धर्म्ममबुध्यमानैः प्रादुर्भूतः सञ्जय तन्न साधु।

तत्र राजा धृतराष्ट्रस्य पुत्रो धर्म्म्यं हरन्पाण्डवानामकस्मात्। नावेक्षते राजधर्म्मं पुराणं तदन्वयाः कुरवः सर्व्व एव। ८३०

स्तेनो हरेद्यत्र धनं ह्यदृष्टः प्रसह्य वा यच्च हरेत दृष्टः। उभौ गर्ह्यौ भवतः सञ्जयैतौ किं वै पृथक्त्वं धृतराष्ट्रस्य पुत्रे।

सोऽयं लोभान्मन्यते धर्म्ममेतं यमिच्छति क्रोधवशानुगामी। भागः पुनः पाण्डवानां निविष्टस्तन्नोऽकस्मादाददीरन् परे वै।

अस्मिन्पदे युध्यतां नो वधोऽपि श्लाघ्यः पित्र्यं परराज्याद्विशिष्टं। एतान् धर्म्मान् कौरवाणां पुराणानाचक्षीथाः सञ्जय

राजमध्ये।

ये ते मन्दा मृत्युवशाभिपन्नाः समानीता धार्त्तराष्ट्रेण मूढाः। इदं पुनः कर्म्म पापीय एव सभामध्ये पश्य वृत्तं कुरूणां।

प्रियां भार्य्यां द्रौपदीं पाण्डवानां यशस्विनीं शीलवृत्तोपपन्नां। यदुपेक्षन्त कुरवो भीष्ममुख्याः कामानुगेनोपरुद्धां रुदन्तीं। ८३५

तां चेत्तदा ते सकुमारवृद्धा अवारयिष्यन् कुरवः समेताः। मम प्रियं धृतराष्ट्रोऽकरिष्यत् पुत्राणाञ्च कृतमस्याऽभविष्यत्।

दुःशासनः प्रातिलोम्यान्निनाय सभामध्ये श्वशुराणाञ्च कृष्णां। सा तत्र नीता करुणं व्यपेक्ष्य नान्यं क्षत्तुर्नाथमवाप

किञ्चित्।

कार्पण्यादेव सहितास्तत्र भूपा नाशक्नुवन् प्रतिवक्तुं सभायां। एकः क्षत्ता धर्म्म्यमर्थं ब्रुवाणो धर्म्मबुद्ध्या प्रत्युवाचाल्पबुद्धिं।

अनुक्त्वा त्वं धर्म्ममेतं सभायामथेच्छसे पाण्डवस्योपदेष्टुं। कृष्णा त्वेतत्कर्म्म चकार शुद्धं सुदुष्करं तच्च सभां समेत्य।

येन कृच्छ्रात्पाण्डवानुज्जहार तथात्मानं नौरिव सागरौघात्। यत्राब्रवीत्सूतपुत्रः सभायां कृष्णां स्थितां श्वशुराणां

समीपे। ८४०

न ते गतिर्व्विद्यते याज्ञसेनि प्रपद्य दासी धार्त्तराष्ट्रस्य वेश्म। पराजितास्ते पतयो न सन्ति पतिं चान्यं भाविनि त्वं

वृणीष्व।

यो भीमसेनोहृदये प्रोत आसीदस्थि च्छिन्दन् मर्म्मघाती सुघोरः । कर्णाच्छरो वाङ्मयस्तिग्मतेजाः प्रतिष्ठितो हृदये फाल्गुनस्य ।

कृष्णाजिनानि परिधित्समानान् दुःशासनः कटुकान्यभ्यभाषत । एते सर्व्वे षण्ढतिला विनष्टाः क्षयं गता नरकं दीर्घकालं ।

गान्धारराजः शकुनिर्निकृत्या यदब्रवीत् द्यूतकाले स पार्थं । पराजितो नकुलः किं तवास्ति कृष्णया त्वं दीव्य वै याज्ञसेन्या ।

जानासि त्वं सञ्जय सर्व्वमेतत् द्यूते वाक्यं गर्ह्यमेवं यथोक्तं । स्वयं त्वहं प्रार्थये तत्र गन्तुं समाधातुं कार्य्यमेतद्विपन्नं । ८१५

विशापयित्वा यदि पाण्डवार्थं शमं कुरूणामपि चेच्चरेयं । पुण्यञ्च मे स्याच्चरितं महोदयं मुच्येरंश्च कुरवो मृत्युपाशात् ।

अपि मे वाचं भाषमाणस्य काव्यां धर्म्मारामामर्थवतीमहिंस्रां । अवेक्षेरन् धार्त्तराष्ट्राः समक्षं माञ्च प्राप्तं कुरवः पूजयेयुः ।

अतोऽन्यथा रथिना फाल्गुनेन भीमेन चैवाहवदंशितेन । परासिक्तान् धार्त्तराष्ट्रांश्च विद्धि प्रदह्यमानान् कर्म्मणा स्वेन पापान् ।

पराजितान् पाण्डवेयांस्तु वाचो रौद्रा रूक्षा भाषते धार्त्तराष्ट्रः । गदाहस्तो भीमसेनोऽप्रमत्तो दुर्य्योधनं स्मारयिता हि काले ।

सुयोधनो मन्युमयो महाद्रुमः स्कन्धः कर्णः शकुनिस्तस्य शाखा । दुःशासनः पुष्पफले समृद्धे मूलं राजा धृतराष्ट्रो मनीषी ॥ ८२०

युधिष्ठिरो धर्म्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखा । माद्रीसुतौ पुष्पफले समृद्धे मूलन्त्वहं ब्रह्म च ब्राह्मणाश्च ।

वनं राजा धृतराष्ट्रः सपुत्रो व्याघ्रास्ते वै सञ्जय पाण्डुपुत्राः । मा वनं छिन्धि सव्याघ्रं मा व्याघ्रा नीनशन् वनात् ।

निर्वनो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनं । तस्माद्व्याघ्रो वनं रक्षेद्वनं व्याघ्रञ्च पालयेत् ।

लताधर्म्मा धार्त्तराष्ट्राः शालाः सञ्जय पाण्डवाः । न लता वर्द्धते जातु महाद्रुममनाश्रिता ।

स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः । यत्कृत्यं धृतराष्ट्रस्य तत्करोतु नराधिपः । ८२५

स्थिताः शमे महात्मानः पाण्डवा धर्म्मचारिणः । योधाः समर्थास्तद्विद्वन्नाचक्षीथा यथातथं ।

इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि कृष्णवाक्ये अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ सञ्जय उवाच ॥ आमन्त्रये त्वां नरदेव देव गच्छाम्यहं पाण्डव स्वस्ति तेऽस्तु । कच्चिन्न वाचा वृजिनं हि किञ्चिदुच्चारितं मे मनसोऽभिषङ्गात् ।

जनार्द्दनं भीमसेनार्ज्जुनौ च माद्रीसुतौ सात्यकिं चेकितानं । आमन्त्र्य गच्छामि शिवं सुखं वः सौम्येन मां पश्यत चक्षुषा नृपाः ।

॥ युधिष्ठिर उवाच ॥ अनुज्ञातः सञ्जय स्वस्ति गच्छ न नः स्मरस्यप्रियं जातु विद्वन् । विद्मश्च त्वां ते च वयञ्च सर्व्वे शुद्धात्मानं मध्यगतं सभास्थं ।

आप्तो दूतः सञ्जय सुप्रियो मे कल्याणवाक् शीलवांस्तृप्तिमांश्च । न मुह्येस्त्वं सञ्जय जातु मत्या न च क्रुध्येरुच्यमानोऽपि तथ्यं ।

दुरुक्तैः । ८३०

न मर्म्मगां जातु वक्ताऽसि रूक्षां नोपश्रुतिं कटुकां नो तु मुक्तां । धर्म्मारामामर्थवतीमहिंस्रामेतां वाचं तव जानीम सूत ।

त्वमेव नः प्रियतमोऽसि दूत इहागच्छेद्विदुरो वा द्वितीयः। अभीक्ष्णदृष्टोऽसि पुरा हि नस्त्वं धनञ्जयस्यात्मसमः सखाऽसि।
इतो गत्वा सञ्जय क्षिप्रमेव उपातिष्ठेथा ब्राह्मणान् ये तदर्हाः। विशुद्धवीर्य्यांश्चरणोपपन्नाः कुले जाताः सर्व्वधर्म्मोपपन्नाः।
स्वाध्यायिनो ब्राह्मणा भिक्षवश्च तपस्विनो ये च नित्या वनेषु। अभिवाद्या वै मद्वचनेन वृद्धास्तथेतरेषां कुशलं वदेथाः।
पुरोहितं धृतराष्ट्रस्य राज्ञस्तथाचार्य्या ऋत्विजो ये च तस्य। तैश्च त्वं तात सहितैर्यथार्हं संगच्छेथाः कुशलेनैव सूत। ८०५
अश्रोत्रिया ये च वसन्ति वृद्धा मनस्विनः शीलबलोपपन्नाः। आशंसन्तोऽस्माकमनुस्मरन्तो यथाशक्ति धर्म्ममात्रां चरन्तः।
श्रावयेथा मां कुशलिनं स्म तेभ्यो ह्यनामयं तात पृच्छेर्जघन्ये। ये जीवन्ति व्यवहारेण राष्ट्रे ये पालयन्तो निवसन्ति राष्ट्रे।
आचार्य्य इष्टो नयगो विधेयो वेदानभीप्सन् ब्रह्मचर्य्यं चचार। योऽस्त्रं चतुष्पात्पुनरेव चक्रे द्रोणः प्रसन्नोऽभिवाद्यस्तथाऽसौ।
अधीतविद्यश्चरणोपपन्नो योऽस्त्रं चतुष्पात्पुनरेव चक्रे। गन्धर्व्वपुत्रप्रतिमं तरस्विनं तमश्वत्थामानं कुशलं स्म पृच्छेः।
शारद्वतस्यावसथं स्म गत्वा महारथस्यात्मविदां वरस्य। त्वं मामभीक्ष्णं परिकीर्त्तयन् वै कृपस्य पादौ सञ्जय पाणिना स्पृशेः। ८१०
यस्मिन् शौर्य्यमानृशंस्यं तपश्च प्रज्ञा शीलं श्रुतिसत्त्वे धृतिश्च। पादौ गृहीत्वा कुरुसत्तमस्य भीष्मस्य मां तत्र निवेदयेथाः।
प्रज्ञाचक्षुर्यः प्रणेता कुरूणां बहुश्रुतो वृद्धसेवी मनीषी। तस्मै राज्ञे स्थविरायाभिवाद्य आचक्षीथाः सञ्जय मामरोगं।
ज्येष्ठः पुत्रो धृतराष्ट्रस्य मन्दो मूर्खः शठः सञ्जय पापशीलः। प्रशास्ता वै पृथिवी येन सर्व्वा सुयोधनं कुशलं तात पृच्छेः।
भ्राता कनीयानपि तस्य मन्दस्तथाशीलः सञ्जय सोऽपि शश्वत्। महेष्वासः शूरतमः कुरूणां दुःशासनः कुशलं तात वाच्यः।
यस्य कामो वर्त्तते नित्यमेव नान्यः शमाद्भारतानामिति स्म। स बाह्लिकानामृषभो मनीषी त्वयाऽभिवाद्यः सञ्जय साधुशीलः। ८१५
गुणैरनेकैः प्रवरैश्च युक्तो विज्ञानवान्नैव च निष्ठुरो यः। स्नेहादमर्षं सहते सदैव स सोमदत्तः पूजनीयो मतो मे।
अर्हत्तमः कुरुषु सौमदत्तिः स नो भ्राता सञ्जय मत्सखा च। महेष्वासो रथिनामुत्तमोऽर्हः सहामात्यः कुशलं तस्य पृच्छेः।
ये चैवान्ये कुरुमुख्या युवानः पुत्राः पौत्रा भ्रातरश्चैव ये नः। यं यमेषां मन्यसे येन योग्यं तत्तत्प्रोच्यानामयं सूत वाच्याः।
ये राजानः पाण्डवायोधनाय समानीता धार्त्तराष्ट्रेण केचित्। वशातयः शाल्वकाः केकयाश्च तथाम्बष्ठा ये त्रिगर्त्ताश्च मुख्याः।
प्राच्योदीच्या दाक्षिणात्याश्च शूरास्तथा प्रतीच्याः पार्व्वतीयाश्च सर्व्वे। अनृशंसाः शीलवृत्तोपपन्नास्तेषां सर्व्वेषां कुशलं सूत पृच्छेः। ८२०
हस्त्यारोहा रथिनः सादिनश्च पदातयश्चार्य्यसङ्घा महान्तः। आख्याय मां कुशलिनं स्म नित्यमनामयं परिपृच्छेः समग्रान्।
तथा राज्ञो ह्यर्थयुक्तानमात्यान् दौवारिकान् ये च सेनां नयन्ति। आयव्ययं ये गणयन्ति नित्यमर्थांश्च ये महतश्चिन्तयन्ति।
वृन्दारकं कुरुमध्येष्वमूढं महाप्रज्ञं सर्व्वधर्म्मोपपन्नं। न तस्य युद्धं रोचते वै कदाचित् वैश्यापुत्रं कुशलं तात पृच्छेः।
निकर्त्तने देवने योऽद्वितीयश्छद्मोपधः साधुदेवी मताक्षः। यो दुर्ज्जयो देवितव्येन सङ्ख्ये स चित्रसेनः कुशलं तात वाच्यः।

गान्धारराजः शकुनिः पार्व्वतीयो निकर्त्तने योऽद्वितीयोऽक्षदेवो । मानं कुर्व्वन् धार्त्तराष्ट्रस्य सूत मिथ्याबुद्धेः कुशलं तात पृच्छेः । ८९५

यः पाण्डवानेकरथेन वीरः समुत्सहत्यप्रधृष्यान् विजेतुं । यो मुह्यतां मोहयिताऽद्वितीयो वैकर्त्तनः कुशलं तस्य पृच्छेः ।

स एव भक्तः स गुरुः स भर्त्ता स वै पिता स च माता सुहृच्च । अगाधबुद्धिर्व्विदुरो दीर्घदर्शी स नो मन्त्री कुशलं तं स्म पृच्छेः ।

वृद्धाः स्त्रियो याश्च गुणोपपन्ना ज्ञायन्ते नः सञ्जय मातरस्ताः । ताभिः सर्व्वाभिः सहिताभिः समेत्य स्त्रीभिः सवृद्धाभिरभिवादं वदेथाः ।

कच्चित्पुत्रा जीवपुत्राः सुसम्यग्वर्त्तन्ते वो वृत्तिमनृशंसरूपाः । इति स्मोक्त्वा सञ्जय ब्रूहि पश्चादजातशत्रुः कुशली सपुत्रः ।

या नो भार्य्याः सञ्जय वेत्थ तत्र तासां सर्व्वासां कुशलं तात पृच्छेः । सुसङ्गुप्ताः सुरभयोऽनवद्याः कच्चिद्गृहानावसथाऽप्रमत्ताः । ९००

कच्चिद्वृत्तिं श्वशुरेषु भद्राः कल्याणीं वर्त्तध्वमनृशंसरूपां । यथा च स्युः पतयोऽनुकूलास्तथा वृत्तिमात्मनः स्थापयध्वं ।

या नः स्नुषाः सञ्जय वेत्थ तत्र प्राप्ताः कुलेभ्यश्च गुणोपपन्नाः । प्रजावत्यो ब्रूहि समेत्य ताश्च युधिष्ठिरो वोऽभ्यवदत्प्रसन्नः ।

कन्याः स्वजेयाः सदनेषु सञ्जय अनामयं मद्वचनेन पृष्ट्वा । कल्याणा वः सन्तु पतयोऽनुकूला यूयं पतीनां भवतानुकूलाः ।

अलङ्कृता वस्त्रवत्यः सुगन्धा अबीभत्साः सुखिता भोगवत्यः । लघु यासां दर्शनं वाक् च लघ्वी वेशस्त्रियः कुशलं तात पृच्छेः ।

दास्यः स्युर्या ये च दासाः कुरूणां तदाश्रया बहवः कुब्जखञ्जाः । आख्याय मां कुशलिनं स्म तेभ्योऽप्यनामयं परिपृच्छेर्जघन्यं । ९०५

कच्चिद्वृत्तिं वर्त्तते वै पुराणीं कच्चिद्भोगान् धार्त्तराष्ट्रो ददाति । अङ्गहीनान् कृपणान् वामनान्वा यानानृशंस्यो धृतराष्ट्रो बिभर्त्ति ।

अन्धांश्च सर्व्वान् स्थविरांस्तथैव हस्त्याजीवा बहवो येऽत्र सन्ति । आख्याय मां कुशलिनं स्म तेभ्योऽप्यनामयं परिपृच्छेर्जघन्यं ।

माभैष्ट दुःखेन कुजीवितेन नूनं कृतं परलोकेषु पापं । निगृह्य शत्रून् सुहृदोऽनुगृह्य वासोभिरन्नेन च वो भरिष्ये ।

सन्त्येव मे ब्राह्मणेभ्यः कृतानि भावीन्यथो नो बत वर्त्तयन्ति । तान् पश्यामि युक्तरूपांस्तथैव तामेव सिद्धिं श्रावयेथा नृपन्तं ।

ये चानाथा दुर्ब्बलाः सर्व्वकालमात्मन्येव प्रयतन्तेऽथ मूढाः । तांश्चापि त्वं कृपणान् सर्व्वथैवास्मद्वाक्यात्कुशलं तात पृच्छेः । ९१०

ये चाप्यन्ये संश्रिता धार्त्तराष्ट्रान्नानादिग्भ्योऽभ्यागताः सूतपुत्र । दृष्ट्वा तांश्चैवार्हतश्चापि सर्व्वान्संपृच्छेथाः कुशलं चाव्ययञ्च ।

एवं सर्व्वानागताभ्यागतांश्च राज्ञो दूतान् सर्व्वदिग्भ्योऽभ्युपेतान् । पृष्ट्वा सर्व्वान् कुशलं तांश्च सूत पश्चादहं कुशली तेषु वाच्यः ।

न हीदृशाः सन्त्यपरे पृथिव्यां ये योधका धार्त्तराष्ट्रेण लब्धाः । धर्म्मस्तु नित्यो मम धर्म्म एव महाबलः शत्रुनिबर्हणाय ।

इदं पुनर्व्वचनं धार्त्तराष्ट्रं सुयोधनं सञ्जय श्रावयेथाः । यस्ते शरीरे हृदयं दुनोति कामः कुरून् स सपत्नोऽनु शिष्यां ।

न विद्यते युक्तिरेतस्य काचिन्नैवं विधाः स्याम यथा प्रियं ते । ददस्व वा शक्रपुरीं ममैव युध्यस्व वा भारतमुख्य वीर । ९१५

इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि युधिष्ठिरवाक्ये एकोनत्रिंशोऽध्यायः ॥ २९ ॥

॥ युधिष्ठिर उवाच ॥ ॥ उत सन्तमसन्तं वा बालं वृद्धं च सञ्जय । उताबलं बलीयांसं धाता प्रकुरुते वशे ।

उत बालाय पाण्डित्यं पण्डितायोत बालतां । ददाति सर्व्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ।

यच्च जिह्वाग्रमानच्य आचक्षीथा यथातथं । अथ मन्त्रं मन्त्रयित्वा याथातथ्येन तद्भवत् ।
गावल्गणे कुरून् गत्वा धृतराष्ट्रं महाबलं । अभिवाद्योपसंगृह्य ततः पृच्छेरनामयं ।
ब्रूयाश्चैनं त्वमासीनं कुरुभिः परिवारितं । तवैव राजन् वीर्य्येण सुखं जीवन्ति पाण्डवाः । ९२०
तव प्रसादाद्बालास्ते प्राप्ता राज्यमरिन्दम । राज्ये तान् स्थापयित्वाऽग्रे नोपेक्षीर्विनशिष्यतः ।
सर्व्वमप्येतदेकस्य नालं सञ्जय कस्यचित् । तात संहत्य जीवामो द्विषतां मा वशं गमः ।
तथा भीष्मं शान्तनवं भारतानां पितामहं । शिरसाऽभिवदेथास्त्वं मम नाम प्रकीर्त्तयन् ।
अभिवाद्य च वक्तव्यस्ततोऽस्माकं पितामहः । भवता शान्तनोर्व्वंशो निमग्नः पुनरुद्धृतः ।
स त्वं कुरु तथा तात स्वमतेन पितामह । यथा जीवन्ति ते पौत्राः प्रीतिमन्तः परस्परं । ९२५
तथैव विदुरं ब्रूयाः कुरूणां मन्त्रधारिणं । अयुद्धं सौम्य भाषस्व हितकामो युधिष्ठिरे ।
अथ दुर्य्योधनं ब्रूया राजपुत्रममर्षणं । मध्ये कुरूणामासीनमनुनीय पुनः पुनः ।
अपापां यदुपैक्षस्त्वं कृष्णामेकां सभागतां । तद्दुःखमतितिक्षाम मावधिष्म कुरूनिति ।
एवं पूर्व्वापरान् क्लेशान् तितिक्षन्ते स्म पाण्डवाः । बलीयांसोऽपि सन्तो यत्तत्सर्व्वं कुरवो विदुः ।
यन्नः प्राव्राजयः सौम्य अजिनैः प्रतिवासितान् । अतितिक्षाम हि च तन् मावधिष्म कुरूनिति । ९३०
यत्तत् कुन्तीमतिक्रम्य कृष्णां केशेष्वधर्षयत् । दुःशासनस्तेऽनुमते तच्चास्माभिरुपेक्षितं ।
यथोचितं स्वकं भागं लभेमहि परन्तप । निवर्त्तय परद्रव्यात् बुद्धिं गृद्धां नरर्षभ ।
शान्तिरेवं भवेद्राजन् प्रीतिश्चैव परस्परं । राज्यैकदेशमपि नः प्रयच्छ शममिच्छतां ।
कुशस्थलं वृकस्थलं माकन्दीं वारणावतं । अवसानं भवेदत्र किञ्चिदेकञ्च पञ्चमं ।
भ्रातॄणां देहि पञ्चानां पञ्चग्रामान् सुयोधन । शान्तिर्नोऽस्तु महाप्राज्ञ ज्ञातिभिः सह सञ्जय । ९३५
भ्राता भ्रातरमन्वेतु पिता पुत्त्रेण युज्यतां । स्मयमानाः समायान्तु पाञ्चालाः कुरुभिः सह ।
अक्षतान् कुरुपाञ्चालान् पश्येयमिति कामये । सर्व्वे सुमनसस्तात शाम्याम भरतर्षभ ।
अलमेव शमायास्मि तथा युद्धाय सञ्जय । धर्म्मार्थयोरलञ्चाहं मृदवे दारुणाय च ।
इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि युधिष्ठिरवाक्ये त्रिंशोऽध्यायः ॥ ३० ॥
॥ वैशम्पायन उवाच ॥ अनुज्ञातः पाण्डवेन प्रययौ सञ्जयस्तदा । शासनं धृतराष्ट्रस्य सर्व्वं कृत्वा महात्मनः ।
सम्प्राप्य हास्तिनपुरं शीघ्रमेव प्रविश्य च । अन्तःपुरं समासाद्य द्वाःस्थं वचनमब्रवीत् । ९४०
आचक्ष्व धृतराष्ट्राय द्वाःस्थ मां समुपागतं । सकाशात्पाण्डुपुत्त्राणां सञ्जयं मा चिरं कृथाः ।
जागर्त्ति चेदभिवदेस्त्वं हि द्वाःस्थ प्रविशेयं विदितो भूमिपस्य । निवेद्यमात्यायिकं हि मेऽस्ति द्वाःस्थोऽथ श्रुत्वा नृपतिं जगाद ।
॥ द्वाःस्थ उवाच ॥ सञ्जयोऽयं भूमिपते नमस्ते दिदृक्षया द्वारमुपागतस्ते । प्राप्तो दूतः पाण्डवानां सकाशात् प्रशाधि राजन्
किमयं करोतु ।
॥ धृतराष्ट्र उवाच ॥ आचक्ष्व मां सुखिनं काल्यमस्मै प्रवेश्यतां स्वागतं सञ्जयाय । न हि चाहमेतस्य भवाम्यकल्यः स मे कस्मा
द्वारि तिष्ठेत क्षत्तः ।

॥ वैशम्पायन उवाच ॥ ततः प्रविश्यानुमते नृपस्य महद्वेश्म प्राज्ञशूरार्य्यगुप्तं । सिंहासनस्थं पार्थिवमाससाद वैचित्रवीर्य्यं प्राञ्जलिः सूतपुत्रः । ९४५

॥ सञ्जय उवाच ॥ सञ्जयोऽहं भूमिपते नमस्ते प्राप्तोऽस्मि गत्वा नरदेव पाण्डवान् । अभिवाद्य त्वां पाण्डुपुत्रो मनस्वी युधिष्ठिरः कुशलं चान्वपृच्छत् ।

स ते पुत्रान् पृच्छति प्रीयमाणः कच्चित्पुत्रैः प्रीयसे नप्तृभिश्च । तथा सुहृद्भिः सचिवैश्च राजन् ये चापि त्वामुपजीवन्ति तैश्च ।

॥ धृतराष्ट्र उवाच ॥ अभिनन्द्य त्वां तात वदामि सञ्जय अजातशत्रुञ्च सुखेन पार्थं । कच्चित्स राजा कुशली सपुत्रः सहामात्यः सानुजः कौरवाणां ।

॥ सञ्जय उवाच ॥ सहामात्यः कुशली पाण्डुपुत्रो बुभूषते यच्च तेऽग्रे मनोऽभूत् । निर्णिक्तधर्म्मार्थकरो मनस्वी बहुश्रुतो दृष्टिमान् शीलवांश्च ।

परो धर्म्मः पाण्डवस्यानृशंस्यं धर्म्मः परो वित्तचयान्मतोऽस्य । सुखप्रिये धर्म्महीनेऽनपार्थे न रुध्यते भारत तस्य बुद्धिः । ९५०

परप्रयुक्तः पुरुषो विचेष्टते सूत्रप्रोता दारुमयीव योषा । इमं दृष्ट्वा नियमं पाण्डवस्य मन्ये परं कर्म्म दैवं मनुष्यात् ।

इमञ्च दृष्ट्वा तव कर्म्मदोषं पापोदर्कं घोरमवर्णरूपं । यावत्परः कामयतेऽतिवेलं तावन्नरोऽयं लभते प्रशंसां ।

अजातशत्रुस्तु विहाय पापं जीर्णां त्वचं सर्प इवासमर्थां । विरोचतेऽहार्य्यवृत्तेन धीरो युधिष्ठिरस्त्वयि पापं विसृज्य ।

हन्तात्मनः कर्म्म निबोध राजन् धर्म्मार्थयुक्तादार्य्यवृत्तादपेतं । उपक्रोशञ्चेह गतोऽसि राजन् भूयश्च पापं प्रसजेदमुत्र ।

स त्वमर्थं संशयितं विना तैराशंससे पुत्रवशानुगोऽस्य । अधर्म्मशब्दश्च महान् पृथिव्यां नेदं कर्म्म त्वत्समं भारताग्र्य । ९५५

हीनप्रज्ञो दौष्कुलेयो नृशंसो दीर्घवैरी क्षत्रविद्यास्वधीरः । एवंधर्म्मा नापदः संतितीर्षेद्धीनवीर्य्यो यश्च भवेदशिष्टः ।

कुले जातो बलवान् यो यशस्वी बहुश्रुतः सुखजीवी जितात्मा । धर्म्माधर्म्मौ ग्रथितौ यो बिभर्त्ति स ह्यस्य दिष्टस्य वशादुपैति ।

कथं हि मन्त्राग्र्यधरो मनीषी धर्म्मार्थयोरापदि संप्रणेता । एवमुक्तः सर्व्वमन्त्रैरहीनो नरो नृशंसं कर्म कुर्य्यादमूढः ।

तव ह्यमी मन्त्रविदः समेत्य समासते कर्म्मसु नित्ययुक्ताः । तेषामयं बलवान्निश्चयश्च कुरुक्षयो नियमेनोदपादि ।

अकालिकं कुरवो नाभविष्यन् पापेन चेत्पापमजातशत्रुः । इच्छेज्जातु त्वयि पापं विसृज्य निन्दा चेयं तव लोकेऽभविष्यत् । ९६०

किमन्यत्र विषयादीश्वराणां यत्र पार्थः परलोकं स्म द्रष्टुं । अत्यक्रामत्स तथा सम्मतः स्यान्न संशयो नास्ति मनुष्यकारः ।

एतान् गुणान् कर्म्मकृतानवेक्ष्य भावाभावौ वर्त्तमानावनित्यौ । बलिर्हि राजा पारमविन्दमानो नान्यत्कालात्कारणं तत्र मेने ।

चक्षुः श्रोत्रे नासिका त्वक् च जिह्वा ज्ञानस्यैतान्यायतनानि जन्तोः । तानि प्रीतान्येव तृष्णाक्षयान्ते तान्यव्यथो दुःखहीनः प्रणुद्यात् ।

न त्वेव मन्ये पुरुषस्य कर्म्म संवर्त्तते सुप्रयुक्तं यथावत् । मातुः पितुः कर्म्मणाऽभिप्रसूतः संवर्द्धते विधिवद्भोजनेन ।

प्रियाप्रिये सुखदुःखे च राजन्निन्दाप्रशंसे च भजन्त एव । परस्त्वेनं गर्हयतेऽपराधे प्रशंसते साधुवृत्तं तमेव । ९६५

स त्वां गर्हे भारतानां विरोधादन्तो नूनं भविताऽयं प्रजानां । नो चेदिदं तव कर्म्मापराधात् कुरून् दहेत्कृष्णवर्त्मेव कक्षं ।

त्वमेवैको जातु पुत्रस्य राजन् वशं गत्वा सर्व्वलोके नरेन्द्र । कामात्मनः श्लाघनो द्यूतकाले नागाः शमं पश्य विपाकमस्य ।

अनाप्तानां संग्रहात्त्वं नरेन्द्र तथाप्तानां निग्रहाच्चैव राजन् । भूमिं स्फीतां दुर्ब्बलत्वादनन्तामशक्तस्त्वं रक्षितुं कौरवेन्द्र ।

अनुज्ञातो रथवेगावधूतः श्रान्तोऽभिपद्ये शयनं नृसिंह । प्रातः श्रोतारः कुरवः सभायामजातशत्रोर्व्वचनं समेताः ।

॥ धृतराष्ट्र उवाच ॥ अनुज्ञातोऽद्यावसथं परेहि सुखं प्रपद्यस्व शयनं सूतपुत्र। प्रातः श्रोतारः कुरवः सभायामजातशत्रोर्व्वचनं समेताः। ९७०

इति श्रीमहाभारते उद्योगपर्व्वणि सञ्जययानपर्व्वणि धृतराष्ट्रसञ्जयसंवादे एकत्रिंशोऽध्यायः समाप्तञ्च सञ्जययानपर्व्व ॥ ३१॥

---

## ॥ अथ प्रजागरपर्व्व ॥ ६ ॥

॥ वैशम्पायन उवाच ॥ द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः। विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरं।

प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत्। ईश्वरस्त्वां महाराजो महाप्राज्ञ दिदृक्षति।

एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनं। अब्रवीद्धृतराष्ट्राय द्वाःस्थ मां प्रतिवेदय।

॥ द्वाःस्थ उवाच ॥ विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात्। द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि मां।

॥ धृतराष्ट्र उवाच ॥ प्रवेशय महाप्राज्ञं विदुरं दीर्घदर्शिनं। अहं हि विदुरस्यास्य नाकल्यो जातु दर्शने। ९७५

॥ द्वाःस्थ उवाच ॥ प्रविशान्तःपुरं क्षत्तर्महाराजस्य धीमतः। न हि ते दर्शनेऽकल्यो जातु राजाऽब्रवीद्धि मां।

॥ वैशम्पायन उवाच ॥ ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनं। अब्रवीत्प्राञ्जलिर्व्वाक्यं चिन्तयानं नराधिपं।

विदुरोऽहं महाप्राज्ञ सम्प्राप्तस्तव शासनात्। यदि किञ्चन कर्त्तव्यमयमस्मि प्रशाधि मां।

॥ धृतराष्ट्र उवाच ॥ सञ्जयो विदुर प्राप्तो गर्हयित्वा च मां गतः। अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति।

तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया। तन्मे दहति गात्राणि तदकार्षीत्प्रजागरं। ९८०

जाग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि। तद्ब्रूहि त्वं हि नस्तात धर्म्मार्थकुशलो ह्यसि।

यतः प्राप्तः सञ्जयः पाण्डवेभ्यो न मे यथावन्मनसः प्रशान्तिः। सर्व्वेन्द्रियाण्यप्रकृतिं गतानि किं वक्ष्यतीत्येव हि मेऽद्य चिन्ता।

॥ विदुर उवाच ॥ अभियुक्तं बलवता दुर्ब्बलं हीनसाधनं। हृतस्वं कामिनं चौरमाविशन्ति प्रजागराः।

कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप। कच्चिच्च परवित्तेषु गृध्यन्न परितप्यसे।

॥ धृतराष्ट्र उवाच ॥ श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः। अस्मिन् राजर्षिवंशे हि त्वमेकः प्राज्ञसम्मतः। ९८५

॥ विदुर उवाच ॥ राजा लक्षणसम्पन्नस्त्रैलोक्यस्याधिपो भवेत्। प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र युधिष्ठिरः।

विपरीततरश्च त्वं भागधेये न सम्मतः। अर्च्चिषां प्रक्षयाच्चैव धर्म्मात्मा धर्म्मकोविदः।

आनृशंस्यादनुक्रोशाद्धर्म्मात् सत्यात् पराक्रमात्। गुरुत्वात्त्वयि सम्प्रेक्ष्य बहून् क्लेशान् तितिक्षते।

दुर्य्योधने सौबले च कर्णे दुःशासने तथा। एतेष्वैश्वर्य्यमाधाय कथं त्वं भूतिमिच्छसि।

आत्मज्ञानं समारम्भस्तितिक्षा धर्म्मनित्यता। यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते। ९९०

निषेवते प्रशस्तानि निन्दितानि न सेवते। अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणं।

क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता। यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते।

यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे। कृतमेवास्य जानन्ति स वै पण्डित उच्यते।

यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः। समृद्धिरसमृद्धिर्व्वा स वै पण्डित उच्यते।

यस्य संसारिणी प्रज्ञा धर्म्मार्थावनुवर्त्तते । कामादर्थं वृणीते यः स वै पण्डित उच्यते । ९९०

यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्व्वते । न किञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः ।

क्षिप्रं विजानाति चिरं शृणोति विज्ञाय चार्थं भजते न कामात् । नासम्पृष्टो व्युपयुङ्क्ते परार्थे तत्प्रज्ञानं प्रथमं पण्डितस्य ।

नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुं । आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ।

निश्चित्य यः प्रक्रमते नान्तर्व्वसति कर्म्मणः । अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ।

आर्य्यकर्म्मणि रज्यन्ते भूतिकर्म्माणि कुर्व्वते । हितञ्च नाभ्यसूयन्ति पण्डिता भरतर्षभ । ९९५

न हृष्यत्यात्मसम्माने नावमानेन तप्यते । गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ।

तत्त्वज्ञः सर्व्वभूतानां योगज्ञः सर्व्वकर्मणां । उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ।

प्रवृत्तवाक् चित्रकथ ऊहवान् प्रतिभानवान् । आशुग्रन्थस्य वक्ता च यः स पण्डित उच्यते ।

श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा । असम्भिन्नार्य्यमर्य्यादः पण्डिताख्यां लभेत सः ।

अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः । अर्थांश्चाकर्म्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः । १०००

स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति । मिथ्या चरति मित्रार्थे यश्च मूढः स उच्यते ।

अकामान् कामयति यः कामयानान् परित्यजेत् । बलवन्तञ्च यो द्वेष्टि तमाहुर्मूढचेतसं ।

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च । कर्म्म चारभते दुष्टं तमाहुर्मूढचेतसं ।

संसारयति कृत्यानि सर्व्वत्र विचिकित्सते । चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ।

श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति । सुहृन्मित्रं न लभते तमाहुर्मूढचेतसं । १००५

अनाहूतः प्रविशति अपृष्टो बहु भाषते । अविश्वस्ते विश्वसिति मूढचेता नराधमः ।

परं क्षिपति दोषेण वर्त्तमानः स्वयं तथा । यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ।

आत्मनो बलमज्ञाय धर्म्मार्थपरिवर्ज्जितं । अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ।

अशिष्यं शास्ति यो राजन् यश्च शून्यमुपासते । कदर्य्यं भजते यश्च तमाहुर्मूढचेतसं ।

अर्थं महान्तमासाद्य विद्यामैश्वर्य्यमेव वा । विचरत्यसमुन्नद्धो यः स पण्डित उच्यते । १०१०

एकः सम्पन्नमश्नाति वस्ते वासश्च शोभनं । योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ।

एकः पापानि कुरुते फलं भुङ्क्ते महाजनः । भोक्तारो विप्रमुच्यन्ते कर्त्ता दोषेण लिप्यते ।

एकं हन्यान्नवा हन्यादिषुर्मुक्तो धनुष्मता । बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकं ।

एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्व्वशे कुरु । पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ।

एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते । सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः । १०१५

एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् । एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ।

एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे । सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ।

एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमया युक्तमशक्तं मन्यते जनः ।

सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलं । क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ।

क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते। शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः। १०२०
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति। अक्षमावान् परं दोषैरात्मानञ्चैव योजयेत्।
एको धर्म्मः परं श्रेयः क्षमैका शान्तिरुत्तमा। विद्यैका परमा तृप्तिरहिंसैका सुखावहा।
द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव। राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनं।
द्वे कर्म्मणी नरः कुर्व्वन्नस्मिँल्लोके विरोचते। अब्रुवन् परुषं किञ्चिदसतोऽनर्च्चयंस्तथा।
द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ। स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः। १०२५
द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषणौ। यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः।
द्वाविमौ न विराजेते विपरीतेन कर्म्मणा। गृहस्थश्च निरारम्भः कार्य्यवांश्चैव भिक्षुकः।
द्वाविमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः। प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान्।
न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ। अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनं।
द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढां शिलां। धनिनञ्चाप्रदातारं दरिद्रञ्चातपस्विनं। १०३०
द्वाविमौ पुरुषव्याघ्र सूर्य्यमण्डलभेदिनौ। परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः।
त्रयोपाया मनुष्याणां श्रूयन्ते भरतर्षभ। कनीयोमध्यमः श्रेष्ठ इति वेदविदो विदुः।
त्रिविधाः पुरुषा राजन् उत्तमाधममध्यमाः। नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्म्मसु।
त्रय एवाधना राजन् भार्य्या दासस्तथा सुतः। यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनं।
हरणञ्च परस्वानां परदाराभिमर्षणं। सुहृदश्च परित्यागस्त्रयो दोषा भयप्रदाः। १०३५
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्।
भक्तञ्च भजमानञ्च तवास्मीति च वादिनं। त्रीनेताञ्छरणं प्राप्तान्विषमेऽपि न संत्यजेत्।
वरप्रदानं राज्यञ्च पुत्रजन्म च भारत। शत्रोश्च मोक्षणं कृच्छ्रात्त्रीणि चैकञ्च तत्समं।
चत्वारि राज्ञा तु महाबलेन वर्ज्यान्याहुः पण्डितस्तानि विद्यात्। अल्पप्रज्ञैः सह मन्त्रं न कुर्य्यान्न दीर्घसूत्रैरलसैश्चारणैश्च।
चत्वारि ते तात गृहे वसन्तु श्रियाऽभिजुष्टस्य गृहस्थधर्म्मे। वृद्धो ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो भगिनी चानपत्या। १०४०
चत्वार्य्याह महाराज साद्यस्कानि बृहस्पतिः। पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे।
देवतानाञ्च सङ्कल्पमनुभावञ्च धीमतां। विनयं कृतविद्यानां विनाशं पापकर्म्मणां।
चत्वारि कर्म्माण्यभयङ्कराणि भयं प्रयच्छन्त्ययथाकृतानि। मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः।
पञ्चाग्नयो मनुष्येण परिचर्य्याः प्रयत्नतः। पिता माताऽग्निरात्मा च गुरुश्च भरतर्षभ।
पञ्चैव पूजयन् लोके यशः प्राप्नोति केवलं। देवान् पितॄन् मनुष्यांश्च भिक्षूनतिथिपञ्चमान्। १०४५
पञ्च त्वाऽनुगमिष्यन्ति यत्र यत्र गमिष्यसि। मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः।
पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियं। ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकं।
षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता। निद्रा तन्द्री भयं क्रोध आलस्यं दीर्घसूत्रता।
षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे। अप्रवक्तारमाचार्य्यमनधीयानमृत्विजं।

अरक्षितारं राजानं भार्य्यां चाप्रियवादिनीं । ग्रामकामञ्च गोपालं वनकामञ्च नापितं । १०५०

षडेव तु गुणाः पुंसा न हातव्याः कदाचन । सत्यं दानमनालस्यमनसूया क्षमा धृतिः ।

षडिमानि विनश्यन्ति मुहूर्त्तमनवेक्षणात् । गावः सेवा कृषिर्भार्य्या विद्या वृषलसङ्गतिः ।

षडेते ह्यवमन्यन्ते नित्यं पूर्व्वोपकारिणं । आचार्य्यं शिक्षिताः शिष्याः कृतदाराश्च मातरं ।

नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकं । नावं निस्तीर्णकान्तारा आतुराश्च चिकित्सकं ।

आरोग्यमानृण्यमविप्रवासः सद्भिर्मनुष्यैः सह संप्रयोगः । स्वप्रत्यया वृत्तिरभीतवासः षड्जीवलोकस्य सुखानि राजन् । १०५५

ईर्षुर्घृणी नसन्तुष्टः क्रोधनो नित्यशङ्कितः । परभाग्योपजीवी च षडेते नित्यदुःखिताः ।

अर्थागमो नित्यमरोगिता च प्रिया च भार्य्या प्रियवादिनी च । वश्यश्च पुत्त्रोऽर्थकरी च विद्या षड्जीवलोकस्य सुखानि
राजन् ।

षण्णामात्मनि नित्यानामैश्वर्य्यं योऽधिगच्छति । न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ।

षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते । चौराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ।

प्रमदाः कामयानेषु यजमानेषु याजकाः । राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः । १०६०

सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः । प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ।

स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यञ्च पञ्चमं । महच्च दण्डपारुष्यमर्थदूषणमेव च ।

अष्टौ पूर्व्वनिमित्तानि नरस्य विनशिष्यतः । ब्राह्मणान् प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ।

ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति । रमते निन्दया चैषां प्रशंसां नाभिनन्दति ।

नैतान् स्मरति कृत्येषु याचितश्चाभ्यसूयति । एतान् दोषान् नरः प्राज्ञो बुद्ध्वा बुद्ध्या विसर्ज्जयेत् । १०६५

अष्टाविमानि हर्षस्य नवनीतानि भारत । वर्त्तमानानि दृश्यन्ते तान्येव सुसुखान्यपि ।

समागमश्च सखिभिर्महांश्चैव धनागमः । पुत्त्रेण च परिष्वङ्गः सन्निपातश्च मैथुने ।

समये च प्रियालापः स्वयूथेषु समुन्नतिः । अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ।

अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यञ्च दमः श्रुतञ्च । पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ।

नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकं । क्षेत्रज्ञाधिष्ठितं विद्वान् यो वेद स परः कविः । १०७०

दश धर्म्मं न जानन्ति धृतराष्ट्र निबोध तान् । मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ।

त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश । तस्मादेतेषु सर्व्वेषु न प्रसज्जेत पण्डितः ।

अत्रैवोदाहरन्तीममितिहासं पुरातनं । पुत्त्रार्थमसुरेन्द्रेण गीतञ्चैव सुधन्वना ।

यः काममन्यू प्रजहाति राजा पात्रे प्रतिष्ठापयते धनञ्च । विशेषविच्छ्रुतवान् क्षिप्रकारी तं सर्व्वलोकः कुरुते प्रमाणं ।

जानाति विश्वासयितुं मनुष्यान् विज्ञातदोषेषु दधाति दण्डं । जानाति मात्राञ्च तथा क्षमाञ्च तं तादृशं श्रीर्जुषते समग्रा । १०७५

सुदुर्ब्बलं नावजानाति कञ्चिद्युक्तो रिपुं सेवते बुद्धिपूर्व्वं । न विग्रहं रोचयते बलस्थैः काले च यो विक्रमते स धीरः ।

प्राप्यापदं न व्यथते कदाचिदुद्योगमन्विच्छति चाप्रमत्तः । दुःखञ्च काले सहते महात्मा धुरन्धरस्तस्य जिताः सपत्नाः ।

अनर्थकं विप्रवासं गृहेभ्यः पापैः सन्धिं परदाराभिमर्षं । दम्भं स्तैन्यं पैशुनं मद्यपानं न सेवते यश्च सुखी सदैव ।

न संरम्भेणारभते त्रिवर्गमाकारितः शंसति तत्त्वमेव। न मित्रार्थे रोचयते विवादं नापूजितः कुप्यति चाप्यमूढः।
योऽभ्यसूयत्यनुकम्पते च न दुर्ब्बलः प्रातिभाव्यं करोति। नात्याह किञ्चित् क्षमते विवादं सर्व्वत्र तादृग्लभते प्रशंसां। १०८०
यो नोद्धतं कुरुते जातु वेशं न पौरुषेणापि विकत्थतेऽन्यान्। न मूर्च्छितः कटुकान्याह किञ्चित् प्रियं सदा तं कुरुते जनो हि।
न वैरमुद्दीपयति प्रशान्तं न दर्पमारोहति नास्तमेति। न दुर्गतोऽस्मीति करोत्यकार्य्यं तमार्य्यशीलं परमाहुरार्य्याः।
न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः। दत्त्वा न पश्चात् कुरुतेऽनुतापं स कथ्यते सत्पुरुषार्य्यशीलः।
देशाचारान् समयान् जातिधर्म्मान् बुभूषते यः स परावरज्ञः। स यत्र तत्रापि गतः सदैव महाजनस्याधिपत्यं करोति।
दम्भं मोहं मत्सरं पापकृत्यं राजद्विष्टं पैशुनं पूगवैरं। मत्तोन्मत्तैर्दुर्जनैश्चापि वादं यः प्रज्ञावान् वर्ज्जयेत् स प्रधानः। १०८५
दमं शौचं दैवतं मङ्गलानि प्रायश्चित्तान् विविधाल्लोकवादान्। एतानि यः कुरुते नैत्यिकानि तस्योत्थानं देवता धारयन्ति।
समैर्व्विवाहं कुरुते न हीनैः समैः सख्यं व्यवहारं कथाश्च। गुणैर्व्विशिष्टांश्च पुरो दधाति विपश्चितस्तस्य नयाः सुनीताः।
मितं भुङ्क्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म्म कृत्वा। ददात्यमित्रेष्वपि याचितः संस्तमात्मवन्तं प्रजहत्यनर्थाः।
चिकीर्षितं विप्रकृतञ्च यस्य नान्ये जनाः कर्म्म जानन्ति किञ्चित्। मन्त्रे गुप्ते सम्यगनुष्ठिते च नाल्पोऽप्यस्य च्यवते कश्चि
दर्थः।
यः सर्व्वभूतप्रशमे निविष्टः सत्यो मृदुर्म्मानकृच्छुद्धभावः। अतीव स ज्ञायते ज्ञातिमध्ये महामणिर्ज्जात्य इव प्रसन्नः। १०९०
य आत्मनाऽपत्रपते भृशं नरः स सर्व्वलोकस्य गुरुर्भवत्युत। अनन्ततेजाः सुमनाः समाहितः स तेजसा सूर्य्य इवावभासते।
वने जाताः शापदग्धस्य राज्ञः पाण्डोः पुत्त्राः पञ्च पञ्चेन्द्रकल्पाः। त्वयैव बाला वर्द्धिताः शिक्षिताश्च तवादेशं पालयन्त्याम्बिकेय।
प्रदायैषामुचितं तात राज्यं सुखी पुत्त्रैः सहितो मोदमानः। न देवानां नापि च मानुषाणां भविष्यसि त्वं तर्कणीयो नरेन्द्र।

इति श्रीमहाभारते उद्योगपर्व्वणि प्रजागरपर्व्वणि विदुरहितवाक्ये द्वात्रिंशोऽध्यायः॥ ३२॥

॥ धृतराष्ट्र उवाच॥ जाग्रतो दह्यमानस्य यत्कार्य्यमनुपश्यसि। तद्ब्रूहि त्वं हि नस्तात धर्म्मार्थकुशलो ह्यसि।
त्वं मां यथावद्विदुर प्रशाधि प्रज्ञापूर्व्वं सर्व्वमजातशत्रोः। यन्मन्यसे पथ्यमदीनसत्त्व श्रेयस्करं ब्रूहि तद्वै कुरूणां। १०९५
पापाशङ्की पापमेवानुपश्यन् पृच्छामि त्वां व्याकुलेनात्मनाऽहं। कवे तन्मे ब्रूहि सर्व्वं यथावन्मनीषितं सर्व्वमजातशत्रोः।

॥ विदुर उवाच॥ शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियं। अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत् पराभवं।
तस्माद्वक्ष्यामि ते राजन् भवमिच्छन् कुरून् प्रति। वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे।
मिथ्योपेतानि कर्म्माणि सिध्येयुर्य्यानि भारत। अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः।
तथैव योगविहितं न सिध्येत् कर्म्म यन्नृप। उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः। ११००
अनुबन्धानपेक्षेत सानुबन्धेषु कर्म्मसु। सम्प्रधार्य्य च कुर्व्वीत न वेगेन समाचरेत्।
अनुबन्धञ्च सम्प्रेक्ष्य विपाकञ्चैव कर्म्मणां। उत्थानमात्मनश्चैव धीरः कुर्व्वीत वा न वा।
यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये। कोषे जनपदे दण्डे न स राज्येऽवतिष्ठते।
यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति। युक्तो धर्म्मार्थयोर्ज्ञाने स राज्यमधिगच्छति।
न राज्यं प्राप्तमित्येव वर्त्तितव्यमसाम्प्रतं। श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमं। ११०५
भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो वडिशमायसं। लोभाभिपाती ग्रसते नानुबन्धमवेक्षते।

यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् । हितञ्च परिणामे यत्तदाद्यं भूतिमिच्छता ।
वनस्पतेरपक्वानि फलानि प्रचिनोति यः । स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ।
यस्तु पक्वमुपादत्ते काले परिणतं फलं । फलाद्रसं स लभते बीजाच्चैव फलं पुनः ।
यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः । तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया । १११०
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् । मालाकार इवारामे न यथाङ्गारकारकः ।
किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः । इति कर्माणि सञ्चिन्त्य कुर्य्याद्वा पुरुषो न वा ।
अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथा गताः । कृतः पुरुषकारो हि भवेद्येषु निरर्थकः ।
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः । न तं भर्त्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ।
कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् । क्षिप्रमारभते कर्त्तुं न विघ्नयति तादृशान् । १११५
ऋजु पश्यति यः सर्व्वं चक्षुषा प्रपिबन्निव । आसीनमपि तुष्णीकमनुरज्यन्ति तं प्रजाः ।
सुपुष्पितः स्यादफलः फलितः स्याद्दुरारुहः । अपक्वः पक्वसङ्काशो न तु शीर्य्येत कर्हिचित् ।
चक्षुषा मनसा वाचा कर्म्मणा च चतुर्व्विधं । प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति ।
यस्मात्त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव । सागरान्तामपि महीं लब्ध्वा स परिहीयते ।
पितृपैतामहं राज्यं प्राप्तवान् स्वेन तेजसा । वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः । ११२०
धर्म्ममाचरतो राज्ञः सद्भिश्चरितमादितः । वसुधा वसुसम्पूर्णा वर्द्धते भूतिवर्द्धनी ।
अथ सन्त्यजतो धर्म्ममधर्म्मञ्चानुतिष्ठतः । प्रतिसंवेष्टते भूमिरग्नौ चर्म्माहितं यथा ।
य एव यत्नः क्रियते परराष्ट्रविमर्द्दने । स एव यत्नः कर्त्तव्यः स्वराष्ट्रपरिपालने ।
धर्म्मेण राज्यं विन्देत धर्म्मेण परिपालयेत् । धर्म्ममूलां श्रियं प्राप्य न जहाति न हीयते ।
अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः । सर्व्वतः सारमादद्यादश्मभ्य इव काञ्चनं । ११२५
सुव्याहृतानि सूक्तानि सुकृतानि ततस्ततः । सञ्चिन्वन् धीर आसीत शिलाहारी शिलं यथा ।
गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ।
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा । अथ या सुदुहा राजन्नैव तां वितुदन्त्यपि ।
यदतप्तं प्रणमति न तत्सन्तापयन्त्यपि । यच्च स्वयं नतं दारु न तत्सन्नामयन्त्यपि ।
एतयोपमया धीरः सन्नमेत बलीयसे । इन्द्राय स प्रणमते नमते यो बलीयसे । ११३०
पर्जन्यनाथाः पशवो राजानो मन्त्रिबान्धवाः । पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ।
सत्येन रक्ष्यते धर्म्मो विद्या योगेन रक्ष्यते । मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ।
मानेन रक्ष्यते धान्यमश्वान् रक्षत्यनुक्रमः । अभीक्ष्णं दर्शनं गाश्च स्त्रियो रक्ष्याः कुचेलता ।
न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः । अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ।
य ईर्षुः परवित्तेषु रूपे वीर्य्ये कुलान्वये । सुखसौभाग्यसत्कारे तस्य व्याधिरनन्तकः । ११३५
अकार्य्यकरणाद्भीतः कार्य्याणाञ्च विवर्ज्जनात् । अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ।

विद्यामदो धनमदस्तृतीयोऽभिजनो मदः। मदा एतेऽवलिप्तानामेत एव सतां दमाः।
असन्तोऽभ्यर्थिताः सद्भिः कचित्कार्य्ये कदाचन। तावन्न तस्य सुकृतं किञ्चित्कार्य्यं कदाचन।
मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतं। गतिरात्मवतां सन्तः सन्त एव सतां गतिः।
असतां चागतिः सन्तो नत्वसन्तः सतां गतिः। जिता सभा वस्त्रवता मिष्टाशा गोमता जिता। ११४०
अध्वा जितो यानवता सर्व्वं शीलवता जितं।
शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति। न तस्य जीवितेनार्थो न धनेन न बन्धुभिः।
आढ्यानां मांसपरमं मध्यानां गोरसोत्तरं। तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ।
सम्पन्नतरमेवान्नं दरिद्रा भुञ्जते सदा। क्षुत् स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा।
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते। जीर्य्यन्त्यपि तु काष्ठानि दरिद्राणां महीपते। ११४५
अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयं। उत्तमानान्तु मर्त्त्यानामवमानात्परं भयं।
ऐश्वर्य्यमदपापिष्ठा मदाः पानमदादयः। ऐश्वर्य्यमदमत्तो हि नापतित्वा विबुध्यते।
इन्द्रियैरिन्द्रियार्थेषु वर्त्तमानैरनिग्रहैः। तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव।
यो जितः पञ्चवर्गेण सहजेनात्मकर्षिणा। आपदस्तस्य वर्द्धन्ते शुक्लपक्ष इवोडुराट्।
अविजित्य य आत्मानममात्यान् विजिगीषते। अमित्रान्वाजितामात्यः सोऽवशः परिहीयते। ११५०
आत्मानमेव प्रथमं देशरूपेण यो जयेत्। ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते।
वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु। परीक्ष्य कारिणं धीरमत्यन्तं श्रीर्निषेवते।
रथः शरीरं पुरुषस्य राजन्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः। तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः।
एतान्यनिगृहीतानि व्यापादयितुमप्यलं। अविधेया इवादान्ता हयाः पथि कुसारथिं।
अनर्थमर्थतः पश्यन्नर्थञ्चैवाप्यनर्थतः। इन्द्रियैरजितैर्बालः सुदुःखं मन्यते सुखं। ११५५
धर्म्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः। श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते।
अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः। इन्द्रियाणामनैश्वर्य्यादैश्वर्य्याद्भ्रश्यते हि सः।
आत्मनात्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः। आत्मा ह्येवात्मनो बन्धुरात्मैव रिपुरात्मनः।
बन्धुरात्मात्मनस्तस्य येनैवात्मात्मना जितः। स एव नियतो बन्धुः स एव नियतो रिपुः।
क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ। कामश्च राजन् क्रोधश्च तौ प्राज्ञानं विलुम्पतः। ११६०
समवेक्ष्येह धर्म्मार्थौ सम्भारान् योऽधिगच्छति। स वै सम्भृतसम्भारः सततं सुखमेधते।
यः पञ्चाभ्यन्तरान् शत्रूनविजित्य मनोमयान्। जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तं।
दृश्यन्ते हि दुरात्मानो बध्यमानाः स्वकर्म्मभिः। इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः।
असन्त्यागात्पापकृतामपापांस्तुल्यो दण्डः स्पृशते मिश्रभावात्। शुष्केणार्द्रं दह्यते मिश्रभावात् तस्मात्पापैः सह सन्धिं न कुर्य्यात्।
निजानुत्पततः शत्रून् पञ्च पञ्चप्रयोजनान्। यो मोहान्न निगृह्णाति तमापद्ग्रसते नरं। ११६५

अनसूयार्जवं शौचं सन्तोषः प्रियवादिता । दमः सत्यमनायासो न भवन्ति दुरात्मनां ।
आत्मज्ञानमनायासस्तितिक्षा धर्म्मनित्यता । वाक् चैव गुप्ता दानञ्च नैतान्यन्त्येषु भारत ।
आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् । वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ।
हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलं । शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलं ।
वाक्संयमो हि नृपते सुदुष्करतमो मतः । अर्थवच्च विचित्रञ्च न शक्यं बहु भाषितुं । ११७०
अभ्यावहति कल्याणं विविधं वाक् सुभाषिता । सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ।
रोहते सायकैर्विद्धं वनं परशुना हतं । वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतं ।
कर्णिनालीकनाराचा निर्हरन्ति शरीरतः । वाक्शल्यस्तु न निर्हर्त्तुं शक्यो हृदिशयो हि सः ।
वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि । परस्य नामर्म्मसु ते पतन्ति तान्पण्डितो नावसृजेत् परेभ्यः ।
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवं । बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति । ११७५
बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते । अनयो नयसङ्काशो हृदयान्नापसर्पति ।
सेयं बुद्धिः परीता ते पुत्राणां भरतर्षभ । पाण्डवानां विरोधेन न चैनामवबुध्यसे ।
राजलक्षणसम्पन्नस्त्रैलोक्यस्यापि यो भवेत् । शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः ।
अतीत्य सर्व्वान् पुत्रांस्ते भागधेयपुरस्कृतः । तेजसा प्रज्ञया चैव युक्तो धर्म्मार्थतत्त्ववित् ।
आनुक्रोशादानृशंस्याद्योऽसौ धर्म्मभृतां वरः । गौरवात्तव राजेन्द्र बहून् क्लेशांस्तितिक्षति । ११८०
इति श्रीमहाभारते उद्योगपर्व्वणि प्रजागरपर्व्वणि विदुरवाक्ये त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ धृतराष्ट्र उवाच ॥ ब्रूहि भूयो महाबुद्धे धर्म्मार्थसहितं वचः । शृण्वतो नास्ति मे तृप्तिर्विचित्राणीह भाषसे ।
॥ विदुर उवाच ॥ सर्व्वतीर्थेषु वा स्नानं सर्व्वभूतेषु चार्जवं । उभे त्वेते समे स्यातामार्जवं वा विशिष्यते ।
आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो । इह कीर्त्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ।
यावत्कीर्त्तिर्मनुष्यस्य पुण्या लोके प्रगीयते । तावत्स पुरुषव्याघ्र स्वर्गलोके महीयते ।
अत्राप्युदाहरन्तीममितिहासं पुरातनं । विरोचनस्य संवादं केशिन्यर्थे सुधन्वना । ११८५
स्वयम्वरे स्थिता कन्या केशिनी नाम नामतः । रूपेणाप्रतिमा राजन् विशिष्टपतिकाम्यया ।
विरोचनोऽथ दैतेयस्तदा तत्राजगाम ह । प्राप्तुमिच्छंस्ततस्तत्र दैत्येन्द्रं प्राह केशिनी ।
॥ केशिन्युवाच ॥ किं ब्राह्मणाः स्विच्छ्रेयांसो दितिजाः स्विद्विरोचन । अथ केन स्म पर्य्यङ्कं सुधन्वा नाधिरोहति ।
॥ विरोचन उवाच ॥ प्राजापत्यास्तु वै श्रेष्ठा वयं केशिनि सत्तमाः । अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः ।
॥ केशिन्युवाच ॥ इहैवावां प्रतीक्षाव उपस्थाने विरोचन । सुधन्वा प्रातरागन्ता पश्येयं वां समागतौ । ११९०
॥ विरोचन उवाच ॥ तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे । सुधन्वानञ्च माञ्चैव प्रातर्द्रष्टासि सङ्गतौ ।
॥ विदुर उवाच ॥ अतीतायाञ्च शर्व्वर्य्यामुदिते सूर्य्यमण्डले । अथाजगाम तं देशं सुधन्वा राजसत्तम ।
विरोचनो यत्र विभो केशिन्या सहितः स्थितः । सुधन्वा च समागच्छत् प्राह्रादिं केशिनीं तथा ।
समागतं द्विजं दृष्ट्वा केशिनी भरतर्षभ । प्रत्युत्थायासनं तस्मै पाद्यमर्घ्यं ददौ पुनः ।

॥ सुधन्वोवाच ॥ अन्यालभे हिरण्मयं प्राह्लादेदं तवासनं। एकत्वमुपसम्पन्नो न त्वासेऽहं त्वया सह। ११९५

॥ विरोचन उवाच ॥ तवार्हते तु फलकी कूर्चं वाऽप्यथ वा वृषी। सुधन्वन्न त्वमर्होऽसि मया सह समासनं।

॥ सुधन्वोवाच ॥ पिता पुत्त्रौ सहासीतां द्वौ विप्रौ क्षत्त्रियावपि। वृद्धौ वैश्यौ च शूद्रौ च नत्वन्यावितरेतरं।

पिता हि ते समासीनमुपासीतैव मामधः। बालः सुखैधितो गेहे न त्वं किञ्चन बुध्यसे।

॥ विरोचन उवाच ॥ हिरण्यञ्च गवाश्वञ्च यद्वित्तमसुरेषु नः। सुधन्वन् विपणे तेन प्रश्नं पृच्छाव ये विदुः।

॥ सुधन्वोवाच ॥ हिरण्यञ्च गवाश्वञ्च तवैवास्तु विरोचन। प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये विदुः। १२००

॥ विरोचन उवाच ॥ आवां कुत्र गमिष्याव: प्राणयोर्व्विपणे कृते। न तु देवेष्वहं स्थाता न मनुष्येषु कर्हिचित्।

॥ सुधन्वोवाच ॥ पितरं ते गमिष्याव: प्राणयोर्व्विपणे कृते। पुत्त्रस्यापि स हेतोर्हि प्रह्लादो नानृतं वदेत्।

॥ विदुर उवाच ॥ एवं कृतपणौ क्रुद्धौ तत्राभिजग्मतुस्तदा। विरोचनसुधन्वानौ प्रह्लादो यत्र तिष्ठति।

॥ प्रह्लाद उवाच ॥ इमौ तौ सम्प्रदृश्येते याभ्यां न चरितं सह। आशीविषाविव क्रुद्धावेकमार्गाविहागतौ।

किं वै सहैवं चरथो न पुरा चरथ: सह। विरोचनैतत्पृच्छामि किन्ते सख्यं सुधन्वना। १२०५

॥ विरोचन उवाच ॥ न मे सुधन्वना सख्यं प्राणयोर्व्विपणावहे। प्रह्लाद तत्त्वं पृच्छामि मा प्रश्नमनृतं वदे:।

॥ प्रह्लाद उवाच ॥ उदकं मधुपर्कं वाऽप्यानयन्तु सुधन्वने। ब्रह्मन्नभ्यर्चनीयोऽसि श्वेता गौ: पीवरीकृता।

॥ सुधन्वोवाच ॥ उदकं मधुपर्कं वा पथिष्वेवार्पितं मम। प्रह्लाद त्वन्तु मे तथ्यं प्रश्नं प्रब्रूहि पृच्छत:।

किं ब्राह्मणा: स्विच्छ्रेयांस उताहोस्विद्विरोचन:।

॥ प्रह्लाद उवाच ॥ पुत्त्र एको मम ब्रह्मंस्त्वञ्च साक्षादिह स्थित:। तयोर्व्विवदतो: प्रश्नं कथमस्मद्विधो वदेत्। १२१०

॥ सुधन्वोवाच ॥ गां प्रदद्यास्त्वौरसाय यद्वान्यत् स्यात् प्रियं धनं। द्वयोर्व्विवदतोस्तथ्यं वाच्यञ्च मतिमंस्त्वया।

॥ प्रह्लाद उवाच ॥ अथ यो नैव प्रब्रूयात् सत्यं वा यदि वाऽनृतं। एतत् सुधन्वन् पृच्छामि दुर्व्विवक्ता स्म किं वसेत्।

॥ सुधन्वोवाच ॥ यां रात्रिमधिविन्ना स्त्री याञ्चैवाक्षपराजित:। याञ्च भाराभितप्ताङ्गो दुर्व्विवक्ता स्म तां वसेत्।

नगरे प्रतिरुद्ध: सन् वहिर्द्वारे बुभुक्षित:। अमित्रान् भूयस: पश्येद्य: साक्ष्यमनृतं वदेत्।

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते। शतमश्वानृते हन्ति सहस्रं पुरुषानृते। १२१५

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्। सर्व्वं भूम्यनृते हन्ति मास्म भूम्यनृतं वदे:।

॥ प्रह्लाद उवाच ॥ मत्त: श्रेयानङ्गिरा वै सुधन्वा त्वद्विरोचन। माताऽस्य श्रेयसी मातुस्तस्मात्त्वन्तेन वै जित:।

विरोचन सुधन्वाऽयं प्राणानामीश्वरस्तव। सुधन्वन् पुनरिच्छामि त्वया दत्तं विरोचनं।

॥ सुधन्वोवाच ॥ यद्धर्म्ममवृणीथास्त्वं न कामादनृतं वदी:। पुनर्ददामि ते पुत्त्रं तस्मात्प्रह्लाद दुर्लभं।

एष प्रह्लाद पुत्त्रस्ते मया दत्तो विरोचन:। पादप्रक्षालनं कुर्य्यात् कुमार्य्या: सन्निधौ मम। १२२०

॥ विदुर उवाच ॥ तस्माद्राजेन्द्र भूम्यर्थे नानृतं वक्तुमर्हसि। मा गम: ससुतामात्यो नाशं पुत्त्रार्थमब्रुवन्।

न देवा दण्डमादाय रक्षन्ति पशुपालवत्। यन्तु रक्षितुमिच्छन्ति बुद्ध्या संविभजन्ति तं।

यथा यथा हि पुरुष: कल्याणे कुरुते मन:। तथा तथाऽस्य सर्व्वार्था: सिध्यन्ते नात्र संशय:।

नैनं छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्त्तमानं। नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले।

मद्यपानं कलहं पूगवैरं भार्य्यापत्योरन्तरं ज्ञातिभेदं। राजद्विष्टं स्त्रीपुंसयोर्व्विवादं वर्ज्ज्यान्याहुर्यश्च पन्थाः प्रदुष्टः।

सामुद्रिकं वणिजं चौरपूर्व्वं शलाकधूर्त्तञ्च चिकित्सकञ्च। अरिञ्च मित्रञ्च कुशीलवञ्च नैतान् साक्ष्ये विप्रकुर्व्वीत सप्त। १२२५

मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः। एतानि चत्वार्य्यभयङ्कराणि भयं प्रयच्छन्त्ययथाकृतानि।

अगारदाही गरदः कुण्डाशी सोमविक्रयी। पर्व्वकारश्च सूची च मित्रध्रुक् पारदारिकः।

भ्रूणहा गुरुतल्पी च यश्च स्यात् पानपो द्विजः। अतितीक्ष्णश्च काकश्च नास्तिको वेदनिन्दकः।

स्रुवप्रग्रहणो व्रात्यः कीनाशश्चात्मवानपि। रक्षेत्युक्तश्च यो हिंस्यात् सर्व्वे ब्रह्महभिः समाः।

तृणोल्कया ज्ञायते जातरूपं वृत्तेन भद्रो व्यवहारेण साधुः। शूरो भयेष्वर्थकृच्छ्रेषु धीरः कृच्छ्रास्वापत्सु सुहृदश्चारयश्च। १२३०

जरा रूपं हरति हि धैर्य्यमाशा मृत्युः प्राणान् धर्म्मचर्य्यामसूया। क्रोधः श्रियं शीलमनार्य्यसेवा ह्रियं कामः सर्व्वमेवाभिमानः।

श्रीर्मङ्गलात् प्रभवति प्रागल्भ्यात् सम्प्रवर्द्धते। दाक्ष्यात्तु कुरुते मूलं संयमात् प्रतितिष्ठति।

अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यञ्च दमः श्रुतञ्च। पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च।

एतान् गुणांस्तात महानुभावानेको गुणः संश्रयते प्रसह्य। राजा यदा संश्रयते मनुष्यं सर्व्वान् गुणानेष गुणो विभर्त्ति।

अष्टौ नृपेमानि मनुष्यलोके स्वर्गस्य लोकस्य निदर्शनानि। चत्वार्य्येषामन्ववेतानि सद्भिश्चत्वारि चैषामनुयान्ति सन्तः। १२३५

यज्ञो दानमध्ययनं तपश्च चत्वार्य्येतान्यन्ववेतानि सद्भिः। दमः सत्यमार्ज्जवमानृशंस्यं चत्वार्य्येतान्यनुयान्ति सन्तः।

इज्याऽध्ययनदानानि तपः सत्यं क्षमा घृणा। अलोभ इति मार्गोऽयं धर्म्मस्याष्टविधः स्मृतः।

तत्र पूर्व्वश्चतुर्व्वर्गो दम्भार्थमपि सेव्यते। उत्तरश्च चतुर्व्वर्गो नामहात्मसु तिष्ठति।

न सा सभा यत्र न सन्ति वृद्धा न ते वृद्धा ये न वदन्ति धर्म्मं। नासौ धर्म्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनाभ्युपेतं।

सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनं। शौर्य्यञ्च चित्रभाष्यञ्च दशेमे स्वर्गयोनयः। १२४०

पापं कुर्व्वन् पापकीर्त्तिः पापमेवाश्नुते फलं। पुण्यं कुर्व्वन् पुण्यकीर्त्तिः पुण्यमत्यन्तमश्नुते।

तस्मात् पापं न कुर्व्वीत पुरुषः शंसितव्रतः। पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः।

नष्टप्रज्ञः पापमेव नित्यमारभते नरः। पुण्यं प्रज्ञां वर्द्धयति क्रियमाणं पुनः पुनः।

वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः। पुण्यं कुर्व्वन् पुण्यकीर्त्तिः पुण्यं स्थानं स्म गच्छति।

तस्मात् पुण्यं निषेवेत पुरुषः सुसमाहितः। असूयको दन्दशूको निष्ठुरो वैरकृच्छठः। १२४५

स कृच्छ्रं महदाप्नोति न चिरात् पापमाचरन्। अनसूयः कृतप्रज्ञः शोभनान्याचरन् सदा।

न कृच्छ्रं महदाप्नोति सर्व्वत्र च विरोचते। प्रज्ञामेवागमयति यः प्राज्ञेभ्यः स पण्डितः।

प्राज्ञो ह्यवाप्य धर्म्मार्थौ शक्नोति सुखमेधितुं। दिवसेनैव तत् कुर्य्याद्येन रात्रौ सुखं वसेत्।

अष्टमासेन तत् कुर्य्यात् येन वर्षाः सुखं वसेत्। पूर्व्वे वयसि तत् कुर्य्यात् येन वृद्धः सुखं वसेत्।

यावज्जीवेन तत् कुर्य्याद्येनामुत्र सुखं वसेत्। जीर्णमन्नं प्रशंसन्ति भार्य्याञ्च गतयौवनां। १२५०

शूरं विजितसङ्ग्रामं गतपारं तपस्विनं। धनेनाधर्म्मलब्धेन यच्छिद्रमपिधीयते।

असंवृतं तद्भवति ततोऽन्यदवदीर्य्यते। गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनां।

अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः। ऋषीणाञ्च नदीनाञ्च कुलानाञ्च महात्मनां।
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च। द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्ज्जवी।
क्षत्रियः शीलभाग्राजंश्चिरं पालयते महीं। सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः। १२५५
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुं। बुद्धिश्रेष्ठानि कर्म्माणि बाहुमध्यानि भारत।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च। दुर्य्योधने च शकुनौ मूढे दुःशासने तथा।
कर्णे चैश्वर्य्यमाधाय कथं त्वं भूतिमिच्छसि। सर्व्वैर्गुणैरुपेतास्तु पाण्डवा भरतर्षभ।
पितृवत्त्वयि वर्त्तन्ते तेषु वर्त्तस्व पुत्रवत्।
इति श्रीमहाभारते उद्योगपर्व्वणि प्रजागरपर्व्वणि विदुरहितवाक्ये चतुस्त्रिंशोऽध्यायः॥ ३४ ॥

॥ विदुर उवाच ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनं। आत्रेयस्य च संवादं साध्यानां चेति नः श्रुतं। १२६०
चरन्तं हंसरूपेण महर्षिं संशितव्रतं। साध्या देवा महाप्राज्ञं पर्य्यपृच्छन्त वै पुरा।
॥ साध्या ऊचुः ॥ साध्या देवा वयमेते महर्षे दृष्ट्वा भवन्तं न शक्नुमोऽनुमातुं। श्रुतेन धीरो बुद्धिमांस्त्वं मतो नः काव्यां वाचं वक्तुमर्हस्युदारां।
॥ हंस उवाच ॥ एतत्कार्य्यममराः संश्रुतं मे धृतिः शमः सत्यधर्म्मानुवृत्तिः। ग्रन्थिं विनीय हृदयस्य सर्व्वं प्रियाप्रिये चात्मसमं नयीत।
आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षितः। आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति।
नाक्रोशी स्यान्नावमानी परस्य मित्रद्रोही नोत नीचोपसेवी। न चाभिमानी न च हीनवृत्तो रूक्षां वाचं रुषतीं वर्ज्जयीत। १२६५
मर्म्माण्यस्थीनि हृदयं तथाऽसून् रूक्षा वाचो निर्द्दहन्तीह पुंसां। तस्माद्वाचमुषतीं रूक्षरूपां धर्म्मारामो नित्यशो वर्ज्जयीत।
अरुन्तुदं परुषं रूक्षवाचं वाक्कण्टकैर्व्वितुदन्तं मनुष्यान्। विद्यादलक्ष्मीकतमं जनानां मुखे निबद्धां निर्ऋतिं वै वहन्तं।
परश्चेदेनमभिविध्येत बाणैर्भृशं सुतीक्ष्णैरनलार्कदीप्तैः। स विध्यमानोऽप्यतिदह्यमानो विद्यात्कविः सुकृतं मे दधाति।
यदि सन्तं सेवति यद्यसन्तं तपस्विनं यदि वा स्तेनमेव। वासो यथा रङ्गवशं प्रयाति तथा स तेषां वशमभ्युपैति।
अतिवादं न प्रवदेन्न वादयेद्योऽनाहतः प्रतिहन्यान्न घातयेत्। हन्तुञ्च यो नेच्छति पापकं वै तस्मै देवाः स्पृहयन्त्यागताय। १२७०
अव्याहृतं व्याहृताच्छ्रेय आहुः सत्यं वदेद्व्याहृतं तद्द्वितीयं। प्रियं वदेद्व्याहृतं तत्तृतीयं धर्म्यं वदेद्व्याहृतं तच्चतुर्थं।
यादृशैः संनिविशते यादृशांश्चोपसेवते। यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः।
यतो यतो निवर्त्तते ततस्ततो विमुच्यते। निवर्त्तनाद्धि सर्व्वतो न वेत्ति दुःखमण्वपि।
न जीयते नानुजिगीषतेऽन्यान् न वैरकृच्चाप्रतिघातकश्च। निन्दाप्रशंसासु समस्वभावो न शोचते हृष्यति नैव चायं।
भावमिच्छति सर्व्वस्य नाभावे कुरुते मनः। सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः। १२७५
नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च। रन्ध्रं परस्य जानाति यः स मध्यमपूरुषः।
दुःशासनस्तूपहतोऽभिशस्तो नावर्त्तते मन्युवशात् कृतघ्नः। न कस्यचिन्मित्रमथो दुरात्मा कलाश्चैता अधमस्येह पुंसः।
न श्रद्दधाति कल्याणं परेभ्यो ह्यात्मशङ्कितः। निराकरोति मित्राणि यो वै सोऽधमपूरुषः।
उत्तमानेव सेवेत प्राप्तकाले तु मध्यमान्। अधमांस्तु न सेवेत य इच्छेद्भूतिमात्मनः।

प्राप्नोति वै वित्तमसद्बलेन नित्योत्थानात्प्रज्ञया पौरुषेण । न त्वेव सम्यग्लभते प्रशंसां न वृत्तमाप्नोति महाकुलानां । १२८०

॥ धृतराष्ट्र उवाच ॥ महाकुलेभ्यः स्पृहयन्ति देवा धर्मार्थनित्याश्च बहुश्रुताश्च । पृच्छामि त्वां विदुर प्रश्नमेतं भवन्ति वै कानि महाकुलानि ।

॥ विदुर उवाच ॥ तपो दमो ब्रह्मवित्त्वं वितानाः पुण्या विवाहाः सततान्नदानं । येष्वेवैते सप्त गुणा भवन्ति सम्यग्वृत्तास्तानि महाकुलानि ।

येषां वृत्तं न व्यथते न योनिश्चित्तप्रसादेन चरन्ति धर्मं । ये कीर्त्तिमिच्छन्ति कुले विशिष्टां त्यक्तानृतास्तानि महाकुलानि ।

अनिज्यया कुविवाहैर्वेदस्योत्सादनेन च । कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च ।

देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च । १२८५

ब्राह्मणानां परि वात् परिवादाच्च भारत । कुलान्यकुलतां यान्ति न्यासापहरणेन च ।

कुलानि समुपेतानि गोभिः पुरुषतोऽर्थतः । कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः ।

वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि । कुलसंख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः ।

वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च । अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ।

गोभिः पशुभिरश्वैश्च कृष्या च सुसमृद्धया । कुलानि न प्ररोहन्ति यानि हीनानि वृत्ततः । १२९०

मा नः कुले वैरकृत् कश्चिदस्तु राजामात्यो मा परस्वापहारी । मित्रद्रोही नैकृतिकोऽनृती वा पूर्व्वाशी वा पितृदेवातिथिभ्यः ।

यश्च नो ब्राह्मणान् हन्याद्यश्च नो ब्राह्मणान् द्विषेत् । न नस्स समितिं गच्छेद्यश्च नो निर्व्वपेत् कृषीन् ।

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता । सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ।

श्रद्धया परया राजन्नुपनीतानि सत्कृतिं । प्रवृत्तानि महाप्राज्ञ धर्म्मिणां पुण्यकर्म्मिणां ।

सूक्ष्मोऽपि भारं नृपते स्यन्दनो वै शक्तो वोढुं न तथाऽन्ये महीजाः । एवं युक्ता भारसहा भवन्ति महाकुलीना न तथाऽन्ये मनुष्याः । १२९५

न तन्मित्रं यस्य कोपाद्बिभेति यद्वा मित्रं शङ्कितेनोपचर्य्यं । यस्मिन्मित्रे पितरीवाश्वसीत तद्वै मित्रं सङ्गतानीतराणि ।

यः कश्चिदप्यसम्बद्धो मित्रभावेन वर्त्तते । स एव बन्धुस्तन्मित्रं सा गतिस्तत्परायणं ।

चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः । पारिप्लवमतेर्नित्यमध्रुवो मित्रसंग्रहः ।

चलचित्तमनात्मानमिन्द्रियाणां वशानुगं । अर्थाः समतिवर्त्तन्ते हंसाः शुष्कं सरो यथा ।

अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः । शीलमेतदसाधूनामभ्रं पारिप्लवं यथा । १३००

सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये । तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ।

अर्च्चयेदेव मित्राणि सति वाऽसति वा धने । नानर्थयन् प्रजानाति मित्राणां सारफल्गुतां ।

सन्तापाद्भ्रश्यते रूपं सन्तापाद्भ्रश्यते बलं । सन्तापाद्भ्रश्यते ज्ञानं सन्तापाद्व्याधिमृच्छति ।

अनवाप्यञ्च शोकेन शरीरं चोपतप्यते । अमित्राश्च प्रहृष्यन्ति मास्म शोके मनः कृथाः ।

पुनर्नरो म्रियते जायते च पुनर्नरो हीयते वर्द्धते च । पुनर्नरो याचति याच्यते च पुनर्नरः शोचति शोच्यते च । १३०५

सुखञ्च दुःखञ्च भवाभवौ च लाभालाभौ मरणं जीवितञ्च। पर्य्यायशः सर्व्वमेते स्पृशन्ति तस्माद्धीरो नैव हृष्येन्न शोचेत्।
चलानि हीमानि षडिन्द्रियाणि तेषां यद्यद्वर्द्धते यत्र यत्र। ततस्ततः स्रवते बुद्धिरस्य छिद्रोदकुम्भादिव नित्यमम्भः।
॥ धृतराष्ट्र उवाच ॥ तनुरुद्धः शिखी राजा मिथ्योपचरितो मया। मन्दानाम्मम पुत्त्राणां युद्धेनान्तं करिष्यति।
  नित्योद्विग्नमिदं सर्व्वं नित्योद्विग्नमिदं मनः। यत्तत् पदमनुद्विग्नं तन्मे वद महामते।
॥ विदुर उवाच ॥ नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात्। नान्यत्र लोभसन्त्यागाच्छान्तिं पश्यामि तेऽनघ।  १११०
  बुद्ध्या भयं प्रणुदति तपसा विन्दते महत्। गुरुशुश्रूषया ज्ञानं शान्तिं योगेन विन्दति।
  अनाश्रिता दानपुण्यं वेदपुण्यमनाश्रिताः। रागद्वेषविनिर्म्मुक्ता विचरन्तीह मोक्षिणः।
  स्वधीतस्य सुयुद्धस्य सुकृतस्य च कर्म्मणः। तपसश्च सुतप्तस्य तस्यान्ते सुखमेधते।
स्वास्तीर्णानि शयनानि प्रपन्ना न वै भिन्ना जातु निद्रां लभन्ते। न स्त्रीषु राजन् रतिमाप्नुवन्ति न मागधैः स्तूयमाना न सूतैः।
न वै भिन्ना जातु चरन्ति धर्म्मं न वै सुखं प्राप्नुवन्तीह भिन्नाः। न वै भिन्ना गौरवं प्राप्नुवन्ति न वै भिन्नाः प्रशमं रोच
  यन्ति।  १११५
न वै तेषां स्वदते पथ्यमुक्तं योगक्षेमं कल्पते नैव तेषां। भिन्नानां वै मनुजेन्द्र परायणं न विद्यते किञ्चिदन्यद्विनाशात्।
सम्पन्नं गोषु सम्भाव्यं सम्भाव्यं ब्राह्मणे तपः। सम्भाव्यं चापलं स्त्रीषु सम्भाव्यं ज्ञातितो भयं।
तन्तवोऽप्यायिता नित्यं तन्तवो बहुलाः समाः। बहून् बहुत्वादायासान् सहन्तीत्युपमा सतां।
  धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च। धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ।
  ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च। वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते।  ११२०
  महानप्येकजो वृक्षो बलवान् सुप्रतिष्ठितः। प्रसह्य एव वातेन सस्कन्धो मर्द्दितुं क्षणात्।
  अथ ये सहिता वृक्षाः सङ्घशः सुप्रतिष्ठिताः। ते हि शीघ्रतमान् वातान् सहन्तेऽन्योन्यसंश्रयात्।
  एवं मनुष्यमप्येकं गुणैरपि समन्वितं। शक्यं द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजं।
  अन्योन्यसमुपष्टम्भादन्योन्यापाश्रयेण च। ज्ञातयः सम्प्रवर्द्धन्ते सरसीवोत्पलान्युत।
  अवध्या ब्राह्मणा गावो ज्ञातयः शिशवः स्त्रियः। येषाञ्चान्नानि भुञ्जीत ये च स्युः शरणागताः।  ११२५
  न मनुष्ये गुणः कश्चिद्राजन् सधनतामृते। अनातुरत्वाद्भद्रं ते मृतकल्पा हि रोगिणः।
अव्याधिजं कटुकं शीर्षरोगि पापानुबन्धं परुषं तीक्ष्णमुष्णं। सतां पेयं यन्न पिबन्त्यसन्तो मन्युं महाराज पिब प्रशाम्य।
रोगार्द्दिता न फलान्याद्रियन्ते न वै लभन्ते विषयेषु तत्त्वं। दुःखोपेता रोगिणो नित्यमेव न बुध्यन्ते धनभोगान्न सौख्यं।
पुरा ह्युक्तं नाकरोस्त्वं वचो मे द्यूते जितां द्रौपदीं प्रेक्ष्य राजन्। दुर्य्योधनं वारयेत्यक्षवत्यां कितवत्वं पण्डिता वर्ज्जयन्ति।
न तद्बलं यन्मृदुना विरुध्यते सूक्ष्मो हि धर्म्मस्तरसा सेवितव्यः। प्रध्वंसिनी क्रूरसमाहिता श्रीर्म्मृदुप्रौढा गच्छति पुत्त्रपौ
  त्रान्।  १११०
धार्त्तराष्ट्राः पाण्डवान् पालयन्तु पाण्डोः सुतास्तव पुत्त्रांश्च पान्तु। एकारिमित्राः कुरवो ह्येकधर्म्मा जीवन्तु राजन् सुखिनः
  समृद्धाः।
मेढीभूतः कौरवाणां त्वमद्य त्वय्याधीनं कुरुकुलमाजमीढ। पार्थान् बालान् वनवासप्रतप्तान् गोपायस्व स्वंयशस्तात रक्षन्।

सम्भजस्व त्वं कौरवान् पाण्डुपुत्रैर्मातेऽन्तरं रिपवः प्रार्थयन्तु । सत्ये स्थितास्ते नरदेव सर्व्वे दुर्य्योधनं स्थापय त्वं नरेन्द्र ।

इति श्रीमहाभारते उद्योगपर्व्वणि प्रजागरपर्व्वणि विदुरहितवाक्ये पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ विदुर उवाच ॥ सप्तदशेमान् राजेन्द्र मनुः स्वायम्भुवोऽब्रवीत् । वैचित्रवीर्य्य पुरुषानाकाशं मुष्टिभिर्घ्नतः ।

दानवेन्द्रस्य हि धनुरनाम्यं नमतोऽब्रवीत् । अथो मरीचिनः पादानग्राह्यान् गृह्णतस्तथा । १२३५

यश्चाशिष्यं शास्ति वै यश्च तुष्येद्यश्चातिवेलं भजते द्विषन्तं । स्त्रियश्च यो रक्षति भद्रमश्नुते यश्चायाच्यं याचते कत्थते च ।

यश्चाभिजातः प्रकरोत्यकार्य्यं यश्चाबलो बलिना नित्यवैरी । अश्रद्दधानाय च यो ब्रवीति यश्चाकाम्यं कामयते नरेन्द्र ।

वध्वाऽवहासं श्वशुरो मन्यते यो वध्वावसन्नभयो मानकामः । परक्षेत्रे निर्व्वपति यश्च बीजं स्त्रियञ्च यः परिवदतेऽतिवेलं ।

यश्चापि लब्ध्वा न स्मरामीतिवादी दत्त्वा च यः कत्थति याच्यमानः । यश्चासतः सत्त्वमुपानयीत एतान्नयन्ति निरय पाशहस्ताः ।

यस्मिन् यथा वर्त्तते यो मनुष्यस्तस्मिंस्तथा वर्त्तितव्यं स धर्मः । मायाचारो मायया वर्त्तितव्यः साध्वाचारः साधुना प्रत्युपेयः । १२४०

जरा रूपं हरति हि धैर्य्यमाशा मृत्युः प्राणान् धर्म्मचर्य्यामसूया । कामो ह्रियं वृत्तमनार्य्यसेवा क्रोधः श्रियं सर्व्वमेवाभिमानः ।

॥ धृतराष्ट्र उवाच ॥ शतायुरुक्तः पुरुषः सर्व्ववेदेषु वै यदा । नाप्नोत्यथ च तत्सर्व्वमायुः केनेह हेतुना ।

॥ विदुर उवाच ॥ अतिमानोऽतिवादश्च तथाऽत्यागो नराधिप । क्रोधश्चात्मविधित्सा च मित्रद्रोहश्च तानि षट् ।

एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनां । एतानि मानवान् घ्नन्ति न मृत्युर्भद्रमस्तु ते ।

विश्वस्तस्यैति यो दारान् यश्चापि गुरुतल्पगः । वृषलीपतिर्द्विजो यश्च पानपश्चैव भारत । १२४५

आदेशकृद्वृत्तिहन्ता द्विजानां प्रेषकश्च यः । शरणागतहा चैव सर्व्वे ब्रह्महणः समाः । एतैः समेत्य कर्त्तव्यं प्रायश्चित्तमिति श्रुतिः ।

गृहीतवाक्यो नयविद्वदान्यः शेषान्नभोक्ता ह्यविहिंसकश्च । नानर्थकृत्याकुलितः कृतज्ञः सत्यो मृदुः स्वर्गमुपैति विद्वान् ।

सुलभाः पुरुषा राजन् सततं प्रियवादिनः । अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ।

यो हि धर्म्मं समाश्रित्य हित्वा भर्त्तुः प्रियाप्रिये । अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ।

त्यजेत् कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् । १२५०

आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि । आत्मानं सततं रक्षेद्दारैरपि धनैरपि ।

द्यूतमेतत् पुराकल्पे दृष्टं वैरकरं नृणां । तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ।

उक्तं मया द्यूतकालेऽपि राजन्नेदं युक्तं वचनं प्रातिपेयं । तदौषधं पथ्यमिवातुरस्य न रोचते तव वैचित्रवीर्य्य ।

काकैरिमांश्चित्रबर्हान्मयूरान् पराजयेथाः पाण्डवान् धार्त्तराष्ट्रैः । हित्वा सिंहान् क्रोष्टुकान् गूहमानः प्राप्ते काले शोचिता त्वं नरेन्द्र ।

यस्तात न क्रुध्यति सर्व्वकालं भृत्यस्य भक्तस्य हिते रतस्य । तस्मिन् भृत्या भर्त्तरि विश्वसन्ति न चैनमापत्सु परित्यजन्ति । १२५५

न भृत्यानां वृत्तिसंरोधनेन राज्यं धनं सञ्जिघृक्षेदपूर्व्वं । त्यजन्ति ह्येनं वञ्चिता वै विरुद्धाः स्निग्धा ह्यमात्याः परिहीनभोगाः ।

कृत्यानि पूर्व्वं परिसंख्याय सर्व्वाण्यायव्यये चानुरूपाञ्च वृत्तिं । सङ्गृह्णीयादनुरूपान् सहायान् सहायसाध्यानि हि दुष्कराणि ।

अभिप्रायं यो विदित्वा तु भर्त्तुः सर्व्वाणि कार्य्याणि करोत्यतन्द्रीः । वक्ता हितानामनुरक्त आर्य्यः शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः ।

वाक्यन्तु यो नाद्रियतेऽनुशिष्टः प्रत्याह यश्चापि नियुज्यमानः । प्रज्ञाभिमानी प्रतिकूलवादी त्याज्यः स तादृक् त्वरयैव भृत्यः ।

अस्तब्धमक्लीवमदीर्घसूत्रं सानुक्रोशं श्लक्ष्णमहार्य्यमन्यैः । अरोगजातीयमुदारवाक्यं भृत्यं वदन्त्यष्टगुणोपपन्नं । ११६०

न विश्वासाज्जातु परस्य गेहे गच्छेन्नरश्चेतयानो विकाले । न चत्वरे निशि तिष्ठेन्निगूढो न राजकाम्यां योषितं प्रार्थयीत ।

न निह्नवं मन्त्रगतस्य गच्छेत्संसृष्टमन्त्रस्य कुसङ्गतस्य । न च ब्रूयान्नाश्वसिमि त्वयीति सकारणं व्यपदेशन्तु कुर्य्यात् ।

घृणी राजा पुंश्चली राजभृत्यः पुत्रो भ्राता विधवा बालपुत्रा । सेनाजीवी चोद्धृतभूतिरेव व्यवहारेषु वर्ज्जनीयाः स्युरेते ।

अष्टौ गुणास्तात पुरुषन्दीपयन्ति प्रज्ञा च कौल्यञ्च श्रुतन्दमश्च । पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ।

एतान्गुणांस्तात महानुभावानेको गुणः संश्रयते प्रसह्य । राजा यदा सत्कुरुते मनुष्यं सर्व्वान् गुणानेष गुणो बिभर्त्ति । ११६५

गुणा दश स्नानशीलं भजन्ते बलं रूपं स्वरवर्णप्रशुद्धिः । स्पर्शश्च गन्धश्च विशुद्धता च श्रीः सौकुमार्य्यं प्रवराश्च नार्य्यः ।

गुणाश्च षण्मितभुक्तं भजन्ते आरोग्यमायुश्च बलं सुखञ्च । अनाविलं चास्य भवत्यपत्यं न चैनमाद्यून इति क्षिपन्ति ।

अकर्म्मशीलञ्च महाशनञ्च लोकद्विष्टं बहुमायं नृशंसं । अदेशकालज्ञमनिष्टवेशमेतान् गृहे न प्रतिवासयेत ।

कदर्य्यमाक्रोशकमश्रुतं च वनौकसं धूर्त्तममान्यमानिनं । निष्ठूरिणं कृतवैरं कृतघ्नमेतान् भृशार्त्तोऽपि न जातु याचेत् ।

संक्लिष्टकर्म्माणमतिप्रमादं नित्यानृतञ्चादृढभक्तिकञ्च । विसृष्टरागं पटुमानिनञ्चाप्येतान्न सेवेत नराधमान् षट् । ११७०

सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः । अन्योन्यबन्धनावेतौ विनान्योन्यं न सिध्यतः ।

उत्पाद्य पुत्राननृणांश्च कृत्वा वृत्तिञ्च तेभ्योऽनुविधाय काञ्चित् । स्थाने कुमाराः प्रतिपाद्य सर्व्वा अरण्यसंस्थोऽथ मुनिर्बुभूषेत् ।

हितं यत्सर्व्वभूतानामात्मनश्च सुखावहं । तत्कुर्य्यादीश्वरे ह्येतन्मूलं सर्व्वार्थसिद्धये ।

बुद्धिः प्रभावस्तेजश्च सत्त्वमुत्थानमेव च । व्यवसायश्च यस्य स्यात् तस्यावृत्तिभयं कुतः ।

पश्य दोषान् पाण्डवैर्विग्रहे त्वं यत्र व्यथेयुरपि देवाः सशक्राः । पुत्रैर्वैरं नित्यमुद्विग्नवासो यशःप्रणाशो द्विषतां च हर्षः । ११७५

भीष्मस्य कोपस्तव चैवेन्द्रकल्पद्रोणस्य राज्ञश्च युधिष्ठिरस्य । उत्सादयेल्लोकमिमं प्रवृद्धः श्वेतो ग्रहस्तिर्य्यगिवापतन् खे ।

तव पुत्रशतञ्चैव कर्णः पञ्च च पाण्डवाः । पृथिवीमनुशासेयुरखिलां सागराम्बरां ।

धार्त्तराष्ट्रा वनं राजन् व्याघ्राः पाण्डुसुता मताः । मा वनं छिन्धि सव्याघ्रं मा व्याघ्रा नीनशन्वनात् ।

तस्माद्वनमृते व्याघ्रान् व्याघ्रा न स्युर्ऋते वनं । वनं हि रक्ष्यते व्याघ्रैर्व्याघ्रान्रक्षति काननं ।

न तथेच्छन्ति कल्याणान् परेषां वेदितुं गुणान् । यथैषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः । ११८०

अर्थे सिद्धिं परामिच्छन् धर्म्ममेवादितश्चरेत् । न हि धर्म्मादपैत्यर्थः स्वर्गलोकादिवामृतं ।

यस्यात्मा विरतः पापात् कल्याणे च निवेशितः । तेन सर्व्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ।

यो धर्म्ममर्थं कामञ्च यथाकालं निषेवते । धर्म्मार्थकामसंयोगं सोऽमुत्रेह च विन्दति ।

सन्नियच्छति यो वेगमुत्थितं क्रोधहर्षयोः । स श्रियो भाजनं राजन् यश्चापत्सु न मुह्यति ।

बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे । यत्तु बाहुबलं नाम कनिष्ठं बलमुच्यते । ११८५

अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते । तृतीयं धनलाभन्तु बलमाहुर्मनीषिणः ।
यत्त्वस्य सहजं राजन् पितृपैतामहं बलं । अभिजातबलं नाम तच्चतुर्थं बलं स्मृतं ।
येन त्वेतानि सर्व्वाणि संगृहीतानि भारत । यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ।
महते योऽपकाराय नरस्य प्रभवेन्नरः । तेन वैरं समासज्य दूरस्थोऽस्मीति नाश्वसेत् ।
स्त्रीषु राजसु सर्पेषु स्वाध्यायप्रभुशत्रुषु । भोगेष्वायुषि विश्वासं कः प्राज्ञः कर्त्तुमर्हति । १३९०

प्रज्ञाशरेणाभिहतस्य जन्तोश्चिकित्सकाः सन्ति न चौषधानि । न होममन्त्रा न च मङ्गलानि नाथर्व्वणा नाप्यगदाः सुसिद्धाः ।

सर्पश्चाग्निश्च सिंहश्च कुलपुत्त्रश्च भारत । नावज्ञेया मनुष्येण सर्व्वे ह्येतेऽतितेजसः ।
अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु । न चोपयुङ्क्ते तद्दारु यावन्नोद्दीप्यते परैः ।
स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते । तद्दारु च वनं चान्यन्निर्दहत्याशु तेजसा ।
एवमेव कुले जाताः पावकोपमतेजसः । क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते । १३९५
लताधर्म्मा सपुत्त्रस्त्वं शालाः पाण्डुसुता मताः । न लता वर्द्धते जातु महाद्रुममनाश्रिता ।

वनं राजंस्त्वं सपुत्त्रोऽम्बिकेय सिंहान् वने पाण्डवांस्तात विद्धि । सिंहैर्विहीनं हि वनं विनश्येत्सिंहा विनश्येयुर्ऋते वनेन ।

इति श्रीमहाभारते उद्योगपर्व्वणि प्रजागरपर्व्वणि विदुरवाक्ये षट्त्रिंशोऽध्यायः ॥ ३६ ॥

॥ विदुर उवाच ॥ ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ।

पीठं दत्त्वा साधवेऽभ्यागताय आनीयापः परिनिर्णिज्य पादौ । सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थां ततो दद्यादन्नमवेक्ष्य धीरः ।

यस्योदकं मधुपर्कञ्च गाञ्च न मन्त्रवित् प्रतिगृह्णाति गेहे । लोभाद्भयादर्थकार्पण्यतो वा तस्यानर्थं जीवितमाहुरार्य्याः । १४००

चिकित्सकः शल्यकर्त्तावकीर्णी स्तेनः क्रूरो मद्यपो भ्रूणहा च । सेनाजीवी श्रुतिविक्रायकश्च भृशं प्रियोऽप्यतिथिर्नोदकार्हः ।

अविक्रेयं लवणं पक्वमन्नं दधि क्षीरं मधु तैलं घृतञ्च । तिला मांसं फलमूलानि शाकं रक्तं वासः सर्व्वगन्धा गुडाश्च ।

अरोषणो यः समलोष्टाश्मकाञ्चनः प्रहीणशोको गतसन्धिविग्रहः । निन्दाप्रशंसोपरतः प्रियाप्रिये त्यजन्नुदासीनवदेष भिक्षुकः ।

नीवारमूलेङ्गुदशाकवृत्तिः सुसंयतात्माग्निकार्य्येषु चोद्यः । वने वसन्नतिथिष्वप्रमत्तो धुरन्धरः पुण्यकृदेष तापसः ।

अपकृत्य बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत् । दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः । १४०५
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् । विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ।
अनीर्षुर्गुप्तदारश्च संविभागी प्रियंवदः । श्लक्ष्णो मधुरवाक् स्त्रीणां न चासां वशगो भवेत् ।
पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः । स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ।
पितुरन्तःपुरं दद्यान्मातुर्दद्यान्महानसं । गोषु चात्मसमं दद्यात् स्वयमेव कृषिं व्रजेत् ।
भृत्यैर्वाणिज्यचारञ्च पुत्त्रैः सेवेत च द्विजान् । अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितं । १४१०
तेषां सर्व्वत्रगं तेजः स्वासु योनिषु शाम्यति । नित्यं सन्तः कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते । यस्य मन्त्रं न जानन्ति बाह्याश्चाभ्यन्तराश्च ये ।

स राजा सर्व्वतश्चक्षुश्चिरमैश्वर्य्यमश्नुते। करिष्यन्न प्रभाषेत कृतान्येव तु दर्शयेत्।

धर्म्मकामार्थकार्य्याणि तथा मन्त्रो न भिद्यते। गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः।

अरण्ये निःशलाके वा तत्र मन्त्रो विधीयते। नासुहृत्परमं मन्त्रं भारतार्हति वेदितुं। १४१५

अपण्डितो वाऽपि सुहृत् पण्डितो वाप्यनात्मवान्। नापरीक्ष्य महीपालः कुर्य्यात् सचिवमात्मनः।

अमात्ये ह्यर्थलिप्सा च मन्त्ररक्षणमेव च। कृतानि सर्वकार्य्याणि यस्य पारिषदा विदुः।

धर्म्मे चार्थे च कामे च स राजा राजसत्तमः। गूढमन्त्रस्य नृपतेस्तस्य सिद्धिरसंशयं।

अप्रशस्तानि कार्य्याणि यो मोहादनुतिष्ठति। स तेषां विपरिभ्रंशाद्भ्रश्यते जीवितादपि।

कर्म्मणान्तु प्रशस्तानामनुष्ठानं सुखावहं। तेषामेवाननुष्ठानं पश्चात्तापकरं मतं। १४२०

अनधीत्य यथा वेदान्न विप्रः श्राद्धमर्हति। एवमश्रुतषाड्गुण्यो न मन्त्रं श्रोतुमर्हति।

स्थानवृद्धिक्षयज्ञस्य षाड्गुण्यविदितात्मनः। अनवज्ञातशीलस्य स्वाधीना पृथिवी नृप।

अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः। आत्मप्रत्ययकोषस्य स्वाधीनेयं वसुन्धरा।

नाममात्रेण तुष्येत छत्रेण च महीपतिः। भृत्येभ्यो विसृजेदर्थान्नैकः सर्व्वहरो भवेत्।

ब्राह्मणं ब्राह्मणो वेद भर्त्ता वेद स्त्रियं तथा। अमात्यं नृपतिर्व्वेद राजा राजानमेव च। १४२५

न शत्रुर्व्वशमापन्नो मोक्तव्यो वध्यतां गतः। न्यग्भूत्वा पर्य्युपासीत वध्यं हन्याद्बले सति।

अहताद्धि भयं तस्माज्जायते न चिरादिव। दैवतेषु प्रयत्नेन राजसु ब्राह्मणेषु च।

नियन्तव्यः सदा क्रोधो वृद्धबालातुरेषु च। निरर्थकलहं प्राज्ञो वर्जयेन्मूढसेवितं।

कीर्त्तिञ्च लभते लोके न चानर्थेन युज्यते। प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः।

न तं भर्त्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः। न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये। १४३०

लोकपर्य्यायवृत्तान्तं प्राज्ञो जानाति नेतरः। विद्याशीलवयोवृद्धान् बुद्धिवृद्धांश्च भारत।

धनाभिजातवृद्धांश्च नित्यं मूढोऽवमन्यते। अनार्य्यवृत्तमप्राज्ञमसूयकमधार्म्मिकं।

अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा। अविसंवादनन्दानं समयस्याव्यतिक्रमः।

आवर्त्तयन्ति भूतानि सम्यक् प्रणिहिता च वाक्। अविसंवादको दक्षः कृतज्ञो मतिमानृजुः।

अपि सङ्क्षीणकोषोऽपि लभते परिवारणं। धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा। १४३५

मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः। असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः।

तादृङ्नराधमो लोके वर्जनीयो नराधिप। न च रात्रौ सुखं शेते ससर्पे इव वेश्मनि।

यः कोपयति निर्द्दोषं सदोषोऽभ्यन्तरं जनं। येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत।

सदा प्रसादनं तेषां देवतानामिवाचरेत्। येऽर्थाः स्त्रीषु समायुक्ताः प्रमत्तपतितेषु च।

ये चानार्य्यसमासक्ताः सर्व्वे ते संशयं गताः। यत्र स्त्री यत्र कितवो बालो यत्रानुशासिता। १४४०

मज्जन्ति तेऽवशा राजन्नद्यामश्मप्लवा इव। प्रयोजनेषु ये सक्ता न विशेषेषु भारत।

तानहं पण्डितान्मन्ये विशेषा हि प्रसङ्गिनः। यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः।

यं प्रशंसन्ति बन्धकेया न स जीवति मानवः । हित्वा तान् परमेष्वासान् पाण्डवानमितौजसः ।
आहितं भारतैश्वर्यं त्वया दुर्य्योधने महत् । तं द्रक्ष्यसि परिभ्रष्टं तस्मात्त्वमचिरादिव ।
ऐश्वर्य्यमदसम्मूढं बलिं लोकत्रयादिव । १४४५
इति श्रीमहाभारते उद्योगपर्व्वणि प्रजागरपर्व्वणि विदुरवाक्ये सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

॥ धृतराष्ट्र उवाच ॥ अनीश्वरोऽयं पुरुषो भवाभवे सूत्रप्रोता दारुमयीव योषा । धात्रा तु दिष्टस्य वशे कृतोऽयं तस्माद्वद त्वं श्रवणे धृतोऽहं ।
॥ विदुर उवाच ॥ अप्राप्तकाले वचनं बृहस्पतिरपि ब्रुवन् । लभते बुद्ध्यवज्ञानमवमानञ्च भारत ।
प्रियो भवति दानेन प्रियवादेन चापरः । मन्त्रमूलबलेनान्यो यः प्रियः प्रिय एव सः ।
द्वेष्यो न साधुर्भवति न मेधावी न पण्डितः । प्रिये शुभानि कार्य्याणि द्वेष्ये पापानि चैव ह ।
उक्तं मया जातमात्रेऽपि राजन् दुर्य्योधनं त्यज पुत्त्रं त्वमेकं । तस्य त्यागात्पुत्त्रशतस्य वृद्धिरस्यात्यागात्पुत्त्रशतस्य नाशः ।१४५०
न वृद्धिर्बहु मन्तव्या या वृद्धिः क्षयमावहेत् । क्षयोऽपि बहु मन्तव्यो यः क्षयो वृद्धिमावहेत् ।
न स क्षयो महाराज यः क्षयो वृद्धिमावहेत् । क्षयः स त्विह मन्तव्यो यं लब्ध्वा बहु नाशयेत् ।
समृद्धा गुणतः केचिद्भवन्ति धनतोऽपरे । धनवृद्धान् गुणैर्हीनान् धृतराष्ट्र विवर्जय ।
॥ धृतराष्ट्र उवाच ॥ सर्व्वं त्वमायतीयुक्तं भाषसे प्राज्ञसम्मतं । न चोत्सहे सुतन्त्यक्तुं यतो धर्म्मस्ततो जयः ।
॥ विदुर उवाच ॥ अतीवगुणसम्पन्नो न जातु विनयान्वितः । सुसूक्ष्ममपि भूतानामुपमर्द्दमुपेक्षते । १४५५
परापवादनिरताः परदुःखोदयेषु च । परस्परविरोधे च यतन्ते सततोत्थिताः ।
सदोषं दर्शनं येषां संवासे सुमहद्भयं । अर्थादाने महान् दोषः प्रदाने च महद्भयं ।
ये वै भेदनशीलास्तु सकामा निस्त्रपाः शठाः । ते पापा इति विख्याताः संवासे परिगर्हिताः ।
युक्तांश्चान्यैर्महादोषैर्ये नरास्तान् विवर्जयेत् । निवर्त्तमाने सौहार्द्दे प्रीतिर्नीचे प्रणश्यति ।
या चैव फलनिर्वृत्तिः सौहृदे चैव यत्सुखं । यतते चापवादाय यत्नमारभते क्षये । १४६०
अल्पेऽप्यपकृते मोहान्न शान्तिमधिगच्छति । तादृशैः सङ्गतं नीचैर्नृशंसैरकृतात्मभिः ।
निशम्य निपुणं बुद्ध्या विद्वान् दूराद्विवर्जयेत् । यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरं ।
स पुत्त्रपशुभिर्वृद्धिं श्रेयश्चानन्त्यमश्नुते । ज्ञातयो वर्द्धनीयास्तैर्य इच्छन्त्यात्मनः शुभं ।
कुलवृद्धिञ्च राजेन्द्र तस्मात्साधु समाचर । श्रेयसा योक्ष्यते राजन् कुर्व्वाणो ज्ञातिसत्क्रियां ।
विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ । किं पुनर्गुणवन्तस्ते त्वत्प्रसादाभिकाङ्क्षिणः । १४६५
प्रसादं कुरु वीराणां पाण्डवानां विशाम्पते । दीयन्तां ग्रामकाः केचित्तेषां वृत्त्यर्थमीश्वर ।
एवं लोके यशः प्राप्तं भविष्यति नराधिप । वृद्धेन हि त्वया कार्य्यं पुत्त्राणां तात शासनं ।
मया चापि हितं वाच्यं विद्धि मां त्वद्धितैषिणं । ज्ञातिभिर्व्विग्रहस्तात न कर्त्तव्यः शुभार्थिना ।
सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ । सम्भोजनं सङ्कथनं सम्प्रीतिश्च परस्परं ।
ज्ञातिभिः सह कार्य्याणि न विरोधः कदाचन । ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च । १४७०

सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च। सुवृत्तो भव राजेन्द्र पाण्डवाग्रेति मानद।
अधर्षणीयः शत्रूणां तैर्वृतस्त्वं भविष्यसि। श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति।
दिग्धहस्तं मृग इव स एनस्तस्य विन्दति। पश्चादपि नरश्रेष्ठ तव तापो भविष्यति।
तान्वा हतान्सुतान् वापि श्रुत्वा तदनुचिन्तय। येन खट्वां समारूढः परितप्येत कर्म्मणा।
आदावेव न तत् कुर्य्यादध्रुवे जीविते सति। न कश्चिन्नापनयति पुमानन्यत्र भार्गवात्। १४७५
शेषसम्प्रतिपत्तिस्तु बुद्धिमत्स्वेव तिष्ठति। दुर्य्योधनेन यद्येतत्पापन्तेषु पुरा कृतं।
त्वया तत् कुलवृद्धेन प्रत्यानेयं नरेश्वर। तांस्त्वं पदे प्रतिष्ठाप्य लोके विगतकल्मषः।
भविष्यसि नरश्रेष्ठ पूजनीयो मनीषिणां। सुव्याहृतानि धीराणां फलतः परिचिन्त्य यः।
अध्यवस्यति कार्य्येषु चिरं यशसि तिष्ठति। असम्यगुपयुक्तं हि ज्ञानं सुकुशलैरपि।
उपलभ्यञ्चाविदितं विदितं चाननुष्ठितं। पापोदयफलं विद्वान् यो नारभति वर्द्धते। १४८०
यस्तु पूर्व्वकृतं पापमविमृश्यानुवर्त्तते। अगाधपङ्के दुर्मेधा विषमे विनिपात्यते।
मन्त्रभेदस्य षट् प्राज्ञो द्वाराणीमानि लक्षयेत्। अर्थसन्ततिकामश्च रक्षेदेतानि नित्यशः।
मदं स्वप्नमविज्ञानमाकारं चात्मसम्भवं। दुष्टामात्येषु विश्रम्भं दूताच्चाकुशलादपि।
द्वाराण्येतानि यो ज्ञात्वा संवृणोति सदा नृपः। त्रिवर्गाचरणे युक्तः स शत्रूनधितिष्ठति।
न वै श्रुतमविज्ञाय वृद्धाननुपसेव्य वा। धर्म्मार्थौ वेदितुं शक्यौ बृहस्पतिसमैरपि। १४८५
नष्टं समुद्रे पतितं नष्टं वाक्यमशृण्वति। अनात्मनि श्रुतं नष्टं नष्टं हुतमनग्निकं।
मत्या परीक्ष्य मेधावी बुद्ध्या सम्पाद्य चासकृत्। श्रुत्वा दृष्ट्वाऽथ विज्ञाय प्राज्ञैर्म्मैत्रीं समाचरेत्।
अकीर्त्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः। हन्ति नित्यं क्षमा क्रोधमाचारो हन्त्यलक्षणं।
परिच्छदेन क्षेत्रेण वेश्मना परिचर्य्यया। परीक्षेत कुलं राजन् भोजनाच्छादनेन च।
उपस्थितस्य कामस्य प्रतिवादो न विद्यते। अपि निर्मुक्तदेहस्य कामरक्तस्य किं पुनः। १४९०
राजोपसेवितं वैद्यं धार्म्मिकं प्रियदर्शनं। मित्रवन्तं सुवाक्यञ्च सुहृदं परिपालयेत्।
दुष्कुलीनः कुलीनो वा मर्य्यादां यो न लङ्घयेत्। धर्म्मापेक्षी मृदुर्ह्रीमान् स कुलीनशताद्वरः।
ययोश्चित्तेन वा चित्तं नैभृतं निभृतेन वा। समेति प्रज्ञया प्रज्ञा तयोर्म्मैत्री न जीर्य्यति।
दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव। विवर्जयीत मेधावी तस्मिन्मैत्री प्रणश्यति।
अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च। तथैवापेतधर्म्मेषु न मैत्रीमाचरेद्बुधः। १४९५
कृतज्ञं धार्म्मिकं सत्यमक्षुद्रं दृढभक्तिकं। जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते।
इन्द्रियाणामनुत्सर्गो मृत्युनाऽपि विशिष्यते। अत्यर्थं पुनरुत्सर्गः सादयेद्दैवतान्यपि।
मार्द्दवं सर्व्वभूतानामनसूया क्षमा धृतिः। आयुष्याणि बुधाः प्राहुर्म्मित्राणां चापि मानना।
अपनीतं सुनीतेन योऽर्थं प्रत्यानिनीषते। मतिमास्थाय सुदृढां तदकापुरुषव्रतं।

आयत्यां प्रतिकारज्ञस्तदात्वे दृढनिश्चयः । अतीते कार्य्यशेषज्ञो नरोऽर्थैर्न प्रहीयते ।  १५००
कर्म्मणा मनसा वाचा यदभीक्ष्णं निषेवते । तदेवापहरत्येनं तस्मात् कल्याणमाचरेत् ।
मङ्गलालम्भनं योगः श्रुतमुत्थानमार्ज्जवं । भूतिमेतानि कुर्व्वन्ति सतां चाभीक्ष्णदर्शनं ।
अनिर्व्वेदः श्रियो मूलं लाभस्य च शुभस्य च । महान् भवत्यनिर्व्विण्णः सुखं चानन्त्यमश्नुते ।
नातः श्रीमत्तरं किञ्चिदन्यत् पथ्यतमं तथा । प्रभविष्णोर्यथा तात क्षमा सर्व्वत्र सर्व्वदा ।
क्षमेदशक्तः सर्व्वस्य शक्तिमान् धर्म्मकारणात् । अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता ।  १५०५
यत्सुखं सेवमानोऽपि धर्म्मार्थाभ्यां न हीयते । कामं तदुपसेवेत न मूढव्रतमाचरेत् ।
दुःखार्त्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च । न श्रीर्व्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ।
आर्ज्जवेन नरं युक्तमार्ज्जवात् सव्यपत्रपं । अशक्तं मन्यमानास्तु धर्षयन्ति कुबुद्धयः ।
अत्यार्य्यमतिदातारमतिशूरमतिव्रतं । प्रज्ञाभिमानिनञ्चैव श्रीर्भयान्नोपसर्पति ।
न चातिगुणवत्स्वेषा नात्यन्तं निर्गुणेषु च । नैषा गुणान् कामयते नैर्गुण्यान्नानुरज्यते ।  १५१०
उन्मत्ता गौरिवान्धा श्रीः क्वचिदेवावतिष्ठते । अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतं ।
रतिपुत्रफला नारी दत्तभुक्तफलं धनं । अधर्म्मोपार्जितैरर्थैर्यः करोत्यौर्द्ध्वदेहिकं ।
न स तस्य फलं प्रेत्य भुङ्क्तेऽर्थस्य दुरागमात् । कान्तारे वनदुर्गेषु कृच्छ्रास्वापत्सु सम्भ्रमे ।
उद्यतेषु च शस्त्रेषु नास्ति सत्त्ववतां भयं । उत्थानं संयमो दाक्ष्यमप्रमादो धृतिः स्मृतिः ।
समीक्ष्य च समारम्भो विद्धि मूलं भवस्य तु । तपो बलं तापसानां ब्रह्म ब्रह्मविदां बलं ।  १५१५
हिंसा बलमसाधूनां क्षमा गुणवतां बलं । अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्व्वचनमौषधं । न तत् परस्य सन्दध्यात् प्रतिकूलं यदात्मनः ।
सङ्क्षेपेणैष धर्म्मः स्यात् कामादन्यः प्रवर्त्तते । अक्रोधेन जयेत् क्रोधमसाधुं साधुना जयेत् ।
जयेत् कदर्य्यं दानेन जयेत् सत्येन चानृतं । स्त्रीधूर्त्तकेऽलसे भीरौ चण्डे पुरुषमानिनि ।
चौरे कृतघ्ने विश्वासो न कार्य्यो न च नास्तिके । अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।  १५२०
चत्वारि सम्प्रवर्द्धन्ते कीर्त्तिरायुर्य्यशो बलं । अतिक्लेशेन येऽर्थाः स्युर्धर्म्मस्यातिक्रमेण च ।
अरेर्व्वा प्रणिपातेन मास्म तेषु मनः कृथाः । अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजं ।
निराहाराः प्रजाः शोच्याः शोच्यं राष्ट्रमराजकं । अध्वा जरा देहवतां पर्व्वतानां जलं जरा ।
असम्भोगो जरा स्त्रीणां वाक्शल्यं मनसो जरा । अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलं ।
मलं पृथिव्या वाह्लीकाः पुरुषस्यानृतं मलं । कौतूहलमला साध्वी विप्रवासमलाः स्त्रियः ।  १५२५
सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु । ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलं ।
न स्वप्नेन जयेन्निद्रां न कामेन जयेत् स्त्रियः । नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ।
यस्य दानजितं मित्रं शत्रवो युधि निर्जिताः । अन्नपानजिता दाराः सफलं तस्य जीवितं ।
सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा । धृतराष्ट्र विमुञ्चेच्छां न कथञ्चिन्न जीव्यते ।

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। नालमेकस्य तत्सर्व्वमिति पश्यन्न मुह्यति। १५३०

राजन्भूयो ब्रवीमि त्वां पुत्त्रेषु सममाचर। समता यदि ते राजन् स्वेषु पाण्डुसुतेषु वा।

इति श्रीमहाभारते उद्योगपर्व्वणि प्रजागरपर्व्वणि विदुरवाक्ये अष्टत्रिंशोऽध्यायः॥ ३८॥

॥ विदुर उवाच ॥ योऽभ्यर्च्चितः सद्भिरसज्जमानः करोत्यर्थं शक्तिमहापयित्वा। क्षिप्रं यशस्तं समुपैति सन्तमलं प्रसन्ना हि सुखाय सन्तः।

महान्तमप्यर्थमधर्म्मयुक्तं यः सन्त्यजत्यनपाकृष्ट एव। सुखं सुदुःखान्यवमुच्य शेते जीर्णां त्वचं सर्प इवावमुच्य।

अनृते च समुत्कर्षो राजगामि च पैशुनं। गुरोश्चालीकनिर्ब्बन्धः समानि ब्रह्महत्यया।

असूयैकपदं मृत्युरतिवादः श्रियो वधः। अशुश्रूषा त्वरा श्लाघा विद्यायाः शत्रवस्त्रयः। १५३५

आलस्यं मदमोहौ च चापलं गोष्ठिरेव च। स्तब्धता चाभिमानित्वं तथाऽत्यागित्वमेव च।

एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः। सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखं।

सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखं। नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः।

नान्तकः सर्व्वभूतानां न पुंसां वामलोचना।

आशा धृतिं हन्ति समृद्धिमन्तकः क्रोधः श्रियं हन्ति यशः कदर्य्यता। अपालनं हन्ति पशूंश्च राजन्नेकः क्रुद्धो ब्राह्मणो हन्ति राष्ट्रं। १५४०

अजाश्च कांस्यं रजतञ्च नित्यं मध्वाकर्षः शकुनिः श्रोत्रियश्च। वृद्धो ज्ञातिरवसन्नः कुलीन एतानि ते सन्तु गृहे सदैव।

अजोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी। विषमौदुम्बरं शङ्खः स्वर्णनाभोऽथ रोचना।

गृहे स्थापयितव्यानि धन्यानि मनुरब्रवीत्। देवब्राह्मणपूजार्थमतिथीनां च भारत।

इदञ्च त्वां सर्व्वपरं ब्रवीमि पुण्यं पदं तात महाविशिष्टं। न जातु कामान्न भयान्न लोभाद्धर्म्मं त्यजेज्जीवितस्यापि हेतोः।

नित्यो धर्म्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः। त्यक्त्वाऽनित्यं प्रतितिष्ठस्व नित्ये सन्तुष्य त्वं तोषपरो हि लाभः। १५४५

महाबलान् पश्य महानुभावान् प्रशास्य भूमिं धनधान्यपूर्णां। राज्यानि हित्वा विपुलांश्च भोगान् गतान्नरेन्द्रान् वशमन्तकस्य।

मृतं पुत्त्रं दुःखपुष्टं मनुष्या उत्क्षिप्य राजन् स्वगृहान्निर्हरन्ति। तं मुक्तकेशाः करुणं रुदन्ति चितामध्ये काष्ठमिव क्षिपन्ति।

अन्यो धनं प्रेतगतस्य भुङ्क्ते वयांसि चाग्निश्च शरीरधातून्। द्वाभ्यामयं सह गच्छत्यमुत्र पुण्येन पापेन च वेष्ट्यमानः।

उत्सृज्य विनिवर्त्तन्ते ज्ञातयः सुहृदः सुताः। अपुष्पानफलान् वृक्षान् यथा तात पतत्त्रिणः।

अग्नौ प्रास्तं तु पुरुषं कर्म्मान्वेति स्वयं कृतं। तस्मात्तु पुरुषो यत्नाद्धर्म्मं सञ्चिनुयाच्छनैः। १५५०

अस्माल्लोकादूर्द्ध्वममुष्य चाधो महत्तमस्तिष्ठति ह्यन्धकारं। तद्वै महामोहनमिन्द्रियाणां बुध्यस्व मा त्वां प्रलभेत राजन्।

इदं वचः शक्ष्यसि चेद्यथावन्निशम्य सर्व्वं प्रतिपत्तुमेव। यशः परं प्राप्स्यसि जीवलोके भयं न चामुत्र न चेह तेऽस्ति।

आत्मा नदी भारत पुण्यतीर्था सत्योदका धृतिकूला दयोर्म्मिः। तस्यां स्नातः पूयते पुण्यकर्म्मा पुण्यो ह्यात्मा नित्यमलोभ एव।

कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीं। नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर।

प्रज्ञावृद्धं धर्म्मवृद्धं स्वबन्धुं विद्यावृद्धं वयसा चापि वृद्धं। कार्य्याकार्य्ये पूजयित्वा प्रसाद्य यः सम्पृच्छेन्न स मुह्येत्कदाचित्। १५५५

धृत्या शिश्नोदरं रक्षेत्पाणिपादञ्च चक्षुषा । चक्षुःश्रोत्रे च मनसा मनो वाचञ्च कर्म्मणा ।
नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायी पतितान्नवर्ज्जी । सत्यं ब्रुवन्गुरवे कर्म्म कुर्व्वन्ब्राह्मणश्च्यवते ब्रह्मलोकात् ।
अधीत्य वेदान्परिसंस्तीर्य्य चाग्नीनिष्ट्वा यज्ञैः पालयित्वा प्रजाश्च । गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा हतः सङ्ग्रामे क्षत्रियः

स्वर्गमेति ।

वैश्योऽधीत्य ब्राह्मणान् क्षत्रियांश्च धनैः काले संविभज्याश्रितांश्च । त्रेतापूतं धूममाघ्राय पुण्यं प्रेत्य स्वर्गे दिव्यसुखानि भुङ्क्ते ।
ब्रह्म क्षत्रं वैश्यवर्णञ्च शूद्रः क्रमेणैतान्न्यायतः पूजयानः । तुष्टेष्वेतेष्वव्यथो दग्धपापस्त्यक्त्वा देहं स्वर्गसुखानि भुङ्क्ते । १५६०
चातुर्व्वर्ण्यस्यैष धर्म्मस्तवोक्तो हेतुं चात्र ब्रुवतो मे निबोध । क्षात्राद्धर्म्माद्धीयते पाण्डुपुत्रस्तं त्वं राजन् राजधर्म्मे नियुङ्क्ष्व ।

॥ धृतराष्ट्र उवाच ॥ एवमेतद्यथा त्वं मामनुशाससि नित्यदा । ममापि च मतिः सौम्य भवत्येवं यथात्थ मां ।

सा तु बुद्धिः कृताऽप्येवं पाण्डवान् प्रति मे सदा । दुर्य्योधनं समासाद्य पुनर्व्विपरिवर्त्तते ।

न दिष्टमभ्यतिक्रान्तुं शक्यं भूतेन केनचित् । दिष्टमेव ध्रुवं मन्ये पौरुषन्तु निरर्थकं ।

इति श्रीमहाभारते उद्योगपर्व्वणि प्रजागरपर्व्वणि विदुरवाक्ये एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ समाप्तञ्च प्रजागरपर्व्व ॥

## ॥ अथ सनत्सुजातपर्व्व ॥

॥ धृतराष्ट्र उवाच ॥ अनुक्तं यदि ते किञ्चिद्वाचा विदुर विद्यते । तन्मे शुश्रूषतो ब्रूहि विचित्राणीह भाषसे । १५६५

॥ विदुर उवाच ॥ धृतराष्ट्र कुमारो वै यः पुराणः सनातनः । सनत्सुजातः प्रोवाच मृत्युर्नास्तीति भारत ।

स ते गुह्यान् प्रकाशांश्च सर्व्वान् हृदयसंश्रयान् । प्रवक्ष्यति महाराज सर्व्वबुद्धिमतां वरः ।

॥ धृतराष्ट्र उवाच ॥ किं त्वं न वेद तद्भूयो यन्मे ब्रूयात्सनातनः । त्वमेव विदुर ब्रूहि प्रज्ञाशेषोऽस्ति चेत्तव ।

॥ विदुर उवाच ॥ शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे । कुमारस्य तु या बुद्धिर्वेद तां शाश्वतीमहं ।

ब्राह्मीं हि योनिमापन्नः सुगुह्यमपि यो वदेत् । न तेन गर्ह्यो देवानां तस्मादेतद्ब्रवीमि ते । १५७०

॥ धृतराष्ट्र उवाच ॥ ब्रवीहि विदुर त्वं मे पुराणं तं सनातनं । कथमेतेन देहेन स्यादिहैव समागमः ।

॥ वैशम्पायन उवाच ॥ चिन्तयामास विदुरस्तमृषिं शंसितव्रतं । स च तच्चिन्तितं ज्ञात्वा दर्शयामास भारत ।

स चैनं प्रतिजग्राह विधिदृष्टेन कर्म्मणा । सुखोपविष्टं विश्रान्तमथैनं विदुरोऽब्रवीत् ।

भगवन् संशयः कश्चिद्धृतराष्ट्रस्य मानसः । यो न शक्यो मया वक्तुं त्वमस्मै वक्तुमर्हसि ।

यं श्रुत्वाऽयं मनुष्येन्द्रः सर्व्वदुःखातिगो भवेत् । लाभालाभौ प्रियद्वेष्यौ यथैनं न जराऽन्तकौ । १५७५

विषहेरन् भयामर्षौ क्षुत्पिपासे मदोद्भवौ । अरतिश्चैव तन्द्रीश्च कामक्रोधौ क्षयोदयौ ।

इति महाभारते उद्योगपर्व्वणि सनत्सुजातपर्व्वणि विदुरप्रार्थने चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ वैशम्पायन उवाच ॥ ततो राजा धृतराष्ट्रो मनीषी संपूज्य वाक्यं विदुरेरितं तत् । सनत्सुजातं रहिते महात्मा पप्रच्छ

बुद्धिं परमां बुभूषन् ।

॥ धृतराष्ट्र उवाच ॥ सनत्सुजात यदिदं शृणोमि न मृत्युरस्तीति तव प्रवादं । देवासुरा ह्याचरन्ब्रह्मचर्य्यममृत्यवे तत्कत

रन्नु सत्यं ।

॥ सनत्सुजात उवाच॥ अपृच्छः कर्म्मणा यच्च मृत्युर्नास्तीति चापरं। शृणु मे ब्रुवतो राजन्यथैतन्मा विशङ्किथाः।
उभे सत्ये क्षत्रियैतस्य विद्धि मोहान्मृत्युः सम्मतोऽयं कवीनां। प्रमादं वै मृत्युमहं ब्रवीमि तथाऽप्रमादममृतत्वं ब्रवीमि।
प्रमादाद्वै असुराः पराभवन्नप्रमादाद्ब्रह्मभूता भवन्ति। न वै मृत्युर्व्याघ्र इवात्ति जन्तून्नह्यस्य रूपमुपलभ्यते हि। १५८०
यमं त्वेके मृत्युमतोऽन्यमाहुरात्मावसन्नममृतं ब्रह्मचर्य्यं। पितृलोके राज्यमनुशास्ति देवः शिवः शिवानामशिवोऽशिवानाम्।
अस्यादेशान्निःसरते नराणां क्रोधः प्रमादो लोभरूपश्च मृत्युः। अहंगतेनैव चरन् विमार्गान्नचात्मनोयोगमुपैति कश्चित्।
ते मोहितास्तद्वशे वर्त्तमाना इतः प्रेतास्तत्र पुनः पतन्ति। ततस्तान्देवा अनुविप्लवन्ते अतो मृत्युर्मरणाख्यामुपैति।
कर्म्मोदये कर्म्मफलानुरागास्ते तत्रानुयान्ति न तरन्ति मृत्युं। सदर्थयोगानवगमात्समन्तात्प्रवर्त्तते भोगयोगेन देही।
तद्वै महामोहनमिन्द्रियाणां मिथ्याऽर्थयोगेऽस्य गतिर्हि नित्या। मिथ्याऽर्थयोगाभिहतान्तरात्मा स्मरन्नुपास्ते विषयान्समन्तात्। १५८५

अभिध्या वै प्रथमं हन्ति लोकान् कामक्रोधावनुगृह्याशु पश्चात्। एते बालान्मृत्यवे प्रापयन्ति धीरास्तु धैर्य्येण तरन्ति मृत्युं।
सोऽभिध्यायन्नुत्पतितान्निहन्यादनादरेणाप्रतिबुध्यमानः। नैनं मृत्युर्मृत्युरिवात्तिभूत्वा एवं विद्वान् यो विनिहन्ति कामान्।

कामानुसारी पुरुषः कामाननु विनश्यति। कामान्व्युदस्य धुनुते यत्किञ्चित्पुरुषो रजः।

तमोऽप्रकाशो भूतानां नरकोऽयं प्रदृश्यते। मुह्यन्त इव धावन्ति गच्छन्तः श्वभ्रवत्सुखं।

अमूढवृत्तेः पुरुषस्येह कुर्य्यात्किं वै मृत्युस्तार्ण इवास्य व्याघ्रः। अमन्यमानः क्षत्रिय किञ्चिदन्यन्नाधीयीत निर्णुदन्निवास्य चायुः। १५९०

स क्रोधलोभौ मोहवानन्तरात्मा स वै मृत्युस्त्वच्छरीरे य एषः। एवं मृत्युं जायमानं विदित्वा ज्ञाने तिष्ठन्न बिभेतीह मृत्योः। विनश्यते विषये तस्य मृत्युर्मृत्योर्यथा विषयं प्राप्य मर्त्यः।

॥ धृतराष्ट्र उवाच॥ यानेवाहुरिज्यया साधुलोकान् द्विजातीनां पुण्यतमान्सनातनान्। तेषां परार्थं कथयन्तीह वेदा एतद्विद्वानुपैति कथं नु कर्म्म।

॥ सनत्सुजात उवाच ॥ एवं ह्यविद्वानुपयाति तत्र तथाऽर्थजातञ्च वदन्ति वेदाः। अनीह आयाति परं परात्मा प्रयाति मार्गेण निहत्य मार्गान्।

॥ धृतराष्ट्र उवाच॥ कोऽसौ नियुङ्क्ते तमजं पुराणं स चेदिदं सर्व्वमनुक्रमेण। किं वाऽस्य कार्य्यमथ वा सुखञ्च तन्मे विद्वन् ब्रूहि सर्व्वं यथावत्।

॥ सनत्सुजात उवाच॥ दोषो महानत्र विभेदयोगे ह्यनादियोगेन भवन्ति नित्याः। तथाऽस्य नाधिक्यमपैति किञ्चिदनादियोगेन भवन्ति पुंसः। १५९५

य एतद्वा भगवान्स नित्यो विकारयोगेन करोति विश्वं। तथाच तच्छक्तिरिति स्म मन्यते तथाऽर्थयोगेच भवन्ति वेदाः।

॥ धृतराष्ट्र उवाच॥ येऽस्मिन्धर्म्मान्नाचरन्तीह केचित्तथा धर्म्मान् केचिदिहाचरन्ति। धर्म्मः पापेन प्रतिहन्यते स्विदुताहो धर्म्मः प्रतिहन्ति पापं।

॥ सनत्सुजात उवाच॥ उभयमेव तत्रोपयुज्यते फलं धर्म्मस्यैवेतरस्य च।

तस्मिन्स्थितौ वाऽप्युभयं हि नित्यं ज्ञानेन विद्वान्प्रतिहन्ति सिद्धं। तथाऽन्यथा पुण्यमुपैति देही तथागतं पापमुपैति सिद्धं।

गतोभयं कर्म्मणा युज्यतेऽस्थिरं शुभस्य पापस्य च चापि कर्म्मणा। धर्म्मेण पापं प्रणुदतीह विद्वान्धर्म्मो बलीयानिति तस्य सिद्धिः। २१००

॥ धृतराष्ट्र उवाच ॥ यानिहाहुः स्वस्य धर्म्मस्य लोकान्द्विजातीनां पुण्यकृतां सनातनान्। तेषां क्रमान्कथय ततोऽपि चान्या नैतद्विद्वन्वेत्तुमिच्छामि कर्म्म।

॥ सनत्सुजात उवाच ॥ येषां व्रतेऽथ विस्पर्द्धा बले बलवतामिव। ते ब्राह्मणा इतः प्रेत्य ब्रह्मलोके प्रकाशकाः।

येषां धर्म्मे च विस्पर्द्धा तेषां तज्ज्ञानसाधनं। ते ब्राह्मणा इतो मुक्ताः स्वर्गं यान्ति त्रिविष्टपं।

तस्य सम्यक्समाचारमाहुर्व्वेदविदो जनाः। नैनं मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनं।

यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोलपं। अन्नं पानं ब्राह्मणस्य तज्जीवेन्नानुसंज्वरेत्। २१०५

यत्राकथयमानस्य प्रयच्छत्यशिवं भयं। अतिरिक्तमिवाकुर्व्वन् स श्रेयान्नेतरो जनः।

यो वा कथयमानस्य ह्यात्मानं नानुसंज्वरेत्। ब्रह्मस्वं नोपभुञ्जीत तदन्नं सम्मतं सतां।

यथा स्वं वान्तमश्नाति श्वा वै नित्यमभूतये। एवन्ते वान्तमश्नन्ति स्ववीर्य्यस्योपसेवनात्।

नित्यमज्ञातचर्य्या मे इति मन्येत ब्राह्मणः। ज्ञातीनां तु वसन्मध्ये तंविदुर्ब्राह्मणं बुधाः।

को ह्यनन्तरमात्मानं ब्राह्मणो हन्तुमर्हति। निर्लिङ्गमचलं शुद्धं सर्व्वद्वैतविवर्जितं। तस्माद्धि चक्षियस्यापि ब्रह्मावसति पश्यति। २११०

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणा।

अश्रान्तः स्यादनादाता सम्मतो निरुपद्रवः। शिष्टो न शिष्टवत्स स्यात् ब्राह्मणो ब्रह्मवित्कविः।

अनाढ्या मानुषे वित्ते आढ्या दैवे तथा क्रतौ। ते दुर्धर्षा दुष्प्रकम्प्यास्तान्विद्याद्ब्रह्मणस्तनुं।

सर्व्वान्स्विष्टकृतो देवान् विद्याद्य इह कश्चन। न समानो ब्राह्मणस्य तस्मिन्प्रयतते स्वयं।

यमप्रयतमानन्तु मानयन्ति स मानितः। न मान्यमानो मन्येत न मान्यमभिसंज्वरेत्। २११५

लोकः स्वभाववृत्तिर्हि निमेषोन्मेषवत्सदा। विद्वांसो मानयन्तीह इति मन्येत मानितः।

अधर्म्मनिपुणा मूढा लोके मायाविशारदाः। न मान्यं मानयिष्यन्ति मान्यानामवमानिनः।

नवै मानञ्च मौनञ्च सहितौ वसतः सदा। अयं हि लोको मानस्य असौ मौनस्य तद्विदः।

श्रीः सुखस्येह संवासः सा चापि परिपन्थिनी। ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय।

द्वाराणि तस्येह वदन्ति सन्तो बहुप्रकाराणि दुरावराणि। सत्यार्जवे ह्रीर्दमशौचविद्या यथान मोहप्रतिबन्धकानि। २१२०

इति श्रीमहाभारते उद्योगपर्व्वणि सनत्सुजातपर्व्वणि सनत्सुजातवाक्ये एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

॥ धृतराष्ट्र उवाच ॥ कस्यैष मौनः कतरन्नु मौनं प्रब्रूहि विद्वन्निह मौनभावं। मौनेन विद्वानुत याति मौनं कथं मुने मौनमिहाचरन्ति।

॥ सनत्सुजात उवाच ॥ यतो न वेदा मनसा सहैनमनुप्रविशन्ति ततोऽथ मौनं। यत्रोत्थितो वेदशब्दस्तथाऽयं स तन्मयत्वेन विभाति राजन्।

॥ धृतराष्ट्र उवाच ॥ ऋचो यजूंषि यो वेद सामवेदञ्च वेद यः। पापानि कुर्व्वन्पापेन लिप्यते किं न लिप्यते।

॥ सनत्सुजात उवाच ॥ नैनं सामान्यृचो वाऽपि न यजूंष्यविचक्षणं। त्रायन्ते कर्म्मणः पापान्न ते मिथ्या ब्रवीम्यहं।
न छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्त्तमानं। नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्त काले। १६२५

॥ धृतराष्ट्र उवाच ॥ नचेद्वेदा विना धर्म्मं त्रातुं शक्ता विचक्षण। अथ कस्मात्प्रलापोऽयं ब्राह्मणानां सनातनः।

॥ सनत्सुजात उवाच ॥ तस्यैव नामादिविशेषरूपैरिदं जगद्भाति महानुभाव। निर्द्दिश्य सम्यक्प्रवदन्ति वेदास्तद्विश्ववैरूप्यमुदाहरन्ति।

तदर्थमुक्तं तप एतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान्। पुण्येन पापं विनिहत्य पश्चात् संजायते ज्ञानविदीपितात्मा।
ज्ञानेन चात्मानमुपैति विद्वान् अथान्यथा वर्गफलानुकाङ्क्षी। अस्मिन् कृतं तत्परिगृह्य सर्व्वममुत्र भुङ्क्ते पुनरेति मार्गं।

अस्मिंल्लोके तपस्तप्तं फलमन्यत्र भुज्यते। ब्राह्मणानामिमे लोका धात्वे तपसि तिष्ठतां। १६३०

॥ धृतराष्ट्र उवाच ॥ कथं समृद्धमसमृद्धं तपो भवति केवलं। सनत्सुजात तद्ब्रूहि यथा विद्यामतद्वयं।

॥ सनत्सुजात उवाच ॥ निष्कल्मषं तपस्त्वेतत्केवलं परिचक्षते। एतत्समृद्धमप्यृद्धं तपो भवति केवलं।

तपोमूलमिदं सर्व्वं यन्मां पृच्छसि क्षत्रिय। तपसा वेदविद्वांसः परं त्वमृतमाप्नुयुः।

॥ धृतराष्ट्र उवाच ॥ कल्मषं तपसो ब्रूहि श्रुतं निष्कल्मषं तपः। सनत्सुजात येनेदं विद्यां गुह्यं सनातनं।

॥ सनत्सुजात उवाच ॥ क्रोधादयो द्वादश यस्य दोषास्तथा नृशंसानि दशत्रि राजन्। धर्म्मादयो द्वादश ते पितॄणां शास्त्रे गुणा ये विदिता द्विजानां। १६३५

क्रोधः कामो लोभमोहौ विधित्साऽकृपासूये मानशोकौ स्पृहा च। ईर्ष्या जुगुप्सा च मनुष्यदोषा वर्ज्याः सदा द्वादशैते नराणां।

एकैकः पर्य्युपास्ते ह मनुष्यान्मनुजर्षभ। लिप्समानोऽन्तरं तेषां मृगाणामिव लुब्धकः।

विकत्थनः स्पृहयालुर्मनस्वी बिभ्रत्कोपं चपलोऽरक्षणश्च। एतान् पापाः षण्नराः पापधर्म्मान् प्रकुर्व्वते नोत्रसन्तः सुदुर्गे।

सम्भोगसम्विद्विषमोऽतिमानी दत्तानुतापी कृपणो बलीयान्। वर्गप्रशंसी वनितासु द्वेष्टा एते परे सप्त नृशंसवर्गाः।

धर्म्मश्च सत्यञ्च दमस्तपश्च अमात्सर्य्यं ह्रीस्तितिक्षाऽनसूया। यज्ञश्च दानञ्च धृतिः श्रुतञ्च व्रतानि वै द्वादश ब्राह्मणस्य। १६४०

यस्त्वेतेभ्यः प्रभवेत् द्वादशभ्यः सर्व्वामपीमां पृथिवीं स शिष्यात्। त्रिभिर्द्वाभ्यामेकतो वाऽर्थितो यस्तस्य स्वमस्तीति स वेदितव्यः।

दमस्त्यागोऽप्रमादश्च एतेष्वमृतमाहितं। तानि सत्यमुखान्याहुर्ब्राह्मणा ये मनीषिणः।

दमो ह्यष्टादशगुणः प्रतिकूलं कृताकृते। अनृतं चाभ्यसूया च कामार्थौ च तथा स्पृहा।

क्रोधः शोकस्तथा तृष्णा लोभः पैशुन्यमेव च। मत्सरश्च विहिंसा च परितापस्तथाऽरतिः।

अपस्मारश्चातिवादस्तथा सम्भावनात्मनि। एतैर्व्विमुक्तो दोषैर्यः स दान्तः सद्भिरुच्यते। १६४५

मदोऽष्टादशदोषः स्यात्त्यागो भवति षड्विधः। विपर्य्ययाः स्मृता एते मददोषा उदाहृताः।

श्रेयांस्तु षड्विधस्त्यागस्तृतीयो दुष्करो भवेत्। तेन दुःखं तरत्येव भिन्नं तस्मिन् जितं कृते।

श्रेयांस्तु षड्विधस्त्यागः श्रियं प्राप्य न हृष्यति। इष्टापूर्त्ते द्वितीयं स्यान्नित्यं वैराग्ययोगतः।

कामत्यागश्च राजेन्द्र स तृतीय इति स्मृतः। अप्यवाच्यं वदन्त्येनं स तृतीयो गुणः स्मृतः।

त्यक्तैर्द्रव्यैर्यद्भवति नोपयुञ्जीत कामतः । न च कर्म्मसु सिद्धेषु दुःखं तेन च न ग्लपेत् । १६५०
सर्व्वैरेव गुणैर्युक्तो द्रव्यवानपि यो भवेत् । अप्रिये च समुत्पन्ने व्यथां जातु न गच्छति ।
इष्टान् पुत्रांश्च दारांश्च न याचेत कदाचन । अर्हते याचमानाय प्रदेयं तच्छुभं भवेत् ।
अप्रमादी भवेदेतैः स चाप्यष्टगुणो भवेत् । सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च ।
अस्तेयं ब्रह्मचर्य्यञ्च तथाऽसंग्रह एव च । एवं दोषा मदस्योक्तास्तान्दोषान् परिवर्जयेत् ।
तथा त्यागोऽप्रमादश्च सचाप्यष्टगुणो मतः । अष्टौ दोषाः प्रमादस्य तान्दोषान् परिवर्जयेत् । १६५५
इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत । अतीतानागतेभ्यश्च मुक्तश्चेत् सुखी भवेत् ।
सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः । तांस्तु सत्यमुखानाहुः सत्ये ह्यमृतमाहितं ।
निवृत्तेनैव दोषेण तपोव्रतमिहाचरेत् । एतद्धात्रा कृतं वृत्तं सत्यमेव सतां व्रतं ।
दोषैरेतैर्व्वियुक्तस्तु गुणैरेतैः समन्वितः । एतत्समृद्धमत्यर्थं तपो भवति केवलं ।
यन्मां पृच्छसि राजेन्द्र सङ्क्षेपात्प्रब्रवीमि ते । एतत्पापहरं पुण्यं जन्ममृत्युजरापहं । १६६०
॥ धृतराष्ट्र उवाच ॥ आख्यानपञ्चमैर्व्वेदैर्भूयिष्ठं कथ्यते जनः । तथा चान्ये चतुर्व्वेदास्त्रिवेदाश्च तथा परे ।
द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथा परे । तेषान्तु कतरः स स्याद्यमहं वेद वै द्विजं ।
॥ सनत्सुजात उवाच ॥ एकस्य वेदस्याज्ञानाद्वेदास्ते बहवः कृताः । सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः ।
एवं वेदमविज्ञाय प्राज्ञोऽहमिति मन्यते । दानमध्ययनं यज्ञो लोभादेतत् प्रवर्त्तते ।
सत्यात्प्रच्यवमानानां सङ्कल्पश्च तथा भवेत् । ततो यज्ञः प्रतायेत सत्यस्यैवावधारणात् । १६६५
मनसाऽन्यस्य भवति वाचाऽन्यस्याथ कर्म्मणा । सङ्कल्पसिद्धः पुरुषः सङ्कल्पानधितिष्ठति ।
अनैभृत्येन वै तस्य दीक्षितव्रतमाचरेत् । नामैतद्धातुनिर्वृत्तं सत्यमेव सतां परं ।
ज्ञानं वै नाम प्रत्यक्षं परोक्षं जायते तपः । विद्याद्बहुपठन्तन्तु द्विजं वै बहुपाठिनं ।
तस्मात्क्षत्रिय मामंस्था जल्पितेनैव वै द्विजं । य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ।

छन्दांसि नाम क्षत्रिय तान्यथर्व्वा पुरा जगौ महर्षिसङ्घ एषः । छन्दोविदस्ते य उतानधीतवेदा न वेदवेद्यस्य विदुर्हि तत्त्वं । १६७०

छन्दांसि नाम द्विपदां वरिष्ठ स्वच्छन्दयोगेन भवन्ति तत्र । छन्दोविदस्तेन च तानधीत्य गता न वेदस्य नवेद्यमार्य्याः ।

न वेदानां वेदिता कश्चिदस्ति कश्चित्त्वेतान् बुध्यते वापि राजन् । यो वेद वेदान्न स वेद वेद्यं सत्ये स्थितो यस्तु स वेद वेद्यं ।

न वेदानां वेदिता कश्चिदस्ति वेद्येन वेदं न विदुर्न वेद्यं । यो वेद वेदं स च वेद वेद्यं यो वेद वेद्यं न स वेद सत्यं ।

यो वेद वेदान्स च वेद वेद्यं न तं विदुर्व्वेदविदो न वेदाः । तथाऽपि वेदेन विदन्ति वेदं ये ब्राह्मणा वेदविदो भवन्ति ।

धामांशभागस्य तथाहि वेदा यथा च शाखा हि महीरुहस्य । संवेदने चैव यथामनन्ति तस्मिन्हि सत्ये परमात्मनोऽर्थे । १६७५

अभिजानामि ब्राह्मणं व्याख्यातारं विचक्षणं । यश्छिन्नविचिकित्सः स व्याचष्टे सर्व्वसंशयान् ।
नास्य पर्य्येषणं गच्छेत्प्राचीनं नोत दक्षिणं । नार्व्वाचीनं कुतस्तिर्य्यङ्नादिशन्तु कथञ्चन ।

तस्य पर्य्येषणं गच्छेत् प्रत्यर्थिषु कथञ्चन । अविचिन्वन्निमं वेदे तपः पश्यति तं प्रभुं ।
तूष्णीम्भूत उपासीत न चेष्टेन्मनसापि च । अभ्यावर्त्तत तद्ब्रह्म चान्तरात्मनि विश्रुतं ।
मौनाद्धि स मुनिर्भवति नारण्यवसनान्मुनिः । अक्षरं तत्तु यो वेद स मुनिः श्रेष्ठ उच्यते ।     १६८०
सर्व्वार्थानां व्याकरणाद्वैयाकरण उच्यते । तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा ।
प्रत्यक्षदर्शी लोकानां सर्व्वदर्शी भवेन्नरः । सत्ये वै ब्राह्मणस्तिष्ठन् तद्विद्वान् सर्व्ववित् भवेत् ।
धर्म्मादिषु स्थितोऽप्येवं क्षत्रिय ब्रह्म पश्यति । वेदेषु चानुपूर्व्व्येण एतद्बुद्ध्या ब्रवीमि ते ।
इति श्रीमहाभारते उद्योगपर्व्वणि सनत्सुजातपर्व्वणि सनत्सुजातवाक्ये द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

॥ धृतराष्ट्र उवाच ॥ सनत्सुजात यामिमां परां त्वं ब्राह्मीं वाचं वदसे विश्वरूपां । परां हि कामेन सुदुर्लभां कथां तद्ब्रूहि मे वाक्यमेतत्कुमार ।

॥ सनत्सुजात उवाच ॥ नैतद्ब्रह्म त्वरमाणेन लभ्यं यन्मां पृच्छस्यतिहृष्यसीव । बुद्धौ विलीने मनसि प्रचिन्त्या विद्या हि सा ब्रह्मचर्य्येण लभ्या ।     १६८५

॥ धृतराष्ट्र उवाच ॥ अत्यन्तविद्यामिति यत्सनातनीं ब्रवीषि त्वं ब्रह्मचर्य्येण सिद्धां । अनारभ्यां वसतीह कार्य्यकाले कथं ब्राह्मण्यममृतत्वं लभेत ।

॥ सनत्सुजात उवाच ॥ अव्यक्तविद्यामभिधास्ये पुराणीं बुद्ध्या च तेषां ब्रह्मचर्य्येण सिद्धां । यां प्राप्यैनं मर्त्यलोकं त्यजन्ति या वै विद्या गुरुवृद्धेषु नित्या ।

॥ धृतराष्ट्र उवाच ॥ ब्रह्मचर्य्येण या विद्या शक्या वेदितुमञ्जसा । तत्कथं ब्रह्मचर्य्यं स्यादेतद्ब्रह्मन्ब्रवीहि मे ।

॥ सनत्सुजात उवाच ॥ आचार्य्ययोनिमिह ये प्रविश्य भूत्वा गर्भं ब्रह्मचर्य्यं चरन्ति । इहैव ते शास्त्रकारा भवन्ति प्रहाय देहं परमं यान्ति योगं ॥

अस्मिँल्लोके वै जयन्तीह कामान्ब्राह्मीं स्थितिं ह्यनुतितिक्षमाणाः । त आत्मानं निर्हरन्तीह देहान्मुञ्जादिषीकामिव सत्त्वसंस्थाः ।     १६९०

शरीरमेतौ कुरुतः पिता माता च भारत । आचार्य्यशास्ता या जातिः सा पुण्या साऽजराऽमरा ।
यः प्रावृणोत्यवितथेन वर्णानृतं कुर्व्वन्नमृतं संप्रयच्छन् । तं मन्येत पितरं मातरञ्च तस्मै न द्रुह्येत्कृतमस्य जानन् ।
गुरुं शिष्यो नित्यमभिवादयीत स्वाध्यायमिच्छेच्छुचिरप्रमत्तः । मानं न कुर्य्यान्नादधीत रोषमेष प्रथमो ब्रह्मचर्य्यस्य पादः ।
शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः । ब्रह्मचर्य्यव्रतस्यास्य प्रथमः पाद उच्यते ।
आचार्य्यस्य प्रियं कुर्य्यात्प्राणैरपि धनैरपि । कर्म्मणा मनसा वाचा द्वितीयः पाद उच्यते ।     १६९५
समा गुरौ यथा वृत्तिर्गुरुपत्न्यां तथाचरेत् । तत्पुत्रे च तथा कुर्व्वन्द्वितीयः पाद उच्यते ।
आचार्य्येणात्मकृतं विजानन् ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन । यन्मन्यते तं प्रति हृष्टबुद्धिः स वै तृतीयो ब्रह्मचर्य्यस्य पादः ।
नाचार्य्यस्यानपाकृत्य प्रवासं प्राज्ञः कुर्व्वीत नैतदहं करोमि । इतीव मन्येत न भाषयेत स वै चतुर्थो ब्रह्मचर्य्यस्य पादः ।
कालेन पादं लभते तथाऽर्थं ततश्च पादं गुरुयोगतश्च । उत्साहयोगेन च पादमृच्छेत् शास्त्रेण पादञ्च ततोऽभियाति ।
धर्म्मादयो द्वादश यस्य रूपमन्यानि चाङ्गानि तथा बलञ्च । आचार्य्ययोगे फलतीति चाहुर्ब्रह्मार्थयोगेन च ब्रह्मचर्य्यं ।     १७००

एवं प्रवृत्तो यदुपालभेत वै धनमाचार्य्याय तदनुप्रयच्छेत् । स तां वृत्तिं बहुगुणामेवमेति गुरोः पुत्रे भवति च वृत्तिरेषा ।
एवं वसन्सर्व्वतो वर्द्धतीह बहून् पुत्राल्लभते च प्रतिष्ठां । वर्षन्ति चास्मै प्रदिशो दिशश्च वसन्त्यस्मिन् ब्रह्मचर्य्ये जनाश्च ।

एतेन ब्रह्मचर्य्येण देवा देवत्वमाप्नुवन् । ऋषयश्च महाभागा ब्रह्मलोकं मनीषिणः ।
गन्धर्व्वाणामनेनैव रूपमप्सरसामभूत् । एतेन ब्रह्मचर्य्येण सूर्य्योऽप्यह्नाय जायते ।
आकाङ्क्ष्यार्थस्य संयोगाद्रसभेदार्थिनामिव । एवं ह्येते समाज्ञाय तादृग्भावं गता इमे । १००५

य आश्रयेत्पावयेच्चापि राजन्सर्व्वं शरीरं तपसा तप्यमानः । एतेन वै बाल्यमभ्येति विद्वान् मृत्युं तथा स जयत्यन्तकाले ।
अन्तवतः क्षयिण ते जयन्ति लोकाञ्जनाः कर्म्मणा निर्म्मलेन । ब्रह्मैव विद्वांस्तेन चाभ्येति सर्व्वं नान्यः पन्था अयनाय विद्यते ।
॥ धृतराष्ट्र उवाच ॥ आभाति शुक्लमिव लोहितमिवाथो कृष्णमथाञ्जनं काद्रवं वा । सद्ब्राह्मणः पश्यति योऽत्र विद्वान्कथं
रूपं तदमृतमक्षरं पदं ।
॥ सनत्सुजात उवाच ॥ आभाति शुक्लमिव लोहितमिवाथो कृष्णमायसमर्कवर्णं । न पृथिव्यां तिष्ठति नान्तरिक्षे नैतत् समुद्रे
सलिलं बिभर्त्ति ।
न तारकासु नच विद्युदाश्रितं नचाभ्रेषु दृश्यते रूपमस्य । नचापि वायौ नच देवतासु नैतच्चन्द्रे दृश्यते नोत सूर्य्ये । १०१०
नैवर्क्षु तन्नयजुःषु नाप्यथर्व्वसु न दृश्यते वै विमलेषु सामसु । रथन्तरे वार्हद्रथे वाऽपि राजन्महाव्रते नैव दृश्येद्ध्रुवं तत् ।
अपारणीयं तमसः परस्तात्तदन्तकोऽप्येति विनाशकाले । अणीयोरूपं क्षुरधारया समं महच्च रूपं तद्वै पर्व्वतेभ्यः ।
सा प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः । भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र हि ।
अनामयं तन्महदुद्यतं यशो वाचो विकारं कवयो वदन्ति । यस्मिन्जगत्सर्वमिदं प्रतिष्ठितं ये तद्विदुरमृतास्ते भवन्ति ।

इति श्रीमहाभारते उद्योगपर्व्वणि सनत्सुजातपर्व्वणि सनत्सुजातवाक्ये त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

॥ सनत्सुजात उवाच ॥ शोकः क्रोधश्च लोभश्च कामो मानः परासुता । ईर्ष्या मोहो विधित्सा च कृपाऽसूया जुगुप्सता । १०१५
द्वादशैते महादोषा मनुष्यप्राणनाशनाः ।

एकैकमेते राजेन्द्र मनुष्यान्पर्य्युपासते । यैराविष्टो नरः पापं मूढसंज्ञो व्यवस्यति ।

स्पृहयालुरुग्रः परुषो वदान्यः क्रोधं बिभ्रन्मनसा वै विकत्थी । नृशंसधर्म्माः षडिमे जना वै प्राप्याप्यर्थं नोत सभाजयन्ते ।
सम्भोगसंविद्विषमोऽतिमानी दत्त्वा विकत्थी कृपणो दुर्ब्बलश्च । बहुप्रशंसी वनिताद्विट् सदैव सप्तैवोक्ताः पापशीला नृशंसाः ।
धर्म्मश्च सत्यञ्च तपो दमश्च अमात्सर्य्यं ह्रीस्तितिक्षाऽनसूया । दानं श्रुतञ्चैव धृतिः क्षमा च महाव्रता द्वादश ब्राह्मणस्य । १०२०
यो नैतेभ्यः प्रच्यवेद्द्वादशभ्यः सर्व्वामपीमां पृथिवीं स शिष्यात् । त्रिभिर्द्वाभ्यामेकतो वार्थितो यो नास्य स्वमस्तीति च वेदितव्यं ।

दमस्त्यागोऽथाप्रमाद इत्येतेष्वमृतं स्थितं । एतानि ब्रह्ममुख्यानां ब्राह्मणानां मनीषिणां ।
सद्वाऽसद्वा परीवादो ब्राह्मणस्य न शस्यते । नरकप्रतिष्ठास्ते स्युर्य एवं कुर्व्वते जनाः ।
मदोऽष्टादशदोषः स स्यात्पुरा योऽप्रकीर्त्तितः । लोकद्वेष्यं प्रातिकूल्यमभ्यसूया मृषावचः ।
कामक्रोधौ पारतन्त्र्यं परिवादोऽथ पैशुनं । अर्थहानिर्व्विवादश्च मात्सर्य्यं प्राणिपीडनं । १०२५
ईर्ष्या मोदो ऽतिवादश्च संज्ञानाशोऽभ्यसूयिता । तस्मात्प्राज्ञो न माद्येत सदा ह्येतद्विगर्हितं ।

सौहृदे वै षड्गुणा वेदितव्याः प्रिये हृष्यन्त्यप्रिये च व्यथन्ते । स्यादात्मनः सुचिरं याचते यो ददात्ययाच्यमपि देयं खलु स्यात् ।

इष्टान्पुत्त्रान्विभवान् स्वांश्च दारानभ्यर्थितश्चार्हति शुद्धभावः । त्यक्तद्रव्यः संवसेन्नेह कामात् भुङ्क्ते कर्म स्वाश्रिषम्बाधते च ।

द्रव्यवान् गुणवानेवं त्यागी भवति सात्त्विकः । पञ्चभूतानि पञ्चभ्यो निवर्त्तयति तादृशः ।

एतत्समृद्धमप्यूर्द्ध्वं तपो भवति केवलं । सत्त्वात्प्रच्यवमानानां सङ्कल्पेन समाहितम् ।　　१७२०

यतो यज्ञाः प्रवर्द्धन्ते सत्यस्यैवावरोधनात् । मनसाऽन्यस्य भवति वाचाऽन्यस्याथ कर्म्मणा ।

सङ्कल्पसिद्धं पुरुषमसङ्कल्पोऽधितिष्ठति । ब्राह्मणस्य विशेषेण किञ्चान्यदपि मे शृणु ।

अध्यापयेन्महदेतद्यशस्यं वाचो विकारान् कवयो वदन्ति । अस्मिन् योगे सर्व्वमिदं प्रतिष्ठितं ये तद्विदुरमृतास्ते भवन्ति ।

न कर्म्मणा सुकृतेनैव राजन्सत्यञ्जयेज्जुहुयाद्वा यजेद्वा । नैतेन बालोऽमृत्युमभ्येति राजन् रतिञ्चासौ न लभत्यन्तकाले ।

तूष्णीमेक उपासीत चेष्टेत मनसाऽपि न । तथा संस्तुतिनिन्दाभ्यां प्रीतिरोषौ विवर्ज्जयेत् ।　　१७२५

अत्रैव तिष्ठन् क्षत्त्रिय ब्रह्म विशति पश्यति । वेदेषु चानुपूर्व्येण एतद्विद्वन्ब्रवीमि ते ।

इतिश्री महाभारते उद्योगपर्व्वणि सनत्सुजातपर्व्वणि सनत्सुजातवाक्ये चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

॥ सनत्सुजात उवाच ॥ यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः । तद्वै देवा उपासते तस्मात्सूर्य्यो विराजते ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्द्धते । तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनं ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।　　१७३०

अपोऽथ अद्भ्यः सलिलस्य मध्ये उभौ देवौ शिश्रियातेऽन्तरिक्षे । अतन्द्रितः सवितुर्व्विवस्वानुभौ बिभर्त्ति पृथिवीं दिवञ्च ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

उभौ च देवौ पृथिवीं दिवं च दिशः शुक्रो भुवनं बिभर्त्ति । तस्माद्दिशः सरितश्च स्रवन्ति तस्मात्समुद्रा विहिता महान्तः ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

चक्रे रथस्य तिष्ठन्तोऽध्रुवस्याव्ययकर्म्मणः । केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि ।　　१७३५

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

न सादृश्ये तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनं । मनीषयाऽथो मनसा हृदा च य एनं विदुरमृतास्ते भवन्ति ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

द्वादशपूगां सरितं पिबन्तो देवरक्षितां । मध्वीक्षन्तश्च ते तस्याः सञ्चरन्तीह घोरां ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।　　१७४०

तदर्द्धमासं पिबति सञ्चित्य भ्रमरो मधु । ईशानः सर्व्वभूतेषु हविर्भूतमकल्पयत् ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

हिरण्यपर्णमश्वत्थमभिपत्य ह्यपक्षकाः । तत्र ते पक्षिणो भूत्वा प्रपतन्ति यथादिशं ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

पूर्णात्पूर्णान्युद्धरन्ति पूर्णात्पूर्णानि चक्रिरे । हरन्ति पूर्णात्पूर्णानि पूर्णमेवावशिष्यते ।　　१७४५

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

तस्माद्वै वायुरायातस्तस्मिंश्च प्रयतः सदा । तस्मादग्निश्च सोमश्च तस्मिंश्च प्राण आततः ।

सर्व्वमेव ततो विद्यात्तत्तद्वक्तुं न शक्नुमः ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः । आदित्यो गिरते चन्द्रमादित्यं गिरते परः । १७६०

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् । तञ्चेत्सततमूर्द्ध्वाय न मृत्युर्नामृतं भवेत् ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा लिङ्गस्य योगेन स याति नित्यं । तमीशमीड्यमनुकल्पमाद्यं पश्यन्ति मूढा न विराजमानं ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं । १७६५

असाधना वाप्यथ साधना वा समानमेतद्दृश्यते मानुषेषु । समानमेतदमृतस्येतरस्य मुक्तास्तत्र मध्व उत्सं समापुः ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

उभौ लोकौ विद्यया व्याप्य याति तदा हुतं चाहुतमग्निहोत्रं । मा ते ब्राह्मी लघुतामादधीत प्रज्ञानं स्यान्नाम धीरा लभन्ते ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

एवंरूपो महात्मा स पावकं पुरुषो गिरन् । यो वै तं पुरुषं वेद तस्येहार्थो न रिष्यते । १७७०

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

यः सहस्रं सहस्राणां पक्षान् सन्तत्य सम्पतेत् । मध्यमे मध्य आगच्छेदपि चेत्स्यान्मनोजवः ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

न दर्शने तिष्ठति रूपमस्य पश्यन्ति चैनं सुविशुद्धसत्त्वाः । हितो मनीषी मनसा न तप्यते ये प्रव्रजेयुरमृतास्ते भवन्ति ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं । १७७५

गूहन्ति सर्पा इव गह्वराणि स्वशिक्षया स्वेन वृत्तेन मर्त्याः । तेषु प्रमुह्यन्ति जना विमूढा यथाऽध्वानं मोहयन्ते भयाय ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

नाहं सदाऽसत्कृतः स्यां न मृत्युर्न चामृत्युरमृतं मे कुतः स्यात् । सत्यानृते सत्यसमानबन्धे सतश्च योनिरसतश्चैक एव ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

न साधुना नोत असाधुना वा समानमेतद्दृश्यते मानुषेषु । समानमेतदमृतस्य विद्यादेवं युक्तो मधु तद्वै परीप्सेत् । १७८०

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

नास्यातिवादा हृदयं तापयन्ति नानधीतं नाहुतमग्निहोत्रं । मनो ब्राह्मी लघुतामादधीत प्रज्ञानमस्मै नाम धीरा लभन्ते ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ।

एवं यः सर्व्वभूतेषु आत्मानमनुपश्यति । अन्यत्रान्यत्र युक्तेषु किं स शोचेत्ततः परं ।

यथोदपाने महति सर्व्वतः सम्प्लुतोदके । एवं सर्व्वेषु वेदेषु आत्मानमनुजानतः । १७८५

अङ्गुष्ठमात्रः पुरुषो महात्मा न दृश्यते ऽसौ हृदि सन्निविष्टः । अजश्चरो दिवारात्रमतन्द्रितश्च स तं मत्वा कविरास्ते प्रसन्नः ।

अहमेव स्मृतो माता पिता पुत्त्रोऽस्म्यहं पुनः। आत्माऽहमपि सर्व्वस्य यच्च नास्ति यदस्ति च।

पितामहोऽस्मि स्थविरः पिता पुत्त्रश्च भारत। ममैव यूयमात्मस्था न मे यूयं न वो ऽहं।

आत्मैव स्थानं मम जन्म चात्मा ओतप्रोतो ऽहमजरःप्रतिष्ठः। अजस्त्वाहो रात्रमतन्द्रितोऽहं मां विज्ञाय कविरास्ते प्रसन्नः।

अणोरणीयान् सुमनाः सर्व्वभूतेषु जाग्रति। पितरं सर्व्वभूतेषु पुष्करे निहितं विदुः। १७९०

इति श्रीमहाभारते उद्योगपर्व्वणि सनत्सुजातपर्व्वणि सनत्सुजातवाक्ये पञ्चचत्वारिंशोऽध्यायः॥४५॥ समाप्तञ्च सनत्सुजातपर्व्व।

## ॥ अथ यानसन्धिपर्व्व ॥

॥ वैशम्पायन उवाच ॥ एवं सनत्सुजातेन विदुरेण च धीमता। सार्द्धं कथयतो राज्ञः सा व्यतीयाय शर्व्वरी।

तस्यां रजन्यां व्युष्टायां राजानः सर्व्व एव ते। सभामाविविशुर्हृष्टाः सूतस्योपदिदृक्षया।

शुश्रूषमाणाः पार्थानां वाचो धर्म्मार्थसंहिताः। धृतराष्ट्रमुखाः सर्व्वे ययू राजसभां शुभां।

सुधावदातां विस्तीर्णां कनकाजिरभूषणां। चन्द्रप्रभां सुरुचिरां सिक्तां चन्दनवारिणा।

रुचिरैरासनैस्तीर्णां काञ्चनैर्दारवैरपि। अश्मसारमयैर्दान्तैः स्वास्तीर्णैः सोत्तरच्छदैः। १७९५

भीष्मो द्रोणः कृपः शल्यः कृतवर्म्मा जयद्रथः। अश्वत्थामा विकर्णश्च सोमदत्तश्च वाह्लिकः।

विदुरश्च महाप्राज्ञो युयुत्सुश्च महारथः। सर्व्वे च सहिताः शूराः पार्थिवा भरतर्षभ।

धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां शुभां। दुःशासनश्चित्रसेनः शकुनिश्चापि सौबलः।

दुर्म्मुखो दुःसहः कर्ण उलूकोऽथ विविंशतिः। कुरुराजं पुरस्कृत्य दुर्य्योधनममर्षणं।

विविशुस्तां सभां राजन् सुराः शक्रसदो यथा। आविशद्भिस्तदा राजन् शूरैः परिघबाहुभिः। १८००

शुशुभे सा सभा राजन् सिंहैरिव गिरेर्गुहा। ते प्रविश्य महेष्वासाः सभां सर्व्वे महौजसः।

आसनानि विचित्राणि भेजिरे सूर्य्यवर्च्चसः। आसनस्थेषु सर्व्वेषु तेषु राजसु भारत।

द्वाःस्थो निवेदयामास सूतपुत्त्रमुपस्थितं। अयं स रथ आयाति योऽयासीत्पाण्डवान्प्रति।

दूतो नस्तूर्णमायातः सैन्धवैः साधुवाहिभिः। उपयाय तु स क्षिप्रं रथात्प्रस्कन्द्य कुण्डली।

प्रविवेश सभां पूर्णां महीपालैर्म्महात्मभिः। १८०५

॥ सञ्जय उवाच ॥ प्राप्तोऽस्मि पाण्डवान् गत्वा तं विजानीत कौरवाः। यथावयः कुरून्सर्व्वान् प्रतिनन्दन्ति पाण्डवाः।

अभिवादयन्ति वृद्धांश्च वयस्यांश्च वयस्यवत्। यूनश्चाभ्यवदन् पार्थाः प्रतिपूज्य यथावयः।

यथाऽहं धृतराष्ट्रेण शिष्टः पूर्व्वमितो गतः। अब्रुवं पाण्डवान् गत्वा तन्निबोधत पार्थिवाः।

इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयप्रत्यागमने षट्चत्वारिंशोऽध्यायः॥ ४६ ॥

॥ धृतराष्ट्र उवाच ॥ पृच्छामि त्वां सञ्जय राजमध्ये किमब्रवीद्वाक्यमदीनसत्त्वः। धनञ्जयस्तात युधां प्रणेता दुरात्मनां जीवितच्छिन्महात्मा।

॥ सञ्जय उवाच ॥ दुर्य्योधनो वाचमिमां शृणोतु यदब्रवीदर्ज्जुनो योत्स्यमानः। युधिष्ठिरस्यानुमते महात्मा धनञ्जयः शृण्वत: केशवस्य। १८१०

अन्वक्तो बाहुवीर्य्यं विद्वान उपह्वरे वासुदेवस्य वीरः । अवोचन्मां योत्स्यमानः किरीटी मध्ये ब्रूया धार्त्तराष्ट्रं कुरूणां ।
संशृण्वतस्तस्य दुर्भाषिणो वै दुरात्मनः सूतपुत्त्रस्य सूत । यो योद्धुमाशंसति मां सदैव मन्दप्रज्ञः कालपक्वोऽतिमूढः ।
ये वै राजानः पाण्डवायोधनाय समानीताः शृण्वतां चापि तेषां । यथा समग्रं वचनं मयोक्तं सहामात्यं श्रावयेथा नृपं तत् ।
यथा नूनं देवराजस्य देवाः शुश्रूषन्ते वज्रहस्तस्य सर्व्वे । तथाऽशृण्वन् पाण्डवाः सृञ्जयाश्च किरीटिना वाचमुक्तां समर्थां ।
इत्यब्रवीदर्ज्जुनो योत्स्यमानो गाण्डीवधन्वा लोहितपद्मनेत्रः । न चेद्राज्यं मुञ्चति धार्त्तराष्ट्रो युधिष्ठिरस्याजमीढस्य
राज्ञः । १८८५
अस्ति नूनं कर्म्म कृतं पुरस्तादनिर्व्विष्टं पापकं धार्त्तराष्ट्रैः । येषां युद्धं भीमसेनार्ज्जुनाभ्यां तथाऽश्विभ्यां वासुदेवेन चैव ।
शैनेयेन ध्रुवमात्तायुधेन धृष्टद्युम्नेनाऽथ शिखण्डिना च । युधिष्ठिरेणेन्द्रकल्पेन चैव योऽपध्यानान्निर्द्दहेद्गां दिवञ्च ।
तैश्चेद्योद्धुं मन्यते धार्त्तराष्ट्रो निर्व्वृत्तोऽर्थः सकलः पाण्डवानां । मा तत्कार्षीः पाण्डवस्यार्थहेतोरुपेहि युद्धं यदि मन्यसे त्वं ।
यां तां वने दुःखशय्यामवात्सीत्प्रव्राजितः पाण्डवो धर्म्मचारी । आप्नोतु तां दुःखतरामनर्थामन्त्यां शय्यां धार्त्तराष्ट्रः परासुः ।
ह्रिया ज्ञानेन तपसा दमेन शौर्य्येणाथो धर्म्मगुप्त्या बलेन । अन्यायवृत्तिः कुरु पाण्डवेयानध्यातिष्ठद्धार्त्तराष्ट्रो दुरात्मा । १८९०
मायोपधः प्रणिपातार्ज्जवाभ्यां तपोदमाभ्यां धर्म्मगुप्त्या बलेन । सत्यं ब्रुवन्प्रतिपन्नो नृपो नस्तितिक्षमाणः क्लिश्यमानोऽतिवेलं ।
यदा ज्येष्ठः पाण्डवः संशितात्मा क्रोधं यत्तं वर्षपूगान्सुघोरं । अवस्रष्टा कुरुषूद्वृत्तचेतास्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ।
कृष्णवर्त्मेव ज्वलितः समिद्धो यथा दहेत्कक्षमग्निर्निदाघे । एवं दग्धा धार्त्तराष्ट्रस्य सेनां युधिष्ठिरः क्रोधदीप्तोऽन्ववेक्ष्य ।
यदा द्रष्टा भीमसेनं रथस्थं गदाहस्तं क्रोधविषं वमन्तं । अमर्षणं पाण्डवं भीमवेगं तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ।
सेनाऽग्रगं दंशितं भीमसेनं स्वालक्षणं वीरहणं परेषां । घ्नन्तं चमूमन्तकसन्निकाशं तदा स्मर्त्ता वचनस्याभिमानी । १८९५
यदा द्रष्टा भीमसेनेन नागान् निपातितान् गिरिकूटप्रकाशान् । कुम्भैरिवासृग्वमतो भिन्नकुम्भांस्तदा युद्धं धार्त्तराष्ट्रोऽन्वत
प्स्यत् ।
महासिंहो गाव इव प्रविश्य गदापाणिर्धार्त्तराष्ट्रानुपेत्य । यदा भीमो भीमरूपो निहन्ता तदा युद्धं धार्त्तराष्ट्रोऽन्व
तप्स्यत् ।
महाभये वीतभयः कृतास्त्रः समागमे शत्रुबलावमर्द्दी । सकृद्रथेनाप्रतिमान् रथौघान् पदातिसङ्घान् गदयाऽभिनिघ्नन् ।
शैक्येन नागांस्तरसा विमृद्नन् यदा चेत्ता धार्त्तराष्ट्रस्य सैन्यं । छिन्दन्वनं परशुनेव शूरस्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ।
तृणप्रायं ज्वलनेनेव दग्धं ग्रामं यथा धार्त्तराष्ट्रान्समीक्ष्य । पक्वं सस्यं वैद्युतेनेव दग्धं परासिक्तं विपुलं स्वम्बलौघं । १९००
हतप्रवीरं विमुखं भयार्त्तं पराङ्मुखं प्रायशो धृष्टयोधं । शस्त्रार्च्चिषा भीमसेनेन दग्धं तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ।
उपासङ्गेनाचरन् दक्षिणेन परं शतान्नकुलश्चित्रयोधी । यदा रथाग्र्यो रथिनः प्रचेता तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ।
सुखोचितो दुःखशय्यां वनेषु दीर्घकालं नकुलो यामशेत । आशीविषः क्रुद्ध इवोद्वमन् विषं तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ।
त्यक्तात्मानः पार्थिवायोधनाय समादिष्टा धर्म्मराजेन सूत । रथैः शुभ्रैः सैन्यमभिद्रवन्तो दृष्ट्वा पश्चात्तप्स्यते धार्त्तराष्ट्रः ।
शिशून् कृतास्त्रानशिशुप्रकाशान् यदा द्रष्टा कौरवः पञ्च शूरान् । त्यक्त्वा प्राणान् कौरवानाद्रवन्तस्तदा युद्धं धार्त्तराष्ट्रो
ऽन्वतप्स्यत् । १९०५
यदा गतोद्वाहमकूजनाक्षं सुवर्णतारं रथमाततायी । दान्तैर्युक्तं सहदेवोऽधिरूढः शिरांसि राज्ञां क्षेप्स्यते मार्गणौघैः ।

महाभये सम्प्रवृत्ते रथस्थं विवर्त्तमानं समरे कृतास्त्रं। सर्व्वा दिशः सम्पतन्तं समीक्ष्य तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत्।
ह्रीनिषेवो निपुणः सत्यवादी महाबलः सर्व्वधर्म्मोपपन्नः। गान्धारिमार्च्छंस्तुमुले क्षिप्रकारी क्षेप्ता जनान् सहदेवस्तरस्वी।
यदा द्रष्टा द्रौपदेयान्महेषून् शूरान् कृतास्त्रान् रथयुद्धकोविदान्। आशीविषान् घोरविषानिवायतस्तदा युद्धं धार्त्तराष्ट्रो
ऽन्वतप्स्यत्।
यदाऽभिमन्युः परवीरघाती शरैः परान्मेघ इवाभिवर्षन्। विगाहिता कृष्णसमः कृतास्त्रस्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत्। १८४०
यदा द्रष्टा बालमबालवीर्य्यं द्विषच्चमूं मृत्युमिवापतन्तं। सौभद्रमिन्द्रप्रतिमं कृतास्त्रं तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत्।
प्रभद्रकाः शीघ्रतरा युवानो विशारदाः सिंहसमानवीर्य्याः। यदा क्षेप्तारो धार्त्तराष्ट्रान्ससैन्यांस्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत्।
वृद्धौ विराटद्रुपदौ महारथौ पृथक् चमूभ्यामभिवर्त्तमानौ। यदा द्रष्टारौ धार्त्तराष्ट्रान् ससैन्यांस्तदा युद्धं धार्त्तराष्ट्रोऽन्व
तप्स्यत्।
यदा कृतास्त्रो द्रुपदः प्रचिन्वन् शिरांसि यूनां समरे रथस्थः। क्रुद्धः शरैश्छेत्स्यति चापमुक्तैस्तदा युद्धं धार्त्तराष्ट्रोऽन्वत
प्स्यत्।
यदा विराटः परवीरघाती सहोत्तरः शत्रुचमूं प्रवेष्टा। मत्स्यैः सार्द्धमनृशंसरूपैस्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत्। १८४५
ज्येष्ठं मात्स्यमनृशंसार्य्यरूपं विराटपुत्रं रथिनं पुरस्तात्। यदा द्रष्टा दंशितं पाण्डवार्थे तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत्।
रणे हते कौरवाणां प्रवीरे शिखण्डिना सत्तमे शान्तनूजे। न जातु नः शत्रवो धारयेयुरसंशयं सत्यमेतद्ब्रवीमि।
यदा शिखण्डी रथिनः प्रचिन्वन् भीष्मं रथेनाभियाता वरूथी। दिव्यैर्हयैरवमृद्नन् रथौघांस्तदा युद्धं धार्त्तराष्ट्रोऽन्वत
प्स्यत्।
यदा द्रष्टा सृञ्जयानामनीके धृष्टद्युम्नं प्रमुखे रोचमानं। अस्त्रं यस्मै गुह्यमुवाच धीमान् द्रोणस्तदा तप्स्यति धार्त्तराष्ट्रः।
यदा स सेनापतिरप्रमेयः पराभवन्निषुभिर्धार्त्तराष्ट्रान्। द्रोणं रणे शत्रुसहोऽभियाता तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत्। १८५०
धीमान्मनीषी बलवान्मनस्वी स लक्ष्मीवान् सोमकानां प्रबर्हः। न जातु तं शत्रवोऽन्ये सहेरन् येषां स स्यादग्रणीर्वृष्णिसिंहः।
इदञ्च ब्रूया मावृणीष्वेति लोके युद्धे द्वितीयं सचिवं रथस्थं। शिनेर्नप्तारं प्रवृणीम सात्यकिं महाबलं वीतभयं कृतास्त्रं।
महोरस्को दीर्घबाहुः प्रमाथी युद्धेऽद्वितीयः परमास्त्रवेदी। शिनेर्नप्ता तालमात्रायुधोऽयं महारथो वीतभयः कृतास्त्रः।
यदा शिनीनामधिपो मयोक्तः शरैः परान्मेघ इव प्रवर्षन्। प्रच्छादयिष्यत्यरिहा योधमुख्यांस्तदा युद्धं धार्त्तराष्ट्रोऽन्व
तप्स्यत्।
यदा धृतिं कुरुते योत्स्यमानः स दीर्घबाहुर्दृढधन्वा महात्मा। सिंहस्येव गन्धमाघ्राय गावः संवेष्टन्ते शत्रवोऽस्माद्रणाग्रे। १८५५
स दीर्घबाहुर्दृढधन्वा महात्मा भिन्द्याद्गिरीन् संहरेत्सर्व्वलोकान्। अस्त्रे कृती निपुणः क्षिप्रहस्तो दिविस्थितः सूर्य्य इवा
भिभाति।
चित्रः सूक्ष्मः सुकृतो यादवस्य अस्त्रे योगो वृष्णिसिंहस्य भूयान्। यथाविधं योगमाहुः प्रशस्तं सर्व्वैर्गुणैः सात्यकिस्तै
रुपेतः।
हिरण्मयं श्वेतहयैश्चतुर्भिर्यदा युक्तं स्यन्दनं माधवस्य। द्रष्टा युद्धे सात्यकेर्धार्त्तराष्ट्रस्तदा तप्स्यत्यकृतात्मा स मन्दः।
यदा रथं हेममणिप्रकाशं श्वेताश्वयुक्तं वानरकेतुमुग्रं। द्रष्टा ममायास्थितं केशवेन तदा तप्स्यत्यकृतात्मा स मन्दः।

यदा मौर्व्यास्तलनिष्पेषमुग्रं महाशब्दं वज्रनिष्पेषतुल्यं । विधूयमानस्य महारणे मया स गाण्डीवस्य श्रोष्यति मन्दबुद्धिः ॥ १८६१

तदा मूढो धृतराष्ट्रस्य पुत्रस्तप्ता युद्धे दुर्मतिर्दुःसहायः । दृष्ट्वा सैन्यं बाणवर्षान्धकारे प्रभज्यन्तं गोकुलवद्रणाग्रे ।

बलाहकादुच्चरतः सुभीमान् विद्युत्स्फुलिङ्गानिव घोररूपान् । सहस्रघ्नान् द्विषतां सङ्गरेषु अस्थिच्छिदो मर्म्मभिदः सुपुङ्खान् ।

यदा द्रष्टा ज्यामुखाद्बाणसङ्घान् गाण्डीवमुक्तानापततः शिताग्रान् । हयान् गजान्वर्म्मिणश्चाददानांस्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ।

यदा मन्दः परबाणान्विमुक्तान्ममेषुभिर्ह्रियमाणान् प्रतीपान् । तिर्य्यग्विध्य च्छिद्यमानान् पृषत्कैस्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ।

यदा विपाठा मद्भुजविप्रमुक्ता द्विजाः फलानीव महीरुहाग्रात् । प्रचेतार उत्तमाङ्गानि यूनां तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् । १८६५

यदा द्रष्टा पततः स्यन्दनेभ्यो महागजेभ्योऽश्वगतान् सुयोधान् । शरैर्हतान् पातितांश्चैव रङ्गे तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ।

असम्प्राप्तानस्त्रपथं परस्य यदा द्रष्टा नश्यतो धार्त्तराष्ट्रान् । अकुर्वतः कर्म्म युद्धं समन्तात्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ।

पदातिसङ्घान् रथसङ्घान् समन्ताद्व्यात्ताननः काल इवाततेषुः । प्रणोत्स्यामि ज्वलितैर्बाणवर्षैः शत्रूंस्तदा तप्स्यति मन्दबुद्धिः ।

सर्व्वा दिशः सम्पतता रथेन रजोध्वस्तं गाण्डीवेन प्रकृत्तं । यदा द्रष्टा स्वबलं सम्प्रमूढं तदा पश्चात्तप्स्यति मन्दबुद्धिः ।

कान्दिग्भूतं छिन्नगात्रं विसंज्ञं दुर्य्योधनो द्रक्ष्यति सर्व्वसैन्यं । हताश्ववीराग्र्यनरेन्द्रनागं पिपासितं श्रान्तपत्रं भयार्त्तं । १८७०

आर्त्तस्वरं हन्यमानं हतञ्च विकीर्णकेशास्थिकपालसङ्घं । प्रजापतेः कर्म्म यथाऽर्थनिष्ठितं तदा दृष्ट्वा तप्स्यति मन्दबुद्धिः ।

यदा रथे गाण्डिवं वासुदेवं दिव्यं शङ्खं पाञ्चजन्यं हयांश्च । तूणावक्षय्यौ देवदत्तञ्च माञ्च दृष्ट्वा युद्धे धार्त्तराष्ट्रोऽन्वतप्स्यत् ।

उद्वर्त्तयन् दस्युसङ्घान् समेतान् प्रवर्त्तयन् युगमन्यद्युगान्ते । यदा धक्ष्याम्यग्निवत्कौरवेयांस्तदा तप्ता धार्त्तराष्ट्रः सपुत्रः ।

सभ्राता वै सहसैन्यः सभृत्यो भ्रष्टैश्वर्य्यः क्रोधवशोऽल्पचेताः । दर्पस्यान्ते विहतो वेपमानः पश्चान्मन्दस्तप्स्यति धार्त्तराष्ट्रः ।

पूर्व्वाह्णे मां कृतजप्यं कदाचिद्विप्रः प्रोवाचोदकान्ते मनोज्ञं । कर्त्तव्यन्ते दुष्करं कर्म्म पार्थ योद्धव्यं ते शत्रुभिः सव्यसाचिन् । १८७५

इन्द्रो वा ते हरिमान्वज्रहस्तः पुरस्ताद्यातु समरेऽरीन् विनिघ्नन् । सुग्रीवयुक्तेन रथेन वा ते पश्चात् कृष्णो रक्षतु वासुदेवः ।

वव्रे चाहं वज्रहस्तान्महेन्द्रादस्मिन् युद्धे वासुदेवं सहायं । स मे लब्धो दस्युवधाय कृष्णो मन्ये चैतद्विहितं दैवतैर्मे ।

स बाहुभ्यां सागरमुत्तितीर्षेन्महोदधिं सलिलस्याप्रमेयं । तेजस्विनं कृष्णमत्यन्तशूरं युद्धेन यो वासुदेवं जिगीषेत् ।

गिरिं य इच्छेत्तु तलेन भेत्तुं शिलोच्चयं श्वेतमतिप्रमाणं । तस्यैव पाणिः सनखो विशीर्य्येन्नचापि किञ्चित्स गिरेस्तु कुर्य्यात् ।

अग्निं समिद्धं शमयेद्भुजाभ्यां चन्द्रञ्च सूर्य्यञ्च निवारयेत । हरेद्देवानाममृतं प्रसह्य युद्धेन यो वासुदेवं जिगीषेत् । १८८०

यो रुक्मिणीमेकरथेन भोजानुत्साद्य राज्ञः समरे प्रसह्य । उवाह भार्य्यां यशसा ज्वलन्तीं यस्यां जज्ञे रौक्मिणेयो महात्मा ।

अयं गान्धारांस्तरसा सम्प्रमथ्य जित्वा पुत्रान्नग्नजितः समग्रान् । बद्धं मुमोच विनदन्तं प्रसह्य सुदर्शनं वै देवतानां ललामं ।

अयं कपाटेन जघान पाण्ड्यं तथा कलिङ्गान् दन्तकूरे ममर्द । अनेन दग्धा वर्षपूगाननाथा वाराणसी नगरी सम्बभूव ।

अयं स्म युद्धे मन्यतेऽन्यैरजेयं तमेकलव्यं नाम निषादराजं। वेगेनैव शैलमभिहत्य जम्भः शेते स कृष्णेन हतः परासुः।
तथोग्रसेनस्य सुतं सुदुष्टं वृष्ण्यन्धकानां मध्यगतं सभास्थं। अपातयद्बलदेवद्वितीयो हत्वा ददौ चोग्रसेनाय राज्यं। १८८५
अयं सौभं योधयामास खस्थं विभीषणं मायया शाल्वराजं। सौभद्वारि प्रत्यगृह्णाच्छतघ्नीं दोर्भ्यां क एनं विषहेत मर्त्यः।
प्राग्ज्योतिषं नाम बभूव दुर्गं पुरं घोरमसुराणामसह्यं। महाबलो नरकस्तत्र भौमो जहारादित्या मणिकुण्डले शुभे।
न तं देवाः सह शक्रेण शेकुः समागता युधि मृत्योरभीताः। दृष्ट्वा च तं विक्रमं केशवस्य बलं तथैवास्त्रमवारणीयं।
जानन्तोऽस्य प्रकृतिं केशवस्य न्ययोजयन् दस्युबधाय कृष्णं। स तत्कर्म्म प्रतिशुश्राव दुष्करमैश्वर्य्यवान् सिद्धिषु वासुदेवः।
निर्म्मोचने षट् सहस्राणि हत्वा सञ्छिद्य पाशान् सहसा क्षुरान्तान्। मुरं हत्वा विनिहत्यौघरक्षो निर्म्मोचनं चापि जगाम
वीरः। १८९०
तत्रैव तेनास्य बभूव युद्धं महाबलेनातिबलस्य विष्णोः। शेते स कृष्णेन हतः परासुर्वातेनेव मथितः कर्णिकारः।
आहृत्य कृष्णो मणिकुण्डले ते हत्वा च भौमं नरकं मुरञ्च। श्रिया वृतो यशसा चैव विद्वान् प्रत्याजगामाप्रतिमप्रभावः।
अस्मै वरानददंस्तत्र देवा दृष्ट्वा भीमं कर्म्म कृतं रणे तत्। श्रमश्च ते युध्यमानस्य न स्यादाकाशे चाप्सु च ते क्रमः स्यात्।
शस्त्राणि गात्रे न च ते क्रमेरन्नित्येव कृष्णश्च ततः कृतार्थः। एवंरूपे वासुदेवेऽप्रमेये महाबले गुणसम्पत् सदैव।
तमसह्यं विष्णुमनन्तवीर्य्यमाशंसते धार्त्तराष्ट्रो विजेतुं। सदा ह्येनं तर्कयते दुरात्मा तच्चाप्ययं सहतेऽस्मान् समीक्ष्य। १८९५
पर्य्यागतं मम कृष्णस्य चैव यो मन्यते कलहं संप्रसह्य। शक्यं न हर्त्तुं पाण्डवानां ममत्वं तद्वेदिता संयुगं तत्र गत्वा।
नमस्कृत्वा शान्तनवाय राज्ञे द्रोणायाथो सहपुत्राय चैव। शारद्वतायाप्रतिद्वन्द्विने च योत्स्याम्यहं राज्यमभीप्समानः।
धर्म्मेणास्त्रं निधनं तस्य मन्ये यो योत्स्यते पाण्डवैः पापबुद्धिः। मिथ्याग्लहे निर्ज्जिता वै नृशंसैः संवत्सरान् वै द्वादश राज
पुत्राः।
वासः कृच्छ्रो विहितश्चाप्यरण्ये दीर्घं कालं चैकमज्ञातवर्षं। तेषां कस्माज्जीवतां पाण्डवानां नन्दिष्यन्ते धार्त्तराष्ट्राः पदस्थाः।
ते चेदस्मान् युध्यमानाञ्जयेयुर्देवैरपीन्द्रप्रमुखैः सहायैः। धर्म्मादधर्म्मश्चरितो गरीयांस्ततो ध्रुवं नास्ति कृतञ्च साधु। १९००
न चेदिमं पुरुषं कर्म्मबद्धं न चेदस्मान्मन्यतेऽसौ विशिष्टान्। आशंसेऽहं वासुदेवद्वितीयो दुर्य्योधनं सानुबन्धं निहन्तुं।
न चेदिदं कर्म्म नरेन्द्र बन्ध्यं न चेत् भवेत्तत् कृतं निष्फलं वा। इदञ्च तत्राभिसमीक्ष्य नूनं पराजयो धार्त्तराष्ट्रस्य साधुः।
प्रत्यक्षं वः कुरवो यत् ब्रवीमि युध्यमाना धार्त्तराष्ट्रा न सन्ति। अन्यत्र युद्धात् कुरवो यदि स्युर्न युद्धे वै शेष इहास्ति
कश्चित्।
हत्वा त्वहं धार्त्तराष्ट्रान् सकर्णान् राज्यं कुरूणामवजेता समग्रं। यद्वः कार्य्यं तत्कुरुध्वं यथास्वमिष्टान्दारानात्मभोगान्
भजध्वं।
अप्येवं नो ब्राह्मणाः सन्ति वृद्धा बहुश्रुताः शीलवन्तः कुलीनाः। सांवत्सरा ज्योतिषि चाभियुक्ता नक्षत्रयोगेषु च निश्च
यज्ञाः। १९०५
उच्चावचं दैवयुक्तं रहस्यं दिव्यप्रश्ना मृगचक्रा मुहूर्त्ताः। क्षयं महान्तं कुरुसृञ्जयानां निवेदयन्ते पाण्डवानां जयञ्च।
यथा हि नो मन्यतेऽजातशत्रुः संसिद्धार्थो द्विषतां निग्रहाय। जनार्द्दनश्चाप्यपरोक्षविद्यो न संशयं पश्यति वृष्णिसिंहः।
अहं तथैवं खलु भाविरूपं पश्यामि बुद्ध्या स्वयमप्रमत्तः। दृष्टिश्च मे न व्यथते पुराणी संयुध्यमाना धार्त्तराष्ट्रा न सन्ति।

अनालब्धं जृम्भति गाण्डिवं धनुरनाहता कम्पति मे धनुर्ज्या । बाणाश्च मे तूणमुखाद्विसृत्य मुहुर्मुहुर्गन्तुमुशन्ति चैव ।
खड्गः कोषान्निःसरति प्रसन्नो हित्वेव जीर्णामुरगस्त्वचं स्वां । ध्वजे वाचो रौद्ररूपा भवन्ति कदा रथो योक्ष्यते ते किरीटिन् । १९१०

गोमायुसङ्घाश्च नदन्ति रात्रौ रक्षांस्यथो निष्पतन्त्यन्तरीक्षात् । मृगाः शृगालाः शितिकण्ठाश्च काका गृध्रा बकाश्चैव तरक्षवश्च ।
सुवर्णपत्राश्च पतन्ति पश्चात् दृष्ट्वा रथं श्वेतहयप्रयुक्तं । अहं ह्येकः पार्थिवान् सर्व्वयोधान् शरान्वर्षन् मृत्युलोकं नयेयं ।
समाददानः पृथगस्त्रमार्गान् यथाऽग्निरिद्धो गहनं निदाघे । स्थूणाकर्णं पाशुपतं महास्त्रं ब्राह्मं चास्त्रं यच्च शक्रोऽप्यदान्मे ।
बधे धृतो वेगवतः प्रमुञ्चन्नाहं प्रजाः किञ्चिदिहावशिष्ये । शान्तिं लप्स्ये परमो ह्येष भावः स्थिरो मम ब्रूहि गावल्गणे तान् ।
ये वै जय्याः समरे सूत लब्ध्वा देवानपीन्द्रप्रमुखान् समेतान् । तैर्मन्यते कलहं सम्प्रसह्य स धार्त्तराष्ट्रः पश्यत मोहमस्य । १९१५

वृद्धो भीष्मः शान्तनवः कृपश्च द्रोणः सपुत्रो विदुरश्च धीमान् । एते सर्व्वे यद्वदन्त्येतदस्तु आयुष्मन्तः कुरवः सन्तु सर्व्वे ।

इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

॥ वैशम्पायन उवाच ॥ समवेतेषु सर्व्वेषु तेषु राजसु भारत । दुर्य्योधनमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ।
बृहस्पतिश्चोशना च ब्रह्माणं पर्य्युपस्थितौ । मरुतश्च सहेन्द्रेण वसवश्चाग्निना सह ।
आदित्याश्चैव साध्याश्च ये च सप्तर्षयो दिवि । विश्वावसुश्च गन्धर्व्वः शुभाश्चाप्सरसाङ्गणाः ।
नमस्कृत्योपजग्मुस्ते लोकवृद्धं पितामहं । परिवार्य्य च विश्वेशं पर्य्यासत दिवौकसः । १९२०
तेषां मनश्च तेजश्चाप्याददानाविवौजसा । पूर्व्वदेवौ व्यतिक्रान्तौ नरनारायणावृषी ।
बृहस्पतिस्तु पप्रच्छ ब्रह्माणं काविमाविति । भवन्तं नोपतिष्ठेते तौ नः शंस पितामह ।
॥ ब्रह्मोवाच ॥ यावेतौ पृथिवीं द्याञ्च भासयन्तौ तपस्विनौ । ज्वलन्तौ रोचमानौ च व्याप्यातीतौ महाबलौ ।
नरनारायणावेतौ लोकाल्लोकं समास्थितौ । ऊर्ज्जितौ स्वेन तपसा महासत्त्वपराक्रमौ ।

एतौ हि कर्म्मणा लोकं नन्दयामासतुर्ध्रुवं द्विधाभूतौ महाप्राज्ञौ विद्धि ब्रह्मन्परन्तपौ । असुराणां विनाशाय देवगन्धर्व्वपूजितौ । १९२५

॥ वैशम्पायन उवाच ॥ जगाम शक्रस्तच्छ्रुत्वा यत्र तौ तेपतुस्तपः । सार्द्धं देवगणैः सर्व्वैर्बृहस्पतिपुरोगमैः ।
तदा देवासुरे युद्धे भये जाते दिवौकसां । अयाचत महात्मानौ नरनारायणौ वरं ।
तावब्रूतां वृणीष्वेति तदा भरतसत्तम । अथैतावब्रवीच्छक्रः साह्यं नः क्रियतामिति ।
ततस्तौ शक्रमब्रूतां करिष्यावो यदिच्छसि । ताभ्याञ्च सहितः शक्रो विजिग्ये दैत्यदानवान् ।
नर इन्द्रस्य सङ्ग्रामे हत्वा शत्रून् परन्तपः । पौलोमान् कालकञ्जांश्च सहस्राणि शतानि च । १९३०
एष भ्रान्ते रथे तिष्ठन् भल्लेनापाहरच्छिरः । जम्भस्य ग्रसमानस्य तदा ह्यर्ज्जुनमाहवे ।

एष पारे समुद्रस्य हिरण्यपुरमारुजत्। जित्वा षष्टिं सहस्राणि निवातकवचान् रणे।
एष देवान् सहेन्द्रेण जित्वा परपुरञ्जयः। अतर्पयन्महाबाहुरर्ज्जुनो जातवेदसं।
नारायणस्तथैवात्र भूयसोऽन्यान् जघान ह। एवमेतौ महावीर्य्यौ तौ पश्यत समागतौ।
वासुदेवार्ज्जुनौ वीरौ समवेतौ महारथौ। नरनारायणौ देवौ पूर्व्वदेवाविति श्रुतिः। १९३५
अजेयौ मानुषे लोके सेन्द्रैरपि सुरासुरैः। एष नारायणः कृष्णः फाल्गुनश्च नरः स्मृतः।
नारायणो नरश्चैव सत्त्वमेकं द्विधाकृतं। एतौ हि कर्म्मणा लोकानश्नुवातेऽक्षयान् ध्रुवान्।
तत्र तत्रैव जायेते युद्धकाले पुनः पुनः। तस्मात् कर्म्मैव कर्त्तव्यमिति होवाच नारदः।
एतद्धि सर्व्वमाचष्ट वृष्णिचक्रस्य वेदवित्। शङ्खचक्रगदाहस्तं यदा द्रक्ष्यसि केशवं।
पर्य्याददानं चास्त्राणि भीमधन्वानमर्ज्जुनं। सनातनौ महात्मानौ कृष्णावेकरथे स्थितौ। १९४०
दुर्य्योधन तदा तात स्मर्त्ताऽसि वचनं मम। नोचेदयमभावः स्यात् कुरूणां प्रत्युपस्थितः।
अर्थाच्च तात धर्म्माच्च तव बुद्धिरुपप्लुता। नचेत् ग्रहीष्यसे वाक्यं श्रोताऽसि सुबहून् हतान्।
तवैव हि मतं सर्व्वे कुरवः पर्य्युपासते। त्रयाणामेव च मतं तत्त्वमेकोऽनुमन्यसे।
रामेण चैव शप्तस्य कर्णस्य भरतर्षभ। दुर्ज्जातेः सूतपुत्त्रस्य शकुनेः सौबलस्य च।
तथा क्षुद्रस्य पापस्य भ्रातुर्दुःशासनस्य च। १९४५
॥ कर्ण उवाच ॥ नैवमायुष्मता वाच्यं यन्मामात्थ पितामह। क्षत्त्रधर्म्मे स्थितो ह्यस्मि स्वधर्म्मादनपेयिवान्।
किञ्चान्यन्मयि दुर्वृत्तं येन मां परिगर्हसे। नहि मे वृजिनं किञ्चित् धार्त्तराष्ट्रा विदुः क्वचित्।
नाचरं वृजिनं किञ्चित् धार्त्तराष्ट्रस्य नित्यशः। अहं हि पाण्डवान् सर्व्वान् हनिष्यामि रणे स्थितान्।
प्राग्विरुद्धैः शमं सद्भिः कथं वा क्रियते पुनः। राज्ञो हि धृतराष्ट्रस्य सर्व्वं कार्य्यं प्रियं मया।
तथा दुर्य्योधनस्यापि स हि राज्ये समाहितः। १९५०
॥ वैशम्पायन उवाच ॥ कर्णस्य तु वचः श्रुत्वा भीष्मः शान्तनवः पुनः। धृतराष्ट्रं महाराजं सम्भाष्येदं वचोऽब्रवीत्।
यदयं कत्थते नित्यं हन्ताऽहं पाण्डवानिति। नायं कलाऽपि सम्पूर्णा पाण्डवानां महात्मनां।
अनयो योऽयमागन्ता पुत्त्राणां ते दुरात्मनां। तदस्य कर्म्म जानीहि सूतपुत्त्रस्य दुर्म्मतेः।
एतमाश्रित्य पुत्त्रस्ते मन्दबुद्धिः सुयोधनः। अवामन्यत तान् वीरान् देवपुत्त्रानरिन्दमान्।
किञ्चाप्येतेन तत्कर्म्म कृतपूर्व्वं सुदुष्करं। तैर्यथा पाण्डवैः सर्व्वैरेकैकेन कृतं पुरा। १९५५
दृष्ट्वा विराटनगरे भ्रातरं निहतं प्रियं। धनञ्जयेन विक्रम्य किमनेन तदा कृतं।
सहितान् हि कुरून् सर्व्वानभियातो धनञ्जयः। प्रमथ्य चाच्छिनद्वासः किमयं प्रोषितस्तदा।
गन्धर्व्वैर्घोषयात्रायां ह्रियते यत्सुतस्तव। क्व तदा सूतपुत्त्रोऽभूत् य इदानीं वृषायते।
ननु तत्रापि भीमेन पार्थेन च महात्मना। यमाभ्यामेव सङ्गम्य गन्धर्व्वास्ते पराजिताः।
एतान्यस्य मृषोक्तानि बहूनि भरतर्षभ। विकत्थनस्य भद्रन्ते सदा धर्म्मार्थलोपिनः। १९६०
भीष्मस्य तु वचः श्रुत्वा भारद्वाजो महामनाः। धृतराष्ट्रमुवाचेदं राजमध्येऽभिपूजयन्।

यदाह भरतश्रेष्ठो भीष्मस्तत् क्रियतां नृप । न काममर्थलिप्सूनां वचनं कर्त्तुमर्हसि ।
पुरा युद्धात् साधु मन्ये पाण्डवैः सह सङ्गतं । यद्वाक्यमर्ज्जुनेनोक्तं सञ्जयेन निवेदितं ।
सर्व्वं तदभिजानामि करिष्यति च पाण्डवः । नह्यस्य त्रिषु लोकेषु सदृशोऽस्ति धनुर्द्धरः ।
अनादृत्य तु तद्वाक्यमर्थवद्द्रोणभीष्मयोः । ततः स सञ्जयं राजा पर्य्यपृच्छत पाण्डवान् । १९६५
तदैव कुरवः सर्व्वे निराशा जीवितेऽभवन् । भीष्मद्रोणौ यदा राजा न सम्यगनुभाषते ।
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि भीष्मवाक्ये अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ धृतराष्ट्र उवाच ॥ किमसौ पाण्डवो राजा धर्म्मपुत्त्रोऽभ्यभाषत । श्रुत्वेह बहुलाः सेनाः प्रीत्यर्थं नः समागताः ।
किमसौ चेष्टते सूत योत्स्यमानो युधिष्ठिरः । के वाऽस्य भ्रातृपुत्त्राणां पश्यन्त्याज्ञेप्सवो मुखं ।
के स्विदेनं वारयन्ति युद्धाच्छाम्येति वा पुनः । निकृत्या कोपितं मन्दैर्धर्म्मज्ञं धर्म्मचारिणं ।
॥ सञ्जय उवाच ॥ राज्ञो मुखमुदीक्षन्ते पाञ्चालाः पाण्डवैः सह । युधिष्ठिरस्य भद्रन्ते स सर्व्वाननुशास्ति च । १९७०
पृथग्भूताः पाण्डवानां पाञ्चालानां रथव्रजाः । आयान्तमभिनन्दन्ति कुन्तीपुत्त्रं युधिष्ठिरं ।
नभः सूर्य्यमिवोद्यन्तं कौन्तेयं दीप्ततेजसं । पाञ्चालाः प्रतिनन्दन्ति तेजोराशिमिवोदितं ।
आगोपालाविपालाश्च नन्दमाना युधिष्ठिरं । पाञ्चालाः केकया मत्स्याः प्रतिनन्दन्ति पाण्डवं ।
ब्राह्मण्यो राजपुत्त्र्यश्च विशां दुहितरश्च याः । क्रीडन्त्योऽभिसमायान्ति पार्थं सन्नद्धमीक्षितुं ।
॥ धृतराष्ट्र उवाच ॥ सञ्जयाचक्ष्व येनास्मान् पाण्डवा अभ्ययुञ्जत । धृष्टद्युम्नस्य सैन्येन सोमकानां बलेन च । १९७५
॥ वैशम्पायन उवाच ॥ गावल्गणिस्तु तत्पृष्टः सभायां कुरुसंसदि । निश्वस्य सुभृशं दीर्घं मुहुः सञ्चिन्तयन्निव ।
तत्रानिमित्ततो दैवात् सूतं कश्मलमाविशत् । तदाचचक्षे विदुरः सभायां कुरुसंसदि ।
सञ्जयोऽयं महाराज मूर्च्छितः पतितो भुवि । वाचं न सृजते काञ्चिद्धीनप्रज्ञोऽल्पचेतनः ।
॥ धृतराष्ट्र उवाच ॥ अपश्यत् सञ्जयो नूनं कुन्तीपुत्त्रान्महारथान् । तैरस्य पुरुषव्याघ्रैर्भृशमुद्वेजितं मनः ।
॥ वैशम्पायन उवाच ॥ सञ्जयश्चेतनां लब्ध्वा प्रत्याश्वस्येदमब्रवीत् । धृतराष्ट्रं महाराजं सभायां कुरुसंसदि । १९८०
॥ सञ्जय उवाच ॥ दृष्टवानस्मि राजेन्द्र कुन्तीपुत्त्रान्महारथान् । मत्स्यराजगृहावासनिरोधेनावकर्षितान् ।
शृणु यैर्हि महाराज पाण्डवा अभ्ययुञ्जत । धृष्टद्युम्नेन वीरेण युद्धे वस्तेऽभ्ययुञ्जत ।
यो नैव रोषान्न भयान्न लोभान्नार्थकारणात् । न हेतुवादात् धर्म्मात्मा सत्यं जह्यात्कदाचन ।
यः प्रमाणं महाराज धर्म्मे धर्म्मभृतांवरः । अजातशत्रुणा तेन पाण्डवा अभ्ययुञ्जत ।
यस्य बाहुबले तुल्यः पृथिव्यां नास्ति कश्चन । यो वै सर्व्वान्महीपालान् वशे चक्रे धनुर्द्धरः । १९८५
यः काशीबङ्गमगधान् कलिङ्गांश्च युधाऽजयत् । तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जत ।
यस्य वीर्य्येण सहसा चत्वारो भुवि मानवाः । निःसृता जतुगेहाद्वै हिडिम्बात् पुरुषादकात् ।
यश्चैषामभवद्द्वीपः कुन्तीपुत्त्रो वृकोदरः । याज्ञसेनीमथो यत्र सिन्धुराजोऽपकृष्टवान् ।
तत्रैषामभवत् द्वीपः कुन्तीपुत्त्रो वृकोदरः । यश्च तान् पाण्डवान् सर्व्वान् सङ्गतान् वारणावते ।
दह्यतो मोचयामास तेन वस्तेऽभ्ययुञ्जत । कृष्णायाश्चरता प्रीतिं येन क्रोधवशा हताः । १९९०

प्रविश्य विषमं घोरं पर्व्वतं गन्धमादनं । यस्य नागायुतं वीर्य्यं भुजयोः सारमर्पितं ।
तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जत । कृष्णद्वितीयो विक्रम्य तुष्ट्यर्थं जातवेदसः ।
अजयत् यः पुरा वीरो युध्यमानं पुरन्दरं । यः स साक्षात् महादेवं गिरिशं शूलपाणिनं ।
तोषयामास युद्धेन देवदेवमुमापतिं । यश्च सर्व्वान् वशे चक्रे लोकपालान् धनुर्द्धरः ।
तेन वो विजयेनाजौ पाण्डवा अभ्ययुञ्जत । यः प्रतीचीं दिशं चक्रे वशे म्लेच्छगणायुतां । १९९५
स तत्र नकुलो योद्धा चित्रयोधी व्यवस्थितः । तेन वो दर्शनीयेन वीरेणातिधनुर्भृता ।
माद्रीपुत्रेण कौरव्य पाण्डवा अभ्ययुञ्जत । यः काशीनङ्गमगधान् कलिङ्गांश्च युधाऽजयत् ।
तेन वः सहदेवेन पाण्डवा अभ्ययुञ्जत । यस्य वीर्य्येण सदृशाश्चत्वारो भुवि मानवाः ।
अश्वत्थामा धृष्टकेतू रुक्मी प्रद्युम्न एव च । तेन वः सहदेवेन युद्धं राजन्महात्ययं ।
यवीयसा नृवीरेण माद्रीनन्दिकरेण च । तपश्चचार या घोरं काशिकन्या पुरा सती । २०००
भीष्मस्य बधमिच्छन्ती प्रेत्यापि भरतर्षभ । पाञ्चालस्य सुता जज्ञे दैवाच्च स पुनः पुमान् ।
स्त्रीपुंसोः पुरुषव्याघ्र यः स वेद गुणागुणान् । यः कलिङ्गान् समापेदे पाञ्चाल्यो युद्धदुर्मदः ।
शिखण्डिना वः कुरवः कृतास्त्रेणाभ्ययुञ्जत । यं यक्षः पुरुषं चक्रे भीष्मस्य निधनेच्छया ।
महेष्वासेन रौद्रेण पाण्डवा अभ्ययुञ्जत । महेष्वासा राजपुत्रा भ्रातरः पञ्च केकयाः ।
आमुक्तकवचाः शूरास्तैश्च वस्तेऽभ्ययुञ्जत । यो दीर्घबाहुः क्षिप्रास्त्रो धृतिमान् सत्यविक्रमः । २००५
तेन वो वृष्णिवीरेण युयुधानेन सङ्गरः । य आसीच्छरणं काले पाण्डवानां महात्मनां ।
रणे तेन विराटेन भविता वः समागमः । यः स काशीपती राजा वाराणस्यां महारथः ।
स तेषामभवत् योद्धा तेन वस्तेऽभ्ययुञ्जत । शिशुभिर्दुर्ज्जयैः सङ्ख्ये द्रौपदेयैर्महात्मभिः ।
आशीविषसमस्पर्शैः पाण्डवा अभ्ययुञ्जत । यः कृष्णसदृशो वीर्य्ये युधिष्ठिरसमो दमे ।
तेनाभिमन्युना सङ्ख्ये पाण्डवा अभ्ययुञ्जत । यश्चैवाप्रतिमो वीर्य्ये धृष्टकेतुर्म्महायशाः । २०१०
दुःसहः समरे क्रुद्धः शैशुपालिर्म्महारथः । तेन वश्चेदिराजेन पाण्डवा अभ्ययुञ्जत ।
अक्षौहिण्या परिवृतः पाण्डवान् योऽभिसंश्रितः । यः संश्रयः पाण्डवानां देवानामिव वासवः ।
तेन वो वासुदेवेन पाण्डवा अभ्ययुञ्जत । तथा चेदिपतेर्भ्राता शरभो भरतर्षभ ।
करकर्षेण सहितस्ताभ्यां वस्तेऽभ्ययुञ्जत । जारासन्धिः सहदेवो जयत्सेनश्च तावुभौ ।
युद्धेऽप्रतिरथौ वीरौ पाण्डवार्थे व्यवस्थितौ । द्रुपदश्च महातेजा बलेन महता वृतः । २०१५
त्यक्तात्मा पाण्डवार्थाय योत्स्यमानो व्यवस्थितः । एते चान्ये च बहवः प्राच्योदीच्या महीक्षितः ।
शतशो यानुपाश्रित्य धर्म्मराजो व्यवस्थितः ।

इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

॥ धृतराष्ट्र उवाच ॥ सर्व्वे एते महोत्साहा ये त्वया परिकीर्त्तिताः । एकतस्त्वेव ते सर्व्वे समेता भीम एकतः ।
भीमसेनाद्धि मे भूयो भयं सञ्जायते महत् । क्रुद्धादमर्षणात्तात व्याघ्रादिव महारुरोः ।

जागर्म्मि रात्रयः सर्व्वा दीर्घमुष्णञ्च निःश्वसन् । भीतो वृकोदरात्तात सिंहात्पशुरिवापरः । २०२०
न हि तस्य महाबाहोः शक्रप्रतिमतेजसः । सैन्येऽस्मिन् प्रतिपश्यामि य एनं विषहेत् युधि ।
अमर्षणश्च कौन्तेयो दृढवैरश्च पाण्डवः । अनर्म्महासी सोन्मादस्तिर्य्यक्प्रेक्षी महास्वनः ।
महावेगो महोत्साहो महाबाहुर्म्महाबलः । मन्दानां मम पुत्त्राणां युद्धेनान्तं करिष्यति ।
गुरुयाहगृहीतानां गदां बिभ्रद्वृकोदरः । कुरूणामृषभो युद्धे दण्डपाणिरिवान्तकः ।
अष्टाश्रिमायसीं घोरां गदां काञ्चनभूषणां । मनसाऽहं प्रपश्यामि ब्रह्मदण्डमिवोत्थितं । २०२५
यथा मृगाणां यूथेषु सिंहो जातबलश्चरेत् । मामकेषु तथा भीमो बलेषु विचरिष्यति ।
सर्व्वेषां मम पुत्त्राणां स एकः क्रूरविक्रमः । बह्वाशी विप्रतीपश्च बाल्येऽपि रभसः सदा ।
उद्वेपते मे हृदयं ये मे दुर्य्योधनादयः । बाल्येऽपि तेन युध्यन्तो वारणेनेव मर्द्दिताः ।
तस्य वीर्य्येण संक्लिष्टा नित्यमेव सुता मम । स एव हेतुर्भेदस्य भीमो भीमपराक्रमः ।
ग्रसमानमनीकानि नरवारणवाजिनां । पश्यामीवाग्रतो भीमं क्रोधमूर्च्छितमाहवे । २०३०
अस्त्रे द्रोणार्ज्जुनसमं वायुवेगसमं जवे । महेश्वरसमं क्रोधे को हन्याद्भीममाहवे ।
सञ्जयाचक्ष्व मे शूरं भीमसेनममर्षणं । अतिलाभन्तु मन्येऽहं यत्तेन रिपुघातिना ।
तदैव न हताः सर्व्वे पुत्त्रा मम मनस्विना । येन भीमबला यक्षा राक्षसाश्च पुरा हताः ।
कथं तस्य रणे वेगं मानुषः प्रसहिष्यति । न स जातु वशे तस्थौ मम बाल्येऽपि सञ्जय ।
किं पुनर्म्मम दुष्पुत्त्रैः क्लिष्टः सम्प्रति पाण्डवः । निष्ठुरो रोषणोऽत्यर्थं भज्येतापि न सन्नमेत् । २०३५
तिर्य्यक्प्रेक्षी संहतभ्रूः कथं शाम्येद्वृकोदरः । शूरस्तथाऽप्रतिबलो गौरस्ताल इवोन्नतः ।
प्रमाणतो भीमसेनः प्रादेशेनाधिकोऽर्ज्जुनात् । जवेन वाजिनोऽत्येति बलेनात्येति कुञ्जरान् ।
अव्यक्तजल्पी मध्वक्षो मध्यमः पाण्डवो बली । इति बाल्ये श्रुतः पूर्व्वं मया व्यासमुखात्पुरा ।
रूपतो वीर्य्यतश्चैव याथातथ्येन पाण्डवः । आयसेन स दण्डेन रथान्नागान्नरान् हयान् ।
हनिष्यति रणे क्रुद्धो रौद्रः क्रूरपराक्रमः । अमर्षी नित्यसंरब्धो भीमः प्रहरतां वरः । २०४०
मया तात प्रतीपानि कुर्व्वन् पूर्व्वं विमानितः । निष्कीर्णामायसीं स्थूलां सुपार्श्वां काञ्चनीं गदां ।
शतघ्नीं शतनिर्ह्रादां कथं शक्ष्यन्ति मे सुताः । अपारमप्लवागाधं समुद्रं शरवेगितं ।
भीमसेनमयं दुर्गं तात मन्दास्तितीर्षवः । क्रोशतो मे न शृण्वन्ति बालाः पण्डितमानिनः ।
विषमं नावमन्यन्ते प्रपातं मधुदर्शिनः । संयुगं ये गमिष्यन्ति नररूपेण मृत्युना ।
नियतं चोदिता धात्रा सिंहेनेव हता मृगाः । शैक्यां तात चतुष्किष्कुं षडश्रिममितौजसं । २०४५
प्रहितां दुःखसंस्पर्शां कथं शक्ष्यन्ति मे सुताः । गदां भ्रामयतस्तस्य भिन्दतो हस्तिमस्तकान् ।
सृक्किणी लेलिहानस्य बाष्पमुत्सृजतो मुहुः । उद्दिश्य नागान् पततः कुर्व्वतो भैरवान्रवान् ।
प्रतीपं पततो मत्तान् कुञ्जरान् प्रतिगर्ज्जतः । विगाह्य रथमार्गेषु वरानुद्दिश्य निघ्नतः ।
अग्नेः प्रज्वलितस्येव अपि मुच्येत मे प्रजा । वीथीं कुर्व्वन् महाबाहुर्द्रावयन्मम वाहिनीं ।

नृत्यन्निव गदापाणिर्युगान्ते दर्शयिष्यति। प्रभिन्न इव मातङ्गः प्रभञ्जन् पुष्पितान् द्रुमान्। २०५०
प्रवेक्ष्यति रणे सेनां पुत्त्राणां मे वृकोदरः। कुर्व्वन्रथान् विपुरुषान् विसारथिहयध्वजान्।
आरुजन् पुरुषव्याघ्रो रथिनः सादिनस्तथा। गङ्गावेग इवानूपांस्तीरजान् विविधान् द्रुमान्।
प्रभङ्क्ष्यति रणे सेनां पुत्त्राणां मम सञ्जय। दिशो नूनं गमिष्यन्ति भीमसेनभयार्द्दिताः।
मम पुत्त्राश्च भृत्याश्च राजानश्चैव सञ्जय। येन राजा महावीर्य्यः प्रविश्यान्तःपुरं पुरा।
वासुदेवसहायेन जरासन्धो निपातितः। कृत्स्नेयं पृथिवी देवी जरासन्धेन धीमता। २०५५
मागधेन्द्रेण बलिना वशे कृत्वा प्रतापिता। भीष्मप्रभावात्कुरवो नयेनान्धकवृष्णयः।
ते न तस्य वशे जग्मुः केवलं दैवमेव तत्। स गत्वा पाण्डुपुत्त्रेण तरसा बाहुशालिना।
अनायुधेन वीरेण निहतः किं ततोऽधिकं। दीर्घकालसमासक्तं विषमाशीविषो यथा।
स मोक्ष्यति रणे तेजः पुत्त्रेषु मम सञ्जय। महेन्द्र इव वज्रेण दानवान्देवसत्तमः।
भीमसेनो गदापाणिः सूदयिष्यति मे सुतान्। अविषह्यमनावार्य्यं तीव्रवेगपराक्रमं। २०६०
पश्यामीवातिताम्राक्षमापतन्तं वृकोदरं। अगदस्याप्यधनुषो विरथस्य विवर्म्मणः।
बाहुभ्यां युध्यमानस्य कस्तिष्ठेदग्रतः पुमान्। भीष्मो द्रोणश्च विप्रोऽयं कृपः शारद्वतस्तथा।
जानन्त्येते यथैवाहं वीर्य्यज्ञस्तस्य धीमतः। आर्य्यव्रतन्तु जानन्तः सङ्गरान्त विधित्सवः।
सेनामुखेषु स्थास्यन्ति मामकानां नरर्षभाः। बलीयः सर्व्वतो दिष्टं पुरुषस्य विशेषतः।
पश्यन्नपि जयं तेषां न नियच्छामि यत्सुतान। ते पुराणं महेष्वासा मार्गमैन्द्रं समाश्रिताः। २०६५
त्यक्ष्यन्ति तुमुले प्राणान् रक्षन्तः पार्थिवं यशः। यथैषां मामकास्तात तथैषां पाण्डवा अपि।
पौत्त्रा भीष्मस्य शिष्याश्च द्रोणस्य च कृपस्य च। यन्त्वस्मादाश्रयं किञ्चिद्दत्तमिष्टञ्च सञ्जय।
तस्यापचितिमार्य्यत्वात् कर्त्तारः स्थविरास्त्रयः। आददानस्य शस्त्रं हि क्षत्रधर्म्मं परीप्सतः।
निधनं क्षत्त्रियस्याजौ वरमेवाहुरुत्तमं। स वै शोचामि सर्व्वान्वै ये युयुत्सन्ति पाण्डवैः।
विक्रुष्टं विदुरेणादौ तदेतद्भयमागतं। न तु मन्ये विघाताय ज्ञानं दुःखस्य सञ्जय। २०७०
भवत्यतिबले ह्येतज्ज्ञानमप्युपघातकं। ऋषयोऽपि ह्यनिर्म्मुक्ताः पश्यन्तो लोकसंग्रहान्।
सुखैर्भवन्ति सुखिनस्तथा दुःखेन दुःखिताः। किंपुनर्य्योऽहमासक्तस्तत्र तत्र सहस्रधा।
पुत्त्रेषु राज्ये दारेषु पौत्त्रेष्वपि च बन्धुषु। संशये तु महत्यस्मिन् किं नु मे क्षममुत्तमं।
विनाशं ह्येव पश्यामि कुरूणामनुचिन्तयन्। द्यूतप्रमुखमाभाति कुरूणां व्यसनं महत्।
मन्देनैश्वर्य्यकामेन लोभात्पापमिदं कृतं। मन्ये पर्य्यायधर्म्मोऽयं कालस्यात्यन्तगामिनः। २०८०
चक्रे प्रधिरिवासक्तो नास्य शक्यं पलायितुं। किं न कुर्य्यां कथं कुर्य्यां क्व नु गच्छामि सञ्जय।
एते नश्यन्ति कुरवो मन्दाः कालवशङ्गताः। अवशोऽहं पुरा तात पुत्त्राणां निहते शते।
श्रोष्यामि निनदं स्त्रीणां कथं मां मरणं स्पृशेत्।

यथा निदाघे ज्वलनः समिद्धो दहेत्कक्षं वायुना चोद्यमानः । गदाहस्तः पाण्डवो वै तथैव हन्ता मदीयान् सहितोऽर्ज्जुनेन ।

इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि धृतराष्ट्रवाक्ये पञ्चाशोऽध्यायः ॥ ५० ॥

॥ धृतराष्ट्र उवाच ॥ यस्य वै नानृता वाचः कदाचिदनुशुश्रुम । त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनञ्जयः । २०८५

तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः । अनिशं चिन्तयानोऽपि यः प्रतीयाद्रथेन तं ।

अस्यतः कर्णिनालीकान् मार्गणान् हृदयच्छिदः । प्रत्येता न समः कश्चिद्युधि गाण्डीवधन्वनः ।

द्रोणकर्णौ प्रतीयातां यदि वीरौ नरर्षभौ । कृतास्त्रौ बलिनां श्रेष्ठौ समरेष्वपराजितौ ।

महान् स्यात् संशयो लोके नत्वस्ति विजयो मम । घृणी कर्णः प्रमादी च आचार्य्यः स्थविरो गुरुः ।

समर्थो बलवान् पार्थो दृढधन्वा जितक्लमः । भवेत् सुतुमुलं युद्धं सर्व्वशोऽप्यपराजयः । २०९०

सर्व्वेऽप्यस्त्रविदः शूराः सर्व्वे प्राप्ता महद्यशः । अपि सर्व्वामरैश्वर्य्यं त्यजेयुर्न पुनर्ज्जयं ।

वधे नूनं भवेच्छान्तिस्तयोर्व्वा फाल्गुनस्य वा । न च हन्ताऽर्ज्जुनस्यास्ति जेता चास्य न विद्यते ।

मन्युस्तस्य कथं शाम्येत् मन्दान् प्रति य उत्थितः । अन्येऽप्यस्त्राणि जानन्ति जीयन्ते च जयन्ति च ।

एकान्तविजयस्त्वेव श्रूयते फाल्गुनस्य च । त्रयस्त्रिंशत्समाः सूत खाण्डवेऽग्निमतर्पयत् ।

जिगाय च सुरान् सर्व्वान्नास्य विद्मः पराजयं । यस्य यन्ता हृषीकेशः शीलवृत्तसमो युधि । २०९५

ध्रुवं तस्य जयस्तात यथेन्द्रस्य जयस्तथा । कृष्णावेकरथे यत्तावधिज्यं गाण्डिवं धनुः ।

युगपत् त्रीणि तेजांसि समेतान्यनुशुश्रुम । नैवास्ति नो धनुस्तादृक् न योद्धा न च सारथिः ।

तच्च मन्दा न जानन्ति दुर्य्योधनवशानुगाः । शेषयेदशनिर्द्दीप्तो निपतन्मूर्द्ध्नि सञ्जय ।

न तु शेषं शरास्तात कुर्य्युरस्ताः किरीटिना । अपि चास्यन्निवाभाति निघ्नन्निव धनञ्जयः ।

उद्धरन्निव कायेभ्यः शिरांसि शरवृष्टिभिः । अपि बाणमयं तेजः प्रदीप्तमिव सर्व्वतः । २१००

गाण्डीवोत्थं दहेताजौ पुत्राणां मम वाहिनीं । अपि सा रथघोषेण भयार्त्ता सव्यसाचिनः ।

वित्रस्ता बहुधा सेना भारती प्रतिभाति मे । यथा कक्षं महानग्निः प्रदहेत् सर्व्वतश्चरन् ।

महार्च्चिरनिलोद्धूतस्तद्वद्धक्ष्यति मामकान् ।

यदोद्वमन्निशितान् बाणसङ्घांस्तानाततायी समरे किरीटी । सृष्टोऽन्तकः सर्व्वहरो विधात्रा यथा भवेत्तदवारणीयः ।

यदा ह्यभीक्ष्णं सुबहून् प्रकारान् श्रोताऽस्मि तानावसथे कुरूणां । तेषां समन्ताच्च तथा रणाग्रे क्षयः किलाऽयं भरतानु
पैति । २१०५

इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि धृतराष्ट्रवाक्ये एकपञ्चाशोऽध्यायः ॥ ५१ ॥

॥ धृतराष्ट्र उवाच ॥ यथैव पाण्डवाः सर्व्वे पराक्रान्ता जिगीषवः । तथैवाऽभिसरास्तेषां त्यक्तात्मानो जये धृताः ।

त्वमेव हि पराक्रान्तानाचख्योथाः परान्मम । पाञ्चालान् केकयान्मत्स्यान्मगधान् वत्सभूमिपान् ।

यश्च सेन्द्रानिमांल्लोकानिच्छन् कुर्य्याद्वशे वशी । स श्रेष्ठो जगतः कृष्णः पाण्डवानां जये धृतः ।

समस्तामर्ज्जुनाद्विद्यां सात्यकिः क्षिप्रमाप्तवान् । शैनेयः समरे स्थाता बीजवत् प्रवपन् शरान् ।

धृष्टद्युम्नश्च पाञ्चाल्यः क्रूरकर्म्मा महारथः। मामकेषु रणे कर्त्ता बलेषु परमास्त्रवित्। २११०
युधिष्ठिरस्य च क्रोधादर्ज्जुनस्य च विक्रमात्। यमाभ्यां भीमसेनाच्च भयं मे तात जायते।
अमानुषं मनुष्येन्द्रैर्जालं विततमन्तरा। न मे सैन्यास्तरिष्यन्ति ततः क्रोशामि सञ्जय।
दर्शनीयो मनस्वी च लक्ष्मीवान् ब्रह्मवर्चसी। मेधावी सुकृतप्रज्ञो धर्म्मात्मा पाण्डुनन्दनः।
मित्रामात्यैः सुसम्पन्नः सम्पन्नो युद्धयोजकैः। भ्रातृभिः श्वशुरैर्वीरैरुपपन्नो महारथैः।
धृत्या च पुरुषव्याघ्रो नैभृत्येन च पाण्डवः। अनृशंसो वदान्यश्च ह्रीमान् सत्यपराक्रमः। २११५
बहुश्रुतः कृतात्मा च वृद्धसेवी जितेन्द्रियः। तं सर्व्वगुणसम्पन्नं समिद्धमिव पावकं।
तपन्तमिव को मन्दः पतिष्यति पतङ्गवत्। पाण्डवाग्निमनावार्य्यं मुमूर्षुर्नष्टचेतनः।
तनुरुच्चः शिखी राजा मिथ्योपचरितो मया। मन्दानां मम पुत्त्राणां युद्धेनान्तं करिष्यति।
तैरयुद्धं साधु मन्ये कुरवस्तन्निबोधत। युद्धे विनाशः कृत्स्नस्य कुलस्य भविता ध्रुवं।
एषा मे परमा बुद्धिर्यया शाम्यति मे मनः। यदि त्वयुद्धमिष्टं वो वयं शान्त्यै यतामहे।
न तु नः क्लिश्यमानानामुपेक्षेत युधिष्ठिरः। जुगुप्सति ह्यधर्म्मेण मामेवोद्दिश्य कारणं। २१२०
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि धृतराष्ट्रवाक्ये द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ सञ्जय उवाच ॥ एवमेतन्महाराज यथा वदसि भारत। युद्धे विनाशः क्षत्त्रस्य गाण्डीवेन प्रदृश्यते।
इदन्तु नाभिजानामि तव वीरस्य नित्यशः। यत्पुत्त्रवशमागच्छेः सत्त्वज्ञः सव्यसाचिनः।
नैष कालो महाराज तव शश्वत्कृतागसः। त्वया ह्येवादितः पार्था निकृता भरतर्षभ।
पिता श्रेष्ठः सुहृत् यश्च सम्यक् प्रणिहितात्मवान्। आस्थेयं हि हितं तेन न द्रोग्धा गुरुरुच्यते।
इदं जितमिदं लब्धमिति श्रुत्वा पराजितान्। द्यूतकाले महाराज स्मयसे स्म कुमारवत्। २१२५
परुषाण्युच्यमानांश्च पुरा पार्थानुपेक्षसे। कृत्स्नं राज्यं जयन्तीति प्रपातं नानुपश्यसि।
पित्र्यं राज्यं महाराज कुरवस्ते सजाङ्गलाः। अथ वीरैर्जितामुर्व्वीमखिलां प्रत्यपद्यथाः।
बाहुवीर्य्यार्ज्जिता भूमिस्तव पार्थैर्निवेदिता। मयेदं कृतमित्येवं मन्यसे राजसत्तम।
ग्रस्तान् गन्धर्व्वराजेन मज्जतो ह्यप्लवेऽम्भसि। आनिनाय पुनः पार्थः पुत्त्रांस्ते राजसत्तम।
कुमारवच्च स्मयसे द्यूते विनिकृतेषु यत्। पाण्डवेषु वनं राजन् प्रव्रजत्सु पुनः पुनः। २१३०
प्रवर्षतः शरव्रातानर्ज्जुनस्य शितान् बहून्। अप्यर्णवा विशुष्येयुः किं पुनर्मांसयोनयः।
अस्यतां फाल्गुनः श्रेष्ठो गाण्डीवं धनुषां वरं। केशवः सर्व्वभूतानां चक्राणाञ्च सुदर्शनं।
वानरो रोचमानश्च केतुः केतुमतां वरः। एवमेतानि स रथो वहन् श्वेतहयो रणे।
क्षपयिष्यति ते राजन् कालचक्रमिवोद्यतं। तस्याद्य वसुधा राजन्निखिला भरतर्षभ।
यस्य भीमार्ज्जुनौ योधौ स राजा राजसत्तम। तथा भीमहतप्रायां मज्जन्तीं तव वाहिनीं। २१३५
दुर्य्योधनमुखा दृष्ट्वा क्षयं यास्यन्ति कौरवाः। न भीमार्ज्जुनयोर्भीता लप्स्यन्ते विजयं विभो।
तव पुत्त्रा महाराज राजानश्चानुसारिणः। मत्स्यास्त्वामद्य नार्च्चन्ति पाञ्चालाश्च सकेकयाः।

प्राच्याः शूरसेनाश्च सर्व्वे समवजानते। पार्थं ह्येते गताः सर्व्वे वीर्य्यज्ञास्तस्य धीमतः।
भक्त्या त्वस्य विरुध्यन्ते तव पुत्त्रैः सदैव ते। अनर्हानेव तु वधे धर्म्मयुक्तान् विकर्म्मणा।
योऽक्लेशयत् पाण्डुपुत्त्रान् यो विद्विष्टोऽधुनाऽपि वै। सर्व्वोपायैर्नियन्तव्यः सानुगः पापपूरुषः। २१७०
तव पुत्त्रो महाराज नानुशोचितुमर्हसि। द्यूतकाले मया प्रोक्तं विदुरेण च धीमता।
यदिदं ते विलपितं पाण्डवान् प्रति भारत। अनीशेनेव राजेन्द्र सर्व्वमेतन्निरर्थकं।
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये त्रिपञ्चाशोऽध्यायः॥ ५३ ॥
॥ दुर्य्योधन उवाच ॥ न भेतव्यं महाराज न शोच्या भवता वयं। समर्थाः स्म परान् राजन् विजेतुं समरे प्रभो।
वने प्रव्राजितान् पार्थान् यदायान्मधुसूदनः। महता बलचक्रेण परराष्ट्रावमर्द्दिना।
केकया धृष्टकेतुश्च धृष्टद्युम्नश्च पार्षतः। राजानश्चान्वयुः पार्थान् बहवोऽन्येऽनुयायिनः। २१७५
इन्द्रप्रस्थस्य चादूरात् समाजग्मुर्म्महारथाः। व्यगर्हयंश्च सङ्गम्य भवन्तं कुरुभिः सह।
ते युधिष्ठिरमासीनमजिनैः प्रतिवासितं। कृष्णप्रधानाः संहत्य पर्य्युपासत भारत।
प्रत्यादानञ्च राज्यस्य कार्य्यमूचुर्न्नराधिपाः। भवतः सानुबन्धस्य समुच्छेदं चिकीर्षवः।
श्रुत्वा चैवं मयोक्तास्तु भीष्मद्रोणकृपास्तदा। ज्ञातिक्षयभयाद्राजन् भीतेन भरतर्षभ।
ततः स्थास्यन्ति समये पाण्डवा इति मे मतिः। समुच्छेदं हि नः कृत्स्नं वासुदेवश्चिकीर्षति। २१८०
ऋते च विदुरात् सर्व्वे यूयं वध्या मता मम। धृतराष्ट्रस्तु धर्म्मज्ञो न वध्यः कुरुसत्तमः।
समुच्छेदञ्च कृत्स्नं नः कृत्वा तात जनार्द्दनः। एकराज्यं कुरूणां स्म चिकीर्षति युधिष्ठिरे।
तत्र किं प्राप्तकालं नः प्रणिपातः पलायनं। प्राणान् वा संपरित्यज्य प्रतियुध्यामहे परान्।
प्रतियुद्धे तु नियतः स्यादस्माकं पराजयः। युधिष्ठिरस्य सर्व्वे वै पार्थिवा वशवर्त्तिनः।
विरक्तराष्ट्राश्च वयं मित्राणि कुपितानि नः। धिक्कृताः पार्थिवैः सर्व्वैः स्वजनेन च सर्व्वशः। २१८५
प्रणिपाते न दोषोऽस्ति सन्धिर्नः शाश्वतीः समाः। पितरन्त्वेव शोचामि प्रज्ञानेत्रं जनाधिपं।
मत्कृते दुःखमापन्नं क्लेशं प्राप्तमनन्तकं। कृतं हि तव पुत्त्रैश्च परेषामवरोधनं।
मत्प्रियार्थं पुरैवैतत् विदितं ते नरोत्तम। ते राज्ञो धृतराष्ट्रस्य सामात्यस्य महारथाः।
वैरं प्रतिकरिष्यन्ति कुलोच्छेदेन पाण्डवाः। ततो द्रोणोऽब्रवीत् भीष्मः कृपो द्रौणिश्च भारत।
मत्वा मां महतीं चिन्तामास्थितं व्यथितेन्द्रियं। अभिद्रुग्धाः परे चेन्नो न भेतव्यं परन्तप। २१९०
न समर्थाः परे जेतुमस्मान् युधि समास्थितान्। एकैकशः समर्थाः स्मो विजेतुं सर्व्वपार्थिवान्।
आगच्छन्तु विनेष्यामो दर्पमेषां शितैः शरैः। पुरैकेन हि भीष्मेण विजिताः सर्व्वपार्थिवाः।
मृते पितर्य्यतिक्रुद्धो रथेनैकेन भारत। जघान सुबहूंस्तेषां संरब्धः कुरुसत्तमः।
ततस्ते शरणं जग्मुर्द्देवव्रतमिमं भयात्। स भीष्मः सुसमर्थोऽयमस्माभिः सहितो रणे।
परान् विजेतुं तस्मात्ते व्येतु भीर्भरतर्षभ। इत्येषां निश्चयो ह्यासीत् तत्कालेऽमिततेजसां। २१९५
पुरा परेषां पृथिवी कृत्स्नासीद् वशवर्त्तिनी। अस्मान् पुनरमी नाद्य समर्था जेतुमाहवे।

छिन्नपक्षाः परे ह्यद्य वीर्य्यहीनाश्च पाण्डवाः। अस्मत्संस्था च पृथिवी वर्त्तते भरतर्षभ।
एकार्थाः सुखदुःखेषु समानीताश्च पार्थिवाः। अप्यग्निं प्रविशेयुस्ते समुद्रं वा परन्तप।
मदर्थं पार्थिवाः सर्व्वे तद्विद्धि कुरुसत्तम। उन्मत्तमिव चापि त्वां प्रहसन्तीह दुःखितं।
विलपन्तं बहुविधं भीतं परविकत्थने। एषां ह्येकैकशो राज्ञां समर्थः पाण्डवान् प्रति। २१७०
आत्मानं मन्यते सर्व्वो व्येतु ते भयमागतं। जेतुं समग्रां सेनां मे वासवोऽपि न शक्नुयात्।
हन्तुमक्षय्यरूपेयं ब्रह्मणोऽपि स्वयम्भुवः। युधिष्ठिरः पुरं हित्वा पञ्च ग्रामान् स याचते।
भीतो हि मामकात् सैन्यात् प्रभावाच्चैव मे विभो। समर्थं मन्यसे यच्च कुन्तीपुत्रं वृकोदरं।
तन्मिथ्या न हि मे कृत्स्नं प्रभावं वेत्सि भारत। मत्समो हि गदायुद्धे पृथिव्यां नास्ति कश्चन।
नासीत् कश्चिदतिक्रान्तो भविता न च कश्चन। युक्तो दुःखोचितश्चाहं विद्यापारगतस्तथा। २१७५
तस्मान्न भीमादन्येभ्यो भयं मे विद्यते क्वचित्। दुर्य्योधनसमो नास्ति गदायामिति निश्चयः।
सङ्कर्षणस्य भद्रं ते यत्तदैनमुपावसं। युद्धे सङ्कर्षणसमो बलेनाभ्यधिको भुवि।
गदाप्रहारं भीमो मे न जातु विषहेद् युधि। एकं प्रहारं यं दद्यां भीमाय रुषितो नृप।
स एवैनं नयेत् घोरः क्षिप्रं वैवस्वतक्षयं। इच्छेयञ्च गदाहस्तं राजन् द्रष्टुं वृकोदरं।
सुचिरं प्रार्थितो ह्येष मम नित्यमनोरथः। गदया निहतो ह्याजौ मया पार्थो वृकोदरः। २१८०
विशीर्णगात्रः पृथिवीं परासुः प्रपतिष्यति। गदाप्रहाराभिहतो हिमवानपि पर्व्वतः।
सकृन्मया विशीर्य्येत गिरिः शतसहस्रधा। स चाप्येतद् विजानाति वासुदेवार्ज्जुनौ तथा।
दुर्य्योधनसमो नास्ति गदायामिति निश्चयः। तत्ते वृकोदरमयं भयं व्येतु महाहवे।
व्यपनेष्याम्यहं ह्येनं मा राजन् विमना भव। तस्मिन् मया हते क्षिप्रमर्ज्जुनं बहवो रथाः।
तुल्यरूपा विशिष्टा वा क्षेप्स्यन्ति भरतर्षभ। भीष्मो द्रोणः कृपो द्रौणिः कर्णो भूरिश्रवास्तथा। २१८५
प्राग्ज्योतिषाधिपः शल्यः सिन्धुराजो जयद्रथः। एकैक एषां शक्तस्तु हन्तुं भारत पाण्डवान्।
समेतास्तु क्षणेनैतान्नेष्यन्ति यमसादनं। समग्रा पार्थिवीसेना पार्थमेकं धनञ्जयं।
कस्मादशक्ता निर्ज्जेतुमिति हेतुर्न विद्यते। शरव्रातैस्तु भीष्मेण शतशोऽथ सहस्रशः।
द्रोणद्रौणिकृपैश्चैव गन्ता पार्थो यमक्षयं। पितामहोऽपि गाङ्गेयः शान्तनोरधि भारत।
ब्रह्मर्षिसदृशो जज्ञे देवैरपि सुदुःसहः। न हन्ता विद्यते चापि राजन् भीष्मस्य कश्चन। २१९०
पित्रा ह्युक्तः प्रसन्नेन नाकामस्त्वं मरिष्यसि। ब्रह्मर्षेश्च भरद्वाजात् द्रोणो द्रोण्यामजायत।
द्रोणाज्जज्ञे महाराज द्रौणिश्च परमास्त्रवित्। कृपश्चाचार्य्यमुख्योऽयं महर्षेर्गौतमादपि।
शरस्तम्बोद्भवः श्रीमानवध्य इति मे मतिः। अयोनिजास्त्रयस्त्वेते पिता माता च मातुलः।
अश्वत्थाम्नो महाराज स च शूरः स्थितो मम। सर्व्व एते महाराज देवकल्पा महारथाः।
शक्रस्यापि व्यथां कुर्य्युः संयुगे भरतर्षभ। नैतेषामर्ज्जुनः शक्त एकैकं प्रतिवीक्षितुं। २१९५
सहितास्तु नरव्याघ्र हनिष्यन्ति धनञ्जयं। भीष्मद्रोणकृपाणाञ्च तुल्यः कर्णो मतो मम।

अनुज्ञातश्च रामेण मत्समोऽसीति भारत। कुण्डले रुचिरे चास्य कर्णस्य सहजे शुभे।
ते शच्यर्थे महेन्द्रेण याचितः स परन्तपः। अमोघया महाराज शक्त्या परमभीमया।
तस्य शक्त्योपगूढस्य कस्माज्जीवेद्धनञ्जयः। विजयो मे ध्रुवं राजन् फलं पाणाविवाहितं।
अभिव्यक्तः परेषाञ्च कृत्स्नो भुवि पराजयः। अह्ना ह्येकेन भीष्मोऽयं प्रयुतं हन्ति भारत। २२००
तत्समाश्च महेष्वासा द्रोणद्रौणिकृपा अपि। संशप्तकानां वृन्दानि क्षत्रियाणां परन्तप।
अर्ज्जुनं वयमस्मान्वा निहन्यात् कपिकेतनः। तच्चालमिति मन्यन्ते सव्यसाचिवधे कृताः।
पार्थिवाः स भवांस्तेभ्यो ह्यकस्माद्व्यथते कथं। भीमसेने च निहते कोऽन्यो युध्येत भारत।
परेषां तन्ममाचक्ष्व यदि वेत्थ परन्तप। पञ्च ते भ्रातरः सर्व्वे धृष्टद्युम्नोऽथ सात्यकिः।
परेषां समरे राजन् योधाः सारं बलं मतं। अस्माकन्तु विशिष्टा ये भीष्मद्रोणकृपादयः। २२०५
द्रौणिर्व्वैकर्त्तनः कर्णः सोमदत्तोऽथ बाह्लिकः। प्राग्ज्योतिषाधिपः शल्य आवन्त्योऽथ जयद्रथः।
दुःशासनो दुःसहश्च दुर्मुखश्च विशाम्पते। श्रुतायुश्चित्रसेनश्च पुरुमित्रो विविंशतिः।
शलो भूरिश्रवाश्चैव विकर्णश्च तवात्मजः। अक्षौहिण्यो हि मे राजन् दशैका च समाहृताः।
न्यूनाः परेषां सप्तैव कस्मान्मे स्यात् पराजयः। बलं त्रिगुणतो हीनं योध्यं प्राह बृहस्पतिः।
परेभ्यस्त्रिगुणा चेयं मम राजन्ननीकिनी। गुणहीनं परेषाञ्च बहु पश्यामि भारत। २२१०
गुणोदयं बहुगुणमात्मनश्च विशाम्पते। एतत् सर्व्वं समाज्ञाय बलाग्र्यं मम भारत।
न्यूनतां पाण्डवानाञ्च न मोहं गन्तुमर्हसि। इत्युक्त्वा सञ्जयं भूयः पर्य्यपृच्छत भारत।
विवित्सुः प्राप्तकालानि ज्ञात्वा परपुरञ्जयः।
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि दुर्य्योधनवाक्ये चतुःपञ्चाशोऽध्यायः॥ ५४ ॥
॥ दुर्य्योधन उवाच ॥ अक्षौहिणीः सप्त लब्ध्वा राजभिः सह सञ्जय। किंस्विदिच्छति कौन्तेयो युद्धप्रेप्सुर्युधिष्ठिरः।
॥ सञ्जय उवाच ॥ अतीव मुदितो राजन् युद्धप्रेप्सुर्युधिष्ठिरः। भीमसेनार्ज्जुनौ चोभौ यमावपि न बिभ्यतः। २२१५
रथन्तु दिव्यं कौन्तेयः सर्व्वा विभ्राजयन्दिशः। मन्त्रं जिज्ञासमानः सन् बीभत्सुः समयोजयत्।
तमपश्याम सन्नद्धं मेघं विद्युद्युतं यथा। समन्तात् समभिध्याय हृष्यमाणोऽभ्यभाषत।
पूर्व्वरूपमिदं पश्य वयं जेष्याम सञ्जय। बीभत्सुर्मां यथोवाच तथाऽवैम्यहमप्युत।
॥ दुर्य्योधन उवाच ॥ प्रशंसस्यभिनन्दंस्तान् पार्थानक्षपराजितान्। अर्ज्जुनस्य रथे ब्रूहि कथमश्वाः कथं ध्वजाः।
॥ सञ्जय उवाच ॥ भौमनः सह शक्रेण बहुचित्रं विशाम्पते। रूपाणि कल्पयामास त्वष्टा धाता सदा विभो। २२२०
ध्वजे हि तस्मिन् रूपाणि चक्रुस्ते देवमायया। महाधनानि दिव्यानि महान्ति च लघूनि च।
भीमसेनानुरोधाय हनूमान् मारुतात्मजः। आत्मप्रतिकृतिं तस्मिन् ध्वज आरोपयिष्यति।
सर्व्वा दिशो योजनमात्रमन्तरं स तिर्य्यगूर्द्धञ्च रुरोध वै ध्वजः। न सज्जतेऽसौ तरुभिः संवृतोऽपि तथा हि माया विहिता भौमनेन।
यथाकाशे शक्रधनुः प्रकाशते न चैकवर्णं न च विद्म किन्नु तत्। तथा ध्वजो विहितो भौमनेन बह्वाकारं दृश्यते रूपमस्य।

यथाऽग्निधूमो दिवमेति रुद्ध्वा वर्णान् बिभ्रत् तैजसांश्चित्ररूपान्। तथा ध्वजो विहितो भीमसेन न चेद्धारो भविता नोत रोधः। २२२५

श्वेतास्तस्मिन् वातवेगाः सदश्वा दिव्या रथाश्चित्ररथेन दत्ताः। भुव्यन्तरीक्षे दिवि वा नरेन्द्र एषां गतिर्हीयते नात्र सर्व्वा।
शतं यत्तत्पूर्य्यते नित्यकालं हतं हतं दत्तवरं पुरस्तात्। तथा राज्ञो दन्तवर्णा बृहन्तो रथे युक्ता भान्ति तद्वीर्य्यतुल्याः।
ऋश्यप्रख्या भीमसेनस्य वाहा रथे वायोस्तुल्यवेगा बभूवुः। कल्माषाङ्गास्तित्तिरिचित्रपृष्ठा भ्राता दत्ताः प्रीयता फाल्गुनेन।
भ्रातुर्वीरस्य स्वैस्तुरङ्गैर्व्विशिष्टा मुदा युक्ताः सहदेवं वहन्ति। माद्रीसुतं नकुलं त्वाजमीढं महेन्द्रदत्ता हरयो वाजिमुख्याः।
समा वायोर्बलवन्तस्तरस्विनो वहन्ति वीरं वृत्रशत्रुं यथेन्द्रं। तुल्याश्चैभिर्व्वयसा विक्रमेण महाजवाश्चित्ररूपाः सदश्वाः।२२३०

सौभद्रादीन् द्रौपदेयान् कुमारान् वहन्त्यश्वा देवदत्ता बृहन्तः।

इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

॥ धृतराष्ट्र उवाच ॥ कांस्तत्र सञ्जयापश्यः प्रीत्यर्थेन समागतान्। ये योत्स्यन्ते पाण्डवार्थे पुत्त्रस्य मम वाहिनीं।
॥ सञ्जय उवाच ॥ मुख्यमन्धकवृष्णीनामपश्यं कृष्णमागतं। चेकितानञ्च तत्रैव युयुधानञ्च सात्यकिं।
पृथगक्षौहिणीभ्यां तु पाण्डवानभिसंश्रितौ। महारथौ समाख्यातावुभौ पुरुषमानिनौ।
अक्षौहिण्याऽथ पाञ्चाल्यो दशभिस्तनयैर्वृतः। सत्यजित्प्रमुखैर्व्वीरैर्धृष्टद्युम्नपुरोगमैः। २२३५
द्रुपदो वर्द्धयन्मानं शिखण्डिपरिपालितः। उपायात् सर्व्वसैन्यानां प्रतिच्छाद्य तदा वपुः।
विराटः सहपुत्त्राभ्यां शङ्खेनैवोत्तरेण च। सूर्य्यदत्तादिभिर्व्वीरैर्मदिराश्वपुरोगमैः।
सहितः पृथिवीपालो भ्रातृभिस्तनयैस्तथा। अक्षौहिण्यैव सैन्यानां वृतः पार्थं समाश्रितः।
जारासन्धिर्मागधश्च धृष्टकेतुश्च चेदिराट्। पृथक् पृथगनुप्राप्तौ पृथगक्षौहिणीवृतौ।
केकया भ्रातरः पञ्च सर्व्वे लोहितकध्वजाः। अक्षौहिणीपरिवृताः पाण्डवानभिसंश्रिताः। २२४०
एतानेतावतस्तत्र यानपश्यं समागतान्। ये पाण्डवार्थे योत्स्यन्ति धार्त्तराष्ट्रस्य वाहिनीं।
यो वेद मानुषं व्यूहं दैवं गान्धर्व्वमासुरं। स तत्र सेनाप्रमुखे धृष्टद्युम्नो महारथः।
भीष्मः शान्तनवो राजन् भागः कॢप्तः शिखण्डिनः। तं विराटोऽभिसंयाता सार्द्धं मत्स्यैः प्रहारिभिः।
ज्येष्ठस्य पाण्डुपुत्त्रस्य भागो मद्राधिपो बली। तौ तु तत्राब्रुवन् केचित् विषमौ नो मताविति।
दुर्य्योधनः सहसुतः सार्द्धं भ्रातृशतेन च। प्राच्याश्च दाक्षिणात्याश्च भीमसेनस्य भागतः। २२४५
अर्ज्जुनस्य तु भागेन कर्णो वैकर्त्तनो मतः। अश्वत्थामा विकर्णश्च सैन्धवश्च जयद्रथः।
अशक्याश्चैव ये केचित् पृथिव्यां शूरमानिनः। सर्व्वांस्तानर्ज्जुनः पार्थः कल्पयामास भागतः।
महेष्वासा राजपुत्त्रा भ्रातरः पञ्च केकयाः। केकयानेव भागेन कृत्वा योत्स्यन्ति संयुगे।
तेषामेव कृतो भागो मालवाः शाल्वकास्तथा। त्रिगर्त्तानाञ्च वै मुख्यौ यौ तौ संशप्तकाविति।
दुर्य्योधनसुताः सर्व्वे तथा दुःशासनस्य च। सौभद्रेण कृतो भागो राजा चैव बृहद्बलः। २२५०
द्रौपदेया महेष्वासाः सुवर्णविकृतध्वजाः। धृष्टद्युम्नमुखा द्रोणमभियास्यन्ति भारत।
चेकितानः सोमदत्तं द्वैरथे योद्धुमिच्छति। भोजन्तु कृतवर्म्माणं युयुधानो युयुत्सति।

सहदेवस्तु माद्रेयः शूरः सङ्क्रन्दनो युधि । स्वयं सङ्कल्पयामास भागं ते सुबलात्मजं ।
उलूकं चैव कैतव्यं ये च सारस्वता गणाः । नकुलः कल्पयामास भागं माद्रवतीसुतः ।
ये चान्ये पार्थिवा राजन् प्रत्युद्यास्यन्ति संयुगे । समाह्वानेन तांश्चापि पाण्डुपुत्रा अकल्पयन् । २२५५
एवमेषामनीकानि प्रविभक्तानि भागशः । यत्ते कार्य्यं सपुत्रस्य क्रियतां तदकालिकं ।
॥ धृतराष्ट्र उवाच ॥ न सन्ति सर्व्वे पुत्रा मे मूढा दुर्द्यूतदेविनः । येषां युद्धं बलवता भीमेन रणमूर्द्धनि ।
राजानः पार्थिवाः सर्व्वे प्रोक्षिताः कालधर्म्मणा । गाण्डीवाग्निं प्रवेक्ष्यन्ति पतङ्गा इव पावकं ।
विद्रुतां वाहिनीं मन्ये कृतवैरैर्महात्मभिः । तां रणे केऽनुयास्यन्ति प्रभग्नां पाण्डवैर्युधि ।
सर्व्वे ह्यतिरथाः शूराः कीर्त्तिमन्तः प्रतापिनः । सूर्य्यपावकयोस्तुल्यास्तेजसा समितिञ्जयाः । २२६०
येषां युधिष्ठिरो नेता गोप्ता च मधुसूदनः । योधौ च पाण्डवौ वीरौ सव्यसाचिवृकोदरौ ।
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः । सात्यकिर्द्रुपदश्चैव धृष्टद्युम्नश्च सानुजः ।
उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्ज्जयः । शिखण्डी क्षत्त्रदेवश्च तथा वैराटिरुत्तरः ।
काशयश्चेदयश्चैव मत्स्याः सर्व्वे च सृञ्जयाः । विराटपुत्रो बभ्रुश्च पाञ्चालाश्च प्रभद्रकाः ।
येषामिन्द्रोऽप्यकामानां न हरेत् पृथिवीमिमां । वीराणां रणधीराणां ये भिन्द्युः पर्व्वतानपि । २२६५
तान् सर्व्वगुणसम्पन्नानमनुष्यप्रतापिनः । क्रोशतो मम दुष्पुत्रो योद्धुमिच्छति सञ्जय ।
॥ दुर्य्योधन उवाच ॥ उभौ स्व एकजातीयौ तथोभौ भूमिगोचरौ । अथ कस्मात् पाण्डवानामेकतो मन्यसे जयं ।
पितामहञ्च द्रोणञ्च कृपं कर्णञ्च दुर्ज्जयं । जयद्रथं सोमदत्तमश्वत्थामानमेव च ।
सुतेजसो महेष्वासानिन्द्रोऽपि सहितोऽमरैः । अशक्तः समरे जेतुं किं पुनस्तात पाण्डवाः ।
सर्व्वे च पृथिवीपाला मदर्थे तात पाण्डवान् । आर्य्या शस्त्रभृतः शूराः समर्थाः प्रतिबाधितुं । २२७०
न मामकान् पाण्डवास्ते समर्थाः प्रतिवीक्षितुं । पराक्रान्तो ह्यहं पाण्डून् सपुत्रान् योद्धुमाहवे ।
मत्प्रियं पार्थिवाः सर्व्वे ये चिकीर्षन्ति भारत । ते तानावारयिष्यन्ति ऐणेयानिव तन्तुना ।
महता रथवंशेन शरजालैश्च मामकैः । अभिद्रुता भविष्यन्ति पाञ्चालाः पाण्डवैः सह ।
॥ धृतराष्ट्र उवाच ॥ उन्मत्त इव मे पुत्रो विलपत्येष सञ्जय । नहि शक्तो रणे जेतुं धर्म्मराजं युधिष्ठिरं ।
जानाति हि यथा भीष्मः पाण्डवानां यशस्विनां । बलवत्तां सपुत्राणां धर्म्मज्ञानां महात्मनां । २२७५
यतो नारोचयदयं विग्रहं तैर्महात्मभिः । किन्तु सञ्जय मे ब्रूहि पुनस्तेषां विचेष्टितं ।
कस्तांस्तरस्विनो भूयः सन्दीपयति पाण्डवान् । अर्च्चिष्मतो महेष्वासान् हविषा पावकानिव ।
॥ सञ्जय उवाच ॥ धृष्टद्युम्नः सदैवतान् सन्दीपयति भारत । युध्यध्वमिति माभैष्ट युद्धाद्भरतसत्तमाः ।
ये केचित् पार्थिवास्तत्र धार्त्तराष्ट्रेण संवृताः । युद्धे समागमिष्यन्ति तुमुले शस्त्रसङ्कुले ।
तान् सर्व्वानाहवे क्रुद्धान् सानुबन्धान् समागतान् । अहमेकः समादास्ये तिमिर्मत्स्यानिवौदकात् । २२८०
भीष्मं द्रोणं कृपं कर्णं द्रौणिं शल्यं सुयोधनं । एतांश्चापि निरोत्स्यामि वेलेव मकरालयं ।
तथा ब्रुवन्तं धर्म्मात्मा प्राह राजा युधिष्ठिरः । तव धैर्य्यञ्च वीर्य्यञ्च पाञ्चालाः पाण्डवैः सह ।
सर्व्वे समधिरूढाः स्म सङ्ग्रामात् समुद्धर । जानामि त्वां महाबाहो क्षत्त्रधर्म्मे व्यवस्थितं ।

समर्थमेकं पर्य्याप्तं कौरवाणां विनिग्रहे। पुरस्तादुपयातानां कौरवाणां युयुत्सतां।
भवता यद्विधातव्यं तन्नः श्रेयः परन्तप। सङ्ग्रामादपयातानां भग्नानां शरणैषिणां। २२८५
पौरुषं दर्शयन् शूरो यस्तिष्ठेदग्रतः पुमान्। क्रीणीयात्तं सहस्रेण इति नीतिमतां मतं।
स त्वं शूरश्च वीरश्च विक्रान्तश्च नरर्षभ। भयार्त्तानां परित्राता संयुगेषु न संशयः।
एवं ब्रुवति कौन्तेये धर्म्मात्मनि युधिष्ठिरे। धृष्टद्युम्न उवाचेदं मां वचो गतसाध्वसं।
सर्व्वान् जनपदान् सूत तथा दुर्य्योधनस्य ये। सबाह्लिकान् कुरून् ब्रूयाः प्रातिपेयान् शरद्वतः।
सूतपुत्रं तथा द्रोणं सहपुत्रं जयद्रथं। दुःशासनं विकर्णञ्च तथा दुर्य्योधनं नृपं। २२९०
भीष्मञ्च ब्रूहि गत्वा त्वमाशु गच्छत मा चिरं।
युधिष्ठिरः साधुनैवाभ्युपेयो मा वोऽवधीदर्ज्जुनो देवगुप्तः। राज्यं दातुं धर्म्मराजस्य तूर्णं याचध्वं वै पाण्डवं लोकवीरं।
नैतादृशो हि योधोऽस्ति पृथिव्यामिह कश्चन। यथाविधः सव्यसाची पाण्डवः सत्यविक्रमः।
देवैर्हि संभृतो दिव्यो रथो गाण्डीवधन्वनः। न स जेयो मनुष्येण मास्म कृध्वं मनो युधि।
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ धृतराष्ट्र उवाच ॥ क्षत्रतेजा ब्रह्मचारी कौमारादपि पाण्डवः। तेन संयुगमेष्यन्ति मन्दा विलपतो मम। २२९५
दुर्य्योधन निवर्त्तस्व युद्धाद्भरतसत्तम। नहि युद्धं प्रशंसन्ति सर्व्वावस्थमरिन्दम।
अलमर्द्धं पृथिव्यास्ते सहामात्यस्य जीवितुं। प्रयच्छ पाण्डुपुत्राणां यथोचितमरिन्दम।
एतद्धि कुरवः सर्व्वे मन्यन्ते धर्म्मसंहितं। यत्त्वं प्रशान्तिं मन्येथाः पाण्डुपुत्रैर्महात्मभिः।
अङ्गेमां समवेक्षस्व पुत्र स्वामेव वाहिनीं। जात एष तवाभावस्त्वं तु मोहान्न बुध्यसे।
न ह्यहं योद्धुमिच्छामि नैतदिच्छति बाह्लिकः। नच भीष्मो नच द्रोणो नाश्वत्थामा न सञ्जयः। २३००
न सोमदत्तो न शल्यो न कृपो योद्धुमिच्छति। सत्यव्रतः पुरुमित्रो जयो भूरिश्रवास्तथा।
येषु सम्प्रतितिष्ठेयुः कुरवः पीडिताः परैः। ते योद्धुं नाभिनन्दन्ति तत्तुभ्यं तात रोचतां।
न त्वं करोषि कामेन कर्णः कारयिता तव। दुःशासनश्च पापात्मा शकुनिश्चापि सौबलः।
॥ दुर्य्योधन उवाच ॥ नाहं भवति न द्रोणे नाश्वत्थाम्नि न सञ्जये। न भीष्मे नच काम्बोजे न कृपे नच बाह्लिके।
सत्यव्रते पुरुमित्रे भूरिश्रवसि वा पुनः। अन्येषु वा तावकेषु भारं कृत्वा समाह्वये। २३०५
अहञ्च तात कर्णश्च रणयज्ञं वितत्य वै। युधिष्ठिरं पशुं कृत्वा दीक्षितौ पुरुषर्षभौ।
रथो वेदी स्रुवः खड्गो गदा स्रुक् कवचं सदः। चातुर्होत्रञ्च धुर्य्या मे शरा दर्भा हविर्यशः।
आत्मयज्ञेन नृपते इष्ट्वा वैवस्वतं रणे। विजित्य च समेष्यावो हतामित्रौ श्रियावृतौ।
अहञ्च तात कर्णश्च भ्राता दुःशासनश्च मे। एते वयं हनिष्यामः पाण्डवान् समरे त्रयः।
अहं हि पाण्डवान् हत्वा प्रशास्ता पृथिवीमिमां। मां वा हत्वा पाण्डुपुत्रा भोक्तारः पृथिवीमिमां। २३१०
त्यक्तं मे जीवितं राज्यं धनं सर्व्वञ्च पार्थिव। न जातु पाण्डवैः सार्द्धं वसेयमहमच्युत।
यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण मारिष। तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान् प्रति।

॥ धृतराष्ट्र उवाच ॥ सर्व्वान् वदतात् शोचामि त्यक्तो दुर्य्योधनो मया। ये मन्दमनुयास्यध्वं यान्तं वैवस्वतक्षयं।
रुरूणामिव यूथेषु व्याघ्रः प्रहरतां वरः। वरान् वरान् हनिष्यन्ति समेता युधि पाण्डवाः।
प्रतीपमिव मे भाति युयुधानेन भारती। व्यस्ता सीमन्तिनी त्रस्ता प्रमृष्टा दीर्घबाहुना। २११५
सम्पूर्णं पूरयन् भूयो बलं पार्थस्य माधवः। शैनेयः समरे स्थाता बीजवत् प्रवपन् शरान्।
सेनामुखे प्रयुद्धानां भीमसेनो भविष्यति। तं सर्व्वे संश्रयिष्यन्ति प्राकारमकुतोभयं।
यदा द्रक्ष्यसि भीमेन कुञ्जरान् विनिपातितान्। विशीर्णदन्तान् गिर्य्याभान् भिन्नकुम्भान् सशोणितान्।
तानभिप्रेक्ष्य सङ्ग्रामे विशीर्णानिव पर्व्वतान्। भीतो भीमस्य संस्पर्शात् स्मर्त्तासि वचनस्य मे।
निर्द्दग्धं भीमसेनेन सैन्यं हतरथद्विपं। गतिमग्नेरिव प्रेक्ष्य स्मर्त्तासि वचनस्य मे। २१२०
महद्वो भयमागामि न चेच्छाम्यथ पाण्डवैः। गदया भीमसेनेन हताः शममुपैष्यथ।
महावनमिव छिन्नं यदा द्रक्ष्यसि पातितं। बलं कुरूणां भीमेन तदा स्मर्त्तासि मे वचः।
॥ वैशम्पायन उवाच ॥ एतावदुक्त्वा राजा तु सर्व्वांस्तान् पृथिवीपतीन्। अनुभाष्य महाराज पुनः पप्रच्छ सञ्जय।
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि धृतराष्ट्रवाक्ये सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
॥ धृतराष्ट्र उवाच ॥ यदब्रूतां महात्मानौ वासुदेवधनञ्जयौ। तन्मे ब्रूहि महाप्राज्ञ शुश्रूषे वचनं तव।
॥ सञ्जय उवाच ॥ शृणु राजन् यथा दृष्टौ मया कृष्णधनञ्जयौ। ऊचतुश्चापि यद्वीरौ तत्ते वक्ष्यामि भारत।
पादाङ्गुलीरभिप्रेक्ष्य प्रयतोऽहं कृताञ्जलिः। शुद्धान्तं प्राविशं राजन्नाख्यातुं नरदेवयोः। २१२५
नैवाभिमन्युर्न यमौ तं देशमभियान्ति वै। यत्र कृष्णौ च कृष्णा च सत्यभामा च भामिनी।
उभौ मध्वासवक्षीवावुभौ चन्दनरूषितौ। स्रग्विणौ वरवस्त्रौ तौ दिव्याभरणभूषितौ।
नैकरत्नविचित्रन्तु काञ्चनं महदासनं। विविधास्तरणाकीर्णं यत्रासातामरिन्दमौ।
अर्ज्जुनोत्सङ्गगौ पादौ केशवस्योपलक्षये। अर्ज्जुनस्य च कृष्णायां सत्यायाश्च महात्मनः।
काञ्चनं पादपीठन्तु पार्थो मे प्रादिशत् तदा। तदहं पाणिना स्पृष्ट्वा ततो भूमावुपाविशं। २१३०
ऊर्द्ध्वरेखतलौ पादौ पार्थस्य शुभलक्षणौ। पादपीठादपहृतौ तत्रापश्यमहं शुभौ।
श्यामौ बृहन्तौ तरुणौ शालस्कन्धाविवोद्गतौ। एकासनगतौ दृष्ट्वा भयं मां महदाविशत्।
इन्द्रविष्णुसमावेतौ मन्दात्मा नावबुध्यते। संश्रयात् भीष्मद्रोणाभ्यां कर्णस्य च विकत्थनात्।
निदेशस्थाविमौ यस्य मानसस्तस्य सेत्स्यते। सङ्कल्पो धर्म्मराजस्य निश्चयो मे तदाऽभवत्।
सत्कृतश्चान्नपानाभ्यामाच्छन्नो लब्धसत्क्रियः। अञ्जलिं मूर्द्ध्नि सन्धाय तौ सन्देशमचोदयं। २१३५
धनुर्गुणकिणाङ्केन पाणिना शुभलक्षणं। पादमानमयन् पार्थः केशवं समचोदयत्।
इन्द्रकेतुरिवोत्थाय सर्व्वाभरणभूषितः। इन्द्रवीर्य्योपमः कृष्णः संविष्टो मामभाषत।
वाचं संवदतां श्रेष्ठो ह्लादिनीं वचनक्षमां। त्रासनीं धार्त्तराष्ट्राणां मृदुपूर्व्वां सुदारुणां।
वाचं तां वचनार्हस्य शिक्षाक्षरसमन्वितां। अश्रौषमहमिष्टार्थां पश्चाद्धृदयहारिणीं।
॥ वासुदेव उवाच ॥ सञ्जयेदं वचो ब्रूया धृतराष्ट्रं मनीषिणं। कुरुमुख्यस्य भीष्मस्य द्रोणस्यापि च शृण्वतः। २१४०

आवयोर्वचनात् सूत ज्येष्ठानप्यभिवादयन्। यवीयसश्च कुशलं पश्चात् पृष्ट्वैवमुत्तरं।
यजध्वं विविधैर्यज्ञैर्विप्रेभ्यो दत्त दक्षिणाः। पुत्रैर्दारैश्च मोदध्वं महद्वो भयमागतं।
अर्थांस्त्यजत पात्रेभ्यः सुतान् प्राप्नुत कामजान्। प्रियं प्रियेभ्यश्चरत राजा हि त्वरते जये।
ऋणमेतत् प्रवृद्धं मे हृदयान्नापसर्प्पति। यद्गोविन्देति चुक्रोश कृष्णा मां दूरवासिनं।
तेजोमयं दुराधर्षं गाण्डीवं यस्य कार्म्मुकं। मद्द्वितीयेन तेनेह वैरं वः सव्यसाचिना। २२५०
मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमिच्छति। यो न कालपरीतो वाऽप्यपि साक्षात् पुरन्दरः।
बाहुभ्यामुद्वहेत् भूमिं दहेत् क्रुद्ध इमाः प्रजाः। पातयेत् त्रिदिवाद्देवान् योऽर्ज्जुनं समरे जयेत्।
देवासुरमनुष्येषु यक्षगन्धर्व्वभोगिषु। न तं पश्याम्यहं युद्धे पाण्डवं योऽभ्ययाद्रणे।
यत्तद्विराटनगरे श्रूयते महदद्भुतं। एकस्य च बहूनाञ्च पर्य्याप्तं तन्निदर्शनं।
एकेन पाण्डुपुत्रेण विराटनगरे यदा। भग्नाः पलायत दिशः पर्य्याप्तं तन्निदर्शनं। २२५५
बलं वीर्य्यञ्च तेजश्च शीघ्रता लघुहस्तता। अविषादश्च धैर्य्यञ्च पार्थान्नान्यत्र विद्यते।
इत्यब्रवीद्धृषीकेशः पार्थमुद्धर्षयन् गिरा। गर्ज्जन् समयवर्षीव गगने पाकशासनः।
केशवस्य वचः श्रुत्वा किरीटी श्वेतवाहनः। अर्ज्जुनस्तन्महद्वाक्यमब्रवीद्रोमहर्षणं।
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये अष्टपञ्चाशोऽध्यायः॥ ५८ ॥
॥ वैशम्पायन उवाच॥ सञ्जयस्य वचः श्रुत्वा प्रज्ञाचक्षुर्जनेश्वरः। ततः संख्यातुमारेभे तद्वचो गुणदोषतः।
प्रसंख्याय च सौक्ष्म्येण गुणदोषान् विचक्षणः। यथावन्मतितत्त्वेन जयकामः सुतान् प्रति। २२६०
बलाबलं विनिश्चित्य याथातथ्येन बुद्धिमान्। शक्तिं संख्यातुमारेभे तदा वै मनुजाधिपः।
देवमानुषयोः शक्त्या तेजसा चैव पाण्डवान्। कुरून् शक्त्याऽल्पतरया दुर्य्योधनमथाब्रवीत्।
दुर्य्योधनेयं चिन्ता मे शश्वन्न व्युपशाम्यति। सत्यं ह्येतदहं मन्ये प्रत्यक्षं नानुमानतः।
आत्मजेषु परं स्नेहं सर्व्वभूतानि कुर्व्वते। प्रियाणि चैषां कुर्व्वन्ति यथाशक्ति हितानि च।
एवमेवोपकर्त्तॄणां प्रायशो लक्षयामहे। इच्छन्ति बहुलं सन्तः प्रतिकर्त्तुं महत्प्रियं। २२६५
अग्निः साचिव्यकर्त्ता स्यात् खाण्डवे तत्कृतं स्मरन्। अर्ज्जुनस्यापि भीमेऽस्मिन् कुरुपाण्डुसमागमे।
जातिगृद्ध्याऽभिपन्नाश्च पाण्डवानामनेकशः। धर्म्मादयः समेष्यन्ति समाहूता दिवौकसः।
भीष्मद्रोणकृपादीनां भयादशनिसम्मितं। रिरक्षिषन्तः संरम्भं गमिष्यन्तीति मे मतिः।
ते देवैः सहिताः पार्था न शक्याः प्रतिवीक्षितुं। मानुषेण नरव्याघ्रा वीर्य्यवन्तोऽस्त्रपारगाः।
दुरासदं यस्य दिव्यं गाण्डीवं धनुरुत्तमं। वारुणौ चाक्षयौ दिव्यौ शरपूर्णौ महेषुधी। २२७०
वानरश्च ध्वजो दिव्यो निःसङ्गो धूमवद्गतिः। रथश्च चतुरन्तायां यस्य नास्ति समः क्षितौ।
महामेघनिभश्चापि निर्घोषः श्रूयते जनैः। महाशनिसमः शब्दः शात्रवाणां भयङ्करः।
यश्चातिमानुषं वीर्य्यं कृत्स्नो लोको व्यवस्यति। देवानामपि जेतारं यं विदुः पार्थिवा रणे।
शतानि पञ्च चैवेषून् यो गृह्णन्निव दृश्यते। निमेषान्तरमात्रेण मुञ्चन् दूरञ्च पातयन्।

यमाह भीष्मो द्रोणश्च कृपो द्रौणिस्तथैव च । मद्रराजस्तथा शल्यो मध्यस्था ये च मानवाः । २१७५
युद्धायावस्थितं पार्थं पार्थिवैरतिमानुषैः । अशक्यं रथशार्दूलं पराजेतुमरिन्दमं ।
सहस्रं बाहुवीर्य्येण कार्त्तवीर्य्यस्य पाण्डवं । क्षिपत्येकेन वेगेन पञ्चवाणशतानि यः ।
तमर्ज्जुनं महेष्वासं महेन्द्रोपेन्द्रविक्रमं । निघ्नन्तमिव पश्यामि विमर्द्देऽस्मिन्महाहवे ।
इत्येवं चिन्तयन् कृत्स्नमहोरात्राणि भारत । अनिद्रो निःसुखश्चास्मि कुरूणां शमचिन्तया ।
क्षयोदयोऽयं सुमहान् कुरूणां प्रत्युपस्थितः । अस्य चेत् कलहस्यान्तः शमादन्यो न विद्यते । २१८०
शमो मे रोचते नित्यं पार्थैस्तात न विग्रहः । कुरुभ्यो हि सदा मन्ये पाण्डवान् शक्तिमत्तरान् ।
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि धृतराष्ट्रविवेचने एकोनषष्टोऽध्यायः ॥ ५९ ॥
॥ वैशम्पायन उवाच ॥ पितुरेतद्वचः श्रुत्वा धार्त्तराष्ट्रोऽत्यमर्षणः । आधाय विपुलं क्रोधं पुनरेवेदमब्रवीत् ।
अशक्या देवसचिवाः पार्थाः स्युरिति यद्भवान् । मन्यते तद्भयं व्येतु भवतो राजसत्तम ।
अकामद्वेषसंयोगात् लोभात् द्रोहाच्च भारत । उपेक्षया च भावानां देवा देवत्वमाप्नुवन् ।
इति द्वैपायनो व्यासो नारदश्च महातपाः । जामदग्न्यश्च रामो नः कथामकथयत् पुरा । २१८५
नैव मानुषवद्देवाः प्रवर्त्तन्ते कदाचन । कामात् क्रोधात् तथा लोभात् द्वेषाच्च भरतर्षभ ।
यदा ह्यग्निश्च वायुश्च धर्म्म इन्द्रोऽश्विनावपि । कामयोगात् प्रवर्त्तेरन्न पार्था दुःखमाप्नुयुः ।
तस्मान्न भवता चिन्ता कार्य्यैवा स्यात् कथञ्चन । दैवेष्वपेक्षका ह्येते शश्वद्भावेषु भारत ।
अथ चेत् कामसंयोगात् द्वेषो लोभश्च लक्ष्यते । देवेषु देवप्रामाण्यान्नैषां तद्विक्रमिष्यति ।
मयाऽभिमन्त्रितः शश्वज्जातवेदाः प्रशाम्यति । दिधक्षुः सकलांल्लोकान् परिक्षिप्य समन्ततः । २१९०
यद्वा परमकं तेजो येन युक्ता दिवौकसः । ममाप्यनुपमं भूयो देवेभ्यो विद्धि भारत ।
विदीर्य्यमाणां वसुधां गिरीणां शिखराणि च । लोकस्य पश्यतो राजन् स्थापयाम्यभिमन्त्रणात् ।
चेतनाचेतनस्यास्य जङ्गमस्थावरस्य च । विनाशाय समुत्पन्नं महाघोरं महास्वनं ।
अश्मवर्षञ्च वायुञ्च शमयामीह नित्यशः । जगतः पश्यतोऽभीक्ष्णं भूतानामनुकम्पया ।
स्तम्भितास्वप्सु गच्छन्ति मया रथपदातयः । देवासुराणां भावानामहमेकः प्रवर्त्तिता । २१९५
अक्षौहिणीभिर्यान् देशान् यामि कार्य्येण केनचित् । तत्राश्वा मे प्रवर्त्तन्ते यत्र यत्राभिकामये ।
भयानकानि विषये व्यालादीनि न सन्ति मे । मन्त्रगुप्तानि भूतानि न हिंसन्ति भयङ्कराः ।
निकामवर्षी पर्ज्जन्यो राजन् विषयवासिनां । धर्म्मिष्ठाश्च प्रजाः सर्व्वा ईतयश्च न सन्ति मे ।
अश्विनावथ वाय्वग्नी मरुद्भिः सह वृत्रहा । धर्म्मश्चैव मया द्विष्टान् नोत्सहन्तेऽभिरक्षितुं ।
यदि ह्येते समर्थाः स्युर्मद्द्विषस्त्रातुमञ्जसा । न स्म त्रयोदश समाः पार्था दुःखमवाप्नुयुः । २२००
नैव देवा न गन्धर्व्वा नासुरा न च राक्षसाः । शक्तास्त्रातुं मया द्विष्टं सत्यमेतत् ब्रवीमि ते ।
यदभिध्याम्यहं शश्वत् शुभं वा यदि वाऽशुभं । नैतद्विपन्नपूर्व्वं मे मित्रेष्वरिषु चोभयोः ।
भविष्यतीदमिति वा यद्ब्रवीमि परन्तप । नान्यथा भूतपूर्व्वञ्च सत्यवागिति मां विदुः ।

लोकसाक्षिकमेतन्मे माहात्म्यं दिक्षु विश्रुतं। आश्वासनार्थं भवतः प्रोक्तं न श्लाघया नृप।

नह्यहं श्लाघनो राजन् भूतपूर्व्वः कदाचन। असदाचरितं ह्येतद्यदात्मानं प्रशंसति। २०४५

पाण्डवांश्चैव मत्स्यांश्च पाञ्चालान् केकयैः सह। सात्यकिं वासुदेवञ्च श्रोतासि विजितान्मया।

सरितः सागरं प्राप्य यथा नश्यन्ति सर्व्वशः। तथैव ते विनङ्क्ष्यन्ति मामासाद्य सहान्वयाः।

परा बुद्धिः परं तेजो वीर्य्यञ्च परमं मम। परा विद्या परो योगो मम तेभ्यो विशिष्यते।

पितामहस्य द्रोणस्य कृपः शल्यः शलस्तथा। अस्त्रेषु यत् प्रजानन्ति सर्व्वं तन्मयि विद्यते।

इत्युक्त्वा सञ्जयं भूयः पर्य्यपृच्छत भारत। ज्ञात्वा युयुत्सोः कार्य्याणि प्राप्तकालमरिन्दमः। २०५०

इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि दुर्य्योधनवाक्ये षष्टोऽध्यायः॥ ६०॥

॥ वैशम्पायन उवाच॥ तथा तु पृच्छन्तमतीव पार्थं वैचित्रवीर्य्यं तमचिन्तयित्वा। उवाच कर्णो धृतराष्ट्रपुत्रं प्रहर्षयन् संसदि कौरवाणां।

मिथ्या प्रतिज्ञाय मया यदस्त्रं रामाद्धृतं ब्रह्ममयं पुरस्तात्। विज्ञाय तेनास्मि तदैवमुक्तस्तेनान्तकाले प्रतिभास्यतीति।

महापराधे ह्यपि यत्र तेन महर्षिणाहं गुरुणा च शप्तः। शक्तः प्रदग्धुं ह्यपि तिग्मतेजाः ससागरामप्यवनिं महर्षिः।

प्रसादितं ह्यस्य मया मनोऽभूत् शुश्रूषया स्वेन च पौरुषेण। तदस्ति चास्त्रं मम सावशेषं तस्मात् समर्थोऽस्मि ममैष भारः।

निमेषमात्रात्तमृषेः प्रसादमवाप्य पाञ्चालकरूषमत्स्यान्। निहत्य पार्थान् सहपुत्रपौत्रैर्लोकानहं शस्त्रजितान् प्रपत्स्ये। २०५५

पितामहस्तिष्ठतु ते समीपे द्रोणश्च सर्व्वे च नरेन्द्रमुख्याः। यथा प्रधानेन बलेन गत्वा पार्थान् हनिष्यामि ममैष भारः।

एवं ब्रुवन्तं तमुवाच भीष्मः किं कत्थसे कालपरीतबुद्धे। न कर्ण जानासि यथा प्रधाने हते हताः स्युर्धृतराष्ट्रपुत्राः।

यत् खाण्डवं दाहयता कृतं हि कृष्णद्वितीयेन धनञ्जयेन। श्रुत्वैव तत् कर्म्म नियन्तुमात्मा शक्यस्त्वया वै सह बान्धवेन।

यां चापि शक्तिं त्रिदशाधिपस्ते ददौ महात्मा भगवान्महेन्द्रः। भस्मीकृतां तां समरे विशीर्णां चक्राहतां द्रक्ष्यसि केशवेन।

यस्ते शरः सर्पमुखो विभाति सदाग्र्यमाल्यैर्महितः प्रयत्नात्। स पाण्डुपुत्राभिहतः शरौघैः सह त्वया यास्यति कर्ण नाशं। २०६०

बाणस्य भौमस्य च कर्ण हन्ता किरीटिनं रक्षति वासुदेवः। यस्त्वादृशानाञ्च वरीयसाञ्च हन्ता रिपूणां तुमुले प्रगाढे।

॥ कर्ण उवाच ॥ असंशयं वृष्णिपतिर्य्यथोक्तस्तथा च भूयांश्च ततो महात्मा। अहं यदुक्तं परुषन्तु किञ्चित् पितामहस्तस्य फलं शृणोतु।

न्यस्यामि शस्त्राणि न जातु सङ्ख्ये पितामहो द्रक्ष्यति मां सभायां। त्वयि प्रशान्ते तु मम प्रभावं द्रक्ष्यन्ति सर्व्वे भुवि भूमिपालाः।

॥ वैशम्पायन उवाच ॥ इत्येवमुक्त्वा स महाधनुष्मान् हित्वा सभां स्वं भवनं जगाम। भीष्मस्तु दुर्य्योधनमेव राजन् मध्ये कुरूणां प्रहसन्नुवाच।

सत्यप्रतिज्ञः किल सूतपुत्रस्तथा स भारं विषहेत कस्मात्। व्यूहं प्रतिव्यूह्य शिरांसि भित्त्वा लोकक्षयं पश्यत भीमसेनात्। २०६५

आवन्त्यकालिङ्गजयद्रथेषु चेदिध्वजे तिष्ठति बाह्लिके च। अहं हनिष्यामि सदा परेषां सहस्रशश्चायुतशश्च योधान्।

यदैव रामे भगवत्यनिन्द्ये ब्रह्मब्रुवाणः कृतवांस्तदस्त्रं। तदैव धर्म्मश्च तपश्च नष्टं वैकर्त्तनस्याधमपूरुषस्य।

तथोक्तवाक्ये नृपतीन्द्रभीष्मे निःक्षिप्य शस्त्राणि गते च कर्णे। वैचित्रवीर्य्यस्य सुतोऽल्पबुद्धिर्दुर्य्योधनः शान्तनवं बभाषे।

इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि कर्णवाक्ये एकषष्टोऽध्यायः॥ ६१ ॥

॥ दुर्य्योधन उवाच ॥ सदृशानां मनुष्येषु सर्व्वेषां तुल्यजन्मनां। कथमेकान्ततस्तेषां पार्थानां मन्यसे जयं।
वयश्च तेऽपि तुल्या वै वीर्य्येण च पराक्रमैः। समेन वयसा चैव प्रातिभेन श्रुतेन च। २४१०
अस्त्रेण योधयुग्यासु शीघ्रत्वे कौशले तथा। सर्व्वे स्म समजातीयाः सर्व्वे मानुषयोनयः।
पितामह विजानीषे पार्थेषु विजयं कथं। नाहं भवति न द्रोणे न कृपे न च बाह्लिके।
अन्येषु च नरेन्द्रेषु पराक्रम्य समारभे। अहं वैकर्त्तनः कर्णो भ्राता दुःशासनश्च मे।
पाण्डवान् समरे पञ्च हनिष्यामः शितैः शरैः। ततो राजन्महायज्ञैर्विविधैर्भूरिदक्षिणैः।
ब्राह्मणांस्तर्पयिष्यामि गोभिरश्वैर्धनेन च। यदा परिहरिष्यन्ति ऐणेयानिव तन्तुना। २४१५
अतरित्रानिव जले बाहुभिर्मामका रणे। पश्यन्तस्ते परांस्तत्र रथनागसमाकुलान्।
तदा दर्पं विमोक्ष्यन्ति पाण्डवाः स च केशवः।

॥ विदुर उवाच ॥ इह निःश्रेयसं प्राहुर्वृद्धा निश्चितदर्शिनः। ब्राह्मणस्य विशेषेण दमो धर्म्मः सनातनः।
तस्य दानं क्षमा सिद्धिर्यथावदुपपद्यते। दमो दानं तपो ज्ञानमधीतञ्चानुवर्त्तते।
दमस्तेजो वर्द्धयति पवित्रं दम उत्तमं। विपाप्मा वृद्धतेजास्तु पुरुषो विन्दते महत्। २४२०
क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयं। येषाञ्च प्रतिषेधार्थं क्षत्रं सृष्टं स्वयम्भुवा।
आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतं। तस्य लिङ्गं प्रवक्ष्यामि येषां समुदयो दमः।
क्षमा धृतिरहिंसा च समता सत्यमार्जवं। इन्द्रियाभिजयो धैर्य्यं मार्द्दवं ह्रीरचापलं।
अकार्पण्यमसंरम्भः सन्तोषः श्रद्दधानता। एतानि यस्य राजेन्द्र स दान्तः पुरुषः स्मृतः।
कामो लोभश्च दर्पश्च मन्युर्निद्रा विकत्थनं। मान ईर्षा च शोकश्च नैतद्दान्तो निषेवते। २४२५
अजिह्ममशठं शुद्धमेतद्दान्तस्य लक्षणं। अलोलुपस्तथाऽल्पेप्सुः कामानामविचिन्तिता।
समुद्रकल्पः पुरुषः स दान्तः परिकीर्त्तितः। सुवृत्तः शीलसम्पन्नः प्रसन्नात्माऽऽत्मविद्बुधः।
प्राप्येह लोके सम्मानं सुगतिं प्रेत्य गच्छति। अभयं यस्य भूतेभ्यः सर्व्वेषामभयं यतः।
स वै परिणतप्रज्ञः प्रख्यातो मनुजोत्तमः। सर्व्वभूतहितो मैत्रस्तस्मान्नोद्विजते जनः।
समुद्र इव गम्भीरः प्रज्ञातृप्तः प्रशाम्यति। कर्म्मणा चरितं पूर्व्वं सद्भिराचरितञ्च यत्। २४३०
तदेवास्थाय मोदन्ते दान्ताः शमपरायणाः। नैष्कर्म्यं वा समास्थाय ज्ञानतृप्तो जितेन्द्रियः।
कालाकाङ्क्षी चरंल्लोके ब्रह्मभूयाय कल्पते। शकुनीनामिवाकाशे पदं नैवोपलभ्यते।
एवं प्रज्ञानतृप्तस्य मुनेर्वर्त्म न दृश्यते। उत्सृज्य वा गृहान् यस्तु मोक्षमेवाभिमन्यते।
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वता दिवि।

इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि विदुरवाक्ये द्विषष्टोऽध्यायः॥ ६२ ॥

॥ विदुर उवाच ॥ शकुनीनामिहार्थाय पाशं भूमावयोजयत्। कश्चिच्छाकुनिकस्तात पूर्व्वेषामिति शुश्रुम। २४३५

तस्मिन् द्वौ शकुनौ बद्धौ युगपत् सहचारिणौ। तावुपादाय तं पाशं जग्मतुः खचरावुभौ।
तौ विहायसमाक्रान्तौ दृष्ट्वा शाकुनिकस्तदा। अन्वधावदनिर्व्विण्णो येन येन स्म गच्छतः।
तथा तमनुधावन्तं मृगयुं शकुनार्थिनं। आश्रमस्थो मुनिः कश्चिद्ददर्शाथ कृताह्निकः।
तावन्तरीक्षगौ शीघ्रमनुयान्तं महीचरं। श्लोकेनानेन कौरव्य पप्रच्छ स मुनिस्तदा।
विचित्रमिदमाश्चर्य्यं मृगहन् प्रतिभाति मे। प्लवमानौ हि खचरौ पदातिरनुधावसि।　२४६०
॥ शाकुनिक उवाच ॥ पाशमेकमुभावेतौ सहितौ हरतो मम। यत्र वै विवदिष्येते तत्र मे वशमेष्यतः।
॥ विदुर उवाच ॥ तौ विवादमनुप्राप्तौ शकुनौ मृत्युसन्धितौ। विगृह्य च सुदुर्ब्बुद्धी पृथिव्यां संनिपेततुः।
तौ युध्यमानौ संरब्धौ मृत्युपाशवशानुगौ। उपसृत्यापरिज्ञातो जग्राह मृगहा तदा।
एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहं। तेऽमित्रवशमायान्ति शकुनाविव विग्रहात्।
सम्भोजनं सङ्कथनं सम्प्रश्नोऽथ समागमः। एतानि ज्ञातिकार्य्याणि न विरोधः कदाचन।　२४६५
ये स्म काले सुमनसः सर्व्वे वृद्धानुपासते। सिंहगुप्तमिवारण्यमप्रधृष्या भवन्ति ते।
येऽर्थं सततमासाद्य दीना इव समासते। श्रियं ते सम्प्रयच्छन्ति द्विषद्भ्यो भरतर्षभ।
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च। धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ।
इदमन्यत् प्रवक्ष्यामि यथादृष्टं गिरौ मया। श्रुत्वा तदपि कौरव्य यथा श्रेयस्तथा कुरु।
वयं किरातैः सहिता गच्छामो गिरिमुत्तरं। ब्राह्मणैर्देवकल्पैश्च विद्याजम्भकवार्त्तिकैः।　२४७०
कुञ्जभूतं गिरिं सर्व्वमभितो गन्धमादनं। दीप्यमानौषधिगणं सिद्धगन्धर्व्वसेवितं।
तत्रापश्याम वै सर्व्वे मधुपीतकमाक्षिकं। मरुप्रपाते विषमे निविष्टं कुम्भसम्मितं।
आशीविषै रक्ष्यमाणं कुवेरदयितं भृशं। यत् प्राश्य पुरुषो मर्त्त्योऽप्यमरत्वं नियच्छति।
अचक्षुर्लभते चक्षुर्वृद्धो भवति वै युवा। इति ते कथयन्ति स्म ब्राह्मणा जम्भसाधकाः।
ततः किरातास्तद्दृष्ट्वा प्रार्थयन्तो महीपते। विनेशुर्विषमे तस्मिन् ससर्पे गिरिगह्वरे।　२४७५
तथैव तव पुत्रोऽयं पृथिवीमेक इच्छति। मधु पश्यति सम्मोहात् प्रपातं नानुपश्यति।
दुर्य्योधनो योद्धुमनाः समरे सव्यसाचिना। न च पश्यामि तेजोऽस्य विक्रमं वा तथाविधं।
एकेन रथमास्थाय पृथिवी येन निर्ज्जिता। भीष्मद्रोणप्रभृतयः सन्त्रस्ताः साधुयायिनः।
विराटनगरे भग्नाः किन्नु तत् विवृतं तव। प्रतीक्षमाणो यो वीरः क्षमते वीक्षितं तव।
द्रुपदो मत्स्यराजश्च संक्रुद्धश्च धनञ्जयः। न शेषयेयुः समरे वातयुक्ता इवाग्नयः।　२४८०
अङ्के कुरुष्व राजानं धृतराष्ट्र युधिष्ठिरं। युध्यतोर्हि द्वयोर्युद्धे नैकान्तेन भवेज्जयः।
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि विदुरवाक्ये त्रिषष्टोऽध्यायः॥ ६३ ॥
॥ धृतराष्ट्र उवाच ॥ दुर्य्योधन विजानीहि यत् त्वां वक्ष्यामि पुत्रक। उत्पथं मन्यसे मार्गमनभिज्ञ इवाध्वगः
पञ्चानां पाण्डुपुत्राणां यत्तेजः प्रजिहीर्षसि। पञ्चानामिव भूतानां महतां लोकधारिणां।
युधिष्ठिरं हि कौन्तेयं परं धर्म्ममिहास्थितं। परां गतिमसम्प्रेत्य न त्वं जेतुमिहार्हसि।

भीमसेनन्तु कौन्तेयं यस्य नास्ति समो बले । रणान्तकं तर्क्कयसे महावातमिव द्रुमः ॥ २०८५
सर्व्वशस्त्रभृतां श्रेष्ठं मेरुं शिखरिणामिव । युधि गाण्डीवधन्वानं को नु युध्येत बुद्धिमान् ॥
धृष्टद्युम्नश्च पाञ्चाल्यः कमिहाद्य न शातयेत् । शत्रुमध्ये शरान् मुञ्चन् देवराडशनीमिव ।
सात्यकिश्चापि दुर्द्धर्षः सम्मतोऽन्धकवृष्णिषु । ध्वंसयिष्यति ते सेनां पाण्डवेयहिते रतः ।
यः पुनः प्रतिमानेन त्रीँल्लोकानतिरिच्यते । तं कृष्णं पुण्डरीकाक्षं को नु युध्येत बुद्धिमान् ॥
एकतो ह्यस्य दाराश्च ज्ञातयश्च सबान्धवाः । आत्मा च पृथिवी चेयमेकतश्च धनञ्जयः । २०९०
वासुदेवोऽपि दुर्द्धर्षो यतात्मा यस्य पाण्डवः । अविषह्यं पृथिव्याऽपि तद्बलं यत्र केशवः ।
तिष्ठ तात सतां वाक्ये सुहृदामर्थवादिनां । वृद्धं शान्तनवं भीष्मं तितिक्षस्व पितामहं ।
माञ्च ब्रुवाणं शुश्रूष कुरूणामर्थदर्शिनं । द्रोणं कृपं विकर्णञ्च महाराजञ्च वाह्लिकं ।
एते ह्यपि यथैवाहं मन्तुमर्हसि तांस्तथा । सर्व्वे धर्म्मविदो ह्येते तुल्यस्नेहाश्च भारत ।
यत्तद्विराटनगरे सह भ्रातृभिरग्रतः । उत्सृज्य गाः सुसन्त्रस्तं बलं ते समशीर्य्यत । २०९५
यच्चैव नगरे तस्मिन् श्रूयते महदद्भुतं । एकस्य च बहूनाञ्च पर्य्याप्तं तन्निदर्शनं ।
अर्ज्जुनस्तु तथाऽकार्षीत् किं पुनः सर्व्व एव ते । सभ्रातृृनभिजानीहि वृत्त्यार्थञ्च परिपालय ।
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि धृतराष्ट्रवाक्ये चतुःषष्टोऽध्यायः ॥ ६४ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा महाप्राज्ञो धृतराष्ट्रः सुयोधनं । पुनरेव महाभागः सञ्जयं पर्य्यपृच्छत ।
ब्रूहि सञ्जय यच्छेषं वासुदेवादनन्तरं । यदर्ज्जुन उवाच त्वां परं कौतूहलं हि मे ।
॥ सञ्जय उवाच ॥ वासुदेववचः श्रुत्वा कुन्तीपुत्रो धनञ्जयः । उवाच काले दुर्द्धर्षो वासुदेवस्य शृण्वतः ॥ २१००
पितामहं शान्तनवं धृतराष्ट्रञ्च सञ्जय । द्रोणं कृपञ्च कर्णञ्च महाराजञ्च वाह्लिकं ।
द्रौणिञ्च सोमदत्तञ्च शकुनिं चापि सौबलं । दुःशासनं शलञ्चैव पुरुमित्रं विविंशतिं ।
विकर्णं चित्रसेनञ्च जयत्सेनञ्च पार्थिवं । विन्दानुविन्दावावन्त्यौ दुर्म्मुखञ्चापि कौरवं ।
सैन्धवं दुःसहञ्चैव भूरिश्रवसमेव च । भगदत्तञ्च राजानं जलसन्धञ्च पार्थिवं ।
ये चाप्यन्ये पार्थिवास्तत्र योद्धुं समागताः कौरवाणां प्रियार्थं । मुमूर्षवः पाण्डवाग्नौ प्रदीप्ते समानीता धार्त्तराष्ट्रेण होतुं । २१०५
यथान्यायं कौशलं वन्दनञ्च समागता मद्वचनेन वाच्याः । इदं ब्रूयाः सञ्जय राजमध्ये सुयोधनं पापकृतां निधानं ।
अमर्षणं दुर्म्मतिं राजपुत्रं पापात्मानं धार्त्तराष्ट्रं सुलुब्धं । सर्व्वं ममैतत् वचनं समग्रं सहामात्यं सञ्जय श्रावयेथाः ।
एवं प्रतिष्ठाप्य धनञ्जयो मां ततोऽर्थवद्धर्म्मवच्चापि वाक्यं । प्रोवाचेदं वासुदेवं समीक्ष्य पार्थो धीमान् लोहिताक्षोऽयताक्षः ।
यथाश्रुतं ते वदतो महात्मनो मधुप्रवीरस्य वचः समाहितं । तथैव वाच्यं भवता हि मद्वचः समागतेषु क्षितिपेषु सर्व्वशः ।
महाशराग्नौ रथवायुनोद्धते धनुःस्रुवेणास्त्रबलापहारिणा । यथा न होमः क्रियते महामृधे समेत्य सर्व्वे प्रयतध्वमादृताः । २११०

न चेत् प्रयच्छध्वममित्रघातिनो युधिष्ठिरस्यांशमभीप्सितं स्वकं । नयामि वः साश्वपदातिकुञ्जरान् दिशं पितॄणा मशिवां शितैः शरैः ।

ततोऽहमामन्त्र्य तदाधनञ्जयं चतुर्भुजं चैव नमस्य सत्वरः । जवेन सम्प्राप्त इहामरद्युते तवान्तिकं प्रापयितुं वचो महत् ।

इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये पञ्चषष्टोऽध्यायः ॥ ६५ ॥

॥ वैशम्पायन उवाच ॥ दुर्य्योधने धार्त्तराष्ट्रे तद्वचो नाभिनन्दति । तूष्णीं भूतेषु सर्व्वेषु समुत्तस्थुर्नरर्षभाः ।

उत्थितेषु महाराज पृथिव्यां सर्व्वराजसु । रहिते सञ्जयं राजा परिप्रष्टुं प्रचक्रमे ।

आशंसमानो विजयं तेषां पुत्त्रवशानुगः । आत्मनश्च परेषाञ्च पाण्डवानाञ्च निश्चयं ।  २५५५

॥ धृतराष्ट्र उवाच ॥ गावल्गणे ब्रूहि नः सारफल्गु स्वसेनायां यावदिहास्ति किञ्चित् । त्वं पाण्डवानां निपुणं वेत्थ सर्व्वं कि मेषां ज्यायः किमु तेषां कनीयः ।

त्वमेतयोः सारवित् सर्व्वदर्शी धर्म्मार्थयोर्निपुणो निश्चयज्ञः । स मे पृष्टः सञ्जय ब्रूहि सर्व्वं युध्यमानाः कतरेऽस्मिन् न सन्ति ।

॥ सञ्जय उवाच ॥ न त्वां ब्रूयां रहिते जातु किञ्चिदसूया हि त्वां प्रविशेत राजन् । आनयस्व पितरं महाव्रतं गान्धारीञ्च महिषीमाजमीढ ।

तौ तेऽसूयां विनयेतां नरेन्द्र धर्म्मज्ञौ तौ निपुणौ निश्चयज्ञौ । तयोस्तु त्वां सन्निधौ तद्वदेयं कृत्स्नं मतं केशवपार्थयोर्यत् ।

॥ वैशम्पायन उवाच ॥ इत्युक्तेन च गान्धारी व्यासश्चाजगामह । आनीतौ विदुरेणेह सभां शीघ्रं प्रवेशितौ ।  २५६०

ततस्तन्मतमाज्ञाय सञ्जयस्यात्मजस्य च । अभ्युपेत्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ।

॥ व्यास उवाच ॥ संपृच्छते धृतराष्ट्राय सञ्जय आचक्ष्व सर्व्वं यावदेषोऽनुयुङ्क्ते । सर्व्वं तावद्वेत्थ तस्मिन् यथावद्याथातथ्यं वासुदेवेऽर्ज्जुने च ।

इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये षडधिकषष्टोऽध्यायः ॥ ६६ ॥

॥ सञ्जय उवाच ॥ अर्ज्जुनो वासुदेवश्च धन्विनौ परमार्च्चितौ । कामादन्यत्र सम्भूतौ सर्व्वभावाय सम्मतौ ।

व्यामान्तरं समास्थाय यथायुक्तं मनस्विनः । चक्रं तद्वासुदेवस्य मायया वर्त्तते विभोः ।

सापह्नवं कौरवेषु पाण्डवानां सुसम्मतं । सारासारबलं ज्ञातुं तेजःपुञ्जावभासितं ।  २५६५

नरकं शम्बरञ्चैव कंसं चैद्यञ्च माधवः । जितवान् घोरसङ्काशान् क्रीडन्निव महाबलः ।

पृथिवीञ्चान्तरीक्षञ्च द्याञ्चैव पुरुषोत्तमः । मनसैव विशिष्टात्मा नयत्यात्मवशं वशी ।

भूयो भूयश्च यद्राजन् पृच्छसे पाण्डवान् प्रति । सारासारं बलं ज्ञातुं तत्समासेन मे शृणु ।

एकतो वा जगत् कृत्स्नमेकतो वा जनार्द्दनः । सारतो जगतः कृत्स्नादतिरिक्तो जनार्द्दनः ।

भस्म कुर्य्याज्जगदिदं मनसैव जनार्द्दनः । न च कृत्स्नं जगच्छक्तं भस्मीकर्त्तुं जनार्द्दनं ।  २५७०

यतः सत्यं यतो धर्म्मो यतो ह्रीरार्ज्जवं यतः । ततो भवति गोविन्दो यतः कृष्णस्ततो जयः ।

पृथिवीं चान्तरीक्षञ्च दिवञ्च पुरुषोत्तमः । विचेष्टयति भूतात्मा क्रीडन्निव जनार्द्दनः ।

स हत्वा पाण्डवान् सर्वं लोकं सम्मोहयन्निव । अधर्मनिरतान्मूढान् दग्धुमिच्छति ते सुतान् ।
कालचक्रं जगच्चक्रं युगचक्रञ्च केशवः । आत्मयोगेन भगवान् परिवर्त्तयतेऽनिशं ।
कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च । ईशते भगवानेकः सत्यमेतत् ब्रवीमि ते । २५२६
ईशन्नपि महायोगी सर्व्वस्य जगतो हरिः । कर्म्माण्यारभते कर्त्तुं कीनाश इव वर्द्धनः ।
तेन वञ्चयते लोकान्मायायोगेन केशवः । ये तमेव प्रपद्यन्ते तेन मुह्यन्ति मानवाः ।
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये सप्तषष्टोऽध्यायः ॥ ६७ ॥
॥ धृतराष्ट्र उवाच ॥ कथं त्वं माधवं वेत्थ सर्व्वलोकमहेश्वरं । कथमेनं न वेदाहं तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ शृणु राजन्न ते विद्या मम विद्या न हीयते । विद्याहीनस्तमोध्वस्तो नाभिजानासि केशवं । २५३०
विद्यया तात जानामि त्रियुगं मधुसूदनं । कर्त्तारमकृतं देवं भूतानां प्रभवाप्ययं ।
॥ धृतराष्ट्र उवाच ॥ गावल्गणेऽत्र का भक्तिर्या ते नित्यं जनार्द्दने । यया त्वमभिजानासि त्रियुगं मधुसूदनं ।
॥ सञ्जय उवाच ॥ मायां न सेवे भद्रं ते न वृथा धर्म्ममाचरे । शुद्धभावंगतो भक्त्या शास्त्राद्वेद्मि जनार्द्दनं ।
॥ धृतराष्ट्र उवाच ॥ दुर्य्योधन हृषीकेशं प्रपद्यस्व जनार्द्दनं । आप्तो नः सञ्जयस्तात शरणं गच्छ केशवं ।
॥ दुर्य्योधन उवाच ॥ भगवान्देवकीपुत्त्रो लोकांश्चेन्निहनिष्यति । प्रवदन्नर्ज्जुने सख्यं नाहं गच्छेऽद्य केशवं । २५३५
॥ धृतराष्ट्र उवाच ॥ अर्व्वाक् गान्धारिपुत्त्रस्ते गच्छत्येष सुदुर्म्मतिः । ईर्षुर्दुरात्मा मानी च श्रेयसां वचनातिगः ।
॥ गान्धार्य्युवाच ॥ ऐश्वर्य्यकामदुष्टात्मन् वृद्धानां शासनातिग । ऐश्वर्य्यजीविते हित्वा पितरं माञ्च बालिश ।
वर्द्धयन् दुर्हृदां प्रीतिं माञ्च शोकेन वर्द्धयन् । निहतो भीमसेनेन स्मर्त्ताऽसि वचनं पितुः ।
॥ व्यास उवाच ॥ प्रियोऽसि राजन् कृष्णस्य धृतराष्ट्र निबोध मे । यस्य ते सञ्जयो दूतो यस्त्वां श्रेयसि योक्ष्यते ।
जानात्येष हृषीकेशं पुराणं यच्च वै परं । शुश्रूषमाणमेकाग्रं मोक्ष्यते महतो भयात् । २५४०
वैचित्रवीर्य्य पुरुषाः क्रोधहर्षसमावृताः । सिता बहुविधैः पाशैर्ये न तुष्टाः स्वकैर्धनैः ।
यमस्य वशमायान्ति काममूढाः पुनः पुनः । अन्धनेत्रा यथैवान्धा नीयमानाः स्वकर्म्मभिः ।
एष एकायनः पन्था येन यान्ति मनीषिणः । तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न सज्जति ।
॥ धृतराष्ट्र उवाच ॥ अङ्ग सञ्जय मे शंस पन्थानमकुतोभयं । येन गत्वा हृषीकेशं प्राप्नुयां सिद्धिमुत्तमां ।
॥ सञ्जय उवाच ॥ नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्द्दनं । आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात् । २५४५
इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः । अप्रमादोऽविहिंसा च ज्ञानयोनिरसंशयं ।
इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः । बुद्धिश्च ते मा च्यवतु नियच्छैनां यतस्ततः ।
एतज्ज्ञानं विदुर्व्विप्रा ध्रुवमिन्द्रियधारणं । एतज्ज्ञानञ्च पन्थाश्च येन यान्ति मनीषिणः ।
अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृभिः । आगमाधिगतात् योगात् वशी तत्त्वे प्रसीदति ।
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये ऽष्टषष्टोऽध्यायः ॥ ६८ ॥
॥ धृतराष्ट्र उवाच ॥ भूयो मे पुण्डरीकाक्षं सञ्जयाचक्ष्व पृच्छतः । नामकर्म्मार्थवित्तात प्राप्नुयां पुरुषोत्तमं । २५५०
॥ सञ्जय उवाच ॥ श्रुतं मे वासुदेवस्य नामनिर्व्वचनं शुभं । यावत्तत्राभिजानेऽहमप्रमेयो हि केशवः ।

वसनात् सर्वभूतानां वसुत्वाद्देवयोनितः। वासुदेवस्ततो वेद्यो बृहत्त्वात् विष्णुरुच्यते।
मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवं। सर्वतत्त्वमयत्वाच्च मधुहा मधुसूदनः।
कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। विष्णुस्तद्भावयोगाच्च कृष्णो भवति सात्वतः।
पुण्डरीकं परं धाम नित्यमक्षयमव्ययं। तद्भावात् पुण्डरीकाक्षो दस्युत्रासाज्जनार्द्दनः।
यतः सत्वान्न च्यवते यच्च सत्वान्न हीयते। सत्वतः सात्वतस्तस्मादार्षभाद्वृषभेक्षणः। २५६५
न जायते जनित्राऽयमजस्तस्मादनीकजित्। देवानां स्वप्रकाशत्वात् दमाद्दामोदरो विभुः।
हर्षात् सुखात् सुखैश्वर्यात् हृषीकेशत्वमश्नुते। बाहुभ्यां रोदसी बिभ्रन्महाबाहुरिति स्मृतः।
अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः। नराणामयनाच्चापि ततो नारायणः स्मृतः।
पूरणात् सदनाच्चापि ततोऽसौ पुरुषोत्तमः। असतश्च सतश्चैव सर्व्वस्य प्रभवाप्ययात्।
सर्व्वस्य च सदा ज्ञानात् सर्व्वमेतं प्रचक्षते। सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितं। २५७०
सत्यात् सत्यञ्च गोविन्दस्तस्मात् सत्योऽपि नामतः। विष्णुर्विक्रमणाद्देवो जयनाज्जिष्णुरुच्यते।
शाश्वतत्वादनन्तश्च गोविन्दो वेदनात् गवां। अतत्त्वं कुरुते तत्त्वं तेन मोहयते प्रजाः।
एवंविधो धर्म्मनित्यो भगवान्मधुसूदनः। आगन्ता हि महाबाहुरानृशंस्यार्थमच्युतः।
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये एकोनसप्ततोऽध्यायः॥ ६९ ॥

॥ धृतराष्ट्र उवाच ॥ चक्षुष्मतां वै स्पृहयामि सञ्जय द्रक्ष्यन्ति ये वासुदेवं समीपे। विभ्राजमानं वपुषा परेण प्रकाशयन्तं प्रदिशो दिशश्च।
ईरयन्तं भारतीं भारतानामभ्यर्च्चनीयां शङ्करीं सृञ्जयानां। बुभूषद्भिर्ग्रहणीयामनिन्द्यां परासूनामग्रहणीयरूपां। २५७५
समुद्यन्तं सात्वतमेकवीरं प्रणेतारमृषभं यादवानां। निहन्तारं क्षोभणं शात्रवाणां मुष्णन्तञ्च द्विषतां वै यशांसि।
द्रष्टारो हि कुरवस्तं समेता महात्मानं शत्रुहणं वरेण्यं। ब्रुवन्तं वाचमनृशंसरूपां वृष्णिश्रेष्ठं मोहयन्तं मदीयान्।
ऋषिं सनातनतमं विपश्चितं वाचःसमुद्रं कलशं यतीनां। अरिष्टनेमिं गरुडं सुपर्णं हरिं प्रजानां भुवनस्य धाम।
सहस्रशीर्षं पुरुषं पुराणमनादिमध्यान्तमनन्तकीर्त्तिं। शुक्रस्य धातारमजञ्च नित्यं परं परेषां शरणं प्रपद्ये।
त्रैलोक्यनिर्म्माणकरं जनित्रं देवासुराणामथ नागरक्षसां। नराधिपानां विदुषां प्रधानमिन्द्रानुजं तं शरणं प्रपद्ये। २५८०
इति श्रीमहाभारते उद्योगपर्व्वणि यानसन्धिपर्व्वणि धृतराष्ट्रवाक्ये सप्ततितमोऽध्यायः॥ ७० ॥ समाप्तञ्च यानसन्धिपर्व्व ॥

## ॥ अथ भगवद्यानपर्व्व ॥ ९ ॥

॥ वैशम्पायन उवाच ॥ सञ्जये प्रतियाते तु धर्म्मराजो युधिष्ठिरः। अभ्यभाषत दाशार्हमृषभं सर्व्वसात्वतां।
अयं स कालः सम्प्राप्तो मित्राणां मित्रवत्सल। न च त्वदन्यं पश्यामि यो न आपत्सु तारयेत्।
त्वां हि माधवमाश्रित्य निर्भया मोघदर्पितं। धार्त्तराष्ट्रं सहामात्यं स्वमंशमनुयुञ्ज्महे।
यथा हि सर्व्वास्वापत्सु पासि वृष्णीनरिन्दम। तथा ते पाण्डवा रक्ष्याः पाह्यस्मान्महतो भयात्।
॥ श्रीभगवानुवाच ॥ अयमस्मि महाबाहो ब्रूहि यत्ते विवक्षितं। करिष्यामि हि तत् सर्व्वं यत् त्वं वक्ष्यसि भारत। २५८५

॥ युधिष्ठिर उवाच ॥ श्रुतं ते धृतराष्ट्रस्य सपुत्रस्य चिकीर्षितं । एतद्धि सकलं कृष्ण सञ्जयो मां यदब्रवीत् ।
तन्मतं धृतराष्ट्रस्य सोऽस्यात्मा विवृतान्तरः । यथोक्तं दूत आचष्टे वध्यः स्यादन्यथा ब्रुवन् ।
अप्रदानेन राज्यस्य शान्तिमस्मासु मार्गति । लुब्धः पापेन मनसा चरन्नसममात्मनः ।
यत्तत् द्वादशवर्षाणि वनेष्वध्युषिता वयं । छद्मना शरदञ्चैकां धृतराष्ट्रस्य शासनात् ।
स्थाता नः समये तस्मिन् धृतराष्ट्र इति प्रभो । नाहास्म समयं कृष्ण तद्धि नो ब्राह्मणा विदुः । २५९०
वृद्धो राजा धृतराष्ट्रः स्वधर्मं नानुपश्यति । वश्यत्वात् पुत्रगृद्धित्वान्मन्दस्यान्वेति शासनं ।
सुयोधनमते तिष्ठन् राजाऽस्मासु जनार्द्दन । मिथ्या चरति लुब्धः सन् चरन् हि प्रियमात्मनः ।
इतो दुःखतरं किन्नु यदहं मातरन्ततः । संविधातुं न शक्नोमि मित्राणां वा जनार्द्दन ।
काशिभिश्चेदिपाञ्चालैर्मत्स्यैश्च मधुसूदन । भवता चैव नाथेन पञ्च ग्रामा वृता मया ।
अविस्थलं वृकस्थलं माकन्दी वारणावतं । अवसानञ्च गोविन्द कञ्चिदेवात्र पञ्चमं । २५९५
पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा । वसेम सहिता येषु मा च नो भरता नशन् ।
न च तानपि दुष्टात्मा धार्त्तराष्ट्रोऽनुमन्यते । स्वाम्यमात्मनि मत्वाऽसावतो दुःखतरन्नु किं ।
कुले जातस्य वृद्धस्य परवित्तेषु गृध्यतः । लोभः प्रज्ञानमाहन्ति प्रज्ञा हन्ति हता ह्रियं ।
ह्रीर्हता बाधते धर्मं धर्मो हन्ति हतः श्रियं । श्रीर्हता पुरुषं हन्ति पुरुषस्याधनं वधः ।
अधनाद्धि निवर्त्तन्ते ज्ञातयः सुहृदो द्विजाः । अपुष्पादफलात् वृक्षात् यथा कृष्ण पतत्रिणः । २६००
एतच्च मरणं तात यदस्मात् पतितादिव । ज्ञातयो विनिवर्त्तन्ते प्रेतसत्वादिवासवः ।
नातः पापीयसीं काञ्चिदवस्थां शम्बरोऽब्रवीत् । यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ।
धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितं । जीवन्ति धनिनो लोके मृता ये त्वधना नराः ।
ये धनादपकर्षन्ति नरं स्वबलमाश्रिताः । ते धर्ममर्थं कामञ्च प्रमथ्नन्ति नरञ्च तं ।
एतामवस्थां प्राप्यैके मरणं वव्रिरे जनाः । ग्रामायैके वनायैके नाशायैके प्रवव्रजुः । २६०५
उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशं । दास्यमेके च गच्छन्ति परेषामर्थहेतुना ।
आपदेवाऽस्य मरणात् पुरुषस्य गरीयसी । श्रियो विनाशस्तद्ध्यस्य निमित्तं धर्मकामयोः ।
यदस्य धर्म्यं मरणं शाश्वतं लोकवर्त्म तत् । समन्तात् सर्वभूतानां न तदत्येति कश्चन ।
न तथा बाध्यते कृष्ण प्रकृत्या निर्धनो जनः । यथा भद्रां श्रियं प्राप्य तया हीनः सुखैधितः ।
स तदात्मापराधेन सम्प्राप्तो व्यसनं महत् । सेन्द्रान् गर्हयते देवान्नात्मानञ्च कथञ्चन । २६१०
न चास्य सर्वशास्त्राणि प्रभवन्ति निवर्हणे । सोऽभिक्रुध्यति भृत्यानां सुहृदश्चाभ्यसूयति ।
तन्तदा मन्युरेवैति स भूयः सम्प्रमुह्यति । स मोहवशमापन्नः क्रूरं कर्म निषेवते ।
पापकर्मतया चैव सङ्करं तेन पुष्यति । सङ्करो नरकायैव सा काष्ठा पापकर्मणां ।
न चेत् प्रबुध्यते कृष्ण नरकायैव गच्छति । तस्य प्रबोधः प्रज्ञैव प्रज्ञाचक्षुस्तरिष्यति ।
प्रज्ञालाभे हि पुरुषः शास्त्राण्येवान्ववेक्षते । शास्त्रनिष्ठः पुनर्धर्मं तस्य ह्रीरङ्गमुत्तमं । २६१५

ह्रीमान् हि पापं प्रद्वेष्टि तस्य श्रीरभिवर्द्धते। श्रीमान् स यावद्भवति तावद्भवति पूरुषः।
धर्म्मनित्यः प्रशान्तात्मा कार्य्ययोगवहः सदा। नाधर्म्मे कुरुते बुद्धिं न च पापे प्रवर्त्तते।
अह्रीको वा विमूढो वा नैव स्त्री न पुनः पुमान्। नास्याधिकारो धर्म्मेऽस्ति यथा शूद्रस्तथैव सः।
ह्रीमान् नमति देवांश्च पितॄनात्मानमेव च। तेनाऽमृतत्वं व्रजति सा काष्ठा पुण्यकर्म्मणां।
तदिदं मयि ते दृष्टं प्रत्यक्षं मधुसूदन। यथा राज्यात् परिभ्रष्टो वसामि वसतीरिमाः। २६२०
ते वयं न श्रियं हातुमलं न्यायेन केनचित्। अत्र नो यतमानानां वधश्चेदपि साधु तत्।
तत्र नः प्रथमः कल्पो यद्वयं ते च माधव। प्रशान्ताः समभूताश्च श्रियं तामश्नुवीमहि।
तत्रैषा परमा काष्ठा रौद्रकर्म्मक्षयोदया। यद्वयं कौरवान् हत्वा तानि राष्ट्राण्यवाप्नुमः।
ये पुनः स्युरसम्बद्धा अनार्य्याः कृष्ण शत्रवः। तेषामप्यवधः कार्य्यः किं पुनर्ये स्युरीदृशाः।
ज्ञातयश्चैव भूयिष्ठाः सहायो गुरवश्च नः। तेषां वधोऽतिपापीयान् किं नु युद्धेऽस्ति शोभनं। २६२५
पापः क्षत्रियधर्म्मोऽयं वयञ्च क्षत्रबान्धवाः। स नोऽस्वधर्म्मो धर्म्मो वा वृत्तिरन्या विगर्हिता।
शूद्रः करोति शुश्रूषां वैश्यो विपणिजीविकां। वयं वधेन जीवामः कपालं ब्राह्मणैर्वृतं।
क्षत्रियान् क्षत्रियो हन्ति मत्स्यो मत्स्येन जीवति। श्वा श्वानं हन्ति दाशार्ह पश्य धर्म्मो यथा गतः।
युद्धे कृष्ण कलिर्नित्यं प्राणाः सीदन्ति संयुगे। बलन्तु नीतिमाधाय युद्धे जयपराजयौ।
नात्मच्छन्देन भूतानां जीवितं मरणं तथा। नाप्यकाले सुखं प्राप्यं दुःखं वाऽपि यदूत्तम। २६३०
एको ह्यपि बहून् हन्ति घ्नन्त्येकं बहवोऽप्युत। शूरं कापुरुषो हन्ति अयशस्वी यशस्विनं।
जयो नैवोभयोर्दृष्टो नोभयोश्च पराजयः। तथैवापचयो दृष्टो व्यपयाने क्षयव्ययौ।
सर्व्वथा वृजिनं युद्धं को घ्नन् न प्रतिहन्यते। हतस्य च हृषीकेश समौ जयपराजयौ।
पराजयश्च मरणान्मन्ये नैव विशिष्यते। यस्य स्याद्विजयः कृष्ण तस्याऽप्यपचयो ध्रुवं।
अन्ततो दयितं घ्नन्ति केचिदप्यपरे जनाः। तस्याङ्ग बलहीनस्य पुत्रान् भ्रातॄनपश्यतः। २६३५
निर्व्वेदो जीविते कृष्ण सर्व्वतश्चोपजायते। ये ह्येव धीरा ह्रीमन्त आर्य्याः करुणवेदिनः।
त एव युद्धे हन्यन्ते यवीयान्मुच्यते जनः। हत्वाऽप्यनुशयो नित्यं परानपि जनार्द्दन।
अनुबन्धश्च पापोऽत्र शेषश्चाप्यवशिष्यते। शेषो हि बलमासाद्य न शेषमवशेषयेत्।
सर्व्वोच्छेदे च यतते वैरस्यान्तविधित्सया। जयो वैरं प्रसृजति दुःखमास्ते पराजितः।
सुखं प्रशान्तः स्वपिति हित्वा जयपराजयौ। जातवैरश्च पुरुषो दुःखं स्वपिति नित्यदा। २६४०
अनिर्वृतेन मनसा ससर्प इव वेश्मनि। उत्सादयति यः सर्व्वं यशसा स विमुच्यते।
अकीर्त्तिं सर्व्वभूतेषु शाश्वतीं स नियच्छति। नहि वैराणि शाम्यन्ति दीर्घकालं धृतान्यपि।
आख्यातारश्च विद्यन्ते पुमांश्चेद्विद्यते कुले। नचापि वैरं वैरेण केशव व्युपशाम्यति।
हविषाऽग्निर्यथा कृष्ण भूय एवाभिवर्द्धते। अतोऽन्यथा नास्ति शान्तिर्नित्यमन्तरमन्ततः।
अन्तरं लिप्समानानामयं दोषो निरन्तरः। पौरुषेयो हि बलवानाधिर्हृदयबाधनः। २६४५

तस्य त्यागेन वा शान्तिर्मरणेनापि वा भवेत्। अथ वा मूलघातेन द्विषतां मधुसूदन।
फलनिर्वृत्तिरिद्धा स्यात् सा नृशंसतरं भवेत्। या तु त्यागेन शान्तिः स्यात्तदृते वध एव सः।
संशयाच्च समुच्छेदाद् द्विषतामात्मनस्तथा। न च त्यक्तुं तदिच्छामो न चेच्छामः कुलक्षयं।
अत्र या प्रणिपातेन शान्तिः सैव गरीयसी। सर्व्वथा यतमानानामयुद्धमभिकाङ्क्षतां।
सान्त्वे प्रतिहते युद्धं प्रसिद्धं नापराक्रमः। प्रतिघातेन सान्त्वस्य दारुणं सम्प्रवर्त्तते। २६३०
तच्छूनामिव सम्पाते पण्डितैरुपलक्षितं। लाङ्गूलचालनं क्ष्वेडा प्रतिवाचो विवर्त्तनं।
दन्तदर्शनमारावस्ततो युद्धं प्रवर्त्तते। तत्र यो बलवान् कृष्ण जित्वा सोऽत्ति तदामिषं।
एवमेव मनुष्येषु विशेषो नास्ति कश्चन। सर्व्वथा त्वेतदुचितं दुर्व्वलेषु बलीयसां।
अनादरो विरोधश्च प्रणिपाती हि दुर्व्वलः। पिता राजा च वृद्धश्च सर्व्वथा मानमर्हति।
तस्मान्मान्यश्च पूज्यश्च धृतराष्ट्रो जनार्द्दन। पुत्रस्नेहश्च बलवान् धृतराष्ट्रस्य माधव। २६३५
स पुत्रवशमापन्नः प्रणिपातं प्रहास्यति। तत्र किं मन्यसे कृष्ण प्राप्तकालमनन्तरं।
कथमर्थाच्च धर्म्माच्च न हीयेमहि माधव। ईदृशे ह्यर्थकृच्छ्रेऽस्मिन् कमन्यं मधुसूदन।
उपसम्प्रष्टुमिच्छामि त्वामृते पुरुषोत्तम। प्रियश्च प्रियकामश्च गतिज्ञः सर्व्वकर्म्मणां।
को हि कृष्णाऽस्ति नस्त्वादृक् सर्व्वनिश्चयतत्त्ववित्।
॥ वैशम्पायन उवाच ॥ एवमुक्तः प्रत्युवाच धर्म्मराजं जनार्द्दनः। उभयोरेव वामर्थे यास्यामि कुरुसंसदं। २६४०
शमं तत्र लभेयञ्चेद् युष्मदर्थमहापयन्। पुण्यं मे सुमहद्राजंश्चरितं स्यान्महाफलं।
मोचयेयं मृत्युपाशात् संरब्धान् कुरुसृञ्जयान्। पाण्डवान् धार्त्तराष्ट्रांश्च सर्व्वाञ्च पृथिवीमिमां।
॥ युधिष्ठिर उवाच ॥ न ममैतन्मतं कृष्ण यत्त्वं यायाः कुरून् प्रति। सुयोधनः सूक्तमपि न करिष्यति ते वचः।
समेतं पार्थिवं क्षत्रं दुर्य्योधनवशानुगं। तेषां मध्यावतरणं तव कृष्ण न रोचये।
न हि नः प्रीणयेद् द्रव्यं न देवत्वं कुतः सुखं। न च सर्व्वामरैश्वर्य्यं तव द्रोहेण माधव। २६४५
॥ श्रीभगवानुवाच ॥ जानाम्येतां महाराज धार्त्तराष्ट्रस्य पापतां। अवाच्यास्तु भविष्यामः सर्व्वलोके महीक्षितां।
न चापि मम पर्य्याप्ताः सहिताः सर्व्वपार्थिवाः। क्रुद्धस्य संयुगे स्थातुं सिंहस्येवेतरे मृगाः।
अथ चेत्ते प्रवर्त्तेरन् मयि किञ्चिदसाम्प्रतं। निर्द्दहेयं कुरून् सर्व्वानिति मे धीयते मतिः।
न जातु गमनं तत्र भवेत् पार्थ निरर्थकं। अर्थप्राप्तिः कदाचित् स्यादन्ततो वाऽप्यवाच्यता।
॥ युधिष्ठिर उवाच ॥ यत्तुभ्यं रोचते कृष्ण स्वस्ति प्राप्नुहि कौरवान्। कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामि पुनरागतं। २६५०
विष्वक्सेन कुरून् गत्वा भारतान् शमयेः प्रभो। यथा सर्व्वे सुमनसः सह स्यामः सुचेतसः।
भ्राता चासि सखा चासि बीभत्सोर्मम च प्रियः। सौहृदेनाविशङ्क्योऽसि स्वस्ति प्राप्नुहि भूतये।
अस्मान् वेत्थ परान् वेत्थ वेत्थार्थान् वेत्थ भाषितुं। यद्यदस्मद्धितं कृष्ण तत्तद्वाच्यः सुयोधनः।
यद्यद्धर्म्मेण संयुक्तमुपपद्येद्धितं वचः। तत्तत् केशव भाषेथाः सान्त्वं वा यदि वेतरत्।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि युधिष्ठिरवाक्ये एकसप्ततितमोऽध्यायः॥ ७१ ॥

॥ श्रीभगवानुवाच ॥ सञ्जयस्य श्रुतं वाक्यं भवतश्च श्रुतं मया। सर्व्वं जानाम्यभिप्रायं तेषाञ्च भवतश्च यः। २९७५
तव धर्म्माश्रिता बुद्धिस्तेषां वैराश्रया मतिः। यदयुद्धेन लभ्येत तत्ते बहुमतं भवेत्।
न चैवं नैष्ठिकं कर्म्म क्षत्रियस्य विशाम्पते। आहुराश्रमिणः सर्व्वे न भैक्ष्यं क्षत्रियश्चरेत्।
जयो वधो वा सङ्ग्रामे धात्रा दिष्टः सनातनः। स्वधर्म्मः क्षत्रियस्यैष कार्पण्यं न प्रशस्यते।
न हि कार्पण्यमास्थाय शक्या वृत्तिर्युधिष्ठिर। विक्रमस्व महाबाहो जहि शत्रून् परन्तप।
अतिगृद्धाः कृतस्नेहा दीर्घकालं सहोषिताः। कृतमित्राः कृतबला धार्त्तराष्ट्राः परन्तप। २९८०
न पर्य्यायोऽस्ति यत्साम्यं त्वयि कुर्य्युर्विशाम्पते। बलवत्तां हि मन्यन्ते भीष्मद्रोणकृपादिभिः।
यावच्च मार्द्दवेनैतान् राजन्नुपचरिष्यसि। तावदेते हरिष्यन्ति तव राज्यमरिन्दम।
नानुक्रोशान्न कार्पण्यान्न च धर्म्मार्थकारणात्। अलं कर्त्तुं धार्त्तराष्ट्रास्तव काममरिन्दम।
एतदेव निमित्तं ते पाण्डवास्तु यथा त्वयि। नान्वतप्यन्त कौपीनं तावत् कृत्वाऽपि दुष्करं।
पितामहस्य द्रोणस्य विदुरस्य च धीमतः। ब्राह्मणानाञ्च साधूनां राज्ञश्च नगरस्य च। २९८५
पश्यतां कुरुमुख्यानां सर्व्वेषामेव तत्त्वतः। दानशीलं मृदुं दान्तं धर्म्मशीलमनुव्रतं।
यत्त्वामुपधिना राजन् द्यूते वञ्चितवांस्तदा। न चाऽपत्रपते तेन नृशंसः स्वेन कर्म्मणा।
तथा शीलसमाचारे राजन् मा प्रणयं कृथाः। वध्यास्ते सर्व्वलोकस्य किं पुनस्तव भारत।
वाग्भिस्त्वप्रतिरूपाभिरतुदत्त्वां सहानुजं। श्लाघमानः प्रहृष्टः सन् भ्रातृभिः सह भारत।
एतावत् पाण्डवानां हि नास्ति किञ्चिदिह स्वकं। नामधेयञ्च गोत्रञ्च तदप्येषां न शिष्यते। २९९०
कालेन महता चैषां भविष्यति पराभवः। प्रकृतिं ते भजिष्यन्ति नष्टप्रकृतयो मयि।
दुःशासनेन पापेन तदा द्यूते प्रवर्त्तिते। अनाथवत्तदा देवी द्रौपदी सुदुरात्मना।
आकृष्य केशे रुदती सभायां राजसंसदि। भीष्मद्रोणप्रमुखतो गौरिति व्याहृता मुहुः।
भवता वारिताः सर्व्वे भ्रातरो भीमविक्रमाः। धर्म्मपाशनिबद्धाश्च न किञ्चित् प्रतिपेदिरे।
एताश्चान्याश्च परुषा वाचः स समुदीरयन्। श्लाघते ज्ञातिमध्ये स्म त्वयि प्रव्रजिते वनं। २९९५
ये तत्रासन् समानीतास्ते दृष्ट्वा त्वामनागसं। अश्रुकण्ठा रुदन्तश्च सभायामासते तदा।
न चैनमभ्यनन्दंस्ते राजानो ब्राह्मणैः सह। सर्व्वे दुर्य्योधनं तत्र निन्दन्ति स्म सभासदः।
कुलीनस्य च या निन्दा वधो वाऽमित्रकर्षण। महागुणो वधो राजन्नतु निन्दा कुजीविका।
तदैव निहतो राजन् यदैव निरपत्रपः। निन्दितश्च महाराज पृथिव्यां सर्व्वराजभिः।
ईषत्कार्य्यो वधस्तस्य यस्य चारित्रमीदृशं। प्रस्कन्दन प्रतिस्तब्धश्छिन्नमूल इव द्रुमः। ३०००
वध्यः सर्प इवानार्य्यः सर्व्वलोकस्य दुर्म्मतिः। जह्येनं त्वममित्रघ्न मा राजन् विचिकित्सिथाः।
सर्व्वथा त्वत्क्षमञ्चैतत् रोचते च ममानघ। यत्त्वं पितरि भीष्मे च प्रणिपातं समाचरेः।
अहन्तु सर्व्वलोकस्य गत्वा छेत्स्यामि संशयं। येषामस्ति द्विधाभावो राजन् दुर्य्योधनं प्रति।
मध्ये राज्ञामहं तत्र प्रातिपौरुषिकान् गुणान्। तव सङ्कीर्त्तयिष्यामि ये च तस्य व्यतिक्रमाः।

श्रुतवन्तश्च मे वाक्यं धर्म्मार्थसहितं हितं । निशम्य पार्थिवाः सर्व्वे तथा जनपदेश्वराः। २००५
त्वयि सम्प्रतिपत्स्यन्ते धर्म्मात्मा सत्यवागिति । तस्मिंश्चाभिगमिष्यन्ति यथा लोभादवर्त्तत ।
गर्हयिष्यामि चैवैनं पौरजानपदेष्वपि । वृद्धबालानुपादाय चातुर्व्वर्ण्यं समागते ।
शमं वै याचमानस्त्वं नाधर्म्मं तत्र लप्स्यसे । कुरून् विगर्हयिष्यन्ति धृतराष्ट्रञ्च पार्थिवाः ।
तस्मिंल्लोकपरित्यक्ते किं कार्य्यमवशिष्यते । हते दुर्य्योधने राजन् यदन्यत् क्रियतामिति ।
यात्वा चाहं कुरून् सर्व्वान् युष्मदर्थमहापयन् । यतिष्ये प्रशमं कर्त्तुं लक्षयिष्ये च चेष्टितं । २०१०
कौरवाणां प्रवृत्तिञ्च गत्वा युद्धादिकारिकां । निशम्य विनिवर्त्तिष्ये जयाय तव भारत ।
सर्व्वथा युद्धमेवाहमाशंसामि परैः सह । निमित्तानि हि सर्व्वाणि यथा प्रादुर्भवन्ति वै ।

मृगाः शकुन्ताश्च नदन्ति घोरं हस्त्यश्वमुख्येषु निशामुखेषु । घोराणि रूपाणि तथैव चाग्निर्वर्णान् बहून् पुष्यति घोररूपान् ।
मनुष्यलोकक्षयकृत्सुघोरो नो चेदनुप्राप्त इवान्तकः स्यात् । शस्त्राणि यन्त्रं कवचान् रथांश्च नागांस्तथाश्वांश्च प्रतिपादयित्वा ।
योधाश्च सर्व्वे कृतनिश्चयास्ते भवन्तु हस्त्यश्वरथेषु युक्ताः । साङ्ग्रामिकं ते यदुपार्ज्जनीयं सर्व्वं समग्रं कुरु तन्नरेन्द्र । २०१५
दुर्य्योधनो न ह्यलमद्य दातुं जीवंस्तवैतन्नृपतेः कथञ्चित् । यत्ते पुरस्तादभवत् समृद्धं द्यूते जितं पाण्डवमुख्यराज्यं ।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कृष्णवाक्ये द्विसप्ततोऽध्यायः ॥ ७२ ॥

॥ भीमसेन उवाच ॥ यथा यथैव शान्तिः स्यात् कुरूणां मधुसूदन । तथा तथैव भाषेथा मा स्म युद्धेन भीषयेः ।
अमर्षी जातसंरम्भः श्रेयोद्वेषी महामनाः । नोग्रं दुर्य्योधनो वाच्यः साम्नैवैनं समाचरेः ।
प्रकृत्या पापसत्त्वश्च तुल्यचेतास्तु दस्युभिः । ऐश्वर्य्यमदमत्तश्च कृतवैरश्च पाण्डवैः ।
अदीर्घदर्शी निष्ठुरी क्षेप्ता क्रूरपराक्रमः । दीर्घमन्युरनेयश्च पापात्मा निकृतिप्रियः । २०२०
म्रियेतापि न भज्येत नैव जह्यात् स्वकं मतं । तादृशेन शमः कृष्ण मन्ये परमदुष्करः ।
सुहृदामप्यवाचीनस्त्यक्तधर्म्मा प्रियानृतः । प्रतिहन्त्येव सुहृदां वाचश्चैव मनांसि च ।
स मन्युवशमापन्नः स्वभावं दुष्टमाश्रितः । स्वभावात् पापमभ्येति तृणैश्छन्न इवोरगः ।
दुर्य्योधनो हि यत्सेनः सर्व्वदा विदितस्तव । यच्छीलो यत्स्वभावश्च यद्बलो यत्पराक्रमः ।
पुरा प्रसन्नाः कुरवः सहपुत्रास्तथा वयं । इन्द्रज्येष्ठा इवाभूम मोदमानाः सबान्धवाः । २०२५
दुर्य्योधनस्य क्रोधेन भारता मधुसूदन । धक्ष्यन्ते शिशिरापाये वनानीव कृताग्निना ।
अष्टादशेमे राजानः प्रख्याता मधुसूदन । ये समुच्चिच्छिदुर्ज्ञातीन् सुहृदश्च सबान्धवान् ।
असुराणां समृद्धानां ज्वलतामिव तेजसा । पर्य्यायकाले धर्म्मस्य प्राप्ते कलिरजायत ।
हैहयानामुदावर्त्तो नीपानां जनमेजयः । बहुलस्तालजङ्घानां क्रमीणामुद्धतो वसुः ।
अजबिन्दुः सुवीराणां सुराष्ट्राणां रुषर्द्धिकः । अर्कजश्च बलीहानां चीनानां धौतमूलकः । २०३०
हयग्रीवो विदेहानां वरयुश्च महौजसां । बाहुः सुन्दरवेगानां दीप्ताक्षाणां पुरूरवाः ।
सहजश्चेदिमत्स्यानां प्रवीराणां वृषध्वजः । धारणश्चन्द्रवत्सानां मुकुटानां विगाहनः ।
शमश्च नन्दिवेगानामित्येते कुलपांसनाः । युगान्ते कृष्ण सम्भूताः कुलेषु पुरुषाधमाः ।

अप्ययं नः कुरूणां स्यादुदर्कः कालसंभृतः । दुर्य्योधनः कुलाङ्गारो जघन्यः पापपूरुषः ।
तस्मान्मृदु शनैर्ब्रूया धर्म्मार्थसहितं हितं । कामानुबन्धबहुलं नोग्रमुग्रपराक्रम । २०३५
अपि दुर्य्योधनं कृष्ण सर्व्वे वयमधश्चराः । नीचैर्भूत्वानुयास्यामो मास्म नो भरता नशन् ।
अप्युदासीनवृत्तिः स्याद्यथा नः कुरुभिः सह । वासुदेव तथा कार्य्यं न कुरूननयः स्पृशेत् ।
वाच्यः पितामहो वृद्धो ये च कृष्ण सभासदः । भ्रातॄणामस्तु सौभ्रात्रं धार्त्तराष्ट्रः प्रशाम्यतां ।
अहमेतद्ब्रवीम्येवं राजा चैव प्रशंसति । अर्ज्जुनो नैव युद्धार्थी भूयसी हि दयाऽर्ज्जुने ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भीमवाक्ये त्रिसप्ततोऽध्यायः ॥ ७३ ॥

॥ वैशम्पायन उवाच ॥ एतत् श्रुत्वा महाबाहुः केशवः प्रहसन्निव । अभूतपूर्व्वं भीमस्य मार्द्दवोपहितं वचः । २०४०
गिरेरिव लघुत्वं तत् शीतत्वमिव पावके । मत्वा रामानुजः शौरिः शार्ङ्गधन्वा वृकोदरं ।
सन्तेजयंस्तदा वाग्भिर्मातरिश्वेव पावकं । उवाच भीममासीनं कृपयाऽभिपरिप्लुतं ।
॥ श्रीभगवानुवाच ॥ त्वमन्यदा भीमसेन युद्धमेव प्रशंससि । वधाभिनन्दिनः क्रूरान् धार्त्तराष्ट्रान्निमर्द्दिषुः ।
न च स्वपिषि जागर्षि न्युब्जः शेषे परन्तप । घोरामशान्तां रुशतीं सदा वाचं प्रभाषसे ।
निःश्वसन्नग्निवर्णेन सन्तप्तः स्वेन मन्युना । अप्रशान्तमना भीम सधूम इव पावकः । २०४५
एकान्ते निःश्वसन् शेषे भारार्त्त इव दुर्ब्बलः । अपि त्वां केचिदुन्मत्तं मन्यन्तेऽतद्विदो जनाः ।
आरुज्य वृक्षान्निर्म्मूलान् गजः परिरुजन्निव । निघ्नन् पद्भिः क्षितिं भीम निःश्वसन् परिधावसि ।
नास्मिन् जनेन रमसे रहः क्षिपसि पाण्डव । नान्यन्निशि दिवा चापि कदाचिदभिनन्दसि ।
अकस्मात् स्मयमानश्च रहस्यास्से रुदन्निव । जान्वोर्म्मूर्द्धानमाधाय चिरमास्से प्रमीलितः ।
भ्रुकुटिञ्च पुनः कुर्व्वन्नोष्ठौ च विदशन्निव । अभीक्ष्णं दृश्यसे भीम सर्व्वं तन्मन्युकारितं । २०५०
यथा पुरस्तात् सविता दृश्यते शुक्रमुच्चरन् । यथा च पश्चान्निर्म्मुक्तो ध्रुवं पर्य्येति रश्मिवान् ।
तथा सत्यं ब्रवीम्येतत् नास्ति तस्य व्यतिक्रमः । हन्ताऽहं गदयाऽभ्येत्य दुर्य्योधनममर्षणं ।
इति स्म मध्ये भ्रातॄणां सत्येनालभसे गदां । तस्य ते प्रशमे बुद्धिर्धीयतेऽद्य परन्तप ।
अहो युद्धाभिकाङ्क्षाणां युद्धकाल उपस्थिते । चेतांसि विप्रतीपानि यत्त्वां भीर्भीम विन्दति ।
अहो पार्थ निमित्तानि विपरीतानि पश्यसि । स्वप्नान्ते जागरान्ते च तस्मात् प्रशममिच्छसि । २०५५
अहो नाशंससे किञ्चित् पुंस्त्वं क्लीब इवात्मनि । कश्मलेनाभिपन्नोऽसि तेन ते विकृतं मनः ।
उद्वेपते ते हृदयं मनस्ते प्रतिषीदति । ऊरुस्तम्भगृहीतोऽसि तस्मात् प्रशममिच्छसि ।
अनित्यं किल मर्त्यस्य पार्थ चित्तं चलाचलं । वातवेगप्रचलिता अष्ठीला शाल्मलेरिव ।
तवैषा विकृता बुद्धिर्गवां वागिव मानुषी । मनांसि पाण्डुपुत्राणां मज्जयत्यप्लवानिव ।
इदं मे महदाश्चर्य्यं पर्व्वतस्येव सर्पणं । यदीदृशं प्रभाषेथा भीमसेनासमं वचः । २०६०
स दृष्ट्वा स्वानि कर्म्माणि कुले जन्म च भारत । उत्तिष्ठस्व विषादं मा कृथा वीर स्थिरो भव ।

न चैतदनुरूपं ते यत्ते ग्लानिररिन्दम। यदोजसा न लभते क्षत्रियो न तदश्नुते।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि श्रीकृष्णवाक्ये चतुःसप्ततोऽध्यायः ॥ ७४ ॥

॥ वैशम्पायन उवाच ॥ तथोक्तो वासुदेवेन नित्यमन्युरमर्षणः। सदश्ववत् समाधावत् बभाषे तदनन्तरं।
॥ भीमसेन उवाच ॥ अन्यथा मां चिकीर्षन्तमन्यथा मन्यसे ऽच्युत। प्रणीतभावमत्यर्थं युधि सत्यपराक्रम।
वेत्थ दाशार्ह सत्त्वं मे दीर्घकालं सहोषितः। उत वा नानुजानासि प्लवन् ह्रद इवाप्लवं। २०६५
तस्मादनभिरूपाभिर्वाग्भिर्मां त्वं समर्च्छसि। कथं हि भीमसेनं मां जानन् कश्चन माधव।
ब्रूयादप्रतिरूपाणि यथा मां वक्तुमर्हसि। तस्मादिदं प्रवक्ष्यामि वचनं वृष्णिनन्दन।
आत्मनः पौरुषञ्चैव बलञ्च न समं परैः। सर्व्वथाऽनार्य्यकर्म्मैतत् प्रशंसा स्वयमात्मनः।
अतिवादापविद्धस्तु वक्ष्यामि बलमात्मनः। पश्येमे रोदसी कृष्ण ययोरासन्निमाः प्रजाः।
अचले चाप्रतिष्ठे वा ऽप्यनन्ते सर्व्वमातरौ। यदीमे सहसा क्रुद्धे समेयातां शिले इव। २०७०
अहमेते निगृह्णीयां बाहुभ्यां सचराचरे। पश्यैतदन्तरं बाह्वोर्महापरिघयोरिव।
य एतत् प्राप्य मुच्येत न तं पश्यामि पूरुषं। हिमवांश्च समुद्रश्च वज्री वा बलभित् स्वयं।
मयाऽभिपन्नं त्रायेरन् बलमास्थाय न त्रयः। युद्धार्हान् क्षत्रियान् सर्व्वान् पाण्डवेष्वाततायिनः।
अधःपादतलेनैतानधिष्ठास्यामि भूतले। न हि त्वं नाभिजानासि मम विक्रममच्युत।
यथा मया विनिर्ज्जित्य राजानो वशगाः कृताः। अथ चेन्मां न जानासि सूर्य्यस्येवोद्यतः प्रभां। २०७५
विगाढे युधि सम्बाधे वेत्स्यसे मां जनार्द्दन। परुषैराक्षिपस्येवं व्रणं पूतिमिवोन्नयन्।
यथामति ब्रवीम्येतत् विद्धि मामधिकं ततः। द्रष्टासि युधि सम्बाधे प्रवृत्ते वैशसेऽहनि।
मया प्रणुन्नान्मातङ्गान् रथिनः सादिनस्तथा। तथा नरानभिक्रुद्धं निघ्नन्तं क्षत्रियर्षभान्।
द्रष्टा मां त्वञ्च लोकश्च विकर्षन्तं चराचरान्। न मे सीदन्ति मज्जानो न ममोद्वेपते मनः।
सर्व्वलोकादभिक्रुद्धान्न भयं विद्यते मम। किन्तु सौहृदमेवैतत् कृपया मधुसूदन। २०८०
सर्व्वांस्तितिक्षे संक्लेशान्मास्म नो भरता नशन्।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भीमवाक्ये पञ्चसप्ततोऽध्यायः ॥ ७५ ॥

॥ श्रीभगवानुवाच ॥ भावं जिज्ञासमानोऽहं प्रणयादिदमब्रुवं। न चाक्षेपान्न पाण्डित्यान्न क्रोधान्न विवक्षया।
वेदाहं तव माहात्म्यमुत ते वेद यद्बलं। उत ते वेद कर्म्माणि न त्वां परिभवाम्यहं।
यथा चात्मनि कल्याणं सम्भावयसि पाण्डव। सहस्रगुणमप्येतत् त्वयि सम्भावयाम्यहं।
यादृशे च कुले जन्म सर्व्वराजाभिपूजिते। बन्धुभिश्च सुहृद्भिश्च भीम त्वमसि तादृशः। २०८५
जिज्ञासन्तो हि धर्म्मस्य सन्दिग्धस्य वृकोदर। पर्य्यायं नाध्यवस्यन्ति दैवमानुषयोर्जनाः।
स एव हेतुर्भूत्वा हि पुरुषस्यार्थसिद्धिषु। विनाशेऽपि स एवास्य सन्दिग्धं कर्म्म पौरुषं।
अन्यथा परिदृष्टानि कविभिर्दोषदर्शिभिः। अन्यथा परिवर्त्तन्ते वेगा इव नभस्वतः।

सुमन्त्रितं सुनीतञ्च न्यायतश्चोपपादितं । कृतं मानुष्यकं कर्म्म दैवेनापि विरुध्यते ।
दैवमप्यकृतं कर्म्म पौरुषेण विहन्यते । शीतमुष्णं तथा वर्षं क्षुत्पिपासे च भारत । २७९०
यदन्यद्दिष्टभावस्य पुरुषस्य स्वयं कृतं । तस्मादनुपरोधश्च विद्यते तत्र लक्षणं ।
लोकस्य नान्यतो वृत्तिः पाण्डवान्यत्र कर्म्मणः । एवंबुद्धिः प्रवर्त्तेत फलं स्यादुभयान्वये ।
य एवं कृतबुद्धिः सन् कर्म्मस्वेव प्रवर्त्तते । नासिद्धौ व्यथते तस्य न सिद्धौ हर्षमश्नुते ।
तत्रेयमनुमात्रा मे भीमसेन विवक्षिता । नैकान्तसिद्धिर्वक्तव्या शत्रुभिः सह संयुगे ।
नातिप्रहीणरश्मिः स्यात्तथा भावविपर्य्यये । विषादमर्च्छेद्ग्लानिं वाप्येतदर्थं ब्रवीमि ते । २७९५
श्वोभूते धृतराष्ट्रस्य समीपं प्राप्य पाण्डव । यतिष्ये प्रशमं कर्त्तुं युष्मदर्थमहापयन् ।
शमं चेत्ते करिष्यन्ति ततोऽनन्तं यशो मम । भवताञ्च कृतः कामस्तेषाञ्च श्रेय उत्तमं ।
ते चेदभिनिवेक्ष्यन्ति नाभ्युपैष्यन्ति मे वचः । कुरवो युद्धमेवात्र घोरं कर्म्म भविष्यति ।
अस्मिन् युद्धे भीमसेन त्वयि भारः समाहितः । धूरर्ज्जुनेन धार्य्या स्याद्वोढव्य इतरो जनः ।
अहं हि यन्ता बीभत्सोर्भविता संयुगे सति । धनञ्जयस्यैष कामो न हि युद्धं न कामये । २८००
तस्मादाशङ्कमानोऽहं वृकोदर मतिं तव । गदतः क्लीवया वाचा तेजस्ते समदीदिपं ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि श्रीकृष्णवाक्ये षट्सप्ततोऽध्यायः ॥ ७६ ॥
॥ अर्ज्जुन उवाच ॥ उक्तं युधिष्ठिरेणैव यथा वाच्यं जनार्द्दन । तव वाक्यन्तु मे श्रुत्वा प्रतिभाति परन्तप ।
नैव प्रशममत्र त्वं मन्यसे सुकरं प्रभो । लोभाद्वा धृतराष्ट्रस्य दैन्याद्वा समुपस्थितात् ।
अफलं मन्यसे वाऽपि पुरुषस्य पराक्रमं । नचान्तरेण कर्म्माणि पौरुषेण फलोदयः ।
तदिदं भाषितं वाक्यं तथा च न तथैव तत् । न चैतदेवं द्रष्टव्यमसाध्यमपि किञ्चन । २८०५
किञ्चैतन्मन्यसे कृच्छ्रमस्माकमवसादकं । कुर्व्वन्ति तेषां कर्म्माणि येषां नास्ति फलोदयः ।
सम्पाद्यमानं सम्यक् च स्यात् कर्म्म सफलं प्रभो । स तथा कृष्ण वर्त्तस्व यथा शर्म्म भवेत् परैः ।
पाण्डवानां कुरूणाञ्च भवान् प्रथमः सुहृत् । सुराणामसुराणाञ्च यथा वीरः प्रजापतिः ।
कुरूणां पाण्डवानाञ्च प्रतिपत्स्व निरामयं । अस्मद्धितमनुष्ठानं मन्ये तत्र न दुष्करं ।
एवञ्च कार्य्यतामेति कार्य्यं तव जनार्द्दन । गमनादेवमेव त्वं करिष्यसि जनार्द्दन । २८१०
चिकीर्षितमथान्यत्ते तस्मिन् वीर दुरात्मनि । भविष्यति च तत्सर्व्वं यथा तत्र चिकीर्षितं ।
शर्म्म तैः सह वा नोऽस्तु तव वा यच्चिकीर्षितं । विचार्य्यमाणो यः कामस्तव कृष्ण स नो गुरुः ।
न स नार्हति दुष्टात्मा वधं ससुतबान्धवः । येन धर्म्मसुते दृष्ट्वा न सा श्रीरुपमर्षिता ।
यच्चाप्यपश्यतोपायं धर्म्मिष्ठं मधुसूदन । उपायेन नृशंसेन हृता दुर्द्यूतदेविना ।
कथं हि पुरुषो जातः क्षत्रियेषु धनुर्द्धरः । समाहूतो निवर्त्तेत प्राणत्यागेऽप्युपस्थिते । २८१५
अधर्म्मेण जितान् दृष्ट्वा वने प्रव्रजितांस्तथा । वध्यतां मम वार्ष्णेय निर्गतोऽसौ सुयोधनः ।
न चैतदद्भुतं कृष्ण मित्रार्थे यच्चिकीर्षसि । क्रिया कथन्नु मुख्या स्यात् मृदुना वेतरेण वा ।

अथ वा मन्यसे ज्यायान् वधस्तेषामनन्तरं । तदेव क्रियतामाशु न विचार्य्यमतस्त्वया ।
जानासि हि यथा तेन द्रौपदी पापबुद्धिना । परिक्लिष्टा सभामध्ये तच्च तस्यापमर्षितं ।
स नाम सम्यग्वर्त्तेत पाण्डवेष्विति माधव । न मे सञ्जायते बुद्धिर्बीजमुप्तमिवोषरे । २८२०
तस्माद्यन्मन्यसे युक्तं पाण्डवानां हितञ्च यत् । तदाशु कुरु वार्ष्णेय यन्नः कार्य्यमनन्तरं ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि अर्ज्जुनवाक्ये सप्तसप्ततोऽध्यायः ॥ ७७ ॥
॥ श्रीभगवानुवाच ॥ एवमेतन्महाबाहो यथा वदसि पाण्डव । पाण्डवानां कुरूणाञ्च प्रतिपत्स्ये निरामयं ।
सर्व्वं त्विदं ममायत्तं बीभत्सो कर्म्मणोर्द्वयोः । क्षेत्रं हि रसवच्छुद्धं कर्षकेणोपपादितं ।
ऋते वर्षान्न कौन्तेय जातु निर्व्वर्त्तयेत् फलं । तत्र वै पौरुषं ब्रूयुरासेकं यत्र कारितं ।
तत्र चापि ध्रुवं पश्येच्छोषणं दैवकारितं । तदिदं निश्चितं बुद्ध्या पूर्व्वैरपि महात्मभिः । २८२५
दैवेच मानुषे चैव संयुक्तं लोककारणं । अहं हि तत् करिष्यामि परं पुरुषकारतः ।
दैवन्तु न मया शक्यं कर्म्म कर्त्तुं कथञ्चन । स हि धर्म्मञ्च लोकञ्च त्यक्त्वा चरति दुर्म्मतिः ।
न हि सन्तप्यते तेन तथारूपेण कर्म्मणा । तथापि बुद्धिं पापिष्ठां वर्द्धयन्त्यस्य मन्त्रिणः ।
शकुनिः सूतपुत्त्रश्च भ्राता दुःशासनस्तथा । स हि त्यागेन राज्यस्य न शमं समुपेष्यति ।
अन्तरेण वधं पार्थ सानुबन्धः सुयोधनः । न चापि प्रणिपातेन त्यक्तुमिच्छति धर्म्मराट् । २८३०
याच्यमानश्च राज्यं स न प्रदास्यति दुर्म्मतिः । न तु मन्ये स तद्वाच्यो यद्युधिष्ठिरशासनं ।
उक्तं प्रयोजनं यत्तु धर्म्मराजेन भारत । तथापापस्तु तत्सर्व्वं न करिष्यति कौरवः ।
तस्मिंश्चाक्रियमाणेऽसौ लोकवध्यो भविष्यति । मम चापि स वध्यो हि जगतश्चापि भारत ।
येन कौमारके यूयं सर्व्वे विप्रकृताः सदा । विप्रलुप्तञ्च वो राज्यं नृशंसेन दुरात्मना ।
न चोपशाम्यते पापः श्रियं दृष्ट्वा युधिष्ठिरे । असकृच्चाप्यहं तेन त्वत्कृते पार्थ भेदितः । २८३५
न मया तद्गृहीतञ्च पापं तस्य चिकीर्षितं । जानासि हि महाबाहो त्वमप्यस्य परं मतं ।
प्रियं चिकीर्षमाणञ्च धर्म्मराजस्य मामपि । स जानंस्तस्य चात्मानं मम चैव परं मतं ।
अजानन्निव मां कस्मादर्ज्जुनाद्याभिशङ्कसे । यच्चापि परमं दिव्यं तच्चाप्यनुगतं त्वया ।
विधानविहितं पार्थ कथं शर्म्म भवेत् परैः । यत्तु वाचा मया शक्यं कर्म्मणा वाऽपि पाण्डव ।
करिष्ये तदहं पार्थ नत्वाशंसे शमं परैः । कथं गोहरणे ह्युक्तो नैतच्छर्म्म तथा हितं । २८४०
याच्यमानोऽपि भीष्मेण संवत्सरगतेऽध्वनि । तदैव ते पराभूता यदा सङ्कल्पितास्त्वया ।
लवशः क्षणशश्चापि न च तुष्टः सुयोधनः । सर्व्वथा तु मया कार्य्यं धर्म्मराजस्य शासनं ।
विभाव्यं तस्य भूयश्च कर्म्म पापं दुरात्मनः ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कृष्णवाक्ये ऽष्टसप्ततोऽध्यायः ॥ ७८ ॥
॥ नकुल उवाच ॥ उक्तं बहुविधं वाक्यं धर्म्मराजेन माधव । धर्म्मज्ञेन वदान्येन श्रुतञ्चैवेह तत्त्वया ।
मतमाज्ञाय राज्ञश्च भीमसेनेन माधव । संशमो बाहुवीर्य्यञ्च ख्यापितं माधवात्मनः । २८४५

तथैव फाल्गुनेनापि यदुक्तं तत्त्वया श्रुतं। आत्मनश्च मतं वीर कथितं भवताऽसकृत्।
सर्व्वमेतदतिक्रम्य श्रुत्वा परमतं भवान्। यत्प्राप्तकालं मन्येथास्तत्कुर्य्याः पुरुषोत्तम।
तस्मिंस्तस्मिन्निमित्ते हि मतं भवति केशव। प्राप्तकालं मनुष्येण स्वमं कार्य्यमरिन्दम।
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति सोऽन्यथा। अनित्यमतयो लोके नराः पुरुषसत्तम।
अन्यथा बुद्धयो ह्यासन्नस्मासु वनवासिषु। अदृश्येष्वन्यथा कृष्ण दृश्येषु पुनरन्यथा। २८८०
अस्माकमपि वार्ष्णेय वने विचरतां तदा। न तथा प्रणयो राज्ये यथा सम्प्रति वर्त्तते।
निवृत्तवनवासान्नः श्रुत्वा वीर समागताः। अक्षौहिण्यो हि सप्तेमास्त्वत्प्रसादाज्जनार्द्दन।
इमान् हि पुरुषव्याघ्रानचिन्त्यबलपौरुषान्। आत्तशस्त्रानाजौ दृष्ट्वा न व्यथेदिह कः पुमान्।
स भवान् कुरुमध्ये च सान्त्वपूर्व्वं भयोत्तरं। ब्रूयात्तद्वाक्यं यथा मन्दो न व्यथेत सुयोधनः।
युधिष्ठिरं भीमसेनं बीभत्सुञ्चापराजितं। सहदेवञ्च माञ्चैव त्वाञ्च रामञ्च केशव। २८८५
सात्यकिञ्च महावीर्य्यं विराटञ्च सहात्मजं। द्रुपदञ्च सहामात्यं धृष्टद्युम्नञ्च माधव।
काशिराजञ्च विक्रान्तं धृष्टकेतुञ्च चेदिपं। मांसशोणितभृन्मर्त्यः प्रतियुध्येत को युधि।
स भवान् गमनादेव साधयिष्यत्यसंशयं। इष्टमर्थं महाबाहो धर्म्मराजस्य केवलं।
विदुरश्चैव भीष्मश्च द्रोणश्च सहबाह्लिकः। श्रेयः समर्था विज्ञातुमुच्यमानास्त्वयाऽनघ।
ते चैनमनुनेष्यन्ति धृतराष्ट्रं जनाधिपं। तञ्च पापसमाचारं सहामात्यं सुयोधनं। २८९०
श्रोता चार्थस्य विदुरस्त्वञ्च वक्ता जनार्द्दन। कमिवार्थं विवर्त्तन्तं स्थापयेतां न वर्त्मनि।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि नकुलवाक्ये एकोनाशीतितमोऽध्यायः॥ ७९ ॥
॥ सहदेव उवाच ॥ यदि तत् कथितं राज्ञा धर्म्म एष सनातनः। यथा च युद्धमेव स्यात्तथा कार्य्यमरिन्दम।
यदि प्रशममिच्छेयुः कुरवः पाण्डवैः सह। तथाऽपि युद्धं दाशार्ह योजयेथाः सहैव तैः।
कथन्नु दृष्ट्वा पाञ्चालीं तथा कृष्ण सभागतां। अवधेन प्रशाम्येत मम मन्युः सुयोधने।
यदि भीमार्ज्जुनौ कृष्ण धर्म्मराजश्च धार्म्मिकाः। धर्म्ममुत्सृज्य तेनाहं योद्धुमिच्छामि संयुगे। २८९५
॥ सात्यकिरुवाच ॥ सत्यमाह महाबाहो सहदेवो महामतिः। दुर्य्योधनवधे शान्तिस्तस्य कोपस्य मे भवेत्।
न जानासि यथा दृष्ट्वा चीराजिनधरान् वने। तवापि मन्युरुद्भूतो दुःखितान् प्रेक्ष्य पाण्डवान्।
तस्मान्माद्रीसुतः शूरो यदाह रणकर्क्कशः। वचनं सर्व्वयोधानां तन्मतं पुरुषोत्तम।
॥ वैशम्पायन उवाच ॥ एवं वदति वाक्यन्तु युयुधाने महामतौ। सुभीमः सिंहनादोऽभूत् योधानां तत्र सर्व्वशः।
सर्व्वे हि सर्व्वशो वीरास्तद्वचः प्रत्यपूजयन्। साधुसाध्विति शैनेयं हर्षयन्तो युयुत्सवः। २९००
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि सहदेववाक्ये अशीतितमोऽध्यायः॥ ८० ॥
॥ वैशम्पायन उवाच ॥ राज्ञस्तद्वचनं श्रुत्वा धर्म्मार्थसहितं हितं। कृष्णा दाशार्हमासीनमब्रवीच्छोककर्षिता।
सुता द्रुपदराजस्य असितायतमूर्द्धजा। सम्पूज्य सहदेवञ्च सात्यकिञ्च महारथं।
भीमसेनञ्च संशान्तं दृष्ट्वा परमदुर्म्मनाः। अश्रुपूर्णेक्षणा वाक्यमुवाचेदं मनस्विनी।

विदितं ते महाबाहो धर्म्मज्ञ मधुसूदन। यथा निकृतिमास्थाय भ्रंशिताः पाण्डवाः सुखात्।
धृतराष्ट्रस्य पुत्त्रेण सामात्येन जनार्द्दन। यथा च सञ्जयो राज्ञा मन्त्रं रहसि श्रावितः। २८७५
युधिष्ठिरेण दाशार्ह तच्चापि विदितं तव। यथोक्तः सञ्जयश्चैव तच्च सर्व्वं श्रुतं त्वया।
पञ्च नस्तात दीयन्तां ग्रामा इति महाद्युते। अविस्थलं वृकस्थलं माकन्दीं वारणावतं।
अवसानं महाबाहो कञ्चिदेकञ्च पञ्चमं। इति दुर्य्योधनो वाच्यः सुहृदश्चास्य केशव।
न चापि चाकरोद्वाक्यं श्रुत्वा कृष्ण सुयोधनः। युधिष्ठिरस्य दाशार्ह श्रीमतः सन्धिमिच्छतः।
अप्रदानेन राज्यस्य यदि कृष्ण सुयोधनः। सन्धिमिच्छेन्न कर्त्तव्यस्तत्र गत्वा कथञ्चन। २८८०
शक्ष्यन्ति हि महाबाहो पाण्डवाः सृञ्जयैः सह। धार्त्तराष्ट्रबलं घोरं क्रुद्धं प्रतिसमासितुं।
न हि साम्ना न दानेन शक्योऽर्थस्तेषु कश्चन। तस्मात्तेषु न कर्त्तव्या कृपा ते मधुसूदन।
साम्ना दानेन वा कृष्ण ये न शाम्यन्ति शत्रवः। योक्तव्यस्तेषु दण्डः स्यात् जीवितं परिरक्षता।
तस्मात्तेषु महादण्डः क्षेप्तव्यः क्षिप्रमच्युत। त्वया चैव महाबाहो पाण्डवैः सह सृञ्जयैः।
एतत् समर्थं पार्थानां तव चैव यशस्करं। क्रियमाणं भवेत् कृष्ण क्षत्त्रस्य च सुखावहं। २८८५
क्षत्त्रियेण हि हन्तव्यः क्षत्त्रियो लोभमास्थितः। अक्षत्त्रियो वा दाशार्ह स्वधर्म्ममनुतिष्ठता।
अन्यत्र ब्राह्मणात्तात सर्व्वपापेष्ववस्थितात्। गुरुर्हि सर्व्ववर्णानां ब्राह्मणः प्रसृताग्रभुक्।
यथाऽवध्ये भवेद्दोषो वध्यमाने जनार्द्दन। स वध्यस्यावधे दृष्ट इति धर्म्मविदो विदुः।
यथा त्वां न स्पृशेदेष दोषः कृष्ण तथा कुरु। पाण्डवैः सह दाशार्ह सृञ्जयैः सह सैनिकैः।
पुनरुक्तञ्च वक्ष्यामि विश्रम्भेण जनार्द्दन। का नु सीमन्तिनी मादृक् पृथिव्यामस्ति केशव। २८९०
सुता द्रुपदराजस्य वेदीमध्यात् समुत्थिता। धृष्टद्युम्नस्य भगिनी तव कृष्ण प्रिया सखी।
आजमीढकुलं प्राप्ता स्नुषा पाण्डोर्महात्मनः। महिषी पाण्डुपुत्त्राणां पञ्चेन्द्रसमवर्च्चसां।
सुता मे पञ्चभिर्व्वीरैः पञ्च जाता महारथाः। अभिमन्युर्यथा कृष्ण तथा ते तव धर्म्मतः।
साऽहं केशग्रहं प्राप्ता परिक्लिष्टा सभाङ्गता। पश्यतां पाण्डुपुत्त्राणां त्वयि जीवति केशव।
जीवत्सु पाण्डुपुत्त्रेषु पाञ्चालेष्वथ वृष्णिषु। दासीभूताऽस्मि पापानां सभामध्ये व्यवस्थिता। २८९५
निरमर्षेष्वचेष्टेषु प्रेक्षमाणेषु पाण्डुषु। पाहि मामिति गोविन्द मनसा चिन्तितोऽसि मे।
यत्र मां भगवान् राजा श्वशुरो वाक्यमब्रवीत्। वरं वृणीष्व पाञ्चालि वरार्हाऽसि मताऽसि मे।
अदासाः पाण्डवाः सन्तु सरथाः सायुधा इति। मयोक्ते यत्र निर्म्मुक्ता वनवासाय केशव।
एवंविधानां दुःखानामभिज्ञोऽसि जनार्द्दन। त्रायस्व पुण्डरीकाक्ष सभर्तृज्ञातिबान्धवां।
नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः। स्नुषा भवामि धर्म्मेण साऽहं दासीकृता बलात्। २९००
धिक् पार्थस्य धनुष्मत्तां भीमसेनस्य धिग्बलं। यत्र दुर्य्योधनः कृष्ण मुहूर्त्तमपि जीवति।
यदि तेऽहमनुग्राह्या यदि तेऽस्ति कृपा मयि। धार्त्तराष्ट्रेषु वै कोपः सर्व्वः कृष्ण विधीयतां।
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा मृदुसंहारं वृजिनाग्रं सुदर्शनं। सुनीलमसितापाङ्गी सर्व्वगन्धाधिवासितं।

सर्व्वलक्षणसम्पन्नं महाभुजगवर्च्चसं। केशपक्षं वरारोहा गृह्य वामेन पाणिना।
पद्माक्षी पुण्डरीकाक्षमुपेत्य गजगामिनी। अश्रुपूर्णेक्षणा दीना कृष्णं वचनमब्रवीत्। २९०५
अयन्ते पुण्डरीकाक्ष दुःशासनकरोद्धृतः। स्मर्त्तव्यः सर्व्वकार्य्येषु परेषां सन्धिमिच्छतां।
यदि भीमार्ज्जुनौ कृष्ण कृपणौ सन्धिकामुकौ। पिता मे योत्स्यते वृद्धः सह पुत्त्रैर्महारथैः।
पञ्च चैव महावीर्य्याः पुत्त्रा मे मधुसूदन। अभिमन्युं पुरस्कृत्य योत्स्यन्ते कुरुभिः सह।
दुःशासनभुजं श्यामं संछिन्नं पांशुगुण्ठितं। यद्यहन्तु न पश्यामि का शान्तिर्हृदयस्य मे।
त्रयोदश हि वर्षाणि प्रतीक्षन्त्या गतानि मे। निधाय हृदये मन्युं प्रदीप्तमिव पावकं। २९१०
विदीर्य्यते मे हृदयं भीमवाक्शल्यपीडितं। योऽयमद्य महाबाहुर्धर्म्ममेवानुपश्यति।
इत्युक्त्वा वाष्पकण्ठेन कण्ठेनायतलोचना। रुरोद कृष्णा सोत्कम्पं सस्वनं वाष्पगद्गदं।
स्तनौ पीनायतश्रोणी सहितावभिवर्षती। द्रवीभूतमिवात्युष्णं मुञ्चती वारि नेत्रजं।
तामुवाच महाबाहुः केशवः परिसान्त्वयन्। अचिरात् द्रक्ष्यसे कृष्णे रुदतीर्भरतस्त्रियः।
एवं ता भीरु रोत्स्यन्ति निहतज्ञातिबान्धवाः। हतमित्रा हतबला येषां क्रुद्धासि भामिनि। २९१५
अहञ्च तत् करिष्यामि भीमार्ज्जुनयमैः सह। युधिष्ठिरनियोगेन दैवाच्च विधिनिर्म्मितात्।
धार्त्तराष्ट्राः कालपक्वा न चेत् शृण्वन्ति मे वचः। शेयन्ते निहता भूमौ श्वशृगालादनीकृताः।
चलेद्धि हिमवान् शैलो मेदिनी शतधा फलेत्। द्यौः पतेच्च सनक्षत्रा न मे मोघं वचो भवेत्।
सत्यं ते प्रतिजानामि कृष्णे वाष्पो निगृह्यतां। हतामित्रान् श्रिया युक्तानचिराद्द्रक्ष्यसे पतीन्।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि श्रीकृष्णवाक्ये एकाशीतोऽध्यायः॥ ८१ ॥
॥ अर्ज्जुन उवाच॥ कुरूणामद्य सर्व्वेषां भवान् सुहृदनुत्तमः। सम्बन्धी दयितो नित्यमुभयोः पक्षयोरपि। २९२०
पाण्डवैर्धार्त्तराष्ट्राणां प्रतिपाद्यमनामयं। समर्थः प्रशमञ्चैव कर्त्तुमर्हसि केशव।
त्वमितः पुण्डरीकाक्ष सुयोधनममर्षणं। शान्त्यर्थं भारतं ब्रूया यत्तत् वाच्यममित्रहन्।
त्वया धर्म्मार्थयुक्तञ्चेदुक्तं शिवमनामयं। हितं नादास्यते बालो दिष्टस्य वशमेष्यति।
॥ श्रीभगवानुवाच॥ धर्म्म्यमस्मद्धितञ्चैव कुरूणां यदनामयं। एष यास्यामि राजानं धृतराष्ट्रमभीप्सया।
॥ वैशम्पायन उवाच॥ ततो व्यपेते तमसि सूर्य्ये विमल उद्गते। मैत्रे मुहूर्त्ते सम्प्राप्ते मृद्वर्चिषि दिवाकरे। २९२५
कौमुदे मासि रेवत्यां शरदन्ते हिमागमे। स्फीतसस्यसुखे काले कल्यः सत्त्ववतां वरः।
मङ्गल्याः पुण्यनिर्घोषा वाचः शृण्वंश्च सूनृताः। ब्राह्मणानां प्रतीतानामृषीणामिव वासवः।
कृत्वा पौर्व्वाह्णिकं कृत्यं स्नातः शुचिरलङ्कृतः। उपतस्थे विवस्वन्तं पावकञ्च जनार्द्दनः।
ऋषभं पृष्ठ आलभ्य ब्राह्मणानभिवाद्य च। अग्निं प्रदक्षिणं कृत्वा पश्यन् कल्याणमग्रतः।
तत्प्रतिज्ञाय वचनं पाण्डवस्य जनार्द्दनः। शिनेर्नप्तारमासीनमभ्यभाषत सात्यकिं। २९३०
रथ आरोप्यतां शङ्खश्चक्रञ्च गदया सह। उपासङ्गाश्च शक्त्यश्च सर्व्वप्रहरणानि च।
दुर्य्योधनो हि दुष्टात्मा कर्णश्च सहसौबलः। न च शत्रुरवज्ञेयो दुर्ब्बलोऽपि बलीयसा।

ततस्तम्मतमाज्ञाय केशवस्य पुरःसराः । प्रचक्रुर्योजयिष्यन्तो रथं चक्रगदाभृतः ।
तं दीप्तमिव कालाग्निमाकाशगमिवाध्वगं । चन्द्रसूर्य्यप्रकाशाभ्यां चक्राभ्यां समलङ्कृतं ।
अर्द्धचन्द्रैश्च चन्द्रैश्च मत्स्यैः सम्मृगपक्षिभिः । पुष्पैश्च विविधैश्चित्रं मणिरत्नैश्च सर्व्वशः । २८६५
तरुणादित्यसङ्काशं बृहन्तं चारुदर्शनं । मणिहेमविचित्राङ्गं सुध्वजं सुपताकिनं ।
सूपस्करमनाधृष्यं वैयाघ्रपरिवारणं । यशोघ्नं प्रत्यमित्राणां यदूनां नन्दिवर्द्धनं ।
वाजिभिः शैव्यसुग्रीवमेघपुष्पबलाहकैः । स्नातैः सम्पादयामासुः सम्पन्नैः सर्व्वसम्पदा ।
महिमानन्तु कृष्णस्य भूय एवाभिवर्द्धयन् । सुघोषः पतगेन्द्रेण ध्वजेन युयुजे रथः ।
तं मेरुशिखरप्रख्यं मेघदुन्दुभिनिस्वनं । आरुरोह रथं शौरिर्व्विमानमिव कामगं । २९७०
ततः सात्यकिमारोप्य प्रययौ पुरुषोत्तमः । पृथिवीञ्चान्तरीक्षञ्च रथघोषेण नादयन् ।
व्यपोढाभ्रस्ततः कालः क्षणेन समपद्यत । शिवश्चानुववौ वायुः प्रशान्तमभवद्रजः ।
प्रदक्षिणानुलोमाश्च मङ्गल्या मृगपक्षिणः । प्रयाणे वासुदेवस्य बभूवुरनुयायिनः ।
मङ्गल्यार्थपदैः शब्दैरन्ववर्त्तन्त सर्व्वशः । सारसाः शतपत्राश्च हंसाश्च मधुसूदनं ।
मन्त्राहुतिमहाहोमैर्हूयमानश्च पावकः । प्रदक्षिणशिखो भूत्वा विधूमः समपद्यत । २९७५
वशिष्ठो वामदेवश्च भूरिद्युम्नो गयः क्रथः । शुक्रनारदवाल्मीका मरुतः कुशिको भृगुः ।
देवा ब्रह्मर्षयश्चैव कृष्णं यदुसुखावहं । प्रदक्षिणमवर्त्तन्त सहिता वासवानुजं ।
एवमेतैर्महाभागैर्महर्षिगणसाधुभिः । पूजितः प्रययौ कृष्णः कुरूणां सदनं प्रति ।
तं प्रयान्तमनुप्रायात् कुन्तीपुत्रो युधिष्ठिरः । भीमसेनार्ज्जुनौ चोभौ माद्रीपुत्रौ च पाण्डवौ ।
चेकितानश्च विक्रान्तो धृष्टकेतुश्च चेदिपः । द्रुपदः काशिराजश्च शिखण्डी च महारथः । २९८०
धृष्टद्युम्नः सपुत्रश्च विराटः केकयैः सह । संसाधनार्थं प्रययुः क्षत्रियाः क्षत्रियर्षभं ।
ततोऽनुव्रज्य गोविन्दं धर्म्मराजो युधिष्ठिरः । राज्ञां सकाशे द्युतिमानुवाचेदं वचस्तदा ।
यो वै न कामान्न क्रोधान्न भयान्नार्थकारणात् । अन्यायमनुवर्त्तेत स्थिरबुद्धिरलोलुपः ।
धर्म्मज्ञो धृतिमान् प्राज्ञः सर्व्वभूतेषु केशवः । ईश्वरः सर्व्वभूतानां देवदेवः सनातनः ।
तं सर्व्वगुणसम्पन्नं श्रीवत्सकृतलक्षणं । सम्परिष्वज्य कौन्तेयः सन्देष्टुमुपचक्रमे । २९८५
॥ युधिष्ठिर उवाच ॥ या सा बाल्यात् प्रभृत्यस्मान् पर्य्यवर्द्धयताबला । उपवासतपःशीला सदा स्वस्त्ययने रता ।
देवताऽतिथिपूजासु गुरुशुश्रूषणे रता । वत्सला प्रियपुत्रा च प्रियाऽस्माकं जनार्द्दन ।
सुयोधनभयात् या नोऽत्रायतामित्रकर्षण । महतो मृत्युसम्बाधादुत्तरेन्नौरिवार्णवात् ।
अस्मत्कृते च सततं यया दुःखानि माधव । अनुभूतान्यदुःखार्हा तां स्म पृच्छेरनामयं ।
भृशमाश्वासयेश्चैनां पुत्रशोकपरिप्लुतां । अभिवाद्य स्वजेथाश्च पाण्डवान् परिकीर्त्तयन् । २९९०
ऊढात्प्रभृति दुःखानि श्वशुराणामरिन्दम । निकारान् न तदर्हा च पश्यन्ती दुःखमश्नुते ।
अपि जातु स कालः स्यात् कृष्ण दुःखविपर्य्ययः । यदाऽहं मातरं क्लिष्टां सुखं दद्यामरिन्दम ।

प्रव्रजन्तोऽभिधावन्तीं कृपणां पुत्रगृद्धिनीं । रुदतीमपहायैनामगच्छाम वयं वनं ।
न नूनं म्रियते दुःखैः सा चेज्जीवति केशव । तथा पुत्राधिभिर्गाढमार्त्ता ह्यानर्त्तसत्कृता ।
अभिवाद्याथ सा कृष्ण त्वया मद्वचनाद्विभो । धृतराष्ट्रश्च कौरव्यो राजानश्च वयोऽधिकाः । २९६५
भीष्मं द्रोणं कृपञ्चैव महाराजञ्च वाह्लिकं । द्रौणिञ्च सोमदत्तञ्च सर्व्वांश्च भरतान् प्रति ।
विदुरञ्च महाप्राज्ञं कुरूणां मन्त्रधारिणं । अगाधबुद्धिं धर्म्मज्ञं स्वजेथा मधुसूदन ।
इत्युक्त्वा केशवं तत्र राजमध्ये युधिष्ठिरः । अनुज्ञातो निववृते कृष्णं कृत्वा प्रदक्षिणं ।
प्रव्रजन्नेव बीभत्सुः सखायं पुरुषर्षभं । अब्रवीत् परवीरघ्नं दाशार्हमपराजितं ।
यदस्माकं विभो वृत्तं पुरा वै मन्त्रनिश्चये । अर्द्धराज्यस्य गोविन्द विदितं सर्व्वराजसु । २९७०
तच्चेद्दद्यादसङ्गेन सत्कृत्यानवमन्य च । प्रियं मे स्यान्महाबाहो मुच्येरन् महतो भयात् ।
अतश्चेदन्यथा कर्त्ता धार्त्तराष्ट्रोऽनुपायवित् । अन्तं नूनं करिष्यामि क्षत्रियाणां जनार्द्दन ।
एवमुक्ते पाण्डवेन समहृष्यद्वृकोदरः । मुहुर्मुहुः क्रोधवशात् प्रावेपत च पाण्डवः ।
वेपमानश्च कौन्तेयः प्राक्रोशन्महतो रवान् । धनञ्जयवचः श्रुत्वा हर्षोत्सिक्तमना भृशं ।
तस्य तं निनदं श्रुत्वा सम्प्रावेपन्त धन्विनः । वाहनानि च सर्व्वाणि शकृन्मूत्रं प्रसुस्रुवुः । २९७५
इत्युक्त्वा केशवं तत्र तथा चोक्त्वा विनिश्चयं । अनुज्ञातो निववृते परिष्वज्य जनार्द्दनं ।
तेषु राजसु सर्व्वेषु निवृत्तेषु जनार्द्दनः । तूर्णमभ्यागमद्धृष्टः शैब्यसुग्रीववाहनः ।
ते हया वासुदेवस्य दारुकेण प्रचोदिताः । पन्थानमाचेमुरिव ग्रसमाना इवाम्बरं ।
अथापश्यन्महाबाहुरृषीनध्वनि केशवः । ब्राह्म्या श्रिया दीप्यमानान् स्थितानुभयतः पथि ।
सोऽवतीर्य्य रथात् तूर्णमभिवाद्य जनार्द्दनः । यथावत्तानृषीन् सर्व्वानभ्यभाषत पूजयन् । २९८०
कच्चिल्लोकेषु कुशलं कच्चिद्धर्म्मः स्वनुष्ठितः । ब्राह्मणानां त्रयो वर्णाः कच्चित्तिष्ठन्ति शासने ।
तेभ्यः प्रयुज्य तां पूजां प्रोवाच मधुसूदनः । भगवन्तः क्व संसिद्धाः का वीथी भवतामिह ।
किं वा कार्य्यं भगवतामहं किं करवाणि वः । केनार्थेनेह सम्प्राप्ता भगवन्तो महीतलं ।
तमब्रवीज्जामदग्न्य उपेत्य मधुसूदनं । परिष्वज्य च गोविन्दं सुरासुरपतेः सखा ।
देवर्षयः पुण्यकृतो ब्राह्मणाश्च बहुश्रुताः । राजर्षयश्च दाशार्ह मानयन्तस्तपस्विनः । २९८५
देवासुरस्य द्रष्टारः पुराणस्य महीपते । समेतं पार्थिवं क्षत्रं दिदृक्षन्तश्च सर्व्वतः ।
सभासदश्च राजानस्त्वाञ्च सत्यं जनार्द्दनं । एतन्महाप्रेक्षणीयं द्रष्टुं गच्छाम केशव ।
धर्म्मार्थसहिता वाचः श्रोतुमिच्छाम माधव । त्वयोच्यमानाः कुरुषु राजमध्ये परन्तप ।
भीष्मद्रोणादयश्चैव विदुरश्च महामतिः । त्वञ्च यादवशार्दूल सभायां वै समेष्यथ ।
तव वाक्यानि दिव्यानि तथा तेषाञ्च माधव । श्रोतुमिच्छाम गोविन्द सत्यानि च हितानि च । २९९०
आपृष्टोऽसि महाबाहो पुनर्द्रक्ष्यामहे वयं । याह्यविघ्नेन वै वीर द्रक्ष्यामस्त्वां सभागतं ।
आसीनमासने दिव्ये बलतेजःसमागतं ।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवद्याने द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

॥ वैशम्पायन उवाच ॥ प्रयान्तं देवकीपुत्रं परवीररुजो दश। महारथा महाबाहुमन्वयुः शस्त्रपाणयः।
पदातीनां सहस्रञ्च सादिनाञ्च परन्तप। भोज्यञ्च विपुलं राजन् प्रेष्याश्च शतशोऽपरे।
॥ जनमेजय उवाच ॥ कथं प्रयातो दाशार्हो महात्मा मधुसूदनः। कानि वा व्रजतस्तस्य निमित्तानि महौजसः। ९९९५
॥ वैशम्पायन उवाच ॥ तस्य प्रयाणे यान्यासन्निमित्तानि महात्मनः। तानि मे शृणु सर्व्वाणि दैवान्यौत्पातिकानि च।
अनभ्रेऽशनिनिर्घोषः सविद्युत्समजायत। अन्वगेव च पर्ज्जन्यः प्रावर्षद्विघने भृशं।
प्रत्यगूहुर्महानद्यः प्राङ्मुखाः सिन्धुसत्तमाः। विपरीता दिशः सर्व्वा न प्राज्ञायत किञ्चन।
प्राज्वलन्नग्नयो राजन् पृथिवी समकम्पत। उदपानाश्च कुम्भाश्च प्रासिञ्चञ्छतशो जलं।
तमः संवृतमप्यासीत् सर्व्वं जगदिदं तथा। न दिशो नादिशो राजन् प्राज्ञायन्त स्म रेणुना। १०००
प्रादुरासीन्महाञ्छब्दः खे शरीरं न दृश्यते। सर्व्वेषु राजन् देशेषु तदद्भुतमिवाभवत्।
प्रामथ्नाद्धास्तिनपुरं वातो दक्षिणपश्चिमः। आरुजन् गणशो वृक्षान् परुषोऽशनिनिस्वनः।
यत्र यत्र च वार्ष्णेयो वर्त्तते पथि भारत। तत्र तत्र सुखो वायुः सर्व्वञ्चासीत् प्रदक्षिणं।
ववर्ष पुष्पवर्षञ्च कमलानि च भूरिशः। समश्च पन्था निर्दुःखो व्यपेतकुशकण्टकः।
संस्तुतो ब्राह्मणैर्गीर्भिस्तत्र तत्र सहस्रशः। अर्च्च्यते मधुपर्क्कैश्च वसुभिश्च वसुप्रदः। १००५
तं किरन्ति महात्मानं वन्यैः पुष्पैः सुगन्धिभिः। स्त्रियः पथि समागम्य सर्व्वभूतहिते रतं।
स शालिभवनं रम्यं सर्व्वसस्यसमाचितं। सुखं परमधर्म्मिष्ठमभ्यगाद्भरतर्षभ।
पश्यन् बहुपशून् ग्राम्यान् रम्यान् हृदयतोषणान्। पुराणि च व्यतिक्रामद्राष्ट्राणि विविधानि च।
नित्यं हृष्टाः सुमनसो भारतैरभिरक्षिताः। नोद्विग्नाः परचक्राणां व्यसनानामकोविदाः।
उपप्लव्यादथागम्य जनाः पुरनिवासिनः। पथ्यतिष्ठन्त सहिता विष्वक्सेनदिदृक्षया। १०१०
ते तु सर्व्वे समायान्तमग्निमिद्धमिव प्रभुं। अर्च्चयामासुरर्च्चार्हं देशातिथिमुपस्थितं।
वृकस्थलं समासाद्य केशवः परवीरहा। प्रकीर्णरश्मावादित्ये व्योम्नि वै लोहितायति।
अवतीर्य्य रथात्तूर्णं कृत्वा शौचं यथाविधि। रथमोचनमादिश्य सन्ध्यामुपविवेश ह।
दारुकोऽपि हयान्मुक्त्वा परिचर्य्य च शास्त्रतः। मुमोच सर्व्वयोक्त्रादि मुक्त्वा चैतानवासृजत्।
अभ्यतीत्य तु तत्सर्व्वमुवाच मधुसूदनः। युधिष्ठिरस्य कार्य्यार्थमिह वत्स्यामहे क्षपां। १०१५
तस्य तन्मतमाज्ञाय चक्रुरावसथं नराः। क्षणेन चान्नपानानि गुणवन्ति समार्ज्जयन्।
तस्मिन् ग्रामे प्रधानास्तु य आसन् ब्राह्मणा नृप। आर्य्याः कुलीना ह्रीमन्तो ब्राह्मीं वृत्तिमनुष्ठिताः।
तेऽभिगम्य महात्मानं हृषीकेशमरिन्दमं। पूजाञ्चक्रुर्यथान्यायमाशीर्म्मङ्गलसंयुतां।
ते पूजयित्वा दाशार्हं सर्व्वलोकेषु पूजितं। न्यवेदयन्त वेश्मानि रत्नवन्ति महात्मने।
तान् प्रभुः कृतमित्युक्त्वा सत्कृत्य च यथार्हतः। अभ्येत्य चैषां वेश्मानि पुनरायात् सहैव तैः। १०२०
सुमृष्टं भोजयित्वा तु ब्राह्मणांस्तत्र केशवः। भुक्त्वा च सह तैः सर्व्वैरवसत्तां क्षपां सुखं।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवद्याने त्र्यशीतोऽध्यायः ॥ ८३ ॥
॥ वैशम्पायन उवाच ॥ तथा दूतैः समाज्ञाय प्रयान्तं मधुसूदनं। धृतराष्ट्रोऽब्रवीत् भीष्ममर्च्चयित्वा महाभुजं।

द्रोणञ्च सञ्जयञ्चैव विदुरञ्च महामतिं । दुर्य्योधनं सहामात्यं हृष्टरोमा ऽब्रवीदिदं ।
अद्भुतं महदाश्चर्य्यं श्रूयते कुरुनन्दन । स्त्रियो बालाश्च वृद्धाश्च कथयन्ति गृहे गृहे ।
सत्कृत्याचक्षते चान्ये तथैवान्ये समागताः । पृथग्वादाश्च वर्त्तन्ते चत्वरेषु सभासु च । १०२५
उपयास्यति दाशार्हः पाण्डवार्थे पराक्रमी । स नो मान्यश्च पूज्यश्च सर्व्वथा मधुसूदनः ।
तस्मिन् हि यात्रा लोकस्य भूतानामीश्वरो हि सः । तस्मिन् धृतिश्च वीर्य्यञ्च प्रज्ञा चौजश्च माधवे ।
सतो मान्यो नरश्रेष्ठः स हि धर्म्मः सनातनः । पूजितो हि सुखाय स्यादसुखः स्यादपूजितः ।
स चेत्तुष्यति दाशार्ह उपचारैररिन्दम । कृत्स्नात् सर्व्वानभिप्रायान् प्राप्स्यामः सर्व्वराजसु ।
तस्य पूजार्थमद्यैव संविधत्स्व परन्तप । सभाः पथि विधीयन्तां सर्व्वकामसमन्विताः । १०३०
यथा प्रीतिर्महाबाहो त्वयि जायेत तस्य वै । तथा कुरुष्व गान्धारे कथं वा भीष्म मन्यसे ।
ततो भीष्मादयः सर्व्वे धृतराष्ट्रं जनाधिपं । ऊचुः परममित्येवं पूजयन्तोऽस्य तद्वचः ।
तेषामनुमतं ज्ञात्वा राजा दुर्य्योधनस्तदा । सभावास्तूनि रम्याणि प्रदेष्टुमुपचक्रमे ।
ततो देशेषु सर्व्वेषु रमणीयेषु भागशः । सर्व्वरत्नसमाकीर्णाः सभाश्चक्रुरनेकशः ।
आसनानि विचित्राणि युक्तानि विविधैर्गुणैः । स्त्रियो गन्धानलङ्कारान् सूक्ष्माणि वसनानि च । १०३५
गुणवन्त्यन्नपानानि भोज्यानि विविधानि च । माल्यानि च सुगन्धीनि तानि राजा ददौ ततः ।
विशेषतश्च वासार्थं सभां ग्रामे वृकस्थले । विदधे कौरवो राजा बहुरत्नां मनोरमां ।
एतद्विधाय वै सर्व्वं देवार्हमतिमानुषं । आचख्यौ धृतराष्ट्राय राजा दुर्य्योधनस्तदा ।
ताः सभाः केशवः सर्व्वा रत्नानि विविधानि च । असमीक्ष्यैव दाशार्ह उपायात् कुरुसद्म तत् ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवद्याने चतुरशीतोऽध्यायः ॥ ८४ ॥
॥ धृतराष्ट्र उवाच ॥ उपप्लव्यादिह क्षत्त रुपायातो जनार्द्दनः । वृकस्थले निवसति स च प्रातरिहैष्यति । १०४०
आहुकानामधिपतिः पुरोगः सर्व्वसात्वतां । महामना महावीर्य्यो महासत्त्वो जनार्द्दनः ।
स्फीतस्य वृष्णिराष्ट्रस्य भर्त्ता गोप्ता च माधवः । त्रयाणामपि लोकानां भगवान् प्रपितामहः ।
वृष्ण्यन्धकाः सुमनसो यस्य प्रज्ञामुपासते । आदित्या वसवो रुद्रा यथा बुद्धिं बृहस्पतेः ।
तस्मै पूजां प्रवक्ष्यामि दाशार्हाय महात्मने । प्रत्यक्षं तव धर्म्मज्ञ तां मे कथयतः शृणु ।
एकवर्णैः सुकृष्णाङ्गैर्बाह्लिजातैर्हयोत्तमैः । चतुर्युक्तान् रथांस्तस्मै रौक्मान् दास्यामि षोडश । १०४५
नित्यप्रभिन्नान्मातङ्गानीषादन्तान् प्रहारिणः । अष्टानुचरमेकैकमष्टौ दास्यामि कौरव ।
दासीनामप्रजातानां शुभानां रुक्मवर्च्चसां । शतमस्मै प्रदास्यामि दासानामपि तावतः ।
आविकञ्च सुखस्पर्शं पार्व्वतीयैरुपाहृतं । तदप्यस्मै प्रदास्यामि सहस्राणि दशाष्ट च ।
वाजिनाञ्च सहस्राणि चीनदेशोद्भवानि च । तान्यप्यस्मै प्रदास्यामि यावदर्हति केशवः ।
दिवा रात्रौ च भात्येष सुतेजा विमलो मणिः । तमप्यस्मै प्रदास्यामि तमर्हति हि केशवः । १०५०
एकेनाभिपतत्यह्ना योजनानि चतुर्द्दश । यानमश्वतरीयुक्तं दास्ये तस्मै तदप्यहं ।

यावन्ति वाहनान्यस्य यावन्तः पुरुषाश्च ते । ततोऽष्टगुणमप्यस्मै भोज्यं दास्याम्यहं सदा ।
मम पुत्राश्च पौत्राश्च सर्व्वे दुर्य्योधनादृते । प्रत्युद्यास्यन्ति दाशार्हं रथैर्मृष्टैः स्वलङ्कृताः ।
स्वलङ्कृताश्च कल्याण्यः पादैरेव सहस्रशः । वारमुख्या महाभागं प्रत्युद्यास्यन्ति केशवं ।
नगरादपि याः काश्चित् गमिष्यन्ति जनार्द्दनं । द्रष्टुं कन्याश्च कल्याण्यस्ताश्च यास्यन्त्यनावृताः । १०५५
सस्त्रीपुरुषबालञ्च नगरं मधुसूदनं । उदीक्षतां महात्मानं भानुमन्तमिव प्रजाः ।
महाध्वजपताकाश्च क्रियन्तां सर्व्वतो दिशः । जलावसिक्तो विरजाः पन्थास्तस्येति चान्वशात् ।
दुःशासनस्य च गृहं दुर्य्योधनगृहाद्वरं । तदस्य क्रियतां क्षिप्रं सुसंमृष्टमलङ्कृतं ।
एतद्धि रुचिराकारैः प्रासादैरुपशोभितं । शिवञ्च रमणीयञ्च सर्व्वर्त्तुसु महाधनं ।
सर्व्वमस्मिन् गृहे रत्नं मम दुर्य्योधनस्य च । यद्यदर्हति वार्ष्णेयस्तत्तद्देयमसंशयं । १०६०
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि धृतराष्ट्रवाक्ये पञ्चाशीतोऽध्यायः ॥ ८५ ॥
॥ विदुर उवाच ॥ राजन् बहुमतश्चासि त्रैलोक्यस्यापि सत्तम । सम्भावितश्च लोकस्य संमतश्चासि भारत ।
यत्त्वमेवं गते ब्रूयाः पश्चिमे वयसि स्थितः । शास्त्राद्वा सुमतर्काद्वा सुस्थिरः स्थविरो ह्यसि ।
लेखाऽश्मनीव भाः सूर्य्ये महोर्म्मिरिव सागरे । धर्म्मस्त्वयि तथा राजन्निति व्यवसिताः प्रजाः ।
सदैव भावितो लोको गुणौघैस्तव पार्थिव । गुणानां रक्षणे नित्यं प्रयतस्व सबान्धवः ।
आर्ज्जवं प्रतिपद्यस्व मा बाल्याद्बहुधा नीनशः । राजन् पुत्रांश्च पौत्रांश्च सुहृदश्चैव सुप्रियान् । १०६५
यत्त्वमिच्छसि कृष्णाय राजन्नतिथये बहु । एतदन्यच्च दाशार्हः पृथिवीमपि चार्हति ।
न तु त्वं धर्म्ममुद्दिश्य तस्य वा प्रियकारणात् । एतदिच्छसि कृष्णाय सत्येनात्मानमालभे ।
मायैषा सत्यमेवैतच्छद्मैतद्भूरिदक्षिण । जानामि त्वन्मतं राजन् गूढं बाह्येन कर्म्मणा ।
पञ्च पञ्चैव लिप्सन्ति ग्रामकान् पाण्डवा नृप । न च दित्ससि तेभ्यस्तांस्तच्छमं न करिष्यसि ।
अर्थेन तु महाबाहुं वार्ष्णेयं त्वं जिहीर्षसि । अनेन चाप्युपायेन पाण्डवेभ्यो विभेत्स्यसि । १०७०
न च वित्तेन शक्योऽसौ नोद्यमेन न गर्हया । अन्यो धनञ्जयात् कर्त्तुमेतत्तत्त्वं ब्रवीमि ते ।
वेद कृष्णस्य माहात्म्यं वेदास्य दृढभक्तितां । अत्याज्यमस्य जानामि प्राणैस्तुल्यं धनञ्जयं ।
अन्यत् कुम्भादपां पूर्णादन्यत् पादावसेचनात् । अन्यत् कुशलसम्प्रश्नान्नैषिष्यति जनार्द्दनः ।
यत्त्वस्य प्रियमातिथ्यं मानार्हस्य महात्मनः । तदस्मै क्रियतां राजन् मानार्होऽसौ जनार्द्दनः ।
आशंसमानः कल्याणं कुरूनभ्येति केशवः । येनैव राजन्नर्थेन तदेवास्मा उपाकुरु । १०७५
शममिच्छति दाशार्हस्तव दुर्य्योधनस्य च । पाण्डवानाञ्च राजेन्द्र तदस्य वचनं कुरु ।
पिताऽसि राजन् पुत्रास्ते वृद्धस्त्वं शिशवः परे । वर्त्तस्व पितृवत्तेषु वर्त्तन्ते ते हि पुत्रवत् ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि विदुरवाक्ये षडशीतोऽध्यायः ॥ ८६ ॥
॥ दुर्य्योधन उवाच ॥ यदाह विदुरः कृष्णे सर्व्वं तत्सत्यमच्युते । अनुरक्तो ह्यसंहार्य्यः पार्थान् प्रति जनार्द्दनः ।
यत्तत्सत्कारसंयुक्तं देयं वसु जनार्द्दने । अनेकरूपं राजेन्द्र न तद्देयं कदाचन ।

देशः कालस्तथाऽयुक्तो न हि नार्हति केशवः । मंस्यत्यधोक्षजो राजन् भयादर्चति मामिति । १०८०
अवमानश्च यत्र स्यात् क्षत्रियस्य विशाम्पते । न तत्कुर्य्यात् बुधः कार्य्यमिति मे निश्चिता मतिः ।
स हि पूज्यतमो लोके कृष्णः पृथुललोचनः । त्रयाणामपि लोकानां विदितं मम सर्व्वथा ।
न तु तस्मै प्रदेयं स्यात् तथा कार्य्यगतिः प्रभो । विग्रहः समुपारब्धो न हि शाम्यत्यविग्रहात् ।
॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं श्रुत्वा भीष्मः कुरुपितामहः । वैचित्रवीर्य्यं राजानमिदं वचनमब्रवीत् ।
सत्कृतोऽसत्कृतो वाऽपि न क्रुध्येत जनार्द्दनः । नालमेनमवज्ञातुं नावज्ञेयो हि केशवः । १०८५
यत्तु कार्य्यं महाबाहो मनसा कार्य्यतां गतं । सर्व्वोपायैर्न तच्छक्यं केनचित् कर्त्तुमन्यथा ।
स यद्ब्रूयात् महाबाहुस्तत्कार्य्यमविशङ्कया । वासुदेवेन तीर्थेन क्षिप्रं संशाम्य पाण्डवैः ।
धर्म्म्यमर्थ्यञ्च धर्म्मात्मा ध्रुवं वक्ता जनार्द्दनः । तस्मिन् वाच्याः प्रिया वाचो भवता बान्धवैः सह ।
॥ दुर्य्योधन उवाच ॥ न पर्य्यायोऽस्ति यद्राजन् श्रियं निष्केवलामहं । तैः सहेमामुपाश्नीयां यावज्जीवं पितामह ।
इदन्तु सुमहत् कार्य्यं शृणु मे यत् समर्थितं । परायणं पाण्डवानां नियंस्यामि जनार्द्दनं । १०९०
तस्मिन् बद्धे भविष्यन्ति वृष्णयः पृथिवी तथा । पाण्डवाश्च विधेया मे स च प्रातरिहैष्यति ।
अत्रोपायान् यथा सम्यक् न बुध्येत जनार्द्दनः । न चापायो भवेत् कश्चित्तद्भवान् प्रब्रवीतु मे ।
॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं श्रुत्वा घोरं कृष्णाभिसंहितं । धृतराष्ट्रः सहामात्यो व्यथितो विमनाऽभवत ।
ततो दुर्य्योधनमिदं धृतराष्ट्रोऽब्रवीद्वचः । मैवं वोचः प्रजापाल नैष धर्म्मः सनातनः ।
दूतश्च हि हृषीकेशः सम्बन्धी च प्रियश्च नः । अपापः कौरवेयेषु स कथं बन्धमर्हति । १०९५
॥ भीष्म उवाच ॥ परीतस्तव पुत्रोऽयं धृतराष्ट्र सुमन्दधीः । वृणोत्यनर्थं नेवार्थं याच्यमानः सुहृज्जनैः ।
इममुत्पथि वर्त्तन्तं पापं पापानुबन्धिनं । वाक्यानि सुहृदां हित्वा त्वमप्यस्यानुवर्त्तसे ।
कृष्णमक्लिष्टकर्म्माणमासाद्यायं सुदुर्म्मतिः । तव पुत्रः सहामात्यः क्षणेन न भविष्यति ।
पापस्यास्य नृशंसस्य त्यक्तधर्म्मस्य दुर्म्मतेः । नोत्सहेऽनर्थसंयुक्ताः श्रोतुं वाचः कथञ्चन ।
इत्युक्त्वा भरतश्रेष्ठो वृद्धः परममन्युमान् । उत्थाय तस्मात् प्रातिष्ठद्भीष्मः सत्यपराक्रमः । ११००
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि दुर्य्योधनवाक्ये सप्ताशीतोऽध्यायः ॥ ८७ ॥
॥ वैशम्पायन उवाच ॥ प्रातरुत्थाय कृष्णस्तु कृतवान् सर्व्वमाह्निकं । ब्राह्मणैरभ्यनुज्ञातः प्रययौ नगरं प्रति ।
तं प्रयान्तं महाबाहुमनुज्ञाप्य महाबलं । पर्य्यवर्त्तन्त ते सर्व्वे वृकस्थलनिवासिनः ।
धार्त्तराष्ट्राः समायान्तं प्रत्युज्जग्मुः स्वलङ्कृताः । दुर्य्योधनादृते सर्व्वे भीष्मद्रोणकृपादयः ।
पौराश्च बहुला राजन् हृषीकेशं दिदृक्षवः । यानैर्बहुविधैरन्ये पद्भिरेव तथाऽपरे ।
स वै पथि समागम्य भीष्मेणाक्लिष्टकर्म्मणा । द्रोणेन धार्त्तराष्ट्रैश्च तैर्वृतो नगरं ययौ । ११०५
कृष्णसम्माननार्थञ्च नगरं समलङ्कृतं । बभूव राजमार्गश्च बहुरत्नसमाचितः ।
न च कश्चिद्गृहे राजंस्तदाऽऽसीत् भरतर्षभ । न स्त्री न वृद्धो न शिशुर्वासुदेवदिदृक्षया ।
राजमार्गे नरास्तस्मिन् संस्तुवन्त्यवनिं गताः । तस्मिन् काले महाराज हृषीकेशप्रवेशने ।

आहृतानि वरस्त्रीभिर्गृहाणि सुमहान्त्यपि। प्रचलन्तीव भारेण दृश्यन्ते स्म महीतले।
यथा च गतिमन्तस्ते वासुदेवस्य वाजिनः। प्रनष्टगतयोऽभूवन् राजमार्गे नरैर्वृते। ३११०
स गृहं धृतराष्ट्रस्य प्राविशच्छत्रुकर्षणः। पाण्डुरं पुण्डरीकाक्षः प्रासादैरुपशोभितम्।
तिस्रः कक्षा व्यतिक्रम्य केशवो राजवेश्मनः। वैचित्रवीर्य्यं राजानमभ्यगच्छदरिन्दमः।
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नराधिपः। सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः।
कृपश्च सोमदत्तश्च महाराजश्च वाह्लिकः। आसनेभ्योऽचलन् सर्व्वे पूजयन्तो जनार्द्दनम्।
ततो राजानमासाद्य धृतराष्ट्रं यशस्विनम्। स भीष्मं पूजयामास वार्ष्णेयो वाग्भिरञ्जसा। ३११५
तेषु धर्म्मानुपूर्व्वीं तां प्रयुज्य मधुसूदनः। यथावयः समीयाय राजभिः सह माधवः।
अथ द्रोणं सवाह्लीकं सपुत्रञ्च यशस्विनम्। कृपञ्च सोमदत्तञ्च समीयाय जनार्द्दनः।
तत्रासीदूर्ज्जितं मृष्टं काञ्चनं महदासनम्। शासनाद्धृतराष्ट्रस्य तत्रोपाविशदच्युतः।
अथ गां मधुपर्कञ्चाप्युदकञ्च जनार्द्दने। उपजह्रुर्यथान्यायं धृतराष्ट्रपुरोहिताः।
कृतातिथ्यस्तु गोविन्दः सर्व्वान् परिहसन् कुरून्। आस्ते साम्बन्धिकं कुर्व्वन् कुरुभिः परिवारितः। ३१२०
सोऽर्च्चितो धृतराष्ट्रेण पूजितश्च महायशाः। राजानं समनुज्ञाप्य निरक्रामदरिन्दमः।
तैः समेत्य यथान्यायं कुरुभिः कुरुसंसदि। विदुरावसथं रम्यमुपातिष्ठत माधवः।
विदुरः सर्व्वकल्याणैरभिगम्य जनार्द्दनम्। अर्च्चयामास दाशार्हं सर्व्वकामैरुपस्थितम्।
या मे प्रीतिः पुष्कराक्ष त्वद्दर्शनसमुद्भवा। सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम्।
कृतातिथ्यन्तु गोविन्दं विदुरः सर्व्वधर्म्मवित्। कुशलं पाण्डुपुत्राणामपृच्छन्मधुसूदनम्। ३१२५
प्रीयमाणस्य सुहृदो विदुषो बुद्धिसत्तमः। धर्म्मार्थनित्यस्य सतो गतरोषस्य धीमतः।
तस्य सर्व्वं सविस्तारं पाण्डवानां विचेष्टितम्। क्षत्तुराचष्ट दाशार्हः सर्व्वप्रत्यक्षदर्शिवान्।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि विदुरभगवत्संवादे अष्टाशीतोऽध्यायः॥ ८८ ॥
॥ वैशम्पायन उवाच॥ अथोपगम्य विदुरमपराह्णे जनार्द्दनः। पितृष्वसारं स पृथामभ्यगच्छदरिन्दमः।
सा दृष्ट्वा कृष्णमायान्तं प्रसन्नादित्यवर्च्चसम्। कण्ठे गृहीत्वा प्राक्रोशत् स्मरन्ती तनयान् पृथक्।
तेषां सत्त्ववतां मध्ये गोविन्दं सहचारिणम्। चिरस्य दृष्ट्वा वार्ष्णेयं वाष्पमाहारयत् पृथा। ३१३०
साऽब्रवीत् कृष्णमासीनं कृतातिथ्यं युधाम्पतिम्। वाष्पगद्गदपूर्णेन मुखेन परिशुष्यता।
ये ते बाल्यात् प्रभृत्येव गुरुशुश्रूषणे रताः। परस्परस्य सुहृदः सम्मताः समचेतसः।
निकृत्या भ्रंशिता राज्यात् जनार्हा निर्ज्जनं गताः। विनीतक्रोधहर्षाश्च ब्रह्मण्याः सत्यवादिनः।
त्यक्त्वा प्रियसुखे पार्थो रुदन्तीमपहाय मां। अहार्षुश्च वनं यान्तः समूलं हृदयं मम।
अतदर्हा महात्मानः कथं केशव पाण्डवाः। ऊषुर्म्महावने तात सिंहव्याघ्रगजाकुले। ३१३५
बाला विहीनाः पित्रा ते मया सततलालिताः। अपश्यन्तश्च पितरौ कथमूषुर्म्महावने।
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गैर्वेणुनिःस्वनैः। पाण्डवाः समबोध्यन्त बाल्यात् प्रभृति केशव।

ये स्म वारणशब्देन हयानां हेषितेन च। रथनेमिनिनादैश्च व्यबोध्यन्त तदा गृहे।
शङ्खभेरीनिनादेन वेणुवीणानिनादिना। पुण्याहघोषमिश्रेण पूज्यमाना द्विजातिभिः।
वस्त्रैरत्नैरलङ्कारैः पूजयन्तो द्विजन्मनः। गीर्भिर्मङ्गलयुक्ताभिर्ब्राह्मणानां महात्मनां। ३१४०
अर्च्चितैरर्च्चनार्हैश्च स्तुवद्भिरभिनन्दिताः। प्रासादाग्रेष्वबोध्यन्त राङ्कवाजिनशायिनः।
क्रूरञ्च निनदं श्रुत्वा श्वापदानां महावने। न स्मोपयान्ति निद्रान्ते न तदर्हा जनार्द्दन।
भेरीमृदङ्गनिनदैः शङ्खवैणवनिस्वनैः। स्त्रीणां गीतनिनादैश्च मधुरैर्मधुसूदन।
वन्दिमागधसूतैश्च स्तुवद्भिर्बोधिताः कथं। महावनेष्वबुध्यन्त श्वापदानां रुतेन च।
ह्रीमान् सत्यधृतिर्दान्तो भूतानामनुकम्पिता, कामद्वेषौ वशे कृत्वा सतां वर्त्मानुवर्त्तते। ३१४५
अम्बरीषस्य मान्धातुर्ययातेर्नहुषस्य च। भरतस्य दिलीपस्य शिबेरौशीनरस्य च।
राजर्षीणां पुराणानां धुरन्धत्ते दुरुद्वहां। शीलवृत्तोपसम्पन्नो धर्म्मज्ञः सत्यसङ्गरः।
राजा सर्व्वगुणोपेतस्त्रैलोक्यस्यापि यो भवेत्। अजातशत्रुर्धर्म्मात्मा शुद्धजाम्बूनदप्रभः।
श्रेष्ठः कुरुषु सर्व्वेषु धर्म्मतः श्रुतवृत्ततः। प्रियदर्शी दीर्घभुजः कथं कृष्ण युधिष्ठिरः।
यः स नागायुतप्राणो वातरंहा महाबलः। सामर्षः पाण्डवो नित्यं प्रियो भ्रातुः प्रियङ्करः। ३१५०
कीचकस्य तु सज्ञातेर्यो हन्ता मधुसूदन। शूरः क्रोधवशानाञ्च हिडिम्बस्य बकस्य च।
पराक्रमे शक्रसमो मातरिश्वसमो बले। महेश्वरसमः क्रोधे भीमः प्रहरतांवरः।
क्रोधं बलममर्षञ्च यो निधाय परन्तपः। जितात्मा पाण्डवोऽमर्षी भ्रातुस्तिष्ठति शासने।
तेजोराशिं महात्मानं वरिष्ठममितौजसं। भीमं प्रदर्शनेनापि भीमसेनं जनार्द्दन।
तं ममाचक्ष्व वार्ष्णेय कथमद्य वृकोदरः। आस्ते परिघबाहुः स मध्यमः पाण्डवो बली। ३१५५
अर्ज्जुनेनार्ज्जुनो यः स कृष्ण बाहुसहस्रिणा। द्विबाहुः स्पर्द्धते नित्यमतीतेनापि केशव।
क्षिपत्येकेन वेगेन पञ्चबाणशतानि यः। इष्वस्त्रे सदृशो राज्ञः कार्त्तवीर्य्यस्य पाण्डवः।
तेजसादित्यसदृशो महर्षिसदृशो दमे। क्षमया पृथिवीतुल्यो महेन्द्रसमविक्रमः।
आधिराज्यं महद्दीप्तं प्रथितं मधुसूदन। आहृतं येन वीर्य्येण कुरूणां सर्व्वराजसु।
यस्य बाहुबलं सर्व्वे पाण्डवाः पर्य्युपासते। स सर्व्वरथिनां श्रेष्ठः पाण्डवः सत्यविक्रमः। ३१६०
यं गत्वाऽभिमुखः सङ्ख्ये न जीवन् कश्चिदाव्रजेत्। यो जेता सर्व्वभूतानामजेयो जिष्णुरच्युत।
योऽपाश्रयः पाण्डवानां देवानामिव वासवः। स ते भ्राता सखा चैव कथमद्य धनञ्जयः।
दयावान् सर्व्वभूतेषु ह्रीनिषेधो महास्त्रवित्। मृदुश्च सुकुमारश्च धार्म्मिकश्च प्रियश्च मे।
सहदेवो महेष्वासः शूरः समितिशोभनः। भ्रातॄणां कृष्ण शुश्रूषुर्धर्म्मार्थकुशलो युवा।
सदैव सहदेवस्य भ्रातरो मधुसूदन। वृत्तं कल्याणवृत्तस्य पूजयन्ति महात्मनः। ३१६५
ज्येष्ठापचायिनं वीरं सहदेवं युधाम्पतिं। शुश्रूषुं मम वार्ष्णेय माद्रीपुत्रं प्रचक्ष्व मे।
सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः। भ्रातॄणाञ्चैव सर्व्वेषां प्रियः प्राणो बहिश्चरः।

चित्रयोधी च नकुलो महेष्वासो महाबलः । कच्चित् स कुशली कृष्ण वत्सो मम सुखैधितः ।
सुखोचितमदुःखार्हं सुकुमारं महारथं । अपि जातु महाबाहो पश्येयं नकुलं पुनः ।
पक्ष्मसम्पातजे काले नकुलेन विनाकृता । न लभामि धृतिं वीर साऽद्य जीवामि पश्य मां । २१७०
सर्व्वैः पुत्त्रैः प्रियतरा द्रौपदी मे जनार्द्दन । कुलीना रूपसम्पन्ना सर्व्वैः समुदिता गुणैः ।
पुत्त्रलोकात् पतिलोकं वृण्वाना सत्यवादिनी । प्रियान् पुत्त्रान् परित्यज्य पाण्डवाननुरुध्यते ।
महाभिजनसम्पन्ना सर्व्वकामैः सुपूजिता । ईश्वरी सर्व्वकल्याणी द्रौपदी कथमच्युत ।
पतिभिः पञ्चभिः शूरैरग्निकल्पैः प्रहारिभिः । उपपन्ना महेष्वासैर्द्रौपदी दुःखभागिनी ।
चतुर्द्दशमिदं वर्षं यन्नापश्यमरिन्दम । पुत्त्राधिभिः परिद्यूनां द्रौपदीं सत्यवादिनीं । २१७५
न नूनं कर्म्मभिः पुण्यैरश्नुते पुरुषः सुखं । द्रौपदी चेत्तथा वृत्ता नाश्नुते सुखमव्ययं ।
न प्रियो मम कृष्णाऽर्ज्जुनो बीभत्सुर्न युधिष्ठिरः । भीमसेनो यमौ चापि यदपश्यं सभागतां ।
न मे दुःखतरं किञ्चित् भूतपूर्व्वं ततोऽधिकं । स्त्रीधर्म्मिणीं द्रौपदीं यत् श्वशुराणां समीपगां ।
आनायितामनार्य्येण क्रोधलोभानुवर्त्तिना । सर्व्वे प्रैक्षन्त कुरव एकवस्त्रां सभागतां ।
तत्रैव धृतराष्ट्रस्य महाराजस्य वाह्लिकः । कृपश्च सोमदत्तश्च निर्व्विण्णाः कुरवस्तथा । २१८०
तस्यां संसदि सर्व्वेषां क्षत्तारं पूजयाम्यहं । वृत्तेन हि भवत्यार्य्यो न धनेन न विद्यया ।
तस्य कृष्ण महाबुद्धेर्गम्भीरस्य महात्मनः । क्षत्तुः शीलमलङ्कारो लोकान् विष्टभ्य तिष्ठति ।
॥ वैशम्पायन उवाच ॥ सा शोकार्त्ता च हृष्टा च दृष्ट्वा गोविन्दमागतं । नानाविधानि दुःखानि सर्व्वाण्येवान्वकीर्त्तयत् ।
पूर्व्वैराचरितं यत्तत् कुराजभिररिन्दम । अक्षद्यूतं मृगवधः कच्चिदेषां सुखावहं ।
तन्मां दहति यत्कृष्णा सभायां कुरुसन्निधौ । धार्त्तराष्ट्रैः परिक्लिष्टा यथा न कुशलं तथा । २१८५
निर्व्वासनञ्च नगरात् प्रव्रज्या च परन्तप । नाना विधानां दुःखानामभिज्ञाऽस्मि जनार्द्दन ।
अज्ञातचर्य्या बालानामवरोधश्च माधव । न मे क्लेशतमं तत्स्यात् पुत्त्रैः सह परन्तप ।
दुर्य्योधनेन निकृता वर्षमद्य चतुर्द्दशं । दुःखादपि सुखं नः स्यात् यदि पुण्यफलक्षयः ।
न मे विशेषो जात्वासीद्धार्त्तराष्ट्रेषु पाण्डवैः । तेन सत्येन कृष्ण त्वां हतामित्रं श्रियावृतं ।
अस्मादिमुक्तं सङ्ग्रामात् पश्येयं पाण्डवैः सह । नैव शक्याः पराजेतुं सत्त्वं ह्येषां तथाविधं । २१९०
पितरन्त्वेव गर्हेयं नात्मानं न सुयोधनं । येनाहं कुन्तिभोजाय धनं वृत्तैरिवार्पिता ।
बालां मामार्य्यकस्तुभ्यं क्रीडन्तीं कन्दुहस्तिकां । अदात्तु कुन्तिभोजाय सखा सख्ये महात्मने ।
साऽहं पित्रा च निकृता श्वशुरैश्च परन्तप । अत्यन्तदुःखिता कृष्ण किं जीवितफलं मम ।
यन्मां वागब्रवीन्नक्तं सूतके सव्यसाचिनः । पुत्त्रस्ते पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् ।
हत्वा कुरून् ग्रहजन्ये राज्यं प्राप्य धनञ्जयः । भ्रातृभिः सह कौन्तेयस्त्रीन् मेधानाहरिष्यति । २१९५
नाहन्तामभ्यसूयामि नमो धर्म्माय वेधसे । कृष्णाय महते नित्यं धर्म्मो धारयति प्रजाः ।
धर्म्मश्चेदस्ति वार्ष्णेय तथा वागभ्यभाषत । त्वञ्चापि तत्तथा कृष्ण सर्व्वं सम्पादयिष्यसि ।

न मां माधव वैधव्यं नार्थनाशो न वैरता। तथा शोकाय दहति यथा पुत्रैर्व्विना भवः
याऽहं गाण्डीवधन्वानं सर्व्वशस्त्रभृतां वरं। धनञ्जयं न पश्यामि का शान्तिर्हृदयस्य मे।
इतश्चतुर्द्दशं वर्षं यन्नापश्यं युधिष्ठिरं। धनञ्जयञ्च गोविन्द यमौ तञ्च वृकोदरं। ३२००
जीवनाशं प्रनष्टानां श्राद्धं कुर्व्वन्ति मानवाः। अर्थतस्ते मम मृतास्तेषाञ्चाहं जनार्द्दन।
ब्रूया माधव राजानं धर्म्मात्मानं युधिष्ठिरं। भूयांस्ते हीयते धर्म्मो मा पुत्रक वृथा कृथाः।
पराश्रया वासुदेव या जीवति धिगस्तु तां। वृत्तेः कार्प्पण्यलब्धाया अप्रतिष्ठैव ज्यायसी।
अथो धनञ्जयं ब्रूया नित्योद्युक्तं वृकोदरं। यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः।
अस्मिंश्चेदागते काले मिथ्या चातिक्रमिष्यति। लोकसम्भाविताः सन्तः सुनृशंसं करिष्यथ। ३२०५
नृशंसेन च वो युक्तांस्त्यजेयं शाश्वतीः समाः। काले हि समनुप्राप्ते त्यक्तव्यमपि जीवनं।
माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्म्मरतौ सदा। विक्रमेणार्ज्जितान् भोगान् वृणीतं जीवितादपि।
विक्रमाधिगता ह्यर्थाः क्षत्रधर्म्मेण जीवतः। मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम।
गत्वा ब्रूहि महाबाहो सर्व्वशस्त्रभृताम्बरं। अर्ज्जुनं पाण्डवं वीरं द्रौपद्याः पदवीं चर।
विदितौ हि तवात्यन्तं संक्रुद्धौ तौ यथाऽन्तकौ। भीमार्ज्जुनौ नयेतां हि देवानपि परां गतिं। ३२१०
तयोश्चैतदवज्ञानं यत् सा कृष्णा सभां गता। दुःशासनश्च कर्णश्च परुषाण्यभ्यभाषतां।
दुर्य्योधनो भीमसेनमभ्यगच्छन्मनस्विनं। पश्यतां कुरुमुख्यानां तस्य द्रक्ष्यति तत् फलं।
न हि वैरं समासाद्य प्रशाम्यति वृकोदरः। अचिरादपि भीमस्य न हि वैरं प्रशाम्यति।
यावदन्तं न नयति शात्रवाञ्छत्रुकर्षणः। न दुःखं राज्यहरणं न च द्यूते पराजयः।
प्रव्राजनन्तु पुत्राणां न मे तद्दुःखकारणं। यत्तु सा बृहती श्यामा एकवस्त्रा सभां गता। ३२१५
अशृणोत् परुषा वाचः किन्नु दुःखतरं ततः। स्त्रीधर्म्मिणी वरारोहा क्षत्रधर्म्मरता सदा।
नाभ्यगच्छत्तदा नाथं कृष्णा नाथवती सती। यस्या मम सपुत्रायास्त्वं नाथो मधुसूदन।
रामश्च बलिनां श्रेष्ठः प्रद्युम्नश्च महारथः। साऽहमेवं विधं दुःखं सहेयं पुरुषोत्तम।
भीमे जीवति दुर्द्धर्षे विजये चापलायिनि।

॥ वैशम्पायन उवाच ॥ तत आश्वासयामास पुत्राधिभिरभिप्लुतां। पितृष्वसारं शोचन्तीं शौरिः पार्थसखः पृथां। ३२२०

॥ वासुदेव उवाच ॥ का तु सीमन्तिनी त्वादृक् लोकेष्वस्ति पितृष्वसः। शूरस्य राज्ञो दुहिता आजमीढकुलं गता।
महाकुलीना भवती ह्रदाद्ह्रदमिवागता। ईश्वरी सर्व्वकल्याणी भर्त्रा परमपूजिता।
वीरसूर्व्वीरपत्नी त्वं सर्व्वैः समुदिता गुणैः। सुखदुःखे महाप्राज्ञे त्वादृशी सोढुमर्हति।
निद्रा तन्द्री क्रोधहर्षौ क्षुत्पिपासे हिमातपौ। एतानि पार्था निर्ज्जित्य नित्यं वीरसुखे रताः।
त्यक्तग्रामसुखाः पार्था नित्यं वीरसुखप्रियाः। न ते स्वल्पेन तुष्येयुर्महोत्साहा महाबलाः। ३२२५
अन्तं धीरा निषेवन्ते मध्यं ग्राम्यसुखप्रियाः। उत्तमांश्च परिक्लेशान् भोगांश्चातीव मानुषान्।
अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे। अन्तःप्राप्तिं सुखामाहुर्दुःखमन्तरमेतयोः।

अभिवादयन्ति भवतीं पाण्डवाः सह कृष्णया। आत्मानञ्च कुशलिनं निवेद्याहुरनामयं।
अरोगान् सर्व्वसिद्धार्थान् क्षिप्रन्द्रक्ष्यसि पाण्डवान्। ईश्वरान् सर्व्वलोकस्य हतामित्रान् श्रियावृतान्।
एवमाश्वासिता कुन्ती प्रत्युवाच जनार्द्दनं। पुत्राधिभिरभिध्वस्ता निगृह्याबुद्धिजं तमः। ३२३०
॥ कुन्त्युवाच ॥ यत्यत्तेषां महाबाहो पथ्यं स्यान्मधुसूदन। यथा यथा त्वं मन्येथाः कुर्य्याः कृष्ण तथा तथा।
अविलोपेन धर्म्मस्य अनिकृत्या परन्तप। प्रभावज्ञाऽस्मि ते कृष्ण सत्यस्याभिजनस्य च।
व्यवस्थायाञ्च मित्रेषु बुद्धिविक्रमयोस्तथा। त्वमेव नः कुले धर्म्मस्त्वं सत्यं त्वं तपो महत्।
त्वं त्राता त्वं महद्ब्रह्म त्वयि सर्व्वं प्रतिष्ठितं। यथैवात्थ तथैवैतत् त्वयि सत्यं भविष्यति।
॥ वैशम्पायन उवाच ॥ तामामन्त्र्य च गोविन्दः कृत्वा चाभिप्रदक्षिणं। प्रातिष्ठत महाबाहुर्दुर्य्योधनगृहान् प्रति। ३२३५
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कुन्तीकृष्णसंवादे एकोननवतोऽध्यायः ॥ ८९ ॥
॥ वैशम्पायन उवाच ॥ पृथामामन्त्र्य गोविन्दः कृत्वा चाभिप्रदक्षिणं। दुर्य्योधनगृहं शौरिरभ्यगच्छदरिन्दमः।
लक्ष्म्या परमया युक्तं पुरन्दरगृहोपमं। विचित्रैरासनैर्युक्तं प्रविवेश जनार्द्दनः।
तस्य कक्ष्या व्यतिक्रम्य तिस्रो द्वास्थैरवारितः। ततोऽभ्रघनसङ्काशं गिरिकूटमिवोच्छ्रितं।
श्रिया ज्वलन्तं प्रासादमारुरोह महायशाः। तत्र राजसहस्रैश्च कुरुभिश्चाभिसंवृतं।
धार्त्तराष्ट्रं महाबाहुं ददर्शासीनमासने। दुःशासनञ्च कर्णञ्च शकुनिञ्चापि सौबलं। ३२४०
दुर्य्योधनसमीपे तानासनस्थान् ददर्श सः। अभ्यागच्छति दाशार्हे धार्त्तराष्ट्रो महायशाः।
उदतिष्ठत् सहामात्यः पूजयन्मधुसूदनं। समेत्य धार्त्तराष्ट्रेण सहामात्येन केशवः।
राजभिस्तत्र वार्ष्णेयः समागच्छत् यथावयः। तत्र जाम्बूनदमयं पर्य्यङ्कं सुपरिष्कृतं।
विविधास्तरणास्तीर्णमभ्युपाविशदच्युतः। तस्मिन् गां मधुपर्कञ्चाप्युदकञ्च जनार्द्दने।
निवेदयामास तदा गृहान् राज्यञ्च कौरवः। तत्र गोविन्दमासीनं प्रसन्नादित्यवर्च्चसं। ३२४५
उपासाञ्चक्रिरे सर्व्वे कुरवो राजभिः सह। ततो दुर्य्योधनो राजा वार्ष्णेयं जयतां वरं।
न्यमन्त्रयत् भोजनेन नाभ्यनन्दच्च केशवः। ततो दुर्य्योधनः कृष्णमब्रवीत् कुरुसंसदि।
मृदुपूर्व्वं शठोदर्कं कर्णमाभाष्य कौरवः। कस्मादन्नानि पानानि वासांसि शयनानि च।
त्वदर्थमुपनीतानि नाग्रहीस्त्वं जनार्द्दन। उभयोश्चाददः साह्यमुभयोश्च हिते रतः।
सम्बन्धी दयितश्चासि धृतराष्ट्रस्य माधव। त्वं हि गोविन्द धर्म्मार्थौ वेत्थ तत्त्वेन सर्व्वशः। ३२५०
तत्र कारणमिच्छामि श्रोतुं चक्रगदाधर।
॥ वैशम्पायन उवाच ॥ स एवमुक्तो गोविन्दः प्रत्युवाच महामनाः। उद्यन्मेघस्वनः काले प्रगृह्य विपुलं भुजं।
अनम्बूकृतमग्रस्तमनिरस्तमसङ्कुलं। राजीवनेत्रो राजानं हेतुमद्वाक्यमुत्तमं।
कृतार्था भुञ्जते दूताः पूजां गृह्णन्ति चैव ह। कृतार्थं मां सहामात्यं समर्च्चिष्यसि भारत।
एवमुक्तः प्रत्युवाच धार्त्तराष्ट्रो जनार्द्दनं। न युक्तं भवताऽस्मासु प्रतिपत्तुमसाम्प्रतं। ३२५५
कृतार्थं वा कृतार्थञ्च त्वां वयं मधुसूदन। यतामहे पूजयितुं दाशार्ह न च शक्नुमः।

न च तत्कारणं विद्मो यस्मिन्नो मधुसूदन। पूजां कृतां प्रीयमाणैर्नामंस्थाः पुरुषोत्तम।
वैरं नो नास्ति भवता गोविन्द न च विग्रहः। स भवान् प्रसमीक्ष्यैतत् नेदृशं वक्तुमर्हति।
एवमुक्तः प्रत्युवाच धार्त्तराष्ट्रं जनार्द्दनः। अभिवीक्ष्य सहामात्यं दाशार्हः प्रहसन्निव।
नाहं कामान्न संरम्भान्न द्वेषान्नार्थकारणात्। न हेतुवादाल्लोभाद्वा धर्म्मं जह्यां कथञ्चन। ३१६०
सम्प्रीतिभोज्यान्यन्नानि आपद्भोज्यानि वा पुनः। न च सम्प्रीयसे राजन्न चैवापद्गता वयं।
अकस्मात् द्वेष्टि वै राजन् जन्मप्रभृति पाण्डवान्। प्रियानुवर्त्तिनो भ्रातॄन् सर्व्वैः समुदितान् गुणैः।
अकस्माच्चैव पार्थानां द्वेषणं नोपपद्यते। धर्म्मे स्थिताः पाण्डवेयाः कस्तान् किं वक्तुमर्हति।
यस्तान् द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु। ऐकात्म्यं मां गतं विद्धि पाण्डवैर्धर्म्मचारिभिः।
कामक्रोधानुवर्त्ती हि यो मोहाद्विरुरुत्सति। गुणवन्तञ्च यो द्वेष्टि तमाहुः पुरुषाधमं। ३१६५
यः कल्याणगुणान् ज्ञातीन् मोहाल्लोभाद्दिदृक्षते। सोऽजितात्माऽजितक्रोधो न चिरं तिष्ठति श्रियं।
अथ यो गुणसम्पन्नान् हृदयस्याप्रियानपि। प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति।
सर्व्वमेतदभोक्तव्यमन्नं दुष्टाभिसंहितं। क्षत्तुरेकस्य भोक्तव्यमिति मे धीयते मतिः।
एवमुक्त्वा महाबाहुर्दुर्य्योधनममर्षणं। निश्चक्राम ततः शुभ्राद्धार्त्तराष्ट्रनिवेशनात्।
निर्य्याय च महाबाहुर्वासुदेवो महामनाः। निवेशाय ययौ वेश्म विदुरस्य महात्मनः। ३१७०
तमभ्यगच्छद्द्रोणश्च कृपो भीष्मोऽथ बाह्लिकः। कुरवश्च महाबाहुं विदुरस्य गृहे स्थितं।
त ऊचुर्माधवं वीरं कुरवो मधुसूदनं। निवेदयाम वार्ष्णेय सरत्नांस्ते गृहान् वयं।
तानुवाच महातेजाः कौरवान् मधुसूदनः। सर्व्वे भवन्तो गच्छन्तु सर्व्वा मेऽपचितिः कृता।
यातेषु कुरुषु क्षत्ता दाशार्हमपराजितं। अभ्यर्चयामास तदा सर्व्वकामैः प्रयत्नवान्।
ततः क्षत्ताऽन्नपानानि शुचीनि गुणवन्ति च। उपाहरदनेकानि केशवाय महात्मने। ३१७५
तैस्तर्पयित्वा प्रथमं ब्राह्मणान्मधुसूदनः। वेदविद्भ्यो ददौ कृष्णः परमद्रविणान्यपि।
ततोऽनुयायिभिः सार्द्धं मरुद्भिरिव वासवः। विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि श्रीकृष्णदुर्य्योधनसंवादे नवतितमोऽध्यायः॥ ९० ॥
॥ वैशम्पायन उवाच ॥ तं भुक्तवन्तमाश्वस्तं निशायां विदुरोऽब्रवीत्। नेदं सम्यग्व्यवसितं केशवागमनं तव।
अर्थधर्म्मातिगो मन्दः संरम्भी च जनार्द्दन। मानघ्नो मानकामश्च वृद्धानां शासनातिगः।
धर्म्मशास्त्रातिगो मूढो दुरात्मा प्रग्रहं गतः। अनेयः श्रेयसां मन्दो धार्त्तराष्ट्रो जनार्द्दन। ३१८०
कामात्मा प्राज्ञमानी च मित्रध्रुक् सर्व्वशङ्कितः। अकर्त्ता चाकृतज्ञश्च त्यक्तधर्म्मा प्रियानृतः।
मूढश्चाकृतबुद्धिश्च इन्द्रियाणामनीश्वरः। कामानुसारी कृत्येषु सर्व्वेष्वकृतनिश्चयः।
एतैश्चान्यैश्च बहुभिर्द्दोषैरेष समन्वितः। त्वयोच्यमानः श्रेयोऽपि संरम्भान्न ग्रहीष्यति।
भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्त्रे जयद्रथे। भूयसीं वर्त्तते वृत्तिं न शमे कुरुते मनः।
निश्चितं धार्त्तराष्ट्राणां सकर्णानां जनार्द्दन। भीष्मद्रोणमुखान् पार्था न शक्ताः प्रतिवीक्षितुं। ३१८५

सेनासमुदयं कृत्वा पार्थिवं मधुसूदन। कृतार्थं मन्यते बाल आत्मानमविचक्षणः।
एकः कर्णः परान् जेतुं समर्थ इति निश्चितं। धार्त्तराष्ट्रस्य दुर्ब्बुद्धेः स शमं नोपयास्यति।
संविच्च धार्त्तराष्ट्राणां सर्व्वेषामेव केशव। शमे प्रयतमानस्य तव सौभ्रात्रकाङ्क्षिणः।
न पाण्डवानामस्माभिः प्रतिदेयं यथोचितं। इति व्यवसितास्तेषु वचनं स्यान्निरर्थकं।
यत्र सूक्तं दुरुक्तञ्च समं स्यान्मधुसूदन। न तत्र प्रलपेत् प्राज्ञो बधिरेष्विव गायनः। ११९०
अविजानत्सु मूढेषु निर्म्मर्य्यादेषु माधव। न त्वं वाक्यं ब्रुवन् युक्तश्चाण्डालेषु द्विजो यथा।
सोऽयं बलस्थो मूढश्च न करिष्यति ते वचः। तस्मिन्निरर्थकं वाक्यमुक्तं सम्पत्स्यते तव।
तेषां समुपविष्टानां सर्व्वेषां पापचेतसां। तव मध्यावतरणं मम कृष्ण न रोचते।
दुर्ब्बुद्धीनामशिष्टानां बहूनां दुष्टचेतसां। प्रतीपं वचनं मध्ये तव कृष्ण न रोचते।
अनुपासितवृद्धत्वात् श्रियो दर्पाच्च मोहितः। वयोदर्पादमर्षाच्च न ते श्रेयो ग्रहीष्यति। ११९५
बलं बलवदप्यस्य यदि वक्ष्यसि माधव। त्वय्यस्य महती शङ्का न करिष्यति ते वचः।
नेदमद्य युधा शक्यमिन्द्रेणापि सहामरैः। इति व्यवसिताः सर्व्वे धार्त्तराष्ट्रा जनार्द्दन।
तेष्वेवमुपपन्नेषु कामक्रोधानुवर्त्तिषु। समर्थमपि ते वाक्यमसमर्थं भविष्यति।
मध्ये तिष्ठन् हस्त्यनीकस्य मन्दो रथाश्वयुक्तस्य बलस्य मूढः। दुर्य्योधनो मन्यते वीतभीतिः कृत्स्ना मयेयं पृथिवी जितेति।
आशंसते वै धृतराष्ट्रस्य पुत्रो महाराज्यमसपत्नं पृथिव्यां। तस्मिन् शमः केवलो नोपलभ्यो बद्धं सन्तं मन्यते लब्धमर्थं। १२००
पर्य्यस्तेयं पृथिवी कालपक्वा दुर्य्योधनार्थे पाण्डवान् योद्धुकामाः। समागताः सर्व्वयोधाः पृथिव्यां राजानश्च क्षितिपालैः समेताः।
सर्व्वे चैते कृतवैराः पुरस्तात् त्वया राजानो हृतसाराश्च कृष्ण। तवोद्वेगात् संश्रिता धार्त्तराष्ट्रान् सुसंहताः सह कर्णेन वीराः।
त्यक्तात्मानः सह दुर्य्योधनेन हृष्टा योद्धुं पाण्डवान् सर्व्वयोधाः। तेषां मध्ये प्रविशेथा यदि त्वं न तन्मतं मम दाशार्हवीर।
तेषां समुपविष्टानां बहूनां दुष्टचेतसां। कथं मध्ये प्रपद्येथाः शत्रूणां शत्रुकर्षण।
सर्व्वथा त्वं महाबाहो देवैरपि दुरुत्सहः। प्रभावं पौरुषं बुद्धिं जानामि तव शत्रुहन्। १२०५
या मे प्रीतिः पाण्डवेषु भूयः सा त्वयि माधव। प्रेम्णा च बहुमानाच्च सौहृदाच्च ब्रवीम्यहं।
या मे प्रीतिः पुष्कराक्ष त्वद्दर्शनसमुद्भवा। सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनां।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि श्रीकृष्णविदुरसंवादे एकनवतोऽध्यायः॥ ९१ ॥
॥ श्रीभगवानुवाच ॥ यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्विचक्षणः। यथा वाच्यस्त्वद्विधेन भवता मद्विधः सुहृत्।
धर्म्मार्थयुक्तं तथ्यञ्च यथा त्वय्युपपद्यते। तथा वचनमुक्तोऽस्मि त्वयैतत् पितृमातृवत्।
सत्यं प्राप्तञ्च युक्तञ्चाप्येवमेव यथात्थ मां। शृणुष्वागमने हेतुं विदुरावहितो भव। १२१०
दौरात्म्यं धार्त्तराष्ट्रस्य क्षत्रियाणाञ्च वैरतां। सर्व्वमेतदहं जानन् क्षत्तः प्राप्तोऽद्य कौरवान्।
पर्य्यस्तां पृथिवीं सर्व्वां साश्वां सरथकुञ्जरां। यो मोचयेत् मृत्युपाशात् प्राप्नुयाद्धर्म्ममुत्तमं।
धर्म्मकार्य्यं यतन् शक्त्या नो चेत् प्राप्नोति मानवः। प्राप्तो भवति तत् पुण्यमत्र मे नास्ति संशयः।
मनसा चिन्तयन् पापं कर्म्मणा नाभिरोचयेत्। न प्राप्नोति फलं तस्येत्येवं धर्म्मविदो विदुः।

सोऽहं यतिष्ये प्रशमं क्षत्तः कर्त्तुममायया। कुरूणां पाण्डवानाञ्च सङ्ग्रामे विनशिष्यतां। ३११५
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता। कर्णदुर्य्योधनकृता सर्व्वे ह्येते तदन्वयाः।
व्यसने क्लिश्यमानं हि यो मित्रं नाभिपद्यते। अनुनीय यथाशक्ति तं नृशंसं विदुर्बुधाः।
आकेशग्रहणात् मित्रमकार्य्यात् सन्निवर्त्तयन्। अवाच्यः कस्यचिद्भवति कृतयत्नो यथाबलं।
तत् समर्थं शुभं वाक्यं धर्म्मार्थसहितं हितं। धार्त्तराष्ट्रः सहामात्यो ग्रहीतुं विदुरार्हति।
हितं हि धार्त्तराष्ट्राणां पाण्डवानान्तथैव च। पृथिव्यां क्षत्रियाणाञ्च यतिष्येऽहममायया। ३१२०
हिते प्रयतमानं मां शङ्केद्दुर्य्योधनो यदि। हृदयस्य च मे प्रीतिरानृण्यञ्च भविष्यति।
ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते। सर्व्वयत्नेन माध्यस्थं न तन्मित्रं विदुर्बुधाः।
न मां ब्रूयुरधर्म्मिष्ठा मूढा ह्यसुहृदस्तथा। शक्तो नावारयत् कृष्णः संरब्धान् कुरुपाण्डवान्।
उभयोः साधयन्नर्थमहमागत इत्युत। तत्र यत्नमहं कृत्वा गच्छेयं नृष्ववाच्यतां।
मम धर्म्मार्थयुक्तं हि श्रुत्वा वाक्यमनामयं। न चेदादास्यते बालो दिष्टस्य वशमेष्यति। ३१२५
अहापयन्पाण्डवार्थं यथावच्छमं कुरूणां यदि चाचरेयं। पुण्यञ्च मे स्याच्चरितं महात्मन् मुच्येरंश्च कुरवो मृत्युपाशात्।
अपि वाचं भाषमाणस्य काव्यां धर्म्मारामामर्थवतीमहिंस्रां। अवेक्षेरन् धार्त्तराष्ट्राः शमार्थं माञ्च प्राप्तं कुरवः पूजयेयुः।
न चापि मम पर्य्याप्ताः सहिताः कुरुपार्थिवाः। क्रुद्धस्य प्रमुखे स्थातुं सिंहस्येवेतरे मृगाः।
॥ वैशम्पायन उवाच॥ इत्येवमुक्त्वा वचनं वृष्णीनामृषभस्तदा। शयने सुखसंस्पर्शे शिश्ये यदुसुखावहः।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि श्रीकृष्णविदुरसंवादे द्विनवतितमोऽध्यायः॥ ९२॥
॥ वैशम्पायन उवाच॥ तथा कथयतोरेवं तयोर्बुद्धिमतोस्तदा। शिवा नक्षत्रसम्पन्ना सा व्यतीयाय शर्व्वरी। ३१३०
धर्म्मार्थकामयुक्ताश्च विचित्रार्थपदाक्षराः। शृण्वतो विविधा वाचो विदुरस्य महात्मनः।
कथाभिरनुरूपाभिः कृष्णस्यामिततेजसः। अकामस्येव कृष्णस्य सा व्यतीयाय शर्व्वरी।
ततस्तु स्वरसम्पन्ना बहवः सूतमागधाः। शङ्खदुन्दुभिनिर्घोषैः केशवं प्रत्यबोधयन्।
तत उत्थाय दाशार्ह ऋषभः सर्व्वसात्वतां। सर्व्वमावश्यकञ्चक्रे प्रातःकार्य्यं जनार्द्दनः।
कृतोदकानुजप्यः स हुताग्निः समलङ्कृतः। ततश्चादित्यमुद्यन्तमुपातिष्ठत माधवः। ३१३५
अथ दुर्य्योधनः कृष्णं शकुनिश्चापि सौबलः। सन्ध्यां तिष्ठन्तमभ्येत्य दाशार्हमपराजितं।
आचक्षेतान्तु कृष्णस्य धृतराष्ट्रं सभागतं। कुरूंश्च भीष्मप्रमुखान् राज्ञः सर्व्वांश्च पार्थिवान्।
त्वामर्थयन्ते गोविन्द दिवि शक्रमिवामराः। तावभ्यनन्दद्गोविन्दः साम्ना परमवल्गुना।
ततो विमल आदित्ये ब्राह्मणेभ्यो जनार्द्दनः। ददौ हिरण्यं वासांसि गाश्चाश्वांश्च परन्तपः।
विसृज्य बहुरत्नानि दाशार्हमपराजितं। तिष्ठन्तमुपसंगम्य ववन्दे सारथिस्तदा। ३१४०
ततो रथेन शुभ्रेण महता किङ्किणीकिना। हयोत्तमयुजा शीघ्रमुपातिष्ठत दारुकः।
तमुपस्थितमाज्ञाय रथं दिव्यं महामनाः। महाभ्रघननिर्घोषं सर्व्वरत्नविभूषितं।
अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांश्च जनार्द्दनः। कौस्तुभं मणिमामुच्य श्रिया परमया ज्वलन्।

कुरुभिः संवृतः कृष्णो वृष्णिभिश्चाभिरक्षितः। आतिष्ठत रथं शौरिः सर्व्वयादवनन्दनः।
अन्वारुरोह दाशार्हं विदुरः सर्व्वधर्म्मवित्। सर्व्वप्राणभृतां श्रेष्ठं सर्व्वबुद्धिमतां वरं। ३२४५
ततो दुर्य्योधनः कर्णं शकुनिश्चापि सौबलः। द्वितीयेन रथेनैनमन्वयातां परन्तपं।
सात्यकिः कृतवर्म्मा च वृष्णीनाञ्चापरे रथाः। पृष्ठतोऽनुययुः कृष्णं गजैरश्वै रथैरपि।
तेषां हेमपरिष्कारैर्युक्ताः परमवाजिभिः। गच्छतां घोषिणश्चित्रा रथा राजन् विरेजिरे।
संमृष्टसंसिक्तरजः प्रतिपेदे महापथं। राजर्षिचरितं काले कृष्णो धीमान् श्रिया ज्वलन्।
ततः प्रयाते दाशार्हे प्रावाद्यन्तैकपुष्कराः। शङ्खाश्च दध्मिरे तत्र वाद्यान्यन्यानि यानि च। ३२५०
प्रवीराः सर्व्वलोकस्य युवानः सिंहविक्रमाः। परिवार्य्य रथं शौरेरगच्छन्त परन्तपाः।
ततोऽन्ये बहुसाहस्रा विचित्राद्भुतवाससः। असिप्रासायुधधराः कृष्णस्यासन् पुरःसराः।
गजाः पञ्चशतास्तत्र रथाश्चासन् सहस्रशः। प्रयान्तमन्वयुर्वीरं दाशार्हमपराजितं।
पुरं कुरूणां संवृत्तं द्रष्टुकामं जनार्द्दनं। सबालवृद्धं सस्त्रीकं रथ्यागतमरिन्दम।
वेदिकामाश्रिताभिश्च समाक्रान्तान्यनेकशः। प्रचलन्तीव भारेण योषिद्भिर्भवनान्युत। ३२५५
स पूज्यमानः कुरुभिः संशृण्वन् मधुराः कथाः। यथार्हं प्रतिसत्कुर्व्वन् प्रेक्षमाणः शनैर्ययौ।
ततः सभां समासाद्य केशवस्यानुयायिनः। सशङ्खवेणुनिर्घोषैर्दिशः सर्व्वा व्यनादयन्।
ततः सा समितिः सर्व्वा राज्ञाममिततेजसां। सम्प्राकम्पत हर्षेण कृष्णागमनकाङ्क्षया।
ततोऽभ्याशगते कृष्णे समहृष्यन्नराधिपाः। श्रुत्वा तं रथनिर्घोषं पर्ज्जन्यनिनदोपमं।
आसाद्य तु सभाद्वारमृषभः सर्व्वसात्वतां। अवतीर्य्य रथाच्छौरिः कैलासशिखरोपमात्। ३२६०
नवमेघप्रतीकाशां ज्वलन्तीमिव तेजसा। महेन्द्रसदनप्रख्यां प्रविवेश सभां ततः।
पाणौ गृहीत्वा विदुरं सात्यकिञ्च महायशाः। ज्योतींष्यादित्यवद्राजन् कुरून् प्राच्छादयन् श्रिया।
अग्रतो वासुदेवस्य कर्णदुर्य्योधनावुभौ। वृष्णयः कृतवर्म्मा चाप्यासन् कृष्णस्य पृष्ठतः।
धृतराष्ट्रं पुरस्कृत्य भीष्मद्रोणादयस्ततः। आसनेभ्योऽचलन् सर्व्वे पूजयन्तो जनार्द्दनं।
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नरेश्वरः। सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः। ३२६५
उत्तिष्ठति महाराजे धृतराष्ट्रे जनेश्वरे। तानि राजसहस्राणि समुत्तस्थुः समन्ततः।
आसनं सर्व्वतोभद्रं जाम्बूनदपरिष्कृतं। कृष्णार्थे कल्पितं तत्र धृतराष्ट्रस्य शासनात्।
स्मयमानस्तु राजानं भीष्मद्रोणौ च माधवः। अभ्यभाषत धर्म्मात्मा राज्ञश्चान्यान् यथावयः।
तत्र केशवमानर्च्चुः सम्यगभ्यागतं सभां। राजानः पार्थिवाः सर्व्वे कुरवश्च जनार्द्दनं।
तत्र तिष्ठन् स दाशार्हो राजमध्ये परन्तपः। अपश्यदन्तरीक्षस्थान् ऋषीन् परपुरञ्जयः। ३२७०
ततस्तानभिसम्प्रेक्ष्य नारदप्रमुखानृषीन्। अभ्यभाषत दाशार्हो भीष्मं शान्तनवं शनैः।
पार्थिवीं समितिं द्रष्टुमृषयोऽभ्यागता नृप। निमन्त्र्यतामासनैश्च सत्कारेण च भूयसा।
नैतेष्वनुपविष्टेषु शक्यं केनचिदासितुं। पूजां प्रयुज्यतामाशु मुनीनां भावितात्मनां।

ऋषीञ्छान्तनवो दृष्ट्वा सभाद्वारमुपस्थितान्। त्वरमाणस्ततो भृत्यानासनानीत्यचोदयत्।
आसनान्यथ मृष्टानि महान्ति विपुलानि च। मणिकाञ्चनचित्राणि समाजह्रुस्ततस्ततः। ११७५
तेषु तत्रोपविष्टेषु गृहीतार्घ्येषु भारत। निषसादासने कृष्णो राजानश्च यथासनं।
दुःशासनः सात्यकये ददावासनमुत्तमं। विविंशतिर्ददौ पीठं काञ्चनं कृतवर्म्मणे।
अविदूरन्तु कृष्णस्य कर्णदुर्य्योधनावुभौ। एकासने महात्मानौ निषेदतुरमर्षणौ।
गान्धारराजः शकुनिर्गान्धारैरभिरक्षितः। निषसादासने राजा सहपुत्रो विशाम्पते।
विदुरो मणिपीठे तु शुक्लस्पर्द्ध्याजिनोत्तरे। संस्पृश्यासनं शौरेर्महामतिरुपाविशत्। ११८०
चिरस्य दृष्ट्वा दाशार्हं राजानः सर्व्व एव ते। अमृतस्येव नातृप्यन् प्रेक्षमाणा जनार्द्दनं।
अतसीपुष्पसङ्काशः पीतवासा जनार्द्दनः। व्यभ्राजत सभामध्ये हेम्नीवोपहितो मणिः।
ततस्तूष्णीं सर्व्वमासीत् गोविन्दगतमानसं। न तत्र कश्चित् किञ्चिद्धि व्याजहार पुमान् क्वचित्।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवदुपवेशे त्रिनवतोऽध्यायः॥ ९३ ॥
॥ वैशम्पायन उवाच ॥ तेष्वासीनेषु सर्व्वेषु तूष्णीम्भूतेषु राजसु। वाक्यमभ्याददे कृष्णः सुदंष्ट्रो दुन्दुभिस्वनः।
जीमूत इव घर्म्मान्ते सर्व्वां संश्रावयन् सभां। धृतराष्ट्रमभिप्रेक्ष्य समभाषत माधवः। ११८५
॥ श्रीभगवानुवाच ॥ कुरूणां पाण्डवानाञ्च शमः स्यादिति भारत। अप्रणाशेन वीराणामेतद्याचितुमागतः।
राजन्नान्यत् प्रवक्तव्यं तव नैःश्रेयसं वचः। विदितं ह्येव ते सर्व्वं वेदितव्यमरिन्दम।
इदं ह्यद्य कुलं श्रेष्ठं सर्व्वराजसु पार्थिव। श्रुतवृत्तोपसम्पन्नं सर्व्वैः समुदितैर्गुणैः।
कृपाऽनुकम्पा कारुण्यमानृशंस्यञ्च भारत। तथार्ज्जवं क्षमा सत्यं कुरुष्वेतद्विशिष्यते।
तस्मिन्नेवंविधे राजन् कुले महति तिष्ठति। त्वन्निमित्तं विशेषेण नेह युक्तमसाम्प्रतं। ११९०
त्वं हि धारयिता श्रेष्ठः कुरूणां कुरुसत्तम। मिथ्याप्रचरतां तात बाह्येष्वभ्यन्तरेषु च।
ते पुत्रास्तव कौरव्य दुर्य्योधनपुरोगमाः। धर्म्मार्थौ पृष्ठतः कृत्वा प्रचरन्ति नृशंसवत्।
अशिष्टा गतमर्य्यादा लोभेन हृतचेतसः। स्वेषु बन्धुषु मुख्येषु तद्वेत्थ पुरुषर्षभ।
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता। उपेक्ष्यमाणा कौरव्य पृथिवीं घातयिष्यति।
शक्या चेयं शमयितुं त्वञ्चेदिच्छसि भारत। न दुष्करो ह्यत्र शमो मतो मे भरतर्षभ। ११९५
त्वय्यधीनः शमो राजन् मयि चैव विशाम्पते। पुत्रान् स्थापय कौरव्य स्थापयिष्याम्यहं परान्।
आज्ञा तव हि राजेन्द्र कार्य्या पुत्रैः सहान्वयैः। हितम्बलवदप्येषां तिष्ठतां तव शासने।
तव चैव हितं राजन् पाण्डवानामथो हितं। शमे प्रयतमानस्य तव शासनकाङ्क्षिणः।
स्वयं निष्फलमालक्ष्य संविधत्स्व विशाम्पते। सहायभूता भरतास्तवैव स्युर्जनेश्वर।
धर्म्मार्थयोस्तिष्ठ राजन् पाण्डवैरभिरक्षितः। न हि शक्यास्तथाभूता यत्नादपि नराधिप। १२००
न हि त्वां पाण्डवैर्जेतुं रक्ष्यमाणं महात्मभिः। इन्द्रोऽपि देवैः सहितः प्रसहेत कुतो नृपाः।
यत्र भीष्मश्च द्रोणश्च कृपः कर्णो विविंशतिः। अश्वत्थामा विकर्णश्च सोमदत्तोऽथ बाह्लिकः।

सैन्धवश्च कलिङ्गश्च काम्बोजश्च सुदक्षिणः। युधिष्ठिरो भीमसेनः सव्यसाची यमौ तथा।
सात्यकिश्च महातेजा युयुत्सुश्च महारथः। को नु तान् विपरीतात्मा युध्येत भरतर्षभ।
लोकस्येश्वरतां भूयः शत्रुभिश्चाप्यधृष्यतां। प्राप्स्यसि त्वममित्रघ्न सहितः कुरुपाण्डवैः। ३४०५
तस्य ते पृथिवीपालास्त्वत्समाः पृथिवीपते। श्रेयांसश्चैव राजानः सन्धास्यन्ते परन्तप।
स त्वं पुत्रैश्च पौत्रैश्च पितृभिर्भ्रातृभिस्तथा। सुहृद्भिः सर्व्वतो गुप्तः सुखं शक्ष्यसि जीवितुं।
एतानेव पुरोधाय सत्कृत्य च यथा पुरा। अखिलां भोक्ष्यसे सर्व्वां पृथिवीं पृथिवीपते।
एतैर्हि सहितैः सर्व्वैः पाण्डवैः स्वैश्च भारत। अन्यान् विजेष्यसे शत्रूनेष स्वार्थस्तवाखिलः।
तैरेवोपार्ज्जितां भूमिं भोक्ष्यसे च परन्तप। यदि सम्पत्स्यते पुत्रैः सहामात्यैर्नराधिप। ३४१०
संयुगे वै महाराज दृश्यते सुमहान् क्षयः। क्षये चोभयतो राजन् कं धर्म्ममनुपश्यसि।
पाण्डवैर्निहतैः संख्ये पुत्रैर्व्वाऽपि महाबलैः। यद्विन्देथाः सुखं राजंस्तद्ब्रूहि भरतर्षभ।
शूराश्च हि कृतास्त्राश्च सर्व्वे युद्धाभिकाङ्क्षिणः। पाण्डवास्तावकाश्चैव तान् रक्ष महतो भयात्।
न पश्येम कुरून् सर्व्वान् पाण्डवांश्चैव संयुगे। क्षीणानुभयतः शूरान् रथिनो रथिभिर्हतान्।
समवेताः पृथिव्यां हि राजानो राजसत्तम। अमर्षवशमापन्ना नाशयेयुरिमाः प्रजाः। ३४१५
त्राहि राजन्निमं लोकं न नश्येयुरिमाः प्रजाः। त्वयि प्रकृतिमापन्ने शेषः स्यात् कुरुनन्दन।
शुक्ला वदान्या ह्रीमन्त आर्य्याः पुण्याभिजातयः। अन्योन्यसचिवा राजंस्तान् पाहि महतो भयात्।
शिवेनेमे भूमिपालाः समागम्य परस्परं। सह भुक्त्वा च पीत्वा च प्रतियान्तु यथागृहं।
सुवाससः स्रग्विणश्च सत्कृता भरतर्षभ। अमर्षञ्च निराकृत्य वैराणि च परन्तप।
हार्द्दं यत्पाण्डवेष्वासीत् प्राप्तेऽस्मिन्नायुषः क्षये। तदेव ते भवत्वद्य सन्धत्स्व भरतर्षभ। ३४२०
बाला विहीनाः पित्रा ते त्वयैव परिवर्द्धिताः। तान् पालय यथान्यायं पुत्रांश्च भरतर्षभ।
भवतैव हि रक्ष्यास्ते व्यसनेषु विशेषतः। मा ते धर्म्मस्तथैवार्थो नश्येत भरतर्षभ।
आहुस्त्वां पाण्डवा राजन्नभिवाद्य प्रसाद्य च। भवतः शासनाद्दुःखमनुभूतं सहानुगैः।
द्वादशेमानि वर्षाणि वने निर्व्युषितानि नः। त्रयोदशं तथाऽज्ञातैः सजने परिवत्सरं।
स्थाता नः समये तस्मिन् पितेति कृतनिश्चयाः। नाहास्म समयं तात तच्च नो ब्राह्मणा विदुः। ३४२५
तस्मिन्नः समये तिष्ठ स्थितानां भरतर्षभ। नित्यं संक्लेशिता राजन् स्वराज्यांशं लभेमहि।
त्वं धर्म्ममर्थं सञ्जानन् सम्यङ्नस्त्रातुमर्हसि। गुरुत्वं भवति प्रेक्ष्य बहून् क्लेशान् तितिक्ष्महे।
स भवान् मातृपितृवदस्मासु प्रतिपद्यतां। गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत।
वर्त्तामहे त्वयि च तां त्वञ्च वर्त्तस्व नस्तथा। पित्रा स्थापयितव्या हि वयमुत्पथमास्थिताः।
संस्थापय पथिष्वस्मांस्तिष्ठ धर्म्मे सुवर्त्मनि। आहुश्चेमां परिषदं पुत्रास्ते भरतर्षभ। ३४३०
धर्म्मज्ञेषु सभासत्सु नेह युक्तमसाम्प्रतं। यत्र धर्म्मो ह्यधर्म्मेण सत्यं यत्रानृतेन च।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः। विद्धो धर्म्मो ह्यधर्म्मेण सभां यत्र प्रपद्यते।

न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः । धर्म्म एतानारुजति यथा नद्यनुकूलजान् ।
ये धर्म्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते । ते सत्यमाहुर्धर्म्मञ्च न्याय्यञ्च भरतर्षभ ।
शक्यं किमन्यद्वक्तुं ते दानादन्यज्जनेश्वर । ब्रुवन्तु वा महीपालाः सभायां ये समासते । ३४३५
धर्म्मार्थौ सम्प्रधार्य्यैव यदि सत्यं ब्रवीम्यहं । प्रमुञ्चेमान्मृत्युपाशात् क्षत्रियान् पुरुषर्षभ ।
प्रशाम्य भरतश्रेष्ठ मामन्युवशमन्वगाः । पित्र्यं तेभ्यः प्रदायांशं पाण्डवेभ्यो यथोचितं ।
ततः सपुत्रः सिद्धार्थो भुङ्क्ष्व भोगान् परन्तप । अजातशत्रुं जानीषे स्थितं धर्म्मे सतां सदा ।
सपुत्रे त्वयि वृत्तिञ्च वर्त्तते यां नराधिप । दाहितश्च निरस्तश्च त्वामेवोपाश्रितः पुनः ।
इन्द्रप्रस्थं त्वयैवासौ सपुत्रेण विवासितः । स तत्र निवसन् सर्व्वान् वशमानीय पार्थिवान् । ३४४०
त्वन्मुखानकरोद्राजन् न च त्वामत्यवर्त्तत । तस्यैवं वर्त्तमानस्य सौबलेन जिहीर्षता ।
राष्ट्राणि धनधान्यञ्च प्रयुक्तः परमोपधिः । स तामवस्थां सम्प्राप्य कृष्णां प्रेक्ष्य सभां गतां ।
स्वधर्म्मादमेयात्मा नाकम्पत युधिष्ठिरः । अहन्तु तव तेषाञ्च श्रेय इच्छामि भारत ।
धर्म्मादर्थात् सुखाच्चैव माराजन्नीनशः प्रजाः । अनर्थमर्थं मन्वानोऽप्यर्थञ्चानर्थमात्मनः ।
लोभेऽतिप्रसृतान् पुत्रान्निगृह्णीष्व विशाम्पते । स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः । ३४४५
यत्ते पथ्यतमं राजंस्तस्मिंस्तिष्ठ परन्तप ।
॥ वैशम्पायन उवाच ॥ तद्वाक्यं पार्थिवाः सर्व्वे हृदयैः समपूजयन् । न तत्र कश्चिद्वक्तुं हि वाचं प्राक्रामदग्रतः ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवद्वाक्ये चतुर्नवतोऽध्यायः ॥ ९४ ॥
॥ वैशम्पायन उवाच ॥ तस्मिन्नभिहिते वाक्ये केशवेन महात्मना । स्तिमिता हृष्टरोमाण आसन् सर्व्वे सभासदः ।
कश्चिदुत्तरमेतेषां वक्तुं नोत्सहते पुमान् । इति सर्व्वे मनोभिस्ते चिन्तयन्ति स्म पार्थिवाः ।
तथा तेषु च सर्व्वेषु तूष्णीम्भूतेषु राजसु । जामदग्न्य इदं वाक्यमब्रवीत् कुरुसंसदि । ३४५०
इमां मे सोपमां वाचं शृणु सत्यमशङ्कितः । तां श्रुत्वा श्रेय आधत्स्व यदि साध्विति मन्यसे ।
राजा दम्भोद्भवो नाम सार्व्वभौमः पुराऽभवत् । अखिलां बुभुजे सर्व्वां पृथिवीमिति नः श्रुतं ।
स स्म नित्यं निशापाये प्रातरुत्थाय वीर्य्यवान् । ब्राह्मणान् क्षत्रियांश्चैव पृच्छन्नास्ते महारथः ।
अस्ति कश्चिद्विशिष्टो वा मद्विधो वा भवेद् युधि । शूद्रो वैश्यः क्षत्रियो वा ब्राह्मणो वाऽपि शस्त्रभृत् ।
इति ब्रुवन्नन्वचरत् स राजा पृथिवीमिमां । दर्पेण महता मत्तः कञ्चिदन्यमचिन्तयन् । ३४५५
तञ्च वैद्या अकृपणा ब्राह्मणाः सर्व्वतोऽभयाः । प्रत्यषेधन्त राजानं श्लाघमानं पुनः पुनः ।
निषिध्यमानोऽप्यसकृत् पृच्छत्येव स वै द्विजान् । अतिमानं श्रिया मत्तं तमूचुर्ब्राह्मणास्तदा ।
तपस्विनो महात्मानो वेदव्रतसमन्विताः । उदीर्य्यमाणं राजानं क्रोधदीप्ता द्विजातयः ।
अनेकजयिनौ शश्वद्यौ वै पुरुषसत्तमौ । तयोस्त्वं न समो राजन् भवितासि कदाचन ।
एवमुक्तः स राजा तु पुनः पप्रच्छ तान् द्विजान् । क्व तौ वीरौ क्वजन्मानौ किङ्कर्म्माणौ च कौ च तौ । ३४६०
॥ ब्राह्मणा ऊचुः ॥ नरो नारायणश्चैव तापसाविति नः श्रुतं । आयातौ मानुषे लोके ताभ्यां युध्यस्व पार्थिव ।

श्रूयेते तौ महात्मानौ नरनारायणावुभौ । तपो घोरमनिर्देश्यं तप्येते गन्धमादने ।
स राजा महतीं सेनां योजयित्वा षडङ्गिनीं । अमृष्यमाणः सम्प्रायात् यत्र तावपराजितौ ।
स गत्वा विषमं घोरं पर्व्वतं गन्धमादनं । मृगयाणोऽन्वगच्छत्तौ तापसौ वनमाश्रितौ ।
तौ दृष्ट्वा क्षुत्पिपासाभ्यां कृशौ धमनिसन्ततौ । शीतवातातपैश्चैव कर्षितौ पुरुषोत्तमौ । ३४६५
अभिगम्योपसंगृह्य पर्य्यपृच्छदनामयं । तमर्च्चित्वा फलैर्मूलैरासनेनोदकेन च ।
न्यमन्त्रयेतां राजानं किङ्कार्य्यं क्रियतामिति । ततस्तामानुपूर्व्वीं स पुनरेवान्वकीर्त्तयत् ।
बाहुभ्यां मे जिता भूमिर्निहताः सर्व्वशत्रवः । भवद्भ्यां युद्धमाकाङ्क्षन्नुपयातोऽस्मि पर्व्वतं ।
आतिथ्यं दीयतामेतत् काङ्क्षितं मे चिरं प्रति ॥ नरनारायणावूचतुः ॥
अपेतक्रोधलोभोऽयमाश्रमो राजसत्तम । न ह्यस्मिन्नाश्रमे युद्धं कुतः शस्त्रं कुतोऽनृजुः । ३४७०
अन्यत्र युद्धमाकाङ्क्ष बहवः क्षत्रियाः क्षितौ ।
॥ राम उवाच ॥ उच्यमानस्तथापि स्म भूय एवाभ्यभाषत । पुनः पुनः क्षाम्यमाणः सान्त्व्यमानश्च भारत ।
दम्भोद्भवो युद्धमिच्छन्नाह्वयत्येव तापसौ । ततो नरस्त्वीषीकाणां मुष्टिमादाय भारत ।
अब्रवीदेहि युध्यस्व युद्धकामुक क्षत्रिय । सर्व्वशस्त्राणि चादत्स्व योजयस्व च वाहिनीं ।
अहं हि ते विनेष्यामि युद्धश्रद्धामितः परं । ३४७५
॥ दम्भोद्भव उवाच ॥ यद्येतदस्त्रमस्मासु युक्तं तापस मन्यसे । एतेनापि त्वया योत्स्ये युद्धार्थी ह्यहमागतः ।
॥ राम उवाच ॥ इत्युक्त्वा शरवर्षेण सर्व्वतः समवाकिरत् । दम्भोद्भवस्तापसन्तं जिघांसुः सहसैनिकः ।
तस्य तानस्यतो घोरानिषून् परतनुच्छिदः । कदर्थीकृत्य स मुनिरिषीकाभिः समर्पयत् ।
ततोऽस्मै प्राहजत्घोरमैषीकमपराजितः । अस्त्रमप्रतिसन्धेयं तदद्भुतमिवाभवत् ।
तेषामक्षीणि कर्णांश्च नासिकाश्चैव मायया । निमित्तवेधी स मुनिरिषीकाभिः समार्पयत् । ३४८०
स दृष्ट्वा श्वेतमाकाशमिषीकाभिः समाचितं । पादयोर्न्यपतत् राजा स्वस्ति मेऽस्त्विति चाब्रवीत् ।
तमब्रवीन्नरो राजञ्छरण्यः शरणैषिणां । ब्रह्मण्यो भव धर्म्मात्मा मा च स्मैवं पुनः कृथाः ।
नैतादृक् पुरुषो राजन् क्षत्रधर्म्ममनुस्मरन् । मनसा नृपशार्दूल भवेत् परपुरञ्जयः ।
मा च दर्पसमाविष्टः क्षेप्सीः कांश्चित् कथञ्चन । अल्पीयांसं विशिष्टं वा तत्ते राजन् समाहितं ।
कृतप्रज्ञो वीतलोभो निरहङ्कार आत्मवान् । दान्तः क्षान्तो मृदुः सौम्यः प्रजाः पालय पार्थिव । ३४८५
मा स्म भूयः क्षिपेः कञ्चिदविदित्वा बलाबलं । अनुज्ञातः स्वस्ति गच्छ मैवं भूयः समाचरेः ।
कुशलं ब्राह्मणान् पृच्छेरावयोर्वचनाद्भृशं । ततो राजा तयोः पादावभिवाद्य महात्मनोः ।
प्रत्याजगाम स्वपुरं धर्म्मञ्चैवाचरद्भृशं । सुमहच्चापि तत्कर्म्म यन्नरेण कृतं पुरा ।
ततो गुणैः सुबहुभिः श्रेष्ठो नारायणोऽभवत् । तस्माच्छ्रावद्धनुःश्रेष्ठे गाण्डीवेऽस्त्रं न युज्यते ।
तावत्त्वं मानमुत्सृज्य गच्छ राजन् धनञ्जयं । काकुदीकं शुकं नाकमक्षिसन्तर्जनं तथा । ३४९०
सन्तानं नर्त्तकं घोरमास्यमोदकमष्टमं । एतैर्व्विद्धाः सर्व्व एव मरणं यान्ति मानवाः ।

कामक्रोधौ लोभमोहौ मदमानौ तथैव च। मात्सर्य्याहंकृती चैव क्रमादेतदुदाहृताः।
उन्मत्ताश्च विचेष्टन्ते नष्टसंज्ञा विचेतसः। स्वपन्ति च प्लवन्ते च छर्द्दयन्ति च मानवाः।
मूत्रयन्ते च सततं रुदन्ति च हसन्ति च। निर्म्माता सर्व्वलोकानामीश्वरः सर्व्वकर्म्मवित्।
यस्य नारायणो बन्धुरर्ज्जुनो दुःसहो युधि। कस्तमुत्सहते जेतुं त्रिषु लोकेषु भारत।
वीरं कपिध्वजं जिष्णुं यस्य नास्ति समो युधि। असङ्ख्येया गुणाः पार्थे तद्विशिष्टो जनार्द्दनः। 　३४९५
त्वमेव भूयो जानासि कुन्तीपुत्रं धनञ्जयं। नरनारायणौ यौ तौ तावेवार्ज्जुनकेशवौ।
विजानीहि महाराज प्रवरौ पुरुषोत्तमौ। यद्येतदेवं जानासि न च मामभिशङ्कसे।
आर्य्यां मतिं समास्थाय शाम्य भारत पाण्डवैः। अथ चेन्मन्यसे श्रेयो न मे भेदो भवेदिति।
प्रशाम्य भरतश्रेष्ठ मा च युद्धे मनः कृथाः। भवताञ्च कुरुश्रेष्ठ कुलं बहुमतं भुवि।
तत्तथैवास्तु भद्रं ते स्वार्थमेवोपचिन्तय। 　३५००
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि जामदग्न्यवाक्ये पञ्चनवतोऽध्यायः॥ ९५॥
॥ वैशम्पायन उवाच॥ जामदग्न्यवचः श्रुत्वा कण्वोऽपि भगवानृषिः। दुर्य्योधनमिदं वाक्यमब्रवीत् कुरुसंसदि।
॥ कण्व उवाच॥ अक्षयश्चाव्ययश्चैव ब्रह्मा लोकपितामहः। तथैव भगवन्तौ तौ नरनारायणावृषी।
आदित्यानां हि सर्व्वेषां विष्णुरेकः सनातनः। अजय्यश्चाव्ययश्चैव शाश्वतः प्रभुरीश्वरः।
निमित्तमरणास्त्वन्ये चन्द्रसूर्य्यमहीजलं। वायुरग्निस्तथाकाशं ग्रहास्तारागणास्तथा।
ते च क्षयान्ते जगतो हित्वा लोकत्रयं सदा। क्षयं गच्छन्ति वै सर्व्वे सृज्यन्ते च पुनः पुनः। 　३५०५
मुहूर्त्तमरणास्त्वन्ये मानुषा मृगपक्षिणः। तैर्य्यग्योन्याश्च ये चान्ये जीवलोकचरास्तथा।
भूयिष्ठेन च राजानः श्रियं भुक्त्वायुषः क्षये। तरुणाः प्रतिपद्यन्ते भोक्तुं सुकृतदुष्कृते।
स भवान् धर्म्मपुत्त्रेण शमं कर्त्तुमिहार्हति। पाण्डवाः कुरवश्चैव पालयन्तु वसुन्धरां।
बलवानहमित्येवं न मन्तव्यं सुयोधन। बलवन्तो बलिभ्यो हि दृश्यन्ते पुरुषर्षभ।
न बलं बलिनां मध्ये बलं भवति कौरव। बलवन्तो हि ते सर्व्वे पाण्डवा देवविक्रमाः। 　३५१०
अत्राप्युदाहरन्तीममितिहासं पुरातनं। मातलेर्द्दातुकामस्य कन्यां मृगयतो वरं।
मतस्त्रिलोकराजस्य मातलिर्नाम सारथिः। तस्यैकैव कुले कन्या रूपतो लोकविश्रुता।
गुणकेशीति विख्याता नाम्ना सा देवरूपिणी। श्रिया च वपुषा चैव स्त्रियोऽन्याः साऽतिरिच्यते।
तस्याः प्रदानसमयं मातलिः सह भार्य्यया। ज्ञात्वा विमन्दवे राजंस्तत्परः परिचिन्तयन्।
धिक् खलु लघुशीलानामुच्छ्रितानां यशस्विनां। नराणां मृदुसत्त्वानां कुले कन्याप्ररोहणं। 　३५१५
मातुः कुलं पितृकुलं यत्र चैव प्रदीयते। कुलत्रयं संशयितं कुरुते कन्यका सतां।
देवमानुषलोकौ द्वौ मानुषेणैव चक्षुषा। अवगाह्यैव विचितौ न च मे रोचते वरः।
॥ कण्व उवाच॥ न देवाश्चैव दितिजाश्च गन्धर्व्वाश्च मानुषान्। अरोचयद्धरकृते तथैव बहुलानृषीन्।
भार्य्ययानु स समभ्य सह रात्रौ सुधर्म्मया। मातलिर्नागलोकाय चकार गमने मतिं।

न मे देवमनुष्येषु गुणकेश्याः समो वरः। रूपतो दृश्यते कश्चिन्नागेषु भविता ध्रुवं। ३५२०

इत्यामन्त्र्य सुधर्म्मां स कृत्वा चाभिप्रदक्षिणं। कन्यां शिरस्युपाघ्राय प्रविवेश महीतलं।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने षण्णवतोऽध्यायः॥ ९६ ॥

॥ कण्व उवाच॥ मातलिस्तु व्रजन्मार्गे नारदेन महर्षिणा। वरुणं गच्छता द्रष्टुं समागच्छद्यदृच्छया।

नारदोऽथाऽब्रवीदेनं क्व भवान् गन्तुमुद्यतः। स्वेन वा सूत कार्य्येण शासनाद्वा शतक्रतोः।

मातलिर्नारदेनैवं सम्पृष्टः पथि गच्छता। यथावत् सर्व्वमाचष्ट स्वकार्य्यं वरुणं प्रति।

तमुवाचाथ स मुनिर्गच्छाव सहिताविति। सलिलेशदिदृक्षार्थमहमप्युद्यतो दिवः। ३५२५

अहन्ते सर्व्वमाख्यास्ये दर्शयन् वसुधातलं। दृष्ट्वा तत्र वरं कञ्चिद्रोचयिष्याव मातले।

अवगाह्य ततो भूमिमुभौ मातलिनारदौ। ददृशाते महात्मानौ लोकपालमपाम्पतिं।

तत्र देवर्षिसदृशीं पूजां स प्राप नारदः। महेन्द्रसदृशीञ्चैव मातलिः प्रत्यपद्यत।

तावुभौ प्रीतमनसौ कार्य्यवन्तौ निवेद्य ह। वरुणेनाभ्यनुज्ञातौ नागलोकं विचेरतुः।

नारदः सर्व्वभूतानामन्तर्भूमिनिवासिनां। जानंश्चकार व्याख्यानं यन्तुः सर्व्वमशेषतः। ३५३०

॥ नारद उवाच॥ दृष्टस्ते वरुणः सूत पुत्रपौत्रसमावृतः। पश्योदकपतेः स्थानं सर्व्वतो भद्रमृद्धिमत्।

एष पुत्रो महाप्राज्ञो वरुणस्येह गोपतेः। एष वै शीलवृत्तेन शौचेन च विशिष्यते।

एषोऽस्य पुत्रोऽभिमतः पुष्करः पुष्करेक्षणः। रूपवान् दर्शनीयश्च सोमपुत्र्या वृतः पतिः।

ज्योत्स्नाकालीति यामाहुर्द्वितीयां रूपतः श्रियं। अदित्याश्चैव यः पुत्रो ज्येष्ठः श्रेष्ठः कृतः सुतः।

भवनं पश्य वारुण्यं यदेतत् सर्व्वकाञ्चनं। यत्प्राप्य सुरतां प्राप्ताः सुराः सुरपतेः सखे। ३५३५

एतानि हृतराज्यानां दैतेयानां स्म मातले। दीप्यमानानि दृश्यन्ते सर्व्वप्रहरणान्युत।

अक्षयाणि किलैतानि विवर्त्तन्ते स्म मातले। अनुभावप्रयुक्तानि सुरैरवजितानि ह।

अत्र राक्षसजात्यश्च दैत्यजात्यश्च मातले। दिव्यप्रहरणाश्चासन् सर्व्वदैवतनिर्ज्जिताः।

अग्निरेष महार्च्चिष्मान् जागर्त्ति वारुणे ह्रदे। वैष्णवञ्चक्रमाविद्धं विधूमेन हविष्मता।

एष गाण्डीमयश्चापो लोकसंहारसम्भृतः। रक्षते दैवतैर्नित्यं यतस्तद्गाण्डिवं धनुः। ३५४०

एष कृत्ये समुत्पन्ने तत्तद्धारयते बलं। सहस्रशतसङ्ख्येन प्राणेन सततं ध्रुवः।

अशास्यानपि शास्त्येष रक्षोबन्धुषु राजसु। सृष्टः प्रथमतश्चण्डो ब्रह्मणा ब्रह्मवादिना।

एतच्छत्रं नरेन्द्राणां महच्छक्रेण भाषितं। पुत्राः सलिलराजस्य धारयन्ति महोदयं।

एतत्सलिलराजस्य च्छत्रं छत्रगृहे स्थितं। सर्व्वतः सलिलं शीतं जीमूत इव वर्षति।

एतच्छत्रात्परिभ्रष्टं सलिलं सोमनिर्म्मलं। तमसा मूर्च्छितं भाति येन नार्च्छति दर्शनं। ३५४५

बहून्यद्भुतरूपाणि द्रष्टव्यानीह मातले। तव कार्य्योपरोधस्तु तस्माद्गच्छाव मा चिरं।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने सप्तनवतोऽध्यायः॥ ९७ ॥

॥ नारद उवाच॥ एतत्तु नागलोकस्य नाभिस्थाने स्थितं पुरं। पातालमिति विख्यातं दैत्यदानवसेवितं।

ह्रदमद्भिः समं प्राप्ता ये केचित् भुवनङ्गमाः। प्रविशन्तो महानादं नदन्ति भयपीडिताः।
अत्रासुरोऽग्निः सततं दीप्यते वारिभोजनः। व्यापारेण धृतात्मानं निबद्धं समबुध्यत।
अत्रामृतं सुरैः पीत्वा निहितं निहतारिभिः। अतः सोमस्य हानिश्च वृद्धिश्चैव प्रदृश्यते। ३५५०
अत्रादित्यो हयशिराः काले पर्व्वणि पर्व्वणि। उत्तिष्ठति सुवर्णाख्यं वार्भिरापूरयञ्जगत्।
तस्मादिदं समस्तास्ताः पतन्ति जलमूर्त्तयः। तस्मात् पातालमित्येव ख्यायते पुरमुत्तमं।
ऐरावतोऽस्मात् सलिलं गृहीत्वा जगतो हितः। मेघेष्वामुञ्चते शीतं यन्महेन्द्रः प्रवर्षति।
अत्र नानाविधाकारास्तिमयो नैकरूपिणः। अप्सु सोमप्रभां पीत्वा वसन्ति जलचारिणः।
अत्र सूर्य्यांशुभिर्भिन्नाः पातालतलमाश्रिताः। मृता दिवसतः सूत पुनर्जीवन्ति वै निशि। ३५५५
उदयन्नित्यशश्चात्र चन्द्रमा रश्मिबाहुभिः। अमृतं स्पृश्य संस्पर्शात् सञ्जीवयति देहिनः।
अत्र ते धर्म्मनिरता बद्धाः कालेन पीडिताः। दैतेया निवसन्ति स्म वासवेन हृतश्रियः।
अत्र भूतपतिर्नाम सर्व्वभूतमहेश्वरः। भूतये सर्व्वलोकानामाचरत्तप उत्तमं।
अत्र गोव्रतिनो विप्राः स्वाध्यायाम्नायकर्षिताः। त्यक्तप्राणा जितस्वर्गा निवसन्ति महर्षयः।
यत्र तत्र शयो नित्यं येन केनचिदाशितः। येन केनचिदाच्छन्नः स गोव्रत इहोच्यते। ३५६०
ऐरावणो नागराजो वामनः कुमुदोऽञ्जनः। प्रसूताः सुप्रतीकस्य वंशे वारणसत्तमाः।
पश्य यद्यत्र ते कश्चिद्रोचते गुणतो वरः। वरयिष्यामि तं गत्वा यत्नमास्थाय मातले।
अण्डमेतज्जले न्यस्तं दीप्यमानमिव श्रिया। आप्रजानां निसर्गाद्वै नोद्भिद्यति न सर्पति।
नास्य जातिं निसर्गं वा कथ्यमानं शृणोमि वै। पितरं मातरञ्चापि नास्य जानाति कश्चन।
अतः किल महानग्निरन्तकाले समुत्थितः। धक्ष्यते मातले सर्व्वं त्रैलोक्यं सचराचरं। ३५६५
मातलिस्त्वब्रवीत् श्रुत्वा नारदस्याथ भाषितं। न मेऽत्र रोचते कश्चिदन्यतो व्रज माचिरं।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने अष्टनवतोऽध्यायः॥ ९८ ॥
॥ नारद उवाच ॥ हिरण्यपुरमित्येव ख्यातं पुरवरं महत्। दैत्यानां दानवानाञ्च मायाशतविचारिणां।
अनल्पेन प्रयत्नेन निर्म्मितं विश्वकर्म्मणा। मयेन मनसा सृष्टं पातालतलमाश्रितं।
अत्र मायासहस्राणि विकुर्व्वाणा महौजसः। दानवा निवसन्ति स्म शूरा दत्तवराः पुरा।
नैते शक्रेण नान्येन यमेन वरुणेन वा। शक्यन्ते वशमानेतुं तथैव धनदेन च। ३५७०
असुराः कालकञ्जाश्च तथा विष्णुपदोद्भवाः। नैरृता यातुधानाश्च ब्रह्मपादोद्भवाश्च ये।
दंष्ट्रिणो भीमवेगाश्च वातवेगपराक्रमाः। मायावीर्य्योपसम्पन्ना निवसन्त्यत्र मातले।
निवातकवचा नाम दानवा युद्धदुर्म्मदाः। जानासि च यथा शक्रो नैतान् शक्नोति बाधितुं।
बहुशो मातले त्वञ्च तव पुत्त्रश्च गोमुखः। निर्भग्नो देवराजश्च सहपुत्त्रः शचीपतिः।
पश्य वेश्मानि रौक्माणि मातले राजतानि च। कर्म्मणा विधियुक्तेन युक्तान्युपगतानि च। ३५७५
वैदूर्य्यमणिचित्राणि प्रवालरुचिराणि च। अर्कस्फटिकशुभ्राणि वज्रसारोज्ज्वलानि च।

पार्थिवानीव चाभान्ति पद्मरागमयानि च। शैलानीव च दृश्यन्ते दारवाणीव चाप्युत।
सूर्य्यरूपाणि चाभान्ति दीप्ताग्निसदृशानि च। मणिजालविचित्राणि प्रांशूनि निबिडानि च।
नैतानि शक्यं निर्द्देष्टुं रूपतो द्रव्यतस्तथा। गुणतश्चैव सिद्धानि प्रमाणगुणवन्ति च।
आक्रीडान् पश्य दैत्यानां तथैव शयनान्युत। रत्नवन्ति महार्हाणि भवनान्यासनानि च। ३५८०
जलदाभांस्तथा शैलांस्तोयप्रस्रवणानि च। कामपुष्पफलांश्चापि पादपान् कामचारिणः।
मातले कश्चिदत्रापि रुचिरस्ते वरो भवेत्। अथ वाऽन्यां दिशं भूमेर्गच्छाव यदि मन्यसे।
मातलिस्त्वब्रवीदेनं भाषमाणं तथाविधं। देवर्षे नैव मे कार्य्यं विप्रियं त्रिदिवौकसां।
नित्यानुषक्तवैरा हि भ्रातरो देवदानवाः। परपक्षेण सम्बन्धं रोचयिष्याम्यहं कथं।
अन्यत्र साधु गच्छाव द्रष्टुं नार्हामि दानवान्। जानामि तव चात्मानं हिंसात्मकमनस्तथा। ३५८५
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने एकोनशततमोऽध्यायः॥ ९९॥
॥ नारद उवाच॥ अयं लोकः सुपर्णानां पक्षिणां पन्नगाशिनां। विक्रमे गमने भारे नैषामस्ति परिश्रमः।
वैनतेयसुतैः सूत षड्भिस्ततमिदं कुलं। सुमुखेन सुनाम्ना च सुनेत्रेण सुवर्चसा।
सुरूपा पक्षिराजेन सुबलेन च मातले। वर्द्धितानि प्रसूत्या वै विनताकुलकर्तृभिः।
पक्षिराजाभिजात्यानां सहस्राणि शतानि च। कश्यपस्य ततो वंशे जातैर्भूतिविवर्द्धनैः।
सर्व्वे ह्येते श्रिया युक्ताः सर्व्वे श्रीवत्सलक्षणाः। सर्व्वे श्रियमभीप्सन्तो धारयन्ति बलान्युत। ३५९०
कर्म्मणा क्षत्रियाश्चैते निर्घृणा भोगिभोजिनः। ज्ञातिसङ्क्षयकर्तृत्वात् ब्राह्मण्यं न लभन्ति वै।
नामानि चैषां वक्ष्यामि यथा प्राधान्यतः शृणु। मातले श्लाघ्यमेतद्धि कुलं विष्णुपरिग्रहं।
दैवतं विष्णुरेतेषां विष्णुरेव परायणं। हृदि चैषां सदा विष्णुर्विष्णुरेव सदा गतिः।
सुवर्णचूडो नागाशी दारुणश्चण्डतुण्डकः। अनिलश्चानलश्चैव विशालाक्षोऽथ कुण्डली।
पङ्कजिद्वज्रविष्कम्भो वैनतेयोऽथ वामनः। वातवेगो दिशाचक्षुर्निमेषोऽनिमिषस्तथा। ३५९५
त्रिवारः सप्तवारश्च वाल्मीकिर्द्वीपकस्तथा। दैत्यद्वीपः सरिद्द्वीपः सारसः पद्मकेतनः।
सुमुखश्चित्रकेतुश्च चित्रबर्हस्तथाऽनघः। मेघकृत्कुमुदो दक्षः सर्पान्तः सोमभोजनः।
गुरुभारः कपोतश्च सूर्य्यनेत्रश्चिरान्तकः। विष्णुधर्म्मा कुमारश्च पारिबर्हो हरिस्तथा।
सुस्वरो मधुपर्कश्च हेमवर्णस्तथैव च। मलयो मातरिश्वा च निशाकरदिवाकरौ।
एते प्रदेशमात्रेण मयोक्ता गरुडात्मजाः। प्राधान्यतस्ते यशसा कीर्त्तिताः प्राणतश्च ये। ३६००
यद्यत्र न रुचिः काचिदेहि गच्छाव मातले। तं नयिष्यामि देशं त्वां वरं यत्रोपलप्स्यते।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने शततमोऽध्यायः॥ १००॥
॥ नारद उवाच॥ इदं रसातलं नाम सप्तमं पृथिवीतलं। यत्रास्ते सुरभिर्माता गवाममृतसम्भवा।
क्षरन्ती सततं क्षीरं पृथिवीसारसम्भवं। षण्णां रसानां सारेण रसमेकमनुत्तमं।
अमृतेनाऽभितृप्तस्य सारमुद्गिरतः पुरा। पितामहस्य वदनादुदतिष्ठदनिन्दिता।

यस्याः क्षीरस्य धाराया निपतन्त्या महीतले। ह्रदः कृतः क्षीरनिधिः पवित्रं परमुच्यते। ३९०५
पुष्पितस्येव फेनेन पर्य्यन्तमनुवेष्टितं। पिबन्तो निवसन्त्यत्र फेनपा मुनिसत्तमाः।
फेनपा नाम ते ख्याताः फेनाहाराश्च मातले। उग्रे तपसि वर्त्तन्ते येषां बिभ्यति देवताः।
अस्याश्चतस्रो धेन्वोऽन्या दिक्षु सर्व्वासु मातले। निवसन्ति दिशां पाल्यो धारयन्त्यो दिशः स्मृताः।
पूर्व्वां दिशं धारयते सुरूपा नाम सौरभी। दक्षिणां हंसिका नाम धारयत्यपरां दिशं।
पश्चिमा वारुणी दिक् च धार्य्यते वै सुभद्रया। महानुभावया नित्यं मातले विश्वरूपया। ३९१०
सर्व्वकामदुघा नाम धेनुर्धारयते दिशं। उत्तरां मातले धर्म्या तथैलविलसंज्ञितां।
आसान्तु पयसा मिश्रं पयो निर्म्मथ्य सागरे। मन्थानं मन्दरं कृत्वा देवैरसुरसंहितैः।
उद्धृता वारुणी लक्ष्मीरमृतञ्चापि मातले। उच्चैःश्रवाश्चाश्वराजो मणिरत्नञ्च कौस्तुभं।
सुधाहारेषु च सुधा स्वधाभोजिषु च स्वधां। अमृतञ्चामृताशेषु सुरभी क्षरते पयः।
अत्र गाथा पुरा गीता रसातलनिवासिभिः। पौराणी श्रूयते लोके गीयते या मनीषिभिः। ३९१५
न नागलोके न स्वर्गे न विमाने त्रिविष्टपे। परिवासः सुखस्तादृग्रसातलतले यथा।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने एकाधिकशततमोऽध्यायः॥ १०१ ॥
॥ नारद उवाच ॥ इयं भोगवती नाम पुरी वासुकिपालिता। यादृशी देवराजस्य पुरी वर्य्याऽमरावती।
एष शेषः स्थितो नागो येनेयं धार्य्यते सदा। तपसा लोकमुख्येन प्रभावमहिता मही।
श्वेताचलनिभाकारो दिव्याभरणभूषितः। सहस्रं धारयन्मूर्द्ध्नां ज्वालाजिह्वो महाबलः।
इह नानाविधाकारा नानाविधविभूषणाः। सुरसायाः सुता नागा निवसन्ति गतव्यथाः। ३९२०
मणिस्वस्तिकचक्राङ्काः कमण्डलुकलक्षणाः। सहस्रसङ्ख्या बलिनः सर्व्वे रौद्राः स्वभावतः।
सहस्रशिरसः केचित् केचित् पञ्चशताननाः। शतशीर्षास्तथा केचित् केचित् त्रिशिरसोऽपि च।
द्विपञ्चशिरसः केचित् केचित् सप्तमुखास्तथा। महाभोगा महाकायाः पर्व्वताभोगभोगिनः।
बहूनीह सहस्राणि प्रयुतान्यर्व्वुदानि च। नागानामेकवंशानां यथाश्रेष्ठन्तु मे शृणु।
वासुकिस्तक्षकश्चैव कर्क्कोटकधनञ्जयौ। कालियो नहुषश्चैव कम्बलाश्वतरावुभौ। ३९२५
बाह्यकुण्डो मणिर्नागस्तथैवापूरणः खगः। वामनश्चैलपत्रश्च कुकुरः कुकुणस्तथा।
आर्य्यको नन्दकश्चैव तथा कलशपोतकौ। कैलासकः पिञ्जरको नागश्चैरावतस्तथा।
सुमनोमुखो दधिमुखः शङ्खो नन्दोपनन्दकौ। आप्तः कोटरकश्चैव शिखी निष्ठुरिकस्तथा।
तित्तिरिर्हस्तिभद्रश्च कुमुदो माल्यपिण्डकः। द्वौ पद्मौ पुण्डरीकश्च पुष्पो मुद्गरपर्णकः।
करवीरः पिठरकः संवृत्तो वृत्त एव च। पिण्डारो बिल्वपत्रश्च मूषिकादः शिरीषकः। ३९३०
दिलीपः शङ्खशीर्षश्च ज्योतिष्कोऽथापराजितः। कौरव्यो धृतराष्ट्रश्च कुहरः कृशकस्तथा।
विरजा धारणश्चैव सुबाहुर्मुखरो जयः। बधिरान्धौ विशुण्डिश्च विरसः सुरसस्तथा।
एते चान्ये च बहवः कश्यपस्यात्मजाः स्मृताः। मातले पश्य यद्यत्र कश्चित्ते रोचते वरः।

॥ कण्व उवाच ॥ मातलिस्तमेवमव्यग्रः सततं संनिरीक्ष्य वै । पप्रच्छ नारदं तत्र प्रीतिमानिव चाभवत् ।
स्थितो य एष पुरतः कौरव्यस्यार्य्यकस्य तु । द्युतिमान् दर्शनीयश्च कस्यैष कुलनन्दनः । ३५३५
कः पिता जननी चाऽस्य कतमस्यैष भोगिनः । वंशस्य कस्यैष महान् केतुभूत इव स्थितः
प्रणिधानेन धैर्य्येण रूपेण वयसा च मे । मनः प्रविष्टो देवर्षे गुणकेश्याः पतिर्व्वरः ।
॥ कण्व उवाच ॥ मातलिं प्रीतमनसं दृष्ट्वा सुमुखदर्शनात् । निवेदयामास तदा माहात्म्यं जन्म कर्म्म च ।
॥ नारद उवाच ॥ ऐरावतकुले जातः सुमुखो नाम नागराट् । आर्य्यकस्य मतः पौत्रो दौहित्रो वामनस्य च ।
एतस्य हि पिता नागश्चिकुरो नाम मातले । न चिराद्वैनतेयेन पञ्चत्वमुपपादितः । ३५४०
ततोऽब्रवीत् प्रीतमना मातलिर्नारदं वचः । एष मे रुचितस्तात जामाता भुजगोत्तमः ।
क्रियतामत्र यत्नो हि प्रीतिमानस्म्यनेन वै । अस्मै नागाय वै दातुं प्रियां दुहितरं मुने ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥
॥ नारद उवाच ॥ सूतोऽयं मातलिर्नाम शक्रस्य दयितः सुहृत् । शुचिः शीलगुणोपेतस्तेजस्वी वीर्य्यवान् बली ।
शक्रस्याऽयं सखा चैव मन्त्री सारथिरेव च । अल्पान्तरप्रभावश्च वासवेन रणे रणे ।
अयं हरिसहस्रेण युक्तं जैत्रं रथोत्तमं । देवासुरेषु युद्धेषु मनसैव प्रयच्छति । ३५४५
अनेन विजितानश्वैर्दोर्भ्यां जयति वासवः । अनेन बलभित् पूर्व्वं प्रहृते प्रहरत्युत ।
अस्य कन्या वरारोहा रूपेणासदृशी भुवि । सत्यशीलगुणोपेता गुणकेशीति विश्रुता ।
तस्याऽस्य यत्नाच्चरतस्त्रैलोक्यममरद्युते । सुमुखो भवतः पौत्रो रोचते दुहितुः पतिः ।
यदि ते रोचते सम्यग्भुजगोत्तम मा चिरं । क्रियतामार्य्यक क्षिप्रं बुद्धिः कन्यापरिग्रहे ।
यथा विष्णुकुले लक्ष्मीर्यथा स्वाहा विभावसोः । कुले तव तथैवास्तु गुणकेशी सुमध्यमा । ३५५०
पौत्रस्यार्थे भवांस्तस्मात् गुणकेशीं प्रतीच्छतु । सदृशीं प्रतिरूपस्य वासवस्य शचीमिव ।
पितृहीनमपि ह्येनं गुणतो वरयामहे । बहुमानाच्च भवतस्तथैवैरावतस्य च ।
सुमुखस्य गुणैश्चैव शीलशौचदमादिभिः । अभिगम्य स्वयं कन्यामयं दातुं समुद्यतः ।
मातलिस्तस्य सम्मानं कर्त्तुमर्हो भवानपि ।
॥ कण्व उवाच ॥ स तु दीनः प्रहृष्टश्च प्राह नारदमार्य्यकः । व्रियमाणे तथा पौत्रे पुत्रे च निधनं गते । ३५५५
॥ आर्य्यक उवाच ॥ न मे नैतत् बहु मतं महर्षे वचनं तव । सखा शक्रस्य संयुक्तः कस्यायं नेप्सितो भवेत् ।
कारणस्य तु दौर्ब्बल्यात् चिन्तयामि महामुने । अस्य देहकरस्तात मम पुत्रो महाद्युते ।
भक्षितो वैनतेयेन दुःखार्त्तास्तेन वै वयं । पुनरेव च तेनोक्तं वैनतेयेन गच्छता ।
मासेनाऽन्येन सुमुखं भक्षयिष्य इति प्रभो । ध्रुवं तथा तद्भविता जानीमस्तस्य निश्चयं ।
तेन हर्षः प्रनष्टो मे सुपर्णवचनेन वै । ३५६०
॥ कण्व उवाच ॥ मातलिस्त्वब्रवीदेनं बुद्धिरत्र कृता मया । जामातृभावेन वृतः सुमुखस्तव पुत्रजः ।
सोऽयं मया च सहितो नारदेन च पन्नगः । त्रिलोकेशं सुरपतिं गत्वा पश्यतु वासवं ।

शेषेणैवास्य कार्य्येण प्रज्ञास्याम्यहमायुषः। सुपर्णस्य विघाते च प्रवर्तिष्यामि सत्तम।
सुमुखश्च मया सार्द्धं देवेशमभिगच्छतु। कार्य्यसंसाधनार्थाय स्वस्ति तेऽस्तु भुजङ्गम।
ततस्ते सुमुखं दृष्ट्वा सर्व्व एव महौजसः। ददृशुः शक्रमासीनं देवराजं महाद्युतिं। ३६९५
सङ्गत्या तत्र भगवान् विष्णुरासीच्चतुर्भुजः। ततस्तत्सर्व्वमाचख्यौ नारदो मातलिं प्रति।
॥ वैशम्पायन उवाच॥ ततः पुरन्दरं विष्णुरुवाच भुवनेश्वरं। अमृतं दीयतामस्मै क्रियताममरैः समः।
मातलिर्नारदश्चैव सुमुखश्चैव वासव। लभन्तां भवतः कामात् काममेतं यथेप्सितं।
पुरन्दरोऽथ सञ्चिन्त्य वैनतेयपराक्रमं। विष्णुमेवाब्रवीदेनं भवानेव ददात्विति।
॥ विष्णुरुवाच॥ ईशस्त्वं सर्व्वलोकानां चराणामचराश्च ये। त्वया दत्तमदत्तं कः कर्त्तुमुत्सहते विभो। ३७००
प्रादाच्छक्रस्ततस्तस्मै पन्नगायायुरुत्तमं। न त्वेनममृतप्राशं चकार बलवृत्रहा।
लब्ध्वा वरन्तु सुमुखः सुमुखः सम्बभूव ह। कृतदारो यथाकामं जगाम च गृहान् प्रति।
नारदस्त्वार्य्यकश्चैव कृतकार्य्यौ मुदा युतौ। अभिजग्मतुरभ्यर्च्य देवराजं महाद्युतिं।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने त्र्यधिकशततमोऽध्यायः॥ १०३॥
॥ कण्व उवाच॥ गरुडस्तत्र शुश्राव यथा वृत्तं महाबलः। आयुःप्रदानं शक्रेण कृतं नागस्य भारत।
पक्षवातेन महता रुद्ध्वा त्रिभुवनं खगः। सुपर्णः परमक्रुद्धो वासवं समुपाद्रवत्। ३७०५
॥ गरुड उवाच॥ भगवन् किमवज्ञानाद्वृत्तिः प्रतिहता मम। कामकारं वरं दत्त्वा पुनश्चलितवानसि।
निसर्गात् सर्व्वभूतानां सर्व्वभूतेश्वरेण मे। आहारो विहितो धात्रा किमर्थं वार्य्यते त्वया।
वृतश्चैव महानागः स्थापितः समयश्च मे। अनेन च मया देव भर्त्तव्यः प्रसवो महान्।
एतस्मिंस्तु तथाभूते नान्यं हिंसितुमुत्सहे। क्रीडसे कामकारेण देवराज यथेच्छकं।
सोऽहं प्राणान् विमोक्ष्यामि तथा परिजनो मम। ये च भृत्या मम गृहे प्रीतिमान् भव वासव। ३७१०
एतच्चैवाहमर्हामि भूयश्च बलवृत्रहन्। त्रैलोक्यस्येश्वरो योऽहं परभृत्यत्वमागतः।
त्वयि तिष्ठति देवेश न विष्णुः कारणं मम। त्रैलोक्यराज राज्यं हि त्वयि वासव शाश्वतं।
ममापि दक्षस्य सुता जननी कश्यपः पिता। अहमप्युत्सहे लोकान् समस्तान्वोढुमञ्जसा।
असह्यं सर्व्वभूतानां ममापि विपुलं बलं। मयाऽपि सुमहत्कर्म्म कृतं दैतेयविग्रहे।
श्रुतश्रीः श्रुतसेनश्च विवस्वान् रोचनामुखः। प्रसभः कालकाक्षश्च मयाऽपि दितिजा हताः। ३७१५
यत्तु ध्वजस्थानगतो यत्नात्परिचराम्यहं। वहामि चैवानुजन्ते तेन मामवमन्यसे।
कोऽन्यो भारसहो ह्यस्ति कोऽन्योऽस्ति बलवत्तरः। मया योऽहं विशिष्टः सन् वहामीमं सबान्धवं।
अवज्ञाय तु यत्तेऽहं भोजनाद्व्यपरोपितः। तेन मे गौरवं नष्टं त्वत्तश्चास्माच्च वासव।
अदित्यां य इमे जाता बलविक्रमशालिनः। त्वमेषां किल सर्व्वेषां बलेन बलवत्तरः।
सोऽहं पक्षैकदेशेन वहामि त्वां गतक्लमः। विमृश त्वं शनैस्तात को न्वत्र बलवानिति। ३७२०
॥ कण्व उवाच॥ स तस्य वचनं श्रुत्वा खगस्योदर्कदारुणं। अक्षोभ्यं क्षोभयंस्तार्क्ष्यमुवाच रथचक्रभृत्।

गरुत्मन्मन्यसे त्मानं बलवन्तं सुदुर्ब्बल। अलमस्मत्समक्षन्ते स्तोतुमात्मानमण्डज ।
त्रैलोक्यमपि मे कृत्स्नमशक्तं देहधारणे । अहमेवात्मनात्मानं वहामि त्वाञ्च धारये ।
इमं तावन्ममैकं त्वं बाहुं सव्येतरं वह । यद्येकं धारयस्येनं सफलं ते विकत्थितं ।
ततः स भगवांस्तस्य स्कन्धे बाहुं समासजत् । निपपात सभारार्त्तो विह्वलो नष्टचेतनः । ३९९५
यावान् हि भारः कृत्स्नायाः पृथिव्याः पर्व्वतैः सह । एकस्या देहशाखायास्तावद्भारममन्यत ।
न त्वेनं पीडयामास बलेन बलवत्तरः । ततो हि जीवितं तस्य न व्यनीनशदच्युतः ।
व्यात्तास्यः स्रस्तकायश्च विचेता विह्वलः खगः । मुमोच पत्राणि तदा गुरुभारप्रपीडितः ।
स विष्णुं शिरसा पक्षी प्रणम्य विनतासुतः । विचेता विह्वलो दीनः किञ्चिद्वचनमब्रवीत् ।
भगवन् लोकसारस्य सदृशेन वपुष्मता । भुजेन स्वैरमुक्तेन निष्पिष्टोऽस्मि महाबल । ४०००
क्षन्तुमर्हसि मे देव विह्वलस्याल्पचेतसः । बलदर्पविदग्धस्य पक्षिणो ध्वजवासिनः ।
न हि ज्ञातं बलं देव मया ते परमं विभो । तेन मन्याम्यहं वीर्य्यमात्मनो न समं परैः ।
ततश्चक्रे स भगवान् प्रसादं वै गरुत्मतः । मैवं भूय इति स्नेहात् तदा चैनमुवाच ह ।
पदाङ्गुष्ठेन चिक्षेप सुमुखं गरुडोरसि । ततः प्रभृति राजेन्द्र सह सर्पेण वर्त्तते ।
एवं विष्णुबलाक्रान्तो गर्व्वनाशमुपागतः । गरुडो बलवान् राजन् वैनतेयो महायशाः । ४००५
॥ कण्व उवाच ॥ तथा त्वमपि गान्धारे यावत्पाण्डुसुतान्रणे । नासादयसि तान् वीरांस्तावज्जीवसि पुत्रक ।
भीमः प्रहरतां श्रेष्ठो वायुपुत्रो महाबलः । धनञ्जयश्चेन्द्रसुतो न हन्यातान्तु कं रणे ।
विष्णुर्व्वायुश्च शक्रश्च धर्म्मस्तौ चाश्विनावुभौ । एते देवास्त्वया केन हेतुना वीक्षितुं क्षमाः ।
तदलन्ते विरोधेन शमं गच्छ नृपात्मज । वासुदेवेन तीर्थेन कुलं रक्षितुमर्हसि ।
प्रत्यक्षदर्शी सर्व्वस्य नारदोऽयं महातपाः । माहात्म्यस्य तदा विष्णोः सोऽयं चक्रगदाधरः । ४०१०
॥ वैशम्पायन उवाच ॥ दुर्य्योधनस्तु तत् श्रुत्वा निश्वसन् भ्रुकुटीमुखः । राधेयमभिसम्प्रेक्ष्य जहास स्वनवत्तदा ।
कदर्थीकृत्य तद्वाक्यमृषेः कण्वस्य दुर्म्मतिः । ऊरुं गजकराकारं ताडयन्निदमब्रवीत् ।
यथैवेश्वरसृष्टोऽस्मि यद्भावी या च मे गतिः । तथा महर्षे वर्त्तामि किं प्रलापः करिष्यति ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने चतुरधिकशततमोऽध्यायः ॥ १०४ ॥
॥ जनमेजय उवाच ॥ अनर्थे जातनिर्ब्बन्धं परार्थे लोभमोहितं । अनार्य्यकेष्वभिरतं मरणे कृतनिश्चयं ।
ज्ञातीनां दुःखकर्त्तारं बन्धूनां शोकवर्द्धनं । सुहृदां क्लेशदातारं द्विषतां हर्षवर्द्धनं । ४०१५
कथं नैनं विमार्गस्थं वारयन्तीह बान्धवाः । सौहृदाद्वा सुहृत् स्निग्धो भगवान् वा पितामहः ।
॥ वैशम्पायन उवाच ॥ उक्तं भगवता वाक्यमुक्तं भीष्मेण यत्क्षमं । उक्तं बहुविधञ्चैव नारदेनापि तत् शृणु ।
॥ नारद उवाच ॥ दुर्ल्लभो वै सुहृच्छ्रोता दुर्ल्लभश्च हितः सुहृत् । तिष्ठते हि सुहृत् यत्र न बन्धुस्तत्र तिष्ठति ।
श्रोतव्यमपि पश्यामि सुहृदां कुरुनन्दन । न कर्त्तव्यश्च निर्ब्बन्धो निर्ब्बन्धो हि सुदारुणः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनं । यथा निर्ब्बन्धतः प्राप्तो गालवेन पराजयः । ४०२०

विश्वामित्रं तपस्यन्तं धर्म्मो जिज्ञासया पुरा। अभ्यागच्छत् स्वयं भूत्वा वशिष्ठो भगवानृषिः।
सप्तर्षीणामन्यतमं वेशमास्थाय भारत। बुभुक्षुः क्षुधितो राजन्नाश्रमे कौशिकस्य तु।
विश्वामित्रोऽथ सम्भ्रान्तः श्रपयामास वै चरुं। परमान्नस्य यत्नेन नच तं प्रत्यपालयत्।
अन्नं तेन यदा भुक्तमन्यैर्दत्तं तपस्विभिः। अथ गृह्यान्नमत्युष्णं विश्वामित्रोऽप्युपागमत्।
भुक्तं मे तिष्ठ तावत्त्वमित्युक्त्वा भगवान् ययौ। विश्वामित्रस्ततो राजन् स्थित एव महाद्युतिः। ३७२५
भक्तं प्रगृह्य मूर्द्ध्ना वै बाहुभ्यां संशितव्रतः। स्थितः स्थाणुरिवाऽभ्यासे निश्चेष्टो मारुताशनः।
तस्य शुश्रूषणे यत्नमकरोत् गालवो मुनिः। गौरवाद्बहुमानाच्च हार्द्देन प्रियकाम्यया।
अथ वर्षशते पूर्णे धर्म्मः पुनरुपागमत्। वाशिष्ठं वेशमास्थाय कौशिकं भोजनेप्सया।
स दृष्ट्वा शिरसा भक्तं ध्रियमाणं महर्षिणा। तिष्ठता वायुभक्षेण विश्वामित्रेण धीमता।
प्रतिगृह्य ततो धर्म्मस्तथैवोष्णं तथा नवं। भुक्त्वा प्रीतोऽस्मि विप्रर्षे तमुक्त्वा स मुनिर्गतः। ३७३०
क्षत्रभावादपगतो ब्राह्मणत्वमुपागतः। धर्म्मस्य वचनात् प्रीतो विश्वामित्रस्तथाऽभवत्।
विश्वामित्रस्तु शिष्यस्य गालवस्य तपस्विनः। शुश्रूषया च भक्त्या च प्रीतिमानित्युवाच ह।
अनुज्ञातो मया वत्स यथेष्टं गच्छ गालव। इत्युक्तः प्रत्युवाचेदं गालवो मुनिसत्तमं।
प्रीतो मधुरया वाचा विश्वामित्रं महाद्युतिं। दक्षिणाः काः प्रयच्छामि भवते गुरुकर्म्मणि।
दक्षिणाभिरुपेतं हि कर्म्म सिध्यति मानवं। दक्षिणानां हि दाता वै अपवर्गेण युज्यते। ३७३५
स्वर्गे क्रतुफलं तद्धि दक्षिणा शान्तिरुच्यते। किमाहरामि गुर्व्वर्थं ब्रवीतु भगवानिति।
स जानंस्तेन भगवान् जितः शुश्रूषणेन वै। विश्वामित्रस्तमसकृद्गच्छ गच्छेत्यचोदयत्।
असकृद्गच्छ गच्छेति विश्वामित्रेण भाषितः। किं ददामीति बहुशो गालवः प्रत्यभाषत।
निर्ब्बन्धतस्तु बहुशो गालवस्य तपस्विनः। किञ्चिदागतसंरम्भो विश्वामित्रोऽब्रवीदिदं।
एकतः श्यामकर्णानां हयानां चन्द्रवर्च्चसां। अष्टौ शतानि मे देहि गच्छ गालव मा चिरं। ३७४०
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
॥ नारद उवाच॥ एवमुक्तस्तदा तेन विश्वामित्रेण धीमता। नास्ते न शेते नाहारं कुरुते गालवस्तदा।
त्वगस्थिभूतो हरिणश्चिन्ताशोकपरायणः। शोचमानोऽतिमात्रं स दह्यमानश्च मन्युना।
गालवो दुःखितो दुःखाद्विललाप सुयोधन। कुतः पुष्टानि मित्राणि कुतोऽर्थाः सञ्चयः कुतः।
हयानां चन्द्रशुभ्राणां शतान्यष्टौ कुतो मम। कुतो मे भोजने श्रद्धा सुखश्रद्धा कुतश्च मे।
श्रद्धा मे जीवितस्यापि छिन्ना किं जीवितेन मे। अहं पारे समुद्रस्य पृथिव्या वा परम्परात्। ३७४५
गत्वात्मानं विमुञ्चामि किं फलं जीवितेन मे। अधनस्याकृतार्थस्य त्यक्तस्य विविधैः फलैः।
ऋणं धारयमाणस्य कुतः सुखमनीहया। सुहृदां हि धनं भुक्त्वा कृत्वा प्रणयमीप्सितं।
प्रतिकर्त्तुमशक्तस्य जीवितान्मरणं वरं। प्रतिश्रुत्य करिष्येति कर्त्तव्यं तदकुर्व्वतः।

मिथ्या वचनदग्धस्य इष्टापूर्त्तं प्रणश्यति। न रूपमनृतस्यास्ति नानृतस्याऽस्ति सन्ततिः।
नानृतस्याधिपत्यञ्च कुत एव गतिः शुभा। कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखं। ३७४०
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः। न जीवत्यधनः पापः कुतः पापस्य तन्त्रणं।
पापो ध्रुवमवाप्नोति विनाशं नाशयन् कृतं। सोऽहं पापः कृतघ्नश्च कृपणश्चानृतोऽपि च।
गुरोर्यः कृतकार्य्यः सन् तत्करोमि न भाषितं। सोऽहं प्राणान् विमोक्ष्यामि कृत्वा यत्नमनुत्तमं।
अर्थना न मया काचित् कृतपूर्व्वा दिवौकसां। मानयन्ति च मां सर्व्वे त्रिदशा यज्ञसंस्तरे।
अहन्तु विबुधश्रेष्ठं देवं त्रिभुवनेश्वरं। विष्णुं गच्छाम्यहं कृष्णं गतिं गतिमतां वरं। ३७४५
भोगा यस्मात् प्रतिष्ठन्ते व्याप्य सर्व्वान् सुरासुरान्। प्रणतो द्रष्टुमिच्छामि कृष्णं योगिनमव्ययं।
एवमुक्ते सखा तस्य गरुडो विनतात्मजः। दर्शयामास तं प्राह संहृष्टः प्रियकाम्यया।
सुहृद्भवान् मम मतः सुहृदाञ्च मतः सुहृत्। ईप्सितेनाऽभिलाषेण योक्तव्यो विभवे सति।
विभवश्चास्ति मे विप्र वासवाऽवरजो द्विज। पूर्व्वमुक्तस्त्वदर्थञ्च कृतः कामश्च तेन मे।
स भवानेतु गच्छाव नयिष्ये त्वां यथासुखं। देशं पारं पृथिव्या वा गच्छ गालव मा चिरं। ३७५०
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते षडधिकशततमोऽध्यायः॥ १०६ ॥
॥ सुपर्ण उवाच ॥ अनुशिष्टोऽस्मि देवेन गालव ज्ञानयोनिना। ब्रूहि कामन्नु कां यामि द्रष्टुं प्रथमतो दिशं।
पूर्व्वां वा दक्षिणां वाऽहमथ वा पश्चिमां दिशं। उत्तरां वा द्विजश्रेष्ठ कुतो गच्छामि गालव।
यस्यामुदयते पूर्व्वं सर्व्वलोकप्रभावनः। सविता यत्र सन्ध्यायां साध्यानां वर्त्तते तपः।
यस्यां पूर्व्वं मतिर्याता यया व्याप्तमिदं जगत्। चक्षुषी यत्र धर्म्मस्य यत्र वै सुप्रतिष्ठिते।
हुतं यतो हुतं हव्यं सर्पते सर्व्वतो दिशं। एतद्द्वारं द्विजश्रेष्ठ दिवसस्य तथाऽध्वनः। ३७५५
अत्र पूर्व्वं प्रसूता वै दाक्षायण्यः प्रजाः स्त्रियः। यस्यां दिशि प्रवृद्धाश्च कश्यपस्यात्मसम्भवाः।
अतो मूलं सुराणां श्रीर्यत्र शक्रोऽभ्यषिच्यत। सुरराज्येन विप्रर्षे देवैश्चात्र तपश्चितं।
एतस्मात् कारणात् ब्रह्मन् पूर्व्वेत्येषा दिगुच्यते। तस्मात् पूर्व्वतरे काले पूर्व्वमेवावृता सुरैः।
अतएव च पूर्व्वेषां पूर्व्वामाशां प्रचक्षते। पूर्व्वं सर्व्वाणि कार्य्याणि दैवानां सुखमीप्सतां।
अत्र वेदान् जगौ पूर्व्वं भगवान् लोकभावनः। अत्रैवोक्ता सवित्रासीत् सावित्री ब्रह्मवादिषु। ३७६०
अत्र दत्तानि सूर्य्येण यजूंषि द्विजसत्तम। अत्र लब्धवरः सोमः सुरैः क्रतुषु पीयते।
अत्र तृप्ता हुतवहाः स्वां योनिमुपभुञ्जते। अत्र पातालमाश्रित्य वरुणः श्रियमाप च।
अत्र पूर्व्वं वशिष्ठस्य पौराणस्य द्विजर्षभ। सूतिश्चैव प्रतिष्ठा च निधनञ्च प्रकाशते।
ओंकारस्यात्र जायन्ते सूतयो दशतीर्दश। पिबन्ति मुनयो यत्र हविर्धूमं स्म धूमपाः।
प्रोक्षिता यत्र बहवो वराहाद्या मृगा वने। शक्रेण यज्ञभागार्थे दैवतेषु प्रकल्पिताः। ३७६५
अत्राहिताः कृतघ्नाश्च मानुषाश्चासुराश्च ये। उदयंस्तान् हि सर्व्वान् वै क्रोधाद्धन्ति विभावसुः।
एतद्द्वारं त्रिलोकस्य स्वर्गस्य च सुखस्य च। एष पूर्व्वो दिशो भागो विशावोऽत्र यदीच्छसि।

प्रियं कार्य्यं हि मे तस्य यस्यास्मि वचने स्थितः। ब्रूहि गालव यास्यामि शृणु चाप्यपरां दिशं।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते सप्ताधिकशततमोऽध्यायः॥ १०७॥

॥ सुपर्ण उवाच॥ इयं विवस्वता पूर्व्वं श्रौतेन विधिना किल। गुरवे दक्षिणा दत्ता दक्षिणेत्युच्यते च दिक्।
अत्र लोकत्रयस्यास्य पितृपक्षः प्रतिष्ठितः। अत्रोष्मपाणां देवानां निवासः श्रूयते द्विज। १०८०
अत्र विश्वे सदा देवाः पितृभिः सार्द्धमासते। इज्यमानाः स्म लोकेषु सम्प्राप्तास्तुल्यभागताम्।
एतत् द्वितीयं धर्म्मस्य द्वारमाचक्षते द्विज। त्रुटिशो लवशश्चापि गण्यते कालनिश्चयः।
अत्र देवर्षयो नित्यं पितृलोकर्षयस्तथा। तथा राजर्षयः सर्व्वे निवसन्ति गतव्यथाः।
अत्र धर्म्मश्च सत्यञ्च कर्म्म चात्र निगद्यते। गतिरेषा द्विजश्रेष्ठ कर्म्मणात्मावसादिनां।
एषा दिक् सा द्विजश्रेष्ठ यां सर्व्वः प्रतिपद्यते। वृता त्वनवबोधेन सुखं तेन न गम्यते। १०८५
नैर्ऋतानां सहस्राणि बहून्यत्र द्विजर्षभ। सृष्टानि प्रतिकूलानि द्रष्टव्यान्यकृतात्मभिः।
अत्र मन्दरकुञ्जेषु विप्रर्षिसदनेषु च। गायन्ति गाथा गन्धर्व्वाश्चित्तबुद्धिहरा द्विज।
अत्र सामानि गाथाभिः श्रुत्वा गीतानि रैवतः। गतदारो गतामात्यो गतराज्यो वनं गतः।
अत्र सावर्णिना चैव यवक्रीतात्मजेन च। मर्य्यादा स्थापिता ब्रह्मन् यां सूर्य्यो नातिवर्त्तते।
अत्र राक्षसराजेन पौलस्त्येन महात्मना। रावणेन तपश्चीर्त्त्वा सुरेभ्योऽमरता वृता। १०९०
अत्र वृत्तेन वृत्रोऽपि शक्रशत्रुत्वमीयिवान्। अत्र सर्व्वासवः प्राणाः पुनर्गच्छन्ति पञ्चधा।
अत्र दुष्कृतकर्म्माणो नराः पच्यन्ति गालव। अत्र वैतरणी नाम नदी वैतरणैर्वृता।
अत्र गत्वा सुखस्यान्तं दुःखस्यान्तं प्रपद्यते। अत्रावृत्तो दिनकरः सुरसं क्षरते पयः।
काष्ठाञ्चासाद्य वासिष्ठीं हिममुत्सृजते पुनः। अत्राहं गालव पुरा क्षुधार्त्तः परिचिन्तयन्।
लब्धवान् युद्ध्यमानौ द्वौ वृहन्तौ गजकच्छपौ। अत्र चक्रधनुर्न्नाम सूर्य्याज्जातो महानृषिः। १०९५
विदुर्य्यं कपिलं देवं येनार्त्ताः सगरात्मजाः। अत्र सिद्धा शिवा नाम ब्राह्मणी वेदपारगा।
अधीत्य सकलान् वेदान् लेभे सन्देहमक्षयं। अत्र भोगवती नाम पुरी वासुकिपालिता।
तक्षकेण च नागेन तथैवैरावतेन च। अत्र निर्य्याणकालेऽपि तमः सम्प्राप्यते महत्।
अभेद्यं भास्करेणापि स्वयं वा कृष्णवर्त्मना। एवं तस्यापि ते मार्गः परिक्रम्यस्य गालव।
ब्रूहि मे यदि गन्तव्यं प्रतीचीं शृणु चापरं। ११००

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते अष्टाधिकशततमोऽध्यायः॥ १०८॥

॥ सुपर्ण उवाच॥ इयं दिक् दयिता राज्ञो वरुणस्य तु गोपतेः। सदा सलिलराजस्य प्रतिष्ठा चादिरेव च।
अत्र पश्चादहः सूर्य्यो विसर्ज्जयति गाः स्वयं। पश्चिमेत्यभिविख्याता दिगियं द्विजसत्तम।
यादसामत्र राज्येन सलिलस्य च गुप्तये। कश्यपो भगवान् देवो वरुणञ्चाभ्यषेचयत्।
अत्र पीत्वा समस्तान् वै वरुणस्य रसांस्तु षट्। जायते तरुणः सोमः शुक्लस्यादौ तमिस्रहा।
अत्र पश्चात् कृता दैत्या वायुना संयतास्तदा। निश्वसन्तो महावातैरर्द्दिताः सुषुपुर्द्विज। ११०५

अत्र सूर्य्यं प्रणयिनं प्रतिष्ठापयति सर्व्वतः । अस्तो नाम यतः सन्ध्या पश्चिमा प्रतिसर्पति ।
अतो रात्रिश्च निद्रा च निर्गता दिवसक्षये । जायते जीवलोकस्य हर्त्तुमर्द्धमिवायुषः ।
अत्र देवीं दितिं सुप्तामात्मप्रसवधारिणीम् । विगर्भामकरोच्छक्रो यत्र जातो मरुद्गणः ।
अत्र मूलं हिमवतो मन्दरं याति शाश्वतं । अपि वर्षसहस्रेण न चान्तोऽस्याधिगम्यते ।
अत्र काञ्चनशैलस्य काञ्चनाम्बुरुहस्य च । उदधेस्तीरमासाद्य सुरभिः क्षरते पयः । ३८१०
अत्र मध्ये समुद्रस्य कबन्धः प्रतिदृश्यते । स्वर्भानोः सूर्य्यकल्पस्य सोमसूर्य्यौ जिघांसतः ।
सुवर्णशिरसोऽप्यत्र हरिरोम्णः प्रगायतः । अदृश्यस्याप्रमेयस्य श्रूयते विपुलो ध्वनिः ।
अत्र ध्वजवती नाम कुमारी हरिमेधसः । आकाशे तिष्ठ तिष्ठेति तस्थौ सूर्य्यस्य शासनात् ।
अत्र वायुस्तथा वह्निरापः खञ्चापि गालव । आह्निकञ्चैव नैशञ्च दुःखस्पर्शं विमुञ्चति ।
अतः प्रभृति सूर्य्यस्य तिर्य्यगावर्त्तते गतिः । अत्र ज्योतींषि सर्व्वाणि विशन्त्यादित्यमण्डलं । ३८१५
अष्टाविंशतिरात्रञ्च संक्रम्य सह भानुना । निष्पतन्ति पुनः सूर्य्यात् सोमसंयोगयोगतः ।
अत्र नित्यं स्रवन्तीनां प्रभवः सागरोदयः । अत्र लोकत्रयस्यापस्तिष्ठन्ति वरुणालये ।
अत्र पन्नगराजस्याप्यनन्तस्य निवेशनं । अनादिनिधनस्यात्र विष्णोः स्थानमनुत्तमं ।
अत्रानलसखस्यापि पवनस्य निवेशनं । महर्षेः कश्यपस्यात्र मारीचस्य निवेशनं ।
एष ते पश्चिमो मार्गो दिग्द्वारेण प्रकीर्त्तितः । ब्रूहि गालव गच्छावः कां दिशं द्विजसत्तम । ३८२०
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते नवाधिकशततमोऽध्यायः ॥ १०९ ॥
॥ सुपर्ण उवाच ॥ यस्मादुत्तार्य्यते पापात् यस्मान्निःश्रेयसोऽश्नुते । अस्मादुत्तारणबलादुत्तरेत्युच्यते द्विज ।
उत्तरस्य हिरण्यस्य परिवापस्य गालव । मार्गः पश्चिमपूर्व्वाभ्यां दिग्भ्यां वै मध्यमः स्मृतः ।
अस्यां दिशि वरिष्ठायामुत्तरायां द्विजर्षभ । नासौम्यो नाविधेयात्मा नाधर्म्यो वसते जनः ।
अत्र नारायणः कृष्णो जिष्णुश्चैव नरोत्तमः । बदर्य्यामाश्रमपदे तथा ब्रह्मा च शाश्वतः ।
अत्र वै हिमवत्पृष्ठे नित्यमास्ते महेश्वरः । प्रकृत्या पुरुषः सार्द्धं युगान्ताग्निसमप्रभः । ३८२५
न स दृश्यो मुनिगणैस्तथा देवैः सवासवैः । गन्धर्व्वयक्षसिद्धैर्व्वा नरनारायणादृते ।
अत्र विष्णुः सहस्राक्षः सहस्रचरणोऽव्ययः । सहस्रशिरसः श्रीमानेकः पश्यति मायया ।
अत्र राज्येन विप्राणां चन्द्रमाश्चाभ्यषिच्यत । अत्र गङ्गां महादेवः पतन्तीं गगनाच्च्युतां ।
प्रतिगृह्य ददौ लोके मानुषे ब्रह्मवित्तम । अत्र देव्या तपस्तप्तं महेश्वरपरीप्सया ।
अत्र कामश्च रोषश्च शैलश्चोमा च सम्बभुः । अत्र राक्षसयक्षाणां गन्धर्व्वाणाञ्च गालव । ३८३०
आधिपत्येन कैलासे धनदोऽप्यभिषेचितः । अत्र चैत्ररथं रम्यमत्र वैखानसाश्रमः ।
अत्र मन्दाकिनी चैव मन्दरश्च द्विजर्षभ । अत्र सौगन्धिकवनं नैर्ऋतैरपि रक्ष्यते ।
शाद्वलं कदलीस्कन्धमत्र सन्तानका नगाः । अत्र संयमनित्यानां सिद्धानां स्वैरचारिणां ।
विमानान्यनुरूपाणि कामभोग्यानि गालव । अत्र ते ऋषयः सप्त देवी चारुन्धती तथा ।

अत्र तिष्ठति वै स्वातिरत्रास्या उदयः स्मृतः। अत्र यज्ञं समारुह्य ध्रुवं स्थाता पितामहः। ३८३५
ज्योतींषि चन्द्रसूर्य्यौ च परिवर्त्तन्ति नित्यशः। अत्र गायन्तिकाद्वारं रक्षन्ति द्विजसत्तम।
धावमाना महात्मानो मुनयः सत्यवादिनः। न तेषां ज्ञायते सूतिर्नाकृतिर्न तपश्चितं।
परिवर्त्तसहस्राणि कामभोज्यानि गालव। यथा यथा प्रविशति तस्मात् परतरं नरः।
तथा तथा द्विजश्रेष्ठ प्रविलीयति गालव। नैतत् केनचिदन्येन गतपूर्व्वं द्विजर्षभ।
ऋते नारायणं देवं नरं वा जिष्णुमव्ययं। अत्र कैलासमित्युक्तं स्थानमैलविलस्य तत्। ३८४०
अत्र विद्युत्प्रभा नाम जज्ञिरे ऽप्सरसो दश। अत्र विष्णुपदं नाम क्रमता विष्णुना कृतं।
त्रिलोकविक्रमे ब्रह्मन्नुत्तरां दिशमाश्रितं। अत्र राज्ञा मरुत्तेन यज्ञेनेष्टं द्विजोत्तम।
उशीरवीजे विप्रर्षे यत्र जाम्बूनदं सरः। जीमूतस्यात्र विप्रर्षेरुपतस्थे महात्मनः।
साक्षाद्धैमवतः पुण्यो विमलः कनकाकरः। ब्राह्मणेषु च यत्कृत्स्नं स्वन्तं कृत्वा धनं महत्।
वव्रे धनं महर्षिः स जैमूतं तद्धनं ततः। अत्र नित्यं दिशां पालाः सायं प्रातर्द्विजर्षभाः। ३८४५
कस्य कार्य्यं किमिति वै परिक्रोशन्ति गालव। एवमेषा द्विजश्रेष्ठ गुणैरन्यैर्दिगुत्तरा।
उत्तरेति परिख्याता सर्व्वकर्म्मसु चोत्तरा। एता विस्तरशस्तात तव सङ्कीर्त्तिता दिशः।
चतस्रः क्रमयोगेन कामाशां गन्तुमिच्छसि। उद्यतोऽहं द्विजश्रेष्ठ तव दर्शयितुं दिशः।
पृथिवीञ्चाखिलां ब्रह्मंस्तस्मादारोह मां द्विज।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते दशाधिकशततमोऽध्यायः॥ ११० ॥
॥ गालव उवाच ॥ गरुत्मन् भुजगेन्द्रारे सुपर्ण विनतात्मज। नय मां तार्क्ष्य पूर्व्वेण यत्र धर्म्मस्य चक्षुषी। ३८५०
पूर्व्वमेतां दिशं गच्छ या पूर्व्वं परिकीर्त्तिता। दैवतानां हि सान्निध्यं यत्र कीर्त्तितवानसि।
अत्र सत्यञ्च धर्म्मश्च त्वया सम्यक् प्रकीर्त्तितः। इच्छेयन्तु समागन्तुं समस्तैर्दैवतैरहं।
भूयश्च तान् सुरान् द्रष्टुमिच्छेयमरुणानुज।
॥ नारद उवाच ॥ तमाह विनतासूनुरारोहस्वेति वै द्विजं। आरुरोहाथ स मुनिर्गरुडं गालवस्तदा।
॥ गालव उवाच ॥ क्रममाणस्य ते रूपं दृश्यते पन्नगाशन। भास्करस्येव पूर्व्वाह्णे सहस्रांशोर्विवस्वतः। ३८५५
पक्षवातप्रणुन्नानां वृक्षाणामनुगामिनां। प्रस्थितानामिव समं पश्यामीह गतिं खग।
ससागरवनामुर्व्वीं सशैलवनकाननां। आकर्षन्निव चाभासि पक्षवातेन खेचर।
समीननागनक्रञ्च खमिवारोप्यते जलं। वायुना चैव महता पक्षवातेन चानिशं।
तुल्यरूपाननान् मत्स्यांस्तथा तिमितिमिङ्गिलान्। नागांश्च नरवक्त्रांश्च पश्याम्युन्मथितानिव।
महार्णवस्य च रवैः श्रोत्रे मे बधिरे कृते। न शृणोमि न पश्यामि नात्मनो वेद्मि कारणं। ३८६०
शनैः स तु भवान् यातु ब्रह्मवध्यामनुस्मरन्। न दृश्यते रविस्तात न दिशो न च खं खग।
तम एव तु पश्यामि शरीरं ते न लक्षये। मणी वा जात्यौ पश्यामि चक्षुषी तेऽहमण्डज।
शरीरन्तु न पश्यामि तव चैवात्मनश्च ह। पदे पदे तु पश्यामि शरीरादग्निमुत्थितं।

स मे निर्व्वाप्य सहसा चक्षुषी प्राप्य ते पुनः। तन्नियच्छ महावेगं गमने विनतात्मज।
न मे प्रयोजनं किञ्चिद्गमने पन्नगाशन। सन्निवर्त्त महाभाग न वेगं विषहामि ते। ३८६५
गुरवे संश्रुतानीह शतान्यष्टौ हि वाजिनां। एकतः श्यामकर्णानां शुभ्राणां चन्द्रवर्चसां।
तेषाञ्चैवापवर्गाय मार्गं पश्यामि नाण्डज। ततोऽयं जीवितत्यागे दृष्टो मार्गो महात्मनः।
नैव मेऽस्ति धनं किञ्चिन्न धनेनान्वितः सुहृत्। न चार्थेनापि महता शक्यमेतद्व्यपोहितुं।
॥ नारद उवाच ॥ एवं बहु च दीनञ्च ब्रुवाणं गालवं तदा। प्रत्युवाच व्रजन्नेव प्रहसन् विनतात्मजः।
नातिप्रज्ञोऽसि विप्रर्षे यो ह्यात्मानं त्यक्तुमिच्छसि। न चापि कृत्रिमः कालः कालो हि परमेश्वरः। ३८७०
किमहं पूर्व्वमेवेह भवता नाभिचोदितः। उपायोऽत्र महानस्ति येनैतदुपपद्यते।
तदेष ऋषभो नाम पर्व्वतः सागरान्तिके। अत्र विश्रम्य भुक्त्वा च निवर्त्तिष्याव गालव।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते एकादशाधिकशततमोऽध्यायः॥ १११ ॥
॥ नारद उवाच ॥ ऋषभस्य ततः शृङ्गे निपत्य द्विजपक्षिणौ। शाण्डिलीं ब्राह्मणीं तत्र ददृशाते तपोऽन्वितां।
अभिवाद्य सुपर्णस्तु गालवश्चाभिपूज्य तां। तया च स्वागतेनोक्तौ विष्टरे सन्निषीदतुः।
सिद्धमन्नं तया दत्तं बलिमन्त्रोपबृंहितं। भुक्त्वा तृप्तावुभौ भूमौ सुप्तौ तावन्नु मोहितौ। ३८७५
मुहूर्त्तात् प्रतिबुद्धस्तु सुपर्णो गमनेप्सया। अथ भ्रष्टतनूजाङ्गमात्मानं ददृशे खगः।
मांसपिण्डोपमो भूत्वा मुखपादान्वितः खगः। गालवस्तं तथा दृष्ट्वा विषण्णः पर्य्यपृच्छत।
किमिदं भवता प्राप्तमिहागमनजं फलं। वासोऽयमिह कालन्तु कियन्तं नौ भविष्यति।
किन्नु ते मनसा ध्यातमशुभं धर्म्मदूषणं। न ह्ययं भवतः स्वल्पो व्यभिचारो भविष्यति।
सुपर्णोऽथाब्रवीत् विप्रं प्रतिध्यातं मया द्विज। इमां सिद्धामितो नेतुं तत्र यत्र प्रजापतिः। ३८८०
यत्र देवो महादेवो यत्र विष्णुः सनातनः। यत्र धर्म्मश्च यज्ञश्च तत्रेयं निवसेदिति।
सोऽहं भगवतीं याचे प्रणतः प्रियकाम्यया। मयैतन्नाम प्रध्यातं मनसा शोचता किल।
तदेवं बहुमानात्ते मयेहानीप्सितं कृतं। सुकृतं दुष्कृतं वा त्वं माहात्म्यात् क्षन्तुमर्हसि।
सा तौ तदाऽब्रवीत्तुष्टा पतगेन्द्रद्विजर्षभौ। न भेतव्यं सुपर्णोऽसि सुपर्ण त्यज सम्भ्रमं।
निन्दिताऽस्मि त्वया वत्स न च निन्दां क्षमाम्यहं। लोकेभ्यः स परिभ्रश्येत् यो मां निन्देत पापकृत्। ३८८५
हीनयाऽलक्षणैः सर्व्वैस्तथानिन्दितया मया। आचारं प्रतिगृह्णन्त्या सिद्धिः प्राप्तेयमुत्तमा।
आचारः फलते धर्म्ममाचारः फलते धनं। आचारात् श्रियमाप्नोति आचारो हन्त्यलक्षणं।
तदायुष्मन् खगपते यथेष्टं गम्यतामितः। न च ते गर्हणीया हि गर्हितव्याः स्त्रियः क्वचित्।
भविताऽसि यथा पूर्व्वं बलवीर्य्यसमन्वितः। बभूवतुस्ततस्तस्य पक्षौ द्रविणवत्तरौ।
अनुज्ञातस्तु शाण्डिल्या यथागतमुपागमत्। नैव चासादयामास तथा रूपांस्तुरङ्गमान्। ३८९०
विश्वामित्रोऽथ तं दृष्ट्वा गालवञ्चाध्वनि स्थितः। उवाच वदतां श्रेष्ठो वैनतेयस्य सन्निधौ।
यस्त्वया स्वयमेवार्थः प्रतिज्ञातो मयि द्विज। तस्य कालोऽपवर्गस्य यथा वा मन्यते भवान्।

प्रतीक्षिष्याम्यहं कालमेतावन्तं तथाऽपरं। यथा संसिध्यते विप्र स मार्गस्तु निरूप्यतां।
सुपर्णोऽथाब्रवीद्दीनं गालवं भृशदुःखितं। प्रत्यक्षं खल्विदानीं मे विश्वामित्रो यदुक्तवान्।
तदागच्छ द्विजश्रेष्ठ मन्त्रयिष्याव गालव। नादत्त्वा गुरवे शक्यं कृत्स्नमर्थं त्वयासितुं। ३८९९
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते द्वादशाधिकशततमोऽध्यायः॥ ११२॥
॥ नारद उवाच॥ अथाह गालवं दीनं सुपर्णः पततां वरः। निर्म्मितं वह्निना भूमौ वायुना वर्द्धितं तथा।
यस्माद्धिरण्मयं सर्व्वं हिरण्यं तेन चोच्यते। धत्ते धारयते चेदमेतस्मात्कारणाद्धनं।
तदेतत् त्रिषु लोकेषु धनं तिष्ठति शाश्वतं। नित्यं प्रोष्ठपदाभ्याञ्च शुक्रे धनपतौ तथा।
मनुष्येभ्यः समादत्ते शुक्रश्चित्तार्ज्जितं धनं। अजैकपादहिर्ब्रध्नै रक्ष्यते धनदेन च।
एवं न शक्यते लब्धुमलब्धव्यं द्विजर्षभ। ऋते च धनमश्वानां नावाप्तिर्विद्यते तव। ३९००
स त्वं याचात्र राजानं कञ्चिद्राजर्षिवंशजं। अपीड्य राजा पौरान् हि यो नौ कुर्य्यात् कृतार्थिनौ।
अस्ति सोमान्ववाये मे जातः कश्चिन्नृपः सखा। अभिगच्छावहे तं वै तस्यास्ति विभवो भुवि।
ययातिर्नाम राजर्षिर्नाहुषः सत्यविक्रमः। स दास्यति मया चोक्तो भवता चार्थितः स्वयं।
विभवश्चास्य सुमहानासीद्धनपतेरिव। एवं गुरुधनं विद्वन् दानेनैव विशोधय।
तथा तौ कथयन्तौ च चिन्तयन्तौ च यत्क्षमं। प्रतिष्ठाने नरपतिं ययातिं प्रत्युपस्थितौ। ३९०५
प्रतिगृह्य च सत्कारैरर्घ्यं पाद्यादिकं वरं। पृष्टश्चागमने हेतुमुवाच विनतासुतः।
अयं मे नाहुष सखा गालवस्तपसो निधिः। विश्वामित्रस्य शिष्योऽभूद्वर्षाण्ययुतशो नृप।
सोऽयं तेनाभ्यनुज्ञात उपकारेप्सया द्विज। तमाह भगवान् काले ददानि गुरुदक्षिणां।
असकृत्तेन चोक्तेन किञ्चिदागतमन्युना। अयमुक्तः प्रयच्छेति जानता विभवं लघु।
एकतः श्यामकर्णानां शुभ्राणां शुद्धजन्मनां। अष्टौ शतानि मे देहि हयानां चन्द्रवर्च्चसां। ३९१०
गुर्व्वर्थो दीयतामेष यदि गालव मन्यसे। इत्येवमाह सक्रोधो विश्वामित्रस्तपोधनः।
सोऽयं शोकेन महता तप्यमानो द्विजर्षभः। अशक्तः प्रतिकर्त्तुं तत् भवन्तं शरणं गतः।
प्रतिगृह्य नरव्याघ्र त्वत्तो भिक्षां गतव्यथः। कृत्वाऽपवर्गं गुरवे चरिष्यति महत्तपः।
तपसः संविभागेन भवन्तमपि योक्ष्यते। स्वेन राजर्षितपसा पूर्णं त्वां पूरयिष्यति।
यावन्ति रोमाणि हये भवन्तीह नरेश्वर। तावतो वाजिनो लोकान् प्राप्नुवन्ति महीपते। ३९१५
पात्रं प्रतिग्रहस्यायं दातुं पात्रं तथा भवान्। शङ्खे क्षीरमिवासक्तं भवत्वेतत्तथोपमं।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते त्रयोदशाधिकशततमोऽध्यायः॥ ११३॥
॥ नारद उवाच॥ एवमुक्तः सुपर्णेन तथ्यं वचनमुत्तमं। विमृश्यावहितो राजा निश्चित्य च पुनः पुनः।
यष्टा क्रतुसहस्राणां दाता दानपतिः प्रभुः। ययातिः सर्व्वकाशीश इदं वचनमब्रवीत्।
दृष्ट्वा प्रियसखं तार्क्ष्यं गालवञ्च द्विजर्षभं। निदर्शनञ्च तपसां भिक्षां श्लाघ्याञ्च कीर्त्तितां।
अतीत्य च नृपानन्यानादित्यकुलसम्भवान्। मत्सकाशमनुप्राप्तावेतौ बुद्धिमवेक्ष्य च। ३९२०

अद्य मे सफलं जन्म तारितञ्चाद्य मे कुलं। अद्यायं तारितो देशो मम तार्क्ष्य त्वयाऽनघ।
वक्तुमिच्छामि तु सखे यथा जानासि मां पुरा। न तथा वित्तवानस्मि क्षीणं वित्तञ्च मे सखे।
न च शक्तोऽस्मि ते कर्त्तुं मोघमागमनं खग। न चाशामस्य विप्रर्षेर्वितथीकर्त्तुमुत्सहे।
तत्तु दास्यामि यत् कार्य्यमिदं सम्पादयिष्यति। अभिगम्य हताशो हि निवृत्तो दहते कुलं।
नातः परं वैनतेय किञ्चित्पापिष्ठमुच्यते। यथाशानाशनो लोके देहिनास्तीति यद्वचः। ३९२५
हताशो ह्यकृतार्थः सन् हतः सम्भावितो नरः। हिनस्ति तस्य पुत्रांश्च पौत्रांश्चाकुर्व्वतो हितं।
तस्माच्चतुर्णां वंशानां स्थापयित्री सुता मम। इयं सुरसुतप्रख्या सर्व्वधर्म्मोपचायिनी।
सदा देवमनुष्याणामसुराणाञ्च गालव। काङ्क्षिता रूपतो बाला सुता मे प्रतिगृह्यतां।
अस्यां शुल्कं प्रदास्यन्ति नृपा राज्यमपि ध्रुवं। किं पुनः श्यामकर्णानां हयानां द्वे चतुःशते।
स भवान् प्रतिगृह्णातु ममैतां माधवीं सुतां। अहं दौहित्रवान् स्यां वै वर एष मम प्रभो। ३९३०
प्रतिगृह्य च तां कन्यां गालवः सह पक्षिणा। पुनर्द्रक्ष्याव इत्युक्त्वा प्रतस्थे सह कन्यया।
उपलब्धमिदं द्वारमश्वानामिति चाण्डजः। उक्त्वा गालवमापृच्छ्य जगाम भवनं स्वकं।
गते पतगराजे तु गालवः सह कन्यया। चिन्तयानः क्षमं दाने राज्ञां वै शुल्कतोऽगमत्।
सोऽगच्छन्मनसेक्ष्वाकुं हर्य्यश्वं राजसत्तमं। अयोध्यायां महावीर्य्यं चतुरङ्गबलान्वितं।
कोषधान्यबलोपेतं प्रियपौरं द्विजप्रियं। प्रजाभिकामं शाम्यन्तं कुर्व्वाणन्तप उत्तमं। ३९३५
तमुपागम्य विप्रः स हर्य्यश्वं गालवोऽब्रवीत्। कन्येयं मम राजेन्द्र प्रसवैः कुलवर्द्धिनी।
इयं शुल्केन भार्य्यार्थं हर्य्यश्व प्रतिगृह्यतां। शुल्कं ते कीर्त्तयिष्यामि तत् श्रुत्वा सम्प्रधार्य्यतां।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते चतुर्द्दशाधिकशततमोऽध्यायः॥ ११४॥
॥ नारद उवाच॥ हर्य्यश्वस्त्वब्रवीद्राजा विचिन्त्य बहुधा ततः। दीर्घमुष्णञ्च निःश्वस्य प्रजाहेतोर्नृपोत्तमः।
उन्नतेषून्नता षट्सु सूक्ष्मा सूक्ष्मेषु सप्तसु। गम्भीरा त्रिषु गम्भीरेष्वियं रक्ता तु पञ्चसु।
बहुदेवासुरालोका बहुगन्धर्व्वदर्शना। बहुलक्षणसम्पन्ना बहुप्रसवधारिणी। ३९४०
समर्थेयं जनयितुं चक्रवर्त्तिनमात्मजं। ब्रूहि शुल्कं द्विजश्रेष्ठ समीक्ष्य विभवं मम।
॥ गालव उवाच॥ एकतः श्यामकर्णानां शतान्यष्टौ प्रयच्छ मे। हयानां चन्द्रशुभ्राणां देशजानां वपुष्मतां।
ततस्तव भवित्रीयं पुत्राणां जननी शुभा। अरणीव हुताशानां योनिरायतलोचना।
॥ नारद उवाच॥ स तत् श्रुत्वा वचो राजा हर्य्यश्वः काममोहितः। उवाच गालवं दीनो राजर्षिर्ऋषिसत्तमं।
द्वे मे शते सन्निहिते हयानां यद्विधास्तव। एष्टव्याः शतशस्त्वन्ये चरन्ति मम वाजिनः। ३९४५
सोऽहमेकमपत्यं वै जनयिष्यामि गालव। अस्यामेतं भवान् कामं सम्पादयतु मे वरं।
एतत् श्रुत्वा च सा कन्या गालवं वाक्यमब्रवीत्। मम दत्तो वरः कश्चित् केनचित् ब्रह्मवादिना।
प्रसूत्यन्ते प्रसूत्यन्ते कन्यैव त्वं भविष्यसि। स त्वं ददस्व मां राज्ञे प्रतिगृह्य हयोत्तमान्।
नृपेभ्यो हि चतुर्भ्यस्ते पूर्णान्यष्टौ शतानि मे। भविष्यन्ति तथा पुत्रा मम चत्वार एव च।

क्रियतामुपसंहारो गुर्व्वर्थो द्विजसत्तम। एषा तावन्मम प्रज्ञा यथा वा मन्यसे द्विज। ३९८०

एवमुक्तस्तु स मुनिः कन्यया गालवस्तदा। हर्य्यश्वं पृथिवीपालमिदं वचनमब्रवीत्।

इयं कन्या नरश्रेष्ठ हर्य्यश्व प्रतिगृह्यतां। चतुर्भागेन शुल्कस्य जनयस्वैकमात्मजं।

प्रतिगृह्य स तां कन्यां गालवं प्रतिनन्द्य च। समये देशकाले च लब्धवान् सुतमीप्सितं।

ततो वसुमना नाम वसुभ्यो वसुमत्तरः। वसुप्रख्यो नरपतिः स बभूव वसुप्रदः।

अथ काले पुनर्धीमान् गालवः प्रत्युपस्थितः। उपसङ्गम्य चोवाच हर्य्यश्वं प्रीतमानसं। ३९८५

जातो नृप सुतस्तेऽयं बालो भास्करसन्निभः। कालो गन्तुं नरश्रेष्ठ भिक्षार्थमपरं नृपं।

हर्य्यश्वः सत्यवचने स्थितः स्थित्वा च पौरुषे। दुर्लभत्वाच्छ्यामकर्णानां प्रददौ माधवीं पुनः।

माधवी च पुनर्दीप्तां परित्यज्य नृपश्रियं। कुमारी कामतो भूत्वा गालवं पृष्ठतोऽन्वगात्।

त्वय्येव तावत्तिष्ठन्तु हया इत्युक्तवान् द्विजः। प्रययौ कन्यया सार्द्धं दिवोदासं प्रजेश्वरं।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते पञ्चदशाधिकशततमोऽध्यायः॥ ११५ ॥

॥ गालव उवाच॥ महावीर्य्यो महीपालः काशीनामीश्वरः प्रभुः। दिवोदास इति ख्यातो भैमसेनिर्नराधिपः। ३९९०

तत्र गच्छावहे भद्रे शनैरागच्छ मा शुचः। धार्म्मिकः संयमे युक्तः सत्ये चैव जनेश्वरः।

॥ नारद उवाच॥ तमुपागम्य स मुनिर्न्यायतस्तेन सत्कृतः। गालवः प्रसवस्यार्थे तं नृपं प्रत्यचोदयत्।

॥ दिवोदास उवाच॥ श्रुतमेतन्मया पूर्व्वं किमुक्त्वा विस्तरं द्विज। काङ्क्षितो हि ममैषोऽर्थः श्रुत्वैव द्विजसत्तम।

एतच्च मे बहु मतं यदुत्सृज्य नराधिपान्। मामेवमुपयातोऽसि भावि चैतदसंशयं।

स एव विभवोऽस्माकमश्वानामपि गालव। अहमप्येकमेवास्यां जनयिष्यामि पार्थिवं। ३९९५

तथेत्युक्त्वा द्विजश्रेष्ठः प्रादात् कन्यां महीपतेः। विधिपूर्व्वञ्च तां राजा कन्यां प्रतिगृहीतवान्।

रेमे स तस्यां राजर्षिः प्रभावत्यां यथा रविः। स्वाहायाञ्च यथा वह्निर्यथा शच्याञ्च वासवः।

यथा चन्द्रश्च रोहिण्यां धूमोर्णायां यथा यमः। वरुणश्च यथा गौर्य्यां यथा चर्द्ध्यां धनेश्वरः।

यथा नारायणो लक्ष्म्यां जाह्नव्याञ्च यथोदधिः। यथा रुद्रश्च रुद्राण्यां यथा वेद्यां पितामहः।

अदृश्यन्त्याञ्च वाशिष्ठो वशिष्ठश्चाक्षमालया। च्यवनश्च सुकन्यायां पुलस्त्यः सन्ध्यया यथा। ४०००

अगस्त्यश्चापि वैदर्भ्यां सावित्र्यां सत्यवान् यथा। यथा भृगुः पुलोमायामदित्यां कश्यपो यथा।

रेणुकायां यथार्च्चीको हैमवत्याञ्च कौशिकः। बृहस्पतिश्च तारायां शुक्रश्च शतपर्व्वया।

यथा भूम्यां भूमिपतिरुर्व्वश्याञ्च पुरूरवाः। ऋचीकः सत्यवत्याञ्च सरस्वत्यां यथा मनुः।

शकुन्तलायां दुष्मन्तो धृत्यां धर्म्मश्च शाश्वतः। दमयन्त्यां नलश्चैव सत्यवत्याञ्च नारदः।

जरत्कारुर्जरत्कार्व्वां पुलस्त्यश्च प्रतीच्यया। मेनकायां यथोर्णायुस्तुम्बुरुश्चैव रम्भया। ४००५

वासुकिः शतशीर्षायां कुमार्य्याञ्च धनञ्जयः। वैदेह्याञ्च यथा रामो रुक्मिण्याञ्च जनार्द्दनः।

तथा तु रममाणस्य दिवोदासस्य भूपतेः। माधवी जनयामास पुत्रमेकं प्रतर्द्दनं।

अथाजगाम भगवान् दिवोदासं स गालवः। समये समनुप्राप्ते वचनञ्चेदमब्रवीत्।

निर्य्यातयतु मे कन्यां भवांस्तिष्ठन्तु वाजिनः। यावदन्यत्र गच्छामि शुल्कार्थं पृथिवीपते।
दिवोदासोऽथ धर्म्मात्मा समये गालवस्य तां। कन्यां निर्य्यातयामास स्थितः सत्ये महीपतिः। ३९८०
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते षोडशाधिकशततमोऽध्यायः॥ ११६॥
॥ नारद उवाच॥ तथैव तां श्रियं त्यक्त्वा कन्या भूत्वा यशस्विनी। माधवी गालवं विप्रमन्वयात् सत्यसङ्गरात्।
गालवो विमृशन्नेव स्वकार्य्यगतमानसः। जगाम भोजनगरं द्रष्टुमौशीनरं नृपं।
तमुवाचाथ गत्वा स नृपतिं सत्यविक्रमं। इयं कन्या सुतौ द्वौ ते जनयिष्यति पार्थिवौ।
अस्यां भवानवाप्तार्थो भविता प्रेत्य चेह च। सोमार्कप्रतिसङ्काशौ जनयित्वा सुतौ नृप।
शुल्कन्तु सर्व्वधर्म्मज्ञ हयानां चन्द्रवर्च्चसां। एकतः श्यामकर्णानां देयं मह्यं चतुःशतं। ३९८५
गुर्व्वर्थोऽयं समारम्भो न हयैः कृत्यमस्ति मे। यदि शक्यं महाराज क्रियतामविचारितं।
अनपत्योऽसि राजर्षे पुत्रौ जनय पार्थिव। पितॄन् पुत्रप्लवेन त्वमात्मानञ्चैव तारय।
न पुत्रफलभोक्ता हि राजर्षे पात्यते दिवः। न याति नरकं घोरं यथा गच्छन्त्यनात्मजाः।
एतच्चान्यच्च विविधं श्रुत्वा गालवभाषितं। उशीनरः प्रतिवचो ददौ तस्य नराधिपः।
श्रुतवानस्मि ते वाक्यं यथा वदसि गालव। विधिस्तु बलवान् ब्रह्मन् प्रवणं हि मनो मम। ३९९०
शते द्वे तु ममाश्वानामीदृशानां द्विजोत्तम। इतरेषां सहस्राणि सुबहूनि चरन्ति मे।
अहमप्येकमेवास्यां जनयिष्यामि गालव। पुत्रं द्विज गतं मार्गं गमिष्यामि परैरहं।
मूल्येनापि समं कुर्य्यां तवाहं द्विजसत्तम। पौरजानपदार्थन्तु ममार्थो नात्मभोगतः।
कामतो हि धनं राजा पारक्यं यः प्रयच्छति। न स धर्म्मेण धर्म्मात्मन् युज्यते यशसा न च।
सोऽहं प्रतिग्रहीष्यामि ददात्वेतां भवानिमां। कुमारीं देवगर्भाभामेकपुत्रभवाय मे। ३९९५
तथा तु बहुधा कन्यामुक्तवन्तं नराधिपं। उशीनरं द्विजश्रेष्ठो गालवः प्रत्यपूजयत्।
उशीनरं प्रतिग्राह्य गालवः प्रययौ वनं। रेमे स तां समासाद्य कृतपुण्य इव श्रियं।
कन्दरेषु च शैलानां नदीनां निर्झरेषु च। वातायनविमानेषु तथा गर्भगृहेषु च।
उद्यानेषु विचित्रेषु वनेषूपवनेषु च। हर्म्म्येषु रमणीयेषु प्रासादशिखरेषु च।
ततोऽस्य समये जज्ञे पुत्रो बालरविप्रभः। शिविर्नाम्नाऽभिविख्यातो यः स पार्थिवसत्तमः। ४०००
उपस्थाय च तं विप्रो गालवः प्रतिगृह्य च। कन्यां प्रयातस्तां राजन् दृष्टवान् विनतात्मजं।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते सप्तदशाधिकशततमोऽध्यायः॥ ११७॥
॥ नारद उवाच॥ गालवं वैनतेयोऽथ प्रहसन्निदमब्रवीत्। दिष्ट्या कृतार्थं पश्यामि भवन्तमिह वै द्विज।
गालवस्तु वचः श्रुत्वा वैनतेयेन भाषितं। चतुर्भागावशिष्टन्तदाचख्यौ कार्य्यमस्य हि।
सुपर्णस्त्वब्रवीदेनं गालवं वदतां वरः। प्रयत्नस्ते न कर्त्तव्यो नैष सम्पत्स्यते तव।
पुरा हि कान्यकुब्जे वै गाधेः सत्यवतीं सुतां। भार्य्यार्थं वरयत् कन्यामृचीकस्तेन भाषितः। ४००५
एकतः श्यामकर्णानां हयानां चन्द्रवर्च्चसां। भगवन् दीयतां मह्यं सहस्रमिति गालव।

ऋचीकस्तु तथेत्युक्त्वा वरुणस्यालयं गतः । अश्वतीर्थे हयान् लब्ध्वा दत्तवान् पार्थिवाय वै ।
इष्ट्वा ते पुण्डरीकेण दत्ता राज्ञा द्विजातिषु । तेभ्यो द्वे द्वे शते क्रीत्वा प्राप्ते तैः पार्थिवैस्तदा ।
अपराण्यपि चत्वारि शतानि द्विजसत्तम । नीयमानानि सन्तारे हृतान्यासन् वितस्तया ।
एवं न शक्यमप्राप्यं प्राप्तुं गालव कर्हिचित् । इमामश्वशताभ्यां वै द्वाभ्यां तस्मै निवेदय । ४०१०
विश्वामित्राय धर्म्मात्मन् षड्भिरश्वशतैः सह । ततोऽसि गतसम्मोहः कृतकृत्यो द्विजोत्तम ।
गालवस्तं तथेत्युक्त्वा सुपर्णसहितस्ततः । आदायाश्वांश्च कन्याञ्च विश्वामित्रमुपागमत् ।
अश्वानां काङ्क्षितार्थानां षडिमानि शतानि वै । शतद्वयेन कन्येयं भवता प्रतिगृह्यतां ।
अस्यां राजर्षिभिः पुत्रा जाता वै धार्म्मिकास्त्रयः । चतुर्थं जनयत्वेकं भवानपि नरोत्तमं ।
पूर्णान्येवं शतान्यष्टौ तुरगाणां भवन्तु ते । भवतो ह्यनृणो भूत्वा तपः कुर्य्यां यथासुखं । ४०१५
विश्वामित्रस्तु तं दृष्ट्वा गालवं सह पक्षिणा । कन्याञ्च तां वरारोहामिदमित्यब्रवीद्वचः ।
किमियं पूर्व्वमेवेह न दत्ता मम गालव । पुत्रा ममैव चत्वारो भवेयुः कुलभावनाः ।
प्रतिगृह्णामि ते कन्यामेकपुत्रफलाय वै । अश्वाश्चाश्रममासाद्य चरन्तु मम सर्व्वशः ।
स तया रममाणोऽथ विश्वामित्रो महाद्युतिः । आत्मजं जनयामास माधवीपुत्रमष्टकं ।
जातमात्रं सुतं तञ्च विश्वामित्रो महामुनिः । संयोज्यार्थैस्तथा धर्म्मैरश्वैस्तैः समयोजयत् । ४०२०
अथाष्टकः पुरं प्रायात् तदा सोमपुरप्रभं । निर्य्यात्य कन्यां शिष्याय कौशिकोऽपि वनं ययौ ।
गालवो पि सुपर्णेन सह निर्य्यात्य दक्षिणां । मनसाऽभिप्रतीतेन कन्यामिदमुवाच ह ।
जातो दानपतिः पुत्रस्त्वया शूरस्तथाऽपरः । सत्यधर्म्मरतश्चान्यो यज्वा चापि तथा परः ।
तदा गच्छ वरारोहे तारितस्ते पिता सुतैः । चत्वारश्चैव राजानस्तथा चाहं सुमध्यमे ।
गालवस्त्वभ्यनुज्ञाय सुपर्णं पन्नगाशनं । पितुर्निर्य्यात्य तां कन्यां प्रययौ वनमेव ह । ४०२५
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥
॥ नारद उवाच ॥ स तु राजा पुनस्तस्याः कर्त्तुकामः स्वयम्वरं । उपगम्याश्रमपदं गङ्गायमुनसङ्गमे ।
गृहीतमाल्यदामान्तां रथमारोप्य माधवीं । पुरुर्यदुश्च भगिनीमाश्रमे पर्य्यधावतां ।
नागयक्षमनुष्याणां गन्धर्व्वमृगपक्षिणां । शैलद्रुमवनौकानामासीत्तत्र समागमः ।
नानापुरुषदेश्यानामीश्वरैश्च समाकुलं । ऋषिभिर्ब्रह्मकल्पैश्च समन्तादावृतं वनं ।
निर्द्दिश्यमानेषु तु सा वरेषु वरवर्णिनी । वरानुत्क्रम्य सर्व्वांस्तान् वरं वृतवती वनं । ४०३०
अवतीर्य्य रथात् कन्या नमस्कृत्य च बन्धुषु । उपगम्य वनं पुण्यं तपस्तेपे ययातिजा ।
उपवासैश्च विविधैर्द्दीक्षाभिर्नियमैस्तथा । आत्मनो लघुतां कृत्वा बभूव मृगचारिणी ।
वैदूर्य्याङ्कुरकल्पानि मृदूनि हरितानि च । चरन्ती शष्पमुख्यानि तिक्तानि मधुराणि च ।
स्रवन्तीनाञ्च पुण्यानां सुरसानि शुचीनि च । पिबन्ती वारिमुख्यानि शीतानि विमलानि च ।
वनेषु मृगराजेषु व्याघ्रविप्रोषितेषु च । दावाग्निविप्रयुक्तेषु शून्येषु गहनेषु च । ४०३५

चरन्ती हरिणैः सार्द्धं मृगीव वनचारिणी । चचार विपुलं धर्मं ब्रह्मचर्य्येण संवृतं ।
ययातिरपि पूर्व्वेषां राज्ञां वृत्तमनुष्ठितः । बहुवर्षसहस्रायुर्युयुजे कालधर्म्मणा ।
पुरुर्यदुश्च द्वौ वंशौ वर्द्धमानौ नरोत्तमौ । ताभ्यां प्रतिष्ठितो लोकः परलोके च नाहुषः ।
महीपते नरपतिर्ययातिः स्वर्गमास्थितः । महर्षिकल्पो नृपतिः स्वर्गाग्र्यफलभुग्विभुः ।
बहुवर्षसहस्राख्ये काले बहुगुणे गते । राजर्षिषु निषण्णेषु महीयःसु महर्षिषु । ४०४०
अवमेने नरान् सर्व्वान् देवानृषिगणांस्तथा । ययातिर्मूढविज्ञानो विस्मयाविष्टचेतनः ।
ततस्तं बुबुधे देवः शक्रो बलनिसूदनः । ते च राजर्षयः सर्व्वे धिग्धिगित्येवमब्रुवन् ।
विचारश्च समुत्पन्नो निरीक्ष्य नहुषात्मजं । को न्वयं कस्य वा राज्ञः कथं वा स्वर्गमागतः ।
कर्म्मणा केन सिद्धोऽयं क्व वाऽनेन तपश्चितं । कथं वा ज्ञायते स्वर्गे केन वा ज्ञायतेऽप्युत ।
एवं विचारयन्तस्ते राजानं स्वर्गवासिनः । दृष्ट्वा पप्रच्छुरन्योऽन्यं ययातिं नृपतिं प्रति । ४०४५
विमानपालाः शतशः स्वर्गद्वाराभिरक्षिणः । पृष्टा आसनपालाश्च न जानीमेत्यथाब्रुवन् ।
सर्व्वे ते ह्यावृतज्ञाना नाभ्यजानन्त तं नृपं । स मुहूर्त्तादथ नृपो हतौजाश्चाभवत्तदा ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि ययातिमोहे एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

॥ नारद उवाच ॥ अथ प्रचलितः स्थानादासनाच्च परिच्युतः । कम्पितेनैव मनसा धर्षितः शोकवह्निना ।
म्लानस्रग्भ्रष्टविज्ञानः प्रभ्रष्टमुकुटाङ्गदः । विघूर्णन् स्रस्तसर्व्वाङ्गः प्रभ्रष्टाभरणाम्बरः ।
अदृश्यमानस्तान् पश्यन्नपश्यंश्च पुनः पुनः । शून्यः शून्येन मनसा प्रतिपत्स्यन्महीतलं । ४०५०
किं मया मनसा ध्यातमशुभं धर्म्मदूषणं । येनाहं चलितः स्थानादिति राजा व्यचिन्तयत् ।
ते तु तत्रैव राजानः सिद्धाश्चाप्सरसस्तथा । अपश्यन्त निरालम्बं तं ययातिं परिच्युतं ।
अथैत्य पुरुषः कश्चित् क्षीणपुण्यनिपातकः । ययातिमब्रवीद्राजन् देवराजस्य शासनात् ।
अतीव मदमत्तस्त्वं न कञ्चिन्नावमन्यसे । मानेन भ्रष्टः स्वर्गस्ते नार्हस्त्वं पार्थिवात्मज ।
न च प्रज्ञायसे गच्छ पतस्वेति तमब्रवीत् । पतेयं सत्स्विति वचस्त्रिरुक्त्वा नहुषात्मजः । ४०५५
पतिष्यंश्चिन्तयामास गतिं गतिमतां वरः । एतस्मिन्नेव काले तु नैमिषे पार्थिवर्षभान् ।
चतुरोऽपश्यत नृपांस्तेषां मध्ये पपात ह । प्रतर्द्दनो वसुमनाः शिविरौशीनरोऽष्टकः ।
वाजपेयेन यज्ञेन तर्पयन्ति सुरेश्वरं । तेषामध्वरजं धूमं स्वर्गद्वारमुपस्थितं ।
ययातिरुपजिघ्रन् वै निपपात महीं प्रति । भूमौ स्वर्गेण सम्बद्धां नदीं धूममयीमिव ।
गङ्गां गामिव गच्छन्तीमालम्ब्य जगतीपतिः । श्रीमत्स्ववभृताग्र्येषु चतुर्षु प्रतिबन्धुषु । ४०६०
मध्ये निपतितो राजा लोकपालोपमेषु सः । चतुर्षु हुतकल्पेषु राजसिंहमहाग्निषु ।
पपात मध्ये राजर्षिर्ययातिः पुण्यसङ्क्षये । तमाहुः पार्थिवाः सर्व्वे दीप्यमानमिव श्रिया ।
को भवान् कस्य वा बन्धुर्देशस्य नगरस्य वा । यक्षो वाऽप्यथ वा देवो गन्धर्व्वो राक्षसोऽपि वा ।
न हि मानुषरूपोऽसि को वाऽर्थः काङ्क्ष्यते त्वया ।

॥ ययातिरुवाच ॥ ययातिरस्मि राजर्षिः क्षीणपुण्यश्च्युतो दिवः । पतेयं सत्स्विति ध्यायन् भवत्सु विनिपातितः । ४०६५
॥ राजान ऊचुः ॥ सत्यमेतद्भवतु ते काङ्क्षितं पुरुषर्षभ । सर्व्वेषां नः क्रतुफलं धर्म्मश्च प्रतिगृह्यतां ।
॥ ययातिरुवाच ॥ नाऽहं प्रतिग्रहधनो ब्राह्मणः क्षत्रियो ह्यहं । न च मे प्रवणा बुद्धिः परपुण्यविनाशने ।
॥ नारद उवाच ॥ एतस्मिन्नेव काले तु मृगचर्य्याक्रमागतां । माधवीं प्रेक्ष्य राजानस्तेऽभिवाद्येदमब्रुवन् ।
किमागमनकृत्यन्ते किं कुर्म्मः शासनं तव । आज्ञाप्या हि वयं सर्व्वे तव पुत्रास्तपोधने ।
तेषां तद्भाषितं श्रुत्वा माधवी परया मुदा । पितरं समुपागच्छत् ययातिं सा ववन्द च । ४०७०
स्पृष्ट्वा मूर्द्धनि तान् पुत्रांस्तापसी वाक्यमब्रवीत् । दौहित्रास्तव राजेन्द्र मम पुत्रा न ते पराः ।
इमे त्वां तारयिष्यन्ति दृष्टमेतत् पुरातने । अहं ते दुहिता राजन् माधवी मृगचारिणी ।
मयाऽप्युपचितो धर्म्मस्ततोऽर्द्धं प्रतिगृह्यतां । यस्माद्राजन् नराः सर्व्वे अपत्यफलभागिनः ।
तस्मादिच्छन्ति दौहित्रान् यथा त्वं वसुधाधिप । ततस्ते पार्थिवाः सर्व्वे शिरसा जननीं तदा ।
अभिवाद्य नमस्कृत्य मातामहमथाब्रुवन् । उच्चैरनुपमैः स्निग्धैः स्वरैरापूर्य्य मेदिनीं । ४०७५
मातामहं नृपतयस्तारयन्तो दिवश्च्युतं । अथ तस्मादुपगतो गालवोऽप्याह पार्थिवं ।
तपसो मेऽष्टभागेन स्वर्गमारोहतां भवान् ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि ययातिभ्रंशे विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥
॥ नारद उवाच ॥ प्रत्यभिज्ञातमात्रोऽथ सद्भिस्तैर्नरपुङ्गवः । समारुरोह नृपतिरस्पृशन् वसुधातलं ।
ययातिर्दिव्यसंस्थानो बभूव विगतज्वरः । दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ।
दिव्यगन्धगुणोपेतो न पृथ्वीमस्पृशत् पदा । ततो वसुमनाः पूर्व्वमुच्चैरुच्चारयन् वचः । ४०८०
ख्यातो दानपतिर्लोके व्याजहार नृपं तदा । प्राप्तवानस्मि यल्लोके सर्व्ववर्णेष्वगर्हया ।
तदप्यथ च दास्यामि तेन संयुज्यतां भवान् । यत् फलं दानशीलस्य क्षमाशीलस्य यत् फलं ।
यच्च मे फलमाधाने तेन संयुज्यतां भवान् । ततः प्रतर्द्दनोऽप्याह वाक्यं क्षत्रियपुङ्गवः ।
यथा धर्म्मरतिर्नित्यं नित्यं युद्धपरायणः । प्राप्तवानस्मि यल्लोके क्षात्रवंशोद्भवं यशः ।
वीरशब्दफलञ्चैव तेन संयुज्यतां भवान् । शिविरौशीनरो धीमानुवाच मधुरां गिरं । ४०८५
यथा बालेषु नारीषु वैहार्य्येषु तथैव च । सङ्गरेषु निपातेषु तथापद्व्यसनेषु च ।
अनृतं नोक्तपूर्व्वं मे तेन सत्येन खं व्रज । यथा प्राणांश्च राज्यञ्च राजन् कर्म्म सुखानि च ।
त्यजेयं न पुनः सत्यं तेन सत्येन खं व्रज । यथा सत्येन मे धर्म्मो यथा सत्येन पावकः ।
प्रीतः शतक्रतुश्चैव तेन सत्येन खं व्रज । अष्टकस्त्वथ राजर्षिः कौशिको माधवीसुतः ।
अनेकशतयज्वानं नाहुषं प्राप्य धर्म्मवित् । शतशः पुण्डरीका मे गोसवाश्चरिताः प्रभो । ४०९०
क्रतवो वाजपेयाश्च तेषां फलमवाप्नुहि । न मे रत्नानि न धनं न तथाऽन्ये परिच्छदाः ।
क्रतुष्वनुपयुक्तानि तेन सत्येन खं व्रज । यथा यथा हि जल्पन्ति दौहित्रास्तं नराधिपं ।
तथा तथा वसुमतीं त्यक्त्वा राजा दिवं ययौ । एवं सर्व्वे समस्तास्ते राजानः सुकृतैस्तदा ।
ययातिं स्वर्गतो भ्रष्टं तारयामासुरञ्जसा । दौहित्राः स्वेन धर्म्मेण यज्ञदानकृतेन वै ।

चतुर्षु राजवंशेषु सम्भूताः कुलवर्द्धनाः । मातामहं महाप्राज्ञं दिवमारोपयन्ति ते । ४०९५

॥ राजान ऊचुः ॥ राजधर्म्मगुणोपेताः सर्व्वधर्म्मगुणान्विताः । दौहित्रास्ते वयं राजन् दिवमारोह पार्थिव ।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि ययातिस्वर्गारोहणे एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

॥ नारद उवाच ॥ सद्भिरारोपितः स्वर्गं पार्थिवैर्भूरिदक्षिणैः । अभ्यनुज्ञाय दौहित्रान् ययातिर्दिवमास्थितः ।

अभिवृष्टश्च वर्षेण नानापुष्पसुगन्धिना । परिष्वक्तश्च पुण्येन वायुना पुण्यगन्धिना ।

अचलं स्थानमासाद्य दौहित्रफलनिर्ज्जितं । कर्म्मभिः स्वैरुपचितो जज्वाल परया श्रिया ।

उपगीतोपनृत्तश्च गन्धर्व्वाप्सरसां गणैः । प्रीत्या प्रतिगृहीतश्च स्वर्गे दुन्दुभिनिस्वनैः । ४१००

अभिष्टुतश्च विविधैर्देवराजर्षिचारणैः । अर्च्चितश्चोत्तमार्घेण दैवतैरभिनन्दितः ।

प्राप्तः स्वर्गफलञ्चैव तमुवाच पितामहः । निर्वृतं शान्तमनसं वचोभिस्तर्पयन्निव ।

चतुष्पादस्त्वया धर्म्मश्चितो लोक्येन कर्म्मणा । अक्षयस्तव लोकोऽयं कीर्त्तिश्चैवाक्षया दिवि ।

पुनस्त्वयैव राजर्षे सुकृतेन विघातितं । आवृतं तमसा चेतः सर्व्वेषां स्वर्गवासिनां ।

येन त्वां नाभिजानन्ति ततोऽज्ञातोऽसि पातितः । प्रीत्यैव चासि दौहित्रैस्तारितस्त्वमिहागतः । ४१०५

स्थानञ्च प्रतिपन्नोऽसि कर्म्मणा स्वेन निर्ज्जितं । अचलं शाश्वतं पुण्यमुत्तमं ध्रुवमव्ययं ।

॥ ययातिरुवाच ॥ भगवन् संशयो मेऽस्ति कश्चित्तं छेत्तुमर्हसि । न ह्यन्यमहमर्हामि प्रष्टुं लोकपितामह ।

बहुवर्षसहस्रान्तं प्रजापालनवर्द्धितं । अनेकक्रतुदानौघैरर्ज्जितं मे महत्फलं ।

कथं तदल्पकालेन क्षीणं येनास्मि पातितः । भगवन् वेत्थ लोकांश्च शाश्वतान् मम निर्ज्जितान् ।

कथं नु मम तत् सर्व्वं विप्रनष्टं महाद्युते । ४११०

॥ पितामह उवाच ॥ बहुवर्षसहस्रान्तं प्रजापालनवर्द्धितं । अनेकक्रतुदानौघैर्यत्त्वयोपार्ज्जितं फलं ।

तदनेनैव दोषेण क्षीणं येनासि पातितः । अभिमानेन राजेन्द्र धिक्कृतः स्वर्गवासिभिः ।

नायं मानेन राजर्षे न बलेन न हिंसया । न शाठ्येन न मायाभिर्लोको भवति शाश्वतः ।

नावमान्यास्त्वया राजन्नवरोत्कृष्टमध्यमाः । न हि मानप्रदग्धानां कश्चिदस्ति शमः क्वचित् ।

पतनारोहणमिदं कथयिष्यन्ति ये नराः । विषमाण्यपि ते प्राप्तास्तरिष्यन्ति न संशयः । ४११५

॥ नारद उवाच ॥ एष दोषोऽभिमानेन पुरा प्राप्तो ययातिना । निर्ब्बन्धतोऽतिमात्रञ्च गालवेन महीपते ।

श्रोतव्यं हितकामानां सुहृदां हितमिच्छता । न कर्त्तव्यो हि निर्ब्बन्धो निर्ब्बन्धो हि क्षयोदयः ।

तस्मात्त्वमपि गान्धारे मानं क्रोधञ्च वर्ज्जय । सन्धत्स्व पाण्डवैर्वीर संरम्भं त्यज पार्थिव ।

ददाति यत् पार्थिव यत् करोति यद्वा तपस्तप्यति यज्जुहोति । न तस्य नाशोऽस्ति न चापकर्षो नान्यस्तदश्नाति स एव कर्त्ता ।

इदं महाख्यानमनुत्तमं हितं बहुश्रुतानां गतरोषरागिणां । समीक्ष्य लोके बहुधा प्रधारितं त्रिवर्गदृष्टिः पृथिवीमुपाश्नुते । ४१२०

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि ययातिस्वर्गारोहणे द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

॥ धृतराष्ट्र उवाच ॥ भगवन्नेवमेवैतत् यथा वदसि नारद। इच्छामि चाहमप्येवं न त्वीशो भगवन्नहं।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा ततः कृष्णमभ्यभाषत कौरवः। स्वर्ग्यं लोक्यञ्च मामात्थ धर्म्म्यं न्याय्यञ्च केशव।
न त्वहं स्ववशस्तात क्रियमाणं न मे प्रियं। अङ्ग दुर्य्योधनं कृष्ण मन्दं शास्त्रातिगं मम।
अनुनेतुं महाबाहो यतस्व पुरुषोत्तम। न शृणोति महाबाहो वचनं साधु भाषितं।
गान्धार्य्याश्च हृषीकेश विदुरस्य च धीमतः। अन्येषाञ्चैव सुहृदां भीष्मादीनां हितैषिणां। ४१२५
स त्वं पापमतिं क्रूरं पापचित्तमचेतनं। अनुशाधि दुरात्मानं स्वयं दुर्य्योधनं नृपं।
सुहृत्कार्य्यन्तु सुमहत् कृतन्ते स्याज्जनार्द्दन।
॥ वैशम्पायन उवाच ॥ ततोऽभ्यावृत्य वार्ष्णेयो दुर्य्योधनममर्षणं। अब्रवीन्मधुरां वाचं सर्व्वधर्म्मार्थतत्त्ववित्।
दुर्य्योधन निबोधेदं मद्वाक्यं कुरुसत्तम। शमार्थं ते विशेषेण सानुबन्धस्य भारत।
महाप्राज्ञकुले जातः साध्वेतत् कर्त्तुमर्हसि। श्रुतवृत्तोपसम्पन्नः सर्व्वैः समुदितो गुणैः। ४१३०
दौष्कुलेया दुरात्मानो नृशंसा निरपत्रपाः। त एतदीदृशं कुर्य्युर्यथा त्वं तात मन्यसे।
धर्म्मार्थयुक्ता लोकेऽस्मिन् प्रवृत्तिर्लक्ष्यते सतां। असतां विपरीता तु लक्ष्यते भरतर्षभ।
विपरीता त्वियं वृत्तिरसकृल्लक्ष्यते त्वयि। अधर्म्मश्चानुबन्धोऽत्र घोरः प्राणहरो महान्।
अनिष्टश्चानिमित्तश्च न च शक्यश्च भारत। तमनर्थं परिहरन्नात्मश्रेयः करिष्यसि।
भ्रातॄणामथ भृत्यानां मित्राणाञ्च परन्तप। अधर्म्यादयशस्याच्च कर्म्मणस्त्वं प्रमोक्ष्यसे। ४१३५
प्राज्ञैः शूरैर्महोत्साहैरात्मवद्भिर्बहुश्रुतैः। सन्धत्स्व पुरुषव्याघ्र पाण्डवैर्भरतर्षभ।
तद्धितञ्च प्रियञ्चैव धृतराष्ट्रस्य धीमतः। पितामहस्य द्रोणस्य विदुरस्य महामतेः।
कृपस्य सोमदत्तस्य वाह्लीकस्य च धीमतः। अश्वत्थाम्नो विकर्णस्य सञ्जयस्य विविंशतेः।
ज्ञातीनाञ्चैव भूयिष्ठं मित्राणाञ्च परन्तप। शमे शर्म्म भवेत्तात सर्व्वस्य जगतस्तथा।
ह्रीमानसि कुले जातः श्रुतवाननृशंसवान्। तिष्ठ तात पितुः शास्त्रे मातुश्च भरतर्षभ। ४१४०
एतत् श्रेयो हि मन्यन्ते पिता यच्छास्ति भारत। उत्तमापद्गतः सर्व्वः पितुः स्मरति शासनं।
रोचते ते पितुस्तात पाण्डवैः सह सङ्गमः। सामात्यस्य कुरुश्रेष्ठ तत्तुभ्यं तात रोचतां।
श्रुत्वा यः सुहृदां शास्त्रं मर्त्यो न प्रतिपद्यते। विपाकान्ते दहत्येनं किम्पाकमिव भक्षितं।
यस्तु निःश्रेयसं वाक्यं मोहान्न प्रतिपद्यते। स दीर्घसूत्रो हीनार्थः पश्चात्तापेन युज्यते।
यस्तु निःश्रेयसं श्रुत्वा प्राक् तदेवाभिपद्यते। आत्मनो मतमुत्सृज्य स लोके सुखमेधते। ४१४५
योऽर्थकामस्य वचनं प्रातिकूल्यं न मृष्यते। शृणोति प्रतिकूलानि द्विषतां वशमेति सः।
स तां मतमतिक्रम्य योऽसतां वर्त्तते मते। शोचन्ते व्यसने तस्य सुहृदो न चिरादिव।
मुख्यानमात्यानुत्सृज्य यो निहीनान्निषेवते। स घोरामापदं प्राप्य नोत्तारमधिगच्छति।
योऽसत्सेवी वृथाचारो न श्रोता सुहृदां सतां। परान् वृणीते स्वान् द्वेष्टि तं गौस्त्यजति भारत।
स त्वं विरुध्य तैर्व्वीरैरन्येभ्यस्त्राणमिच्छसि। अशिष्टेभ्योऽसमर्थेभ्यो मूढेभ्यो भरतर्षभ। ४१५०

को हि शक्रसमान् ज्ञातीनतिक्रम्य महारथान्। अन्येभ्यस्त्राणमाशंसेत्त्वदन्यो भुवि मानवः।
जन्मप्रभृति कौन्तेया नित्यं विनिकृता त्वया। न च ते जातु कुप्यन्ति धर्म्मात्मानो हि पाण्डवाः।
मिथ्योपचरितास्तात जन्मप्रभृति बान्धवाः। त्वयि सम्यङ्महाबाहो प्रतिपन्ना यशस्विनः।
त्वयाऽपि प्रतिपत्तव्यं तथैव भरतर्षभ। स्वेषु बन्धुषु मुख्येषु मा मन्युवशमन्वगाः।
त्रिवर्गयुक्तः प्राज्ञानामारम्भो भरतर्षभ। धर्म्मार्थावनुरुध्यन्ते त्रिवर्गासम्भवे नराः। ४१५५
पृथक् च विनिविष्टानां धर्म्मं धीरोऽनुरुध्यते। मध्यमोऽर्थं कलिं बालः काममेवानुरुध्यते।
इन्द्रियैः प्राकृतो लोभाद्धर्म्मं विप्रजहाति यः। कामार्थावनुपायेन लिप्समानो विनश्यति।
कामार्थौ लिप्समानस्तु धर्म्ममेवादितश्चरेत्। न हि धर्म्मादपैत्यर्थः कामो वाऽपि कदाचन।
उपायं धर्म्ममेवाहुस्त्रिवर्गस्य विशाम्पते। लिप्समानो हि तेनाशु कक्षेऽग्निरिव वर्द्धते।
स त्वं तातानुपायेन लिप्ससे भरतर्षभ। आधिराज्यं महद्दीप्तं प्रथितं सर्व्वराजसु। ४१६०
आत्मानं तक्षति ह्येष वनं परशुना यथा। यः सम्यग्वर्त्तमानेषु मिथ्या राजन् प्रवर्त्तते।
न तस्य हि मतिं छिन्द्यात् यस्य नेच्छेत् पराभवं। अविच्छिन्नमतेरस्य कल्याणे धीयते मतिः।
आत्मवान्नावमन्येत त्रिषु लोकेषु भारत। अप्यन्यं प्राकृतं किञ्चित् किमु तान् पाण्डवर्षभान्।
अमर्षवशमापन्नो न किञ्चिद्बुध्यते जनः। छिद्यते ह्याततं सर्व्वं प्रमाणं पश्य भारत।
श्रेयस्ते दुर्ज्जनात्तात पाण्डवैः सह सङ्गतं। तैर्हि सम्प्रीयमाणस्त्वं सर्व्वान् कामानवाप्स्यसि। ४१६५
पाण्डवैर्निर्ज्जितां भूमिं भुञ्जानो राजसत्तम। पाण्डवान् पृष्ठतः कृत्वा त्राणमाशंससेऽन्यतः।
दुःशासने दुर्व्विषहे कर्णे चापि ससौबले। एतेष्वैश्वर्य्यमाधाय भूतिमिच्छसि भारत।
न चैते तव पर्य्याप्ता ज्ञाने धर्म्मार्थयोस्तथा। विक्रमे चाप्यपर्य्याप्ताः पाण्डवान् प्रति भारत।
न हीमे सर्व्वराजानः पर्य्याप्ताः सहितास्तथा। क्रुद्धस्य भीमसेनस्य प्रेक्षितुं मुखमाहवे।
इदं सन्निहितं तात समग्रं पार्थिवं बलं। अयं भीष्मस्तथा द्रोणः कर्णश्चायं तथा कृपः। ४१७०
भूरिश्रवाः सौमदत्तिरश्वत्थामा जयद्रथः। अशक्ताः सर्व्व एवैते प्रतियोद्धुं धनञ्जयं।
अजेयो ह्यर्ज्जुनः क्रुद्धः सर्व्वैरपि सुरासुरैः। मानुषैरपि गन्धर्व्वैर्मा युद्धे चेत आधिथाः।
दृश्यतां वा पुमान् कश्चित् समग्रे पार्थिवे बले। योऽर्ज्जुनं समरे प्राप्य स्वस्तिमानाव्रजेत् गृहान्।
किन्ते जनक्षयेणेह कृतेन भरतर्षभ। यस्मिन् जिते जितं ते स्यात् पुमानेकः स दृश्यतां।
यः स देवान् सगन्धर्व्वान् सयक्षासुरपन्नगान्। अजयत् खाण्डवप्रस्थे कस्तं युध्येत पाण्डवं। ४१७५
तथा विराटनगरे श्रूयते महदद्भुतं। एकस्य च बहूनाञ्च पर्य्याप्तं तन्निदर्शनं।
युद्धे येन महादेवः साक्षात् सन्तोषितः शिवः। तमजेयमनाधृष्यं विजेतुं जिष्णुमच्युतं।
आशंससीह समरे वीरमर्ज्जुनमूर्ज्जितं। मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमर्हति।
युद्धे प्रतीपमायान्तमपि साक्षात् पुरन्दरः। बाहुभ्यामुद्धरेत् भूमिं दहेत् क्रुद्ध इमाः प्रजाः।
पातयेत् त्रिदिवाद्देवान् योऽर्ज्जुनं समरे जयेत्। पश्य पुत्रांस्तथा भ्रातॄन् ज्ञातीन् सम्बन्धिनस्तथा। ४१८०

त्वत्कृते न विनश्येयुरिमे भरतसत्तमाः। अस्तु शेषं कौरवाणां मा पराभूदिदं कुलं।
कुलघ्न इति नोच्येथा नष्टकीर्त्तिर्नराधिप। त्वामेव स्थापयिष्यन्ति यौवराज्ये महारथाः।
महाराज्येऽपि पितरं धृतराष्ट्रं जनेश्वरं। मा तात श्रियमायान्तीमवमंस्थाः समुद्यतां।
अर्द्धं प्रदाय पार्थेभ्यो महतीं श्रियमाप्नुहि। पाण्डवैः संशमं कृत्वा कृत्वा च सुहृदां वचः।
संप्रीयमाणो मित्रैश्च चिरं भद्राण्यवाप्स्यसि।  ४१८५

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवद्वाक्ये त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

॥ वैशम्पायन उवाच ॥ ततः शान्तनवो भीष्मो दुर्य्योधनममर्षणं। केशवस्य वचः श्रुत्वा प्रोवाच भरतर्षभ।
कृष्णेन वाक्यमुक्तोऽसि सुहृदां शममिच्छता। अन्वपद्यस्व तत्तात मा मन्युवशमन्वगाः।
अकृत्वा वचनं तात केशवस्य महात्मनः। श्रेयो न जातु न सुखं न कल्याणमवाप्स्यसि।
धर्म्यमर्थ्यं महाबाहुराह त्वां तात केशवः। तदर्थमभिपद्यस्व मा राजन्नीनशः प्रजाः।
ज्वलितां त्वमिमां लक्ष्मीं भारतीं सर्व्वराजसु। जीवतो धृतराष्ट्रस्य दौरात्म्यात् भ्रंशयिष्यसि।  ४१९०
आत्मानञ्च सहामात्यं सपुत्रभ्रातृबान्धवं। अहमित्यनया बुद्ध्या जीवितात् भ्रंशयिष्यसि।
अतिक्रामन् केशवस्य तथ्यं वचनमर्थवत्। पितुश्च भरतश्रेष्ठ विदुरस्य च धीमतः।
मा कुलघ्नः कुपुरुषो दुर्म्मतिः कापथं गमः। मातरं पितरञ्चैव मा मज्जीः शोकसागरे।
अथ द्रोणोऽब्रवीत्तत्र दुर्य्योधनमिदं वचः। अमर्षवशमापन्नं निश्वसन्तं पुनः पुनः।
धर्म्मार्थयुक्तं वचनमाह त्वां तात केशवः। तथा भीष्मः शान्तनवस्तज्जुषस्व नराधिप।  ४१९५
प्राज्ञौ मेधाविनौ दान्तावर्थकामौ बहुश्रुतौ। आहतुस्त्वां हितं वाक्यं तज्जुषस्व नराधिप।
अनुतिष्ठ महाप्राज्ञ कृष्णभीष्मौ यदूचतुः। माधवं बुद्धिमोहेन माऽवमंस्थाः परन्तप।
ये त्वां प्रोत्साहयन्त्येते नैते कृत्याय कर्हिचित्। वैरं परेषां ग्रीवायां प्रतिमोक्ष्यन्ति संयुगे।
माजीघनः प्रजाः सर्व्वाः पुत्रान् भ्रातॄंस्तथैव च। वासुदेवार्ज्जुनौ यत्र विद्ध्यजेयं बलं हि तत्।
एतच्चैव मतं सत्यं सुहृदोः कृष्णभीष्मयोः। यदि नादास्यसे तात पश्चात्तप्स्यसि भारत।  ४२००
यथोक्तं जामदग्न्येन भूयानेष ततोऽर्ज्जुनः। कृष्णो हि देवकीपुत्रो देवैरपि सुदुःसहः।
किन्ते सुखप्रियेणेह प्रोक्तेन भरतर्षभ। एतत्ते सर्व्वमाख्यातं यथेच्छसि तथा कुरु।
न हि त्वामुत्सहे वक्तुं भूयो भरतसत्तम।

॥ वैशम्पायन उवाच ॥ तस्मिन् वाक्यान्तरे वाक्यं क्षत्ताऽपि विदुरोऽब्रवीत्। दुर्य्योधनमभिप्रेक्ष्य धार्त्तराष्ट्रममर्षणं।
दुर्य्योधन न शोचामि त्वामहं भरतर्षभ। इमौ तु वृद्धौ शोचामि गान्धारीं पितरञ्च ते।  ४२०५
यावनाथौ चरिष्येते त्वया नाथेन दुर्हृदा। हतमित्रौ हतामात्यौ लूनपक्षाविवाण्डजौ।
भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमां। कुलघ्नमीदृशं पापं जनयित्वा कुपूरुषं।
अथ दुर्य्योधनं राजा धृतराष्ट्रोऽभ्यभाषत। आसीनं भ्रातृभिः सार्द्धं राजभिः परिवारितं।
दुर्य्योधन निबोधेदं शौरिणोक्तं महात्मना। आदत्स्व शिवमत्यन्तं योगक्षेमवदव्ययं।

अनेन हि सहायेन कृष्णेनाक्लिष्टकर्म्मणा। इष्टान् सर्व्वानभिप्रायान् प्राप्स्यामः सर्व्वराजसु। ४२१०
सुसंहितः केशवेन तात गच्छ युधिष्ठिरं। चर स्वस्त्ययनं कृत्स्नं भरतानामनामयं।
वासुदेवेन तीर्थेन तात गच्छस्व संशमं। कालप्राप्तमिदं मन्ये मा त्वं दुर्य्योधनातिगाः।
शमं चेत् याचमानं त्वं प्रत्याख्यास्यसि केशवं। त्वदर्थमभिजल्पन्तं न तवास्त्यपराभवः।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि धृतराष्ट्रवाक्ये चतुर्विंशत्यधिकशततमोऽध्यायः॥ १२४ ॥

॥ वैशम्पायन उवाच ॥ धृतराष्ट्रवचः श्रुत्वा भीष्मद्रोणौ समव्यथौ। दुर्य्योधनमिदं वाक्यमूचतुः शासनातिगं।
यावत् कृष्णावसन्नद्धौ यावत्तिष्ठति गाण्डिवं। यावद्धौम्यो न मेधाग्नौ जुहोतीह द्विषद्बलं। ४२१५
यावन्न प्रेक्षते क्रुद्धः सेनां तव युधिष्ठिरः। ह्रीनिषेवो महेष्वासस्तावच्छाम्यतु वैशसं।
यावन्न दृश्यते पार्थः स्वेष्वनीकेष्ववस्थितः। भीमसेनो महेष्वासस्तावच्छाम्यतु वैशसं।
यावन्न चरते मार्गान् पृतनामभिहर्षयन्। भीमसेनो गदापाणिस्तावच्छाम्यतु पाण्डवैः।
यावन्न शातयत्याजौ शिरांसि गजयोधिनां। गदया वीरघातिन्या फलानीव वनस्पतेः।
कालेन परिपक्वानि तावच्छाम्यतु वैशसं। नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः। ४२२०
विराटश्च शिखण्डी च शैशुपालिश्च दंशिताः। यावन्न प्रविशन्त्येते नक्रा इव महार्णवं।
कृतास्त्राः क्षिप्रमस्यन्तस्तावच्छाम्यतु वैशसं। यावन्न सुकुमारेषु शरीरेषु महीक्षितां।
गार्द्धपत्राः पतन्त्युग्रास्तावच्छाम्यतु वैशसं। चन्दनागुरुदिग्धेषु हारनिष्कधरेषु च।
नोरःसु यावत् योधानां महेष्वासैर्महेषवः। कृतास्त्रैः क्षिप्रमस्यद्भिर्दूरपातिभिरायसाः।
अभिलक्ष्यैर्निपात्यन्ते तावच्छाम्यतु वैशसं। अभिवादयमानं त्वां शिरसा राजकुञ्जरः। ४२२५
पाणिभ्यां प्रतिगृह्णातु धर्म्मराजो युधिष्ठिरः। ध्वजाङ्कुशपताकाङ्कं दक्षिणं ते सुदक्षिणः।
स्कन्धे निक्षिपतां बाहुं शान्तये भरतर्षभ। रत्नौषधिसमेतेन रत्नाङ्गुलितलेन च।
उपविष्टस्य पृष्ठन्ते पाणिना परिमार्ज्जतु। शालस्कन्धो महाबाहुस्त्वां स्वजानो वृकोदरः।
साम्नाऽभिवदतां चापि शान्तये भरतर्षभ। अर्ज्जुनेन यमाभ्याञ्च त्रिभिस्तैरभिवादितः।
मूर्द्धि तान् समुपाघ्राय प्रेम्णाऽभिवद पार्थिव। दृष्ट्वा त्वां पाण्डवैर्वीरैर्भ्रातृभिः सह सङ्गतं। ४२३०
यावदानन्दजाश्रूणि प्रमुञ्चन्तु नराधिपाः। घुष्यतां राजधानीषु सर्व्वसम्पन्महीक्षितां।
पृथिवी भ्रातृभावेन भुज्यतां विज्वरो भव।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भीष्मद्रोणवाक्ये पञ्चविंशत्यधिकशततमोऽध्यायः॥ १२५ ॥

॥ वैशम्पायन उवाच ॥ श्रुत्वा दुर्य्योधनो वाक्यमप्रियं कुरुसंसदि। प्रत्युवाच महाबाहुं वासुदेवं यशस्विनं।
प्रसमीक्ष्य भवानेतद्वक्तुमर्हति केशव। मामेव हि विशेषेण विभाष्य परिगर्हसे।
भक्तिवादेन पार्थानामकस्मान्मधुसूदन। भवान् गर्हयते नित्यं किं समीक्ष्य बलाबलं। ४२३५
भवान् क्षत्ता च राजा वाऽप्याचार्य्यो वा पितामहः। मामेव परिगर्हन्ते नान्यं कञ्चन पार्थिवं।
न चाहं लक्षये कञ्चिद्व्यभिचारमिहात्मनः। अथ सर्व्वे भवन्तो मां विद्विषन्ति सराजकाः।

न चाहं कञ्चिदत्यर्थमपराधमरिन्दम। विचिन्तयन् प्रपश्यामि सुसूक्ष्ममपि केशव।
प्रियाभ्युपगते द्यूते पाण्डवा मधुसूदन। जिताः शकुनिना राज्यं तत्र किं मम दुष्कृतं।
यत् पुनर्द्रविणं किञ्चित्तत्राजीयन्त पाण्डवाः। तेभ्य एवाभ्यनुज्ञातं तत्तदा मधुसूदन। ४२४०
अपराधो न चास्माकं यत्ते ह्यक्षैः पराजिताः। अजेया जयतां श्रेष्ठ पार्थाः प्रव्रजिता वनं।
केन वाऽप्यपवादेन विरुध्यन्त्यरिभिः सह। अशक्ताः पाण्डवाः कृष्ण प्रहृष्टाः प्रत्यमित्रवत्।
किमस्माभिः कृतं तेषां कस्मिन् वा पुनरागसि। धार्त्तराष्ट्रान् जिघांसन्ति पाण्डवाः सृञ्जयैः सह।
न चापि वयमुग्रेण कर्म्मणा वचनेन वा। प्रभ्रष्टाः प्रणमामेह भयादपि शतक्रतुं।
न च तं कृष्ण पश्यामि क्षत्रधर्म्ममनुष्ठितं। उत्सहेत युधा जेतुं यो नः शत्रुनिवर्हण। ४२४५
न हि भीष्मकृपद्रोणाः सकर्णा मधुसूदन। देवैरपि युधा जेतुं शक्याः किमुत पाण्डवैः।
स्वधर्म्ममनुपश्यन्तो यदि माधव संयुगे। अस्त्रेण निधनं काले प्राप्स्यामः स्वर्गमेव तत्।
मुख्यश्चैवैष नो धर्म्मः क्षत्रियाणां जनार्द्दन। यच्छयीमहि सङ्ग्रामे शरतल्पगता वयं।
ते वयं वीरशयनम्प्राप्स्यामो यदि संयुगे। अप्रणम्यैव शत्रूणां न नस्तप्स्यति माधव।
कश्च जातु कुले जातः क्षत्रधर्म्मेण वर्त्तयन्। भयाद्वृत्तिं समीक्ष्यैव प्रणमेदिह कर्हिचित्। ४२५०
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषं। अप्यपर्व्वणि भज्येत न नमेदिह कर्हिचित्।
इति मातङ्गवचनं परीप्सन्ति हितेप्सवः। धर्म्माय चैव प्रणमेद्ब्राह्मणेभ्यश्च मद्विधः।
अचिन्तयन् किञ्चिदन्यं यावज्जीवन्तथाचरेत्। एष धर्म्मः क्षत्रियाणां मतमेतच्च मे सदा।
राज्यांशश्चाभ्यनुज्ञातो यो मे पित्रा पुराऽभवत्। न स लभ्यः पुनर्जातु मयि जीवति केशव।
यावच्च राजा ध्रियते धृतराष्ट्रो जनार्द्दन। न्यस्तशस्त्रा वयं ते वाऽप्युपजीवाम माधव। ४२५५
अप्रदेयं पुरा दत्तं राज्यं परवतो मम। अज्ञानाद्वा भयाद्वापि मयि बाले जनार्द्दन।
न तदद्य पुनर्लभ्यं पाण्डवैर्वृष्णिनन्दन। ध्रियमाणे महाबाहो मयि सम्प्रति केशव।
यावद्धि तीक्ष्णया सूच्या विध्येदग्रेण केशव। तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान् प्रति।
इतिश्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि दुर्य्योधनवाक्ये षड्विंशत्यधिकशततमोऽध्यायः॥ १२६ ॥

॥ वैशम्पायन उवाच॥ ततः प्रहस्य दाशार्हः क्रोधपर्य्याकुलेक्षणः। दुर्य्योधनमिदं वाक्यमब्रवीत् कुरुसंसदि।
लप्स्यसे वीरशयनं काममेतदवाप्स्यसि। स्थिरो भव सहामात्यो विमर्द्दो भविता महान्। ४२६०
यच्चैवं मन्यसे मूढ न मे कश्चिद्व्यतिक्रमः। पाण्डवेष्विति तत् सर्व्वं निबोधत नराधिपाः।
श्रिया सन्तप्यमानेन पाण्डवानां महात्मनां। त्वया दुर्म्मन्त्रितं द्यूतं सौबलेन च भारत।
कथञ्च ज्ञातयस्तात श्रेयांसः साधु सम्मताः। अथान्याय्यमुपस्थातुं जिह्मेनाजिह्मचारिणः।
अक्षद्यूतं महाप्राज्ञ सतां मतिविनाशनं। असतां तत्र जायन्ते भेदाश्च व्यसनानि च।
तदिदं व्यसनं घोरं त्वया द्यूतमुखं कृतं। असमीक्ष्य सदाचारैः सार्द्धं पापानुबन्धनैः। ४२६५
कश्चान्यो भ्रातृभार्य्यां वै विप्रकर्त्तुं तथाऽर्हति। आनीय च सभां व्यक्तं यथोक्ता द्रौपदी त्वया।

कुलीना शीलसम्पन्ना प्राणेभ्योऽपि गरीयसी। महिषी पाण्डुपुत्राणां तथा विनिकृता त्वया।
जानन्ति कुरवः सर्व्वे यथोक्ताः कुरुसंसदि। दुःशासनेन कौन्तेयाः प्रव्रजन्तः परन्तपाः।
सम्यग्वृत्तेष्वलुब्धेषु सततं धर्म्मचारिषु। स्वेषु बन्धुषु कः साधुश्चरेदेवमसाम्प्रतं।
नृशंसानामनार्य्याणां पुरुषाणाञ्च भाषणं। कर्णदुःशासनाभ्याञ्च त्वया च बहुशः कृतं। ४१७०
सह मात्रा प्रदग्धुन्तान् बालकान् वारणावते। आस्थितः परमं यत्नं न समृद्धञ्च तत्तव।
ऊषुश्च सुचिरं कालं प्रच्छन्नाः पाण्डवास्तदा। मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने।
विषेण सर्पबन्धैश्च यतिताः पाण्डवास्त्वया। सर्व्वोपायैर्विनाशाय न समृद्धञ्च तत्तव।
एवंबुद्धिः पाण्डवेषु मिथ्यावृत्तिः सदा भवान्। कथन्ते नापराधोऽस्ति पाण्डवेषु महात्मसु।
यच्चैभ्यो याचमानेभ्यः पित्र्यमंशं न दित्ससि। तच्च पाप प्रदातासि भ्रष्टैश्वर्य्यो निपातितः। ४१७५
कृत्वा बहून्यकार्य्याणि पाण्डवेषु नृशंसवत्। मिथ्यावृत्तिरनार्य्यः सन्नद्य विप्रतिपद्यसे।
मातापितृभ्यां भीष्मेण द्रोणेन विदुरेण च। शाम्येति मुहुरुक्तोऽसि न च शाम्यसि पार्थिव।
शमे हि सुमहालाभस्तव पार्थस्य चोभयोः। न च रोचयसे राजन् किमन्यत् बुद्धिलाघवात्।
न शर्म्म प्राप्स्यसे राजन्नुत्क्रम्य सुहृदां वचः। अधर्म्यमयशस्यञ्च क्रियते पार्थिव त्वया।
॥ वैशम्पायन उवाच ॥ एवं ब्रुवति दाशार्हे दुर्य्योधनममर्षणं। दुःशासन इदं वाक्यमब्रवीत् कुरुसंसदि। ४१८०
न चेत् सन्धास्यते राजन् स्वेन कामेन पाण्डवैः। बद्ध्वा किल त्वां दास्यन्ति कुन्तीपुत्राय कौरवाः।
वैकर्त्तनं त्वाञ्च माञ्च त्रीनेतान्मनुजर्षभ। पाण्डवेभ्यः प्रदास्यन्ति भीष्मो द्रोणः पिता च ते।
॥ वैशम्पायन उवाच ॥ भ्रातुरेतद्वचः श्रुत्वा धार्त्तराष्ट्रः सुयोधनः। क्रुद्धः प्रातिष्ठतोत्थाय महानाग इव श्वसन्।
विदुरं धृतराष्ट्रञ्च महाराजञ्च वाह्लिकं। कृपञ्च सोमदत्तञ्च भीष्मं द्रोणं जनार्द्दनं।
सर्व्वानेताननादृत्य दुर्म्मतिर्निरपत्रपः। अशिष्टवदमर्य्यादो मानी मान्यावमानिता। ४१८५
तं प्रस्थितमभिप्रेक्ष्य भ्रातरो मनुजर्षभं। अनुजग्मुः सहामात्या राजानश्चापि सर्व्वशः।
सभायामुत्थितं क्रुद्धं प्रस्थितं भ्रातृभिः सह। दुर्य्योधनमभिप्रेक्ष्य भीष्मः शान्तनवोऽब्रवीत्।
धर्म्मार्थावभिसंत्यज्य संरम्भं योऽनुमन्यते। हसन्ति व्यसने तस्य दुर्हृदो न चिरादिव।
दुरात्मा राजपुत्रोऽयं धार्त्तराष्ट्रोऽनुपायवित्। मिथ्याभिमानी राज्यस्य क्रोधलोभवशानुगः।
कालपक्वमिदं मन्ये सर्व्वक्षत्रं जनार्द्दन। सर्व्वे ह्यनुसृता मोहात् पार्थिवाः सह मन्त्रिभिः। ४१९०
भीष्मस्याथ वचः श्रुत्वा दाशार्हः पुष्करेक्षणः। भीष्मद्रोणमुखान् सर्व्वानभ्यभाषत वीर्य्यवान्।
सर्व्वेषां कुरुवृद्धानां महानयमतिक्रमः। प्रसह्य मन्दमैश्वर्य्ये न नियच्छत यन्नृपं।
तत्र कार्य्यमहं मन्ये कालप्राप्तमरिन्दमाः। क्रियमाणे भवेत् श्रेयस्तत्सर्व्वं शृणुतानघाः।
प्रत्यक्षमेतत् भवतां यद्वक्ष्यामि हिते वचः। भवतामानुकूल्येन यदि रोचेत भारताः।
भोजराजस्य वृद्धस्य दुराचारो ह्यनात्मवान्। जीवतः पितुरैश्वर्य्यं हृत्वा मृत्युवशङ्गतः। ४१९५
उग्रसेनसुतः कंसः परित्यक्तः स बान्धवैः। ज्ञातीनां हितकामेन मया शस्तो महामृधे।

आहुकः पुनरस्माभिर्ज्ञातिभिश्चापि सत्कृतः। उग्रसेनः कृतो राजा भोजराजन्यवर्द्धनः।
कंसमेकं परित्यज्य कुलार्थे सर्व्वयादवाः। सम्भूय सुखमेधन्ते भारतान्धकवृष्णयः।
अपि चाप्यवदद्राजन् परमेष्ठी प्रजापतिः। व्यूढे देवासुरे युद्धेऽभ्युद्यतेष्वायुधेषु च।
द्वैधीभूतेषु लोकेषु विनश्यत्सु च भारत। अब्रवीत् सृष्टिमान् देवो भगवान् लोकभावनः। ४२००
पराभविष्यन्त्यसुरा दैतेया दानवैः सह। आदित्या वसवो रुद्रा भविष्यन्ति दिवौकसः।
देवासुरमनुष्याश्च गन्धर्व्वोरगराक्षसाः। अस्मिन् युद्धे सुसंक्रुद्धा हनिष्यन्ति परस्परं।
इति मत्वाऽब्रवीद्धर्म्मं परमेष्ठी प्रजापतिः। वरुणाय प्रयच्छैतान् बद्ध्वा दैतेयदानवान्।
एवमुक्तस्ततो धर्म्मो नियोगात् परमेष्ठिनः। वरुणाय ददौ सर्व्वान् बद्ध्वा दैतेयदानवान्।
तान् बद्ध्वा धर्म्मपाशैश्च स्वैश्च पाशैर्जलेश्वरः। वरुणः सागरे यत्तो नित्यं रक्षति दानवान्। ४२०५
तथा दुर्य्योधनं कर्णं शकुनिञ्चापि सौबलं। बद्ध्वा दुःशासनं चापि पाण्डवेभ्यः प्रयच्छत।
त्यजेत् कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्।
राजन् दुर्य्योधनं बद्ध्वा ततः संशाम्य पाण्डवैः। त्वत्कृते न विनश्येयुः क्षत्रियाः क्षत्रियर्षभ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि श्रीकृष्णवाक्ये-सप्तत्रिंशत्यधिकशततमोऽध्यायः॥ १२७ ॥
॥ वैशम्पायन उवाच ॥ कृष्णस्य तु वचः श्रुत्वा धृतराष्ट्रो जनेश्वरः। विदुरं सर्व्वधर्म्मज्ञं त्वरमाणोऽभ्यभाषत।
गच्छ तात महाप्राज्ञां गान्धारीं दीर्घदर्शिनीं। आनयेह तया सार्द्धमनुनेष्यामि दुर्म्मतिं। ४२१०
यदि साऽपि दुरात्मानं शमयेत् दुष्टचेतसं। अपि कृष्णस्य सुहृदस्तिष्ठेम वचने वयं।
अपि लोभाभिभूतस्य पन्थानमनुदर्शयेत्। दुर्बुद्धेर्दुःसहायस्य शमार्थं ब्रुवती वचः।
अपि नो व्यसनं घोरं दुर्य्योधनकृतं महत्। शमयेच्चिररात्राय योगक्षेमवदव्ययं।
राज्ञस्तु वचनं श्रुत्वा विदुरो दीर्घदर्शिनीं। आनयामास गान्धारीं धृतराष्ट्रस्य शासनात्।
॥ धृतराष्ट्र उवाच ॥ एष गान्धारि पुत्रस्ते दुरात्मा शासनातिगः। ऐश्वर्य्यलोभादैश्वर्य्यं जीवितञ्च प्रहास्यति। ४२१५
अशिष्टवदमर्य्यादः पापैः सह दुरात्मवान्। सभाया निर्गतो मूढो व्यतिक्रम्य सुहृद्वचः।
॥ वैशम्पायन उवाच ॥ सा भर्त्तुर्वचनं श्रुत्वा राजपुत्री यशस्विनी। अन्विच्छन्ती महत् श्रेयो गान्धारी वाक्यमब्रवीत्।
॥ गान्धार्य्युवाच ॥ आज्ञापय सुतं क्षिप्रं राज्यकामुकमातुरं। न हि राज्यमशिष्टेन शक्यं धर्म्मार्थलोपिना।
आप्तुमाप्तं तथाऽपीदमविनीतेन सर्व्वथा। त्वं ह्येवात्र भृशं गर्ह्यो धृतराष्ट्रः सुतप्रियः।
यो जानन् पापतामस्य तत्प्रज्ञामनुवर्त्तसे। स एष काममन्युभ्यां प्रलब्धो लोभमास्थितः। ४२२०
अशक्योऽद्य त्वया राजन् विनिवर्त्तयितुं बलात्। राष्ट्रप्रदाने मूढस्य बालिशस्य दुरात्मनः।
दुःसहायस्य लुब्धस्य धृतराष्ट्रोऽश्नुते फलं। कथं हि स्वजने भेदमुपेक्षेत महीपतिः।
भिन्नं हि स्वजनेन त्वां प्रहसिष्यन्ति शत्रवः। या हि शक्या महाराज साम्ना दानेन वा पुनः।
निस्तर्त्तुमापदः स्वेषु दण्डं कस्तत्र पातयेत्।
॥ वैशम्पायन उवाच ॥ शासनाद्धृतराष्ट्रस्य दुर्य्योधनममर्षणं। मातुश्च वचनात् क्षत्ता सभां प्रावेशयत् पुनः। ४२२५

स मातुर्वचनाकाङ्क्षी प्रविवेश पुनः सभां । अभिताम्रेक्षणः क्रोधान्निःश्वसन्निव पन्नगः ।
तं प्रविष्टमभिप्रेक्ष्य पुत्रमुत्पथमास्थितं । विगर्हमाणा गान्धारी शमार्थं वाक्यमब्रवीत् ।
दुर्योधन निबोधेदं वचनं मम पुत्रक । हितं ते सानुबन्धस्य तथायत्यां सुखोदयं ।
दुर्योधन यदाह त्वां पिता भरतसत्तमः । भीष्मो द्रोणः कृपः क्षत्ता सुहृदां कुरु तद्वचः ।
भीष्मस्य तु पितुश्चैव मम चापचितिः कृता । भवेद्द्रोणमुखानाञ्च सुहृदां शाम्यता त्वया । ४३२०
न हि राज्यं महाप्राज्ञ स्वेन कामेन शक्यते । अवाप्तुं रक्षितुं वापि भोक्तुं भरतसत्तम ।
न ह्यवश्येन्द्रियो राज्यमश्नीयाद्दीर्घमन्तरं । विजितात्मा तु मेधावी स राज्यमभिपालयेत् ।
कामक्रोधौ हि पुरुषमर्थेभ्यो व्यपकर्षतः । तौ तु शत्रू विनिर्जित्य राजा विजयते महीं ।
लोकेश्वरप्रभुत्वं हि महदेतद्दुरात्मभिः । राज्यं नामेप्सितं स्थानं न शक्यमभिरक्षितुं ।
इन्द्रियाणि महत्प्रेप्सुर्नियच्छेदर्थधर्मयोः । इन्द्रियैर्नियतैर्बुद्धिर्वर्द्धतेऽग्निरिवेन्धनैः । ४३२५
अविधेयानि हीमानि व्यापादयितुमप्यलं । अविधेया इवादान्ता हयाः पथि कुसारथिं ।
अविजित्य य आत्मानममात्यान् विजिगीषते । अमित्रान् वाऽजितामात्यः सोऽवशः परिहीयते ।
आत्मानमेव प्रथमं देशरूपेण योजयेत् । ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ।
वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु । परीक्ष्य कारिणं धीरमत्यर्थं श्रीर्निषेवते ।
क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ । कामक्रोधौ शरीरस्थौ प्रज्ञानं तौ विलुम्पतः । ४३३०
याभ्यां हि देवाः स्वर्यातुः स्वर्गस्य पिदधुर्मुखं । बिभ्यतोऽनुपरागस्य कामक्रोधौ स्म वर्द्धितौ ।
कामं क्रोधञ्च लोभञ्च दम्भं दर्पञ्च भूमिपः । सम्यग्विजेतुं यो वेद स महीमभिजायते ।
सततं निग्रहे युक्त इन्द्रियाणां भवेन्नृपः । ईप्सन्नर्थञ्च धर्मञ्च द्विषताञ्च पराभवं ।
कामाभिभूतः क्रोधाद्वा यो मिथ्या प्रतिपद्यते । स्वेषु चान्येषु वा तस्य न सहाया भवन्त्युत ।
एकीभूतैर्महाप्राज्ञैः शूरैररिनिबर्हणैः । पाण्डवैः पृथिवीं तात भोक्ष्यसे सहितः सुखी । ४३३५
यथा भीष्मः शान्तनवो द्रोणश्चापि महारथः । आहतुस्तात तत्सत्यमजेयौ कृष्णपाण्डवौ ।
प्रपद्यस्व महाबाहुं कृष्णमक्लिष्टकारिणं । प्रसन्नो हि सुखाय स्यादुभयोरेव केशवः ।
सुहृदामर्थकामानां यो न तिष्ठति शासने । प्राज्ञानां कृतविद्यानां स नरः शत्रुनन्दनः ।
न युद्धे तात कल्याणं न धर्मार्थौ कुतः सुखं । न चापि विजयो नित्यं मा युद्धे चेत आधिथाः ।
भीष्मेण हि महाप्राज्ञ पित्रा ते वाह्लिकेन च । दत्तोऽंशः पाण्डुपुत्राणां भेदाद्भीतैररिन्दम । ४३४०
तस्य चैतत् प्रदानस्य फलमद्यानुपश्यसि । यद्भुङ्क्षे पृथिवीं कृत्स्नां शूरैर्निहतकण्टकां ।
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिन्दम । यदीच्छसि सहामात्यो भोक्तुमर्द्धं महीमिमां ।
अलमर्द्धं पृथिव्यास्ते सहामात्यस्य जीवनं । सुहृदां वचने तिष्ठन् यशः प्राप्स्यसि भारत ।
श्रीमद्भिरात्मवद्भिस्तैर्बुद्धिमद्भिर्जितेन्द्रियैः । पाण्डवैर्विग्रहस्तात भ्रंशयेन्महतः सुखात् ।
निगृह्य सुहृदां मन्युं शाधि राज्यं यथोचितं । स्वमंशं पाण्डुपुत्रेभ्यः प्रदाय भरतर्षभ । ४३४५

अनयस्य विकारोऽयं यथोद्दशसमाः कृतः। शमयैनं महाप्राज्ञ कामक्रोधसमेधितं।
न चैव शक्तः पार्थानां यस्त्वमर्थमभीप्ससि। सूतपुत्रो दृढक्रोधो भ्राता दुःशासनश्च ते।
भीष्मे द्रोणे कृपे कर्णे भीमसेने धनञ्जये। धृष्टद्युम्ने च संक्रुद्धे न स्युः सर्व्वाः प्रजाः ध्रुवं।
अमर्षवशमापन्नो मा कुरूंस्तात जीघनः। एषा हि पृथिवी कृत्स्ना मा गमत्त्वत्कृते वधं।
यच्च त्वं मन्यसे मूढ भीष्मद्रोणकृपादयः। योत्स्यन्ते सर्व्वशक्त्येति नैतदद्योपपद्यते। ४४६०
समं हि राज्यं प्रीतिश्च स्थानं हि विदितात्मनां। पाण्डवेष्वथ युष्मासु धर्मस्त्वभ्यधिकस्ततः।
राजपिण्डभयादेते यदि हास्यन्ति जीवितं। न हि शक्ष्यन्ति राजानं युधिष्ठिरमुदीक्षितुं।
न लोभादर्थसम्पत्तिर्नराणामिह दृश्यते। तदलं तात लोभेन प्रशाम्य भरतर्षभ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि गान्धारीवाक्येऽष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥
॥ वैशम्पायन उवाच ॥ तत्तु वाक्यमनादृत्य सोऽर्थवन्मातृभाषितं। पुनः प्रतस्थे संरम्भात् सकाशमकृतात्मनां।
ततः सभाया निर्गम्य मन्त्रयामास कौरवः। सौबलेन मताक्षेण राज्ञा शकुनिना सह। ४४६५
दुर्य्योधनस्य कर्णस्य शकुनेः सौबलस्य च। दुःशासनचतुर्थानामिदमासीद्विचेष्टितं।
पुराऽयमस्मान् गृह्णाति क्षिप्रकारी जनार्द्दनः। सहितो धृतराष्ट्रेण राज्ञा शान्तनवेन च।
वयमेव हृषीकेशं निगृह्णीम बलादिव। प्रसह्य पुरुषव्याघ्रमिन्द्रो वैरोचनिं यथा।
श्रुत्वा गृहीतं वार्ष्णेयं पाण्डवा हतचेतसः। निरुत्साहा भविष्यन्ति भग्नदंष्ट्रा इवोरगाः।
अयं ह्येषां महाबाहुः सर्व्वेषां शर्म्म वर्म्म च। अस्मिन् गृहीते वरदे ऋषभे सर्व्वसात्वतां। ४४७०
निरुद्यमा भविष्यन्ति पाण्डवाः सोमकैः सह। तस्माद्वयमिहैवैनं केशवं क्षिप्रकारिणं।
क्रोशतो धृतराष्ट्रस्य बद्ध्वा योत्स्यामहे रिपून्। तेषां पापमभिप्रायं पापानां दुष्टचेतसां।
इङ्गितज्ञः कविः क्षिप्रमन्वबुध्यत सात्यकिः। तदर्थमभिनिष्क्रम्य हार्द्दिक्येन सहास्थितः।
अब्रवीत् कृतवर्म्माणं क्षिप्रं योजय वाहिनीं। व्यूढानीकः सभाद्वारमुपतिष्ठस्व दंशितः।
यावदाख्याम्यहं चैतत् कृष्णायाक्लिष्टकारिणे। स प्रविश्य सभां वीरः सिंहो गिरिगुहामिव। ४४७५
आचष्ट तमभिप्रायं केशवाय महात्मने। धृतराष्ट्रं ततश्चैव विदुरञ्चान्वभाषत।
तेषामेतमभिप्रायमाचचक्षे स्मयन्निव। धर्म्मादर्थाच्च कामाच्च कर्म्म साधुविगर्हितं।
मन्दाः कर्त्तुमिहेच्छन्ति न चावाप्यं कथञ्चन। पुरा विकुर्व्वते मूढाः पापात्मानः समागताः।
धर्षिताः काममन्युभ्यां क्रोधलोभवशानुगाः। इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पचेतसः।
पटेनाग्निं प्रज्वलितं यथा बाला यथा जडाः। सात्यकेस्तद्वचः श्रुत्वा विदुरो दीर्घदर्शिवान्। ४४८०
धृतराष्ट्रं महाबाहुमब्रवीत् कुरुसंसदि। राजन् परीतकालास्ते पुत्राः सर्व्वे परन्तप।
अशक्यमयशस्यञ्च कर्त्तुं कर्म्म समुद्यताः। इमं हि पुण्डरीकाक्षमभिभूय प्रसह्य च।
निग्रहीतुं किलेच्छन्ति सहिता वासवानुजं। इमं पुरुषशार्दूलमप्रधृष्यं दुरासदं।
आसाद्य न भविष्यन्ति पतङ्गा इव पावकं। अयमिच्छन् हि तान् सर्व्वान् युध्यमानान् जनार्द्दनः।

सिंहो नागानिव क्रुद्धो गमयेत् यमसादनं । न त्वयं निन्दितं कर्म्म कुर्य्यात् पापं कथञ्चन । ॥४२८५
न च धर्म्मादपक्रामेदच्युतः पुरुषोत्तमः । विदुरेणैवमुक्ते तु केशवो वाक्यमब्रवीत् ।
धृतराष्ट्रमभिप्रेक्ष्य सुहृदां शृण्वतां मिथः । राजन्नेते यदि क्रुद्धा मां निगृह्णीयुरोजसा ।
एते वा मामहं वैनाननुजानीहि पार्थिव । एतान् हि सर्व्वान् संरब्धान्नियन्तुमहमुत्सहे ।
न चाहं निन्दितं कर्म्म कुर्य्यां पापं कथञ्चन । पाण्डवार्थे हि लुभ्यन्तः स्वार्थान् हास्यन्ति ते सुताः ।
एते चेदेवमिच्छन्ति कृतकार्य्यो युधिष्ठिरः । अद्यैव ह्यहमेतांश्च ये चैनाननु भारत । ॥४२९०
निगृह्य राजन् पार्थेभ्यो दद्यां किं दुष्कृतं भवेत् । इदन्तु न प्रवर्त्तेयं निन्दितं कर्म्म भारत ।
सन्निधौ ते महाराज क्रोधजं पापबुद्धिजं । एष दुर्य्योधनो राजन् यथेच्छति तथाऽस्तु तत् ।
अहन्तु सर्व्वाननयाननुजानामि ते नृप । एतत् श्रुत्वा तु विदुरं धृतराष्ट्रोऽभ्यभाषत ।
क्षिप्रमानय तं पापं राज्यलुब्धं सुयोधनं । सहमित्रं सहामात्यं ससोदर्य्यं सहानुगं ।
शक्नुयां यदि पन्थानमवतारयितुं पुनः । ततो दुर्य्योधनं क्षत्ता पुनः प्रावेशयत् सभां । ॥४२९५
अकामं भ्रातृभिः सार्द्धं राजभिः परिवारितं । अथ दुर्य्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ।
कर्णदुःशासनाभ्याञ्च राजभिश्चाभिसंवृतं । नृशंस पापभूयिष्ठ क्षुद्रकर्म्मसहायवान् ।
पापैः सहायैः संहत्य पापं कर्म्म चिकीर्षसि । अशक्यमयशस्यञ्च सद्भिश्चापि विगर्हितं ।
यथा त्वादृशको मूढो व्यवस्येत् कुलपांसनः । त्वमिमं पुण्डरीकाक्षमप्रधृष्यं दुरासदं ।
पापैः सहायैः संहत्य निग्रहीतुं किलेच्छसि । यो न शक्यो बलात्क्रान्तुं देवैरपि सवासवैः । ॥४३००
तं त्वं प्रार्थयसे मन्द बालश्चन्द्रमसं यथा । देवैर्मनुष्यैर्गन्धर्व्वैरसुरैरुरगैश्च यः ।
न सोढुं समरे शक्यस्तं न बुध्यसि केशवं । दुर्ग्राह्यः पाणिना वायुर्दुःस्पर्शः पाणिना शशी ।
दुर्द्धरा पृथिवी मूर्द्ध्ना दुर्ग्राह्यः केशवो बलात् । इत्युक्ते धृतराष्ट्रेण क्षत्ताऽपि विदुरोऽब्रवीत् ।
दुर्य्योधनमभिप्रेक्ष्य धार्त्तराष्ट्रममर्षणं ।
विदुर उवाच । दुर्य्योधन निबोधेदं वचनं मम साम्प्रतं । सौभद्वारे वानरेन्द्रो द्विविदो नाम नामतः । ॥४३०५
शिलावर्षेण महता छादयामास केशवं । ग्रहीतुकामो विक्रम्य सर्व्वयत्नेन माधवं ।
ग्रहीतुं नाशकत्तत्र तं त्वं प्रार्थयसे बलात् । निर्म्मोचने षट्सहस्राः पाशैर्बद्धा महासुराः ।
ग्रहीतुं नाशकंश्चैनं तं त्वं प्रार्थयसे बलात् । प्राग्ज्योतिषगतं शौरिं नरकः सह दानवैः ।
ग्रहीतुं नाशकत्तत्र तं त्वं प्रार्थयसे बलात् । अनेन हि हता बाल्ये पूतना शकुनी तथा ।
गोवर्द्धनो धारितश्च गवार्थे भरतर्षभ । अरिष्टो धेनुकश्चैव चाणूरश्च महाबलः । ॥४३१०
अश्वराजश्च निहतः कंसश्चारिष्टमाचरन् । जरासन्धश्च वक्रश्च शिशुपालश्च वीर्य्यवान् ।
बाणश्च निहतः सङ्ख्ये राजानश्च निषूदिताः । वरुणो निर्ज्जितो राजा पावकश्चामितौजसा ।
पारिजातञ्च हरता जितः साक्षाच्छचीपतिः । अयं कर्त्ता न क्रियते कारणञ्चापि पौरुषे ।
यद्यदिच्छेदयं शौरिस्तत्तत्कुर्य्यादयत्नतः । एकार्णवे च स्वपता निहतौ मधुकैटभौ ।

अश्मान्तरमुपागम्य हयग्रीवस्तथा हतः। तं न बुध्यसि गोविन्दं घोरविक्रममच्युतं। ४४१५

आशीविषमिव क्रुद्धं तेजोराशिमनिन्दितं। प्रधर्षयन्महाबाहुं कृष्णमक्लिष्टकारिणं।

पतङ्गोऽग्निमिवासाद्य सामात्यो न भविष्यसि।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि विदुरवाक्ये एकोनत्रिंशदधिकशततमोऽध्यायः॥ १२९

॥ वैशम्पायन उवाच ॥ विदुरेणैवमुक्तस्तु केशवः शत्रुपूगहा। दुर्य्योधनं धार्त्तराष्ट्रमभ्यभाषत वीर्य्यवान्।

एकोऽहमिति यन्मोहान्मन्यसे मां सुयोधन। परिभूय सुदुर्बुद्धे ग्रहीतुं मां चिकीर्षसि।

इहैव पाण्डवाः सर्व्वे तथैवान्धकवृष्णयः। इहादित्याश्च रुद्राश्च वसवश्च महर्षिभिः। ४४२०

एवमुक्त्वा जहासोच्चैः केशवः परवीरहा। तस्य संस्मयतः शौरेर्व्विद्युद्रूपा महात्मनः।

अङ्गुष्ठमात्रास्त्रिदशा मुमुचुः पावकार्च्चिषः। अस्य ब्रह्मा ललाटस्थो रुद्रो वक्षसि चाभवत्।

लोकपाला भुजेष्वासन्नग्निरास्यादजायत। आदित्याश्चैव साध्याश्च वसवोऽथाश्विनावपि।

मरुतश्च सहेन्द्रेण विश्वे देवास्तथैव च। बभूवुश्चैकरूपाणि यक्षगन्धर्व्वरक्षसां।

प्रादुरास्तां तथा दोर्भ्यां सङ्कर्षणधनञ्जयौ। दक्षिणेऽथार्ज्जुनो धन्वी हली रामश्च सव्यतः। ४४२५

भीमो युधिष्ठिरश्चैव माद्रीपुत्रौ च पृष्ठतः। अन्धका वृष्णयश्चैव प्रद्युम्नप्रमुखास्ततः।

अग्रे बभूवुः कृष्णस्य समुद्यतमहायुधाः। शङ्खचक्रगदाशक्तिशार्ङ्गलाङ्गलनन्दकाः।

अदृश्यन्तोद्यतान्येव सर्व्वप्रहरणानि च। नानाबाहुषु कृष्णस्य दीप्यमानानि सर्व्वशः।

नेत्राभ्यां नस्ततश्चैव श्रोत्राभ्याञ्च समन्ततः। प्रादुरासन्महारौद्राः सधूमाः पावकार्च्चिषः।

रोमकूपेषु च तथा सूर्य्यस्येव मरीचयः। तं दृष्ट्वा घोरमात्मानं केशवस्य महात्मनः। ४४३०

न्यमीलयन्त नेत्राणि राजानस्त्रस्तचेतसः। ऋते द्रोणञ्च भीष्मञ्च विदुरञ्च महामतिं।

सञ्जयञ्च महाभागमृषींश्चैव तपोधनान्। प्रादात्तेषां स भगवान् दिव्यञ्चक्षुर्ज्जनार्द्दनः।

तद्दृष्ट्वा महदाश्चर्य्यं माधवस्य सभातले। देवदुन्दुभयो नेदुः पुष्पवर्षं पपात च।

॥ धृतराष्ट्र उवाच ॥ त्वमेव पुण्डरीकाक्ष सर्व्वस्य जगतो हितः। तस्मात् त्वं यादवश्रेष्ठ प्रसादं कर्त्तुमर्हसि।

भगवन्मम नेत्राणामन्तर्धानं वृणे पुनः। भवन्तं द्रष्टुमिच्छामि नान्यं द्रष्टुमिहोत्सहे। ४४३५

ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनार्द्दनः। अदृश्यमाने नेत्रे द्वे भवेतां कुरुनन्दन।

तत्राद्भुतं महाराज धृतराष्ट्रस्य चक्षुषी। लब्धवान् वासुदेवाच्च विश्वरूपदिदृक्षया।

लब्धचक्षुषमासीनं धृतराष्ट्रं नराधिपाः। विस्मिता ऋषिभिः सार्द्धं तुष्टुवुर्मधुसूदनं।

चचाल च मही कृत्स्ना सागरश्चापि चुक्षुभे। विस्मयं परमं जग्मुः पार्थिवा भरतर्षभ।

ततः स पुरुषव्याघ्रः सञ्जहार वपुः स्वकं। तां दिव्यामद्भुतां चित्रामृद्धिमत्तामरिन्दमः। ४४४०

ततः सात्यकिमादाय पाणौ हार्द्दिक्यमेव च। ऋषिभिस्तैरनुज्ञातो निर्ययौ मधुसूदनः।

ऋषयोऽन्तर्हिता जग्मुस्ततस्ते नारदादयः। तस्मिन् कोलाहले वृत्ते तदद्भुतमिवाभवत्।

तं प्रस्थितमभिप्रेक्ष्य कौरवाः सह राजभिः। अनुजग्मुर्नरव्याघ्रं देवा इव शतक्रतुं।

अचिन्त्यश्चाप्रमेयात्मा सर्व्वं तद्राजमण्डलं । निश्चक्राम ततः शौरिः सधूम इव पावकः ।
ततो रथेन शुभ्रेण महता किङ्किणीकिना । हेमजालविचित्रेण लघुना मेघनादिना । ४४३५
सूपस्करेण शुभ्रेण वैयाघ्रेण वरूथिना । शैव्यसुग्रीवयुक्तेन प्रत्यदृश्यत दारुकः ।
तथैव रथमास्थाय कृतवर्म्मा महारथः । वृष्णीनां सम्मतो वीरो हार्द्दिक्यः समदृश्यत ।
उपस्थितरथं शौरिं प्रयास्यन्तमरिन्दमं । धृतराष्ट्रो महाराजः पुनरेवाभ्यभाषत ।
यावद्बलं मे पुत्रेषु पश्यतस्ते जनार्द्दन । प्रत्यक्षन्ते न ते किञ्चित् परोक्षं शत्रुकर्षण ।
कुरूणां शममिच्छन्तं यतमानञ्च केशव । विदित्वैतामवस्थां मे नाभिशङ्कितुमर्हसि । ४४४०
न मे पापोऽस्त्यभिप्रायः पाण्डवान् प्रति केशव । ज्ञातमेव हि ते वाक्यं यन्मयोक्तः सुयोधनः ।
जानन्ति कुरवः सर्व्वे राजानश्चैव पार्थिवाः । शमे प्रयतमानं मां सर्व्वयत्नेन माधव ।
॥ वैशम्पायन उवाच ॥ ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनेश्वरं । द्रोणं पितामहं भीष्मं क्षत्तारं बाह्लिकं कृपं ।
प्रत्यक्षमेतद्भवतां यद्वृत्तं कुरुसंसदि । यथा चाशिष्टवन्मन्दो रोषादद्य समुत्थितः ।
वदत्यनीशमात्मानं धृतराष्ट्रो महीपतिः । आपृच्छे भवतः सर्व्वान् गमिष्यामि युधिष्ठिरं । ४४४५
आमन्त्र्य प्रस्थितं शौरिं रथस्थं पुरुषर्षभं । अनुजग्मुर्महेष्वासाः प्रवीरा भरतर्षभाः ।
भीष्मो द्रोणः कृपः क्षत्ता धृतराष्ट्रोऽथ बाह्लिकः । अश्वत्थामा विकर्णश्च युयुत्सुश्च महारथः ।
ततो रथेन शुभ्रेण महता किङ्किणीकिना । कुरूणां पश्यतां द्रष्टुं स्वसारं स पितुर्ययौ ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि विश्वरूपदर्शने त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥
॥ वैशम्पायन उवाच ॥ प्रविश्याथ गृहं तस्याश्चरणावभिवाद्य च । आचख्यौ तत् समासेन यद्वृत्तं कुरुसंसदि ।
॥ वासुदेव उवाच ॥ उक्तं बहुविधं वाक्यं ग्रहणीयं सहेतुकं । ऋषिभिश्चैव च मया न चासौ तद्गृहीतवान् । ४४५०
कालपक्वमिदं सर्व्वं सुयोधनवशानुगं । आपृच्छे भवतीं शीघ्रं प्रयास्ये पाण्डवान् प्रति ।
किं वाच्याः पाण्डवेयास्ते भवत्या वचनान्मया । तद्ब्रूहि त्वं महाप्राज्ञे शुश्रूषे वचनं तव ।
॥ कुन्त्युवाच ॥ ब्रूयाः केशव राजानं धर्म्मात्मानं युधिष्ठिरं । भूयांस्ते हीयते धर्म्मो मा पुत्रक वृथा कृथाः ।
श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चितः । अनुवाकहता बुद्धिर्धर्म्ममेवैकमीक्षते ।
अङ्गावेक्षस्व धर्म्मं त्वं यथा सृष्टः स्वयम्भुवा । बाहुतः क्षत्रियः सृष्टो बाहुवीर्य्योपजीविता । ४४५५
क्रूराय कर्म्मणे नित्यं प्रजानां परिपालने । शृणु चाप्युपमामेकां या वृद्धेभ्यः श्रुता मया ।
मुचुकुन्दस्य राजर्षेरददत् पृथिवीमिमां । पुरा वैश्रवणः प्रीतो न चासौ तद्गृहीतवान् ।
बाहुवीर्य्यार्ज्जितं राज्यमश्नीयामिति कामये । ततो वैश्रवणः प्रीतो विस्मितः समपद्यत ।
मुचुकुन्दस्ततो राजा सोऽन्वशासद्वसुन्धरां । बाहुवीर्य्यार्ज्जितां सम्यक् क्षत्रधर्म्ममनुव्रतः ।
यं हि धर्म्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः । चतुर्थं तस्य धर्म्मस्य राजा विन्दति भारत । ४४६०
राजा चरति चेद्धर्म्मं देवत्वायैव कल्पते । स चेदधर्म्मं चरति नरकायैव गच्छति ।
दण्डनीतिः स्वधर्म्मेण चातुर्व्वर्ण्यं नियच्छति । प्रयुक्ता स्वामिना सम्यगधर्म्मेभ्यश्च यच्छति ।

दण्डनीत्या यदा राजा सम्यक्कार्त्स्न्येन वर्त्तते। तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्त्तते।
कालो वा कारणं राज्ञो राजा वा कालकारणं। इति ते संशयो माभूद्राजा कालस्य कारणं।
राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च। युगस्य च चतुर्थस्य राजा भवति कारणं। ४४७५
कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते। त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते।
प्रवर्त्तनात् द्वापरस्य यथा भागमुपाश्नुते। कलेः प्रवर्त्तनाद्राजा पापमत्यन्तमश्नुते।
ततो वसति दुष्कर्म्मा नरके शाश्वतीः समाः। राजदोषेण हि जगत् स्पृश्यते जगतः स च।
राजधर्म्मानवेक्षस्व पितृपैतामहोचितान्। नैतद्राजर्षिवृत्तं हि यत्र त्वं स्थातुमिच्छसि।
न हि वैक्लव्यसंसृष्ट आनृशंस्यव्यवस्थितः। प्रजापालनसम्भूतं फलं किञ्चिन्न लभ्यते। ४४८०
न ह्येतामाशिषं पाण्डुर्न चाहं न पितामहः। प्रयुक्तवन्तः पूर्व्वन्ते यया चरसि मेधया।
यज्ञो दानं तपः शौर्य्यं प्रज्ञा सन्तानमेव च। माहात्म्यं बलमोजश्च नित्यमाशंसितं मया।
नित्यं स्वाहा स्वधा नित्यं ददुर्मानुषदेवताः। दीर्घमायुर्धनं पुत्त्रान् सम्यगाराधिताः शुभाः।
पुत्त्रेष्वाशासते नित्यं पितरो दैवतानि च। दानमध्ययनं यज्ञः प्रजानां परिपालनं।
एतद्धर्म्ममधर्म्मं वा जन्मनैवाभ्यजायथाः। ते तु वैद्याः कुले जाता अवृत्त्या तात पीडिताः। ४४८५
यत्र दानपतिं शूरं क्षुधिताः पृथिवीचराः। प्राप्य तुष्टाः प्रतिष्ठन्ते धर्म्मः कोऽभ्यधिकस्ततः।
दानेनान्यं बलेनान्यं तथा सूनृतया परं। सर्व्वतः प्रतिगृह्णीयाद्राज्यं प्राप्येह धार्म्मिकः।
ब्राह्मणः प्रचरेत् भैक्ष्यं क्षत्त्रियः परिपालयेत्। वैश्यो धनार्ज्जनं कुर्य्यात् शूद्रः परिचरेच्च तान्।
भैक्ष्यं विप्रतिषिद्धन्ते कृषिर्नैवोपपद्यते। क्षत्त्रियोऽसि क्षतात् त्राता बाहुवीर्य्योपजीविता।
उद्यम्य धुरमुत्कर्षेद्राजानियकृतं स्मरन्। कुरु सत्त्वस्य मानस्य विद्धि पौरुषमात्मनः। ४४९०
पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर। साम्ना भेदेन दानेन दण्डेनाऽथ नयेन वा।
ततो दुःखतरं किन्नु यदहं हीनबान्धवा। परपिण्डमुदीक्षे वै त्वां सूत्वा मित्रनन्दनं।
युध्यस्व राजधर्म्मेण मा निमज्जीः पितामहान्। मागमः क्षीणपुण्यस्त्वं सानुजः पापिकां गतिं।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कुन्तीवाक्ये एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥
॥ कुन्त्युवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। विदुलायाश्च संवादं पुत्त्रस्य च परन्तप।
ततः श्रेयश्च भूयश्च यथावद्वक्तुमर्हति। यशस्विनी मन्युमती कुले जाता विभावरी। ४४९५
क्षत्त्रधर्म्मरता दान्ता विदुला दीर्घदर्शिनी। विश्रुता राजसंसत्सु श्रुतवाक्या बहुश्रुता।
विदुला नाम राजन्या जगर्हे पुत्त्रमौरसं। निर्ज्जितं सिन्धुराजेन शयानं दीनचेतसं।
॥ विदुलोवाच ॥ अनन्दन ममाजात द्विषतां हर्षवर्द्धन। न मया त्वं न पित्रा च जातः क्वाभ्यागतो ह्यसि।
निर्म्मन्युश्चाप्यसङ्ख्येयः पुरुषः क्लीवसाधनः। यावज्जीवं निराशोऽसि कल्याणाय धुरं वह।
मात्मानमवमन्यस्व मैनमल्पेन बीभरः। मनः कृत्वा सुकल्याणं माभैस्त्वं प्रतिसंहर। ४५००
उत्तिष्ठ हे कापुरुष मा शेष्वेवं पराजितः। अमित्रानन्दयन् सर्व्वान्निर्म्मानो बन्धुशोकदः।

सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलिः। सुसन्तोषः कापुरुषः स्वल्पकेनैव तुष्यति।
अप्यहेरारुजन् दंष्ट्रां आश्वेव निधनं व्रज। अपि वा संशयं प्राप्य जीवितेऽपि पराक्रमेः।
अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन्। विनदन् वाऽथ वा तूष्णीं व्योम्नि वाऽपरिशङ्कितः।
त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा। उत्तिष्ठ हे कापुरुष मास्वाप्सीः शत्रुनिर्ज्जितः। ४५०५
माऽस्तं गमस्त्वं कृपणो विश्रूयस्व स्वकर्म्मणा। मा मध्ये मा जघन्ये त्वं मा धोभूस्तिष्ठ चोर्ज्जितः।
अलातं तिन्दुकस्येव मुहूर्त्तमपि हि ज्वल। मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः।
मुहूर्त्तं ज्वलितं श्रेयो न च धूमायितञ्चिरं। मा ह स्म कस्यचिद्गेहे जनी राज्ञः खरो मृदुः।
कृत्वा मानुष्यकं कर्म्म सृत्वाऽऽजिं यावदुत्तमं। धर्म्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते।
अलब्ध्वा यदि वा लब्ध्वा नानुशोचति पण्डितः। आनन्तर्य्यञ्चारभते न प्राणानां धनायते। ४५१०
उद्भावयस्व वीर्य्यं वा तां वा गच्छ ध्रुवां गतिं। धर्म्मं पुत्राग्रतः कृत्वा किं निमित्तं हि जीवसि।
इष्टापूर्त्तं हि ते क्लीव कीर्त्तिश्च सकला हता। विच्छिन्नं भोगमूलं ते किं निमित्तं हि जीवसि।
शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता। विपरिच्छिन्नमूलोऽपि न विषीदेत् कथञ्चन।
उद्यम्य धुरमुत्कर्षेदाजानेयकृतं स्मरन्। कुरु सत्त्वञ्च मानञ्च विद्धि पौरुषमात्मनः।
उद्भावय कुलं मग्नं त्वत्कृते स्वयमेव हि। यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतं। ४५१५
राशिवर्द्धनमात्रं स नैव स्त्री न पुनः पुमान्। दाने तपसि सत्ये च यस्य नोच्चारितं यशः।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः। श्रुतेन तपसा वाऽपि श्रिया वा विक्रमेण वा।
जनान् योऽभिभवत्यन्यान् कर्म्मणा हि स वै पुमान्। न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि।
नृशंस्यामयशस्याञ्च दुःखां कापुरुषोचितां। यमेनमभिनन्देयुरमित्राः पुरुषं कृशं।
लोकस्य समवज्ञातं निहीनासनवाससं। अहो लाभकरं हीनमल्पजीवनमल्पकं। ४५२०
नेदृशं बन्धुमासाद्य बान्धवः सुखमेधते। अवृत्त्यैव विपत्स्यामो वयं राष्ट्रात् प्रवासिताः।
सर्व्वकामरसैर्हीनाः स्थानभ्रष्टा अकिञ्चनाः। अवल्गुकारिणं सत्सु कुलवंशस्य नाशनं।
कलिं पुत्रप्रवादेन सञ्जय त्वामजीजनं। निरामर्षं निरुत्साहं निर्व्वीर्य्यमरिनन्दनं।
मा स्म सीमन्तिनी काचित् जनयेत् पुत्रमीदृशं। माधूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान्।
ज्वल मूर्द्धन्यमित्राणां मुहूर्त्तमपि वा क्षणं। एतावानेव पुरुषो यदमर्षी यदक्षमी। ४५२५
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान्। सन्तोषो वै श्रियं हन्ति तथाऽनुक्रोश एव च।
अनुत्थानभये चोभे निरीहो नाश्नुते महत्। एभ्यो निकृतिपापेभ्यः प्रमुञ्चात्मानमात्मना।
आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकं। पुरं विषहते यस्मात् तस्मात् पुरुष उच्यते।
तमाहुर्व्यर्थनामानं स्त्रीवत् य इह जीवति। शूरस्योर्ज्जितसत्त्वस्य सिंहविक्रान्तचारिणः।
दिष्टभावं गतस्यापि विषये मोदते प्रजाः। य आत्मनः प्रियसुखे हित्वा मृगयते श्रियं। ४५३०
अमात्यानामथो हर्षमादधात्यचिरेण सः।

॥ पुत्र उवाच ॥ किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्व्वया। किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा।
॥ मातोवाच ॥ अनादृतानां ये लोका द्विषन्तस्तानवाप्नुयुः। ये त्वादृतात्मनां लोकाः सुहृदस्तान् व्रजन्तु नः।
भृत्यैर्विहीयमानानां परपिण्डोपजीविनां। कृपणानामसत्त्वानां मा वृत्तिमनुवर्त्तिथाः।
अनु त्वां तात जीवन्तु ब्राह्मणाः सुहृदस्तथा। पर्जन्यमिव भूतानि देवा इव शतक्रतुं। ४५२५
यमाजीवन्ति पुरुषं सर्व्वभूतानि सञ्जय। पक्वं द्रुममिवासाद्य तस्य जीवितमर्थवत्।
यस्य शूरस्य विक्रान्तैरेधन्ते बान्धवाः सुखं। त्रिदशा इव शक्रस्य साधु तस्येह जीवितं।
स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः। स लोके लभते कीर्त्तिं परत्र च शुभां गतिं।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि विदुलापुत्रानुशासने द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
॥ विदुलोवाच ॥ अथैतस्यामवस्थायां पौरुषं हातुमिच्छसि। निहीनसेवितं मार्गं गमिष्यस्यचिरादिव।
यो हि तेजो यथाशक्ति न दर्शयति विक्रमात्। क्षत्रियो जीविताकाङ्क्षी स्तेन इत्येव तं विदुः। ४५३०
अर्थवन्त्युपपन्नानि वाक्यानि गुणवन्ति च। नैव सम्प्राप्नुवन्ति त्वां मुमूर्षुमिव भेषजं।
सन्ति वै सिन्धुराजस्य सन्तुष्टा न तथा जनाः। दौर्ब्बल्यादासते मूढा व्यसनौघप्रतीक्षिणः।
सहायोपचितिं कृत्वा व्यवसाय्य ततस्ततः। अनुदुष्येयुरपरे पश्यन्तस्तव पौरुषं।
तैः कृत्वा सह सङ्घातं गिरिदुर्गालयञ्चर। काले व्यसनमाकाङ्क्षन्नैवायमजरामरः।
सञ्जयो नामतश्च त्वं न च पश्यामि तत् त्वयि। अन्वर्थनामा भव मे पुत्र मा व्यर्थनामकः। ४५३५
सम्यग्दृष्टिर्महाप्राज्ञो बालं त्वां ब्राह्मणोऽब्रवीत्। अयं प्राप्य महत्कृच्छ्रं पुनर्वृद्धिं गमिष्यति।
तस्य स्मरन्ती वचनमाशंसे विजयं तव। तस्मात्तात ब्रवीमि त्वां वक्ष्यामि च पुनः पुनः।
यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिताः परे। तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः।
समृद्धिरसमृद्धिर्वा पूर्व्वेषां मम सञ्जय। एवं विद्वान् युद्धमना भव मा प्रत्युपाहरः।
नातः पापीयसीं काञ्चिदवस्थां शम्बरोऽब्रवीत्। यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते। ४५४०
पतिपुत्रवधादेतत् परमं दुःखमब्रवीत्। दारिद्र्यमिति यत्प्रोक्तं पर्य्यायमरणं हि तत्।
अहं महाकुले जाता ह्रदात् ह्रदमिवागता। ईश्वरी सर्व्वकल्याणी भर्त्रा परमपूजिता।
महार्हमाल्याभरणां सुमृष्टां वरवाससं। पुरा दृष्टा सुहृद्वर्गो मामपश्यः सुदुर्गतां।
यदा मां चैव भार्य्यां च द्रष्टासि भृशदुर्ब्बलां। न तदा जीवितेनार्थो भविता तव सञ्जय।
दासकर्म्मकरान् भृत्यानाचार्य्यर्त्विक्पुरोहितान्। अवृत्त्याऽस्मान् प्रजहतो दृष्ट्वा किं जीवितेन ते। ४५४५
यदि कृत्यं न पश्यामि तवाद्याहं यथा पुरा। श्लाघनीयं यशस्यञ्च का शान्तिर्हृदयस्य मे।
नेति चेद्ब्राह्मणं ब्रूयां दीर्य्येत हृदयं मम। न ह्यहं न च मे भर्त्ता नेति ब्राह्मणमुक्तवान्।
वयमाश्रयणीयाः स्म न श्रोतारः परस्य च। सान्यमासाद्य जीवन्ती परित्यक्ष्यामि जीवितं।
अपारे भव नः पारमप्लवे भव नः प्लवः। कुरुष्व स्थानमस्थाने मृतान् सञ्जीवयस्व नः।
सर्व्वे ते शत्रवः सह्या न चेज्जीवितुमर्हसि। अथ चेदीदृशीं वृत्तिं क्लीवामभ्युपपद्यसे। ४५५०

निर्व्विसात्मा हतमना मुञ्चैतां पापजीविकां। एकशत्रुवधेनैव शूरो गच्छति विश्रुतिं।
इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत। माहेन्द्रं ग्रहं लेभे लोकानाञ्चेश्वरोऽभवत्।
नाम विश्राव्य वै सङ्ख्ये शत्रूनाहूय दंशितान्। सेनाग्रञ्चापि विद्राव्य हत्वा वा पुरुषं वरं।
यदैव लभते वीरः सुयुद्धेन महद्यशः। तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च।
त्यक्तात्मानं रणे दक्षं शूरं कापुरुषा जनाः। अवशाः पूरयन्ति स्म सर्व्वकामसमृद्धिभिः। ४५६५
राज्यञ्चाप्युग्रविभ्रंशं संशयो जीवितस्य वा। न लब्धस्य हि शत्रोर्व्वै शेषं कुर्व्वन्ति साधवः।
स्वर्गद्वारोपमं राज्यमथवाऽप्यमृतोपमं। रुद्धमेकायने मत्वा पतोल्मुक इवारिषु।
जहि शत्रून् रणे राजन् स्वधर्म्ममनुपालय। मा त्वा दृशं सुकृपणं शत्रूणां भयवर्द्धनं।
अस्मदीयैश्च शोचद्भिर्नदद्भिश्च परैर्वृतं। अपि त्वां नानुपश्येयं दीना दीनमिव स्थितं।
हृष्य सौवीरकन्याभिः श्लाघ्य स्वार्थैर्यथा पुरा। मा च सैन्धवकन्यानामवसन्नो वशङ्गमः। ४५७०
युवा रूपेण सम्पन्नो विद्ययाऽभिजनेन च। यस्त्वादृशो विकुर्व्वीत यशस्वी लोकविश्रुतः।
अनड्वानिव वोढव्यो मन्ये मरणमेव तत्। यदि त्वामनुपश्यामि परस्य प्रियवादिनं।
पृष्ठतोऽनुव्रजन्तं वा का शान्तिर्हृदयस्य मे। नास्मिन् जातु कुले जातो गच्छेत् योऽन्यस्य पृष्ठतः।
न त्वं परस्यानुचरस्तात जीवितुमर्हसि। अहं हि क्षत्रहृदयं वेद यत् परिशाश्वतं।
पूर्व्वैः पूर्व्वतरैः प्रोक्तं परैः परतरैरपि। शाश्वतञ्चाव्ययञ्चैव प्रजापतिविनिर्म्मितं। ४५७५
यो वै कश्चिदिहाजातः क्षत्रियः क्षत्रधर्म्मवित्। भयात् वृत्तिं समीक्ष्यैव न नमेदिह कस्य चित्।
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषं। अप्यपर्व्वणि भज्येत न नमेतेह कस्य चित्।
मातङ्गो मत्त इव च परीयात् स महामनाः। ब्राह्मणेभ्यो नमेन्नित्यं धर्म्मायैव च सञ्जय।
नियच्छन्नितरान् वर्णान् विनिघ्नन् सर्व्वदुष्कृतः। ससहायोऽसहायो वा यावज्जीवं तथा भवेत्।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि विदुलापुत्रानुशासने त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥१३३॥

॥ पुत्र उवाच ॥ कृष्णायसस्येव च ते संहत्य हृदयं कृतं। मम मातस्त्वकरुणे वीरप्रज्ञे ह्यमर्षणे। ४५८०
अहो क्षत्रसमाचारो यत्र मामितरं यथा। नियोजयसि युद्धाय परमातेव मान्तथा।
ईदृशं वचनं ब्रूयात् भवती पुत्रमेकजं। किन्नु ते मामपश्यन्त्याः पृथिव्या अपि सर्व्वया।
किमाभरणकृत्येन किम्भोगैर्जीवितेन वा। मयि वा सङ्गरहिते प्रियपुत्त्रे विशेषतः।
॥ मातोवाच ॥ सर्व्वावस्था हि विदुषां तात धर्म्मार्थकारणात्। तावेवाभिसमीक्ष्याहं सञ्जय त्वामचूचुदं।
स समीक्ष्य क्रमोपेतो मुख्यः कालोऽयमागतः। अस्मिंश्चेदागते काले कार्य्यं न प्रतिपद्यसे। ४५८५
असम्भावितरूपस्त्वमानृशंसं करिष्यसि। तं त्वामयशसा स्पृष्टं न ब्रूयां यदि सञ्जय।
खरीवात्सल्यमाहुस्तन्निःसामर्थ्यमहेतुकं। सद्भिर्व्विगर्हितं मार्गं त्यज मूर्खनिषेवितं।
अविद्या वै महत्यस्ति यामिमां संश्रिताः प्रजाः। तव स्यात् यदि सद्वृत्तं तेन मे त्वं प्रियो भवेः।
धर्म्मार्थगुणयुक्तेन नेतरेण कथञ्चन। दैवमानुषयुक्तेन सद्भिराचरितेन च।

यो ह्येवमविनीतेन रमते पुत्त्रनप्तृणा। अनुत्थानवता चाऽपि दुर्व्विनीतेन दुर्द्धिया। ४५९०
रमते यस्तु पुत्त्रेण मोघं तस्य प्रजाफलं। अकुर्व्वन्तो हि कर्म्माणि कुर्व्वन्तो निन्दितानि च।
सुखं नैवेह नाऽमुत्र लभन्ते पुरुषाधमाः। युद्धाय क्षत्त्रियः सृष्टः सञ्जयेह जयाय च।
जयन् वा वध्यमानो वा प्राप्नोतीन्द्रसलोकतां। न शक्रभवने पुण्ये दिवि तत् विद्यते सुखं।
यदमित्रान् वशे कृत्वा क्षत्त्रियः सुखमेधते। मन्युना दह्यमानेन पुरुषेण मनस्विना।
निकृतेनेह बहुशः शत्रून् प्रति जिगीषया। आत्मानं वा परित्यज्य शत्रुं वा विनिपात्य च। ४५९५
अतोऽन्येन प्रकारेण शान्तिरस्य कुतो भवेत्। इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति।
यस्य स्वल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियं। प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनं।
ध्रुवञ्चाभावमभ्येति गत्वा गङ्गेव सागरं।
॥ पुत्त्र उवाच ॥ नेयं मतिस्त्वया वाच्या मातः पुत्त्रे विशेषतः। कारुण्यमेवात्र पश्यस्व भूत्वेह जडमूकवत्।
॥ मातोवाच ॥ अतो मे भूयसी नन्दिर्यदेवमनुपश्यसि। चोद्यं मां चोदयस्येतत् भृशं वै चोदयामि ते। ४६००
अथ त्वां पूजयिष्यामि हत्वा वै सर्व्वसैन्धवान्। अहं पश्यामि विजयं कृत्स्नं भाविनमेव ते।
॥ पुत्त्र उवाच ॥ अकोशस्यासहायस्य कुतः सिद्धिर्ज्जयो मम। इत्यवस्थां विदित्वेमामात्मनात्मनि दारुणां।
राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतः। ईदृशं भवती कञ्चिदुपायमनुपश्यति।
तन्मे परिणतप्रज्ञे सम्यक् प्रब्रूहि पृच्छते। करिष्यामि हि तत् सर्व्वं यथावदनुशासनं।
॥ मातोवाच ॥ पुत्त्र नात्माऽवमन्तव्यः पूर्व्वाभिरसमृद्धिभिः। अभूत्वाऽभिभवन्त्यर्था भूत्वा नश्यन्ति चापरे। ४६०५
अमर्षेणैव चाप्यर्था नारब्धव्याः सुबालिशैः। सर्व्वेषां कर्म्मणां तात फले नित्यमनित्यता।
अनित्यमिति जानन्तो न भवन्ति भवन्ति च। अथ ये नैव कुर्व्वन्ति नैव जातु भवन्ति ते।
ऐकगुण्यमनीहायामभावः कर्म्मणां फलं। अथ द्वैगुण्यमीहायां फलं भवति वा नवा।
यस्य प्रागेव विदिता सर्व्वार्थानामनित्यता। नुदेद्वृद्धिसमृद्धी स प्रतिकूले नृपात्मज।
उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्म्मसु। भविष्यतीत्येव मनः कृत्वा सततमव्यथैः। ४६१०
मङ्गलानि पुरस्कृत्य ब्राह्मणांश्चेश्वरैः सह। प्राज्ञस्य नृपतेराशु वृद्धिर्भवति पुत्त्रक।
अभिवर्त्तति लक्ष्मीस्तं प्राचीमिव दिवाकरः। निदर्शनान्युपायांश्च बहून्युद्धर्षणानि च।
अनुदर्शितरूपोऽसि पश्यामि कुरु पौरुषं। पुरुषार्थमभिप्रेतं समाहर्त्तुमिहार्हसि।
क्रुद्धान् लुब्धान् परिक्षीणानवक्षिप्तान् विमानितान्। स्पर्द्धिनश्चैव ये केचित्तान् युक्त उपधारय।
एतेन त्वं प्रकारेण महतो भेत्स्यसे गणान्। महावेग इवोद्भूतो मातरिश्वा बलाहकान्। ४६१५
तेषामग्रप्रदायी स्याः कल्योत्थायी प्रियंवदः। ते त्वां प्रियं करिष्यन्ति पुरोधास्यन्ति च ध्रुवं।
यदैव शत्रुं जानीयात् सपत्नं त्यक्तजीवितं। तदैवास्मादुद्विजते सर्पाद्वेश्मगतादिव।
तं विदित्वा पराक्रान्तं वशे न कुरुते यदि। निर्व्वादैर्निर्व्वदेदेनमन्ततस्तद्भविष्यति।
निर्व्वादादास्पदं लब्ध्वा धनवृद्धिर्भविष्यति। धनवन्तं हि मित्त्राणि भजन्ते चाश्रयन्ति च।

स्खलितार्थं पुनस्तानि सन्त्यजन्ति च बान्धवाः । अप्यस्मिन्नाश्रयन्ते च जुगुप्सन्ते च तादृशं । ४६२०
शत्रुं कृत्वा यः सहायं विश्वासमुपगच्छति । अतः सम्भाव्यमेवैतत् यद्राज्यं प्राप्नुयादिति ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि विदुलापुत्रानुशासने चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥
॥ मातोवाच ॥ नैव राज्ञा दरः कार्य्यो जातु कस्याञ्चिदापदि । अथ चेदपि दीर्णः स्यान्नैव वर्त्तेत दीर्णवत् ।
दीर्णं हि दृष्ट्वा राजानं सर्व्वमेवानुदीर्य्यते । राष्ट्रं बलममात्याश्च पृथक् कुर्व्वन्ति ते मतीं ।
शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः । अन्ये तु प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ।
य एवात्यन्तसुहृदस्त एवं पर्य्युपासते । अशक्तयः स्वस्तिकामा बद्धवत्सा इडा इव । ४६२५
शोचन्तमनुशोचन्ति पतितानिव बान्धवान् । अपि ते पूजिताः पूर्व्वमपि ते सुहृदो मताः ।
ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुषः । मा दीदरस्त्वं सुहृदो मा त्वां दीर्णं प्रहासिषुः ।
प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव । विदधत्या समाश्वासमुक्तं तेजो विवृद्धये ।
यद्येतत् संविजानासि यदि सम्यग्ब्रवीम्यहं । कृत्वा सौम्यमिवात्मानं जयायोत्तिष्ठ सञ्जय ।
अस्ति नः कोषनिचयो महानविदितस्तव । तमहं वेद नान्यस्तमुपसम्पादयामि ते । ४६३०
सन्ति नैकशता भूयः सुहृदस्तव सञ्जय । सुखदुःखसहा वीर शतार्हा अनुवर्त्तिनः ।
तादृशा हि सहाया वै पुरुषस्य बुभूषतः । इष्टं जिहीर्षतः किञ्चित् सचिवाः शत्रुकर्षण ।
तस्यास्त्वीदृशकं वाक्यं श्रुत्वाऽपि स्वल्पचेतसः । तमस्त्वपागमत्तस्य सुचित्रार्थपदाक्षरं ।
॥ पुत्त्र उवाच ॥ उदके भूरियं धार्य्या मर्त्तव्यं प्रवणे मया । यस्य मे भवती नेत्री भविष्यत् भूतिदर्शिनी ।
अहं हि वचनं त्वत्तः शुश्रूषुरपरापरं । किञ्चित्किञ्चित् प्रतिवदंस्तूष्णीमासं मुहुर्मुहुः । ४६३५
अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवात् । उद्यच्छाम्येष शत्रूणां नियमाय जयाय च ।
॥ कुन्त्युवाच ॥ सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः । तच्चकार तथा सर्व्वं यथावदनुशासनं ।
इदमुद्धर्षणं भीमं तेजोवर्द्धनमुत्तमं । राजानं श्रावयेन्मन्त्री सीदन्तं शत्रुपीडितं ।
जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा । महीं विजयते क्षिप्रं श्रुत्वा शत्रूंश्च मर्द्दति ।
इदं पुंसवनञ्चैव वीराजननमेव च । अभीक्ष्णं गर्भिणी श्रुत्वा ध्रुवं वीरं प्रजायते । ४६४०
विद्याशूरं तपःशूरं दानशूरं तपस्विनं । ब्राह्म्या श्रिया दीप्यमानं साधुवादे च सम्मतं ।
अर्च्चिष्मन्तं बलोपेतं महाभागं महारथं । धृतिमन्तमनाधृष्यं जेतारमपराजितं ।
नियन्तारमसाधूनां गोप्तारं धर्म्मचारिणां । ईदृशं क्षत्त्रिया सूते वीरं सत्यपराक्रमं ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कुन्तीवाक्ये पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥
॥ कुन्त्युवाच ॥ अर्ज्जुनं केशव ब्रूयास्त्वयि जाते स्म सूतके । उपोपविष्टा नारीभिराश्रमे परिवारिता ।
अथान्तरीक्षे वागासीद्दिव्यरूपमनोरमा । सहस्राक्षसमः कुन्ति भविष्यत्येष ते सुतः । ४६४५
एष जेष्यति सङ्ग्रामे कुरून् सर्व्वान् समागतान् । भीमसेनद्वितीयश्च लोकमुद्वर्त्तयिष्यति ।
पुत्त्रस्ते पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् । हत्वा कुरूंश्च सङ्ग्रामे वासुदेवसहायवान् ।

पित्र्यमंशं प्रनष्टञ्च पुनरप्युद्धरिष्यति । भ्रातृभिः सहितः श्रीमांस्त्रीन्मेधानाहरिष्यति ।
स सत्यसन्धो बीभत्सुः सव्यसाची यथाऽच्युत । तथा त्वमेव जानासि बलवन्तं दुरासदं ।
तथा तदस्तु दाशार्ह यथा वागभ्यभाषत । धर्म्मश्चेदस्ति वार्ष्णेय तथा सत्यं भविष्यति । ॥४५१०
त्वञ्चापि तत्तथा कृष्ण सर्व्वं सम्पादयिष्यसि । नाहं तदभ्यसूयामि यथा वागभ्यभाषत ।
नमो धर्म्माय महते धर्म्मो धारयति प्रजाः । एतद्धनञ्जयो वाच्यो नित्योद्युक्तो वृकोदरः ।
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः । न हि वैरं समासाद्य सीदन्ति पुरुषर्षभाः ।
विदिता ते सदा बुद्धिर्भीमस्य न स शाम्यति । यावदन्तं न कुरुते शत्रूणां शत्रुकर्षणः ।
सर्व्वधर्म्मविशेषज्ञां स्नुषां पाण्डोर्महात्मनः । ब्रूया माधव कल्याणीं कृष्णां कृष्ण यशस्विनीं । ॥४५१५
युक्तमेतन्महाभागे कुले जाते यशस्विनि । यन्मे पुत्त्रेषु सर्व्वेषु यथावत्त्वमवर्त्तिथाः ।
माद्रीपुत्त्रौ च वक्तव्यौ क्षत्रधर्म्मरतावुभौ । विक्रमेणार्ज्जितान् भोगान् वृणीतं जीवितादपि ।
विक्रमाधिगता ह्यर्थाः क्षत्रधर्म्मेण जीवतः । मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ।
यच्च वः प्रेक्षमाणानां सर्व्वधर्म्मोपचायिनी । पाञ्चाली परुषाण्युक्ता को नु तत् क्षन्तुमर्हति ।
न राज्यहरणं दुःखं द्यूते चापि पराजयः । प्रव्राजनं सुतानां वा न मे तद् दुःखकारणं । ॥४५२०
यत्तु सा बृहती श्यामा सभायां रुदती तदा । अश्रौषीत् परुषा वाचस्तन्मे दुःखतरं मतम् ।
स्त्रीधर्म्मिणी वरारोहा क्षत्रधर्म्मरता सदा । नाध्यगच्छत्तदा नाथं कृष्णा नाथवती सती ।
तं वै ब्रूहि महाबाहो सर्व्वशस्त्रभृतां वरं । अर्ज्जुनं पुरुषव्याघ्रं द्रौपद्याः पदवीं चर ।
विदितौ हि तवात्यन्तं क्रुद्धाविव यमान्तकौ । भीमार्ज्जुनौ नयेतां हि देवानपि परां गतिं ।
तयोश्चैतदवज्ञानं यत् सा कृष्णा सभागता । दुःशासनश्च यद्भीमं कटुकान्यभ्यभाषत । ॥४५२५
पश्यतां कुरुवीराणां तच्च संस्मारयेः पुनः । पाण्डवान् कुशलं पृच्छेः सपुत्त्रान् कृष्णया सह ।
माञ्च कुशलिनीं ब्रूयास्तेषु भूयो जनार्द्दन । अरिष्टं गच्छ पन्थानं पुत्त्रान्मे परिपालय ।
॥ वैशम्पायन उवाच ॥ अभिवाद्याथ तां कृष्णः कृत्वा चाभिप्रदक्षिणं । निश्चक्राम महाबाहुः सिंहखेलगतिस्ततः ।
ततो विसर्ज्जयामास भीष्मादीन् कुरुपुङ्गवान् । आरोप्याथ रथे कर्णं प्रायात् सात्यकिना सह ।
ततः प्रयाते दाशार्हे कुरवः सङ्गता मिथः । जजल्पुर्महदाश्चर्य्यं केशवे परमाद्भुतं । ॥४५३०
प्रमूढा पृथिवी सर्व्वा मृत्युपाशवशीकृता । दुर्य्योधनस्य बालिश्यान्नैतदस्तीति चाब्रुवन् ।
ततो निर्य्याय नगरात् प्रययौ पुरुषोत्तमः । मन्त्रयामास च तदा कर्णेन सुचिरं सह ।
विसर्ज्जयित्वा राधेयं सर्व्वयादवनन्दनः । ततो जवेन महता तूर्णमश्वानचोदयत् ।
ते पिबन्त इवाकाशं दारुकेण प्रचोदिताः । हया जग्मुर्महावेगा मनोमारुतरंहसः ।
ते व्यतीत्य महाध्वानं क्षिप्रं श्येना इवाशुगाः । उच्चैर्ज्जग्मुरुपप्लव्यं शार्ङ्गधन्वानमावहन् । ॥४५३५
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कुन्तीवाक्ये षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

॥ वैशम्पायन उवाच ॥ कृष्णस्य तु वचनं श्रुत्वा भीष्मद्रोणौ महारथौ । दुर्य्योधनमिदं वाक्यमूचतुः शासनातिगं ।
श्रुतं ते पुरुषव्याघ्र कृष्णेन कृष्णस्य सन्निधौ । वाक्यमर्थवदव्यग्रमुक्तं धर्म्म्यमनुत्तमं ।
तत् करिष्यन्ति कौन्तेया वासुदेवस्य सम्मतं । न हि ते जातु शाम्येरन्नृते राज्येन कौरव ।
क्लेशिता हि त्वया पार्था धर्म्मपाशसिताः सदा । सभायां द्रौपदी चैव तैश्च तन्मर्षितं तव ।
कृतास्त्रं ह्यर्ज्जुनं प्राप्य भीमञ्च कृतनिश्चयं । गाण्डीवञ्चेषुधी चैव रथञ्च ध्वजमेव च । ४९८०
नकुलं सहदेवञ्च बलवीर्य्यसमन्वितौ । सहायं वासुदेवञ्च न क्षंस्यति युधिष्ठिरः ।
प्रत्यक्षन्ते महाबाहो यथा पार्थेन धीमता । विराटनगरे पूर्व्वं सर्व्वे स्म युधि निर्ज्जिताः ।
दानवा घोरकर्म्माणो निवातकवचा युधि । रौद्रमस्त्रं समादाय दग्धा वानरकेतुना ।
कर्णप्रभृतयश्चेमे त्वञ्चापि कवची रथी । मोचितो घोषयात्रायां पर्य्याप्तं तन्निदर्शनं ।
प्रशाम्य भरतश्रेष्ठ भ्रातृभिः सह पाण्डवैः । रक्षेमां पृथिवीं सर्व्वां मृत्योर्दंष्ट्रान्तरं गतां । ४९८५
ज्येष्ठो भ्राता धर्म्मशीलो वत्सलः श्लक्ष्णवाक् कविः । तं गच्छ पुरुषव्याघ्रं व्यपनीयेह किल्बिषं ।
दृष्टश्च त्वं पाण्डवेन व्यपनीतशरासनः । प्रशान्तभ्रुकुटिः श्रीमान् कृता शान्तिः कुलस्य नः ।
तमभ्येत्य सहामात्यः परिष्वज्य नृपात्मजं । अभिवादय राजानं यथापूर्व्वमरिन्दम ।
अभिवादयमानं त्वां पाणिभ्यां भीमपूर्व्वजः । प्रतिगृह्णातु सौहार्द्दात् कुन्तीपुत्रो युधिष्ठिरः ।
सिंहस्कन्धोरुबाहुस्त्वां वृत्तायतमहाभुजः । परिष्वजतु बाहुभ्यां भीमः प्रहरतां वरः । ४९९०
कम्बुग्रीवो गुडाकेशस्ततस्त्वां पुष्करेक्षणः । अभिवादयतां पार्थः कुन्तीपुत्रो धनञ्जयः ।
आश्विनेयौ नरव्याघ्रौ रूपेणाप्रतिमौ भुवि । तौ च त्वां गुरुवत् प्रेम्णा पूजया प्रत्युदीयतां ।
मुञ्चन्त्वानन्दजाश्रूणि दाशार्हप्रमुखा नृपाः । सङ्गच्छ भ्रातृभिः सार्द्धं मानं सन्त्यज्य पार्थिव ।
प्रशाधि पृथिवीं कृत्स्नां ततस्तं भ्रातृभिः सह । समालिङ्ग्य च हर्षेण नृपा यान्तु परस्परं ।
अलं युद्धेन राजेन्द्र सुहृदां शृणु कारणं । ध्रुवं विनाशो युद्धे हि क्षत्रियाणां प्रदृश्यते । ४९९५
ज्योतींषि प्रतिकूलानि दारुणा मृगपक्षिणः । उत्पाता विविधा वीर दृश्यन्ते क्षत्रनाशनाः ।
विशेषत इहास्माकं निमित्तानि निवेशने । उल्काभिर्हि प्रदीप्ताभिर्बाध्यते पृतना तव ।
वाहनान्यप्रहृष्टानि रुदन्तीव विशाम्पते । गृध्रास्ते पर्य्युपासन्ते सैन्यानि च समन्ततः ।
नगरं न यथा पूर्व्वं तथा राजनिवेशनं । शिवाश्चाशिवनिर्घोषा दीप्तां सेवन्ति वै दिशं ।
कुरु वाक्यं पितुर्म्मातुरस्माकञ्च हितैषिणां । त्वय्यायत्तो महाबाहो शमो व्यायाम एव च । ५०००
न चेत् करिष्यसि वचः सुहृदामरिकर्षण । तप्स्यसे वाहिनीं दृष्ट्वा पार्थबाणप्रपीडितां ।
भीमस्य च महानादं नदतः शुष्मिणो रणे । श्रुत्वा स्मर्त्तासि मे वाक्यं गाण्डीवस्य च निस्वनं ।
यद्येतदपसव्यन्ते वचो मम भविष्यति ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भीष्मद्रोणवाक्ये सप्तविंशदधिकशततमोऽध्यायः ॥ १२७ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु विमनास्तिर्य्यग्दृष्टिरधोमुखः । संहत्य च भ्रुवोर्मध्यं न किञ्चित् व्याजहार ह ।

तं वै विमनसं दृष्ट्वा सम्प्रेक्ष्यान्योन्यमन्तिकात्। पुनरेवोत्तरं वाक्यमुक्तवन्तौ नरर्षभौ। ४००५

॥ भीष्म उवाच ॥ शुश्रूषुमनसूयञ्च ब्रह्मण्यं सत्यवादिनं। प्रतियोत्स्यामहे पार्थमतो दुःखतरं नु किं।

॥ द्रोण उवाच ॥ अश्वत्थाम्नि यथा पुत्रे भूयो मम धनञ्जये। बहुमानः परो राजन् सन्नतिश्च कपिध्वजे।

तञ्च पुत्रात् प्रियतमं प्रतियोत्स्ये धनञ्जयं। क्षात्रं धर्ममनुष्ठाय धिगस्तु क्षत्रजीविकां।

यस्य लोके समो नास्ति कश्चिदन्यो धनुर्द्धरः। मत्प्रसादात् स बीभत्सुः श्रेयानन्यैर्धनुर्द्धरैः।

मित्रध्रुक् दुष्टभावश्च नास्तिकोऽथानृजुः शठः। न सत्सु लभते पूजां यज्ञे मूर्ख इवागतः। ४०१०

वार्य्यमाणोऽपि पापेभ्यः पापात्मा पापमिच्छति। चोद्यमानोऽपि पापेन शुभात्मा शुभमिच्छति।

मिथ्योपचरिता ह्येते वर्त्तमाना ह्यनुप्रिये। अहितत्वाय कल्पन्ते दोषा भरतसत्तम।

त्वमुक्तः कुरुवृद्धेन मया च विदुरेण च। वासुदेवेन च तथा श्रेयो नैवाभिपद्यसे।

अस्ति मे बलमित्येव सहसा त्वं तितीर्षसि। सग्राहनक्रमकरं गाङ्गवेग इवार्णवं।

वास एव यथा त्यक्तं प्रावृण्वानोऽद्य मन्यसे। स्रजं त्यक्तामिव प्राप्य लोभात् यौधिष्ठिरीं श्रियं। ४०१५

द्रौपदीसहितं पार्थं सायुधैर्भ्रातृभिर्वृतं। वनस्थमपि राज्यस्थः पाण्डवं को विजेष्यति।

निदेशे यस्य राजानः सर्व्वे तिष्ठन्ति किङ्कराः। तमैलविलमासाद्य धर्मराजो व्यराजत।

कुवेरसदनं प्राप्य ततो रत्नान्यवाप्य च। स्फीतमाक्रम्य ते राष्ट्रं राज्यमिच्छन्ति पाण्डवाः।

दत्तं हुतमधीतञ्च ब्राह्मणास्तर्पिता धनैः। आवयोर्गतमायुश्च कृतकृत्यौ हि विद्धि नौ।

त्वन्तु हित्वा सुखं राज्यं मित्राणि च धनानि च। विग्रहं पाण्डवैः कृत्वा महद्व्यसनमाप्स्यसि। ४०२०

द्रौपदी यस्य चाशास्ते विजयं सत्यवादिनी। तपोघोरव्रता देवी कथं जेष्यसि पाण्डवं।

मन्त्री जनार्द्दनो यस्य भ्राता यस्य धनञ्जयः। सर्व्वशस्त्रभृतां श्रेष्ठः कथं जेष्यसि पाण्डवं।

सहाया ब्राह्मणा यस्य धृतिमन्तो जितेन्द्रियाः। तमुग्रतपसं वीरं कथं जेष्यसि पाण्डवं।

पुनरुक्तञ्च वक्ष्यामि यत् कार्य्यं भूतिमिच्छता। सुहृदा मज्जमानेषु सुहृत्सु व्यसनार्णवे।

अलं युद्धेन तैर्व्वीरैः शाम्य त्वं कुरुवृद्धये। मागमः ससुतामात्यः सबलश्च पराभवं। ४०२५

॥ इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भीष्मद्रोणवाक्येऽष्टाविंशदधिकशततमोऽध्यायः॥ १२८ ॥

॥ धृतराष्ट्र उवाच ॥ राजपुत्रैः परिवृतस्तथाऽमात्यैश्च सञ्जय। उपारोप्य रथे कर्णं निर्यातो मधुसूदनः।

किमब्रवीदमेयात्मा राधेयं परवीरहा। कानि सान्त्वानि गोविन्दः सूतपुत्रे प्रयुक्तवान्।

उद्यन् मेघस्वनः काले कृष्णः कर्णमथाब्रवीत्। मृदु वा यदि वा तीक्ष्णं तन्ममाचक्ष्व सञ्जय।

॥ सञ्जय उवाच ॥ आनुपूर्व्व्येण वाक्यानि तीक्ष्णानि च मृदूनि च। प्रियाणि धर्म्मयुक्तानि सत्यानि च हितानि च।

हृदयग्रहणीयानि राधेयं मधुसूदनः। यान्यब्रवीदमेयात्मा तानि मे शृणु भारत। ४०३०

॥ वासुदेव उवाच ॥ उपासितास्ते राधेय ब्राह्मणा वेदपारगाः। तत्त्वार्थं परिपृष्टाश्च नियतेनानसूयया।

त्वमेव कर्ण जानासि वेदवादान् सनातनान्। त्वमेव धर्म्मशास्त्रेषु सूक्ष्मेषु परिनिष्ठितः।

कानीनश्च सहोढश्च कन्यायां यश्च जायते। वोढारं पितरं तस्य प्राहुः शास्त्रविदो जनाः।

सोऽसि कर्ण तथा जातः पाण्डोः पुत्रोऽसि धर्म्मतः। निग्रहाद्धर्म्मशास्त्राणामेहि राजा भविष्यसि।
पितृपक्षे च ते पार्था मातृपक्षे च वृष्णयः। द्वौ पक्षावभिजानीहि त्वमेतौ पुरुषर्षभ। ४०२५
मया सार्द्धमितो यातमद्य त्वां तात पाण्डवाः। अभिजानन्तु कौन्तेयं पूर्व्वजातं युधिष्ठिरात्।
पादौ तव ग्रहीष्यन्ति भ्रातरः पञ्च पाण्डवाः। द्रौपदेयास्तथा पञ्च सौभद्रश्चापराजितः।
राजानो राजपुत्राश्च पाण्डवार्थे समागताः। पादौ तव ग्रहीष्यन्ति सर्व्वे चान्धकवृष्णयः।
हिरण्मयांश्च ते कुम्भान् राजतान् पार्थिवांस्तथा। ओषध्यः सर्व्वबीजानि सर्व्वरत्नानि वीरुधः।
राजन्या राजकन्याश्चाप्यानयन्त्वभिषेचनं। षष्ठे त्वाञ्च तथा काले द्रौपद्युपगमिष्यति। ४०३०
अग्निं जुहोतु वै धौम्यः संशितात्मा द्विजोत्तमः। अद्य त्वामभिषिञ्चन्तु चातुर्वैद्या द्विजातयः।
पुरोहितः पाण्डवानां ब्रह्मकर्म्मण्यवस्थितः। तथैव भ्रातरः पञ्च पाण्डवाः पुरुषर्षभाः।
द्रौपदेयास्तथा पञ्च पाञ्चालाश्चेदयस्तथा। अहञ्च त्वाऽभिषेक्ष्यामि राजानं पृथिवीपतिं।
युवराजस्तु ते राजा धर्म्मपुत्रो युधिष्ठिरः। गृहीत्वा व्यजनं श्वेतं धर्म्मात्मा संशितव्रतः।
उपान्वारोहतु रथं कुन्तीपुत्रो युधिष्ठिरः। छत्रञ्च ते महाश्वेतं भीमसेनो महाबलः। ४०३५
अभिषिक्तस्य कौन्तेयो धारयिष्यति मूर्द्धनि। किङ्किणीशतनिर्घोषं वैयाघ्रपरिवारणं।
रथं श्वेतहयैर्युक्तमर्ज्जुनो वाहयिष्यति। अभिमन्युश्च ते नित्यं प्रत्यासन्नो भविष्यति।
नकुलः सहदेवश्च द्रौपदेयाश्च पञ्च ये। पाञ्चालास्त्वानुयास्यन्ति शिखण्डी च महारथः।
अहञ्च त्वाऽनुयास्यामि सर्व्वे चान्धकवृष्णयः। दाशार्हाः परिवारास्ते दाशार्णाश्च विशाम्पते।
भुङ्क्ष्व राज्यं महाबाहो भ्रातृभिः सह पाण्डवैः। जपैर्होमैश्च संयुक्तो मङ्गलैश्च पृथग्विधैः। ४०४०
पुरोगमाश्च ते सन्तु द्रविडाः सह कुन्तलैः। अन्ध्रास्तालचराश्चैव चुचुपा वेणुपास्तथा।
स्तुवन्तु त्वाद्य बहुभिः स्तुतिभिः सूतमागधाः। विजयं वसुषेणस्य घोषयन्तु च पाण्डवाः।
स त्वं परिवृतः पार्थैर्नक्षत्रैरिव चन्द्रमाः। प्रशाधि राज्यं कौन्तेय कुन्तीञ्च प्रतिनन्दय।
मित्राणि ते प्रहृष्यन्तु व्यथन्तु रिपवस्तथा। सौभ्रात्रञ्चैव तेऽद्यास्तु भ्रातृभिः सह पाण्डवैः।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवद्वाक्ये एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

॥ कर्ण उवाच ॥ असंशयं सौहृदान्मे प्रणयाच्चाथ केशव। सख्येन चैव वार्ष्णेय श्रेयस्कामतयैव च। ४०४५
सर्व्वञ्चैवाभिजानामि पाण्डोः पुत्रोऽस्मि धर्म्मतः। निग्रहाद्धर्म्मशास्त्राणां यथा त्वं कृष्ण मन्यसे।
कन्या गर्भं समाधत्त भास्करान्मां जनार्द्दन। आदित्यवचनाच्चैव जातं मां सा व्यसर्ज्जयत्।
सोऽस्मि कृष्ण तथा जातः पाण्डोः पुत्रोऽस्मि धर्म्मतः। कुन्त्या त्वहमपाकीर्णो यथा न कुशलं तथा।
सूतो हि मामधिरथो दृष्ट्वैवाभ्यनयत् गृहान्। राधायाश्चैव मां प्रादात् सौहार्द्दान्मधुसूदन।
मत्स्नेहाच्चैव राधायाः सद्यः क्षीरमवातरत्। सा मे मूत्रं पुरीषञ्च प्रतिजग्राह माधव। ४०५०
तस्याः पिण्डव्यपनयं कुर्य्यादस्मद्विधः कथं। धर्म्मविद्धर्म्मशास्त्राणां श्रवणे सततं रतः।
तथा मामभिजानाति सूतश्चाधिरथः सुतं। पितरञ्चाभिजानामि तमहं सौहृदात् सदा।

स हि मे जातकर्म्मादि कारयामास माधव। शास्त्रदृष्टेन विधिना पुत्रप्रीत्या जनार्दन।
नाम वै वसुषेणेति कारयामास वै द्विजैः। भार्य्याश्चोढा मम प्राप्ते यौवने तत्परिग्रहात्।
तासु पुत्राश्च पौत्राश्च मम जाता जनार्दन। तासु मे हृदयं कृष्ण सञ्जातं कामबन्धनं। ४७६५
न पृथिव्या सकलया न सुवर्णस्य राशिभिः। हर्षाद्भयाद्वा गोविन्द मिथ्या कर्त्तुं तदुत्सहे।
धृतराष्ट्रकुले कृष्ण दुर्य्योधनसमाश्रयात्। मया त्रयोदश समा भुक्तं राज्यमकण्टकं।
इष्टञ्च बहुभिर्यज्ञैः सह सूतैर्मयाऽसकृत्। आवाहाश्च विवाहाश्च सह सूतैर्मया कृताः।
माञ्च कृष्ण समासाद्य कृतः शस्त्रसमुद्यमः। दुर्य्योधनेन वार्ष्णेय विग्रहश्चापि पाण्डवैः।
तस्माद्रणे द्वैरथे मां प्रत्युद्यातारमच्युत। वृतवान् परमं कृष्ण प्रतीपं सव्यसाचिनः। ४७७०
वधाद्बन्धाद्भयाद्वाऽपि लोभाद्वाऽपि जनार्दन। अनृतं नोत्सहे कर्त्तुं धार्त्तराष्ट्रस्य धीमतः।
यदि ह्यद्य न गच्छेयं द्वैरथं सव्यसाचिना। अकीर्त्तिः स्याद्धृषीकेश मम पार्थस्य चोभयोः।
असंशयं हितार्थाय ब्रूयास्त्वं मधुसूदन। सर्वञ्च पाण्डवाः कुर्य्युस्त्वद्वशित्वान्न संशयः।
मन्त्रस्य नियमं कुर्य्यास्त्वमत्र मधुसूदन। एतदत्र हितं मन्ये सर्वयादवनन्दन।
यदि जानाति मां राजा धर्म्मात्मा संयतेन्द्रियः। कुन्त्याः प्रथमजं पुत्रं न स राज्यं ग्रहीष्यति। ४७७५
प्राप्य चापि महद्राज्यं तदहं मधुसूदन। स्फीतं दुर्य्योधनायैव सम्प्रदद्यामरिन्दम।
स एव राजा धर्म्मात्मा शाश्वतोऽस्तु युधिष्ठिरः। नेता यस्य हृषीकेशो योद्धा यस्य धनञ्जयः।
पृथिवी तस्य राष्ट्रञ्च यस्य भीमो महारथः। नकुलः सहदेवश्च द्रौपदेयाश्च माधव।
धृष्टद्युम्नश्च पाञ्चाल्यः सात्यकिश्च महारथः। उत्तमौजा युधामन्युः सत्यधर्म्मा च सोमकिः।
चैद्यश्च चेकितानश्च शिखण्डी चापराजितः। इन्द्रगोपकवर्णाश्च केकया भ्रातरस्तथा। ४७८०
इन्द्रायुधसवर्णश्च कुन्तिभोजो महामनाः। मातुलो भीमसेनस्य श्येनजिच्च महारथः।
शङ्खः पुत्रो विराटस्य निधिस्त्वञ्च जनार्दन। महानयं कृष्ण कृतः क्षत्रस्य समुदानयः।
राज्यं प्राप्तमिदं दीप्तं प्रथितं सर्वराजसु। धार्त्तराष्ट्रस्य वार्ष्णेय शस्त्रयज्ञो भविष्यति।
अस्य यज्ञस्य वेत्ता त्वं भविष्यसि जनार्दन। आध्वर्य्यवञ्च ते कृष्ण क्रतावस्मिन् भविष्यति।
होता चैवात्र बीभत्सुः सन्नद्धः स कपिध्वजः। गाण्डीवं स्रुक् तथाज्यञ्च वीर्य्यं पुंसां भविष्यति। ४७८५
ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णञ्च माधव। मन्त्रास्तत्र भविष्यन्ति प्रयुक्ताः सव्यसाचिना।
अनुयातश्च पितरमधिको वा पराक्रमे। गीतं स्तोत्रं स सौभद्रः सम्यक् तत्र भविष्यति।
उद्गाताऽत्र पुनर्भीमः प्रस्तोता सुमहाबलः। विनदन् स नरव्याघ्रो नागानीकान्तकृद्रणे।
स चैव तत्र धर्म्मात्मा शश्वद्राजा युधिष्ठिरः। जपैर्होमैश्च संयुक्तो ब्रह्मत्वं कारयिष्यति।
शङ्खशब्दाः समुरजा भेर्य्यश्च मधुसूदन। उत्कृष्टः सिंहनादश्च सुब्रह्मण्यो भविष्यति। ४७९०
नकुलः सहदेवश्च माद्रीपुत्रौ यशस्विनौ। शामित्रं तौ महावीर्य्यौ सम्यक् तत्र करिष्यतः।
कल्माषदण्डा गोविन्द विमला रथपङ्क्तयः। यूपाः समुपकल्पन्तामस्मिन् यज्ञे जनार्दन।

कर्णिनालीकनाराचा वत्सदन्तोपबृंहणाः। तोमराः सोमकलशाः पवित्राणि धनूंषि च।
असयोऽत्र कपालानि पुरोडाशाः शिरांसि च। हविस्तु रुधिरं कृष्ण तस्मिन् यज्ञे भविष्यति।
इध्माः परिधयश्चैव शक्त्यो विमला गदाः। सदस्या द्रोणशिष्याश्च कृपस्य च शरद्वतः। ४७९५
इषवोऽत्र परिस्तोमा मुक्ता गाण्डीवधन्वना। महारथप्रयुक्ताश्च द्रोणद्रौणिप्रचोदिताः।
प्रातिप्रस्थानिकं कर्म्म सात्यकिस्तु करिष्यति। दीक्षितो धार्त्तराष्ट्रोऽत्र पत्नी चास्य महाचमूः।
घटोत्कचोऽत्र शामित्रं करिष्यति महाबलः। अतिरात्रे महाबाहो वितते यज्ञकर्म्मणि।
दक्षिणा त्वस्य यज्ञस्य धृष्टद्युम्नः प्रतापवान्। वैतानिके कर्म्ममुखे जातो यः कृष्ण पावकात्।
यदब्रुवमहं कृष्ण कटुकानि स्म पाण्डवान्। प्रियार्थं धार्त्तराष्ट्रस्य तेन तप्ये ऽद्य कर्म्मणा। ४८००
यदा द्रक्ष्यसि मां कृष्ण निहतं सव्यसाचिना। पुनश्चितिस्तदा चास्य यज्ञस्याथ भविष्यति।
दुःशासनस्य रुधिरं यदा पास्यति पाण्डवः। आनर्दं नर्दतः सम्यक् तदा सुत्यं भविष्यति।
यदा द्रोणञ्च भीष्मञ्च पाञ्चाल्यौ पातयिष्यतः। तदा यज्ञावसानन्तत् भविष्यति जनार्दन।
दुर्य्योधनं यदा हन्ता भीमसेनो महाबलः। तदा समाप्स्यते यज्ञो धार्त्तराष्ट्रस्य माधव।
स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य सङ्गताः। हतेश्वरा हतपुत्रा हतनाथाश्च केशव। ४८०५
रुदन्त्यः सह गान्धार्य्या श्वगृध्रकुरराकुले। स यज्ञेऽस्मिन्नवभृथो भविष्यति जनार्दन।
विद्यावृद्धा वयोवृद्धाः क्षत्रियाः क्षत्रियर्षभ। वृथा मृत्युं न कुर्व्वीरंस्त्वत्कृते मधुसूदन।
शस्त्रेण निधनं गच्छेत् समृद्धं क्षत्रमण्डलं। कुरुक्षेत्रे पुण्यतमे त्रैलोक्यस्यापि केशव।
तदत्र पुण्डरीकाक्ष विधत्स्व यदभीप्सितं। यथा कार्त्स्न्येन वार्ष्णेय क्षत्रं स्वर्गमवाप्नुयात्।
यावत् स्थास्यन्ति गिरयः सरितश्च जनार्दन। तावत् कीर्त्तिभवः शब्दः शाश्वतोऽयं भविष्यति। ४८१०
ब्राह्मणाः कथयिष्यन्ति महाभारतमाहवं। समागमेषु वार्ष्णेय क्षत्रियाणां यशोधनं।
समुपानय कौन्तेयं युद्धाय मम केशव। मन्त्रसंवरणं कुर्व्वन्नित्यमेव परन्तप।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कर्णवाक्ये चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥
॥ सञ्जय उवाच ॥ कर्णस्य वचनं श्रुत्वा केशवः परवीरहा। उवाच प्रहसन् वाक्यं स्मितपूर्व्वमिदं तदा।
॥ भगवानुवाच ॥ अपि त्वां न लभेत् कर्ण राज्यलम्भोपपादनं। मया दत्तां हि पृथिवीं न प्रशासितुमिच्छसि।
ध्रुवो जयः पाण्डवानामितीदं न संशयः कश्चन विद्यतेऽत्र। जयध्वजो दृश्यते पाण्डवस्य समुच्छ्रितो वानरकेतुरुग्रः। ४८१५
दिव्या माया विहिता भौमनेन समुच्छ्रिता इन्द्रकेतुप्रकाशाः। दिव्यानि भूतानि जयावहानि दृश्यन्ति चैवात्र भयानकानि।
न सज्जते शैलवनस्पतिभ्य ऊर्द्धं तिर्य्यग्योजनमात्ररूपः। श्रीमान् ध्वजः कर्ण धनञ्जयस्य समुच्छ्रितः पावकतुल्यरूपः।
यदा द्रक्ष्यसि सङ्ग्रामे श्वेताश्वं कृष्णसारथिं। ऐन्द्रमस्त्रं विकुर्व्वाणमुभे चाप्यग्निमारुते।
गाण्डीवस्य च निर्घोषं विस्फूर्जितमिवाशनेः। न तदा भविता त्रेता न कृतं द्वापरं न च।
यदा द्रक्ष्यसि सङ्ग्रामे कुन्तीपुत्रं युधिष्ठिरं। जपहोमसमायुक्तं स्वां रक्षन्तं महाचमूं। ४८२०

आदित्यमिव दुर्द्धर्षं तपन्तं शत्रुवाहिनीं । न तदा भविता त्रेता न कृतं द्वापरं न च ।
यदा द्रक्ष्यसि संग्रामे भीमसेनं महाबलं । दुःशासनस्य रुधिरं पीत्वा नृत्यन्तमाहवे ।
प्रभिन्नमिव मातङ्गं प्रतिद्विरदघातिनं । न तदा भवति त्रेता न कृतं द्वापरं न च ।
यदा द्रक्ष्यसि संग्रामे द्रोणं शान्तनवं कृपं । सुयोधनञ्च राजानं सैन्धवञ्च जयद्रथं ।
युद्धायापततस्तूर्णं वारितान् सव्यसाचिना । न तदा भवति त्रेता न कृतं द्वापरं न च । ४८२५
यदा द्रक्ष्यसि संग्रामे माद्रीपुत्रौ महाबलौ । वाहिनीं धार्त्तराष्ट्राणां क्षोभयन्तौ गजाविव ।
विगाढे शस्त्रसम्पाते परवीररथारुजौ । न तदा भविता त्रेता न कृतं द्वापरं न च ।
ब्रूयाः कर्ण इतो गत्वा द्रोणं शान्तनवं कृपं । सौम्योऽयं वर्त्तते मासः सुप्रापयवसेन्धनः ।
सर्व्वौषधिवनस्फीतः फलवानल्पमक्षिकः । निष्पङ्को रसवत्तोयो नात्युष्णः शिशिरः सुखः ।
सप्तमाच्चापि दिवसादमावास्या भविष्यति । संग्रामो युज्यतां तस्यां तामाहुः शक्रदेवतां । ४८३०
तथा राज्ञो वदेः सर्व्वान् ये युद्धायाभ्युपागताः । यद्वो मनीषितं तद्वै सर्व्वं सम्पादयाम्यहं ।
राजानो राजपुत्राश्च दुर्य्योधनवशानुगाः । प्राप्य शस्त्रेण निधनं प्राप्स्यन्ति गतिमुत्तमां ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवद्वाक्ये एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥
॥ सञ्जय उवाच ॥ केशवस्य तु तद्वाक्यं कर्णः श्रुत्वा हितं शुभं । अब्रवीदभिसंपूज्य कृष्णं तं मधुसूदनं ।
जानन् मां किं महाबाहो संमोहयितुमिच्छसि । योऽयं पृथिव्याः कार्त्स्न्येन विनाशः समुपस्थितः ।
निमित्तं तत्र शकुनिरहं दुःशासनस्तथा । दुर्य्योधनश्च नृपतिर्धृतराष्ट्रसुतोऽभवत् । ४८३५
असंशयमिदं कृष्ण महद्युद्धमुपस्थितं । पाण्डवानां कुरूणाञ्च घोरं रुधिरकर्द्दमं ।
राजानो राजपुत्राश्च दुर्य्योधनवशानुगाः । रणे शस्त्राग्निना दग्धाः प्राप्स्यन्ति यमसादनं ।
स्वप्ना हि बहवो घोरा दृश्यन्ते मधुसूदन । निमित्तानि च घोराणि तथोत्पाताः सुदारुणाः ।
पराजयं धार्त्तराष्ट्रे विजयञ्च युधिष्ठिरे । शंसन्त इति वार्ष्णेय विविधा रोमहर्षणाः ।
प्राजापत्यं हि नक्षत्रं ग्रहस्तीक्ष्णो महाद्युतिः । शनैश्चरः पीडयति पीडयन् प्राणिनोऽधिकं । ४८४०
कृत्वा चाङ्गारको वक्रं ज्येष्ठायां मधुसूदन । अनुराधां प्रार्थयते मैत्रं संशमयन्निव ।
नूनं महद्भयं कृष्ण कुरूणां समुपस्थितं । विशेषेण हि वार्ष्णेय चित्रां पीडयते ग्रहः ।
सोमस्य लक्ष्म व्यावृत्तं राहुरर्कमुपेति च । दिवश्चोल्काः पतन्त्येताः सनिर्घाताः सकम्पनाः ।
निष्टनन्ति च मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः । पानीयं यवसञ्चापि नाभिनन्दन्ति माधव ।
प्रादुर्भूतेषु चैतेषु भयमाहुरुपस्थितं । निमित्तेषु महाबाहो दारुणं प्राणिनाशनं । ४८४५
अल्पे भुक्ते पुरीषञ्च प्रभूतमिह दृश्यते । वाजिनां वारणानाञ्च मनुष्याणाञ्च केशव ।
धार्त्तराष्ट्रेषु सैन्येषु सर्व्वेषु मधुसूदन । पराभवस्य तल्लिङ्गमिति प्राहुर्मनीषिणः ।
प्रहृष्टं वाहनं कृष्ण पाण्डवानां प्रचक्षते । प्रदक्षिणा मृगाश्चैव तत्तेषां जयलक्षणं ।
अपसव्या मृगाः सर्व्वे धार्त्तराष्ट्रस्य केशव । वाचश्चाप्यशरीरिण्यस्तत्पराभवलक्षणं ।

मयूराः पुष्पशकुना हंससारसचातकाः । जीवञ्जीवकसङ्घाश्चाप्यनुगच्छन्ति पाण्डवान्। ४८५०
गृध्राः कङ्का बका श्येना यातुधानास्तथा वृकाः । मक्षिकाणाञ्च सङ्घाता अनुधावन्ति कौरवान् ।
धार्त्तराष्ट्रस्य सैन्येषु भेरीणां नास्ति निःस्वनः । अनाहताः पाण्डवानां नदन्ति पटहाः किल ।
उदपानाश्च नर्द्दन्ति यथा गोवृषभास्तथा । धार्त्तराष्ट्रस्य सैन्येषु तत् पराभवलक्षणं ।
मांसशोणितवर्षञ्च वृष्टं देवेन माधव । तथा गन्धर्व्वनगरं भानुमत्समुपस्थितं ।
सप्राकारं सपरिघं सवप्रं चारुतोरणं । कृष्णश्च परिघस्तत्र भानुमावृत्य तिष्ठति । ४८५५
उदयास्तमने सन्ध्ये वेदयन्ती महद्भयं । एकपक्षाक्षिचरणस्तत्र नर्द्दन्ते घोरदर्शनं ।
पक्षिणो व्याहरन् घोरं तत्पराभवलक्षणं । शिवा च वाशते घोरं तत् पराभवलक्षणं ।
कृष्णग्रीवाश्च शकुना रक्तपादा भयानकाः । सन्ध्यामभिमुखा यान्ति तत् पराभवलक्षणं ।
ब्राह्मणान् प्रथमं द्वेष्टि गुरूंश्च मधुसूदन । भृत्यान् भक्तिमतश्चापि तत् पराभवलक्षणं ।
पूर्व्वादिग्लोहिताकारा शस्त्रवर्णा च दक्षिणा । आमपात्रप्रतीकाशा पश्चिमा मधुसूदन । ४८६०
प्रदीप्ताश्च दिशः सर्व्वा धार्त्तराष्ट्रस्य माधव । महद्भयं वेदयन्ति तस्मिन्नुत्पातदर्शने ।
सहस्रपादं प्रासादं स्वप्नान्ते च युधिष्ठिरः । अधिरोहन्मया दृष्टः सह भ्रातृभिरच्युत ।
श्वेतोष्णीषाश्च दृश्यन्ते सर्व्वे ते वै सुवाससः । आसनानि च शुभ्राणि सर्व्वेषामुपलक्षये ।
तव चापि मया कृष्ण स्वप्नान्ते रुधिराविला । आन्त्रेण पृथिवी दृष्टा परिक्षिप्ता जनार्द्दन ।
अस्थिसञ्चयमारूढश्चामितौजा युधिष्ठिरः । सुवर्णपात्र्यां संहृष्टो भुक्तवान् घृतपायसं । ४८६५
युधिष्ठिरो मया दृष्टो ग्रसमानो वसुन्धरां । त्वया दत्तामिमां व्यक्तं भोक्ष्यते स वसुन्धरां ।
उच्चपर्व्वतमारूढो भीमकर्म्मा वृकोदरः । गदापाणिर्नरव्याघ्रो ग्रसन्निव महीमिमां ।
क्षपयिष्यति नः सर्व्वान् स सुव्यक्तं महारणे । विदितं मे हृषीकेश यतो धर्म्मस्ततो जयः ।
पाण्डुरं गजमारूढो गाण्डीवी स धनञ्जयः । त्वया सार्द्धं हृषीकेश श्रिया परमया ज्वलन्।
यूयं सर्व्वान् वधिष्यध्वं तत्र मे नास्ति संशयः । पार्थिवान् समरे कृष्ण दुर्य्योधनपुरोगमान् । ४८७०
नकुलः सहदेवश्च सात्यकिश्च महारथः । शुद्धकेयूरकण्ठत्राः शुक्लमाल्याम्बरावृताः ।
अधिरूढा नरव्याघ्रा नरवाहनमुत्तमं । त्रय एते मया दृष्टाः पाण्डुरच्छत्रवाससः ।
श्वेतोष्णीषाश्च दृश्यन्ते त्रय एते जनार्द्दन । धार्त्तराष्ट्रेषु सैन्येषु तान् विजानीहि केशव।
अश्वत्थामा कृपश्चैव कृतवर्म्मा च सात्वतः । रक्तोष्णीषाश्च दृश्यन्ते सर्व्वे माधव पार्थिवाः ।
उष्ट्रप्रयुक्तमारूढौ भीष्मद्रोणौ महारथौ । मया सार्द्धं महाबाहो धार्त्तराष्ट्रेण वा विभो । ४८७५
अगस्त्यशास्तां च दिशं प्रयाताः स्म जनार्द्दन । अचिरेणैव कालेन प्राप्स्यामो यमसादनं ।
अहञ्चान्ये च राजानो यच्च तत् क्षत्रमण्डलं । गाण्डीवाग्निं प्रवेक्ष्याम इति मे नास्ति संशयः ।
॥ कृष्ण उवाच ॥ उपस्थितविनाशेयं नूनमद्य वसुन्धरा । तथा हि मे वचः कर्ण नोपैति हृदयं तव ।
सर्व्वेषां तात भूतानां विनाशे समुपस्थिते । अनयो नयसङ्काशो हृदयान्नापसर्पति ।

॥ कर्ण उवाच ॥ अपि त्वां कृष्ण पश्याम जीवन्तोऽस्मान्महारणात् । समुत्तीर्णा महाबाहो वीरक्षयविनाशनात् । ४८८०

अथ वा सङ्गमः कृष्ण स्वर्गे नो भविता ध्रुवं । तत्रेदानीं समेष्यामः पुनः सार्द्धं त्वयाऽनघ ।

॥ सञ्जय उवाच ॥ इत्युक्त्वा माधवं कर्णः परिष्वज्य च पीडितं । विसर्ज्जितः केशवेन रथोपस्थादवातरत् ।

ततः स्वरथमास्थाय जाम्बूनदविभूषितं । सहास्माभिर्न्निववृते राधेयो दीनमानसः ।

ततः शीघ्रतरं प्रायात् केशवः सहसात्यकिः । पुनरुच्चारयन् वाणीं याहि याहीति सारथिं ।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कृष्णकर्णसंवादे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

॥ वैशम्पायन उवाच ॥ असिद्धानुनये कृष्णे कुरुभ्यः पाण्डवान् गते । अभिगम्य पृथां क्षत्ता शनैः शोचन्निवाब्रवीत् । ४८८५

जानासि मे जीवपुत्रि भावं नित्यमविग्रहे । क्रोशतो न च गृह्णीते वचनं मे सुयोधनः ।

उपपन्नो ह्यसौ राजा चेदिपाञ्चालकेकयैः । भीमार्ज्जुनाभ्यां कृष्णेन युयुधानयमैरपि ।

उपप्लव्ये निविष्टोऽपि धर्म्ममेव युधिष्ठिरः । काङ्क्षते ज्ञातिसौहार्द्दाद्बलवान् दुर्ब्बलो यथा ।

राजा तु धृतराष्ट्रोऽयं वयोवृद्धो न शाम्यति । मत्तः पुत्रमदेनैव विधर्म्मे पथि वर्त्तते ।

जयद्रथस्य कर्णस्य तथा दुःशासनस्य च । सौबलस्य च दुर्ब्बुद्ध्या मिथो भेदः प्रवर्त्स्यति । ४८९०

अधर्म्मेण हि धर्म्मिष्ठं हृतं वै राज्यमीदृशं । येषां तेषामयं धर्म्मः सानुबन्धो भविष्यति ।

ह्रियमाणे बलाद्धर्म्मे कुरुभिः को न संज्वरेत् । असाम्ना केशवे याते समुद्योक्ष्यन्ति पाण्डवाः ।

ततः कुरूणामनयो भविता वीरनाशनः । चिन्तयन्न लभे निद्रामहःसु च निशासु च ।

श्रुत्वा तु कुन्ती तद्वाक्यमर्थकामेन भाषितं । सा निःश्वसन्ती दुःखार्त्ता मनसा विममर्श ह ।

धिगस्त्वर्थं यत्कृतेऽयं महान् ज्ञातिवधः कृतः । वर्त्स्यते सुहृदाञ्चैव युद्धेऽस्मिन् वै पराभवः । ४८९५

पाण्डवाश्चेदिपाञ्चाला यादवाश्च समागताः । भारतैः सह योत्स्यन्ति किन्नु दुःखमतः परं ।

पश्ये दोषं ध्रुवं युद्धे तथाऽयुद्धे पराभवं । अधनस्य मृतं श्रेयो न हि ज्ञातिक्षयो जयः ।

इति मे चिन्तयन्त्या वै हृदि दुःखं प्रवर्त्तते । पितामहः शान्तनव आचार्य्यश्च युधाम्पतिः ।

कर्णश्च धार्त्तराष्ट्रार्थं वर्द्धयन्ति भयं मम । नाचार्य्यः कामवान् शिष्यैर्द्रोणो युध्येत जातुचित् ।

पाण्डवेषु कथं हार्द्दं कुर्य्यान्न च पितामहः । अयमेको वृथादृष्टिर्धार्त्तराष्ट्रस्य दुर्म्मतेः । ४९००

मोहानुवर्त्ती सततं पापो द्वेष्टि च पाण्डवान् । महत्यनर्थे निर्ब्बन्धी बलवांश्च विशेषतः ।

कर्णः सदा पाण्डवानां तन्मे दहति सम्प्रति । आशंसे त्वद्य कर्णस्य मनोऽहं पाण्डवान् प्रति ।

प्रसादयितुमासाद्य दर्शयन्ती यथातथं । तोषितो भगवान् यत्र दुर्व्वासा मे वरं ददौ ।

आह्वानं मन्त्रसंयुक्तं वसन्त्याः पितृवेश्मनि । साऽहमन्तःपुरे राज्ञः कुन्तिभोजपुरस्कृता ।

चिन्तयन्ती बहुविधं हृदयेन विदूयता । बलाबलञ्च मन्त्राणां ब्राह्मणस्य च वाग्बलं । ४९०५

स्त्रीभावाद्बालभावाच्च चिन्तयन्ती पुनःपुनः । धात्र्या विश्रब्धया गुप्ता सखीजनवृता तदा ।

दोषं परिहरन्ती च पितुश्चारित्ररक्षिणी । कथन्नु सुकृतं मे स्यान्नापराधवती कथं ।

भवेयमिति सञ्चिन्त्य ब्राह्मणं तं नमस्य च । कौतूहलात्तु तं लब्ध्वा बालिश्यादाचरं तदा ।

कन्या सती देवमर्कमावाहयमहं ततः। योऽसौ कानीनगर्भो मे पुत्रवत्परिरक्षितः।
कस्मान्न कुर्य्याद्वचनं पथ्यं भ्रातृहितं तथा। इति कुन्ती विनिश्चित्य कार्य्यनिश्चयमुत्तमं। ४९१०
कार्य्यार्थमभिनिश्चित्य ययौ भागीरथीं प्रति। आत्मजस्य ततस्तस्य घृणिनः सत्यसङ्गिनः।
गङ्गातीरे पृथाऽश्रौषीद्वेदाध्ययननिस्वनं। प्राङ्मुखस्योर्द्ध्वबाहोः सा पर्य्यतिष्ठत पृष्ठतः।
जप्यावसानं कार्य्यार्थं प्रतीक्षन्ती तपस्विनी। अतिष्ठत् सूर्य्यतापार्त्ता कर्णस्योत्तरवाससि।
कौरव्यपत्नी वार्ष्णेयी पद्ममालेव शुष्यती। आपृष्ठतापाज्जप्त्वा स परिवृत्य यतव्रतः।
दृष्ट्वा कुन्तीमुपातिष्ठदभिवाद्य कृताञ्जलिः। यथान्यायं महातेजा मानी धर्म्मभृतां वरः। ४९१५
उत्स्मयन् प्रणतः प्राह कुन्तीं वैकर्त्तनो वृषः।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कुन्तीकर्णसमागमे त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

॥ कर्ण उवाच ॥ राधेयोऽहमाधिरथिः कर्णस्त्वामभिवादये। प्राप्ता किमर्थं भवती ब्रूहि किं करवाणि ते।
॥ कुन्त्युवाच ॥ कौन्तेयस्त्वं न राधेयो न तवाधिरथः पिता। नासि सूतकुले जातः कर्ण तद्विद्धि मे वचः।
कानीनस्त्वं मया जातः पूर्व्वजः कुक्षिणा धृतः। कुन्तिराजस्य भवने जातस्त्वमसि पुत्रक।
प्रकाशकर्म्मा तपनो योऽयं देवो विरोचनः। अजीजनत् त्वां मय्येष कर्ण शस्त्रभृतां वरं। ४९२०
कुण्डली बद्धकवचो देवगर्भः श्रियावृतः। जातस्त्वमसि दुर्द्धर्षो मया पुत्र पितुर्गृहे।
स त्वं भ्रातॄनसम्बुध्य मोहाद्यदुपसेवसे। धार्त्तराष्ट्रान् न तद्युक्तं त्वयि पुत्र विशेषतः।
एतद्धर्म्मफलं पुत्र नराणां धर्म्मनिश्चये। यत्तुष्यन्त्यस्य पितरो माता चाप्येकदर्शिनी।
अर्ज्जुनेनार्ज्जितां पूर्व्वं हृतां लोभादसाधुभिः। आच्छिद्य धार्त्तराष्ट्रेभ्यो भुङ्क्ष्व यौधिष्ठिरीं श्रियं।
अद्य पश्यन्तु कुरवः कर्णार्ज्जुनसमागमं। सौभ्रात्रेण समालक्ष्य सन्नमन्तामसाधवः। ४९२५
कर्णार्ज्जुनौ वै भवतां यथा रामजनार्द्दनौ। असाध्यं किन्नु लोके स्यात् युवयोः सहितात्मनोः।
कर्ण शोभिष्यसे नूनं पञ्चभिर्भ्रातृभिर्वृतः। देवैः परिवृतो ब्रह्मा वेदानामिव महाध्वरे।
उपपन्नो गुणैः सर्व्वैः ज्येष्ठः श्रेष्ठेषु बन्धुषु। सूतपुत्रेति मा शब्दः पार्थस्त्वमसि वीर्य्यवान्।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कुन्तीकर्णसमागमे चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

॥ वैशम्पायन उवाच ॥ ततः सूर्य्यान्निश्चरितां कर्णः शुश्राव भारतीं। दुरत्ययां प्रणयिनीं पितृवत् भास्करेरितां।
सत्यमाह पृथा वाक्यं कर्ण मातृवचः कुरु। श्रेयस्ते स्यान्नरव्याघ्र सर्व्वमाचरतस्तथा। ४९३०
॥ वैशम्पायन उवाच ॥ एवमुक्तस्य मात्रा च स्वयं पित्रा च भानुना। चचाल नैव कर्णस्य मतिः सत्यधृतेस्तदा।
॥ कर्ण उवाच ॥ न चैतत् श्रद्दधे वाक्यं क्षत्रिये भाषितं त्वया। धर्म्मद्वारं ममैतत् स्यान्नियोगकरणं तव।
अकरोन्मयि यत् पापं भवती सुमहात्ययं। अपाकीर्णोऽस्मि यन्मातस्तद्यशःकीर्त्तिनाशनं।
अहञ्चेत् क्षत्रियो जातो न प्राप्तः क्षत्रसत्क्रियां। त्वत्कृते किन्नु पापीयः शत्रुः कुर्य्यान्ममाहितं।
क्रियाकाले त्वनुक्रोशमकृत्वा त्वमिमं मम। हीनसंस्कारसमयमद्य मां समचूचुदः। ४९३५
न वै मम हितं पूर्व्वं मातृवच्चेष्टितं त्वया। सा मां सम्बोधयस्यद्य केवलात्महितैषिणी।

कृष्णेन सहितात् को वै न व्यथेत धनञ्जयात् । कोऽद्य भीतं न मां विद्यात् पार्थानां समितिं गतं ।
अभ्राता विदितः पूर्व्वं युद्धकाले प्रकाशितः । पाण्डवान् यदि गच्छामि किं मां क्षत्रं वदिष्यति ।
सर्व्वकामैः संविभक्तः पूजितश्च यथासुखं । अहं वै धार्त्तराष्ट्राणां कुर्य्यां तदफलं कथं ।
उपनद्ध्य परैर्वैरं ये मां नित्यमुपासते । नमस्कुर्व्वन्ति च सदा वसवो वासवं यथा ।    ४९७०
मम प्राणेन ये शत्रून् शक्ताः प्रतिसमासितुं । मन्यन्ते ते कथं तेषामहं छिन्द्यां मनोरथं ।
मया प्लवेन सङ्ग्रामं तितीर्षन्ति दुरत्ययं । अपारे पारकामा ये त्यजेयं तानहं कथं ।
अयं हि कालः सम्प्राप्तो धार्त्तराष्ट्रोपजीविनां । निर्व्वेष्टव्यं मया तत्र प्राणानपरिरक्षता ।
कृतार्थाः सुभृता ये हि कृत्यकाले ह्युपस्थिते । अनवेक्ष्य कृतं पापा विकुर्व्वन्त्यनवस्थिताः ।
राजकिल्बिषिणां तेषां भर्त्तृपिण्डापहारिणां । नैवायं न परो लोको विद्यते पापकर्म्मणां ।    ४९७५
धृतराष्ट्रस्य पुत्राणामर्थे योत्स्यामि ते सुतैः । बलञ्च शक्तिञ्चास्थाय न वै त्वय्यनृतं वदे ।
आनृशंस्यमथो वृत्तं रक्षन् सत्पुरुषोचितं । अतोऽर्थकरमप्येतन्न करोम्यद्य ते वचः ।
न च तेऽयं समारम्भो मयि मोघो भविष्यति । वध्यान् विषह्यान् सङ्ग्रामे न हनिष्यामि ते सुतान् ।
युधिष्ठिरञ्च भीमञ्च यमौ चैवार्ज्जुनादृते । अर्ज्जुनेन समं युद्धं मम यौधिष्ठिरे बले ।
अर्ज्जुनं हि निहत्याजौ सम्प्राप्तं स्यात् फलं मया । यशसा वाऽपि युज्येयं निहतः सव्यसाचिना ।    ४९८०
न ते जातु विनङ्क्ष्यन्ति पुत्त्राः पञ्च यशस्विनि । निरर्ज्जुनाः सकर्णा वा सार्ज्जुना वा हते मयि ।
इति कर्णवचः श्रुत्वा कुन्ती दुःखात् प्रवेपती । उवाच पुत्त्रमाश्लिष्य कर्णं धैर्य्यादकम्पनं ।
एवं वै भाव्यमेतेन क्षयं यास्यन्ति कौरवाः । यथा त्वं भाषसे कर्ण दैवन्तु बलवत्तरं ।
त्वया चतुर्णां भ्रातॄणामभयं शत्रुकर्षण । दत्तं तत् प्रतिजानीहि सङ्गरप्रतिमोचनं ।
अनामयं स्वस्ति चेति पृथाऽथो कर्णमब्रवीत् । तां कर्णोऽथ तथेत्युक्त्वा ततस्तौ जग्मतुः पृथक् ।    ४९८५

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कुन्तीकर्णसमागमे पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

॥ वैशम्पायन उवाच ॥ आगम्य हास्तिनपुरादुपप्लव्यमरिन्दमः । पाण्डवानां यथावृत्तं केशवः सर्व्वमुक्तवान् ।
सम्भाष्य सुचिरं कालं मन्त्रयित्वा पुनः पुनः । स्वमेव भवनं शौरिर्व्विश्रामार्थं जगाम ह ।
विसृज्य सर्व्वान्नृपतीन् विराटप्रमुखांस्तदा । पाण्डवा भ्रातरः पञ्च भानावस्तं गते सति ।
सन्ध्यामुपास्य ध्यायन्तस्तमेव गतमानसाः । आनाय्य कृष्णं दाशार्हं पुनर्म्मन्त्रममन्त्रयन् ।
॥ युधिष्ठिर उवाच ॥ त्वया नागपुरं गत्वा सभायां धृतराष्ट्रजः । किमुक्तः पुण्डरीकाक्ष तन्नः शंसितुमर्हसि ।    ४९९०
॥ वासुदेव उवाच ॥ मया नागपुरं गत्वा सभायां धृतराष्ट्रजः । तथ्यं पथ्यं हितञ्चोक्तो न च गृह्णाति दुर्म्मतिः ।
॥ युधिष्ठिर उवाच ॥ तस्मिन्नुत्पथमापन्ने कुरुवृद्धः पितामहः । किमुक्तवान् हृषीकेश दुर्य्योधनममर्षणं ।
आचार्य्यो वा महाभाग भारद्वाजः किमब्रवीत् । पिता वा धृतराष्ट्रस्तं गान्धारी वा किमब्रवीत् ।
पिता यवीयानस्माकं क्षत्ता धर्म्मविदां वरः । पुत्त्रशोकाभिसन्तप्तः किमाह धृतराष्ट्रजं ।
किञ्च सर्व्वे नृपतयः सभायां ये समासते । उक्तवन्तो यथातत्त्वं तद्ब्रूहि त्वं जनार्द्दन ।    ४९९५

उक्तवान् भगवान् सर्व्वं वचनं कुरुमुख्ययोः । धार्त्तराष्ट्रस्य तेषां हि वचनं कुरुसंसदि ।
कामलोभाभिभूतस्य मन्दस्य प्राज्ञमानिनः । अप्रियं हृदये मह्यं तन्न तिष्ठति केशव ।
तेषां वाक्यानि गोविन्द श्रोतुमिच्छाम्यहं विभो । यथा च नाभिपद्येत कालस्तात तथा कुरु ।
भवान् हि नो गतिः कृष्ण भवान्नाथो भवान् गुरुः ।
॥ वासुदेव उवाच ॥ शृणु राजन् यथा वाक्यमुक्तो राजा सुयोधनः । मध्ये कुरूणां राजेन्द्र सभायां तन्निबोध मे । ४९७०
मया विश्राविते वाक्ये जहास धृतराष्ट्रजः । अथ भीष्मः सुसंक्रुद्ध इदं वचनमब्रवीत् ।
दुर्य्योधन निबोधेदं कुलार्थे यद्ब्रवीमि ते । तच्छ्रुत्वा राजशार्दूल स्वकुलस्य हितं कुरु ।
मम तात पिता राजन् शान्तनुर्लोकविश्रुतः । तस्याहमेक एवासं पुत्त्रः पुत्त्रवतां वर ।
तस्य बुद्धिः समुत्पन्ना द्वितीयः स्यात् कथं सुतः । एकं पुत्त्रमपुत्त्रं वै प्रवदन्ति मनीषिणः ।
न चोच्छेदं कुलं यायात् विस्तीर्य्येत कथं यशः । तस्याहमीप्सितं बुद्ध्वा कालीं मातरमाहरं । ४९७५
प्रतिज्ञां दुष्करां कृत्वा पितुरर्थे कुलस्य च । अराजा चोर्द्ध्वरेताश्च यथा सुविदितं तव ।
प्रतीतो निवसाम्येष प्रतिज्ञामनुपालयन् । तस्यां जज्ञे महाबाहुः श्रीमान् कुरुकुलोद्वहः ।
विचित्रवीर्य्यो धर्म्मात्मा कनीयान्मम पार्थिव । स्वर्य्यातेऽहं पितरि तं स्वराज्ये संन्यवेशयं ।
विचित्रवीर्य्यं राजानं भृत्यो भूत्वा ह्यधश्चरः । तस्याहं सदृशान् दारान् राजेन्द्र समुपाहरं ।
जित्वा पार्थिवसङ्घातमपि ते बहुशः श्रुतं । ततो रामेण समरे द्वन्द्वयुद्धमुपागमं । ४९८०
स हि राम भयादेभिर्नागरैर्विप्रवासितः । दारेष्वतिप्रसक्तश्च यक्ष्माणं समपद्यत ।
यदा त्वराजके राज्ये न ववर्ष सुरेश्वरः । तदाऽभ्यधावन्मामेव प्रजाः क्षुद्भयपीडिताः ।
॥ प्रजा ऊचुः ॥ उपक्षीणाः प्रजाः सर्व्वा राजा भव भवाय नः । ईतीः प्रणुद भद्रन्ते शान्तनोः कुलवर्द्धन ।
पीड्यन्ते ते प्रजाः सर्व्वा व्याधिभिर्भृशदारुणैः । अल्पावशिष्टा गाङ्गेय ताः परित्रातुमर्हसि ।
व्याधीन् प्रणुद वीर त्वं प्रजा धर्म्मेण पालय । त्वयि जीवति माराष्ट्रं विनाशमुपगच्छतु । ४९८५
॥ भीष्म उवाच ॥ प्रजानां क्रोशतीनां वै नैवाक्षुभ्यत मे मनः । प्रतिज्ञां रक्षमाणस्य सद्वृत्तं स्मरतस्तथा ।
ततः पौरा महाराज माता काली च मे शुभा । भृत्याः पुरोहिताचार्य्या ब्राह्मणाश्च बहुश्रुताः ।
मामूचुर्भृशसन्तप्ता भव राजेति सन्ततं । प्रतीपरक्षितं राष्ट्रं त्वां प्राप्य विनशिष्यति ।
स त्वमस्मद्धितार्थं वै राजा भव महामते । इत्युक्तः प्राञ्जलिर्भूत्वा दुःखितो भृशमातुरः ।
तेभ्यो न्यवेदयन्तञ्च प्रतिज्ञां पितृगौरवात् । ऊर्द्ध्वरेता ह्यराजा च कुलस्यार्थे पुनः पुनः । ४९९०
विशेषतस्त्वदर्थञ्च धुरि मा मां नियोजय । ततोऽहं प्राञ्जलिर्भूत्वा मातरं सम्प्रसादयं ।
नाम्ब शान्तनुना जातः कौरवं वंशमुद्वहन् । प्रतिज्ञां वितथां कुर्य्यामिति राजन् पुनः पुनः ।
विशेषतस्त्वदर्थञ्च प्रतिज्ञां कृतवानहं । अहं प्रेष्यश्च दासश्च तवाम्ब सुतवत्सले ।
एवं तामनुनीयाहं मातरं जनमेव च । अयाचं भ्रातृदारेषु तदा व्यासं महामुनिं ।
सह मात्रा महाराज प्रसाद्य तमृषिं तदा । अपत्यार्थं महाराज प्रसादं कृतवांश्च सः । ४९९५

चीन् स पुत्रानजनयत् तदा भरतसत्तम। अन्धः करणहीनत्वान्नैव राजा पिता तव।
राजा तु पाण्डुरभवन्महात्मा लोकविश्रुतः। स राजा तस्य ते पुत्राः पितुर्दायाद्यहारिणः।
मा तात कलहं कार्षी राज्यस्यार्द्धं प्रदीयतां। मयि जीवति राज्यं कः संप्रार्थयेत् पुमानिह।
माऽवमंस्था वचो मह्यं शममिच्छामि वः सदा। न विशेषोऽस्ति मे पुत्र त्वयि तेषु च पार्थिव।
मतमेतत् पितुस्तुभ्यं गान्धार्य्या विदुरस्य च। श्रोतव्यं खलु वृद्धानां माऽभिशङ्कीर्वचो मम। ५०००
नाशयिष्यसि मा सर्व्वमात्मानं पृथिवीं तथा।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवद्वाक्ये षट्चत्वारिंशदधिकशततमोऽध्यायः॥ १४६ ॥

॥ वासुदेव उवाच ॥ भीष्मेणोक्ते ततो द्रोणो दुर्य्योधनमभाषत। मध्ये नृपाणां भद्रन्ते वचनं वचनक्षमः।
॥ द्रोण उवाच ॥ प्रातीपः शान्तनुस्तात कुलस्यार्थे यथा स्थितः। यथा देवव्रतो भीष्मः कुलस्यार्थे स्थितोऽभवत्।
तथा पाण्डुर्नरपतिः सत्यसन्धो जितेन्द्रियः। राजा कुरूणां धर्म्मात्मा सुव्रतः सुसमाहितः।
ज्येष्ठाय राज्यमददद्धृतराष्ट्राय धीमते। यवीयसे तथा क्षत्रे कुरूणां वंशवर्द्धनः। ५००५
ततः सिंहासने राजन् स्थापयित्वैनमच्युतं। वनं जगाम कौरव्यो भार्य्याभ्यां सहितो नृपः।
नीचैः स्थित्वा तु विदुर उपास्ते स्म विनीतवत्। प्रेष्यवत् पुरुषव्याघ्रो बालव्यजनमुत्क्षिपन्।
ततः सर्व्वाः प्रजास्तात धृतराष्ट्रं जनेश्वरं। अन्वपद्यन्त विधिवत् यथा पाण्डुं जनाधिपं।
विसृज्य धृतराष्ट्राय राज्यं स विदुराय च। चचार पृथिवीं पाण्डुः सर्व्वां परपुरञ्जयः।
कोशसञ्चयने दाने भृत्यानाञ्चान्ववेक्षणे। भरणे चैव सर्व्वस्य विदुरः सत्यसङ्गरः। ५०१०
सन्धिविग्रहसंयुक्तो राज्ञः संवाहनक्रियाः। अवैक्षत महातेजा भीष्मः परपुरञ्जयः।
सिंहासनस्थो नृपतिर्धृतराष्ट्रो महाबलः। अन्वास्यमानः सततं विदुरेण महात्मना।
कथं तस्य कुले जातः कुलभेदं व्यवस्यसि। सम्भूय भ्रातृभिः सार्द्धं भुङ्क्ष्व भोगान् जनाधिप।
ब्रवीम्यहं न कार्पण्यान्नार्थहेतोः कथञ्चन। भीष्मेण दत्तमिच्छामि न त्वया राजसत्तम।
नाहं त्वत्तोऽभिकाङ्क्षिष्ये वृत्त्युपायं जनाधिप। यतो भीष्मस्ततो द्रोणो यद्भीष्मस्त्वाह तत्कुरु। ५०१५
दीयतां पाण्डुपुत्रेभ्यो राज्यार्द्धमरिकर्षण। सममाचार्य्यकं तात तव तेषाञ्च मे सदा।
अश्वत्थामा यथा मह्यं तथा श्वेतहयो मम। बहुना किं प्रलापेन यतो धर्म्मस्ततो जयः।
॥ वासुदेव उवाच ॥ एवमुक्ते महाराज द्रोणेनामिततेजसा। व्याजहार ततो वाक्यं विदुरः सत्यसङ्गरः।
पितुर्व्वदनमन्वीक्ष्य परिवृत्य च धर्म्मवित्।
॥ विदुर उवाच ॥ देवव्रत निबोधेदं वचनं मम भाषतः। प्रनष्टः कौरवो वंशस्त्वया यत् पुनरुद्धृतः। ५०२०
तन्मे विलपमानस्य वचनं समुपेक्षसे। कोऽयं दुर्य्योधनो नाम कुलेऽस्मिन् कुलपांसनः।
तस्य लोभाभिभूतस्य मतिं समनुवर्त्तसे। अनार्य्यस्याकृतज्ञस्य लोभेन हृतचेतसः।
अतिक्रामति यः शास्त्रं पितुर्धर्म्मार्थदर्शिनः। एते नश्यन्ति कुरवो दुर्य्योधनकृतेन वै।
यथा ते न प्रणश्येयुर्महाराज तथा कुरु। माञ्चैव धृतराष्ट्रञ्च सर्व्वमेव महीपते।

चित्रकार इवालेख्यं कृत्वा स्थापितवानपि। प्रजापतिः प्रजाः सृष्ट्वा यथा संहरते तथा। ५०२५
नोपेक्षस्व महाबाहो पश्यमानः कुलक्षयं। अथ तेऽद्य मतिर्नष्टा विनाशे प्रत्युपस्थिते।
वनं गच्छ मया सार्द्धं धृतराष्ट्रेण चैव ह। बद्ध्वा वा निकृतिप्रज्ञं धार्त्तराष्ट्रं सुदुर्मतिं।
साध्विदं राज्यमद्यास्तु पाण्डवैरभिरक्षितं। प्रसीद राजशार्दूल विनाशो दृश्यते महान्।
पाण्डवानां कुरूणाञ्च राज्ञाञ्चामिततेजसां। विररामैवमुक्त्वा तु विदुरो दीनमानसः।
प्रध्यायमानः स तदा निःश्वसंश्च पुनः पुनः। ५०३०

ततोऽथ राज्ञः सुबलस्य पुत्री धर्मार्थयुक्तं कुलनाशभीता। दुर्य्योधनं पापमतिं नृशंसं राज्ञां समक्षं सुतमाह कोपात्।
ये पार्थिवा राजसभां प्रविष्टा ब्रह्मर्षयो ये च सभासदोऽन्ये। शृण्वन्तु वक्ष्यामि तवापराधं पापस्य सामात्यपरिच्छदस्य।
राज्यं कुरूणामनुपूर्व्वभोज्यं क्रमागतो नः कुलधर्म्म एषः। त्वं पाप बुद्धेऽतिनृशंसकर्म्मन् राज्यं कुरूणामनयाद्विहंसि।
राज्ये स्थितो धृतराष्ट्रो मनीषी तस्यानुजो विदुरो दीर्घदर्शी। एतावतिक्रम्य कथं नृपत्वं दुर्य्योधन प्रार्थयसेऽद्य मोहात्।
राजा च क्षत्ता च महानुभावौ भीष्मे स्थिते परवन्तौ भवेतां। अयन्तु धर्म्मज्ञतया महात्मा न राज्यकामो नृवरो नदीजः॥ ५०३५
राज्यन्तु पाण्डोरिदमप्रधृष्यं तस्याद्य पुत्राः प्रभवन्ति नान्ये। राज्यं तदेतन्निखिलं पाण्डवानां पैतामहं पुत्रपौत्रानुगामि।
यद्वै ब्रूते कुरुमुख्यो महात्मा देवव्रतः सत्यसन्धो मनीषी। सर्व्वं तदस्माभिरहत्य कार्य्यं राज्यं स्वधर्म्मं परिपालयद्भिः।
अनुज्ञया चाथ महाव्रतस्य ब्रूयान्नृपोऽयं विदुरस्तथैव। कार्य्यं भवेत्तत् सुहृद्भिर्नियुज्य धर्म्मं पुरस्कृत्य सुदीर्घकालं।
न्यायागतं राज्यमिदं कुरूणां युधिष्ठिरः शास्तु वै धर्म्मपुत्रः। प्रचोदितो धृतराष्ट्रेण राज्ञा पुरस्कृतः शान्तनवेन चैव।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कृष्णवाक्ये सप्तचत्वारिंशदधिकशततमोऽध्यायः॥ १४७ ॥

॥ वासुदेव उवाच ॥ एवमुक्ते तु गान्धार्य्या धृतराष्ट्रो जनेश्वरः। दुर्य्योधनमुवाचेदं राज्ञां मध्ये जनाधिप। ५०४०
दुर्य्योधन निबोधेदं यत् त्वां वक्ष्यामि पुत्रक। तथा तत् कुरु भद्रन्ते यद्यस्ति पितृगौरवं।
सोमः प्रजापतिः पूर्व्वं कुरूणां वंशवर्द्धनः। सोमाद्बभूव षष्ठोऽयं ययातिर्नहुषात्मजः।
तस्य पुत्रा बभूवुर्हि पञ्च राजर्षिसत्तमाः। तेषां यदुर्महातेजा ज्येष्ठः समभवत् प्रभुः।
पूरुर्यवीयांश्च ततो योऽस्माकं वंशवर्द्धनः। शर्म्मिष्ठया संप्रसूतो दुहिता वृषपर्व्वणः।
यदुश्च भरतश्रेष्ठ देवयान्याः सुतोऽभवत्। दौहित्रस्तात शुक्रस्य काव्यस्यामिततेजसः। ५०४५
यादवानां कुलकरो बलवान् वीर्य्यसम्मतः। अवमेने स तु क्षत्रं दर्पपूर्णः सुमन्दधीः।
न चातिष्ठत् पितुः शास्त्रे बलदर्पविमोहितः। अवमेने च पितरं भ्रातॄंश्चाप्यपराजितः।
पृथिव्याञ्चतुरन्तायां यदुरेवाभवद्बली। वशे कृत्वा स नृपतीन् न्यवसन्नागसाह्वये।
तं पिता परमक्रुद्धो ययातिर्नहुषात्मजः। शशाप पुत्रं गान्धारे राज्याच्चापि व्यरोपयत्।
ये चैनमन्ववर्त्तन्त भ्रातरो बलदर्पितं। शशाप तानपि क्रुद्धो ययातिस्तनयानथ। ५०५०
यवीयांसं ततः पूरुं पुत्रं स्ववशवर्त्तिनं। राज्ये निवेशयामास विधेयं नृपसत्तमः।
एवं ज्येष्ठोऽप्यथोत्सिक्तो न राज्यमभिजायते। यवीयांसोऽपि जायन्ते राज्यं वृद्धोपसेवया।
तथैव सर्व्वधर्म्मज्ञः पितुर्म्मम पितामहः। प्रतीपः पृथिवीपालस्त्रिषु लोकेषु विश्रुतः।

तस्य पार्थिवसिंहस्य राज्ये धर्म्मेण शासतः। त्रयः प्रजज्ञिरे पुत्रा देवकल्पा यशस्विनः।
देवापिरभवज्ज्येष्ठो वाह्लीकस्तदनन्तरं। तृतीयः शान्तनुस्तात धृतिमान् मे पितामहः। ५०५५
देवापिस्तु महातेजास्त्वग्दोषी राजसत्तमः। धार्म्मिकः सत्यवादी च पितुः शुश्रूषणे रतः।
पौरजानपदानाञ्च सम्मतः साधुसत्कृतः। सर्व्वेषां बालवृद्धानां देवापिर्हृदयङ्गमः।
वदान्यः सत्यसन्धश्च सर्व्वभूतहिते रतः। वर्त्तमानः पितुः शास्त्रे ब्राह्मणानां तथैव च।
वाह्लीकस्य प्रियो भ्राता शान्तनोश्च महात्मनः। सौभ्रात्रञ्च परं तेषां सहितानां महात्मनां।
अथ कालस्य पर्य्याये वृद्धो नृपतिसत्तमः। सम्भारानभिषेकार्थं कारयामास शास्त्रतः। ५०६०
कारयामास सर्व्वाणि मङ्गलार्थानि वै विभुः। तं ब्राह्मणाश्च वृद्धाश्च पौरजानपदैः सह।
सर्व्वे निवारयामासुर्देवापेरभिषेचनं। स तच्छ्रुत्वा तु नृपतिरभिषेकनिवारणं।
अश्रुकण्ठोऽभवद्राजा पर्य्यशोचत चात्मजं। एवं वदान्यो धर्म्मज्ञः सत्यसन्धश्च सोऽभवत्।
प्रियः प्रजानामपि सन् त्वग्दोषेण प्रदूषितः। हीनाङ्गं पृथिवीपालं नाभिनन्दन्ति देवताः।
इति कृत्वा नृपश्रेष्ठं प्रत्यषेधन् द्विजर्षभाः। ततः प्रव्यथिताङ्गोऽसौ पुत्रशोकसमन्वितः। ५०६५
निवारितं नृपं दृष्ट्वा देवापिः संश्रितो वनं। वाह्लीको मातुलकुलं त्यक्त्वा राज्यं समाश्रितः।
पितृभ्रातॄन् परित्यज्य प्राप्तवान् परमर्द्धिमत्। वाह्लीकेन त्वनुज्ञातः शान्तनुर्लोकविश्रुतः।
पितर्य्युपरते राजन् राज्यकाममकारयत्। तथैवाहं मतिमता परिचिन्त्येह पाण्डुना।
ज्येष्ठः प्रभ्रंशितो राज्यात् हीनाङ्ग इति भारत। पाण्डुस्तु राज्यं सम्प्राप्तः कनीयानपि सन्नृपः।
विनाशे तस्य पुत्राणामिदं राज्यमरिन्दम। मय्यभागिनि राज्याय कथं त्वं राज्यमिच्छसि। ५०७०
अराजपुत्रो ह्यस्वामी परस्वं हर्त्तुमिच्छसि।

युधिष्ठिरो राजपुत्रो महात्मा न्यायागतं राज्यमिदञ्च तस्य। स कौरवस्यास्य कुलस्य भर्त्ता प्रशासिता चैव महानुभावः।
स सत्यसन्धः स तथाऽप्रमत्तः शास्त्रे स्थितो बन्धुजनस्य साधुः। प्रियः प्रजानां सुहृदानुकम्पी जितेन्द्रियः साधुजनस्य भर्त्ता।
क्षमा तितिक्षा दम आर्ज्जवञ्च सत्यव्रतत्वं श्रुतमप्रमादः। भूतानुकम्पा ह्यनुशासनञ्च युधिष्ठिरे राजगुणाः समस्ताः।
अराजपुत्रस्त्वमनार्य्यवृत्तो लुब्धः सदा बन्धुषु पापबुद्धिः। क्रमागतं राज्यमिदं परेषां हर्त्तुं कथं शक्ष्यसि दुर्व्विनीत। ५०७५
प्रयच्छ राज्यार्द्धमपेतमोहः सवाहनं त्वं सपरिच्छदञ्च। ततोऽवशेषं तव जीवितस्य सहानुजस्यैव भवेन्नरेन्द्र।

इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि कृष्णवाक्ये ऽष्टचत्वारिंशदधिकशततमोऽध्यायः॥ १४८॥

वासुदेव उवाच॥ एवमुक्ते तु भीष्मेण द्रोणेन विदुरेण च। गान्धार्य्या धृतराष्ट्रेण न वै मन्दोऽन्वबुध्यत।
अवधूयोत्थितो मन्दः क्रोधसंरक्तलोचनः। अन्वद्रवन्त तं पश्चात् राजानस्त्यक्तजीविताः।
आज्ञापयच्च राज्ञस्तान् पार्थिवान् नष्टचेतसः। प्रयाध्वं वै कुरुक्षेत्रं पुष्योऽद्येति पुनः पुनः।
ततस्ते पृथिवीपालाः प्रययुः सहसैनिकाः। भीष्मं सेनापतिं कृत्वा संहृष्टाः कालचोदिताः। ५०८०
अक्षौहिण्यो दशैका च कौरवाणां समागताः। तासां प्रमुखतो भीष्मस्तालकेतुर्व्यरोचत।

यदनयुक्तं प्राप्तश्च तद्विधत्स्व विशाम्पते । उक्तं भीष्मेण तद्वाक्यं द्रोणेन विदुरेण च ।
गान्धार्य्या धृतराष्ट्रेण समक्षं मम भारत । एतत्ते कथितं राजन् यद्वृत्तं कुरुसंसदि ।
साम्यमादौ प्रयुक्तं मे राजन् सौभ्रात्रमिच्छता । अभेदायास्य वंशस्य प्रजानाञ्च विवृद्धये ।
पुनर्भेदश्च मे युक्तो यदा सामा न गृह्यते । कर्म्मानुकीर्त्तनञ्चैव देवमानुषसंहितं । ५०८५
यदा नाद्रियते वाक्यं सामपूर्ब्बं सुयोधनः । तदा मया समानीय भेदिताः सर्व्वपार्थिवाः ।
अद्भुतानि च घोराणि दारुणानि च भारत । अमानुषाणि कर्म्माणि दर्शितानि मया विभो ।
निर्भर्त्सयित्वा राज्ञस्तांस्तृणीकृत्य सुयोधनं । राधेयं भीषयित्वा च सौबलञ्च पुनः पुनः ।
द्यूततो धार्त्तराष्ट्राणां निन्दां कृत्वा तथा पुनः । भेदयित्वा नृपान् सर्व्वान् वाग्भिर्मन्त्रेण चासकृत् ।
पुनः सामाभिसंयुक्तं सम्प्रदानमथाब्रुवं । अभेदात् कुरुवंशस्य कार्य्ययोगात्तथैव च । ५०९०
ते शूरा धृतराष्ट्रस्य भीष्मस्य विदुरस्य च । तिष्ठेयुः पाण्डवाः सर्व्वे हित्वा मानमधश्चराः ।
प्रयच्छन्तु च ते राज्यमनीशास्ते भवन्तु च । यथाह राजा गाङ्गेयो विदुरश्च हितं तव ।
सर्व्वं भवतु ते राज्यं पञ्च ग्रामान् विसर्ज्जय । अवश्यं भरणीया हि पितुस्ते राजसत्तम ।
एवमुक्तोऽपि दुष्टात्मा नैव भागं व्यमुञ्चत । दण्डञ्चतुर्थं पश्यामि तेषु पापेषु नान्यथा ।
निर्य्याताश्च विनाशाय कुरुक्षेत्रं नराधिपाः । एतत्ते कथितं राजन् यद्वृत्तं कुरुसंसदि । ५०९५
न ते राज्यं प्रयच्छन्ति विना युद्धेन पाण्डव । विनाशहेतवः सर्व्वे प्रत्युपस्थितमृत्यवः ।
इति श्रीमहाभारते उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवद्वाक्ये एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥ समाप्तञ्च भगवद्यानपर्व्व ॥

## ॥ अथ सैन्यनिर्य्याणपर्व्व ॥ १० ॥

॥ वैशम्पायन उवाच ॥ जनार्द्दनवचः श्रुत्वा धर्म्मराजो युधिष्ठिरः । भ्रातॄनुवाच धर्म्मात्मा समक्षं केशवस्य ह ।
श्रुतं भवद्भिर्यद्वृत्तं सभायां कुरुसंसदि । केशवस्यापि यद्वाक्यं तत् सर्व्वमवधारितं ।
तस्मात् सेनाविभागं मे कुरुध्वं नरसत्तमाः । अक्षौहिण्यश्च सप्तैताः समेता विजयाय वै ।
तासां ये पतयः सप्त विख्यातास्तान्निबोधत । द्रुपदश्च विराटश्च धृष्टद्युम्नशिखण्डिनौ । ५१००
सात्यकिश्चेकितानश्च भीमसेनश्च वीर्य्यवान् । एते सेनाप्रणेतारो वीराः सर्व्वे तनुत्यजः ।
सर्व्वे वेदविदः शूराः सर्व्वे सुचरितव्रताः । ह्रीमन्तो नीतिमन्तश्च सर्व्वे युद्धविशारदाः ।
इष्वस्त्रकुशलाः सर्व्वे तथा सर्व्वास्त्रयोधिनः । सप्तानामपि यो नेता सेनानां प्रविभागवित् ।
यः सहेत रणे भीष्मं शरार्च्चिःपावकोपमं । तन्तावत् सहदेवात्र प्रब्रूहि कुरुनन्दन ।
स्वमतं पुरुषव्याघ्र को नः सेनापतिः क्षमः । ५१०५
॥ सहदेव उवाच ॥ संयुक्त एकदुःखश्च वीर्य्यवांश्च महीपतिः । यं समाश्रित्य धर्म्मज्ञं स्वमंशमनुयुञ्ज्महे ।
मत्स्यो विराटो बलवान् कृतास्त्रो युद्धदुर्म्मदः । प्रसहिष्यति सङ्ग्रामे भीष्मं तांश्च महारथान् ।

॥ वैशम्पायन उवाच ॥ तथोक्ते सहदेवेन वाक्ये वाक्यविशारदः । नकुलोऽनन्तरं तस्मादिदं वचनमब्रवीत् ।
वयसा शास्त्रतो धैर्य्यात् कुलेनाभिजनेन च । ह्रीमान् बलान्वितः श्रीमान् सर्व्वशास्त्रविशारदः ।
वेद शास्त्रं भरद्वाजाद् दुर्द्धर्षः सत्यसङ्गरः । यो नित्यं स्पर्द्धते द्रोणं भीष्मञ्चैव महाबलं । ५११०
श्लाघ्यः पार्थिववंशस्य प्रमुखे वाहिनीपतिः । पुत्त्रपौत्त्रैः परिवृतः शतशाख इव द्रुमः ।
यस्तताप तपो घोरं सदारः पृथिवीपतिः । रोषात् द्रोणविनाशाय वीरः समितिशोभनः ।
पितेवास्मान् समाधत्ते यः सदा पार्थिवर्षभः । श्वशुरो द्रुपदोऽस्माकं सेनाऽग्रं सम्प्रकर्षतु ।
स द्रोणभीष्मावायान्तौ सहेदिति मतिर्मम । स हि दिव्यास्त्रविद्राजा सखा चाङ्गिरसो नृपः ।
माद्रीसुताभ्यामुक्ते तु स्वमते कुरुनन्दनः । वासविर्व्वासवसमः सव्यसाच्यब्रवीद्वचः । ५११५
योऽयं तपःप्रभावेन ऋषिसन्तोषणेन च । दिव्यः पुरुष उत्पन्नो ज्वालावर्णो महाभुजः ।
धनुष्मान् कवची खड्गी रथमारुह्य दंशितः । दिव्यैर्हयवरैर्युक्तैरग्निकुण्डात् समुत्थितः ।
गर्ज्जन्निव महामेघो रथघोषेण वीर्य्यवान् । सिंहसंहननो वीरः सिंहतुल्यपराक्रमः ।
सिंहोरस्कः सिंहभुजः सिंहवक्षा महाबलः । सिंहप्रगर्ज्जनो वीरः सिंहस्कन्धो महाद्युतिः ।
सुभ्रूः सुदंष्ट्रः सुहनुः सुबाहुः सुमुखोऽकृशः । सुजत्रुः सुविशालाक्षः सुपादः सुप्रतिष्ठितः । ५१२०
अभेद्यः सर्व्वशस्त्राणां प्रभिन्न इव वारणः । जज्ञे द्रोणविनाशाय सत्यवादी जितेन्द्रियः ।
धृष्टद्युम्नमहं मन्ये सहेद्भीष्मस्य सायकान् । वज्राशनिसमस्पर्शान् दीप्तास्यानुरगानिव ।
यमदूतसमान् वेगे निपाते पावकोपमान् । रामेणाजौ विषहितान् वज्रनिष्पेषदारुणान् ।
पुरुषं तं न पश्यामि यः सहेत महाव्रतं । धृष्टद्युम्नमृते राजन्निति मे धीयते मतिः ।
क्षिप्रहस्तश्चित्रयोधी मतः सेनापतिर्मम । अभेद्यकवचः श्रीमान् मातङ्ग इव यूथपः । ५१२५
॥ भीमसेन उवाच ॥ वधार्थं यः समुत्पन्नः शिखण्डी द्रुपदात्मजः । वदन्ति सिद्धा राजेन्द्र ऋषयश्च समागताः ।
यस्य सङ्ग्राममध्ये तु दिव्यमस्त्रं प्रकुर्व्वतः । रूपं द्रक्ष्यन्ति पुरुषा रामस्येव महात्मनः ।
न तं युद्धे प्रपश्यामि यो भिन्द्यात्तं शिखण्डिनं । शस्त्रेण समरे राजन् सन्नद्धं स्यन्दने स्थितं ।
द्वैरथे समरे नान्यो भीष्मं हन्यान्महाव्रतं । शिखण्डिनमृते वीरं स मे सेनापतिर्मतः ।
॥ युधिष्ठिर उवाच ॥ सर्व्वस्य जगतस्तात सारासारं बलाबलं । सर्व्वं जानाति धर्म्मात्मा मतमेषाञ्च केशव. । ५१३०
यमाह कृष्णो दाशार्हः सोऽस्तु सेनापतिर्मम । कृतास्त्रोऽप्यकृतास्त्रो वा वृद्धो वा यदि वा युवा ।
एष नो विजये मूलमेष तात विपर्य्यये । अत्र प्राणाश्च राज्यञ्च भावाभावौ सुखासुखे ।
एष धाता विधाता च सिद्धिरत्र प्रतिष्ठिता । यमाह कृष्णो दाशार्हः सोऽस्तु मे वाहिनीपतिः ।
ब्रवीतु वदतां श्रेष्ठो निशा समभिवर्त्तते । ततः सेनापतिं कृत्वा कृष्णस्य वशवर्त्तिनः ।
रात्रेः शेषे व्यतिक्रान्ते प्रयास्यामो रणाजिरं । अधिवासितशस्त्राश्च कृतकौतुकमङ्गलाः । ५१३५
॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं श्रुत्वा धर्म्मराजस्य धीमतः । अब्रवीत् पुण्डरीकाक्षो धनञ्जयमवेक्ष्य ह ।
ममाप्येते महाराज भवद्भिर्य्य उदाहृताः । नेतारस्तव सेनाया मता विक्रान्तयोधिनः ।

सर्व्व एव समर्था हि तव शत्रुं प्रबाधितुं। इन्द्रस्यापि भयं ह्येते जनयेयुर्महाहवे।
किं पुनर्धार्त्तराष्ट्राणां लुब्धानां पापचेतसां। मयाऽपि हि महाबाहो त्वत्प्रियार्थं महाहवे।
कृतो यत्नो महांस्तत्र शमः स्यादिति भारत। धर्म्मस्य गतमानृण्यं न स्म वाच्या विवक्षतां। ५२४०
कृतास्त्रं मन्यते बाल आत्मानमविचक्षणः। धार्त्तराष्ट्रो बलस्थञ्च पश्यत्यात्मानमातुरः।
युज्यतां वाहिनी साधु वधसाध्या हि मे मताः। न धार्त्तराष्ट्राः शक्ष्यन्ति स्थातुं दृष्ट्वा धनञ्जयं।
भीमसेनञ्च संक्रुद्धं यमौ चापि यमोपमौ। युयुधानद्वितीयञ्च धृष्टद्युम्नममर्षणं।
अभिमन्युं द्रौपदेयान् विराटद्रुपदावपि। अक्षौहिणीपतींश्चान्यान् नरेन्द्रान् भीमविक्रमान्।
सारवद्बलमस्माकं दुष्प्रधर्षं दुरासदं। धार्त्तराष्ट्रबलं सङ्ख्ये हनिष्यति न संशयः। ५२४५
धृष्टद्युम्नमहं मन्ये सेनापतिमरिन्दम।
॥ वैशम्पायन उवाच ॥ एवमुक्ते तु कृष्णेन सम्प्राहृष्यन्नरोत्तमाः। तेषां प्रहृष्टमनसां नादः समभवन्महान्।
योग इत्यथ सैन्यानां त्वरतां सम्प्रधावतां। हयवारणशब्दाश्च नेमिघोषाश्च सर्व्वतः।
शङ्खदुन्दुभिघोषाश्च तुमुलाः सर्व्वतोऽभवन्। तदुग्रं सागरनिभं क्षुब्धं बलसमागमं।
रथपत्तिगजोदग्रं महोर्म्मिभिरिवाकुलं। धावतामाह्वयानानां तनुत्राणञ्च बध्नतां। ५२५०
प्रयास्यतां पाण्डवानां ससैन्यानां समन्ततः। गङ्गेव पूर्णा दुर्द्धर्षा समदृश्यत वाहिनी।
अग्रानीके भीमसेनो माद्रीपुत्रौ च दंशितौ। सौभद्रो द्रौपदेयाश्च धृष्टद्युम्नश्च पार्षतः।
प्रभद्रकाश्च पाञ्चाला भीमसेनमुखा ययुः। ततः शब्दः समभवत् समुद्रस्येव पर्व्वणि।
हृष्टानां सम्प्रयातानां घोषो दिवमिवास्पृशत्। प्रहृष्टा दंशिता योधाः परानीकविदारणाः।
तेषां मध्ये ययौ राजा कुन्तीपुत्रो युधिष्ठिरः। शकटापणवेशाश्च यानयुग्यञ्च सर्व्वशः। ५२५५
कोषयन्त्रायुधश्चैव ये च वैद्याश्चिकित्सकाः। फल्गु यच्च बलं किञ्चित् यच्चापि कृशदुर्ब्बलं।
तत्सङ्गृह्य ययौ राजा ये चापि परिचारकाः। उपप्लव्ये तु पाञ्चाली द्रौपदी सत्यवादिनी।
सह स्त्रीभिर्निववृते दासीदाससमावृता। कृत्वा मूलप्रतीकारं गुल्मैः स्थावरजङ्गमैः।
स्कन्धावारेण महता प्रययुः पाण्डुनन्दनाः। ददतो गां हिरण्यञ्च ब्राह्मणैरभिसंवृताः।
स्तूयमाना ययू राजन् रथैर्म्मणिविभूषितैः। कैकेया धृष्टकेतुश्च पुत्रः काश्यस्य वा विभुः। ५२६०
श्रेणिमान् वसुदानश्च शिखण्डी चापराजितः। हृष्टास्तुष्टाः कवचिनः सशस्त्राः समलङ्कृताः।
राजानमन्वयुः सर्व्वे परिवार्य्य युधिष्ठिरं। जघनार्द्धे विराटश्च याज्ञसेनिश्च सोमकिः।
सुधर्म्मा कुन्तिभोजश्च धृष्टद्युम्नस्य चात्मजाः। रथायुतानि चत्वारि हयाः पञ्चगुणास्तथा।
पत्तिसैन्यं दशगुणं गजानामयुतानि षट्। अनाधृष्टिश्चेकितानो धृष्टकेतुश्च सात्यकिः।
परिवार्य्य ययुः सर्व्वे वासुदेवधनञ्जयौ। आसाद्य तु कुरुक्षेत्रं व्यूढानीकाः प्रहारिणः। ५२६५
पाण्डवाः समदृश्यन्त नर्द्दन्तो वृषभा इव। तेऽवगाह्य कुरुक्षेत्रं शङ्खान् दध्मुररिन्दमाः।
तथैव दध्मतुः शङ्खं वासुदेवधनञ्जयौ। पाञ्चजन्यस्य निर्घोषं विस्फूर्ज्जितमिवाशनेः।

निशम्य सर्व्वसैन्यानि समहृष्यन्त सर्व्वशः । शङ्खदुन्दुभिसंघुष्टः सिंहनादस्वरस्तिमां ।
पृथिवीञ्चान्तरीक्षञ्च सागरांश्चानुनादयन ।

इति श्रीमहाभारते उद्योगपर्व्वणि सैन्यनिर्याणपर्व्वणि कुरुक्षेत्रप्रवेशे पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

॥ वैशम्पायन उवाच ॥ ततो देशे समे स्निग्धे प्रभूतयवसेन्धने । निवेशयामास तदा सेनां राजा युधिष्ठिरः । ५१७०
परिहृत्य श्मशानानि देवतायतनानि च । आश्रमांश्च महर्षीणां तीर्थान्यायतनानि च ।
मधुरानूषरे देशे शुचौ पुण्ये महामतिः । निवेशं कारयामास कुन्तीपुत्त्रो युधिष्ठिरः ।
ततश्च पुनरुत्थाय सुखं विश्रान्तवाहनः । प्रययौ पृथिवीपालैर्वृतः शतसहस्रशः ।
विद्राव्य शतशो गुल्मान् धार्त्तराष्ट्रस्य सैनिकान् । पर्य्यक्रामत् समन्ताच्च पार्थेन सह केशवः ।
शिविरं मापयामास धृष्टद्युम्नश्च पार्षतः । सात्यकिश्च रथोदारो युयुधानश्च वीर्य्यवान् । ५१७५
आसाद्य सरितं पुण्यां कुरुक्षेत्रे हिरण्वतीं । सूपतीर्थां शुचिजलां शर्करापङ्कवर्ज्जितां ।
खानयामास परिखां केशवस्तत्र भारत । गुप्त्यर्थमपि चादिश्य बलं तत्र न्यवेशयत् ।
विधिर्य्यः शिविरस्यासीत् पाण्डवानां महात्मनां । तद्विधानि नरेन्द्राणां कारयामास केशवः ।
प्रभूततरकाष्ठानि दुराधर्षतराणि च । भक्ष्यभोज्यान्नपानानि शतशोऽथ सहस्रशः ।
शिविराणि महार्हाणि राज्ञां तत्र पृथक् पृथक् । विमानानीव राजेन्द्र निविष्टानि महीतले । ५१८०
तत्रासन् शिल्पिनः प्राज्ञाः शतशो दत्तवेतनाः । सर्व्वोपकरणैर्युक्ता वैद्याः शास्त्रविशारदाः ।
ज्याधनुर्व्वर्म्मशस्त्राणां तथैव मधुसर्पिषां । ससर्ज्जरसपांशूनां राशयः पर्व्वतोपमाः ।
बहूदकं सुयवसं तुषाङ्गारसमन्वितं । शिविरे शिविरे राजा सञ्चकार युधिष्ठिरः ।
महायन्त्राणि नाराचास्तोमराणि परश्वधाः । धनूंषि कवचादीनि यष्टयस्तूणसंयुताः ।
गजाः कण्टकसन्नाहा लोहवर्म्मोत्तरच्छदाः । दृश्यन्ते तत्र गिर्य्याभाः सहस्रशतयोधिनः । ५१८५
निविष्टान् पाण्डवांस्तत्र ज्ञात्वा मित्राणि भारत । अभिसस्रुर्य्यथादेशं सबलाः सहवाहनाः ।
चरितब्रह्मचर्य्यास्ते सोमपा भूरिदक्षिणाः । जयाय पाण्डुपुत्राणां समाजग्मुर्महीक्षितः ।

इति श्रीमहाभारते उद्योगपर्व्वणि सैन्यनिर्याणपर्व्वणि शिविरादिनिर्माणे एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

॥ जनमेजय उवाच ॥ युधिष्ठिरं सहानीकमुपायान्तं युयुत्सया । सन्निविष्टं कुरुक्षेत्रे वासुदेवेन पालितं ।
विराटद्रुपदाभ्याञ्च सपुत्राभ्यां समन्वितं । केकयैर्वृष्णिभिश्चैव पार्थिवैः शतशो वृतं ।
महेन्द्रमिव चादित्यैरभिगुप्तं महारथैः । श्रुत्वा दुर्य्योधनो राजा किं कार्य्यं प्रत्यपद्यत । ५१९०
एतदिच्छाम्यहं श्रोतुं विस्तरेण महामते । सम्भ्रमे तुमुले तस्मिन् यदासीत् कुरुजाङ्गले ।
व्यथयेयुरिमे देवान् सेन्द्रानपि समागमे । पाण्डवा वासुदेवश्च विराटद्रुपदौ तथा ।
धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी च महारथः । युधामन्युश्च विक्रान्तो देवैरपि दुरासदः ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन । कुरूणां पाण्डवानाञ्च यद्यदासीद्विचेष्टितं ।
॥ वैशम्पायन उवाच ॥ प्रतियाते तु दाशार्हे राजा दुर्य्योधनस्तदा । कर्णं दुःशासनञ्चैव शकुनिञ्चाब्रवीदिदं । ५१९५

अहतेनैव कार्य्येण गतः पार्थानधोक्षजः । स एनान्मन्युना विष्टो ध्रुवं धक्ष्यत्यसंशयं ।
इष्टो हि वासुदेवस्य पाण्डवैर्मम विग्रहः । भीमसेनार्ज्जुनौ चैव दाशार्हस्य मते स्थितौ ।
अजातशत्रुरत्यर्थं भीमसेनवशानुगः । निकृतश्च मया पूर्व्वं सह सर्व्वैः सहोदरैः ।
विराटद्रुपदौ चैव कृतवैरौ मया सह । तौ च सेनाप्रणेतारौ वासुदेववशानुगौ ।
भविता विग्रहः सोऽयं तुमुलो लोमहर्षणः । तस्मात् सांग्रामिकं सर्व्वं कारयध्वमतन्द्रिताः । ५२००
शिविराणि कुरुक्षेत्रे क्रियन्तां वसुधाधिपाः । सुपर्य्याप्तावकाशानि दुरादेयानि शत्रुभिः ।
आसन्नजलकाष्ठानि शतशोऽथ सहस्रशः । अच्छेद्याहारमार्गाणि रत्नोच्चयचितानि च ।
विविधायुधपूर्णानि पताकाध्वजवन्ति च । समाश्च तेषां पन्थानः क्रियन्तां नगराद्बहिः ।
प्रयाणं घुष्यतामद्य श्वोभूत इति माचिरं । ते तथेति प्रतिज्ञाय श्वोभूते चक्रिरे तथा ।
हृष्टरूपा महात्मानो निवासाय महीक्षितां । ततस्ते पार्थिवाः सर्व्वे तच्छ्रुत्वा राजशासनं । ५२०५
आसनेभ्यो महार्हेभ्य उदतिष्ठन्नमर्षिताः । बाहून् परिघसङ्काशान् संस्पृशन्तः शनैः शनैः ।
काञ्चनाङ्गददीप्तांश्च चन्दनागुरुभूषितान् । उष्णीषाणि नियच्छन्तः पुण्डरीकनिभैः करैः ।
अन्तरीयोत्तरीयाणि भूषणानि च सर्व्वशः । ते रथान् रथिनः श्रेष्ठा हयांश्च हयकोविदाः ।
सज्जयन्ति स्म नागांश्च नागशिक्षास्वनुष्ठिताः । अथ वर्म्माणि चित्राणि काञ्चनानि बहूनि च ।
विविधानि च शस्त्राणि चक्रुः सर्व्वाणि सर्व्वशः । पदातयश्च पुरुषाः शस्त्राणि विविधानि च । ५२१०
उपाजह्रुः शरीरेषु हेमचित्राण्यनेकशः । तदुत्सव इवोदग्रं सम्प्रहृष्टनराहृतं ।
नगरं धार्त्तराष्ट्रस्य भारतासीत् समाकुलं । जनौघसलिलावर्त्तो रथनागाश्वमीनवान् ।
शङ्खदुन्दुभिनिर्घोषः कोषसञ्चयरत्नवान् । चित्राभरणवर्म्मोर्म्मिः शस्त्रनिर्म्मलफेनवान् ।
प्रासादमालाद्रिवृतो रथ्यापणमहाह्रदः । योधचन्द्रोदयोद्भूतः कुरुराजमहार्णवः ।
व्यदृश्यत तदा राजंश्चन्द्रोदय इवार्णवः । ५२११

इति श्रीमहाभारते उद्योगपर्व्वणि सैन्यनिर्याणपर्व्वणि दुर्य्योधनसैन्यसज्जायां द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

॥ वैशम्पायन उवाच ॥ वासुदेवस्य तद्वाक्यमनुस्मृत्य युधिष्ठिरः । पुनः पप्रच्छ वार्ष्णेयं कथं मन्दोऽब्रवीदिदं ।
अस्मिन्नभ्यागते काले किञ्च नः क्षममच्युत । कथञ्च वर्त्तमाना वै स्वधर्म्मान्न च्यवेमहि ।
दुर्य्योधनस्य कर्णस्य शकुनेः सौबलस्य च । वासुदेव मतज्ञोऽसि मम सभ्रातृकस्य च ।
विदुरस्यापि तद्वाक्यं श्रुतं भीष्मस्य चोभयोः । कुन्त्याश्च विपुलप्रज्ञ प्रज्ञा कार्त्स्न्येन ते श्रुता ।
सर्व्वमेतदतिक्रम्य विचार्य्य च पुनः पुनः । क्षेमं यन्नो महाबाहो तत् ब्रवीह्यविचारयन् । ५२२०
श्रुत्वैतत् धर्म्मराजस्य धर्म्मार्थसहितं वचः । मेघदुन्दुभिनिर्घोषः कृष्णो वाक्यमथाऽब्रवीत् ।
॥ श्रीकृष्ण उवाच ॥ उक्तवानऽसि यद्वाक्यं धर्म्मार्थसहितं हितं । न तु तन्निकृतिप्रज्ञे कौरव्ये प्रतितिष्ठति ।
न च भीष्मस्य दुर्म्मेधाः शृणोति विदुरस्य वा । मम वा भाषितं किञ्चित् सर्व्वमेवातिवर्त्तते ।
नैष कामयते धर्म्मं नैष कामयते यशः । जितं स मन्यते सर्व्वं दुरात्मा कर्णमाश्रितः ।

सन्धिमाज्ञापयामास मम चापि सुयोधनः। न च तं लब्धवान् कामं दुरात्मा पापनिश्चयः। ५२२५
न च भीष्मो न च द्रोणो युक्तं तत्राहतुर्वचः। सर्व्वे तमनुवर्त्तन्ते ऋते विदुरमच्युत।
शकुनिः सौबलश्चैव कर्णदुःशासनावपि। त्वय्ययुक्तान्यभाषन्त मूढा मूढममर्षणं।
किञ्च तेन मयोक्तेन यान्यभाषत कौरवः। संक्षेपेण दुरात्माऽसौ न युक्तं त्वयि वर्त्तते।
पार्थिवेषु न सर्व्वेषु य इमे तव सैनिकाः। यत् पापं यन्न कल्याणं सर्व्वं तस्मिन् प्रतिष्ठितं।
न चापि वयमप्यर्थं परित्यागेन कर्हिचित्। कौरवैः शममिच्छामस्तत्र युद्धमनन्तरं। ५२३०
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा पार्थिवाः सर्व्वे वासुदेवस्य भाषितं। अब्रुवन्तो मुखं राज्ञः समुदैक्षन्त भारत।
युधिष्ठिरस्त्वभिप्रायमभिलक्ष्य महीक्षितां। योगमाज्ञापयामास भीमार्ज्जुनयमैः सह।
ततः किलकिलाभूतमनीकं पाण्डवस्य ह। आज्ञापिते तदा योगे समहृष्यन्त सैनिकाः।
अवध्यानां वधं पश्यन् धर्म्मराजो युधिष्ठिरः। निःश्वसन् भीमसेनञ्च विजयञ्चेदमब्रवीत्।
यदर्थं वनवासश्च प्राप्तं दुःखञ्च यन्मया। सोऽयमस्मानुपैत्येव परोऽनर्थः प्रयत्नतः। ५२३५
तस्मिन् यत्नः कृतोऽस्माभिः स नो हीनः प्रयत्नतः। अकृते तु प्रयत्नेऽस्मानुपावृत्तः कलिर्महान्।
कथं ह्यवध्यैः संग्रामः कार्य्यैः सह भविष्यति। कथं हत्वा गुरून् वृद्धान् विजयो नो भविष्यति।
तच्छ्रुत्वा धर्म्मराजस्य सव्यसाची परन्तपः। यदुक्तं वासुदेवेन श्रावयामास तद्वचः।
उक्तवान् देवकीपुत्त्रः कुन्त्याश्च विदुरस्य च। वचनं तत्त्वया राजन्निखिलेनावधारितं।
न च तौ वक्ष्यतोऽधर्म्ममिति मे नैष्ठिकी मतिः। नापि युक्तञ्च कौन्तेय निवर्त्तितुमयुध्यतः। ५२४०
तच्छ्रुत्वा वासुदेवोऽपि सव्यसाचिवचस्तदा। स्मयमानोऽब्रवीद्वाक्यं पार्थमेवमिति ब्रुवन्।
ततस्ते धृतसङ्कल्पा युद्धाय सहसैनिकाः। पाण्डवेया महाराज तां रात्रिं सुखमावसन्।

इति श्रीमहाभारते उद्योगपर्व्वणि सैन्यनिर्य्याणपर्व्वणि युधिष्ठिरार्ज्जुनसंवादे त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

॥ वैशम्पायन उवाच ॥ व्युष्टायां वै रजन्यां हि राजा दुर्य्योधनस्ततः। व्यभजत्तान्यनीकानि दश चैकञ्च भारत।
नरहस्तिरथाश्वानां सारं मध्यञ्च फल्गु च। सर्व्वेष्वेतेष्वनीकेषु सन्दिदेश नराधिपः।
सानुकर्षाः सतूणीराः सवरूथाः सतोमराः। सोपासङ्गाः सशक्तीकाः सनिषङ्गाः सहर्ष्टयः। ५२४५
सध्वजाः सपताकाश्च सशरासनतोमराः। रज्जुभिश्च विचित्राभिः सपाशाः सपरिस्तराः।
सकचग्रहविक्षेपाः सतैलगुडवालुकाः। साशीविषघटाः सर्व्वे ससर्ज्जरसपांशवः।
सघण्टफलकाः सर्व्वे सायोगुडजलोपलाः। सशूलभिन्दिपालाश्च समधूच्छिष्टमुद्गराः।
सकाण्डदण्डकाः सर्व्वे ससीरविषतोमराः। सशूर्पपिटकाः सर्व्वे सदात्राङ्कुशतोमराः।
सकीलकवचाः सर्व्वे वाशीवृक्षादनान्विताः। व्याघ्रचर्म्मपरीवारा दीपिचर्म्मावृताश्च ते। ५२५०
सहर्ष्टयः सशृङ्गाश्च सप्रासविविधायुधाः। सकुठाराः सकुद्दालाः सतैलक्षौमसर्पिषः।
रुक्मजालप्रतिच्छन्ना नानामणिविभूषिताः। चित्रानीकाः सुवपुषो ज्वलिता इव पावकाः।
तथा कवचिनः शूराः शस्त्रेषु कृतनिश्चयाः। कुलीना हययोनिज्ञाः सारथ्ये विनिवेशिताः।

बह्वारिष्टा बहुकचा बहुध्वजपताकिनः। बह्वाभरणनिर्य्यूहा बहुचर्म्मासिपट्टिशाः।
चतुर्युजो रथाः सर्व्वे सर्व्वे चोत्तमवाजिनः। सप्रासर्ष्टिकाः सर्व्वे सर्व्वे धृतशरासनाः। ५२५५
धुर्य्ययोर्हययोरेकस्तथान्यौ पार्ष्णिसारथी। तौ चापि रथिनां श्रेष्ठौ रथी च हयवित्तथा।
नगराणीव गुप्तानि दुराधर्षाणि शत्रुभिः। आसन्रथसहस्राणि हेममालीनि सर्व्वशः।
यथा रथास्तथा नागा बद्धकक्षाः स्वलङ्कृताः। बभूवुः सप्तपुरुषा रत्नवन्त इवाद्रयः।
द्वावङ्कुशधरौ तत्र द्वावुत्तमधनुर्द्धरौ। द्वौ वरासिधरौ राजन्नेकः शक्तिपिनाकधृक्।
गजैर्मत्तैः समाकीर्णं सर्व्वमायुधकोषकैः। तद्बभूव बलं राजन् कौरव्यस्य महात्मनः। ५२६०
आमुक्तकवचैर्युक्तैः सपताकैः स्वलङ्कृतैः। सादिभिश्चोपपन्नास्तु तथा चायुतशो हयाः।
असङ्ग्राहाः सुसम्पन्ना हेमभाण्डपरिच्छदाः। अनेकशतसाहस्राः सर्व्वे सादिवशे स्थिताः।
नानारूपविकाराश्च नानाकवचशस्त्रिणः। पदातिनो नरास्तत्र बभूवुर्हेममालिनः।
रथस्यासन् दश गजा गजस्य दश वाजिनः। नरा दश हयस्यासन् पादरक्षाः समन्ततः।
रथस्य नागाः पञ्चाशन्नागस्यासन् शतं हयाः। हयस्य पुरुषाः सप्त भिन्नसन्धानकारिणः। ५२६५
सेनापञ्चशतं नागा रथास्तावन्त एव च। दशसेना च पृतना पृतना दशवाहिनी।
सेना च वाहिनी चैव पृतना ध्वजिनी चमूः। अक्षौहिणी तु पर्य्यायैर्निरुक्ता च वरूथिनी।
एवं व्यूढान्यनीकानि कौरवेयेण धीमता। अक्षौहिण्यो दशैका च सङ्ख्याताः सप्त चैव ह।
अक्षौहिण्यस्तु सप्तैव पाण्डवानामभूद्बलं। अक्षौहिण्यो दशैका च कौरवाणामभूद्बलं।
नराणां पञ्चपञ्चाशदेषा पत्तिर्विधीयते। सेनामुखञ्च तिस्रस्ता गुल्म इत्यभिशब्दितं। ५२७०
त्रयो गुल्मा गणस्त्वासीन् गणस्त्वयुतशो भवेत्। दुर्य्योधनस्य सेनासु योत्स्यमानाः प्रहारिणः।
तत्र दुर्य्योधनो राजा शूरान् बुद्धिमतो नरान्। प्रसमीक्ष्य महाबाहुश्चक्रे सेनापतींस्तदा।
पृथगक्षौहिणीनाञ्च प्रणेतॄन्नरसत्तमान्। विधिवत् पूर्व्वमानीय पार्थिवानभ्यभाषत।
कृपं द्रोणञ्च शल्यञ्च सैन्धवञ्च जयद्रथं। सुदक्षिणञ्च काम्बोजं कृतवर्म्माणमेव च।
द्रोणपुत्रञ्च कर्णञ्च भूरिश्रवसमेव च। शकुनिं सौबलञ्चैव वाह्लीकञ्च महाबलं। ५२७५
दिवसे दिवसे तेषां प्रतिवेलञ्च भारत। चक्रे स विविधाः पूजाः प्रत्यक्षञ्च पुनः पुनः।
तथा विनियताः सर्व्वे ये च तेषां पदानुगाः। बभूवुः सैनिका राजन् प्रियं राज्ञश्चिकीर्षवः।

इति श्रीमहाभारते उद्योगपर्व्वणि सैन्यनिर्याणपर्व्वणि दुर्य्योधनसैन्यविभागे चतुःपञ्चाशदधिकशततमोऽध्यायः ॥१५४॥

॥ वैशम्पायन उवाच ॥ ततः शान्तनवं भीष्मं प्राञ्जलिर्धृतराष्ट्रजः। सह सर्व्वैर्महीपालैरिदं वचनमब्रवीत्।
ऋते सेनाप्रणेतारं पृतना सुमहत्यपि। दीर्य्यते युद्धमासाद्य पिपीलिकपुटं यथा।
न हि जातु द्वयोर्बुद्धिः समा भवति कर्हिचित्। शौर्य्यञ्च बलनेतॄणां स्पर्द्धते च परस्परं। ५२८०
श्रूयते च महाप्राज्ञ हैहयानमितौजसः। अभ्ययुर्ब्राह्मणाः सर्व्वे समुच्छ्रितकुशध्वजाः।
तानभ्ययुस्तदा वैश्याः शूद्राश्चैव पितामह। एकतस्तु त्रयो वर्णा एकतः क्षत्रियर्षभाः।

ततो युद्धेष्वभज्यन्त त्रयो वर्णाः पुनः पुनः। क्षत्रियास्तु जयन्त्येव बहुलञ्चैकतो बलं।
ततस्ते क्षत्रियानेव पप्रच्छुर्द्विजसत्तमाः। तेभ्यः शशंसुर्धर्मज्ञा याथातथ्यं पितामह।
वयमेकस्य शृण्वाना महाबुद्धिमतो रणे। भवन्तस्तु पृथक् सर्व्वे स्वबुद्धिवशवर्त्तिनः। ५२८५
ततस्ते ब्राह्मणाश्चक्रुरेकं सेनापतिं द्विजं। नयेषु कुशलं शूरमजयन् क्षत्रियांस्ततः।
एवं ये कुशलं शूरं हितेप्सितमकल्मषं। सेनापतिं प्रकुर्व्वन्ति ते जयन्ति रणे रिपून्।
भवानुशनसा तुल्यो हितैषी च सदा मम। असंहार्य्यः स्थितो धर्म्मे स नः सेनापतिर्भव।
रश्मिवतामिवादित्यो वीरुधामिव चन्द्रमाः। कुवेर इव यक्षाणां देवानामिव वासवः।
पर्व्वतानां यथा मेरुः सुपर्णः पक्षिणां यथा। कुमार इव भूतानां वसूनामिव हव्यवाट्। ५२९०
भवता हि वयं गुप्ताः शक्रेणेव दिवौकसः। अनाधृष्या भविष्यामस्त्रिदशानामपि ध्रुवं।
प्रयातु नो भवानग्रे देवानामिव पावकिः। वयं त्वामनुयास्यामः सौरभेया इवर्षभं।
॥ भीष्म उवाच ॥ एवमेतन्महाबाहो यथा वदसि भारत। यथैव हि भवन्तो मे तथैव मम पाण्डवाः।
अपि चैव मया श्रेयो वाच्यं तेषां नराधिप। संयोद्धव्यं तवार्थाय यथा मे समयः कृतः।
न च पश्यामि योद्धारमात्मनः सदृशं भुवि। ऋते तस्मान्नरव्याघ्रात् कुन्तीपुत्राद्धनञ्जयात्। ५२९५
स हि वेद महाबुद्धिर्दिव्यान्यस्त्राण्यनेकशः। न तु मां विवृतो युद्धे जातु युध्येत पाण्डवः।
अहञ्चैव क्षणेनैव निर्म्मनुष्यमिदं जगत्। कुर्य्यां शस्त्रबलेनैव ससुरासुरराक्षसं।
न त्वेवोत्सादनीया मे पाण्डोः पुत्त्रा जनाधिप। तस्मात् योधान् हनिष्यामि प्रयोगेणायुतं सदा।
एवमेषां करिष्यामि निधनं कुरुनन्दन। न चेत्ते मां हनिष्यन्ति पूर्व्वमेव समागमे।
सेनापतिस्त्वहं राजन् समयेनापरेण ते। भविष्यामि यथाकामं तन्मे श्रोतुमिहार्हसि। ५३००
कर्णो वा युध्यतां पूर्व्वमहं वा पृथिवीपते। स्पर्द्धते हि सदाऽत्यर्थं सूतपुत्त्रो मया रणे।
॥ कर्ण उवाच ॥ नाहं जीवति गाङ्गेये राजन् योत्स्ये कथञ्चन। हते भीष्मे तु योत्स्यामि सह गाण्डीवधन्वना।
॥ वैशम्पायन उवाच ॥ ततः सेनापतिञ्चक्रे विधिवत् भूरिदक्षिणं। धृतराष्ट्रात्मजो भीष्मं सोऽभिषिक्तो व्यरोचत।
ततो भेरीश्च शङ्खांश्च शतशोऽथ सहस्रशः। वादयामासुरव्यग्रा वादका राजशासनात्।
सिंहनादाश्च विविधा वाहनानाञ्च निस्वनाः। प्रादुरासीदनभ्रे च वर्षं रुधिरकर्द्दमं। ५३०५
निर्घाताः पृथिवीकम्पा गजबृंहितनिस्वनाः। आसंश्च सर्व्वयोधानां पीडयन्तो मनांस्युत।
वाचश्चाप्यशरीरिण्यो दिवश्चोल्काः प्रपेदिरे। शिवाश्च भयवेदिन्यो नेदुर्दीप्ततरा भृशं।
सैनापत्ये यदा राजा गाङ्गेयमभिषिक्तवान्। तदैतान्युपरूपाणि बभूवुः शतशो नृप।
ततः सेनापतिं कृत्वा भीष्मं परबलार्द्दनं। वाचयित्वा द्विजश्रेष्ठान् गोभिर्निष्कैश्च भूरिशः।
वर्द्धमानो जयाशीर्भिर्निर्ययौ सैनिकैर्वृतः। आपगेयं पुरस्कृत्य भ्रातृभिः सहितस्तदा। ५३१०
स्कन्धावारेण महता कुरुक्षेत्रं जगाम ह। परिक्रम्य कुरुक्षेत्रं कर्णेन सह कौरवः।

शिविरं मापयामास समे देशे जनाधिप। मधुरानूषरे देशे प्रभूतयवसेन्धने।
यथैव हास्तिनपुरं तद्वच्छिबिरमाबभौ।

इतिश्रीमहाभारते उद्योगपर्व्वणि सैन्यनिर्य्याणपर्व्वणि भीष्मसैनापत्ये पञ्चपञ्चाशदधिकशततमोऽध्यायः॥ १५५॥

॥जनमेजय उवाच॥ आपगेयं महात्मानं भीष्मं शस्त्रभृतां वरं। पितामहं भारतानां ध्वजं सर्व्वमहीक्षितां।
बृहस्पतिसमं बुद्ध्या क्षमया पृथिवीसमं। समुद्रमिव गाम्भीर्य्ये हिमवन्तमिव स्थिरं। ५११५
प्रजापतिमिवौदार्य्ये तेजसा भास्करोपमं। महेन्द्रमिव शत्रूणां ध्वंसनं शरवृष्टिभिः।
रणयज्ञे प्रवितते सुभीमे लोमहर्षणे। दीक्षितञ्चिररात्राय श्रुत्वा तत्र युधिष्ठिरः।
किमब्रवीन्महाबाहुः सर्व्वशस्त्रभृतां वरः। भीमसेनार्ज्जुनौ वाऽपि कृष्णो वा प्रत्यभाषत।
॥वैशम्पायन उवाच॥ आपद्धर्म्मार्थकुशलो महाबुद्धिर्युधिष्ठिरः। सर्व्वान् भ्रातॄन् समानीय वासुदेवञ्च शाश्वतं।
उवाच वदतां श्रेष्ठः सान्त्वपूर्व्वमिदं वचः। पर्य्याक्रामत सैन्यानि यत्तास्तिष्ठत दंशिताः। ५१२०
पितामहेन वो युद्धं पूर्व्वमेव भविष्यति। तस्मात् सप्तसु सेनासु प्रणेतॄन् मम पश्यत।
॥श्रीकृष्ण उवाच॥ यथाऽर्हति भवान् वक्तुमस्मिन् काले ह्युपस्थिते। तथेदमर्थवद्वाक्यमुक्तं ते भरतर्षभ।
रोचते मे महाबाहो क्रियतां यदनन्तरं। नायकास्तव सेनायां क्रियन्तामिह सप्त वै।
॥वैशम्पायन उवाच॥ ततो द्रुपदमानाय्य विराटं शिनिपुङ्गवं। धृष्टद्युम्नञ्च पाञ्चाल्यं धृष्टकेतुञ्च पार्थिवं।
शिखण्डिनञ्च पाञ्चाल्यं सहदेवञ्च मागधं। एतान् सप्त महाभागान् वीरान् युद्धाभिकाङ्क्षिणः। ५१२५
सेनाप्रणेतॄन् विधिवदभ्यषिञ्चत् युधिष्ठिरः। सर्व्वसेनापतिञ्चात्र धृष्टद्युम्नञ्चकार ह।
द्रोणान्तहेतोरुत्पन्नो य इद्धाज्जातवेदसः। सर्व्वेषामेव तेषान्तु समस्तानां महात्मनां।
सेनापतिपतिञ्चक्रे गुडाकेशं धनञ्जयं। अर्ज्जुनस्यापि नेता च संयन्ता चैव वाजिनां।
सङ्कर्षणानुजः श्रीमान्महाबुद्धिर्ज्जनार्द्दनः। तद्दृष्ट्वोपस्थितं युद्धं समासन्नं महात्ययं।
प्राविशत् भवनं राजन् पाण्डवस्य हलायुधः। सहाक्रूरप्रभृतिभिर्गदसाम्बोद्धवादिभिः। ५१३०
रौक्मिणेयाहुकसुतैश्चारुदेष्णपुरोगमैः। वृष्णिमुख्यैरधिगतैर्व्याघ्रैरिव बलोत्कटैः।
अभिगुप्तो महाबाहुर्म्मरुद्भिरिव वासवः। नीलकौशेयवसनः कैलासशिखरोपमः।
सिंहखेलगतिः श्रीमान्मदरक्तान्तलोचनः। तं दृष्ट्वा धर्म्मराजश्च केशवश्च महाद्युतिः।
उदतिष्ठत्ततः पार्थो भीमकर्म्मा वृकोदरः। गाण्डीवधन्वा ये चान्ये राजानस्तत्र केचन।
पूजयाञ्चक्रिरे ते वै समायान्तं हलायुधं। ततस्तं पाण्डवो राजा करे पस्पर्श पाणिना। ५१३५
वासुदेवपुरोगास्तं सर्व्व एवाभ्यवादयन्। विराटद्रुपदौ वृद्धावभिवाद्य हलायुधः।
युधिष्ठिरेण सहित उपाविशदरिन्दमः। ततस्तेषूपविष्टेषु पार्थिवेषु समन्ततः।
वासुदेवमभिप्रेक्ष्य रौहिणेयोऽभ्यभाषत। भविताऽयं महारौद्रो दारुणः पुरुषक्षयः।
दिष्टमेतत् ध्रुवं मन्ये न शक्यमतिवर्त्तितुं। अस्मात् युद्धात् समुत्तीर्णानपि वः ससुहृज्जनान्।

अरोगानक्षतैर्देहैर्द्रष्टास्मीति मतिर्मम। समेतं पार्थिवं क्षत्रं कालपक्वमसंशयं। ५२३०

विमर्द्दश्च महान् भावी मांसशोणितकर्द्दमः। उक्तो मया वासुदेवः पुनःपुनरुपह्वरे।

सम्बन्धिषु समां वृत्तिं वर्त्तस्व मधुसूदन। पाण्डवा हि यथाऽस्माकं तथा दुर्य्योधनो नृपः।

तस्यापि क्रियतां साह्यं सपर्य्येति पुनःपुनः। तच्च मे नाकरोद्वाक्यं त्वदर्थं मधुसूदनः।

निर्व्विष्टः सर्व्वभावेन धनञ्जयमवेक्ष्य ह। ध्रुवो जयः पाण्डवानामिति मे निश्चिता मतिः।

तथा ह्यभिनिवेशोऽयं वासुदेवस्य भारत। न चाहमुत्सहे कृष्णमृते लोकमुदीक्षितुं। ५२३५

ततोऽहमनुवर्त्तामि केशवस्य चिकीर्षितं। उभौ शिष्यौ हि मे वीरौ गदायुद्धविशारदौ।

तुल्यस्नेहोऽस्म्यतो भीमे तथा दुर्य्योधने नृपे। तस्मात् यास्यामि तीर्थानि सरस्वत्या निषेवितुं।

न हि शक्ष्यामि कौरव्यान्नश्यमानानुपेक्षितुं। एवमुक्त्वा महाबाहुरनुज्ञातश्च पाण्डवैः।

तीर्थयात्रां ययौ रामो निवर्त्त्य मधुसूदनं।

इति श्रीमहाभारते उद्योगपर्व्वणि सैन्यनिर्याणपर्व्वणि रामगमने षट्पञ्चाशदधिकशततमोऽध्यायः॥ १५६ ॥

॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु भीष्मकस्य महात्मनः। हिरण्यरोम्णो नृपतेः साक्षादिन्द्रसखस्य वै। ५२४०

आकृतीनामधिपतिर्भोजस्यातियशस्विनः। दाक्षिणात्यपतेः पुत्रो दिक्षु रुक्मीति विश्रुतः।

यः किम्पुरुषसिंहस्य गन्धमादनवासिनः। कृत्स्नं शिष्यो धनुर्व्वेदं चतुष्पादमवाप्तवान्।

यो माहेन्द्रं धनुर्लेभे तुल्यं गाण्डीवतेजसा। शार्ङ्गेण च महाबाहुः सम्मितं दिव्यलक्षणं।

त्रीण्येवैतानि दिव्यानि धनूंषि दिविचारिणां। वारुणं गाण्डिवं तत्र माहेन्द्रं विजयं धनुः।

शार्ङ्गन्तु वैष्णवं प्राहुर्दिव्यं तेजोमयं धनुः। धारयामास तत् कृष्णः परसेनाभयावहं। ५२४५

गाण्डीवं पावकाल्लेभे खाण्डवे पाकशासनिः। द्रुमाद्रुक्मी महातेजा विजयं प्रत्यपद्यत।

सञ्छिद्य मौरवान् पाशान्निहत्य मुरमोजसा। निर्जित्य नरकं भौममाहृत्य मणिकुण्डले।

षोडश स्त्रीसहस्राणि रत्नानि विविधानि च। प्रतिपेदे हृषीकेशः शार्ङ्गञ्च धनुरुत्तमं।

रुक्मी तु विजयं लब्ध्वा धनुर्मेघनिभस्वनं। विभीषयन्निव जगत् पाण्डवानभ्यवर्त्तत।

नामृष्यत पुरा योऽसौ स्वबाहुबलगर्व्वितः। रुक्मिण्या हरणं वीरो वासुदेवेन धीमता। ५२५०

कृत्वा प्रतिज्ञां नाहत्वा निवर्त्तिष्ये जनार्द्दनं। ततोऽन्वधावत् वार्ष्णेयं सर्व्वशस्त्रभृतां वरं।

सेनया चतुरङ्गिण्या महत्या दूरपातया। विचित्रायुधवर्म्मिण्या गङ्गयेव प्रवृद्धया।

स समासाद्य वार्ष्णेयं योगिनामीश्वरं प्रभुं। व्यंसितो व्रीडितो राजन्नाजगाम स कुण्डिनं।

यत्रैव कृष्णेन रणे निर्जितः परवीरहा। तत्र भोजकटं नाम कृतं नगरमुत्तमं।

सैन्येन महता तेन प्रभूतगजवाजिना। पुरं तद्भुवि विख्यातं नाम्ना भोजकटं नृप। ५२५५

स भोजराजः सैन्येन महता परिवारितः। अक्षौहिण्या महावीर्य्यः पाण्डवान् क्षिप्रमागमत्।

ततः स कवची धन्वी तली खड्गी शरासनी। ध्वजेनादित्यवर्णेन प्रविवेश महाचमूं।

विदितः पाण्डवेयानां वासुदेवप्रियेप्सया। युधिष्ठिरस्तु तं राजा प्रत्युद्गम्याभ्यपूजयत्।

स पूजितः पाण्डुपुत्रैर्यथान्यायं सुसंस्तुतः । प्रतिनन्द्य तु तान् सर्व्वान् विश्रान्तः सहसैनिकः ।
उवाच मध्ये वीराणां कुन्तीपुत्रं धनञ्जयं । सहायोऽस्मि स्थितो युद्धे यदि भीतोऽसि पाण्डव । ५३७०
करिष्यामि रणे साह्यमसह्यं तव शत्रुभिः । न हि मे विक्रमे तुल्यः पुमानस्तीह कश्चन ।
हनिष्यामि रणे भागं यन्मे दास्यसि पाण्डव । अपि द्रोणकृपौ वीरौ भीष्मकर्णावथो पुनः ।
अथ वा सर्व्व एवैते तिष्ठन्तु वसुधाधिपाः । निहत्य समरे शत्रूंस्तव दास्यामि मेदिनीं ।
इत्युक्तो धर्म्मराजस्य केशवस्य च सन्निधौ । शृण्वतां पार्थिवेन्द्राणामन्येषाञ्चैव सर्व्वशः ।
वासुदेवमभिप्रेक्ष्य धर्म्मराजञ्च पाण्डवं । उवाच धीमान् कौन्तेयः प्रहस्य सखिपूर्व्वकं । ५३७५
कौरवाणां कुले जातः पाण्डोः पुत्त्रो विशेषतः । द्रोणं व्यपदिशन् शिष्यो वासुदेवसहायवान् ।
भीतोऽस्मीति कथं ब्रूयां दधानो गाण्डिवं धनुः । युध्यमानस्य मे वीर गन्धर्व्वैः सुमहाबलैः ।
सहायो घोषयात्रायां कस्तदासीत् सखा मम । तथा प्रतिभये तस्मिन् देवदानवसङ्कुले ।
खाण्डवे युध्यमानस्य कः सहायस्तदाऽभवत् । निवातकवचैर्युद्धे कालकेयैश्च दानवैः ।
तत्र मे युध्यमानस्य कः सहायस्तदाऽभवत् । तथा विराटनगरे कुरुभिः सह सङ्गरे । ५३८०
युध्यतो बहुभिस्तत्र कः सहायोऽभवन्मम । उपजीव्य रणे रुद्रं शक्रं वैश्रवणं यमं ।
वरुणं पावकञ्चैव कृपं द्रोणञ्च माधवं । धारयन् गाण्डिवं दिव्यं धनुस्तेजोमयं दृढं ।
अक्षय्यशरसंयुक्तो दिव्यास्त्रपरिबृंहितः । कथमस्मद्विधो ब्रूयात् भीतोऽस्मीति यशोहरं ।
वचनं नरशार्दूल वज्रायुधमपि स्वयं । नास्मि भीतो महाबाहो सहायार्थश्च नास्ति मे ।
यथाकामं यथायोगं गच्छ वाऽन्यत्र तिष्ठ वा । विनिवर्त्त्य ततो रुक्मी सेनां सागरसन्निभां । ५३८५
दुर्य्योधनमुपागच्छत्तथैव भरतर्षभ । तथैव चाभिगम्यैनमुवाच वसुधाधिपः ।
प्रत्याख्यातश्च तेनापि स तदा शूरमानिना । द्वावेव तु महाराज तस्मात् युद्धाद्व्यपेयतुः ।
रौहिणेयश्च वार्ष्णेयो रुक्मी च वसुधाधिपः । गते रामे तीर्थयात्रां भीष्मकस्य सुते तथा ।
उपाविशन् पाण्डवेया मन्त्राय पुनरेव च । समितिर्धर्म्मराजस्य सा पार्थिवसमाकुला ।
शुशुभे तारकैश्चित्रा द्यौश्चन्द्रेणेव भारत । ५३९०

इति श्रीमहाभारते उद्योगपर्व्वणि सैन्यनिर्याणपर्व्वणि रुक्मिप्रत्याख्याने सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

॥ जनमेजय उवाच ॥ तथा व्यूढेष्वनीकेषु कुरुक्षेत्रे द्विजर्षभ । किमकुर्व्वंश्च कुरवः कालेनाभिप्रचोदिताः ।
॥ वैशम्पायन उवाच ॥ तथा व्यूढेष्वनीकेषु यत्तेषु भरतर्षभ । धृतराष्ट्रो महाराज सञ्जयं वाक्यमब्रवीत् ।
एहि सञ्जय सर्व्वं मे आचक्ष्वानवशेषतः । सेनानिवेशे यद्वृत्तं कुरुपाण्डवसेनयोः ।
दिष्टमेव परं मन्ये पौरुषञ्चाप्यनर्थकं । यदहं बुध्यमानोऽपि युद्धदोषान् क्षयोदयान् ।
तथाऽपि निकृतिप्रज्ञं पुत्रं दुर्द्यूतदेविनं । न शक्नोमि नियन्तुं वा कर्त्तुं वा हितमात्मनः । ५३९५
भवत्येव हि मे सूत बुद्धिर्दोषानुदर्शिनी । दुर्य्योधनं समासाद्य पुनः सा परिवर्त्तते ।
एवं गते वै यद्भावि तद्भविष्यति सञ्जय । क्षत्रधर्म्मः किल रणे तनुत्यागो हि पूजितः ।

॥ सञ्जय उवाच॥ लघुकोऽयमनुप्रश्नो महाराज यथेच्छसि। तन्तु दुर्य्योधने दोषमिममाधातुमर्हसि।
शृणुष्वानवशेषेण वदतो मम पार्थिव। य आत्मनो दुश्चरिताद्शुभं प्राप्नुयान्नरः।
न स कालं न वा दैवं कलुमेतद्विगर्हति। महाराज मनुष्येषु निन्द्यं यः सर्व्वमाचरेत्। ५४००
स वध्यः सर्व्वलोकस्य निन्दितानि समाचरन्। निकारा मनुजश्रेष्ठ पाण्डवैस्त्वत्प्रतीक्षया।
अनुभूताः सहामात्यैर्निकृतैरधिदेवने। हयानाञ्च गजानाञ्च राज्ञाञ्चामिततेजसां।
वैशसं समरे वृत्तं यत्तन्मे शृणु सर्व्वशः। स्थिरो भूत्वा महाप्राज्ञ सर्व्वलोकक्षयोदयं।
यथाभूतं महायुद्धे श्रुत्वा मैकमना भव। न ह्येव कर्त्ता पुरुषः कर्म्मणोः शुभपापयोः।
अस्वतन्त्रो हि पुरुषः कार्य्यते दारुयन्त्रवत्। केचिदीश्वरनिर्द्दिष्टाः केचिदेव यदृच्छया। ५४०५
पूर्व्वकर्म्मभिरप्यन्ये त्रैधमेतत् प्रदृश्यते। तस्मादनर्थमापन्नः स्थिरो भूत्वा निशामय।
इति श्रीमहाभारते उद्योगपर्व्वणि सैन्यनिर्य्याणपर्व्वणि सञ्जयवाक्ये अष्टपञ्चाशदधिकशततमोऽध्यायः समाप्तञ्च सैन्यनिर्याण पर्व्व॥ १५८॥

## ॥ अथ उलूकदूतागमनपर्व्व॥ ११॥

॥ सञ्जय उवाच॥ हिरण्वत्यां निविष्टेषु पाण्डवेषु महात्मसु। न्यविशन्त महाराज कौरवेया यथाविधि।
तत्र दुर्य्योधनो राजा निवेश्य बलमोजसा। सम्मानयित्वा नृपतीन् न्यस्य गुल्मांस्तथैव च।
आरक्षस्य विधिं कृत्वा योधानां तत्र भारत। कर्णं दुःशासनञ्चैव शकुनिञ्चापि सौबलं।
आनाय्य नृपतींस्तत्र मन्त्रयामास भारत। तत्र दुर्य्योधनो राजा कर्णेन सह भारत। ५४१०
सम्भाषयित्वा कर्णेन भ्रात्रा दुःशासनेन च। सौबलेन च राजेन्द्र मन्त्रयित्वा नरर्षभ।
आहूयोपह्वरे राजन्नुलूकमिदमब्रवीत्। उलूक गच्छ कैतव्य पाण्डवान् सहसोमकान्।
गत्वा मम वचो ब्रूहि वासुदेवस्य शृण्वतः। इदन्तत् समनुप्राप्तं वर्षपूगाभिचिन्तितं।
पाण्डवानां कुरूणाञ्च युद्धं लोकभयङ्करं। यदेतत् कत्थनावाक्यं सञ्जयो महदब्रवीत्।
वासुदेवसहायस्य गर्ज्जतः सानुजस्य ते। मध्ये कुरूणां कौन्तेय तस्य कालोऽयमागतः। ५४१५
यथा वः सम्प्रतिज्ञातं तत् सर्व्वं क्रियतामिति। ज्येष्ठं तथैव कौन्तेयं ब्रूयास्त्वं वचनान्मम।
भ्रातृभिः सहितं सर्व्वैः सोमकैश्च सकेकयैः। कथं वा धार्म्मिको भूत्वा त्वमधर्म्मे मनः कृथाः।
य इच्छसि जगत्सर्व्वं नश्यमानं नृशंसवत्। अभयं सर्व्वभूतेभ्यो दाता त्वमिति मे मतिः।
श्रूयते हि पुरा गीतः श्लोकोऽयं भरतर्षभ। प्रह्लादेनाथ भद्रन्ते हृते राज्ये तु दैवतैः।
यस्य धर्म्मध्वजो नित्यं सुरा ध्वज इवोच्छ्रितः। प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतं। ५४२०
अत्र ते वर्त्तयिष्यामि आख्यानमिदमुत्तमं। कथितं नारदेनेह पितुर्म्मम नराधिप।
मार्ज्जारः किल दुष्टात्मा निश्चेष्टः सर्व्वकर्म्मसु। ऊर्द्ध्वबाहुः स्थितो राजन् गङ्गातीरे कदाचन।
स वै कृत्वा मनः शुद्धिं प्रत्ययार्थं शरीरिणां। करोमि धर्म्ममित्याह सर्व्वानेव शरीरिणः।

तस्य कालेन महता विश्रम्भं जग्मुरण्डजाः । समेत्य च प्रशंसन्ति मार्ज्जारं तं विशाम्पते ।
पूज्यमानस्तु तैः सर्व्वैः पक्षिभिः पक्षिभोजनः । आत्मकार्य्यं कृतं मेने चर्य्यायाश्च कृतं फलं । ५४२५
अथ दीर्घस्य कालस्य तं देशं मूषिका ययुः । ददृशुस्तञ्च ते तत्र धार्म्मिकं व्रतचारिणं ।
कार्य्येण महता युक्तं दम्भयुक्तेन भारत । तेषां मतिरियं राजन्नासीत्तत्र विनिश्चये ।
बहुमित्रा वयं सर्व्वे तेषां नो मातुलो ह्ययं । रक्षां करोतु सततं वृद्धबालस्य सर्व्वशः ।
उपगम्य तु ते सर्व्वे विडालमिदमब्रुवन् । भवत्प्रसादादिच्छामश्चर्त्तुञ्चैव यथासुखं ।
भवान्नो गतिरव्यग्रा भवान्नः परमः सुहृत् । ते वयं सहिताः सर्व्वे भवन्तं शरणङ्गताः । ५४३०
भवान् धर्म्मपरो नित्यं भवान् धर्म्मे व्यवस्थितः । स नो रक्ष महाप्राज्ञ त्रिदशानिव वज्रभृत् ।
एवमुक्तस्तु तैः सर्व्वैर्मूषिकैः स विशाम्पते । प्रत्युवाच ततः सर्व्वान्मूषिकान्मूषिकान्तकृत् ।
द्वयोर्योगं न पश्यामि तपसो रक्षणस्य च । अवश्यन्तु मया कार्य्यं वचनं भवतां हितं ।
युष्माभिरपि कर्त्तव्यं वचनं मम नित्यशः । तपसाऽस्मि परिश्रान्तो दृढं नियममास्थितः ।
न चापि गमने शक्तिं काञ्चित् पश्यामि चिन्तयन् । सोऽस्मि नेयः सदा तात नदीकूलमितः परं । ५४३५
तथेति ते प्रतिज्ञाय मूषिका भरतर्षभ । वृद्धबालमथो सर्व्वं मार्ज्जाराय न्यवेदयन् ।
ततः स पापो दुष्टात्मा मूषिकानथ भक्षयन् । पीवरश्च सुवर्णश्च दृढबन्धश्च जायते ।
मूषिकाणां गणश्चात्र भृशं सङ्क्षीयतेऽथ सः । मार्ज्जारो वर्द्धते चापि तेजोबलसमन्वितः ।
ततस्ते मूषिकाः सर्व्वे समेत्यान्योऽन्यमब्रुवन् । मातुलो वर्द्धते नित्यं वयं क्षीयामहे भृशं ।
ततः प्राज्ञतमः कश्चित् डिण्डिको नाम मूषिकः । अब्रवीत् वचनं राजन् मूषिकाणां महागणं । ५४४०
गच्छतां वो नदीतीरं सहितानां विशेषतः । पृष्ठतोऽहं गमिष्यामि सहैव मातुलेन तु ।
साधु साध्विति ते सर्व्वे पूजयाञ्चक्रिरे तदा । चक्रुश्चैव यथान्यायं डिण्डिकस्य वचोऽर्थवत् ।
अविज्ञानात्ततः सोऽथ डिण्डिकं ह्युपभुक्तवान् । ततस्ते सहिताः सर्व्वे मन्त्रयामासुरञ्जसा ।
तत्र वृद्धतमः कश्चित् कोलिको नाम मूषिकः । अब्रवीद्वचनं राजन् ज्ञातिमध्ये यथातथं ।
न मातुलो धर्म्मकामश्छद्ममात्रं कृता शिखा । न मूलफलभक्षस्य विष्ठा भवति लोमशा । ५४४५
अस्य गात्राणि वर्द्धन्ते गणश्च परिहीयते । अद्य सप्ताष्टदिवसात् डिण्डिकोऽपि न दृश्यते ।
एतच्छ्रुत्वा वचः सर्व्वे मूषिका विप्रदुद्रुवुः । विडालोऽपि स दुष्टात्मा जगामैव यथागतं ।
तथा त्वमपि दुष्टात्मन् वैडालं व्रतमास्थितः । चरसि ज्ञातिषु सदा विडालो मूषिकेष्विव ।
अन्यथा किल ते वाक्यमन्यथा कर्म्म दृश्यते । दर्शनार्थाय लोकस्य वेदाश्चोपशमश्च ते ।
त्यक्त्वा छद्म त्विदं राजन् क्षत्रधर्म्मं समाश्रितः । कुरु कार्य्याणि सर्व्वाणि धर्म्मिष्ठोऽसि नरर्षभ । ५४५०
बाहुवीर्य्येण पृथिवीं लब्ध्वा भरतसत्तम । देहि दानं द्विजातिभ्यः पितृभ्यश्च यथोचितं ।
क्लिष्टाया वर्षपूगांश्च मातुर्मातृहिते स्थितः । प्रमार्ज्जाश्रु रणे जित्वा संमानं परमावह ।
पञ्चग्रामा वृता यत्नान्नास्माभिरपवर्ज्जिताः । युध्यामहे कथं सङ्ख्ये कोपयेम च पाण्डवान् ।

त्वत्कृते दुष्टभावस्य सन्त्यागो विदुरस्य च। जातुषे च गृहे दाहं स्मरंस्त्वं पुरुषो भव।
यच्च कृष्णमवोचस्त्वमायान्तं कुरुसंसदि। अयमस्मि स्थितो राजन् शमाय समराय च। ५३५५
तस्यायमागतः कालः समरस्य नराधिप। एतदर्थं मया सर्व्वं कृतमेतत् युधिष्ठिर।
किन्नु युद्धात् परं लाभं क्षत्त्रियो बहु मन्यते। किञ्च त्वं क्षत्त्रियकुले जातः सम्प्रथितो भुवि।
द्रोणादस्त्राणि सम्प्राप्य कृपाच्च भरतर्षभ। तुल्ययोनौ समबले वासुदेवं समाश्रितः।
ब्रूयास्त्वं वासुदेवञ्च पाण्डवानां समीपतः। आत्मार्थं पाण्डवार्थञ्च यत्तो मां प्रतिबोधय।
सभामध्ये च यद्रूपं मायया कृतवानसि। तत्तथैव पुनः कृत्वा सार्ज्जुनो मामभिद्रव। ५३६०
इन्द्रजालञ्च माया वै कुहका वाऽपि भीषणा। आत्तशस्त्रस्य सङ्ग्रामे वहन्ति प्रतिगर्ज्जनाः।
वयमप्युत्सहेम द्यां खञ्च गच्छेम मायया। रसातलं विशामोऽपि ऐन्द्रं वा पुरमेव तु।
दर्शयेम च रूपाणि स्वशरीरे बहून्यपि। न तु पर्य्यायतः सिद्धिर्बुद्धिमाप्नोति मानुषीं।
मनसैव हि भूतानि धातैव कुरुते वशे। यत् ब्रवीषि च वार्ष्णेय धार्त्तराष्ट्रानहं रणे।
घातयित्वा प्रदास्यामि पार्थेभ्यो राज्यमुत्तमं। आचचक्षे च मे सर्व्वं सञ्जयस्तव भाषितं। ५३६५
मद्द्वितीयेन पार्थेन वैरं वः सव्यसाचिना। स सत्यसङ्गरो भूत्वा पाण्डवार्थे पराक्रमी।
युध्यस्वाद्य रणे यत्तः पश्यामः पुरुषो भव। यस्तु शत्रुमभिज्ञाय शुद्धं पौरुषमास्थितः।
करोति द्विषतां शोकं स जीवति सुजीवितं। अकस्माच्चैव ते कृष्ण ख्यातं लोके महद्यशः।
अद्येदानीं विजानीमः सन्ति षण्ढाः सशृङ्गकाः। मद्विधो नापि नृपतिस्त्वयि युक्तः कथञ्चन।
सन्नाहं संयुगे कर्त्तुं कंसभृत्ये विशेषतः। तञ्च तूवरकं बालं बह्वाशिनमविद्यकं। ५३७०
उलूक मद्वचो ब्रूहि असकृत् भीमसेनकं। विराटनगरे पार्थ यस्त्वं सूदो ह्यभूः पुरा।
बल्लवो नाम विख्यातस्तन्ममैव हि पौरुषं। प्रतिज्ञातं सभामध्ये न तन्मिथ्या त्वया पुरा।
दुःशासनस्य रुधिरं पीयतां यदि शक्यते। यत्ब्रवीषि च कौन्तेय धार्त्तराष्ट्रानहं रणे।
निहनिष्यामि तरसा तस्य कालोऽयमागतः। त्वं हि भोज्ये पुरस्कार्य्यो भक्ष्ये पेये च भारत।
क्व युद्धं क्व च भोक्तव्यं युध्यस्व पुरुषो भव। शयिष्यसि हतो भूमौ गदामालिङ्ग्य भारत। ५३७५
तद्वृथा च सभामध्ये वल्गितं ते वृकोदर। उलूक नकुलं ब्रूहि वचनान्मम भारत।
युध्यस्वाद्य स्थिरो भूत्वा पश्यामस्तव पौरुषं। युधिष्ठिरानुरागञ्च द्वेषञ्च मयि भारत।
कृष्णायाश्च परिक्लेशं स्मरेदानीं यथातथं। ब्रूयास्त्वं सहदेवञ्च राजमध्ये वचो मम।
युध्येदानीं रणे यत्तः क्लेशान् स्मर च पाण्डव। विराटद्रुपदौ चोभौ ब्रूयास्त्वं वचनान्मम।
न दृष्टपूर्व्वा भर्त्तारो भृत्यैरपि महागुणैः। तथाऽर्थपतिभिर्भृत्या यतः सृष्टाः प्रजास्ततः। ५३८०
अश्लाघ्योऽयं नरपतिर्युवयोरिति चागतं। ते यूयं संहता भूत्वा तद्वधार्थं ममापि च।
आत्मार्थं पाण्डवार्थञ्च प्रयुध्यध्वं मया सह। धृष्टद्युम्नञ्च पाञ्चाल्यं ब्रूयास्त्वं वचनान्मम।
एष ते समयः प्राप्तो लब्धव्यश्च त्वयाऽपि सः। द्रोणमासाद्य समरे ज्ञास्यसे हितमुत्तमं।

युध्यस्व सगुहत्वार्थं कुरु कर्म सुदुष्करं । विचकिन्नमयी भूमिः अलूक वचमानज ।
क्लीति मत्वा महाकाकर्णं दर्पिष्यति कौरवाः । माङ्गेयो धर्म्मिनां श्रेष्ठो कुर्वेदानीं सुनिर्भयः । ५४८८
कुरु कर्म रणे यत्तः पश्यामः पौरुषं तव । एवमुक्तो ततो राजा प्रहसन्नुलूकमब्रवीत् ।
धनञ्जयं पुनर्ब्रूहि वासुदेवस्य शृण्वतः । अस्मान् वा त्वं पराजित्य प्रशाधि पृथिवीमिमां ।
अथवा निर्जितोऽस्माभीरणे वीर शयिष्यसि । राष्ट्रान्निर्वासनक्लेशं वनवासञ्च पाण्डव ।
कृष्णायाश्च परिक्लेशं संस्मरन् पुरुषो भव । यदर्थं क्षत्रिया सूते सर्वं तदिदमागतं ।
बलं वीर्य्यञ्च शौर्य्यञ्च परञ्चाप्यस्त्रलाघवं । पौरुषं दर्शयन् युद्धे कोपस्य कुरु निष्कृतिं । ५४९०
परिक्लिष्टस्य दीनस्य दीर्घकालोषितस्य च । हृदयं न स्फुटेत् कस्य ऐश्वर्य्यात् भ्रंशितस्य च ।
कुले जातस्य शूरस्य परवित्तेष्वगृध्यतः । आच्छिन्नं राज्यमाक्रम्य कोपं कस्य न दीपयेत् ।
यत्तदुक्तं महद्वाक्यं कर्म्मणा तद्विभाव्यतां । अकर्म्मणा कत्थितेन सन्तः कुपुरुषं विदुः ।
अमित्राणां वशे स्थानं राज्यस्य पुनरुद्धर । द्वावर्थौ युद्धकामस्य तस्मात् कुरुत पौरुषं ।
पराजितोऽसि द्यूतेन कृष्णा चानायिता सभां । शक्योऽमर्षो मनुष्येण कर्त्तुं पुरुषमानिना । ५४९५
द्वादशैव तु वर्षाणि वने धिष्ण्याद्विवासितः । संवत्सरं विराटस्य दास्यमास्थाय चोषितः ।
राष्ट्रान्निर्वासनक्लेशं वनवासञ्च पाण्डव । कृष्णायाश्च परिक्लेशं संस्मरन् पुरुषो भव ।
अप्रियाणाञ्च वचनं प्रब्रुवत्सु पुनः पुनः । अमर्षं दर्शयस्व त्वममर्षो ह्येव पौरुषं ।
क्रोधो बलं तथा वीर्य्यं ज्ञानयोगोऽस्त्रलाघवं । इह ते दृश्यतां पार्थ युध्यस्व पुरुषो भव ।
लोहाभिहारो निर्वृत्तः कुरुक्षेत्रमकर्द्दमं । पुष्टास्तेऽश्वा भृता योधाः श्वो युध्यस्व सकेशवः । ५५००
असमागम्य भीष्मेण संयुगे किं विकत्थसे । आरुरुक्षुर्यथा मन्दः पर्व्वतं गन्धमादनं ।
एवं कत्थसि कौन्तेय अकत्थन् पुरुषो भव । सूतपुत्रं सुदुर्द्धर्षं शल्यञ्च बलिनां वरं ।
द्रोणञ्च बलिनां श्रेष्ठं शचीपतिसमं युधि । अजित्वा संयुगे पार्थ राज्यं कथमिहेच्छसि ।
ब्राह्मे धनुषि चाचार्य्यं वेदयोरन्तगं द्वयोः । युधि धुर्य्यमविक्षोभ्यमनीकचरमच्युतं ।
द्रोणं महाद्युतिं पार्थ जेतुमिच्छसि तन्मृषा । न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिं । ५५०५
अनिलो वा वहेन्मेरुं द्यौर्व्वाऽपि निपतेन्महीं । युगं वा परिवर्त्तेत यद्येवं स्यात् यथात्थ मां ।
को ह्याभ्यां जीविताकाङ्क्षी प्राप्यास्त्रमरिमर्द्दनं । पार्थो वा इतरो वाऽपि कोऽन्यः स्वस्ति गृहान् व्रजेत् ।
कथमाभ्यामभिध्यातः संसृष्टो दारुणेन वा । रणे जीवन् प्रमुच्येत पदा भूमिमुपस्पृशन् ।
किं दर्दुरः कूपशयो यथेमां न बुध्यसे राजचमूं समेतां । दुराधर्षां देवचमूप्रकाशां गुप्तां नरेन्द्रैस्त्रिदशैरिव द्यां ।
प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यैरुदीच्यकाम्बोजशकैः खशैश्च । शाल्वैः समत्स्यैः कुरुमध्यदेश्यैर्म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाञ्च्यैः ॥ ५५१०
नानाजनौघं युधि सम्प्रवृद्धं गाङ्गं यथा वेगमपारणीयं । मां च स्थितं नागबलस्य मध्ये युयुत्ससे मन्द किमल्पबुद्धे ।
अक्षय्याविषुधी चैव अग्निदत्तञ्च ते रथं । जानीमो हि रणे पार्थ केतुं दिव्यञ्च भारत ।
अकत्थमानो युध्यस्व कत्थसेऽर्जुन किं बहु । पर्य्यायात् सिद्धिरेतस्य नैतत् सिध्यति कत्थनात् ।

द्वादशैव तु वर्षाणि वने धिष्ण्याद्विवासिताः । संवत्सरं विराटस्य दास्यमास्थाय चोषिताः ।
अमर्षं राज्यहरणं वनवासञ्च पाण्डव । द्रौपद्याश्च परिक्लेशं संस्मरन् पुरुषो भव ।
अप्रियेण च यत्प्रोक्तं भीमसेनेन पाण्डव । दुःशासनस्य रुधिरं पीयतां यदि शक्यते ।
लोहाभिहारो निर्वृत्तः कुरुक्षेत्रमकर्दमं । समः पन्था भृतास्तेऽश्वाः श्वो युध्यस्व सकेशवः । ५४३५
असमागम्य भीष्मेण संयुगे किं विकत्थसे । आरुरुक्षुर्यथा मन्दः पर्वतं गन्धमादनं ।
एवं कत्थसि कौन्तेय अकत्थन् पुरुषो भव । सूतपुत्रं सुदुर्द्धर्षं शल्यञ्च बलिनां वरं ।
द्रोणञ्च बलिनां श्रेष्ठं शचीपतिसमं युधि । अजित्वा संयुगे पार्थ राज्यं कथमिहेच्छसि ।
ब्राह्मे धनुषि चाचार्यं वेदयोरन्तगं द्वयोः । युधि धुर्य्यमविक्षोभ्यमनीकचरमच्युतं ।
द्रोणं महाद्युतिं पार्थ जेतुमिच्छसि तन्मृषा । न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिं । ५४४०
अनिलो वा वहेन्मेरुं द्यौर्व्वाऽपि निपतेन्महीं । युगं वा परिवर्त्तेत यद्येवं स्यात् यथात्थ मां ।
को ह्यस्ति जीविताकाङ्क्षी प्राप्येममरिमर्द्दनं । गजो वाजी रथो वाऽपि पुनः स्वस्ति गृहान् व्रजेत् ।
कथमाभ्यामभिध्यातः संसृष्टो दारुणेन वा । रणे जीवन् विमुच्येत पदा भूमिमुपस्पृशन् ।
किं दर्दुरः कूपशयो यथेमां न बुध्यसे राजचमूं समेतां । दुराधर्षां देवचमूप्रकाशां गुप्तां नरेन्द्रैस्त्रिदशैरिव द्यां ।
प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यैरुदीच्यकाम्बोजशकैः खशैश्च । शाल्वैः समत्स्यैः कुरुमध्यदेश्यैर्म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाञ्च्यैः । ५४४५
नानाजनौघं युधि सम्प्रवृद्धं गाङ्गं यथा वेगमपारणीयं । माञ्च स्थितं नागबलस्य मध्ये युयुत्ससे मन्द किमल्पबुद्धे ।
इत्येवमुक्त्वा राजानं धर्म्मपुत्रं युधिष्ठिरं । अभ्यावृत्य पुनर्जिष्णुमुलूकः प्रत्यभाषत ।
अकत्थमानो युध्यस्व कत्थसेऽर्ज्जुन किं बहु । पर्य्यायात् सिद्धिरेतस्य नैतत् सिध्यति कत्थनात् ।
यदीदं कत्थनाल्लोके सिध्येत् कर्म्म धनञ्जय । सर्व्वे भवेयुः सिद्धार्थाः कत्थने को हि दुर्गतः ।
जानामि ते वासुदेवं सहायं जानामि ते गाण्डिवं तालमात्रं । जानाम्येतत् त्वादृशो नास्ति योद्धा जानानस्ते राज्यमेतद्धरामि । ५४५०
न तु पर्य्यायधर्म्मेण राज्यं प्राप्नोति मानुषः । मनसैवानुकूलानि विधाता कुरुते वशे ।
त्रयोदशसमा भुक्तं राज्यं विलपतस्तव । भूयश्चैव प्रशासिष्ये निहत्य त्वां सबान्धवं ।
क्व तदा गाण्डिवं तेऽभूत् यदा दासपणैर्ज्जितः । क्व तदा भीमसेनस्य बलमासीच्च फाल्गुन ।
सगदाद्भीमसेनाद्वा पार्थाद्वापि सगाण्डिवात् । न वै मोक्षस्तदा वोऽभूद्विना कृष्णामनिन्दितां ।
सा वो दास्यं समापन्नान् मोक्षयामास पार्षती । अमानुष्यसमायुक्तान् दासकर्म्मण्यवस्थितान् । ५४५५
अवोचं यत् षण्ढतिलानहं वस्तथ्यमेव तत् । धृता हि वेणी पार्थेन विराटनगरे तदा ।
सूदकर्म्मणि च श्रान्तं विराटस्य महानसे । भीमसेनेन कौन्तेय यच्च तन्मम पौरुषं ।
एवमेतत् सदा दण्डं क्षत्रियाः क्षत्रिये दधुः । वेणीं कृत्वा षण्ढवेशः कन्यां नर्त्तितवानसि ।
न भयाद्वासुदेवस्य न चापि तव फाल्गुन । राज्यं प्रतिप्रदास्यामि युध्यस्व सहकेशवः ।
न माया हीन्द्रजालं वा कुहका वा विभीषिका । आत्तशस्त्रस्य मे युद्धे वहन्ति प्रतिगर्ज्जनाः । ५४६०

वासुदेवसहस्रं वा फाल्गुनानां शतानि वा । आसाद्य माममोघेषुं द्रविष्यन्ति दिशो दश ।
संयुगं गच्छ भीमेन भिन्धि वा शिरसा गिरिं । प्रतरस्व महागाधं बाहुभ्यां पुरुषोदधिं ।
शारद्वतमहामीनं विंशतिस्रवाकुलं । बृहद्बलमहोच्छ्रालं सौमदत्तितिमिङ्गिलं ।
भीष्मवेगमपर्य्यन्तं द्रोणग्राहदुरासदं । कर्णशल्यझषावर्त्तं काम्बोजवडवामुखं ।
जयद्रथाद्रिं पुरुमित्रगाधं दुर्मर्षणोदं शकुनिप्रपातं । शस्त्रौघमक्षय्यमतिप्रवृद्धं यदावगाह्य श्रमनष्टचेताः । ५४७५
भविष्यसि त्वं हतसर्व्वबान्धवस्तदा मनस्ते परितापमेष्यति । तदा मनस्ते त्रिदिवादिवाशुचेर्निवर्त्तिता पार्थ महीप्रशासनात् ।
प्रशास्य राज्यं हि सुदुर्लभं त्वया बुभूषितः स्वर्ग इवातपस्विना ।
इति श्रीमहाभारते उद्योगपर्व्वणि उलूकदूतागमनपर्व्वणि उलूकवाक्ये षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥
॥ सञ्जय उवाच ॥ उलूकस्त्वर्ज्जुनं भूयो यथोक्तं वाक्यमब्रवीत् । आशीविषमिव क्रुद्धं तुदन् वाक्यशलाकया ।
तस्य तद्वचनं श्रुत्वा रुषिताः पाण्डवा भृशं । प्रागेव भृशसंक्रुद्धाः कैतव्येनापि धर्षिताः ।
आसनेषूदतिष्ठन्त बाहूंश्चैव प्रचिक्षिपुः । आशीविषा इव क्रुद्धा वीक्षाञ्चक्रुः परस्परं । ५४८०
अवाक्शिरा भीमसेनः समुदैक्षत केशवं । नेत्राभ्यां लोहितान्ताभ्यामाशीविष इव श्वसन् ।
आर्त्तं वातात्मजं दृष्ट्वा क्रोधेनाभिहतं भृशं । उत्स्मयन्निव दाशार्हः कैतव्यं प्रत्यभाषत ।
प्रयाहि शीघ्रं कैतव्य ब्रूयाश्चैव सुयोधनं । श्रुतं वाक्यं गृहीतोऽर्थो मतं यत्ते तथाऽस्तु तत् ।
एवमुक्त्वा महाबाहुः केशवो राजसत्तम । पुनरेव महाप्राज्ञं युधिष्ठिरमुदैक्षत ।
सृञ्जयानाञ्च सर्व्वेषां कृष्णस्य च यशस्विनः । द्रुपदस्य सपुत्रस्य विराटस्य च सन्निधौ । ५४८५
भूमिपानाञ्च सर्व्वेषां मध्ये वाक्यं जगाद ह । उलूकोऽप्यर्ज्जुनं भूयो यथोक्तं वाक्यमब्रवीत् ।
आशीविषमिव क्रुद्धं तुदन् वाक्यशलाकया । कृष्णादींश्चैव तान् सर्व्वान् यथोक्तं वाक्यमब्रवीत् ।
उलूकस्य तु तद्वाक्यं पापं दारुणमीरितं । श्रुत्वा विचुक्षुभे पार्थो ललाटञ्चाप्यमार्ज्जयत् ।
तदवस्थं तदा दृष्ट्वा पार्थं सा समितिर्नृप । नामृष्यन्त महाराज पाण्डवानां महारथाः ।
अधिक्षेपेण कृष्णस्य पार्थस्य च महात्मनः । श्रुत्वा ते पुरुषव्याघ्राः क्रोधाज्जज्वलुरच्युताः । ५४९०
धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः । केकया भ्रातरः पञ्च राक्षसश्च घटोत्कचः ।
द्रौपदेयाभिमन्युश्च धृष्टकेतुश्च पार्थिवः । भीमसेनश्च विक्रान्तो यमजौ च महारथौ ।
उत्पेतुरासनात् सर्व्वे क्रोधसंरक्तलोचनाः । बाहून् प्रगृह्य रुचिरान् रक्तचन्दनभूषितान् ।
अङ्गदैः पारिहार्य्यैश्च केयूरैश्च विभूषितान् । दन्तान् दन्तेषु निष्पिष्य सृक्किणी परिलेलिहन् ।
तेषामाकारभावज्ञः कुन्तीपुत्रो वृकोदरः । उदतिष्ठत् स वेगेन क्रोधेन प्रज्वलन्निव । ५४९५
उद्वृत्य सहसा नेत्रे दन्तान् कटकटाय्य च । हस्तं हस्तेन निष्पिष्य उलूकं वाक्यमब्रवीत् ।
अशक्तानामिवास्माकं प्रोत्साहननिमित्तकं । श्रुतं ते वचनं मूर्ख यत्त्वां दुर्य्योधनोऽब्रवीत् ।
तन्मे कथयतो मन्द शृणु वाक्यं दुरासदं । सर्व्वक्षत्रस्य मध्ये त्वं यद्वक्ष्यसि सुयोधनं ।
शृण्वतः सूतपुत्रस्य शकुनेश्च दुरात्मनः । अस्माभिः प्रीतिकामैस्तु भ्रातुर्ज्येष्ठस्य नित्यशः ।

मर्षितं ते दुराचार तत्त्वं न बहु मन्यसे। प्रेषितश्च हृषीकेशः शमाकाङ्क्षी कुरून् प्रति। ५९१०
कुलस्य हितकामेन धर्मराजेन धीमता। त्वं कालचोदितो नूनं गन्तुकामो यमक्षयं।
गच्छस्वाहवमस्माभिस्तच्च श्वो भविता ध्रुवं। मयाऽपि च प्रतिज्ञातो वधः सभ्रातृकस्य ते।
स तथा भविता पाप नात्र कार्य्या विचारणा। वेलामतिक्रमेत् सद्यः सागरो वरुणालयः।
पर्व्वताश्च विशीर्य्येयुर्मयोक्तं न मृषा भवेत्। सहायस्ते यदि यमः कुबेरो रुद्र एव वा।
यथाप्रतिज्ञं दुर्ब्बुद्धे प्रकरिष्यन्ति पाण्डवाः। दुःशासनस्य रुधिरं पाता चास्मि यथेप्सितं। ५९१५
यश्चेह प्रतिसंरब्धः क्षत्रियो माऽभियास्यति। अपि भीष्मं पुरस्कृत्य तं नेष्यामि यमक्षयं।
यच्चैतदुक्तं वचनं मया क्षत्रस्य संसदि। यथैतद्भविता सत्यं तथैवात्मानमालभे।
भीमसेनवचः श्रुत्वा सहदेवोऽप्यमर्षणः। क्रोधसंरक्तनयनस्ततो वाक्यमुवाच ह।
शौटीरशूरसदृशमनीकजनसंसदि। शृणु पाप वचो मह्यं यद्वाच्यो हि पिता त्वया।
नास्माकं भविता भेदः कदाचित् कुरुभिः सह। धृतराष्ट्रस्य सम्बन्धो यदि न स्यात् त्वया सह। ५९२०
त्वन्तु लोकविनाशाय धृतराष्ट्रकुलस्य च। उत्पन्नो वैरपुरुषः स्वकुलघ्नश्च पापकृत्।
जन्मप्रभृति चास्माकं पिता ते पापपूरुषः। अहितानि नृशंसानि नित्यशः कर्त्तुमिच्छति।
तस्य वैरानुषङ्गस्य गन्ताऽस्म्यन्तं सुदुर्गमं। अहमादौ निहत्य त्वां शकुनेः सम्प्रपश्यतः।
ततोऽस्मि शकुनिं हन्ता मिषतां सर्व्वधन्विनां। भीमस्य वचनं श्रुत्वा सहदेवस्य चोभयोः।
उवाच फाल्गुनो वाक्यं भीमसेनं स्मयन्निव। भीमसेन न ते सन्ति येषां वैरं त्वया सह। ५९२५
मन्दा गृहेषु सुखिनो मृत्युपाशवशङ्गताः। उलूकश्च न ते वाच्यः परुषं पुरुषोत्तम।
दूताः किमपराध्यन्ते यथोक्तस्यानुभाषिणः। एवमुक्त्वा महाबाहुर्भीमं भीमपराक्रमं।
धृष्टद्युम्नमुखान् वीरान् सुहृदः समभाषत। श्रुतं वस्तस्य पापस्य धार्त्तराष्ट्रस्य भाषितं।
कुत्सनं वासुदेवस्य मम चैव विशेषतः। श्रुत्वा भवन्तः संरब्धा अस्माकं हितकाम्यया।
प्रभावाद्वासुदेवस्य भवताञ्च प्रयत्नतः। समग्रं पार्थिवं क्षत्रं सर्व्वं न गणयाम्यहं। ५९३०
भवद्भिः समनुज्ञातो वाक्यमस्य यदुत्तरं। उलूके प्रापयिष्यामि यद्वक्ष्यति सुयोधनं।
श्वोभूते कथितस्यास्य प्रतिवाक्यं चमूमुखे। गाण्डीवेनाभिधास्यामि क्लीवा हि वचनोत्तराः।
ततस्ते पार्थिवाः सर्व्वे प्रशशंसुर्धनञ्जयं। तेन वाक्योपचारेण विस्मिता राजसत्तमाः।
अनुनीय च तान् सर्व्वान् यथामान्यं यथावयः। धर्मराजस्तदा वाक्यं तत्प्राप्यं प्रत्यभाषत।
आत्मानमवमन्वानो न हि स्यात् पार्थिवोत्तमः। तत्रोत्तरं प्रवक्ष्यामि तव शुश्रूषणे रतः। ५९३५
उलूकं भरतश्रेष्ठ सामपूर्व्वमथोर्ज्जितं। दुर्य्योधनस्य तद्वाक्यं निशम्य भरतर्षभ।
अतिलोहितनेत्राभ्यामाशीविष इव श्वसन्। स्मयमान इव क्रोधात् सृक्किणी परिसंलिहन्।
जनार्द्दनमभिप्रेक्ष्य भ्रातॄंश्चैवेदमब्रवीत्। अभ्यभाषत कैतव्यं प्रगृह्य विपुलं भुजं।
उलूक गच्छ कैतव्य ब्रूहि तात सुयोधनं। कृतघ्नं वैरपुरुषं दुर्म्मतिं कुलपांसनं।

पाण्डवेषु सदा पाप नित्यं जिह्मं प्रवर्त्तसे। स्ववीर्य्याद्यः पराक्रम्य पाप आह्वयते परान्। ५३७०
अभीतः पूरयन् वाक्यमेष वै क्षत्रियः पुमान्। स पापः क्षत्रियो भूत्वा अस्मानाह्वय संयुगे।
मान्यामान्यान् पुरस्कृत्य युद्धं मागाः कुलाधम। आत्मवीर्य्यं समाश्रित्य भृत्यवीर्य्यञ्च कौरव।
आह्वयस्व रणे पार्थान् सर्व्वथा क्षत्रियो भव। परवीर्य्यं समाश्रित्य यः समाह्वयते परान्।
अशक्तः स्वयमादातुमेतदेव नपुंसकं। यस्त्वं परेषां वीर्य्येण आत्मानं बहु मन्यसे।
कथमेवमशक्तस्त्वमस्मान् समभिगर्ज्जसि। ५३७५
॥ श्रीकृष्ण उवाच॥ मद्वचनादपि भूयस्ते वक्तव्यो हि सुयोधनः। श्व इदानीं प्रपद्येथाः पुरुषो भव दुर्म्मते।
मन्यसे यच्च मूढ त्वं न योत्स्यति जनार्द्दनः। सारथ्येन वृतः पार्थैरिति त्वं न बिभेषि च।
जघन्यकालमप्येतन्न भवेत् सर्व्वपार्थिवान्। निर्द्दहेयमहं क्रोधात् तृणानीव हुताशनः।
युधिष्ठिरनियोगात्तु फाल्गुनस्य महात्मनः। करिष्ये युध्यमानस्य सारथ्यं विजितात्मनः।
यद्युत्पतसि लोकांस्त्रीन् यद्याविशसि भूतलं। तत्र तत्रार्ज्जुनरथं प्रभाते द्रक्ष्यसे पुनः। ५३८०
यच्चापि भीमसेनस्य मन्यसे मोघभाषितं। दुःशासनस्य रुधिरं पीतमित्यवधारय।
न त्वां समीक्षते पार्थो नापि राजा युधिष्ठिरः। न भीमसेनो न यमौ प्रतिकूलप्रभाषिणं।
इति श्रीमहाभारते उद्योगपर्व्वणि उलूकदूतागमनपर्व्वणि भगवद्वाक्ये एकषष्ट्यधिकशततमोऽध्यायः॥ १६१॥
॥ सञ्जय उवाच॥ दुर्य्योधनस्य तद्वाक्यं निशम्य भरतर्षभ। नेत्राभ्यामतिताम्राभ्यां कैतव्यं समुदैक्षत।
केशवं समभिप्रेक्ष्य गुडाकेशो महायशाः। अभ्यभाषत कैतव्यं प्रगृह्य विपुलं भुजं।
स्ववीर्य्यं यः समाश्रित्य समाह्वयति वै परान्। अभीतो युध्यते शत्रून् स वै पुरुष उच्यते। ५३८५
परवीर्य्यं समाश्रित्य यः समाह्वयते परान्। क्षत्रबन्धुरशक्तत्वात् लोके स पुरुषाधमः।
स त्वं परेषां वीर्य्येण मन्यसे वीर्य्यमात्मनः। स्वयं कापुरुषो मूढ परांश्च क्षेप्तुमिच्छसि।
यस्त्वं वृद्धं सर्व्वराज्ञां हितबुद्धिं जितेन्द्रियं। मरणाय महाप्राज्ञं दीक्षयित्वा विकत्थसे।
भावस्ते विदितोऽस्माभिर्दुर्ब्बुद्धे कुलपांसन। न हनिष्यन्ति गाङ्गेयं पाण्डवा घृणयेति ह।
यस्य वीर्य्यं समाश्रित्य धार्त्तराष्ट्र विकत्थसे। हन्ताऽस्मि प्रथमं भीष्मं मिषतां सर्व्वधन्विनां। ५३९०
कैतव्य गत्वा भरतान् समेत्य सुयोधनं धार्त्तराष्ट्रं वदस्व। तथेत्युवाचार्ज्जुनः सव्यसाची निशाव्यपाये भविता विमर्द्दः।
यद्वोऽब्रवीद्वाक्यमदीनसत्त्वो मध्ये कुरूणां हर्षयन् सत्यसन्धः। अहं हन्ता पाण्डवानामनीकं शाल्वेयकांश्चेति ममैष भारः।
हन्यामहं द्रोणमृतेऽपि लोकं न ते भयं विद्यते पाण्डवेभ्यः। ततो हि ते लब्धमिदं स्वराज्यमापद्गताः पाण्डवाश्चेति भावः।
स दर्पपूर्णो न समीक्षसे त्वमनर्थमात्मन्यपि वर्त्तमानं। तस्मादहं ते प्रथमं समूहे हन्ता समक्षं कुरुवृद्धमेव।
सूर्य्योदये युक्तसेनः प्रतीक्ष्य ध्वजी रथी रक्षत सत्यसन्धं। अहं हि वः पश्यतां द्वीपमेनं भीष्मं रथात् पातयिष्यामि बाणैः। ५३९५
श्वोभूते कत्थनावाक्यं विज्ञास्यति सुयोधनः। अर्द्दितं शरजालेन मया दृष्ट्वा पितामहं।
यदुक्तश्च सभामध्ये पुरुषो ह्रस्वदर्शनः। क्रुद्धेन भीमसेनेन भ्राता दुःशासनस्तव।

अधर्मज्ञो नित्यवैरी पापबुद्धिर्नृशंसवत्। सत्यप्रतिज्ञमचिरात् द्रक्ष्यसे त्वां सुयोधन।
अभिमानस्य दर्पस्य क्रोधपारुष्ययोस्तथा। नैष्ठुर्य्यस्यावलेपस्य आत्मसम्भावनस्य च।
नृशंसतायास्तैक्ष्ण्यस्य धर्म्मविद्वेषणस्य च। अधर्म्मस्यापवादस्य वृद्धातिक्रमणस्य च। ५५९०
दर्शनस्य च वक्रस्य सर्व्वस्यापनयस्य च। द्रक्ष्यसि त्वं फलं तीव्रमचिरेण सुयोधन।
वासुदेवद्वितीये हि मयि क्रुद्धे नराधम। आशा ते जीविते मूढ राज्ये वा केन हेतुना।
शान्ते भीष्मे तथा द्रोणे सूतपुत्रे च पातिते। निराशो जीविते राज्ये पुत्रेषु च भविष्यसि।
भ्रातॄणां निधनं श्रुत्वा पुत्राणाञ्च सुयोधन। भीमसेनेन निहतो दुष्कृतानि स्मरिष्यसि।
न द्वितीयां प्रतिज्ञां हि प्रतिजानामि कैतव। सत्यं ब्रवीम्यहं ह्येतत् सर्व्वं सत्यं भविष्यति। ५५९५
युधिष्ठिरोऽपि कैतव्यमुलूकमिदमब्रवीत्। उलूक मद्वचो ब्रूहि गत्वा तात सुयोधनं।
स्वेन वृत्तेन मे वृत्तं नाधिगन्तुं त्वमर्हसि। उभयोरन्तरं वेद सूनृतानृतयोरपि।
न चाहं कामये पापमपि कीटपिपीलयोः। किं पुनर्ज्ञातिषु वधं कामयेयं कथञ्चन।
एतदर्थं मया तात पञ्च ग्रामा वृताः पुरा। कथं तव सुदुर्बुद्धे न प्रेक्षे व्यसनं महत्।
स त्वं कामपरीतात्मा मूढभावाच्च कत्थसे। तथैव वासुदेवस्य न गृह्णासि हितं वचः। ५६००
किमिदानीं बहूक्तेन युध्यस्व सह बान्धवैः। मम विप्रियकर्त्तारं कैतव्य ब्रूहि कौरवं।
श्रुतं वाक्यं गृहीतोऽर्थो मतं यत्ते तथाऽस्तु तत्। भीमसेनस्ततो वाक्यं भूय आह नृपात्मजः।
उलूक मद्वचो ब्रूहि दुर्मतिं पापपूरुषं। शठं नैकृतिकं पापं दुराचारं सुयोधनं।
गृध्रोदरे वा वस्तव्यं पुरे वा नागसाह्वये। प्रतिज्ञातं मया यच्च सभामध्ये नराधम।
कर्त्ताऽहं तद्वचः सत्यं सत्येनैव शपामि ते। दुःशासनस्य रुधिरं हत्वा पास्याम्यहं मृधे। ५६०५
सक्थिनी तव भङ्क्त्वैव हत्वा हि तव सोदरान्। सर्व्वेषां धार्त्तराष्ट्राणामहं मृत्युः सुयोधन।
सर्व्वेषां राजपुत्राणामभिमन्युरसंशयं। कर्म्मणा तोषयिष्यामि भूयश्चैव वचः शृणु।
हत्वा सुयोधन त्वां वै सहितं सर्व्वसोदरैः। आक्रमिष्ये पदा मूर्द्ध्नि धर्म्मराजस्य पश्यतः।
नकुलस्तु ततो वाक्यमिदमाह महीपते। उलूक ब्रूहि कौरव्यं धार्त्तराष्ट्रं सुयोधनं।
श्रुतं ते गदतो वाक्यं सर्व्वमेव यथातथं। तथा कर्त्ताऽस्मि कौरव्य यथा त्वमनुशाससि मां। ५६१०
सहदेवोऽपि नृपते इदमाह वचोऽर्थवत्। सुयोधन मतिर्या ते तथैषा ते भविष्यति।
शोचिष्यसे महाराज सपुत्रज्ञातिबान्धवः। इमञ्च क्लेशमस्माकं हृष्टो यत् त्वं विकत्थसे।
विराटद्रुपदौ वृद्धावुलूकमिदमूचतुः। दासभावं नियच्छेव साधोरिति मतिः सदा।
तौ च दासावदासौ वा पौरुषं यस्य यादृशं। शिखण्डी तु ततो वाक्यमुलूकमिदमब्रवीत्।
वक्तव्यो भवता राजा पापेष्वभिरतः सदा। पश्य त्वं मां रणे राजन् कुर्व्वाणं कर्म्म दारुणं। ५६१५
यस्य वीर्य्यं समासाद्य मन्यसे विजयं युधि। तमहं पातयिष्यामि रथात् तव पितामहं।
अहं भीष्मवधात् सृष्टो नूनं धात्रा महात्मना। सोऽहं भीष्मं हनिष्यामि मिषतां सर्व्वधन्विनां।

धृष्टद्युम्नोऽपि कैतव्यमुलूकमिदमब्रवीत्। सुयोधनो मम वचो वक्तव्यो नृपतेः सुतः।
अहं द्रोणं हनिष्यामि सगणं सहबान्धवं। कर्त्ता चाऽहं तथा कर्म्म यथा नाऽन्यः करिष्यति।
तमब्रवीद्धर्म्मराजः कारुण्यार्थं वचो महत्। नाहं ज्ञातिवधं राजन् कामयेयं कथञ्चन।    ५९९०
तवैव दोषाद्दुर्बुद्धे सर्व्वमेतत्त्वनाहृतं। अवश्यञ्च मया कार्य्यं सर्व्वाश्चरितं महत्।
स गच्छ माचिरं तात उलूक यदि मन्यसे। इह वा तिष्ठ भद्रं ते वयं हि तव बान्धवाः।
उलूकस्तु ततो राजन् धर्म्मपुत्त्रं युधिष्ठिरं। आमन्त्र्य प्रययौ तत्र यत्र राजा सुयोधनः।
इत्युक्तः कितवो वाक्यमुपधार्य्य च यत्नतः। अनुज्ञातो निववृते पुनरेव यथागतं।
उलूकस्तत आगम्य दुर्य्योधनममर्षणं। अर्ज्जुनस्य समादेशं यथोक्तं सर्व्वमब्रवीत्।    ५९९५
वासुदेवस्य भीमस्य धर्म्मराजस्य पौरुषं। नकुलस्य विराटस्य द्रुपदस्य च भारत।
सहदेवस्य च वचो धृष्टद्युम्नशिखण्डिनोः। केशवार्ज्जुनयोर्वाक्यं यथोक्तं सर्व्वमब्रवीत्।
कैतव्यस्य तु तद्वाक्यं निशम्य भरतर्षभः। दुःशासनञ्च कर्णञ्च शकुनिञ्चापि भारत।
आज्ञापयत राज्ञश्च बलं मित्रबलं तथा। यथा प्रागुदयात् सर्व्वे युक्तास्तिष्ठन्त्यनीकिनः।
ततः कर्णसमादिष्टा दूताः संत्वरिता रथैः। उष्ट्रवामीभिरप्यन्ये सदश्वैश्च महाजवैः।    ५०००
तूर्णं परिययुः सेनां कृत्स्नां कर्णस्य शासनात्। आज्ञापयन्तो राज्ञस्य योगः प्रागुदयादिति।
इति श्रीमहाभारते उद्योगपर्व्वणि उलूकदूतागमनपर्व्वणि उलूकापयाने द्विषष्ट्यधिकशततमोऽध्यायः॥ १६२ ॥
॥ सञ्जय उवाच॥ उलूकस्य वचः श्रुत्वा कुन्तीपुत्त्रो युधिष्ठिरः। सेनां निर्यापयामास धृष्टद्युम्नपुरोगमां।
पदातिनीं नागवतीं रथिनीमश्ववृन्दिनीं। चतुर्व्विधबलां भीमामकम्प्यां पृथिवीमिव।
भीमसेनादिभिर्गुप्तां सार्ज्जुनैश्च महारथैः। धृष्टद्युम्नवशां दुर्गां सागरस्तिमितोपमां।
तस्यास्त्वग्रे महेष्वासः पाञ्चाल्यो युद्धदुर्म्मदः। द्रोणप्रेप्सुरनीकानि धृष्टद्युम्नो व्यकर्षत।    ५००५
यथाबलं यथोत्साहं रथिनः समुपादिशत्। अर्ज्जुनं सूतपुत्त्राय भीमं दुर्य्योधनाय च।
धृष्टकेतुञ्च शल्याय गौतमायोत्तमौजसं। अश्वत्थाम्ने च नकुलं शैव्यञ्च कृतवर्म्मणे।
सैन्धवाय च वार्ष्णेयं युयुधानं समादिशत्। शिखण्डिनञ्च भीष्माय प्रमुखे समकल्पयत्।
सहदेवं शकुनये चेकितानं शलाय च। द्रौपदेयांस्तथा पञ्च त्रिगर्त्तेभ्यः समादिशत्।
वृषसेनाय सौभद्रं शेषाणाञ्च महीक्षितां। स समर्थं हि तं मेने पार्थादभ्यधिकं रणे।    ५०१०
एवं विभज्य योधांस्तान् पृथक् च सह चैव ह। ज्वालावर्णो महेष्वासो द्रोणमंशमकल्पयत्।
धृष्टद्युम्नो महेष्वासः सेनापतिपतिस्ततः। विधिवत् व्यूह्य मेधावी युद्धाय धृतमानसः।
यथोद्दिष्टानि सैन्यानि पाण्डवानामयोजयत्। जयाय पाण्डुपुत्त्राणां यत्तस्तस्थौ रणाजिरे।
इति श्रीमहाभारते उद्योगपर्व्वणि उलूकदूतागमनपर्व्वणि सेनापतिनियोगे त्रिषष्ट्यधिकशततमोऽध्यायः समाप्तञ्च उलूकदूतागमनपर्व्व ॥ १६३ ॥

## ॥ अथ रथातिरथसङ्ख्यानपर्व्व ॥ १२ ॥

॥ धृतराष्ट्र उवाच ॥ प्रतिज्ञाते फाल्गुनेन वधे भीष्मस्य संयुगे । किमकुर्व्वत मे मन्दाः पुत्रा दुर्य्योधनादयः ।
हतमेव हि पश्यामि गाङ्गेयं पितरं रणे । वासुदेवसहायेन पार्थेन दृढधन्वना । ५०१६
स चापरिमितप्रज्ञस्तच्छ्रुत्वा पार्थभाषितं । किमुक्तवान् महेष्वासो भीष्मः प्रहरतां वरः ।
सैनापत्यञ्च सम्प्राप्य कौरवाणां धुरन्धरः । किमचेष्टत गाङ्गेयो महाबुद्धिपराक्रमः ।
॥ वैशम्पायन उवाच ॥ ततस्तत् सञ्जयस्तस्मै सर्व्वमेव न्यवेदयत् । यथोक्तं कुरुवृद्धेन भीष्मेणामिततेजसा ।
॥ सञ्जय उवाच ॥ सैनापत्यमनुप्राप्य भीष्मः शान्तनवो नृप । दुर्य्योधनमुवाचेदं वचनं हर्षयन्निव ।
नमस्कृत्य कुमाराय सेनान्ये शक्तिपाणये । अहं सेनापतिस्तेऽद्य भविष्यामि न संशयः । ५०२०
सेनाकर्म्मण्यभिज्ञोऽस्मि व्यूहेषु विविधेषु च । कर्म्म कारयितुञ्चैव भृतानप्यभृतांस्तथा ।
यात्रायाने च युद्धे च तथा प्रशमनेषु च । भृशं वेद महाराज यथा वेद बृहस्पतिः ।
व्यूहानाञ्च समारम्भान् दैवगान्धर्व्वमानुषान् । तैरहं मोहयिष्यामि पाण्डवान् व्येतु ते ज्वरः ।
सोऽहं योत्स्यामि तत्त्वेन पालयंस्तव वाहिनीं । यथावत् शास्त्रतो राजन् व्येतु ते मानसो ज्वरः ।
॥ दुर्य्योधन उवाच ॥ विद्यते मे न गाङ्गेय भयं देवासुरेष्वपि । समस्तेषु महाबाहो सत्यमेतत् ब्रवीमि ते । ५०२५
किं पुनस्त्वयि दुर्द्धर्षे सैनापत्ये व्यवस्थिते । द्रोणे च पुरुषव्याघ्रे स्थिते युद्धाभिनन्दिनि ।
भवद्भ्यां पुरुषाग्र्याभ्यां स्थिताभ्यां विजयो मम । न दुर्लभं कुरुश्रेष्ठ देवराज्यमपि ध्रुवं ।
रथसङ्ख्यान्तु कार्त्स्न्येन परेषामात्मनस्तथा । तथैवातिरथानाञ्च वेत्तुमिच्छामि कौरव ।
पितामहो हि कुशलः परेषामात्मनस्तथा । श्रोतुमिच्छाम्यहं सर्व्वैः सहैभिर्वसुधाधिपैः ।
॥ भीष्म उवाच ॥ गान्धारे शृणु राजेन्द्र रथसङ्ख्यां स्वके बले । ये रथाः पृथिवीपाल तथैवातिरथाश्च ये । ५०३०
बहूनीह सहस्राणि प्रयुतान्यर्ब्बुदानि च । रथानां तव सेनायां यथा मुख्यांस्तु मे शृणु ।
भवानग्रे रथोदारः सह सर्व्वैः सहोदरैः । दुःशासनप्रभृतिभिर्भ्रातृभिः शतसम्मितैः ।
सर्व्वे कृतप्रहरणाश्छेदभेदविशारदाः । रथोपस्थे गजस्कन्धे गदाप्रासासिचर्म्मणि ।
संयन्तारः प्रहन्तारः कृतास्त्रा भारसाधनाः । इष्वस्त्रे द्रोणशिष्याश्च कृपस्य च शरद्वतः ।
एते हनिष्यन्ति रणे पाञ्चालान् युद्धदुर्म्मदान् । कृतकिल्बिषाः पाण्डवेयैर्धार्त्तराष्ट्रा मनस्विनः । ५०३५
ततोऽहं भरतश्रेष्ठ सर्व्वसेनापतिस्तव । शत्रून्विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवं ।
न त्वात्मनो गुणान् वक्तुमर्हामि विदितोऽस्मि ते । कृतवर्म्मा त्वतिरथो भोजः शस्त्रभृतां वरः ।
अर्थसिद्धिं तव रणे करिष्यति न संशयः । शस्त्रविद्भिरनाधृष्यो दूरपाती दृढायुधः ।
हनिष्यति चमूं तेषां महेन्द्रो दानवानिव । मद्रराजो महेष्वासः शल्यो मेऽतिरथो मतः ।
स्पर्द्धते वासुदेवेन नित्यं यो वै रणे रणे । भागिनेयान्निजांस्त्यक्त्वा शल्यस्ते राजसत्तमः । ५०४०
एष योत्स्यति सङ्ग्रामे पाण्डवांश्च महारथान् । सागरोर्म्मिसमैर्बाणैः प्लावयन्निव शात्रवान् ।
भूरिश्रवाः कृतास्त्रश्च तव चापि हितः सुहृत् । सौमदत्तिर्महेष्वासो रथयूथपयूथपः ।
बलक्षयममित्राणां सुमहान्तं करिष्यति । सिन्धुराजो महाराज मतो मे द्विगुणो रथः ।

योत्स्यते समरे राजन् विक्रान्तो रथसत्तमः। द्रौपदीहरणे राजन् परिक्लिष्टश्च पाण्डवैः।
संस्मरंस्तं परिक्लेशं योत्स्यते परवीरहा। एतेन हि तदा राजंस्तप आस्थाय दारुणं। ५७०५
सुदुर्लभो वरो लब्धः पाण्डवान् योद्धुमाहवे। स एष रथशार्दूलस्तद्वैरं संस्मरन्नपि।
योत्स्यते पाण्डवैस्तात प्राणांस्त्यक्त्वा सुदुस्त्यजान्।

इति श्रीमहाभारते उद्योगपर्व्वणि रथातिरथसङ्ख्यानपर्व्वणि कौरवरथातिरथसङ्ख्यायां चतुःषष्ट्यधिकशततमोऽध्यायः ॥१६४॥

॥भीष्म उवाच॥ सुदक्षिणस्तु काम्बोजो रथ एकगुणो मतः। तवार्थसिद्धिमाकाङ्क्षन् योत्स्यते समरे परैः।
एतस्य रथसिंहस्य तवार्थे राजसत्तम। पराक्रमं यथेन्द्रस्य द्रक्ष्यन्ति कुरवो युधि।
एतस्य रथवंशे हि तिग्मवेगप्रहारिणः। काम्बोजानां महाराज शलभानामिवायतिः। ५७१०
नीलो माहिष्मतीवासी नीलवर्म्मा रथस्तव। रथवंशेन कदनं शत्रूणां वै करिष्यति।
कृतवैरः पुरा चैव सहदेवेन मारिष। योत्स्यते सततं राजंस्तवार्थे कुरुनन्दन।
विन्दानुविन्दावावन्त्यौ सम्मतौ रथसत्तमौ। कृतिनौ समरे तात दृढवीर्य्यपराक्रमौ।
एतौ तौ पुरुषव्याघ्रौ रिपुसैन्यं प्रधक्ष्यतः। गदाप्रासासिनाराचैस्तोमरैश्च करच्युतैः।
युद्धाभिकामौ समरे क्रीडन्ताविव यूथपौ। यूथमध्ये महाराज विचरन्तौ कृतान्तवत्। ५७१५
त्रिगर्त्ता भ्रातरः पञ्च रथोदारा मता मम। कृतवैराश्च पार्थेन विराटनगरे तदा।
मकरा इव राजेन्द्र समुद्धततरङ्गिणीं। गङ्गां विक्षोभयिष्यन्ति पार्थानां युधि वाहिनीं।
ते रथाः पञ्च राजेन्द्र येषां सत्यरथो मुखं। एते योत्स्यन्ति सङ्ग्रामे संस्मरन्तः पुरा कृतं।
व्यलीकं पाण्डवेयेन भीमसेनानुजेन ह। दिशो विजयता राजन् श्वेतवाहेन भारत।
ते हनिष्यन्ति पार्थानां तानासाद्य महारथान्। वरान् वरान् महेष्वासान् क्षत्रियाणां धुरन्धरान्। ५७२०
लक्ष्मणस्तव पुत्रश्च तथा दुःशासनस्य च। उभौ तौ पुरुषव्याघ्रौ सङ्ग्रामेष्वपलायिनौ।
तरुणौ सुकुमारौ च राजपुत्रौ तरस्विनौ। युद्धानाञ्च विशेषज्ञौ प्रणेतारौ च सर्व्वशः।
रथौ तौ कुरुशार्दूलौ मतौ मे रथसत्तमौ। क्षत्रधर्म्मरतौ वीरौ महत्कर्म्म करिष्यतः।
दण्डधारो महाराज रथ एको नरर्षभ। योत्स्यते तव सङ्ग्रामे स्वेन सैन्येन पालितः।
बृहद्बलस्तथा राजा कौशल्यो रथसत्तमः। रथो मम मतस्तात महावेगपराक्रमः। ५७२५
एष योत्स्यति सङ्ग्रामे स्वान् बन्धून् सम्प्रहर्षयन्। उग्रायुधो महेष्वासो धार्त्तराष्ट्रहिते रतः।
कृपः शारद्वतो राजन् रथयूथपयूथपः। प्रियान् प्राणान् परित्यज्य प्रधक्ष्यति रिपूंस्तव।
गौतमस्य महर्षेर्य्य आचार्य्यस्य शरद्वतः। कार्त्तिकेय इवाजेयः शरस्तम्बात् सुतोऽभवत्।
एष सेनाः सुबहुला विविधायुधकार्म्मुकाः। अग्निवत् समरे तात चरिष्यति विनिर्द्दहन्।

इति श्रीमहाभारते उद्योगपर्व्वणि रथातिरथसङ्ख्यानपर्व्वणि कौरवरथातिरथसङ्ख्यायां पञ्चषष्ट्यधिकशततमोऽध्यायः ॥१६५॥

॥ भीष्म उवाच ॥ शकुनिर्मातुलस्तेऽसौ रथ एको नराधिप । प्रसज्य पाण्डवैर्वैरं योत्स्यते नात्र संशयः । ५७७०
एतस्य सेना दुर्द्धर्षा समरे प्रतियायिनः । विविधायुधभूयिष्ठा वायुवेगसमा जवे ।
द्रोणपुत्रो महेष्वासः सर्व्वानेवातिधन्विनः । समरे चित्रयोधी च दृढास्त्रश्च महारथः ।
एतस्य हि महाराज यथा गाण्डीवधन्वनः । शरासनविनिर्मुक्ताः संसक्ता यान्ति सायकाः ।
नैष शक्यो मया वीर संख्यातुं रथसत्तमः । निर्दहेदपि लोकांस्त्रीनिच्छन्नेष महारथः ।
क्रोधस्तेजश्च तपसा संभृतोऽश्रमवासिना । द्रोणेनानुगृहीतश्च दिव्यैरस्त्रैरुदारधीः । ५७७५
दोषस्त्वस्य महानेको येनैष भरतर्षभ । न मे रथो नातिरथो मतः पार्थिवसत्तम ।
जीवितं प्रियमत्यर्थमायुष्कामः सदा द्विजः । न ह्यस्य सदृशः कश्चिदुभयोः सेनयोरपि ।
हन्यादेकरथेनैष देवानामपि वाहिनीं । वपुष्मांस्तलघोषेण स्फोटयेदपि पर्व्वतान् ।
असङ्ख्येयगुणो वीरः प्रहन्ता दारुणद्युतिः । दण्डपाणिरिवासह्यः कालवत् प्रचरिष्यति ।
युगान्ताग्निसमः क्रोधात् सिंहग्रीवो महाद्युतिः । एष भारत युद्धस्य पृष्ठं संशमयिष्यति । ५७८०
पिता त्वस्य महातेजा वृद्धोऽपि युवभिर्वरः । रणे कर्म्म महत्कर्त्ता अत्र मे नास्ति संशयः ।
अस्त्रवेगानिलोद्धूतः सेनाकक्षेन्धनोत्थितः । पाण्डुपुत्रस्य सैन्यानि प्रधक्ष्यति रणे धृतः ।
रथयूथपयूथानां यूथपोऽयं नरर्षभः । भरद्वाजात्मजः कर्त्ता कर्म्म तीव्रं हितं तव ।
सर्व्वमूर्द्धाभिषिक्तानामाचार्य्यः स्थविरो गुरुः । गच्छेदन्तं सृञ्जयानां प्रियस्त्वस्य धनञ्जयः ।
नैष जातु महेष्वासः पार्थमक्लिष्टकारिणं । हन्यादाचार्य्यकं दीप्तं संस्मृत्य गुणनिर्ज्जितं । ५७८५
श्लाघतेऽयं सदा वीर पार्थस्य गुणविस्तरैः । पुत्रादभ्यधिकञ्चैनं भारद्वाजोऽनुपश्यति
हन्यादेकरथेनैव देवगन्धर्व्वमानुषान् । एकीभूतानपि रणे दिव्यैरस्त्रैः प्रतापवान् ।
पौरवो राजशार्दूलस्तव राजन् महारथः । मतो मम रथोदारः परवीररथारुजः ।
स्वेन सैन्येन महता प्रतपन् शत्रुवाहिनीं । प्रधक्ष्यति स पाञ्चालान् कक्षमग्निगतिर्यथा ।
सत्यश्रवा रथस्त्वेको राजपुत्रो बृहद्बलः । तव राजन्रिपुबले कालवत् प्रचरिष्यति । ५७९०
एतस्य योधा राजेन्द्र विचित्रकवचायुधाः । विचरिष्यन्ति सङ्ग्रामे निघ्नन्तः शात्रवांस्तव ।
वृषसेनो रथस्तेऽग्र्यः कर्णपुत्रो महारथः । प्रधक्ष्यति रिपूणान्ते बलानि बलिनां वरः ।
जलसन्धो महातेजा राजन्रथवरस्तव । त्यक्ष्यते समरे प्राणान्माधवः परवीरहा ।
एष योत्स्यति सङ्ग्रामे गजस्कन्धविशारदः । रथेन वा महाबाहुः क्षपयन् शत्रुवाहिनीं ।
रथ एष महाराज मतो मे राजसत्तम । त्वदर्थे त्यक्ष्यते प्राणान् सहसैन्यो महारणे । ५७९५
एष विक्रान्तयोधी च चित्रयोधी च सङ्गरे । वीतभीश्चापि ते राजञ्छत्रुभिः सह योत्स्यते ।
वाह्लीकोऽतिरथश्चैव समरे चानिवर्त्तितः । मम राजन्मतो युद्धे शूरो वैवस्वतोपमः ।
न ह्येष समरं प्राप्य निवर्त्तेत कथञ्चन । यथा सततगो राजन् स हि हन्यात् परान् रणे ।
सेनापतिर्महाराज सत्यवांस्ते महारथः । रणेष्वद्भुतकर्म्मा च रथी पररथारुजः ।

एतस्य समरं दृष्ट्वा न व्यथाऽस्ति कथञ्चन। उत्स्मयन्नुत्पतत्येष परान् रथपथे स्थितान्। ५८००
एष वाऽरिषु विक्रान्तः कर्म्म सत्पुरुषोचितं। कर्त्ता विमर्द्दे सुमहत् त्वदर्थे पुरुषोत्तमः।
अलम्बुषो राक्षसेन्द्रः क्रूरकर्म्मा महारथः। हनिष्यति परान् राजन् पूर्व्ववैरमनुस्मरन्।
एष राक्षससैन्यानां सर्व्वेषां रथसत्तमः। मायावी दृढवैरश्च समरे विचरिष्यति।
प्राग्ज्योतिषाधिपो वीरो भगदत्तः प्रतापवान्। गजाङ्कुशधरश्रेष्ठो रथे चैव विशारदः।
एतेन युद्धमभवत् पुरा गाण्डीवधन्वनः। दिवसान् सुबहून् राजन्नुभयोर्जयगृद्धिनोः। ५८०५
ततः सखायं गान्धारे मानयन् पाकशासनं। अकरोत् सम्विदं तेन पाण्डवेन महात्मना।
एष योत्स्यति सङ्ग्रामे गजस्कन्धविशारदः। ऐरावतगतो राजा देवानामिव वासवः।

इति श्रीमहाभारते उद्योगपर्व्वणि रथातिरथसङ्ख्यानपर्व्वणि कौरवरथातिरथसङ्ख्यायां षट्षष्ट्यधिकशततमोऽध्यायः॥१६६॥

॥ भीष्म उवाच ॥ अचलो वृषकश्चैव सहितौ भ्रातरावुभौ। रथौ तव दुराधर्षौ शत्रून् विध्वंसयिष्यतः।
बलवन्तौ नरव्याघ्रौ दृढक्रोधपरायणौ। गान्धारमुख्यौ तरुणौ दर्शनीयौ महाबलौ।
सखा ते दयितो नित्यं य एष रणकर्कशः। उत्साहयति राजंस्त्वां विग्रहे पाण्डवैः सह। ५८१०
परुषः कत्थनो नीचः कर्णो वैकर्त्तनस्तव। मन्त्री नेता च बन्धुश्च मानी चात्यन्तमुच्छ्रितः।
एष नैव रथः कर्णो न चाप्यतिरथो रणे। वियुक्तः कवचेनैष सहजेन विचेतनः।
कुण्डलाभ्याञ्च दिव्याभ्यां वियुक्तः सततं घृणी। अभिशापाच्च रामस्य ब्राह्मणस्य च भाषणात्।
करणानां वियोगाच्च तेन मेऽर्द्धरथो मतः। नैष फाल्गुनमासाद्य पुनर्जीवन् विमोक्ष्यते।
ततोऽब्रवीत् पुनर्द्रोणः सर्व्वशस्त्रभृतां वरः। एवमेतत् यथात्थ त्वं न मिथ्याऽस्ति कदाचन। ५८१५
रणे रणेऽभिमानी च विमुखश्चापि दृश्यते। घृणी कर्णः प्रमादी च तेन मेऽर्द्धरथो मतः।
एतच्छ्रुत्वा तु राधेयः क्रोधादुत्फाल्य लोचने। उवाच भीष्मं राधेयस्तुदन् वाग्भिः प्रतोदवत्।
पितामह यथेष्टं मां वाक्शरैरुपहन्सि। अनागसं सदा द्वेषादेवमेव पदे पदे।
मर्षयामि च तत्सर्व्वं दुर्य्योधनकृतेन वै। त्वन्तु मां मन्यसे मन्दं यथा कापुरुषं तथा।
भवानर्द्धरथो मह्यं मतो वै नात्र संशयः। सर्व्वस्य जगतश्चैव गाङ्गेयो न मृषा वदेत्। ५८२०
कुरूणामहितो नित्यं न च राजाऽवबुध्यते। को हि नाम समानेषु राजसूदारकर्म्मसु।
तेजोवधमिदं कुर्य्यात् विभेदयिषुराहवे। यथा त्वं गुणविद्वेषादपरागं चिकीर्षसि।
न हायनैर्न्न पलितैर्न्न वित्तैर्न्न च बन्धुभिः। महारथत्वं सङ्ख्यातुं शक्यं क्षत्रस्य कौरव।
बलज्येष्ठं स्मृतं क्षत्रं मन्त्रज्येष्ठा द्विजातयः। धनज्येष्ठाः स्मृता वैश्याः शूद्रास्तु वयसाऽधिकाः।
यथेच्छकं स्वयं ग्राहाद्रथानतिरथांस्तथा। कामद्वेषसमायुक्तो मोहात् प्रकुरुते भवान्। ५८२५
दुर्य्योधन महाबाहो साधु सम्यगवेक्ष्यतां। त्यज्यतां दुष्टभावोऽयं भीष्मः किल्बिषकृत्तव।
भिन्ना हि सेना नृपते दुःसन्धेया भवत्युत। मौला हि पुरुषव्याघ्र किमु नाना समुत्थिताः।
एषां द्वैधं समुत्पन्नं योधानां युधि भारत। तेजोवधो नः क्रियते प्रत्यक्षेण विशेषतः।

रथानां क्व च विज्ञानं क्व च भीष्मोऽल्पचेतनः। अहमावारयिष्यामि पाण्डवानामनीकिनीं।
आसाद्य माममोघेषुं गमिष्यन्ति दिशो दश। पाण्डवाः सहपाञ्चालाः शार्दूलं वृषभा इव। ॥५८२०
क्व च युद्धं विमर्द्दो वा मन्त्राः सुव्याहृतानि च। क्व च भीष्मो गतवया मन्दात्मा कालचोदितः।
एकाकी स्पर्द्धते नित्यं सर्व्वेण जगता सह। न चान्यं पुरुषं किञ्चित् मन्यते मोघदर्शनः।
श्रोतव्यं खलु वृद्धानामिति शास्त्रनिदर्शनं। न त्वेव ह्यतिवृद्धानां पुनर्बाला हि ते मताः।
अहमेको हनिष्यामि पाण्डवानामनीकिनीं। सयुद्धे राजशार्दूल यशो भीष्मं गमिष्यति।
कृतः सेनापतिस्त्वेष त्वया भीष्मो नराधिप। सेनापतौ यशो गन्ता न तु योधान् कथञ्चन। ॥५८२५
नाहं जीवति गाङ्गेये योत्स्ये राजन् कथञ्चन। हते भीष्मे तु योद्धाऽस्मि सर्व्वैरेव महारथैः।
॥ भीष्म उवाच ॥ समुद्यतोऽयं भारो मे सुमहान् सागरोपमः। धार्त्तराष्ट्रस्य सङ्ग्रामे वर्षपूगाभिचिन्तितः।
तस्मिन्नभ्यागते काले सङ्ग्रामे लोमहर्षणे। मिथो भेदो न मे कार्य्यस्तेन जीवसि सूतज।
न ह्यहं त्वद्य विक्रम्य स्थविरोऽपि शिशोस्तव। युद्धश्रद्धामहं छिन्द्यां जीविताशां च सूतज।
जामदग्न्येन रामेण महास्त्राणि विमुञ्चता। न मे व्यथा कृता काचित् त्वन्तु मे किं करिष्यसि। ॥५८३०
कामं नैतत् प्रशंसन्ति सन्तः स्वबलसंस्तवं। वक्ष्यामि तत्त्वं सन्तप्तो निहीनकुलपांसन।
समेतं पार्थिवं क्षत्रं काशिराजस्वयम्बरे। निर्जित्यैकरथेनैव याः कन्यास्तरसा हृताः।
ईदृशानां सहस्राणि विशिष्टानामथो पुनः। मयैकेन निरस्तानि ससैन्यानि रणाजिरे।
त्वां प्राप्य वैरपुरुषं कुरूणामनयो महान्। उपस्थितो विनाशाय यतस्व पुरुषो भव।
युध्यस्व समरे पार्थं येन विस्पर्द्धसे सह। द्रक्ष्यामि त्वां विनिर्मुक्तमस्मात् युद्धात् सुदुर्मते। ॥५८३५
तमुवाच ततो राजा धार्त्तराष्ट्रः प्रतापवान। मां समीक्षस्व गाङ्गेय कार्य्यं हि महदुद्यतं।
चिन्त्यतामिदमेकाग्रं मम निःश्रेयसं परं। उभावपि भवन्तौ मे महत्कर्म्म करिष्यतः।
भूयश्च श्रोतुमिच्छामि परेषां रथसत्तमान्। ये चैवातिरथास्तत्र ये चैव रथयूथपाः।
बलाबलममित्राणां श्रोतुमिच्छामि कौरव। प्रभातायां रजन्यां वै इदं युद्धं भविष्यति।
इति श्रीमहाभारते उद्योगपर्व्वणि रथातिरथसङ्ख्यानपर्व्वणि भीष्मकर्णकलहे सप्तषष्ट्यधिकशततमोऽध्यायः॥ १६७॥
॥ भीष्म उवाच ॥ एते रथास्तवाख्याता तथैवातिरथा नृप। ये चाप्यर्द्धरथा राजन् पाण्डवानामतः शृणु। ॥५८४०
यदि कौतूहलं तेऽद्य पाण्डवानां बले नृप। रथसङ्ख्यां शृणुष्व त्वं सहैभिर्व्वसुधाधिपैः।
स्वयं राजा रथोदारः पाण्डवः कुन्तिनन्दनः। अग्निवत् समरे तात चरिष्यति न संशयः।
भीमसेनस्तु राजेन्द्र रथोऽष्टगुणसम्मितः। न तस्यास्ति समो युद्धे गदया सायकैरपि।
नागायुतबलो मानी तेजसा न स मानुषः। माद्रीपुत्रौ च रथिनौ द्वावेव पुरुषर्षभौ।
अश्विनाविव रूपेण तेजसा च समन्वितौ। एते चमूमुखगताः स्मरन्तः क्लेशमुत्तमं। ॥५८४५
रुद्रवत् प्रचरिष्यन्ति तत्र मे नास्ति संशयः। सर्व्व एव महात्मानः शालस्तम्भा इवोद्गताः।
प्रादेशेनाधिकाः पुंभिरन्यैस्ते च प्रमाणतः। सिंहसंहननाः सर्व्वे पाण्डुपुत्रा महाबलाः।

चरितब्रह्मचर्य्याश्च सर्व्वे तात तपस्विनः। ह्रीमन्तः पुरुषव्याघ्रा व्याघ्रा इव बलोत्कटाः।
जवे प्रहारे सम्मर्द्दे सर्व्व एवातिमानुषाः। सर्व्वैर्ज्जिता महीपाला दिग्जये भरतर्षभ।
न चैषां पुरुषाः केचिदायुधानि गदाः शरान्। विषहन्ति सदा कर्त्तुमधिज्यान्यपि कौरव। ५८६०
उद्यन्तुं वा गदा गुर्व्वीः शरान् क्षेप्तुमाहवे। जवे लक्ष्यस्य हरणे भोज्ये पांशुविकर्षणे।
बालैरपि भवन्तस्तैः सर्व्व एव विशेषिताः। एतत् सैन्यं समासाद्य सर्व्व एव बलोत्कटाः।
विध्वंसयिष्यन्ति रणे मास्म तैः सह सङ्गमः। एकैकशस्ते सम्मर्द्दे हन्युः सर्व्वान् महीक्षितः।
प्रत्यक्षं तव राजेन्द्र राजसूये यथाऽभवत्। द्रौपद्याश्च परिक्लेशं द्यूते च परुषा गिरः।
ते स्मरन्तश्च सङ्ग्रामे चरिष्यन्ति च रुद्रवत्। लोहिताक्षो गुडाकेशो नारायणसहायवान्। ५८६५
उभयोः सेनयोर्व्वीरो रथो नास्तीति तादृशः। न हि देवेषु वा पूर्व्वं मनुष्येषूरगेषु च।
राक्षसेष्वथ यक्षेषु नरेषु कुत एव तु। भूतोऽथ वा भविष्यो वा रथः कश्चिन्मया श्रुतः।
समायुक्तो महाराज रथः पार्थस्य धीमतः। वासुदेवश्च संयन्ता योद्धा चैव धनञ्जयः।
गाण्डीवञ्च धनुर्द्दिव्यं ते चाश्वा वातरंहसः। अभेद्यं कवचं दिव्यमक्षय्यौ च महेषुधी।
अस्त्रग्रामश्च माहेन्द्रो रौद्रः कौवेर एव च। याम्यश्च वारुणश्चैव गदाश्चोग्रप्रदर्शनाः। ५८७०
वज्रादीनि च मुख्यानि नानाप्रहरणानि च। दानवानां सहस्राणि हिरण्यपुरवासिनां।
हतान्येकरथेनाजौ कस्तस्य सदृशो रथः। एष हन्याद्धि संरम्भी बलवान् सत्यविक्रमः।
तव सेनां महाबाहुः स्वाञ्चैव परिपालयन्। अहञ्चैनं प्रत्युद्यायामाचार्य्यो वा धनञ्जयं।
न तृतीयोऽस्ति राजेन्द्र सेनयोरुभयोरपि। य एनं शरवर्षाणि वर्षन्तमुदियाद्रथी।
जीमूत इव घर्म्मान्ते महावातसमीरितः। समायुक्तस्तु कौन्तेयो वासुदेवसहायवान्। ५८७५
तरुणश्च कृती चैव जीर्णावावामुभावपि।
॥ वैशम्पायन उवाच ॥ एतत् श्रुत्वा तु भीष्मस्य राज्ञां विध्वंसिरे तदा। काञ्चनाङ्गदिनः पीना भुजाश्चन्दनरूषिताः।
मनोभिः सह संवेगैः संस्मृत्य च पुरातनं। सामर्थ्यं पाण्डवेयानां यथाप्रत्यक्षदर्शनं।

इति श्रीमहाभारते उद्योगपर्व्वणि रथातिरथसङ्ख्यानपर्व्वणि पाण्डवरथातिरथसङ्ख्यायां अष्टनवत्यधिकशततमोऽध्यायः।

॥ १९८ ॥

॥ भीष्म उवाच ॥ द्रौपदेया महाराज सर्व्वे पञ्च महारथाः। वैराटिरुत्तरश्चैव रथोदारो मतो मम।
अभिमन्युर्महाबाहू रथयूथपयूथपः। समः पार्थेन समरे वासुदेवेन चारिहा। ५८८०
लब्धलक्षश्चित्रयोधी च मनस्वी च दृढव्रतः। संस्मरन् वै परिक्लेशं स्वपितुर्व्विक्रमिष्यति।
सात्यकिर्म्माधवः शूरो रथयूथपयूथपः। एष वृष्णिप्रवीराणाममर्षी जितसाध्वसः।
उत्तमौजास्तथा राजन् रथोदारो मतो मम। युधामन्युश्च विक्रान्तो रथोदारो मतो मम।
एतेषां बहुसाहस्रा रथा नागा हयास्तथा। योत्स्यन्ते ते तनुं त्यक्त्वा कुन्तीपुत्त्रप्रियेप्सवा।
पाण्डवैः सह राजेन्द्र तव सेनासु भारत। अग्निमारुतवद्राजन्नाह्वयन्तः परस्परं। ५८८५

अजेयौ समरे वृद्धौ विराटद्रुपदौ तथा। महारथौ महावीर्य्यौ मतौ मे पुरुषर्षभौ।
वयोवृद्धावपि हि तौ क्षत्रधर्म्मपरायणौ। यतिष्येते परं शक्त्या स्थितौ वीरगते पथि।
सम्बन्धकेन राजेन्द्र तौ तु वीर्य्यबलान्वयात्। आर्य्यव्रतौ महेष्वासौ स्नेहवीर्य्यसितावुभौ।
कारणं प्राप्य तु नराः सर्व्व एव महाभुजाः। शूरा वा कातरा वापि भवन्ति कुरुपुङ्गव।
एकायनगतावेतौ पार्थिवौ दृढधन्विनौ। प्राणांस्त्यक्त्वा परं शक्त्या घट्टितारौ परन्तप। ५८९०
पृथगक्षौहिणीभ्यान्तावुभौ संयति दारुणौ। सम्बन्धिभावं रक्षन्तौ महत्कर्म्म करिष्यतः।
लोकवीरौ महेष्वासौ त्यक्तात्मानौ च भारत। प्रत्ययं परिरक्षन्तौ महत्कर्म्म करिष्यतः।
इति श्रीमहाभारते उद्योगपर्व्वणि रथातिरथसङ्ख्यानपर्व्वणि पाण्डवरथातिरथसङ्ख्यायां एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

॥ भीष्म उवाच ॥ पञ्चालराजस्य सुतो राजन् परपुरञ्जयः। शिखण्डी रथमुख्यो मे मतः पार्थस्य भारत।
एष योत्स्यति सङ्ग्रामे नाशयन् पूर्व्वसंस्थितिं। परं यशो विप्रथयंस्तव सेनासु भारत।
एतस्य बहुलाः सेनाः पञ्चालाश्च प्रभद्रकाः। तेनासौ रथवंशेन महत्कर्म्म करिष्यति। ५८९५
धृष्टद्युम्नश्च सेनानीः सर्व्वसेनासु भारत। मतो मेऽतिरथो राजन् द्रोणशिष्यो महारथः।
एष योत्स्यति सङ्ग्रामे सूदयन् वै परानणे। भगवानिव संक्रुद्धः पिनाकी युगसङ्क्षये।
एतस्य तद्रथानीकं कथयन्ति रणप्रियाः। बहुलात् सागरप्रख्यं देवानामिव संयुगे।
क्षत्रधर्म्मा तु राजेन्द्र मतो मेऽर्द्धरथो नृप। धृष्टद्युम्नस्य तनयो बाल्यान्नातिकृतश्रमः।
शिशुपालसुतो वीरश्चेदिराजो महारथः। धृष्टकेतुर्महेष्वासः सम्बन्धी पाण्डवस्य ह। ५९००
एष चेदिपतिः शूरः सह पुत्रेण भारत। महारथानां सुकरं महत् कर्म्म करिष्यति।
क्षत्रधर्म्मरतो मह्यं मतः परपुरञ्जयः। क्षत्रदेवस्तु राजेन्द्र पाण्डवेषु रथोत्तमः।
जयन्तश्चामितौजाश्च सत्यजिच्च महारथः। महारथा महात्मानः सर्व्वे पाञ्चालसत्तमाः।
योत्स्यन्ते समरे तात संरब्धा इव कुञ्जराः। अजो भोजश्च विक्रान्तौ पाण्डवार्थे महारथौ।
योत्स्येते बलिनौ शूरौ परं शक्त्या क्षयिष्यतः। शीघ्रास्त्रौ चित्रयोद्धारौ कृतिनौ दृढविक्रमौ। ५९०५
कैकेयाः पञ्च राजेन्द्र भ्रातरो युद्धदुर्म्मदाः। सर्व्वे चैव रथोदाराः सर्व्वे लोहितकध्वजाः।
काशिकः सुकुमारश्च नीलो यश्चापरो नृप। सूर्य्यदत्तश्च शङ्खश्च मदिराश्वश्च नामतः।
सर्व्व एते रथोदाराः सर्व्वे चाहवलक्षणाः। सर्व्वास्त्रविदुषः सर्व्वे महात्मानो मता मम।
वार्द्धक्षेमिर्महाराज मतो मम महारथः। चित्रायुधश्च नृपतिर्मतो मे रथसत्तमः।
स हि सङ्ग्रामशोभी च भक्तश्चापि किरीटिनः। चेकितानः सत्यधृतिः पाण्डवानां महारथौ। ५९१०
द्वाविमौ पुरुषव्याघ्रौ रथोदारौ मतौ मम। व्याघ्रदत्तश्च राजेन्द्र चन्द्रसेनश्च भारत।
मतौ मम रथोदारौ पाण्डवानां न संशयः। सेनाबिन्दुश्च राजेन्द्र क्रोधहन्ता च नामतः।
यः समो वासुदेवेन भीमसेनेन वा विभो। स योत्स्यति हि विक्रम्य समरे तव सैनिकैः।

साच द्रौणं कृपश्चैव यथा संमन्यते भवान्। तथा स समरश्लाघी मन्तव्यो रथसत्तमः।
काश्यः परमशीघ्रास्त्रः श्लाघनीयो नरोत्तमः। रथ एकगुणो मह्यं ज्ञेयः परपुरञ्जयः। ५९१५
अयञ्च युधि विक्रान्तो मन्तव्योऽष्टगुणो रथः। सत्यजित् समरश्लाघी द्रुपदस्यात्मजो युवा।
गतः सोऽतिरथत्वं हि धृष्टद्युम्नेन सम्मितः। पाण्डवानां यशस्कामः परं कर्म करिष्यति।
अनुरक्तश्च शूरश्च रथोऽयमपरो महान्। पाण्ड्यराजो महावीर्य्यः पाण्डवानां धनुर्द्धरः।
दृढधन्वा महेष्वासः पाण्डवानां महारथः। श्रेणिमान् कौरवश्रेष्ठो वसुदानश्च पार्थिवः।
उभावेतावतिरथौ मतौ परपुरञ्जय। ५९२०

इति श्रीमहाभारते उद्योगपर्व्वणि रथातिरथसङ्ख्यानपर्व्वणि पाण्डवरथातिरथसङ्ख्यायां सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

॥ भीष्म उवाच ॥ रोचमानो महाराज पाण्डवानां महारथः। योत्स्यतेऽमरवत् सङ्ख्ये परसैन्येषु भारत।
रिपुजित् कुन्तिभोजश्च महेष्वासो महाबलः। मातुलो भीमसेनस्य स च मेऽतिरथो मतः।
एष वीरो महेष्वासः कृती च निपुणश्च ह। चित्रयोधी च शक्तश्च मतो मे रथपुङ्गवः।
स योत्स्यति हि विक्रम्य मघवानिव दानवैः। योधा ये चास्य विख्याताः सर्व्वे युद्धविशारदाः।
भागिनेयकृते वीरः स करिष्यति सङ्गरे। सुमहत् कर्म पाण्डूनां स्थितः प्रियहिते रतः। ५९२५
भैमसेनिर्महाराज हैडिम्बो राक्षसेश्वरः। मतो मे बहुमायावी रथयूथपयूथपः।
योत्स्यते समरे तात मायावी समरप्रियः। ये चास्य राक्षसा वीराः सचिवा वशवर्त्तिनः।
एते चान्ये च बहवो नानाजनपदेश्वराः। समेताः पाण्डवस्यार्थे वासुदेवपुरोगमाः।
एते प्राधान्यतो राजन् पाण्डवस्य महात्मनः। रथाश्चातिरथाश्चैव ये चान्येऽर्द्धरथा नृप।
नेष्यन्ति समरे सेनां भीमां यौधिष्ठिरीं नृप। महेन्द्रेणेव वीरेण पाल्यमानां किरीटिना। ५९३०
तैरहं समरे वीर मायाविद्भिर्जयैषिभिः। योत्स्यामि जयमाकाङ्क्षन्नथ वा निधनं रणे।
वासुदेवञ्च पार्थञ्च चक्रगाण्डीवधारिणौ। सन्ध्यागताविवार्केन्दू समेष्ये ते रथोत्तमौ।
ये चैव ते रथोदाराः पाण्डुपुत्रस्य सैनिकाः। सहसैन्यानहं तांश्च प्रतीयां रणमूर्द्धनि।
एते रथाश्चातिरथाश्च तुभ्यं यथाप्रधानं नृप कीर्त्तिता मया। तथा परे येऽर्द्धरथाश्च केचित्तथैव तेषामपि कौरवेन्द्र।
अर्ज्जुनं वासुदेवञ्च ये चान्ये तत्र पार्थिवाः। सर्व्वांस्तान् वारयिष्यामि यावद्द्रक्ष्यामि भारत। ५९३५
पाञ्चाल्यन्तु महाबाहो नाहं हन्यां शिखण्डिनं। उद्यतेषुमथो दृष्ट्वा प्रतियुध्यन्तमाहवे।
लोकस्तं वेद यदहं पितुः प्रियचिकीर्षया। प्राप्तं राज्यं परित्यज्य ब्रह्मचर्य्यव्रते स्थितः।
चित्राङ्गदं कौरवाणामाधिपत्येऽभ्यषेचयं। विचित्रवीर्य्यञ्च शिशुं यौवराज्येऽभ्यषेचयं।
देवव्रतत्वं विज्ञाप्य पृथिव्यां सर्व्वराजसु। नैव हन्यां स्त्रियं जातु न स्त्रीपूर्व्वं कदाचन।
स हि स्त्रीपूर्व्वको राजन् शिखण्डी यदि ते श्रुतः। कन्या भूत्वा पुमान् जातो न योत्स्ये तेन भारत। ५९४०

सर्व्वांस्त्वन्यान् हनिष्यामि पार्थिवान् भरतर्षभ । यान् समेष्यामि समरे नतु कुन्तीसुतान्नृप ।

इति श्रीमहाभारते उद्योगपर्व्वणि रथातिरथसङ्ख्यानपर्व्वणि पाण्डव रथातिरथसङ्ख्यायां एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥ समाप्तञ्च रथातिरथसङ्ख्यानपर्व्व ॥

## ॥ अथाम्बोपाख्यानपर्व्व ॥ १३ ॥

॥ दुर्य्योधन उवाच ॥ किमर्थं भरतश्रेष्ठ नैव हन्याः शिखण्डिनं । उद्यतेषुमथो दृष्ट्वा समरेष्वाततायिनं ।
पूर्व्वमुक्त्वा महाबाहो पाञ्चालान् सहसोमकैः । हनिष्यामीति गाङ्गेय तन्मे ब्रूहि पितामह ।
॥ भीष्म उवाच ॥ शृणु दुर्य्योधन कथां सहैभिर्व्वसुधाधिपैः । यदर्थं युधि सम्प्रेक्ष्य नाहं हन्यां शिखण्डिनं ।
महाराजो मम पिता शान्तनुर्लोकविश्रुतः । दिष्टान्तमाप धर्म्मात्मा समये भरतर्षभ । ५९७५
ततोऽहं भरतश्रेष्ठ प्रतिज्ञां परिपालयन् । चित्राङ्गदं भ्रातरं वै महाराज्येऽभ्यषेचयं ।
तस्मिंश्च निधनं प्राप्ते सत्यवत्या मते स्थितः । विचित्रवीर्य्यं राजानमभ्यषिञ्चं यथाविधि ।
मयाऽभिषिक्तो राजेन्द्र यवीयानपि धर्म्मतः । विचित्रवीर्य्यो धर्म्मात्मा मामेव समुदैक्षत ।
तस्य दारक्रियान्तात चिकीर्षुरहमप्युत । अनुरूपादिव कुलादित्येव च मनो दधे ।
तथाऽश्रौषं महाबाहो तिस्रः कन्याः स्वयम्वराः । रूपेणाप्रतिमाः सर्व्वाः काशिराजसुतास्तदा । ५९८०
अम्बाञ्चैवाम्बिकाञ्चैव तथैवाम्बालिकामपि । राजानश्च समाहूताः पृथिव्यां भरतर्षभ ।
अम्बा ज्येष्ठा ऽभवत्तासामम्बिका त्वथ मध्यमा । अम्बालिका च राजेन्द्र राजकन्या यवीयसी ।
सोऽहमेकरथेनैव गतः काशिपतेः पुरीं । अपश्यन्तां महाबाहो तिस्रः कन्याः स्वलङ्कृताः ।
राज्ञश्चैव समाहूतान् पार्थिवान् पृथिवीपते । ततोऽहन्तान्नृपान् सर्व्वानाहूय समरे स्थितान् ।
रथमारोपयाञ्चक्रे कन्यास्ता भरतर्षभ । वीर्य्यशुल्काश्च ता ज्ञात्वा समारोप्य रथं तदा । ५९८५
अवोचं पार्थिवान् सर्व्वानहं तत्र समागतान् । भीष्मः शान्तनवः कन्या हरतीति पुनः पुनः ।
ते यतध्वं परं शक्त्या सर्व्वे मोक्षाय पार्थिवाः । प्रसह्य हि हराम्येष मिषतां वो नरर्षभाः ।
ततस्ते पृथिवीपालाः समुत्पेतुरुदायुधाः । योगो योग इति क्रुद्धाः सारथीनभ्यचोदयन् ।
ते रथैर्गजसङ्काशैर्गजैश्च गजयोधिनः । पृष्ठैश्चाश्वैर्महीपालाः समुत्पेतुरुदायुधाः ।
ततस्ते मां महीपालाः सर्व्व एव विशाम्पते । रथव्रातेन महता सर्व्वतः पर्य्यवारयन् । ५९९०
तानहं शरवर्षेण समन्तात् पर्य्यवारयं । सर्व्वान्नृपांश्चाप्यजयं देवराडिव दानवान् ।
अपातयं शरैर्दीप्तैः प्रहसन् भरतर्षभ । तेषामापततां चित्रान् ध्वजान् हेमपरिष्कृतान् ।
एकैकेन हि बाणेन भूमौ पातितवानहं । हयांस्तेषां गजांश्चैव सारथींश्चाप्यहं रणे ।
ते निवृत्ताश्च भग्नाश्च दृष्ट्वा तल्लाघवं मम । अथाहं हास्तिनपुरमायां जित्वा महीक्षितः ।
ततोऽहं ताश्च कन्या वै भ्रातुरर्थाय भारत । तच्च कर्म्म महाबाहो सत्यवत्यै न्यवेदयं । ५९९५

इति श्रीमहाभारते उद्योगपर्व्वण्यम्बोपाख्यानपर्व्वणि भीष्मकन्याहरणे द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

॥ भीष्म उवाच ॥ ततोऽहं भरतश्रेष्ठ मातरं वीरमातरं। अभिगम्योपसंगृह्य दाशेयीमिदमब्रुवं।
इमाः काशिपतेः कन्या मया निर्ज्जित्य पार्थिवान्। विचित्रवीर्य्यस्य कृते वीर्य्यशुल्का हृता इति।
ततो मूर्द्धन्युपाघ्राय पर्य्यश्रुनयना नृप। आह सत्यवती हृष्टा दिष्ट्या पुत्र जितं त्वया।
सत्यवत्यास्त्वनुमते विवाहे समुपस्थिते। उवाच वाक्यं सव्रीडा ज्येष्ठा काशिपतेः सुता।
भीष्म त्वमसि धर्म्मज्ञः सर्व्वशास्त्रविशारदः। श्रुत्वा च वचनं धर्म्यं मह्यं कर्त्तुमिहार्हसि। ५९७०
मया शाल्वपतिः पूर्व्वं मनसाऽभिवृतो वरः। तेन चास्मि वृता पूर्व्वं रहस्यविदिते पितुः।
कथं मामन्यकामां त्वं राजन् धर्म्ममतीत्य वै। वासयेथा गृहे भीष्म कौरवः सन् विशेषतः।
एतद्बुद्ध्या विनिश्चित्य मनसा भरतर्षभ। यत् क्षमन्ते महाबाहो तदिहारब्धुमर्हसि।
स मां प्रतीक्षते व्यक्तं शाल्वराजो विशाम्पते। तस्मान्मां त्वं कुरुश्रेष्ठ समनुज्ञातुमर्हसि।
कृपां कुरु महाबाहो मयि धर्म्मभृतां वर। त्वं हि सत्यव्रतो वीर पृथिव्यामिति नः श्रुतं। ५९७५
॥ इति श्रीमहाभारते उद्योगपर्व्वण्यम्बोपाख्यानपर्व्वण्यम्बावाक्ये त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥
॥ भीष्म उवाच ॥ ततोऽहं समनुज्ञाप्य कालीं गन्धवतीं तदा। मन्त्रिणश्चर्त्विजश्चैव तथैव च पुरोहितान्।
समनुज्ञासिषं कन्यामम्बां ज्येष्ठां नराधिप। अनुज्ञाता ययौ सा तु कन्या शाल्वपतेः पुरं।
वृद्धैर्द्विजातिभिर्गुप्ता धात्र्या चानुगता तदा। अतीत्य च तमध्वानमासाद्य नृपतिं तथा।
सा तमासाद्य राजानं शाल्वं वचनमब्रवीत्। आगताऽहं महाबाहो त्वामुद्दिश्य महामते।
तामब्रवीच्छाल्वपतिः स्मयन्निव विशाम्पते। त्वयाऽन्यपूर्व्वया नाहं भार्य्यार्थी वरवर्णिनि। ५९८०
गच्छ भद्रे पुनस्तत्र सकाशं भीष्मकस्य वै। नाहमिच्छामि भीष्मेण गृहीतां त्वां प्रसह्य वै।
त्वं हि भीष्मेण निर्ज्जित्य नीता प्रीतिमती तदा। परामृश्य महायुद्धे निर्ज्जित्य पृथिवीपतीन्।
नाहं त्वय्यन्यपूर्व्वायां भार्य्यार्थी वरवर्णिनि। कथमस्मद्विधो राजा परपूर्व्वां प्रवेशयेत्।
नारीं विदितविज्ञानः परेषां धर्म्ममादिशन्। यथेष्टं गम्यतां भद्रे मा त्वां कालोऽत्यगादयं।
अम्बा तमब्रवीद्राजन्ननङ्गशरपीडिता। मैवं वद महीपाल नैतदेवं कथञ्चन। ५९८५
नास्मि प्रीतिमती नीता भीष्मेणामित्रकर्षण। बलान्नीताऽस्मि रुदती विद्राव्य पृथिवीपतीन्।
भजस्व मां शाल्वपते भक्तां बालामनागसं। भक्तानां हि परित्यागो न धर्म्मेषु प्रशस्यते।
साऽहमामन्त्र्य गाङ्गेयं समरेष्वनिवर्त्तिनं। अनुज्ञाता च तेनैव ततोऽहं भृशमागता।
न स भीष्मो महाबाहुर्मामिच्छति विशाम्पते। भ्रातृहेतोः समारम्भो भीष्मस्येति श्रुतो मया।
भगिन्यौ मम ये नीते अम्बिकाऽम्बालिके नृप। प्रादाद्विचित्रवीर्य्याय गाङ्गेयो हि यवीयसे। ५९९०
यथा शाल्वपते नान्यं वरं ध्यायामि कञ्चन। त्वामृते पुरुषव्याघ्र तथा मूर्द्धानमालभे।
न चान्यपूर्व्वा राजेन्द्र त्वामहं समुपस्थिता। सत्यं ब्रवीमि शाल्वैतत् सत्येनात्मानमालभे।
भजस्व मां विशालाक्ष स्वयं कन्यामुपस्थितां। अनन्यपूर्व्वां राजेन्द्र त्वत्प्रसादाभिकाङ्क्षिणीं।
तामेवं भाषमाणान्तु शाल्वः काशिपतेः सुतां। अत्यजद्भरतश्रेष्ठ जीर्णां त्वचमिवोरगः।

एवं बहुविधैर्वाक्यैर्याच्यमानस्तया नृपः । नाश्रद्दधच्छाल्वपतिः कन्यायां भरतर्षभ । ५९९९
ततः सा मन्युनाविष्टा ज्येष्ठा काशिपतेः सुता । अब्रवीत् साश्रुनयना बाष्पविप्लुतया गिरा ।
त्वया त्यक्ता गमिष्यामि यत्र तत्र विशाम्पते । तत्र मे गतयः सन्तु सन्तः सत्यं यथा ध्रुवं ।
एवं तां भाषमाणान्तु कन्यां शाल्वपतिस्तदा । परितत्याज कौरव्य करुणं परिदेवतीं ।
गच्छ गच्छेति तां शाल्वः पुनःपुनरभाषत । बिभेमि भीष्मात् सुश्रोणि त्वञ्च भीष्मपरिग्रहः ।
एवमुक्ता तु सा तेन शाल्वेनादीर्घदर्शिना । निश्चक्राम पुराद्दीना रुदती कुररी यथा । ६०००
॥ भीष्म उवाच ॥ निष्क्रामन्ती तु नगराच्चिन्तयामास दुःखिता । पृथिव्यां नास्ति युवतिर्विषमस्था मया समा ।
बान्धवैर्विप्रहीनाऽस्मि शाल्वेन च निराकृता । न च शक्यं पुनर्गन्तुं मया वारणसाह्वयं ।
अनुज्ञाता तु भीष्मेण शाल्वमुद्दिश्य कारणं । किन्नु गर्हाम्यथात्मानमथ भीष्मं दुरासदं ।
अथ वा पितरं मूढं यो मेऽकार्षीत् स्वयम्वरं । ममायं स्वकृतो दोषो याऽहं भीष्मरथात्तदा ।
प्रवृत्ते दारुणे युद्धे शाल्वार्थं न गता पुरा । तस्येयं फलनिर्वृत्तिर्यदापन्नाऽस्मि मूढवत् । ६००५
धिग्भीष्मं धिक् च मे मन्दं पितरं मूढचेतसं । येनाऽहं वीर्य्यशुल्केन पण्यस्त्रीव प्रवारिता ।
धिङ्मां धिक् शाल्वराजानं धिग्धातारमथापि वा । येषां दुर्नीतभावेन प्राप्ताऽस्म्यापदमुत्तमां ।
सर्व्वथा भागधेयानि स्वानि प्राप्नोति मानवः । अनयस्यास्य तु मुखं भीष्मः शान्तनवो मम ।
सा भीष्मे प्रतिकर्त्तव्यमहं पश्यामि साम्प्रतं । तपसा वा युधा वाऽपि दुःखहेतुः स मे मतः ।
को नु भीष्मं युधा जेतुमुत्सहेत महीपतिः । एवं सा परिनिश्चित्य जगाम नगराद्बहिः । ६०१०
आश्रमं पुण्यशीलानां तापसानां महात्मनां । ततस्तामवसद्रात्रिं तापसैः परिवारिता ।
आचख्यौ च यथावृत्तं सर्व्वमात्मनि भारत । विस्तरेण महाबाहो निखिलेन शुचिस्मिता ।
हरणञ्च विसर्गञ्च शाल्वेन च विसर्ज्जनं । ततस्तत्र महानासीत् ब्राह्मणः संशितव्रतः ।
शैखावत्यस्तपोवृद्धः शास्त्रे चारण्यके गुरुः । आर्त्तां तामाह स मुनिः शैखावत्यो महातपाः ।
निःश्वसन्तीं सतीं बालां दुःखशोकपरायणां । एवं गते तु किं भद्रे शक्यं कर्त्तुं तपस्विभिः । ६०१५
आश्रमस्थैर्महाभागे तपोयुक्तैर्महात्मभिः । सा त्वेनमब्रवीद्राजन् क्रियतां मदनुग्रहः ।
प्राव्राज्यमहमिच्छामि तपस्तप्स्यामि दुश्चरं । मयैव यानि कर्म्माणि पूर्व्वदेहे तु मूढया ।
कृतानि नूनं पापानि तेषामेतत् फलं ध्रुवं । नोत्सहे तं पुनर्गन्तुं स्वजनं प्रति तापसाः ।
प्रत्याख्याता निरानन्दा शाल्वेन च निराकृता । उपदिष्टमिहेच्छामि तापस्यं वीतकल्मषाः ।
युष्माभिर्देवसङ्काशैः कृपा भवतु वो मयि । स तामाश्वासयत् कन्यां दृष्टान्तागमहेतुभिः । ६०२०
सान्त्वयामास कार्य्यञ्च प्रतिजज्ञे द्विजैः सह ॥

इति श्रीमहाभारते उद्योगपर्व्वण्यम्बोपाख्यानपर्व्वणि शैखावत्याम्बासंवादे चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

॥ भीष्म उवाच ॥ ततस्ते तापसाः सर्व्वे कार्य्यवन्तोऽभवंस्तदा । तां कन्यां चिन्तयन्तस्ते किं कार्य्यमिति धर्म्मिणः ।
केचिदाहुः पितुर्व्वेश्म नीयतामिति तापसाः । केचिदस्मदुपालम्भे मतिञ्चक्रुर्हि तापसाः ।

केचिच्छाल्वपतिं गत्वा नियोज्यमिति मेनिरे । नेति केचित् व्यवस्यन्ति प्रत्याख्याता हि तेन सा ।
एवं गते तु किं शक्यं भद्रे कर्त्तुं मनीषिभिः । पुनरूचुश्च तां सर्व्वे तापसाः संशितव्रताः । ७०२५
अलं प्रव्रजितेनेह भद्रे शृणु हितं वचः । इतो गच्छस्व भद्रं ते पितुरेव निवेशनं ।
प्रतिपत्स्यति राजा स पिता ते यदनन्तरं । तत्र वत्स्यसि कल्याणी सुखं सर्व्वगुणान्विता ।
न च तेऽन्या गतिर्न्याय्या भवेत् भद्रे यथा पिता । पतिर्व्वाऽपि गतिर्न्नार्य्याः पिता वा वरवर्णिनि ।
गतिः पतिः समास्थाया विषमे वा पिता गतिः । प्रव्रज्या हि सुदुःखेयं सुकुमार्य्या विशेषतः ।
राजपुत्र्याः प्रकृत्या च कुमार्य्यास्तव भाविनि । भद्रे दोषा हि विद्यन्ते बहवो वरवर्णिनि । ७०३०
आश्रमे हि वसन्त्यास्ते न भवेयुः पितुर्गृहे । ततस्त्वन्ये ब्रुवन् वाक्यं तापसास्तां तपस्विनीं ।
त्वामिहैकाकिनीं दृष्ट्वा निर्ज्जने गहने वने । प्रार्थयिष्यन्ति राजानस्तस्मान्मैवं मनः कृथाः ।
॥ अम्बोवाच ॥ न शक्यं काशिनगरं पुनर्गन्तुं पितुर्गृहान् । अवज्ञाता भविष्यामि बान्धवानां न संशयः ।
उषिताऽस्मि तथा बाल्ये पितुर्वेश्मनि तापसाः । नाहं गमिष्ये भद्रं वस्तत्र यत्र पिता मम ।
तपस्तप्तुमभीप्सामि तापसैः परिरक्षिता । यथा परेऽपि मे लोके न स्यादेवं महात्ययः । ७०३५
दौर्भाग्यं तापसश्रेष्ठास्तस्मात्तप्स्याम्यहं तपः ।
॥ भीष्म उवाच ॥ इत्येवन्तेषु विप्रेषु चिन्तयत्सु यथातथं । राजर्षिस्तद्वनं प्राप्तस्तपस्वी होत्रवाहनः ।
ततस्ते तापसाः सर्व्वे पूजयन्ति स्म तं नृपं । पूजाभिः स्वागताद्याभिरासनेनोदकेन च ।
तस्योपविष्टस्य सतो विश्रान्तस्योपशृण्वतः । पुनरेव कथाञ्चक्रुः कन्यां प्रति वनौकसः ।
अम्बायास्तां कथां श्रुत्वा काशिराज्ञश्च भारत । राजर्षिः स महातेजा बभूवोद्विग्नमानसः । ७०४०
तां तथावादिनीं श्रुत्वा दृष्ट्वा च स महातपाः । राजर्षिः कृपयाविष्टो महात्मा होत्रवाहनः ।
स वेपमान उत्थाय मातुस्तस्याः पिता तदा । तां कन्यामङ्कमारोप्य पर्य्याश्वासयत प्रभो ।
स तामपृच्छत् कार्त्स्न्येन व्यसनोत्पत्तिमादितः । सा च तस्मै यथावृत्तं विस्तरेण न्यवेदयत् ।
ततः स राजर्षिरभूत् दुःखशोकसमन्वितः । कार्य्यञ्च प्रतिपेदे तन्मनसा सुमहातपाः ।
अब्रवीत् वेपमानश्च कन्यामार्त्तां सुदुःखितां । मागाः पितृगृहं भद्रे मातुस्ते जनको ह्यहं । ७०४५
दुःखं छेत्स्याम्यहं ते वै मयि वर्त्तस्व पुत्रिके । पर्य्याप्तं ते मनो वत्से यदेवं परिशुष्यसि ।
गच्छ मद्वचनाद्रामं जामदग्न्यं तपस्विनं । रामस्ते सुमहद्दुःखं शोकञ्चैवापनेष्यति ।
हनिष्यति रणे भीष्मं न करिष्यति चेद्वचः । तं गच्छ भार्गवश्रेष्ठं कालाग्निसमतेजसं ।
प्रतिष्ठापयिता स त्वां समे पथि महातपाः । ततस्तु सुस्वरं बाष्पमुत्सृजन्ती पुनःपुनः ।
अब्रवीत् पितरं मातुः सा तदा होत्रवाहनं । अभिवादयित्वा शिरसा गमिष्ये तव शासनात् । ७०५०
अपि नामाद्य पश्येयमार्य्यन्तं लोकविश्रुतं । कथञ्च तीव्रं दुःखं मे नाशयिष्यति भार्गवः ।
एतदिच्छाम्यहं ज्ञातुं यथा यास्यामि तत्र वै ।

इति श्रीमहाभारते उद्योगपर्व्वण्यम्बोपाख्यानपर्व्वणि होत्रवाहनाम्बासंवादे पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

॥ होत्रवाहन उवाच ॥ रामं द्रक्ष्यसि भद्रे त्वं जामदग्न्यं महावने । उग्रे तपसि वर्त्तन्तं सत्यसन्धं महाबलं ।
महेन्द्रे वै गिरिश्रेष्ठे रामो नित्यमुपास्ति ह । ऋषयो वेदविद्वांसो गन्धर्व्वाप्सरसस्तथा ।
तत्र गच्छस्व भद्रन्ते ब्रूयाश्चैनं वचो मम । अभिवाद्य च तं मूर्द्ध्ना तपोवृद्धं दृढव्रतं । ६९८५
ब्रूयाश्चैनं पुनर्भद्रे यत्ते कार्य्यं मनीषितं । मयि सङ्कीर्त्तिते रामः सर्व्वं तत्ते करिष्यति ।
मम रामः सखा वत्से प्रीतियुक्तः सुहृच्च मे । 'जमदग्निसुतो वीरः सर्व्वशस्त्रभृतां वरः ।
एवं ब्रुवति कन्यान्तु पार्थिवे होत्रवाहने । अकृतव्रणः प्रादुरासीद्रामस्यानुचरः प्रियः ।
ततस्ते मुनयः सर्व्वे समुत्तस्थुः सहस्रशः । स च राजा वयोवृद्धः सृञ्जयो होत्रवाहनः ।
ततो दृष्ट्वा कृतातिथ्यमन्योन्यं ते वनौकसः । सहिता भरतश्रेष्ठ निषेदुः परिवार्य्य तं ।' ६९९०
ततस्ते कथयामासुः कथास्तास्ता मनोरमाः । धन्या दिव्याश्च राजेन्द्र प्रीतिहर्षमुदा युताः ।
ततः कथान्ते राजर्षिर्महात्मा होत्रवाहनः । रामं श्रेष्ठं महर्षीणामपृच्छदकृतव्रणं ।
क्व सम्प्रति महाबाहो जामदग्न्यः प्रतापवान् । अकृतव्रण शक्यो वै द्रष्टुं वेदविदां वर ।
॥ अकृतव्रण उवाच ॥ भवन्तमेव सततं रामः कीर्त्तयति प्रभो । सृञ्जयो मे प्रियसखो राजर्षिरिति पार्थिव ।
इह रामः प्रभाते श्वो भवितेति मतिर्मम । द्रष्टास्येनमिहायान्तं तव दर्शनकाङ्क्षया । ६९९५
इयञ्च कन्या राजर्षे किमर्थं वनमागता । कस्य चेयं तव च का भवतीच्छामि वेदितुं ।
॥ होत्रवाहन उवाच ॥ दौहित्रीयं मम विभो काशिराजसुता प्रिया । ज्येष्ठा स्वयम्वरे तस्थौ भगिनीभ्यां सहानघ ।
इयमम्बेति विख्याता ज्येष्ठा काशिपतेः सुता । अम्बिकाऽम्बालिके कन्ये कनीयस्यौ तपोधन ।
समेतं पार्थिवं क्षत्रं काशिपुर्य्यां ततोऽभवत् । कन्यानिमित्तं विप्रर्षे तत्राऽसीदुत्सवो महान् ।
ततः किल महावीर्य्यो भीष्मः शान्तनवो नृपान् । अधिक्षिप्य महातेजास्तिस्रः कन्या जहार ताः । ७०००
निर्ज्जित्य पृथिवीपालानथ भीष्मो गजाह्वयं । आजगाम विशुद्धात्मा कन्याभिः सह भारत ।
सत्यवत्यै निवेद्याथ विवाहं समनन्तरं । भ्रातुर्व्विचित्रवीर्य्यस्य समाज्ञापयत प्रभुः ।
तन्तु वैवाहिकं दृष्ट्वा कन्येयं समुपार्ज्जितं । अब्रवीत् तत्र गाङ्गेयं मन्त्रिमध्ये द्विजर्षभ ।
मया शाल्वपतिर्व्वीर मनसाऽभिवृतः पतिः । न मामर्हसि धर्म्मज्ञ दातुं भ्रात्रेऽन्यमानसां ।
तच्छ्रुत्वा वचनं भीष्मः सम्मन्त्र्य सह मन्त्रिभिः । निश्चित्य विससर्ज्जैनां सत्यवत्या मते स्थितः । ७००५
अनुज्ञाता तु भीष्मेण शाल्वं सौभपतिं ततः । कन्येयं मुदिता तत्र काले वचनमब्रवीत् ।
विसर्ज्जिताऽस्मि भीष्मेण धर्म्मं मां प्रतिपादय । मनसाऽभिवृतः पूर्व्वं मया त्वं पार्थिवर्षभ ।
प्रत्याचख्यौ च शाल्वोऽप्यस्याश्चारित्रस्याभिशङ्कितः । सेयं तपोवनं प्राप्ता तापस्येऽभिरता भृशं ।
मया च प्रत्यभिज्ञाता वंशस्य परिकीर्त्तनात् । अस्य दुःखस्य चोत्पत्तौ भीष्ममेवेह मन्यते ।
॥ अम्बोवाच ॥ भगवन्नेवमेवेह यथाह पृथिवीपतिः । शरीरकर्त्ता मातुर्मे सृञ्जयो होत्रवाहनः । ७०१०
न ह्युत्सहे स्वनगरं प्रतियातुं तपोधन । अपमानभयाच्चैव व्रीडया च महामुने ।
यत्तु मां भगवान् रामो वक्ष्यति द्विजसत्तम । तन्मे कार्य्यतमं कार्य्यमिति मे भगवन्मतिः ।
इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वण्यकृतव्रणाम्बासंवादे षट्सप्तत्यधिकशततमोऽध्यायः ॥१७६॥

॥ अकृतव्रण उवाच ॥ दुःखद्वयमिदं भद्रे कतरस्य चिकीर्षसि। प्रतिकर्त्तव्यमबले तत्त्वं वत्से वदस्व मे।
यदि सौभपतिर्भद्रे नियोक्तव्यो मतस्तव। नियोक्ष्यति महात्मा स रामस्त्वद्धितकाम्यया।
अथापगेयं भीष्मं तं रामेणेच्छसि धीमता। रणे विनिर्ज्जितं द्रष्टुं कुर्य्यात्तदपि भार्गवः। ७०८५
सृञ्जयस्य वचः श्रुत्वा तव चैव शुचिस्मिते। यदत्र ते भवं कार्य्यं तदद्यैव विचिन्त्यतां।
॥ अम्बोवाच ॥ अपनीताऽस्मि भीष्मेण भगवन्नविजानता। नाभिजानाति मे भीष्मो ब्रह्मन् शाल्वगतं मनः।
एतद्विचार्य्य मनसा भवानेतद्विनिश्चयं। विनिश्चिनोतु यथान्यायं विधानं क्रियतां तथा।
भीष्मे वा कुरुशार्द्दूले शाल्वराजेऽथ वा पुनः। उभयोरेव वा ब्रह्मन् युक्तं यत् तत् समाचर।
निवेदितं मया ह्येतद्दुःखमूलं यथातथं। विधानं तत्र भगवन् कर्त्तुमर्हसि युक्तितः। ७०९०
॥ अकृतव्रण उवाच ॥ उपपन्नमिदं भद्रे यदेवं वरवर्णिनि। धर्म्मं प्रति वचो ब्रूयाः शृणु चेदं वचो मम।
यदि त्वामापगेयो वै न नयेद्गजसाह्वयं। शाल्वस्त्वां शिरसा भीरु गृह्णीयाद्रामचोदितः।
तेन त्वं निर्ज्जिता भद्रे यस्मान्नीताऽसि भामिनि। संशयः शाल्वराजस्य तेन त्वयि सुमध्यमे।
भीष्मः पुरुषमानी च जितकाशी तथैव च। तस्मात् प्रतिक्रिया युक्ता भीष्मे कारयितुं तव।
॥ अम्बोवाच ॥ ममाप्येष सदा ब्रह्मन् हृदि कामोऽभिवर्त्तते। घातयेयं यदि रणे भीष्ममित्येव नित्यदा। ७०९५
भीष्मं वा शाल्वराजं वा यं वा दोषेण गच्छसि। प्रशाधि तं महाबाहो यत्कृतेऽहं सुदुःखिता।
॥ भीष्म उवाच ॥ एवं कथयतामेव तेषां स दिवसो गतः। रात्रिश्च भरतश्रेष्ठ सुखशीतोष्णमारुता।
ततो रामः प्रादुरासीत् प्रज्वलन्निव तेजसा। शिष्यैः परिवृतो राजन् जटाचीरधरो मुनिः।
धनुष्पाणिरदीनात्मा खड्गं बिभ्रत् परश्वधी। विरजा राजशार्द्दूल सोऽभ्ययात् सृञ्जयं नृपं।
ततस्ते तापसा दृष्ट्वा स च राजा महातपाः। तस्थुः प्राञ्जलयो राजन् सा च कन्या तपस्विनी। ७१००
पूजयामासुरव्यग्रा मधुपर्केण भार्गवं। अर्च्चितश्च यथान्यायं निषसाद सहैव तैः।
ततः पूर्ब्बव्यतीतानि कथयन्तौ स्म तावुभौ। आसातां जामदग्न्यश्च सृञ्जयश्चैव भारत।
तथा कथाऽन्ते राजर्षिर्भृगुश्रेष्ठं महाबलं। उवाच मधुरं काले रामं वचनमर्थवत्।
रामेयं मम दौहित्री काशिराजसुता प्रभो। अस्याः शृणु यथातत्त्वं कार्य्यं कार्य्यविशारद।
परमं कथ्यतां चेति तां रामः प्रत्यभाषत। ततः साऽभ्यागमद्रामं ज्वलन्तमिव पावकं। ७१०५
ततोऽभिवाद्य चरणौ रामस्य शिरसा शुभौ। स्पृष्ट्वा पद्मदलाभाभ्यां पाणिभ्यामग्रतः स्थिता।
रुरोद सा शोकवती वाष्पव्याकुललोचना। प्रपेदे शरणञ्चैव शरण्यं भृगुनन्दनं।
॥ राम उवाच ॥ यथा त्वं सृञ्जयस्यास्य तथा मे त्वं नृपात्मजे। ब्रूहि यत्ते मनोदुःखं करिष्ये वचनं तव।
॥ अम्बोवाच ॥ भगवञ्छरणं त्वद्य प्रपन्नाऽस्मि महाव्रत। शोकपङ्कार्णवान्मग्नां घोरादुद्धर मां विभो।
॥ भीष्म उवाच ॥ तस्याश्च दृष्ट्वा रूपञ्च वपुश्चाभिनवं पुनः। सौकुमार्य्यं परञ्चैव रामश्चिन्तापरोऽभवत्। ७११०
किमियं वक्ष्यतीत्येवं विममर्श भृगूद्वहः। इति दध्यौ चिरं रामः कृपयाऽभिपरिप्लुतः।
कथ्यतामिति सा भूयो रामेणोक्ता शुचिस्मिता। सर्व्वमेव यथातत्त्वं कथयामास भार्गवे।

तच्छ्रुत्वा जामदग्न्यस्तु राजपुत्र्या वचस्तदा । उवाच तां वरारोहां निश्चित्यार्थविनिश्चयं ।
‖ राम उवाच ‖ प्रेषयिष्यामि भीष्माय कुरुश्रेष्ठाय भाविनि । करिष्यति वचो मह्यं श्रुत्वा च स नराधिपः ।
न चेत् करिष्यति वचो मयोक्तं जाह्नवीसुतः । धक्ष्याम्यहं रणे भद्रे सामात्यं शस्त्रतेजसा । ७०१५
अथ वा ते मतिस्तत्र राजपुत्रि निवर्त्तते । तावच्छाल्वपतिं वीरं योजयाम्यत्र कर्म्मणि ।
‖ अम्बोवाच ‖ विसर्ज्जिताऽहं भीष्मेण श्रुत्वैव भृगुनन्दन । शाल्वराजगतं भावं मम पूर्व्वं मनीषितं ।
सौभराजमुपेत्याहमवोचं दुर्व्वचं वचः । न च मां प्रत्यगृह्णात् स चारित्र्यपरिशङ्कितः ।
एतत् सर्व्वं विनिश्चित्य स्वबुद्ध्या भृगुनन्दन । यदत्रौपयिकं कार्य्यं तच्चिन्तयितुमर्हसि ।
मम तु व्यसनस्यास्य भीष्मो मूलं महाव्रतः । येनाहं वशमानीता समुत्क्षिप्य बलात् तदा । ७०२०
भीष्मं जहि महाबाहो यत्कृते दुःखमीदृशं । प्राप्ताऽहं भृगुशार्दूल चराम्यप्रियमुत्तमं ।
स हि लुब्धश्च मानी च जितकाशी च भार्गव । तस्मात् प्रतिक्रिया कर्त्तुं युक्ता तस्मै त्वयाऽनघ ।
एष मे क्रियमाणाया भारतेन तदा विभो । अभवद्धृदि सङ्कल्पो घातयेयं महाव्रतं ।
तस्मात् कामं ममाद्येमं राम सम्पादयानघ । जहि भीष्मं महाबाहो यथा वृत्रं पुरन्दरः ।
इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि रामाम्बासंवादे सप्तसप्तत्यधिकशततमोऽध्यायः ‖ १७७ ‖
‖ भीष्म उवाच ‖ एवमुक्तस्तदा रामो जहि भीष्ममिति प्रभो । उवाच रुदतीं कन्यां चोदयन्तीं पुनः पुनः । ७०२५
काश्ये न कामं गृह्णामि शस्त्रं वै वरवर्णिनि । ऋते ब्रह्मविदां हेतोः किमन्यत् करवाणि ते ।
कामं भीष्मश्च शाल्वश्च मम राज्ञि वशानुगौ । भविष्यतोऽनवद्याङ्गि तत् कारिष्यामि मा शुचः ।
न तु शस्त्रं ग्रहीष्यामि कथञ्चिदपि भाविनि । ऋते नियोगाद्विप्राणामेष मे समयः कृतः ।
‖ अम्बोवाच ‖ मम दुःखं भगवता व्यपनेयं यतस्ततः । तत्तु भीष्मप्रसूतं मे तं जहीश्वर मा चिरं ।
‖ राम उवाच ‖ काशिकन्ये पुनर्ब्रूहि भीष्मस्ते चरणावुभौ । शिरसा वन्दनार्होऽपि ग्रहीष्यति गिरा मम । ७०३०
‖ अम्बोवाच ‖ जहि भीष्मं रणे राम गर्ज्जन्तमसुरं यथा । समाहूतो रणे राम मम चेदिच्छसि प्रियं ।
प्रतिश्रुतञ्च यदपि तत् सत्यं कर्त्तुमर्हसि ।
‖ भीष्म उवाच ‖ तयोः संवदतोरेवं राजन् रामाम्बयोस्तदा । ऋषिः परमधर्म्मात्मा इदं वचनमब्रवीत् ।
शरणागतां महाबाहो कन्यां न त्यक्तुमर्हसि । यदि भीष्मो रणे राम समाहूतस्त्वया मृधे ।
निर्ज्जितोऽस्मीति वा ब्रूयात् कुर्य्याद्वा वचनं तव । कृतमस्या भवेत् कार्य्यं कन्याया भृगुनन्दन । ७०३५
वाक्यं सत्यञ्च ते वीर भविष्यति कृतं विभो । इयञ्चापि प्रतिज्ञा ते तदा राम महामुने ।
जित्वा वै क्षत्रियान् सर्व्वान् ब्राह्मणेषु प्रतिश्रुता । ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव रणे यदि ।
ब्रह्मद्विड्भविता तं वै हनिष्यामीति भार्गव । शरणार्थं प्रपन्नानां भीतानां शरणार्थिनां ।
न शक्ष्यामि परित्यागं कर्त्तुं जीवन् कथञ्चन । यश्च कृत्स्नं रणे क्षत्रं विजेष्यति समागतं ।
दीप्तात्मानमहं तञ्च हनिष्यामीति भार्गव । स एवं विजयी राम भीष्मः कुरुकुलोद्वहः । ७०४०
तेन युध्यस्व सङ्ग्रामे समेत्य भृगुनन्दन ।

॥ राम उवाच ॥ स्मराम्यहं पूर्वोक्तां प्रतिज्ञामृषिसत्तम । तथैव तत् करिष्यामि यथा साम्नैव लप्स्यते ।
कार्य्यमेतन्महद्ब्रह्मन् काशिकन्यामनोगतं । गमिष्यामि स्वयं तत्र कन्यामादाय यत्र सः ।
यदि भीष्मो रणश्लाघी न करिष्यति मे वचः । हनिष्याम्येनमुद्रिक्तमिति मे निश्चिता मतिः ।
न हि बाणा मयोत्सृष्टाः सज्जन्तीह शरीरिणां । कायेषु विदितं तुभ्यं पुरा क्षत्रियसङ्गरे । ७०४५
एवमुक्त्वा ततो रामः सह तैर्ब्रह्मवादिभिः । प्रयाणाय मतिं कृत्वा समुत्तस्थौ महातपाः ।
ततस्ते तामुषित्वा तु रजनीं तत्र तापसाः । हुताग्नयो जप्तजप्याः प्रतस्थुर्मज्जिघांसया ।
अभ्यगच्छत्ततो रामः सह तैर्ब्रह्मवादिभिः । कुरुक्षेत्रं महाराज कन्यया सह भारत ।
न्यविशन्त ततः सर्वे परिगृह्य सरस्वतीं । तापसास्ते महात्मानो भृगुश्रेष्ठपुरस्कृताः ।
इति श्रीमहाभारते उद्योगपर्व्वण्यम्बोपाख्यानपर्व्वणि रामकुरुक्षेत्रगमने अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥
॥ भीष्म उवाच ॥ ततस्तृतीये दिवसे सन्दिदेश व्यवस्थितः । कुरु प्रियं स मे राजन् प्राप्तोऽस्मीति महाव्रतः । ७०५०
तमागतमहं श्रुत्वा विषयान्तं महाबलं । अभ्यगच्छं जवेनाशु प्रीत्या तेजोनिधिं प्रभुं ।
गां पुरस्कृत्य राजेन्द्र ब्राह्मणैः परिवारितः । ऋत्विग्भिर्देवकल्पैश्च तथैव च पुरोहितैः ।
स मामभिगतं दृष्ट्वा जामदग्न्यः प्रतापवान् । प्रतिजग्राह तां पूजां वचनं चेदमब्रवीत् ।
॥ राम उवाच ॥ भीष्म कां बुद्धिमास्थाय काशिराजसुता तदा । अकामेन त्वयानीता पुनश्चैव विसर्जिता ।
विभ्रंशिता त्वया हीयं धर्म्मादास्ते यशस्विनी । परामृष्टां त्वया हीमां को हि गन्तुमिहार्हति । ७०५५
प्रत्याख्याता हि शाल्वेन त्वया नीतेति भारत । तस्मादिमां मन्नियोगात् प्रतिगृह्णीष्व भारत ।
स्वधर्म्मं पुरुषव्याघ्र राजपुत्री लभत्वियं । न युक्तमवमानोऽयं राजन् कर्त्तुं त्वयाऽनघ ।
ततस्तं वै विमनसमुदीक्ष्याहमथाब्रुवं । नाहमेनां पुनर्दद्यां ब्रह्मन् भ्रात्रे कथञ्चन ।
शाल्वस्याहमिति प्राह पुरा मामेव भार्गव । मया चैवाभ्यनुज्ञाता गतेयं नगरं प्रति ।
न भयान्नाप्यनुक्रोशान्नार्थलोभान्न काम्यया । क्षात्रं धर्म्ममहं जह्यामिति मे व्रतमाहितं । ७०६०
अथ मामब्रवीद्रामः क्रोधपर्य्याकुलेक्षणः । न करिष्यसि चेदेतद्वाक्यं मे नरपुङ्गव ।
हनिष्यामि सहामात्यं त्वामद्येति पुनः पुनः । संरम्भादब्रवीद्रामः क्रोधपर्य्याकुलेक्षणः ।
तमहं गीर्भिरिष्टाभिः पुनःपुनररिन्दम । अयाचं भृगुशार्दूलं न चैव प्रशशाम सः ।
प्रणम्य तमहं मूर्द्ध्ना भूयो ब्राह्मणसत्तमं । अब्रुवं कारणं किन्तत् यत्त्वं युद्धं मयेच्छसि ।
इष्वस्त्रं मम बालस्य भवतैव चतुर्व्विधं । उपदिष्टं महाबाहो शिष्योऽस्मि तव भार्गव । ७०६५
ततो मामब्रवीद्रामः क्रोधसंरक्तलोचनः । जानीषे मां गुरुं भीष्म गृह्णासीमां न चैव ह ।
सुतां काश्यस्य कौरव्य मत्प्रियार्थं महामते । न हि ते विद्यते शान्तिरन्यथा कुरुनन्दन ।
गृहाणेमां महाबाहो रक्षस्व कुलमात्मनः । त्वया विभ्रंशिता हीयं भर्त्तारं नाधिगच्छति ।
तथा ब्रुवन्तं तमहं रामं परपुरञ्जयं । नैतदेवं पुनर्भावि ब्रह्मर्षे किं श्रमेण ते ।
गुरुत्वं त्वयि सम्प्रेक्ष्य जामदग्न्य पुरातनं । प्रसादये त्वां भगवंस्त्यक्तैषा तु पुरा मया । ७०७०

मनसा विहिते पुण्ये विस्तीर्णे नगरोपमे । दिव्याश्वयुजि सन्नद्धे काञ्चनेन विभूषिते । ७१२०
कवचेन महाबाहो सोमार्ककृतलक्षणे । धनुर्द्धरो बद्धतूणो बद्धगोधाङ्गुलित्रवान् ।
सारथ्यं कृतवांस्तत्र युयुत्सोरकृतव्रणः । सखा वेदविदत्यन्तं दयितो भार्गवस्य ह ।
आह्वयानः स मां युद्धे मनो हर्षयतीव मे । पुनः पुनरभिक्रोशन्नभियाहीति भार्गवः ।
तमादित्यमिवोद्यन्तमनाधृष्यं महाबलं । क्षत्रियान्तकरं राममेकमेकः समासदं ।
ततोऽहं बाणपातेषु त्रिषु वाहान्निगृह्य वै । अवतीर्य्य धनुर्न्यस्य पदातिरृषिसत्तमं । ७१२५
अभ्यगच्छं तदा राममर्च्चिष्यन् द्विजसत्तमं । अभिवाद्य चैनं विधिवदब्रुवं वाक्यमुत्तमं ।
योत्स्ये त्वया रणे राम सदृशेनाधिकेन वा । गुरुणा धर्म्मशीलेन जयमाशास्व मे विभो ।
॥ राम उवाच ॥ एवमेतत् कुरुश्रेष्ठ कर्त्तव्यं भूतिमिच्छता । धर्म्मो ह्येष महाबाहो विशिष्टैः सह युध्यतां ।
शपेयं त्वां न चेदेवमागच्छेथा विशाम्पते । युध्यस्व त्वं रणे यत्तो धैर्य्यमालम्ब्य कौरव ।
न तु ते जयमाशासे त्वां विजेतुमहं स्थितः । गच्छ युध्यस्व धर्म्मेण प्रीतोऽस्मि चरितेन ते । ७१३०
ततोऽहं तं नमस्कृत्य रथमारुह्य सत्वरः । प्राध्मापयं रणे शङ्खं पुनर्हेमपरिष्कृतं ।
ततो युद्धं समभवन्मम तस्य च भारत । दिवसान् सुबहून् राजन् परस्परजिगीषया ।
स मे तस्मिन् रणे पूर्व्वं प्राहरत् कङ्कपत्रिभिः । षष्ट्या शतैश्च नवभिः शराणां नतपर्व्वणां ।
चत्वारस्तेन मे वाहाः सूतश्चैव विशाम्पते । प्रतिरुद्धास्तथैवाहं समरे दंशितः स्थितः ।
नमस्कृत्य च देवेभ्यो ब्राह्मणेभ्यो विशेषतः । तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितं । ७१३५
आचार्य्यता मानिता मे निर्म्मर्य्यादे ह्यपि त्वयि । भूयस्तु शृणु मे ब्रह्मन् सम्पदं धर्म्मसङ्ग्रहे ।
ये ते वेदाः शरीरस्था ब्राह्मण्यं यच्च ते महत् । तपश्च सुमहत्तप्तं न तेभ्यः प्रहराम्यहं ।
प्रहारे क्षत्रधर्म्मस्य यं त्वं राम समाश्रितः । ब्राह्मणः क्षत्रियत्वं हि याति शस्त्रसमुद्यमात् ।
पश्य मे धनुषो वीर्य्यं पश्य बाह्वोर्बलं मम । एष ते कार्म्मुकं वीर छिनद्मि निशितेषुणा ।
तस्याहं निशितं भल्लं चिक्षिपे भरतर्षभ । तेनास्य धनुषः कोटिं छित्त्वा भूमावपातयं । ७१४०
तथैव च पृषत्कानां शतानि नतपर्व्वणां । चिक्षेप कङ्कपत्राणां जामदग्न्यरथं प्रति ।
काये विषक्तास्तु तदा वायुना समुदीरिताः । चेलुः क्षरन्तो रुधिरं नागा इव च ते शराः ।
क्षतजोक्षितसर्व्वाङ्गः क्षरन् स रुधिरं रणे । बभौ रामस्तदा राजन् मेरुर्धातुमिवोत्सृजन् ।
हेमन्तान्तेऽशोक इव रक्तस्तवकमण्डितः । बभौ रामस्तथा राजन् प्रफुल्ल इव किंशुकः ।
ततोऽन्यद्धनुरादाय रामः क्रोधसमन्वितः । हेमपुङ्खान् सुनिशितान् शरांस्तान् हि ववर्ष सः । ७१४५
ते समासाद्य मां रौद्रा बहुधा मर्म्मभेदिनः । अकम्पयन्महावेगाः सर्पानलविषोपमाः ।
तमहं समवष्टभ्य पुनरात्मानमाहवे । शतसङ्ख्यैः शरैः क्रुद्धस्तदा राममवाकिरं ।
शतैरग्न्यर्कसङ्काशैः शरैराशीविषोपमैः । शितैरभ्यर्द्दितो रामो मन्दचेता इवाभवत् ।
ततोऽहं कृपयाविष्टो विष्टभ्यात्मानमात्मना । धिग्धिगित्यब्रुवं युद्धं क्षत्रधर्म्मञ्च भारत ।

अपहायाब्रुवं राजञ्छोकवेगपरिप्लुतः । अहो बत कृतं पापं मयेदं क्षत्रधर्म्मणा । ७१९०

गुरुर्द्विजातिर्धर्म्मात्मा यदयं पीडितः शरैः । ततो न प्राहरं भूयो जामदग्न्याय भारत ।

अथावताप्य पृथिवीं पूषा दिवससंक्षये । जगामास्तं सहस्रांशुस्ततो युद्धमुपारमत् ।

इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि भीष्मरामयुद्धे भीष्मपश्चात्तापे अशीत्यधिकशततमोऽध्यायः ॥१८०॥

॥ भीष्म उवाच ॥ आत्मनस्तु ततः सूतो हयानाञ्च विशाम्पते । मम चापनयामास शल्यान् कुशलसम्मतः ।

स्नातोपवृत्तैस्तुरगैर्लब्धतोयैरविक्लवैः । प्रभात उदिते सूर्य्ये ततो युद्धमवर्त्तत ।

दृष्ट्वा मां तूर्णमायान्तं दंशितं स्यन्दने स्थितं । अकरोद्रथमत्यर्थं रामः सज्जं प्रतापवान् । ७१९५

ततोऽहं राममायान्तं दृष्ट्वा समरकाङ्क्षिणं । धनुःश्रेष्ठं समुत्सृज्य सहसाऽवतरं रथात् ।

अभिवाद्य तथैवाहं रथमारुह्य भारत । युयुत्सुर्जामदग्न्यस्य प्रमुखे वीतभीः स्थितः ।

ततोऽहं शरवर्षेण महता समवाकिरं । स च मां शरवर्षेण वर्षन्तं समवाकिरत् ।

संक्रुद्धो जामदग्न्यस्तु पुनरेव सुतेजितान् । सम्प्रैषीन्मे शरान् घोरान् दीप्तास्यानुरगानिव ।

ततोऽहं निशितैर्भल्लैः शतशोऽथ सहस्रशः । अच्छिदं सहसा राजन्नन्तरीक्षे पुनःपुनः । ७२००

ततस्त्वस्त्राणि दिव्यानि जामदग्न्यः प्रतापवान् । मयि प्रयोजयामास तान्यहं प्रत्यषेधयं ।

अस्त्रैरेव महाबाहो चिकीर्षन्नधिकां क्रियां । ततो दिवि महानादः प्रादुरासीत् समन्ततः ।

ततोऽहमस्त्रं वायव्यं जामदग्न्ये प्रयुक्तवान् । प्रत्याजघ्ने च तद्रामो गुह्यकास्त्रेण भारत ।

ततोऽहमस्त्रमाग्नेयमनुमन्त्र्य प्रयुक्तवान् । वारुणेनैव तद्रामो वारयामास मे विभुः ।

एवमस्त्राणि दिव्यानि रामस्याहमवारयं । रामश्च मम तेजस्वी दिव्यास्त्रविदरिन्दमः । ७२०५

ततो मां सव्यतो राजन् रामः कुर्व्वन् द्विजोत्तमः । उरस्यविध्यत् संक्रुद्धो जामदग्न्यः प्रतापवान् ।

ततोऽहं भरतश्रेष्ठ सन्न्यषीदं रथोत्तमे । ततो मां कश्मलाविष्टं सूतस्तूर्णमुदावहत् ।

ग्लायन्तं भरतश्रेष्ठ रामबाणप्रपीडितं । ततो मामपयान्तं वै भृशविद्धमचेतसं ।

रामस्यानुचरा हृष्टाः सर्व्वे दृष्ट्वा विचुक्रुशुः । अकृतव्रणप्रभृतयः काशिकन्या च भारत ।

ततस्तु लब्धसंज्ञोऽहं ज्ञात्वा सूतमथाऽब्रुवं । याहि सूत यतो रामः सज्जोऽहं गतवेदनः । ७२१०

ततो मामवहत् सूतो हयैः परमशोभितैः । नृत्यद्भिरिव कौरव्य मारुतप्रतिमैर्गतौ ।

ततोऽहं राममासाद्य बाणवर्षैश्च कौरव । अवाकिरं सुसंरब्धः संरब्धञ्च जिगीषया ।

तानापतत एवासौ रामो बाणानजिह्मगान् । बाणैरेवाच्छिनत्तूर्णमेकैकं त्रिभिराहवे ।

ततस्ते मृदिताः सर्व्वे मम बाणाः सुसंशिताः । रामबाणैर्द्विधाच्छिन्नाः शतशोऽथ सहस्रशः ।

ततः पुनः शरं दीप्तं सुप्रभं कालसम्मितं । असृजं जामदग्न्याय रामायाहं जिघांसया । ७२१५

तेन त्वभिहतो गाढं बाणवेगवशङ्गतः । मुमोह समरे रामो भूमौ च निपपात ह ।

ततो हाहाकृतं सर्व्वं रामे भूतलमाश्रिते । जगत् भारत संविग्नं यथाऽर्कपतने भवेत् ।

तत एनं समुद्विग्नाः सर्व्व एवाभिदुद्रुवुः । तपोधनास्ते सहसा काश्या च कुरुनन्दन ।

तत एनं परिष्वज्य शनैराश्वासयंस्तदा । पाणिभिश्चाभ्यमीलेश्च अवाचीर्भिश्च कौरव ।
ततः स विह्वलं वाक्यं राम उत्थाय चाब्रवीत् । तिष्ठ भीष्म हतोऽसीति बाणं सन्धाय कार्मुके । ७१९०
स मुक्तो न्यपतत्तूर्णं सव्ये पार्श्वे महाहवे । येनाहं भृशमुद्विग्नो व्याघूर्णित इव द्रुमः ।
हत्वा हयांस्ततो रामः शीघ्रास्त्रेण महाहवे । अवाकिरन्मां विस्रब्धो बाणैस्तैर्लोमवाहिभिः ।
ततोऽहमपि शीघ्रास्त्रं समरप्रतिवारणं । अवासृजं महाबाहो तेऽन्तराधिष्ठिताः शराः ।
रामस्य मम चैवाशु व्योमावृत्य समन्ततः । न स्म सूर्यः प्रतपति शरजालसमावृतः ।
मातरिश्वा ततस्तस्मिन् मेघरुद्ध इवाभवत् । ततो वायोः प्रकम्पाच्च सूर्यस्य च मरीचिभिः । ७१९५
अभिघातप्रभावाच्च पावकः समजायत । ते शराः स्वसमुत्थेन प्रदीप्ताश्चित्रभानुना ।
भूमौ सर्व्वे तदा राजन् भस्मभूताः प्रपेदिरे । तदा शतसहस्राणि प्रयुतान्यर्बुदानि च ।
अयुतान्यथ खर्व्वाणि निखर्व्वाणि च कौरव । रामः शराणां संक्रुद्धो मयि तूर्णं न्यपातयत् ।
ततोऽहं तानपि रणे शरैराशीविषोपमैः । संछिद्य भूमौ नृपते पातयेयं नगानिव ।
एवं तदभवद्युद्धं तदा भरतसत्तम । सन्ध्याकाले व्यतीते तु व्यपायात् स च मे गुरुः । ७२००
इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि रामभीष्मयुद्धे एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥
॥ भीष्म उवाच ॥ समागतस्य रामेण पुनरेवातिदारुणं । अन्येद्युस्तुमुलं युद्धमभवत भरतर्षभ ।
ततो दिव्यास्त्रविच्छूरो दिव्यान्यस्त्राण्यनेकशः । अयोजयत स धर्म्मात्मा दिवसे दिवसे विभुः ।
तान्यहं तत्प्रतीघातैरस्त्रैरस्त्राणि भारत । व्यधमं तुमुले युद्धे प्राणांस्त्यक्त्वा सुदुस्त्यजान् ।
अस्त्रैरस्त्रेषु बहुधा हतेष्वेव च भारत । अयुध्यत महातेजास्त्यक्तप्राणः स संयुगे ।
ततः शक्तिं प्राहिणोत् घोररूपामस्त्रै रुद्धो जामदग्न्यो महात्मा । कालोत्सृष्टां प्रज्वलितामिवोल्कां सन्दीप्ताग्रां तेजसा व्याप्य लोकं । ७२०५
ततोऽहन्तामिषुभिर्दीप्यमानां समायान्तीमन्तकालार्कदीप्तां । छित्त्वा त्रिधा पातयामास भूमौ ततो ववौ पवनः पुण्यगन्धिः ।
तस्यां छिन्नायां क्रोधदीप्तोऽथ रामः शक्तीर्घोराः प्राहिणोत् द्वादशान्याः । तासां रूपं भारत नैव शक्यं तेजस्वित्वाल्लाघवाच्चैव वक्तुं ।
किन्त्वेवाहं विह्वलः सम्प्रदिश्य दिग्भ्यः सर्व्वास्ता महोल्का इवाग्नेः । नानारूपास्तेजसोग्रेण दीप्ता यथादित्या द्वादश लोकसङ्क्षये ।
ततो जालं बाणमयं विवृत्तं सन्दृश्य भित्त्वा शरजालेन राजन् । द्वादशेषून् प्राहिणवं रणेऽहं ततः शक्तीरधमं घोररूपाः ।
ततो राजन् जामदग्न्यो महात्मा शक्तीर्घोरा व्याक्षिपद्धेमदण्डाः । विचित्रिताः काञ्चनपट्टनद्धा यथा महोल्का ज्वलितास्तथा ताः । ७२१०
तास्चाप्युग्राश्चर्म्मणा वारयित्वा खड्गेनाजौ पातयित्वा नरेन्द्र । बाणैर्दिव्यैर्जामदग्न्यस्य सङ्ख्ये दिव्यान् वाहानभ्यवर्षं ससूतान् ।
निर्मुक्तानां पन्नगानां सरूपा दृष्ट्वा शक्तीर्हेमचित्रा निकृत्ताः । प्रादुश्चक्रे दिव्यमस्त्रं महात्मा क्रोधाविष्टो हैहयेशप्रमाथी ।

ततः श्रेण्यः शलभानामिवोग्राः समापेतुर्व्विशिखानां प्रदीप्ताः। समाचिनोच्चापि भृशं शरीरं हयान् सूतं सरथञ्चापि मह्यं।

रथः शरैर्मे निचितः सर्व्वतोऽभूत्तथा हयाः सारथिश्चैव राजन्। युगं रथेषा च तथैव चक्रे तथैवाक्षः शरकृत्तोऽथ भग्नः।

ततस्तस्मिन् वाणवर्षे व्यतीते शरौघेण प्रत्यवर्षं गुरुन्तं। सविक्षतो मार्गणैर्ब्रह्मराशिर्देहादजस्रं मुमुचे भूरि रक्तं। ७२१५

यथा रामो वाणजालाभितप्तस्तथैवाहं सुभृशं गाढविद्धः। ततो युद्धं व्यरमच्चापराह्णे भानावस्तं प्रतियाते महीध्रं।

इतिश्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि रामभीष्मयुद्धे प्रतिप्रवेशे द्व्यशीत्यधिकशततमोऽध्यायः॥ १८२ ॥

॥ भीष्म उवाच॥ ततः प्रभाते राजेन्द्र सूर्य्ये विमलताङ्गते। भार्गवस्य मया सार्द्धं पुनर्युद्धमवर्त्तत।

ततोऽभ्रान्ते रथे तिष्ठन् रामः प्रहरतां वरः। ववर्ष शरजालानि मयि मेघ इवाचले।

ततः सूतो मम सुहृच्छरवर्षेण ताडितः। अपयातो रथोपस्थान्मनो मम विषादयन्।

ततः सूतं ममात्यर्थं कश्मलं प्राविशन्महत्। पृथिव्याञ्च शराघातान्निपपात मुमोह च। ७२२०

ततः सूतोऽजहात् प्राणान् रामवाणप्रपीडितः। मुहूर्त्तादिव राजेन्द्र माञ्च भीराविशत्तदा।

ततः सूते हते तस्मिन् क्षिपतस्तस्य मे शरान्। प्रमत्तमनसो रामः प्राहिणोन्मृत्युसम्मितान्।

ततः सूतव्यसनिनं विप्लुतं मां स भार्गवः। शरेणाभ्यहनत् गाढं विकृष्य बलवद्धनुः।

स मे भुजान्तरे राजन्निपत्य रुधिराशनः। मयैव सह राजेन्द्र जगाम वसुधातलं।

मत्वा तु निहतं रामस्ततो मां भरतर्षभ। मेघवद्विननादोच्चैर्जहृषे च पुनः पुनः। ७२२५

तथा तु पतिते राजन्मयि रामो मुदा युतः। उदक्रोशन्महानादं सह तैरनुयायिभिः।

मम तत्राभवन् ये तु कुरवः पार्श्वतः स्थिताः। आगता अपि युद्धं तज्जनास्तत्र दिदृक्षवः।

आर्त्तिं परमिकां जग्मुस्ते तदा पतिते मयि।

ततोऽपश्यं पतितो राजसिंह द्विजानष्टौ सूर्य्यहुताशनाभान्। ते मां समन्तात् परिवार्य्य तस्थुः स्ववाहुभिः परिवार्य्याजिमध्ये।

रक्ष्यमाणश्च तैर्व्विप्रैर्नाहं भूमिमुपास्पृशं। अन्तरीक्षे धृतो ह्यस्मि तैर्व्विप्रैर्बान्धवैरिव। ७२३०

श्वसन्निवान्तरीक्षे च जलविन्दुभिरुक्षितः। ततस्ते ब्राह्मणा राजन्नब्रुवन् परिगृह्य मां।

माभैरितिच मां सर्व्वे स्वस्ति तेऽस्त्विति चासकृत्। ततस्तेषामहं वाग्भिस्तर्पितः सहसोत्थितः। मातरं सरितां श्रेष्ठामपश्यं रथमास्थितां।

हयाश्च मे संगृहीतास्तयासन् महानद्या संयति कौरवेन्द्र। पादौ जनन्याः प्रतिगृह्य चाहं तथा पितॄणां रथमभ्यरोहं।

ररक्ष सा मां सरथं हयांश्चोपस्कराणि च। तामहं प्राञ्जलिर्भूत्वा पुनरेव व्यसर्ज्जयं।

ततोऽहं स्वयमुद्यम्य हयांस्तान् वातरंहसः। अयुध्यं जामदग्न्येन निवृत्तेऽहनि भारत। ७२३५

ततोऽहं भरतश्रेष्ठ वेगवन्तं महाबलं। अमुञ्चं समरे वाणं रामाय हृदयच्छिदं।

ततो जगाम वसुधां मम वाणप्रपीडितः। जानुभ्यां धनुरुत्सृज्य रामो मोहवशङ्गतः।

ततस्तस्मिन्निपतिते रामे भूरिसहस्रदे। आवव्रुर्जलदा व्योम क्षरन्तो रुधिरं बहु।
उल्काश्च शतशः पेतुः सनिर्घाताः सकम्पनाः। अर्कञ्च सहसा दीप्तं स्वर्भानुरभिसंवृणोत्।
ववुश्च वाताः परुषाश्चलिता च वसुन्धरा। गृध्रा बलाश्च कङ्काश्च परिपेतुर्मुदा युताः। ७२४०
दीप्तायां दिशि गोमायुर्दारुणं मुहुरुन्नदत्। अनाहता दुन्दुभयो विनेदुर्भृशदुःस्वनाः।
एतदौत्पातिकं सर्व्वं घोरमासीद्भयङ्करं। विसंज्ञकल्पे धरणीं गते रामे महात्मनि।
ततो वै सहसोत्थाय रामो मामभ्यवर्त्तत। पुनर्युद्धाय कौरव्य विह्वलः क्रोधमूर्च्छितः।
आददानो महाबाहुः कार्म्मुकं बलसन्निभं। शरमप्याददानन्तं राममेव न्यवारयन्।
महर्षयः कृपायुक्ताः क्रोधाविष्टोऽथ भार्गवः। स मेऽहरदमेयात्मा शरं कालानलोपमं। ७२४५
ततो रविर्मन्दमरीचिमण्डलो जगामास्तं पांशुपुञ्जावगूढः। निशा व्यगाहत् सुखशीतमारुता ततो युद्धं प्रत्यवहारयावः।
एवं राजन्नवहारो बभूव ततः पुनर्व्विमलेऽभूत् सुघोरं। कल्यं कल्यं विंशतिर्व्वै दिनानि तथैव चान्यानि दिनानि त्रीणि।

इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि रामभीष्मयुद्धे गङ्गाहृदयसङ्कुहे त्र्यशीत्यधिकशततमोऽध्यायः॥ १८३ ॥

॥ भीष्म उवाच ॥ ततोऽहं निशि राजेन्द्र प्रणम्य शिरसा तदा। ब्राह्मणानां पितृणाञ्च देवतानाञ्च सर्व्वशः।
नक्तञ्चराणां भूतानां राजन्यानां विशाम्पते। शयनं प्राप्य रहिते मनसा समचिन्तयं।
जामदग्न्येन मे युद्धमिदं परमदारुणं। अहानि च बहून्यद्य वर्त्तते सुमहात्ययं। ७२५०
न च रामं महावीर्य्यं शक्नोमि रणमूर्द्धनि। विजेतुं समरे विप्रं जामदग्न्यं महाबलं।
यदि शक्यो मया जेतुं जामदग्न्यः प्रतापवान्। दैवतानि प्रसन्नानि दर्शयन्तु निशां मम।
ततो निशि च राजेन्द्र प्रसुप्तः शरविक्षतः। दक्षिणेनैव पार्श्वेन प्रभातसमये तदा।
ततोऽहं विप्रमुख्यैस्तैर्यैरस्मि पतितो रथात्। उत्थापितो धृतश्चैव माभैरिति च सान्त्वितः।
त एव मां महाराज स्वप्ने दर्शनमेत्य वै। परिवार्य्याब्रुवन् वाक्यं तन्निबोध कुरूद्वह। ७२५५
उत्तिष्ठ माभैर्गाङ्गेय न भयं तेऽस्ति किञ्चन। रक्षामहे त्वां कौरव्य स्वशरीरं हि नो भवान्।
न त्वां रामो रणे जेता जामदग्न्यः कथञ्चन। त्वमेव समरे रामं विजेता भरतर्षभ।
इदमस्त्रं सुदयितं प्रत्यभिज्ञास्यते भवान्। विदितं हि तवाप्येतत् पूर्व्वस्मिन् देहधारणे।
प्राजापत्यं विश्वकृतं प्रस्वापं नाम भारत। न हीदं वेद रामोऽपि पृथिव्यां वा पुमान् क्वचित्।
तत् स्मरस्व महाबाहो भृशं संयोजयस्व च। उपस्थास्यति राजेन्द्र स्वयमेव तवानघ। ७२६०
येन सर्व्वान् महावीर्य्यान् प्रशासिष्यसि कौरव। न च रामः क्षयं गन्ता तेनास्त्रेण नराधिप।
एनसा न तु संयोगं प्राप्स्यसे जातु मानद। स्वप्स्यते जामदग्न्योऽसौ त्वद्वाणबलपीडितः।
ततो जित्वा त्वमेवैनं पुनरुत्थापयिष्यसि। अस्त्रेण दयितेनाजौ भीष्म सम्बोधनेन वै।
एवं कुरुष्व कौरव्य प्रभाते रथमास्थितः। प्रसुप्तं वा मृतं वेति तुल्यं मन्यामहे वयं।
न च रामेण मर्त्तव्यं कदाचिदपि पार्थिव। ततः समुत्पन्नमिदं प्रस्वापं युज्यतामिति। ७२६५

इत्युक्त्वाऽन्तर्हिता राजन् सर्व्व एव द्विजोत्तमाः। अष्टौ सदृशरूपास्ते सर्व्वे भास्वरमूर्त्तयः।

इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि रामभीष्मयुद्धे स्वप्नोपदेशे चतुरशीत्यधिकशततमोऽध्यायः॥ १८४ ॥

॥ भीष्म उवाच ॥ ततो रात्रौ व्यतीतायां प्रतिबुद्धोऽस्मि भारत। ततः सञ्चिन्त्य वै स्वप्नमवापं हर्षमुत्तमं।

ततः समभवत् युद्धं मम तस्य च भारत। तुमुलं सर्व्वभूतानां लोमहर्षणमद्भुतं।

ततो वाणमयं वर्षं ववर्ष मयि भार्गवः। न्यवारयमहं तच्च शरजालेन भारत।

ततः परमसंक्रुद्धः पुनरेव महातपाः। ह्यस्तनेन च कोपेन शक्तिं वै प्राहिणोन्मयि। ७२७०

इन्द्राशनिसमस्पर्शां यमदण्डसमप्रभां। ज्वलन्तीमग्निवत् संख्ये लेलिहानां समन्ततः।

ततो भरतशार्दूल धिष्ण्यमाकाशगं यथा। सा मामभ्यवधीत्तूर्णं जत्रुदेशे कुरूद्वह।

अथासृग्घोऽस्रवत् घोरं गिरेर्गैरिकधातुवत्। रामेण सुमहावाहो क्षतस्य क्षतजेक्षण।

ततोऽहं जामदग्न्याय भृशं क्रोधसमन्वितः। चिक्षेप मृत्युसङ्काशं वाणं सर्पविषोपमं।

स तेनाभिहतो वीरो ललाटे द्विजसत्तमः। अशोभत महाराज सशृङ्ग इव पर्व्वतः। ७२७५

स संरब्धः समावृत्य शरं कालान्तकोपमं। सन्दधे बलवत्कृष्य घोरं शत्रुनिवर्हणं।

स वक्षसि पपातोग्रः शरो व्याल इव श्वसन्। महीं राजंस्ततश्चाहमगमं रुधिराविलः।

संप्राप्य तु पुनः संज्ञां जामदग्न्याय धीमते। प्राहिण्वं विमलां शक्तिं ज्वलन्तीमशनीमिव।

सा तस्य द्विजमुख्यस्य निपपात भुजान्तरे। विह्वलश्चाभवद्राजन् वेपथुश्चैनमाविशत्।

तत एनं परिष्वज्य सखा विप्रो महातपाः। अकृतव्रणः शुभैर्व्वाक्यैराश्वासयदनेकधा। ७२८०

समाश्वस्तस्ततो रामः क्रोधामर्षसमन्वितः। प्रादुश्चक्रे तदा ब्राह्मं परमास्त्रं महाव्रतं।

ततस्तत्प्रतिघातार्थं ब्राह्ममेवास्त्रमुत्तमं। मया प्रयुक्तं जज्वाल युगान्तमिव दर्शयत्।

तयोर्ब्रह्मास्त्रयोरासीदन्तरा वै समागमः। असम्प्राप्यैव रामञ्च माञ्च भारतसत्तम।

ततो व्योम्नि प्रादुरभूत्तेज एव हि केवलं। भूतानि चैव सर्व्वाणि जग्मुरार्त्तिं विशाम्पते।

ऋषयश्च सगन्धर्व्वा देवताश्चैव भारत। सन्तापं परमं जग्मुरस्त्रतेजोऽभिपीडिताः। ७२८५

ततश्चचाल पृथिवी सपर्व्वतवनद्रुमा। सन्तप्तानि च भूतानि विषादं जग्मुरुत्तमं।

प्रजज्वाल नभो राजन् धूमायन्ते दिशो दश। न स्थातुमन्तरिक्षे च शेकुराकाशगास्तदा।

ततो हाहाकृते लोके सदेवासुरराक्षसे। इदमन्तरमित्येवं मोक्तुकामोऽस्मि भारत।

प्रस्वापमस्त्रं त्वरितो वचनात् ब्रह्मवादिनां। विचित्रञ्च तदस्त्रं मे मनसि प्रत्यभात्तदा।

इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि रामभीष्मयुद्धे ब्रह्मास्त्रप्रयोगे पञ्चाशीत्यधिकशततमोऽध्यायः॥१८५॥

॥ भीष्म उवाच ॥ ततो हलहलाशब्दो दिवि राजन् महानभूत्। प्रस्वापं भीष्म मा स्राक्षीरिति कौरवनन्दन। ७२९०

अयुञ्जमेव चैवाहं तदस्त्रं भृगुनन्दने। प्रस्वापे मां प्रयुञ्जाने नारदो वाक्यमब्रवीत्।

एते वियति कौरव्य दिवि देवगणाः स्थिताः। ते त्वां निवारयन्त्यद्य प्रस्वापं मा प्रयोजय।

रामस्तपस्वी ब्रह्मण्यो ब्राह्मणश्च गुरुश्च ते। तस्यावमानं कौरव्य मा स्म कार्षीः कथञ्चन।

ततोऽपश्यं दिविष्ठान् वै तानष्टौ ब्रह्मवादिनः । ते मां स्मयन्तो राजेन्द्र शनकैरिदमब्रुवन् ।
यथाह भरतश्रेष्ठ नारदस्तत्तथा कुरु । एतद्धि परमं श्रेयो लोकानां भरतर्षभ । ७२९५
ततश्च प्रतिसंहृत्य तदस्त्रं स्वापनं महत् । ब्रह्मास्त्रं दीपयाञ्चक्रे तस्मिन् युधि यथाविधि ।
ततो रामो हर्षितो राजसिंह दृष्ट्वा तदस्त्रं विनिवर्त्तितं वै । जितोऽस्मि भीष्मेति सुमन्दबुद्धिरित्येव वाक्यं सहसा व्यमु
ञ्चत् ।
ततोऽपश्यत् पितरं जामदग्न्यः पितुस्तथा पितरश्चास्य मान्यं । ते तत्र चैनं परिवार्य्य तस्थुरूचुश्चैनं सान्त्वपूर्व्वं तदानीं ।
॥ पितर ऊचुः ॥ मास्मैवं साहसं तात पुनः कार्षीः कथञ्चन । भीष्मेण संयुगं गन्तुं क्षत्रियेण विशेषतः ।
क्षत्रियस्य तु धर्म्मोऽयं यद्युद्धं भृगुनन्दन । स्वाध्यायो व्रतचर्य्या च ब्राह्मणानां परं धनं । ७३००
इदं निमित्ते कस्मिंश्चिदस्माभिः प्रागुदाहृतं । शस्त्रधारणमत्युग्रं तच्चाकार्य्यं कृतं त्वया ।
वत्स पर्य्याप्तमेतावत् भीष्मेण सह संयुगे । विमर्द्दस्ते महाबाहो व्यपयाहि रणादितः ।
पर्य्याप्तमेतत् भद्रन्ते तव कार्म्मुकधारणं । विसर्ज्जयैतद्दुर्द्धर्ष तपस्तप्यस्व भार्गव ।
एष भीष्मः शान्तनवो देवैः सर्व्वैर्निवारितः । निवर्त्तस्व रणादस्मादिति चैव प्रसादितः ।
रामेण सह मा योत्सीर्गुरुणेति पुनः पुनः । न हि रामो रणे जेतुं त्वया न्याय्यः कुरूद्वह । ७३०५
मानं कुरुष्व गाङ्गेय ब्राह्मणस्य रणाजिरे । वयन्तु गुरवस्तुभ्यं तस्मात् त्वां वारयामहे ।
भीष्मो वसूनामन्यतमो दिष्ट्या जीवसि पुत्रक । गाङ्गेयः शान्तनोः पुत्रो वसुरेष महायशाः ।
कथं शक्यस्त्वया जेतुं निवर्त्तस्वेह भार्गव । अर्ज्जुनः पाण्डवश्रेष्ठः पुरन्दरसुतो बली ।
भीष्मस्य मृत्युर्यथाकालं विहितो वै स्वयम्भुवा ।
॥ भीष्म उवाच ॥ एवमुक्तः स्वपितृभिः पितृभ्यामोऽब्रवीदिदं । नाहं युधि निवर्त्तेयमिति मे व्रतमाहितं । ७३१०
न निवर्त्तितपूर्व्वश्च कदाचिद्रणमूर्द्धनि । निवर्त्त्यतामापगेयः कामं युद्धात् पितामहाः ।
न त्वहं विनिवर्त्तिष्ये युद्धादस्मात् कथञ्चन । ततस्ते मुनयो राजन्नृचीकप्रमुखास्तदा ।
नारदेनैव सहिताः समागम्येदमब्रुवन् । निवर्त्तस्व रणात्तात मानयस्व द्विजोत्तमं ।
इत्यवोचमहन्तांश्च क्षत्रधर्म्मव्यपेक्षया । मम व्रतमिदं लोके नाहं युद्धात्कदाचन ।
विमुखो विनिवर्त्तेयं पृष्ठतोऽभ्याहतः शरैः । नाहं लोभान्न कार्पण्यान्न भयान्नार्थकारणात् । ७३१५
त्यजेयं शाश्वतं धर्म्ममिति मे निश्चिता मतिः । ततस्ते मुनयः सर्व्वे नारदप्रमुखा नृप ।
भागीरथी च मे माता रणमध्यं प्रपेदिरे । तथैवात्तशरो धन्वी तथैव दृढनिश्चयः ।
स्थिरोऽहमाहवे योद्धुं ततस्ते राममब्रुवन् । समेत्य सहिता भूयः समरे भृगुनन्दनं ।
नावनीतं हि हृदयं विप्राणां शाम्य भार्गव । राम राम निवर्त्तस्व युद्धादस्मात् द्विजोत्तम ।
अवध्यो वै त्वया भीष्मस्त्वञ्च भीष्मस्य भार्गव । एवं ब्रुवन्तस्ते सर्व्वे प्रतिरुध्य रणाजिरं । ७३२०
न्यासयाञ्चक्रिरे शस्त्रं पितरो भृगुनन्दनं । ततोऽहं पुनरेवाथ तानष्टौ ब्रह्मवादिनः ।
अद्राक्षं दीप्यमानान् वै ग्रहानष्टाविवोदितान् । ते मां सप्रणयं वाक्यमब्रुवन् समरे स्थितं ।

प्रेहि रामं महाबाहो गुरुं लोकहितं कुरु । दृष्ट्वा निवर्त्तितं रामं सुहृद्वाक्येन तेन वै ।
लोकानाञ्च हितं कुर्व्वन्नहमप्याददे वचः । ततोऽहं राममासाद्य ववन्दे भृशविक्षतः ।
रामश्चाभ्युत्स्मयन् प्रेम्णा मामुवाच महातपाः । त्वत्समो नास्ति लोकेऽस्मिन् क्षत्त्रियः पृथिवीतले । ७१२५
गम्यतां भीष्म युद्धेऽस्मिंस्तोषितोऽहं भृशं त्वया । मम चैव समक्षन्तां कन्यामाहूय भार्गवः ।
उक्तवान् दीनया वाचा मध्ये तेषां महात्मनां ।

इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि रामभीष्मयुद्धनिवृत्तौ षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

॥ राम उवाच ॥ प्रत्यक्षमेतल्लोकानां सर्व्वेषामेव भाविनि । यथाशक्त्या मया युद्धं कृतं वै पौरुषं परं ।
न चैवमपि शक्नोमि भीष्मं शस्त्रभृतां वरं । विशेषयितुमत्यर्थमुत्तमास्त्राणि दर्शयन् ।
एषा मे परमा शक्तिरेतन्मे परमं बलं । यथेष्टं गम्यतां भद्रे किमन्यद्वा करोमि ते । ७१३०
भीष्ममेव प्रपद्यस्व न तेऽन्या विद्यते गतिः । निर्ज्जितो ह्यस्मि भीष्मेण महास्त्राणि प्रमुञ्चता ।
एवमुक्त्वा ततो रामो विनिःश्वस्य महामनाः । तूष्णीमासीत्ततः कन्या प्रोवाच भृगुनन्दनं ।
भगवन्नेवमेवैतत् यथाह भगवांस्तथा । अजेयो युधि भीष्मोऽयमपि देवैरुदारधीः ।
यथाशक्ति यथोत्साहं मम कार्य्यं कृतं त्वया । अनिवार्य्यं रणे वीर्य्यमस्त्राणि विविधानि च ।
न चैव शक्यते युद्धे विशेषयितुमन्ततः । न चाहमेनं यास्यामि पुनर्भीष्मं कथञ्चन । ७१३५
गमिष्यामि तु तत्राहं यत्र भीष्मं तपोधन । समरे पातयिष्यामि स्वयमेव भृगूद्वह ।
एवमुक्त्वा ययौ कन्या रोषव्याकुललोचना । तापस्ये धृतसङ्कल्पा सा मे चिन्तयती वधं ।
ततो महेन्द्रं सह तैर्मुनिभिर्भृगुसत्तमः । यथागतं तथा सोऽगात् मामुपामन्त्र्य भारत ।
ततो रथं समारुह्य स्तूयमानो द्विजातिभिः । प्रविश्य नगरं मात्रे सत्यवत्यै न्यवेदयं ।
यथावृत्तं महाराज सा च मां प्रत्यनन्दत । पुरुषांश्चादिशं प्राज्ञान् कन्यावृत्तान्तकर्म्मणि । ७१४०
दिवसे दिवसे ह्यस्या गतजल्पितचेष्टितं । प्रत्याहरंश्च ते युक्ताः स्थिताः प्रियहिते सदा ।
यदैव हि वनं प्रायात् सा कन्या तपसे धृता । तदैव व्यथितो दीनो गतचेता इवाभवं ।
न हि मां क्षत्त्रियः कश्चित् वीर्य्येण व्यजयत् युधि । ऋते ब्रह्मविदस्तात तपसा संशितव्रतात् ।
अपि चैतन्मया राजन्नारदे विनिवेदितं । व्यासे चैव तथा कार्य्यं तौ चोभौ मामवोचतां ।
न विषादस्त्वया कार्य्यो भीष्म काशिसुतां प्रति । दैवं पुरुषकारेण को निवर्त्तितुमुत्सहेत् । ७१४५
सा कन्या तु महाराज प्रविश्याश्रममण्डलं । यमुनातीरमाश्रित्य तपस्तेपेऽतिमानुषं ।
निराहारा कृशा रूक्षा जटिला मलपङ्किनी । षण्मासान् वायुभक्षा च स्थाणुभूता तपोधना ।
यमुनाजलमाश्रित्य सम्वत्सरमथापरं । उपवासनिराहारा धारयामास भाविनी ।
शीर्णपर्णेन चैकेन पारयामास सा परं । सम्वत्सरं तीव्रकोपा पादाङ्गुष्ठाग्रधिष्ठिता ।
एवं द्वादशवर्षाणि तापयामास रोदसी । निवर्त्त्यमानाऽपि च सा ज्ञातिभिर्नैव शक्यते । ७१५०
ततोऽगमत् वत्सभूमिं सिद्धचारणसेवितां । आश्रमं पुण्यशीलानां तापसानां महात्मनां ।

तत्र पुण्येषु तीर्थेषु सा प्लुताङ्गी दिवानिशं । व्यचरत् काशिकन्या सा यथाकामविचारिणी ।
नन्दाश्रमे महाराज तथोलूकाश्रमे शुभे । च्यवनस्याश्रमे चैव ब्रह्मणः स्थान एव च ।
प्रयागे देवयजने देवारण्येषु चैव ह । भोगवत्यां महाराज कौशिकस्याश्रमे तथा ।
माण्डव्यस्याश्रमे राजन् दिलीपस्याश्रमे तथा । रामह्रदे च कौरव्य पैलगर्गस्य चाश्रमे । ७३८५
एतेषु तीर्थेषु तदा काशिकन्या विशाम्पते । आप्लावयत गात्राणि व्रतमास्थाय दुष्करं ।
तामब्रवीच्च कौरव्य मम माता जले स्थिता । किमर्थं क्लिश्यसे भद्रे तथ्यमेतद् वदस्व मे ।
सैनामथाब्रवीद्राजन् कृताञ्जलिरनिन्दिता । भीष्मेण समरे रामो निर्जितश्चारुलोचने ।
कोऽन्यस्तमुत्सहेज्जेतुमुद्यतेषुं महीपतिः । साऽहं भीष्मविनाशाय तपस्तप्स्ये सुदारुणं ।
विचरामि महीं देवि यथा हन्यामहं नृपं । एतत् व्रतफलं देवि परमस्मिन् यथा हि मे । ७३९०
ततोऽब्रवीत् सागरगा जिह्मं चरसि भाविनि । नैष कामोऽनवद्याङ्गि शक्यः प्राप्तुं त्वयाऽबले ।
यदि भीष्मविनाशाय काश्ये चरसि वै व्रतं । व्रतस्था च शरीरं त्वं यदि नाम विमोक्ष्यसि ।
नदी भविष्यसि शुभे कुटिला वार्षिकोदका । दुस्तीर्था न तु विज्ञेया वार्षिकी नाष्टमासिकी ।
भीमग्राहवती घोरा सर्व्वभूतभयङ्करी । एवमुक्त्वा ततो राजन् काशिकन्यां न्यवर्त्तत ।
माता मम महाभागा स्मयमानेव भामिनी । कदाचिदष्टमे मासि कदाचिद्दशमे तथा । ७३९५
न प्राश्नीतोदकमपि पुनः सा वरवर्णिनी । सा वत्सभूमिं कौरव्य तीर्थलोभात्ततस्ततः ।
पतिता परिधावन्ती पुनः काशिपतेः सुता । सा नदी वत्सभूम्यान्तु प्रथिता चेति भारत ।
वार्षिकी ग्राहबहुला दुस्तीर्था कुटिला तथा । सा कन्या तपसा तेन देहार्द्धेन व्यजायत ।
नदी च राजन् वत्सेषु कन्या चैवाभवत्तदा ।

इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि अम्बातपस्यायां सप्ताशीत्यधिक शततमोऽध्यायः ॥ १८७ ॥

॥ भीष्म उवाच ॥ ततस्ते तापसाः सर्व्वे तपसे धृतनिश्चयां । दृष्ट्वा न्यवर्त्तयंस्तात किं कार्य्यमिति चाब्रुवन् । ७४००
तानुवाच ततः कन्या तपोवृद्धानृषींस्तथा । निराकृताऽस्मि भीष्मेण भ्रंशिता पतिधर्म्मतः ।
वधार्थं तस्य दीक्षा मे न लोकार्थं तपोधनाः । निहत्य भीष्मं गच्छेयं शान्तिमित्येव निश्चयः ।
यत्कृते दुःखवसतिमिमां प्राप्ताऽस्मि शाश्वतीं । पतिलोकाद्विहीना च नैव स्त्री न पुमानिह ।
नाहत्वा युधि गाङ्गेयं निवर्त्तिष्ये तपोधनाः । एष मे हृदि सङ्कल्पो यदिदं कथितं मया ।
स्त्रीभावे परिनिर्व्विण्णा पुंस्त्वार्थे कृतनिश्चया । भीष्मे प्रतिचिकीर्षामि नास्मि वार्य्येति वै पुनः । ७४०५
तां देवो दर्शयामास शूलपाणिरुमापतिः । मध्ये तेषां महर्षीणां स्वेन रूपेण तापसीं ।
छन्द्यमाना वरेणाथ सा वव्रे मत्पराजयं । हनिष्यसीति तां देवः प्रत्युवाच मनस्विनीं ।
ततः सा पुनरेवाथ कन्या रुद्रमुवाच ह । उपपद्येत् कथं देव स्त्रिया युधि जयो मम ।
स्त्रीभावेन च मे गाढं मनः शान्तमुमापते । प्रतिश्रुतस्त्व भूतेश त्वया भीष्मपराजयः ।
यथा स सत्यो भवति तथा कुरु वृषध्वज । यथा हन्यां समागम्य भीष्मं शान्तनवं युधि । ७४१०

तामुवाच महादेवः कन्यां किल वृषध्वजः। न मे वागनृतं प्राह सत्यं भद्रे भविष्यति।
हनिष्यसि रणे भीष्मं पुरुषत्वञ्च लप्स्यसे। स्मरिष्यसि च तत् सर्व्वं देहमन्यं गता सती।
द्रुपदस्य कुले जाता भविष्यसि महारथः। शीघ्रास्त्रश्चित्रयोधी च भविष्यसि सुसम्मतः।
यथोक्तमेव कल्याणि सर्व्वमेतत् भविष्यति। भविष्यसि पुमान् पश्चात् कस्माच्चित् कालपर्य्ययात्।
एवमुक्त्वा महादेवः कपर्द्दी वृषभध्वजः। पश्यतामेव विप्राणां तत्रैवान्तरधीयत। ७३८५
ततः सा पश्यतां तेषां महर्षीणामनिन्दिता। समाहृत्य वनात्तस्मात् काष्ठानि वरवर्णिनी।
चितां कृत्वा सुमहतीं प्रदाय च हुताशनं। प्रदीप्तेऽग्नौ महाराज रोषदीप्तेन चेतसा।
उक्त्वा भीष्मवधायेति प्रविवेश हुताशनं। ज्येष्ठा काशिसुता राजन् यमुनामभितो नदीं।
इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि अम्बाहुताशनप्रवेशे अष्टाशीत्यधिकशततमोऽध्यायः॥ १८८॥

॥ दुर्य्योधन उवाच॥ कथं शिखण्डी गाङ्गेय कन्या भूत्वा पुरा तदा। पुरुषोऽभूत् युधिश्रेष्ठ तन्मे ब्रूहि पितामह।
॥ भीष्म उवाच॥ भार्य्या तु तस्य राजेन्द्र द्रुपदस्य महीपतेः। महिषी दयिता ह्यासीदपुत्रा च विशाम्पते। ७३९०
एतस्मिन्नेव काले तु द्रुपदो वै महीपतिः। अपत्यार्थं महाराज तोषयामास शङ्करं।
अस्मद्वधार्थं निश्चित्य तपो घोरं समास्थितः। लेभे कन्यां महादेव पुत्त्रो मे स्यादिति ब्रुवन्।
भगवन् पुत्त्रमिच्छामि भीष्मं प्रतिचिकीर्षया। इत्युक्तो देवदेवेन स्त्रीपुमांस्ते भविष्यति।
निवर्त्तस्व महीपाल नैतत् जात्वन्यथा भवेत्। स तु गत्वा च नगरं भार्य्यामिदमुवाच ह।
कृतो यत्नो महादेवि तपसाराधितो मया। कन्या भूत्वा पुमान् भावी इति चोक्तोऽस्मि शम्भुना। ७३९५
पुनः पुनर्याच्यमानो दिष्टमित्यब्रवीच्छिवः। न तदन्यच्च भविता भवितव्यं हि तत्तथा।
ततः सा नियता भूत्वा ऋतुकाले मनस्विनी। पत्नी द्रुपदराजस्य द्रुपदं प्रविवेश ह।
लेभे गर्भं यथाकालं विधिदृष्टेन कर्म्मणा। पार्षतस्य महीपाल यथा मां नारदोऽब्रवीत्।
ततो दधार सा देवी गर्भं राजीवलोचना। तां स राजा प्रियां भार्य्यां द्रुपदः कुरुनन्दन।
पुत्त्रस्नेहान्महाबाहुः सुखं पर्य्यचरत्तदा। सर्व्वानभिप्रायकृतान् भार्य्याऽलभत कौरव। ७४००
अपुत्त्रस्य सतो राज्ञो द्रुपदस्य महीपतेः। यथाकालन्तु सा देवी महिषी द्रुपदस्य ह।
कन्यां प्रवररूपान्तु प्राजायत नराधिप। अपुत्त्रस्य तु राज्ञः सा द्रुपदस्य मनस्विनी।
ख्यापयामास राजेन्द्र पुत्त्रो ह्येष ममेति वै। ततः स राजा द्रुपदः प्रच्छन्नाया नराधिप।
पुत्त्रवत् पुत्त्रकार्य्याणि सर्व्वाणि समकारयत्। रक्षणञ्चैव मन्त्रस्य महिषी द्रुपदस्य सा।
चकार सर्व्वयत्नेन ब्रुवाणा पुत्त्र इत्युत। न च तां वेद नगरे कश्चिदन्यत्र पार्षतात्। ७४०५
श्रद्दधानो हि तद्वाक्यं देवस्याच्युततेजसः। छादयामास तां कन्यां पुमानिति च सोऽब्रवीत्।
जातकर्म्माणि सर्व्वाणि कारयामास पार्थिव। पुंवद्विधानयुक्तानि शिखण्डीति च तां विदुः।
अहमेकस्तु चारेण वचनान्नारदस्य च। ज्ञातवान् देववाक्येन अम्बायास्तपसा तथा।
इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि शिखण्ड्युत्पत्तौ एकोननवत्यधिकशततमोऽध्यायः॥ १८९॥

॥ भीष्म उवाच ॥ चकार यत्नं द्रुपदः सुतायाः सर्व्वकर्म्मसु। ततो लेख्यादिषु तथा शिल्पेषु च परन्तप।
इष्वस्त्रे चैव राजेन्द्र द्रोणशिष्यो बभूव ह। तस्य माता महाराज राजानं वरवर्णिनी। ७४१०
चोदयामास भार्य्यार्थे कन्यायाः पुत्रवत्तदा। ततस्तां पार्षतो दृष्ट्वा कन्यां सम्प्राप्तयौवनां।
स्त्रियं मत्वा ततश्चिन्तां प्रपेदे सह भार्य्यया।
॥ द्रुपद उवाच ॥ कन्या ममेयं सम्प्राप्ता यौवनं शोकवर्द्धिनी। मया प्रच्छादिता चेयं वचनात् शूलपाणिनः।
॥ भार्य्योवाच ॥ न तन्मिथ्या महाराज भविष्यति कथञ्चन। त्रैलोक्यकर्त्ता कस्माद्धि वृथा वक्तुमिहार्हति।
यदि ते रोचते राजन् वक्ष्यामि शृणु मे वचः। श्रुत्वेदानीं प्रपद्येथाः स्वां मतिं पृषतात्मज। ७४१५
क्रियतामस्य यत्नेन विधिवद्दारसंग्रहः। भविता तद्वचः सत्यमिति मे निश्चिता मतिः।
ततस्तौ निश्चयं कृत्वा तस्मिन् कार्य्येऽथ दम्पती। वरयाञ्चक्रतुः कन्यां दशार्णाधिपतेः सुतां।
ततो राजा द्रुपदो राजसिंहः सर्व्वान् राज्ञः कुलतः सन्निशाम्य। दाशार्णकस्य नृपतेस्तनूजां शिखण्डिने वरयामास दारान्।
हिरण्यवर्म्मेति नृपो योऽसौ दाशार्णकः स्मृतः। स च प्रादान्महीपालः कन्यां तस्मै शिखण्डिने।
स च राजा दशार्णेषु महानासीत् सुदुर्ज्जयः। हिरण्यवर्म्मा दुर्द्धर्षो महासेनो महामनाः। ७४२०
कृते विवाहे तु तदा सा कन्या राजसत्तम। यौवनं समनुप्राप्ता सा च कन्या शिखण्डिनी।
कृतदारः शिखण्डी च काम्पिल्यं पुनरागमत्। ततः सा वेद तां कन्यां कञ्चित्कालं स्त्रियं किल।
हिरण्यवर्म्मणः कन्या ज्ञात्वा तान्तु शिखण्डिनीं। धात्रीणाञ्च सखीनाञ्च व्रीडमाना न्यवेदयत्।
कन्यां पञ्चालराजस्य सुतां तान्तु शिखण्डिनीं। ततस्ता राजशार्दूल धात्र्यो दाशार्णिकास्तदा।
जग्मुरार्त्तिं परां प्रेष्याः प्रेषयामासुरेव च। ततो दशार्णाधिपतेः प्रेष्याः सर्व्वा न्यवेदयन्। ७४२५
विप्रलम्भं यथावृत्तं स च चुक्रोध पार्थिवः। शिखण्ड्यपि महाराज पुंवद्राजकुले तदा।
विजहार मुदा युक्तः स्त्रीत्वं नैव तिरोदधत्। ततः कतिपयाहस्य तच्छ्रुत्वा भरतर्षभ।
हिरण्यवर्म्मा राजेन्द्र रोषादार्त्तिं जगाम ह। ततो दाशार्णको राजा तीव्रकोपसमन्वितः।
दूतं प्रस्थापयामास द्रुपदस्य निवेशनं। ततो द्रुपदमासाद्य दूतः काञ्चनवर्म्मणः।
एक एकान्तमुत्सार्य्य रहो वचनमब्रवीत्। दशार्णराजो राजंस्त्वामिदं वचनमब्रवीत्। ७४३०
अभिषङ्गात् प्रकुपितो विप्रलब्धस्त्वयाऽनघ। अवमन्यसे मां नृपते नूनं दुर्म्मन्त्रितं तव।
यन्मे कन्यां स्वकन्यार्थे मोहात् याचितवानसि। तस्याद्य विप्रलम्भस्य फलं प्राप्नुहि दुर्म्मते।
एष त्वां सजनामात्यमुद्धरामि स्थिरो भव।
इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि हिरण्यवर्म्मदूतप्रेषणे नवत्यधिकशततमोऽध्यायः ॥ १९० ॥
॥ भीष्म उवाच ॥ एवमुक्तस्य दूतेन द्रुपदस्य तदा नृप। चोरस्येव गृहीतस्य न प्रावर्त्तत भारती।
स यत्नमकरोत् तीव्रं सम्बन्धिन्यनुसान्त्वने। दूतैर्म्मधुरसम्भाषैर्नैतदस्तीति सन्दिशन्। ७४३५
स राजा भूय एवाथ ज्ञात्वा तत्त्वमथागमत्। कन्येति पाञ्चालसुतां त्वरमाणो विनिर्य्ययौ।
ततः संप्रेषयामास मित्राणाममितौजसां। दुहितुर्व्विप्रलम्भं तं धात्रीणां वचनात्तदा।

ततः समुदयं कृत्वा बलानां राजसत्तमः। अभियाने मतिं चक्रे द्रुपदं प्रति भारत।
ततः सम्मन्त्रयामास मन्त्रिभिः स महीपतिः। हिरण्यवर्म्मा राजेन्द्र पाञ्चाल्यं पार्थिवं प्रति।
तत्रैव निश्चितं तेषामभूद्राज्ञां महात्मनां। तथ्यं भवति चेदेतत् कन्या राजन् शिखण्डिनी। ७४४०
बद्ध्वा पञ्चालराजानमानयिष्यामहे वयं। अन्यं राजानमाधाय पाञ्चालेषु नरेश्वरं।
घातयिष्याम नृपतिं पाञ्चालं सशिखण्डिनं। तत्तदा दूतमाज्ञाय पुनर्दूतान्नराधिपः।
प्रास्थापयत् पार्षताय निहन्मीति स्थिरो भव।
॥ भीष्म उवाच ॥ स हि प्रकृत्या वै भीतः किल्बिषी च नराधिप। भयन्तीव्रमनुप्राप्तो द्रुपदः पृथिवीपतिः।
विसृज्य दूतान् दाशार्णे द्रुपदः शोककर्षितः। समेत्य भार्य्यां रहिते वाक्यमाह नराधिपः। ७४४५
भयेन महताविष्टो हृदि शोकेन चाहतः। पाञ्चालराजो दयितां मातरञ्च शिखण्डिनः।
अभियास्यति मां कोपात् सम्बन्धी सुमहाबलः। हिरण्यवर्म्मा नृपतिः कर्षमाणो वरूथिनीं।
किमिदानीं करिष्यावो मूढौ कन्यामिमां प्रति। शिखण्डी किल पुत्रस्ते कन्येति परिशङ्कितः।
इति सञ्चिन्त्य यत्नेन समित्रः सबलानुगः। वञ्चितोऽस्मीति मन्वानो मां किलोद्धर्त्तुमिच्छति।
किमत्र तथ्यं सुश्रोणि मिथ्या किं ब्रूहि शोभने। श्रुत्वा त्वत्तः शुभे वाक्यं संविधास्याम्यहं तथा। ७४५०
अहं हि संशयं प्राप्तो बाला चेयं शिखण्डिनी। त्वञ्च राज्ञि महत् कृच्छ्रं सम्प्राप्ता वरवर्णिनी।
सा त्वं सर्व्वविमोक्षाय तत्त्वमाख्याहि पृच्छतः। तथा विदध्यां सुश्रोणि कृत्यमाशु शुचिस्मिते।
शिखण्डिनि च मा भैस्त्वं विधास्ये तत्र तत्त्वतः। कृपयाऽहं वरारोहे वञ्चितः पुत्रधर्म्मतः।
मया दाशार्णको राजा वञ्चितः स महीपतिः। तदाचक्ष्व महाभागे विधास्ये तत्र यद्धितं।
जानता हि नरेन्द्रेण ख्यापनार्थं परस्य वै। प्रकाशञ्चोदिता देवी प्रत्युवाच महीपतिं। ७४५५
इति महाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि द्रुपदप्रश्ने एकनवत्यधिकशततमोऽध्यायः॥ १९१ ॥
॥ भीष्म उवाच ॥ ततः शिखण्डिनो माता यथातत्त्वं नराधिप। आचचक्षे महाबाहो भर्त्रे कन्यां शिखण्डिनीं।
अपुत्त्रया महाराज सपत्नीनां भयादिदं। कन्या शिखण्डिनी जाता पुरुषो वै निवेदितः।
त्वया चैव नरश्रेष्ठ तन्मे प्रीत्याऽनुमोदितं। पुत्रकर्म्म कृतञ्चैव कन्यायाः पार्थिवर्षभ।
भार्य्या चोढा त्वया राजन् दशार्णाधिपतेः सुता। मया च प्रत्यभिहितं देववाक्यार्थदर्शनात्।
कन्या भूत्वा पुमान् भावीत्येवञ्चैतदुपेक्षितं। ७४६०
एतत् श्रुत्वा द्रुपदो यज्ञसेनः सर्वं तत्त्वं मन्त्रविद्भ्यो निवेद्य। मन्त्रं राजा मन्त्रयामास राजन् यथायुक्तं रक्षणे वै प्रजानां।
सम्बन्धकञ्चैव समर्थ्य तस्मिन् दाशार्णके वै नृपतौ नरेन्द्रः। स्वयं कृत्वा विप्रलम्भं यथावत् मन्त्रैकाग्रो निश्चयं वै जगाम।
स्वभावगुप्तं नगरमापत्काले तु भारत। गोपयामास राजेन्द्र सर्व्वतः समलङ्कृतं।
आर्त्तिञ्च परमां राजा जगाम सह भार्य्यया। दशार्णपतिना सार्द्धं विरोधे भरतर्षभ।
कथं सम्बन्धिना सार्द्धं न मे स्यात् विग्रहो महान्। इति सञ्चिन्त्य मनसा दैवतमर्च्चयत् तदा। ७४६५
तन्तु दृष्ट्वा तदा राजन् देवी देवपरं तदा। अर्च्चां प्रयुञ्जानमथो भार्य्या वचनमब्रवीत्।

देवानां प्रतिपत्तिश्च सत्यं साधुमता मता। किन्तु दुःखार्णवं प्राप्य तस्मादर्चयतां गुरून्।
देवतानि च सर्व्वाणि पूज्यन्तां भूरिदक्षिणं। अग्नयश्चापि हूयन्तां दाशार्णप्रतिषेधने।
अयुद्धेन निवृत्तिश्च मनसा चिन्तय प्रभो। देवतानां प्रसादेन सर्व्वमेतद्भविष्यति।
मन्त्रिभिर्मन्त्रितं सार्द्धं त्वया पृथुललोचन। पुरस्यास्याविनाशाय तच्च राजंस्तथा कुरु। ७४७०
दैवं हि मानुषोपेतं भृशं सिध्यति पार्थिव। परस्परविरोधाद्धि सिद्धिरस्ति न चैतयोः।
तस्माद्विधाय नगरे विधानं सचिवैः सह। अर्चयस्व यथाकामं दैवतानि विशाम्पते।
एवं सम्भाषमाणौ तु दृष्ट्वा शोकपरायणौ। शिखण्डिनी तदा कन्या व्रीडितेव तपस्विनी।
ततः सा चिन्तयामास मत्कृते दुःखितावुभौ। इमाविति ततश्चक्रे मतिं प्राणविनाशने।
एवं सा निश्चयं कृत्वा भृशं शोकपरायणा। निर्जगाम गृहं त्यक्त्वा गहनं निर्जनं वनं। ७४७५
यक्षेणर्द्धिमता राजन् स्थूणाकर्णेन पालितं। तद्भयादेव च जनो विसर्जयति तद्वनं।
तत्र च स्थूणभवनं सुधामृत्तिकलेपनं। लाजोल्लापिकधूमाढ्यमुच्चप्राकारतोरणं।
तत्प्रविश्य शिखण्डी सा द्रुपदस्यात्मजा नृप। अनश्नाना बहुतिथं शरीरमुदशोषयत्।
दर्शयामास तां यक्षः स्थूणो मार्द्दवसंयुतः। किमर्थोऽयं तवारम्भः करिष्ये ब्रूहि मा चिरं।
अशक्यमिति सा यक्षं पुनःपुनरुवाच ह। करिष्यामीति वै क्षिप्रं प्रत्युवाचाथ गुह्यकः। ७४८०
धनेश्वरस्यानुचरो वरदोऽस्मि नृपात्मजे। अदेयमपि दास्यामि ब्रूहि यत्ते विवक्षितं।
ततः शिखण्डी तत्सर्व्वमखिलेन न्यवेदयत्। तस्मै यक्षप्रधानाय स्थूणाकर्णाय भारत।
॥ शिखण्ड्युवाच॥ अपुत्रो मे पिता यक्ष न चिरान्नाशमेष्यति। अभियास्यति सक्रोधो दशार्णाधिपतिर्हि तं।
महाबलो महोत्साहः स हेमकवचो नृपः। तस्माद्रक्षस्व मां यक्ष मातरं पितरञ्च मे।
प्रतिज्ञातो हि भवता दुःखप्रतिक्रमो मम। भवेयं पुरुषो यक्ष त्वत्प्रसादादनिन्दितः। ७४८५
यावदेव स राजा वै नोपयाति पुरं मम। तावदेव महायक्ष प्रसादं कुरु गुह्यक।
इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि स्थूणाकर्णप्रत्यये द्विनवत्यधिकशततमोऽध्यायः॥ १९२॥
॥ भीष्म उवाच॥ शिखण्डिवाक्यं श्रुत्वाऽथ स यक्षो भरतर्षभ। प्रोवाच मनसा चिन्त्य दैवेनोपनिपीडितः।
भवितव्यं तथा तद्धि मम दुःखाय कौरव। भद्रे कामं करिष्यामि समयन्तु निबोध मे।
किञ्चित्कालान्तरं दास्ये पुंलिङ्गं स्वमिदं तव। आगन्तव्यं त्वया काले सत्यञ्चैव वदस्व मे।
प्रभुः सङ्कल्पसिद्धोऽस्मि कामचारी विहङ्गमः। मत्प्रसादात् पुरञ्चैव त्राहि बन्धूंश्च केवलं। ७४९०
स्त्रीलिङ्गं धारयिष्यामि तवेदं पार्थिवात्मजे। सत्यं मे प्रतिजानीहि करिष्यामि प्रियन्तव।
॥ शिखण्ड्युवाच॥ प्रतिदास्यामि भगवन् पुंलिङ्गं तव सुव्रत। किञ्चित् कालान्तरं स्त्रीत्वं धारयस्व निशाचर।
प्रतियाते दशार्णे तु पार्थिवे हेमवर्म्मणि। कन्यैव हि भविष्यामि पुरुषस्त्वं भविष्यसि।
॥ भीष्म उवाच॥ इत्युक्त्वा समयं तत्र चक्राते तावुभौ नृप। अन्योन्यस्याभिसन्देहे तौ सङ्क्रामयतां ततः।
स्त्रीलिङ्गं धारयामास स्थूणो यक्षोऽथ भारत। यक्षरूपञ्च तद्दीप्तं शिखण्डी प्रत्यपद्यत। ७४९५

ततः शिखण्डी पाञ्चाल्यः पुंस्त्वमासाद्य पार्थिव। विवेश नगरं हृष्टः पितरञ्च समासदत्।
यथावृत्तन्तु तत्सर्व्वमाचख्यौ द्रुपदस्य तत्। द्रुपदस्तस्य तच्छ्रुत्वा हर्षमाहारयत्परं।
सभार्य्यस्तच्च सस्मार महेश्वरवचस्तदा। ततः सम्प्रेषयामास दशार्णाधिपतेर्नृप।
पुरुषोऽयं मम सुतः श्रद्दधातु भवानिति। अथ दाशार्णको राजा सहसाऽभ्यागमत्तदा।
पञ्चालराजं द्रुपदं दुःखशोकसमन्वितः। ततः काम्पिल्यमासाद्य दशार्णाधिपतिस्ततः। ७५००
प्रेषयामास सत्कृत्य दूतं ब्रह्मविदां वरं। ब्रूहि मद्वचनाद्दूत पाञ्चाल्यं तं नृपाधमं।
यन्मे कन्यां स्वकन्यार्थे वृतवानसि दुर्म्मते। फलं तस्यावलेपस्य द्रक्ष्यस्यद्य न संशयः।
एवमुक्तस्तु तेनासौ ब्राह्मणो राजसत्तम। दूतः प्रयातो नगरं दशार्णनृपचोदितः।
तत आसादयामास पुरोधा द्रुपदं पुरे। तस्मै पाञ्चालको राजा गामर्घ्यञ्च सुसत्कृतं।
प्रापयामास राजेन्द्र सह तेन शिखण्डिना। तां पूजां नाभ्यनन्दत्स वाक्यञ्चेदमुवाच ह। ७५०५
यदुक्तं तेन वीरेण राज्ञा काञ्चनवर्म्मणा। यत्तेऽहमधमाचार दुहित्राऽस्म्यभिवञ्चितः।
तस्य पापस्य करणात्फलं प्राप्नुहि दुर्म्मते। देहि युद्धं नरपते ममाद्य रणमूर्द्धनि।
उद्धरिष्यामि ते सद्यः सामात्यसुतबान्धवं। तदुपालम्भसंयुक्तं श्रावितः किल पार्थिवः।
दशार्णपतिना प्रोक्तो मन्त्रिमध्ये पुरोधसा। अभवद्भरतश्रेष्ठ द्रुपदः प्रणयानतः।
यदाह मां भवान् ब्रह्मन् सम्बन्धिवचनाद्वचः। अस्योत्तरं प्रतिवचो दूतो राज्ञे वदिष्यति। ७५१०
ततः सम्प्रेषयामास द्रुपदोऽपि महात्मने। हिरण्यवर्म्मणे दूतं ब्राह्मणं वेदपारगं।
तमागम्य तु राजानं दशार्णाधिपतिं तदा। तद्वाक्यमाददे राजन् यदुक्तं द्रुपदेन ह।
आगमः क्रियतां व्यक्तः कुमारोऽयं सुतो मम। मिथ्यैतदुक्तं केनापि तन्न श्रद्धेयमित्युत।
ततः स राजा द्रुपदस्य श्रुत्वा विमर्षयुक्तो युवतीर्व्वरिष्ठाः। सम्प्रेषयामास सुचारुरूपाः शिखण्डिनं स्त्रीपुमान् वेति वेत्तुं।
ताः प्रेषितास्तत्त्वभावं विदित्वा प्रीत्या राज्ञे तच्छशंसुर्हि सर्व्वं। शिखण्डिनं पुरुषं कौरवेन्द्र दाशार्णराजाय महानुभावं। ७५१५
ततः श्रुत्वा तु राजा स आगमं प्रीतिमानथ। सम्बन्धिना समागम्य हृष्टो वासमुवास ह।
शिखण्डिने च मुदितः प्रादाद्वित्तं जनेश्वरः। हस्तिनोऽश्वांश्च गाश्चैव दास्योऽथ बहुलास्तथा।
पूजितश्च प्रतिययौ निर्भर्त्स्य तनयां किल। विनीतकिल्बिषे प्रीते हेमवर्म्मणि पार्थिवे।
प्रतियाते दशार्णे तु हृष्टरूपा शिखण्डिनी। कस्यचित्त्वथ कालस्य कुवेरो नरवाहनः।
लोकयात्रां प्रकुर्व्वाणः स्थूणस्यागान्निवेशनं। ७५२०
स तद्गृहस्योपरि वर्त्तमान आलोकयामास धनाधिगोप्ता। स्थूणस्य यक्षस्य विशेषवेश्म स्वलङ्कृतं माल्यगुणैर्व्विचित्रैः।
लाजैश्च गन्धैश्च तथा वितानैरभ्यर्च्चितं धूपनधूपितञ्च। ध्वजैः पताकाभिरलङ्कृतञ्च भक्ष्यान्नपेयामिषदत्तहोमं।
तत्स्थानं तस्य दृष्ट्वा तु सर्व्वतः समलङ्कृतं। मणिरत्नसुवर्णानां मालाभिः परिपूरितं।
नानाकुसुमगन्धाढ्यं सिक्तं संमृष्टशोभितं। अथाब्रवीद्यक्षपतिस्तान् यक्षाननुगांस्तदा।
स्वलङ्कृतमिदं वेश्म स्थूणस्यामितविक्रमाः। नोपसर्पति मां चैव कस्मादद्य स मन्दधीः। ७५२५

यस्मादभ्यागतम् स मन्दात्मा मामसौ नोपसर्पति। तस्मात्तस्मै महादण्डो धार्य्यः स्यादिति मे मतिः।

॥ यक्षा ऊचुः ॥ द्रुपदस्य सुता राजन् राज्ञो जाता शिखण्डिनी। तस्यै निमित्ते कस्मिंश्चित् प्रादात् पुरुषलक्षणं।

अग्रहीलक्षणं स्त्रीणां स्त्रीभूता तिष्ठते गृहे। नोपसर्पति तेनासौ सव्रीडः स्त्रीस्वरूपवान्।

एतस्मात् कारणाद्राजन् स्थूणो न त्वाऽद्य सर्पति। श्रुत्वा कुरु यथान्याय्यं विमानमिह तिष्ठतां।

आनीयतां स्थूण इति ततो यक्षाधिपोऽब्रवीत्। कर्त्ताऽस्मि निग्रहं तस्य प्रत्युवाच पुनः पुनः। ७५३०

सोऽभ्यगच्छत यक्षेन्द्रमाहूतः पृथिवीपते। स्त्रीस्वरूपो महाराज तस्थौ व्रीडासमन्वितः।

तं शशापाथ संक्रुद्धो धनदः कुरुनन्दन। एवमेव भवत्वस्य स्त्रीत्वं पापस्य गुह्यकाः।

ततोऽब्रवीत् यक्षपतिर्महात्मा यस्माददास्त्ववमन्येह यक्षान्। शिखण्डिनो लक्षणं पापबुद्धे स्त्रीलक्षणं चाग्रहीः पापकर्म्मन्।

अप्रवृत्तं सुदुर्ब्बुद्धे यस्मादेतत् त्वया कृतं। तस्मादद्य प्रभृत्येव स्त्रीत्वं सा पुरुषस्तथा।

ततः प्रसादयामासुर्यक्षा वैश्रवणं किल। स्थूणस्यार्थे कुरुष्वान्तं शापस्येति पुनः पुनः। ७५३५

ततो महात्मा यक्षेन्द्रः प्रत्युवाचानुगामिनः। सर्व्वान् यक्षगणांस्तात शापस्यान्तचिकीर्षया।

शिखण्डिनि हते यक्षाः स्वरूपं प्रतिपत्स्यते। स्थूणो यक्षो निरुद्वेगो भवत्विति महामनाः।

इत्युक्त्वा भगवान् देवो यक्षराजः सुपूजितः। प्रययौ सहितैः सर्व्वैर्निमेषान्तरचारिभिः।

स्थूणस्तु शापं संप्राप्य तत्रैव न्यवसत्तदा। समये चागमत्तूर्णं शिखण्डी तं क्षपाचरं।

सोऽभिगम्याब्रवीत् वाक्यं प्राप्तोऽस्मि भगवन्निति। तमब्रवीत्ततः स्थूणः प्रीतोऽस्मीति पुनः पुनः। ७५४०

आर्ज्जवेनागतं दृष्ट्वा राजपुत्रं शिखण्डिनं। सर्व्वमेव यथावृत्तमाचचक्षे शिखण्डिने।

॥ यक्ष उवाच ॥ शप्तो वैश्रवणेनाहं त्वत्कृते पार्थिवात्मज। गच्छेदानीं यथाकामञ्चर लोकान् यथासुखं।

दिष्टमेतत् पुरा मन्ये न शक्यमतिवर्त्तितुं। गमनं तव चेतो हि पौलस्त्यस्य च दर्शनं।

॥ भीष्म उवाच ॥ एवमुक्तः शिखण्डी तु स्थूणयक्षेण भारत। प्रत्याजगाम नगरं हर्षेण महता वृतः।

पूजयामास विविधैर्गन्धमाल्यैर्महाधनैः। द्विजातीन् देवताश्चैव चैत्यानथ चतुष्पथान्। ७५४५

द्रुपदः सह पुत्रेण सिद्धार्थेन शिखण्डिना। मुदञ्च परमां लेभे पाञ्चाल्यः सह बान्धवैः।

शिष्यार्थं प्रददौ चाथ द्रोणाय कुरुपुङ्गव। शिखण्डिनं महाराज पुत्रं स्त्रीपूर्व्विणं तथा।

प्रतिपेदे चतुष्पादं धनुर्वेदं नृपात्मजः। शिखण्डी सह युष्माभिर्धृष्टद्युम्नश्च पार्षतः।

मम त्वेतच्चरास्तात यथावत् प्रत्यवेदयन्। जडान्धबधिराकारा ये युक्ता द्रुपदे मया।

एवमेष महाराज स्त्रीपुमान् द्रुपदात्मजः। स सम्भूतः कुरुश्रेष्ठ शिखण्डी रथसत्तमः। ७५५०

ज्येष्ठा काशिपतेः कन्या अम्बा नामेति विश्रुता। द्रुपदस्य कुले जाता शिखण्डी भरतर्षभ।

नाहमेनं धनुष्पाणिं युयुत्सुं समुपस्थितं। मुहूर्त्तमपि पश्येयं प्रहरेयं न चाच्युत।

व्रतमेतन्मम सदा पृथिव्यामपि विश्रुतं। स्त्रियां स्त्रीपूर्व्विके चैव स्त्रीनाम्नि स्त्रीस्वरूपिणि।

न मुञ्चेयमहं वाणमिति कौरवनन्दन। न हन्यामहमेतेन कारणेन शिखण्डिनं।

एतत् तत्त्वमहं वेद जन्म तात शिखण्डिनः। ततो नैनं हनिष्यामि समरेष्वाततायिनं। ७५५५
यदि भीष्मः स्त्रियं हन्यात् सन्तः कुर्य्युर्व्विगर्हणं। नैनं तस्माद्धनिष्यामि दृष्ट्वाऽपि समरे स्थितं।
॥ वैशम्पायन उवाच॥ एतच्छ्रुत्वा तु कौरव्यो राजा दुर्य्योधनस्तदा। मुहूर्त्तमिव स ध्यात्वा भीष्मे युक्तममन्यत।
इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि शिखण्डिपुंस्त्वप्राप्तौ त्रिनवत्यधिकशततमोऽध्यायः॥ १९३ ॥
॥ सञ्जय उवाच ॥ प्रभातायान्तु शर्व्वर्य्यां पुनरेव सुतस्तव। मध्ये सर्व्वस्य सैन्यस्य पितामहमपृच्छत।
पाण्डवेयस्य गाङ्गेय यदेतत् सैन्यमुद्यतं। प्रभूतनरनागाश्वं महारथसमाकुलं।
भीमार्ज्जुनप्रभृतिभिर्म्महेष्वासैर्म्महाबलैः। लोकपालसमैर्गुप्तं धृष्टद्युम्नपुरोगमैः। ७५६०
अप्रधृष्यमनावार्य्यमुद्धूतमिव सागरं। सेनासागरमक्षोभ्यमपि देवैर्म्महाहवे।
केन कालेन गाङ्गेय क्षपयेथा महाद्युत। आचार्य्यो वा महेष्वासः कृपो वा सुमहाबलः।
कर्णो वा समरश्लाघी द्रौणिर्व्वा द्विजसत्तमः। दिव्यास्त्रविदुषः सर्व्वे भवन्तो हि बले मम।
एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे। हृदि नित्यं महाबाहो वक्तुमर्हसि तन्मम।
॥ भीष्म उवाच ॥ अनुरूपं कुरुश्रेष्ठ त्वय्येतत् पृथिवीपते। बलाबलममित्राणां तेषां यदिह पृच्छसि। ७५६५
शृणु राजन्मम रणे या शक्तिः परमा भवेत्। शस्त्रवीर्य्यं रणे यच्च भुजयोश्च महाभुज।
आर्ज्जवेनैव युद्धेन योद्धव्य इतरो जनः। मायायुद्धेन मायावी इत्येतद्धर्म्मनिश्चयः।
हन्यामहं महाभाग पाण्डवानामनीकिनीं। दिवसे दिवसे कृत्वा भागं प्राग्गाह्निकं मम।
योधानां दशसाहस्रं कृत्वा भागं महाद्युते। सहस्रं रथिनामेकमेष भागो मतो मम।
अनेनाहं विधानेन सन्नद्धः सततोत्थितः। क्षपयेयं महत्सैन्यं कालेनानेन भारत। ७५७०
मुञ्चेयं यदि वाऽस्त्राणि महान्ति समरे स्थितः। शतसाहस्रघातीनि हन्यां मासेन भारत।
॥ सञ्जय उवाच ॥ श्रुत्वा भीष्मस्य तद्वाक्यं राजा दुर्य्योधनस्ततः। पर्य्यपृच्छत राजेन्द्र द्रोणमङ्गिरसां वरं।
आचार्य्य केन कालेन पाण्डुपुत्रस्य सैनिकान्। निहन्या इति तं द्रोणः प्रत्युवाच हसन्निव।
स्थविरोऽस्मि महाबाहो मन्दप्राणविचेष्टितः। शस्त्राग्निना निर्द्दहेयं पाण्डवानामनीकिनीं।
यथा भीष्मः शान्तनवो मासेनेति मतिर्म्मम। एषा मे परमा शक्तिरेतन्मे परमं बलं। ७५७५
द्वाभ्यामेव तु मासाभ्यां कृपः शारद्वतोऽब्रवीत्। द्रौणिस्तु दशरात्रेण प्रतिजज्ञे बलक्षयं।
कर्णस्तु पञ्चरात्रेण प्रतिजज्ञे महास्त्रवित्। तच्छ्रुत्वा सूतपुत्रस्य वाक्यं सागरगासुतः।
जहास सस्वनं हासं वाक्यञ्चेदमुवाच ह। न हि तावद्रणे पार्थ रणे शङ्खधनुर्द्धरं।
वासुदेवसमायुक्तं रथेनायान्तमाहवे। समागच्छसि राधेय तेनैवमभिमन्यसे।
शक्यमेवञ्च भूयश्च त्वया वक्तुं यथेष्टतः। ७५८०
इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि भीष्मादिशक्तिकथने चतुर्नवत्यधिकशततमोऽध्यायः॥ १९४ ॥
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु कौन्तेयः सर्व्वान् भ्रातॄनुपह्वरे। आहूय भरतश्रेष्ठ इदं वचनमब्रवीत्।
॥ युधिष्ठिर उवाच ॥ धार्त्तराष्ट्रस्य सैन्येषु ये चारपुरुषा मम। ते प्रवृत्तिं प्रयच्छन्ति ममेमां व्युषितां निशां।

दुर्य्योधनः किलापृच्छदापगेयं महाव्रतं। केन कालेन पाण्डूनां हन्याः सैन्यमिति प्रभो।
मासेनेति च तेनोक्तो धार्त्तराष्ट्रः सुदुर्म्मतिः। तावता चापि कालेन द्रोणोऽपि प्रतिजज्ञिवान्।
गौतमो द्विगुणं कालमुक्तवानिति नः श्रुतं। द्रौणिस्तु दशरात्रेण प्रतिजज्ञे महास्त्रवित्। ७५८५
तथा दिव्यास्त्रवित् कर्णः संपृष्टः कुरुसंसदि। पञ्चभिर्द्दिवसैर्हन्तुं स सैन्यं प्रतिजज्ञिवान्।
तस्मादहमपीच्छामि श्रोतुमर्ज्जुन ते वचः। कालेन कियता शत्रून् क्षपयेरिति फाल्गुन।
एवमुक्तो गुडाकेशः पार्थिवेन धनञ्जयः। वासुदेवं समीक्ष्येदं वचनं प्रत्यभाषत।
सर्व्व एते महात्मानः कृतास्त्राश्चित्रयोधिनः। असंशयं महाराज हन्युरेव न संशयः।
अपैतु ते मनस्तापो यथासत्यं ब्रवीम्यहं। हन्यामेकरथेनैव वासुदेवसहायवान्। ७५९०
सामरानपि लोकांस्त्रीन् सर्व्वान् स्थावरजङ्गमान्। भूतं भव्यं भविष्यच्च निमेषादिति मे मतिः।
यत्तत् घोरं पशुपतिः प्रादादस्त्रं महन्मम। कैराते द्वन्द्वयुद्धे तु तदिदं मम वर्त्तते।
यद्युगान्ते पशुपतिः सर्व्वभूतानि संहरन्। प्रयुङ्क्ते पुरुषव्याघ्र तदिदं मयि वर्त्तते।
तन्न जानाति गाङ्गेयो न द्रोणो न च गौतमः। न च द्रोणसुतो राजन् कुत एव तु सूतजः।
न तु युक्तं रणे हन्तुं दिव्यैरस्त्रैः पृथग्जनं। आर्ज्जवेनैव युद्धेन विजेष्यामो वयं परान्। ७५९५
तथेमे पुरुषव्याघ्राः सहायास्तव पार्थिव। सर्व्वे दिव्यास्त्रविद्वांसः सर्व्वे युद्धाभिकाङ्क्षिणः।
वेदान्तावभृथस्नाताः सर्व्व एतेऽपराजिताः। निहन्युः समरे सेनां देवानामपि पाण्डव।
शिखण्डी युयुधानश्च धृष्टद्युम्नश्च पार्षतः। भीमसेनो यमौ चोभौ युधामन्यूत्तमौजसौ।
विराटद्रुपदौ चोभौ भीष्मद्रोणसमौ युधि। शङ्खश्चैव महाबाहुर्हैडिम्बश्च महाबलः।
पुत्रोऽस्याञ्जनपर्व्वा तु महाबलपराक्रमः। शैनेयश्च महाबाहुः सहायो रणकोविदः। ७६००
अभिमन्युश्च बलवान् द्रौपद्याः पञ्च चात्मजाः। स्वयञ्चापि समर्थोऽसि त्रैलोक्योत्सादनेऽपि च।
क्रोधाद्यं पुरुषं पश्येस्त्वया शक्रसमद्युते। स क्षिप्रं न भवेत् व्यक्तमिति त्वां वेद्मि कौरव।
इति श्रीमहाभारते उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि अर्ज्जुनवाक्ये पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥
॥ वैशम्पायन उवाच ॥ ततः प्रभाते विमले धार्त्तराष्ट्रेण चोदिताः। दुर्य्योधनेन राजानः प्रययुः पाण्डवान् प्रति।
आप्लाव्य शुचयः सर्व्वे स्रग्विणः शुक्लवाससः। गृहीतशस्त्रध्वजिनः स्वस्तिवाच्य हुताग्नयः।
सर्व्वे ब्रह्मविदः शूराः सर्व्वे सुचरितव्रताः। सर्व्वे कामकृतश्चैव सर्व्वे चाहवलक्षणाः। ७६०५
आहवेषु परांल्लोकान् जिगीषन्तो महाबलाः। एकाग्रमनसः सर्व्वे श्रद्दधानाः परस्परं।
विन्दानुविन्दावावन्त्यौ कैकेया बाह्लिकैः सह। प्रययुः सर्व्व एवैते भारद्वाजपुरोगमाः।
अश्वत्थामा शान्तनवः सैन्धवोऽथ जयद्रथः। दाक्षिणात्याः प्रतीच्याश्च पार्व्वतीयाश्च ये नृपाः।
गान्धारराजः शकुनिः प्राच्योदीच्यास्च सर्व्वशः। शकाः किराता यवनाः शिवयोऽथ वसातयः।
स्वैः स्वैरनीकैः सहिताः परिवार्य्य महारथं। एते महारथाः सर्व्वे द्वितीये निर्य्ययुर्ब्बले। ७६१०
कृतवर्म्मा सहानीकस्त्रिगर्त्तश्च महारथः। दुर्य्योधनश्च नृपतिर्भ्रातृभिः परिवारितः।

शल्यो भूरिश्रवाः शल्यः कौशल्योऽथ बृहद्बलः । एते पश्चादनुगता धार्त्तराष्ट्रपुरोगमाः ।
ते समेत्य यथान्यायं धार्त्तराष्ट्रा महाबलाः । कुरुक्षेत्रस्य पश्चार्द्धे व्यवतिष्ठन्त दंशिताः ।
दुर्य्योधनस्तु शिबिरं कारयामास भारत । यथैव हास्तिनपुरं द्वितीयं समलङ्कृतं ।
न विशेषं विजानन्ति पुरस्य शिबिरस्य वा । कुशला अपि राजेन्द्र नरा नगरवासिनः ।     ५९१५
तादृशान्येव दुर्गाणि राज्ञामपि महीपतिः । कारयामास कौरव्यः शतशोऽथ सहस्रशः ।
पञ्चयोजनमुत्सृज्य मण्डलं तद्रणाजिरं । सेनानिवेशास्ते राजन्नाविशञ्छतसंघशः ।
तत्र ते पृथिवीपाला यथोत्साहं यथाबलं । विविशुः शिबिराण्याशु द्रव्यवन्ति सहस्रशः ।
तेषां दुर्य्योधनो राजा ससैन्यानां महात्मनां । व्यादिदेश सबाह्यानां भक्ष्यभोज्यमनुत्तमं ।
सगजाश्वमनुष्याणां ये च शिल्पोपजीविनः । ये चान्येऽनुगतास्तत्र सूतमागधबन्दिनः ।     ५९२०
वणिजो गणिकावारा ये चैव प्रेक्षका जनाः । सर्व्वांस्तान् कौरवो राजा विधिवत्प्रत्यवैक्षत ।

इति श्रीमहाभारते उद्योगपर्व्वणि कर्णोपाख्यानपर्व्वणि कौरवसैन्यनिर्य्याणे षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

॥ वैशम्पायन उवाच ॥ तथैव राजा कौन्तेयो धर्म्मपुत्त्रो युधिष्ठिरः । धृष्टद्युम्नमुखान् वीरांश्चोदयामास भारत ।
चेदिकाशिकरूषाणां नेतारं दृढविक्रमं । सेनापतिममित्रघ्नं धृष्टकेतुमथादिशत् ।
विराटं द्रुपदञ्चैव युयुधानं शिखण्डिनं । पाञ्चाल्यौ च महेष्वासौ युधामन्यूत्तमौजसौ ।
ते शूराश्चित्रवर्म्माणस्तप्तकुण्डलधारिणः । आज्यावसिक्ता ज्वलिता धिष्ण्येष्विव हुताशनाः ।     ५९२५
अशोभन्त महेष्वासा ग्रहाः प्रज्वलिता इव । अथ सैन्यं यथायोगं पूजयित्वा नरर्षभः ।
दिदेश तान्यनीकानि प्रयाणाय महीपतिः । तेषां युधिष्ठिरो राजा ससैन्यानां महात्मनां ।
व्यादिदेश सबाह्यानां भक्ष्यभोज्यमनुत्तमं । सगजाश्वमनुष्याणां ये च शिल्पोपजीविनः ।
अभिमन्युं बृहन्तञ्च द्रौपदेयांश्च सर्व्वशः । धृष्टद्युम्नमुखानेतान् प्राहिणोत्पाण्डुनन्दनः ।
भीमञ्च युयुधानञ्च पाण्डवञ्च धनञ्जयं । द्वितीयं प्रेषयामास बलस्कन्धं युधिष्ठिरः ।     ५९३०
भाण्डं समारोपयतां चरतां सम्प्रधावतां । हृष्टानां तत्र योधानां शब्दो दिवमिवास्पृशत् ।
स्वयमेव ततः पश्चात् विराटद्रुपदान्वितः । अथापरैर्महीपालैः सह प्रायान्महीपतिः ।
भीमधन्वायनी सेना धृष्टद्युम्नेन पालिता । गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत ।
ततः पुनरनीकानि व्ययोजयत बुद्धिमान् । मोहयन् धृतराष्ट्रस्य पुत्त्राणां बुद्धिनिश्चयं ।
द्रौपदेयान्महेष्वासानभिमन्युञ्च पाण्डवः । नकुलं सहदेवञ्च सर्व्वांश्चैव प्रभद्रकान् ।     ५९३५
दश चाश्वसहस्राणि द्विसहस्राणि दन्तिनां । अयुतञ्च पदातीनां रथाः पञ्चशतं तथा ।
भीमसेनञ्च दुर्द्धर्षं प्रथमं प्रादिशद्बलं । मध्यमे च विराटञ्च जयत्सेनञ्च पाण्डवः ।
महारथौ च पाञ्चाल्यौ युधामन्यूत्तमौजसौ । वीर्य्यवन्तौ महात्मानौ गदाकार्म्मुकधारिणौ ।
अन्वयातां तदा मध्ये वासुदेवधनञ्जयौ । बभूवुरतिसंरब्धाः कृतप्रहरणा नराः ।
तेषां विंशतिसाहस्राः ध्वजाः शूरैरधिष्ठिताः । पञ्च नागसहस्राणि रथवंशाश्च सर्व्वशः ।     ५९४०

पदातयश्च ये शूराः कार्म्मुकासिगदाधराः । सहस्रशोऽन्वयुः पश्चादग्रतश्च सहस्रशः ।
युधिष्ठिरो यत्र सैन्ये स्वयमेव बलार्णवे । तत्र ते पृथिवीपाला भूयिष्ठं पर्य्यवस्थिताः ।
तत्र नागसहस्राणि हयानामयुतानि च । तथा रथसहस्राणि पदातीनाञ्च भारत ।
चेकितानः स्वसैन्येन महता पार्थिवर्षभ । धृष्टकेतुश्च चेदीनां प्रणेता पार्थिवो ययौ ।
सात्यकिश्च महेष्वासो वृष्णीनां प्रवरो रथः । वृतः शतसहस्रेण रथानां प्रणुदन् बली । ७१४५
क्षत्रहा ब्रह्मदेवश्च रथस्थौ पुरुषर्षभौ । जघनं पालयन्तौ च पृष्ठतोऽनुप्रजग्मतुः ।
शकटापणवेशाश्च यानं युग्यञ्च सर्व्वशः । तत्र नागसहस्राणि हयानामयुतानि च ।
फल्गु सर्व्वं कलत्रञ्च यत्किञ्चित् कृशदुर्व्वलं । कोषसञ्चयवाहांश्च कोष्ठागारं तथैव च ।
गजानीकेन संगृह्य शनैः प्रायाद्युधिष्ठिरः । तमन्वयात् सत्यधृतिः सौचित्तिर्युद्धदुर्मदः ।
श्रेणिमान् वसुदानश्च पुत्रः काश्यस्य वा विभुः । रथा विंशतिसाहस्रा ये तेषामनुयायिनः । ७१५०
हयानां दशकोट्यश्च महतां किङ्किणीकिनां । गजा विंशतिसाहस्रा ईषादन्ताः प्रहारिणः ।
कुलीना भिन्नकरटा मेघा इव विसर्पिणः । षष्टिर्नागसहस्राणि दशान्यानि च भारत ।
युधिष्ठिरस्य यान्यासन् युधि सेनासु सत्तम । क्षरन्त इव जीमूताः प्रभिन्नकरटामुखाः ।
राजानमन्वयुः पश्चाच्चलन्त इव पर्व्वताः । एवं तस्य बलं भीमं कुन्तीपुत्रस्य धीमतः ।
यदाश्रित्याथ युयुधे धार्त्तराष्ट्रं सुयोधनं । ततोऽन्ये शतशः पश्चात्सहस्रायुतशो नराः । ७१५५
नदन्तः प्रययुस्तेषामनीकानि सहस्रशः । तत्र भेरीसहस्राणि शङ्खानामयुतानि च ।
न्यवादयन्त संहृष्टाः सहस्रायुतशो नराः ।

इति श्रीमहाभारते उद्योगपर्व्वणि सैन्योपाख्यानपर्व्वणि पाण्डवसैन्यनिर्य्याणे सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

समाप्तञ्चेदमुद्योगपर्व्व ॥

अत्र श्लोकाध्यायसङ्ख्याया आदिपर्व्वलिखितसङ्ख्यान्यथात्वं यत्तल्लिपिकरप्रमादाद्दोषमेवंमन्तव्यमेतत्पर्व्वान्यथात्वमपि ॥

श्रीमहाभारतं

॥ भीष्मपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं । देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ।
॥ जनमेजय उवाच ॥ कथं युयुधिरे वीराः कुरुपाण्डवसोमकाः । पार्थिवाः सुमहात्मानो नानादेशसमागताः ।
॥ वैशम्पायन उवाच ॥ यथा युयुधिरे वीराः कुरुपाण्डवसोमकाः । कुरुक्षेत्रे तपःक्षेत्रे शृणु त्वं पृथिवीपते ।
अवतीर्य्य कुरुक्षेत्रं पाण्डवाः सहसोमकाः । कौरवानभ्यवर्त्तन्त जिगीषन्तो महाबलाः ।
वेदाध्ययनसम्पन्नाः सर्व्वे युद्धाभिनन्दिनः । आशंसन्तो जयं युद्धे बलेनाभिमुखा रणे । ५
अभियाय दुराधर्षां धार्त्तराष्ट्रस्य वाहिनीं । प्राङ्मुखाः पश्चिमे भागे न्यविशन्त ससैनिकाः ।
समन्तपञ्चकाद्बाह्यं शिविराणि सहस्रशः । कारयामास विधिवत् कुन्तीपुत्रो युधिष्ठिरः ।
शून्या च पृथिवी सर्व्वा बालवृद्धावशेषिता । निरश्वपुरुषेवासीद्रथकुञ्जरवर्ज्जिता ।
यावत्तपति सूर्य्यो हि जम्बुद्वीपस्य मण्डलं । तावदेव समावृत्तं बलं पार्थिवसत्तम ।
एकस्थाः सर्व्ववर्णास्ते मण्डलं बहुयोजनं । पर्य्याक्रामन्त देशांश्च नदीः शैलान् वनानि च । १०
तेषां युधिष्ठिरो राजा सर्व्वेषां पुरुषर्षभ । आदिदेश सवाहानां भक्ष्यभोज्यमनुत्तमं
संज्ञाश्च विविधास्तास्तेषाञ्चक्रे युधिष्ठिरः । एवंवादी वेदितव्यः पाण्डवेयोऽयमित्युत ।
अभिज्ञानानि सर्व्वेषां संज्ञाश्चाभरणानि च । योजयामास कौरव्यो युद्धकाल उपस्थिते ।
दृष्ट्वा ध्वजाग्रं पार्थस्य धार्त्तराष्ट्रो महामनाः । सह सर्व्वैर्महीपालैः प्रत्यव्यूहत पाण्डवं ।
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्द्धनि । मध्ये नागसहस्रस्य भ्रातृभिः परिवारितः । १५

दृष्ट्वा दुर्योधनं हृष्टाः पाञ्चाला युद्धनन्दिनः । दध्मुः शङ्खान् महारावान् भेरीश्च मधुरस्वनाः ।
ततः प्रहृष्टां तां सेनामभिवीक्ष्याथ पाण्डवाः । बभूवुर्हृष्टमनसो वासुदेवश्च वीर्यवान् ।
ततो हर्षं समागम्य वासुदेवधनञ्जयौ । दध्मतुः पुरुषव्याघ्रौ दिव्यौ शङ्खौ रथे स्थितौ ।
पाञ्चजन्यस्य निर्घोषं देवदत्तस्य चोभयोः । श्रुत्वा तु निनदं योधाः शकृन्मूत्रं प्रसुस्रुवुः ।
यथा सिंहस्य नदतः स्वनं श्रुत्वेतरे मृगाः । त्रसेयुर्निनदं श्रुत्वा तथाऽसीदत तद्बलं । २०
उदतिष्ठद्रजो भौमं न प्राज्ञायत किञ्चन । अन्तं गत इवादित्यः सैन्येन सहसा हृतः ।
ववर्ष तत्र पर्ज्जन्यो मांसशोणितवृष्टिमान् । दिशु सर्व्वाणि सैन्यानि तदद्भुतमिवाभवत् ।
वायुस्ततः प्रादुरभूत् नीचैः शर्करकर्षणः । विनिघ्नंस्तान्यनीकानि शतशोऽथ सहस्रशः ।
उभे सैन्ये च राजेन्द्र युद्धाय मुदिते भृशं । कुरुक्षेत्रे स्थिते यत्ते सागरक्षुभितोपमे ।
तयोस्तु सेनयोरासीदद्भुतः स तु सङ्गमः । युगान्ते समनुप्राप्ते द्वयोः सागरयोरिव । २५
शून्याऽसीत् पृथिवी सर्व्वा बालवृद्धावशेषिता । तेन सेनासमूहेन समानीतेन कौरवैः ।
ततस्ते समयं चक्रुः कुरुपाण्डवसोमकाः । धर्म्मान् संस्थापयामासुर्युद्धानां भरतर्षभ ।
निवृत्ते विहिते युद्धे स्यात् प्रीतिर्नः परस्परं । यथापरं यथायोगं न च स्याच्छलनं पुनः ।
वाचा युद्धे प्रवृत्तानां वाचैव प्रतियोधनं । निष्क्रान्ताः पृतनामध्यान्न हन्तव्याः कदाचन ।
रथी च रथिना योध्यो गजेन गजधूर्गतः । अश्वेनाश्वी पदातिश्च पादातेनैव भारत । ३०
यथायोग्यं यथाकामं यथोत्साहं यथावयः । समाभाष्य प्रहर्त्तव्यं न विश्वस्ते न विह्वले ।
एकेन सह संयुक्तः प्रपन्नो विमुखस्तथा । क्षीणशस्त्रो विवर्म्मा च न हन्तव्यः कदाचन ।
न सूतेषु न धुर्य्येषु न च शस्त्रोपनायिषु । न भेरीशङ्खवादेषु प्रहर्त्तव्यं कथञ्चन ।
एवञ्च समयं कृत्वा कुरुपाण्डवसोमकाः । विस्मयं परमं जग्मुः प्रेक्षमाणाः परस्परं ।
निविश्य च महात्मानस्ततस्ते पुरुषर्षभाः । हृष्टरूपाः सुमनसो बभूवुः सहसैनिकाः । ३५
इति श्रीमहाभारते भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि सैन्यनिवेशनं नाम प्रथमोऽध्यायः ॥ १ ॥
॥ वैशम्पायन उवाच ॥ ततः पूर्व्वापरे सन्ध्ये समीक्ष्य भगवानृषिः । सर्व्ववेदविदां श्रेष्ठो व्यासः सत्यवतीसुतः ।
भविष्यति रणे घोरे भरतानां पितामहः । प्रत्यक्षदर्शी भगवान् भूतभव्यभविष्यवित् ।
वैचित्रवीर्य्यं राजानं स रहस्यब्रवीदिदं । शोचन्तमार्त्तं ध्यायन्तं पुत्त्राणामनयं तदा ।
॥ व्यास उवाच ॥ राजन् परीतकालास्ते पुत्त्राश्चान्ये च पार्थिवाः । ते हिंसन्तीव सङ्ग्रामे समासाद्येतरेतरं ।
तेषु कालपरीतेषु विनश्यत्स्वेव भारत । कालपर्य्यायमाज्ञाय मास्म शोके मनः कृथाः । ४०
यदि चेच्छसि सङ्ग्रामे द्रष्टुमेतान्विशाम्पते । चक्षुर्ददामि ते पुत्त्र युद्धं तत्र निशामय ।
॥ धृतराष्ट्र उवाच ॥ न रोचये ज्ञातिवधं द्रष्टुं ब्रह्मर्षिसत्तम । युद्धमेतत्त्वशेषेण शृणुयां तव तेजसा ।
॥ वैशम्पायन उवाच ॥ एतस्मिन्नेच्छति द्रष्टुं सङ्ग्रामं श्रोतुमिच्छति । वराणामीश्वरो दाता सञ्जयाय वरं ददौ ।
एष ते सञ्जयो राजन् युद्धमेतद्वदिष्यति । प्रकाशं वाऽप्रकाशं वा दिवा वा यदि वा निशि ।

मनसा चिन्तितमपि सर्व्वं वेत्स्यति सञ्जयः । नैनं शस्त्राणि छेत्स्यन्ति नैनं बाधिष्यते श्रमः । ४५
गावल्गणिरयं जीवन्युद्धादस्माद्विमोक्ष्यते । अहन्तु कीर्त्तिमेतेषां कुरूणां भरतर्षभ ।
पाण्डवानाञ्च सर्व्वेषां प्रथयिष्यामि मा शुचः । दिष्टमेतत्पुरा चैव नात्र शोचितुमर्हसि ।
न चैव शक्यं संयन्तुं यतो धर्म्मस्ततो जयः ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा स भगवान् कुरूणां प्रपितामहः । पुनरेव महाभागो धृतराष्ट्रमुवाच ह ।
इह युद्धे महाराज भविष्यति महान् क्षयः । तथेह च निमित्तानि भयदान्युपलक्षये । ५०
श्येना गृध्राश्च काकाश्च कङ्काश्च सहिता बकैः । सम्पतन्ति नगाग्रेषु समवायांश्च कुर्व्वते ।
अभ्यग्रञ्च प्रपश्यन्ति युद्धमानन्दिनो द्विजाः । क्रव्यादा भक्षयिष्यन्ति मांसानि गजवाजिनां ।
निर्द्दयं चाभिवाशन्तो भैरवा भयवेदिनः । कङ्काः प्रयान्ति मध्येन दक्षिणामभितो दिशं ।
उभे पूर्व्वापरे सन्ध्ये नित्यं पश्यामि भारत । उदयास्तमने सूर्य्यं कबन्धैः परिवारितं ।
श्वेतलोहितपर्य्यन्ताः कृष्णग्रीवाः सविद्युतः । त्रिवर्णाः परिघाः सन्ध्यौ भानुमन्तमवारयन् । ५५
ज्वलितार्क्केन्दुनक्षत्रं निर्व्विशेषदिनक्षयं । अहोरात्रं मया दृष्टं तत्क्षयाय भविष्यति ।
अलक्ष्यः प्रभया हीनः पौर्णमास्याञ्च कार्त्तिके । चन्द्रोऽभूदग्निवर्णश्च पद्मवर्णे नभस्तले ।
स्वप्स्यन्ति निहता वीरा भूमिमावृत्य पार्थिवाः । राजानो राजपुत्राश्च शूराः परिघबाहवः ।
अन्तरीक्षे वराहस्य वृषदंशस्य चोभयोः । प्रणादं युध्यतो रात्रौ रौद्रं नित्यं प्रलक्षये ।
देवताप्रतिमाश्चैव कम्पन्ति च हसन्ति च । वमन्ति रुधिरं चास्यैः खिद्यन्ति प्रपतन्ति च । ६०
अनाहता दुन्दुभयः प्रणदन्ति विशाम्पते । अयुक्ताश्च प्रवर्त्तन्ते क्षत्रियाणां महारथाः ।
कोकिलाः शतपत्राश्च चाषा भासाः शुकास्तथा । सारसाश्च मयूराश्च वाचो मुञ्चन्ति दारुणाः ।
गृहीतशस्त्राः क्रोशन्ति चर्म्मिणो वाजिपृष्ठगाः । अरुणोदये प्रदृश्यन्ते शतशः शलभव्रजाः ।
उभे सन्ध्ये प्रकाशेते दिशो दाहसमुद्भवे । पर्ज्जन्यः पांशुवर्षी च मांसवर्षी च भारत ।
या चैषा विश्रुता राजंस्त्रैलोक्ये साधुसम्मता । अरुन्धती तयाऽप्येष वशिष्ठः पृष्ठतः कृतः । ६५
रोहिणीं पीडयन्नेष स्थितो राजन् शनैश्चरः । व्यावृत्तं लक्ष्म सोमस्य भविष्यति महद्भयं ।
अनभ्रे च महाघोरः स्तनितः श्रूयते स्वनः । वाहनानाञ्च रुदतां निपतन्त्यश्रुबिन्दवः ।
इति श्रीमहाभारते भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि श्रीव्यासदर्शने द्वितीयोऽध्यायः ॥ २ ॥
॥ व्यास उवाच ॥ खरा गोषु प्रजायन्ते रमन्ते मातृभिः सुताः । अनार्त्तवं पुष्पफलं दर्शयन्ति वने द्रुमाः ।
गर्भिण्यो जातपुत्राश्च जनयन्ति विभीषणान् । क्रव्यादाः पक्षिणश्चापि सहाश्नन्ति परस्परं ।
त्रिविषाणाश्चतुर्नेत्राः पञ्चपादा द्विमेहनाः । द्विशीर्षाश्च द्विपुच्छाश्च दंष्ट्रिणः पशवोऽशिवाः । ७०
जायन्ते विवृतास्याश्च व्याहरन्तोऽशिवा गिरः । त्रिपदाः शिखिनस्तार्क्ष्याश्चतुर्दंष्ट्रा विषाणिनः ।
तथैवान्याश्च दृश्यन्ते स्त्रियो वै ब्रह्मवादिनां । वैनतेया मयूरांश्च जनयन्ति पुरे तव ।
गोवत्सं वडवा सूते श्वा शृगालं महीपते । कुक्कुरान् करभाश्चैव शुकाश्चाशुभवादिनः ।

स्त्रियः काश्चित् प्रजायन्ते चतस्रः पञ्च कन्यकाः। जातमात्राश्च नृत्यन्ति गायन्ति च हसन्ति च।
पृथग्जनस्य सर्व्वस्य क्षुद्रकाः प्रहसन्ति च। नृत्यन्ति परिगायन्ति वेदयन्तो महद्भयं। ७५
प्रतिमाश्चालिखन्त्येताः सशस्त्राः कालचोदिताः। अन्योऽन्यमभिधावन्ति शिशवो दण्डपाणयः।
अन्योऽन्यमभिमृद्नन्ति नगराणि युयुत्सवः। पद्मोत्पलानि वृक्षेषु जायन्ते कुमुदानि च।
विष्वग्वाताश्च वान्त्युग्रा रजो नाप्युपशाम्यति। अभीक्ष्णं कम्पते भूमिरर्कं राहुर्ग्रसेत च।
श्वेतो ग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति। अभावं हि विशेषेण कुरूणां तत्र पश्यति।
धूमकेतुर्महाघोरः पुष्यञ्चाक्रम्य तिष्ठति। सेनयोरशिवं घोरं करिष्यति महाग्रहः। ८०
मघास्वङ्गारको वक्रः श्रवणे च बृहस्पतिः। भगं नक्षत्रमाक्रम्य सूर्य्यपुत्त्रेण पीड्यते।
शुक्रः प्रोष्ठपदे पूर्व्वे समारुह्य विरोचते। उत्तरे तु परिक्रम्य सहितः समुदीक्ष्यते।
श्वेतो ग्रहः प्रज्वलितः सधूम इव पावकः। ऐन्द्रं तेजस्वि नक्षत्रं ज्येष्ठामाक्रम्य तिष्ठति।
ध्रुवः प्रज्वलितो घोरमपसव्यं प्रवर्त्तते। रोहिणीं पीडयन्तौ तावुभौ च शशिभास्करौ।
चित्रास्वात्यन्तरे चैव धिष्ठितः परुषग्रहः। वक्रानुवक्रं कृत्वा च श्रवणं पावकप्रभः। ८५
ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः। सर्व्वसस्यपरिच्छन्ना पृथिवी फलमालिनी।
पञ्चशीर्षा यवाश्चापि शतशीर्षाश्च शालयः। प्रधानाः सर्व्वलोकस्य यास्वायत्तमिदं जगत्।
ता गावः प्रस्नुता वत्सैः शोणितं प्रक्षरन्त्युत। निश्चेरुरर्चिषश्चापात् खड्गाश्च ज्वलिता भृशं।
व्यक्तं पश्यन्ति शस्त्राणि सङ्ग्रामं समुपस्थितं। अग्निवर्णा यथाभासः शस्त्राणामुदकस्य च।
कवचानां ध्वजानाञ्च भविष्यति महान् क्षयः। पृथिवी शोणितावर्त्ता ध्वजोडुपसमाकुला। ९०
कुरूणां वैशसे राजन् पाण्डवैः सह भारत। दिक्षु प्रज्वलितास्याश्च व्याहरन्ति मृगद्विजाः।
अत्याहितं दर्शयन्तो वेदयन्तो महद्भयं। एकपक्षाक्षिचरणः शकुनिः खचरो निशि।
रौद्रं वदति संरब्धः शोणितं छर्द्दयन्निव। शस्त्राणि चैव राजेन्द्र प्रज्वलन्तीव संस्थिता।
सप्तर्षीणामुदाराणां समवच्छाद्यते प्रभा। संवत्सरस्थायिनौ च ग्रहौ प्रज्वलितावुभौ।
विशाखायाः समीपस्थौ बृहस्पतिशनैश्चरौ। क्षोभिता दिशः सर्व्वाः पांशुवर्षैः समन्ततः। ९५
उत्पातमेघा रौद्राश्च रात्रौ वर्षन्ति शोणितं। कृत्तिकां पीडयंस्तीक्ष्णैर्नक्षत्रं पृथिवीपते।
अभीक्ष्णवाता वायन्ते धूमकेतुमवस्थिताः। विषमं जनयन्त्येते आक्रन्दजननं महत्।
त्रिषु सर्व्वेषु पूर्व्वेषु नक्षत्रेषु विशाम्पते। गृध्रः सम्पतते शीर्षे जनयन् भयमुत्तमं।
चतुर्दशीं पञ्चदशीं भूतपूर्व्वाञ्च षोडशीं। चन्द्रसूर्य्यावुभौ ग्रस्तावेकमासीं त्रयोदशीं।
अपर्व्वणि ग्रहावेतौ प्रजासङ्क्षयिष्यतः। शोणितैर्व्वक्त्रसंपूर्णा अतृप्तास्तत्र राक्षसाः। १००
प्रतिस्रोतोमहानद्यः सरितः शोणितोदकाः। फेनायमानाः कूपाश्च कूर्द्दन्ति वृषभा इव।
पतन्त्युल्काः सनिर्घाताः शक्राशनिसमप्रभाः। अद्य चैव निशां व्युष्टामनयं समवाप्स्यथ।
विनिःसृत्य महोल्काभिस्तिमिरं सर्व्वतो दिशं। अन्योऽन्यमुपतिष्ठद्भिस्तत्र घोरं महर्षिभिः।

भूमिपालसहस्राणां भूमिः पास्यति शोणितं । कैलासमन्दराभ्यान्तु तथा हिमवतो गिरेः ।
सहस्रशो महाशब्दः शिखराणि पतन्ति च । महाभूता भूमिकम्पे चत्वारः सागराः पृथक् । १०५
वेलामुद्वर्त्तयन्तीव क्षोभयन्तो वसुन्धरां । वृक्षान् प्रमथ्य वान्त्युग्रा वाताः शर्करकर्षिणः ।
भग्नाः सुमहावातैरशनीभिः समाहताः । वृक्षाः पतन्ति चैत्याश्च ग्रामेषु नगरेषु च ।
नीललोहितपीतश्च भवत्यग्निर्हुतो द्विजैः । वामार्चिर्दुष्टगन्धश्च मुञ्चन् वै दारुणं स्वनं ।
स्पर्शा गन्धा रसाश्चैव विपरीता महीपते । धूमं ध्वजाः प्रमुञ्चन्ति कम्पमाना मुहुर्मुहुः ।
मुञ्चन्त्यङ्गारवर्षञ्च भेर्य्यश्च पटहास्तथा । शिखराणां समृद्धानामुपरिष्टात् समन्ततः । ११०
वायसाश्च रुवन्त्युग्रं वामं मण्डलमाश्रिताः । पक्वापक्वेति सुभृशं वावाश्यन्ते वयांसि च ।
निलीयन्ते ध्वजाग्रेषु क्षयाय पृथिवीक्षितां । ध्यायन्तः प्रकिरन्तश्च व्याला वेपथुसंयुताः ।
दीनास्तुरङ्गमाः सर्व्वे वारणाः सलिलाशयाः । एतच्छ्रुत्वा भवानत्र प्राप्तकालं व्यवस्यतां ।
यथा लोकः समुच्छेदं नायं गच्छेत भारत ।
॥ वैशम्पायन उवाच ॥ पितुर्वचो निशम्यैतद् धृतराष्ट्रोऽब्रवीदिदं । दिष्टमेतत् पुरा मन्ये भविष्यति नरक्षयः । ११५
राजानः क्षत्रधर्म्मेण यद्यवध्यन्त संयुगे । वीरलोकं समासाद्य सुखं प्राप्स्यन्ति केवलं ।
इह कीर्त्तिं परे लोके दीर्घकालं महासुखं । प्राप्स्यन्ति पुरुषव्याघ्राः प्राणांस्त्यक्त्वा महाहवे ।
॥ वैशम्पायन उवाच ॥ एवं मुनिस्तथेत्युक्त्वा कवीन्द्रो राजसत्तम । धृतराष्ट्रेण पुत्रेण ध्यानमन्वगमत् परं ।
स मुहूर्त्तं तथा ध्यात्वा पुनरेवाब्रवीद् वचः । असंशयं पार्थिवेन्द्र कालः संक्षयते जगत् ।
सृजते च पुनर्लोकान् नेह विद्यति शाश्वतं । ज्ञातीनाञ्च कुरूणाञ्च सम्बन्धिसुहृदान्तथा । १२०
धर्म्यं देशय पन्थानं समर्थो ह्यसि वारणे । क्षुद्रं ज्ञातिवधं प्राहुर्मा कुरुष्व ममाप्रियं ।
कालोऽयं पुत्ररूपेण तव जातो विशाम्पते । न वधः पूज्यते वेदे हितं नैव कथञ्चन ।
हन्यात् स एनं यो हन्यात् कुलधर्म्मं स्वकां तनुं । कालेनोत्पथगन्तासि शक्ये सति यथापथि ।
कुलस्यास्य विनाशाय तथैव च महीक्षितां । अनर्थो राज्यरूपेण तव जातो विशाम्पते ।
लुप्तधर्म्मा परेणासि धर्म्मं दर्शय वै सुतान् । तेन राज्येन दुर्द्धर्ष येन प्राप्तोऽसि किल्विषं । १२५
यशो धर्म्मञ्च कीर्त्तिञ्च पालयन् स्वर्गमाप्स्यसि । लभन्तां पाण्डवा राज्यं शमं गच्छन्तु कौरवाः ।
एवं ब्रुवति विप्रेन्द्रे धृतराष्ट्रोऽम्बिकासुतः । आक्षिप्य वाक्यं वाक्यज्ञो वाक्पथेनाब्रवीत् पुनः ।
॥ धृतराष्ट्र उवाच ॥ यथा भवान् वेत्ति तथैव वेत्ता भावाभावौ विदितौ मे यथार्थौ । स्वार्थे हि संमुह्यति तात लोको मां
चापि लोकात्मकमेव विद्धि ।
प्रसादये त्वामतुलप्रभावं त्वं नो गतिर्दर्शयिता च धीरः । न चापि ते मद्वशगा महर्षेऽधर्म्मं कर्त्तुमर्हा हि मे मतिः ।
त्वं हि धर्म्मप्रवृत्तिश्च यशः कीर्त्तिश्च भारती । कुरूणां पाण्डवानाञ्च मान्यश्चापि पितामहः । १३०
॥ व्यास उवाच ॥ वैचित्रवीर्य्य नृपते यत्ते मनसि वर्त्तते । अभिधत्स्व यथाकामं छेत्तास्मि तव संशयं ।
॥ धृतराष्ट्र उवाच ॥ यानि लिङ्गानि सङ्ग्रामे भवन्ति विजयिष्यतां । तानि सर्व्वाणि भगवन् श्रोतुमिच्छामि तत्त्वतः ।

॥ व्यास उवाच ॥ प्रसन्नभाः पावक ऊर्द्ध्वरश्मिः प्रदक्षिणावर्त्तशिखो विधूमः। पुण्या गन्धाश्चाहुतीनां प्रवान्ति जयस्यैतत् भाविनो रूपमाहुः।

गम्भीरघोषाश्च महास्वनाश्च शङ्खा मृदङ्गाश्च नदन्ति यत्र। विशुद्धरश्मिस्तपनः शशी च जयस्यैतत् भाविनो रूपमाहुः।

इष्टा वाचः पृष्ठतो वायसानां संप्रस्थितानाञ्च गमिष्यताञ्च। ये पृष्ठतस्ते त्वरयन्ति राजन् ये त्वग्रतस्ते प्रतिषेधयन्ति। १३५

कल्याणवाचः शकुना राजहंसाः शुकाः क्रौञ्चाः शतपत्राश्च यत्र। प्रदक्षिणाश्चैव भवन्ति संख्ये ध्रुवं जयस्तत्र वदन्ति विप्राः।

अलङ्कारैः कवचैः केतुभिश्च सुखप्रणादैर्हेषितैश्च हयानां। भ्राजिष्मती दुष्प्रतिवीक्षणीया येषां चमूस्ते विजयन्ति शत्रून्।

हृष्टा वाचस्तथा सत्त्वं योधानां यत्र भारत। न म्लायन्ति स्रजश्चैव ते तरन्ति रणोदधिं।
इष्टा वाचः प्रविष्टस्य दक्षिणाः प्रविविक्षतः। पश्चात् सन्धारयन्त्यर्थमग्रे च प्रतिषेधिकाः।
शब्दरूपरसस्पर्शगन्धाश्चाविकृताः शुभाः। सदा हर्षश्च योधानां जयतामिति लक्षणं। १४०
अनुगा वायवो वान्ति तथाऽभ्राणि वयांसि च। अनुप्लवन्ति मेघाश्च तथैवेन्द्रधनूंषि च।
एतानि जयमानानां लक्षणानि विशाम्पते। भवन्ति विपरीतानि मुमूर्षूणां जनाधिप।
अल्पायां वा महत्यां वा सेनायामिति निश्चयः। हर्षो योधगणस्यैकं जयलक्षणमुच्यते।
एको दीर्णो दारयति सेनां सुमहतीमपि। तां दीर्णामनुदीर्य्यन्ते योधाः शूरतरा अपि।
दुर्निवार्य्या तदा चैव प्रभग्ना महती चमूः। अपामिव महावेगास्त्रस्ता मृगगणा इव। १४५
नैव शक्या समाधातुं सन्निपाते महाचमूः। दीर्णामित्येव दीर्य्यन्ते सुविद्वांसोऽपि भारत।
भीतान् भग्नांश्च सम्प्रेक्ष्य भयं भूयोऽभिवर्द्धते। प्रभग्ना सहसा राजन् दिशो विद्रवते चमूः।
नैव स्थापयितुं शक्या शूरैरपि महाचमूः। संभृत्य महतीं सेनां चतुरङ्गां महीपते।
उपायं विजयं श्रेष्ठमाहुर्भेदेन मध्यमं। जघन्य एष विजयो यो युद्धेन विशाम्पते।
महान् दोषः सन्निपातस्तस्याद्यः क्षय उच्यते। परस्परज्ञाः संहृष्टा व्यवधूताः सुनिश्चिताः। १५०
अपि पञ्चाशतं शूरा मृद्नन्ति महतीं चमूं। अपि वा पञ्च षट् सप्त विजयन्त्यनिवर्त्तिनः।
न वैनतेयो गरुडः प्रशंसति महाजनं। दृष्ट्वा सुपर्णोऽपचितिं महत्या अपि भारत।
न बाहुल्येन सेनाया जयो भवति नित्यशः। अध्रुवो हि जयो नाम दैवञ्चात्र परायणं।
जयवन्तो हि सङ्ग्रामे क्षयवन्तो भवन्ति हि।
इति श्रीमहाभारते भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि निमित्ताख्याने तृतीयोऽध्यायः ॥ ३ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा ययौ व्यासो धृतराष्ट्राय धीमते। धृतराष्ट्रोऽपि तच्छ्रुत्वा ध्यानमेवान्वपद्यत। १५५
स मुहूर्त्तमिव ध्यात्वा विनिःश्वस्य मुहुर्मुहुः। सञ्जयं संशितात्मानमपृच्छत् भरतर्षभ।
सञ्जयेमे महीपालाः शूरा युद्धाभिनन्दिनः। अन्योऽन्यमभिनिघ्नन्ति शस्त्रैरुच्चावचैरिह।
पार्थिवाः पृथिवीहेतोः समभित्यज्य जीवितं। न च शाम्यन्ति निघ्नन्तो वर्द्धयन्ति यमक्षयं।
भौममैश्वर्य्यमिच्छन्तो न मृष्यन्ते परस्परं। मन्ये बहुगुणां भूमिं तन्ममाचक्ष्व सञ्जय।

बहूनि च सहस्राणि प्रयुतान्यर्ब्बुदानि च। कोट्यश्च वीरलोकानां समेताः कुरुजाङ्गले। १९०
देशानाञ्च परीमाणं नगराणाञ्च सञ्जय। श्रोतुमिच्छामि तत्त्वेन यत एते समागताः।
दिव्यबुद्धिप्रदीपेन युक्तस्त्वं ज्ञानचक्षुषा। प्रभावात्तस्य विप्रर्षेर्व्यासस्यामिततेजसः।
॥ सञ्जय उवाच ॥ यथाप्रज्ञं महाप्राज्ञ भौमान् वक्ष्यामि ते गुणान्। शास्त्रचक्षुरवेक्षस्व नमस्ते भरतर्षभ।
द्विविधानीह भूतानि चराणि स्थावराणि च। चराणां त्रिविधा योनिरण्डस्वेदजरायुजाः।
चराणां खलु सर्व्वेषां श्रेष्ठा राजन् जरायुजाः। जरायुजानां प्रवरा मानवाः पशवश्च ये। १९५
नानारूपधरा राजंस्तेषां भेदाश्चतुर्दश। अरण्यवासिनः सप्त सप्तैषां ग्रामवासिनः।
सिंहा व्याघ्रा वराहाश्च महिषा वारणास्तथा। ऋक्षाश्च वानराश्चैव सप्तारण्याः स्मृता नृप।
गौरजाविमनुष्याश्च अश्वाश्वतरगर्दभाः। एते ग्राम्याः समाख्याताः पशवः सप्त साधुभिः।
एते वै पशवो राजन् ग्राम्यारण्याश्चतुर्दश। वेदोक्ताः पृथिवीपाल येषु यज्ञाः प्रतिष्ठिताः।
ग्राम्याणां पुरुषाः श्रेष्ठाः सिंहाश्चारण्यवासिनां। सर्व्वेषामेव भूतानामन्योऽन्येनोपजीवनं। २००
उद्भिज्जाः स्थावराः प्रोक्तास्तेषां पञ्चैव जातयः। वृक्षगुल्मलतावल्ल्यस्त्वक्साराखृणजातयः।
तेषां विंशतिरेकोना महाभूतेषु पञ्चसु। चतुर्विंशतिरुद्दिष्टा गायत्री लोकसम्मता।
य एतां वेद गायत्रीं पुण्यां सर्व्वगुणान्वितां। तत्त्वेन भरतश्रेष्ठ स लोके न प्रणश्यति।
भूमौ च जायते सर्व्वं भूमौ सर्व्वं विनश्यति। भूमिः प्रतिष्ठा भूतानां भूमिरेव सनातनं।
यस्य भूमिस्तस्य सर्व्वं जगत् स्थावरजङ्गमं। तत्रातिगृद्धा राजानो विनिघ्नन्तीतरेतरं। २०५
इति श्रीमहाभारते भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि भौमगुणकथने चतुर्थोऽध्यायः॥ ४ ॥
॥ धृतराष्ट्र उवाच ॥ नदीनां पर्व्वतानाञ्च नामधेयानि सञ्जय। तथा जनपदानाञ्च ये चान्ये भूमिमाश्रिताः।
प्रमाणञ्च प्रमाणज्ञ पृथिव्या मम सर्व्वतः। निखिलेन समाचक्ष्व काननानि च सञ्जय।
॥ सञ्जय उवाच ॥ पञ्चेमानि महाराज महाभूतानि संग्रहात्। जगतीस्थानि सर्व्वाणि समान्याहुर्मनीषिणः।
भूमिरापस्तथा वायुरग्निराकाशमेव च। गुणोत्तराणि सर्व्वाणि तेषां भूमिः प्रधानतः।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः। भूमेरेते गुणाः प्रोक्ता ऋषिभिस्तत्त्ववेदिभिः। ८०
चत्वारोऽप्सु गुणा राजन् गन्धस्तत्र न विद्यते। शब्दः स्पर्शश्च रूपञ्च तेजसोऽथ गुणास्त्रयः।
शब्दः स्पर्शश्च वायोस्तु आकाशे शब्द एव तु। एते पञ्च गुणा राजन् महाभूतेषु पञ्चसु।
वर्त्तन्ते सर्व्वलोकेषु येषु भूताः प्रतिष्ठिताः। अन्योऽन्येनाभिवर्त्तन्ते साम्यं भवति वै यदा।
यदा तु विषमीभावमाविशन्ति परस्परं। तदा देहैर्देहवन्तो व्यतिरोहन्ति नान्यथा।
आनुपूर्व्व्या विनश्यन्ति जायन्ते चानुपूर्व्वशः। सर्व्वाण्यपरिमेयाणि तदेषां रूपमैश्वरं। ८५
तत्र तत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः। तेषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते।
अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत्। प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणं।
सुदर्शनं प्रवक्ष्यामि द्वीपन्तु कुरुनन्दन। परिमण्डलो महाराज द्वीपोऽसौ चक्रसंस्थितः।

नदीजलप्रतिच्छन्नः पर्व्वतैश्चाभ्रसन्निभैः । पुरैश्च विविधाकारै रम्यैर्जनपदैस्तथा ।
वृक्षैः पुष्पफलोपेतैः सम्पन्नधनधान्यवान् । लवणेन समुद्रेण समन्तात् परिवारितः । १९०
यथा हि पुरुषः पश्येदादर्शे मुखमात्मनः । एवं सुदर्शनद्वीपो दृश्यते चन्द्रमण्डले ।
द्विरंशे पिप्पलस्तत्र द्विरंशे च शशो महान् । सर्व्वौषधिसमावायैः सर्व्वतः परिवारितः ।
आपस्ततोऽन्या विज्ञेया शेषः सङ्क्षेप उच्यते । ततोऽन्य उच्यते चायमेनं संक्षेपतः शृणु ।
इति श्रीमहाभारते भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि सुदर्शनद्वीपवर्णने पञ्चमोऽध्यायः ॥ ५ ॥

॥ धृतराष्ट्र उवाच ॥ उक्तो द्वीपस्य संक्षेपो विधिवत् बुद्धिमंस्त्वया । तत्त्वज्ञश्चासि सर्व्वस्य विस्तरं ब्रूहि सञ्जय ।
यावान् भूम्यवकाशोऽयं दृश्यते शशलक्षणे । तस्य प्रमाणं प्रब्रूहि ततो वक्ष्यसि पिप्पलं । १९५
एवमुक्तः स राज्ञा तु सञ्जयो वाक्यमब्रवीत् ।
॥ सञ्जय उवाच ॥ प्रागायता महाराज षडेते पर्व्वताः समाः । अवगाढा ह्युभयतः समुद्रौ पूर्व्वपश्चिमौ ।
हिमवान् हेमकूटश्च निषधश्च नगोत्तमः । नीलश्च वैदूर्य्यमयः श्वेतश्च शशिसन्निभः ।
सर्व्वधातुपिनद्धश्च शृङ्गवान्नाम पर्व्वतः । एते वै पर्व्वता राजन् सिद्धचारणसेविताः ।
तेषामन्तरविष्कम्भो योजनानि सहस्रशः । तत्र पुण्या जनपदास्तानि पुण्यानि भारत । २००
वसन्ति तेषु सत्त्वानि नानाजातीनि सर्व्वशः । इदन्तु भारतं वर्षं ततो हैमवतं परं ।
हेमकूटात् परञ्चैव हरिवर्षं प्रचक्षते । दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ।
प्रागायतो महाभाग माल्यवान्नाम पर्व्वतः । ततः परं माल्यवतः पर्व्वतो गन्धमादनः ।
तेनैव क्रमयोगेन पर्व्वतो गन्धमादनः । परिमण्डलस्तयोर्मध्ये मेरुः कनकपर्व्वतः ।
आदित्यतरुणाभासो विधूम इव पावकः । योजनानां सहस्राणि षोडशाधः किल स्मृतः । २०५
उच्चैश्च चतुराशीतिर्योजनानां महीपते । ऊर्द्ध्वमधश्च तिर्य्यक् च लोकानावृत्य तिष्ठति ।
तस्य पार्श्वेष्वमी द्वीपाश्चत्वारः संस्थिता विभो । भद्राश्वः केतुमालश्च जम्बुद्वीपश्च भारत ।
उत्तराश्चैव कुरवः कृतपुण्यप्रतिश्रयाः । विहगः सुमुखो यस्तु सुपर्णस्यात्मजः किल ।
स वै विचिन्तयामास सौवर्णान् वीक्ष्य वायसान् । मेरुरुत्तममध्यानामधमानाञ्च पक्षिणां ।
अविशेषकरो यस्मात्तस्मादेनं त्यजाम्यहं । तमादित्योऽनुपर्य्येति सततं ज्योतिषाम्वरः । २१०
चन्द्रमाश्च सनक्षत्रो वायुश्चैव प्रदक्षिणः । स पर्व्वतो महाराज दिव्यपुष्पफलान्वितः ।
भवनैरावृतः सर्व्वैर्जाम्बूनदपरिष्कृतैः । तत्र देवगणा राजन् गन्धर्व्वासुरराक्षसाः ।
अप्सरोगणसंयुक्ताः शैले क्रीडन्ति सर्व्वदा । तत्र ब्रह्मा च रुद्रश्च शक्रश्चापि सुरेश्वरः ।
समेत्य विविधैर्यज्ञैर्यजन्तेऽनेकदक्षिणैः । तुम्बुरुर्नारदश्चैव विश्वावसुर्हहा हुहू ।
अभिगम्यामरश्रेष्ठास्तुष्टुवुर्व्विविधैस्तवैः । सप्तर्षयो महात्मानः कश्यपश्च प्रजापतिः । २१५
तत्र गच्छन्ति भद्रन्ते सदा पर्व्वणि पर्व्वणि । तस्यैव मूर्द्धन्युशनाः काव्यो दिवि महीपते ।
हेमानि तस्य रत्नानि तस्यैते रत्नपर्व्वताः । तस्मात् कुवेरो भगवांश्चतुर्थं भागमश्नुते ।

ततः कलांशं वित्तस्य मनुष्येभ्यः प्रयच्छति। पार्श्वे तस्योत्तरे दिव्यं सर्व्वतः कुसुमैश्चितं।
कर्णिकारवनं रम्यं शिलाजालसमुद्गतं। तत्र साक्षात् पशुपतिर्दिव्यैर्भूतैः समावृतः।
उमासहायो भगवान् रमते भूतभावनः। कर्णिकारमयीं मालां बिभ्रत् पादावलम्बिनीं। २२०
त्रिभिर्नेत्रैः कृतोद्द्योतस्त्रिभिः सूर्य्यैरिवोदितैः। तमुग्रतपसः सिद्धाः सुव्रताः सत्यवादिनः।
पश्यन्ति न हि दुर्वृत्तैः शक्यो द्रष्टुं महेश्वरः। तस्य शैलस्य शिरसः क्षीरधारा नरेश्वर।
विश्वरूपाऽपरिमिता भीमनिर्घातनिःस्वना। पुण्या पुण्यतमैर्जुष्टा गङ्गा भागीरथी शुभा।
पतत्यजस्रवेगेन ह्रदे चान्द्रमसे शुभे। तया ह्युत्पादितः पुण्यः स ह्रदः सागरोपमः।
तां धारयामास तदा दुर्द्धरां पर्व्वतैरपि। शतं वर्षसहस्राणां शिरसैव पिनाकधृक्। २२५
मेरोस्तु पश्चिमे पार्श्वे केतुमालो महीपते। जम्बूखण्डे च तत्रैव महाजनपदो नृप।
आयुर्दशसहस्राणि वर्षाणां तत्र भारत। सुवर्णवर्णाश्च नरा स्त्रियश्चाप्सरसोपमाः।
अनामया वीतशोका नित्यं मुदितमानसाः। जायन्ते मानवास्तत्र निष्टप्तकनकप्रभाः।
गन्धमादनशृङ्गेषु कुवेरः सहराक्षसैः। संवृतोऽप्सरसां सङ्घैर्मोदते गुह्यकाधिपः।
गन्धमादनपार्श्वे तु परे त्वपरगण्डिकाः। एकादशसहस्राणि वर्षाणां परमायुषः। २३०
तत्र कृष्णा नरा राजंस्तेजोयुक्ता महाबलाः। स्त्रियश्चोत्पलवर्णाभाः सर्व्वाः सुप्रियदर्शनाः।
नीलात्परतरं श्वेतं श्वेताद्धैरण्यकं परं। वर्षमैरावतं राजन्नानाजनपदावृतं।
धनुःसंस्थे महाराज द्वे वर्षे दक्षिणोत्तरे। इलावृतं मध्यमन्तु पञ्चवर्षाणि चैव हि।
उत्तरोत्तरमेतेभ्यो वर्षमुद्रिच्यते गुणैः। आयुःप्रमाणमारोग्यं धर्म्मतः कामतोऽर्थतः।
समन्वितानि भूतानि तेषु वर्षेषु भारत। एवमेषा महाराज पर्व्वतैः पृथिवी चिता। २३५
हेमकूटस्तु सुमहान् कैलासो नाम पर्व्वतः। यत्र वैश्रवणो राजन् गुह्यकैः सह मोदते।
अस्त्युत्तरेण कैलासं मैनाकं पर्व्वतं प्रति। हिरण्यशृङ्गः सुमहान् दिव्यो मणिमयो गिरिः।
तस्य पार्श्वे महद्दिव्यं शुभ्रं काञ्चनवालुकं। रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः।
दृष्ट्वा भागीरथीं गङ्गामुवास बहुलाः समाः। यूपा मणिमयास्तत्र चैत्याश्चापि हिरण्मयाः।
तत्रेष्ट्वा तु गतः सिद्धिं सहस्राक्षो महायशाः। स्रष्टा भूतपतिर्यत्र सर्व्वलोकान् सनातनः। २४०
उपास्यते तिग्मतेजा यत्र भूतैः समन्ततः। नरनारायणौ ब्रह्मा मनुः स्थाणुश्च पञ्चमः।
तत्र दिव्या त्रिपथगा प्रथमन्तु प्रतिष्ठिता। ब्रह्मलोकादपक्रान्ता सप्तधा प्रतिपद्यते।
वस्वोकसारा नलिनी पावनी च सरस्वती। जम्बूनदी च सीता च गङ्गा सिन्धुश्च सप्तमी।
अचिन्त्या दिव्यसंकाशाः प्रभोरेषैव संविधिः। उपासते यत्र सत्रं सहस्रयुगपर्य्यये।
दृश्यादृश्या च भवति तत्र तत्र सरस्वती। एता दिव्याः सप्त गङ्गास्त्रिषु लोकेषु विश्रुताः। २४५
रक्षांसि वै हिमवति हेमकूटे तु गुह्यकाः। सर्पा नागाश्च निषधे गोकर्णे च तपोधनाः।
देवासुराणां सर्व्वेषां श्वेतपर्व्वत उच्यते। गन्धर्व्वा निषधे नित्यं नीले ब्रह्मर्षयस्तथा।

शृङ्गवांस्तु महाराज देवानां प्रतिसञ्चरः । इत्येतानि महाराज सप्त वर्षाणि भागशः ।
भूतान्युपनिविष्टानि गतिमन्ति ध्रुवाणि च । तेषामृद्धिर्बहुविधा दृश्यते दैवमानुषी ।
अशक्या परिसंख्यातुं श्रद्धेया तु बुभूषता । यान्तु पृच्छसि मां राजन् दिव्यामेतां शशाकृतिं । २५०
पार्श्वे शशस्य द्वे वर्षे उभे ये दक्षिणोत्तरे । कर्णौ तु नागद्वीपञ्च काश्यपद्वीप एव च ।
ताम्रपर्णी शिला राजन् श्रीमान् मलयपर्व्वतः । एतद्द्वितीयं द्वीपस्य दृश्यते शशसंस्थितं ।
इति श्रीमहाभारते भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि भूम्यादिपरिमाणविवरणे षष्ठोऽध्यायः ॥ ६ ॥
॥ धृतराष्ट्र उवाच ॥ मेरोरथोत्तरं पार्श्वं पूर्व्वञ्चाचक्ष्व सञ्जय । निखिलेन महाबुद्धे माल्यवन्तञ्च पर्व्वतं ।
॥ सञ्जय उवाच ॥ दक्षिणेन तु नीलस्य मेरोः पार्श्वे तथोत्तरे । उत्तराः कुरवो राजन् पुण्याः सिद्धनिषेविताः ।
तत्र वृक्षा मधुफला नित्यपुष्पफलोपमाः । पुष्पाणि च सुगन्धीनि रसवन्ति फलानि च । २५५
सर्व्वकामफलास्तत्र केचित् वृक्षा जनाधिप । अपरे क्षीरिणो नाम वृक्षास्तत्र नराधिप ।
ये क्षरन्ति सदा क्षीरं षड्रसं ह्यमृतोपमं । वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ।
सर्व्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका । मणिरत्ननिभं रम्यं वज्रवैदूर्य्यसन्निभं ।
भूभागं दृश्यते तत्र पद्मरागसमप्रभं । सर्व्वर्त्तुसुखसंस्पर्शा निष्पङ्का च जनाधिप ।
पुष्करिण्यः शुभास्तत्र सुखस्पर्शा मनोहराः । देवलोकच्युताः सर्व्वे जायन्ते तत्र मानवाः । २६०
शुक्लाभिजनसम्पन्नाः सर्व्वे सुप्रियदर्शनाः । मिथुनानि च जायन्ते स्त्रियश्चाप्सरसोपमाः ।
तेषान्ते क्षीरिणां क्षीरं पिबन्त्यमृतसन्निभं । मिथुनं जायते काले समन्तच्च प्रवर्द्धते ।
तुल्यरूपगुणोपेतं समवेषं तथैव च । एकमेवानुरूपञ्च चक्रवाकसमं प्रभो ।
निरामयाश्च ते लोका नित्यं मुदितमानसाः । दशवर्षसहस्राणि दशवर्षशतानि च ।
जीवन्ति ते महाराज न चान्योऽन्यं जहत्युत । भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा भयानकाः । २६५
तान्निर्हरन्तीह मृतान् दरीषु प्रक्षिपन्ति च । उत्तराः कुरवो राजन् व्याख्यातास्ते समासतः ।
मेरोः पार्श्वमहं पूर्व्वं वक्ष्याम्यपि यथातथं । तस्य पूर्व्वाभिषेकस्तु भद्राश्वस्य विशाम्पते ।
भद्रशालवनं यत्र कालाम्रश्च महाद्रुमः । कालाम्रस्तु महाराज नित्यपुष्पफलद्रुमः ।
द्रुमश्च योजनोत्सेधः सिद्धचारणसेवितः । तत्र ते पुरुषाः श्वेतास्तेजोयुक्ता महाबलाः ।
स्त्रियः कुमुदवर्णाश्च सुन्दर्य्यः प्रियदर्शनाः । चन्द्रप्रभाश्चन्द्रवर्णाः पूर्णचन्द्रनिभाननाः । २७०
चन्द्रशीतलगात्र्यश्च नृत्यगीतविशारदाः । दशवर्षसहस्राणि तथायुर्भरतर्षभ ।
कालाम्ररसपीतास्ते नित्यं संस्थितयौवनाः । दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ।
सुदर्शनो नाम महान् जम्बूवृक्षः सनातनः । सर्व्वकामफलः पुण्यः सिद्धचारणसेवितः ।
तस्य नाम्ना समाख्यातो जम्बूद्वीपः सनातनः । योजनानां सहस्रञ्च शतञ्च भरतर्षभ ।
उत्सेधो वृक्षराजस्य दिवस्पृङ्मनुजेश्वर । अरत्नीनां सहस्राणि शतानि दश पञ्च च । २७५
परिणाहस्तु वृक्षस्य फलानां रसभेदिनां । पतमानानि तान्युर्व्वीं कुर्व्वन्ति विपुलं स्वनं ।

मुञ्चन्ति च रसं राजन् तस्मिन् रजतसन्निभं। तस्मा जम्बाः फलरसो नदी भूत्वा जनाधिप।
मेरुं प्रदक्षिणं कृत्वा सम्प्रयात्युत्तरान् कुरून्। तत्र तेषां मनःशान्तिर्न पिपासा जनाधिप।
तस्मिन् फलरसे पीते न जरा बाधते च तान्। तत्र जाम्बूनदं नाम कनकं देवभूषणं।
इन्द्रगोपकसङ्काशं जायते भास्वरन्तु तत्। तदा आदित्यवर्णाश्च जायन्ते तत्र मानवाः। २८०
तथा माल्यवतः शृङ्गे दृश्यते हव्यवाट् सदा। नाम्ना सम्वर्त्तको नाम कालाग्निर्भरतर्षभ।
तथा माल्यवतः शृङ्गे पूर्व्वपूर्व्वानुगण्डिका। योजनानां सहस्राणि पञ्चाशन्माल्यवान्नृप।
महारजतसङ्काशा जायन्ते तत्र मानवाः। ब्रह्मलोकच्युताः सर्व्वे सर्व्वे च ब्रह्मवादिनः।
तपस्तप्यन्ति ते तीव्रं भवन्ति ह्यूर्द्ध्वरेतसः। रक्षणार्थन्तु भूतानां प्रविशन्ति दिवाकरं।
षष्टिस्तानि सहस्राणि षष्टिरेव शतानि च। अरुणस्याग्रतो यान्ति परिवार्य्य दिवाकरं। २८५
षष्टिवर्षसहस्राणि षष्टिरेव शतानि च। आदित्यतापतप्तास्ते विशन्ति शशिमण्डलं।
इति श्रीमहाभारते भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि माल्यवद्वर्णने सप्तमोऽध्यायः॥ ७ ॥
॥ धृतराष्ट्र उवाच॥ वर्षाणाञ्चैव नामानि पर्व्वतानाञ्च सञ्जय। आचक्ष्व मे यथातत्त्वं ये च पर्व्वतवासिनः।
॥ सञ्जय उवाच ॥ दक्षिणेन तु श्वेतस्य निषधस्योत्तरेण तु। वर्षं रमणकं नाम जायन्ते तत्र मानवाः।
शुक्लाभिजनसम्पन्नाः सर्व्वे सुप्रियदर्शनाः। निःसपत्नाश्च ते सर्व्वे जायन्ते तत्र मानवाः।
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु। वर्षं हिरण्मयं नाम यत्र हैरण्वती नदी। २९०
यत्र चायं महाराज पक्षिराट् पतगोत्तमः। यक्षानुगा महाराज धनिनः प्रियदर्शनाः।
महाबलास्तत्र जना राजन् मुदितमानसाः। द्वादशवर्षसहस्राणि शतानि दश पञ्च च।
आयुःप्रमाणं जीवन्ति वर्षाणान्ते जनाधिप। शृङ्गाणि च विचित्राणि त्रीण्येव मनुजाधिप।
एकं मणिमयं तत्र तथैकं रौक्ममद्भुतं। सर्व्वरत्नमयञ्चैकं भवनैरुपशोभितं।
तत्र स्वयम्प्रभा देवी नित्यं वसति शाण्डिली। उत्तरेण तु शृङ्गस्य समुद्रान्ते जनाधिप। २९५
वर्षमैरावतं नाम तस्माच्छृङ्गवतः परं। न तत्र सूर्य्यस्तपति न जीर्य्यन्ते च मानवाः।
चन्द्रमाश्च सनक्षत्रो ज्योतिर्भूत इवावृतः। पद्मप्रभाः पद्मवर्णाः पद्मपत्रनिभेक्षणाः।
पद्मपत्रसुगन्धाश्च जायन्ते तत्र मानवाः। अनिष्पन्दा इष्टगन्धा निराहारा जितेन्द्रियाः।
देवलोकच्युताः सर्व्वे तथा विरजसो नृप। त्रयोदशसहस्राणि वर्षाणान्ते जनाधिप।
आयुःप्रमाणं जीवन्ति नरा भरतसत्तम। क्षीरोदस्य समुद्रस्य तथैवोत्तरतः प्रभुः। ३००
हरिर्वसति वैकुण्ठः शकटे कनकामये। अष्टचक्रं हि तद्यानं भूतयुक्तं मनोजवं।
अग्निवर्णं महावेगं जाम्बूनदविभूषितं। स प्रभुः सर्व्वभूतानां विभुश्च भरतर्षभ।
संक्षेपो विस्तरश्चैव कर्त्ता कारयिता तथा। पृथिव्यापस्तथाकाशं वायुस्तेजश्च पार्थिव।
स यज्ञः सर्व्वभूतानामास्यं तस्य हुताशनः।
॥ वैशम्पायन उवाच। एवमुक्तः सञ्जयेन धृतराष्ट्रो महामनाः। ध्यानमन्वगमद्राजा पुत्रान् प्रति जनाधिप। ३०५

स विचिन्त्य महातेजाः पुनरेवाब्रवीदिदम्। अयं सर्व्वं सकलुषं काले संक्षिपते जगत्।
सृजते च पुनः सर्व्वं नेह विद्यति शाश्वतम्। यतो नारायणश्चैव सर्व्वज्ञः सर्व्वभूतकृत्।
देवा वैकुण्ठमित्याहुर्नरा विष्णुमिति प्रभुम्।

इति श्रीमहाभारते भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि धृतराष्ट्रवाक्ये अष्टमोऽध्यायः ॥ ८ ॥

॥ धृतराष्ट्र उवाच ॥ यदिदं भारतं वर्षं यत्रेदं मूर्च्छितं बलम्। यत्रातिमात्रं लुब्धोऽयं पुत्रो दुर्य्योधनो मम।
यत्र गृद्धाः पाण्डुपुत्रा यत्र मे सज्जते मनः। एतन्मे तत्त्वमाचक्ष्व त्वं हि मे बुद्धिमान् मतः। ३१०
॥ सञ्जय उवाच ॥ न तत्र पाण्डवा गृद्धाः शृणु राजन् वचो मम। गृद्धो दुर्य्योधनस्तत्र शकुनिश्चापि सौबलः।
अपरे क्षत्रियाश्चैव नानाजनपदेश्वराः। ये गृद्धा भारते वर्षे न मृष्यन्ति परस्परम्।
अत्र ते कीर्त्तयिष्यामि वर्षं भारत भारतम्। प्रियमिन्द्रस्य देवस्य मनोर्वैवस्वतस्य च।
पृथोश्च राजन् वैन्यस्य तथेक्ष्वाकोर्महात्मनः। ययातेरम्बरीषस्य शिबेरौशीनरस्य च।
ऋषभस्य तथैलस्य नृगस्य नृपतेस्तथा। कुशिकस्य च दुर्द्धर्ष गाधेश्चैव महात्मनः। ३१५
सोमकस्य च दुर्द्धर्ष दिलीपस्य तथैव च। अन्येषाञ्च महाराज क्षत्रियाणां बलीयसाम्।
सर्व्वेषामेव राजेन्द्र प्रियं भारत भारतम्। तत्ते वर्षं प्रवक्ष्यामि यथाश्रुतमरिन्दम।
शृणु मे गदतो राजन् यन्मां त्वं परिपृच्छसि। महेन्द्रो मलयः सह्यः शक्तिमान् गन्धमादनः।
विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्व्वताः। तेषां सहस्रशो राजन् पर्व्वतास्ते समीपतः।
अविज्ञाताः सारवन्तो विपुलाश्चित्रसानवः। अन्ये ततो परिज्ञाता ह्रस्वा ह्रस्वोपजीविनः। ३२०
आर्य्या म्लेच्छाश्च कौरव्य तैर्मिश्राः पुरुषा विभो। नदीं पिबन्ति विपुलां गङ्गां सिन्धुं सरस्वतीम्।
गोदावरीं नर्म्मदाञ्च बाहुदाञ्च महानदीम्। शतद्रूं चन्द्रभागाञ्च यमुनाञ्च महानदीम्।
दृषद्वतीं विपाशाञ्च विपापां स्थूलवालुकाम्। नदीं वेत्रवतीञ्चैव कृष्णवेणीञ्च निम्नगाम्।
इरावतीं वितस्ताञ्च पयोष्णीं देविकामपि। वेदस्मृतां वेदवतीं त्रिदिवामिक्षुमालवीम्।
करीषिणीं चित्रवहां चित्रसेनाञ्च निम्नगाम्। गोमतीं धूतपापाञ्च गण्डकीञ्च महानदीम्। ३२५
कौशिकीं निश्चितां कृत्यां निचितां लोहतारिणीम्। रहस्यां शतकुम्भाञ्च सरयूञ्च तथैव च।
चर्म्मण्वतीं चन्द्रभागां हस्तिसोमां दिशं तथा। शरावतीं पयोष्णीञ्च परां भीमरथीमपि।
कावेरीं चुलुकाञ्चापि वीणां शतबलामपि। नीवारां महिताञ्चापि सुप्रयोगां जनाधिप।
पवित्रां कुण्डलां सिन्धुं राजनीं पुरमालिनीम्। पूर्व्वाभिरामां वीराञ्च भीमामोघवतीं तथा।
पलाशिनीं पापहरां महेन्द्रां पाटलावतीम्। करीषिणीमसिक्नीञ्च कुशचीरां महानदीम्। ३३०
मकरीं प्रवरां मेनां हेमां घृतवतीं तथा। पुरावतीमनुष्णाञ्च शैब्यां कापीञ्च भारत।
सदानीरामधृष्याञ्च कुशधारां महानदीम्। सदाकान्तां शिवाञ्चैव तथा वीरवतीमपि।
वास्तुं सुवास्तुं गौरीञ्च कम्पनां सहिरण्वतीम्। वरां वीरकराञ्चापि पञ्चमीञ्च महानदीम्।
रथचित्रां ज्योतिरथां विश्वामित्रां कपिञ्जलाम्। उपेन्द्रां बहुलाञ्चैव कुचीरां मधुवाहिनीम्।

विनदीं पिङ्गलां वेणां तुङ्गवेणां महानदीं। विदिशां कृष्णवेणाञ्च ताम्राञ्च कपिलामपि। ३२५
शलुं सुवामां वेदाश्वां हरिस्रावां महापगां। शीघ्राञ्च पिच्छलाञ्चैव भारद्वाजीञ्च निम्नगां।
कौशिकीं निम्नगां शोणां बाहुदामथ चन्द्रमां। दुर्गामन्तःशिलाञ्चैव ब्रह्मवेध्यां बृहद्वतीं।
यवक्षामथरोहीञ्च तथा जाम्बूनदीमपि। सुनसां तमसां दासीं वसाञ्च वरुणामसीं।
नालां धृतिमतीञ्चैव पूर्णाशाञ्च महानदीं। तामसीं वृषभाञ्चैव ब्रह्ममेध्यां बृहद्वतीं।
एताश्चान्याश्च बहुधा महानद्यो जनाधिप। सदानिरामयां कृष्णां मन्दगां मन्दवाहिनीं। ३३०
ब्राह्मणीञ्च महागौरीं दुर्गामपि च भारत। चित्रोपलां चित्ररथां मञ्जुलां वाहिनीं तथा।
मन्दाकिनीं वैतरणीं कोशां चापि महानदीं। शुक्तिमतीं मनिङ्गाञ्च पुष्पवेणुत्पलावतीं।
लोहित्यां करतोयाञ्च तथैव वृषकाह्वयां। कुमारीमृषिकुल्याञ्च मारिषाञ्च सरस्वतीं।
मन्दाकिनीन्तु पुण्याञ्च सर्व्वगङ्गाञ्च भारत। विश्वस्य मातरः सर्व्वाः सर्व्वाश्चैव महाफलाः।
तथा नद्यस्त्वप्रकाशाः शतशोऽथ सहस्रशः। इत्येताः सरितो राजन् समाख्याता यथास्मृति। ३३५
अत ऊर्द्ध्वं जनपदान्निबोध गदतो मम। तत्रेमे कुरुपाञ्चालाः शाल्वा माद्रेयजाङ्गलाः।
शूरसेनाः कलिङ्गाश्च बोधा मालास्तथैव च। मत्स्याः सुकुट्याः सौबल्याः कुन्तलाः काशिकोशलाः।
चेदिमत्स्यकरूषाश्च भोजाः सिन्धुपुलिन्दकाः। उत्तमाश्च दशार्णाश्च मेकलाश्चोत्कलैः सह।
पाञ्चालाः कौशिजाश्चैव नैकपृष्ठा धुरन्धराः। बोधा मद्रभुजिङ्गाश्च काशयोऽपरकाशयः।
जठराः कुकुराश्चैव सदशार्णाश्च भारत। कुन्तयोऽवन्तयश्चैव तथैवापरकुन्तयः। ३४०
गोमन्ता मन्दकाः षण्डा विदर्भा रूपवाहिकाः। अश्मकाः पांशुराष्ट्राश्च गोपराष्ट्राः करीतयः।
अधिराज्यकुशाद्याश्च मल्लराष्ट्रञ्च केरलं। वारपास्यापवाहाश्च चक्रा वक्रातपाः शकाः।
विदेहा मागधाः स्वक्षा मलयाः विजयास्तथा। अङ्गा वङ्गाः कलिङ्गाश्च यकृल्लोमान एव च।
मल्लाः सुदेष्णाः प्रह्लादा माहिका शशिकास्तथा। वाह्लीका वाटधानाश्च आभीराः कालजोषकाः।
अपरान्ताः परान्ताश्च पह्लवाश्चर्म्ममण्डलाः। अटवीशिखराश्चैव मेरुभूताश्च मारिष। ३४५
उपावृत्तानुपावृत्ताः स्वराष्ट्राः केकयास्तथा। कुट्टापरान्ता माहेयाः कक्षाः सामुद्रनिष्कुटाः।
अन्ध्राश्च बहवो राजन्नन्तर्गिर्य्यास्तथैव च। बहिर्गिर्य्यङ्गमलजा मागधा मानवर्ज्जकाः।
मह्युत्तराः प्रावृषेया भार्गवाश्च जनाधिप। पुण्ड्रा भार्गाः किराताश्च सुदेष्टा यामुनास्तथा।
शका निषादा निषधास्तथैवानर्त्तनैरृताः। दुर्गलाः प्रतिमास्याश्च कुन्तलाः कुशलास्तथा।
तीरग्रहा शूरसेना ईजकाः कन्यकागुणाः। तिलभारा समीराश्च मधुमन्ताः सुकन्दकाः। ३५०
काश्मीराः सिन्धुसौवीरा गान्धारा दर्शकास्तथा। अभीसारा उलूताश्च शैवाला वाह्लिकास्तथा।
दर्व्वी च वानवादर्व्वा वातजामरथोरगाः। बाहुबाधाश्च कौरव्याः सुदामानः सुमल्लिकाः।
बध्राः करीषकाश्चापि कुलिन्दोपत्यकास्तथा। वातायना दशार्णाश्च रोमाणः कुशबिन्दवः।
कच्छा गोपालकक्षाश्च जाङ्गलाः कुरुवर्णकाः। किराता वर्व्वराः सिद्धा वैदेहास्ताम्रलिप्तकाः।

चोड्राः पौण्ड्राः सैषिकताः पार्व्वतीयाश्च मारिष । अथापरे जनपदा दक्षिणा भरतर्षभ । ३९५
द्राविडाः केरलाः प्राच्याः मूषिका वनवासकाः । कर्णाटका माहिषका विकल्पा मूषकास्तथा ।
झिल्लिका कुन्तलाश्चैव सौहृदा नलकाननाः । कोकुट्टकास्तथा चोला कोङ्कणा मालवानकाः ।
समङ्गाः करकाश्चैव कुकुराङ्गारमारिषाः । ध्वजिन्युत्सवसङ्केतास्त्रिगर्त्ताः शाल्वसेनयः ।
वकाः कोकरकाः प्रोष्ठा समवेगवशास्तथा । तथैव विन्ध्यचुलकाः पुलिन्दाः वल्कलैः सह ।
मालवा मल्लवाश्चैव तथैवापरवल्लभाः । कुलिन्दाः कालवाश्चैव कुण्डकाः करटास्तथा । ४००
मूषकास्तनबालाश्च सनीपाघटसृञ्जयाः । अलिन्दाः पाशिवाटाश्च तनयाः सुनयास्तथा ।
ऋषीविदर्भाः कान्तीकास्तङ्गणाः परतङ्गणाः । उत्तराश्चापरे म्लेच्छाः क्रूरा भरतसत्तम ।
यवनाश्चीनकाम्बोजा दारुणा म्लेच्छजातयः । सकृद्ग्रहाः कुलत्थाश्च हूणाः पारसिकैः सह ।
तथैव रमणाश्चीनास्तथैव दशमालिकाः । क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च ।
शूद्राभीराश्च दरदाः काश्मीराः पत्तिभिः सह । खशीराश्चान्तचाराश्च पह्नवा गिरिगह्वराः । ४०५
आत्रेयाः सभरद्वाजास्तथैव स्तनयोषिकाः । प्रोषकाश्च कलिङ्गाश्च किरातानाञ्च जातयः ।
तोमरा हंसमार्गाश्च तथैव करभञ्जकाः । एते चान्ये जनपदाः प्राच्योदीच्यास्तथैव च ।
उद्देशमात्रेण मया देशाः सङ्कीर्त्तिता विभो । यथागुणं बलञ्चापि त्रिवर्गस्य महाफलं ।
दुह्येत धेनुः कामधुक् भूमिः सम्यगनुष्ठिता । तस्यां गृध्यन्ति राजानः शूरा धर्म्मार्थकोविदाः ।
ते त्यजन्त्याहवे प्राणान् वसुगृद्धास्तरस्विनः । देवमानुषकायानां कामं भूमिः परायणं । ४१०
अन्योऽन्यस्यावलुम्पन्ति सारमेया यथामिषं । राजानो भरतश्रेष्ठ भोक्तुकामा वसुन्धरां ।
न चापि तृप्तिः कामानां विद्यतेऽद्यापि कस्यचित् । तस्मात् परिग्रहे भूमेर्यतन्ते कुरुपाण्डवाः ।
साम्ना भेदेन दानेन दण्डेनैव च भारत । पिता माता च पुत्राश्च खं द्यौश्च नरपुङ्गव ।
भूमिर्भवति भूतानां सम्यगच्छिद्रदर्शिना ।

इति श्रीमहाभारते भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि भारतीयजनपदादिनामकथने नवमोऽध्यायः ॥ ९ ॥

॥ धृतराष्ट्र उवाच ॥ भारतस्यास्य वर्षस्य तथा हैमवतस्य च । प्रमाणमायुषः सूत बलञ्चापि शुभाशुभं । ४१५
अनागतमतिक्रान्तं वर्त्तमानञ्च सञ्जय । आचक्ष्व मे विस्तरेण हरिवर्षं तथैव च ।
॥ सञ्जय उवाच ॥ चत्वारि भारते वर्षे युगानि भरतर्षभ । कृतं त्रेता द्वापरञ्च तिष्यञ्च कुरुवर्द्धन ।
पूर्व्वं कृतयुगं नाम ततस्त्रेतायुगं प्रभो । संक्षेपात् द्वापरस्याथ ततस्तिष्यं प्रवर्त्तते ।
चत्वारि तु सहस्राणि वर्षाणां कुरुसत्तम । आयुःसंख्या कृतयुगे संख्याता राजसत्तम ।
तथा त्रीणि सहस्राणि त्रेतायां मनुजाधिप । द्वे सहस्रे द्वापरे च भुवि तिष्ठन्ति साम्प्रतं । ४२०
न प्रमाणस्थितिर्ह्यस्ति तिष्येऽस्मिन् भरतर्षभ । गर्भस्थाश्च म्रियन्तेऽत्र तथा जाता म्रियन्ति च ।
महाबला महासत्त्वाः प्रज्ञागुणसमन्विताः । प्रजायन्ते च जाताश्च शतशोऽथ सहस्रशः ।
जाताः कृतयुगे राजन् धनिनः प्रियदर्शनाः । प्रजायन्ते च जाताश्च मुनयो वै तपोधनाः ।

महोत्साहा महात्मानो धार्म्मिकाः सत्यवादिनः। प्रियदर्शना वपुष्मन्तो महावीर्य्या धनुर्धराः।
वरार्हा युधि जायन्ते क्षत्रियाः शूरसत्तमाः। त्रेतायां क्षत्रिया राजन् सर्व्वे वै चक्रवर्त्तिनः। २९५
आयुष्मन्तो महावीरा धनुर्धरवरा युधि। जायन्ते क्षत्रियाः शूरास्त्रेतायां वशवर्त्तिनः।
सर्व्वे वर्णा महाराज जायन्ते द्वापरे सति। महोत्साहा वीर्य्यवन्तः परस्परजयैषिणः।
तेजसाल्पेन संयुक्ताः क्रोधनाः पुरुषा नृप। लुब्धा अनृतकाश्चैव तिष्ये जायन्ति भारत।
ईर्षा मानस्तथा क्रोधो मायाऽसूया तथैव च। तिष्ये भवति भूतानां रागो लोभश्च भारत।
सङ्क्षेपो वर्त्तते राजन् द्वापरेऽस्मिन्नराधिप। गुणोत्तरं हैमवतं हरिवर्षं तथैव च। ४००

इति श्रीमहाभारते भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि भारतायायुर्निरूपणे दशमोऽध्यायः ॥ १० ॥ समाप्तञ्च जम्बूखण्डविनिर्म्माणपर्व्व ॥

## ॥ अथ भूमिपर्व्व ॥ १ ॥

॥ धृतराष्ट्र उवाच ॥ जम्बूखण्डस्त्वया प्रोक्तो यथावदिह सञ्जय। विष्कम्भमस्य प्रब्रूहि परिमाणन्तु तत्त्वतः।
समुद्रस्य प्रमाणञ्च सम्यगच्छिद्रदर्शनं। शाकद्वीपञ्च मे ब्रूहि कुशद्वीपञ्च सञ्जय।
शाल्मलिञ्चैव तत्त्वेन क्रौञ्चद्वीपं तथैव च। ब्रूहि गावल्गणे सर्व्वं राहोः सोमार्कयोस्तथा।
॥ सञ्जय उवाच ॥ राजन् सुबहवो द्वीपा यैरिदं सन्ततं जगत्। सप्त द्वीपान् प्रवक्ष्यामि चन्द्रादित्यौ ग्रहांस्तथा।
अष्टादश सहस्राणि योजनानां विशाम्पते। षट्शतानि च पूर्णानि विष्कम्भो जम्बुपर्व्वतः। ४०५
लवणस्य समुद्रस्य विष्कम्भो द्विगुणः स्मृतः। नानाजनपदाकीर्णो मणिविद्रुमचित्रितः।
नैकधातुविचित्रैश्च पर्व्वतैरुपशोभितः। सिद्धचारणसङ्कीर्णः सागरः परिमण्डलः।
शाकद्वीपञ्च वक्ष्यामि यथावदिह भारत। शृणु मे त्वं यथान्यायं ब्रुवतः कुरुनन्दन।
जम्बूद्वीपप्रमाणेन द्विगुणः कुरुनन्दन। विष्कम्भेण महाराज सागरोऽपि विभागशः।
क्षीरोदो भरतश्रेष्ठ येन सम्परिवारितः। तत्र पुण्या जनपदा न तत्र म्रियते नरः। ४१०
कुतएव च दुर्भिक्षं क्षमातेजोयुता हि ते। शाकद्वीपस्य सङ्क्षेपो यथावत् भरतर्षभ।
उक्त एष महाराज किमन्यत् श्रोतुमिच्छसि।
॥ धृतराष्ट्र उवाच ॥ शाकद्वीपस्य सङ्क्षेपो यथावदिह पूर्व्वशः। उक्त एष महाप्राज्ञ विस्तरं ब्रूहि तत्त्वतः।
॥ सञ्जय उवाच ॥ तथैव पर्व्वता राजन् सप्तात्र मणिभूषिताः। रत्नाकरास्तथा नद्यस्तेषां नामानि मे शृणु।
अतीव गुणवत् सर्व्वं तत्र पुण्यं जनाधिप। देवर्षिगन्धर्व्वयुतः प्रथमो मेरुरुच्यते। ४१५
प्रागायतो महाराज मलयो नाम पर्वतः। यतो मेघाः प्रवर्त्तन्ते प्रभवन्ति च सर्व्वशः।
ततः पूर्व्वेण कौरव्य जलधारो महागिरिः। यत्र नित्यमुपादत्ते वासवः परमं जलं।
ततो वर्षं प्रभवति वर्षाकाले जनेश्वर। उच्चैर्गिरी रैवतको यत्र नित्यं प्रतिष्ठितं।
रेवती दिवि नक्षत्रं पितामहकृतो विधिः। उत्तरेण तु राजेन्द्र श्यामो नाम महागिरिः।

नवमेघप्रभः प्रांशुः श्रीमानुज्ज्वलविग्रहः । ततः श्यामत्वमापन्ना जना जनपदेश्वर । ४२०

॥ धृतराष्ट्र उवाच ॥ सुमहान् संशयो मेऽद्य प्रोक्तोऽयं सञ्जय त्वया । प्रजाः कथं सूतपुत्र सम्प्राप्ता श्यामतामिह ।

॥ सञ्जय उवाच ॥ सर्व्वेष्वेव महाराज द्वीपेषु कुरुनन्दन । गौरः कृष्णश्च पतङ्गो यतो वर्णान्तरे द्विजाः ।

श्यामो यस्मात् प्रवृत्तो वै तत्ते वक्ष्यामि भारत । ततः परं कौरवेन्द्र दुर्गशैलो महोदयः ।

केशरी केशरयुतो यतो वातः प्रजायते । तेषां योजनविष्कम्भो द्विगुणः प्रविभागशः ।

वर्षाणि तेषु कौरव्य सप्तोक्तानि मनीषिभिः । महामेरुर्महाकाशो जलदः कुमुदोत्तरः । ४२५

जलधारो महाराज सुकुमार इति स्मृतः । रैवतस्य तु कौमारः श्यामस्य मणिकाञ्चनः ।

केदारश्चाथ मोदाकी परेण तु महापुमान् । परिवार्य्य च कौरव्य दैर्घ्यं ह्रस्वत्वमेव च ।

जम्बूद्वीपेन सङ्ख्यातस्तस्य मध्ये महाद्रुमः । शाको नाम महाराज प्रजा यस्य महानुगाः ।

तत्र पुण्या जनपदाः पूज्यते यत्र शङ्करः । तत्र गच्छन्ति सिद्धाश्च चारणा दैवतानि च ।

धार्म्मिकाश्च प्रजा राजंश्चत्वारोऽतीव भारत । वर्णाः स्वकर्म्मनिरता न च स्तेनोऽत्र दृश्यते । ४३०

दीर्घायुषो महाराज जरामृत्युविवर्ज्जिताः । प्रजास्तत्र विवर्द्धन्ते वर्षास्विव समुद्रगाः ।

नद्यः पुण्यजलास्तत्र गङ्गा च बहुधागता । सुकुमारी कुमारी च सीता कावेरका तथा ।

महानदी च कौरव्य तथा मणिजला नदी । चक्षुर्वर्द्धनिका चैव नदी भरतसत्तम ।

तत्र प्रवृत्ताः पुण्योदा नद्यः कुरुकुलोद्वह । सहस्राणां शतान्येव यतो वर्षति वासवः ।

न तासां नामधेयानि परिमाणं तथैव च । शक्यन्ते परिसङ्ख्यातुं पुण्यास्ता हि सरिद्वराः । ४३५

तत्र पुण्या जनपदाश्चत्वारो लोकसम्मताः । मृगाश्च मशकाश्चैव मानसा मन्दगास्तथा ।

मृगा ब्राह्मणभूयिष्ठाः स्वकर्म्मनिरतास्तथा । मशकेषु तु राजन्या धार्म्मिकाः सर्व्वकामदाः ।

मानसाश्च महाराज वैश्यधर्म्मोपजीविनः । सर्व्वकामसमायुक्ताः शूरा धर्म्मार्थनिश्चयाः ।

शूद्राश्च मन्दगास्तत्र पुरुषा धर्म्मशीलिनः । न तत्र राजा राजेन्द्र न दण्डो न च दाण्डिकः ।

स्वधर्म्मेणैव धर्म्मज्ञास्ते रक्षन्ति परस्परं । एतावदेव शक्यन्तु तत्र द्वीपे प्रभाषितुं । ४४०

एतदेव तु श्रोतव्यं शाकद्वीपे महौजसि ।

इति श्रीमहाभारते भीष्मपर्व्वणि भूमिपर्व्वणि शाकद्वीपवर्णने एकादशोऽध्यायः ॥ ११ ॥

॥ सञ्जय उवाच ॥ उत्तरेषु च कौरव्य द्वीपेषु श्रूयते कथा । एवं तत्र महाराज ब्रुवतश्च निबोध मे ।

घृततोयः समुद्रोऽत्र दधिमण्डोदकः परः । सुरोदः सागरश्चैव तथाऽन्यो जलसागरः ।

परस्परेण द्विगुणाः सर्व्वद्वीपा नराधिप । एवमेव महाराज समुद्रैः परिवारिताः ।

गौरस्तु मध्यमे द्वीपे गिरिर्मानःशिलो महान् । पर्व्वतः पश्चिमे कृष्णो नारायणसखो नृप । ४४५

तत्र रत्नानि दिव्यानि स्वयं रक्षति केशवः । प्रजापतिमुपासीनः प्रजानां व्यदधत् सुखं ।

कुशस्तम्बः कुशद्वीपे मध्ये जनपदैः सह । सम्पूज्यते शाल्मलिश्च द्वीपे शाल्मलिके नृप ।

क्रौञ्चद्वीपे महाक्रौञ्चो गिरी रत्नचयाकरः । सम्पूज्यते महाराज चातुर्व्वर्ण्येन नित्यदा ।

गोमन्दः पर्व्वतो राजन् सुमहान् सर्व्वधातुकः। यत्र नित्यं निवसति श्रीमान् कमललोचनः।
मोक्षिभिः संस्तुतो नित्यं प्रभुर्नारायणो हरिः। कुशद्वीपे तु राजेन्द्र पर्व्वतो विद्रुमैश्चितः। ४५०
सुधामानाम दुर्द्धर्षो द्वितीयो हेमपर्व्वतः। द्युतिमान्नाम कौरव्य तृतीयः कुमुदो गिरिः।
चतुर्थः पुष्पवान्नाम पञ्चमस्तु कुशेशयः। षष्ठो हरिगिरिर्नाम षडेते पर्व्वतोत्तमाः।
तेषामन्तरविष्कम्भो द्विगुणः सर्व्वभागशः। औद्भिदं प्रथमं वर्षं द्वितीयं वेणुमण्डलं।
तृतीयं सुरथाकारं चतुर्थं कम्बलं स्मृतं। धृतिमत् पञ्चमं वर्षं षष्ठं वर्षं प्रभाकरं।
सप्तमं कापिलं वर्षं सप्तैते वर्षलम्भकाः। एतेषु देवगन्धर्व्वाः प्रजाश्च जगतीश्वर। ४५५
विहरन्ति रमन्ते च न तेषु म्रियते जनः। न तेषु दस्यवः सन्ति म्लेच्छजात्योऽपि वा नृप।
गौरप्रायो जनः सर्व्वः सुकुमारश्च पार्थिव। अवशिष्टेषु सर्व्वेषु वक्ष्यामि मनुजेश्वर।
यथाश्रुतं महाराज तदव्यग्रमनाः शृणु। क्रौञ्चद्वीपे महाराज क्रौञ्चो नाम महागिरिः।
क्रौञ्चात् परो वामनको वामनादन्धकारकः। अन्धकारात् परो राजन् मैनाकः पर्व्वतोत्तमः।
मैनाकात् परतो राजन् गोविन्दो गिरिरुत्तमः। गोविन्दात् परतो राजन् निविडो नाम पर्व्वतः। ४६०
परस्तु द्विगुणस्तेषां विष्कम्भो वंशवर्द्धन। देशांस्तत्र प्रवक्ष्यामि तन्मे निगदतः शृणु।
क्रौञ्चस्य कुशलो देशो वामनस्य मनोनुगः। मनोनुगात् परश्चोष्णो देशः कुरुकुलोद्वह।
उष्णात् परः प्रावरकः प्रावरादन्धकारकः। अन्धकारकदेशात्तु मुनिदेशः परः स्मृतः।
मुनिदेशात् परश्चैव प्रोच्यते दुन्दुभिस्वनः। सिद्धचारणसङ्कीर्णो गौरप्रायो जनाधिप।
एते देशा महाराज देवगन्धर्व्वसेविताः। पुष्करे पुष्करो नाम पर्व्वतो मणिरत्नवान्। ४६५
तत्र नित्यं प्रवसति स्वयं देवः प्रजापतिः। तं पर्य्युपासते नित्यं देवाः सर्व्वे महर्षयः।
वाग्भिर्मनोऽनुकूलाभिः पूजयन्तो जनाधिप। जम्बूद्वीपात् प्रवर्त्तन्ते रत्नानि विविधानि च।
एवं द्वीपेषु सर्व्वेषु प्रजानां कुरुनन्दन। ब्रह्मचर्य्येण सत्येन प्रजानां हि दमेन च।
आरोग्यायुःप्रमाणाभ्यां द्विगुणं द्विगुणं ततः। एको जनपदो राजन् द्वीपेष्वेतेषु भारत।
उक्ता जनपदा येषु धर्म्मश्चैकः प्रदृश्यते। ईश्वरो दण्डमुद्यम्य स्वयमेव प्रजापतिः। ४७०
द्वीपानान्तु महाराज रक्षंस्तिष्ठति नित्यदा। स राजा स शिवो राजन् स पिता प्रपितामहः।
गोपायति नरश्रेष्ठ प्रजाः सजडपण्डिताः। भोजनञ्चात्र कौरव्य प्रजाः स्वयमुपस्थितं।
सिद्धमेव महाबाहो तद्धि भुञ्जन्ति नित्यदा। ततः परं समा नाम दृश्यते लोकसंस्थिते।
चतुरस्रं महाराज त्रयस्त्रिंशत्तु मण्डलं। तत्र तिष्ठन्ति कौरव्य चत्वारो लोकसम्मताः।
दिग्गजा भरतश्रेष्ठ वामनैरावतादयः। सुप्रतीकस्तथा राजन् प्रभिन्नकरटामुखः। ४७५
तस्याहं परिमाणन्तु न सङ्ख्यातुमिहोत्सहे। असङ्ख्यातः स नित्यं हि तिर्य्यगूर्द्ध्वमधस्तथा।
तत्र वै वायवो वान्ति दिग्भ्यः सर्व्वाभ्य एव च। असम्बद्धा महाराज तान्निगृह्णन्ति ते द्विपाः।
पुष्करैः पद्मसङ्काशैर्विकर्षद्भिर्महाप्रभैः। शतधा पुनरेवाशु ते तान् मुञ्चन्ति नित्यशः।

अथ मन्दिर्भुज्यमानास्तु हिमवद्भिरिह मारुताः । आगच्छन्ति महाराज ततस्तिष्ठन्ति वै प्रजाः ।
॥ धृतराष्ट्र उवाच ॥ परो वै विस्तरोऽत्यर्थं त्वया सञ्जय कीर्त्तितः । दर्शितं द्वीपसंस्थानमुत्तरं ब्रूहि सञ्जय । ४८०
॥ सञ्जय उवाच ॥ उक्ता द्वीपा महाराज ग्रहान् वै शृणु तत्त्वतः । स्वर्भानोः कौरवश्रेष्ठ यावदेव प्रमाणतः ।
परिमण्डलो महाराज स्वर्भानुः श्रूयते ग्रहः । योजनानां सहस्राणि विष्कम्भो द्वादशास्य वै ।
परिणाहेन षट्त्रिंशद्विपुलत्वेन चानघ । षष्टिमाहुः शतान्यस्य बुधाः पौराणिकास्तथा ।
चन्द्रमास्तु सहस्राणि राजन्नेकादश स्मृतः । विष्कम्भेण कुरुश्रेष्ठ त्रयस्त्रिंशत्तु मण्डलं ।
एकोनषष्टिविष्कम्भं शीतरश्मेर्महात्मनः । सूर्य्यस्त्वष्टौ सहस्राणि द्वे चापि कुरुनन्दन । ४८५
विष्कम्भेण ततो राजन् मण्डलं त्रिंशता समं । अष्टपञ्चाशतं राजन् विपुलत्वेन चानघ ।
श्रूयते परमोदारः पतगोऽसौ विभावसुः । एतत् प्रमाणमर्कस्य निर्दिष्टमिह भारत ।
स राहुश्छादयत्येतौ यथाकालं महत्तया । चन्द्रादित्यौ महाराज सङ्क्षेपोऽयमुदाहृतः ।
इत्येतत्ते महाराज पृच्छतः शास्त्रचक्षुषा । सर्व्वमुक्तं यथातत्त्वं तस्माच्छममवाप्नुहि ।
यथादिष्टं मया प्रोक्तं सनिर्य्याणमिदं जगत् । तस्मादाश्वस कौरव्य पुत्त्रं दुर्य्योधनं प्रति । ४९०
श्रुत्वेदं भरतश्रेष्ठ भूमिपर्व्व मनोनुगः । श्रीमान् भवति राजन्यः सिद्धार्थः साधुसम्मतः ।
आयुर्बलञ्च कीर्त्तिश्च तस्य तेजश्च वर्द्धते । यः शृणोति महीपालः पर्व्वणीदं यतव्रतः ।
प्रीणन्ति पितरस्तस्य तथैव च पितामहाः । इदन्तु भारतं वर्षं यत्र वर्त्तामहे वयं ।
पूर्व्वैः प्रवर्त्तितं पुण्यं तत्सर्व्वं श्रुतवानसि ।
इति श्रीमहाभारते भीष्मपर्व्वणि भूमिपर्व्वण्युत्तरकुर्व्वादिनिरूपणे द्वादशोऽध्यायः ॥ १२ ॥ समाप्तञ्च भूमिपर्व्व ॥

## ॥ अथ भगवद्गीतापर्व्व ॥ २ ॥

॥ वैशम्पायन उवाच ॥ अथ गावल्गणिर्व्विद्वान् संयुगादेत्य भारत । प्रत्यक्षदर्शी सर्व्वस्य भूतभव्यभविष्यवित् । ४९५
ध्यायते धृतराष्ट्राय सहसोत्पत्य दुःखितः । आचष्ट निहतं भीष्मं भारतानां पितामहं ।
॥ सञ्जय उवाच ॥ सञ्जयोऽहं महाराज नमस्ते भरतर्षभ । हतो भीष्मः शान्तनवो भरतानां पितामहः ।
ककुदं सर्व्वयोधानां धाम सर्व्वधनुष्मतां । शरतल्पगतः सोऽद्य शेते कुरुपितामहः ।
यस्य वीर्य्यं समाश्रित्य द्यूतं पुत्त्रस्तवाकरोत् । स शेते निहतो राजन् सङ्ख्ये भीष्मः शिखण्डिना ।
यः सर्व्वान् पृथिवीपालान् समवेतान् महामृधे । जिगायैकरथेनैव काशिपुर्य्यां महारथः । ५००
जामदग्न्यं रणे रामं योऽयुध्यदपसम्भ्रमः । न हतो जामदग्न्येन स हतोऽद्य शिखण्डिना ।
महेन्द्रसदृशः शौर्य्ये स्थैर्य्ये च हिमवानिव । समुद्र इव गाम्भीर्य्ये सहिष्णुत्वे धरासमः ।
शरदंष्ट्रो धनुर्व्वक्त्रः खड्गजिह्वो दुरासदः । नरसिंहः पिता तेऽद्य पाञ्चाल्येन निपातितः ।
पाण्डवानां महासैन्यं यं दृष्ट्वोद्यतमाहवे । प्रावेपत भयोद्विग्नं सिंहं दृष्ट्वेव गोगणाः ।
परिरक्ष्य स सेनां तां दशरात्रं अनीकहा । जगामास्तमिवादित्यः कृत्वा कर्म्म सुदुष्करं । ५०५

यः स शक्र इवाक्षोभ्यो वर्षन् बाणान् सहस्रशः । जघान युधि योधानामर्ब्बुदं दशभिर्दिनैः ।
स शेते निहतो भूमौ वातभग्न इव द्रुमः । तव दुर्मन्त्रिते राजन् यथा नार्हः स भारत ।
इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि भीष्ममृत्युश्रवणे त्रयोदशोऽध्यायः ॥ १३ ॥
॥ धृतराष्ट्र उवाच ॥ कथं कुरूणामृषभो हतो भीष्मः शिखण्डिना । कथं रथात् स न्यपतत् पिता मे वासवोपमः ।
कथमासंश्च मे पुत्त्रा हीना भीष्मेण सञ्जय । बलिना देवकल्पेन गुर्व्वर्थे ब्रह्मचारिणा ।
तस्मिन् हते महाप्राज्ञे महेष्वासे महाबले । महासत्त्वे नरव्याघ्रे किं न आसीन्मनस्तदा । ५१०
आर्त्तिं परामाविशति मनः संश्रुत्य मे हतं । कुरूणामृषभं वीरमकम्पं पुरुषर्षभं ।
के तं यान्तमनुप्राप्ताः के वाऽस्यासन् पुरोगमाः । केऽतिष्ठन् के न्यवर्त्तन्त केऽभ्यवर्त्तन्त सञ्जय ।
के शूरा रथशार्दूलमच्युतं क्षत्रियर्षभं । तथाऽनीकं गाहमानं समरे पृष्ठतोऽन्वयुः ।
यस्तमोऽर्क इवापोहन् परसैन्यममित्रहा । सहस्ररश्मिप्रतिमः परेषां भयमादधत् ।
अकरोत् दुष्करं कर्म्म रणे पाण्डुसुतेषु यः । ग्रसमानमनीकानि य एनं पर्य्यवारयन् । ५१५
कृतिनन्तं दुराधर्षं सञ्जयास्तमन्तिके । कथं शान्तनवं युद्धे पाण्डवाः प्रत्यवारयन् ।
निकृन्तन्तमनीकानि शरदंष्ट्रं तरस्विनं । चापव्यात्ताननं घोरमसिजिह्वं दुरासदं ।
अनर्हं पुरुषव्याघ्रं ह्रीमन्तमपराजितं । पातयामास कौन्तेयः कथं तमजितं युधि ।
उग्रधन्वानमुग्रेषुं वर्त्तमानं रथोत्तमे । परेषामुत्तमाङ्गानि प्रचिन्वन्तमथेषुभिः ।
पाण्डवानां महत् सैन्यं यं दृष्ट्वोद्यन्तमाहवे । कालाग्निमिव दुर्द्धर्षं समचेष्टत नित्यशः । ५२०
परिकृष्य स सेनान्तु दशरात्रमनीकहा । जगामास्तमिवादित्यः कृत्वा कर्म्म सुदुष्करं ।
यः स शक्र इवाक्षय्यं वर्षं शरमयं क्षिपन् । जघान युधि योधानामर्ब्बुदं दशभिर्दिनैः ।
स शेते निहतो भूमौ वातभग्न इव द्रुमः । मम दुर्मन्त्रितेनासौ यथा नार्हति भारतः ।
कथं शान्तनवं दृष्ट्वा पाञ्चालानामनीकिनी । प्रहर्त्तुमशकत्तत्र भीष्मं भीमपराक्रमं ।
कथं भीष्मेण सङ्ग्राममकुर्व्वन् पाण्डुनन्दनाः । कथञ्च नाजयत् भीष्मो द्रोणे जीवति सञ्जय । ५२५
कृपे सन्निहिते तत्र भरद्वाजात्मजे तथा । भीष्मः प्रहरतां श्रेष्ठः कथं स निधनं गतः ।
कथञ्चातिरथस्तेन पाञ्चाल्येन शिखण्डिना । भीष्मो विनिहतो युद्धे देवैरपि दुरासदः ।
यः स्पर्द्धते रणे नित्यं जामदग्न्यं महाबलं । अजितं जामदग्न्येन शतक्रतुपराक्रमं ।
तं हतं समरे भीष्मं महारथकुलोदितं । सञ्जयाचक्ष्व मे वीरं येन शर्म्म न विद्महे ।
मामकाः के महेष्वासा नाजहुः सञ्जयाच्युतं । दुर्य्योधनसमादिष्टाः के वीराः पर्य्यवारयन् । ५३०
यच्छिखण्डिमुखाः सर्व्वे पाण्डवा भीष्ममभ्ययुः । कच्चित्ते कुरवः सर्व्वे नाजहुः सञ्जयाच्युतं ।
अश्मसारमयं नूनं हृदयं सुदृढं मम । यच्छ्रुत्वा पुरुषव्याघ्रं हतं भीष्मं न दीर्य्यते ।
तस्मिन् सत्यञ्च मेधा च नीतिश्च भरतर्षभे । अप्रमेयाणि दुर्द्धर्षे कथं स निहतो युधि ।
मौर्व्वीघोषस्तनयित्नुः पृषत्कपृषतो महान् । धनुर्ह्रादमहाशब्दो महामेघ इवोन्नतः ।

योऽभ्यवर्षत कौन्तेयान् सपाञ्चालान् ससृञ्जयान् । निघ्नन् पररथान् वीरो दानवानिव वज्रभृत् । ५३५
इष्वस्त्रसागरं घोरं बाणग्राहं दुरासदं । कार्म्मुकोर्म्मिणमक्षय्यमद्वीपं प्लवमप्लवं ।
गदाऽसिमकराभासं हयावर्त्तं गजाकुलं । पदातिमत्स्यकलिलं शङ्खदुन्दुभिनिस्वनं ।
हयान् गजपदातींश्च रथांश्च तरसा बहून् । निमज्जयन्तं समरे परवीरापहारिणं ।
विदह्यमानं कोपेन तेजसा च परन्तपं । वेलेव मकरावासं के वीराः पर्य्यवारयन् ।
भीष्मो यदकरोत् कर्म्म समरे सञ्जयारिहा । दुर्य्योधनहितार्थाय के तदाऽस्य पुरोऽभवन् । ५४०
केऽरक्षन् दक्षिणं चक्रं भीष्मस्यामिततेजसः । पृष्ठतः के परान् वीरानपासेधन् यतव्रताः ।
के पुरस्तादवर्त्तन्त रक्षन्तो भीष्ममन्तिके । केऽरक्षन्नुत्तरं चक्रं वीरा वीरस्य युध्यतः ।
वामे चक्रे वर्त्तमानाः केऽघ्नन् सञ्जय सृञ्जयान् । अग्रतोऽग्रमनीकेषु केऽभ्यरक्षन् दुरासदं ।
पार्श्वतः केऽभ्यरक्षन्त गच्छन्तो दुर्गमां गतिं । समूहे के परान् वीरान् प्रत्ययुध्यन्त सञ्जय ।
रक्ष्यमाणः कथं वीरैर्गोप्यमानाश्च तेन ते । दुर्ज्जयानामनीकानि नाजयंस्तरसा युधि । ५४५
सर्व्वलोकेश्वरस्येव परमेष्ठी प्रजापतेः । कथं प्रहर्त्तुमपि ते शेकुः सञ्जय पाण्डवाः ।
यस्मिन् द्वीपे समाश्वस्य युध्यन्ते कुरवः परैः । तं निमग्नं नरव्याघ्रं भीष्मं शंससि सञ्जय ।
यस्य वीर्य्यं समाश्रित्य मम पुत्त्रो बृहद्बलः । न पाण्डवानगणयत् कथं स निहतः परैः ।
यः पुरा विबुधैः सर्व्वैः साहाय्ये युद्धदुर्म्मदः । काङ्क्षितो दानवान् घ्नद्भिः पिता मम महाव्रतः ।
यस्मिन् जाते महावीर्य्ये शान्तनुर्लोकविश्रुतः । शोकं दैन्यञ्च दुःखञ्च प्राजहत् पुत्त्रलक्ष्मणि । ५५०
शक्तं परायणं प्राज्ञं स्वधर्म्मनिरतं शुचिं । वेदवेदाङ्गतत्त्वज्ञं कथं शंससि मे हतं ।
सर्व्वास्त्रविनयोपेतं शान्तं दान्तं मनस्विनं । हतं शान्तनवं श्रुत्वा मन्ये शेषं हतं बलं ।
धर्म्मादधर्म्मो बलवान् सम्प्राप्त इति मे मतिः । यत्र वृद्धं गुरुं हत्वा राज्यमिच्छन्ति पाण्डवाः ।
जामदग्न्यः पुरा रामो सर्व्वास्त्रविदनुत्तमः । अम्बार्थमुद्यतः सङ्ख्ये भीष्मेण युधि निर्ज्जितः ।
तमिन्द्रसमकर्म्माणं ककुदं सर्व्वधन्विनां । हतं शंससि मे भीष्मं किन्नु दुःखमतः परं । ५५५
असकृत् क्षत्त्रियव्राताः सङ्ख्ये येन विनिर्ज्जिताः । जामदग्न्येन रामेण परवीरनिघातिना ।
न हतो यो महाबुद्धिः स हतोऽद्य शिखण्डिना । तस्मान्नूनं महावीर्य्यात् भार्गवात् युद्धदुर्म्मदात् ।
तेजोवीर्य्यबलैर्भूयान् शिखण्डी द्रुपदात्मजः । यः शूरं कृतिनं युद्धे सर्व्वशास्त्रविशारदं ।
परमास्त्रविदं शूरं जघान भरतर्षभं । के वीरास्तममित्रघ्नमन्वयुः शस्त्रसंसदि ।
शंस मे तत् यथा चासीत् युद्धं भीष्मस्य पाण्डवैः । योषेव हतवीरा मे सेना पुत्त्रस्य सञ्जय । ५६०
अगोपमिव चोद्भ्रान्तं गोकुलं तद्बलं मम । पौरुषं सर्व्वलोकस्य परं यस्मिन् महाहवे ।
परासक्ते ततस्तस्मिन् कथमासीन्मनस्तदा । जीवितेऽप्यद्य सामर्थ्यं किमिवास्मासु सञ्जय ।
घातयित्वा महावीर्य्यं पितरं लोकधार्म्मिकं । अगाधसलिले मग्नां नौकां दृष्ट्वेव पारगः ।
भीष्मे हते भृशं दुःखात् मन्ये शोचन्ति पुत्त्रकाः । अद्रिसारमयं नूनं हृदयं मम सञ्जय ।

यच्छ्रुत्वा पुरुषव्याघ्रं हतं भीष्मं न दीर्य्यते। यस्मिन्नस्त्राणि मेधा च नीतिश्च पुरुषर्षभे। ४९५
अप्रमेयाणि दुर्द्धर्षे कथं स निहतो युधि। न चास्त्रेण न शौर्य्येण तपसा मेधया न च।
न धृत्या न पुनस्त्यागान्मृत्योः कश्चिद्विमुच्यते। कालो नूनं महावीर्य्यः सर्व्वलोकदुरत्ययः।
यत्र शान्तनवं भीष्मं हतं शंससि सञ्जय। पुत्रशोकाभिसन्तप्तो महद्दुःखमचिन्तयन्।
आशंसेऽहं पुरा त्राणं भीष्माच्छान्तनुनन्दनात्। यदादित्यमिवापश्यत् पतन्तं भुवि सञ्जय।
दुर्य्योधनः शान्तनवं किन्तदा प्रत्यपद्यत। नाहं स्वेषां परेषां वा बुद्ध्या सञ्जय चिन्तयन्। ५००
शेषं किञ्चित् प्रपश्यामि प्रत्यनीके महीक्षितां। दारुणः क्षत्रधर्म्मोऽयमृषिभिः सम्प्रदर्शितः।
यत्र शान्तनवं हत्वा राज्यमिच्छन्ति पाण्डवाः। वयं वा राज्यमिच्छामो घातयित्वा महाव्रतं।
क्षत्रधर्म्मे स्थिताः पार्था नापराध्यन्ति पुत्रकाः। एतदार्य्येण कर्त्तव्यं कृच्छ्रास्वापत्सु सञ्जय।
पराक्रमः परा शक्तिस्तत्तु तस्मिन् प्रतिष्ठितं। अनीकानि विनिघ्नन्तं ह्रीमन्तमपराजितं।
कथं शान्तनवं तातं पाण्डुपुत्रा न्यवारयन्। यथा युक्तान्यनीकानि कथं युद्धं महात्मभिः। ५०५
कथं वा निहतो भीष्मः पिता सञ्जय मे परैः। दुर्य्योधनस्य कर्णस्य शकुनेश्चापि सौबलः।
दुःशासनस्य कितवो हते भीष्मे किमब्रुवन्। यच्छरीरैरुपस्तीर्णां नरवारणवाजिनां।
शरशक्तिमहाखड्गतोमराख्यां महाभयां। प्राविशन् कितवा मन्दाः सभां युद्धविशारदाः।
प्राणद्यूते प्रतिभये के दीव्यन्ते नरर्षभाः। के जीयन्ते जितास्तत्र कृतलक्ष्या निपातिताः।
अन्ये भीष्माच्छान्तनवात् तन्ममाचक्ष्व सञ्जय। न हि मे शान्तिरस्तीह श्रुत्वा देवव्रतं हतं। ५१०
पितरं भीमकर्म्माणं भीष्ममाहवशोभिनं। आर्त्तिं मे हृदये रूढां महतीं पुत्रहानिजां।
त्वं हि मे सर्पिषेवाग्निं प्रदीपयसि सञ्जय। महान्तं भारमुद्यम्य विश्रुतं सार्व्वलौकिकं।
दृष्ट्वा विनिहतं भीष्मं मन्ये शोचन्ति पुत्रकाः। श्रोष्यामि तानि दुःखानि दुर्य्योधनकृतान्यहं।
तस्मान्मे सर्व्वमाचक्ष्व यद्वृत्तं तत्र सञ्जय। यद्वृत्तं तत्र सङ्ग्रामे मन्दस्याबुद्धिसम्भवं।
अपनीतं सुनीतं यत् तन्ममाचक्ष्व सञ्जय। यत्कृतं तत्र सङ्ग्रामे भीष्मेण जयमिच्छता। ५१५
तेजोयुक्तं कृतास्त्रेण शंस तच्चाप्यशेषतः। यथा तदभवद्युद्धं कुरुपाण्डवसेनयोः।
क्रमेण येन यस्मिंश्च काले यच्च यथाऽभवत्।
इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि धृतराष्ट्रप्रश्ने चतुर्द्दशोऽध्यायः॥ १४ ॥
॥ सञ्जय उवाच॥ त्वद्युक्तोऽयमनुप्रश्नो महाराज यथार्हसि। न तु दुर्य्योधने दोषमिममासक्तुमर्हसि।
य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः। एनसा तेन नान्यं स उपशङ्कितुमर्हति।
महाराज मनुष्येषु निन्द्यं यः सर्व्वमाचरेत्। स वध्यः सर्व्वलोकस्य निन्दितानि समाचरन्। ५२०
निकारो निकृतिप्रज्ञैः पाण्डवैस्त्वत्प्रतीक्षया। अनुभूतः सहामात्यैः क्षान्तश्च सुचिरं वने।
हयानाञ्च गजानाञ्च राज्ञाञ्चामिततेजसां। प्रत्यक्षं यन्मया दृष्टं दृष्टं योगबलेन च।
शृणु तत् पृथिवीपाल मा च शोके मनः कृथाः। दिष्टमेतत् पुरा नूनमिदमेव नराधिप।

नमस्कृत्य पितुस्तेऽहं पाराशर्य्याय धीमते । यस्य प्रसादाद्दिव्यं यत् प्राप्तं ज्ञानमनुत्तमं ।
दृष्टिश्चातीन्द्रिया राजन् दूरात् श्रवणमेव च । परचित्तस्य विज्ञानमतीतानागतस्य च । ५९५
व्युत्थितोत्पत्तिविज्ञानमाकाशे च गतिः शुभा । अस्त्रैरसङ्गो युद्धेषु वरदानान्महात्मनः ।
शृणु मे विस्तरेणेदं विचित्रं परमाद्भुतं । भारतानामभूत् युद्धं यथा तल्लोमहर्षणं ।
तेष्वनीकेषु यत्तेषु व्यूढेषु च विधानतः । दुर्य्योधनो महाराज दुःशासनमथाब्रवीत् ।
दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः । अनीकानि च सर्व्वाणि शीघ्रं त्वमनुचोदय ।
अयं स मामभिप्राप्तो वर्षपूगाभिचिन्तितः । पाण्डवानां ससैन्यानां कुरूणाञ्च समागमः । ६००
नातः कार्य्यतमं मन्ये रणे भीष्मस्य रक्षणात् । हन्यात् गुप्तो ह्यसौ पार्थान् सोमकांश्च ससृञ्जयान् ।
अब्रवीच्च विशुद्धात्मा नाहं हन्यां शिखण्डिनं । श्रूयते स्त्री ह्यसौ पूर्व्वं तस्मात् वर्ज्यो रणे मम ।
तस्मात् भीष्मो रक्षितव्यो विशेषेणेति मे मतिः । शिखण्डिनो वधे यत्ताः सर्व्वे तिष्ठन्तु मामकाः ।
तथा प्राच्याः प्रतीच्याश्च दाक्षिणात्योत्तरापथाः । सर्व्वशस्त्रेषु कुशलास्ते रक्षन्तु पितामहं ।
अरक्ष्यमाणं हि वृको हन्यात् सिंहं महाबलं । मा सिंहं जम्बुकेनेव घातयामः शिखण्डिना । ६०५
वामं चक्रं युधामन्युरुत्तमौजाश्च दक्षिणं । गोप्तारौ फाल्गुनं प्राप्तौ फाल्गुनोऽपि शिखण्डिनः ।
संरक्ष्यमाणः पार्थेन भीष्मेण च विवर्ज्जितः । यथा न हन्यात् गाङ्गेयं दुःशासन तथा कुरु ।
इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि दुर्य्योधनदुःशासनसंवादे पञ्चदशोऽध्यायः ॥ १५ ॥
॥ सञ्जय उवाच ॥ ततो रजन्यां व्युष्टायां च शब्दः सुमहानभूत् । क्रोशतां भूमिपालानां युज्यतां युज्यतामिति ।
शङ्खदुन्दुभिघोषैश्च सिंहनादैश्च भारत । हयहेषितनादैश्च रथनेमिस्वनैस्तथा ।
गजानां वृंहताञ्चैव योधानाञ्च विगर्ज्जतां । क्ष्वेलितास्फोटितोत्क्रुष्टैस्तुमुलं सर्व्वतोऽभवत् । ६१०
उदतिष्ठन् महाराज सर्व्वं युक्तमशेषतः । सूर्य्योदये महत्सैन्यं कुरुपाण्डवसेनयोः ।
राजेन्द्र तव पुत्राणां पाण्डवानां तथैव च । दुष्प्रधृष्याणि चास्त्राणि शस्त्राणि कवचानि च ।
ततः प्रकाशे सैन्यानि समदृश्यन्त भारत । त्वदीयानां परेषाञ्च शस्त्रवन्ति महान्ति च ।
तत्र नागा रथाश्चैव जाम्बूनदपरिष्कृताः । विभ्राजमाना दृश्यन्ते मेघा इव सविद्युतः ।
रथानीकान्यदृश्यन्त नगराणीव भूरिशः । अतीव शुशुभे तत्र पिता ते पूर्णचन्द्रवत् । ६१५
धनुर्भिर्ऋष्टिभिः खड्गैर्गदाभिः शक्तितोमरैः । योधाः प्रहरणैः शुभ्रैस्तेष्वनीकेष्ववस्थिताः ।
गजा पदाता रथिनस्तुरगाश्च विशाम्पते । व्यतिष्ठन् वागुराकाराः शतशोऽथ सहस्रशः ।
ध्वजा बहुविधाकारा व्यदृश्यन्त समुच्छ्रिताः । स्वेषाञ्चैव परेषाञ्च द्युतिमन्तः सहस्रशः ।
काञ्चना मणिचित्राङ्गा ज्वलन्त इव पावकाः । अर्च्चिष्मन्तो व्यरोचन्त ध्वजारोहाः सहस्रशः ।
महेन्द्रकेतवः शुभ्रा महेन्द्रसदनेष्विव । सन्नद्धास्ते प्रवीराश्च ददृशुर्युद्धकाङ्क्षिणः । ६२०
उद्यतैरायुधैश्चित्रैस्तलबद्धाः कलापिनः । ऋषभाक्षा मनुष्येन्द्राश्चमूमुखगता बभुः ।
शकुनिः सौबलः शल्य आवन्त्योऽथ जयद्रथः । विन्दानुविन्दौ कैकेयाः काम्बोजश्च सुदक्षिणः ।

श्रुतायुधश्च कालिङ्गो जयत्सेनश्च पार्थिवः । वृहद्बलश्च कौरव्यः कृतवर्म्मा च सात्वतः ।
दशैते पुरुषव्याघ्राः शूराः परिघबाहवः । अक्षौहिणीनां पतयो यज्वानो भूरिदक्षिणाः ।
एते चान्ये च बहवो दुर्य्योधनवशानुगाः । राजानो राजपुत्राश्च नीतिमन्तो महारथाः । ६२५
सन्नद्धाः समदृश्यन्त स्वेष्वनीकेष्ववस्थिताः । बद्धकृष्णाजिनाः सर्व्वे बलिनो युद्धशालिनः ।
हृष्टा दुर्य्योधनस्यार्थे ब्रह्मलोकाय दीक्षिताः । समर्था दशवाहिन्यः परिगृह्य व्यवस्थिताः ।
एकादशी धार्त्तराष्ट्री कौरवाणां महाचमूः । अग्रतः सर्व्वसैन्यानां यत्र शान्तनवोऽग्रणीः ।
श्वेतोष्णीषं श्वेतच्छत्रं श्वेतवर्म्माणमच्युतं । अपश्याम महाराज भीष्मं चन्द्रमिवोदितं ।
हेमतालध्वजं वीरं राजते स्यन्दने स्थितं । श्वेताभ्र इव शीतांशुं ददृशुः कुरुपाण्डवाः । ६३०
सृञ्जयाश्च महेष्वासा धृष्टद्युम्नपुरोगमाः । जृम्भमाणं महासिंहं दृष्ट्वा क्षुद्रमृगा यथा ।
धृष्टद्युम्नमुखाः सर्व्वे समुद्विविजिरे मुहुः । एकादशैताः श्रीजुष्टा वाहिन्यस्तव पार्थिव ।
पाण्डवानां तथा सप्त महापुरुषपालिताः । उन्मत्तमकरावर्त्तौ महाग्राहसमाकुलौ ।
युगान्ते समवेतौ द्वौ दृश्येते सागराविव । नैव नस्तादृशो राजन् दृष्टपूर्व्वो न च श्रुतः ।
अनीकानां समेतानां कौरवाणां तथाविधः । ६३५

इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि सैन्यवर्णने षोडशोऽध्यायः ॥ १६ ॥

॥ सञ्जय उवाच ॥ यथा स भगवान् व्यासः कृष्णद्वैपायनोऽब्रवीत् । तथैव सहिताः सर्व्वे समाजग्मुर्महीक्षितः ।
मघाविषयगः सोमस्तद्दिनं प्रत्यपद्यत । दीप्यमानाश्च सम्पेतुर्दिवि सप्त महाग्रहाः ।
द्विधाभूत इवादित्य उदये प्रत्यदृश्यत । ज्वलन्त्या शिखया भूयो भानुमानुदितो दिवि ।
ववाशिरे च दीप्तायां दिशि गोमायुवायसाः । लिप्समानाः शरीराणि मांसशोणितभोजनाः ।
अहन्यहनि पार्थानां वृद्धः कुरुपितामहः । भरद्वाजात्मजश्चैव प्रातरुत्थाय संयतौ । ६४०
जयोऽस्तु पाण्डुपुत्राणामित्यूचतुररिन्दमौ । युयुधाते तवार्थाय यथा स समयः कृतः ।
सर्वधर्म्मविशेषज्ञः पिता देवव्रतस्तव । समानीय महीपालानिदं वचनमब्रवीत् ।
इदं वः क्षत्रिया द्वारं स्वर्गायापावृतं महत् । गच्छध्वं तेन शक्रस्य ब्रह्मणश्च सलोकतां ।
एष वः श्रुतिजः पन्थाः पूर्व्वैः पूर्व्वतरैः कृतः । सम्भावयध्वमात्मानमव्यग्रमनसो युधि ।
नाभागश्च ययातिश्च मान्धाता नहुषो नृगः । संसिद्धाः परमं स्थानं गताः कर्म्मभिरीदृशैः । ६४५
अधर्म्मः क्षत्रियस्यैष यद्व्याधिमरणं गृहे । यदाजौ निधनं याति सोऽस्य धर्म्मः सनातनः ।
एवमुक्ता महीपाला भीष्मेण भरतर्षभ । निर्य्ययुः स्वान्यनीकानि शोभयन्तो रथोत्तमैः ।
स तु वैकर्त्तनः कर्णः सामात्यः सह बन्धुभिः । न्यासितः समरे शस्त्रं भीष्मेण भरतर्षभ ।
अपेतकर्णाः पुत्रास्ते राजानश्चैव तावकाः । निर्य्ययुः सिंहनादेन नादयन्तो दिशो दश ।
श्वेतैश्छत्रैः पताकाभिर्ध्वजवारणवाजिभिः । तान्यनीकानि शोभन्ते गजैरथपदातिभिः । ६५०
भेरीपणवशब्दैश्च दुन्दुभीनाञ्च निस्वनैः । रथनेमिनिनादैश्च बभूवाकुलिता मही ।

काञ्चनाङ्गदकेयूरैः कार्म्मुकैश्च महारथाः । भ्राजमाना व्यराजन्त साग्नयः पर्व्वता इव ।
तालेन महता भीष्मः पञ्चतारेण केतुना । विमलादित्यसङ्काशस्तस्थौ कुरुचमूपतिः ।
ये त्वदीया महेष्वासा राजानो भरतर्षभ । अवर्त्तन्त यथादेशं राजन् शान्तनवस्य ते ।
स तु गोवासनः शैव्यः सहितः सर्व्वराजभिः । ययौ मातङ्गराजेन राजार्हेण पताकिना । ६५५
पद्मवर्णस्त्वनीकानां सर्व्वेषामग्रतः स्थितः । अश्वत्थामा ययौ यत्र सिंहलाङ्गूलकेतुना ।
श्रुतायुधश्चित्रसेनः पुरुमित्रो विविंशतिः । शल्यो भूरिश्रवाश्चैव विकर्णश्च महारथः ।
एते सप्त महेष्वासा द्रोणपुत्त्रपुरोगमाः । स्यन्दनैर्व्वरवर्म्माणो भीष्मस्यासन् पुरोगमाः ।
तेषामपि महोत्सेधाः शोभयन्तो रथोत्तमाः । भ्राजमाना व्यरोचन्त जाम्बूनदमयध्वजाः ।
जाम्बूनदमयी वेदी कमण्डलुविभूषिता । केतुराचार्य्यमुख्यस्य द्रोणस्य धनुषा सह । ६६०
अनेकशतसाहस्रमनीकमनुकर्षतः । महान् दुर्य्योधनस्यासीन्नागो मणिमयो ध्वजः ।
तस्य पौरवकालिङ्गाः काम्बोजाः ससुदक्षिणाः । क्षेमधन्वा च शल्यश्च तस्थुः प्रमुखतो रथाः ।
स्यन्दनेन महार्हेण केतुना वृषभेण च । प्रकर्षन्निव सेनाऽग्रं मागधश्च रिपुं ययौ ।
तदङ्गपतिना गुप्तं कृपेण च मनस्विना । शारदाभ्रघनप्रख्यं प्राच्यानां सुमहद्बलं ।
अनीकप्रमुखे तिष्ठन् वराहेण महायशाः । शुशुभे केतुमुख्येन राजतेन जयद्रथः । ६६५
शतं रथसहस्राणां तस्यासन् वशवर्त्तिनः । अष्टौ नागसहस्राणि सादिनामयुतानि षट् ।
तत् सिन्धुपतिना राज्ञा पालितं ध्वजिनीमुखं । अनन्तरथनागाश्वमशोभत महद्बलं ।
षष्ट्या रथसहस्रैस्तु नागानामयुतेन च । पतिः सर्व्वकलिङ्गानां ययौ केतुमता सह ।
तस्य पर्व्वतसङ्काशा व्यरोचन्त महागजाः । यन्त्रतोमरतूणीरपताकाभिश्च शोभिताः ।
शुशुभे केतुमुख्येन पावकेन कलिङ्गकः । श्वेतच्छत्रेण निष्केण चामरव्यजनेन च । ६७०
केतुमानपि मातङ्गं विचित्रपरमाङ्कुशं । आस्थितः समरे राजन् मेघस्थ इव भानुमान् ।
तेजसा दीप्यमानस्तु वारणं तं समास्थितः । भगदत्तो ययौ राजा यथा वज्रधरस्तथा ।
गजस्कन्धगतावास्तां भगदत्तेन सम्मितौ । विन्दानुविन्दावावन्त्यौ केतुमन्तमनुव्रतौ ।
सरथानीकवान् व्यूहो हस्त्यङ्गो नृपशीर्षवान् । वाजिपक्षः पतत्युग्रः प्रहसन् सर्व्वतोमुखः ।
द्रोणेन विहितो राजन् राज्ञा शान्तनवेन च । तथैवाचार्य्यपुत्त्रेण वाह्लीकेन कृपेण च । ६७५
इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि सैन्यवर्णने सप्तदशोऽध्यायः ॥ १७ ॥
॥ सञ्जय उवाच ॥ ततो मुहूर्त्तात्तुमुलः शब्दो हृदयकम्पनः । अश्रूयत महाराज योधानां प्रयुयुत्सतां ।
शङ्खदुन्दुभिघोषैश्च वारणानाञ्च बृंहितैः । नेमिघोषैरथानाञ्च दीर्य्यतीव वसुन्धरा ।
हयानां हेषमाणानां योधानाञ्चैव गर्जतां । क्षणेनैव नभो भूमिः शब्देनापूरितन्तदा ।
पुत्त्राणां तव दुर्द्धर्ष पाण्डवानां तथैव च । समकम्पन्त सैन्यानि परस्परसमागमे ।
तत्र नागा रथाश्चैव जाम्बूनदविभूषिताः । भ्राजमाना व्यदृश्यन्त मेघा इव सविद्युतः । ६८०

ध्वजा बहुविधाकारास्तावकानां नराधिप। काञ्चनाङ्गदिनो रेजुर्ज्वलिता इव पावकाः।
ध्वजाश्चैव परेषाञ्च समदृश्यन्त भारत। महेन्द्रकेतवः शुभ्रा महेन्द्रसदनेष्विव।
काञ्चनैः कवचैर्व्वीरा ज्वलितार्कसमप्रभैः। सन्नद्धाः समदृश्यन्त ज्वलनार्कसमप्रभाः।
कुरुयोधवरा राजन् विचित्रायुधकार्म्मुकाः। उद्यतैरायुधैश्चित्रैस्तालबद्धाः पिनाकिनः।
ऋषभाक्षा महेष्वासाश्चमूमुखगता बभुः। पृष्ठगोपास्तु भीष्मस्य पुत्त्रास्तव नराधिप। ६८५
दुःशासनो दुर्व्विषहो दुर्म्मुखो दुःसहस्तथा। विविंशतिश्चित्रसेनो विकर्णश्च महारथः।
सत्यव्रतः पुरुमित्रो जयो भूरिश्रवाः शलः। रथा विंशतिसाहस्रास्तथैषामनुयायिनः।
अभीषाहाः शूरसेनाः शिवयोऽथ वसातयः। शाल्वा मत्स्यास्तथाऽम्बष्ठास्त्रिगर्त्ताः कैकयास्तथा।
सौवीराः कैतवाः प्राच्याः प्रतीच्योदीच्यवासिनः। द्वादशैते जनपदाः सर्व्वे शूरास्तनुत्यजः।
महता रथवंशेन ते ररक्षुः पितामहं। अनीकं दशसाहस्रं कुञ्जराणां तरस्विनां। ६९०
मागधो येन नृपतिस्तथाऽनीकस्तमन्वयात्। रथानाञ्चक्ररक्षाश्च पादरक्षाश्च दन्तिनां।
अभूवन् वाहिनीमध्ये शतानामयुतानि षट्। पादाताश्चाग्रतोऽगच्छन् धनुश्चर्म्मासिपाणयः।
अनेकशतसाहस्रा नखरप्रासयोधिनः। अक्षौहिण्यो दशैका च तव पुत्त्रस्य भारत।
अदृश्यन्त महाराज गङ्गेव यमुनान्तरे।

इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि सैन्यवर्णने अष्टादशोऽध्यायः॥ १८॥

॥ धृतराष्ट्र उवाच॥ अक्षौहिण्या दशैकाञ्च व्यूढां दृष्ट्वा युधिष्ठिरः। कथमल्पेन सैन्येन प्रत्यव्यूहत पाण्डवः। ६९५
यो वेद मानुषं व्यूहं दैवं गान्धर्व्वमासुरं। कथं भीष्मं स कौन्तेयः प्रत्यव्यूहत सञ्जय।
॥ सञ्जय उवाच॥ धार्त्तराष्ट्राण्यनीकानि दृष्ट्वा व्यूढानि पाण्डवः। अभ्यभाषत धर्म्मात्मा धर्म्मराजो धनञ्जयं।
महर्षेर्व्वचनात्तात वेदयन्ति बृहस्पतेः। संहतान् योधयेदल्पान् कामं विस्तरयेत् बहून्।
सूचीमुखमनीकं स्यादल्पानां बहुभिः सह। अस्माकञ्च तथा सैन्यमल्पीयः सुतरां परैः।
एतद्वचनमाज्ञाय महर्षेर्व्यूह पाण्डव। एतच्छ्रुत्वा धर्म्मराजं प्रत्यभाषत पाण्डवः। ७००
एष व्यूहामि ते व्यूहं राजसत्तम दुर्ज्जयं। अचलं नाम वज्राख्यं विहितं वज्रपाणिना।
यः स वात इवोद्धूतः समरे दुःसहः परैः। स नः पुरो योत्स्यते वै भीमः प्रहरतां वरः।
तेजांसि रिपुसैन्यानां मृद्नन् पुरुषसत्तमः। अग्रेऽग्रणीर्यास्यति नो युद्धोपायविचक्षणः।
यं दृष्ट्वा कुरवः सर्व्वे दुर्य्योधनपुरोगमाः। निवर्त्तिष्यन्ति संत्रस्ताः सिंहं क्षुद्रमृगा यथा।
तं सर्व्वे संश्रयिष्यामः प्राकारमकुतोभयाः। भीमं प्रहरतां श्रेष्ठं देवराजमिवामराः। ७०५
न हि सोऽस्ति पुमाल्लोके यः संक्रुद्धं वृकोदरं। द्रष्टुमत्युग्रकर्म्माणं विषहेत नरर्षभं।
एवमुक्त्वा महाबाहुस्तथा चक्रे धनञ्जयः। व्यूह्य तानि बलान्याशु प्रययौ फाल्गुनस्तथा।
सम्प्रयातान् कुरून् दृष्ट्वा पाण्डवानां महाचमूः। गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत।

भीमसेनोऽग्रणीस्तेषां धृष्टद्युम्नश्च वीर्य्यवान् । नकुलः सहदेवश्च धृष्टकेतुश्च पार्थिवः ।
विराटश्च ततः पश्चात् राजाऽप्यक्षौहिणीवृतः । भ्रातृभिः सह पुत्रैश्च सोऽभ्यरक्षत पृष्ठतः ॥ ७१०
चक्ररक्षौ तु भीमस्य माद्रीपुत्रौ महाद्युती । द्रौपदेयाः ससौभद्राः पृष्ठगोपास्तरस्विनः ।
धृष्टद्युम्नश्च पाञ्चाल्यस्तेषां गोप्ता महारथः । सहितः पृतनाशूरैरथमुख्यैः प्रभद्रकैः ।
शिखण्डी तु ततः पश्चादर्ज्जुनेनाभिरक्षितः । यत्तो भीष्मविनाशाय प्रययौ भरतर्षभ ।
पृष्ठतोऽप्यर्ज्जुनस्यासीत् युयुधानो महाबलः । चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
कैकेयो धृष्टकेतुश्च चेकितानश्च वीर्य्यवान् । भीमसेनो गदां बिभ्रत् वज्रसारमयीं दृढां ॥ ७१५
चरन् वेगेन महता समुद्रमपि शोषयेत् । एते तिष्ठन्ति सामात्याः प्रेक्षन्तस्ते जनाधिप ।
धृतराष्ट्रस्य दायादा इति बीभत्सुरब्रवीत् । भीमसेनं तदा राजन् दर्शयस्व महाबलं ।
ब्रुवाणन्तु तथा पार्थं सर्व्वसैन्यानि भारत । अपूजयंस्तदा वाग्भिरनुकूलाभिराहवे ।
राजा तु मध्यमानीके कुन्तीपुत्रो युधिष्ठिरः । बृहद्भिः कुञ्जरैर्मत्तैश्चलद्भिरचलैरिव ।
अक्षौहिण्याऽथ पाञ्चाल्यो यज्ञसेनो महामनाः । विराटमन्वयात् पश्चात् पाण्डवार्थे पराक्रमी ॥ ७२०
तेषामादित्यचन्द्राभाः कनकोत्तमभूषणाः । नानाचिह्नधरा राजन् रथेष्वासन् महाध्वजाः ।
समुत्सार्य्य ततः पश्चात् धृष्टद्युम्नो महारथः । भ्रातृभिः सह पुत्रैश्च सोऽभ्यरक्षत् युधिष्ठिरं ।
त्वदीयानां परेषाञ्च रथेषु विपुलान् ध्वजान् । अभिभूयार्ज्जुनस्यैको रथे तस्थौ महाकपिः ।
पदातास्त्वग्रतो गच्छन्नसिशक्त्यृष्टिपाणयः । अनेकशतसाहस्रा भीमसेनस्य रक्षिणः ।
वारणा दशसाहस्राः प्रभिन्नकरटामुखाः । शूरा हेममयैर्जालैर्दीप्यमाना इवाचलाः ॥ ७२५
क्षरन्त इव जीमूता महार्हाः पद्मगन्धिनः । राजानमन्वयुः पश्चाच्चलन्त इव पर्व्वताः ।
भीमसेनो गदां भीमां प्रकर्षन् परिघोपमां । प्रचकर्ष महासैन्यं दुराधर्षो महामनाः ।
तमर्कमिव दुष्प्रेक्ष्यं तपन्तमिव वाहिनीं । न शेकुः सर्व्वयोधास्ते प्रतिवीक्षितुमन्तिके ।
वज्रो नामैष स व्यूहो निर्भयः सर्व्वतोमुखः । चापविद्युत्ध्वजो घोरो गुप्तो गाण्डीवधन्वना ।
यं प्रतिव्यूह्य तिष्ठन्ति पाण्डवास्तव वाहिनीं । अजेयो मानुषे लोके पाण्डवैरभिरक्षितः ॥ ७३०
सन्ध्यां तिष्ठत्सु सैन्येषु सूर्य्यस्योदयनं प्रति । प्रावात्सपृष्ठतो वायुर्निरभ्रे स्तनयित्नुवान् ।
विष्वग्वाताश्च विववुर्नीचैः शर्करवर्षिणः । रजश्चोद्धूयमानन्तु तमसाच्छादयज्जगत् ।
पपात महती चोल्का प्राङ्मुखी भरतर्षभ । उद्यन्तं सूर्य्यमाहत्य व्यशीर्य्यत महास्वना ।
अथ सज्जीयमानेषु सैन्येषु भरतर्षभ । निष्प्रभोऽभ्युदयौ सूर्य्यः सघोषं भूश्चचाल च ।
व्यशीर्य्यत सनादा च भूस्तदा भरतर्षभ । निर्घाता बहवो राजन् दिक्षु सर्व्वासु चाभवन् ॥ ७३५
प्रादुरासीद्रजस्तीव्रं न प्राज्ञायत किञ्चन । ध्वजानां धूयमानानां सहसा मातरिश्वना ।
किङ्किणीजालबद्धानां काञ्चनस्रग्वराम्बरैः । महतां सपताकानामादित्यसमतेजसां ।

सर्व्वं श्मशानीभूतमासीत्तास्ववर्म्मिष्विव । एवन्ते पुरुषव्याघ्राः पाण्डवा युद्धनन्दिनः ।
व्यवस्थिताः प्रतिव्यूह्य तव पुत्रस्य वाहिनीं । व्यथन्त इव मज्जानो योधानां भरतर्षभ ।
दृष्ट्वाऽग्रतो भीमसेनं गदापाणिमवस्थितं । ७४०

इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि पाण्डवसैन्यव्यूहे एकोनविंशतितमोऽध्यायः ॥ १९ ॥

॥ धृतराष्ट्र उवाच ॥ सूर्य्योदये सञ्जय के तु पूर्व्वं युयुत्सवो हृष्यमाणा इवासन् । मामका वा भीष्मनेत्राः समीपे पाण्डवा वा भीमनेत्रास्तदानीं ।
केषां जघन्यौ सोमसूर्य्यौ सवायू केषां सेनां श्वापदा व्याभषन्त । केषां यूनां मुखवर्णाः प्रसन्नाः सर्व्वं मे त्वं ब्रूहि तत्त्वं यथावत् ।
॥ सञ्जय उवाच ॥ उभे सेने तुल्यमिवोपयाते उभे व्यूहे हृष्टरूपे नरेन्द्र । उभे चित्रे वनराजिप्रकाशे तथैवोभे नागरथाश्वपूर्णे ।
उभे सेने बृहत्यौ भीमरूपे तथैवोभे भारत दुर्विषह्ये । तथैवोभे स्वर्गजयाय सृष्टे तथैवोभे सत्पुरुषोपजुष्टे ।
पश्चान्मुखाः कुरवो धार्त्तराष्ट्राः स्थिताः पार्थाः प्राङ्मुखा योत्स्यमानाः । दैत्येन्द्रसेनेव च कौरवाणां देवेन्द्रसेनेव च पाण्डवानां । ७४५
चक्रे वायुः पृष्ठतः पाण्डवानां धार्त्तराष्ट्रान् श्वापदा व्याहरन्त । गजेन्द्राणां मदगन्धांश्च तीव्रान् न सेहिरे तव पुत्रस्य नागाः ।
दुर्य्योधनो हस्तिनं पद्मवर्णं सुवर्णकक्षं जातवन्तं प्रभिन्नं । समास्थितो मध्यगतः कुरूणां संस्तूयमानो वन्दिभिर्मागधैश्च ।
चन्द्रप्रभं श्वेतमथातपत्रं सौवर्णस्रग्भ्राजते चोत्तमाङ्गे । तं सर्व्वतः शकुनिः पार्व्वतीयैः सार्द्धं गान्धारैर्य्याति गान्धारराजः ।
भीष्मोऽग्रतः सर्व्वसैन्यस्य वृद्धः श्वेतच्छत्रः श्वेतधनुः सशङ्खः । श्वेतोष्णीषः पाण्डुरेण ध्वजेन श्वेतैरश्वैः श्वेतशैलप्रकाशः ।
तस्य सैन्ये धार्त्तराष्ट्राश्च सर्व्वे वाह्लीकानामेकदेशः शलश्च । ये चाम्बष्ठाः क्षत्रिया ये च सिन्धोस्तथा सौवीराः पञ्चनदाश्च शूराः । ७५०
शोणैर्हयैरुक्मरथो महात्मा द्रोणो धनुष्पाणिरदीनसत्त्वः । आस्ते गुरुः प्रायशः सर्व्वराज्ञां पश्चाच्च भूमीन्द्र इवाभियाति ।
वार्द्धक्षत्रिः सर्व्वसैन्यस्य मध्ये भूरिश्रवाः पुरुमित्रो जयश्च । शाल्वा मत्स्याः केकयाश्चेति सर्व्वे गजानीके भ्रातरो योत्स्यमानाः ।
शारद्वतश्चोत्तरधूर्म्महात्मा महेष्वासो गौतमश्चित्रयोधी । शकैः किरातैर्य्यवनैश्च सार्द्धं तदा चमूमुत्तरतोऽभियाति ।
संशप्तकानामयुतं रथानां मृत्युर्ज्जयो वाऽर्ज्जुनस्येति सृष्टाः । येनार्ज्जुनस्तेन राजन् कृतास्त्राः प्रयातारस्ते त्रिगर्त्ताश्च शूराः ।
साग्रं शतसहस्रन्तु नागानां तव भारत । नागे नागे रथशतं शतमश्वा रथे रथे । ७५५
अश्वेऽश्वे दश धानुष्का धानुष्के दश चर्म्मिणः । एवं व्यूढान्यनीकानि भीष्मेण तव भारत ।
संव्यूह्य मानुषं व्यूहं दैवं गान्धर्व्वमासुरं । दिवसे दिवसे प्राप्ते भीष्मः शान्तनवोऽग्रणीः ।
महारथौघविपुलः समुद्र इव घोषवान् । भीष्मेण धार्त्तराष्ट्राणां व्यूहः प्रत्यङ्मुखो युधि ।
अनन्तरूपा ध्वजिनी नरेन्द्र भीमा त्वदीया न तु पाण्डवानां । ताञ्चैव मन्ये बृहतीं दुष्प्रधर्ष्यां यस्य नेता केशवश्चार्ज्जुनश्च ।

इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि सैन्यवर्णने विंशोऽध्यायः ॥ २० ॥

॥ सञ्जय उवाच ॥ बृहतीं धार्त्तराष्ट्रस्य सेनां दृष्ट्वा समुद्यतां । विषादमगमत् राजा कुन्तीपुत्रो युधिष्ठिरः । ७६०
व्यूहं भीष्मेण चाभेद्यं कल्पितं प्रेक्ष्य पाण्डवः । अभेद्यमिव संप्रेक्ष्य विवर्णोऽर्ज्जुनमब्रवीत् ।

धनञ्जय कथं शक्यमस्माभिर्योद्धुमाहवे । धार्त्तराष्ट्रैर्महाबाहो येषां योद्धा पितामहः ।
अक्षोभ्योऽयमभेद्यश्च भीष्मेणामित्रकर्षिणा । कल्पितः शास्त्रदृष्टेन विधिना भूरिवर्च्चसा ।
ते वयं संशयं प्राप्ताः ससैन्याः शत्रुकर्षण । कथमस्मान्महाव्यूहादुत्थानं नो भविष्यति ।
अथार्ज्जुनोऽब्रवीत्पार्थं युधिष्ठिरममित्रहा । विषण्णमिव संप्रेक्ष्य तव राजन्ननीकिनीं । ७५५
प्रज्ञयाऽभ्यधिकान् शूरान् गुणयुक्तान् बहूनपि । जयन्त्यल्पतरा येन तन्निबोध विशाम्पते ।
तत्र ते कारणं राजन् प्रवक्ष्याम्यनसूयवे । नारदस्तमृषिर्वेद भीष्मद्रोणौ च पाण्डव ।
एवमेवार्थमाश्रित्य युद्धे देवासुरेऽब्रवीत् । पितामहः किल पुरा महेन्द्रादीन् दिवौकसः ।
न तथा बलवीर्याभ्यां जयन्ति विजिगीषवः । यथा सत्यानृशंसाभ्यां धर्म्मेणैवोद्यमेन च ।
ज्ञात्वा धर्म्ममधर्म्मञ्च लोभञ्चोद्यममास्थिताः । युध्यध्वमनहङ्कारा यतो धर्म्मस्ततो जयः । ७६०
एवं राजन् विजानीहि ध्रुवोऽस्माकं रणे जयः । यथा तु नारदः प्राह यतः कृष्णस्ततो जयः ।
गुणभूतो जयः कृष्णे पृष्ठतोऽन्वेति माधवं । तद्यथा विजयश्चास्य सन्नतिश्चापरे गुणाः ।
अनन्ततेजा गोविन्दः शत्रुपूगेषु निर्व्यथः । पुरुषः सनातनतमो यतः कृष्णस्ततो जयः ।
पुरा ह्येष हरिर्भूत्वा विकुण्ठोऽकुण्ठसायकः । सुरासुरानवस्फूर्ज्जन्नब्रवीत् के जयन्त्विति ।
अनु कृष्णं जयेमेति यैरुक्तं तत्र तैर्ज्जितं । तत्प्रसादाद्धि त्रैलोक्यं प्राप्तं शक्रादिभिः सुरैः । ७६५
तस्य ते न व्यथां काञ्चिदिह पश्यामि भारत । यस्य ते जयमाशास्ते विश्वभुक् त्रिदिवेश्वरः ।
इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि युधिष्ठिरार्ज्जुनसंवादे एकविंशोऽध्यायः ॥ २१ ॥
॥ सञ्जय उवाच ॥ ततो युधिष्ठिरो राजा स्वां सेनां समनोदयत् । प्रतिव्यूहन्ननीकानि भीष्मस्य भरतर्षभ ।
यथोद्दिष्टान्यनीकानि प्रत्यव्यूहन्त पाण्डवाः । स्वर्गं परमभिप्सन्तः सुयुद्धेन कुरूद्वहाः ।
मध्ये शिखण्डिनोऽनीकं रक्षितं सव्यसाचिना । धृष्टद्युम्नश्चरन्नग्रे भीमसेनेन पालितः ।
अनीकं दक्षिणं राजन् युयुधानेन पालितं । श्रीमता सात्वताग्र्येण शक्रेणेव धनुष्मता । ७७०

महेन्द्रयानप्रतिमं रथन्तु सोपस्करं हाटकरत्नचित्रं । युधिष्ठिरः काञ्चनभाण्डयुक्तं समास्थितो नागकुलस्य मध्ये ।
समुच्छ्रितं दन्तशलाकमस्य सुपाण्डुरं छत्रमतीव भाति । प्रदक्षिणञ्चैनमुपाचरन्ति महर्षयः संस्तुतिभिर्नरेन्द्रं ।
पुरोहिताः शत्रुवधं वदन्ति ब्रह्मर्षिसिद्धाः स्तुवन्त एनं । जप्यैश्च मन्त्रैश्च महौषधीभिः समन्ततः स्वस्त्ययनं ब्रुवन्तः ।
ततः स वस्त्राणि तथैव गाश्च फलानि पुष्पाणि तथैव निष्कान् । कुरूत्तमो ब्राह्मणसान्महात्मा कुर्व्वन् ययौ शक्र इवामरेभ्यः ।
सहस्रसूर्य्यः शतकिङ्किणीकः परार्द्ध्यजाम्बूनदहेमचित्रः । रथोऽर्ज्जुनस्याग्निरिवार्च्चिमाली विभ्राजते श्वेतहयः सुचक्रः । ७७५
तमास्थितः केशवसंगृहीतं कपिध्वजो गाण्डिवबाणपाणिः । धनुर्द्धरो यस्य समः पृथिव्यां न विद्यते नो भविता कदाचित् ।
उद्वर्त्तयिष्यंस्तव पुत्त्रसेनामतीव रौद्रं स बिभर्त्ति रूपं । अनायुधो यः सुभुजो भुजाभ्यां नरांश्च नागान् युधि भस्म कुर्य्यात् ।
स भीमसेनः सहितो यमाभ्यां वृकोदरो वीररथस्य गोप्ता । तं तत्र सिंहर्षभमत्तखेलं लोके महेन्द्रप्रतिमानकल्पं ।

समीक्ष्य सेनाग्रगतं दुरासदं संविव्यथुः पर्वतगा यथा द्विपाः। वृकोदरं वारणराजदर्पं योधास्त्वदीया भयमग्नसत्त्वाः।

अनीकमध्ये तिष्ठन्तं राजपुत्रं दुरासदं। अब्रवीत् भरतश्रेष्ठं गुडाकेशं जनार्द्दनः। ७९०

॥ वासुदेव उवाच ॥ य एष रोषात् प्रतपन् बलस्थो यो नः सेनां सिंह इवेक्षतेऽयं। स एष भीष्मः कुरुवंशकेतुर्येनाहृतास्त्रिंशतं वाजिमेधाः।

एतान्यनीकानि महानुभावं गूहन्ति मेघा इव रश्मिवन्तं। एतानि हत्वा पुरुषप्रवीर काङ्क्षस्व युद्धं भरतर्षभेण।

इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्जुनसंवादे द्वाविंशोऽध्यायः॥ २२ ॥

॥ सञ्जय उवाच ॥ धार्त्तराष्ट्रबलं दृष्ट्वा युद्धाय समुपस्थितं। अर्ज्जुनस्य हितार्थाय कृष्णो वचनमब्रवीत्।

॥ श्रीभगवानुवाच ॥ शुचिर्भूत्वा महाबाहो सङ्ग्रामाभिमुखे स्थितः। पराजयाय शत्रूणां दुर्गास्तोत्रमुदीरय।

॥ सञ्जय उवाच ॥ एवमुक्तोऽर्ज्जुनः सङ्ख्ये वासुदेवेन धीमता। अवतीर्य्य रथात् पार्थः स्तोत्रमाह कृताञ्जलिः। ७९५

॥ अर्ज्जुन उवाच ॥ नमस्ते सिद्धसेनानि आर्य्ये मन्दरवासिनि। कुमारि कालि कापालि कपिले कृष्णपिङ्गले।

भद्रकालि नमस्तुभ्यं महाकालि नमोऽस्तु ते। चण्डि चण्डे नमस्तुभ्यं तारिणि वरवर्णिनि।

कात्यायनि महाभागे करालि विजये जये। शिखिपिच्छध्वजधरे नानाभरणभूषिते।

अट्टशूलप्रहरणे खड्गखेटकधारिणि। गोपेन्द्रस्यानुजे ज्येष्ठे नन्दगोपकुलोद्भवे।

महिषासृक्प्रिये नित्यं कौशिकि पीतवासिनि। अट्टहासे कोकमुखे नमस्तेऽस्तु रणप्रिये। ८००

उमे शाकम्भरि श्वेते कृष्णे कैटभनाशिनि। हिरण्याक्षि विरूपाक्षि धूम्राक्षि च नमोऽस्तु ते।

वेदश्रुतिमहापुण्ये ब्रह्मण्ये जातवेदसि। जम्बूकटकचैत्येषु नित्यं सन्निहितालये।

त्वं ब्रह्मविद्या विद्यानां महानिद्रा च देहिनां। स्कन्दमातर्भगवति दुर्गे कान्तारवासिनि।

स्वाहाकारः स्वधा चैव कला काष्ठा सरस्वती। सावित्री वेदमाता च तथा वेदान्त उच्यते।

स्तुताऽसि त्वं महादेवि विशुद्धेनान्तरात्मना। जयो भवतु मे नित्यं त्वत्प्रसादाद्रणाजिरे। ८०५

कान्तारभयदुर्गेषु भक्तानां पालनेषु च। नित्यं वससि पाताले युद्धे जयसि दानवान्।

त्वं जम्भनी मोहिनी च माया ह्रीः श्रीस्तथैव च। सन्ध्या प्रभावती चैव सावित्री जननी तथा।

तुष्टिः पुष्टिर्धृतिर्दीप्तिश्चन्द्रादित्यविवर्द्धिनी। भूतिर्भूतिमतां सङ्ख्ये वीक्ष्यसे सिद्धचारणैः।

॥ सञ्जय उवाच ॥ ततः पार्थस्य विज्ञाय भक्तिं मानववत्सला। अन्तरीक्षगतोवाच गोविन्दस्याग्रतः स्थिता।

॥ देव्युवाच ॥ स्वल्पेनैव तु कालेन शत्रून् जेष्यसि पाण्डव। नरस्त्वमसि दुर्द्धर्ष नारायणसहायवान्। ८१०

अजेयस्त्वं रणेऽरीणामपि वज्रभृतः स्वयं। इत्येवमुक्त्वा वरदा क्षणेनान्तरधीयत।

लब्ध्वा वरन्तु कौन्तेयो मेने विजयमात्मनः। आरुरोह ततः पार्थो रथं परमसम्मतं।

कृष्णार्ज्जुनावेकरथौ दिव्यौ शङ्खौ प्रदध्मतुः। य इदं पठते स्तोत्रं कल्य उत्थाय मानवः।

यक्षरक्षःपिशाचेभ्यो न भयं विद्यते सदा। न चापि रिपवस्तेभ्यः सर्पाद्या ये च दंष्ट्रिणः।

न भयं विद्यते तस्य सदा राजकुलादपि। विवादे जयमाप्नोति बद्धो मुच्येत बन्धनात्। ८१५

दुर्गं तरति चावश्यं तथा चौरैर्व्विमुच्यते। सङ्ग्रामे विजयेन्नित्यं लक्ष्मीं प्राप्नोति केवलं।

आरोग्यबलसम्पन्नो जीवेत् वर्षशतं तदा । एतत् दृष्टं प्रसादात्तु मया व्यासस्य धीमतः ।
मोहादेतौ न जानन्ति नरनारायणावृषी । तव पुत्रा दुरात्मानः सर्व्वे मन्युवशानुगाः ।
प्राप्तकालमिदं वाक्यं कालपाशेन गुण्ठिताः । द्वैपायनो नारदश्च कण्वो रामस्तथा नरः ।
अवारयंस्तव सुतं न चासौ तत् गृहीतवान् । यत्र धर्म्मो द्युतिः कान्तिर्यत्र ह्रीः श्रीस्तथा मतिः । ८१०
यतो धर्म्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ।

इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि दुर्गास्तोत्रे त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ धृतराष्ट्र उवाच ॥ केषां प्रहृष्टास्तत्राग्रे योधा युध्यन्ति सञ्जय । उदग्रमनसः के वा के वा दीना विचेतसः ।
के पूर्व्वं प्राहरंस्तत्र युद्धे हृदयकम्पनं । मामकाः पाण्डवेयाश्च तन्ममाचक्ष्व सञ्जय ।
कस्य सेनासमुदये गन्धमाल्यसमुद्भवः । वाचः प्रदक्षिणाश्चैव योधानामतिगर्ज्जतां ।
॥ सञ्जय उवाच ॥ उभयोः सेनयोस्तत्र योधा जहृषिरे तदा । स्रजः समाः सुगन्धानामुभयत्र समुद्भवः । ८१५
संहतानामनीकानि व्यूढानां भरतर्षभ । संसर्गात् समुदीर्णानां विमर्द्दः सुमहानभूत् ।
वादित्रशब्दस्तुमुलः शङ्खभेरीविमिश्रितः । शूराणां रणशूराणां गर्ज्जतामितरेतरं ।
उभयोः सेनयोराजन् महाव्यतिकरोऽभवत् । अन्योऽन्यं वीक्ष्यमाणानां योधानां भरतर्षभ ।
कुञ्जराणाञ्च नदतां सैन्यानां च प्रहृष्यतां ।

इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि धृतराष्ट्रसञ्जयसंवादे चतुर्विंशोऽध्यायः ॥ २४ ॥

॥ धृतराष्ट्र उवाच ॥ धर्म्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः । मामकाः पाण्डवाश्चैव किमकुर्व्वत सञ्जय । ८२०
॥ सञ्जय उवाच ॥ दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्य्योधनस्तदा । आचार्य्यमुपसङ्गम्य राजा वचनमब्रवीत् ।
पश्यैतां पाण्डुपुत्राणामाचार्य्य महतीञ्चमूं । व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ।
अत्र शूरा महेष्वासा भीमार्ज्जुनसमा युधि । युयुधानो विराटश्च द्रुपदश्च महारथः ।
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्य्यवान् । पुरुजित् कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः ।
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्य्यवान् । सौभद्रो द्रौपदेयाश्च सर्व्व एव महारथाः । ८२५
अस्माकन्तु विशिष्टा ये तान्निबोध द्विजोत्तम । नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ।
भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः । अश्वत्थामा विकर्णश्च सौमदत्तिर्ज्जयद्रथः ।
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः । नानाशस्त्रप्रहरणाः सर्व्वे युद्धविशारदाः ।
अपर्य्याप्तं तदस्माकं बलं भीष्माभिरक्षितं । पर्य्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितं ।
अयनेषु तु सर्व्वेषु यथाभागमवस्थिताः । भीष्ममेवाभिरक्षन्तु भवन्तः सर्व्व एव हि । ८३०
तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः । सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ।
ततः शङ्खाश्च भेर्य्यश्च पणवानकगोमुखाः । सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ।
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ । माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ।
पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः । पौण्ड्रं दध्मौ महाशङ्खं भीमकर्म्मा वृकोदरः ।

अनन्तविजयं राजा कुन्तीपुत्त्रो युधिष्ठिरः। नकुलः सहदेवश्च सुघोषमणिपुष्पकौ। ८४५
काश्यश्च परमेष्वासः शिखण्डी च महारथः। धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः।
द्रुपदो द्रौपदेयाश्च सर्व्वशः पृथिवीपते। सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक् पृथक्।
स घोषो धार्त्तराष्ट्राणां हृदयानि व्यदारयत्। नभश्च पृथिवीञ्चैव तुमुलोऽभ्यनुनादयन्।
अथ व्यवस्थितान् दृष्ट्वा धार्त्तराष्ट्रान् कपिध्वजः। प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः।
हृषीकेशं तदा वाक्यमिदमाह महीपते। ८५०
॥ अर्ज्जुन उवाच ॥ सेनयोरुभयोर्म्मध्ये रथं स्थापय मेऽच्युत। यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान्।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे। योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः।
धार्त्तराष्ट्रस्य दुर्ब्बुद्धेर्युद्धे प्रियचिकीर्षवः।
॥ सञ्जय उवाच ॥ एवमुक्तो हृषीकेशो गुडाकेशेन भारत। सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमं।
भीष्मद्रोणप्रमुखतः सर्व्वेषाञ्च महीक्षितां। उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति। ८५५
तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान्। आचार्य्यान् मातुलान् भ्रातॄन् पुत्त्रान् पौत्त्रान् सखींस्तथा।
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि। तान् समीक्ष्य स कौन्तेयः सर्व्वान् बन्धूनवस्थितान्।
कृपया परयाविष्टो विषीदन्निदमब्रवीत्।
॥ अर्ज्जुन उवाच ॥ दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितं। सीदन्ति मम गात्राणि मुखञ्च परिशुष्यति।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते। गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते। ८६०
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः। निमित्तानि च पश्यामि विपरीतानि केशव।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे। न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च।
किन्नो राज्येन गोविन्द किं भोगै र्जीवितेन वा। येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च। आचार्य्याः पितरः पुत्त्रास्तथैव च पितामहाः।
मातुलाः श्वशुराः पौत्त्राः श्यालाः सम्बन्धिनस्तथा। एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन। ८६५
अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते। निहत्य धार्त्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्द्दन।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः। तस्मान्नार्हा वयं हन्तुं धार्त्तराष्ट्रान् स्वबान्धवान्।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव। यद्यप्येते न पश्यन्ति लोभोपहतचेतसः।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकं। कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्त्तितुं।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्द्दन। कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः। ८७०
धर्म्मे नष्टे कुलं कृत्स्नमधर्म्मोऽभिभवत्युत। अधर्म्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः। सङ्करो नरकायैव कुलघ्नानां कुलस्य च।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः। दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः।

उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः। उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्द्दन।
नरके नियतं वासो भवतीत्यनुशुश्रुम। अहो बत महत्पापं कर्त्तुं व्यवसिता वयं। ८७५
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः। यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः।
धार्त्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत्।
॥ सञ्जय उवाच ॥ एवमुक्त्वाऽर्ज्जुनः संख्ये रथोपस्थ उपाविशत्। विसृज्य सशरं चापं शोकसंविग्नमानसः।
इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतासूपनिषत्सु श्रीकृष्णार्जुनसंवादे अर्ज्जुनविषादो नामप्रथमोऽध्यायः। भीष्म
पर्व्वणि तु पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ सञ्जय उवाच ॥ तन्तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणं। विषीदन्तमिदं वाक्यमुवाच मधुसूदनः।
॥ श्रीभगवानुवाच ॥ कुतस्त्वा कश्मलमिदं विषमे समुपस्थितं। अनार्य्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्ज्जुन। ८८०
क्लैव्यं मास्मगमः पार्थ नैतत्त्वय्युपपद्यते। क्षुद्रं हृदयदौर्ब्बल्यं त्यक्त्वोत्तिष्ठ परन्तप।
॥ अर्ज्जुन उवाच ॥ कथं भीष्ममहं संख्ये द्रोणञ्च मधुसूदन। इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन।
गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके। हत्वाऽर्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान्
न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः। यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे
धार्त्तराष्ट्राः।
कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्म्मसम्मूढचेताः। यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नं। ८८५
न हि प्रपश्यामि ममापनुद्यात् यच्छोकमुच्छोषणमिन्द्रियाणां। अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यं।
॥ सञ्जय उवाच ॥ एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः। न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह।
तमुवाच हृषीकेशः प्रहसन्निव भारत। सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः।
॥ श्रीभगवानुवाच ॥ अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे। गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः।
न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः। न चैव न भविष्यामः सर्व्वे वयमतः परं। ८९०
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा। तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति।
मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः। आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत।
यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ। समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते।
नासतो विद्यते भावो नाभावो विद्यते सतः। उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः।
अविनाशि तु तद्विद्धि येन सर्व्वमिदं ततं। विनाशमव्ययस्यास्य न कश्चित् कर्त्तुमर्हति। ८९५
अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः। अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत।
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतं। उभौ तौ न विजानीतो नायं हन्ति न हन्यते।
न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः। अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने
शरीरे।

वेदाविनाशिनं नित्यं य एनमजमव्ययं । कथं स पुरुषः पार्थ कं घातयति हन्ति कं ।

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही । ९००

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः । न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ।

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च । नित्यः सर्व्वगतः स्थाणुरचलोऽयं सनातनः ।

अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते । तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ।

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतं । तथाऽपि त्वं महाबाहो नैनं शोचितुमर्हसि ।

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च । तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि । ९०५

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिदेवना ।

आश्चर्य्यवत् पश्यति कश्चिदेनमाश्चर्य्यवत् वदति तथैव चान्यः । आश्चर्य्यवत् चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् ।

देही नित्यमवध्योऽयं देहे सर्व्वस्य भारत । तस्मात् सर्व्वाणि भूतानि न त्वं शोचितुमर्हसि ।

स्वधर्म्ममपि चावेक्ष्य न विकम्पितुमर्हसि । धर्म्म्याद्धि युद्धात् श्रेयोऽन्यत् क्षत्रियस्य न विद्यते ।

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतं । सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशं । ९१०

अथ चेत्त्वमिमं धर्म्म्यं संग्रामं न करिष्यसि । ततः स्वधर्म्मं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि ।

अकीर्त्तिञ्चापि भूतानि कथयिष्यन्ति तेऽव्ययां । सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते ।

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः । येषाञ्च त्वं बहुमतो भूत्वा यास्यसि लाघवं ।

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः । निन्दन्तस्तव सामर्थ्यं ततो दुःखतरन्नु किं ।

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीं । तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः । ९१५

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ । ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ।

एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु । बुद्ध्या युक्तो यया पार्थ कर्म्मबन्धं प्रहास्यसि ।

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्म्मस्य त्रायते महतो भयात् ।

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन । बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनां ।

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः । वेदवादरताः पार्थ नान्यदस्तीति वादिनः । ९२०

कामात्मानः स्वर्गपरा जन्मकर्म्मफलप्रदां । क्रियाविशेषबहुलां भोगैश्वर्य्यगतिं प्रति ।

भोगैश्वर्य्यप्रसक्तानां तयाऽपहृतचेतसां । व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ।

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्ज्जुन । निर्द्वन्द्वो नित्यसत्त्वस्थो निर्य्योगक्षेम आत्मवान् ।

यावानर्थ उदपाने सर्व्वतः संप्लुतोदके । तावान् सर्व्वेषु वेदेषु ब्राह्मणस्य विजानतः ।

कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन । मा कर्म्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्म्मणि । ९२५

योगस्थः कुरु कर्म्माणि सङ्गं त्यक्त्वा धनञ्जय । सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ।

दूरेण ह्यवरं कर्म्म बुद्धियोगाद्धनञ्जय। बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः।
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते। तस्मात् योगाय युज्यस्व योगः कर्म्मसु कौशलं।
कर्म्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः। जन्मबन्धविनिर्म्मुक्ताः पदं गच्छन्त्यनामयं।
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति। तदा गन्तासि निर्व्वेदं श्रोतव्यस्य श्रुतस्य च। ९३०
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला। समाधावचला बुद्धिस्तदा योगमवाप्स्यसि।
॥ अर्ज्जुन उवाच ॥ स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव। स्थितधीः किं प्रभाषेत किमासीत व्रजेत किं।
॥ श्रीभगवानुवाच ॥ प्रजहाति यदा कामान् सर्व्वान् पार्थ मनोगतान्। आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते।
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थितधीर्म्मुनिरुच्यते।
यः सर्व्वत्रानभिस्नेहः तत्तत् प्राप्य शुभाशुभं। नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता। ९३५
यदा संहरते चायं कूर्म्मोऽङ्गानीव सर्व्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।
विषया विनिवर्त्तन्ते निराहारस्य देहिनः। रसवर्ज्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते।
यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः। इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः।
तानि सर्व्वाणि संयम्य युक्त आसीत मत्परः। वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता।
ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते। सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते। ९४०
क्रोधात् भवति संमोहः संमोहात् स्मृतिविभ्रमः। स्मृतिभ्रंशात् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति।
रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्। आत्मवश्यैर्व्विधेयात्मा प्रसादमधिगच्छति।
प्रसादे सर्व्वदुःखानां हानिरस्योपजायते। प्रसन्नचेतसो ह्याशु बुद्धिः पर्य्यवतिष्ठते।
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना। न चाभावयतः शान्तिरशान्तस्य कुतः सुखं।
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते। तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि। ९४५
तस्मात् यस्य महाबाहो निगृहीतानि सर्व्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।
या निशा सर्व्वभूतानां तस्यां जागर्त्ति संयमी। यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः।
आपूर्य्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्। तद्वत् कामा यं प्रविशन्ति सर्व्वे स शान्तिमाप्नोति न कामकामी।
विहाय कामान् यः सर्व्वान् पुमांश्चरति निस्पृहः। निर्म्ममो निरहङ्कारः स शान्तिमधिगच्छति।
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति। स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्व्वाणमृच्छति। ९५०
इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे साङ्ख्ययोगो नामद्वितीयोऽध्यायः। भीष्मपर्व्वणि तु षड्विंशोऽध्यायः॥ २६ ॥

॥ अर्ज्जुन उवाच ॥ ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिर्ज्जनार्द्दन। तत् किं कर्म्मणि घोरे मां नियोजयसि केशव।
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे। तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयां।
॥ भगवानुवाच ॥ लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ। ज्ञानयोगेन साङ्ख्यानां कर्म्मयोगेन योगिनां।
न कर्म्मणामनारम्भान्नैष्कर्म्म्यं पुरुषोऽश्नुते। न च सन्न्यसनादेव सिद्धिं समधिगच्छति।

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत् । कार्य्यते ह्यवशः कर्म्म सर्व्वः प्रकृतिजैर्गुणैः । ९५५
कर्म्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ।
यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्ज्जुन । कर्म्मेन्द्रियैः कर्म्मयोगमसक्तः स विशिष्यते ।
नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः । शरीरयात्रापि च ते न प्रसिध्येदकर्म्मणः ।
यज्ञार्थात् कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः । तदर्थं कर्म्म कौन्तेय मुक्तसङ्गः समाचर ।
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् । ९६०
देवान् भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ।
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः । तैर्द्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ।
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्व्वकिल्बिषैः । भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ।
अन्नात् भवन्ति भूतानि पर्ज्जन्यादन्नसम्भवः । यज्ञात् भवति पर्ज्जन्यो यज्ञः कर्म्मसमुद्भवः ।
कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवं । तस्मात् सर्व्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितं । ९६५
एवं प्रवर्त्तितं चक्रं नानुवर्त्तयतीह यः । अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ।
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते ।
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन । न चास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः ।
तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर । असक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः ।
कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः । लोकसङ्ग्रहमेवापि सम्पश्यन् कर्त्तुमर्हसि । ९७०
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते ।
न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन । नानवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणि ।
यदि ह्यहं न वर्त्तेयं जातु कर्म्मण्यतन्द्रितः । मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्व्वशः ।
उत्सीदेयुरिमे लोका न कुर्य्यां कर्म्म चेदहं । सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ।
सक्ताः कर्म्मण्यविद्वांसो यथा कुर्व्वन्ति भारत । कुर्य्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहं । ९७५
न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनां । जोषयेत् सर्व्वकर्म्माणि विद्वान् युक्तः समाचरन् ।
प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः । अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यते ।
तत्त्ववित्तु महाबाहो गुणकर्म्मविभागयोः । गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते ।
प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्म्मसु । तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ।
मयि सर्व्वाणि कर्म्माणि सन्न्यस्याध्यात्मचेतसा । निराशीर्निर्म्ममो भूत्वा युध्यस्व विगतज्वरः । ९८०
ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः ।
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतं । सर्व्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ।
सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ।
इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । तयोर्न्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ।

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्। स्वधर्मे निधनं श्रेयः परधर्मो भयावहः। ९८५

॥ अर्ज्जुन उवाच ॥ अथ केन प्रयुक्तोऽयं पापञ्चरति पूरुषः। अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः।

॥ भगवानुवाच ॥ काम एष क्रोध एष रजोगुणसमुद्भवः। महाशनो महापाप्मा विद्ध्येनमिह वैरिणं।

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च। यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतं।

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा। कामरूपेण कौन्तेय दुष्पूरेणानलेन च।

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते। एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनं। ९९०

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ। पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनं।

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः। मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः।

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना। जहि शत्रुं महाबाहो कामरूपं दुरासदं।

इति श्रीमहाभारते भीष्मपर्व्वणि श्रीमद्भगवद्गीतापर्व्वणि श्रीमद्भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे कर्म्मयोगोनाम तृतीयोऽध्यायः भीष्मपर्व्वणि तु सप्तविंशोऽध्यायः ॥ २७ ॥

॥ भगवानुवाच ॥ इमं विवस्वते योगं प्रोक्तवानहमव्ययं। विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्।

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः। स कालेनेह महता योगो नष्टः परन्तप। ९९५

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः। भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमं।

॥ अर्ज्जुन उवाच ॥ अपरं भवतो जन्म परं जन्म विवस्वतः। कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति।

॥ भगवानुवाच ॥ बहूनि मे व्यतीतानि जन्मानि तव चार्ज्जुन। तान्यहं वेद सर्व्वाणि न त्वं वेत्थ परन्तप।

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया।

यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहं। १०००

परित्राणाय साधूनां विनाशाय च दुष्कृतां। धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे।

जन्म कर्म्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्ज्जुन।

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः। बहवो ज्ञानतपसा पूता मद्भावमागताः।

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं। मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्व्वशः।

काङ्क्षन्तः कर्म्मणां सिद्धिं यजन्त इह देवताः। क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्म्मजा। १००५

चातुर्व्वर्ण्यं मया सृष्टं गुणकर्म्मविभागशः। तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययं।

न मां कर्म्माणि लिम्पन्ति न मे कर्म्मफले स्पृहा। इति मां योऽभिजानाति कर्म्मभिर्न स बध्यते।

एवं ज्ञात्वा कृतं कर्म्म पूर्व्वैरपि मुमुक्षुभिः। कुरु कर्म्मैव तस्मात्त्वं पूर्व्वैः पूर्व्वतरं कृतं।

किं कर्म्म किमकर्म्मेति कवयोऽप्यत्र मोहिताः। तत्ते कर्म्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात्।

कर्म्मणो ह्यपि बोद्धव्यं बोद्धव्यञ्च विकर्म्मणः। अकर्म्मणश्च बोद्धव्यं गहना कर्म्मणो गतिः। १०१०

कर्म्मण्यकर्म्म यः पश्येदकर्म्मणि च कर्म्म यः। स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्म्मकृत्।

यस्य सर्व्वे समारम्भाः कामसङ्कल्पवर्ज्जिताः। ज्ञानाग्निदग्धकर्म्माणं तमाहुः पण्डितं बुधाः।

त्यक्त्वा कर्म्मफलासङ्गं नित्यतृप्तो निराश्रयः । कर्म्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः ।
निराशीर्यतचित्तात्मा त्यक्तसर्व्वपरिग्रहः । शारीरं केवलं कर्म्म कुर्व्वन्नाप्नोति किल्विषं ।
यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः । समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते। १०१५
गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः । यज्ञायाचरतः कर्म्म समग्रं प्रविलीयते ।
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतं । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना ।
दैवमेवापरे यज्ञं योगिनः पर्य्युपासते । ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ।
श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति । शब्दादीन् विषयानन्ये इन्द्रियाग्निषु जुह्वति ।
सर्व्वाणीन्द्रियकर्म्माणि प्राणकर्म्माणि चापरे । आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते । १०२०
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथा परे । स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ।
अपाने जुह्वति प्राणं प्राणेऽपानं तथा परे । प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ।
अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति । सर्व्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ।
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनं । नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ।
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे । कर्म्मजान् विद्धि तान् सर्व्वानेवं ज्ञात्वा विमोक्ष्यसे। १०२५
श्रेयान् द्रव्यमयाद् यज्ञात् ज्ञानयज्ञः परन्तप । सर्व्वं कर्म्माखिलं पार्थ ज्ञाने परिसमाप्यते ।
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ।
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव । येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ।
अपि चेदसि पापेभ्यः सर्व्वेभ्यः पापकृत्तमः । सर्व्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ।
यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्ज्जुन । ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा । १०३०
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते । तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ।
श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः । ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ।
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति । नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ।
योगसन्न्यस्तकर्म्माणं ज्ञानसंछिन्नसंशयं । आत्मवन्तं न कर्म्माणि निबध्नन्ति धनञ्जय ।
तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः । छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत । १०३५

इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे ज्ञानयोगो नाम चतुर्थोऽध्यायः भीष्मपर्व्वणि तु अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ अर्ज्जुन उवाच ॥ सन्न्यासं कर्म्मणां कृष्ण पुनर्योगञ्च शंससि । यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितं ।
॥ श्रीभगवानुवाच ॥ सन्न्यासः कर्म्मयोगश्च निःश्रेयसकरावुभौ । तयोस्तु कर्म्मसन्न्यासात् कर्म्मयोगो विशिष्यते ।
ज्ञेयः स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति । निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ।
सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः । एकमप्यास्थितः सम्यगुभयोर्विन्दते फलं ।
यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते । एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति । १०४०

सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः । योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ।
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः । सर्व्वभूतात्मभूतात्मा कुर्व्वन्नपि न लिप्यते ।
नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् । पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ।
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि । इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन् ।
ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा । १०३५
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि । योगिनः कर्म्म कुर्व्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ।
युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीं । अयुक्तः कामकारेण फले सक्तो निबध्यते ।
सर्व्वकर्म्माणि मनसा सन्न्यस्यास्ते सुखं वशी । नवद्वारे पुरे देही नैव कुर्व्वन्न कारयन् ।
न कर्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः । न कर्म्मफलसंयोगं स्वभावस्तु प्रवर्त्तते ।
नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः । १०४०
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवत् ज्ञानं प्रकाशयति तत्परं ।
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः । गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्द्धूतकल्मषाः ।
विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।
इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः । निर्दोषं हि समं ब्रह्म तस्मात् ब्रह्मणि ते स्थिताः ।
न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियं । स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः । १०४५
बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखं । स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ।
ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ।
शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् । कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ।
योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः । स योगी ब्रह्मनिर्व्वाणं ब्रह्मभूतोऽधिगच्छति ।
लभन्ते ब्रह्म निर्व्वाणमृषयः क्षीणकल्मषाः । छिन्नद्वैधा यतात्मानः सर्व्वभूतहिते रताः । १०५०
कामक्रोधविमुक्तानां यतीनां यतचेतसां । अभितो ब्रह्म निर्व्वाणं वर्त्तते विदितात्मनां ।
स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः । प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ।
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः । विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ।
भोक्तारं यज्ञतपसां सर्व्वलोकमहेश्वरं । सुहृदं सर्व्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।

इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे कर्म्मसन्न्यासयोगो नाम पञ्चमोऽध्यायः भीष्मपर्व्वणितु एकोनत्रिंशोऽध्यायः ॥ २९ ॥

॥ भगवानुवाच ॥ अनाश्रितः कर्म्मफलं कार्य्यं कर्म्म करोति यः । स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः । १०५५
यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव । न ह्यसन्न्यस्तसङ्कल्पो योगी भवति कश्चन ।
आरुरुक्षोर्मुनेर्योगं कर्म्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते ।
यदा हि नेन्द्रियार्थेषु न कर्म्मस्वनुषज्जते । सर्व्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते ।

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्। आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।
बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः। अनात्मनस्तु शत्रुत्वे वर्त्तेतात्मैव शत्रुवत्। १०७०
जितात्मनः प्रशान्तस्य परमात्मा समाहितः। शीतोष्णसुखदुःखेषु तथा मानापमानयोः।
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः। युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः।
सुहृन्मित्रार्य्युदासीनमध्यस्थद्वेष्यबन्धुषु। साधुष्वपि च पापेषु समबुद्धिर्व्विशिष्यते।
योगी युञ्जीत सततमात्मानं रहसि स्थितः। एकाकी यतचित्तात्मा निराशीरपरिग्रहः।
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः। नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरं। १०७५
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः। उपविश्यासने युञ्ज्यात् योगमात्मविशुद्धये।
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः। सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्।
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः। मनः संयम्य मच्चित्तो युक्त आसीत मत्परः।
युञ्जन्नेवं सदात्मानं योगी नियतमानसः। शान्तिं निर्व्वाणपरमां मत्संस्थामधिगच्छति।
नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः। न चातिस्वप्नशीलस्य जाग्रतो नैव चार्ज्जुन। १०८०
युक्ताहारविहारस्य युक्तचेष्टस्य कर्म्मसु। युक्तस्वप्नावबोधस्य योगो भवति दुःखहा।
यदा विनियतं चित्तमात्मन्येवावतिष्ठते। निस्पृहः सर्व्वकामेभ्यो युक्त इत्युच्यते तदा।
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता। योगिनो यतचित्तस्य युञ्जतो योगमात्मनः।
यत्रोपरमते चित्तं निरुद्धं योगसेवया। यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति।
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियं। वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः। १०८५
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः। यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते।
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितं। स निश्चयेन योक्तव्यो योगो निर्व्विण्णचेतसा।
सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्व्वानशेषतः। मनसैवेन्द्रियग्रामं विनियम्य समन्ततः।
शनैः शनैरुपरमेत् बुद्ध्या धृतिगृहीतया। आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्।
यतो यतो निश्चरति मनश्चञ्चलमस्थिरं। ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्। १०९०
प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमं। उपैति शान्तरजसं ब्रह्मभूतमकल्मषं।
युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः। सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते।
सर्व्वभूतस्थमात्मानं सर्व्वभूतानि चात्मनि। ईक्षते योगयुक्तात्मा सर्व्वत्र समदर्शनः।
यो मां पश्यति सर्व्वत्र सर्व्वञ्च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति।
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः। सर्व्वथा वर्त्तमानोऽपि स योगी मयि वर्त्तते। १०९५
आत्मौपम्येन सर्व्वत्र समं पश्यति योऽर्ज्जुन। सुखं वा यदि वा दुःखं स योगी परमो मतः।
॥ अर्ज्जुन उवाच ॥ योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन। एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिरां।
चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढं। तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करं।

॥ भगवानुवाच ॥ असंशयं महाबाहो मनो दुर्निग्रहं चलं । अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ।
असंयतात्मना योगो दुष्प्राप इति मे मतिः । वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः । ११००
॥ अर्ज्जुन उवाच ॥ अयतिः श्रद्धयोपेतो योगाच्चलितमानसः । अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ।
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति । अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ।
एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः । त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ।
॥ भगवानुवाच ॥ पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते । न हि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छति ।
प्राप्य पुण्यकृताम् लोकानुषित्वा शाश्वतीः समाः । शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते । ११०५
अथ वा योगिनामेव कुले भवति धीमतां । एतद्धि दुर्लभतरं लोके जन्म यदीदृशं ।
तत्र तं बुद्धिसंयोगं लभते पौर्व्वदेहिकं । यतते च ततो भूयः संसिद्धौ कुरुनन्दन ।
पूर्व्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः । जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते ।
प्रयत्नात् यतमानस्तु योगी संशुद्धकिल्विषः । अनेकजन्मसंसिद्धस्ततो याति परां गतिं ।
तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः । कर्म्मिभ्यश्चाधिको योगी तस्मात् योगी भवार्ज्जुन । १११०
योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना । श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ।

इति श्री महाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे आत्मसंयमयोगो नामषष्ठोऽध्यायः ॥ भीष्मपर्व्वणि तु त्रिंशोऽध्यायः ॥ ३० ॥

॥ भगवानुवाच ॥ मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः । असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ।
ज्ञानन्तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः । यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।
मनुष्याणां सहस्रेषु कश्चित् यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ।
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा । १११५
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां । जीवभूतां महाबाहो ययेदं धार्य्यते जगत् ।
एतद्योनीनि भूतानि सर्व्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय । मयि सर्व्वमिदं प्रोतं सूत्रे मणिगणा इव ।
रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्य्ययोः । प्रणवः सर्व्ववेदेषु शब्दः खे पौरुषं नृषु ।
पुण्यो गन्धः पृथिव्यांच तेजश्चास्मि विभावसौ । जीवनं सर्व्वभूतेषु तपश्चास्मि तपस्विषु । ११२०
बीजं मां सर्वभूतानां विद्धि पार्थ सनातनं । बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहं ।
बलं बलवताञ्चाहं कामरागविवर्ज्जितं । धर्म्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ।
ये चैव सात्त्विका भावा राजसास्तामसाश्च ये । मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ।
त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्ययं ।
दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते । ११२५
न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः । माययापहृतज्ञाना आसुरं भावमाश्रिताः ।

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्ज्जुन । आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ।
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।
उदाराः सर्व्व एवैते ज्ञानी त्वात्मैव मे मतं । आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिं ।
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते । वासुदेवः सर्व्वमिति स महात्मा सुदुर्लभः ।  ११२०
कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । तं तं नियममास्थाय प्रकृत्या नियताः स्वया ।
यो यो यां यां तनुं भक्तः श्रद्धयार्च्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहं ।
स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हितान् ।
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसां । देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ।
अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः । परं भावमजानन्तो ममाव्ययमनुत्तमं ।  ११२५
नाहं प्रकाशः सर्व्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानाति लोको मामजमव्ययं ।
वेदाहं समतीतानि वर्त्तमानानि चार्ज्जुन । भविष्याणि च भूतानि मान्तु वेद न कश्चन ।
इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत । सर्व्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ।
येषां त्वन्तगतं पापं जनानां पुण्यकर्म्मणां । ते द्वन्द्वमोहनिर्म्मुक्ता भजन्ते मां दृढव्रताः ।
जरामरणमोक्षाय मामाश्रित्य यतन्ति ये । ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म्म चाखिलं ।  ११३०
साधिभूताधिदैवं मां साधियज्ञञ्च ये विदुः । प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ।

इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे विज्ञानयोगो नाम सप्तमोऽध्यायः ॥ भीष्मपर्व्वणि तु एकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ अर्ज्जुन उवाच ॥ किन्तत् ब्रह्म किमध्यात्मं किङ्कर्म्म पुरुषोत्तम । अधिभूतञ्च किं प्रोक्तमधिदैवं किमुच्यते ।
अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन । प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ।
॥ भगवानुवाच ॥ अक्षरं परमं ब्रह्म स्वभावोऽध्यात्ममुच्यते । भूतभावोद्भवकरो विसर्गः कर्म्मसंज्ञितः ।
अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतं । अधियज्ञोऽहमेवात्र देहे देहभृताम्बर ।  ११३५
अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरं । यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ।
यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरं । तं तमेवैति कौन्तेय सदा तद्भावभावितः ।
तस्मात् सर्व्वेषु कालेषु मामनुस्मर युध्य च । मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ।
अभ्यासयोगयुक्तेन चेतसा नान्यगामिना । परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ।

कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः । सर्व्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ।  ११४०
प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव । भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यं ।
यदक्षरं वेदविदो वदन्ति विशन्ति यत् यतयो वीतरागाः । यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ।
सर्व्वद्वाराणि संयम्य मनो हृदि निरुध्य च । मूर्द्ध्न्याधायात्मनः प्राणमास्थितो योगधारणां ।
ओं मित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् । यः प्रयाति त्यजन् देहं स याति परमां गतिं ।

अनन्यचेताः सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः। ११५५
मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतं। नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः।
आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्ज्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते।
सहस्रयुगपर्य्यन्तमहर्यद्ब्रह्मणो विदुः। रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः।
अव्यक्तात् व्यक्तयः सर्व्वाः प्रभवन्त्यहरागमे। रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके।
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते। रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे। ११६०
परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः। यः स सर्व्वेषु भूतेषु नश्यत्सु न विनश्यति।
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिं। यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम।
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया। यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततं।
यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः। प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ।
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणं। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः। ११६५
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनं। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते।
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययावर्त्तते पुनः।
नैते सृती पार्थ जानन् योगी मुह्यति कश्चन। तस्मात् सर्व्वेषु कालेषु योगयुक्तो भवार्ज्जुन।
वेदेषु यज्ञेषु तपःसु चैव दानेषु यत् पुण्यफलं प्रदिष्टं। अत्येति तत् सर्व्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यं।
इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे महापुरुषयोगो नाम अष्टमोऽध्यायः॥ भीष्मपर्व्वणि तु द्वात्रिंशोऽध्यायः॥ ३२॥

॥ भगवानुवाच॥ इदन्तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे। ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात्। ११७०
राजविद्या राजगुह्यं पवित्रमिदमुत्तमं। प्रत्यक्षावगमं धर्म्म्यं सुसुखं कर्त्तुमव्ययं।
अश्रद्दधानाः पुरुषा धर्म्मस्यास्य परन्तप। अप्राप्य मां निवर्त्तन्ते मृत्युसंसारवर्त्मनि।
मया ततमिदं सर्व्वं जगदव्यक्तमूर्त्तिना। मत्स्थानि सर्व्वभूतानि न चाहं तेष्ववस्थितः।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरं। भूतभृन्न च भूतस्थो ममात्मा भूतभावनः।
यथाकाशस्थितो नित्यं वायुः सर्व्वत्रगो महान्। तथा सर्व्वाणि भूतानि मत्स्थानीत्युपधारय। ११७५
सर्व्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकां। कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहं।
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः। भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्।
न च मां तानि कर्म्माणि निबध्नन्ति धनञ्जय। उदासीनवदासीनमसक्तं तेषु कर्म्मसु।
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरं। हेतुनाऽनेन कौन्तेय जगद्विपरिवर्त्तते।
अवजानन्ति मां मूढा मानुषीं तनुमाश्रितं। परं भावमजानन्तो मम भूतमहेश्वरं। ११८०
मोघाशा मोघकर्म्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीञ्चैव प्रकृतिं मोहिनीं श्रिताः।
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययं।

सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः। नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते।

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते। एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखं। ११८५

अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधं। मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतं।

पिताहमस्य जगतो माता धाता पितामहः। वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च।

गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत्। प्रभवः प्रलयः स्थानं निधानं वीजमव्ययं।

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च। अमृतञ्चैव मृत्युश्च सदसच्चाहमर्ज्जुन।

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते। ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देव भोगान्। ११९०

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति। एवं त्रयीधर्म्ममनुप्रपन्ना गतागतं कामकामा लभन्ते।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं।

येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः। तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्व्वकं।

अहं हि सर्व्वयज्ञानां भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते।

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः। भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि मां। ११९५

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणं।

शुभाशुभफलैरेवं मोक्ष्यसे कर्म्मबन्धनैः। सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि।

समोऽहं सर्व्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः। ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहं।

अपि चेत् सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः। १२००

क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं निगच्छति। कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति।

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिं।

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा। अनित्यमसुखं लोकमिमं प्राप्य भजस्व मां।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः।

इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः॥ भीष्मपर्व्वणि तु त्रयस्त्रिंशोऽध्यायः॥ ३३ ॥

॥ भगवानुवाच ॥ भूय एव महाबाहो शृणु मे परमं वचः। यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया। १२०५

न मे विदुः सुरगणाः प्रभवं न महर्षयः। अहमादिर्हि देवानां महर्षीणाञ्च सर्व्वशः।

यो मामजमनादिञ्च वेत्ति लोकमहेश्वरं। असंमूढः स मर्त्त्येषु सर्व्वपापैः प्रमुच्यते।

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः। सुखं दुःखं भवो भावो भयञ्चाभयमेव च।

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः। भवन्ति भावा भूतानां मत्त एव पृथग्विधाः।

महर्षयः सप्त पूर्व्वे चत्वारो मनवस्तथा। मद्भावा मानसा जाता येषां लोक इमाः प्रजाः। १२१०

एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः । सोऽविकम्पेन योगेन युज्यते नात्र संशयः ।
अहं सर्व्वस्य प्रभवो मत्तः सर्व्वं प्रवर्त्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः ।
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परं । कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ।
तेषां सततयुक्तानां भजतां प्रीतिपूर्व्वकं । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।
तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता । १२१५
॥ अर्ज्जुन उवाच ॥ परं ब्रह्म परं धाम पवित्रं परमं भवान् । पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुं ।
आहुस्त्वामृषयः सर्व्वे देवर्षिर्नारदस्तथा । असितो देवलो व्यासः स्वयञ्चैव ब्रवीषि मे ।
सर्व्वमेतदृतं मन्ये यन्मां वदसि केशव । न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ।
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम । भूतभावन भूतेश देवदेव जगत्पते ।
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः । याभिर्व्विभूतिभिर्ल्लोकानिमांस्त्वं व्याप्य तिष्ठसि । १२२०
कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् । केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ।
विस्तरेणात्मनो योगं विभूतिञ्च जनार्द्दन । भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतं ।
॥ भगवानुवाच ॥ हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः । प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ।
अहमात्मा गुडाकेश सर्व्वभूताशयस्थितः । अहमादिश्च मध्यञ्च भूतानामन्त एव च ।
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् । मरीचिर्म्मरुतामस्मि नक्षत्राणामहं शशी । १२२५
वेदानां सामवेदोऽस्मि देवानामस्मि वासवः । इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ।
रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसां । वसूनां पावकश्चास्मि मेरुः शिखरिणामहं ।
पुरोधसाञ्च मुख्यं मां विद्धि पार्थ बृहस्पतिं । सेनानीनामहं स्कन्दः सरसामस्मि सागरः ।
महर्षीणां भृगुरहं गिरामस्म्येकमक्षरं । यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ।
अश्वत्थः सर्व्ववृक्षाणां देवर्षीणाञ्च नारदः । गन्धर्व्वाणां चित्ररथः सिद्धानां कपिलो मुनिः । १२३०
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवं । ऐरावतं गजेन्द्राणां नराणाञ्च नराधिपं ।
आयुधानामहं वज्रं धेनूनामस्मि कामधुक् । प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ।
अनन्तश्चास्मि नागानां वरुणो यादसामहं । पितॄणामर्य्यमा चास्मि यमः संयमतामहं ।
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहं । मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणां ।
पवनः पवतामस्मि रामः शस्त्रभृतामहं । झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी । १२३५
सर्गाणामादिरन्तश्च मध्यञ्चैवाहमर्ज्जुन । अध्यात्मविद्या विद्यानां वादः प्रवदतामहं ।
अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च । अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ।
मृत्युः सर्व्वहरश्चाहमुद्भवश्च भविष्यतां । कीर्त्तिः श्रीर्व्वाक्च नारीणां स्मृतिर्म्मेधा धृतिः क्षमा ।
बृहत्साम तथा साम्नां गायत्री छन्दसामहं । मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ।
द्यूतं छलयतामस्मि तेजस्तेजस्विनामहं । जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहं । १२४०

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः। मुनीनामप्यहं व्यासः कवीनामुशना कविः।
दण्डो दमयतामस्मि नीतिरस्मि जिगीषतां। मौनञ्चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहं।
यच्चापि सर्व्वभूतानां बीजं तदहमर्ज्जुन। न तदस्ति विना यत्स्यान्मया भूतञ्चराचरं।
नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप। एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया।
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्ज्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवं। १२४५
अथ वा बहुनैतेन किं ज्ञातेन तवार्ज्जुन। विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्।

इति श्रीमहाभारते भीष्मपर्व्वणि भगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः॥ भीष्मपर्व्वणि तु चतुस्त्रिंशोऽध्यायः॥ ३४ ॥

॥ अर्ज्जुन उवाच॥ मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितं। यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम।
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया। त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययं।
एवमेतद्यथात्थ त्वमात्मानं परमेश्वर। द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम।
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो। योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययं। १२५०
॥ भगवानुवाच॥ पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः। नानाविधानि दिव्यानि नानावर्णाकृतीनि च।
पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा। बहून्यदृष्टपूर्व्वाणि पश्याश्चर्य्याणि भारत।
इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरं। मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि।
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा। दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरं।
॥ सञ्जय उवाच॥ एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः। दर्शयामास पार्थाय परमं रूपमैश्वरं। १२५५
अनेकवक्त्रनयनमनेकाद्भुतदर्शनं। अनेकदिव्याभरणं दिव्यानेकोद्यतायुधं।
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनं। सर्व्वाश्चर्य्यमयं देवमनन्तं विश्वतोमुखं।
दिवि सूर्य्यसहस्रस्य भवेद् युगपदुत्थिता। यदि भाः सदृशी सा स्याद् भासस्तस्य महात्मनः।
तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा। अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा।
ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः। प्रणम्य शिरसा देवं कृताञ्जलिरभाषत। १२६०

॥ अर्ज्जुन उवाच॥ पश्यामि देवांस्तव देव देहे सर्व्वांस्तथा भूतविशेषसङ्घान्। ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्व्वानुरगांश्च दिव्यान्।
अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्व्वतोऽनन्तरूपं। नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूपं।
किरीटिनं गदिनं चक्रिणञ्च तेजोराशिं सर्व्वतो दीप्तिमन्तं। पश्यामि त्वां दुर्निरीक्ष्यं समन्तात् दीप्तानलार्कद्युतिमप्रमेयं।
त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानं। त्वमव्ययः शाश्वतधर्म्मगोप्ता सनातनस्त्वं पुरुषो मतो मे।
अनादिमध्यान्तमनन्तवीर्य्यमनन्तबाहुं शशिसूर्य्यनेत्रं। पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तं। १२६५
द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्व्वाः। दृष्ट्वाऽद्भुतं रूपमिदं तवोग्रं लोकत्रयं प्रव्यथितं महात्मन्।

अमी हि त्वां सुरसङ्घा विशन्ति केचित् भीताः प्राञ्जलयो गृणन्ति । स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः।

रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च । गन्धर्व्वयक्षाऽसुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्व्वे ।

रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादं । बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहं ।

नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रं । दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमञ्च विष्णो ।११७०

दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि । दिशो न जाने न लभे च शर्म्म प्रसीद देवेश जगन्निवास ।

अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्व्वे सहैवावनिपालसङ्घैः । भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ सहास्मदीयैरपि योधमुख्यैः ।

वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि । केचिद्विलग्ना दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ।

यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति । तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभितो ज्वलन्ति ।

यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः । तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ।११७५

लेलिह्यसे ग्रसमानः समन्तात् लोकान् समग्रान् वदनैर्ज्वलद्भिः । तेजोभिरापूर्य्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ।

आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद । विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिं ।

॥ भगवानुवाच ॥ कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान् समाहर्त्तुमिह प्रवृत्तः । ऋतेऽपि त्वां न भविष्यन्ति सर्व्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ।

तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धं । मयैवैते निहताः पूर्व्वमेव निमित्तमात्रं भव सव्यसाचिन् ।

द्रोणञ्च भीष्मञ्च जयद्रथञ्च कर्णन्तथाऽन्यानपि योधवीरान् । मया हतांस्त्वं जहि माव्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् । ११८०

॥ सञ्जय उवाच ॥ एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्व्वेपमानः किरीटी । नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ।

॥ अर्ज्जुन उवाच ॥ स्थाने हृषीकेश तव प्रकीर्त्त्या जगत् प्रहृष्यत्यनुरज्यते च । रक्षांसि भीतानि दिशो द्रवन्ति सर्व्वे नमस्यन्ति च सिद्धसङ्घाः ।

कस्माच्च ते न नमेरन् महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे । अनन्त देवेश जगन्निवास त्वमक्षरं सदसत् तत् परं यत् ।

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानं । वेत्ताऽसि वेद्यञ्च परञ्च धाम त्वया ततं विश्वमनन्तरूप ।

वायुर्यमोऽग्निर्व्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च । नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते । ११८५

नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्व्वत एव सर्व्व । अनन्तवीर्य्यामितविक्रमस्त्वं सर्व्वं समाप्नोषि ततोऽसि सर्व्वः ।

सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति । अजानता महिमानं तवेदं मया प्रमादात् प्रणयेन वापि ।

यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु। एकोऽथ वाऽप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयं।
पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्। न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः।
तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यं। पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुं। १२९०

अदृष्टपूर्व्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे। तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास।

किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव। तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्त्ते।

॥ भगवानुवाच ॥ मया प्रसन्नेन तवार्ज्जुनेदं रूपं परं दर्शितमात्मयोगात्। तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्व्वं।

न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः। एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर।
मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदं। व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य। १२९५

॥ सञ्जय उवाच ॥ इत्यर्ज्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः। आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा।

॥ अर्ज्जुन उवाच ॥ दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्द्दन। इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः।
॥ भगवानुवाच ॥ सुदुर्द्दर्शमिदं रूपं दृष्टवानसि यन्मम। देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः।
नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्ज्जुन। ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप। १३००
मत्कर्म्मकृत् मत्परमो मद्भक्तः सङ्गवर्जितः। निर्वैरः सर्व्वभूतेषु यः स मामेति पाण्डव।

इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे विश्वरूपदर्शनो नाम एकादशोऽध्यायः ॥ भीष्मपर्व्वणि तु पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ अर्ज्जुन उवाच ॥ एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते। ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः।
॥ भगवानुवाच ॥ मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा मताः।
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्य्युपासते। सर्व्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवं।
सन्नियम्येन्द्रियग्रामं सर्व्वत्र समबुद्धयः। ते प्राप्नुवन्ति मामेव सर्व्वभूतहिते रताः। १३०५
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसां। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते।
ये तु सर्व्वाणि कर्म्माणि मयि संन्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायन्त उपासते।
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि न चिरात् पार्थ मय्यावेशितचेतसां।
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय। निवसिष्यसि मय्येव अत ऊर्द्ध्वं न संशयः।
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरं। अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय। १३१०
अभ्यासेऽप्यसमर्थोऽसि मत्कर्म्मपरमो भव। मदर्थमपि कर्म्माणि कुर्व्वन् सिद्धिमवाप्स्यसि।
अथैतदप्यशक्तोऽसि कर्त्तुं मद्योगमाश्रितः। सर्व्वकर्म्मफलत्यागं ततः कुरु यतात्मवान्।
श्रेयो हि ज्ञानमभ्यासात् ज्ञानात् ध्यानं विशिष्यते। ध्यानात् कर्म्मफलत्यागस्त्यागाच्छान्तिरनन्तरं।

अद्वेष्टा सर्व्वभूतानां मैत्रः करुण एव च। निर्म्ममो निरहङ्कारः समदुःखसुखः क्षमी।
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः। मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः। १२१५
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः। हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः।
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः। सर्व्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः।
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति। शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः।
समः शत्रौ च मित्रे च तथा मानापमानयोः। शीतोष्णसुखदुःखेषु समः सङ्गविवर्ज्जितः।
तुल्यनिन्दास्तुतिर्म्मौनी सन्तुष्टो येन केनचित्। अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः। १२२०
ये तु धर्म्म्यामृतमिदं यथोक्तं पर्य्युपासते। श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः।

इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः॥ भीष्मपर्व्वणि तु षट्त्रिंशोऽध्यायः॥ ३६॥

॥ अर्ज्जुन उवाच॥ प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च। एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयञ्च केशव।
॥ भगवानुवाच॥ इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते। एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः।
क्षेत्रज्ञञ्चापि मां विद्धि सर्व्वक्षेत्रेषु भारत। क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम।
तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत्। स च यो यत्प्रभावश्च तत् समासेन मे शृणु। १२२५
ऋषिभिर्बहुधा गीतं छन्दोभिर्व्विविधैः पृथक्। ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्व्विनिश्चितैः।
महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः।
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः। एतत् क्षेत्रं समासेन सविकारमुदाहृतं।
अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्ज्जवं। आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः।
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च। जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं। १२३०
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु। नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु।
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी। विविक्तदेशसेवित्वमरतिर्जनसंसदि।
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनं। एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा।
ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते। अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते।
सर्व्वतःपाणिपादन्तत्सर्व्वतोऽक्षिशिरोमुखं। सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति। १२३५
सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितं। असक्तं सर्व्वभृच्चैव निर्गुणं गुणभोक्तृ च।
बहिरन्तश्च भूतानामचरं चरमेव च। सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्।
अविभक्तञ्च भूतेषु विभक्तमिव च स्थितं। भूतभर्त्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च।
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते। ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्व्वस्य धिष्ठितं।
इति क्षेत्रं तथा ज्ञानं ज्ञेयञ्चोक्तं समासतः। मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते। १२४०
प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि। विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्।

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्। कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु।
उपद्रष्टाऽनुमन्ता च भर्त्ता भोक्ता महेश्वरः। परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः।
य एवं वेत्ति पुरुषं प्रकृतिञ्च गुणैः सह। सर्व्वथा वर्त्तमानोऽपि न स भूयोऽभिजायते।
ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना। अन्ये साङ्ख्येन योगेन कर्म्मयोगेन चापरे। १२४५
अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते। तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः।
यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमं। क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ।
समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरं। विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति।
समं पश्यन् हि सर्व्वत्र समवस्थितमीश्वरं। न हिनस्त्यात्मनात्मानं ततो याति परां गतिं।
प्रकृत्यैव तु कर्म्माणि क्रियमाणानि सर्व्वशः। यः पश्यति तथात्मानमकर्त्तारं स पश्यति। १२५०
यदा भूतपृथग्भावमेकस्थमनुपश्यति। तत एव च विस्तारं ब्रह्म सम्पद्यते तदा।
अनादित्वात् निर्गुणत्वात् परमात्माऽयमव्ययः। शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते।
यथा सर्व्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते। सर्व्वत्रावस्थितो देहे तथात्मा नोपलिप्यते।
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत।
क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा। भूतप्रकृतिमोक्षञ्च ये विदुर्यान्ति ते परं। १२५५

इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे क्षेत्रक्षेत्रज्ञयोगो नाम त्रयोदशोऽध्यायः॥ भीष्मपर्व्वणि तु सप्तत्रिंशोऽध्यायः॥ ३७॥

॥ भगवानुवाच ॥ परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमं। यज्ज्ञात्वा मुनयः सर्व्वे परां सिद्धिमितो गताः।
इदं ज्ञानमुपाश्रित्य मम साधर्म्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च।
मम योनिर्म्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहं। सम्भवः सर्व्वभूतानां ततो भवति भारत।
सर्व्वयोनिषु कौन्तेय मूर्त्तयः सम्भवन्ति याः। तासां ब्रह्म महद्योनिरहं वीजप्रदः पिता।
सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः। निबध्नन्ति महाबाहो देहे देहिनमव्ययं। १२६०
तत्र सत्त्वं निर्म्मलत्वात् प्रकाशकमनामयं। सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ।
रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवं। तन्निबध्नाति कौन्तेय कर्म्मसङ्गेन देहिनं।
तमस्त्वज्ञानजं विद्धि मोहनं सर्व्वदेहिनां। प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत।
सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत। ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत।
रजस्तमश्चाभिभूय सत्त्वं भवति भारत। रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा। १२६५
सर्व्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते। ज्ञानं यदा तदा विद्यात् विवृद्धं सत्त्वमित्युत।
लोभः प्रवृत्तिरारम्भः कर्म्मणामशमः स्पृहा। रजस्येतानि जायन्ते विवृद्धे भरतर्षभ।
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च। तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन।
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत्। तदोत्तमविदां लोकानमलान् प्रतिपद्यते।

रजसि प्रलयं गत्वा कर्म्मसङ्गिषु जायते । तथा प्रलीनस्तमसि मूढयोनिषु जायते । ११७०

कर्म्मणः सुकृतस्याहुः सात्त्विकं निर्म्मलं फलं । रजसस्तु फलं दुःखमज्ञानं तमसः फलं ।

सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ।

ऊर्द्धं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ।

नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टाऽनुपश्यति । गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ।

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् । जन्ममृत्युजरादुःखैर्व्विमुक्तोऽमृतमश्नुते । ११७५

॥ अर्ज्जुन उवाच ॥ कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो । किमाचारः कथञ्चैतांस्त्रीन् गुणानतिवर्त्तते ।

॥ भगवानुवाच ॥ प्रकाशञ्च प्रवृत्तिञ्च मोहमेव च पाण्डव । न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ।

उदासीनवदासीनो गुणैर्यो न विचाल्यते । गुणा वर्त्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ।

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः । तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ।

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः । सर्व्वारम्भपरित्यागी गुणातीतः स उच्यते । ११८०

माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ।

ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च । शाश्वतस्य च धर्म्मस्य सुखस्यैकान्तिकस्य च ।

इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे गुणत्रयविभागो नाम चतुर्द्दशोऽध्यायः ॥ भीष्मपर्व्वणि तु अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

॥ भगवानुवाच ॥ ऊर्द्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययं । छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ।

अधश्चोर्द्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः । अधश्च मूलान्यनुसन्ततानि कर्म्मानुबन्धीनि मनुष्यलोके ।

न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा । अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा । ११८५

ततः पदं तत् परिमार्गितव्यं यस्मिन् गता न निवर्त्तन्ति भूयः । तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ।

निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः । द्वन्द्वैर्व्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययन्तत् ।

न तद्भासयते सूर्य्यो न शशाङ्को न पावकः । यद् गत्वा न निवर्त्तन्ते तद्धाम परमं मम ।

ममैवांशो जीवलोके जीवभूतः सनातनः । मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ।

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् । ११९०

श्रोत्रं चक्षुः स्पर्शनञ्च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायं विषयानुपसेवते ।

उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितं । विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ।

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितं । यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ।

यदादित्यगतं तेजो जगद्भासयतेऽखिलं । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकं ।

गामाविश्य च भूतानि धारयाम्यहमोजसा । पुष्णामि चौषधीः सर्व्वाः सोमो भूत्वा रसात्मकः । ११९५

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्व्विधं ।

सर्व्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च। वेदैश्च सर्व्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहं।
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः।
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः। १४००
यो मामेवमसंमूढो जानाति पुरुषोत्तमं। स सर्व्ववित् भजति मां सर्व्वभावेन भारत।
इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ। एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत।

इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः॥ भीष्मपर्व्वणि तु एकोनचत्वारिंशोऽध्यायः॥ ३९॥

॥ भगवानुवाच ॥ अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः। दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्ज्जवं।
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनं। दया भूतेष्वलोलुप्त्वं मार्द्दवं ह्रीरचापलं।
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता। भवन्ति सम्पदं दैवीमभिजातस्य भारत। १४०५
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च। अज्ञानञ्चाभिजातस्य पार्थ सम्पदमासुरीं।
दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता। मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव।
द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च। दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु।
प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुराः। न शौचं नापि चाचारो न सत्यं तेषु विद्यते।
असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरं। अपरस्परसंभूतं किमन्यत् कामहैतुकं। १४१०
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः। प्रभवन्त्युग्रकर्म्माणः क्षयाय जगतोऽहिताः।
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः। मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः।
चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः। कामोपभोगपरमा एतावदिति निश्चिताः।
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः। ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान्।
इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथं। इदमस्तीदमपि मे भविष्यति पुनर्द्धनं। १४१५
असौ मया हतः शत्रुर्हनिष्ये चापरानपि। ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया। यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः।
अनेकचित्तविभ्रान्ता मोहजालसमावृताः। प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ।
आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः। यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्व्वकं।
अहङ्कारं बलं दर्पं कामं क्रोधञ्च संश्रिताः। मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः। १४२०
तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिं।
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्।
एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः। आचरत्यात्मनः श्रेयस्ततो याति परां गतिं।

यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिं । १४२५

तस्मात् शास्त्रं प्रमाणन्ते कार्य्याकार्य्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्त्तुमिहार्हसि ।

इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः ॥ भीष्मपर्व्वणि तु चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ अर्ज्जुन उवाच ॥ ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः । तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ।

॥ भगवानुवाच ॥ त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्त्विकी राजसी चैव तामसी चेति तां शृणु ।

सत्त्वानुरूपा सर्व्वस्य श्रद्धा भवति भारत । श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः । प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः । १४३०

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः । दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ।

कर्षयन्तः शरीरस्थं भूतग्राममचेतसः । माञ्चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ।

आहारस्त्वपि सर्व्वस्य त्रिविधो भवति प्रियः । यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ।

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ।

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । आहारा राजसस्येष्टा दुःखशोकामयप्रदाः । १४३५

यातयामं गतरसं पूति पर्य्युषितञ्च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियं ।

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ।

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् । इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसं ।

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणं । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ।

देवद्विजगुरुप्राज्ञपूजनं शौचमार्ज्जवं । ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते । १४४०

अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् । स्वाध्यायाभ्यसनञ्चैव वाङ्मयं तप उच्यते ।

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ।

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः । अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ।

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् । क्रियते तदिह प्रोक्तं राजसं चलमध्रुवं ।

मूढग्राहेणात्मनो यत् पीड़या क्रियते तपः । परस्योत्सादनार्थं वा तत्तामसमुदाहृतं । १४४५

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतं ।

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः । दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतं ।

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृतं ।

ओंतत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः । ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ।

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनां । १४५०

तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः । दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ।

सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते । प्रशस्ते कर्म्मणि तथा सच्छब्दः पार्थ युज्यते ।

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते। कर्म्म चैव तदर्थीयं सदित्येवाभिधीयते।
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत्। असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह।
इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे श्रद्धात्रयविभागो नाम सप्तदशोऽध्यायः॥ भीष्मपर्व्वणि तु एकचत्वारिंशोऽध्यायः॥ ४१॥

॥ अर्ज्जुन उवाच॥ सन्न्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुं। त्यागस्य च हृषीकेश पृथक् केशिनिषूदन। १४५५
॥ भगवानुवाच॥ काम्यानां कर्म्मणां न्यासं सन्न्यासं कवयो विदुः। सर्व्वकर्म्मफलत्यागं प्राहुस्त्यागं विचक्षणाः।
त्याज्यं दोषवदित्येके कर्म्म प्राहुर्मनीषिणः। यज्ञदानतपः कर्म्म न त्याज्यमिति चापरे।
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम। त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्त्तितः।
यज्ञदानतपः कर्म्म न त्याज्यं कार्य्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणां।
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च। कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमं। १४६०
नियतस्य तु सन्न्यासः कर्म्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः।
दुःखमित्येव यत् कर्म्म कायक्लेशभयात्त्यजेत्। स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्।
कार्य्यमित्येव यत्कर्म्म नियतं क्रियतेऽर्ज्जुन। सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः।
न द्वेष्ट्यकुशलं कर्म्म कुशले नानुषज्जते। त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः।
न हि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः। यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते। १४६५
अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्म्मणः फलं। भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित्।
पञ्चैमानि महाबाहो कारणानि निबोध मे। सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्व्वकर्म्मणां।
अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधं। विविधाश्च पृथक् चेष्टा दैवञ्चैवात्र पञ्चमं।
शरीरवाङ्मनोभिर्यत् कर्म्म प्रारभते नरः। न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः।
तत्रैवं सति कर्त्तारमात्मानं केवलन्तु यः। पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्म्मतिः। १४७०
यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते।
ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्म्मचोदना। करणं कर्म्म कर्त्तेति त्रिविधः कर्म्मसंग्रहः।
ज्ञानं कर्म्म च कर्त्ता च त्रिधैव गुणभेदतः। प्रोच्यते गुणसंख्याने यथावत् शृणु तान्यपि।
सर्व्वभूतेषु येनैकं भावमव्ययमीक्षते। अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकं।
पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्। वेत्ति सर्व्वेषु भूतेषु तज्ज्ञानं विद्धि राजसं। १४७५
यत्तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहैतुकं। अतत्त्वार्थवदल्पञ्च तत्तामसमुदाहृतं।
नियतं सङ्गरहितमरागद्वेषतः कृतं। अफलप्रेप्सुना कर्म्म यत्तत्सात्त्विकमुच्यते।
यत्तु कामेप्सुना कर्म्म साहङ्कारेण वा पुनः। क्रियते बहुलायासं तद्राजसमुदाहृतं।
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषं। मोहादारभ्यते कर्म्म यत्तत्तामसमुच्यते।
मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः। सिद्ध्यसिद्ध्योर्निर्व्विकारः कर्त्ता सात्त्विक उच्यते। १४८०

रागी कर्म्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः । हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः ।
अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः । विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते ।
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु । प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ।
प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये । बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ।
यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव च । अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी । १८८५
अधर्म्मं धर्म्ममिति या मन्यते तमसावृता । सर्व्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ।
धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ।
यया तु धर्म्मकामार्थान् धृत्या धारयतेऽर्ज्जुन । प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ।
यया स्वप्नं भयं शोकं विषादं मदमेव च । न विमुञ्चति दुर्म्मेधा धृतिः सा पार्थ तामसी ।
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ । अभ्यासाद्रमते यत्र दुःखान्तञ्च निगच्छति । १८९०
यत्तदग्रे विषमिव परिणामेऽमृतोपमं । तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजं ।
विषयेन्द्रियसंयोगात् यत्तदग्रेऽमृतोपमं । परिणामे विषमिव तत्सुखं राजसं स्मृतं ।
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः । निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतं ।
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ।
ब्राह्मणक्षत्त्रियविशां शूद्राणाञ्च परन्तप । कर्म्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः । १८९५
शमो दमस्तपः शौचं क्षान्तिरार्ज्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजं ।
शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनं । दानमीश्वरभावश्च क्षात्त्रकर्म्म स्वभावजं ।
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म्म स्वभावजं । परिचर्य्यात्मकं कर्म्म शूद्रस्यापि स्वभावजं ।
स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः । स्वकर्म्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ।
यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततं । स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः । १९००
श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात् । स्वभावनियतं कर्म्म कुर्व्वन्नाप्नोति किल्बिषं ।
सहजं कर्म्म कौन्तेय सदोषमपि न त्यजेत् । सर्व्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ।
असक्तबुद्धिः सर्व्वत्र जितात्मा विगतस्पृहः । नैष्कर्म्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति ।
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे । समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ।
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च । शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च । १९०५
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः । ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ।
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहं । विमुच्य निर्म्ममः शान्तो ब्रह्मभूयाय कल्पते ।
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्व्वेषु भूतेषु मद्भक्तिं लभते परां ।
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरं ।
सर्व्वकर्म्माण्यपि सदा कुर्व्वाणो मद्व्यपाश्रयः । मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययं । १९१०

चेतसा सर्व्वकर्म्माणि मयि संन्यस्य मत्परः। बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव।
मच्चित्तः सर्व्वदुर्गाणि मत्प्रसादात्तरिष्यसि। अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि।
यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे। मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति।
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्म्मणा। कर्त्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत्।
ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति। भ्रामयन् सर्व्वभूतानि यन्त्रारूढानि मायया। १५१५
तमेव शरणं गच्छ सर्व्वभावेन भारत। तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतं।
इति ते ज्ञानमाख्यातं गुह्यात् गुह्यतरं मया। विमृश्यैतदशेषेण यथेच्छसि तथा कुरु।
सर्व्वगुह्यतमं भूयः शृणु मे परमं वचः। इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितं।
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे।
सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्व्वपापेभ्यो मोक्षयिष्यामि मा शुचः। १५२०
इदन्ते नातपस्काय नाभक्ताय कदाचन। न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति।
य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति। भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः।
न च तस्मात् मनुष्येषु कश्चिन्मे प्रियकृत्तमः। भविता न च मे तस्मादन्यः प्रियतरो भुवि।
अध्येष्यते च य इमं धर्म्म्यं संवादमावयोः। ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः।
श्रद्धावाननसूयश्च शृणुयादपि यो नरः। सोऽपि मुक्तः शुभांल्लोकान् प्राप्नुयात् पुण्यकर्म्मणां। १५२५
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा। कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय।
॥ अर्ज्जुन उवाच ॥ नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादात् मयाऽच्युत। स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव।
॥ सञ्जय उवाच ॥ इत्यहं वासुदेवस्य पार्थस्य च महात्मनः। संवादमिममश्रौषमद्भुतं लोमहर्षणं।
व्यासप्रसादात् श्रुतवानेतत् गुह्यतमं परं। योगं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयं।
राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतं। केशवार्ज्जुनयोः पुण्यं हृष्यामि च मुहुर्म्मुहुः। १५३०
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः। विस्मयो मे महाराज हृष्यामि च पुनः पुनः।
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्द्धरः। तत्र श्रीर्व्विजयो भूतिर्ध्रुवा नीतिर्म्मतिर्मम।

इति श्रीमहाभारते भीष्मपर्व्वणि श्रीभगवद्गीतापर्व्वणि भगवद्गीतासूपनिषत्सु श्रीकृष्णार्ज्जुनसंवादे संन्यासयोगो नाम अष्टादशोऽध्यायः भीष्मपर्व्वणि तु द्विचत्वारिंशोऽध्यायः॥ समाप्तञ्च भगवद्गीतापर्व्व॥

## ॥ अथ भीष्मवधपर्व्व ॥ ३॥

॥ सञ्जय उवाच ॥ ततो धनञ्जयं दृष्ट्वा बाणगाण्डीवधारिणं। पुनरेव महानादं व्यसृजन्त महारथाः।
पाण्डवाः सोमकाश्चैव ये चैषामनुयायिनः। दध्मुः सम्मुदिताः शङ्खान् वीराः सागरसम्भवान्।
ततो भेर्य्यश्च पेश्यश्च क्रकचा गोविषाणिकाः। सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत्। १५३५
अथ देवाः सगन्धर्व्वाः पितरश्च जनेश्वर। सिद्धचारणसङ्घाश्च समीयुस्ते दिदृक्षया।

अन्वयुश्च महाभागाः पुरस्कृत्य जनार्दनम्। अन्वीयुस्तत्र सहिता द्रष्टुं तदैशसं महत्।
ततो युधिष्ठिरो दृष्ट्वा युद्धाय समुपस्थिते। ते सेने सागरप्रख्ये मुहुः प्रचलिते नृप।
विमुच्य कवचं वीरो निक्षिप्य च वरायुधं। अवरुह्य रथात्तूर्णं पद्भ्यामेव कृताञ्जलिः।
पितामहमभिप्रेक्ष्य धर्मराजो युधिष्ठिरः। वाग्यतः प्रययौ येन प्राङ्मुखो रिपुवाहिनीं। १४४०
तं प्रयान्तमभिप्रेक्ष्य कुन्तीपुत्रो धनञ्जयः। अवतीर्य्य रथात्तूर्णं भ्रातृभिः सहितोऽन्वगात्।
वासुदेवश्च तं राजन् पृष्ठतोऽनुजगाम ह। यथामुख्याश्च राजानस्तमन्वाजग्मुरुत्सुकाः।
॥ अर्ज्जुन उवाच ॥ किन्ते व्यवसितं राजन् यदस्मानपहाय वै। पद्भ्यामेव प्रयातोऽसि प्राङ्मुखो रिपुवाहिनीं।
॥ भीमसेन उवाच ॥ क्व गमिष्यसि राजेन्द्र निक्षिप्तकवचायुधः। दंशितेष्वरिसैन्येषु भ्रातॄनुत्सृज्य पार्थिव।
॥ नकुल उवाच ॥ एवं गते त्वयि ज्येष्ठे मम भ्रातरि भारत। भीर्मे दुनोति हृदयं ब्रूहि गन्ता भवान् क्व नु। १४४५
॥ सहदेव उवाच ॥ अस्मिन् रणसमूहे वै वर्त्तमाने महाभये। योद्धव्ये क्व नु गन्ताऽसि शत्रूनभिमुखो नृप।
॥ सञ्जय उवाच ॥ एवमाभाष्यमाणोऽपि भ्रातृभिः कुरुनन्दन। नोवाच वाग्यतः किञ्चित् गच्छत्येव युधिष्ठिरः।
तानुवाच महाप्राज्ञो वासुदेवो महामनाः। अभिप्रायोऽस्य विज्ञातो मयेति प्रहसन्निव।
एष भीष्मं तथा द्रोणं गौतमं शल्यमेव च। अनुमान्य गुरून् सर्व्वान् योत्स्यते सह शत्रुभिः।
श्रूयते हि पुरा कल्पे गुरूनननुमान्य यः। अनुमान्य यथाशास्त्रं यस्तु युध्येत् महत्तरैः। १४५०
ध्रुवस्तस्य जयो युद्धे भवेदिति मतिर्मम। एवं ब्रुवति कृष्णे तु धार्त्तराष्ट्रचमूं प्रति।
हाहाकारो महानासीत् निःशब्दास्त्वपरेऽभवन्। दृष्ट्वा युधिष्ठिरं वीरा धार्त्तराष्ट्रस्य सैनिकाः।
मिथः सङ्कथयाञ्चक्रुरेषो हि कुलपांसनः। व्यक्तं भीत इवाभ्येति राजाऽसौ भीष्ममन्तिकात्।
युधिष्ठिरः ससोदर्य्यः शरणार्थं प्रयाचकः। धनञ्जये कथं नाथे पाण्डुपुत्रे वृकोदरे।
नकुले सहदेवे च भीतोऽभ्येति च पाण्डवः। न नूनं क्षत्रियकुले जातोऽयं प्रथितो भुवि। १४५५
यथाऽस्य हृदयं भीतमल्पसत्त्वस्य संयुगे। ततस्ते सैनिकाः सर्व्वे प्रशंसन्ति स्म कौरवान्।
हृष्टाः सुमनसो भूत्वा चैलानि दुधुवुः पृथक्। व्यनिन्दन्त ततः सर्व्वे योधास्तत्र विशाम्पते।
युधिष्ठिरं ससोदर्य्यं सहितं केशवेन तु। ततस्तत् कौरवं सैन्यं धिक्कृत्वा तु युधिष्ठिरं।
निःशब्दमभवत् तूर्णं पुनरेव विशाम्पते। किं नु वक्ष्यति राजाऽसौ किं भीष्मः प्रतिवक्ष्यति।
किं भीमः समरश्लाघी किं नु कृष्णार्ज्जुनाविति। विवक्षितं किमस्येति संशयः सुमहानभूत्। १४६०
उभयोः सेनयो राजन् युधिष्ठिरकृते तदा। सोऽवगाह्य चमूं शत्रोः शरशक्तिसमाकुलां।
भीष्ममेवाभ्ययात् तूर्णं भ्रातृभिः परिवारितः। तमुवाच ततः पादौ कराभ्यां पीड्य पाण्डवः।
भीष्मं शान्तनवं राजा युद्धाय समुपस्थितं।
॥ युधिष्ठिर उवाच ॥ आमन्त्रये त्वां दुर्द्धर्ष त्वया योत्स्यामहे सह। अनुजानीहि मां तत्र आशिषश्चैव योजय।
॥ भीष्म उवाच ॥ यद्येवं नाधिगच्छेथा युधि मां पृथिवीपते। शपेयं त्वां महाराज पराभावाय भारत। १४६३
प्रीतोऽस्मि पुत्र युध्यस्व जयं प्राप्नुहि पाण्डव। यत्तेऽभिलषितं चान्यत् तदवाप्नुहि संयुगे।

व्रियताञ्च वरः पार्थ किमस्मत्तोऽभिकाङ्क्षसि। एवं गते महाराज न तवास्ति पराजयः।
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्। इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः।
अतस्त्वां क्लीववद्वाक्यं ब्रवीमि कुरुनन्दन। बद्धोऽस्म्यर्थेन कौरव्यैर्युद्धादन्यत् किमिच्छसि।
॥ युधिष्ठिर उवाच॥ मन्त्रयस्व महाप्राज्ञ हितार्थी मम नित्यशः। युध्यस्व कौरवस्यार्थे ममैष सततं वरः। १५७०
॥ भीष्म उवाच ॥ राजन् किमत्र साह्यन्ते करोमि कुरुनन्दन। कामं योत्स्ये परस्यार्थे ब्रूहि यत्ते विवक्षितं।
॥ युधिष्ठिर उवाच॥ तस्मात् पृच्छाम्यहं तात पितामह नमोऽस्तु ते। कथं जयेयं सङ्ग्रामे भवन्तमपराजितं।
एतन्मे मन्त्रय हितं यदि श्रेयः प्रपश्यसि।
॥ भीष्म उवाच ॥ न तं पश्यामि कौन्तेय यो मां युध्यन्तमाहवे। विजयेत पुमान् कश्चिदपि साक्षात् शतक्रतुः।
॥ युधिष्ठिर उवाच ॥ हन्तपृच्छामि तस्मात्त्वां पितामह नमोऽस्तु ते। बधोपायं ब्रवीहि त्वमात्मनः समरे परैः। १५७५
॥ भीष्म उवाच ॥ न स्म तं तात पश्यामि समरे यो जयेत मां। न तावत् मृत्युकालो मे पुनरागमनं कुरु।
॥ सञ्जय उवाच॥ ततो युधिष्ठिरो वाक्यं भीष्मस्य कुरुनन्दनः। शिरसा प्रतिजग्राह भूयस्तमभिवाद्य च।
प्रागात् पुनर्महाबाहुराचार्य्यस्य रथं प्रति। पश्यतां सर्व्वसैन्यानां मध्येन भ्रातृभिः सह।
स द्रोणमभिवाद्याथ कृत्वा चैव प्रदक्षिणं। उवाच वाचा दुर्द्धर्षमाचार्यं श्रेयसे वचः।
आमन्त्रये त्वां दुर्द्धर्ष योत्स्ये विगतकल्मषः। कथं जये रिपून् सर्व्वाननुज्ञातस्त्वया द्विज। १५८०
॥ द्रोण उवाच॥ यदि मां नाधिगच्छेथा युद्धाय कृतनिश्चयः। शपेयं त्वां महाराज पराभावाय सर्व्वशः।
तत् युधिष्ठिर तुष्टोऽस्मि पूजितश्च त्वया ऽनघ। अनुजानामि युध्यस्व विजयं समवाप्नुहि।
करवाणि च ते कामं ब्रूहि यत्ते विवक्षितं। एवं गते महाराज युद्धादन्यत् किमिच्छसि।
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्। इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः।
अतस्त्वां क्लीववत् ब्रूयां युद्धादन्यत् किमिच्छसि। योत्स्यामि कौरवस्यार्थे तवाशास्यो जयो मम। १५८५
॥ युधिष्ठिर उवाच॥ जयमाशास्स्व मे ब्रह्मन् मन्त्रयस्व च मद्धितं। युध्यस्व कौरवस्यार्थे वर एष वृतो मया।
॥ द्रोण उवाच॥ ध्रुवस्ते विजयो राजन् यस्य मन्त्री हरिस्तव। अहं त्वामभिजानामि रणे शत्रून् विजेष्यसि।
यतो धर्म्मस्ततः कृष्णो यतः कृष्णस्ततो जयः। युध्यस्व गच्छ कौन्तेय पृच्छ मां किं ब्रवीमि ते।
॥ युधिष्ठिर उवाच॥ पृच्छामि त्वां द्विजश्रेष्ठ शृणु मे यद्विवक्षितं। कथं जयेयं सङ्ग्रामे भवन्तमपराजितं।
॥ द्रोण उवाच॥ न तेऽस्ति विजयस्तावत् यावत् युध्याम्यहं रणे। ममाशु निधने राजन् यतस्व सह सोदरैः। १५९०
युधिष्ठिर उवाच ॥ हन्त तस्मात् महाबाहो बधोपायं वदात्मनः। आचार्य्य प्रणिपत्यैष पृच्छामि त्वां नमोऽस्तु ते।
॥ द्रोण उवाच ॥ न शत्रुं तात पश्यामि यो मां हन्याद्रणे स्थितं। युध्यमानं सुसंरब्धं शरवर्षौघवर्षिणं।
ऋते प्रायगतं राजन् न्यस्तशस्त्रमचेतनं। हन्यान्मां युधि यो वीरः सत्यमेतत् ब्रवीमि ते।
अस्त्रञ्चाहं रणे जह्यां श्रुत्वा सुमहदप्रियं। श्रद्धेयवाक्यात् पुरुषात् सत्यमेतत् ब्रवीमि ते।
॥ सञ्जय उवाच॥ एतत् श्रुत्वा महाराज भारद्वाजस्य धीमतः। अनुमान्य तमाचार्य्यं प्रायाच्छारद्वतं प्रति। १५९५
सोऽभिवाद्य कृपं राजन् कृत्वा चाभिप्रदक्षिणं। उवाच दुर्द्धर्षतरं वाक्यं वाक्यविशारदः।

अनुमानयित्वा योत्स्येऽहं गुरो विगतकल्मषः। जयेयञ्च रिपून् सर्वाननुज्ञातस्त्वयाऽनघ।
॥ कृप उवाच ॥ यदि मां नाभिगच्छेथा युद्धाय कृतनिश्चयः। शपेयं त्वां महाराज पराभावाय सर्व्वशः।
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्। इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः।
तेषामर्थे महाराज योद्धव्यमिति मे मतिः। ब्रवीम्यतः क्लीववत्त्वां युद्धादन्यत् किमिच्छसि। १५००
॥ युधिष्ठिर उवाच ॥ हन्त पृच्छामि ते तस्मादाचार्य्य शृणु मे वचः। इत्युक्त्वा व्यथितो राजा नोवाच गतचेतनः।
॥ सञ्जय उवाच ॥ तं गौतमः प्रत्युवाच विज्ञायास्य विवक्षितं। अवध्योऽहं महाराज युध्यस्व जयमाप्नुहि।
प्रीतस्तेऽभिगमेनाहं जयन्तव नराधिप। आशासिष्ये सदोत्थाय सत्यमेतत् ब्रवीमि ते।
एतत् श्रुत्वा महाराज गौतमस्य वचस्तदा। अनुमान्य कृपं राजा प्रययौ येन मद्रराट्।
स शल्यमभिवाद्याऽथ कृत्वा चाभिप्रदक्षिणं। उवाच राजा दुर्द्धर्षमात्मनिःश्रेयसं वचः। १५०५
अनुमानये त्वां दुर्द्धर्ष योत्स्ये विगतकल्मषः। जयेयञ्च परान् राजन् अनुज्ञातस्त्वया रिपून्।
॥ शल्य उवाच ॥ यदि मां नाभिगच्छेथा युद्धाय कृतनिश्चयः। शपेयं त्वां महाराज पराभावाय वै रणे।
तुष्टोऽस्मि पूजितश्चास्मि यत्काङ्क्षसि तदस्तु ते। अनुजानामि चैव त्वां युध्यस्व जयमाप्नुहि।
ब्रूहि वै वचनं वीर केनार्थः किं ददामि ते। एवं गते महाराज युद्धादन्यत् किमिच्छसि।
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्। इति सत्यं वचो राजन् बद्धोऽस्म्यर्थेन कौरवैः। १५१०
करिष्यामि हि ते कामं भागिनेय यथेप्सितं। ब्रवीम्यतः क्लीववत्त्वां युद्धादन्यत् किमिच्छसि।
॥ युधिष्ठिर उवाच ॥ मन्त्रयस्व महाराज नित्यं मद्धितमुत्तमं। कामं युध्य परस्यार्थे वरमेतं वृणोम्यहं।
॥ शल्य उवाच ॥ किमत्र ब्रूहि साह्यं ते करोमि नृपसत्तम। कामं योत्स्ये परस्यार्थे बद्धोऽस्म्यर्थेन कौरवैः।
॥ युधिष्ठिर उवाच ॥ स एव मे वरः शल्य उद्योगे यस्त्वया कृतः। सूतपुत्रस्य सङ्ग्रामे कार्य्यस्तेजोवधस्त्वया।
॥ शल्य उवाच ॥ सम्पत्स्यत्येष ते कामः कुन्तीपुत्र युधिष्ठिर। यथेप्सितं गच्छ युध्य प्रतिजाने जये तव। १५१५
॥ सञ्जय उवाच ॥ अनुमान्याथ कौन्तेयो मातुलं मद्रकेश्वरं। निर्जगाम महासैन्यात् भ्रातृभिः परिवारितः।
वासुदेवस्तु राधेयमाहवेऽभिजगाम ह। तत एनमुवाचेदं पाण्डवार्थे गदाग्रजः।
श्रुतं मे कर्ण भीष्मस्य द्वेषात् किल न योत्स्यसि। अस्मान् वरय राधेय यावत् भीष्मो न हन्यते।
हते तु भीष्मे राधेय पुनरेष्यसि संयुगं। धार्त्तराष्ट्रस्य साहाय्यं यदि पश्यसि चेत् समं।
॥ कर्ण उवाच ॥ न विप्रियं करिष्यामि धार्त्तराष्ट्रस्य केशव। त्यक्तप्राणं हि मां विद्धि दुर्य्योधनहितैषिणं। १५२०
तत् श्रुत्वा वचनं कृष्णः स न्यवर्त्तत भारत। युधिष्ठिरपुरोगैश्च पाण्डवैः सह सङ्गतः।
अथ सैन्यस्य मध्ये तु प्राक्रोशत् पाण्डवाग्रजः। योऽस्मान् वृणोति तमहं वरये साह्यकारणात्।
अथ तान् समभिप्रेक्ष्य युयुत्सुरिदमब्रवीत्। प्रीतात्मा धर्म्मराजानं कुन्तीपुत्रं युधिष्ठिरं।
अहं योत्स्यामि भवतः संयुगे धार्त्तराष्ट्रजान्। युष्मदर्थे महाराज यदि मां वृणुषेऽनघ।
॥ युधिष्ठिर उवाच ॥ एह्येहि सर्व्वे योत्स्यामस्तव भ्रातृनपण्डितान्। युयुत्सो वासुदेवश्च वयञ्च ब्रूम सर्व्वशः। १५२५
वृणोमि त्वां महाबाहो युध्यस्व मम कारणात्। त्वयि तन्तुश्च पिण्डश्च धृतराष्ट्रस्य दृश्यते।

भजस्वास्मान् राजपुत्र भजमानान् महाद्युते । न भविष्यति दुर्ब्बुद्धिर्धार्त्तराष्ट्रो ह्यमर्षणः ।
॥ सञ्जय उवाच ॥ ततो युयुत्सुः कौरव्यान् परित्यज्य सुतांस्तव । जगाम पाण्डुपुत्राणां सेनां विश्राव्य दुन्दुभिं ।
ततो युधिष्ठिरो राजा सम्प्रहृष्टो महाभुजः । जग्राह कवचं भूयो दीप्तिमत् कनकोज्ज्वलं ।
प्रत्यपद्यन्त ते सर्व्वे रथान् स्वान् पुरुषर्षभाः । ततो व्यूहं यथापूर्व्वं प्रत्यव्यूहन्त ते पुनः । १५१०
अवादयन् दुन्दुभींश्च शतशश्चैव पुष्कलान् । सिंहनादांश्च विविधान् विनेदुः पुरुषर्षभाः ।
रथस्थान् पुरुषव्याघ्रान् पाण्डवान् प्रेक्ष्य पार्थिवाः । धृष्टद्युम्नादयः सर्व्वे पुनर्जहृषिरे तदा ।
गौरवं पाण्डुपुत्राणां मान्यान् मानयतांश्च तान् । दृष्ट्वा महीक्षितस्तत्र पूजयाञ्चक्रिरे भृशं ।
सौहृदञ्च कृपाञ्चैव प्राप्तकालं महात्मनां । दयाञ्च ज्ञातिषु परां कथयाञ्चक्रिरे नृपाः ।
साधु साध्विति सर्व्वत्र निश्चेरुः स्तुतिसंहिताः । वाचः पुण्याः कीर्त्तिमतां मनोहृदयहर्षणाः । १५१५
म्लेच्छाश्चार्य्याश्च ये तत्र ददृशुः शुश्रुवुस्तदा । वृत्तं तं पाण्डुपुत्राणां रुरुदुस्ते सगद्गदाः ।
ततो जघ्नुर्महाभेरीः शतशश्चैव पुष्कलान् । शङ्खांश्च गोक्षीरनिभान् दध्मुर्हृष्टा मनस्विनः ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मद्रोणकृपशल्याभिगमने त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
॥ धृतराष्ट्र उवाच ॥ एवं व्यूढेष्वनीकेषु मामकेष्वितरेषु च । के पूर्व्वं प्राहरंस्तत्र कुरवः पाण्डवास्तथा ।
॥ सञ्जय उवाच ॥ भ्रातुस्तद्वचनं श्रुत्वा पुत्रो दुःशासनस्तव । भीष्मं प्रमुखतः कृत्वा प्रययौ सेनया सह ।
तथैव पाण्डवाः सर्व्वे भीमसेनपुरोगमाः । भीष्मेण युद्धमिच्छन्तः प्रययुर्हृष्टमानसाः । १५२०
क्ष्वेडाः किलकिलाशब्दाः क्रकचा गोविषाणिकाः । भेरीमृदङ्गमुरजा हयकुञ्जरनिःस्वनाः ।
उभयोः सेनयो राजंस्ततस्ते स्म समाद्रवन् । वयं तान् प्रति नर्दन्तस्तदासीत्तुमुलं महत् ।
महान्त्यनीकानि महासमुच्छ्रये समागमे पाण्डवधार्त्तराष्ट्रयोः । चकम्पिरे शङ्खमृदङ्गनिःस्वनैः प्रकम्पितानीव वनानि वायुना ।
नरेन्द्रनागाश्वसमाकुलानामभ्यायतानामशिवे मुहूर्त्ते । बभूव घोषस्तुमुलश्चमूनां वातोद्धुतानामिव सागराणां ।
तस्मिन् समुत्थिते शब्दे तुमुले लोमहर्षणे । भीमसेनो महाबाहुः प्राणदत् गोवृषो यथा । १५२५
शङ्खदुन्दुभिनिर्घोषं वारणानाञ्च बृंहितं । सिंहनादञ्च सैन्यानां भीमसेनरवोऽभ्यभूत् ।
हयानां ह्रेषमाणानामनीकेषु सहस्रशः । सर्व्वानभ्यभवच्छब्दान् भीमसेनस्य निस्वनः ।
तच्छ्रुत्वा निनदं तस्य सैन्यास्तव वितत्रसुः । जीमूतस्येव नदतः शक्राशनिसमस्वनं ।
वाहनानि च सर्व्वाणि शकृन्मूत्रं प्रसुस्रुवुः । शब्देन तस्य वीरस्य सिंहस्येवेतरे मृगाः ।
दर्शयन् घोरमात्मानं महाभ्रमिव नादयन् । भीषयंस्ते सुतांस्तव तत एतान् समभ्ययात् । १५३०
तमायान्तं महेष्वासं सोदर्य्याः पर्य्यवारयन् । छादयन्तः शरव्रातैर्मेघा इव दिवाकरं ।
दुर्य्योधनश्च पुत्रस्ते दुर्मुखो दुःसहस्तथा । दुःशासनश्चातिरथस्तथा दुर्मर्षणो नृप ।
विविंशतिश्चित्रसेनो विकर्णश्च महारथः । पुरुमित्रो जयो भोजः सौमदत्तिश्च वीर्य्यवान् ।
महाचापानि धुन्वन्तो जलदा इव विद्युतः । आददानाश्च नाराचान्निर्म्मुक्ताशीविषोपमान् ।

अथ ते द्रौपदीपुत्राः सौभद्रश्च महारथः । नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः । १६५५
धार्त्तराष्ट्रान् प्रतिययुरर्द्दयन्तः शितैः शरैः । वज्रैरिव महावेगैः शिखराणि धराभृतां ।
तस्मिन् प्रथमसङ्ग्रामे भीमज्यातलनिःस्वनैः । तावकानां परेषाञ्च नासीत् कश्चित् पराङ्मुखः ।
लाघवं द्रोणशिष्याणामपश्यं भरतर्षभ । निमित्तवेधिनां राजन् शरानुत्सृजतां भृशं ।
नोपशाम्यति निर्घोषो धनुषां कूजतां तथा । विनिश्चेरुः शरा दीप्ता ज्योतींषीव नभस्तलात् ।
सर्व्वे त्वन्ये महीपालाः प्रेक्षका इव भारत । ददृशुर्द्दर्शनीयं तं भीमं ज्ञातिसमागमं । १६६०
ततस्ते जातसंरम्भाः परस्परकृतागसः । अन्योऽन्यस्पर्द्धया राजन् व्यायच्छन्त महारथाः ।
कुरुपाण्डवसेने ते हस्त्यश्वरथसङ्कुले । शुशुभाते रणेऽतीव पटे चित्रगते इव ।
ततस्ते पार्थिवाः सर्व्वे प्रगृहीतशरासनाः । अन्तर्द्धीयत चादित्यः सैन्येन रजसा वृतः ।
सहसैन्याः समापेतुः पुत्त्रस्य तव शासनात् । तेषामाधावतां तत्र गजाश्वकलिलो महान् ।
सिंहनादरवोन्मिश्रः शङ्खभेरीसमाकुलः । स घोषवाञ्छरग्राहधनुर्नागोऽसिकच्छपः । १६६५
व्यावल्गितपुरोवात आसीत् क्षुब्धाब्धिवत्स्वनः । युधिष्ठिरेण चादिष्टा पार्थिवास्ते सहस्रशः ।
सहसैन्याः समापेतुः पुत्त्रस्य तव वाहिनीं । उभयोः सेनयोस्तीव्रः सैन्यानां सुसमागमः ।
प्रयुद्धानां प्रभग्नानां पुनरावर्त्ततामपि । न तु स्वेषां परेषाञ्च विशेषः समदृश्यत ।
तस्मिन् सुतुमुले युद्धे वर्त्तमाने महाभये । अतिसर्व्वाण्यनीकानि पिता तेऽतिव्यरोचत ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि युद्धारम्भे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
॥ सञ्जय उवाच ॥ पूर्व्वाह्णे तस्य रौद्रस्य युद्धमह्नो विशाम्पते । प्रावर्त्तत महाघोरं राज्ञां देहावकर्त्तनं । १६७०
कुरूणां सृञ्जयानाञ्च सङ्ग्रामे विजिगीषतां । सिंहानामिव संह्रादो दिवमुर्व्वीञ्च नादयन् ।
आसीत् किलकिलाशब्दस्तलशङ्खरवैः सह । जज्ञिरे सिंहनादाश्च नराणां प्रतिगर्जतां ।
तलत्राभिहतश्चैव ज्याशब्दो भरतर्षभ । पत्तीनां पादशब्दश्च वाजिनाञ्च महास्वनः ।
तोत्राङ्कुशनिपातश्च आयुधानाञ्च निस्वनः । घण्टाशब्दश्च नागानामन्योऽन्यमभिधावतां ।
तस्मिन् समुदितः शब्दस्तुमुलो लोमहर्षणः । बभूव रथनिर्घोषः पर्जन्यनिनदोपमः । १६७५
ते मनःक्रूरमास्थाय समभित्यक्तजीविताः । पाण्डवानभ्यवर्त्तन्त सर्व्व एवोच्छ्रितध्वजाः ।
स्वयं शान्तनवो राजन्नभ्यधावद्धनञ्जयं । प्रगृह्य कार्म्मुकं घोरं कालदण्डोपमं रणे ।
अर्ज्जुनोऽपि धनुर्गृह्य गाण्डीवं लोकविश्रुतं । अभ्यधावत तेजस्वी गाङ्गेयं रणमूर्द्धनि ।
तावुभौ कुरुशार्दूलौ परस्परवधैषिणौ । गाङ्गेयस्तु रणे पार्थं विद्ध्वा नाकम्पयद्बली ।
तथैव पाण्डवो राजन् भीष्मं नाकम्पयत् युधि । सात्यकिस्तु महेष्वासः कृतवर्म्माणमभ्ययात् । १६८०
तयोः सुतुमुलं युद्धं सुमहल्लोमहर्षणं । सात्यकिः कृतवर्म्माणं कृतवर्म्मा च सात्यकिं ।
आनर्च्छतुः सनिर्घोषौ तक्षमाणौ परस्परं । तौ शराचितसर्व्वाङ्गौ शुशुभाते महाबलौ ।
वसन्ते पुष्पशबलौ पुष्पिताविव किंशुकौ । अभिमन्युर्महेष्वासो बृहद्बलमयोधयत् ।

ततः कोशलको राजा सौभद्रस्य विशाम्पते । ध्वजं चिच्छेद समरे सारथिञ्चाभ्यपातयत् ।
सौभद्रस्तु ततः क्रुद्धः पातिते रथसारथौ । बृहद्बलं महाराज विव्याध नवभिः शरैः । १९८५
तथापराभ्यां भल्लाभ्यां शिताभ्यामरिमर्द्दनः । ध्वजमेकेन चिच्छेद पार्ष्णिमेकेन सारथिं ।
अन्योन्यञ्च शरैस्तीक्ष्णैस्ततक्षतुररिन्दमौ । मानिनं समरे दीप्तं कृतवैरं महारथं ।
भीमसेनस्तव सुतं दुर्य्योधनमयोधयत् । तावुभौ नरशार्दूलौ कुरुमुख्यौ महारथौ ।
अन्योऽन्यं शरवर्षाभ्यां ववृषाते रणाजिरे । तौ वीक्ष्य तु महात्मानौ कृतिनौ चित्रयोधिनौ ।
विस्मयः सर्व्वभूतानां समपद्यत भारत । दुःशासनस्तु नकुलं प्रत्युद्याय महारथं । १९९०
अविध्यन्निशितैर्बाणैर्बहुभिर्म्मर्म्मभेदिभिः । तस्य माद्रीसुतः केतुं सशरञ्च शरासनं ।
चिच्छेद निशितैर्बाणैः प्रहसन्निव भारत । अथैनं पञ्चविंशत्या क्षुद्रकाणां समर्पयत् ।
पुत्रस्तु तव दुर्द्धर्षो नकुलन्तु महाहवे । तुरङ्गांश्चैव चिच्छेद ध्वजञ्चैव न्यपातयत् ।
दुर्म्मुखः सहदेवन्तु प्रत्युद्याय महाबलं । विव्याध शरवर्षेण यतमानं महाहवे ।
सहदेवस्ततो वीरो दुर्म्मुखस्य महाहवे । शरेण भृशतीक्ष्णेन पातयामास सारथिं । १९९५
तावन्योऽन्यं समासाद्य समरे युद्धदुर्म्मदौ । त्रासयेतां शरैर्घोरैः कृतप्रतिकृतैषिणौ ।
युधिष्ठिरः स्वयं राजा मद्रराजानमभ्ययात् । तस्य मद्रपतिश्चापं द्विधा चिच्छेद पश्यतः ।
तदपास्य धनुश्छिन्नं कुन्तीपुत्रो युधिष्ठिरः । अन्यत् कार्म्मुकमादत्त वेगवत् बलवत्तरं ।
ततो मद्रेश्वरं राजा शरैः सन्नतपर्व्वभिः । छादयामास संक्रुद्धस्तिष्ठतिष्ठेति चाब्रवीत् ।
धृष्टद्युम्नस्ततो द्रोणमभ्यधावत भारत । तस्य द्रोणः सुसंक्रुद्धः परासुकरणं दृढं । २०००
धनुश्चिच्छेद समरे पाञ्चाल्यस्य महात्मनः । शरञ्चैव महाघोरं कालदण्डमिवापरं ।
प्रेषयामास समरे सोऽस्य काये न्यमज्जत । अथान्यद्धनुरादाय सायकांश्च चतुर्द्दश ।
द्रोणं द्रुपदपुत्रस्तु प्रतिविव्याध संयुगे । तावन्योऽन्यं सुसंरब्धौ चक्रतुः सुभृशं रणं ।
सौमदत्तिं रणे शङ्खो रभसं रभसो युधि । अभ्युद्ययौ महाराज तिष्ठतिष्ठेति चाब्रवीत् ।
तस्य वै दक्षिणं वीरो निर्बिभेद रणे भुजं । सौमदत्तिस्ततः शङ्खं जत्रुदेशे समाहनत् । २००५
तयोः समभवत् युद्धं घोररूपं विशाम्पते । दृप्तयोः समरे तूर्णं देवदानवयोरिव ।
वाह्लीकन्तु रणे क्रुद्धः क्रुद्धरूपं विशाम्पते । अभ्यद्रवदमेयात्मा धृष्टकेतुर्म्महारथः ।
वाह्लीकस्तु ततो राजन् धृष्टकेतुममर्षणं । शरैर्बहुभिरानर्च्छत् सिंहनादमथानदत् ।
चेदिराजस्तु संक्रुद्धो वाह्लीकं नवभिः शरैः । विव्याध समरे तूर्णं मत्तो मत्तमिव द्विपं ।
तौ तत्र समरे क्रुद्धौ नर्दन्तौ च मुहुर्म्मुहुः । समीयतुः सुसंक्रुद्धावङ्गारकबुधाविव । २०१०
राक्षसं क्रूरकर्म्माणं क्रूरकर्म्मा घटोत्कचः । अलम्बुषं प्रत्युदियाद्बलं शक्र इवाहवे ।
घटोत्कचस्तु संक्रुद्धं राक्षसं तं महाबलं । नवत्या सायकैस्तीक्ष्णैर्द्दारयामास भारत ।
अलम्बुषस्तु समरे भैमसेनिं महाबलं । बहुधा दारयामास शरैः सन्नतपर्व्वभिः ।

चक्राजितां ततस्तौ तु संयुगे शरविक्षतौ । शिखण्डी समरे राजन् द्रौणिमभ्युद्ययौ बली ।
अश्वत्थामा ततः क्रुद्धं शिखण्डिनमवस्थितं । नाराचेन सुतीक्ष्णेन भृशं विद्ध्वा व्यकम्पयत् । १८१५
शिखण्ड्यपि ततो राजन् द्रोणपुत्रमताडयत् । सायकेन सुपीतेन तीक्ष्णेन निशितेन च ।
जघ्नतुस्तौ तदाऽन्योऽन्यं शरैर्बहुविधैर्मृधे । भगदत्तं रणे शूरं विराटो वाहिनीपतिः ।
अभ्ययात्त्वरितो राजंस्ततो युद्धमवर्त्तत । विराटो भगदत्तन्तु शरवर्षेण भारत ।
अभ्यवर्षत्सुसंक्रुद्धो मेघो वृष्ट्या इवाचलं । भगदत्तस्ततस्तूर्णं विराटं पृथिवीपतिः ।
छादयामास समरे मेघः सूर्य्यमिवोदितं । बृहत्क्षत्रञ्च कैकेयं कृपः शारद्वतो ययौ । १८२०
तं कृपः शरवर्षेण छादयामास भारत । गौतमञ्च सुसंक्रुद्धं शरवृष्ट्याऽभ्यपूरयत् ।
ततोऽन्योन्यं हयान् हत्वा धनुश्छित्वा च भारत । विरथावसियुद्धाय समीयतुरमर्षणौ ।
तयोस्तदभवत् युद्धं घोररूपं दुरासदं । द्रुपदस्तु ततो राजा सैन्धवं वै जयद्रथं ।
अभ्युद्ययौ सुसंरब्धो हृष्टरूपं परन्तपः । ततः सैन्धवको राजा द्रुपदं विशिखैस्त्रिभिः ।
ताडयामास समरे स च तं प्रत्यविध्यत । तयोः समभवत् युद्धं घोररूपं सुदारुणं । १८२५
ईक्षितृप्रीतिजननं शुक्राङ्गारकयोरिव । विकर्णस्तु सुतस्तुभ्यं श्रुतसोमं महाबलं ।
अभ्यगाज्जवनैरश्वैस्ततो युद्धमवर्त्तत । विकर्णः श्रुतसोमन्तु विद्ध्वा नाकम्पयच्छरैः ।
श्रुतसोमो विकर्णञ्च तदद्भुतमिवाभवत् । सुशर्म्माणं नरव्याघ्रश्चेकितानो महारथः ।
अभ्यद्रवत् सुसंक्रुद्धः पाण्डवार्थे पराक्रमी । सुशर्म्मा च महाराज चेकितानं महारथं ।
महता शरवर्षेण वारयामास संयुगे । चेकितानोऽपि संरब्धः सुशर्म्माणं महाहवे । १८३०
ववर्ष शरवर्षेण महामेघ इवाचलं । शकुनिः प्रतिविन्ध्यन्तु पराक्रान्तं पराक्रमी ।
अभ्यद्रवत राजेन्द्र मत्तं सिंह इव द्विपं । यौधिष्ठिरः सुसंक्रुद्धः सौबलं निशितैः शरैः ।
व्यदारयत सङ्ग्रामे मघवा इव दानवं । शकुनिः प्रतिविन्ध्यन्तु प्रत्यविध्यत् महाहवे ।
व्यदारयत् महाप्राज्ञ शरैः सन्नतपर्व्वभिः । सुदक्षिणन्तु राजेन्द्र काम्बोजानां महारथं ।
श्रुतकर्म्मा पराक्रान्तमभ्यद्रवत्त संयुगे । सुदक्षिणस्तु राजेन्द्र सहदेवं महारथं । १८३५
विद्ध्वा नाकम्पयत वै मैनाकमिव पर्व्वतं । श्रुतकर्म्मा ततः क्रुद्धः काम्बोजानां महारथं ।
शरैर्बहुभिरानर्च्छद्दारयन्निव सर्व्वशः । इरावानथ संक्रुद्धः श्रुतायुषममर्षणं ।
प्रत्युद्ययौ रणे यत्तो यत्तरूपं परन्तपः । आर्ज्जुनिस्तस्य समरे हयान् हत्वा महारथः ।
ननाद बलवान् राजंस्तत्सैन्यं प्रत्यपूरयत् । श्रुतायुस्तु सुसंरब्धः फाल्गुनेः समरे हयान् ।
निजघान गदाग्रेण ततो युद्धमवर्त्तत । विन्दानुविन्दावावन्त्यौ कुन्तिभोजं महारथं । १८४०
ससेनं ससुतं वीरं समसज्जतुराहवे । तत्राद्भुतमपश्याम तयोर्घोरं पराक्रमं ।
अयुध्येतां स्थिरौ भूत्वा महत्या सेनया सह । अनुविन्दस्तु गदया कुन्तिभोजमताडयत् ।
कुन्तिभोजस्तु तं तूर्णं शरवर्षैरवाकिरत् । कुन्तिभोजसुतश्चापि विन्दं विव्याध सायकैः ।

स च तं प्रति विव्याध तदद्भुतमिवाभवत्। कैकेया भ्रातरः पञ्च गान्धारान् पञ्च मारिष।
ससैन्यान् सहसैन्यास्तु योधयामासुराहवे। वीरबाहुश्च ते पुत्रो वैराटिं रथसत्तमं। १०४९
उत्तरं योधयामास विव्याध नवभिः शरैः। उत्तरश्चापि तं वीरं विव्याध निशितैः शरैः।
चेदिराट् समरे राजन् उलूकं समभिद्रवत्। तथैव शरवर्षेण उलूकं समविध्यत।
उलूकश्चापि तं वाणैर्निशितैर्लोमवाहिभिः। तयोर्युद्धं समभवत् घोररूपं विशाम्पते।
दारयेतां सुसंक्रुद्धावन्योऽन्यमपराजितौ। एवं द्वन्द्वसहस्राणि रथवारणवाजिनां।
पदातीनाञ्च समरे तव तेषाञ्च सङ्कुले। मुहूर्त्तमिव तद्युद्धमासीत् मधुरदर्शनं। १०५०
तत उन्मत्तवद्राजन्न प्राज्ञायत किञ्चन। गजो गजेन समरे रथी च रथिनं ययौ।
अश्वोऽश्वं समभिप्रेत्य पदातिश्च पदातिनं। ततो युद्धं सुदुर्द्धर्षं व्याकुलं समपद्यत।
शूराणां समरे तत्र समासाद्य परस्परं। तत्र देवर्षयः सिद्धाश्चारणाश्च समागताः।
प्रैक्षन्त तद्रणं घोरं देवासुरसमं युधि। ततो दन्तिसहस्राणि रथानाञ्चापि मारिष।
अश्वौघाः पुरुषौघाश्च विपरीतं समाययुः। तत्र तत्र प्रदृश्यन्ते रथवारणपङ्क्तयः। १०५५
सादिनश्च नरव्याघ्र युध्यमाना मुहुर्मुहुः।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि द्वन्द्वयुद्धे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ सञ्जय उवाच ॥ राजञ्छतसहस्राणि तत्र तत्र पदातिनां। निर्मर्य्यादं प्रयुद्धानि तत्ते वक्ष्यामि भारत।
न पुत्त्रः पितरं जज्ञे न पिता पुत्त्रमौरसं। न भ्राता भ्रातरं तत्र स्वस्रीयो न च मातुलं।
न मातुलश्च स्वस्रीयं न सखायं सखा तदा। आविष्टा इव युध्यन्ते पाण्डवाः कुरुभिः सह।
रथानीकं नरव्याघ्राः केचिदभ्यपतन् रथैः। अभज्यन्त रथैरेव युगानि भरतर्षभ। १०६०
रथेषाश्च रथेषाभिः कूवरा रथकूवरैः। सङ्गतैः सङ्गता केचित् परस्परजिघांसवः।
न शेकुश्चलितुं केचित् सन्निपत्य रथा रथैः। प्रभिन्नास्तु महाकायाः सन्निपत्य महागजैः।
बहुधा दारयन् क्रुद्धा विषाणैरितरेतरं। सतोरणपताकैश्च वारणा रणवारणैः।
अभिद्रुत्य महाराज वेगवद्भिर्महागजैः। दन्तैरभिहतास्तत्र चुकुशुः परमातुराः।
अभिनीताश्च शिक्षाभिस्तोत्राङ्कुशसमाहताः। अप्रभिन्ना प्रभिन्नानां सम्मुखाभिमुखा ययुः। १०६५
प्रभिन्नैरपि संयुक्ताः केचित्तत्र महागजाः। क्रौञ्चवन्निनदं कृत्वा प्राद्रवन्त ततस्ततः।
सम्यक् प्रणीताश्च तथा प्रभिन्नकरटामुखाः। ऋष्टितोमरनाराचैर्निरुद्धा वरवारणाः।
विनेदुर्भिन्नमर्म्माणो निपेतुश्च गतासवः। प्रधावन्तो दिशः केचित् नदन्तो भैरवान् रवान्।
गजानां पादरक्षाश्च व्यूढोरस्काः प्रहारिणः। ऋष्टिभिश्च धनुर्भिश्च विमलैश्च परश्वधैः।
गदाभिर्मुषलैश्चैव भिन्दिपालैः सतोमरैः। सायकैः परिघैश्चापि निस्त्रिंशैर्विमलैः शितैः। १०७०
सुगृहीतैः सुसंरब्धा द्रवमाणास्ततस्ततः। व्यदृश्यन्त महाराज परस्परजिघांसवः।
राजमानाश्च निस्त्रिंशाः संसिक्ता नरशोणितैः। प्रत्यदृश्यन्त शूराणामन्योन्यमभिधावतां।

सर्वविचावधूतानामसीनां वीरबाहुभिः । सञ्जज्ञे तुमुलः शब्दः पततां परमर्मसु ।
गदामुषलरुग्णानां भिन्नानाञ्च वरासिभिः । दन्तिदन्ताबभिन्नानां मृदितानाञ्च दन्तिभिः ।
तत्र तत्र नरौघाणां क्रोशतामितरेतरं । शुश्रुवुर्दारुणा वाचः प्रेतानामिव भारत । १००५
हयैरपि हयारोहाश्चामरापीडधारिभिः । हंसैरिव महावेगैरन्योन्यमभिविद्रुताः ।
तैर्विमुक्ता महाप्रासा जाम्बूनदविभूषणाः । आशुगा विमलास्तीक्ष्णाः संपेतुर्भुजगोपमाः ।
अश्वैरग्र्यजवैः केचिदाप्लुत्य महतो रथान् । शिरांस्याददिरे वीरा रथिनामश्वसादिनः ।
बहूनपि हयारोहान् भल्लैः सन्नतपर्वभिः । रथी जघान सम्प्राप्य बाणगोचरमागतान् ।
नवमेघप्रतीकाशाश्चाक्षिप्य तुरगान् गजाः । स्वपादैरवमृद्नन्ति मत्ताः कनकभूषणाः । १०१०
पाट्यमानेषु कुम्भेषु पार्श्वेष्वपि सुदारुणाः । प्रासैर्विमथिताः केचित् क्विणेदुः परमातुराः ।
साश्वारोहान् हयान् केचित् केचिदुन्मथ्य वारणान् । सहसा चिक्षिपुस्तत्र सङ्कुले परमे सति ।
साश्वारोहान् विषाणाग्रैरुत्क्षिप्य तुरगान् गजाः । रथौघानवमृद्नन्तः सध्वजानभिचक्रमुः ।
पुंस्त्वादतिमदत्वाच्च केचित्तत्र महागजाः । साश्वारोहान् हयान् जघ्नुः करैः सचरणैस्तथा ।
प्रतिमानेषु गात्रेषु पार्श्वेष्वपि च वारणान् । आशुगा विमलास्तीक्ष्णाः सम्पेतुर्भुजगोपमाः । १०१५
नराश्च कायान्निर्भिद्य लौहानि कवचानि च । निपेतुर्विमलाः शक्त्यो वीरबाहुभिरर्पिताः ।
महोल्काप्रतिमा घोरास्तत्र तत्र विशाम्पते । द्वीपिचर्मावनद्धैश्च व्याघ्रचर्मच्छदैरपि ।
विकोशैर्विमलैः खड्गैरभिजघ्नुः परान् रणे । अभिप्लुतमभिक्रुद्धमेकपार्श्वावदारिते ।
विदर्शयन्तः सम्पेतुः खड्गचर्मपरश्वधैः । केचिदाक्षिप्य करिणः साश्वानपि रथान् करैः ।
विकर्षन्तो दिशः सर्वाः समीयुः सर्वशब्दगाः । शक्तिभिर्दारिताः केचित् संछिन्नाश्च परश्वधैः । १०२०
हस्तिभिर्मृदिताः केचित् क्षुण्णाश्चान्ये तुरङ्गमैः । रथनेमिनिकृत्ताश्च निकृत्ताश्च परश्वधैः ।
व्याक्रोशन्त महाराज तत्र तत्र स्म बान्धवान् । पुत्रानन्ये पितॄनन्ये भ्रातॄंश्च सह बन्धुभिः ।
मातुलान् भागिनेयांश्च परानपि च संयुगे । विकीर्णान्त्राः सुबहवो भग्नसक्थाश्च भारत ।
बाहुभिश्चापरे छिन्नैः पार्श्वेषु च विदारिताः । क्रन्दन्तः समदृश्यन्त तृषार्ता जीवितैषिणः ।
तृषापरिगताः केचिदल्पसत्त्वा विशाम्पते । भूमौ निपतिताः सङ्ख्ये मृगयाञ्चक्रिरे जलं । १०२५
रुधिरौघपरिक्लिन्नाः क्लिश्यमानाश्च भारत । व्यनिन्दन् भृशमात्मानं तव पुत्रांश्च सङ्गतान् ।
अपरे क्षत्रियाः शूराः कृतवैराः परस्परं । नैव शस्त्रं विमुञ्चन्ति नैव क्रन्दन्ति मारिष ।
तर्जयन्ति च संहृष्टास्तत्र तत्र विशाम्पते । निर्दश्य दशनैश्चापि क्रोधात् स्वदशनच्छदं ।
भ्रुकुटीकुटिलैर्वक्त्रैः प्रेक्षन्तोऽपि परस्परं । अपरे क्लिश्यमानास्तु शरार्त्ता व्रणपीडिताः ।
निष्कूजाः समपद्यन्त दृढसत्त्वा महाबलाः । अन्ये च विरथाः शूरा रथमन्यस्य संयुगे । १०३०
प्रार्थयाना निपतिताः संक्षुण्णा वरवारणैः । अशोभन्त महाराज सपुष्पा इव किंशुकाः ।
सम्बभूवुरनीकेषु बहवो भैरवस्वनाः । वर्त्तमाने महाभीमे तस्मिन् वीरवरक्षये ।

अहनत्तु पिता पुत्रं पुत्रश्च पितरं रणे। स्वस्रीयो मातुलञ्चापि स्वस्रीयञ्चापि मातुलः।
सखायञ्च सखा चापि सम्बन्धी बान्धवांस्तथा। एवमेष क्षयो वृत्तः कुरूणां पाण्डवैः सह।
वर्त्तमाने भये तस्मिन् निर्म्मर्य्यादे महाभये। भीष्ममासाद्य पार्थानां वाहिनी समकम्पत। १८०५
केतुना पञ्चतारेण तालेन भरतर्षभ। राजतेन महाबाहुरुच्छ्रितेन महारथे।
बभौ भीष्मस्तदा राजंश्चन्द्रमा इव मेरुणा।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे षट्चत्वारिंशोऽध्यायः॥ ४६॥

॥ सञ्जय उवाच॥ गतपूर्व्वाह्णभूयिष्ठे तस्मिन्नहनि दारुणे। वर्त्तमाने तथा रौद्रे राजन्वरवरक्षये।
दुर्म्मुखः कृतवर्म्मा च कृपः शल्यो विविंशतिः। भीष्मं जुगुपुरासाद्य तव पुत्रेण चोदिताः।
एतैरतिरथैर्गुप्तः पञ्चभिर्भरतर्षभ। पाण्डवानामनीकानि विजगाहे महारथः। १८१०
चेदिकाशिकरूषेषु पाञ्चालेषु च भारत। भीष्मस्य बहुधा तालः चरन्केतुरदृश्यत।
स शिरांसि रणे वीरो रथांश्च सयुगध्वजान्। निचकर्त्त महावेगैर्भल्लैः सन्नतपर्व्वभिः।
नृत्यतो रथमार्गेषु भीष्मस्य भरतर्षभ। केचिदार्त्तस्वरं चक्रुर्नागा मर्म्मसु ताडिताः।
अभिमन्युः सुसंक्रुद्धः पिशङ्गैस्तुरगोत्तमैः। संयुक्तं रथमास्थाय प्रायात् भीष्मरथं प्रति।
जाम्बूनदविचित्रेण कर्णिकारेण केतुना। अभ्यवर्त्तत भीष्मञ्च तांश्चैव रथसत्तमान्। १८१५
स तालकेतोस्तीक्ष्णेन केतुमाहत्य पत्रिणा। भीष्मेण युयुधे वीरस्तस्य चानुरथैः सह।
कृतवर्म्माणमेकेन शल्यं पञ्चभिराशुगैः। भित्त्वा नवभिरानर्च्छत् शराग्रैः प्रपितामहं।
पूर्णायतविसृष्टेन सम्यक् प्रणिहितेन च। ध्वजमेकेन चिच्छेद जाम्बूनदविभूषितं।
दुर्म्मुखस्य तु भल्लेन सर्व्वावरणभेदिना। जहार सारथेः कायाच्छिरः सन्नतपर्व्वणा।
धनुश्चिच्छेद भल्लेन कार्त्तस्वरविभूषितं। कृपस्य निशिताग्रेण तांश्च तीक्ष्णमुखैः शरैः। १८२०
जघान परमक्रुद्धो नृत्यन्निव महारथः। तस्य लाघवमुद्वीक्ष्य तुतुषुर्देवता अपि।
लब्धलक्ष्यतया कार्ष्णेः सर्व्वे भीष्ममुखा रथाः। सत्त्ववन्तममन्यन्त साक्षादिव धनञ्जयं।
तस्य लाघवमार्गस्थमलातसदृशप्रभं। दिशः पर्य्यपतच्चापि गाण्डीवमिव घोषयन्।
स तमासाद्य वेगेन भीष्मो नवभिराशुगैः। विव्याध समरे तूर्णमार्ज्जुनिं परवीरहा।
ध्वजञ्चास्य त्रिभिर्भल्लैश्चिच्छेद परमौजसः। सारथिञ्च त्रिभिर्बाणैराजघान यतव्रतः। १८२५
तथैव कृतवर्म्मा तु कृपः शल्यश्च मारिष। विद्ध्वा नाकम्पयत् कार्ष्णिं मैनाकमिव पर्व्वतं।
स तैः परिवृतः शूरो धार्त्तराष्ट्रैर्महारथैः। ववर्ष शरवर्षाणि कार्ष्णिः पञ्चरथान् प्रति।
ततस्तेषां महास्त्राणि निवार्य्य शरवृष्टिभिः। ननाद बलवान् कार्ष्णिर्भीष्माय विसृजन् शरान्।
तत्रास्य सुमहद्राजन् बाह्वोर्बलमदृश्यत। यतमानस्य समरे भीष्ममर्द्दयतः शरैः।
पराक्रान्तस्य तस्यैवं भीष्मोऽपि प्राहिणोच्छरान्। स तांश्चिच्छेद समरे भीष्मचापच्युताञ्छरान्। १८३०
ततो ध्वजममोघेषुर्भीष्मस्य नवभिः शरैः। चिच्छेद समरे वीरस्तत उच्चुक्रुशुर्जनाः।

स राजतो महास्कन्धस्तालो मणिविभूषितः। सौभद्रविशिखैश्छिन्नः पपात भुवि भारत॥
ध्वजं सौभद्रविशिखैः पतन्तं भरतर्षभ। दृष्ट्वा भीमोऽनदद्धृष्टः सौभद्रमभिहर्षयन्॥
अथ भीष्मो महास्त्राणि दिव्यानि च बहूनि च। प्रादुश्चक्रे महारौद्रे रणे तस्मिन् महास्त्रवित्॥
ततः शरसहस्रेण सौभद्रं प्रपितामहः। अवाकिरदमेयात्मा तदद्भुतमिवाभवत्॥ १८३५
ततो दश महेष्वासाः पाण्डवानां महारथाः। रक्षार्थमभ्यधावन्त सौभद्रं त्वरिता रथैः॥
विराटः सह पुत्रेण धृष्टद्युम्नश्च पार्षतः। भीमश्च केकयश्चैव सात्यकिश्च विशाम्पते॥
जवेन पततां तेषां भीष्मः शान्तनवो रणे। पाञ्चाल्यं त्रिभिरानर्च्छत् सात्यकिं नवभिः शरैः॥
पूर्णायतविसृष्टेन क्षुरेण निशितेन च। ध्वजमेकेन चिच्छेद भीमसेनस्य पत्रिणा॥
जाम्बूनदमयः केतुः केशरी नरसत्तम। पपात भीमसेनस्य भीष्मेण मथितो रथात्॥ १८४०
ततो भीमस्त्रिभिर्विद्ध्वा भीष्मं शान्तनवं रणे। कृपमेकेन विव्याध कृतवर्म्माणमष्टभिः॥
प्रगृहीताग्रहस्तेन वैराटिरपि दन्तिना। अभ्यद्रवत राजानं मद्राधिपतिमुत्तरः॥
तस्य वारणराजस्य रथे चापततो जवात्। शल्यो निवारयामास वेगमप्रतिमं रणे॥
तस्य क्रुद्धः स नागेन्द्रो बृहतः साधुवाहिनः। पदा युगमधिष्ठाय जघान चतुरो हयान्॥
स हताश्वे रथे तिष्ठन् मद्राधिपतिरायसीं। उत्तरान्तकरीं शक्तिं चिक्षेप भुजगोपमां॥ १८४५
तया भिन्नतनुत्राणः प्रविश्य विपुलं तमः। स पपात गजस्कन्धात् प्रमुक्ताङ्कुशतोमरः॥
समादाय च शल्योऽसिमवप्लुत्य रथोत्तमात्। वारणेन्द्रस्य विक्रम्य चिच्छेदाथ महाकरं॥
भिन्नवर्म्मा शरव्रातैश्छिन्नहस्तः स वारणः। भीममार्त्तस्वरं कृत्वा पपात च ममार च॥
एतदीदृशकं कृत्वा मद्रराजो जनाधिप। आरुरोह रथं तूर्णं भास्वरं कृतवर्म्मणः॥
उत्तरन्तु हतं दृष्ट्वा वैराटिर्भ्रातरं तदा। श्वेतः सप्त महावीरान् दृष्ट्वा क्रोधसमन्वितः॥ १८५०
धनूंषि तेषां चिच्छेद बाणैः सन्नतपर्व्वभिः। निकृत्तान्येव तानि स्म समदृश्यन्त भारत॥
ततस्ते तु निमेषार्द्धात् प्रतिपद्य धनूंषि च। सप्त चैव पृषत्कांश्च श्वेताश्वे पर्य्यपातयन्॥
ततः पुनरमेयात्मा भल्लैः सप्तभिराशुगैः। निचकर्त्त महाबाहुस्तेषां चापानि धन्विनां॥
ते निकृत्तमहाचापाः त्वरमाणा महारथाः। अथ शक्तीः परा गृह्य विनेदुर्भैरवान् रवान्॥
मुमुचुर्भरतश्रेष्ठ सप्त श्वेतरथं प्रति। ततस्ता ज्वलिताः सर्व्वा महोल्काऽशनिनिस्वनाः॥ १८५५
अप्राप्ताः सप्तभिर्भल्लैश्चिच्छेद परमास्त्रवित्। ततः समादाय शरं सर्व्वकायविदारणं॥
प्राहिणोत् भरतश्रेष्ठ बाणं श्वेतरथं प्रति। तस्य देहे निपतितो बाणो वज्रातिगो महान्॥
ततो रुक्मरथो राजन् सायकेन दृढं हतः। निषसाद रथोपस्थे कश्मलञ्चाविशन्महत्॥
तं विषण्णं विमनसं त्वरमाणस्तु सारथिः। अपोवाहसुसंभ्रान्तं सर्व्वलोकस्य पश्यतः॥
श्वेतोऽथान्यान् समादाय वाजिनो हेमभूषितान्। तेषां स च महाबाहुर्ध्वजशीर्षाण्यपातयत्॥ १८६०
हयांश्च शेषाभिर्भिद्य सारथिञ्च परन्तप। शरैस्तेनान् समाकीर्य्य प्रायाच्छल्यरथं प्रति॥

ततो हलहलाशब्दश्चैव सैन्येषु भारत । दृष्ट्वा सेनापतिं तूर्णं यान्तं शल्यरथं प्रति ।
ततो भीष्मं पुरस्कृत्य तव पुत्रो महाबलः । शूरैः सह तथा सैन्येन प्रायाच्छल्यरथं प्रति ।
मृत्योरास्यमनुप्राप्तं मद्रराजममोचयत् । ततो युद्धं समभवत् तुमुलं लोमहर्षणं ।
तावकानां परेषाञ्च व्यतिषक्तरथद्विपं । सौभद्रे भीमसेने च सात्यकौ च महारथे । १८६५
कैकेये च विराटे च धृष्टद्युम्ने च पार्षते । एतेषु नरसिंहेषु चेदिसैन्येषु चैव हि ।
ववर्ष शरवर्षाणि वृद्धः कुरुपितामहः ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि श्वेतयुद्धे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ धृतराष्ट्र उवाच ॥ एवं श्वेते महेष्वासे प्राप्ते शल्यरथं प्रति । कुरवः पाण्डवेयाश्च किमकुर्व्वत सञ्जय ।
भीष्मः शान्तनवः किं वा तन्ममाचक्ष्व पृच्छतः ।
॥ सञ्जय उवाच ॥ राजञ्छतसहस्राणि ततः क्षत्रियपुङ्गवाः । श्वेतं सेनापतिं शूराः पुरस्कृत्य महारथाः । १८७०
राज्ञो बलं दर्शयन्तस्तव पुत्रस्य भारत । शिखण्डिनं पुरस्कृत्य चातुमैच्छन् महारथाः ।
अभ्यवर्त्तन्त भीष्मस्य रथं हेमपरिष्कृतं । जिघांसन्तो युधां श्रेष्ठं तदासीत् तुमुलं महत् ।
ततोऽहं सम्प्रवक्ष्यामि महावैशसमद्भुतं । तावकानां परेषाञ्च यथा युद्धमवर्त्तत ।
तत्राकरोद्रथोपस्थान् शून्यान् शान्तनवो बहून् । प्राकृन्तदुत्तमाङ्गानि शरैरर्कसमोपमः ।
समावृणोच्छरैरर्कमर्कतुल्यप्रतापवान् । नुदन् समन्तात् समरे रविरुद्यन् यथा तमः । १८७५
तेनाजौ प्रेषिता राजन् शराः शतसहस्रशः । क्षत्रियान्तकराः सङ्ख्ये महावेगा महाबलाः ।
पातयामास शूराणां शिरांसि शतशो रणे । राजन् कण्टकसन्नाहा वीरा विगतमस्तकाः ।
रथा रथेषु संसक्ता बहुशस्तत्र विशाम्पते । रथो रथोपर्य्यवर्त्तत्तुरगस्तु तुरङ्गमं ।
युवानं निहितं वीरं लम्बमानं सकार्मुकं । उदीर्णाश्च हया राजन् वहन्तश्च ततस्ततः ।
सखड्गनिषङ्गाश्च विध्वस्तकवचा हताः । शतशः पतिता भूमौ वीरशय्यासु शेरते । १८८०
परस्परेण धावन्तः पतिताः पुनरुत्थिताः । उत्थाय च प्रधावन्तो द्वन्द्वयुद्धमवाप्नुवन् ।
पीडिताः पुनरन्योऽन्यं लुण्ठन्तो रणमूर्द्धनि । सन्तो सन्नः पर्य्यपतच्छतशो रथिनो हताः ।
सरथा रथिनश्चापि भिन्नकुम्भाः सवाहनाः । स्यन्दने न्यपतत् कश्चित् निहतोऽन्येन सायकैः ।
हतसारथिरप्युच्चैर्निपपात महारथः । युध्यमानस्य सङ्ग्रामे व्यूढे रजसि चोत्थिते ।
धनुःकूजितविज्ञानं तत्रासीत् प्रत्ययुध्यतां । गात्रस्पर्शैश्च योधानां व्यज्ञासि परिपन्थिनं । १८८५
युध्यमाना शरै राजन् शिञ्जिनी ध्वाङ्क्षिनी समात् । अन्योऽन्यं बाणसंरम्भा नाभूयत भटैः कृतः ।
शब्दायमाने सङ्ग्रामे पटहे कर्णदारिणि । युध्यमानस्य सङ्ग्रामे कुर्व्वतः पौरुषं स्वकं ।
नाश्रौषीन्नाम युद्धे तु तुमुले लोमहर्षणे । पिता स्वमौरसं पुत्रं नाभिजानीत कञ्चन ।
चक्रे भग्ने युगे चैव एको धुर्य्यो हयो हतः । आप्लुतः स्यन्दनाद्वीरः ससारथिरजिह्मगः ।
विधुरे भिन्नचक्रे च रथेऽपि विनिवर्त्तिते । तेन तेन स्म दृश्यन्ते बान्धवानां परस्परं । १८९०

यो हतः शिरसा छिन्नो मर्म्मभिर्न्निहतो हतः । अहतः कोऽपि नैवासीत् भीष्मे निघ्नति शाश्वतान् ।
श्वेतः कुरूणामकरोत् स्वयं तस्मिन् महाहवे । राजपुत्त्रांस्तथोदारानवधीच्छतसंघशः ।
चिच्छेद रथिनां बाणैः शिरांसि शतसङ्घशः । साङ्गदा बाहवश्चैव धनूंषि च समन्ततः ।
रथिनो रथचक्राश्च रथारोहा रथानि च । छत्राणि च महार्हाणि पताकाश्च विशाम्पते ।
हयौघाश्च रथौघाश्च नरौघाश्चेति भारत । वारणाः शतशश्चैव हताः श्वेतेन भारत । १८९५
वयं श्वेतभयात् भीता विहाय रथमुत्तमं । अपयातास्ततः पश्चाद्यत्र पश्याम ते धुरं ।
शरपातमपक्रम्य कुरवः कुरुनन्दन । भीष्मं शान्तनवं युद्धे स्थिता युद्धाय दंशिताः ।
अदीनो दीनसमये भीष्मोऽस्माकं महाहवे । एकस्तस्थौ नरव्याघ्रो गिरिर्मेरुरिवाचलः ।
आददानो रणे प्राणान् सविता शिशिरात्यये । गभस्तिभिरिवादित्यस्तस्थौ हेममरीचिमान् ।
स मुमोच महेष्वासः शरसङ्घाननेकशः । निघ्नन्नमित्रान् समरे चक्रपाणिरिवासुरान् । १९००
ते वध्यमाना भीष्मेण प्रजह्रुस्तं महाहवे । स्वयूथादिव ते यूथान् मुक्ताग्निमिव दारुणा ।
तमेकमुपलभ्यैको हृष्टः पुष्टः परन्तपः । दुर्य्योधनप्रिये युक्तः पाण्डवान् सञ्चशोषयत् ।
जीवं तदुत्थितं त्यक्त्वा भयञ्च स महाहवे । पातयामास सैन्यानि पाण्डवानां विशाम्पते ।
प्रहरन्तमनीकानि पिता देवव्रतस्तव । दृष्ट्वा सेनापतिं भीष्मो वेगेन स समन्वयात् ।
स भीष्मं शरजालेन महता समवाकिरत् । श्वेतश्चापि तथा भीष्मः शरौघैः समवाकिरत् । १९०५
तौ वृषाविव नर्द्दन्तौ मत्ताविव महाद्विपौ । व्याघ्राविव सुसंरब्धौ चान्योन्यमभिजघ्नतुः ।
अस्त्रैरस्त्राणि संवार्य्य ततस्तौ पुरुषर्षभौ । भीष्मः श्वेतश्च युयुधे परस्परवधैषिणौ ।
एकाह्ना निर्द्दहेत् भीष्मः पाण्डवानामनीकिनीं । शरैः परमसंक्रुद्धः श्वेतो यदि न पालयेत् ।
पितामहं ततो दृष्ट्वा श्वेतेन विमुखीकृतं । प्रहर्षं पाण्डवा जग्मुः पुत्त्रस्ते विमना अभूत् ।
ततो दुर्य्योधनः क्रुद्धः पार्थिवैः परिवारितः । ससैन्यः पाण्डवानीकमभ्यद्रवत संयुगे । १९१०
श्वेतो गाङ्गेयमुत्सृज्य तव पुत्त्रस्य वाहिनीं । नाशयामास वेगेन वृक्षान् वायुरिवौजसा ।
द्रावयित्वा चमूञ्चैव वैराटिः क्रोधमूर्च्छितः । आयातः स महाराज यत्र भीष्मो व्यवस्थितः ।
तौ तत्रापि गतौ राजन् शरदीप्तौ महाबलौ । अयुध्येतां महात्मानौ यथा वा वृत्रवासवौ ।
अन्योऽन्यन्तु महाराज परस्परवधैषिणौ । निरष्टञ्च कार्म्मुकं श्वेतो भीष्मं विव्याध सप्तभिः ।
पराक्रमं ततस्तस्य पराक्रम्य पराक्रमी । तरसा वारयामास मत्तो मत्तमिव द्विपं । १९१५
आजघान ततो भीष्मं श्वेतः क्षत्त्रियनन्दनः । तं प्रत्यविध्यद्दशभिर्भीष्मः शान्तनवस्तथा ।
स विद्धस्तेन बलवान्नाकम्पत यथाऽचलः । श्वेतः शान्तनवं भूयः शरैः सन्नतपर्व्वभिः ।
विव्याध पञ्चविंशत्या तदद्भुतमिवाभवत् । प्रहस्य च रणे श्वेतः सृक्किणी परिसंलिहन् ।
धनुश्चिच्छेद भीष्मस्य दशभिर्दशधा शरैः । सन्धाय विशिखञ्चैव शरं लोमप्रवाहितं ।
उन्ममाथ ततस्तालं ध्वजशीर्षं महात्मनः । केतुं निपतितं दृष्ट्वा भीष्मस्य तनयास्तव । १९२०

हतं भीष्ममन्यन्त श्वेतस्य वशमागतं। पाण्डवा अपि संहृष्टा दध्मुः शङ्खान् समन्ततः।
भीष्मस्य पतितं केतुं दृष्ट्वा तालं महात्मनः। ततो दुर्य्योधनः क्रोधात् स्वमनीकमचोदयत्।
यत्नात् भीष्मं परिप्सध्वं रक्षमाणाः समन्ततः। तानूचे पश्यमानांस्तान् श्वेतोऽस्तमथवाप्स्यति।
भीष्मः शान्तनवः शूरस्तथा सत्यं ब्रवीमि ते। राज्ञस्तु वचनं श्रुत्वा त्वरमाणा महारथाः।
बलेन चतुरङ्गेन गाङ्गेयमनुपालयन्। वाह्लीकः कृतवर्म्मा च कृपः शल्यश्च भारत। १९२५
जारासन्धिर्विकर्णश्च चित्रसेनो विविंशतिः। त्वरमाणास्त्वराकाले परिवार्य्य समन्ततः।
शस्त्रवृष्टिं सुबहुलां श्वेतस्योपर्य्यपातयन्। तान् क्रुद्धान् निशितैर्बाणैस्त्वरमाणो महाबलः।
अवारयदमेयात्मा दर्शयन् पाणिलाघवं। स निवार्य्यैव तान् सर्व्वान् केसरी कुञ्जरानिव।
महता शरवर्षेण भीष्मस्य धनुराच्छिनत्। ततोऽन्यद्धनुरादाय भीष्मः शान्तनवो युधि।
श्वेतं विव्याध राजेन्द्र कङ्कपत्रैः शिलीमुखैः। ततः सेनापतिः क्रुद्धो भीष्मं बहुभिराशुगैः। १९३०
विव्याध समरे राजन् सर्व्वलोकस्य पश्यतः। ततः प्रव्यथितो राजा भीष्मं दृष्ट्वा निवारितं।
प्रवीरं सर्व्वलोकस्य श्वेतेन युधि वै तदा। निष्ठानकश्च सुमहांस्तव सैन्यस्य चाभवत्।
तं वीरं त्वरितं दृष्ट्वा श्वेतेन शरविक्षतं। हतं श्वेतेन मन्यन्त श्वेतस्य वशमागतं।
ततः क्रोधवशं प्राप्तः पिता देवव्रतस्तव। ध्वजमुन्मथितं दृष्ट्वा तां च सेनां निवारितां।
श्वेतं प्रति महाराज व्यसृजत् सायकान् बहून्। तानावार्य्य रणे श्वेतो भीष्मस्य रथिनां वरः। १९३५
धनुश्चिच्छेद भल्लेन पुनरेव पितुस्तव। उत्सृज्य कार्म्मुकं राजन् गाङ्गेयः क्रोधमूर्च्छितः।
अन्यत् कार्म्मुकमादाय विपुलं बलवत्तरं। तत्र सन्धाय विपुलान् भल्लान् सप्त शिलाशितान्।
चतुर्भिश्चतुरश्वांश्च श्वेतस्य पृतनापतेः। ध्वजं द्वाभ्याञ्च चिच्छेद सप्तमेन च सारथेः।
शिरश्चिच्छेद भल्लेन संक्रुद्धो लघुविक्रमः। हताश्वसूतात् स रथादवप्लुत्य महारथः।
अमर्षवशमापन्नो व्याकुलः समपद्यत। विरथं रथिनां श्रेष्ठं श्वेतं दृष्ट्वा पितामहः। १९४०
ताडयामास निशितैः शरसङ्घैः समन्ततः। स ताड्यमानः समरे भीष्मचापच्युतैः शरैः।
स्वरथे धनुरुत्सृज्य शक्तिं जग्राह काञ्चनीं। ततः शक्तिं रणे घोरां प्रगृहीतां महाभयां।
कालदण्डोपमां घोरां मृत्योश्च श्वसनोपमां। अब्रवीच्च तदा श्वेतो भीष्मं शान्तनवं रणे।
तिष्ठेदानीं सुसंरब्धः पश्य मां पुरुषोत्तम। एवमुक्त्वा महेष्वासो भीष्मं युधि पराक्रमी।
ततः शक्तिममेयात्मा चिक्षेप भुजगोपमां। पाण्डवार्थे पराक्रान्तस्तवानर्थं चिकीर्षति। १९४५
हाहाकारो महानासीत् पुत्राणां ते विशाम्पते। दृष्ट्वा शक्तिं महाघोरां मृत्योर्दण्डसमप्रभां।
श्वेतस्य करनिर्मुक्तां निर्मुक्तोरगसन्निभां। अपतत् सहसा राजन् महोल्केव नभस्तलात्।
ज्वलन्तीमन्तरीक्षे तां ज्वालाभिरिव संवृतां। असंभ्रान्तस्तदा राजन् पिता देवव्रतस्तव।
अष्टभिर्नवधा भीष्मः शक्तिं चिच्छेद पत्रिभिः। उत्कृष्टहेमविकृतां निकृतां निशितैः शरैः।
उच्चुक्रुशुस्ततः सर्व्वे तावका भरतर्षभ। शक्तिं विनिहतां दृष्ट्वा वैराटिः क्रोधमूर्च्छितः। १९५०

क्रोधोपहतचेतास्तु कर्त्तव्यं नाभ्यजानत । क्रोधसंमूर्च्छितो राजन् वैराटिः प्रहसन्निव ।
गदां जग्राह संहृष्टो भीष्मस्य निधनं प्रति । क्रोधसंरक्तनयनो दण्डपाणिरिवापरः ।
भीष्मं समभिदुद्राव जलौघ इव पर्व्वतं । तस्य वेगमसम्बाधं मत्वा भीष्मः प्रतापवान् ।
प्रभाववित् प्रमोक्षार्थं सहसा धरणीं गतः । श्वेतः क्रोधवशाद्राजन् भ्रामयित्वा महागदां ।
रथे भीष्मस्य चिक्षेप यथा देवो महेश्वरः । तया भीष्मनिपातिन्या स रथो भस्मसात्कृतः । १८५५
सध्वजः सहसूतेन साश्वः सहयुगन्धरः । विरथं रथिनां श्रेष्ठं भीष्मं दृष्ट्वा पदातिनं ।
अभ्यधावन्त सहसा शल्यप्रभृतयो रथाः । ततोऽन्यं रथमास्थाय धनुर्विस्फार्य दुर्म्मनाः ।
शनकैरभ्ययाच्छ्वेतं भीष्मो दृष्ट्वा रथोत्तमं । एतस्मिन्नन्तरे भीष्मः शुश्राव विपुलां गिरं ।
आकाशादीरितां दिव्यामात्मनो हितसम्भवां । भीष्म भीष्म महाबाहो शीघ्रं यत्नं कुरुष्व वै ।
एष ह्यस्य जये कालो निर्द्दिष्टो विश्वयोनिना । एतत् श्रुत्वा तु वचनं देवदूतेन भाषितं । १८६०
सम्प्रहृष्टमना भूत्वा वधे तस्य मनो दधे । विरथं रथिनां श्रेष्ठं श्वेतं दृष्ट्वा पदातिनं ।
सहितास्तु न्यवर्त्तन्त परीप्सन्तो महारथाः । सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ।
कैकेया धृष्टकेतुश्च अभिमन्युश्च वीर्य्यवान् । एतानापततो दृष्ट्वा द्रोणशल्यकृपैः सह ।
अवारयदमेयात्मा वार्य्योघानिव पर्व्वतः । संनिरुद्धेषु सर्व्वेषु पाण्डवेषु महात्मसु ।
श्वेतः खड्गमथाकृष्य भीष्मस्य धनुराच्छिनत् । तदपास्य धनुश्छिन्नं त्वरमाणः पितामहः । १८६५
देवदूतवचः श्रुत्वा वधे तस्य मनो दधे । ततः प्रयत्नमानस्तु पिता देवव्रतस्तव ।
अन्यत् कार्म्मुकमादाय त्वरमाणो महारथः । क्षणेन सज्यमकरोत् शक्रचापसमप्रभं ।
पिता ते भरतश्रेष्ठ श्वेतं दृष्ट्वा महारथं । वृतन्तु तैर्नरव्याघ्रैर्भीमसेनपुरोगमैः ।
अभ्यवर्त्तत गाङ्गेयः श्वेतं सेनापतिं द्रुतं । आपतन्तं ततो भीष्मं भीमसेनः प्रतापवान् ।
आजघ्ने विशिखैः षष्ट्या सेनान्यं स महारथः । अभिमन्युश्च समरे पिता देवव्रतस्तव । १८७०
वारयित्वा शरैर्घोरैरन्यानपि महारथान् । आजघ्ने भरतश्रेष्ठ त्रिभिः सन्नतपर्व्वभिः ।
सात्यकिञ्च शतेनाजौ शराणां पितामहः । धृष्टद्युम्नञ्च विंशत्या कैकेयांश्चापि पञ्चभिः ।
तांश्च सर्व्वान् महेष्वासान् पिता देवव्रतस्तव । वारयित्वा शरैर्घोरैः श्वेतमेवाभिदुद्रुवे ।
ततः शरं मृत्युसमं भारसाधनमुत्तमं । विकृष्य बलवान् भीष्मः समधत्त दुरासदं ।
ब्रह्मास्त्रेण सुसंयुक्तं तं शरं लोमवाहिनं । ददृशुर्देवगन्धर्व्वाः पिशाचोरगराक्षसाः । १८७५
स तस्य कवचं भित्त्वा ज्वलदग्निसमौजसः । जगाम धरणीं बाणो महाशनिरिवोज्ज्वलन् ।
अस्तं गच्छन्निवादित्यः प्रभामादाय सत्वरः । एवं जीवितमादाय श्वेतदेहाज्जगाम सः ।
तं भीष्मेण नरव्याघ्रं तथा विनिहतं युधि । प्रपतन्तमपश्याम गिरेः शृङ्गमिव च्युतं ।
अशोचन् पाण्डवाः सर्व्वे क्षत्रिया ये महारथाः । प्रहृष्टास्तु सुताः सर्व्वे कुरवश्चापि सर्व्वशः ।
ततो दुःशासनो राजन् श्वेतं दृष्ट्वा निपातितं । वादित्रनिनदैर्घोरैर्नृत्यन्ति स्म समन्ततः । १८८०

तस्मिन् हते महेष्वासे भीष्मेणाहवशोभिना । प्रावेपन्त महेष्वासाः शिखण्डिप्रमुखा रथाः ।
ततो धनञ्जयो राजन् वार्ष्णेयश्चापि सर्व्वशः । अवहारं शनैश्चक्रुर्निहते वाहिनीपतौ ।
ततोऽवहारं सैन्यानां तव तेषाञ्च भारत । तावकानां परेषाञ्च नदताञ्च मुहुर्मुहुः ।
पार्था विमनसो भूत्वा प्राविशन्त महारथाः । चिन्तयन्तो वधं घोरं द्वैरथेन परन्तप ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि श्वेतवधे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

॥ धृतराष्ट्र उवाच ॥ श्वेते सेनापतौ तात सङ्ग्रामे निहते परैः । किमकुर्व्वन् महेष्वासाः पाञ्चालाः पाण्डवैः सह । १९८५
सेनापतिं समाकर्ण्य श्वेतं युधि निपातितं । तदर्थं यततांश्चापि परेषां प्रपलायिनां ।
मनः प्रीणाति मे वाक्यं जयं सञ्जय शृण्वतः । प्रत्युपायं चिन्तयतो लज्जां प्राप्नोति मे नहि ।
हर्षमाणोऽनुरक्तश्च वृद्धः कुरुपतिः सदा । कृतवैरस्तदा तेन पितुः पुत्रेण धीमता ।
तस्योद्वेगात् भयाच्चापि संश्रितः पाण्डवान् पुरा । स सर्व्वस्वं परित्यज्य दुःखं संश्रित्य तिष्ठति ।
पाण्डवानां प्रतापेन दुर्गदेशं प्रविश्य च । सपत्नात् सततो बाधमार्य्यवृत्तिमनुष्ठितः । १९९०
आश्चर्यं वै तदा तेषां पुरा राजा सुदुर्म्मतिः । ततो युधिष्ठिरे भक्त्या कथं सञ्जय सूदितः ।
प्रक्षिप्तः सगतिः क्षुद्रः पाताले पुरुषाधमैः । न युद्धं रोचयेत् भीष्मो न चाचार्य्यः कथञ्चन ।
न कृपो न च गान्धारी नाहं सञ्जय रोचये । न वासुदेवो वार्ष्णेयो धर्म्मराजश्च पाण्डवः ।
न भीमो नार्ज्जुनश्चैव न यमौ पुरुषर्षभौ । वार्य्यमाणो मया नित्यं गान्धार्य्या विदुरेण च ।
जामदग्न्येन रामेण व्यासेन च महात्मना । दुर्य्योधनो दुष्टमना नित्यमेव हि सञ्जय । १९९५
कर्णस्य मतमास्थाय सौबलस्य च पापकृत् । दुःशासनेन च तथा पाण्डवानभ्यसूयत ।
तमहं व्यसने घोरे मन्ये प्राप्तन्तु सञ्जय । श्वेतस्य च विनाशेन भीष्मस्य विजयेन च ।
संक्रुद्धः कृष्णसहितः पार्थः किमकरोत् युधि । अर्ज्जुनाद्धि भयं भूयस्तन्मे तात न शाम्यति ।
स हि शूरश्च कौन्तेयः क्षिप्रकारी धनञ्जयः । मन्ये शरैः शरीराणि प्रमथिष्यति शात्रवान् ।
इन्द्रं इन्द्रानुजसममुपेन्द्रसदृशं रणे । अमोघक्रोधसङ्कल्पं दृष्ट्वा वः किमभून्मनः । २०००
स चैवं वेदविच्छूरो ज्वलनार्कसमद्युतिः । ऐन्द्रास्त्रविदमेयात्मा प्रापतत् समितिञ्जयः ।
सवज्रस्पर्शरूपाणामस्त्राणामक्षिताऽरिषु । शीघ्रज्याक्षेपहस्तस्तु कौन्तेयो यो महारथः ।
स सञ्जय महाप्राज्ञो द्रुपदस्यात्मजो बली । धृष्टद्युम्नः किमकरोत् श्वेते युधि निपातिते ।
पुरा चैवापराधेन वधेन च चमूपतेः । मन्ये मनः प्रजज्वाल पाण्डवानां महात्मनां ।
तेषां क्रोधं चिन्तयंस्तु अहःसु च निशासु च । न शान्तिमधिगच्छामि दुर्य्योधनकृतेन हि । २००५
कथं चाभून्महायुद्धं सर्व्वमाचक्ष्व सञ्जय ।

॥ सञ्जय उवाच ॥ शृणु राजन् स्थिरो भूत्वा तवापनयनो महान् । न च दुर्य्योधने दोषमिममाधातुमर्हसि ।
गतोदके सेतुबन्धो यादृक् तादृक् मतिस्तव । सन्दीप्ते भवने यद्वत् कूपस्य खननं यथा ।
गतपूर्व्वाह्णसमये तस्मिन् महति दारुणे । सेनापतौ हते श्वेते भीष्मेण युधि भारत ।

कृतवर्म्मणा च सहितं दृष्ट्वा शल्यमवस्थितं । वैराटिः समरश्लाघी शङ्खः परबलार्द्दनः । २०१०
सद्यः क्रोधात् प्रजज्वाल हविषा हव्यवाडिव । स विस्फार्य्य महच्चापं शक्रचापोपमं बली ।
अभ्यधावज्जिघांसुर्वै शल्यं मद्राधिपं युधि । महता रथवंशेन समन्तात् परिवारितः ।
सृजन् वाणमयं वर्षं प्रायाच्छल्यरथं प्रति । तमापतन्तं सम्प्रेक्ष्य मत्तवारणविक्रमं ।
तावकानां रथाः सप्त समन्तात् पर्य्यवारयन् । मद्रराजं परीप्सन्तो मृत्योर्द्दंष्ट्रान्तरङ्गतं ।
ततो भीष्मो महाबाहुर्व्विनद्य जलदो यथा । तालमात्रं धनुर्गृह्य शङ्खमभ्यद्रवद्रणे । २०१५
तमुद्यतं समीक्ष्याथ महेष्वासं महारथं । सन्त्रस्ता पाण्डवी सेना वातवेगहतेव नौः ।
तत्रार्ज्जुनः सन्त्वरितः शङ्खस्यासीत्पुरःसरः । भीष्माद्रक्ष्योऽयमद्येति ततो युद्धमवर्त्तत ।
हाहाकारो महानासीद्योधानां युधि युध्यतां । तेजस्तेजसि सम्पृक्तमित्येवं विस्मयं ययुः ।
अथ शल्यो गदापाणिरवतीर्य्य महारथात् । शङ्खस्य चतुरो वाहानहनद्भरतर्षभ ।
स हताश्वाद्रथात्तूर्णं खड्गमादाय विद्रुतः । वीभत्सोः स्यन्दनं प्राप ततः शान्तिमवाप च । २०२०
ततो भीष्मरथात्तूर्णमुत्पतन्ति पतत्रिणः । यैरन्तरिक्षं भूमिश्च सर्व्वतः समवस्तृतं ।
पाञ्चालानथ मत्स्यांश्च केकयांश्च प्रभद्रकान् । भीष्मः प्रहरतां श्रेष्ठः पातयामास पत्रिभिः ।
उत्सृज्य समरे तूर्णं पाण्डवं सव्यसाचिनं । अभ्यद्रवत पाञ्चाल्यं द्रुपदं सेनया वृतं ।
प्रियं सम्बन्धिनं राजञ्छरानवकिरन् बहून् । अग्निनेव प्रदग्धानि वनानि शिशिरात्यये ।
शरदग्धान्यदृश्यन्त सैन्यानि द्रुपदस्य च । अतिष्ठत रणे भीष्मो विधूम इव पावकः । २०२५
मध्यन्दिने यथादित्यं तपन्तमिव तेजसा । न शेकुः पाण्डवेयस्य योधा भीष्मं निरीक्षितुं ।
वीक्षाञ्चक्रुः समन्तात्ते पाण्डवा भयपीडिताः । त्रातारं नाध्यगच्छन्त गावः शीतार्द्दिता इव ।
हतविप्रद्रुते सैन्ये निरुत्साहे विमर्द्दिते । हाहाकारो महानासीत्पाण्डुसैन्येषु भारत ।
ततो भीष्मः शान्तनवो नित्यं मण्डलकार्मुकः । मुमोच वाणान्दीप्ताग्रानहीनाशीविषानिव ।
शरैरेकायनीकुर्व्वन्दिशः सर्व्वा यतव्रतः । जघान पाण्डवरथानादिश्यादिश्य भारत । २०३०
ततः सैन्येषु भग्नेषु मथितेषु च सर्व्वशः । प्राप्ते चास्तं दिनकरे न प्राज्ञायत किञ्चन ।
भीष्मञ्च समुदीर्य्यन्तं दृष्ट्वा पार्था महाहवे । अवहारमकुर्व्वन्त सैन्यानां भरतर्षभ ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि शङ्खयुद्धे प्रथमदिवसावहारे एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
॥ सञ्जय उवाच ॥ कृतेऽवहारे सैन्यानां प्रथमं भरतर्षभ । भीष्मे च युधि संरब्धे हृष्टे दुर्य्योधने तथा ।
धर्म्मराजस्ततस्तूर्णमभिगम्य जनार्द्दनं । भ्रातृभिः सहितः सर्व्वैः सर्व्वैश्चैव जनेश्वरैः ।
शुचा परमया युक्तश्चिन्तयानः पराजयं । वार्ष्णेयमब्रवीद्राजन्दृष्ट्वा भीष्मस्य विक्रमं । २०३५
कृष्ण पश्य महेष्वासं भीष्मं भीमपराक्रमं । शरैर्द्दहन्तं सैन्यं मे ग्रीष्मे कक्षमिवानलं ।
कथमेनं महात्मानं शक्ष्यामः प्रतिवीक्षितुं । लेलिह्यमानं सैन्यं मे हविष्मन्तमिवानलं ।
एतं हि पुरुषव्याघ्रं धनुष्मन्तं महाबलं । दृष्ट्वा विप्रद्रुतं सैन्यं मदीयं मार्गणाहतं ।

शक्तो जेतुं यमः क्रुद्धो वज्रपाणिश्च संयुगे। वरुणः पाशभृच्चापि कुबेरो वा गदाधरः।
न तु भीष्मो महातेजाः शक्यो जेतुं महारणे। सोऽहमेवं गते मग्नो भीष्मागाधे जले प्लवः। २०४०
आत्मनो बुद्धिदौर्बल्याद्भीष्ममासाद्य केशव। वनं यास्यामि गोविन्द श्रेयो वै तत्र जीवितुं।
न त्विमान् पृथिवीपालान्दातुं भीष्माय मृत्यवे। क्षपयिष्यति सेनां मे कृष्ण भीष्मो महास्त्रवित्।
यथाऽनलं प्रज्वलितं पतङ्गाः समभिद्रुताः। विनाशायैव गच्छन्ति तथा मे सैनिका जनाः।
क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी। भ्रातरश्चैव मे वीराः कर्षिताः शरपीडिताः।
मत्कृते भ्रातृसौहार्दाद्राज्याद्भ्रष्टास्तथा सुखात्। जीवितं बहु मन्यन्ते जीवितं ह्यद्य दुर्लभं। २०४५
जीवितस्य विशेषेण तपस्तप्स्यामि दुश्चरं। न घातयिष्यामि रणे मित्राणीमानि केशव।
रथान्मे बहुसाहस्रान्दिव्यैरस्त्रैर्महाबलः। घातयत्यनिशं भीष्मः प्रवराणां प्रहारिणां।
किन्नु कृत्वा कृतं मे स्याद्ब्रूहि माधव मा चिरं। मध्यस्थमिव पश्यामि समरे सव्यसाचिनं।
एको भीमः परं शक्त्या युद्ध्यत्येष महाबलः। केवलं बाहुवीर्येण क्षात्रधर्ममनुस्मरन्।
गदया वीरघातिन्या यथोत्साहं महामनाः। करोत्यसुकरं कर्म गजाश्वरथपत्तिषु। २०५०
नालमेष क्षयं कर्तुं परसैन्यस्य मारिष। आर्जवेनैव युद्धेन वीर वर्षशतेन वा।
एकोऽस्त्रवित्सखा तेऽयं सोऽप्यस्मान् समुपेक्षते। निर्दह्यमानान् भीष्मेण द्रोणेन च महात्मना।
दिव्यान्यस्त्राणि भीष्मस्य द्रोणस्य च महात्मनः। धक्ष्यन्ति क्षत्रियान् सर्वान् प्रयुक्तानि पुनः पुनः।
कृष्ण भीष्मः सुसंरब्धः सहितः सर्वपार्थिवैः। क्षपयिष्यति नो नूनं यादृशोऽस्य पराक्रमः।
स त्वं पश्य महेष्वासं योगेश्वर महारथं। यो भीष्मं शमयेत्संख्ये दावाग्निं जलदो यथा। २०५५
तव प्रसादाद्गोविन्द पाण्डवा निहतद्विषः। स्वराज्यमनुसंप्राप्ता मोदिष्यन्ति सबान्धवाः।
एवमुक्त्वा ततः पार्थो ध्यायन्नास्ते महामनाः। चिरमन्तर्मना भूत्वा शोकोपहतचेतनः।
शोकार्त्तं पाण्डवं दृष्ट्वा दुःखेन हतचेतसं। अब्रवीत्तत्र गोविन्दो हर्षयन् सर्वपाण्डवान्।
मा शुचो भरतश्रेष्ठ न त्वं शोचितुमर्हसि। यस्य ते भ्रातरः शूराः सर्वे लोकस्य धन्विनः।
अहञ्च प्रियकृद्राजन् सात्यकिश्च महारथः। विराटद्रुपदौ वृद्धौ धृष्टद्युम्नश्च पार्षतः। २०६०
तथैव सबलाः सर्वे राजानो राजसत्तम। त्वत्प्रसादं प्रतीक्षन्ते त्वद्भक्ताश्च विशाम्पते।
एष ते पार्षतो नित्यं हितकामः प्रिये रतः। सैनापत्यमनुप्राप्तो धृष्टद्युम्नो महारथः।
शिखण्डी च महाबाहो भीष्मस्यान्तकरः किल। एतच्छ्रुत्वा महाराजो धृष्टद्युम्नं महारथं।
अब्रवीत्समितौ तस्यां वासुदेवस्य शृण्वतः। धृष्टद्युम्न निबोधेदं यत्त्वा वक्ष्यामि पार्षत।
नातिक्रम्यं भवेत्तच्च वचनं मम भाषितं। भवान् सेनापतिर्मह्यं वासुदेवेन सम्मतः। २०६५
कार्त्तिकेयो यथा नित्यं देवानामभवत्पुरा। तथा त्वमपि पाण्डूनां सेनानीर्भरतर्षभ।
स त्वं पुरुषशार्दूल विक्रमी जहि कौरवान्। अहञ्च त्वाऽनुयास्यामि भीमः कृष्णश्च मारिष।
माद्रीपुत्रौ च सहितौ द्रौपदेयाश्च दंशिताः। ये चान्ये पृथिवीपालाः प्रधानाः पुरुषर्षभ।

ततस्तु हर्षयन् सर्व्वान् धृष्टद्युम्नोऽभ्यभाषत । अहं द्रोणान्तकः पार्थ विहितः शम्भुना पुरा ।
रणे भीष्मं तथा द्रोणं कृपं शल्यं जयद्रथं । सर्व्वानद्य रणे दृप्तान् प्रतियोत्स्यामि पार्थिवान् । २०७०
अथोत्क्रुष्टं महावीर्य्यैः पाण्डवैर्युद्धदुर्म्मदैः । समुद्यते पार्थिवेन्द्रे पार्षते शत्रुसूदने ।
अब्रवीच्च ततः पार्थः पार्षतं पृतनापतिं । व्यूहः क्रौञ्चारुणो नाम सर्व्वशत्रुनिवर्हणः ।
यन्तु बृहस्पतिरिन्द्राय तदा देवासुरेऽब्रवीत् । तं यथावत्प्रतिव्यूह परानीकविनाशनं ।
अदृष्टपूर्व्वं राजानः पश्यन्तु कुरुभिः सह । तथोक्तः स नृदेवेन विष्णुर्वज्रभृतेव ह ।
प्रभाते सर्व्वसैन्यानामग्रे चक्रे धनञ्जयं । आदित्यपथगः केतुस्तस्याद्भुतमनोरमः । २०७५
शासनात्पुरुहूतस्य निर्म्मितो विश्वकर्म्मणा । इन्द्रायुधसवर्णाभिः पताकाभिरलङ्कृतः ।
आकाशग इवाकाशे गन्धर्व्वनगरोपमः । नृत्यमान इवाभाति रथचर्य्यासु मारिष ।
तेन रत्नवता पार्थः स च गाण्डीवधन्वना । बभूव परमोपेतः स्वयम्भूरिव भानुना ।
शिरोऽभूद्द्रुपदो राजा महत्या सेनया वृतः । कुन्तिभोजश्च चैद्यश्च चक्षुष्यास्तां जनेश्वरौ ।
दाशार्णकाः प्रयागाश्च दाशेरकगणैः सह । अनूपकाः किराताश्च ग्रीवायां भरतर्षभ । २०८०
पटच्चरैश्च हुण्डैश्च राजन्पौरवकैः सह । निषादैः सहितश्चैव पृष्ठमासीद्युधिष्ठिरः ।
पक्षौ तु भीमसेनश्च धृष्टद्युम्नश्च पार्षतः । द्रौपदेयाभिमन्युश्च सात्यकिश्च महारथः ।
पिशाचा दारदाश्चैव पौण्ड्राः कुण्डीविषैः सह । मडका लडकाश्चैव तङ्गणाः परतङ्गणाः ।
वाह्लिकास्तित्तिराश्चैव पाण्ड्याश्चोलाश्च भारत । शरवास्तुम्बुमाश्चैव वत्साश्च सहनाकुलैः ।
नकुलः सहदेवश्च वामं पार्श्वमुपाश्रितौ । रथानामयुतं पक्षैः शिरस्तु नियुतं तथा । २०८५
पृष्ठमर्ब्बुदमेवासीत्सहस्राणि च विंशतिः । ग्रीवायां नियुतं चापि सहस्राणि च सप्ततिः ।
पक्षकोटिषु पक्षेषु पक्षान्तेषु च वारणाः । जग्मुः परिवृता राजन् ज्वलन्त इव पर्व्वताः ।
जघनं पालयामास विराटः सह केकयैः । काशिराजश्च शैव्यश्च रथानामयुतैस्त्रिभिः ।
एवमेतं महाव्यूहं व्यूह्य भारत पाण्डवाः । सूर्य्योदयनमिच्छन्तः स्थिता युद्धाय दंशिताः
तेषामादित्यवर्णानि विमलानि महान्ति च । श्वेतच्छत्राण्यशोभन्त वारणेषु ध्वजेषु च । २०९०
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि क्रौञ्चव्यूहनिर्म्माणे पञ्चाशोऽध्यायः ॥ ५० ॥
॥ सञ्जय उवाच ॥ क्रौञ्चं दृष्ट्वा महाव्यूहमभेद्यं तनयस्तव । व्यूढं दृष्ट्वा महाघोरं पाण्डवेनामितौजसा ।
आचार्य्यमुपसङ्गम्य कृपं शल्यञ्च मारिष । सौमदत्तिं विकर्णञ्च सोऽश्वत्थामानमेव च ।
दुःशासनादीन् भ्रातॄंश्च सर्व्वानेव च भारत । अन्यांश्च सुबहून् शूरान् युद्धाय समुपागतान् ।
प्राहेदं वचनं काले हर्षयंस्तनयस्तव । नानाशस्त्रप्रहरणाः सर्व्वे शास्त्रार्थकोविदाः ।
एकैकशः समर्था हि यूयं सर्व्वे महारथाः । पाण्डुपुत्रान् रणे हन्तुं ससैन्याः किमु संहताः । २०९५
अपर्य्याप्तं तदस्माकं बलं भीष्माभिरक्षितं । पर्य्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितं ।
संस्थानाः शूरसेनाश्च वेणिकाः कुकुरास्तथा । रेचकास्त्रिगर्त्ताश्च मद्रका यवनास्तथा ।

शकुनिश्चयेन सहितास्तथा दुःशासनेन हि। विकर्णेन सुवीरेण तथा नन्दोपनन्दकैः।
चित्रसेनेन सहिताः सहिता मणिभद्रकैः। भीष्ममेवाभिरक्षन्तु सहसैन्यपुरस्कृताः।
ततो भीष्मश्च द्रोणश्च तवपुत्राश्च मारिष। अव्यूहन्त महाव्यूहं पार्थानां प्रतिबाधने। २१००
भीष्मः सैन्येन महता समन्तात् परिवारितः। ययौ प्रकर्षन्महतीं वाहिनीं सुरराडिव।
तमन्वयात् महेष्वासो भारद्वाजः प्रतापवान्। कुन्तलैश्च दशार्णैश्च मागधैश्च विशाम्पते।
विदर्भैर्मेकलैश्चैव कर्णप्रावरणैरपि। सहिताः सर्व्वसैन्येन भीष्ममाहवशोभिनं।
गान्धाराः सिन्धुसौवीराः शिवयोऽथ वसातयः। शकुनिश्च स सैन्येन भारद्वाजमपालयत्।
ततो दुर्य्योधनो राजा सहितः सर्व्वसोदरैः। अश्वातकैर्विकर्णैश्च तथा वामनकोशलैः। २१०५
दरदैश्च वृकैश्चैव तथा क्षुद्रकमालवैः। अभ्यद्रवत संहृष्टः पाण्डवेयस्य वाहिनीं।
भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिष। विन्दानुविन्दावावन्त्यौ वामं पार्श्वमपालयन्।
सोमदत्तः सुशर्म्मा च काम्बोजश्च सुदक्षिणः। शतायुश्च श्रुतायुश्च दक्षिणं पक्षमाश्रिताः।
अश्वत्थामा कृपश्चापि कृतवर्म्मा च सात्वतः। महत्या सेनया सार्द्धं सेनापृष्ठे व्यवस्थिताः।
पृष्ठगोपाश्च तस्यासन्नानाजनपदेश्वराः। केतुमान् वसुदानश्च पुत्रः काश्यस्य वा विभुः। २११०
ततस्ते तावकाः सर्व्वे हृष्टा युद्धाय भारत। दध्मुः शङ्खान् मुदा युक्ताः सिंहनादांस्तथाऽनदन्।
तेषां श्रुत्वा तु हृष्टानां कुरुवृद्धः पितामहः। सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान्।
ततः शङ्खाश्च भेर्य्यश्च पेश्यश्च विविधाः परैः। आनकाश्चाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत्।
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ। प्रदध्मतुः शङ्खवरौ हेमरत्नविभूषितौ।
पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः। पौण्ड्रं दध्मौ महाशङ्खं भीमकर्म्मा वृकोदरः। २११५
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः। नकुलः सहदेवश्च सुघोषमणिपुष्पकौ।
काशिराजश्च शैव्यश्च शिखण्डी च महारथः। धृष्टद्युम्नो विराटश्च सात्यकिश्च महारथः।
पाञ्चाल्यश्च महेष्वासो द्रौपदेयाश्च पञ्च वै। सर्व्वे दध्मुर्महाशङ्खान् सिंहनादांश्च नेदिरे।
स घोषः सुमहांस्तत्र वीरैस्तैः समुदीरितः। नभश्च पृथिवीञ्चैव तुमुलो व्यनुनादयन्।
एवमेते महाराज प्रहृष्टाः कुरुपाण्डवाः। पुनर्युद्धाय सञ्जग्मुस्तापयानाः परस्परं। २१२०
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि कौरवसैन्यव्यूहे एकपञ्चाशोऽध्यायः॥ ५१ ॥
॥ धृतराष्ट्र उवाच ॥ एवं व्यूढेष्वनीकेषु मामकेष्वितरेषु च। कथं प्रहरतां श्रेष्ठाः सम्प्रहारं प्रचक्रिरे।
॥ सञ्जय उवाच ॥ एवं व्यूढेष्वनीकेषु सन्नद्धा रुचिरध्वजाः। अपारमिव सन्दृश्यं सागरप्रतिमं बलं।
तेषां मध्ये स्थितो राजन् पुत्रो दुर्य्योधनस्तव। अब्रवीत् तावकान् सर्व्वान् युध्यध्वमिति दंशिताः।
ते मनः क्रूरमास्थाय समभित्यक्तजीविताः। पाण्डवानभ्यवर्त्तन्त सर्व्वे एवोच्छ्रितध्वजाः।
ततो युद्धं समभवत्तुमुलं लोमहर्षणं। तावकानां परेषाञ्च व्यतिषिक्तरथद्विपं। २१२५
मुक्तास्तु रथिभिर्बाणा रुक्मपुङ्खाः सुतेजिताः। सन्निपेतुरकुण्ठाग्रा नागेषु च हयेषु च।

तथा प्रवृत्ते सङ्ग्रामे धनुरुद्यम्य दंशितः । अभिपत्य महाबाहुर्भीष्मो भीमपराक्रमः ।
सौभद्रे भीमसेने च अर्ज्जुने च महारथे । कैकेये च विराटे च धृष्टद्युम्ने च पार्षते ।
एतेषु नरवीरेषु चेदिमत्स्येषु वा पुनः । ववर्ष शरवर्षाणि वृद्धः कुरुपितामहः ।
प्राकम्पत महाव्यूहस्तस्मिन् वीरसमागमे । सर्व्वेषामेव सैन्यानामासीद्व्यतिकरो महान् । २१३०
सादिनो ध्वजिनश्चैव हताः प्रवरवाजिनः । विप्रयातरथानीकाः समपद्यन्त पाण्डवाः ।
अर्ज्जुनस्तु नरव्याघ्रो दृष्ट्वा भीष्मं महारथं । वार्ष्णेयमब्रवीत् क्रुद्धो याहि यत्र पितामहः ।
एष भीष्मः सुसंक्रुद्धो वार्ष्णेय मम वाहिनीं । नाशयिष्यति सुव्यक्तं दुर्य्योधनहिते रतः ।
एष द्रोणः कृपः शल्यो विकर्णश्च जनार्द्दन । धार्त्तराष्ट्राश्च सहिता दुर्य्योधनपुरोगमाः ।
पाञ्चालान्निहनिष्यन्ति रक्षिता दृढधन्विना । सोऽहं भीष्मं हनिष्यामि सैन्यहेतोर्ज्जनार्द्दन । २१३५
तमब्रवीत् वासुदेवो यत्तो भव धनञ्जय । एष त्वां प्रापये वीर पितामहरथं प्रति ।
एवमुक्त्वा ततः शौरी रथं तं लोकविश्रुतं । प्रापयामास भीष्मस्य रथं प्रति जनेश्वर ।
चलद्बहुपताकेन बलाकावर्णवाजिना । समुच्छ्रितमहाभीमनदद्वानरकेतुना ।
महता मेघनादेन रथेनादित्यवर्च्चसा । विनिघ्नन् कौरवानीकं शूरसेनांश्च पाण्डवः ।
आगच्छत रणे भीष्मं सुहृदां हर्षवर्द्धनः । तमापतन्तं वेगेन प्रभिन्नमिव कुञ्जरं । २१४०
त्रासयानं रणे शूरान् पातयन्तञ्च सायकैः । सैन्धवप्रमुखैर्गुप्तः प्राच्यसौवीरकेकयैः ।
सहसा प्रत्युदीयाय भीष्मः शान्तनवोऽर्ज्जुनं । को हि गाण्डीवधन्वानमन्यः कुरुपितामहात् ।
द्रोणवैकर्त्तनाभ्यां वा रथी संयातुमर्हति । ततो भीष्मो महाराज कौरवाणां पितामहः ।
अर्ज्जुनं सप्तसप्तत्या नाराचानां समर्पयत् । द्रोणश्च पञ्चविंशत्या कृपः पञ्चाशतैः शरैः ।
दुर्य्योधनश्चतुःषष्ट्या शल्यश्च नवभिः शरैः । द्रौणिः षष्ट्या नरव्याघ्रो विकर्णश्च त्रिभिः शरैः । २१४५
आर्त्तायनिस्त्रिभिर्भल्लै राजन् विव्याध पाण्डवं । स तैर्विद्धो महेष्वासः समन्तान्निशितैः शरैः ।
न विव्यथे महाबाहुर्भिद्यमान इवाचलः । स भीष्मं पञ्चविंशत्या कृपञ्च नवभिः शरैः ।
द्रोणं षष्ट्या नरव्याघ्रं विकर्णञ्च त्रिभिः शरैः । आर्त्तायनिं त्रिभिर्बाणै राजानञ्चापि पञ्चभिः ।
प्रत्यविध्यदमेयात्मा किरीटी भरतर्षभ । तं सात्यकिर्विराटश्च धृष्टद्युम्नश्च पार्षतः ।
द्रौपदेयाभिमन्युश्च परिवव्रुर्धनञ्जयं । ततो द्रोणं महेष्वासं गाङ्गेयस्य हितेरतं । २१५०
अभ्यवर्त्तत पाञ्चाल्यः संयुक्तः सह सोमकैः । भीष्मस्तु रथिनां श्रेष्ठस्तूर्णं विव्याध पाण्डवं ।
अशीत्या निशितैर्बाणैस्ततोऽक्रुश्यन्त तावकाः । तेषान्तु निनदं श्रुत्वा प्रहृष्टानां प्रहृष्टवत् ।
प्रविवेश ततो मध्यं रथसिंहः प्रतापवान् । तेषान्तु रथसिंहानां मध्यं प्राप्य धनञ्जयः ।
चिक्रीड धनुषा राजन्लक्ष्यं कृत्वा महारथान् । ततो दुर्य्योधनो राजा भीष्ममाह नरेश्वरः ।
पीड्यमानं स्वकं सैन्यं दृष्ट्वा पार्थेन संयुगे । एष पाण्डुसुतस्तात कृष्णेन सहितो बली । २१५५
पातयन् सर्व्वसैन्यानि मूलं नः परिकृन्तति । त्वयि जीवति गाङ्गेय द्रोणे च रथिनां वरे ।

त्यक्ते ह्येष कर्णोऽपि न्यस्तशस्त्रो विशाम्पते। न युध्यति रणे पार्थान् हितकामः सदा मम।
स तथा कुरु गाङ्गेय यथा हन्येत फाल्गुनः। एवमुक्तस्ततो राजन् पिता देवव्रतस्तव।
धिक् क्षत्रधर्ममित्युक्त्वा प्रायात् पार्थरथं प्रति। उभौ श्वेतहयौ राजन् संस्थितौ प्रेक्ष्य पार्थिवाः।
सिंहनादं भृशं चक्रुः शङ्खान् दध्मुश्च मारिष। द्रौणिर्दुर्य्योधनश्चैव विकर्णश्च तवात्मजः। २१६०
परिवार्य्य रणे भीष्मं स्थिता युद्धाय मारिष। तथैव पाण्डवाः सर्व्वे परिवार्य्य धनञ्जयं।
स्थिता युद्धाय महते ततो युद्धमवर्त्तत। गाङ्गेयस्तु रणे पार्थमानर्च्छन्नवभिः शरैः।
तमर्ज्जुनः प्रत्यविध्यत् दशभिर्मर्म्मभेदिभिः। ततः शरसहस्रेण सुप्रयुक्तेन पाण्डवः।
अर्ज्जुनः समरश्लाघी भीष्मस्यावारयत् दिशः। शरजालं ततस्तन्तु शरजालेन पार्थिव।
वारयामास पार्थस्य भीष्मः शान्तनवस्तदा। उभौ परमसंहृष्टावुभौ युद्धाभिनन्दिनौ। २१६५
निर्व्विशेषमयुध्येतां कृतप्रतिकृतैषिणौ। भीष्मचापप्रयुक्तानि शरजालानि सङ्घशः।
शीर्य्यमाणान्यदृश्यन्त भिन्नान्यर्ज्जुनसायकैः। तथैवार्ज्जुनमुक्तानि शरजालानि सर्व्वशः।
गाङ्गेयशरनुन्नानि न्यपतन्त महीतले। अर्ज्जुनः पञ्चविंशत्या भीष्ममार्च्छच्छितैः शरैः।
भीष्मोऽपि समरे पार्थं विव्याध नवभिः शरैः। अन्योन्यं तौ हयान् विद्ध्वा ध्वजौ च सुमहाबलौ।
रथेषां रथचक्रञ्च चिक्रीडतुररिन्दमौ। ततः क्रुद्धो महाराज भीष्मः प्रहरतां वरः। २१७०
वासुदेवं त्रिभिर्वाणैराजघान स्तनान्तरे। भीष्मचापच्युतैस्तैस्तु निर्विद्धो मधुसूदनः।
विरराज रणे राजन् सपुष्प इव किंशुकः। ततोऽर्ज्जुनोऽभिसंक्रुद्धो निर्विद्धं प्रेक्ष्य माधवं।
गाङ्गेयसारथिं सङ्ख्ये निर्व्विभेद त्रिभिः शरैः। यतमानौ ततो वीरावन्योन्यस्य रथं प्रति।
नाशक्नुतां तदाऽन्योन्यमभिसन्धातुमाहवे। मण्डलानि विचित्राणि गतप्रत्यागतानि च।
दर्शयामासतू राजन् सूतसामर्थ्यलाघवात्। अन्तरञ्च प्रहारेषु तर्कयन्तौ विशाम्पते। २१७५
राजन्नन्तरमार्गस्थौ स्थितावास्तां मुहुर्म्मुहुः। उभौ सिंहरवोन्मिश्रं शङ्खशब्दञ्च चक्रतुः।
तथैव चापनिर्घोषं चक्रतुस्तौ महारथौ। तयोः शङ्खप्रणादेन रथनेमिस्वनेन च।
दारिता सहसा भूमिश्चकम्प च ननाद च। न तयोरन्तरं कश्चिद्ददृशे भरतर्षभ।
बलिनौ समरे शूरावन्योन्यसदृशावुभौ। चिह्नमात्रेण भीष्मस्य प्रययुस्तत्र कौरवाः।
तथा पाण्डुसुताः पार्थं चिह्नमात्रेण जज्ञिरे। तयोर्नृवरयो राजन् दृष्ट्वा तादृक् पराक्रमं। २१८०
विस्मयं सर्व्वभूतानि जग्मुर्भारत संयुगे। न तयोरन्तरं कश्चिद्रणे पश्यति भारत।
धर्म्मे स्थितस्य हि यथा न कश्चिद्वृजिनं क्वचित्। उभौ हि शरजालेन तावदृश्यौ बभूवतुः।
प्रकाशौ तु ततस्तूर्णं बभूवतुरुभौ रणे। तत्र देवाः सगन्धर्व्वाश्चारणाश्च महर्षयः।
अन्योऽन्यं प्रत्यभाषन्त तयोर्दृष्ट्वा पराक्रमं। न शक्यौ युधि संरब्धौ जेतुमेतौ महारथौ।
स देवासुरगन्धर्व्वैर्लोकैरपि कथञ्चन। आश्चर्य्यभूतं लोकेषु युद्धमेतन्महाद्भुतं। २१८५
नैव चैतादृशं युद्धं भविष्यति कदाचन। नैव शक्यो रणे जेतुं भीष्मः पार्थेन धीमता।

सधनुः सरथः साश्वः प्रवपन् सायकान् रणे। तथैव पाण्डवं युद्धे देवैरपि दुरासदं।
न विजेतुं रणे भीष्म उत्सहेत धनुर्द्धरं। आलोकादपि युद्धं हि सममेतद्भविष्यति।
इति स्म वाचः श्रूयन्ते प्रचरन्त्यस्ततस्ततः। गाङ्गेयार्ज्जुनयोः सङ्ख्ये स्तवयुक्ता विशाम्पते।
त्वदीयास्तु ततो योधाः पाण्डवेयाश्च भारत। अन्योऽन्यं समरे जघ्नुस्तयोस्तत्र पराक्रमे। २१९०
शितधारैस्तथा खड्गैर्विमलैश्च परश्वधैः। शरैरन्यैश्च बहुभिः शस्त्रैर्नानाविधैर्युधि।
उभयोः सेनयोः शूरा न्यकृन्तन्त परस्परं। वर्त्तमाने तथा युद्धे घोरे तस्मिन् सुदारुणे।
द्रोणपाञ्चाल्ययो राजन् महानासीत् समागमः।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मार्जुनयुद्धे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

॥ धृतराष्ट्र उवाच ॥ कथं द्रोणो महेष्वासः पाञ्चाल्यश्चैव पार्षतः। रणे समीयतुर्यत्तौ तन्ममाचक्ष्व सञ्जय।
दिष्टमेव परं मन्ये पौरुषादपि सञ्जय। यत्र शान्तनवो भीष्मो नातरद्युधि पाण्डवं। २१९५
भीष्मो हि समरे क्रुद्धो हन्याल्लोकांश्चराचरान्। स कथं पाण्डवं युद्धे नातरत्तरसौजसा।
॥ सञ्जय उवाच ॥ शृणु राजन् स्थिरो भूत्वा युद्धमेतत् सुदारुणं। न शक्यः पाण्डवो जेतुं देवैरपि सवासवैः।
द्रोणस्तु विविधैर्वाणैर्धृष्टद्युम्नममर्षणं। सारथिञ्चास्य भल्लेन रथनीडादपातयत्।
तस्याथ चतुरो वाहांश्चतुर्भिः सायकोत्तमैः। पीडयामास संक्रुद्धो धृष्टद्युम्नस्य मारिष।
धृष्टद्युम्नस्ततो द्रोणं नवत्या निशितैः शरैः। विव्याध समरे वीरस्तिष्ठ तिष्ठेति चाब्रवीत्। २२००
ततः पुनरमेयात्मा भारद्वाजः प्रतापवान्। शरैः प्रच्छादयामास धृष्टद्युम्नममर्षणं।
आददे च शरं घोरं पार्षतस्य वधं प्रति। शक्राशनिसमस्पर्शं मृत्युदण्डमिवापरं।
हाहाकारो महानासीत् सर्व्वसैन्यस्य भारत। तमिषुं सन्धितं दृष्ट्वा भारद्वाजेन संयुगे।
तत्राद्भुतमपश्याम धृष्टद्युम्नस्य पौरुषं। यदेकः समरे वीरस्तस्थौ गिरिरिवाचलः।
तञ्च दीप्तं महाघोरमायान्तं मृत्युमात्मनः। चिच्छेद शरवृष्टिञ्च भारद्वाजे मुमोच ह। २२०५
तत उच्चुक्रुशुर्हृष्टाः पाञ्चालाः पाण्डवैः सह। धृष्टद्युम्नेन तत् कर्म्म कृतं दृष्ट्वा सुदुष्करं।
ततः शक्तिं महावेगां स्वर्णवैदूर्य्यभूषितां। द्रोणस्य निधनाकाङ्क्षी चिक्षेप स पराक्रमी।
तामापतन्तीं सहसा शक्तिं कनकभूषणां। त्रिधा चिच्छेद समरे भारद्वाजो हसन्निव।
शक्तिं विनिहतां दृष्ट्वा धृष्टद्युम्नः प्रतापवान्। ववर्ष शरवर्षाणि द्रोणं प्रति जनेश्वर।
शरवर्षं ततस्तन्तु सन्निवार्य्य महारथः। द्रोणो द्रुपदपुत्रस्य मध्ये चिच्छेद कार्म्मुकं। २२१०
स छिन्नधन्वा समरे गदां गुर्व्वीं महायशाः। द्रोणाय प्रेषयामास गिरिसारमयीं बली।
सा गदा तत्करान्मुक्ता प्रागात् द्रोणजिघांसया। तत्राद्भुतमपश्याम भारद्वाजस्य विक्रमं।
लाघवात् व्यंसयामास गदां हेमविभूषितां। व्यंसयित्वा गदाञ्चैव प्रेषयामास पार्षते।
भल्लान् सुनिशितान् पीतान् स्वर्णपुङ्खान् शिलाशितान्। ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे।
अथान्यद्धनुरादाय धृष्टद्युम्नो महामनाः। द्रोणं युधि पराक्रम्य शरैर्विव्याध पञ्चभिः। २२१५

रुधिराक्तौ ततस्तौ तु शुशुभाते नरर्षभौ । वसन्ते पुष्पशबलौ पुष्पिताविव किंशुकौ ।
अमर्षितस्ततो राजन् पराक्रम्य चमूमुखे । द्रोणो द्रुपदपुत्रस्य पुनश्चिच्छेद कार्मुकं ।
अथैनं छिन्नधन्वानं शरैः सन्नतपर्व्वभिः । अवाकिरदमेयात्मा वृष्ट्या मेघ इवाचलं ।
सारथिञ्चास्य भल्लेन रथनीडादपातयत् । अथास्य चतुरो वाहांश्चतुर्भिर्निशितैः शरैः ।
पातयामास समरे सिंहनादं ननाद च । ततोऽपरेण भल्लेन हस्ताच्चापमथाच्छिनत् । २२२०
स छिन्नधन्वा विरथो हताश्वो हतसारथिः । गदापाणिरवारोहत् ख्यापयन् पौरुषं महत् ।
तामस्य विशिखैस्तूर्णं पातयामास भारत । रथादनवरूढस्य तदद्भुतमिवाभवत् ।
ततः सुविपुलं चर्म्म शतचन्द्रं ततो रणे । खड्गञ्च विपुलं दिव्यं प्रगृह्य सुभुजो बली ।
अभिदुद्राव वेगेन द्रोणस्य वधकाङ्क्षया । आमिषार्थी यथा सिंहो वने मत्तमिव द्विपं ।
तत्राश्चर्य्यमपश्याम भारद्वाजस्य पौरुषं । लाघवञ्चास्त्रयोगञ्च बलं बाह्वोश्च भारत । २२२५
यदेकः शरवर्षेण वारयामास पार्षतं । न शशाक ततो गन्तुं बलवानपि संयुगे ।
तत्र स्थितमपश्याम धृष्टद्युम्नं महारथं । वारयाणं शरौघांश्च चर्म्मणा कृतहस्तवत् ।
ततो भीमो महाबाहुः सहसाभ्यपतद्बली । साहाय्यकारी समरे पार्षतस्य महात्मनः ।
स द्रोणं निशितैर्बाणै राजन् विव्याध सप्तभिः । पार्षतञ्च तदा तूर्णमन्यमारोपयद्रथं ।
ततो दुर्य्योधनो राजा कालिङ्गं समचोदयत् । सैन्येन महता युक्तं भारद्वाजस्य गोपने । २२३०
ततः सा महती सेना कलिङ्गानां नरेश्वर । भीममभ्युद्ययौ भीमा तव पुत्रस्य शासनात् ।
पाञ्चाल्यमभिसन्त्यज्य द्रोणोऽपि रथिनां वरः । विराटद्रुपदौ वृद्धौ योधयामास सङ्गतौ ।
धृष्टद्युम्नोऽपि समरे धर्म्मराजं समभ्ययात् । ततः प्रववृते युद्धं तुमुलं लोमहर्षणं ।
कलिङ्गानाञ्च समरे भीमस्य च महात्मनः । जगतः प्रक्षयकरं घोररूपं भयानकं ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि धृष्टद्युम्नद्रोणयुद्धे त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
॥ धृतराष्ट्र उवाच ॥ पुत्रेण मम सम्प्रोक्तः कलिङ्गो वाहिनीपतिः । कथमद्भुतकर्म्माणं भीमसेनं महाबलं । २२३५
चरन्तं गदया वीरं दण्डपाणिमिवान्तकं । योधयामास समरे कालिङ्गः सह सेनया ।
॥ सञ्जय उवाच ॥ पुत्रेण तव राजेन्द्र स तथोक्तो महाबलः । महत्या सेनया युक्तः प्रायाद्भीमरथं प्रति ।
तामापतन्तीं महतीं कलिङ्गानां महाचमूं । रथनागाश्वकलिलां प्रगृहीतमहायुधां ।
भीमसेनः कलिङ्गानामार्च्छत् भारत वाहिनीं । केतुमन्तञ्च नैषादिमागच्छन् सह चेदिभिः ।
ततः श्रुतायुः संक्रुद्धो राज्ञा केतुमता सह । आससाद रणे भीमं व्यूढानीकेन दंशितः । २२४०
रथैरनेकसाहस्रैः कलिङ्गानां जनाधिपः । अयुतेन गजानाञ्च निषादैः सह केतुमान् ।
भीमसेनं महाराज समन्तात् पर्य्यवारयत् । चेदिमत्स्यकरूषास्तु भीमसेनपुरोगमाः ।
अभ्यवर्त्तन्त सहसा निषादान् सह राजभिः । ततः प्रववृते युद्धं घोररूपं भयानकं ।
प्रधावताञ्च योधानां परस्परजिघांसया । घोरमासीत्ततो युद्धं भीमस्य सहसा परैः ।

यथेन्द्रस्य महाराज महत्या दैत्यसेनया । तस्य सैन्यस्य सङ्ग्रामे युध्यमानस्य भारत । २२४५
बभूवुः सुमहाशब्दाः सागरस्येव गर्जतः । अन्योऽन्यस्य ततो योधा विकृन्तन्तो विशाम्पते ।
महीञ्चक्रुश्चितां सर्व्वां मांसशोणितसन्निभां । योधान् स्वान् स्वान् परांश्चापि न व्यजानन् जिघांसया ।
स्वानप्याददते ते तु शूराः समरदुर्ज्जयाः । विमर्द्दः सुमहानासीदल्पानां बहुभिः सह ।
कलिङ्गैः सह चेदीनां निषादैश्च विशाम्पते । कृत्वा पुरुषकारन्तु यथाशक्ति महाबलाः ।
भीमसेनं परित्यज्य संन्यवर्त्तन्त चेदयः । सर्व्वैः कलिङ्गैरासन्नः सन्निवृत्तेषु चेदिषु । २२५०
स्वबाहुबलमास्थाय संन्यवर्त्तत पाण्डवः । न चचाल रथोपस्थात् भीमसेनो महाबलः ।
शितैरवाकिरन् बाणैः कलिङ्गानां वरूथिनीं । कलिङ्गस्तु महेष्वासः पुत्रश्चास्य महारथः ।
शक्रदेव इति ख्यातो जघ्नतुः पाण्डवं शरैः । ततो भीमो महाबाहुर्व्विधुन्वन् रुचिरं धनुः ।
योधयामास कालिङ्गं स्वबाहुबलमाश्रितः । शक्रदेवस्तु समरे विसृजन् सायकान् बहून् ।
अश्वान् जघान समरे भीमसेनस्य सायकैः । तं दृष्ट्वा विरथं तत्र भीमसेनमरिन्दमं । २२५५
शक्रदेवोऽभिदुद्राव किरन्त निशितैः शरैः । भीमस्योपरि राजेन्द्र शक्रदेवो महाबलः ।
ववर्ष शरवर्षेण तपान्ते जलदो यथा । हताश्वे तु रथे तिष्ठन् भीमसेनो महाबलः ।
शक्रदेवाय चिक्षेप सर्व्वशैक्यायसीं गदां । स तया निहतो राजन् कालिङ्गस्य सुतो रथात् ।
सध्वजः सह सूतेन जगाम धरणीतलं । हतमात्मसुतं दृष्ट्वा कलिङ्गानां महारथः ।
रथैरनेकसाहस्रैर्भीमस्यावारयद्दिशः । ततो भीमो महाबाहुर्गदां त्यक्त्वा महाबलः । २२६०
उद्बवर्ह स निस्त्रिंशं चिकीर्षुः कर्म्म दारुणं । चर्म्म चाप्रतिमं राजन्नार्षभं पुरुषर्षभ ।
नक्षत्रैरर्द्धचन्द्रैश्च शातकुम्भमयैश्चितं । कालिङ्गस्तु ततः क्रुद्धो धनुर्ज्यामवमृज्य च ।
प्रगृह्य स शरं घोरमेकं सर्पविषोपमं । प्राहिणोत् भीमसेनाय बधाकाङ्क्षी नरेश्वर ।
तमापतन्तं वेगेन प्रेरितं निशितं शरं । भीमसेनो द्विधा राजंश्चिच्छेद विपुलासिना ।
उदक्रोशच्च संहृष्टस्त्रासयानो बलं तव । कालिङ्गोऽथ ततः क्रुद्धो भीमसेनस्य संयुगे । २२६५
तोमरान् प्राहिणोच्छीघ्रं चतुर्द्दश शिलाशितान् । तानप्राप्तान् महाबाहुः खगतानेव पाण्डवः ।
चिच्छेद सहसा राजन्नसम्भ्रान्तो वरासिना । निकृत्य तु रणे भीमस्तोमरान् वै चतुर्द्दश ।
भानुमन्तमभिप्रेक्ष्य प्राद्रवत् पुरुषर्षभ । भानुमांस्तु ततो भीमं शरवर्षेण छादयन् ।
ननाद बलवन्नादं नादयानो नभस्तलं । न तं स ममृषे भीमः सिंहनादं महारणे ।
ततः स्वरेण महता विननाद महास्वनः । तेन शब्देन वित्रस्ता कलिङ्गानां वरूथिनी । २२७०
न भीमं समरे मेने मानुषं पुरुषर्षभ । ततो भीमो महाराज नदित्वा विपुलं स्वनं ।
सासिर्वेगवदाप्लुत्य दन्ताभ्यां वारणोत्तमं । आरुरोह ततो मध्यं नागराजस्य मारिष ।
खड्गेन पृतनामध्ये भानुमन्तमथाच्छिनत् । सोऽन्तरा युधि तं हत्वा राजपुत्रमरिन्दमः ।
गुरुभारसहं स्कन्धे नागस्यासिमपातयत् । छिन्नस्कन्धः स विनदन् पपात गजयूथपः ।

आरूढः सिंहवेगेन सानुमानिव पर्व्वतः। पततश्चाप्यवप्लुत्य गजात् भारत भारतः। २२७५
खड्गपाणिरदीनात्मा तस्थौ भुवि स दंशितः। स चचार बहून् मार्गानभीतः पातयन् गजान्।
अग्निचक्रमिवाविद्धं सर्व्वतः प्रत्यदृश्यत। अश्ववृन्देषु नागेषु रथानीकेषु वा विभुः।
पदातीनाञ्च सङ्घेषु विनिघ्नन् प्रत्यदृश्यत। श्येनवद्व्यचरत् सङ्ख्ये युधि भीमो महाबलः।
छिन्दंस्तेषां शरीराणि शिरांसि च महाजवः। खड्गेन शितधारेण संयुगे गजयोधिनां।
पदातिरेकः संक्रुद्धः शत्रूणां भयवर्द्धनः। मोहयामास शूरांस्तान् कालान्तकयमोपमः। २२८०
मूढास्त एव च रणे विनदन्तः समाद्रवन्। सासिमुत्तमवेगेन विचरन्तं महारणे।
निहत्य रथिनामाजौ रथेषाश्च युगानि च। जघान रथिनश्चापि बलवानरिमर्द्दनः।
भीमसेनश्चरन् मार्गान् सुबहून् प्रत्यदृश्यत। भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं सृतं।
सम्पातं समुदीर्णञ्च दर्शयामास भारत। केचिदग्रासिना छिन्नाः पाण्डवेन महात्मना।
विनेदुर्भिन्नमर्म्माणो निपेतुश्च गतासवः। छिन्नदन्ताग्रहस्ताश्च छिन्नकुम्भास्तथा परे। २२८५
वियोधाः स्वान्यनीकानि जघ्नुर्भारत वारणाः। निपेतुरुर्व्व्याञ्च तदा विनदन्तो महारवान्।
छिन्नांश्च तोमरा राजन् महामात्रशिरांसि च। परिस्तोमानि चित्राणि कक्षाश्च कनकोज्ज्वलाः।
ग्रैवेयाण्यथ शक्तीश्च पताकाः करिणान्तथा। तूणीराण्यथ यन्त्राणि विचित्राणि धनूंषि च।
अग्निदण्डानि शुभ्राणि तोत्रांश्चैवाङ्कुशैः सह। घण्टाश्च विविधाकारा हेमगर्भानसीनपि।
पततः पतितांश्चैव पश्यामः सह सादिभिः। छिन्नगात्रावरकरैर्निहतैश्चापि वारणैः। २२९०
आसीत् तस्मिन् रणे भूमिः पर्व्वतैः पतितैरिव। विमृद्यैवं महानागान् ममर्द्दाश्वान्नरर्षभः।
अश्वारोहवरांश्चैव पातयामास भारत। तद्युद्धमभवत् घोरं तस्य तेषाञ्च मारिष।
खलीनान्यथ योक्त्राणि कक्षाश्च कनकोज्ज्वलाः। परिस्तोमाश्च प्रासाश्च ऋष्टयश्च महाधनाः।
कवचान्यथ चर्म्माणि चित्राण्याभरणानि च। तत्र तत्रापविद्धानि व्यदृश्यन्त महाहवे।
स चक्रे वसुधां कीर्णां शबलां कुमुदैरिव। आप्लुत्य रथिनः कांश्चित् परामृश्य महाबलः। २२९५
पातयामास खड्गेन सध्वजानपि पाण्डवः। मुहुरुत्पततो दिक्षु धावतश्च तरस्विनः।
मार्गांश्च चरतश्चित्रान् व्यस्मयन्त रणे जनाः। निजघान पदा कांश्चिदाक्षिप्यान्यानपोथयत्।
खड्गेनान्यांश्च चिच्छेद नादेरन्यानभीषयत्। ऊरुवेगेन चाप्यन्यान् पातयामास भूतले।
अपरे चैनमालोक्य भयात् विद्राविणोऽभवन्। एवं सा बहुला सेना कलिङ्गानां तरस्विनां।
परिवार्य्य रणे भीष्मं भीमसेनमुपाद्रवत्। ततः कलिङ्गसैन्यानां प्रमुखे भरतर्षभ। २३००
श्रुतायुषमभिप्रेक्ष्य भीमसेनः समभ्ययात्। तमायान्तमभिप्रेक्ष्य कलिङ्गो नवभिः शरैः।
भीमसेनममेयात्मा प्रत्यविध्यत् स्तनान्तरे। कलिङ्गबाणाभिहतस्तोत्रार्द्दित इव द्विपः।
भीमसेनः प्रजज्वाल क्रोधेनाग्निरिवेन्धनैः। अथाशोकः समादाय रथं हेमपरिष्कृतं।
भीमं सम्पादयामास रथेन रथिनां वरः। तमारुह्य रथं तूर्णं कौन्तेयः शत्रुसूदनः।

कालिङ्गमभिदुद्राव तिष्ठ तिष्ठेति चाब्रवीत्। ततः श्रुतायुर्बलवान् भीमाय निशितान् शरान्। २२०५
प्रेषयामास संक्रुद्धो दर्शयन् पाणिलाघवं। स कार्मुकवरोत्सृष्टैर्नवभिर्निशितैः शरैः।
समाहतो भृशं राजन् कलिङ्गेन महाबलः। सञ्चुक्रोध भृशं भीमो दण्डाहत इवोरगः।
क्रुद्धः स चापमायम्य बलवत् बलिनाम्वरः। कलिङ्गमवधीत् पार्थो भीमः सप्तभिरायसैः।
क्षुराभ्यां चक्ररक्षौ च कालिङ्गस्य महाबलौ। सत्यदेवञ्च सत्यञ्च प्राहिणोत् यमसादनं।
ततः पुनरमेयात्मा नाराचैर्निशितैः शरैः। केतुमन्तं रणे भीमोऽगमयत् यमसादनं। २२१०
ततः कलिङ्गाः संक्रुद्धा भीमसेनममर्षणं। अनेकैर्बहुसाहस्रैः क्षत्रियाः समयोधयन्।
ततः शक्तिगदाखड्गतोमरर्ष्टिपरश्वधैः। कलिङ्गाः शतशो राजन् भीमसेनमवारयन्।
संनिवार्य्य तु तां राजन् शरवृष्टिं समुच्छ्रितां। गदामादाय तरसा परिप्लुत्य महाबलः।
भीमः सप्तशतान् वीरानगमयत् यमसादनं। पुनश्चैव द्विसाहस्रान् कालिङ्गानरिमर्द्दनः।
प्राहिणोत् मृत्युलोकाय तदद्भुतमिवाभवत्। एवं स तान्यनीकानि कलिङ्गानां पुनःपुनः। २२१५
बिभेद समरे वीरो भीमो भीमपराक्रमः। हतारोहाश्च मातङ्गाः पाण्डवेन हता रणे।
विप्रजग्मुरनीकेषु घना वातहता इव। मृद्नन्तः स्वान्यनीकानि विनदन्तः शरातुराः।
ततो भीमो महाबाहुः खड्गचर्मवराभुजः। संप्रहृष्टो महाघोरं शङ्खं प्राध्मापयत् बली।
सर्व्वकालिङ्गसैन्यानां मनांसि समकम्पयत्। मोहश्चापि कलिङ्गानामाविवेश परन्तप।
प्राकम्पन्त च सैन्यानि वाहनानि च सर्व्वशः। भीमसेनेन समरे गजेन्द्रेणेव सर्व्वतः। २२२०
मार्गान् बहून् विचरता धावता च ततस्ततः। मुहुरुत्पतता चैव संमोहः समजायत।
भीमसेनभयत्रस्तं सैन्यं तत् समकम्पत। क्षोभ्यमाणमसम्बाधं ग्राहेणेव महासरः।
त्रासितेषु च वीरेषु भीमेनाद्भुतकर्म्मणा। पुनरावर्त्तमानेषु विद्रवत्सु समन्ततः।
सर्व्वकालिङ्गयोधेषु पाण्डूनां ध्वजिनीपतिः। अवारीत् स्वान्यनीकानि युध्यध्वमिति भारत।
सेनापतिवचः श्रुत्वा शिखण्डिप्रमुखा गणाः। भीममेवाभ्यवर्त्तन्त रथानीकैः प्रहारिभिः। २२२५
धर्म्मराजश्च तान् सर्व्वानुपजग्राह पाण्डवः। महता मेघवर्णेन नागानीकेन पृष्ठतः।
एवं सञ्चोद्य सर्व्वाणि स्वान्यनीकानि पार्षतः। भीमसेनस्य जग्राह पार्ष्णिं सत्पुरुषोचितां।
न हि पाञ्चालराजस्य लोके कश्चन विद्यते। भीमसात्यकयोरन्यः प्राणेभ्यः प्रियकृत्तमः।
सोऽपश्यत कलिङ्गेषु चरन्तमरिसूदनं। भीमसेनं महाबाहुं पार्षतः परवीरहा।
ननाद बहुधा राजन् हृष्टश्चासीत् परन्तप। शङ्खं दध्मौ च समरे सिंहनादं ननाद च। २२३०
स च पारावताश्वस्य रथे हेमपरिष्कृते। कोविदारध्वजं दृष्ट्वा भीमसेनः समाश्वसत्।
धृष्टद्युम्नस्तु तं दृष्ट्वा कालिङ्गैः समभिद्रुतं। भीमसेनममेयात्मा त्राणायाजौ समभ्ययात्॥
तौ दूरात् सात्यकिं दृष्ट्वा धृष्टद्युम्नवृकोदरौ। कालिङ्गान् समरे वीरौ योधयन्तौ मनस्विनौ।
स तत्र गत्वा शैनेयो जवेन जयतां वरः। पार्थपार्षतयोः पार्ष्णिं जग्राह पुरुषर्षभः।

स कृत्वा कदनं तत्र प्रगृहीतशरासनः। आस्थितो रौद्रमात्मानं जघान समरे परान्। २२२५
कलिङ्गप्रभवाञ्चैव मांसशोणितकर्द्दमां। रुधिरस्यन्दिनीं तत्र भीमः प्रावर्त्तयन्नदीं।
अथान्तरे कलिङ्गानां पाण्डवानाञ्च वाहिनीं। सन्ततार सुदुस्तारां भीमसेनो महाबलः।
भीमसेनं तदा दृष्ट्वा प्राक्रोशंस्तावका नृप। कालोऽयं भीमरूपेण कालिङ्गैः सह युध्यते।
ततः शान्तनवो भीष्मः श्रुत्वा तं निनदं रणे। अभ्ययात् त्वरितो भीमं व्यूढानीकः समन्ततः।
तं सात्यकिर्भीमसेनो धृष्टद्युम्नश्च पार्षतः। अभ्यद्रवन्त भीष्मस्य रथं हेमपरिष्कृतं। २२३०
परिवार्य्य तु ते सर्व्वे गाङ्गेयं तरसा रणे। त्रिभिस्त्रिभिः शरैर्घोरैर्भीष्ममानर्च्छुरञ्जसा।
प्रत्यविध्यच्च तान् सर्व्वान् पिता देवव्रतस्तव। यतमानान् महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः।
ततः शरसहस्रेण सन्निवार्य्य महारथान्। हयान् काञ्चनसन्नाहान् भीमस्याभ्यहनच्छरैः।
हताश्वे तु रथे तिष्ठन् भीमसेनः प्रतापवान्। शक्तिं चिक्षेप तरसा गाङ्गेयस्य रथं प्रति।
सम्प्राप्तामथ तां शक्तिं पिता देवव्रतस्तव। द्विधा चिच्छेद समरे पृथिव्यां सा व्यशीर्य्यत। २२३५
ततः शैक्यायसीं गुर्व्वीं प्रगृह्य महतीं गदां। भीमसेनो रथात् तूर्णं पुप्लुवे मनुजर्षभः।
धृष्टद्युम्नस्तमारोप्य स्वरथे रथिनां वरः। पश्यतां सर्व्वसैन्यानामपोवाह यशस्विनं।
सात्यकोऽपि ततस्तूर्णं भीमस्य प्रियकाम्यया। सारथिं कुरुवृद्धस्य पातयामास सायकैः।
भीष्मस्य निहते तस्मिन् सारथौ रथिनां वरः। वातायमानैरश्वैस्तैरपनीतो रणाजिरात्।
भीमसेनस्ततो राजन्नपनीते महारथे। प्रजज्वाल यथा वह्निर्दहन् कक्षमिवोल्बणं। २२४०
स हत्वा सर्व्वकालिङ्गान् सेनामध्ये व्यवस्थितः। नैनमभ्युत्सहन् केचित् तावका भरतर्षभ।
स पूज्यमानः पाञ्चाल्यैर्मत्स्यैश्च भरतर्षभ। धृष्टद्युम्नं परिष्वज्य समीयाद्‌थ सात्यकिं।
अथाब्रवीत् भीमसेनं सात्यकिः सत्यविक्रमः। प्रहर्षयन् यदुव्याघ्रो धृष्टद्युम्नस्य पश्यतः।
दिष्ट्या कलिङ्गराजश्च राजपुत्रश्च केतुमान्। शक्रदेवश्च कालिङ्गः कालिङ्गाश्च मृधे हताः।
स्वबाहुबलवीर्य्येण नागाश्वरथसङ्कुलाः। महापुरुषभूयिष्ठो वीरयोधनिषेवितः। २२४५
महाव्यूहः कलिङ्गानामेकेन मृदितस्त्वया। एवमुक्त्वा शिनेर्नप्ता दीर्घबाहुररिन्दमः।
रथस्थं तमभिद्रुत्य पर्य्यष्वजत पाण्डवं। ततः स्वरथमागम्य पुनरेव महारथः।
तावकानवधीत् क्रुद्धो भीमस्य बलमादधत्।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि कलिङ्गराजवधे चतुःपञ्चाशोऽध्यायः॥ ५४ ॥
॥ सञ्जय उवाच ॥ गते पूर्व्वाह्णसमये तस्मिन्नहनि भारत। रथनागाश्वपत्तीनां सादिनाञ्च महाक्षये।
द्रोणपुत्त्रेण शल्येन कृपेण च महात्मना। समसज्जत पाञ्चाल्यस्त्रिभिरेतैर्महारथैः। २२५०
स लोकविदितानश्वान्निजघान महाबलः। द्रौणेः पाञ्चालदायादः शितैर्दशभिराशुगैः।
ततः शल्यरथं तूर्णमास्थाय हतवाहनः। द्रौणिः पाञ्चालदायादमभ्यवर्त्तत्तथेषुभिः।
धृष्टद्युम्नन्तु संसक्तं द्रौणिना दृश्य भारत। सौभद्रोऽभ्यपतत् तूर्णं विकिरन्निशितान् शरान्।

स शल्यं पञ्चविंशत्या कृपञ्च नवभिः शरैः । अश्वत्थामानमष्टाभिर्विव्याध भरतर्षभ ।
आर्ज्जुनिस्तु ततस्तूर्णं द्रौणिर्विव्याध पत्रिणा । शल्यो द्वादशभिश्चैव कृपश्च निशितैस्त्रिभिः । २२६६
लक्ष्मणस्तव पौत्रस्तु सौभद्रं पर्य्यवस्थितं । अभ्यवर्त्तत संक्रुद्धस्ततो युद्धमभज्ञ्यत ।
दौर्य्योधनिस्तु संक्रुद्धः सौभद्रं निशितैः शरैः । विव्याध समरे राजन् तदद्भुतमिवाभवत् ।
अभिमन्युश्च संक्रुद्धो भ्रातरं भरतर्षभ । शरैः पञ्चशतैः क्षिप्रं क्षिप्रहस्तोऽभ्यविध्यत ।
लक्ष्मणोऽपि ततस्तस्य धनुश्चिच्छेद पत्रिणा । मुष्टिदेशे महाराज त तञ्चुक्रुशुर्ज्जनाः ।
तद्विहाय धनुश्छिन्नं सौभद्रः परवीरहा । अन्यदादत्तवान् चित्रं कार्म्मुकं वदतां वर । २२७०
तौ तत्र समरे युक्तौ कृतप्रतिकृतैषिणौ । अन्योन्यं निशितैस्तीक्ष्णैर्जघ्नतुः पुरुषर्षभौ ।
ततो दुर्य्योधनो राजा दृष्ट्वा पुत्त्रं महाबलं । पीडितं तव पौत्रेण प्रायात्तत्र जनेश्वरः ।
सन्निवृत्ते तव सुते सर्व्व एव जनाधिप । आर्ज्जुनिं रथवंशेन समन्तात् पर्य्यवारयन् ।
स तैः परिवृतः शूरैः शूरो युधि सुदुर्ज्जयः । न स्म प्रव्यथितो राजन् कृष्णतुल्यपराक्रमः ।
सौभद्रमथ संसक्तं दृष्ट्वा तत्र धनञ्जयः । अभिदुद्राव संक्रुद्धस्त्रातुकामः स्वमात्मजं । २२७५
ततः स रथनागाश्वा भीष्मद्रोणपुरोगमाः । अभ्यवर्त्तन्त राजानः सहिताः सव्यसाचिनं ।
उद्धूतं सहसा भौमं नराश्वरथसादिभिः । दिवाकरपथं प्राप्य रजस्तीव्रमदृश्यत ।
तानि नागसहस्राणि भूमिपालशतानि च । तस्य वाणपथं प्राप्य नाभ्यवर्त्तन्त सर्व्वशः ।
प्रणेदुः सर्व्वभूतानि बभूवुस्तिमिरा दिशः । कुरूणामनयस्तीव्रः प्रत्यपद्यत दारुणः ।
नाप्यन्तरिक्षं न दिशो न भूमिर्न च भास्करः । प्रज्ञायत नरश्रेष्ठ शरसङ्घैः किरीटिनः । २२८०
सादिनो ध्वजनागास्तु हताश्वा रथिनो भृशं । विप्रद्रुतरथाः केचित् दृश्यन्ते रथयूथपाः ।
विरथा रथिनश्चान्ये धावमानास्ततस्ततः । तत्र तत्रैव दृश्यन्ते सायुधैः साङ्गदैर्भुजैः ।
हयारोहा हयांस्त्यक्त्वा गजारोहाश्च दन्तिनः । अर्ज्जुनस्य भयाद्राजन् समन्तात् विप्रदुद्रुवुः ।
रथेभ्यश्च गजेभ्यश्च हयेभ्यश्च नराधिपाः । पातिताः पात्यमानाश्च दृश्यन्तेऽर्ज्जुनसायकैः ।
सगदानुद्यतान् बाहून् सखड्गांश्च विशाम्पते । सप्रासांश्च सतूणीरान् सशरान् सशरासनान् । २२८५
साङ्कुशान् सपताकांश्च तत्र तत्रार्ज्जुनो नृणां । निचकर्त्त शरैरुग्रैरौद्रं बिभ्रद्वपुस्तदा ।
परिघानां विदीर्णानां मुद्गराणाञ्च मारिष । प्रासानां भिन्दिपालानां निस्त्रिंशानाञ्च संयुगे ।
परश्वधानां तीक्ष्णानां तोमराणाञ्च भारत । वर्म्मणां चापविद्धानां काञ्चनानां च भूतले ।
ध्वजानां चर्म्मणाञ्चैव व्यजनानाञ्च सर्व्वशः । छत्राणां हेमदण्डानां तोमराणां च भारत ।
प्रतोदानां कशाणाञ्च योक्त्राणाञ्चैव मारिष । राशयः स्म प्रदृश्यन्ते विनिकीर्णा रणक्षितौ । २२९०
नासीत्तत्र पुमान् कश्चित् तव सैन्यस्य मारिष । योऽर्ज्जुनं समरे शूरं प्रत्युदीयात् कथञ्चन ।
यो यो हि समरे पार्थं प्रत्युद्याति विशाम्पते । स शरैर्विशिखैस्तीक्ष्णैः परलोकाय नीयते ।
तेषु विद्रवमाणेषु तव योधेषु सर्व्वशः । अर्ज्जुनो वासुदेवश्च शङ्खौ दध्मतुरुत्तमौ ।

तत् प्रभग्नं बलं दृष्ट्वा पिता देवव्रतस्तव। अब्रवीत् समरे शूरं भारद्वाजं स्मयन्निव।
एष पाण्डुसुतो वीरः कृष्णेन सहितो बली। तथा करोति सैन्यानि यथा कुर्य्यात् धनञ्जयः। २३९५
न ह्येष समरे शक्यो जेतुमद्य कथञ्चन। यथास्य दृश्यते रूपं कालान्तकयमोपमं।
न निवर्त्तयितुञ्चापि शक्येयं महतीचमूः। अन्योन्यप्रेक्षया पश्य दुर्ब्बलेयं वरूथिनी।
एष चास्तं गिरिं श्रेष्ठं भानुमान् प्रतिपद्यते। चक्षूंषि सर्व्वलोकस्य संहरन्निव सर्व्वथा।
तत्रावहारं सम्प्राप्तं मन्येऽहं पुरुषर्षभ। श्रान्ता भीताश्च ये योधा न योत्स्यन्ति कदाचन।
एवमुक्त्वा ततो भीष्मो द्रोणमाचार्य्यसत्तमं। अवहारमथो चक्रे तावकानां महारथः। २४००
ततोऽवहारः सैन्यानां तव तेषाञ्च मारिष। अस्तं गच्छति सूर्य्येऽभूत् सन्ध्या च समवर्त्तत।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि द्वितीयदिवसावहारे पञ्चपञ्चाशोऽध्यायः॥ ५५ ॥
॥ सञ्जय उवाच॥ प्रभातायान्तु शर्व्वर्य्यां भीष्मः शान्तनवस्ततः। अनीकान्यथ संयाने व्यादिदेश परन्तपः।
गारुडञ्च महाव्यूहं चक्रे शान्तनवस्तदा। पुत्त्राणां ते जयाकाङ्क्षी वृद्धः कुरुपितामहः।
गरुडस्य स्वयं तुण्डे पिता देवव्रतस्तव। चक्षुषी च भरद्वाजः कृतवर्म्मा च सात्वतः।
अश्वत्थामा कृपश्चैव शिरस्यास्तां यशस्विनौ। त्रिगर्त्तैर्मत्स्यकैकेयैर्वाटधानैश्च संयुतौ। २४०५
भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिष। मद्रकाः सिन्धुसौवीरास्तथा पञ्चनदाश्च ये।
जयद्रथेन सहिता ग्रीवायां सन्निवेशिताः। पृष्ठे दुर्य्योधनो राजा सोदर्य्यैः सानुगैर्वृतः।
विन्दानुविन्दावावन्त्यौ काम्बोजाश्च शकैः सह। पुच्छमासन्महाराज शूरसेनाश्च मारिष।
मागधाश्च कलिङ्गाश्च दासेरकगणैः सह। दक्षिणं पक्षमासाद्य स्थिता व्यूहस्य दंशिताः।
कारूषाश्च विकुञ्जाश्च मुण्डाः कौण्डीवृषास्तथा। वृहद्बलेन सहिता वामपार्श्वे समाश्रिताः। २४१०
व्यूढं दृष्ट्वा तु तत्सैन्यं सव्यसाची परन्तपः। धृष्टद्युम्नेन सहितः प्रत्यव्यूहत संयुगे।
तावकानाञ्च तं व्यूहं प्रत्यव्यूहत पाण्डवः। अर्द्धचन्द्रेण व्यूहेन व्यूहं तमतिदारुणं।
दक्षिणं शृङ्गमास्थाय भीमसेनो व्यरोचत। नानाशस्त्रौघसम्पन्नैर्नानादेश्यैर्नृपैर्वृतः।
तदन्वेव विराटश्च द्रुपदश्च महारथः। तदनन्तरमेवाथ नीलो नीलायुधैः सह।
नीलादनन्तरश्चैव धृष्टकेतुर्म्महारथः। चेदिकाशिकरूषैश्च पौरवैश्चाभिसंवृतः। २४१५
धृष्टद्युम्नः शिखण्डी च पाञ्चालाश्च प्रभद्रकाः। मध्ये सैन्येन सहिता स्थिता युद्धाय भारत।
तत्रैव धर्म्मराजोऽपि गजानीकेन संवृतः। ततस्तु सात्यकी राजन् द्रौपद्याः पञ्च चात्मजाः।
अभिमन्युस्ततस्तूर्णमिरावांश्च ततः परं। भैमसेनिस्ततो राजन् कैकेयाश्च महारथाः।
ततोऽभूत्द्विपदां श्रेष्ठो वामपार्श्वमुपाश्रितः। सर्व्वस्य जगतो गोप्ता यस्य गोप्ता जनार्द्दनः।
एवमेतं महाव्यूहं प्रत्यव्यूहन्त पाण्डवाः। नाशार्थं तव पुत्त्राणां तत्पक्षं ये च संश्रिताः। २४२०
ततः प्रववृते युद्धं व्यतिषिक्तरथद्विपं। तावकानां परेषाञ्च निघ्नतामितरेतरं।
हस्त्योघाश्च रथौघाश्च तत्र तत्र विशाम्पते। सम्पतन्तो व्यदृश्यन्त निघ्नन्तस्ते परस्परं।

धावताञ्च रथौघानां युध्यताञ्च पृथक् पृथक्। बभूव तुमुलः शब्दो विमिश्रो दुन्दुभिस्वनैः।
दिवस्पृक् नरवीराणां निघ्नतामितरेतरं। सम्प्रहारे तु तुमुले तव तेषाञ्च भारत।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि गारुडार्द्धचन्द्रव्यूहनिर्म्माणे षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ सञ्जय उवाच ॥ ततो व्यूढेष्वनीकेषु तावकेष्वितरेषु च। धनञ्जयो रथानीकमवधीत्तव भारत। २४२५
शरैरतिरथो युद्धे पातयन् रथयूथपान्। ते वध्यमानाः पार्थेन कालेनेव युगक्षये।
धार्त्तराष्ट्रा रणे यत्ता पाण्डवान् प्रत्ययोधयन्। प्रार्थयाना यशो दीप्तं मृत्युं कृत्वा निवर्त्तनं।
एकाग्रमनसो भूत्वा पाण्डवानां वरूथिनीं। बभञ्जुर्बहुशो राजंस्ते चाभज्यन्त संयुगे।
द्रवद्भिरथ भग्नैश्च परिवर्त्तद्भिरेव च। पाण्डवैः कौरवेयैश्च न प्राज्ञायत किञ्चन।
उदतिष्ठद्रजो भौमं छादयानं दिवाकरं। न दिशः प्रदिशश्चापि तत्र जज्ञुः कथञ्चन। २४३०
अनुमानेन संज्ञाभिर्नामगोत्रैश्च संयुगे। वर्त्तते स्म तदा युद्धं तत्र तत्र विशाम्पते।
न व्यूहो भिद्यते तत्र कौरवाणां विशाम्पते। रक्षितः स यथा तेन भारद्वाजेन मारिष।
तथैव पाण्डवेयानां रक्षितः सव्यसाचिना। नाभिद्यत महाव्यूहो भीमेन च सुरक्षितः।
सेनाग्रादभिनिष्पत्य प्रायुध्यंस्तत्र मानवाः। उभयोः सेनयो राजन् व्यतिषिक्तरथद्विपाः।
हयारोहैर्हयारोहाः पात्यन्ते स्म महाहवे। ऋष्टिभिर्विमलाग्राभिः प्रासैरपि च संयुगे। २४३५
रथी रथिनमासाद्य वाणैः कनकभूषणैः। पातयामास समरे तस्मिन्नतिभयङ्करे।
गजारोहा गजारोहान् नाराचशरतोमरैः। संयुक्तान् पातयामासुस्तव तेषाञ्च सङ्घशः।
पत्तिसङ्घा रणे पत्तीन् भिन्दिपालपरश्वधैः। न्यपातयन्त संहृष्टाः परस्परकृतागसः।
रथी च समरे राजन्नासाद्य गजयोधिनं। सगजं पातयामास गजी च रथिनन्तथा।
रथिनञ्च हयारोहः प्रासेन भरतर्षभ। पातयामास समरे रथी च रथसादिनं। २४४०
पदाती रथिनं सङ्ख्ये रथी चापि पदातिनं। न्यपातयच्छितैः शस्त्रैः सेनयोरुभयोरपि।
गजारोहा हयारोहान् पातयामासुराहवे। हयारोहा गजस्थांश्च तदद्भुतमिवाभवत्।
गजारोहवरैश्चापि तत्र तत्र पदातयः। पातिताः समदृश्यन्त तैश्चापि गजयोधिनः।
पत्तिसङ्घा हयारोहैः सादिसङ्घाश्च पत्तिभिः। पात्यमाना व्यदृश्यन्त शतशोऽथ सहस्रशः।
ध्वजैस्तत्रापविद्धैश्च कार्म्मुकैस्तोमरैस्तथा। परिस्तोमैः कुथाभिश्च कम्बलैश्च महाधनैः। २४४५
प्रासैस्तथा गदाभिश्च परिघैः कम्पनैस्तथा। शक्तिभिः कवचैश्चित्रैः कुणपैरङ्कुशैरपि।
निस्त्रिंशैर्व्विमलैश्चैव स्वर्णपुङ्खैः शरैस्तथा। भूर्भाति भरतश्रेष्ठ स्रग्दामैरिव चित्रिता।
नराश्वकायैः पतितैर्दन्तिभिश्च महाहवे। अगम्यरूपा पृथिवी मांसशोणितकर्द्दमा।
प्रशशाम रजो भौमं व्युक्षितं नरशोणितैः। दिशश्च विमलाः सर्व्वाः समपद्यन्त भारत।
उत्थितान्यगणेयानि कबन्धानि समन्ततः। चिह्नभूतानि जगतो विनाशार्थाय भारत। २४५०
तस्मिन् युद्धे महारौद्रे वर्त्तमाने सुदारुणे। प्रत्यदृश्यन्त रथिनो धावमानाः समन्ततः।

ततो भीष्मश्च द्रोणश्च सैन्धवश्च जयद्रथः। पुरुमित्रो विकर्णश्च शकुनिश्चापि सौबलः।
एते समरदुर्द्धर्षा सिंहतुल्यपराक्रमाः। पाण्डवानामनीकानि बभञ्जुः समरे स्थिताः।
तथैव भीमसेनोऽपि राक्षसश्च घटोत्कचः। सात्यकिश्चेकितानश्च द्रौपदेयाश्च भारत।
तावकांस्तव पुत्त्रांश्च सहिताः सर्व्वराजभिः। द्रावयामासुराजिस्थांस्त्रिदशा दानवानिव। २४५५
तथा ते समरेऽन्योऽन्यं निघ्नन्तः क्षत्रियर्षभाः। रक्तोक्षिता घोररूपा विरेजुः किंशुका इव।
विजित्य च रिपून् राजन् सेनयोरुभयोरपि। व्यदृश्यन्त महामात्रा ग्रहा इव नभस्तले।
ततो रथसहस्रेण पुत्रो दुर्य्योधनस्तव। अभ्ययात् पाण्डवान् युद्धे राक्षसञ्च घटोत्कचं।
तथैव पाण्डवाः सर्व्वे महत्या सेनया सह। भीष्मद्रोणौ रणे शूरौ प्रत्युद्ययुररिन्दमौ।
किरीटी तु ययौ क्रुद्धः समन्तात् पार्थिवोत्तमान्। आर्ज्जुनिः सात्यकिश्चैव ययतुः सौबलं बलं। २४६०
ततः प्रववृते भूयः सङ्ग्रामो रोमहर्षणः। तावकानां परेषाञ्च जिगीषूणां परस्परं।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि तृतीयदिवसयुद्धारम्भे सप्तपञ्चाशोऽध्यायः॥ ५७॥
॥ सञ्जय उवाच॥ ततस्ते पार्थिवाः क्रुद्धाः फाल्गुनं वीक्ष्य संयुगे। रथैरनेकसाहस्रैः समन्तात् पर्य्यवारयन्।
अथैनं रथवंशेन कोष्ठकीकृत्य भारत। शरैः सुबहुसाहस्रैः समन्तात् पर्य्यवारयन्।
शक्तीश्च विमलास्तीक्ष्णा गदाश्च परिघैः सह। प्रासान् परश्वधांश्चैव मुद्गरान् मुषलानपि।
चिक्षिपुः समरे क्रुद्धाः फाल्गुनस्य रथं प्रति। अस्त्राणामथ तां वृष्टिं शलभानामिवायतिं। २४६५
रुरोध सर्व्वतः पार्थः शरैः कनकभूषणैः। तत्र तल्लाघवं दृष्ट्वा बीभत्सोरतिमानुषं।
देवदानवगन्धर्व्वाः पिशाचोरगराक्षसाः। साधुसाध्विति राजेन्द्र फाल्गुनं प्रत्यपूजयन्।
सात्यकिश्चाभिमन्युश्च महत्या सेनया सह। गान्धाराः समरे शूरा रुरुधुः सहसौबलाः।
ततः सौबलकाः शूरा वार्ष्णेयस्य रथोत्तमं। तिलशश्चिच्छिदुः क्रोधात् शस्त्रैर्नानाविधैरपि।
सात्यकिस्तु रथं त्यक्त्वा वर्त्तमाने महाभये। अभिमन्योरथं तूर्णमारुरोह परन्तप। २४७०
तावेकरथसंसक्तौ सौबलेयस्य वाहिनीं। जघ्नतुर्निशितैस्तूर्णं शरैः सन्नतपर्व्वभिः।
द्रोणभीष्मौ रणे यत्तौ धर्मराजस्य वाहिनीं। नाशयेतां शरैस्तीक्ष्णैः कङ्कपत्रपरिच्छदैः।
ततो धर्म्मसुतो राजा माद्रीपुत्त्रौ च पाण्डवौ। मिषतां सर्व्वसैन्यानां द्रोणानीकमुपाद्रवत्।
तत्राभूत् सुमहत्युद्धं तुमुलं लोमहर्षणं। यथा देवासुरं युद्धं पूर्व्वमासीत् सुदारुणं।
कुर्व्वाणौ तु महत् कर्म्म भीमसेनघटोत्कचौ। दुर्य्योधनस्ततोऽभ्येत्य तावुभावप्यवारयत्। २४७५
तत्राद्भुतमपश्याम हैडिम्बस्य पराक्रमं। अतीत्य पितरं युद्धे यदयुध्यत भारत।
भीमसेनस्तु संक्रुद्धो दुर्य्योधनममर्षणं। हृद्यविध्यत् पृषत्केन प्रहसन्निव पाण्डवः।
ततो दुर्य्योधनो राजा प्रहारवरपीडितः। निषसाद रथोपस्थे कश्मलञ्च जगाम ह।
तं विसंज्ञमथो दृष्ट्वा त्वरमाणोऽस्य सारथिः। अपोवाह रणाद्राजंस्ततः सैन्यमभज्यत।
ततस्तां कौरवीं सेनां द्रवमाणां ततस्ततः। निघ्नन् भीमः शरैस्तीक्ष्णैरनुवव्राज पृष्ठतः। २४८०

पार्षतश्च रथश्रेष्ठो धर्म्मपुत्त्रश्च पाण्डवः। द्रोणस्य पश्यतः सैन्यं गाङ्गेयस्य च भारत।
जघ्नतुर्निशितैर्बाणैः परानीकविनाशनैः। द्रवमाणं तु तत् सैन्यं तव पुत्त्रस्य संयुगे।
नाशक्नुतां वारयितुं भीष्मद्रोणौ महारथौ। वार्य्यमाणञ्च भीष्मेण द्रोणेन च महात्मना।
विद्रवत्येव तत् सैन्यं पश्यतोर्द्रोणभीष्मयोः। ततो रथसहस्रेषु विद्रवत्सु ततस्ततः।
तावास्थितावेकरथं सौभद्रशिनिपुङ्गवौ। सौबलीं समरे सेनां शातयेतां परन्तप। २४८५
शुशुभाते तदा तौ तु शैनेयकुरुपुङ्गवौ। अमावास्यां गतौ यद्वत् सोमसूर्य्यौ नभस्तले।
अर्ज्जुनस्तु ततः क्रुद्धस्तव सैन्यं विशाम्पते। ववर्ष शरवर्षेण धाराभिरिव तोयदः।
वध्यमानं ततस्तत्तु शरैः पार्थस्य संयुगे। दुद्राव कौरवं सैन्यं विषादभयकम्पितं।
द्रवतस्तान् समालोक्य भीष्मद्रोणौ महाबलौ। न्यवारयेतां संक्रुद्धौ दुर्य्योधनहितैषिणौ।
ततो दुर्य्योधनो राजा समाश्वास्य विशाम्पते। न्यवर्त्तयत तत् सैन्यं द्रवमाणं समन्ततः। २४९०
यत्र यत्र सुतं तुभ्यं यो यः पश्यति भारत। तत्र तत्र न्यवर्त्तन्त क्षत्रियाणां महारथाः।
तान्निवृत्तान् समीक्ष्यैव ततोऽन्येऽपीतरे जनाः। अन्योऽन्यस्पर्द्धया राजन् लज्जया चावतस्थिरे।
पुनरावर्त्ततां तेषां वेग आसीत् विशाम्पते। पूर्य्यतः सागरस्येव चन्द्रस्योदयनं प्रति।
सन्निवृत्तांस्ततस्तांस्तु दृष्ट्वा राजा सुयोधनः। अब्रवीत् त्वरितो गत्वा भीष्मं शान्तनवं वचः।
पितामह निबोधेदं यत्त्वां वक्ष्यामि भारत। नानुरूपमहं मन्ये त्वयि जीवति कौरव। २४९५
द्रोणे चास्त्रविदां श्रेष्ठे सपुत्त्रे ससुहृज्जने। कृपे चैव महेष्वासे द्रवते यत् वरूथिनी।
न पाण्डवान् प्रतिबलांस्तवमन्ये कथञ्चन। तथा द्रोणस्य संग्रामे द्रौणेश्चापि कृपस्य च।
अनुग्राह्याः पाण्डुसुता नूनं तव पितामह। यथेमां क्षमसे वीर वध्यमानां वरूथिनीं।
सोऽस्मि वाच्यस्त्वया राजन् पूर्व्वमेव समागमे। न योत्स्ये पाण्डवान् सङ्ख्ये नापि सात्यकिपार्षतौ।
श्रुत्वाऽहं वचनं तुभ्यमाचार्य्यस्य च भारत। कर्णेन सहितः कृत्यं चिन्तयानस्तदेव हि। २५००
यदि नाहं परित्याज्यो युवाभ्यामिह संयुगे। विक्रमेणानुरूपेण युध्यतां पुरुषर्षभौ।
एतत् श्रुत्वा वचो भीष्मः प्रहसन् वै मुहुर्मुहुः। अब्रवीत् तनयं तुभ्यं क्रोधात् व्यावृत्य चक्षुषी।
बहुशोऽपि मया राजन् पथ्यमुक्तो हितं वचः। अजेयाः पाण्डवा युद्धे देवैरपि सवासवैः।
यत्तु शक्यं मया कर्त्तुं वृद्धेनाद्य नृपोत्तम। करिष्यामि यथाशक्ति प्रेक्षेदानीं सबान्धवः।
अद्य पाण्डुसुतान् सर्व्वान् ससैन्यान् सह बन्धुभिः। मिषतो वारयिष्यामि सर्व्वलोकस्य पश्यतः। २५०५
एवमुक्तस्तु भीष्मेण पुत्त्रस्तव नरेश्वरः। दध्मौ शङ्खं मुदा युक्तो भेरीश्च समताडयत्।
पाण्डवाश्च ततो राजन् श्रुत्वा तु निनदं महत्। दध्मुः शङ्खांश्च भेरीश्च मुरजांश्चाप्यवादयन्।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मदुर्य्योधनसम्वादेऽष्टपञ्चाशोऽध्यायः॥ ५८ ॥
॥ धृतराष्ट्र उवाच ॥ प्रतिज्ञाते ततस्तस्मिन् युद्धे भीष्मेण भारत। मम पुत्त्रस्य वाक्यैस्तु क्रोधितेन विशाम्पते।
भीष्मः किमकरोत्तत्र पाण्डवेयेषु सञ्जय। पितामहे वा पाञ्चालास्तथाऽऽचक्ष्व सञ्जय।

॥ सञ्जय उवाच ॥ गतपूर्व्वाह्णभूयिष्ठे तस्मिन्नहनि भारत । पश्चिमां दिशमास्थाय स्थिते सम्प्राप्ते दिवाकरे । २५१०
जयं प्राप्तेषु सर्व्वेषु पाण्डवेषु महात्मसु । सर्व्वधर्म्मविशेषज्ञः पिता देवव्रतस्तव ।
अभ्ययात् जवनैरश्वैः पाण्डवानामनीकिनीं । महत्या सेनया गुप्तस्तव पुत्रैश्च सर्व्वशः ।
प्रावर्त्तत ततो युद्धं तुमुलं लोमहर्षणं । अस्माकं पाण्डवैः सार्द्धमनयात्तव भारत ।
धनुषां कूजतां तत्र तलानाञ्चाभिहन्यतां । बभूव सुमहान् शब्दो गिरीणामिव दीर्य्यतां ।
तिष्ठ स्थितोऽस्मि विद्ध्येनं निवर्त्तस्व स्थिरो भव । स्थितोऽस्मि प्रहरस्वेति शब्दाः श्रूयन्ति सर्व्वशः । २५१५
काञ्चनेषु तनुत्रेषु किरीटेषु ध्वजेषु च । शिलानामिव शैलेषु पतितानामभूत्स्वनः ।
पतितान्युत्तमाङ्गानि बाहवश्च विभूषिताः । व्यचेष्टन्त महीं प्राप्य शतशोऽथ सहस्रशः ।
हृतोत्तमाङ्गाः केचित्तु तथैवोद्यतकार्म्मुकाः । प्रगृहीतायुधाश्चैव तस्थुः पुरुषसत्तमाः ।
प्रावर्त्तत महावेगा नदी रुधिरवाहिनी । मातङ्गाङ्गशिलाघोरा मांसशोणितकर्द्दमा ।
वराश्वनरनागानां शरीरप्रभवा तदा । परलोकार्णवमुखी गृध्रगोमायुमोदिनी । २५२०
न दृष्टं न श्रुतं वाऽपि युद्धमेतादृशं नृप । यथा तव सुतानाञ्च पाण्डवानाञ्च भारत ।
नासीद्रथपथस्तत्र योधैर्युधि निपातितैः । गजैर्निपतितैर्नीलैर्गिरिशृङ्गैरिवावृतः ।
विकीर्णैः कवचैश्चित्रैः शिरस्त्राणैश्च मारिष । शुशुभे तद्रणस्थानं शरदीव नभस्तलं ।
विनिर्भिन्ना नराः केचिदत्यापीडप्रकर्षिणः । अदीनाः समरे शत्रूनभ्यधावन्त दर्पिताः ।
तात भ्रातः सखे बन्धो वयस्य मम मातुल । मा मां परित्यजेत्यन्ये चुक्रुशुः पतिता रणे । २५२५
अथाभ्येहि त्वमागच्छ किं भीतोऽसि क्व यास्यसि । स्थितोऽहं समरे माभैरिति चान्ये विचुक्रुशुः ।
तत्र भीष्मः शान्तनवो नित्यं मण्डलकार्म्मुकः । मुमोच वाणान् दीप्ताग्रानहीनाशीविषानिव ।
शरैरेकायनीकुर्व्वन् दिशः सर्व्वा यतव्रतः । जघान पाण्डवरथानादिश्यादिश्य भारत ।
नृत्यन्वै रथमार्गेषु दर्शयन् पाणिलाघवं । अलातचक्रवद्राजन् तत्र तत्र स्म दृश्यते ।
तमेकं समरे शूरं पाण्डवाः सृञ्जयैः सह । अनेकशतसाहस्रं समपश्यन्त लाघवात् । २५३०
मायाकृतात्मानमिव भीष्मं तत्र स्म मेनिरे । पूर्व्वस्यां दिशि तं दृष्ट्वा प्रतीच्यां ददृशुर्जनाः ।
उदीच्याञ्चैवमालोक्य दक्षिणस्यां तथैव च । प्रतियुध्यन् स समरे गाङ्गेयः प्रत्यदृश्यत ।
न चैनं पाण्डवेयानां कश्चित् शक्नोति वीक्षितुं । विशिखानेव पश्यन्ति भीष्मचापच्युतान् बहून् ।
कुर्व्वाणं समरे कर्म्म सूदयानञ्च वाहिनीं । व्याक्रोशन्त रणे तत्र वीरा बहुविधं बहु ।
अमानुषेण रूपेण चरन्तं पितरं तव । शलभा इव राजानः पतन्ति स्म प्रमोहिताः । २५३५
भीष्माग्निमिव संक्रुद्धं विनाशाय सहस्रशः । न हि मोघः शरः कश्चिदासीत् भीष्मस्य संयुगे ।
नरनागाश्वकायेषु बहुत्वाल्लघुयोधिनः । भिनत्त्येकेन च रणे सुमुक्तेन नतपर्व्वणा ।
गजकण्टकसन्नद्धं वज्रेणेव शिलोच्चयं । द्वौ त्रीनपि गजारोहान् पिण्डितान् पर्व्वतानिव ।
नाराचेन सुतीक्ष्णेन निजघान पिता तव । यो यो भीष्मं नरव्याघ्रमभ्येति युधि कश्चन ।

मुहूर्त्तदृष्टः स्वभ्रात् पतितो भुवि दृश्यते। एवं सा धर्म्मराजस्य वध्यमाना महाचमूः । २५४०
भीष्मेणातुलवीर्य्येण व्यशीर्य्यत सहस्रधा । प्राकम्पत महासेना शरवर्षाभिपीडिता ।
पश्यतो वासुदेवस्य पार्थस्य च महात्मनः । यतमानाऽपि ते वीरा द्रवमाणान् महारथान् ।
नाशक्नुवन् वारयितुं भीष्मबाणप्रपीडितान् । महेन्द्रसमवीर्य्येण भज्यमाना महाचमूः ।
अभज्यत महाराज न च द्वौ सह धावतः । आविद्धरथनागाश्वं पतितं ध्वजकूवरं ।
अनीकं पाण्डुपुत्राणां हाहाभूतमचेतनं । जघानात्र पिता पुत्रं पुत्रश्च पितरन्तथा । २५४५
प्रियः सखायं चाक्रन्दे सखा दैवबलात्कृतः । विमुच्य कवचांश्चान्ये पाण्डुपुत्रस्य सैनिकाः ।
प्रकीर्य्य केशान् धावन्तः प्रत्यदृश्यन्त भारत । तद्गोकुलमिवोद्भ्रान्तं रथयूथपयूथपं ।
ददृशे पाण्डुपुत्राणां सैन्यमार्त्तस्वरं तदा । प्रभज्यमानं सैन्यन्तु दृष्ट्वा यादवनन्दनः ।
उवाच पार्थं बीभत्सुं निगृह्य रथमुत्तमं । अयं स कालः सम्प्राप्तः पार्थ यः काङ्क्षितस्तव ।
प्रहरास्मै नरव्याघ्र न चेन्मोहाद् विमुह्यसे । यत् त्वया कथितं वीर पुरा राज्ञां समागमे । २५५०
भीष्मद्रोणमुखान् सर्व्वान् धार्त्तराष्ट्रस्य सैनिकान् । सानुबन्धान् हनिष्यामि ये मां योत्स्यन्ति संयुगे ।
इति तत् कुरु कौन्तेय सत्यं वाक्यमरिन्दम । बीभत्सो पश्य सैन्यं स्वं भज्यमानमितस्ततः ।
द्रवतश्च महीपालान् पश्य यौधिष्ठिरे बले । दृष्ट्वा तु समरे भीष्मं व्यात्ताननमिवान्तकं ।
भयार्त्ताः सम्प्रणश्यन्ति सिंहं क्षुद्रमृगा इव । एवमुक्तः प्रत्युवाच वासुदेवं धनञ्जयः ।
चोदयाश्वान् यतो भीष्मो विगाह्यैतद्बलार्णवं । पातयिष्यामि दुर्द्धर्षं वृद्धं कुरुपितामहं । २५५५
ततोऽश्वान् रजतप्रख्यांश्चोदयामास माधवः । यतो भीष्मरथो राजन् दुष्प्रेक्ष्यो रश्मिवानिव ।
ततस्तत् पुनरावृत्तं युधिष्ठिरबलं महत् । दृष्ट्वा पार्थं महाबाहुं भीष्मायोद्यतमाहवे ।
ततो भीष्मः कुरुश्रेष्ठ सिंहवद्विनदन् मुहुः । धनञ्जयरथं तूर्णं शरवर्षैरवाकिरत् ।
क्षणेन स रथस्तस्य सध्वजः सहसारथिः । शरवर्षेण महता संछन्नो न प्रदृश्यते ।
वासुदेवस्त्वसम्भ्रान्तो धैर्य्यमास्थाय सत्त्ववान् । चोदयामास तानश्वान् विभिन्नान् भीष्मसायकैः । २५६०
ततः पार्थो धनुर्गृह्य दिव्यं जलदनिःस्वनं । पातयामास भीष्मस्य धनुश्छित्त्वा शितैः शरैः ।
स छिन्नधन्वा कौरव्यः पुनरन्यन्महद्धनुः । निमेषान्तरमात्रेण सज्यं कृत्वा पिता तव ।
विचकर्ष ततो दोर्भ्यां धनुर्जलदनिःस्वनं । अथास्य तदपि क्रुद्धश्चिच्छेद धनुरर्ज्जुनः ।
तस्य तत् पूजयामास लाघवं शान्तनोः सुतः । साधु पार्थ महाबाहो साधु भो पाण्डुनन्दन ।
त्वय्येवैतद् युक्तरूपं महत् कर्म्म धनञ्जय । प्रीतोऽस्मि सुदृढं पुत्र कुरु युद्धं मया सह । २५६५
इति पार्थं प्रशस्याथ प्रगृह्यान्यन्महद्धनुः । मुमोच समरे वीरः शरान् पार्थरथं प्रति ।
अदर्शयद् वासुदेवो हययाने परं बलं । मोघान् कुर्व्वन् शरांस्तस्य मण्डलान्यचरन् लघु ।
ततस्तु भीष्मः सुदृढं वासुदेव धनञ्जयौ । विव्याध निशितैर्व्वाणैः सर्व्वगात्रेषु मारिष ।
शुशुभाते नरव्याघ्रौ तौ भीष्मशरविक्षतौ । गोवृषाविव नर्दन्तौ विषाणोल्लिखिताङ्कितौ ।

पुनश्चापि सुसंक्रुद्धः शरैः शतसहस्रशः। कृष्णयोर्युधि संरब्धो भीष्म आवारयद्दिशः। २५७०
वार्ष्णेयञ्च शरैस्तीक्ष्णैः कम्पयामास रोषितः। मुहुरभ्युत्स्मयन् भीष्मः प्रहस्य स्वनवत्तदा।
ततः कृष्णस्तु समरे दृष्ट्वा भीष्मपराक्रमं। सम्प्रेक्ष्य च महाबाहुः पार्थस्य मृदुयुद्धतां।
तं भीष्मं शरवर्षाणि सृजन्तमनिशं युधि। प्रतपन्तमिवादित्यं मध्यमासाद्य सेनयोः।
वरान् वरान् विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान्। युगान्तमिव कुर्व्वाणं भीष्मं यौधिष्ठिरे बले।
अमृष्यमाणो भगवान् केशवः परवीरहा। अचिन्तयदमेयात्मा नास्ति यौधिष्ठिरं बलं। २५७५
एकाह्ना हि रणे भीष्मो नाशयेत् दैत्यदानवान्। किमु पाण्डुसुतान् युद्धे सबलान् सपदानुगान्।
द्रवते च महत् सैन्यं पाण्डवस्य महात्मनः। एते च कौरवास्तूर्णं प्रभग्नान् वीक्ष्य सोमकान्।
आद्रवन्ति रणे हृष्टा हर्षयन्तः पितामहं। सोऽहं भीष्मं निहन्म्यद्य पाण्डवार्थाय दंशितः।
भारमेनं विनेष्यामि पाण्डवानां महात्मनां। अर्ज्जुनो हि शरैस्तीक्ष्णैर्वध्यमानोऽपि संयुगे।
कर्त्तव्यं नाभिजानाति रणे भीष्मस्य गौरवात्। तथा चिन्तयतस्तस्य भूय एव पितामहः। २५८०
प्रेषयामास संक्रुद्धः शरान् पार्थरथं प्रति।

तेषां बहुत्वात् सुभृशं शराणां दिशोऽथ सर्व्वाः पिहिता बभूवुः। न चान्तरिक्षं न दिशो न भूमिर्न भास्करोऽदृश्यत रश्मिमाली।
ववुश्च वातास्तुमुलाः सधूमा दिशश्च सर्व्वाः क्षुभिता बभूवुः। द्रोणो विकर्णश्च जयद्रथश्च भूरिश्रवाः कृतवर्म्मा कृपश्च।
श्रुतायुरम्बष्ठपतिश्च राजा विन्दानुविन्दौ च सुदक्षिणश्च। प्राच्याश्च सौवीरगणाश्च सर्व्वे वसातयः क्षुद्रकमालवाश्च।
किरीटिनं त्वरमाणा विसस्रुर्निदेशगाः शान्तनवस्य राज्ञः। तं वाजिपादातरथौघजालैरनेकसाहस्रशतैर्ददर्श। २५८५
किरीटिनं सम्परिवार्य्यमाणं शिनेर्नप्ता वारणयूथपैश्च। ततश्च दृष्ट्वार्ज्जुनवासुदेवौ पदातिनागाश्वरथैः समन्तात्।
अभिद्रुतौ शस्त्रभृतां वरिष्ठौ शिनिप्रवीरोऽभिससार तूर्णं। स तान्यनीकानि धनुर्भृतां वरः शिनिप्रवीरः सहसाऽभिपत्य।
चकार साहाय्यमथार्ज्जुनस्य विष्णुर्यथा वृत्रनिषूदनस्य। विशीर्णनागाश्वरथं ध्वजौघं भीष्मेण वित्रासितसर्व्वयोधं।
युधिष्ठिरानीकमभिद्रवन्तं प्रोवाच संदृश्य शिनिप्रवीरः। क्व क्षत्रिया यास्यथ नैव धर्म्मः सतां पुरस्तात् कथितः पुराणैः।
मा स्वां प्रतिज्ञां त्यजत प्रवीराः स्ववीरधर्म्मान् प्रतिपालयध्वं। तान् वासवानन्तरजो निशम्य नरेन्द्रमुख्यान् द्रवतः समेतान्। २५९०
पार्थस्य दृष्ट्वा मृदुयुध्यतां च भीष्मञ्च सङ्ख्ये समुदीर्य्यमाणं। अमृष्यमाणः स ततो महात्मा यशस्विनं सर्व्वदाशार्हभर्त्ता।
उवाच शैनेयमभिप्रशंसन् दृष्ट्वा कुरूनापततः समन्तात्। ये यान्ति यान्त्वेव शिनिप्रवीर येऽवस्थिताः सात्वत तेऽपि यान्तु।
भीष्मं रथात् पश्य निपात्यमानं द्रोणञ्च सङ्ख्ये सगणं मयाद्य। न मे बले सात्वतकौरवाणां क्रुद्धस्य मुच्येत रणेऽद्य कश्चित्।
तस्मादहं गृह्य रथाङ्गमुग्रं प्राणं हरिष्यामि महाव्रतस्य। निहत्य भीष्मं सगणं तथाजौ द्रोणञ्च शैनेय रथप्रवीरं।
प्रीतिं करिष्यामि धनञ्जयस्य राज्ञश्च भीमस्य तथाश्विनोश्च। निहत्य सर्व्वान् धृतराष्ट्रपुत्रांस्तत्पक्षिणो ये च नरेन्द्रमुख्याः। २५९५
राज्येन राजानमजातशत्रुं सम्पादयिष्याम्यहमद्य हृष्टः। ततः सुनाभं वसुदेवपुत्त्रः सूर्य्यप्रभं वज्रसहस्रतुल्यं।
क्षुरान्तमुद्यम्य भुजेन चक्रं रथादवप्लुत्य विसृज्य वाहान्। सङ्कम्पयन् गाञ्चरणैर्महात्मा वेगेन कृष्णः प्रससार भीष्मं।

महात्ममानो समुदीर्णदर्पं सिंहो जिघांसन्निव वारणेन्द्रं। सोऽभ्यद्रवत् भीष्ममनीकमध्ये क्रुद्धो महेन्द्रावरजः प्रमाथी।
व्यालम्बिपीताम्बरपटस्यकाशे घनो यथा खे चिरमापिनद्धः। सुदर्शनञ्चास्य रराज शौरेस्तच्चक्रपद्मं सुभुजोरुनालं।
यथादिपद्मं तरुणार्कवर्णं रराज नारायणनाभिजातं। तत् कृष्णकोपोदयसूर्य्यबुद्धं क्षुरान्ततीक्ष्णाग्रसुजातपत्रं। २९००
तस्यैव देहोरुसरः प्ररूढं रराज नारायणबाहुनालं। तमात्तचक्रं प्रणदन्तमुच्चैः क्रुद्धं महेन्द्रावरजं समीक्ष्य।
सर्व्वाणि भूतानि भृशं विनेदुः क्षयं कुरूणामिति चिन्तयित्वा। स वासुदेवः प्रगृहीतचक्रः संवर्त्तयिष्यन्निव जीवलोकं।
अभ्युत्पतन् लोकगुरुर्ब्बभासे भूतानि धक्ष्यन्निव धूमकेतुः। तमापतन्तं प्रगृहीतचक्रं समीक्ष्य देवं द्विपदाम्वरिष्ठं।
असम्भ्रमात् कार्म्मुकवाणपाणी रथे स्थितः शान्तनवोऽभ्युवाच। एह्येहि देवेश जगन्निवास नमोऽस्तु ते शार्ङ्गमहासिपाणे।
प्रसह्य मां पातय लोकनाथ रथोत्तमात् भूतशरण्य संख्ये। त्वया हतस्येह ममाद्य कृष्ण श्रेयः परस्मिन्निह चैव लोके। २९०५
सम्भावितोऽस्म्यन्धकवृष्णिनाथ लोकैस्त्रिभिश्च प्रथितप्रभावः। श्रुत्वा वचः शान्तनवस्य कृष्णो वेगेन धावंस्तमथाभ्युवाच।
त्वं मूलमस्येह भुवि क्षयस्य दुर्य्योधनञ्चाद्य समुद्धरिष्यसि। दुर्य्यूतदेवी नृपतिर्निवार्य्यः सुमन्त्रिणा धर्म्मपथि स्थितेन।
त्याज्योऽथ वा कालपरीतबुद्धिर्धर्म्मातिगो यः कुलपांसनः स्यात्। भीष्मस्तदाकर्ण्य यदुप्रवीरं राजा परं दैवतमित्युवाच।
त्यक्तस्तु कंसो यदुभिर्हितार्थे सम्बोध्यमानो न बुबोध राजा। क्लेशाय दैवाद्विपरीतबुद्धिः श्रोता हितं यस्य न कश्चिदस्ति।
रथादवप्लुत्य ततस्त्वराज्ञान् पार्थः पदा द्रुत्य यदुप्रवीरं। जग्राह पीनोन्नतलम्बबाहुं बाह्वोर्हरिं व्यायतपीनबाहुः। २९१०
निगृह्यमाणस्तु तमादिदेवो भृशं सरोषः किल चात्मयोगी। आदाय वेगेन जगाम जिष्णुं विष्णुर्महावात इवैकवृक्षं।
पार्थस्तु विष्टभ्य बलेन पादौ भीष्मान्तिकं तूर्णमभिद्रवन्तं। बलान्निजग्राह शनैर्महात्मा पादेऽथ राजन् दशमे कथञ्चित्।
अवस्थितञ्च प्रणिपत्य कृष्णं प्रीतोऽर्ज्जुनः काञ्चनचित्रमाली। उवाच कोपं प्रतिसंहरेति गतिर्भवान् केशव पाण्डवानां।
न हास्यते कर्म्म यथाप्रतिज्ञं पुत्रैः शपे केशव सोदरैश्च। अन्तं गमिष्यामि यथा कुरूणां त्वयाहमिन्द्रानुज सम्प्रयुक्तः।
ततः प्रतिज्ञां समयञ्च तस्य जनार्द्दनः प्रीतमना निशम्य। स्थितः प्रिये कौरवसत्तमस्य रथं सचक्रः पुनरारुरोह। २९१५
स तानभीषून् पुनराददानः प्रगृह्य शङ्खं द्विषतां निहन्ता। विनादयामास दिशो नभश्च स पाञ्चजन्यस्य रवेण शौरिः।
व्याविद्धनिष्काङ्गदकुण्डलं तं रजोविकीर्णाञ्चितपक्ष्मनेत्रं। विशुद्धदंष्ट्रं प्रगृहीतशङ्खं विचुक्रुशुः प्रेक्ष्य कुरुप्रवीराः।
मृदङ्गभेरीपटहप्रणादा नेमिस्वना दुन्दुभिनिःस्वनाश्च। ससिंहनादाश्च बभूवुरुग्राः सर्व्वेष्वनीकेषु ततः कुरूणां।
गाण्डीवघोषः स्तनयित्नुकल्पो जगाम पार्थस्य नभो दिशश्च। जग्मुश्च बाणा विमलाः प्रसन्नाः सर्व्वा दिशः पाण्डवचापमुक्ताः।
तं कौरवाणामधिपो बलेन भीष्मेण भूरिश्रवसा च सार्द्धं। अभ्युद्ययावुद्यतबाणपाणिः कक्षं दिधक्षन्निव धूमकेतुः। २९२०
अथार्ज्जुनाय प्रजहार भल्लान् भूरिश्रवाः सप्त सुवर्णपुङ्खान्। दुर्य्योधनस्तोमरमुग्रवेगं शल्यो गदां शान्तनवश्च शक्तिं।
स सप्तभिः सप्तशरप्रवेगान् संवार्य्य भूरिश्रवसा प्रमुक्तान्। शितेन दुर्य्योधनबाहुमुक्तं क्षुरेण तत्तोमरमुन्ममाथ।
ततः शुभामापततीञ्च शक्तिं विद्युत्प्रभां शान्तनवेन मुक्तां। गदाञ्च मद्राधिपबाहुमुक्तां द्वाभ्यां शराभ्यां निचकर्त्त वीरः।
ततो भुजाभ्यां बलवद्विकृष्य चित्रं धनुर्गाण्डिवमप्रमेयं। माहेन्द्रमस्त्रं विधिवत् सुघोरं प्रादुश्चकाराद्भुतमन्तरीक्षे।
तेनोत्तमास्त्रेण ततो महात्मा सर्व्वाण्यनीकानि महाधनुष्मान्। शरौघजालैर्व्विमलाग्निवर्णैर्न्निवारयामास किरीटमाली। २९२५
शिलीमुखाः पार्थधनुर्व्विमुक्ता रथान् ध्वजाग्राणि धनूंषि बाहून्। निकृत्य देहान् विविशुः परेषां नरेन्द्रनागेन्द्रतुरङ्गमाणां।

ततो दिशः सोऽनुदिशश्च पार्थः शरैः सुधारैर्निशितैर्व्वितत्य । गाण्डीवशब्देन मनांसि तेषां किरीटमाली व्यथयाञ्चकार ।
तस्मिंस्तथा घोरतमेऽस्त्रयुद्धे शङ्खस्वना दुन्दुभिनिःस्वनाश्च । अन्तर्हिता गाण्डिवनिःस्वनेन बभूवुरुग्राश्च रथप्रणादाः ।
गाण्डीवशब्दं तमथो विदित्वा विराटराजप्रमुखा नृवीराः । पाञ्चालराजो द्रुपदश्च वीरस्तं देशमाजग्मुरदीनसत्त्वाः ।
सर्व्वाणि सैन्यानि तु तावकानि यतो यतो गाण्डिवजः प्रणादः । ततस्ततः सन्नतिमेव जग्मुर्न तं प्रतीतोऽभिससार कश्चित् । २६१०
तस्मिन् सुघोरे नृपसंप्रहारे हताः प्रवीराः सरथाश्च सूताः । गजाश्च नाराचनिपाततप्ता महापताकाः शुभरुक्मकक्ष्याः ।
परेतसत्त्वाः सहसा निपेतुः किरीटिना तत्र विभिन्नकायाः । दृढाहताः पत्रिभिरुग्रवेगैः पार्थेन भल्लैर्निशितैः शिताग्रैः ।
निकृत्तयन्त्रा निहतेन्द्रकेतवो ध्वजा नृपाणां ध्वजिनीमुखेषु । पदातिसङ्घाश्च रथाश्च सङ्ख्ये हयाश्च नागाश्च धनञ्जयेन ।
बाणाहतास्तूर्णमपेतसत्त्वा विष्टभ्य गात्राणि निपेतुरुर्व्व्यां । ऐन्द्रेण तेनास्त्रवरेण राजन् महाहवे भिन्नतनुत्रकायाः ।
ततः शरौघैर्निशितैः किरीटिना नृदेहशस्त्रक्षतलोहितोदा । नदी सुघोरा नरमेदफेना प्रवर्त्तिता तत्र रणाजिरे वै । २६१५
वेगेन सातीव पृथुप्रवाहा परेतनागाश्वशरीररोधा । नरान्त्रमज्जाद्भुतमांसपङ्का प्रभूतरक्षोगणभूतसेविता ।
शिरःकपालाकुलकेशशाद्वला शरीरसङ्घातसहस्रवाहिनी । विकीर्णनानाकवचोर्मिसङ्कुला नराश्वनागास्थिनिकृत्तशर्करा ।
श्वशृगालबकककङ्कसङ्घैः क्रव्यादसङ्घैश्च तरक्षुभिश्च । उपेतकूलां ददृशुर्मनुष्याः क्रूरां महावैतरणीप्रकाशां ।
प्रवर्त्तितामर्ज्जुनबाणसङ्घैर्मेदोवसासृक्प्रवहां सुभीमां । हतप्रवीरां च तथैव दृष्ट्वा सेनां कुरूणामथ फाल्गुनेन ।
ते चेदिपाञ्चालकरूषमत्स्याः पार्थाश्च सर्व्वे सहिताः प्रणेदुः । जयप्रमत्ताः पुरुषप्रवीराः संत्रासयन्तः कुरुवीरयोधान् । २६२०
हतप्रवीराणि बलानि दृष्ट्वा किरीटिना शत्रुभयावहेन । विचास्य सेनां ध्वजिनीपतीनां सिंहो मृगाणामिव यूथसङ्घान् ।
विनेदतुस्तावतिहर्षयुक्तौ गाण्डीवधन्वा च जनार्द्दनश्च । ततो रविं संहृतरश्मिजालं दृष्ट्वा भृशं शस्त्रपरिक्षताङ्गाः ।
तदैन्द्रमस्त्रं विततं च घोरमसह्यमुद्वीक्ष्य युगान्तकल्पं । अथापयानं कुरवः सभीष्माः सद्रोणदुर्य्योधनबाह्लिकाश्च ।
चक्रुर्निशां सन्धिगतां समीक्ष्य विभावसोर्लोहितराजयुक्तां । अवाप्य कीर्त्तिञ्च यशश्च लोके विजित्य शत्रूंश्च धनञ्जयोऽपि ।
ययौ नरेन्द्रैः सह सोदरैश्च समाप्तकर्मा शिबिरं निशायां । ततः प्रजज्ञे तुमुलः कुरूणां निशामुखे घोरतमः प्रणादः । २६२५
रणे रथानामयुतं निहत्य हता गजाः सप्तशतार्ज्जुनेन । प्राच्याश्च सौवीरगणाश्च सर्व्वे निपातिताः क्षुद्रकमालवाश्च ।
महत्कृतं कर्म्म धनञ्जयेन कर्त्तुं यथा नार्हति कश्चिदन्यः । श्रुतायुरम्बष्ठपतिश्च राजंस्तथैव दुर्मर्षणचित्रसेनौ ।
द्रोणः कृपः सैन्धवबाह्लिकौ च भूरिश्रवाः शल्यशलौ च राजन् । अन्ये च योधाः शतशः समेताः कृत्स्नेन पार्थेन रणस्य मध्ये ।
स्ववाहुवीर्य्येण जिताः सभीष्माः किरीटिना लोकमहारथेन । इति ब्रुवन्तः शिबिराणि जग्मुः सर्व्वे रणात् भारत ये

त्वदीयाः ।

उल्कासहस्रैश्च सुसम्प्रदीप्तैर्व्विभ्राजमानैश्च तथा प्रदीपैः । किरीटिना त्रासितसर्व्वयोधाश्चक्रे निवेशं ध्वजिनी कुरूणां । २६३०

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि तृतीयदिवसावहारे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

॥ सञ्जय उवाच ॥ व्युष्टां निशां भारत भारतानामनीकिनीनां प्रमुखे महात्मा । ययौ सपत्नान् प्रतिजातकोपः ततः समग्रेण

बलेन भीष्मः ।

तं द्रोणदुर्य्योधनबाह्लिकाश्च तथैव दुर्मर्षणचित्रसेनौ । जयद्रथश्चातिबलो बलौघैर्नृपास्तथाऽन्ये प्रययुः समन्तात् ।
स तैर्महद्भिश्च महारथैश्च तेजस्विभिर्व्वीर्य्यवद्भिश्च राजन् । रराज राजोत्तम राजमुख्यैर्मध्ये सुराणामिव देवराजः ।

तस्मिन्ननीकप्रमुखे विषक्ता दोधूयमानाश्च महापताकाः । सुरक्तपीतासितपाण्डुराभा महागजस्कन्धगता विरेजुः ।
सा वाहिनी शान्तनवेन राज्ञा महारथैर्वारणवाजिभिश्च । बभौ सविद्युत्स्तनयित्नुकल्पा जलागमे द्यौरिव जातमेघा । २६५५
ततो रणायाभिमुखी प्रयाता प्रत्यर्ज्जुनं शान्तनवाभिगुप्ता । सेनाचार सेना महती कुरूणां वेगो यथा भीम इवापगायाः ।
तं व्यालनानाविधगूढसारं गजाश्वपादातरथौघपक्षं । व्यूहं महामेघसमं महात्मा ददर्श दूरात्कपिराजकेतुः ।
स निर्ययौ केतुमता रथेन नरर्षभः श्वेतहयेन वीरः । वरूथिनीनां प्रमुखे महात्मा बलेन युक्तः सर्व्वसपत्नसेनां ।
सोपस्करं सोत्तरबन्धुरीषं यत्ता यदूनामृषभेण संख्ये । कपिध्वजं प्रेक्ष्य विषेदुराजौ सहैव पुत्रैस्तव कौरवेयाः ।
प्रकर्षता गुप्तमुदायुधेन किरीटिना लोकमहारथेन । तं व्यूहराजं ददृशुस्त्वदीयाश्चतुश्चतुर्व्यालसहस्रकीर्णं । २६६०
यथा हि पूर्व्वेऽहनि धर्म्मराज्ञा व्यूहः कृतः कौरवनन्दनेन । तथाभूतो मानुषेषु लोके न दृष्टपूर्व्वो न च विश्रुतश्च ।
ततो महाविगवसमाहतानि भेरीसहस्राणि विनेदुराजौ । शङ्खस्वनास्तूर्य्यरवाश्च जग्मुः सर्व्वेष्वनीकेषु च सिंहनादाः ।
ततः सबाणानि महास्वनानि विस्फार्य्यमाणानि धनूंषि वीरैः । क्षणेन भेरीपणवप्रणादानन्तर्दधुः शङ्खमहास्वनाश्च ।
तच्छङ्खशब्दावृतमन्तरीक्षमुद्धूतभौमद्रुतरेणुजालं । महावितानावततप्रकाशमालोक्य वीराः सहसा निपेतुः ।
रथी रथेनाभिहतः ससूतः पपात साश्वः सरथः सकेतुः । गजो गजेनाभिहतः पपात पदातिना चाभिहतः पदातिः । २६६५
आवर्त्तमानान्यभिवर्त्तमानैर्बाणैः क्षतान्यद्भुतदर्शनानि । प्रासैश्च खड्गैश्च समाहतानि सदश्ववृन्दानि सदश्ववृन्दैः ।
सुवर्णतारागणभूषितानि सूर्य्यप्रभाभानि शरावराणि । विदार्य्यमाणानि परश्वधैश्च प्रासैश्च खड्गैश्च निपेतुरुर्व्यां ।
गजैर्विषाणैर्वरहस्तरुग्णाः केचित् स सूता रथिनः प्रपेतुः । रथर्षभाश्चापि रथर्षभेण निपेतिरे बाणहताः पृथिव्यां ।
गजौघवेगोद्धतसादकानां श्रुत्वा निषेदुर्व्वसुधां मनुष्याः । आर्त्तस्वरं सादिपदातियूनां विषाणगात्रावरताडितानां ।
सम्भ्रान्तनागाश्वरथे मुहूर्त्ते महाक्षये सादिपदातियूनां । महारथैः सम्परिवार्य्यमाणो ददर्श भीष्मः कपिराजकेतुं । २६७०
तं पञ्चतालोच्छ्रितपञ्चकेतुः सदश्ववेगादतिवीर्य्यवाणं । महास्त्रबाणाशनिदीप्तिमन्तं किरीटिनं शान्तनवोऽभ्यधावत् ।
तथैव शक्रप्रतिमानकल्पमिन्द्रात्मजं द्रोणमुखाभिसस्रुः । कृपश्च शल्यश्च विविंशतिश्च दुर्य्योधनः सौमदत्तिश्च राजन् ।
ततो रथानीकमुखादुपेत्य सर्व्वास्त्रवित्काञ्चनचित्रवर्म्मा । जवेन शूरोऽभिससार सर्व्वांस्तानर्ज्जुनस्यात्मसुतोऽभिमन्युः ।
तेषां महास्त्राणि महाबलानामसह्यकर्म्मा विनिहत्य कार्ष्णिः । बभौ महामन्त्रहुतार्च्चिमाली सदोगतः सन् भगवानिवाग्निः ।
ततः स तूर्णं रुधिरोदफेनां कृत्वा नदीं तां समरे रिपूणां । जगाम सौभद्रमतीत्य भीष्मो महारथं पार्थमदीनसत्त्वः । २६७५
ततः प्रहस्याद्भुतदर्शनेन गाण्डीवनिर्ह्रादमहास्वनेन । विपाठजालेन महास्त्रजालं विनाशयामास किरीटमाली ।
तमुत्तमं सर्व्वधनुर्धराणामसक्तकर्म्मा कपिराजकेतुः । भीष्मं महात्मा ववर्ष भूयः शरैः सुतीक्ष्णैर्विमलैश्च भल्लैः ।
तथैव भीष्माहृतमन्तरीक्षे महास्त्रजालं कपिराजकेतोः । विशीर्य्यमाणं ददृशुस्त्वदीया दिवाकरेणेव तमोऽभिभूतं ।
एवं विधं कार्म्मुकभीमनादमदीनवत्सत्पुरुषोत्तमाभ्यां । ददर्श लोकः कुरुसञ्जयाश्च तद्द्वैरथं भीष्मधनञ्जयाभ्यां ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मार्ज्जुनद्वैरथे षष्टितमोऽध्यायः ॥ ६० ॥
॥ सञ्जय उवाच ॥ द्रौणिर्भूरिश्रवाः शल्यश्चित्रसेनश्च मारिष । पुत्रः सांयमनेश्चैव सौभद्रं समयोधयन् । २६८०
संसक्तमतितेजोभिस्तमेकं ददृशुर्ज्जनाः । पञ्चभिर्मनुजव्याघ्रैर्गजैः सिंहशिशुं यथा ।
नाभिलक्ष्यतया कश्चिन्न शौर्य्येण पराक्रमे । बभूव सदृशः कार्ष्णेर्नान्योऽपि च लाघवे ।

तथा तमात्मजं युद्धे विक्रमन्तमरिन्दमं। दृष्ट्वा पार्थो रणे यत्तं सिंहनादमथानदत्।
पीडयानञ्च तत्सैन्यं पौत्रं तव विशाम्पते। दृष्ट्वा त्वद्योधा राजेन्द्र समन्तात् पर्य्यवारयन्।
ध्वजिनीं धार्त्तराष्ट्राणां दीनशत्रुरदीनवत्। प्रत्युद्ययौ स सौभद्रस्तेजसा च बलेन च। २९८५
तस्य लाघवमार्गस्थमादित्यसदृशप्रभं। व्यदृश्यत महच्चापं समरे युध्यतः परैः।
स द्रौणिमिषुणैकेन विद्ध्वा शल्यञ्च पञ्चभिः। ध्वजं सांयमनेश्चापि सोऽष्टाभिः पर्य्यपातयत्।
रुक्मदण्डां महाशक्तिं प्रेषितां सौमदत्तिना। शितेनोरगसङ्काशां पत्रिणा विजहार तां।
शल्यस्य च महाघोरान् पश्यतः शतशः शरान्। निवार्य्यार्ज्जुनदायादो जघान चतुरो हयान्।
भूरिश्रवाश्च शल्यश्च द्रौणिः सांयमनिः शलः। नाभ्यवर्त्तन्त संरब्धाः कार्ष्णेर्बाहुबलोदयं। २९९०
ततस्त्रिगर्त्ता राजेन्द्र मद्राश्च सह कैकयैः। पञ्चविंशतिसाहस्रास्तव पुत्रेण चोदिताः।
धनुर्वेदविदो मुख्या अजेयाः शत्रुभिर्युधि। सहपुत्रं जिघांसन्तं परिवव्रुः किरीटिनं।
तौ तत्र च पितापुत्रौ परिक्षिप्तरथावुभौ। ददर्श राजन् पाञ्चाल्यः सेनापतिरमित्रजित्।
स वारणरथौघेन सहस्रैर्बहुभिर्वृतः। वाजिभिः पत्तिभिश्चैव वृतः शतसहस्रशः।
धनुर्विस्फार्य्य संक्रुद्धश्चोदयित्वा च वाहिनीं। ययौ तन्मद्रकानीकं कैकेयांश्च परन्तप। २९९५
तेन कीर्त्तिमता गुप्तमनीकं दृढधन्वना। प्रयुक्तरथनागाश्वं योत्स्यमानमशोभत।
सोऽर्ज्जुनं प्रति संयातः पाञ्चालकुलवर्द्धनः। त्रिभिः शारद्वतं बाणैर्जत्रुदेशे समर्दयत्।
ततः स मद्रकान् भित्त्वा दशभिर्निशितैः शरैः। पृष्ठरक्षं जघानाशु भल्लेन कृतवर्म्मणः।
दमनश्चापि दायादं पौरवस्य महात्मनः। जघान विपुलाग्रेण नाराचेन परन्तपः।
ततः सांयमनेः पुत्रः पाञ्चाल्यं युद्धदुर्म्मदं। अविध्यत्त्रिंशताबाणैर्दशभिश्चास्य सारथिं। ३०००
सोऽतिविद्धो महेष्वासः सृक्किणी परिसंलिहन्। भल्लेन भृशतीक्ष्णेन निचकर्त्तास्य कार्म्मुकं।
अथैनं पञ्चविंशत्या क्षिप्रमेव समर्दयत्। अश्वांश्चास्यावधीद्राजन् उभौ तौ पार्ष्णिसारथी।
हताश्वे स रथे तिष्ठन् ददर्श भरतर्षभ। पुत्रः सांयमनेः पुत्रं पाञ्चाल्यस्य यशस्विनः।
सम्प्रगृह्य महाघोरं निस्त्रिंशवरमायसं। पदातिस्तूर्णमागच्छत् रथस्थं द्रुपदात्मजं।
तं महौघमिवायान्तं खात् पतन्तमिवोरगं। भ्रान्तावरणनिस्त्रिंशं कालोत्सृष्टमिवान्तकं। ३००५
दीप्यमानमिवादित्यं मत्तवारणविक्रमं। अपश्यन् पाण्डवास्तत्र धृष्टद्युम्नश्च पार्षतः।
तस्य पाञ्चाल्यपुत्रस्य प्रतीपमभिधावतः। शितनिस्त्रिंशहस्तस्य शरावरणधारिणः।
बाणवेगव्यतीतस्य रथाभ्याशमुपेयुषः। त्वरन् सांयमनेः क्रुद्धो बिभेद गदया शिरः।
तस्य राजन् सनिस्त्रिंशं सुप्रभं शरवारणं। हतस्य पततो हस्तात् वेगेनाभ्यपतत् भुवि।
तं निहत्य गदाग्रेण लेभे स परमं यशः। पुत्रः पाञ्चालराजस्य महात्मा भीमविक्रमः। ३०१०
तस्मिन् हते महेष्वासे राजपुत्रे महारथे। हाहाकारो महानासीत् तव सैन्यस्य मारिष।
ततः सांयमनिः क्रुद्धो दृष्ट्वा निहतमात्मजं। अभिदुद्राव वेगेन पाञ्चाल्यं युद्धदुर्म्मदं।

तौ तत्र समरे वीरौ समेतौ रथिनां वरौ । ददृशुः सर्व्वराजानः कुरवः पाण्डवास्तथा ।
ततः सांयमनिः क्रुद्धः पार्षतं परवीरहा । आजघान त्रिभिर्व्वाणैस्तोत्त्रैरिव महाद्विपं ।
तथैव पार्षतं शूरं शल्यः समितिशोभनः । आजघानोरसि क्रुद्धस्ततो युद्धमवर्त्तत । २०१५

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि सांयमनिपुत्त्रवधे एकषष्टोऽध्यायः ॥ ६१ ॥

॥ धृतराष्ट्र उवाच ॥ दैवमेव परं मन्ये पौरुषादपि सञ्जय । यत्सैन्यं मम पुत्त्रस्य पाण्डुसैन्येन बध्यते ।
नित्यं हि मामकांस्तात हतानेव हि शंससि । अहतांश्च प्रहृष्टांश्च नित्यं शंससि पाण्डवान् ।
हतान् पुरुषकारेण मामकानद्य सञ्जय । पतितान् पात्यमानांश्च हतानेव च शंससि ।
युध्यमानान् यथाशक्ति घटमानान् जयम्प्रति । पाण्डवा विजयन्त्येव हीयन्ते चैव मामकाः ।
सोऽहन्तीव्राणि दुःखानि दुर्य्योधनकृतानि च । अश्रौषं सततं तात दुःसहानि बहूनि च । २०२०
तमुपायं न पश्यामि हीयेरन् येन पाण्डवाः । मामका वा जयं युद्धे प्राप्नुयुर्येन सञ्जय ।

॥ सञ्जय उवाच ॥ क्षयं मनुष्यदेहानां गजवाजिरथक्षयं । शृणु राजन् स्थिरो भूत्वा तवैवापनयो महान् ।
धृष्टद्युम्नस्तु शल्येन पीडितो नवभिः शरैः । पीडयामास संक्रुद्धो मद्राधिपतिमायसैः ।
तत्राद्भुतमपश्याम पार्षतस्य पराक्रमं । न्यवारयत यत्तूर्णं शल्यं समितिशोभनं ।
नान्तरं ददृशे कश्चित् तयोः संरब्धयो रणे । मुहूर्त्तमिव तद्युद्धं तयोः समभवत्तदा । २०२५
ततः शल्यो महाराज धृष्टद्युम्नस्य संयुगे । धनुश्चिच्छेद भल्लेन पीतेन निशितेन च ।
अथैनं शरवर्षेण छादयामास भारत । गिरिं जलागमे यद्वत् जलदा जलधारिणः ।
अभिमन्युस्तु संक्रुद्धो धृष्टद्युम्ने च पीडिते । अभिदुद्राव वेगेन मद्रराजरथं प्रति ।
ततो मद्राधिपरथं कार्ष्णिः सम्प्राप्य कोपनः । आर्त्तायनिममेयात्मा विव्याध निशितैस्त्रिभिः ।
ततस्तु तावका राजन् परीप्सन्तोऽर्ज्जुनिं रणे । मद्राधिपरथं तूर्णं परिवार्य्यावतस्थिरे । २०३०
दुर्य्योधनो विकर्णश्च दुःशासनविविंशती । दुर्म्मर्षणो दुःसहश्च चित्रसेनश्च दुर्म्मुखः ।
सत्यव्रतः पुरुमित्रो विकर्णश्च महारथः । एते मद्राधिपरथं पालयन्तः स्थिता रणे ।
तान् भीमसेनः संक्रुद्धो धृष्टद्युम्नश्च पार्षतः । द्रौपदेयाभिमन्युश्च माद्रीपुत्त्रौ च पाण्डवौ ।
धार्त्तराष्ट्रान् दशरथान् दशैव प्रत्यवारयन् । नानारूपाणि शस्त्राणि विसृजन्तो विशाम्पते ।
अभ्यवर्त्तन्त संक्रुद्धाः परस्परवधैषिणः । ते वै समीयुः सङ्ग्रामे राजन् दुर्म्मन्त्रिते तव । २०३५
तस्मिन् दशरथे क्रुद्धे वर्त्तमाने महाभये । तावकानां परेषाञ्च प्रेक्षका रथिनोऽभवन् ।
शस्त्राण्यनेकरूपाणि विसृजन्तो महारथाः । अन्योन्यमभिनर्द्दन्तः सम्प्रहारं प्रचक्रिरे ।
ते तदा जातसंरम्भाः सर्व्वेऽन्योन्यं जिघांसवः । अन्योऽन्यमभिमर्द्दन्तः स्पर्द्धमानाः परस्परं ।
अन्योऽन्यस्पर्द्धया राजन् ज्ञातयः सङ्गता मिथः । महास्त्राणि विमुञ्चन्तः समापेतुरमर्षणाः ।
दुर्य्योधनस्तु संक्रुद्धो धृष्टद्युम्नं महारणे । विव्याध निशितैर्व्वाणैश्चतुर्भिः समरेऽद्भुतं । २०४०
दुर्म्मर्षणश्च विंशत्या चित्रसेनश्च पञ्चभिः । दुर्म्मुखो नवभिर्व्वाणैर्दुःसहश्चापि सप्तभिः ।

विविंशतिः पञ्चभिस्तु त्रिभिर्दुःशासनस्तथा । तान् प्रत्यविध्यद्राजेन्द्र पार्षतः शत्रुतापनः ।
एकैकं पञ्चविंशत्या दर्शयन् हस्तलाघवं । सत्यव्रतश्च समरे पुरुमित्रश्च भारत ।
अभिमन्युरविध्यत्तु दशभिर्द्दशभिः शरैः । माद्रीपुत्त्रौ च समरे मातुलं मातृनन्दनौ ।
छादयेतां शरैस्तीक्ष्णैस्तदद्भुतमिवाभवत् । ततः शल्यो महाराज स्वस्त्रीयौ रथिनाम्वरौ । २०४५
शरैर्ब्बहुभिरानर्च्छत् कृतप्रतिकृतैषिणौ । छाद्यमानौ ततस्तौ तु माद्रीपुत्त्रौ न चेलतुः ।
अथ दुर्य्योधनं दृष्ट्वा भीमसेनो महाबलः । विधित्सुः कलहस्यान्तं गदां जग्राह पाण्डवः ।
तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणं । भीमसेनं महाबाहुं पुत्त्रास्ते प्राद्रवन् भयात् ।
दुर्य्योधनस्तु संक्रुद्धो मागधं समचोदयत् । अनीकं दशसाहस्रं कुञ्जराणां तरस्विनां ।
गजानीकेन सहितस्तेन राजा सुयोधनः । मागधं पुरतः कृत्वा भीमसेनमथाभ्ययात् । २०५०
आपतन्तञ्च तं दृष्ट्वा गजानीकं वृकोदरः । गदापाणिरवारोहद्रथात् सिंह इवोन्नदन् ।
अद्रिसारमयीं गुर्व्वीं प्रगृह्य महतीं गदां । अभ्यधावद्गजानीकं व्यादितास्य इवान्तकः ।
स गजान् गदया निघ्नन् समरे व्यचरद्बली । भीमसेनो महाबाहुर्वृत्रहा दानवेष्विव ।
तस्य नादेन महता मनोहृदयकम्पिना । व्यत्यचेष्टन्त संहत्य तदा भीमस्य नर्द्दतः ।
ततस्तु द्रौपदीपुत्त्राः सौभद्रश्च महारथः । नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः । २०५५
पृष्ठं भीमस्य रक्षन्तः शरवर्षेण वारयन् । अभ्यधावन्त वर्षन्तो मेघा इव गिरीन्यथा ।
क्षुरैः क्षुरप्रैर्भल्लैश्च पीतैरञ्जलिकैः शितैः । व्याहरन्नुत्तमाङ्गानि पाण्डवा गजयोधिनां ।
शिरोभिः प्रपतद्भिश्च बाहुभिश्च विभूषितैः । अश्मवृष्टिरिवाभाति पाणिभिश्च सहाङ्कुशैः ।
हृतोत्तमाङ्गाः स्कन्धेषु गजानां गजयोधिनः । अदृश्यन्ताचलाग्रेषु द्रुमा भग्नशिखा इव ।
धृष्टद्युम्नहतानन्यानपश्याम महागजान् । पतितान् पात्यमानांश्च पार्षतेन महात्मना । २०६०
मागधोऽथ महीपालो गजमैरावतोपमं । प्रेषयामास समरे सौभद्रस्य रथं प्रति ।
तमापतन्तं संप्रेक्ष्य मागधस्य महागजं । निजघानेषुणा वीरः सौभद्रः परवीरहा ।
तस्यावर्ज्जितनागस्य कार्ष्णिः परपुरञ्जयः । राज्ञो रजतपुङ्खेन भल्लेनापाहरच्छिरः ।
विगाह्य तद्गजानीकं भीमसेनोऽपि पाण्डवः । व्यचरत् समरे मृद्नन् गजानिन्द्रो गिरीनिव ।
एकप्रहारे निहतान् भीमसेनेन दन्तिनः । अपश्याम रणे तस्मिन् गिरीन् वज्रहतानिव । २०६५
भग्नदन्तान् भग्नकटान् भग्नसक्थींश्च वारणान् । भग्नपृष्ठान् भग्नकुम्भान् निहतान् पर्व्वतोपमान् ।
अपश्यन्निहतान्नागान् राजन् निष्ठीवतोऽपरान् । वमन्तो रुधिरं चान्ये भिन्नकुम्भा महागजाः ।
विक्लवन्तो गता भूमिं शैला इव धरातले । मेदोरुधिरदिग्धाङ्गो वसामज्जासमुक्षितः ।
व्यचरत् समरे भीमो दण्डपाणिरिवान्तकः । गजानां रुधिरार्द्राङ्गीं गदां बिभ्रद्वृकोदरः ।
घोरः प्रतिभयश्चासीत् पिनाकीव पिनाकधृक् । निर्म्मथ्यमानाः क्रुद्धेन भीमसेनेन दन्तिनः । २०७०

सहसा प्राद्रवन् क्लिष्टा वहन्तस्तववाहिनीं । तं हि वीरं महेष्वासाः सौभद्रप्रमुखा रथाः ।
पर्य्यरक्षन्त युध्यन्तं वज्रायुधमिवामराः । शोणिताक्तां गदां बिभ्रदुक्षितां गजशोणितैः ।
कृतान्त इव रौद्रात्मा भीमसेनो व्यदृश्यत । व्यायच्छमानं गदया दिक्षु सर्व्वासु भारत ।
भीमसेनमपश्याम नृत्यन्तमिव शङ्करं । यमदण्डोपमां गुर्व्वीमिन्द्राशनिसमस्वनां ।
अपश्याम महाराज रौद्रां विशसनीं गदां । व्यामिश्रां केशमज्जाभिः प्रदिग्धां रुधिरेण च । २७७५
पिनाकमिव रुद्रस्य क्रुद्धस्याभिघ्नतः पशून् । यथा पशूनां सङ्घातं यष्ट्या पालः प्रकालयेत् ।
तथा भीमो गजानीकं गदया पर्य्यकालयत् । गदया वध्यमानास्ते मार्गणैश्च समन्ततः ।
स्वान् स्यन्दनान् विमृद्नन्तः प्राद्रवन् कुञ्जरास्तव । महावात इवाभ्राणि विधमित्वा रणाङ्गणम् ।
अतिष्ठत् समरे भीमः श्मशान इव शूलभृत् ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीमसेनपराक्रमे द्विषष्टोऽध्यायः ॥ ६२ ॥

॥ सञ्जय उवाच ॥ हते तस्मिन् गजानीके पुत्रो दुर्य्योधनस्तव । भीमसेनं घ्नतेत्येवं सर्व्वसैन्यान्यचोदयत् । २७८०
ततः सर्व्वाणि सैन्यानि पुत्रस्य तव शासनात् । अभ्यद्रवन् भीमसेनं नदन्तो भैरवान् रवान् ।
तं बलौघमपर्य्यन्तं देवैरपि दुरुत्सहं । आपतन्तं सुदुष्पारं समुद्रमिव पर्व्वणि ।
रथनागाश्वकलिलं शङ्खदुन्दुभिनादितं । अनन्तरथपादातं रजसा सर्व्वतोवृतं ।
भीमसेनस्तु समरे महोदधिमिवापरं । सेनासागरमक्षोभ्यं वेलेव समवारयत् ।
तदाश्चर्य्यमपश्याम पाण्डवस्य महात्मनः । भीमसेनस्य समरे राजन् कर्म्मातिमानुषं । २७८५
उदीर्णान् पार्थिवान् सर्व्वान् साश्वान् सरथकुञ्जरान् । असम्भ्रमं भीमसेनो गदया समवारयत् ।
स संवार्य्य बलौघांस्तान् गदया बलिनां वरः । अतिष्ठत्तुमुले भीमो गिरिर्मेरुरिवाचलः ।
तस्मिन् सुतुमुले घोरे रणे परमदारुणे । भ्रातरश्चैव पुत्राश्च धृष्टद्युम्नश्च पार्षतः ।
द्रौपदेयाभिमन्युश्च शिखण्डी चापराजितः । न प्राजहन् भीमसेनं भये जाते महाबलाः ।
ततः शैक्यायसीं गुर्व्वीं प्रगृह्य महतीं गदां । अधावत् तावकान् योधान् दण्डपाणिरिवान्तकः । २७९०
पोथयन् रथवृन्दानि वाजिवृन्दानि वा विभुः । व्यचरत् समरे भीमो युगान्ते पावको यथा ।
विनिघ्नन् समरे योधान् युगान्ते कालवद्विभुः । ऊरुवेगेन सङ्कर्षन् रथजालानि पाण्डवः ।
बलानि च ममर्द्दाशु नड्वलानीव कुञ्जरः । मृद्नन् रथेभ्यो रथिनो गजेभ्यो गजयोधिनः ।
सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातिनः । गदया व्यहनत् सर्व्वान् वातो वृक्षानिवौजसा ।
भीमसेनो महाबाहुस्तव पुत्रस्य वै बले । मेदोमज्जावसामांसैः प्रदिग्धा रुधिरेण च । २७९५
अदृश्यत महारौद्री गदा नागाश्वघातिनी । तत्र तत्र हतैश्चापि मनुष्यगजवाजिभिः ।
रणाङ्गनं तदभवत् मृत्योरागारसन्निभं । पिनाकमिव रुद्रस्य क्रुद्धस्याभिघ्नतः पशून् ।
यमदण्डोपमामुग्रामिन्द्राशनिसमप्रभां । ददृशुर्भीमसेनस्य रौद्रां विशसनीं गदां ।

आविध्यतो गदां तस्य कौन्तेयस्य महात्मनः । बभौ रूपं महाघोरं कालस्येव जगत्क्षये ।
तां तथा महतीं सेनां द्रावयन्तं पुनः पुनः । दृष्ट्वा मृत्युमिवायान्तं सर्व्वे विमनसोऽभवन् । २८००
यतो यतः प्रेक्षते स्म गदामुद्यम्य पाण्डवः । तेन तेन स्म दीर्य्यन्ते सर्व्वसैन्यानि भारत ।
प्रदारयन्तं सैन्यानि बलौघेनापराजितं । ग्रसमानमनीकानि व्यादितास्यमिवान्तकं ।
तं तथा भीमकर्म्माणं प्रगृहीतमहागदं । दृष्ट्वा वृकोदरं भीष्मः सहसैव समभ्ययात् ।
महता मेघघोषेण रथेनादित्यवर्च्चसा । छादयन् शरवर्षेण पर्ज्जन्य इव वृष्टिमान् ।
तमायान्तं तथा दृष्ट्वा व्यात्ताननमिवान्तकं । भीमसेनो महाबाहुः प्रत्युदीयादमर्षितः । २८०५

तस्मिन् क्षणे सात्यकिः सत्यसन्धः शिनिप्रवीरोऽभ्यपतत् पितामहं । निघ्नन्नमित्रान् धनुषा दृढेन संकम्पयंस्तव पुत्त्रस्य सेनां ।

तं यान्तमश्वैरजतप्रकाशैः शरान् वपन्तं निशितान् सुपुङ्खान् । नाशक्नुवन् वारयितुं तदानीं सर्व्वे जना भारत ये त्वदीयाः ।

अविध्यदेनं दशभिः पृषत्कैरलम्बुषो राक्षसोऽसौ तदानीं । शरैश्चतुर्भिः प्रतिविध्य तञ्च नप्ता शिनेरभ्यपतद्रथेन ।
अन्वागतं वृष्णिवीरं निशम्य मध्ये रिपूणां परिवर्त्तमानं । प्रवारयन्तं कुरुपुङ्गवांश्च पुनः पुनश्च प्रणदन्तमाजौ ।
योधास्त्वदीयाः शरवर्षैरवर्षन् मेघा यथा भूधरमम्बुवेगैः । नाशक्नुवन् वारयितुं वरिष्ठं मध्यन्दिने सूर्य्यमिवातपन्तं । २८१०
न तत्र कश्चिन्नविषण्ण आसीदृते राजन् सोमदत्तस्य पुत्त्रं । स त्वाददानो धनुरुग्रवेगं भूरिश्रवा भारत सौमदत्तिः ।
दृष्ट्वा रथान् स्वान् व्यपनीयमानान् प्रत्युद्ययौ सात्यकिं योद्धुमिच्छन् ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि सात्यकिभूरिश्रवसोः समागमे त्रिषष्टोऽध्यायः ॥ ६३ ॥

॥ सञ्जय उवाच ॥ ततो भूरिश्रवा राजन् सात्यकिं नवभिः शरैः । अविध्यत् भृशसंक्रुद्धस्तोत्त्रैरिव महाद्विपं ।
कौरवं सात्यकिश्चापि शरैः सन्नतपर्व्वभिः । अवारयदमेयात्मा सर्व्वलोकस्य पश्यतः ।
ततो दुर्य्योधनो राजा सोदर्य्यैः परिवारितः । सौमदत्तिं रणे यत्तं समन्तात् पर्य्यवारयत् । २८१५
तथैव पाण्डवाः सर्व्वे सात्यकिं तरसा रणे । परिवार्य्य स्थिताः सङ्ख्ये समन्तात् सुमहौजसः ।
भीमसेनस्तु संक्रुद्धो गदामुद्यम्य भारत । दुर्य्योधनमुखान् सर्व्वान् पुत्त्रांस्ते पर्य्यवारयत् ।
रथैरनेकसाहस्रैः क्रोधामर्षसमन्वितः । नन्दकस्तव पुत्त्रस्तु भीमसेनं महाबलं ।
विव्याध निशितैस्तीक्ष्णैः कङ्कपत्त्रैः शिलाशितैः । दुर्य्योधनस्तदा राजन् भीमसेनं महाहवे ।
आजघानोरसि क्रुद्धो मार्गणैर्नवभिः शितैः । ततो भीमो महाबाहुः स्वरथं सुमहाबलः । २८२०
आरुरोह रथं श्रेष्ठं विशोकञ्चेदमब्रवीत् । एते महारथाः शूरा धार्त्तराष्ट्रा महाबलाः ।
मामेव भृशसंक्रुद्धा हन्तुमभ्युद्यता युधि । एतानद्य हनिष्यामि पश्यतस्ते न संशयः ।
तस्मात् ममाश्वान् सङ्ग्रामे यत्तः संयच्छ सारथे । एवमुक्त्वा ततः पार्थः पुत्त्रं तव विशाम्पते ।
विव्याध दशभिस्तीक्ष्णैः शरैः कनकभूषणैः । नन्दकञ्च त्रिभिर्व्बाणैः प्रत्यविध्यत् स्तनान्तरे ।
ततो दुर्य्योधनः षष्ट्या विद्धा भीमं महाबलं । त्रिभिरन्यैः सुनिशितैर्व्विशोकं प्रत्यविध्यत । २८२५

भीमस्य च रणे राजन् धनुश्चिच्छेद भास्वरं । मुष्टिदेशे शरैस्तीक्ष्णैस्त्रिभिराजौ हसन्निव ।
भीमस्तु प्रेक्ष्य यन्तारं विशोकं संयुगे तदा । पीडितं विशिखैस्तीक्ष्णैस्तव पुत्त्रेण धन्विना ।
अमृष्यमाणः संक्रुद्धो धनुर्दिव्यं परामृशत् । पुत्त्रस्य ते महाराज वधार्थं पुरुषर्षभ ।
समादत्त सुसंरब्धः क्षुरप्रं लोमवाहिनं । तेन चिच्छेद नृपतेर्भीमः कार्मुकमुत्तमं ।
अपास्य तु धनुश्छिन्नं पुत्त्रस्ते क्रोधमूर्च्छितः । अन्यत् कार्मुकमादत्त त्वरन् वेगवत्तरं । २८१०
सन्धाय विशिखं घोरं कालमृत्युसमप्रभं । तेनाजघान संक्रुद्धो भीमसेनं स्तनान्तरे ।
स गाढविद्धो व्यथितः स्यन्दनोपस्थ आविशत् । निषसाद रथोपस्थे मूर्च्छा चाभिजगाम ह ।
तं दृष्ट्वा व्यथितं भीममभिमन्युपुरोगमाः । नामृष्यन्त महाभागाः पाण्डवानां महारथाः ।
ततः सुतुमुलां वृष्टिं शराणामुग्रतेजसां । पातयामासुरव्यग्राः पुत्त्रस्य तव मूर्द्धनि ।
प्रतिलभ्य ततः संज्ञां भीमसेनो महाबलः । दुर्योधनं त्रिभिर्विद्धा पुनर्विव्याध पञ्चभिः । २८१५
शल्यञ्च पञ्चविंशत्या शरैर्विव्याध पाण्डवः । रुक्मपुङ्खैर्महेष्वासः स विद्धो व्यपयात् रणात् ।
प्रत्युद्ययुस्ततो भीमं तव पुत्त्राश्चतुर्दश । सेनापतिः सुषेणश्च जलसन्धः सुलोचनः ।
उग्रो भीमरथो भीमो वीरबाहुरलोलुपः । दुर्मुखो दुष्प्रधर्षश्च विवित्सुर्विकटः समः ।
विसृजन्तो बहून् वाणान् क्रोधसंरक्तलोचनाः । भीमसेनमभिद्रुत्य विव्यधुः सहिता भृशं ।
पुत्त्रांस्तु तव सम्प्रेक्ष्य भीमसेनो महाबलः । सृक्किणी विलिहन् वीरः पशुमध्ये वृको यथा । २८२०
अभिपत्य महाबाहुर्गरुत्मानिव वेगितः । सेनापतेः क्षुरप्रेण शिरश्चिच्छेद पाण्डवः ।
सम्प्रहस्य च हृष्टात्मा त्रिभिर्वाणैर्महाभुजः । जलसन्धं विनिर्भिद्य सोऽनयद्यमसादनं ।
सुषेणञ्च ततो हत्वा प्रेषयामास मृत्यवे । उग्रस्य सशिरस्त्राणं शिरश्चन्द्रोपमं भुवि ।
पातयामास भल्लेन कुण्डलाभ्यां विभूषितं । वीरबाहुञ्च सप्तत्या साश्वकेतुं ससारथिं ।
निनाय समरे भीमः परलोकाय पाण्डवः । भीमभीमरथौ चोभौ भीमसेनो हसन्निव । २८२५
भ्रातरौ रभसौ राजन्ननयद्यमसादनं । ततः सुलोचनं भीमः क्षुरप्रेण महामृधे ।
मिषतां सर्व्वसैन्यानामनयद्यमसादनं । पुत्त्रास्तु तव ते दृष्ट्वा भीमसेनपराक्रमं ।
शेषा येऽन्येऽभवंस्तत्र ते भीमस्य भयात्तदा । विप्रद्रुता रणाद्राजन् वध्यमाना महात्मना ।
ततोऽब्रवीच्छान्तनवः सर्व्वानेव महारथान् । एष भीमो रणे क्रुद्धो धार्त्तराष्ट्रान् महाबलान् ।
यथाप्रज्ञान् यथावीरान् यथाशूरांश्च सङ्गतान् । निपातयत्युग्रधन्वा तं प्रमथ्नीत पाण्डवं । २८३०
एवमुक्तास्ततः सर्व्वे धार्त्तराष्ट्रस्य सैनिकाः । अभ्यद्रवन्त संक्रुद्धा भीमसेनं महाबलं ।
भगदत्तः प्रभिन्नेन कुञ्जरेण विशाम्पते । अपतत् सहसा तत्र यत्र भीमो व्यवस्थितः ।
आपतन्नेव च रणे भीमसेनं शिलाशितैः । अदृश्यं समरे चक्रे जीमूत इव भास्करं ।
अभिमन्युमुखास्तत्र नामृष्यन्त महारथाः । भीमस्याच्छादनं सङ्ख्ये स्वबाहुबलमाश्रिताः ।
त एनं शरवर्षेण समन्तात् पर्य्यवारयन् । गजञ्च शरवृष्ट्या तु बिभिदुस्ते समन्ततः । २८३५

स शक्त्याऽभिहतः समन्तात्तैर्महारथैः । प्राग्ज्योतिषगणो राजन् नानालिङ्गैः सुतेजनैः ।
सञ्जातरुधिरोत्पीडः प्रेक्षणीयोऽभवद्रणे । गभस्तिभिरिवार्कस्य संस्यूतो जलदो महान् ।
स चोदितो मदस्रावी भगदत्तेन कुञ्जरः । अभ्यधावत तान् सर्व्वान् कालोत्सृष्ट इवान्तकः ।
द्विगुणं जवमास्थाय कम्पयंश्चरणैर्महीं । तच्च तस्य महद्रूपं दृष्ट्वा सर्व्वे महारथाः ।
असह्यं मन्यमानास्तं विमनसोऽभवन् । ततस्तु नृपतिः क्रुद्धो भीमसेनं स्तनान्तरे । २८६०
आजघान नरव्याघ्रः शरेणानतपर्व्वणा । सोऽतिविद्धो महेष्वासस्तेन राज्ञा महारथः ।
मूर्च्छयाभिपरीताङ्गो ध्वजयष्टिमुपाश्रितः । तांस्तु भीतान् समालक्ष्य भीमसेनञ्च मूर्च्छितं ।
ननाद बलवन्नादं भगदत्तः प्रतापवान् । ततो घटोत्कचो राजन् दृष्ट्वा भीमं तथागतं ।
संक्रुद्धो राक्षसो घोरस्तत्रैवान्तरधीयत । स कृत्वा दारुणीं मायां भीरूणां भयवर्द्धिनीं ।
अदृश्यत निमेषार्द्धाद्घोररूपं समाश्रितः । ऐरावतं समारुह्य स्वयं मायामयं कृतं । २८६५
तस्य चान्येऽपि दिङ्नागा बभूवुरनुयायिनः । अञ्जनो वामनश्चैव महापद्मश्च सुप्रभः ।
त्रय एते महानागा राक्षसैः समधिष्ठिताः । महाकायास्त्रिधा राजन् प्रस्रवन्तो मदं बहु ।
तेजोवीर्य्यबलोपेता महाजवपराक्रमाः । घटोत्कचस्तु स्वं नागं प्रेषयामास संयुगे ।
सगजं भगदत्तन्तु हन्तुकामः परन्तप । ते चान्ये चोदिता नागा राक्षसैः सुमहाबलैः ।
परिपेतुः सुसंक्रुद्धाश्चतुर्द्दंष्ट्राश्चतुर्द्दिशं । भगदत्तस्य तं नागं विषाणैरवपीडयन् । २८७०
सम्पीड्यमानस्तैर्नागैर्व्वेदनार्त्तः शराहतः । अनदत् सुमहानादमिन्द्राशनिसमस्वनः ।
तस्य तं नदतो नादं सुघोरं भीमनिस्वनं । श्रुत्वा भीष्मोऽब्रवीद्द्रोणं राजानञ्च सुयोधनं ।
एष युध्यति सङ्ग्रामे हैडिम्बेन दुरात्मना । भगदत्तो महेष्वासः कृच्छ्रे च परिवर्त्तते ।
राक्षसश्च महाकायः स च राजाऽतिकोपनः । युवं समेतौ समरे कालमृत्युसमावुभौ ।
श्रूयते ह्येष हृष्टानां पाण्डवानां महास्वनः । हस्तिनश्चैव सुमहान् भीतस्य रुदितध्वनिः । २८७५
तत्र गच्छाम भद्रं वो राजानं परिरक्षितुं । अरक्ष्यमाणः समरे क्षिप्रं प्राणान् विमोक्ष्यति ।
तत् त्वरध्वं महावीर्य्या मा चिरं कुरुतानघाः । महान् विवर्द्धते रौद्रः सङ्ग्रामो लोमहर्षणः ।
भक्तश्च कुलपुत्रश्च शूरश्च पृतनापतिः । युक्तं तस्य परित्राणं कर्त्तुमस्माभिरच्युताः ।
भीष्मस्य तद्वचः श्रुत्वा भारद्वाजपुरोगमाः । सहिताः सर्व्वराजानो भगदत्तपरीप्सया ।
उत्तमं जवमास्थाय प्रययुर्यत्र सोऽभवत् । तान् प्रयातान् समालोक्य युधिष्ठिरपुरोगमाः । २८८०
पाञ्चालाः पाण्डवैः सार्द्धं पृष्ठतोऽनुययुः परान् । तान्यनीकान्यथालोक्य राक्षसेन्द्रः प्रतापवान् ।
ननाद सुमहानादं विस्फोटमशनेरिव । तस्यापि निनदं श्रुत्वा दृष्ट्वा नागांश्च युध्यतः ।
भीष्मः शान्तनवो भूयो भारद्वाजमभाषत । न रोचते मे सङ्ग्रामो हैडिम्बेन दुरात्मना ।
बलवीर्य्यसमाविष्टः ससहायश्च साम्प्रतं । नैव शक्यो युधा जेतुमपि वज्रभृता स्वयं ।
लब्धलक्षः प्रहारी च वयञ्च श्रान्तवाहनाः । पाञ्चालैः पाण्डवैश्चैव वयञ्च क्षतविक्षताः । २८८५

तन्मे न रोचते युद्धं पाण्डवैर्जितकाशिभिः । युध्यतामवहारोऽस्तु श्वो योत्स्यामः परैः सह ।
पितामहवचः श्रुत्वा तथा चक्रुः प्रहर्षिताः । उपायेनापयातास्ते घटोत्कचभयार्द्दिताः ।
कौरवेषु निवृत्तेषु पाण्डवा जितकाशिनः । सिंहनादमकुर्व्वन्त शङ्खवेणुस्वनैः सह ।
एवं तदभवत् युद्धं दिवसं भरतर्षभ । पाण्डवानां कुरूणाञ्च पुरस्कृत्य घटोत्कचं ।
कौरवास्तु ततस्तूर्णं प्रययुः शिविरं स्वकं । व्रीडान्विता निशाकाले पाण्डवेयैः पराजिताः । २८९०
शरविक्षतगात्रास्तु पाण्डुपुत्रा महारथाः । युद्धे सुमनसो राजन् जग्मुः स्वशिविरं प्रति ।
पुरस्कृत्य महाराज भीमसेनघटोत्कचौ । पूजयन्तो महाराज मुदा परमया युताः ।
नदन्तो विविधान्नादान् तूर्य्यस्वनविभूषितान् । सिंहनादांश्च कुर्व्वाणा विमिश्राञ् शङ्खनिःस्वनैः ।
विनदन्तो महात्मानः कम्पयन्तश्च मेदिनीं । घट्टयन्तश्च मर्म्माणि तव पुत्रस्य मारिष ।
प्रयाताः शिविरायैव निशाकाले परन्तपाः । दुर्य्योधनस्तु नृपतिर्दीनो भ्रातृवधेन च । २८९५
मुहूर्त्तं चिन्तयामास वाष्पशोकसमाकुलः । ततः कृत्वा विधिं सर्व्वं शिविरस्य यथाविधि ।
प्रदध्यौ शोकसन्तप्तो भ्रातृव्यसनकर्षितः ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि चतुर्थयुद्धदिवसावहारे चतुःषष्टोऽध्यायः ॥ ६४ ॥

॥ धृतराष्ट्र उवाच ॥ भयं मे सुमहत् जातं विस्मयश्चैव सञ्जय । श्रुत्वा पाण्डुकुमाराणां कर्म्म देवैः सुदुष्करं ।
पुत्राणाञ्च पराभावं श्रुत्वा सञ्जय सर्व्वशः । चिन्ता मे महती भूता भविष्यति कथन्त्विति ।
ध्रुवं विदुरवाक्यानि धक्ष्यन्ति हृदयं मम । तथा हि दृश्यते सर्व्वं दैवयोगेन सञ्जय । २९००
तत्र भीष्ममुखान् शूरानस्त्रज्ञान् योधसत्तमान् । पाण्डवानामनीकेषु योधयन्ति प्रहारिणः ।
किन्तेऽतपन् महात्मानः पाण्डुपुत्रा महाबलाः । किन्ते दत्तवरास्तात किं वा ज्ञानं विदन्ति ते ।
येन क्षयं न गच्छन्ति दिवि तारागणा इव । पुनः पुनर्न मृष्यामि हतं सैन्यञ्च पाण्डवैः ।
मय्येव दण्डः पतति दैवात्परमदारुणः । यथावध्याः पाण्डुसुतास्तथावध्याश्च मे सुताः ।
एतन्मे सर्व्वमाचक्ष्व यथातत्त्वेन सञ्जय । न हि पारं प्रपश्यामि दुःखस्यास्य परन्तप । २९०५
समुद्रस्येव महतो भुजाभ्यां प्रतरन्नरः । पुत्राणां व्यसनं मन्ये ध्रुवं प्राप्तं सुदारुणं ।
घातयिष्यति मे पुत्रान् सर्व्वान् भीमो न संशयः । न हि पश्यामि तं वीरं यो मे रक्षेत् सुतान् रणे ।
ध्रुवं विनाशः समरे पुत्राणां मम सञ्जय । तस्मान्मे कारणं सूत युक्तञ्चैव विशेषतः ।
पृच्छतो वै यथातत्त्वं सर्व्वमाख्यातुमर्हसि । दुर्य्योधनस्तु यच्चक्रे दृष्ट्वा स्वान्विमुखान् रणे ।
भीष्मद्रोणौ कृपश्चैव सौबलेयो जयद्रथः । द्रौणिर्व्वाऽपि महेष्वासो विकर्णो वा महाबलः । २९१०
निश्चयो वाऽपि कस्तेषां तदा ह्यासीन्महात्मनां । विमुखेषु महाप्राज्ञ मम पुत्रेषु सञ्जय ।
॥ सञ्जय उवाच ॥ शृणु राजन्नवहितः श्रुत्वा चैवावधारय । नैव मन्त्रकृतं किञ्चिन्नैव मायां तथाविधां ।
न वै बिभीषिकां काञ्चिद्राजन् कुर्व्वन्ति पाण्डवाः । युध्यन्ति ते यथान्यायं शक्तिमन्तश्च संयुगे ।
धर्म्मेण सर्व्वकार्य्याणि जीवितादीनि भारत । आरभन्ते सदा पार्थाः प्रार्थयाना महद्यशः ।

ते न युद्धान्निवर्त्तन्ते धर्म्मोपेता महाबलाः । श्रिया परमया युक्ता यतो धर्म्मस्ततो जयः । २९१५
तेनावध्या रणे पार्था जययुक्ताश्च पार्थिव । तव पुत्रा दुरात्मानः पापेष्वभिरताः सदा ।
निष्ठुरा हीनकर्म्माणस्तेन हीयन्ति संयुगे । सुबहूनि नृशंसानि पुत्रैस्तव जनेश्वर ।
निकृतानीह पाण्डूनां नीचैरिव यथा नरैः । सर्व्वञ्च तदनादृत्य पुत्राणां तव किल्बिषं ।
सापह्नवास्तथैवासन् पाण्डवाः पाण्डुपूर्व्वज । न चैतान् बहु मन्यन्ते पुत्रास्तव विशाम्पते ।
तस्य पापस्य सततं क्रियमाणस्य कर्म्मणः । सम्प्राप्तन्तु महद्घोरं फलं किम्पाकसन्निभं । २९२०
तत्त्वं भुङ्क्ष्व महाराज सपुत्रः ससुहृज्जनः । नावबुध्यसि यद्राजन् वार्य्यमाणः सुहृज्जनैः ।
विदुरेणाथ भीष्मेण द्रोणेन च महात्मना । तथा मया चाप्यसकृत् वार्य्यमाणो न बुध्यसे ।
वाक्यं हितञ्च पथ्यञ्च मन्दः पथ्यमिवौषधं । पुत्राणां मतमास्थाय जितान् पश्यसि पाण्डवान् ।
शृणु भूयो यथातत्त्वं यन्मां त्वमनुपृच्छसि । कारणं भरतश्रेष्ठ पाण्डवानां जयं प्रति ।
तत्तेऽहं कथयिष्यामि यथाश्रुतमरिन्दम । दुर्य्योधनेन संपृष्ट एतमर्थं पितामहः । २९२५
दृष्ट्वा भ्रातॄन् रणे सर्व्वान् विजितान् सुमहारथान् । शोकसंमूढहृदयो निशाकाले स्म कौरव ।
पितामहं महाप्राज्ञं विनयेनोपगम्य ह । यदब्रवीत् सुतस्ते च तच्छृणु जनेश्वर ।
॥ दुर्य्योधन उवाच ॥ द्रोणश्च त्वञ्च शल्यश्च कृपो द्रौणिस्तथैव च । कृतवर्म्मा च हार्द्दिक्यः काम्बोजश्च सुदक्षिणः ।
भूरिश्रवा विकर्णश्च भगदत्तश्च वीर्य्यवान् । महारथाः समाख्याताः कुलपुत्रास्तनुत्यजः ।
त्रयाणामपि लोकानां पर्य्याप्ता इति मे मतिः । पाण्डवानां समस्ताश्च न तिष्ठन्ति पराक्रमे । २९३०
तत्र मे संशयो जातस्तन्ममाचक्ष्व पृच्छतः । यं समाश्रित्य कौन्तेया जयन्त्यस्मान् पदे पदे ।
॥ भीष्म उवाच ॥ शृणु राजन् वचो मह्यं यत्त्वां वक्ष्यामि कौरव । बहुशश्च ममोक्तोऽसि न च मे तत्त्वया कृतं ।
क्रियतां पाण्डवैः सार्द्धं शमो भरतसत्तम । एतत् क्षममहं मन्ये पृथिव्यास्तव वा विभो ।
भुङ्क्ष्वेमां पृथिवीं राजन् भ्रातृभिः सहितः सुखी । सुहृदस्तर्पयन् सर्व्वान् नन्दयंश्चापि बान्धवान् ।
न च मे क्रोशतस्तात श्रुतवानसि वै पुरा । तदिदं समनुप्राप्तं यत् पाण्डूनवमन्यसे । २९३५
यश्च हेतुरवध्यत्वे तेषामक्लिष्टकर्म्मणां । तं शृणुष्व महाराज मम कथयतः प्रभो ।
नास्ति लोकेषु तद्भूतं भविता नो भविष्यति । यो जयेत् पाण्डवान् सर्व्वान् पालितान् शार्ङ्गधन्वना ।
यत्तु मे कथितं तात मुनिभिर्भावितात्मभिः । पुराकल्पेतं धर्म्मज्ञ तच्छृणुष्व यथातथं ।
पुरा किल सुराः सर्व्वे ऋषयश्च समागताः । पितामहमुपासेदुः पर्व्वते गन्धमादने ।
तेषां मध्ये सुखासीनः प्रजापतिरपश्यत । विमानं प्रज्वलद्भासा स्थितं प्रवरमम्बरे । २९४०
ध्यानेनावेद्य तद्ब्रह्मा कृत्वा च नियतोऽञ्जलिं । नमश्चकार हृष्टात्मा पुरुषं परमेश्वरं ।
ऋषयस्त्वथ देवाश्च दृष्ट्वाकाशे समुत्थितं । स्थिताः प्राञ्जलयः सर्व्वे पश्यन्तो महदद्भुतं ।
यथावच्च तमभ्यर्च्य ब्रह्मा ब्रह्मविदां वरः । जगाद जगतः स्रष्टा परं परमधर्म्मवित् ।
विश्वावसुर्व्विश्वमूर्त्तिर्व्विश्वेशो विष्वक्सेनो विश्वकर्म्मा वशी च । विश्वेश्वरो वासुदेवोऽसि तस्माद्योगात्मानं दैवतं त्वामुपैमि ।

जय विश्व महादेव जय लोकहिते रत। जय योगीश्वर विभो जय योगपरावर। २९४५
पद्मनाभ विशालाक्ष जय लोकेश्वरेश्वर। भूतभव्यभवन्नाथ जय सौम्यात्मजात्मज।
असंख्येयगुणाधार जय सर्व्वपरायण। नारायण सुदुष्पार जय शार्ङ्गधनुर्धर।
जय सर्व्वगुणोपेत विश्वमूर्त्ते निरामय। विश्वेश्वर महाबाहो जय लोकार्थतत्पर।
महोरग वराहाद्य हरिकेश विभो जय। हरिवास दिशामीश विश्वावासामिताव्यय।
व्यक्ताव्यक्तामितस्थान नियतेन्द्रिय सत्क्रिय। असंख्येयात्मभावज्ञ जय गम्भीर कामद। २९५०
अनन्तविदितब्रह्म नित्यं भूतविभावन। कृतकार्य्य कृतप्रज्ञ धर्म्मज्ञ विजयावह।
गुह्यात्मन् सर्व्वयोगात्मन् स्फुटसंभूतसम्भव। भूतात्मतत्त्वलोकेश जय भूतविभावन।
आत्मयोने महाभाग कल्पसंक्षेपतत्पर। उद्भावनमनोभाव जय ब्रह्मजनप्रिय।
निसर्गसर्गनिरत कामेश परमेश्वर। अमृतोद्भव सद्भाव युगाग्ने विजयप्रद।
प्रजापतिपते देव पद्मनाभ महाबल। आत्मभूत महाभूत कर्म्मात्मन् जय सर्व्वद। २९५५
पादौ तव धरा देवी दिशो बाहुर्दिवः शिरः। मूर्त्तिस्तेऽहं सुराः कायश्चन्द्रादित्यौ च चक्षुषी।
बलं तपश्च सत्यञ्च धर्म्मकर्म्मात्मजं तव। तेजोऽग्निः पवनः श्वास आपस्ते स्वेदसम्भवाः।
अश्विनौ श्रवणौ नित्यौ देवी जिह्वा सरस्वती। वेदाः संस्कारनिष्ठा हि त्वयेदं जगदाश्रितं।
सङ्ख्यां न परिमाणं ते न तेजो न पराक्रमं। न बलं योगयोगीश जानीमस्ते न सम्भवं।
त्वद्भक्तिनिरता देव नियमैस्त्वां समाश्रिताः। अर्च्चयामः सदा विष्णो परमेशं महेश्वरं। २९६०
ऋषयो देवगन्धर्व्वा यक्षराक्षसपन्नगाः। पिशाचा मानुषाश्चैव मृगपक्षिसरीसृपाः।
एवमादि मया सृष्टं पृथिव्यां त्वत्प्रसादजं। पद्मनाभ विशालाक्ष कृष्ण दुःखप्रणाशन।
त्वं गतिः सर्व्वभूतानां त्वं नेता त्वं जगन्मुखं। त्वत्प्रसादेन देवेश सुखिनो विबुधाः सदा।
पृथिवी निर्भया देव त्वत्प्रसादात् सदाऽभवत्। तस्माद्भव विशालाक्ष यदुवंशविवर्द्धनः।
धर्म्मसंस्थापनार्थाय दैतेयानां वधाय च। जगतो धारणार्थाय विज्ञाप्यं कुरु मे विभो। २९६५
यत्तत् परमकं गुह्यं त्वत्प्रसादादिदं प्रभो। वासुदेव तदेतत्ते मयोद्गीतं यथातथं।
सृष्ट्वा सङ्कर्षणं देवं स्वयमात्मानमात्मना। कृष्ण त्वमात्मनः स्राक्षीः प्रद्युम्नं चात्मसम्भवं।
प्रद्युम्नाच्चानिरुद्धं तु यं विदुर्व्विष्णुमव्ययं। अनिरुद्धोऽसृजन्मां वै ब्रह्माणं लोकधारिणं।
वासुदेवमयः सोऽहं त्वयैवास्मि विनिर्म्मितः। विसृज्य भागशात्मानं व्रज मानुषतां विभो।
तत्रासुरवधं कृत्वा सर्व्वलोकसुखाय वै। धर्म्मं स्थाप्य यशः प्राप्य योगं प्राप्स्यसि तत्त्वतः। २९७०
त्वां हि ब्रह्मर्षयो लोके देवाश्चामितविक्रम। तैस्तैः स्वनामभिर्भक्ता गायन्ति परमाद्भुतं।
स्थिताश्च सर्व्वे त्वयि भूतसङ्घाः कृत्वाश्रयं त्वां वरदं सुबाहो। अनादिमध्यान्तमपारयोगं लोकस्य सेतुं प्रवदन्ति विप्राः।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि विश्वोपाख्याने पञ्चषष्टोऽध्यायः॥ ६५ ॥

॥ भीष्म उवाच॥ ततः स भगवान् देवो लोकानामीश्वरेश्वरः। ब्रह्माणं प्रत्युवाचेदं स्निग्धगम्भीरया गिरा।

विदितं तात योगात्मे सर्व्वमेव तवेप्सितं । तथा तद्भवितेत्युक्त्वा तत्रैवान्तरधीयत ।
ततो देवर्षिगन्धर्व्वा विस्मयं परमं गताः । कौतूहलपराः सर्व्वे पितामहमथाब्रुवन् । २९७५
को न्वयं यो भगवता प्रणम्य विनयाद्विभो । वाग्भिः स्तुतो वरिष्ठाभिः श्रोतुमिच्छामहे वयं ।
एवमुक्तस्तु भगवान् प्रत्युवाच पितामहः । देवब्रह्मर्षिगन्धर्व्वान् सर्व्वान् मधुरया गिरा ।
यत्तत्परं भविष्यच्च भविता यच्च यत्परं । भूतात्मा यः प्रभुश्चैव ब्रह्म यच्च परं पदं ।
तेनास्मि कृतसंवादः प्रसन्नेन सुरर्षभाः । जगतोऽनुग्रहार्थाय याचितो मे जगत्पतिः ।
मानुषं लोकमातिष्ठ वासुदेव इति श्रुतः । असुराणां वधार्थाय सम्भवस्व महीतले । २९८०
सङ्ग्रामे निहता ये ते दैत्यदानवराक्षसाः । त इमे नृषु सम्भूता घोररूपा महाबलाः ।
तेषां वधार्थं भगवान् नरेण सहितो वशी । मानुषीं योनिमास्थाय चरिष्यसि महीतले ।
नरनारायणौ तौ तु पुराणावृषिसत्तमौ । अजेयौ हि रणे यौ तौ समेतैरमरैरपि ।
सहितौ मानुषे लोके सम्भूतावमितद्युती । मूढास्ते तौ न जानन्ति नरनारायणावृषी ।
यस्याहमात्मजो ब्रह्मा सर्व्वस्य जगतःपतिः । वासुदेवोऽर्च्चनीयो वः सर्व्वलोकमहेश्वरः । २९८५
तथा मनुष्योऽयमिति कदाचित् सुरसत्तमाः । नावज्ञेयो महावीर्य्यः शङ्खचक्रगदाधरः ।
एतत्परमकं गुह्यमेतत्परमकं परं । एतत् परमकं ब्रह्म एतत् परमकं यशः ।
एतदक्षरमव्यक्तमेतच्छाश्वतमेव च । एतत् पुरुषसंज्ञो वै गीयते ज्ञायते न च ।
एतत्परमकं तेज एतत् परमकं सुखं । एतत् परमकं सत्यं कीर्त्तितं विश्वकर्म्मणा ।
तस्मात् सुरासुरैः सर्व्वैः सेन्द्रैश्चामितविक्रमः । नावज्ञेयो वासुदेवो मानुषोऽयमिति प्रभो । २९९०
यश्च मानुषमात्रोऽयमिति ब्रूयात् स मन्दधीः । हृषीकेशमवज्ञानात्तमाहुः पुरुषाधमं ।
तं योगिनं महात्मानं प्रविष्टं मानुषीं तनुं । योऽवमन्येद्वासुदेवं तमाहुस्तामसं जनाः ।
देवं चराचरात्मानं श्रीवत्साङ्कं सुवर्चसं । पद्मनाभं न जानाति तमाहुस्तामसं जनाः ।
किरीटकौस्तुभधरं मित्राणामभयङ्करं । अवजानन् महात्मानं घोरे तमसि मज्जति ।
एवं विदित्वा तत्त्वार्थं लोकानामीश्वरेश्वरः । वासुदेवो नमस्कार्य्यः सर्व्वलोकैः सुरोत्तमाः । २९९५
॥ भीष्म उवाच ॥ एवमुक्त्वा स भगवान् सदेवर्षिगणान् पुरा । विसृज्य सर्व्वभूतानि जगाम भवनं स्वकं ।
ततो देवाः सगन्धर्व्वा मुनयोऽप्सरसोऽपि च । कथां तां ब्रह्मणा गीतां श्रुत्वा प्रीता दिवं ययुः ।
एवं श्रुतं मया तात ऋषीणां भावितात्मनां । वासुदेवं कथयतां समवाये पुरातनं ।
जामदग्न्यस्य रामस्य मार्कण्डेयस्य धीमतः । व्यासनारदयोश्चापि श्रुतं श्रुतविशारद ।
एतदर्थञ्च विज्ञाय श्रुत्वा च प्रभुमव्ययं । वासुदेवं महात्मानं लोकानामीश्वरं प्रभुं । ३०००
यस्य स्यादात्मजो ब्रह्मा सर्व्वस्य जगतः पिता । कथं न वासुदेवोऽयमर्च्च्यश्चेज्यश्च मानवैः ।
वारितोऽसि पुरा तात मुनिभिर्भावितात्मभिः । मा गच्छ संयुगं तेन वासुदेवेन धन्विना ।
पाण्डवैः सार्द्धमिति यत्तत्त्वं मोहान्न बुध्यसे । मन्ये त्वां राक्षसं क्रूरं तथा चासि तमोवृतः ।

तस्मात् द्विषसि गोविन्दं पाण्डवञ्च धनञ्जयं । नरनारायणौ देवौ कोऽन्यो द्विष्याद्धि मानवः ।
तस्माद्ब्रवीमि ते राजन्नेषोऽवै शाश्वतोऽव्ययः । सर्व्वलोकमयो नित्यः शास्ता धाता धरो ध्रुवः । १००५
लोकान् धारयते यस्त्रींश्चराचरगुरुः प्रभुः । योद्धा जयश्च जेता च सर्व्वप्रकृतिरीश्वरः ।
राजन् सत्त्वमयो ह्येष तमोरजविवर्ज्जितः । यतः कृष्णस्ततो धर्म्मो यतो धर्म्मस्ततो जयः ।
तस्य माहात्म्ययोगेन योगेनात्ममयेन च । धृताः पाण्डुसुता राजन् जयश्चैषां भविष्यति ।
श्रेयोयुक्तां सदा बुद्धिं पाण्डवानां दधाति यः । बलञ्चापि रणे नित्यं भयेभ्यश्चैव रक्षति ।
स एष शाश्वतो देवः सर्व्वभूतमयः शिवः । वासुदेव इतिख्यातो यन्मां त्वं परिपृच्छसि । १०१०
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः । सेव्यतेऽभ्यर्च्यते चैव नित्ययुक्तैः स्वकर्म्मभिः ।
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च । सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः ।
स एष सर्व्वं सुरमर्त्यलोकं समुद्रकक्षान्तरिताः पुरीश्च । युगे युगे मानुषञ्चैव वासं पुनः पुनः सृजते विश्वकर्म्मा ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि विश्वोपाख्याने षट्षष्टोऽध्यायः ॥ ६६ ॥
॥ दुर्य्योधन उवाच ॥ वासुदेवो महद्भूतं सर्व्वलोकेषु कथ्यते । तस्यागमं प्रतिष्ठाञ्च ज्ञातुमिच्छे पितामह ।
॥ भीष्म उवाच ॥ वासुदेवो महद्भूतं सर्व्वदैवतदैवतं । न परं पुण्डरीकाक्षाद्दृश्यते भरतर्षभ । १०१५
मार्कण्डेयश्च गोविन्दं कथयत्यद्भुतं महत् । सर्व्वभूतानि भूतात्मा महात्मा पुरुषोत्तमः ।
आपो वायुश्च तेजश्च त्रयमेतदकल्पयत् । स सृष्ट्वा पृथिवीं देवः सर्व्वलोकेश्वरः प्रभुः ।
अप्सु वै शयनं चक्रे महात्मा पुरुषोत्तमः । सर्व्वतेजोमयो देवो योगात् सुष्वाप तत्र ह ।
मुखतः सोऽग्निमसृजत् प्राणाद्वायुमथापि च । सरस्वतीं च वेदांश्च मनसः ससृजेऽच्युतः ।
एष लोकान् ससर्जादौ देवांश्चर्षिगणैः सह । निधनं चैव मृत्युञ्च प्रजानां प्रभवाप्ययौ । १०२०
एष धर्म्मश्च धर्म्मज्ञो वरदः सर्व्वकामदः । एष कर्त्ता च कार्य्यं च स वै देवः स्वयं प्रभुः ।
भूतभव्यभविष्यञ्च पूर्व्वमेतदकल्पयत् । स्रष्टारं जगतश्चापि महात्मा प्रभुरव्ययः ।
अग्रजं सर्व्वभूतानां सङ्कर्षणमकल्पयत् । शेषञ्चाकल्पयद्देवमनन्तमिति यं विदुः ।
यो धारयति भूतानि धरां चैव सपर्व्वतां । ध्यानयोगेन विप्रास्तं वदन्ति महौजसं ।
कर्णस्रोतोद्भवञ्चापि मधुं नाम महासुरं । तमुग्रमुग्रकर्म्माणमुग्रां बुद्धिं समास्थितं । १०२५
ब्रह्मणोऽपचितिं कुर्व्वन् जघान पुरुषोत्तमः । तस्य तात वधादेव देवदानवमानवाः ।
मधुसूदनमित्याहुः ऋषयश्च जनार्द्दनं । वराहश्चैव सिंहश्च त्रिविक्रमगतिः प्रभुः ।
एष माता पिता चैव सर्व्वेषां प्राणिनां हरिः । परं हि पुण्डरीकाक्षान्न भूतं न भविष्यति ।
मुखतोऽसृजद्विप्रान् बाहुभ्यां क्षत्रियांस्तथा । वैश्यांश्चाप्यूरुतो राजन् शूद्रान् पद्भ्यां तथैव च ।
तपसा नियतो देवन्निधानं सर्व्वदेहिनां । ब्रह्मभूतममावस्यां पौर्णमास्यां तथैव च । १०३०
योगभूतं परिचरन् केशवं महदाप्नुयात् । केशवः परमन्तेजः सर्व्वलोकपितामहः ।
एतमाहुर्हृषीकेशं मुनयो वै नराधिप । एवमेनं विजानीह आचार्य्यं पितरं गुरुं ।

कृष्णो यस्य प्रसीदेत लोकास्तेनाव्यया जिताः । यश्चैवैनं भयस्थाने केशवं शरणं व्रजेत् ।
सदा नरः पठंश्चेदं स्वस्तिमान्स भवेत्सुखी । ये च कृष्णं प्रपद्यन्ते ते न मुह्यन्ति मानवाः ।
भये महति यो मग्नान्पाति नित्यं जनार्द्दनः । एतद्युधिष्ठिरो ज्ञात्वा याथातथ्येन भारत । २०३५
सर्व्वात्मना महादेवं केशवं जगदीश्वरं । प्रपन्नः शरणं राजन्योगीशं पृथिवीश्वर ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि विश्वोपाख्याने सप्तषष्टोऽध्यायः ॥ ६७ ॥
॥ भीष्म उवाच ॥ शृणु चेदं महाराज ब्रह्मप्रोक्तं स्तवं मम । ब्रह्मर्षिभिश्च देवैश्च यः पुरा कथितो भुवि ।
साध्यानामपि देवानां देवदेवेश्वरः प्रभुः । लोकभावनभावज्ञ इति त्वां नारदोऽब्रवीत् ।
भूतभव्यं भविष्यच्च मार्कण्डेयोऽभ्युवाच ह । यज्ञानां चैव यज्ञं त्वाहुस्तपश्च तपतस्तथा ।
देवदेवोऽसि भूतानामिति द्वैपायनोऽब्रवीत् । पूर्व्वे प्रजानिसर्गेषु दक्षमाहुः प्रजापतिं । २०४०
स्रष्टारं सर्व्वभूतानामङ्गिरास्त्वां ततोऽब्रवीत् । अव्यक्तं ते शरीरोत्थं व्यक्तन्ते मनसि स्थितं ।
देवा वाक्संभवाश्चेति देवलस्त्वां तथाऽब्रवीत् । शिरसा ते दिवं व्याप्तं बाहुभ्यां पृथिवी धृता ।
जठरे च त्रयो लोकाः पुरुषोऽसि सनातनः । एवन्त्वामभिजानन्ति तपसा भाविता नराः ।
आत्मदर्शनतृप्तानामृषीणां चासि सत्तमः । राजर्षीणामुदाराणामाहवेष्वनिवर्त्तिनां ।
सर्व्वधर्म्मप्रधानानां त्वङ्गतिर्मधुसूदन । इति नित्यं योगविद्भिर्भगवान् पुरुषोत्तमः । २०४५
सनत्कुमार प्रमुखैः स्तूयतेऽभ्यर्च्यते हरिः । एष ते विस्तरस्तात संक्षेपश्च प्रकीर्त्तितः ।
केशवस्य यथातत्त्वं सुप्रीतो भव केशवे ।
॥ सञ्जय उवाच ॥ पुण्यं श्रुत्वैतदाख्यानं महाराज सुतस्तव । केशवं बहुमेने स पाण्डवांश्च महारथान् ।
तमब्रवीन्महाराज भीष्मः शान्तनवः पुनः । माहात्म्यन्ते श्रुतं राजन् केशवस्य महात्मनः ।
नरस्य च यथातत्त्वं यन्मां त्वं परिपृच्छसि । यदर्थं नृषु सम्भूतौ नरनारायणावुभौ । २०५०
अजेयौ च यथा वीरौ संयुगेष्वपराजितौ । यथा च पाण्डवा राजन्नवध्या युधि कस्यचित् ।
प्रीतिमान् हि दृढं कृष्णः पाण्डवेषु यशस्विषु । तस्माद्ब्रवीमि राजेन्द्र शमो भवतु पाण्डवैः ।
पृथिवीं भुङ्क्ष्व सहितो भ्रातृभिर्बलिभिर्व्वशी । नरनारायणौ देवाववज्ञाय विनङ्क्ष्यसि ।
एवमुक्त्वा तव पिता तूष्णीमासीद्विशाम्पते । व्यसर्ज्जयच्च राजानं शिविरञ्च विवेश ह ।
राजा च शिविरं प्रायात् प्रणिपत्य महात्मने । शिश्ये च शयने शुभ्रे तां रात्रिं भरतर्षभ । २०५५
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि विश्वोपाख्याने अष्टषष्टोऽध्यायः ॥ ६८ ॥
॥ सञ्जय उवाच ॥ व्युषितायाञ्च शर्व्वर्य्यामुदिते च दिवाकरे । उभे सेने महाराज युद्धायैव समीयतुः ।
अभ्यधावन्त सङ्क्रुद्धाः परस्परजिगीषवः । ते सर्व्वे सहिता युद्धे समालोक्य परस्परं ।
पाण्डवा धार्त्तराष्ट्राश्च राजन् दुर्म्मन्त्रिते तव । व्यूहौ च व्यूह्य संरब्धाः सम्प्रहृष्टाः प्रहारिणः ।
अरक्षन्मकरं व्यूहं भीष्मो राजन् समन्ततः । तथैव पाण्डवा राजन्नरक्षन् व्यूहमात्मनः ।
स निर्ययौ महाराज पिता देवव्रतस्तव । महता रथवंशेन संवृतो रथिनां वरः । २०६०

इतरे चाप्ययुः सर्व्वे यथास्थानमवस्थिताः । रथिनः पत्तयश्चैव दन्तिनः सादिनस्तथा ।
तान् दृष्ट्वा प्रोद्यतान् सङ्ख्ये पाण्डवाश्च यशस्विनः । श्येनेन व्यूहराजेन तेनाजेयेन संयुगे ।
अशोभत मुखे तस्य भीमसेनो महाबलः । नेत्रे शिखण्डी दुर्द्धर्षो धृष्टद्युम्नश्च पार्षतः ।
शीर्षे चास्याभवद्वीरः सात्यकिः सत्यविक्रमः । विधुन्वन् गाण्डिवं पार्थो ग्रीवायामभवत्तदा ।
अक्षौहिण्या समस्तया वामपक्षोऽभवत्तदा । महात्मा द्रुपदः श्रीमान् सहपुत्रेण संयुगे । ३०६५
दक्षिणश्चाभवत् पक्षः कैकेयोऽक्षौहिणीपतिः । पृष्ठतो द्रौपदेयाश्च सौभद्रश्चापि वीर्य्यवान् ।
पृष्ठे समभवच्छ्रीमान् स्वयं राजा युधिष्ठिरः । भ्रातृभ्यां सहितो वीरो यमाभ्यां चारुविक्रमः ।
प्रविश्य तु रणे भीमो मकरं मुखतस्तथा । भीष्ममासाद्य सङ्ग्रामे छादयामास सायकैः ।
ततो भीष्मो महास्त्राणि पातयामास वीर्य्यवान् । मोहयन् पाण्डुपुत्राणां व्यूढं सैन्यं महाहवे ।
संमुह्यति तदा सैन्ये त्वरमाणो धनञ्जयः । भीष्मं शरसहस्रेण विव्याध रणमूर्द्धनि । ३०७०
प्रतिसन्धाय चास्त्राणि भीष्ममुक्तानि संयुगे । स्वेनानीकेन हृष्टेन युद्धाय समवस्थितः ।
ततो दुर्य्योधनो राजा भारद्वाजमभाषत । पूर्व्वं दृष्ट्वा वधं घोरं बलस्य बलिनां वरः ।
भ्रातॄणाञ्च वधं सङ्ख्ये त्वरमाणो महारथः । आचार्य्य सततं त्वं हि हितकामो ममानघ ।
वयं हि त्वां समाश्रित्य भीष्मं चैव पितामहं । देवानपि रणे जेतुं प्रार्थयामो न संशयः ।
किमु पाण्डुसुतान् युद्धे हीनवीर्य्यपराक्रमान् । स तथा कुरु भद्रन्ते यथा वध्यन्ति पाण्डवाः । ३०७५
एवमुक्तस्ततो द्रोणस्तव पुत्रेण संयुगे । अभिनत् पाण्डवानीकं प्रेक्षमाणस्य सात्यकेः ।
सात्यकिश्च ततो द्रोणं वारयामास भारत । ततः प्रववृते युद्धं घोररूपं भयानकं ।
शैनेयन्तु रणे क्रुद्धो भारद्वाजः प्रतापवान् । अविध्यद्दशभिर्ब्बाणैर्जत्रुदेशे स्मयन्निव ।
भीमसेनस्ततः क्रुद्धो भारद्वाजमविध्यत । स रक्षन् सात्यकिं राजन् द्रोणाच्छस्त्रभृतां वरात् ।
ततो द्रोणश्च भीष्मश्च तथा शल्यश्च मारिष । भीमसेनं रणे क्रुद्धाश्छादयाञ्चक्रिरे शरैः । ३०८०
तथाऽभिमन्युः संक्रुद्धो द्रौपदेयाश्च मारिष । विविधुर्निशितैर्ब्बाणैः सर्व्वांस्तानुद्यतायुधान् ।
भीष्मद्रोणौ तु संक्रुद्धावापतन्तौ महाबलौ । प्रत्युद्ययौ शिखण्डी च महेष्वासो महाहवे ।
प्रगृह्य बलवद्वीरो धनुर्ज्जलदनिःस्वनं । अभ्यवर्षच्छरैस्तूर्णं छादयानो दिवाकरं ।
शिखण्डिनं तथासाद्य भारतानां पितामहः । अवर्ज्जयत सङ्ग्रामे स्त्रीत्वं तस्यानुसंस्मरन् ।
ततो द्रोणो महाराज अभ्यद्रवत संयुगे । रक्षमाणस्तदा भीष्मं तव पुत्रेण चोदितः । ३०८५
शिखण्डी तु समासाद्य द्रोणं शस्त्रभृतां वरं । अवर्ज्जयत सन्त्रस्तो युगान्ताग्निमिवोल्बणं ।
ततो बलेन महता पुत्रस्तव विशाम्पते । जुगोप भीष्ममासाद्य प्रार्थयानो महद्यशः ।
तथैव पाण्डवा राजन् पुरस्कृत्य धनञ्जयं । भीष्ममेवाभ्यवर्त्तन्त जये कृत्वा दृढां मतिं ।
तद्युद्धमभवद्घोरं देवानां दानवैरिव । जयमाकांक्षतां सङ्ख्ये यशश्च महदद्भुतं ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि पञ्चमदिवसयुद्धारम्भे एकोनसप्ततोऽध्यायः ॥ ६९ ॥

॥ सञ्जय उवाच ॥ अकरोत्तुमुलं युद्धं भीष्मः शान्तनवस्तदा। भीमसेनभयादिच्छन् पुत्त्रांस्तारयितुं तव। ३०९०
पूर्व्वाह्णे तु महारौद्रं राज्ञां युद्धमवर्त्तत। कुरूणां पाण्डवानाञ्च मुख्यशूरविनाशनं।
तस्मिन्नाकुलसङ्ग्रामे वर्त्तमाने महाभये। अभवत्तुमुलः शब्दः संस्पृशन् गगनं महान्।
नदद्भिश्च महानागैर्हेषमाणैश्च वाजिभिः। भेरीशङ्खनिनादैश्च तुमुलं समपद्यत।
युयुत्सवस्ते विक्रान्ता विजयाय महाबलाः। अन्योऽन्यमभिगर्ज्जन्तो गोष्ठेषु वृषभा इव।
शिरसां पात्यमानानां समरे निशितैः शरैः। अश्मवृष्टिरिवाकाशे बभूव भरतर्षभ। ३०९५
कुण्डलोष्णीषधारीणि जातरूपोज्ज्वलानि च। पतितानि स्म दृश्यन्ते शिरांसि भरतर्षभ।
विशिखोन्मथितैर्गात्रैः शिरोभिश्च सकुण्डलैः। सहस्ताभरणैश्चान्यैरभवच्छादिता मही।
कवचोपहितैर्गात्रैर्भुजैश्च समलङ्कृतैः। मुखैश्च चन्द्रसङ्काशैरक्तान्तनयनैस्तथा।
गजवाजिमनुष्याणां सर्व्वगात्रैश्च भूपते। आसीत् सर्व्वा समाकीर्णा मुहूर्त्तेन वसुन्धरा।
रजोमेघैश्च तुमुलैः शस्त्रविद्युत्प्रकाशिभिः। आयुधानाञ्च निर्घोषः स्तनयित्नुसमोऽभवत्। ३१००
स संप्रहारस्तुमुलः कटुकः शोणितोदकः। प्रावर्त्तत कुरूणाञ्च पाण्डवानाञ्च भारत।
तस्मिन् महाभये घोरे तुमुले लोमहर्षणे। ववर्षुः शरजालानि क्षत्त्रिया युद्धदुर्म्मदाः।
क्रोशन्ति कुञ्जराश्चात्र शरवर्षप्रतापिताः। तावकानां परेषाञ्च पर्य्यधावन् समुद्यताः।
संरब्धानां च वीराणां धीराणाममितौजसां। धनुषां तलघोषेण न प्राज्ञायत किञ्चन।
उत्थितेषु कबन्धेषु सर्व्वतः शोणितोदके। अपरे पर्य्यधावन्त नृपा रिपुवधोद्यताः। ३१०५
शरशक्तिगदाभिश्च खड्गैश्चामिततेजसः। निजघ्नुः समरेऽन्योन्यं शूराः परिघबाहवः।
बभ्रमुः कुञ्जराश्चात्र शरैर्विद्धा निरङ्कुशाः। अश्वाश्च पर्य्यधावन्त हतारोहा दिशो दश।
उत्पत्य निपतन्त्यन्ये शरघातप्रपीडिताः। तावकानां परेषाञ्च पर्य्यधावन् समन्ततः।
बाहूनामुत्तमाङ्गानां कार्म्मुकानां तथैव च। गदानां परिघाणाञ्च हस्तानाञ्चोरुभिः सह।
पादानां भूषणानाञ्च केयूराणाञ्च सर्व्वशः। राशयश्चात्र दृश्यन्ते भीमभीष्मसमागमे। ३११०
अश्वानां धावमानानां कुञ्जराणां निवर्त्ततां। सङ्घाताः स्म प्रदृश्यन्ते तत्र तत्र विशाम्पते।
गदाभिरसिभिः प्रासैर्बाणैश्चानतपर्व्वभिः। जघ्नुः परस्परं तत्र क्षत्त्रियाः कालचोदिताः।
अपरे बाहुभिर्वीरा नियुद्धकुशला युधि। बहुधा समसज्जन्त आयसैः परिघैरिव।
मुष्टिभिर्जानुभिश्चैव तलैः कीलैश्च विशाम्पते। अन्योऽन्यं जघ्निरे वीरास्तावकाः पाण्डवैः सह।
पतितैः पात्यमानैश्च विचेष्टद्भिश्च भूतले। घोरमायोधनं जज्ञे तत्र तत्र नरेश्वर। ३११५
विरथा रथिनश्चात्र निस्त्रिंशवरधारिणः। अन्योऽन्यमभ्यधावन्त परस्परवधैषिणः।
ततो दुर्य्योधनो राजा कलिङ्गैर्बहुभिर्वृतः। पुरस्कृत्य रणे भीष्मं पाण्डवानभ्यवर्त्तत।
तथैव पाण्डवाः सर्व्वे परिवार्य्य वृकोदरं। भीष्ममभ्यद्रवन् क्रुद्धा रणे रभसवाहनाः।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे सप्ततितमोऽध्यायः ॥ ७० ॥

॥ सञ्जय उवाच ॥ दृष्ट्वा भीष्मेण संयुक्तान् भ्रातॄनन्यांश्च पार्थिवान् । समभ्यधावद्गाङ्गेयमुद्यतास्त्रो धनञ्जयः ।
पाञ्चजन्यस्य निर्घोषं धनुषो गाण्डिवस्य च । ध्वजञ्च दृष्ट्वा पार्थस्य सर्व्वान्नो भयमाविशत् । ११२०
सिंहलाङ्गूलमाकाशे ज्वलन्तमिव पर्व्वतं । असज्जमानं वृक्षेषु धूमकेतुमिवोत्थितं ।
बहुवर्णञ्च चित्रञ्च दिव्यं वानरलक्षणं । अपश्याम महाराज ध्वजं गाण्डीवधन्वनः ।
विद्युतं मेघमध्यस्थां भ्राजमानामिवाम्बरे । ददृशुर्गाण्डिवं योधा रुक्मपृष्ठं महाहवे ।
अशुश्रुम भृशं चास्य शक्रस्येवातिगर्ज्जितं । सुघोरं तलयोः शब्दं निघ्नतस्तव वाहिनीं ।
चण्डवातो यथा मेघः सविद्युत्स्तनयित्नुमान् । दिशः संप्लावयामास शरवर्षैः समन्ततः । ११२५
अभ्यधावत गाङ्गेयं भैरवास्त्रो धनञ्जयः । दिशं प्राचीं प्रतीचीञ्च न जानीमोऽस्त्रमोहिताः ।
कान्दिग्भूताः श्रान्तपत्रा हताश्वा हतचेतसः । अन्योऽन्यमभिसंश्लिष्य योधास्ते भरतर्षभ ।
भीष्ममेवाभिलीयन्ते सह सर्व्वैस्तवात्मजैः । तेषामार्त्तायनमभूद्भीष्मः शान्तनवो रणे ।
समुत्पतन्ति वित्रस्ता रथेभ्यो रथिनस्तथा । सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातयः ।
श्रुत्वा गाण्डीवनिर्घोषं विस्फूर्ज्जितमिवाशनेः । सर्व्वसैन्यानि भीतानि व्यवलीयन्त भारत । ११३०
अथ काम्बोजजैरश्वैर्महद्भिः शीघ्रगामिभिः । गोपानां बहुसाहस्रैर्बलैर्गोपायनैर्वृतः ।
मद्रसौवीरगान्धारैस्त्रैगर्त्तैश्च विशाम्पते । सर्व्वकालिङ्गमुख्यैश्च कलिङ्गाधिपतिर्वृतः ।
नानानरगणौघेन दुःशासनपुरःसरः । जयद्रथश्च नृपतिः सहितः सर्व्वराजभिः ।
हयारोहा वराश्चैव तव पुत्त्रेण चोदिताः । चतुर्दशसहस्राणि सौबलं पर्य्यवारयन् ।
ततस्ते सहिताः सर्व्वे विभक्तरथवाहनाः । पाण्डवाः समरे जघ्नुस्तावकान् भरतर्षभाः । ११३५
रथिभिर्व्वारणैरश्वैः पादातैश्च समीरितं । घोरमायोधनं चक्रे महाभ्रसदृशं रजः ।
तोमरप्रासनाराचगजाश्वरथयोधिनां । बलेन महता भीष्मः समसज्जत्किरीटिना ।
आवन्त्यः काशिराजेन भीमसेनेन सैन्धवः । अजातशत्रुर्मद्राणामृषभेण यशस्विना ।
सहपुत्त्रः सहामात्यः शल्येन समसज्जत । विकर्णः सहदेवेन चित्रसेनः शिखण्डिना ।
मत्स्या दुर्य्योधनं जग्मुः शकुनिञ्च विशाम्पते । द्रुपदश्चेकितानश्च सात्यकिश्च महारथः । ११४०
द्रोणेन समसज्जन्त सपुत्त्रेण महात्मना । कृपश्च कृतवर्म्मा च धृष्टद्युम्नमभिद्रुतौ ।
एवं प्रशाजिताश्वानि भ्रान्तनागरथानि च । समसज्जन्त युद्धानि तत्र तत्र समन्ततः ।
निरभ्रे विद्युतस्तीव्रा दिशश्च रजसा वृताः । प्रादुरासन्महोल्काश्च सनिर्घाता विशाम्पते ।
प्रादुर्ब्बभौ महावातः पांशुवर्षः पपात च । नभस्यन्तर्दधे सूर्य्यः सैन्येन रजसा वृतः ।
प्रमोहः सर्व्वभूतानामतीव समपद्यत । रजसा चाभिभूतानामस्त्रजालैश्च युध्यतां । ११४५
वीरबाहुविसृष्टानां सर्व्वावरणभेदिनां । संह्रादः शरजालानां तुमुलः समपद्यत ।
प्रकाशं चक्रुराकाशमुद्यतानि भुजोत्तमैः । नक्षत्रविमलाभानि शस्त्राणि भरतर्षभ ।
आर्षभाणि विचित्राणि रुक्मजालवृतानि च । सम्पेतुर्दिक्षु सर्व्वासु चर्माणि भरतर्षभ ।

सुवर्णवर्णैश्च निस्त्रिंशैः पात्यमानानि सर्व्वशः । दिक्षु सर्व्वास्वदृश्यन्त शरीराणि शिरांसि च ।
भग्नचक्राक्षनीडाश्च निपातितमहाभुजाः । हताश्वाः पृथिवीं जग्मुस्तत्र तत्र महारथाः । ३१५०
परिपेतुर्हयाश्चात्र केचिच्छस्त्रक्षतव्रणाः । रथांश्च परिवर्त्तन्ते हतेषु रथयोधिषु ।
शराहता भिन्नदेहा बद्धयोक्त्रा हयोत्तमाः । युगानि पर्य्यकर्षन्त तत्र तत्र हि भारत ।
अदृश्यन्त ससूतांश्च साश्वाः सरथयोधिनः । एकेन बलिना राजन् वारणेन निहता रणे ।
गन्धं हस्तिमदस्रावमाघ्राय बहवो रणे । सन्निपाते बलौघानां वातमाददिरे गजाः ।
सतोरणमहामात्रैः पतद्भिश्च गतासुभिः । बभूवायोधनं छन्नं नाराचाभिहतैर्गजैः । ३१५५
सन्निपाते बलौघानां चोदितैर्व्वरवारणैः । निपेतुर्युधि सम्भग्नाः सयोधाः सर्व्वतो गजाः ।
नागराजोपमैर्हस्तैर्नागैराक्षिप्य संयुगे । व्यदृश्यन्त महाराज सम्भग्नरथकूवराः ।
विशीर्णरथजालाश्च केशेष्वाक्षिप्य दन्तिभिः । द्रुमशाखा इवाक्षिप्य निष्पिष्टा रथिनो रणे ।
रथेषु च रथा युद्धे संसक्ता वरवारणाः । विकर्षन्तो दिशः सर्व्वाः संपेतुः सर्व्वशब्दगाः ।
तेषां तथा कर्षतांश्च गजानां रूपमाबभौ । सरःसु नलिनीजालं विषक्तमिव कर्षतां । ३१६०
एवं सञ्छादितं तत्र बभूवायोधनं महत् । सादिभिश्च पदातैश्च सध्वजैश्च महारथैः ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे एकसप्ततोऽध्यायः ॥ ७१ ॥
॥ सञ्जय उवाच ॥ शिखण्डी सह मत्स्येन विराटेन विशाम्पते । भीष्ममाशु महेष्वासमाससाद सुदुर्ज्जयं ।
द्रोणं कृपं विकर्णञ्च महेष्वासान् महाबलान् । राज्ञश्चान्यान् रणे शूरान् बहूनार्च्छद्धनञ्जयः ।
सैन्धवञ्च महेष्वासं सामात्यं सह बन्धुभिः । प्राच्यांश्च दाक्षिणात्यांश्च भूमिपान् भरतर्षभ ।
पुत्त्रञ्च ते महेष्वासं दुर्य्योधनममर्षणं । दुःसहञ्चैव समरे भीमसेनोऽभ्यवर्त्तत । ३१६५
सहदेवश्च शकुनिमुलूकञ्च महारथं । पितापुत्त्रौ महेष्वासावभ्यवर्त्तत दुर्जयौ ।
युधिष्ठिरो महाराज गजानीकं महारथः । समवर्त्तत सङ्ग्रामे पुत्त्रेण निकृतस्तव ।
माद्रीपुत्त्रस्तु नकुलः शूरः संक्रन्दनो युधि । त्रिगर्त्तानां रथोदारैः समसज्जत पाण्डवः ।
अभ्यवर्त्तन्त दुर्द्धर्षाः समरे शाल्वकैकयान् । सात्यकिश्चेकितानश्च सौभद्रश्च महाबलः ।
धृष्टकेतुश्च समरे राक्षसश्च घटोत्कचः । पुत्त्राणां ते रथानीकं प्रत्युद्याताः सुदुर्जयाः । ३१७०
सेनापतिरमेयात्मा धृष्टद्युम्नो महारथः । द्रोणेन समरे राजन् समीयायोग्रकर्म्मणा ।
एवमेते महेष्वासास्तावकाः पाण्डवैः सह । समेत्य समरे शूराः सम्प्रहारञ्च चक्रिरे ।
मध्यन्दिनगते सूर्य्ये नभस्याकुलताङ्गते । कुरवः पाण्डवेयाश्च निजघ्नुरितरेतरं ।
ध्वजिनो हेमचित्राङ्गा विचरन्तो रणाजिरे । सपताका रथा रेजुर्व्वैयाघ्रपरिवारणाः ।
समेतानाञ्च समरे जिगीषूणां परस्परं । बभूव तुमुलः शब्दः सिंहानामिव गर्जतां । ३१७५
तत्राद्भुतमपश्याम सम्प्रहारं सुदारुणं । यमकुर्व्वन् रणे वीराः सृञ्जयाः कुरुभिः सह ।
नैव खं न दिशो राजन्न सूर्य्यं शत्रुतापन । विदिशो वाऽप्यपश्याम शरैर्मुक्तैः समन्ततः ।

शक्तीनां विमलाग्राणां तोमराणां तथाऽऽष्टीनां । निस्त्रिंशानाञ्च पीतानां नीलोत्पलनिभाः प्रभाः ।
कवचानां विचित्राणां भूषणानां प्रभास्तथा । खं दिशः प्रदिशश्चैव भासयामासुरोजसा ।
वपुर्भिश्च नरेन्द्राणां चन्द्रसूर्य्यसमप्रभैः । विरराज तदा राजंस्तत्र तत्र रणाङ्गनं । ११८०
रथसिंहा नरव्याघ्राः समायातास्तु संयुगे । विरेजुः समरे राजन् ग्रहा इव नभस्तले ।
भीष्मस्तु रथिनां श्रेष्ठो भीमसेनं महाबलं । अवारयत संक्रुद्धः सर्व्वसैन्यस्य पश्यतः ।
ततो भीष्मविनिर्मुक्ता रुक्मपुङ्खाः शिलाशिताः । अभ्यघ्नन् समरे भीमं तैलधौताः सुतेजिताः ।
तस्य शक्तिं महावेगां भीमसेनो महाबलः । क्रुद्धाशीविषसङ्काशां प्रेषयामास भारत ।
तामापतन्तीं सहसा रुक्मदण्डां दुरासदां । चिच्छेद समरे भीष्मः शरैः सन्नतपर्व्वभिः । ११८५
ततोऽपरेण भल्लेन पीतेन निशितेन च । कार्मुकं भीमसेनस्य द्विधा चिच्छेद भारत ।
सात्यकिस्तु ततस्तूर्णं भीष्ममासाद्य संयुगे । आकर्णप्रहितैस्तीक्ष्णैर्निशितैस्तिग्मतेजनैः ।
शरैर्बहुभिरानर्च्छत् पितरं ते जनाधिप । ततः सन्धाय वै तीक्ष्णं शरं परमदारुणं ।
वार्ष्णेयस्य रथाद्भीष्मः पातयामास सारथिं । तस्याश्वाः प्रद्रुता राजन् निहते रथसारथौ ।
तेन तेनैव धावन्ति मनोमारुतरंहसः । ततः सैन्यस्य सर्व्वस्य निस्वनस्तुमुलोऽभवत् । ११९०
हाहाकारश्च संजज्ञे पाण्डवानां महात्मनां । अभिद्रवत गृह्णीत हयान् यच्छत धावत ।
इत्यासीत्तुमुलः शब्दो युयुधानरथं प्रति । एतस्मिन्नेव काले तु भीष्मः शान्तनवस्तदा ।
अवधीत् पाण्डवीं सेनामासुरीमिव वृत्रहा । ते वध्यमाना भीष्मेण पाञ्चालाः सोमकैः सह ।
आर्य्यां युद्धे मतिं कृत्वा भीष्ममेवाभिदुद्रुवुः । धृष्टद्युम्नमुखाश्चापि पार्थाः शान्तनवं रणे ।
अभ्यधावन् जिघांसन्तस्तव पुत्रस्य वाहिनीं । तथैव तावका राजन् भीष्मद्रोणमुखाः परान् । ११९५
अभ्यधावन्त वेगेन ततो युद्धमवर्त्तत ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मपराक्रमे द्विसप्ततोऽध्यायः ॥ ७२ ॥

॥ सञ्जय उवाच ॥ विराटोऽथ त्रिभिर्बाणैर्भीष्ममार्च्छन् महारथं । विव्याध तुरगांश्चास्य त्रिभिर्बाणैर्महारथः ।
तं प्रत्यविध्यद्दशभिर्भीष्मः शान्तनवः शरैः । रुक्मपुङ्खैर्महेष्वासः कृतहस्तो महाबलः ।
द्रौणिर्गाण्डीवधन्वानं भीमधन्वा महारथः । अविध्यदिषुभिः षड्भिर्दृढहस्तः स्तनान्तरे ।
कार्म्मुकं तस्य चिच्छेद फाल्गुनः परवीरहा । अविध्यच्च भृशं तीक्ष्णैः पत्रिभिः शत्रुकर्षणः । १२००
सोऽन्यत्कार्मुकमादाय वेगवान् क्रोधमूर्च्छितः । अमृष्यमाणः पार्थेन कार्मुकच्छेदमाहवे ।
अविध्यत् फाल्गुनं राजन् नवत्या निशितैः शरैः । वासुदेवञ्च सप्तत्या विव्याध परमेषुभिः ।
ततः क्रोधाभिताम्राक्षः सह कृष्णेन फाल्गुनः । दीर्घमुष्णञ्च निश्वस्य चिन्तयित्वा मुहुर्मुहुः ।
धनुः सम्पीड्य वामेन करेणामित्रकर्षणः । गाण्डीवधन्वा संक्रुद्धः शितान् सन्नतपर्व्वणः ।
जीवितान्तकरान् घोरान् समाधत्त शिलीमुखान् । तैस्तूर्णं समरेऽविध्यद्द्रौणिं बलवतां वरः । १२०५
तस्य ते कवचं भित्त्वा पपुः शोणितमाहवे । न विव्यथे विनिर्भिन्नो द्रौणिर्गाण्डीवधन्वना ।

तथैव च शरान् पार्थे प्रतिमुञ्चन्नविक्लवः। तथैव स समरे राजंस्त्रातुमिच्छन् महाव्रतं।
तस्य तत्सुमहत्कर्म्म शशंसुः कुरुसत्तमाः। यत्नवद्भ्यां समेताभ्यामभ्यापतत संयुगे।
स हि नित्यमनीकेषु युध्यते भयमास्थितः। अस्त्रग्रामं ससंहारं द्रोणात्प्राप्य सुदुर्लभं।
ममाचार्य्यसुतो ह्येष द्रोणस्यातिप्रियः सुतः। ब्राह्मणश्च विशेषेण माननीयो ममेति च। ३३१०
समास्थाय मतिं वीरो बीभत्सुः शत्रुतापनः। कृपां चक्रे रथश्रेष्ठो भारद्वाजसुतं प्रति।
द्रौणिं त्यक्त्वा ततो युद्धे कौन्तेयः श्वेतवाहनः। युयुधे तावकान्निघ्नंस्त्वरमाणः पराक्रमी।
दुर्य्योधनस्तु दशभिर्गार्ध्रपत्रैः शिलाशितैः। भीमसेनं महेष्वासं रुक्मपुङ्खैः समर्द्दयत्।
भीमसेनस्तु संक्रुद्धः परासुकरणं दृढं। चित्रं कार्म्मुकमादत्त शरांश्च निशितान्दश।
आकर्णप्रहितैस्तीक्ष्णैर्वेगितैस्तिग्मतेजितैः। अविध्यत्तूर्णमाविध्यन्कुरुराजं महोरसि। ३३१५
तस्य काञ्चनसूत्रस्तु शरैः परिवृतो मणिः। रराजोरसि खे सूर्य्यो ग्रहैरिव समावृतः।
पुत्रस्तु तव तेजस्वी भीमसेनेन ताडितः। नामृष्यत यथा नागस्तलशब्दं समीरितं।
ततः शरैर्महाराज रुक्मपुङ्खैः शिलाशितैः। भीमं विव्याध संक्रुद्धस्त्रासयाणो वरूथिनीं।
तौ युध्यमानौ समरे भृशमन्योऽन्यविक्षतौ। पुत्रौ ते देवसङ्काशौ विरोचेतां महाबलौ।
चित्रसेनं नरव्याघ्रः सौभद्रः परवीरहा। अविध्यन्निशितैर्वाणैः पुरुमित्रञ्च सप्तभिः। ३३२०
सत्यव्रतञ्च सप्तत्या विद्ध्वा शक्रसमो युधि। नृत्यन्निव रणे वीर आर्त्तिं नः समजीजनत्।
तं प्रत्यविध्यद्दशभिश्चित्रसेनः शिलीमुखैः। सत्यव्रतश्च नवभिः पुरुमित्रश्च सप्तभिः।
स विद्धो विक्षरन्रक्तं शत्रुसंवारणं महत्। चिच्छेद चित्रसेनस्य चित्रं कार्म्मुकमार्ज्जुनिः।
भित्त्वा चास्य तनुत्राणं शरेणोरस्यताडयत्। ततस्ते तावका वीरा राजपुत्रा महारथाः।
समेत्य युधि संरब्धा विव्यधुर्निशितैस्तदा। तांश्च सर्व्वाञ्छरैस्तीक्ष्णैर्जघान परमास्त्रवित्। ३३२५
तस्य दृष्ट्वा तु तत्कर्म्म परिवव्रुः सुतास्तव। दहन्तं समरे योधांस्तव कक्षं यथोल्बणं।
अपेतशिशिरे काले समिद्धमिव पावकं। अत्यरोचत सौभद्रस्तव सैन्यानि शातयन्।
तत्तस्य चरितं दृष्ट्वा पौत्रस्तव विशाम्पते। लक्ष्मणोऽभ्यपतत्तूर्णं सात्वतीपुत्रमाहवे।
अभिमन्युस्तु संक्रुद्धो लक्ष्मणं शुभलक्षणं। विव्याध विशिखैः षड्भिः सारथिञ्च महारथः।
तथैव लक्ष्मणो राजन् सौभद्रं निशितैः शरैः। अविध्यत महाराज तदद्भुतमिवाभवत्। ३३३०
तस्याश्वांश्चतुरो हत्वा सारथिञ्च महारथः। अभ्यद्रवत सौभद्रो लक्ष्मणं निशितैः शरैः।
हताश्वे तु रथे तिष्ठंल्लक्ष्मणः परवीरहा। शक्तिं चिक्षेप संक्रुद्धः सौभद्रस्य रथं प्रति।
तामापतन्तीं सहसा घोररूपां दुरासदां। अभिमन्युः शरैस्तीक्ष्णैश्चिच्छेद भुजगोपमां।
ततः स्वरथमारोप्य लक्ष्मणं गौतमस्तदा। अपोवाह रथेनाजौ सर्व्वसैन्यस्य पश्यतः।
ततः समाकुले तस्मिन् वर्त्तमाने महाभये। अभ्यद्रवन् जिघांसन्तः परस्परवधैषिणः। ३३३५
तावकाश्च महेष्वासाः पाण्डवाश्च महारथाः। जुह्वतः समरे प्राणान् निजघ्नुरितरेतरं।

मुक्तकेशा विकवचा विरथाश्छिन्नकार्मुकाः । बाहुभिः समयुध्यन्त सृञ्जयाः कुरुभिः सह ।
ततो भीष्मो महाबाहुः पाण्डवानां महात्मनां । सेनां जघान संक्रुद्धो दिव्यैरस्त्रैर्महाबलः ।
हतेश्वरैर्गजैस्तत्र नरैरश्वैश्च पातितैः । रथिभिः सादिभिश्चैव समास्तीर्य्यत मेदिनी ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि द्वन्द्वयुद्धे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
॥ सञ्जय उवाच ॥ अथ राजन् महाबाहुः सात्यकिर्युद्धदुर्मदः । विकृष्य समरे चापं भारसाधनमुत्तमं । ३२४०
प्रामुञ्चत् पुङ्खसंयुक्तान् शरानाशीविषोपमान् । प्रकाशं लघु चित्रञ्च दर्शयन् हस्तलाघवं ।
तस्य विक्षिपतश्चापं शरानन्यांश्च मुञ्चतः । आददानस्य भूयश्च सन्दधानस्य चापरान् ।
क्षिपतश्च शरांस्तस्य रणे शत्रून् विनिघ्नतः । ददृशे रूपमत्यर्थं मेघस्येव प्रवर्षतः ।
समुदीर्य्यन्तमालोक्य राजा दुर्य्योधनस्ततः । रथानामयुतं तस्य प्रेषयामास भारत ।
तांस्तु सर्व्वान्महेष्वासान् सात्यकिः सत्यविक्रमः । जघान परमेष्वासो दिव्येनास्त्रेण वीर्य्यवान् । ३२४५
स कृत्वा दारुणं कर्म्म प्रगृहीतशरासनः । आससाद ततो वीरो भूरिश्रवसमाहवे ।
स हि सन्दृश्य सेनां ते युयुधानेन पातितां । अभ्यधावत संक्रुद्धः कुरूणां कीर्त्तिवर्द्धनः ।
इन्द्रायुधसवर्णं तत् विस्फार्य्य महद्धनुः । व्यसृजद्वज्रसंकाशान् शरानाशीविषोपमान् ।
सहस्रशो महाराज दर्शयन्पाणिलाघवं । शरांस्तान् मृत्युसंस्पर्शान् सात्यकेस्तु पदानुगाः ।
न विषेहुस्तदा राजन् दुद्रुवुस्ते समन्ततः । विहाय समरे राजन् सात्यकिं युद्धदुर्मदं । ३२५०
तं दृष्ट्वा युयुधानस्य सुता दश महाबलाः । महारथाः समाख्याताश्चित्रवर्म्मायुधध्वजाः ।
समासाद्य महेष्वासं भूरिश्रवसमाहवे । ऊचुः सर्व्वे सुसंरब्धा यूपकेतुं महारणे ।
भोभोः कौरवदायाद सहास्माभिर्महाबल । एहि युध्यस्व संग्रामे समस्तैः पृथगेव वा ।
अस्मान्वा त्वम्पराजित्य यशः प्राप्नुहि संयुगे । वयं वा त्वां पराजित्य प्रीतिं धास्याम वै परां ।
एवमुक्तस्तदा शूरस्तानुवाच महाबलः । वीर्य्यश्लाघी नरश्रेष्ठस्तान् दृष्ट्वा समुपस्थितान् । ३२५५
साध्विदं कथ्यते वीरा यदीदं मतमद्य वै । युध्यध्वं सहिता यत्ता निहनिष्यामि वो रणे ।
एवमुक्ता महेष्वासास्ते वीराः क्षिप्रकारिणः । महता शरवर्षेण अभ्यवर्षन्नरिन्दमं ।
अपराह्णे महाराज संग्रामस्तुमुलोऽभवत् । एकस्य च बहूनाञ्च समेतानां रणाजिरे ।
तमेकं रथिनां श्रेष्ठं शरवर्षैरवाकिरन् । प्रावृषीव महाशैलं सिषिचुर्जलदा नृप ।
तैस्तु मुक्तान् शरौघांस्तान् यमदण्डाशनिप्रभान् । असम्प्राप्तानसम्प्राप्तांश्चिच्छेद स महारथः । ३२६०
परिवार्य्य महाबाहुं निहन्तुमुपचक्रमुः । सोमदत्तिस्तु संक्रुद्धस्तेषां चापानि भारत ।
आच्छिद्य समरे राजंश्चिच्छेद विशिखैः शरैः । ते हता न्यपतन् भूमौ वज्रभग्ना इव द्रुमाः ।
तान् दृष्ट्वा निहतान्वीरो रणे पुत्रान्महाबलान् । वार्ष्णेयो विनदन् राजन् भूरिश्रवसमभ्ययात् ।
रथं रथेन समरे पीडयित्वा महाबलौ । तावन्योन्यस्य समरे निहत्य रथवाजिनः ।
विरथावभिवल्गन्तौ समीयातां महारथौ । प्रगृहीतमहाखड्गौ तौ चर्म्मवरधारिणौ । ३२६५

सुप्रभाते नरव्याघ्रौ युद्धाय समवस्थितौ । ततः सात्यकिमभ्येत्य निस्त्रिंशवरधारिणं ।
भीमसेनस्त्वरन् राजन् रथमारोपयत्तदा । तथापि तनयो राजन् भूरिश्रवसमाहवे
आरोपयद्रथं तूर्णं पश्यतां सर्व्वधन्विनां । तस्मिंस्तदा वर्त्तमाने रणे भीष्मं महारथं ।
अयोधयन्त संरब्धाः पाण्डवा भरतर्षभ । लोहितायति चादित्ये त्वरमाणो धनञ्जयः ।
पञ्चविंशतिसाहस्रान्निजघान महारथान् । ते हि दुर्य्योधनादिष्टास्तदा पार्थनिवर्हणे ।　　३२७०
सम्प्राप्यैव गता नाशं शलभा इव पावकं । ततो मत्स्याः केकयाश्च धनुर्वेदविशारदाः ।
परिवव्रुस्तदा पार्थं सहपुत्रं महारथं । एतस्मिन्नेव काले तु सूर्य्येऽस्तमुपगच्छति ।
सर्व्वेषां चैव सैन्यानां प्रमोहः समजायत । अवहारं ततश्चक्रे पिता देवव्रतस्तव ।
सन्ध्याकाले महाराज सैन्याः संश्रान्तवाहनाः । पाण्डवानां कुरूणाञ्च परस्परसमागमे ।
ते सेने भयसंविग्ने ययतुः स्वाभिवेशनं । ततः स्वशिविरं गत्वा न्यविशंस्तत्र भारत ।　　३२७५
पाण्डवाः सृञ्जयैः सार्द्धं कुरवश्च यथाविधि ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि पञ्चमयुद्धदिवसावहारे चतुःसप्ततोऽध्यायः ॥ ७४ ॥

॥ सञ्जय उवाच ॥ विहृत्य च ततो राजन् सहिताः कुरुपाण्डवाः । व्यतीतायां तु शर्व्वर्य्यां पुनर्युद्धाय निर्ययुः ।
तत्र शब्दो महानासीत्तव तेषाञ्च भारत । युज्यतां रथमुख्यानां कल्प्यतां चैव दन्तिनां ।
सन्नह्यतां पदातीनां हयानां चैव भारत । शङ्खदुन्दुभिनादश्च तुमुलः सर्व्वतोऽभवत् ।
ततो युधिष्ठिरो राजा धृष्टद्युम्नमभाषत । व्यूहं व्यूह महाबाहो मकरं शत्रुतापनं ।　　३२८०
एवमुक्तस्तु पार्थेन धृष्टद्युम्नो महारथः । व्यादिदेश महाराज रथिनो रथिनाम्वरः ।
शिरोऽभूद्द्रुपदस्तस्य पाण्डवश्च धनञ्जयः । चक्षुषी सहदेवश्च नकुलश्च महारथः ।
तुण्डमासीन्महाराज भीमसेनो महाबलः । सौभद्रो द्रौपदेयाश्च राक्षसश्च घटोत्कचः ।
सात्यकिर्धर्म्मराजश्च व्यूहग्रीवां समास्थिताः । पृष्ठमासीत् महाराज विराटो वाहिनीपतिः ।
धृष्टद्युम्नेन सहितो महत्या सेनया वृतः । केकया भ्रातरः पञ्च वामं पक्षं समाश्रिताः ।　　३२८५
धृष्टकेतुर्नरव्याघ्रश्चेकितानश्च वीर्य्यवान् । दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य रक्षणे ।
पादयोस्तु महाराज स्थितः श्रीमान् महारथः । कुन्तिभोजः शतानीको महत्या सेनया वृतः ।
शिखण्डी तु महेष्वासः सोमकैः संवृतो बली । इरावांश्च ततः पुच्छे मकरस्य व्यवस्थितौ ।
एवमेतं महाव्यूहं व्यूह्य भारत पाण्डवाः । सूर्य्योदये महाराज पुनर्युद्धाय दंशिताः ।
कौरवानभ्ययुस्तूर्णं हस्त्यश्वरथपत्तिभिः । समुच्छ्रितैर्ध्वजैश्छत्रैः शस्त्रैश्च विमलैः शितैः ।　　३२९०
व्यूहं दृष्ट्वा तु तत्सैन्यं पिता देवव्रतस्तव । क्रौञ्चेन महता राजन् प्रत्यव्यूहत वाहिनीं ।
तस्य तुण्डे महेष्वासो भारद्वाजोऽभ्यवर्त्तत । अश्वत्थामा कृपश्चैव चक्षुरास्तां नरेश्वर ।
कृतवर्म्मा तु सहितः काम्बोजवरवाह्लिकैः । शिरस्यासीन्नरश्रेष्ठ श्रेष्ठः सर्व्वधनुष्मतां ।
ग्रीवायां शूरसेनस्तु तव पुत्रश्च भारत । दुर्य्योधनो महाराज राजभिर्ब्बहुभिर्वृतः ।

प्राग्ज्योतिषस्तु सहितो मद्रसौवीरकेकयैः । उरस्यभूत्नरश्रेष्ठ महत्या सेनया वृतः । ३२९५
स्वसेनया च सहितः सुशर्म्मा प्रस्थलाधिपः । वामं पक्षं समाश्रित्य दंशितः समवस्थितः ।
तुषारा यवनाश्चैव शकाश्च सह चूचुपैः । दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य भारत ।
श्रुतायुश्च शतायुश्च सौमदत्तिश्च मारिष । व्यूहस्य जघने तस्थू रक्षमाणाः परस्परं ।
ततो युद्धाय सञ्जग्मुः पाण्डवाः कौरवैः सह । सूर्य्योदये महाराज ततो युद्धमवर्त्तत ।
प्रतीयू रथिनो नागा नागांश्च रथिनो ययुः । हयारोहान् हयाश्चैव रथिनश्चापि सादिनः । ३३००
सादिनश्च हयान् राजन् कुञ्जरांश्च महारणे । हस्त्यारोहान् रथा राजन् गजिनश्चापि सादिनः ।
रथिनः पत्तिभिः सार्द्धं सादिनश्चापि पत्तिभिः । अन्योऽन्यं समरे राजन् प्रत्यधावन्नमर्षिताः ।
भीमसेनार्जुनयमैर्गुप्ता चान्यैर्महारथैः । शुशुभे पाण्डवी सेना नक्षत्रैरिव शर्व्वरी ।
तथा भीष्मकृपद्रोणशल्यदुर्य्योधनादिभिः । तवापि विबभौ सेना ग्रहैर्द्यौरिव संवृता ।
भीमसेनस्तु कौन्तेयो द्रोणं दृष्ट्वा पराक्रमी । अभ्ययाज्जवनैरश्वैर्भारद्वाजस्य वाहिनीं । ३३०५
द्रोणस्तु समरे क्रुद्धो भीमं नवभिरायसैः । विव्याध समरे राजन् मर्म्माण्युद्दिश्य वीर्य्यवान् ।
दृढाहतस्ततो भीमो भारद्वाजेन संयुगे । सारथिं प्रेषयामास यमस्य सदनं प्रति ।
स संगृह्य स्वयं वाहान् भारद्वाजः प्रतापवान् । व्यधमत् पाण्डवीं सेनां तूलराशिमिवानलः ।
ते वध्यमाना द्रोणेन भीष्मेण च नरोत्तम । सृञ्जयाः केकयैः सार्द्धं पलायनपराभवन् ।
तथैव तावकं सैन्यं भीमार्ज्जुनपरिक्षतं । मुमुहे तत्र तत्रैव समदेवाङ्गनाकुला । ३३१०
अभिद्येतां ततः सैन्ये तस्मिन् वीरवरक्षये । आसीद्व्यतिकरो घोरस्तव तेषाञ्च भारत ।
तदद्भुतमपश्याम तावकानां परैः सह । एकायनगताः सर्व्वे यदयुध्यन्त भारत ।
प्रतिसंवार्य्य चास्त्राणि तेऽन्योन्यस्य विशाम्पते । युयुधुः पाण्डवाश्चैव कौरवाश्च महामृधे ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि षष्ठदिवसयुद्धारम्भे पञ्चसप्ततोऽध्यायः ॥ ७५ ॥
॥ धृतराष्ट्र उवाच ॥ एवं बहुगुणं सैन्यमेवं बहुविधम्परं । व्यूढमेवं यथाशास्त्रममोघञ्चैव सञ्जय ।
पुष्टमस्माकमत्यन्तमभिकामञ्च नः सदा । प्रह्वमव्यसनोपेतं पुरस्ताद्दृष्टविक्रमं । ३३१५
नातिवृद्धमबालञ्च न कृशं न च पीवरं । लघुवृत्तायतप्रायं सारगात्रमनामयं ।
आत्तसन्नाहसम्पन्नं बहुशस्त्रपरिग्रहं । असियुद्धे नियुद्धे च गदायुद्धे च कोविदं ।
प्रासर्ष्टितोमरेष्वाजौ परिघेष्वायसेषु च । भिन्दिपालेषु शक्तीषु मुषलेषु कृतश्रमं ।
शस्त्रग्रहणविद्यासु सर्व्वासु परिनिष्ठितं । आरोहे पर्य्यवस्कन्दे सरणे सान्तरप्लुते ।
सम्यक्प्रहरणे याने व्यपयाने च कोविदं । नागाश्वरथयानेषु बहुशः सुपरीक्षितं । ३३२०
परीक्ष्य च यथान्यायं वेतनेनोपपादितं । न गोष्ठ्या नोपकारेण न सम्बन्धनिमित्ततः ।
न सौहार्दबलेनापि न कुलीनपरिग्रहैः । समृद्धजनमार्य्यञ्च तुष्टसत्कृतबान्धवं ।
कृतोपकारभूयिष्ठं यशस्वि च मनस्वि च । सजयैश्च नरैर्मुख्यैर्बहुशो मुख्यकर्म्मभिः ।

लोकपालोपमैस्तात पालितं लोकविश्रुतैः । बहुभिः क्षत्रियैर्गुप्तं पृथिव्यां लोकसम्मतैः ।
अस्मानभिगतैः कामात् सबलैः सपदानुगैः । महोदधिमिवापूर्णमापगाभिः समन्ततः । ३३२५
अपक्षैः पक्षसङ्काशैरथैर्नागैश्च संवृतं । नानायुधोत्कटं भीमं वाहनोर्मितरङ्गिणं ।
क्षेपण्यसिगदाशक्तिशरप्रासैः समाकुलं । ध्वजभूषणसम्बाधं रत्नपट्टसुसंचितं ।
वाहनैः परिधावद्भिर्वायुवेगविकम्पितं । अपारमिव गर्जन्तं सागरप्रतिमं महत् ।
द्रोणभीष्माभिगुप्तञ्च गुप्तञ्च कृतवर्म्मणा । कृपदुःशासनाभ्याञ्च जयद्रथमुखैस्तथा ।
भगदत्तविकर्णाभ्यां द्रौणिसौबलवाह्लिकैः । गुप्तं प्रवीरैर्लोकस्य सारवद्भिर्महात्मभिः । ३३३०
यदहन्यत संग्रामे दिष्टमेव पुरातनं । नैतादृशं समुद्योगं दृष्टवन्तोऽथ मानुषाः ।
ऋषयो वा महाभागा पुराणा भुवि सञ्जय । ईदृशोऽपि बलौघस्तु युक्तः शस्त्रार्थसम्पदा ।
वध्यते यच्च संग्रामे किमन्यद्भागधेयतः । विपरीतमिदं सर्व्वं प्रतिभाति स्म सञ्जय ।
उक्तो हि विदुरेणैव हितं पथ्यञ्च नित्यशः । न च गृह्णाति तन्मन्दः पुत्रो दुर्य्योधनो मम ।
तस्य मन्ये मतिः पूर्व्वं सर्व्वज्ञस्य महात्मनः । आसीद्यथागतं तात येन दृष्टमिदं पुरा । ३३३५
अथ वा भाव्यमेवं हि सञ्जयैतेन सर्व्वथा । पुरा धात्रा यथासृष्टं तत्तथा न तदन्यथा ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि धृतराष्ट्रचिन्तायां षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
॥ सञ्जय उवाच ॥ आत्मदोषात्त्वया राजन् प्राप्तं व्यसनमीदृशं । न हि दुर्य्योधनस्तानि पश्यते भरतर्षभ ।
यानि त्वं दृष्टवान् राजन् धर्म्मसङ्करकाणि ते । तव दोषात् पुरा वृत्तं द्यूतमेतद्विशाम्पते ।
तव दोषेण युद्धञ्च प्रवृत्तं सह पाण्डवैः । त्वमेवाद्य फलं भुङ्क्ष्व कृत्वा किल्विषमात्मनः ।
आत्मनैव कृतं कर्म्म आत्मनैवोपभुज्यते । इह वा प्रेत्य वा राजंस्त्वया प्राप्तं यथा तथा । ३३४०
तस्माद्राजन् स्थिरो भूत्वा प्राप्येदं व्यसनं महत् । शृणु युद्धं यथावृत्तं शंसतो मम मारिष ।
भीमसेनः सुनिशितैर्वाणैर्भित्त्वा महाचमूं । आससाद ततो वीरः सर्व्वान् दुर्य्योधनानुजान् ।
दुःशासनं दुर्व्विषहं दुःसहं दुर्म्मदं जयं । जयत्सेनं विकर्णञ्च चित्रसेनं सुदर्शनं ।
चारुचित्रं सुवर्म्माणं दुःकर्णं कर्णमेव च । एतानन्यांश्च सुबहून् समीपस्थान् महारथान् ।
धार्त्तराष्ट्रान् सुसंक्रुद्धान् दृष्ट्वा भीमो महाबलः । भीष्मेण समरे गुप्तां प्रविवेश महाचमूं । ३३४५
अथालोक्य प्रतिष्ठन्तं ऊचुस्ते सर्व्व एव हि । जीवग्राहं निगृह्णीमो वयमेनं नराधिपाः ।
स तैः परिवृतः पार्थो भ्रातृभिः कृतनिश्चयैः । प्रजासंहरणे सूर्य्यः क्रूरैरिव महाग्रहैः ।
सम्प्राप्य मध्यं व्यूहस्य न भीः पाण्डवमाविशत् । यथा देवासुरे युद्धे महेन्द्रः प्राप्य दानवान् ।
ततः शतसहस्राणि रथिनां सर्व्वशस्त्रिणां । उद्यतानि शरैर्घोरैस्तमेकमनुवव्रिरे ।
स तेषां प्रवरान् योधान् हस्त्यश्वरथसादिनः । जघान समरे शूरो धार्त्तराष्ट्रानचिन्तयन् । ३३५०
तेषां व्यवसितं ज्ञात्वा भीमसेनो जिघृक्षतां । समस्तानां वधे राजन् मतिं चक्रे महाबलः ।
ततो रथं समुत्सृज्य गदामादाय पाण्डवः । जघान धार्त्तराष्ट्राणां तं बलौघमहार्णवं ।

भीमसेने प्रविष्टे तु धृष्टद्युम्नोऽपि पार्षतः । द्रोणमुत्सृज्य तरसा प्रययौ यत्र सौबलः ।
निवार्य्य महतीं सेनां तावकानां नरर्षभः । आससाद रथं शून्यं भीमसेनस्य संयुगे ।
दृष्ट्वा विशोकं समरे भीमसेनस्य सारथिं । धृष्टद्युम्नो महाराज दुर्म्मना गतचेतनः । ३२५५
अपृच्छद्बाष्पसंरुद्धो निःश्वसन् वाचमीरयन् । मम प्राणैः प्रियतमः क्व भीम इति दुःखितः ।
विशोकस्तमुवाचेदं धृष्टद्युम्नं कृताञ्जलिः । संस्थाप्य मामिह बली पाण्डवः सुमहाबलः ।
प्रविष्टो धार्त्तराष्ट्राणामेतद्बलमहार्णवं । मामुक्त्वा पुरुषव्याघ्र प्रीतियुक्तमिदं वचः ।
प्रतिपालय मां सूत नियम्याश्वान् मुहूर्त्तकं । यावदेतान्निहन्म्यद्य य इमे मद्वधोद्यताः ।
ततो दृष्ट्वा गदाहस्तं प्रधावन्तं महाबलं । सर्व्वेषामेव सैन्यानां संहर्षः समजायत । ३२६०
तस्मिन् सुतुमुले युद्धे वर्त्तमाने महाभये । भित्त्वा राजन् महाव्यूहं प्रविवेश सखा तव ।
विशोकस्य वचः श्रुत्वा धृष्टद्युम्नोऽपि पार्षतः । प्रत्युवाच ततः सूतं रणमध्ये महाबलः ।
न हि मे जीवितेनापि विद्यतेऽद्य प्रयोजनं । भीमसेनं रणे हित्वा स्नेहमुत्सृज्य पाण्डवैः ।
यदि यामि विना भीमं किं मां क्षत्रं वदिष्यति । एकायनगते भीमे मयि चावस्थिते युधि ।
अस्वस्ति तस्य कुर्व्वन्ति देवाः शक्रपुरोगमाः । यः सहायान् परित्यज्य स्वस्तिमानाव्रजेद्गृहान् । ३२६५
स मे भीमः सखा चैव सम्बन्धी च महाबलः । भक्तो मे भक्तिमांश्चाहं तस्मिन्नरिनिषूदने ।
सोऽहं तत्र गमिष्यामि यत्र यातो वृकोदरः । निघ्नन्तं मां रिपून् पश्य दानवानिव वासवं ।
एवमुक्त्वा ततो वीरो ययौ मध्येन भारत । भीमसेनस्य मार्गेषु गदाप्रमथितैर्गजैः ।
स ददर्श तदा भीमं दहन्तं रिपुवाहिनीं । ततो वृक्षानिव बलात् प्रभञ्जन्तं रणे नृपान् ।
ते हन्यमानाः समरे रथिनः सादिनस्तथा । पदाता दन्तिनश्चैव चक्रुरार्त्तस्वरं महत् । ३२७०
हाहाकारश्च सञ्जज्ञे तव सैन्यस्य मारिष । वध्यतो भीमसेनेन कृतिना चित्रयोधिना ।
ततः कृतास्त्रास्ते सर्व्वे परिवार्य्य वृकोदरं । अभीताः समकुर्व्वन्त शस्त्रवृष्टिं समन्ततः ।

अभिद्रुतं शस्त्रभृतां वरिष्ठं समन्ततः पाण्डवं लोकवीरं । सैन्येन घोरेण सुसंहतेन दृष्ट्वा बली पार्षतो भीमसेनं ।
अथोपगच्छच्छरविक्षताङ्गं पदातिनं क्रोधविषं वमन्तं । आश्वासयत् पार्षतो भीमसेनं गदाहस्तं कालमिवान्तकाले ।
निःशल्यमेनञ्च चकार तूर्णमारोपयच्चात्मरथे महात्मा । भृशं परिष्वज्य च भीमसेनं आश्वासयामास च शत्रुमध्ये । ३२७५
भ्रातॄनथोपेत्य तवापि पुत्त्रस्तस्मिन्विमर्दे सहसाऽभ्युवाच । अयं दुरात्मा द्रुपदस्य पुत्त्रः समागतो भीमसेनेन सार्द्धं ।
तं याम सर्व्वे सहिता निहन्तुं मा नो रिपुः प्रार्थयतामनीकं । श्रुत्वाऽथ वाक्यं तममृष्यमाणा ज्येष्ठाज्ञया चोदिता धार्त्तराष्ट्राः ।
वधाय निष्पेतुरुदायुधास्ते युगक्षये केतवो यद्वदुग्राः । प्रगृह्य चित्राणि धनूंषि वीरा ज्यानेमिघोषैः प्रविकम्पयन्तः ।
शरैरवर्षन् द्रुपदस्य पुत्त्रं यथाऽम्बुदा भूधरं वारिजालैः । निहन्यमानोऽपि शरैः सुतीक्ष्णैर्न विव्यथे समरे चित्रयोधी ।
समभ्युदीर्णांश्च तवात्मजांस्तथा निशम्य वीरानभितः स्थितान् रणे । जिघांसुरुग्रं द्रुपदात्मजो युवा प्रमोहनास्त्रं युयुजे महारथः । ३२८०
क्रुद्धो भृशं तव पुत्त्रेषु राजन् दैत्येषु यद्वत्समरे महेन्द्रः । ततो व्यमुह्यन्त रणे नृवीराः प्रमोहनास्त्राहतबुद्धिसत्त्वाः ।

प्रदुद्रुवुः कुरवश्चैव सर्व्वे सवाजिनागाः सरथाः समन्तात्। परीतकालानिव नष्टसंज्ञान् मोहायत्तांस्तव पुत्रान्निशम्य।

एतस्मिन्नेव काले तु द्रोणः शस्त्रभृतां वरः। द्रुपदं त्रिभिरासाद्य शरैर्विव्याध दारुणैः।
सोऽतिविद्धस्तदा राजन् रणात् द्रोणेन पार्थिवः। अपायाद्द्रुपदो राजन् पूर्व्ववैरमनुस्मरन्।
जित्वा द्रोणस्तु द्रुपदं शङ्खं दध्मौ प्रतापवान्। तस्य शङ्खस्वनं श्रुत्वा वित्रेसुः सर्व्वसोमकाः। ३२८५
अथ शुश्राव तेजस्वी द्रोणः शस्त्रभृतां वरः। प्रमोहनास्त्रेण रणे मोहितानात्मजांस्तव।
ततो द्रोणो राजगृद्धी त्वरितोऽभ्याययौ रणात्। तत्रापश्यन् महेष्वासो भारद्वाजः प्रतापवान्।
धृष्टद्युम्नञ्च भीमञ्च विचरन्तौ महारणे। मोहाविष्टांश्च ते पुत्रानपश्यत् स महारथः।
ततः प्रज्ञास्त्रमादाय मोहनास्त्रमशातयत्। अथ प्रत्यागतप्राणास्तव पुत्रा महारथाः।
पुनर्युद्धाय समरे प्रययुर्भीमपार्षतौ। ततो युधिष्ठिरः प्राह समाहूय स्वसैनिकान्। ३२९०
गच्छन्तु पदवीं शक्त्या भीमपार्षतयोर्युधि। सौभद्रप्रमुखा वीरा रथा द्वादश दंशिताः।
प्रवृत्तिमधिगच्छन्तु न हि शुध्यति मे मनः। एवं ते समनुज्ञाताः शूरा विक्रान्तयोधिनः।
बाढमित्येवमुक्त्वा तु सर्व्वे पुरुषमानिनः। मध्यन्दिनगते सूर्य्ये प्रययुः सर्व्व एव हि।
कैकेया द्रौपदेयाश्च धृष्टकेतुश्च वीर्य्यवान्। अभिमन्युं पुरस्कृत्य महत्या सेनया वृताः।
ते कृत्वा समरे व्यूहं सूचीमुखमरिन्दमाः। बिभिदुर्धार्त्तराष्ट्राणां तद्रथानीकमाहवे। ३२९५
तान् प्रयातान् महेष्वासानभिमन्युपुरोगमान्। भीमसेनभयाविष्टा धृष्टद्युम्नविमोहिता।
न सन्धारयितुं शक्ता तव सेना नराधिप। तदा मूर्च्छान्वितात्मा हि प्रमदेवाध्वनि स्थिता।
तेऽभियाय महेष्वासाः सुवर्णविकृतध्वजाः। परीप्सन्तोऽभ्यधावन्त धृष्टद्युम्नवृकोदरौ।
तौ च दृष्ट्वा महेष्वासानभिमन्युपुरोगमान्। बभूवतुर्मुदा युक्तौ निघ्नन्तौ तव वाहिनीं।
दृष्ट्वा च सहसायान्तं पाञ्चाल्यो गुरुमात्मनः। नाशंसत वधं वीरः पुत्राणां तव पार्षतः। ३३००
ततो रथं समारोप्य कैकेयस्य वृकोदरं। अभ्यधावत् सुसंक्रुद्धो द्रोणमिष्वस्त्रपारगं।
तस्यापि पततस्तूर्णं भारद्वाजः प्रतापवान्। क्रुद्धश्चिच्छेद भल्लेन धनुः शत्रुनिसूदनः।
अन्यांश्च शतशो बाणान् प्रेषयामास पार्षते। दुर्य्योधनहितार्थाय भर्त्तुः पिण्डमनुस्मरन्।
अथान्यद्धनुरादाय पार्षतः परवीरहा। द्रोणं विव्याध सप्तत्या रुक्मपुङ्खैः शिलाशितैः।
तस्य द्रोणः पुनश्चापं चिच्छेदामित्रकर्षणः। हयांश्च चतुरस्तूर्णं चतुर्भिः सायकोत्तमैः। ३३०५
वैवस्वतक्षयं घोरं प्रेषयामास भारत। सारथिं चास्य भल्लेन प्रेषयामास मृत्यवे।
हताश्वात् स रथात्तूर्णमवप्लुत्य महारथः। आरुरोह महाबाहुरभिमन्योर्महारथं।
ततः सरथनागाश्वा समकम्पत वाहिनी। पश्यतो भीमसेनस्य पार्षतस्य च धीमतः।
तत् प्रभग्नं बलं दृष्ट्वा द्रोणेनामिततेजसा। नाशक्नुवन् वारयितुं समस्तास्ते महारथाः।
बध्यमानन्तु तत् सैन्यं द्रोणेन निशितैः शरैः। व्यभ्रमत्तत्र तत्रैव क्षोभ्यमाण इवार्णवः। ३३१०

तथा दृष्ट्वा च तत्सैन्यं जघ्ने च बलं तव। दृष्ट्वाचार्य्यञ्च संक्रुद्धं दहन्तं रिपुवाहिनीं।
चुक्रुशुः सर्व्वतो योधाः साधु साध्विति भारत।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि द्रोणपराक्रमे सप्तसप्ततोऽध्यायः ॥ ७७ ॥

॥ सञ्जय उवाच ॥ ततो दुर्य्योधनो राजा मोहात् प्रत्यागतस्तदा। शरवर्षैः पुनर्भीमं प्रत्यवारयदच्युतं।
एकीभूताः पुनश्चैव तव पुत्रा महारथाः। समेत्य समरे भीमं योधयामासुरुद्यताः।
भीमसेनोऽपि समरे संप्राप्य स्वरथं प्रति। समारुह्य महाबाहुर्ययौ यत्र तवात्मजः। ३४६५
प्रगृह्य च महावेगं परासुकरणं दृढं। चित्रं शरासनं सङ्ख्ये शरैर्विव्याध ते सुतं।
ततो दुर्य्योधनो राजा भीमसेनं महाबलं। नाराचेन सुतीक्ष्णेन भृशं मर्म्मण्यताडयत्।
सोऽतिविद्धो महेष्वासस्तव पुत्रेण धन्विना। संरक्तनयनः क्रोधाद्वेगादाक्षिप्य कार्म्मुकं।
दुर्य्योधनं त्रिभिर्व्वाणैर्ब्बाह्वोरुरसि चार्पयत्। स तथाभिहतो राजन् नाचलद्गिरिराडिव।
तौ दृष्ट्वा समरे क्रुद्धौ विनिघ्नन्तौ परस्परं। दुर्य्योधनानुजाः सर्व्वे शूराः सन्त्यक्तजीविताः। ३४७०
संस्मृत्य मन्त्रितं पूर्व्वं निग्रहे भीमकर्म्मणः। निश्चयं परमं कृत्वा निग्रहीतुं प्रचक्रमुः।
तानापतत एवाजौ भीमसेनो महाबलः। अभ्युद्ययौ महाराज गजः प्रतिगजानिव।
भृशं च क्रुद्धस्तेजस्वी नाराचेन समर्दयत्। चित्रसेनं महाराज तव पुत्रं महायशाः।
तथेतरांस्तव सुतांस्ताडयामास भारतः। शरैर्बहुविधैः सङ्ख्ये रुक्मपुङ्खैः सुवेगितैः।
ततः संस्थाप्य समरे स्वान्यनीकानि सर्व्वशः। अभिमन्युप्रभृतयस्ते द्वादश महारथाः। ३४७५
प्रेषिता धर्म्मराजेन भीमसेनपदानुगाः। प्रत्युद्ययुर्महाराज राजपुत्रान् महारथान्।
दृष्ट्वा रथस्थांस्ताञ्छूरान् सूर्य्याग्निसमतेजसः। सर्व्वानेव महेष्वासान् भ्राजमानान् श्रियावृतान्।
महाहवे दीप्यमानान् सुवर्णविकृतोज्ज्वलान्। तत्यजुः समरे भीमं तव पुत्रा महाबलाः।
तान्नामृष्यत कौन्तेयो जीवमाना गता इति।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीमपराक्रमे अष्टसप्ततोऽध्यायः ॥ ७८ ॥

॥ सञ्जय उवाच ॥ अन्वीय च पुनः सर्व्वांस्तव पुत्रानपीडयत्। अभिमन्युश्च समरे भीमसेनेन संवृतः। ३४८०
पार्षतेन च सम्प्रेक्ष्य तव सैन्यं महारथाः। दुर्य्योधनप्रभृतयः प्रगृहीतशरासनाः।
भृशमश्वैः प्रजवितैः प्रययुर्यत्र ते रथाः। अपराह्णे ततो राजन् प्रावर्त्तत महारणः।
तावकानाञ्च बलिनां परेषाञ्चैव भारत। अभिमन्युर्विकर्णस्य हयान् हत्वा महाहवे।
अथैनं पञ्चविंशत्या क्षुद्रकाणां समाचिनोत्। हताश्वं रथमुत्सृज्य विकर्णस्तु महारथः।
आरुरोह रथं राजंश्चित्रसेनस्य भास्वरं। स्थितावेकरथे तौ तु भ्रातरौ कुरुवर्द्धनौ। ३४८२
आर्ज्जुनिः शरवर्षेण छादयामास भारत। दुर्जयोऽथ विकर्णश्च कार्ष्णिं पञ्चभिरायसैः।
विव्याध तेन नाकम्पत् कार्ष्णिर्मेरुरिव स्थितः। दुःशासनस्तु समरे केकयान् पञ्च मारिष।

योधयामास राजेन्द्र तदद्भुतमिवाभवत्। द्रौपदेया रणे क्रुद्धा दुर्य्योधनमवारयन्।
एकैकस्त्रिभिरानर्च्छत् पुत्त्रं तव विशाम्पते। पुत्त्रोऽपि तव दुर्द्धर्षो द्रौपद्यास्तनयान्रणे।
सायकैर्निशितैराजन्नाजघान पृथक् पृथक्। तैश्चापि विद्धः शुशुभे रुधिरेण समुक्षितः। ३४४०
गिरिः प्रस्रवणैर्यद्वद्गिरिधातुविमिश्रितैः। भीष्मोऽपि समरे राजन् पाण्डवानां वरूथिनीं।
कालयामास बलवान् पालः पशुगणानिव। ततो गाण्डीवनिर्घोषः प्रादुरासीद्विशाम्पते।
दक्षिणेन वरूथिन्याः पार्थस्यारीन् विनिघ्नतः। उत्तस्थुः समरे तत्र कबन्धानि सहस्रशः।
कुरूणाञ्चापि सैन्येषु पाण्डवानाञ्च भारत। शोणितोदशरावर्त्तं गजद्वीपं हयोर्म्मिणं।
रथनौभिर्नरव्याघ्राः प्रतेरुः सैन्यसागरं। छिन्नहस्ता विकवचा विदेहाश्च नरोत्तमाः। ३४४५
पतितास्तत्र दृश्यन्ते शतशोऽथ सहस्रशः। निहतैर्मत्तमातङ्गैः शोणितौघपरिप्लुतैः।
भूर्भाति भरतश्रेष्ठ पर्व्वतैरन्विता यथा। तत्राद्भुतमपश्याम तव तेषाञ्च भारत।
न तत्रासीत् पुमान् कश्चिद्यो योद्धुं नाभिकाङ्क्षति। एवं युयुधिरे वीराः प्रार्थयाना महद्यशः।
तावकाः पाण्डवैः सार्द्धं काङ्क्षमाणा जयं युधि।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे एकोनाशीतोऽध्यायः॥ ७९॥
॥ सञ्जय उवाच॥ ततो दुर्य्योधनो राजा लोहितायति भास्करे। सङ्ग्रामरभसो भीमं हन्तुकामोऽभ्यधावत। ३४५०
तमायान्तमभिप्रेक्ष्य नृवीरं दृढवैरिणं। भीमसेनः सुसंक्रुद्ध इदम्बचनमब्रवीत्।
अयं स कालः सम्प्राप्तो वर्षपूगाभिकाङ्क्षितः। अद्य त्वां निहनिष्यामि यदि नोत्सृजसे रणं।
अद्य कुन्त्याः परिक्लेशं वनवासञ्च कृत्स्नशः। द्रौपद्याश्च परिक्लेशं प्रणेष्यामि हते त्वयि।
यत्पुरा मत्सरी भूत्वा पाण्डवानवमन्यसे। तस्य पापस्य गान्धारे पश्य व्यसनमागतं।
कर्णस्य मतमास्थाय सौबलस्य च यत्पुरा। अचिन्त्य पाण्डवान् कामात् यथेष्टं कृतवानसि। ३४५५
याचमानञ्च यन्मोहाद्दाशार्हमवमन्यसे। उलूकस्य समादेशं यद्ददासि च हृष्टवत्।
तेन त्वां निहनिष्यामि सहितं सर्व्वबान्धवैः। शमं करिष्ये तत्पापं यत्पुरा कृतवानसि।
एवमुक्त्वा समाकृष्य धनुरायम्य चासकृत्। समादाय शरान् घोरान् महाशनिसमप्रभान्।
षट्त्रिंशत्तरसा क्रुद्धो मुमोचाशु सुयोधने। ज्वलिताग्निशिखाकारान् वज्रकल्पानजिह्मगान्।
ततोऽस्यकार्मुकं द्वाभ्यां सूतं द्वाभ्याञ्च विव्यधे। चतुर्भिजवनानश्वाननयद्यमसादनं। ३४६०
द्वाभ्याञ्च सुविकृष्टाभ्यां शराभ्यामरिमर्दनः। चिच्छेद समरे छत्रं राज्ञस्तस्य रथोत्तमात्।
त्रिभिश्चैवास्य चिच्छेद ज्वलन्तं ध्वजमुत्तमं। छित्वा तञ्च ननादोच्चैस्तव पुत्त्रस्य पश्यतः।
रथाच्च स ध्वजः श्रीमान् नानारत्नविभूषितः। पपात सहसा भूमौ विद्युज्जलधरादिव।
ज्वलन्तं सूर्य्यसङ्काशं नागं मणिमयं शुभं। ध्वजं कुरुपतेश्छिन्नं ददृशुः सर्व्वपार्थिवाः।
अथैनं दशभिर्व्बाणैस्तोत्रैरिव महागजं। आजघान रणे भीमः स्मयन्निव महारथः। ३४६५
ततस्तु राजा सिन्धूनां रथश्रेष्ठो महाबलः। दुर्य्योधनस्य जग्राह पार्ष्णिं सत्पुरुषैर्वृतः।

कृपश्च रथिनां श्रेष्ठः कौरव्यममितौजसं । आरोपयद्रथं राजन् दुर्य्योधनममर्षणं ।
स गाढविद्धो व्यथितो भीमसेनेन संयुगे । निषसाद रथोपस्थे राजा दुर्य्योधनस्तदा ।
परिवार्य्य ततो भीमं हन्तुकामो जयद्रथः । रथैरनेकसाहस्रैर्भीमस्यावारयद्दिशः ।
धृष्टकेतुस्ततो राजन्नभिमन्युश्च वीर्य्यवान् । केकया द्रौपदेयाश्च तव पुत्रानयोधयन् । १५७०
आजघान ततस्तूर्णमभिमन्युर्महामनाः । एकैकं पञ्चभिर्विद्ध्वा शरैः सन्नतपर्व्वभिः ।
वज्रमृत्युप्रतीकाशैश्चित्रायुधविनिःसृतैः । अमृष्यमाणास्ते सर्व्वे सौभद्रं रथसत्तमं ।
ववर्षुर्मार्गणैस्तीक्ष्णैर्गिरिं मेरुमिवाम्बुदाः । स पीड्यमानः समरे कृतास्त्रो युद्धदुर्म्मदः ।
अभिमन्युर्महाराज तावकान् समकम्पयत् । यथा देवासुरे युद्धे वज्रपाणिर्महासुरान् ।
विकर्णस्य ततो भल्लान् प्रेषयामास भारत । चतुर्दश रथश्रेष्ठो घोरानाशीविषोपमान् । १५७५
स तैर्विकर्णस्य रथात् पातयामास वीर्य्यवान् । ध्वजं सूतं हयांश्चास्य नृत्यमान इवाहवे ।
पुनश्चान्यान् शरान् पीतानकुण्ठाग्रानजिह्मगान् । प्रेषयामास सौभद्रो विकर्णाय महारथः ।
ते विकर्णं समासाद्य कङ्कबर्हिणवाससः । छित्वा देहं गता भूमिं श्वसन्त इव पन्नगाः ।
ते शरा हेमपुङ्खाग्रा व्यदृश्यन्त महीतले । विकर्णरुधिरक्लिन्ना वमन्त इव शोणितं ।
विकर्णं वीक्ष्य निर्भिन्नं तथैवान्ये सहोदराः । अभ्यद्रवन्त समरे सौभद्रप्रमुखान् रथान् । १५८०
अभियाय तथैवाशु रथस्थान् सूर्य्यवर्च्चसः । अविध्यन् समरेऽन्योन्यं रथस्था युद्धदुर्म्मदाः ।
दुर्म्मुखः श्रुतकर्म्माणं विद्ध्वा पञ्चभिराशुगैः । ध्वजमेकेन चिच्छेद सारथिञ्चास्य सप्तभिः ।
अश्वाञ्जाम्बूनदैर्जालैः प्रच्छन्नान् वातरंहसः । जघान षड्भिरासाद्य सारथिञ्च न्यपातयत् ।
स हताश्वे रथे तिष्ठन् श्रुतकर्म्मा महारथः । शक्तिं चिक्षेप संक्रुद्धो महोल्कां ज्वलितामिव ।
सा दुर्म्मुखस्य विपुलं वर्म्म भित्त्वा यशस्विनः । विदार्य्य प्राविशद्भूमिं दीप्यमाना सुतेजना । १५८५
तं दृष्ट्वा विरथं तत्र सुतसोमो महाबलः । पश्यतां सर्व्वसैन्यानां रथमारोपयत्ततः ।
श्रुतकीर्त्तिस्तथा वीरो जयत्सेनं सुतं तव । अभ्ययात् समरे राजन् हन्तुकामो यशस्विनं ।
तस्य विक्षिपतश्चापं श्रुतकीर्त्तेर्महात्मनः । चिच्छेद समरे राजन् जयत्सेनः सुतस्तव ।
क्षुरप्रेण सुतीक्ष्णेन प्रहसन्निव भारत । तं दृष्ट्वा छिन्नधन्वानं शतानीकः सहोदरं ।
अभ्यपद्यत तेजस्वी सिंहवन्निनदन् मुहुः । शतानीकस्तु समरे दृढं विस्फार्य्य कार्म्मुकं । १५९०
विव्याध दशभिस्तूर्णं जयत्सेनं शिलीमुखैः । ननाद सुमहानादं प्रभिन्न इव वारणः ।
अथान्येन सुतीक्ष्णेन सर्व्वावरणभेदिना । शतानीको जयत्सेनं विव्याध हृदये भृशं ।
तस्मिंस्तथा वर्त्तमाने दुष्कर्णो भ्रातुरन्तिके । चिच्छेद सशरञ्चापं नाकुलेः क्रोधमोहितः ।
अथान्यद्धनुरादाय भारसाधनमुत्तमं । समादत्त शितान् बाणान् शतानीको महाबलः ।
तिष्ठ तिष्ठेति चामन्त्र्य दुष्कर्णं भ्रातुरग्रतः । मुमोच निशितान् बाणान् ज्वलितान् पन्नगानिव । १५९५
ततोऽस्य धनुरेकेन द्वाभ्यां सूतञ्च मारिष । चिच्छेद समरे तूर्णं तञ्च विव्याध सप्तभिः ।

अश्वान् मनोजवांस्तस्य कल्माषान्वीतकल्मषः। जघान निशितैस्तूर्णं सर्व्वान् द्वादशभिः शरैः।
अथापरेण भल्लेन सयुक्तेन निपातिना। दुष्कर्णं समरे क्रुद्धो विव्याध हृदये भृशं।
स पपात ततो भूमौ वज्रभग्न इव द्रुमः। दुष्कर्णं निहतं दृष्ट्वा पञ्च राजन् महारथाः।
जिघांसन्तः शतानीकं समन्तात् पर्य्यवारयन्। घातयन्तः शरव्रातैः शतानीकं यशस्विनं। ३५००
अभ्यवर्त्तन्त संक्रुद्धाः केकयाः पञ्च सोदराः। तानभ्यापततः प्रेक्ष्य तव पुत्त्रा महारथाः।
अभ्युद्ययुर्महाराज गजा इव महागजान्। दुर्मुखो दुर्जयश्चैव तथा दुर्मर्षणो युवा।
शत्रुञ्जयः शत्रुसहः सर्व्वे क्रुद्धा यशस्विनः। प्रत्युद्गता महाराज केकयान् भ्रातरः समं।
रथैर्नगरसङ्काशैर्हयैर्युक्तैरलङ्कृतैः। नानावर्णविचित्राभिः पताकाभिरलङ्कृतैः।
वरचापधरा वीरा विचित्रकवचध्वजाः। विविशुस्ते परं सैन्यं सिंहा इव वनाद्वनं। ३५०५
तेषान्तु तुमुलं युद्धं व्यतिषक्तरथद्विपं। अवर्त्तत महारौद्रं निघ्नतामितरेतरं।
अन्योन्यागस्कृतं राजन् यमराष्ट्रविवर्धनं। मुहूर्त्तास्तमिते सूर्य्ये चक्रुर्युद्धं सुदारुणं।
रथिनः सादिनश्चैव व्यकीर्य्यन्त सहस्रशः। ततः शान्तनवः क्रुद्धः शरैः सन्नतपर्व्वभिः।
नाशयामास सेनां तां भीष्मस्तेषां महात्मनां। पाञ्चालानाञ्च सैन्यानि शरैर्निन्ये यमक्षयं।
एवं भित्त्वा त्वनीकानि पाण्डवानां पितामहः। कृत्वाऽवहारं सैन्यानां ययौ स्वशिविरं नृपः। ३५१०
धर्म्मराजोऽपि सम्प्रेक्ष्य धृष्टद्युम्नवृकोदरौ। मूर्ध्नि चैतानुपाघ्राय संहृष्टः शिविरं ययौ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि षष्ठदिवसावहारे अशीतितमोऽध्यायः॥ ८०॥

॥ सञ्जय उवाच॥ अथ शूरा महाराज परस्परकृतागसः। जग्मुः स्वशिविराण्येव रुधिरेण समुक्षिताः।
विश्राम्य च यथान्यायं पूजयित्वा परस्परं। सन्नद्धाः समदृश्यन्त भूयो युद्धचिकीर्षवः।
ततस्तव सुतो राजंश्चिन्तयाऽभिपरिप्लुतः। विस्रवच्छोणिताक्ताङ्गः पप्रच्छेदं पितामहं।
सैन्यानि रौद्राणि भयानकानि व्यूढानि सम्यग्विपुलध्वजानि। विदार्य्य हत्वा विनिपीड्य शूरास्ते पाण्डवानां त्वरिता रथौघाः। ३५१५
सम्मोह्य सर्व्वान् युधि कीर्त्तिमन्तो व्यूहञ्च तं मकरं वज्रकल्पं। प्रविश्य भीमेन निवर्हितोऽस्मि घोरैः शरैर्मृत्युदण्डप्रकाशैः।
क्रुद्धन्तमुदीक्ष्य भयेन राजन् सम्मूर्च्छितो नालभं शान्तिमद्य। इच्छे प्रसादात्तव सत्यसन्ध प्राप्तुं जयं पाण्डवेयांश्च हन्तुं।
तेनैवमुक्तः प्रहसन् महात्मा दुर्य्योधनं जातमन्युं विदित्वा। तं प्रत्युवाच विमना मनस्वी गङ्गासुतः शस्त्रभृतां वरिष्ठः।
परेण यत्नेन विगाह्य सेनां सर्व्वात्मनाऽहं तव राजपुत्त्र। इच्छामि दातुं विजयं सुखञ्च न चात्मानं छादयेऽहं त्वदर्थे।
एते तु रौद्रा बहवो महारथा यशस्विनः शूरतमाः कृतास्त्राः। ये पाण्डवानां समरे सहाया जितश्रमाः क्रोधविषं वमन्ति। ३५२०
ते नेह शक्याः सहसा विजेतुं वीर्य्योन्नद्धाः कृतवैरास्त्वया च। अहन्त्वेनान् प्रतियोत्स्यामि राजन् सर्व्वात्मना जीवितं त्यज्य वीरान्

रणे त्वदर्थाय महानुभाव न जीवितं रक्षितव्यं ममाद्य । सर्व्वांस्तवार्थाय सदेवदैत्यांल्लोकान् दहेयं किमु शत्रूंस्तवेह । तान् पाण्डवान्योधयिष्यामि राजन् प्रियञ्च ते सर्व्वमहं करिष्ये । श्रुत्वैव चैतत्परमप्रतीतो दुर्य्योधनः प्रीतमना बभूव । सर्व्वाणि सैन्यानि ततः प्रहृष्टो निर्गच्छतेत्याह नृपांश्च सर्व्वान् । तदाज्ञया निर्ययुर्वै बलानि रथाश्वपादातगजायुतानि । प्रहर्षयुक्तानि तु तानि राजन् महान्ति नानायुधशस्त्रवन्ति । स्थितानि नागाश्वपदातिमन्ति विरेजुराजौ तव राजन् बलानि । ३५२५

वृन्दैः स्थिताश्चापि सुसम्प्रयुक्ताश्चकाशिरे दन्तिगणाः समन्तात् । अस्त्रज्ञविद्भिर्नरदेवयोधैरनुष्ठिताः सैन्यगणास्तदीयाः । रथैश्च पादातगजाश्वसङ्घैः प्रयाद्भिराजौ विधिवत्प्रणुन्नैः । समुद्धुतं तैस्तरुणार्कवर्णं रजो बभौ छादयत् सूर्य्यरश्मीन् । रेजुः पदाता रथदन्तिसंस्था वातेरिता भ्राम्यमाणाः समन्तात् । नानारङ्गाः समरे तत्र रेजुः मेघैर्युक्ता विद्युतः खे यथैव । धनूंषि विस्फारयतां नृपाणां बभूव शब्दस्तुमुलोऽतिघोरः । निर्मथ्यतो देवमहासुरौघैर्यथार्णवस्यादियुगे तदानीं । तदुग्रनादं बहुवर्णरूपं तवात्मजानां समुदीर्णवर्णं । बभूव सैन्यं रिपुसैन्यहन्तृ युगान्तमेघौघनिभन्तदानीं । ३५३०

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मदुर्योधनसंवादे एकाशीतोऽध्यायः ॥ ८१ ॥

॥ सञ्जय उवाच ॥ अथात्मजं तव पुनः गाङ्गेयो ध्यानमास्थितं । अब्रवीत् भरतश्रेष्ठ सम्प्रहर्षकरं वचः ।

अहं द्रोणश्च शल्यश्च कृतवर्म्मा च सात्वतः । अश्वत्थामा विकर्णश्च सोमदत्तोऽथ सैन्धवैः ।

विन्दानुविन्दावावन्त्यौ वाह्लिकः सह वाह्लिकैः । त्रिगर्त्तराजोऽथ बली मागधश्च सुदुर्ज्जयः ।

बृहद्बलश्च कौशल्यश्चित्रसेनो विविंशतिः । रथाश्च बहुसाहस्राः शोभमाना महाध्वजाः ।

देशजाश्च हया राजन् स्वारूढा हयसादिभिः । गजेन्द्राश्च मदोत्कटाः प्रभिन्नकरटामुखाः । ३५३५

पादाताश्च रथाः शूरा नानाप्रहरणायुधाः । नानादेशसमुत्पन्नास्त्वदर्थे योद्धुमुद्यताः ।

एते चान्ये च बहवस्त्वदर्थे त्यक्तजीविताः । देवानपि रणे जेतुं समर्था इति मे मतिः ।

अवश्यन्तु मया राजंस्तव वाच्यं हितं सदा । अशक्याः पाण्डवा जेतुं देवैरपि सवासवैः ।

वासुदेवसहायाश्च महेन्द्रसमविक्रमाः । सर्व्वथाऽहन्तु राजेन्द्र करिष्ये वचनन्तव ।

पाण्डवानां रणे जेष्ये मां वा जेष्यन्ति पाण्डवाः । एवमुक्त्वा ददौ चास्मै विशल्यकरणीं शुभां । ३५४०

ओषधीं वीर्य्यसम्पन्नां विशल्यश्चाभवत्तदा । ततः प्रभाते विमले स्वेन सैन्येन वीर्य्यवान् ।

अव्यूहत स्वयं व्यूहं भीष्मो व्यूहविशारदः । मण्डलं मनुजश्रेष्ठो नानाशस्त्रसमाकुलं ।

सम्पूर्णं योधमुख्यैश्च तथा दन्तिपदातिभिः । रथैरनेकसाहस्रैः समन्तात् परिवारितं ।

अश्ववृन्दैर्महद्भिश्च ऋष्टितोमरधारिभिः । नागे नागे रथाः सप्त सप्त चाश्वा रथे रथे ।

अन्वश्वं दश धानुष्का धानुष्के सप्त चारिणः । एवं व्यूहं महाराज तव सैन्यं महारथैः । ३५४५

स्थितं रणाय महते भीष्मेण युधि पालितं । दशाश्वानां सहस्राणि दन्तिनाञ्च तथैव च ।

रथानामयुतञ्चापि पुत्राश्च तव दंशिताः । चित्रसेनादयः शूरा अभ्यरक्षन्पितामहं ।

रक्ष्यमाणश्च तैः शूरैर्गोप्यमानाश्च तेन ते । सन्नद्धाः समदृश्यन्त राजानश्च महाबलाः ।

दुर्य्योधनस्तु समरे दंशितो रथमास्थितः । व्यभ्राजत श्रिया जुष्टो यथा शक्रस्त्रिविष्टपे ।

ततः शब्दो महानासीत्पुत्त्राणां तव भारत । रथघोषश्च विपुलो वादित्राणाञ्च निस्वनः। ३५५०
भीष्मेण धार्त्तराष्ट्राणां व्यूढः प्रत्यङ्मुखो ययौ। मण्डलः स महाव्यूहो दुर्भेद्योऽमित्रघातिनां।
सर्व्वतः शुशुभे राजन् रणेऽरीणां दुरासदः। मण्डलन्तु समालोक्य व्यूहं परमदारुणं।
स्वयं युधिष्ठिरो राजा व्यूहं वज्रमथाकरोत्। तथा व्यूढेष्वनीकेषु यथास्थानमवस्थिताः
रथिनः सादिनश्चैव सिंहनादमथानदन्। बिभित्सवस्ततो व्यूहं निर्ययुर्युद्धकाङ्क्षिणः।
इतरेतरयोः शूराः सहसैन्याः प्रहारिणः। भारद्वाजो ययौ मत्स्यं द्रौणिश्चापि शिखण्डिनं। ३५५५
स्वयं दुर्य्योधनो राजा पार्षतं समुपाद्रवत्। नकुलः सहदेवश्च मद्रराजानमीयतुः।
विन्दानुविन्दावावन्त्याविरावन्तमभिद्रुतौ। सर्व्वे नृपास्तु समरे धनञ्जयमयोधयन्।
भीमसेनो रणे यत्तो हार्द्दिक्यं समवारयत्। चित्रसेनं विकर्णञ्च तथा दुर्म्मर्षणं विभुः।
आर्ज्जुनिः समरे राजंस्तव पुत्त्रानयोधयत्। प्राग्ज्योतिषं महेष्वासं हैडिम्बो राक्षसेश्वरः।
अभिदुद्राव वेगेन मत्तो मत्तमिव द्विपं। अलम्बुषस्ततो राजन् सात्यकिं युद्धदुर्मदं। ३५६०
ससैन्यं समरे क्रुद्धो राक्षसः समभिद्रवत्। भूरिश्रवा रणे यत्तो धृष्टकेतुमयोधयत्।
श्रुतायुषन्तु राजानं धर्म्मपुत्त्रो युधिष्ठिरः। चेकितानस्तु समरे कृपमेवान्वयोधयत्।
शेषाः प्रतिययुर्यत्ता भीममेव महारथं। ततो राजसहस्राणि परिवव्रुर्धनञ्जयं।
शक्तितोमरनाराचगदापरिघपाणयः। अर्ज्जुनोऽथ भृशं क्रुद्धो वार्ष्णेयमिदमब्रवीत्।
पश्य माधव सैन्यानि धार्त्तराष्ट्रस्य संयुगे। व्यूढानि व्यूहविदुषा गाङ्गेयेन महात्मना। ३५६५
युद्धाभिकामान् शूरांश्च पश्य माधव चामितान्। त्रिगर्त्तराजं सहितं भ्रातृभिः पश्य केशव।
अद्यैनान्घातयिष्यामि पश्यतस्ते जनार्द्दन। य इमे मां यदुश्रेष्ठ योद्धुकामा रणाजिरे।
एवमुक्त्वा तु कौन्तेयो धनुर्ज्यामवमृज्य च। ववर्ष शरवर्षाणि नराधिपगणान् प्रति।
तेऽपि तं परमेष्वासाः शरवर्षैरपूरयन्। तडागम्वारिधाराभिर्यथा प्रावृषि तोयदाः।
हाहाकारो महानासीत्तव सैन्ये विशाम्पते। छाद्यमानौ भृशं कृष्णौ शरैर्दृष्ट्वा महारणे। ३५७०
देवा देवर्षयश्चैव गन्धर्व्वाश्च महोरगैः। विस्मयं परमं जग्मुर्दृष्ट्वा कृष्णौ तथागतौ।
ततः क्रुद्धोऽर्ज्जुनो राजन्नैन्द्रमस्त्रमुदैरयत्। तत्राद्भुतमपश्याम विजयस्य पराक्रमं।
अस्त्रवृष्टिं परैर्मुक्तां शरौघैर्यदवारयत्। न च तत्राप्यनिर्भिन्नः कश्चिदासीद्विशाम्पते।
तेषां राजसहस्राणां हयानां दन्तिनां तथा। द्वाभ्यां त्रिभिः शरैश्चान्यान्पार्थो विव्याध मारिष।
ते हन्यमानाः पार्थेन भीष्मं शान्तनवं ययुः। अगाधे मज्जमानानां भीष्मस्त्राताऽभवत्तदा। ३५७५
आपतद्भिस्तु तैस्तत्र प्रभग्नं तावकं बलं। सञ्चुक्षुभे महाराज वातैरिव महार्णवः।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि सप्तमदिवसयुद्धारम्भे द्व्यशीतोऽध्यायः ॥ ८२ ॥
॥ सञ्जय उवाच ॥ तथा प्रवृत्ते सङ्ग्रामे निवृत्ते च सुशर्म्मणि। प्रभग्नेषु च वीरेषु पाण्डवेन महात्मना।
क्षुभ्यमाने बले तूर्णं सागरप्रतिमे तव। प्रत्युद्याते च गाङ्गेये त्वरितं विजयम्प्रति।

दृष्ट्वा दुर्य्योधनो राजा रणे पार्थस्य विक्रमं। त्वरमाणः समभ्येत्य सर्व्वांस्तानब्रवीन्नृपान्।
तेषाञ्च प्रमुखे शूरं सुशर्म्माणं महाबलं। मध्ये सर्व्वस्य सैन्यस्य प्राह संहर्षयन्वचः। ३८८०
एष भीष्मः शान्तनवो योद्धुकामो धनञ्जयं। सर्व्वात्मना कुरुश्रेष्ठ त्यक्त्वा जीवितमात्मनः।
तं प्रयान्तं परानीकं सह सैन्येन भारतं। संयत्ताः समरे सर्व्वे पालयध्वं पितामहं।
बाढमित्येवमुक्त्वा तु तान्यनीकानि सर्व्वशः। नरेन्द्राणां महाराज समाजग्मुः पितामहं।
ततः प्रयातः सहसा भीष्मः शान्तनवोऽर्ज्जुनं। रणे भारतमायान्तमाससाद महाबलं।
महाश्वेताश्वयुक्तेन भीमवानरकेतुना। महता मेघनादेन रथेनातिविराजिना। ३८८५
समरे सर्व्वसैन्यानामुपयातं धनञ्जयं। अभवत्तुमुलो नादो भयाद्दृष्ट्वा किरीटिनं।
अभीषुहस्तं कृष्णञ्च दृष्ट्वादित्यमिवापरं। मध्यन्दिनगतं सूर्य्यं नाशेकुः प्रतिवीक्षितुं।
तथा शान्तनवं भीष्मं श्वेताश्वं श्वेतकार्म्मुकं। न शेकुः पाण्डवा द्रष्टुं श्वेतग्रहमिवोदितं।
स सर्व्वतः परिवृतस्त्रिगर्त्तैः सुमहात्मभिः। भ्रातृभिः सह पुत्रैश्च तथाऽन्यैश्च महारथैः।
भारद्वाजस्तु समरे मत्स्यं विव्याध पत्रिणा। ध्वजञ्चास्य शरेणाजौ धनुश्चैकेन चिच्छिदे। ३८९०
तदपास्य धनुश्छिन्नं विराटो वाहिनीपतिः। अन्यदादत्त वेगेन धनुर्भारसहं दृढं।
शरांश्चाशीविषाकारान् ज्वलितान् पन्नगानिव। द्रोणं त्रिभिः प्रविव्याध चतुर्भिश्चास्य वाजिनः।
ध्वजमेकेन विव्याध सारथिञ्चास्य पञ्चभिः। धनुरेकेषुणाऽविध्यत्तत्राक्रुध्यद्द्विजर्षभः।
ततो द्रोणोऽवधीदश्वान् शरैः सन्नतपर्व्वभिः। अष्टभिर्भरतश्रेष्ठ सूतमेकेन पत्रिणा।
स हताश्वादवप्लुत्य स्यन्दनाद्धतसारथिः। आरुरोह रथं तूर्णं शङ्खस्य रथिनां वरः। ३८९५
ततस्तौ तु पितापुत्रौ भारद्वाजं रथे स्थितौ। महता शरवर्षेण वारयामासतुर्ब्बलात्।
भारद्वाजस्ततः क्रुद्धः शरमाशीविषोपमं। चिक्षेप समरे तूर्णं शङ्खं प्रति महाबलः।
स तस्य हृदयं भित्त्वा पीत्वा शोणितमाहवे। जगाम धरणीं बाणो लोहितार्द्रकृतच्छविः।
स पपात रथात्तूर्णं भारद्वाजशराहतः। हित्वा धनुः शरांश्चैव पितुरेव समीपतः।
हतं स्वमात्मजं दृष्ट्वा विराटः प्राद्रवद्भयात्। उत्सृज्य समरे द्रोणं व्यात्ताननमिवान्तकं। ३९००
भारद्वाजस्ततस्तूर्णं पाण्डवानां महाचमूं। वारयामास समरे शतशोऽथ सहस्रशः।
शिखण्ड्यपि महाराज द्रौणिमासाद्य संयुगे। आजघान भ्रुवोर्म्मध्ये नाराचैस्त्रिभिराशुगैः।
स बभौ नरशार्दूलो ललाटे संस्थितैस्त्रिभिः। शिखरैः काञ्चनमयैर्मेरुस्त्रिभिरिवोच्छ्रितैः।
अश्वत्थामा ततः क्रुद्धो निमेषार्द्धाच्छिखण्डिनः। सूतं ध्वजमथो राजंस्तुरगानायुधन्तथा।
शरैर्ब्बहुभिरुद्दिश्य पातयामास संयुगे। स हताश्वादवप्लुत्य रथाद्वै रथिनां वरः। ३९०५
खड्गमादाय सुशितं विमलं शरवारणं। श्येनवद्व्यचरत् क्रुद्धः शिखण्डी शत्रुतापनः।
सखड्गस्य महाराज चरतस्तस्य संयुगे। नान्तरं ददृशे द्रौणिस्तदद्भुतमिवाभवत्।
ततः शरसहस्राणि बहूनि भरतर्षभ। प्रेषयामास समरे द्रौणिः परमकोपनः।

तामापतन्तीं समरे शरवृष्टिं सुदारुणां । असिना तीक्ष्णधारेण चिच्छेद बलिनाम्बरः ।
ततोऽतिविमलं द्रौणिः शतचन्द्रं मनोरमं । चर्म्माच्छिनदसिञ्चास्य खण्डयामास संयुगे । ३६१०
शरैः सुबहुशो राजन् तञ्च विव्याध पत्रिभिः । शिखण्डी च ततः खड्गं खण्डितं तेन सायकैः ।
आविध्य व्यसृजत्तूर्णं ज्वलन्तमिव पन्नगं । तमापतन्तं सहसा कालानलसमप्रभं ।
चिच्छेद समरे द्रौणिर्दर्शयन् पाणिलाघवं । शिखण्डिनञ्च विव्याध शरैर्बहुभिरायसैः ।
शिखण्डी तु भृशं राजंस्ताड्यमानः शितैः शरैः । आरुरोह रथन्तूर्णं माधवस्य महात्मनः ।
सात्यकिस्तु ततः क्रुद्धो राक्षसं क्रूरमाहवे । अलम्बुषं शरैर्घोरैः प्रत्याकिरत सर्व्वतः । ३६१५
राक्षसेन्द्रस्ततस्तस्य धनुश्चिच्छेद भारत । अर्द्धचन्द्रेण समरे तञ्च विव्याध सायकैः ।
मायाञ्च राक्षसीं कृत्वा शरवर्षैरवाकिरत् । तत्राद्भुतमपश्याम शैनेयस्य पराक्रमं ।
नासम्भ्रमद्यत्समरे वध्यमानः शितैः शरैः । ऐन्द्रमस्त्रञ्च वार्ष्णेयो योजयामास भारत ।
विजयाद्यमनुप्राप्तं माधवेन यशस्विना । तदस्त्रम्भस्मसात्कृत्वा मायान्तां राक्षसीं तदा ।
अलम्बुषं शरैर्घोरैरभ्याकिरत सर्व्वशः । पर्व्वतं वारिधाराभिः प्रावृषीव बलाहकः । ३६२०
तत्तथा पीडितं तेन माधवेन महात्मना । प्रदुद्राव भयाद्रक्षो हित्वा सात्यकिमाहवे ।
तमजेयं राक्षसेन्द्रं संख्ये मघवताऽपि च । शैनेयः प्राणदज्जित्वा योधानां तव पश्यतां ।
न्यहनत्तावकांश्चापि सात्यकिः सत्यविक्रमः । निशितैर्बहुभिर्बाणैस्तेऽद्रवन्त भयार्द्दिताः ।
एतस्मिन्नेव काले तु द्रुपदस्यात्मजो बली । धृष्टद्युम्नो महाराज तव पुत्रं जनेश्वरं ।
छादयामास समरे शरैः सन्नतपर्व्वभिः । संछाद्यमानो विशिखैर्धृष्टद्युम्नेन भारत । ३६२५
विव्यथे न च संत्रस्तो तव पुत्त्रो जनेश्वरः । धृष्टद्युम्नञ्च समरे तूर्णं विव्याध सायकैः ।
षष्ट्या च त्रिंशता चैव तदद्भुतमिवाभवत् । तस्य सेनापतिः क्रुद्धो धनुश्चिच्छेद भारत ।
हयांश्च चतुरः शीघ्रं निजघान महारथः । शरैश्चैनं सुनिशितैः क्षिप्रं विव्याध सप्तभिः ।
स हताश्वान्महाबाहुरवप्लुत्य महाबली । पदातिरसिमुद्यम्य प्राधावत्पार्षतम्प्रति ।
शकुनिस्तु समभ्येत्य राजगृद्धी महाबलः । राजानं सर्व्वलोकस्य रथमारोपयत् स्वकं । ३६३०
ततो नृपं पराजित्य पार्षतः परवीरहा । न्यहनत्तावकं सैन्यं वज्रपाणिरिवासुरं ।
कृतवर्म्मा रणे भीमं शरैराच्छत् महारथं । प्रच्छादयामास च तं महामेघो रविं यथा ।
ततः प्रहस्य समरे भीमसेनः परन्तपः । प्रेषयामास संक्रुद्धः सायकान् कृतवर्म्मणे ।
तैरर्द्यमानोऽतिरथः सात्वतः सत्वतोऽधिकः । नाकम्पत महाराज भीमं चार्च्छच्छितैः शरैः ।
तस्याश्वांश्चतुरो हत्वा भीमसेनो महाबलः । सारथिं पातयामास ध्वजञ्च सुपरिष्कृतं । ३६३५
शरैर्बहुविधैश्चैनमाचिनोत् परवीरहा । शकलीकृतसर्व्वाङ्गश्चाविद्धः समदृश्यत ।
हताश्वात्तु तथा तूर्णं वृषकस्य रथं ययौ । श्यालस्य ते महाराज तव पुत्त्रस्य पश्यतः ।

भीमसेनोऽपि संक्रुद्धस्तव सैन्यमुपाद्रवत् । निजघान सुसंक्रुद्धो दण्डपाणिरिवान्तकः ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि द्वैरथे त्र्यशीतोऽध्यायः ॥ ८३ ॥

॥ धृतराष्ट्र उवाच ॥ बहूनि हि विचित्राणि द्वैरथानि स्म सञ्जय । पाण्डूनां मामकैः सार्द्धमश्रौषं तव जल्पतः ।

न चैव मामकं कञ्चिद्धृष्टं शंससि सञ्जय । नित्यं पाण्डुसुतान् हृष्टानभग्नांश्चैव शंससि । ३६७०

जीयमानान्विमनसो मामकान्विगतौजसः । वद मे संयुगे सूत दिष्टमेव न संशयः ।

॥ सञ्जय उवाच ॥ यथाशक्ति यथोत्साहं युद्धे चेष्टन्ति तावकाः । दर्शयानाः परं शक्त्या पौरुषं भरतर्षभ ।

गङ्गायाः सुरनद्या वै स्वादुभूतं यथोदकं । महोदधिगुणाभ्यासाल्लवणत्वं नियच्छति ।

तथा तत्पौरुषं राजंस्तावकानां महात्मनां । प्राप्य पाण्डुसुतान्वीरान् व्यर्थं भवति संयुगे ।

घटमानान्यथाशक्ति कुर्व्वाणान्कर्म्म दुष्करं । न दोषेण कुरुश्रेष्ठ त्वान्योधान् गन्तुमर्हसि । ३६७५

तवापराधात् सुमहान् सपुत्त्रस्य विशाम्पते । पृथिव्याः प्रक्षयो घोरो यमराष्ट्रविवर्द्धनः ।

आत्मदोषात् समुत्पन्नं शोचितुं नार्हसे नृप । न हि रक्षन्ति राजानः सर्व्वथाऽत्रापि जीवितं ।

युद्धे सुकृतिनां लोकानिच्छन्ति वसुधाधिपाः । चमूं विगाह्य युध्यन्ते नित्यं स्वर्गपरायणाः ।

पूर्व्वाह्णे तु महाराज प्रावर्त्तत जनक्षयः । तन्ममैकमना भूत्वा शृणु देवासुरोपमं ।

आवन्त्यौ तु महेष्वासौ महासेनौ महाबलौ । इरावन्तमभिप्रेक्ष्य समेयातां रणोत्कटौ । ३६८०

तेषां प्रववृते युद्धं तुमुलं रोमहर्षणं । इरावांस्तु ततः क्रुद्धो भ्रातरौ देवरूपिणौ ।

विव्याध निशितैस्तूर्णं शरैः सन्नतपर्व्वभिः । तावेनं प्रत्यविध्येतां समरे चित्रयोधिनौ ।

युध्यतां हि ततो राजन् विशेषो न स्म दृश्यते । यततोः शत्रुनाशाय कृतप्रतिकृतैषिणोः ।

इरावांस्तु रणे राजन्ननुविन्दस्य सायकैः । चतुर्भिश्चतुरो वाहाननयद्यमसादनं ।

भल्लाभ्यां च सुतीक्ष्णाभ्यां धनुः केतुञ्च मारिष । चिच्छेद समरे राजंस्तदद्भुतमिवाभवत् । ३६८५

त्यक्त्वाऽनुविन्दोऽथ रथं विन्दस्य रथमास्थितः । धनुर्गृहीत्वा सुदृढं भारसाधनमुत्तमं ।

तावेकस्थौ रणे वीरावावन्त्यौ रथिनाम्वरौ । शरान् मुमुचतुस्तूर्णमिरावति महात्मनि ।

ताभ्यां मुक्ता महावेगाः शराः काञ्चनभूषिताः । दिवाकरपथं प्राप्य छादयामासुरम्बरं ।

इरावांस्तु ततः क्रुद्धो भ्रातरौ तौ महारथौ । ववर्ष शरवर्षेण सारथिं चाप्यपातयत् ।

तस्मिन्निपतिते भूमौ गतसत्त्वेऽथ सारथौ । रथः प्रदुद्राव दिशः समुद्भ्रान्तहयस्तथा । ३६९०

तौ स जित्वा महाराज नागराजसुतासुतः । पौरुषं ख्यापयंस्तूर्णं व्यधमत्तव वाहिनीं ।

सा बध्यमाना समरे धार्त्तराष्ट्री महाचमूः । वेगान् बहुविधांश्चक्रे विषं पीत्वेव मानवः ।

हैडिम्बो राक्षसेन्द्रस्तु भगदत्तं समाद्रवत् । रथेनादित्यवर्णेन सध्वजेन महाबलः ।

ततः प्राग्ज्योतिषो राजा नागराजं समास्थितः । यथा वज्रधरः पूर्व्वं सङ्ग्रामे तारकामये ।

तत्र देवाः सगन्धर्व्वा ऋषयश्च समागताः । विशेषं नैव विविदुर्हैडिम्बभगदत्तयोः । ३६९५

यथा सुरपतिः क्रुद्धस्त्रासयामास दानवान्। तथैव समरे राजन् द्रावयामास पाण्डवान्।
तेन विद्राव्यमाणास्ते पाण्डवाः सर्व्वतोदिशं। त्रातारं नाध्यगच्छन्त स्वेष्वनीकेषु भारत।
भैमसेनिं रथस्थन्तु तत्रापश्याम भारत। शेषा विमनसो भूत्वा प्राद्रवन्त महारथाः।
निवृत्तेषु च पाण्डूनां पुनः सैन्येषु भारत। आसीन्निष्टानको घोरस्तव सैन्यस्य संयुगे।
घटोत्कचस्ततो राजन् भगदत्तं महाहवे। शरैः प्रच्छादयामास मेरुं गिरिमिवाम्बुदः। ३९७०
निपात्य तान् शरान् राजा राक्षसस्य धनुश्च्युतान्। भैमसेनिं रणे तूर्णं सर्व्वमर्म्मस्वताडयत्।
स ताड्यमानो बहुभिः शरैः सन्नतपर्व्वभिः। न विव्यथे राक्षसेन्द्रो भिद्यमान इवाचलः।
ततः प्राग्ज्योतिषः क्रुद्धस्तोमरान् स चतुर्द्दश। प्रेषयामास समरे तांश्च चिच्छेद राक्षसः।
तांश्छित्त्वा स महाबाहुस्तोमरान्निशितैः शरैः। भगदत्तञ्च विव्याध सप्तत्या वज्रसन्निभैः।
ततः प्राग्ज्योतिषो राजा प्रहसन्निव भारत। तस्याश्वांश्चतुरः सङ्ख्ये प्रेषयामास मृत्यवे। ३९७५
स हताश्वे रथे तिष्ठन् राक्षसेन्द्रः प्रतापवान्। शक्तिं चिक्षेप वेगेन प्राग्ज्योतिषगजं प्रति।
तामापतन्तीं सहसा हेमदण्डां सुवेगितां। त्रिधा चिच्छेद नृपतिः सा व्यकीर्य्यत भूतले।
शक्तिं विनिहतां दृष्ट्वा हैडिम्बः प्राद्रवद्भयात्। यथेन्द्रस्य रणात् पूर्व्वं नमुचिर्दैत्यसत्तमः।
तं विजित्य रणे शूरं विक्रान्तं ख्यातपौरुषं। अजेयं समरे राजन् यमेन वरुणेन च।
पाण्डवीं समरे सेनां संममर्द्द सकुञ्जरः। यथा वनगजो राजन् मृद्नंश्चरति पद्मिनीं। ३९८०
मद्रेश्वरस्तु समरे यमाभ्यां सह सङ्गतः। स्वस्रीयौ छादयाञ्चक्रे शरौघैः पाण्डुनन्दनौ।
सहदेवस्तु समरे मातुलं वीक्ष्य सङ्गतं। अवारयच्छरौघेन मेघो यद्वद्दिवाकरं।
छाद्यमानः शरौघेण हृष्टरूपतरोऽभवत्। तयोश्चाप्यभवत् प्रीतिरतुला मातृकारणात्।
ततः प्रहस्य समरे नकुलस्य महारथः। अश्वान्वै चतुरो राजंश्चतुर्भिः सायकोत्तमैः।
प्रेषयामास समरे यमस्य सदनम्प्रति। हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः। ३९८५
आरुरोह ततो यानं भ्रातुरेव यशस्विनः। एकस्थौ तु रणे शूरौ दृढे विक्षिप्य कार्म्मुके।
मद्रराजरथं क्रुद्धौ छादयेतां रणोत्कटौ। संछाद्यमानो बहुभिः शरैः सन्नतपर्व्वभिः।
स्वस्रीयाभ्यां नरव्याघ्रो नाकम्पत यथाऽचलः। प्रहसन्निव ताञ्चापि शरवृष्टिं जघान ह।
सहदेवस्ततः क्रुद्धः शरमुद्यम्य वीर्य्यवान्। मद्रराजमभिद्रुत्य प्रेषयामास भारत।
स शरः प्रेषितस्तेन गरुत्मानिव वेगवान्। मद्रराजं विनिर्भिद्य निपपात महीतले। ३९९०
स गाढविद्धो व्यथितो रथोपस्थे महारथः। निषसाद महाराज कश्मलञ्च जगाम ह।
तं विसंज्ञं निपतितं सूतः सम्प्रेक्ष्य संयुगे। अपोवाह रथेनाजौ यमाभ्यामभिपीडितं।
दृष्ट्वा मद्रेश्वररथं धार्त्तराष्ट्राः पराङ्मुखं। सर्व्वे विमनसो भूत्वा नेदमस्तीत्यचिन्तयन्।
निर्जित्य मातुलं सङ्ख्ये माद्रीपुत्रौ महारथौ। दध्मतुर्म्मुदितौ शङ्खौ सिंहनादञ्च नेदतुः।

अभिदुद्रावतुर्हृष्टो तव सैन्यं विशाम्पते । यथा दैत्यचमूं राजन्निन्द्रोपेन्द्राविवामरौ ।　३९९९

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि द्वन्द्वयुद्धे चतुरशीतोऽध्यायः ॥ ८४ ॥

॥ सञ्जय उवाच ॥ ततो युधिष्ठिरो राजा मध्यं प्राप्ते दिवाकरे । श्रुतायुषमभिप्रेक्ष्य चोदयामास वाजिनः ।
अभ्यधावत्ततो राजा श्रुतायुषमरिन्दमं । विनिघ्नन् सायकैस्तीक्ष्णैर्नवभिर्नतपर्व्वभिः ।
स संवार्य्य रणे राजा प्रेषितान् पाण्डुसूनुना । शरान् सप्त महेष्वासः कौन्तेयाय समर्पयत् ।
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे । असूनिव विचिन्वन्तो देहे तस्य महात्मनः ।
पाण्डवस्तु भृशं विद्धस्तेन राज्ञा महात्मना । रणे वराहकर्णेन राजानं हृदि विव्यधे ।　४०००
अथापरेण भल्लेन केतुं तस्य महात्मनः । रथश्रेष्ठो रथात्तूर्णं भूमौ पार्थो न्यपातयत् ।
केतुं निपतितं दृष्ट्वा श्रुतायुः स तु पार्थिवः । पाण्डवं विशिखैस्तीक्ष्णैराजन्विव्याध सप्तभिः ।
ततः क्रोधात् प्रजज्वाल धर्म्मपुत्त्रो युधिष्ठिरः । यथा युगान्ते भूतानि धक्ष्यन्निव हुताशनः ।
क्रुद्धन्तु पाण्डवं दृष्ट्वा देवगन्धर्व्वराक्षसाः । प्रविव्यथुर्महाराज व्याकुलं चाप्यभूज्जगत् ।
सर्व्वेषाञ्चैव भूतानामिदमासीन्मनोगतं । त्रींल्लोकानद्य संक्रुद्धो नृपोऽयं धक्ष्यतीति वै ।　४००५
ऋषयश्चैव देवाश्च चक्रुः स्वस्त्ययनं महत् । लोकानां नृप शान्त्यर्थं क्रोधिते पाण्डवे तदा ।
स च क्रोधसमाविष्टो लेलिहन् सृक्किणी मुहुः । दधारात्मवपुर्घोरं युगान्तादित्यसन्निभं ।
ततः सर्व्वाणि सैन्यानि तावकानि विशाम्पते । निराशान्यभवंस्तत्र जीवितं प्रति भारत ।
स तु धैर्य्येण तं कोपं सन्निवार्य्य महायशाः । श्रुतायुषः प्रचिच्छेद मुष्टिदेशे महद्धनुः ।
अथैनं छिन्नधन्वानं नाराचेन स्तनान्तरे । निर्ब्बिभेद रणे राजा सर्व्वसैन्यस्य पश्यतः ।　४०१०
सत्वरं च रणे राजंस्तस्य वाहान्महात्मनः । निजघान शरैः क्षिप्रं सूतञ्च सुमहाबलः ।
हताश्वन्तु रथं त्यक्त्वा दृष्ट्वा राज्ञस्तु पौरुषं । विप्रदुद्राव वेगेन श्रुतायुः समरे तदा ।
तस्मिञ्जिते महेष्वासे धर्म्मपुत्त्रेण संयुगे । दुर्य्योधनबलं राजन् सर्व्वमासीत् पराङ्मुखं ।
एतत्कृत्वा महाराज धर्म्मपुत्त्रो युधिष्ठिरः । व्यात्ताननो यथा कालस्तव सैन्यं जघान ह ।
चेकितानस्तु वार्ष्णेयो गौतमं रथिनाम्वरं । प्रेक्षतां सर्व्वसैन्यानां छादयामास सायकैः ।　४०१५
सन्निवार्य्य शरांस्तांस्तु कृपः शारद्वतो युधि । चेकितानं रणे यत्तं राजन् विव्याध पत्त्रिभिः ।
अथापरेण भल्लेन धनुश्चिच्छेद भारत । सारथिञ्चास्य भल्लेन क्षिप्रहस्तो न्यपातयत् ।
हयांश्चास्यावधीद्राजन्नुभौ च पार्ष्णिसारथी । सोऽपप्लुत्य रथात्तूर्णं गदां जग्राह सात्वतः ।
स तया वीरघातिन्या गदया गदिनाम्वरः । गौतमस्य हयान् हत्वा सारथिञ्च न्यपातयत् ।
भूमिष्ठो गौतमस्तस्य शरांश्चिक्षेप षोडश । ते शराः सात्वतं भित्त्वा प्राविशन् धरणीतलं ।　४०२०
चेकितानस्ततः क्रुद्धो गदां चिक्षेप तां पुनः । गौतमस्य वधाकाङ्क्षी वृत्रस्येव पुरन्दरः ।
तामापतन्तीं विपुलामश्मगर्भां महागदां । शरैरनेकसाहस्रैर्व्वारयामास गौतमः ।

चेकितानस्ततः खड्गं कोशादुद्धृत्य भारत । लाघवं परममास्थाय गौतमं समुपाद्रवत् ।
गौतमोऽपि धनुस्त्यक्त्वा प्रगृह्यासिं सुसंस्कृतं । वेगेन महता राजंश्चेकितानमुपाद्रवत् ।
तावुभौ बलसम्पन्नौ निस्त्रिंशवरधारिणौ । निस्त्रिंशाभ्यां सुतीक्ष्णाभ्यामन्योन्यं सन्ततक्षतुः । ३०२५
निस्त्रिंशवेगाभिहतौ ततस्तौ पुरुषर्षभौ । धरणीमनुसम्प्राप्तौ सर्व्वभूतनिषेवितां ।
मूर्च्छयाऽभिपरीताङ्गौ व्यायामेन च मोहितौ । ततोऽभ्यधावद्वेगेन करकर्षः सुहृत्तया ।
चेकितानं तथाभूतं दृष्ट्वा समरदुर्म्मदः । रथमारोपयच्चैनं सर्व्वसैन्यस्य पश्यतः ।
तथैव शकुनिः शूरः स्यालस्तव विशाम्पते । आरोपयद्रथं तूर्णं गौतमं रथिनाम्बरं ।
सौमदत्तिं तथा क्रुद्धो धृष्टकेतुर्महाबलः । नवत्या सायकैः क्षिप्रं राजन् विव्याध वक्षसि । ३०३०
सौमदत्तिरुरःस्थैस्तैर्भृशं बाणैरशोभत । मध्यन्दिने महाराज रश्मिभिस्तपनो यथा ।
भूरिश्रवास्तु समरे धृष्टकेतुं महारथं । हतसूतहयं चक्रे विरथं सायकोत्तमैः ।
विरथञ्चैनमालोक्य हताश्वं हतसारथिं । महता शरवर्षेण छादयामास संयुगे ।
स च तं रथमुत्सृज्य धृष्टकेतुर्महामनाः । आरुरोह ततो यानं शतानीकस्य मारिष ।
चित्रसेनो विकर्णश्च राजन् दुर्म्मर्षणस्तथा । रथिनो हेमसन्नाहाः सौभद्रमभिदुद्रुवुः । ३०३५
अभिमन्योस्ततस्तैस्तु घोरं युद्धमवर्त्तत । शरीरस्य यथा राजन् वातपित्तकफैस्त्रिभिः ।
विरथांस्तव पुत्रांस्तु कृत्वा राजन् महाहवे । न जघान नरव्याघ्रः स्मरन् भीमवचस्तदा ।
ततो राज्ञां बहुशतैर्गजाश्वरथयायिभिः । प्रवृत्तं समरे भीष्मं देवैरपि दुरासदं ।
प्रयान्तं शीघ्रमुद्वीक्ष्य परित्रातुं सुतांस्तव । अभिमन्युं समुद्दिश्य बालमेकं महारथं ।
वासुदेवमुवाचेदं कौन्तेयः श्वेतवाहनः । चोदयाश्वान् हृषीकेश यत्रैते बहुला रथाः । ३०४०
एते हि बहवः शूराः कृतास्त्रा युद्धदुर्म्मदाः । यथा न हन्युः सेनां नस्तथा माधव चोदय ।
एवमुक्तः स वार्ष्णेयः कौन्तेयेनामितौजसा । रथं श्वेतहयैर्युक्तं प्रेषयामास संयुगे ।
निष्टानको महानासीत्तव सैन्यस्य मारिष । यदर्ज्जुनो रणे क्रुद्धः संयातस्तावकान् प्रति ।
समासाद्य तु कौन्तेयो राज्ञस्तान् भीष्मरक्षिणः । सुशर्म्माणमथो राजन्निदं वचनमब्रवीत् ।
जानामि त्वां युधि श्रेष्ठमत्यन्तं पूर्व्ववैरिणं । पर्य्यायस्याद्य सम्प्राप्तं फलं पश्य सुदारुणं । ३०४५
अद्य ते दर्शयिष्यामि पूर्व्वप्रेतान् पितामहान् । एवं सञ्जल्पतस्तस्य बीभत्सोः शत्रुघातिनः ।
श्रुत्वाऽपि परुषं वाक्यं सुशर्म्मा रथयूथपः । न चैनमब्रवीत् किञ्चिच्छुभं वा यदि वाऽशुभं ।
अभिगम्यार्ज्जुनं वीरं राजभिर्बहुभिर्वृतः । पुरस्तात् पृष्ठतश्चैव पार्श्वतश्चैव सर्व्वतः ।
परिवार्य्यार्ज्जुनं सङ्ख्ये तव पुत्रैः सहानघ । शरैः सञ्छादयामास मेघैरिव दिवाकरं ।
ततः प्रवृत्तः सुमहान् सङ्ग्रामः शोणितोदकः । तावकानाञ्च समरे पाण्डवानाञ्च भारत । ३०५०
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि सुशर्म्मार्ज्जुनसमागमे पञ्चाशीतोऽध्यायः ॥ ८५ ॥

॥ सञ्जय उवाच ॥ स तुद्यमानस्तु शरैर्धनञ्जयः पदाहतो नाग इव श्वसन् बली । बाणेन बाणेन महारथानां चिच्छेद चापानि रणे प्रसह्य ।

संछिद्य चापानि च तानि राज्ञस्तेषां रणे वीर्य्यवतां क्षणेन । विव्याध बाणैर्युगपन्महात्मा निःशेषतां तेष्वथ मन्यमानः ।

निपेतुराजौ रुधिरप्रदिग्धास्ते ताडिताः शक्रसुतेन राजन् । विभिन्नगात्राः पतितोत्तमाङ्गा गतासवश्छिन्नतनुत्रकायाः ।

महीं गताः पार्थबलाभिभूता विचित्ररूपा युगपद्विनेशुः । दृष्ट्वा हतांस्तान् युधि राजपुत्रांस्त्रिगर्त्तराजः प्रययौ रथेन ।

तेषां रथानामथ पृष्ठगोपा द्वात्रिंशतोऽन्येऽभ्यपतन्त पार्थं । तथैव ते तं परिवार्य्य पार्थं प्रकृष्य चापानि महारवाणि । ४०७५

अवीवृषन् बाणमहौघवृष्ट्या यथा गिरिं तोयधरा जलौघैः । संपीड्यमानस्तु शरौघवृष्ट्या धनञ्जयस्तान्युधि जातरोषः ।

षष्ट्या शरैः संयति तैलधौतैर्जघान तानप्यथ पृष्ठगोपान् । षष्टिं रथांस्तानवजित्य सङ्ख्ये धनञ्जयः प्रीतमना यशस्वी ।

अथात्वरद्भीष्मवधाय जिष्णुर्बलानि राज्ञां समरे निहत्य । त्रिगर्त्तराजो निहतान् समीक्ष्य महारथांस्तानथ बन्धुवर्गान् ।

रणे पुरस्कृत्य नराधिपांस्तान् जगाम पार्थं त्वरितो वधाय । अभिद्रुतं शास्त्रविदां वरिष्ठं धनञ्जयं वीक्ष्य शिखण्डिमुख्याः ।

अभ्युद्ययुस्ते शितशस्त्रहस्ता रिरक्षिषन्तो रथमर्जुनस्य । पार्थोऽपि तानापततः समीक्ष्य त्रिगर्त्तराज्ञा सहितान् नृवीरान् ॥ ४०८०

विध्वंसयित्वा समरे धनुष्मान् गाण्डीवमुक्तैर्निशितैः पृषत्कैः । भीष्मं यियासुर्युधि सन्ददर्श दुर्य्योधनं सैन्धवादींश्च राज्ञः ।

आवारयिष्यन्नभिसम्प्रयाय मुहूर्त्तमायोध्य बलेन वीरः । उत्सृज्य राजानमनन्तवीर्य्यो जयद्रथादींश्च नृपान्महौजाः ।

ययौ ततो भीमबलो मनस्वी गाङ्गेयमाजौ शरचापपाणिः । युधिष्ठिरश्चोग्रबलो महात्मा समाययौ त्वरितो जातकोपः ।

मद्राधिपं समभित्यज्य सङ्ख्ये स्वभागमाप्तन्तमनन्तकीर्त्तिः । माद्रीसुतभीमसेनैः भीष्मं ययौ शान्तनवं रणाय ।

तैः सम्प्रयुक्तैः स महारथैर्गङ्गासुतः समरे चित्रयोधी । न विव्यथे शान्तनवो महात्मा समागतः पाण्डुसुतैः समस्तैः । ४०८५

उपेत्य राजा युधि सत्यसन्धो जयद्रथोऽप्युग्रबलो मनस्वी । चिच्छेद चापानि महारथानां प्रसह्य तेषां धनुषा वरेण ।

युधिष्ठिरं भीमसेनं यमौ च पार्थं तथा युधि सञ्जातकोपः । दुर्य्योधनः क्रोधविषो महात्मा जघान बाणैरनलप्रकाशैः ।

कृपेण शल्येन शलेन चैव तथा विभो चित्रसेनेन चापि । विद्धाः शरैस्तेऽतिविवृद्धकोपा देवा यथा दैत्यगणैः समेतैः ।

छिन्नायुधं शान्तनवेन राज्ञा शिखण्डिनं प्रेक्ष्य च जातकोपः । अजातशत्रुः समरे महात्मा शिखण्डिनं क्रुद्ध उवाच वाक्यं ।

उक्त्वा तथा त्वं पितुरग्रतो मामहं हनिष्यामि महाव्रतन्तं । भीष्मं शरौघैर्विमलार्कवर्णैः सत्यं वदामीति कृता प्रतिज्ञा । ४०९०

त्वया न चैनां सफलां करोषि देवव्रतं यन्न निहंसि युद्धे । मिथ्याप्रतिज्ञो भव मा नृवीर रक्षस्व धर्म्मञ्च कुलं यशश्च ।

प्रेक्षस्व भीष्मं युधि भीमवेगं सर्व्वांस्तपन्तं मम सैन्यसंघान् । शरौघजालैरतितिग्मतेजैः कालो यथा कालकृतं क्षणेन ।

निकृत्तचापः समरानपेक्षः पराजितः शान्तनवेन राज्ञा । विहाय बन्धूनथ सोदरांश्च क्व यास्यसे नानुरूपं तवेदं ।

दृष्ट्वाऽपि भीष्मं तमनन्तवीर्य्यं भग्नञ्च सैन्यं द्रवमाणमेवं । भीतोऽसि नूनं द्रुपदस्य पुत्र तथा हि ते मुखवर्णोऽप्रहृष्टः ।

आज्ञायमानेन धनञ्जयेन महाहवे संप्रसक्तो नृवीर । कथं हि भीष्मात् प्रथितः पृथिव्यां भयं त्वमद्य प्रकरोषि वीर । ४०९५

स धर्म्मराजस्य वचो निशम्य रूक्षाक्षरं विप्रलापप्रविद्धं । प्रत्यादेशं मन्यमानो महात्मा प्रतत्वरे भीष्मवधाय राजन् ।

तमापतन्तं महता जवेन शिखण्डिनं भीष्ममभिद्रवन्तं । आवारयामास हि शल्य एनमस्त्रेण घोरेण हि दुर्जयेन ।

स चापि दृष्ट्वा समुदीर्य्यमाणमस्त्रं युगान्ताग्निसमप्रभावं । नासौ व्यमुह्यद्द्रुपदस्य पुत्रो राजन् महेन्द्रप्रतिमप्रभावः ।

तस्थौ च तत्रैव महाधनुष्मान् शरैस्तदस्त्रं प्रतिबाधमानः। अथाददे वारुणमन्यदस्त्रं त्रिगर्त्तराजोऽथ प्रतिघातमस्य।
तदस्त्रमस्त्रेण निवार्य्यमाणं खस्थाः सुरा ददृशुः पार्थिवाश्च। भीष्मस्तु राजन् समरे महात्मा धनुः सुचित्रध्वजमेव चापि। ३०८०

छित्त्वाऽनदत्पाण्डुसुतस्य वीरो युधिष्ठिरस्याजमीढस्य राज्ञः। ततः समुत्सृज्य धनुः सबाणं युधिष्ठिरं वीक्ष्य भयाभिभूतं।
गदां प्रगृह्याभिपपात सङ्ख्ये जयद्रथं भीमसेनः पदातिः। तमापतन्तं सहसा जवेन जयद्रथः सगदं भीमसेनं।
विव्याध घोरैर्यमदण्डकल्पैः शितैः शरैः पञ्चशतैः समन्तात्। अचिन्तयित्वा स शरांस्तरस्वी वृकोदरः क्रोधपरीतचेताः।
जघान वाहान् समरे समस्तानारट्टजान् सिन्धुराजस्य सङ्ख्ये। ततोऽभिवीक्ष्याप्रतिमप्रभावस्तवात्मजस्त्वरमाणो रथेन।
अभ्यापयौ भीमसेनं निहन्तुं समुद्यतास्त्रः सुरराजकल्पः। भीमोऽप्यथैनं सहसा विनद्य प्रत्युद्ययौ गदया तर्ज्जमानः। ३०८५
समुद्यतां तां यमदण्डकल्पां दृष्ट्वा गदान्ते कुरवः समन्तात्। विहाय सर्व्वे तव पुत्त्रमुग्रं पातं गदायाः परिहर्त्तुकामाः।
अपक्रान्तास्तुमुले संविमर्द्दे सुदारुणे भारत मोहनीये। अमूढचेतास्त्वथ चित्रसेनो महागदामापतन्तीं निरीक्ष्य।
रथं समुत्सृज्य पदातिराजौ प्रगृह्य खड्गं विमलञ्च चर्म्म। अवप्लुतः सिंह इवाचलाग्राज्जगाम तं भूमिसमप्रदेशं।
गदाऽपि सा प्राप्य रथं विचित्रं साश्वं ससूतं विनिहत्य सङ्ख्ये। जगाम भूमिं ज्वलिता महोल्का भ्रष्टाम्बराद्गामिव सम्पतन्ती।
आश्चर्य्यरूपं सुमहत्त्वदीया दृष्ट्वैव तद्भारत सम्प्रहृष्टाः। सर्व्वे विनेदुः सहिताः समन्तात् अपूजिरे तव पुत्त्रं ससैन्याः। ३०९०

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि चित्रसेनरथभङ्गे षडशीतोऽध्यायः॥ ८६॥

॥ सञ्जय उवाच॥ विरथं तं समासाद्य चित्रसेनं मनस्विनं। रथमारोपयामास विकर्णस्तनयस्तव।
तस्मिंस्तथा वर्त्तमाने तुमुले सङ्कुले भृशं। भीष्मः शान्तनवस्तूर्णं युधिष्ठिरमुपाद्रवत्।
ततः सरथनागाश्वाः समकम्पन्त सृञ्जयाः। मृत्योरास्यमनुप्राप्तं मेनिरे च युधिष्ठिरं।
युधिष्ठिरोऽपि कौरव्यो यमाभ्यां सहितः प्रभुः। महेष्वासं नरव्याघ्रं भीष्मं शान्तनवं ययौ।
ततः शरसहस्राणि प्रमुञ्चन् पाण्डवो युधि। भीष्मं सञ्छादयामास यथा मेघो दिवाकरं। ३०९५
तेन सम्यक् प्रणीतानि शरजालानि भागशः प्रतिजग्राह गाङ्गेयः शतशोऽथ सहस्रशः।
तथैव शरजालानि भीष्मेणास्तानि मारिष। आकाशे समदृश्यन्त खगमानां व्रजा इव।
निमेषार्द्धात्तु कौन्तेयं भीष्मः शान्तनवो युधि। अदृश्यं समरे चक्रे शरजालेन भागशः।
ततो युधिष्ठिरो राजा कौरवस्य महात्मनः। नाराचम्प्रेषयामास क्रुद्ध आशीविषोपमं।
असम्प्राप्तन्तु तं तत्र क्षुरप्रेण महारथः। चिच्छेद समरे राजन् भीष्मस्तस्य धनुश्च्युतं। ३१००
तन्तु च्छित्त्वा रणे भीष्मो नाराचं कालसम्मितं। निजघ्ने कौरवेन्द्रस्य हयान् काञ्चनभूषणान्।
हताश्वन्तु रथं त्यक्त्वा धर्म्मपुत्त्रो युधिष्ठिरः। आरुरोह रथं तूर्णं नकुलस्य महात्मनः।
यमावपि सुसंक्रुद्धो समासाद्य रणे तदा। शरैः सञ्छादयामास भीष्मः परपुरञ्जयः।
तौ तु दृष्ट्वा महाराज भीष्मबाणप्रपीडितौ। जगामाथ परां चिन्तां भीष्मस्य वधकाङ्क्षया।
ततो युधिष्ठिरो राजन् राज्ञस्तान् समचोदयत्। भीष्मं शान्तनवं सर्व्वे निहतेति सुहृद्गणान्। ३१०५
ततस्ते पार्थिवाः सर्व्वे श्रुत्वा पार्थस्य भाषितं। महता रथवंशेन परिवव्रुः पितामहं।

स समन्तात्परिवृतः पिता देवव्रतस्तव। चिक्रीड धनुषा राजन् पातयानो महारथान्।
तं चरन्तं रणे पार्था ददृशुः कौरवं युधि। मृगमध्ये प्रविश्येव यथा सिंहशिशुं वने।
तर्ज्जयानं रणे शूरांस्त्रासयानञ्च सायकैः। दृष्ट्वा त्रेसुर्महाराज सिंहं मृगगणा इव।
रणे भरतसिंहस्य ददृशुः क्षत्रिया गतिं। अग्नेर्वायुसहायस्य यथा कक्षं दिधक्षतः। ४३८०
शिरांसि रथिनां भीष्मः पातयामास संयुगे। तालेभ्य इव पक्वानि फलानि कुशलो नरः।
पतद्भिश्च महाराज शिरोभिर्धरणीतले। बभूव तुमुलः शब्दः पततामश्मनामिव।
तस्मिंस्तु तुमुले युद्धे वर्त्तमाने सुदारुणे। सर्व्वेषामेव सैन्यानामासीद्व्यतिकरो महान्।
भिन्नेषु तेन व्यूहेषु क्षत्रिया इतरेतरं। एकमेकं समाहूय युद्धायैवोपतस्थिरे।
शिखण्डी तु समासाद्य भारतानां पितामहं। अभिदुद्राव वेगेन तिष्ठ तिष्ठेति चाब्रवीत्। ४३८५
अनादृत्य ततो भीष्मस्तं शिखण्डिनमाहवे। प्रययौ सृञ्जयान् भीष्मः स्त्रीत्वं चिन्त्य शिखण्डिनः।
सृञ्जयास्तु ततो हृष्टा दृष्ट्वा भीष्मं महाहवे। सिंहनादान् बहुविधांश्चक्रुः शङ्खविमिश्रितान्।
ततः प्रववृते युद्धं व्यतिषक्तरथद्विपं। अपरां दिशमास्थाय स्थिते सवितरि प्रभो।
धृष्टद्युम्नोऽथ पाञ्चाल्यः सात्यकिश्च महारथः। पीडयन्तौ भृशं सैन्यं शक्तितोमरवृष्टिभिः।
शरैश्च बहुभी राजञ्जघ्नतुस्तावकान् रणे। ते हन्यमानाः समरे तावकाः पुरुषर्षभ। ४३९०
आर्य्यां युद्धे मतिं कृत्वा न त्यजन्ति स्म संयुगं। यथोत्साहञ्च समरे जघ्नुर्लोकमहारथाः।
तत्राक्रन्दो महानासीत्तावकानां महात्मनां। वध्यतां समरे राजन् पार्षतेन महात्मना।
तं श्रुत्वा निनदं घोरं तावकानां महारथौ। विन्दानुविन्दावावन्त्यौ पार्षतं प्रत्युपस्थितौ।
तौ तस्य तुरगान् हत्वा त्वरमाणौ महारथौ। छादयामासतुरुभौ शरवर्षेण पार्षतं।
अवप्लुत्याथ पाञ्चाल्यो रथात्तूर्णं महारथः। आरुरोह रथं तूर्णं सात्यकेः सुमहात्मनः। ४३९५
ततो युधिष्ठिरो राजा महत्या सेनया वृतः। आवन्त्यौ समरे क्रुद्धावभ्ययात् स परन्तपौ।
तथैव तव पुत्त्रोऽपि सर्व्वोद्योगेन मारिष। विन्दानुविन्दौ समरे परिवार्य्योपतस्थिवान्।
अर्ज्जुनश्चापि संक्रुद्धः समरे क्षत्रियर्षभान्। अयोधयत सङ्ग्रामे वज्रपाणिरिवासुरान्।
द्रोणश्च समरे क्रुद्धः पुत्त्रस्य प्रियकृत्तव। व्यधमत् सर्व्वपाञ्चालांस्तूलराशिमिवानलः।
दुर्य्योधनपुरोगास्तु पुत्त्रास्तव विशाम्पते। परिवार्य्य रणे भीष्मं युयुधुः पाण्डवैः सह। ४४००
ततो दुर्य्योधनो राजा लोहितायति भास्करे। प्रावर्त्तत नदी घोरा शोणितौघतरङ्गिणी।
गोमायुगणसङ्कीर्णा क्षणेन रजनीमुखे। शिवाभिरशिवाभिश्च रुवद्भिर्भैरवं रवं।
घोरमायोधनं जज्ञे भूतसङ्घसमाकुलं। राक्षसाश्च पिशाचाश्च तथाऽन्ये पिशिताशनाः।
समन्ततो व्यदृश्यन्त शतशोऽथ सहस्रशः। अर्ज्जुनोऽथ सुशर्म्मादीन् राज्ञस्तान् सपदानुगान्।
विजित्य पृतनामध्ये ययौ स्वशिबिरं प्रति। युधिष्ठिरोऽपि कौरव्यो भ्रातृभिः सहितः प्रभुः। ४४०५
प्रययौ शिबिरं राजन्निशायां सेनया वृतः। भीमसेनोऽपि राजेन्द्र दुर्य्योधनमुखान् रथान्।

अवजित्य नृपान् सङ्ख्ये प्रययौ शिविरम्प्रति । दुर्य्योधनोऽपि नृपतिः परिवार्य्य महारणे ।
भीष्मं शान्तनवं तूर्णं प्रययौ शिविरं प्रति । द्रोणो द्रौणिः कृपः शल्यः कृतवर्म्मा च सात्वतः ।
परिवार्य्य चमूं सर्व्वां प्रययुः शिविरं प्रति । तथैव सात्यकीराजन् धृष्टद्युम्नश्च पार्षतः ।
परिवार्य्य रणे योधान्ययतुः शिविरं प्रति । एवमेते महाराज तावकाः पाण्डवैः सह । ३८४०
पर्य्यवर्त्तन्त सहिता निशाकाले परन्तपाः । ततः स्वशिविरं गत्वा पाण्डवाः कुरवस्तथा ।
न्यविशन्त महाराज पूजयन्तः परस्परं । रक्षां कृत्वात्मनः शूरान् न्यस्यगुल्मान्यथाविधि ।
अपनीय च शल्यांस्ते स्नात्वा च विविधैर्जलैः । कृतस्वस्त्ययनाः सर्व्वे स्तूयमानाश्च वन्दिभिः ।
गीतवादित्रशब्देश्च व्यक्रीडन्त यशस्विनः । मुहूर्त्तमिव तत्सर्व्वमभवत् स्वर्गसंमितं ।
न हि युद्धकथाङ्काञ्चित्तत्र चक्रुर्नरर्षभाः । ते प्रसुप्ते बले तत्र परिश्रान्तजने नृप । ३८४५
हस्त्यश्वबहुले राजन् प्रेक्षणीये बभूवतुः ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मबधपर्व्वणि सप्तमदिवसयुद्धावहारे सप्ताशीतोऽध्यायः ॥ ८७ ॥

॥ सञ्जय उवाच ॥ परिणाम्य निशान्तान्तु सुखसुप्ता जनेश्वराः । कुरवः पाण्डवाश्चैव पुनर्युद्धाय निर्ययुः ।
ततः शब्दो महानासीत् सैन्ययोरुभयोरपि । निर्गच्छमानयोः सङ्ख्ये सागरप्रतिमो महान् ।
ततो दुर्य्योधनो राजा चित्रसेनो विविंशतिः । भीष्मश्च रथिनां श्रेष्ठो भारद्वाजश्च वीर्य्यवान् ।
एकीभूताः सुसंयत्ताः कौरवाणां महारथाः । व्यूहाय विदधूराजन् पाण्डवान् प्रति दंशिताः । ३८५०
भीष्मः कृत्वा महाव्यूहं पिता तव विशाम्पते । सागरप्रतिमङ्घोरं वाहनोर्म्मितरङ्गितं ।
अग्रतः सर्व्वसैन्यानां भीष्मः शान्तनवो ययौ । मालवैर्दाक्षिणात्यैश्च आवन्त्यैश्च समन्वितः ।
ततोऽनन्तरमेवासीद्भारद्वाजः प्रतापवान् । पुलिन्दैः पारदैश्चैव तथा क्षुद्रकमालवैः ।
द्रोणादनन्तरं यत्तो भगदत्तः प्रतापवान् । मागधैश्च कलिङ्गैश्च पिशाचैश्च विशाम्पते ।
भगदत्तादनु नृपः कौशल्योऽथ वृहद्बलः । मेलकैस्त्रैपुरैश्चैव चिच्छिलैश्च समन्वितः । ३८५५
वृहद्बलस्ततः शूरस्त्रैगर्त्तः प्रस्थलाधिपः । काम्बोजैर्ब्बहुभिः सार्द्धं यवनैश्च सहस्रशः ।
द्रौणिश्च रभसः शूरस्त्रिगर्त्तादनु भारत । प्रययौ सिंहनादेन नादयानो धरातलं ।
तथा सर्व्वेण सैन्येन राजा दुर्य्योधनस्तदा । द्रौणेरनन्तरं प्रायात् सोदरैः परिवारितः ।
दुर्य्योधनादनु ततः कृपः शारद्वतो ययौ । एवमेष महाव्यूहः प्रययौ सागरोपमः ।
रेजुस्तत्र पताकाश्च श्वेतच्छत्त्राणि वा विभो । अङ्गदान्यथ चित्राणि महार्हाणि धनूंषि च । ३८६०
तन्तु दृष्ट्वा महाव्यूहं तावकानां महारथः । युधिष्ठिरोऽब्रवीत्तूर्णं पार्षतं पृतनापतिं ।
पश्य व्यूहं महेष्वास निर्म्मितं सागरोपमं । प्रतिव्यूहन्त्वमपि वै कुरु पार्षत माचिरं ।
ततः स पार्षतः शूरो व्यूहञ्चक्रे सुदारुणं । शृङ्गाटकं महाराज परव्यूहविनाशनं ।
शृङ्गाभ्यां भीमसेनश्च सात्यकिश्च महारथः । रथैरनेकसाहस्रैस्तथा हयपदातिभिः ।
नाभ्यामभून्नरश्रेष्ठ श्वेताश्वो वानरध्वजः । मध्ये युधिष्ठिरो राजा माद्रीपुत्त्रौ च पाण्डवौ । ३८६५

अथेतरे महेष्वासाः सहसैन्या नराधिपाः। व्यूहं तं पूरयामासुर्व्यूहशास्त्रविशारदाः।
अभिमन्युस्ततः पश्चाद्विराटश्च महारथः। द्रौपदेयाश्च संहृष्टा राक्षसश्च घटोत्कचः।
एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः। अतिष्ठन् समरे शूरा योद्धुकामा जयैषिणः।
भेरीशब्दाश्च तुमुला विमिश्राः शङ्खनिःस्वनैः। क्ष्वेडितास्फोटितोत्क्रुष्टैः सुभीमाः सर्व्वतो दिशः।
ततः शूराः समासाद्य समरे ते परस्परं। नेत्रैरनिमिषैराजन्नवैक्षन्त परस्परं। ३८७०
मनोभिस्ते मनुष्येन्द्र पूर्व्वं योधाः परस्परं। युद्धाय समवर्त्तन्त समाहूयेतरेतरं।
ततः प्रववृते युद्धं घोररूपं भयावहं। तावकानां परेषाञ्च निघ्नतामितरेतरं।
नाराचा निशिताः सङ्ख्ये सम्पतन्ति स्म भारत। व्यात्तानना भयकरा उरगा इव सर्व्वशः।
निष्पेतुर्व्विमलाः शक्त्यस्तैलधौताः सुतेजनाः। अम्बुदेभ्यो यथा राजन् भ्राजमानाः शतह्रदाः।
गदाश्च विमलैः पट्टैः पिनद्धाः स्वर्णभूषिताः। पतन्त्यस्तत्र दृश्यन्ते गिरिशृङ्गोपमाः शुभाः। ३८७५
निस्त्रिंशाश्च व्यराजन्त विमलाम्बरसन्निभाः। आर्षभाणि च चर्म्माणि शतचन्द्राणि भारत।
अशोभन्त रणे राजन् पतमानानि सर्व्वशः। अन्योऽन्यं समरे सैन्ये युध्यमाने नराधिप।
अशोभेतां यथा दैत्यदेवसैन्ये समुद्यते। अभ्यवर्त्तन्त समरे तेऽन्योऽन्यं वै समन्ततः।
रथास्तु रथिभिस्तूर्णं प्रेषिताः परमाहवे। युगैर्युगानि संश्लिष्य युयुधुः पार्थिवर्षभाः।
दन्तिनां युध्यमानानां सङ्घर्षात् पावकोऽभवत्। दन्तेषु भरतश्रेष्ठ सधूमः सर्व्वतो दिशं। ३८८०
प्रासैरभिहताः केचिद्गजयोधाः समन्ततः। पतमानाः स्म दृश्यन्ते गिरिशृङ्गान्नगा इव।
पदातयस्त्वदृश्यन्त निघ्नन्तो हि परस्परं। चित्ररूपधराः शूरा नखरप्रासयोधिनः।
अन्योऽन्यन्ते समासाद्य कुरुपाण्डवसैनिकाः। शस्त्रैर्नानाविधाकारै रणे निन्युर्यमक्षयं।
ततः शान्तनवो भीष्मो रथघोषेण नादयन्। अभ्यागमद्रणे पाण्डून् धनुःशब्देन मोहयन्।
पाण्डवानां रथाश्चापि नदन्तो भैरवं रवं। अभ्यद्रवन्त संयत्ता धृष्टद्युम्नपुरोगमाः। ३८८५
ततः प्रववृते युद्धं तव तेषाञ्च भारत। नराश्वरथनागानां व्यतिषक्तं परस्परं।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि अष्टमदिवसयुद्धारम्भे अष्टाशीतोऽध्यायः॥ ८८॥
॥ सञ्जय उवाच॥ भीष्मन्तु समरे क्रुद्धं प्रपतन्तं समन्ततः। न शेकुः पाण्डवा द्रष्टुं तपन्तमिव भास्करं।
ततः सर्व्वाणि सैन्यानि धर्म्मपुत्रस्य शासनात्। अभ्यद्रवन्त गाङ्गेयं मर्दयन्तं शितैः शरैः।
स तु भीष्मो रणश्लाघी सोमकान् सहसृञ्जयान्। पाञ्चालांश्च महेष्वासान् पातयामास सायकैः।
ते वध्यमाना भीष्मेण पाञ्चालाः सोमकैः सह। भीष्ममेवाभ्ययुस्तूर्णं त्यक्त्वा मृत्युकृतं भयं। ३८९०
स तेषां रथिनाम्वीरो भीष्मः शान्तनवो युधि। चिच्छेद समरे राजन् बाहूनथ शिरांसि च।
विरथान् रथिनश्चक्रे पिता देवव्रतस्तव। पतितान्युत्तमाङ्गानि हयेभ्यो हयसादिनां।
निर्म्मनुष्यांश्च मातङ्गान् शयानान् पर्व्वतोपमान्। अपश्याम महाराज भीष्मास्त्रेण प्रमोहितान्।
न तत्रासीत् पुमान् कश्चित् पाण्डवानां विशाम्पते। अन्यत्र रथिनां श्रेष्ठाद्भीमसेनात् महाबलात्।

स हि भीष्मं समासाद्य ताडयामास संयुगे । ततो निष्टानको घोरो भीष्मभीमसमागमे ।　　३८९५
बभूव सर्व्वसैन्यानां घोररूपो भयानकः । तथैव पाण्डवा हृष्टाः सिंहनादमथानदन् ।
ततो दुर्य्योधनो राजा सोदर्य्यैः परिवारितः । भीष्मं जुगोप समरे वर्त्तमाने जनक्षये ।
भीमस्तु सारथिं हत्वा भीष्मस्य रथिनाम्बरः । विद्रुताश्वे रथे तस्मिन् द्रवमाणे समन्ततः ।
सुनाभस्य शरेणाशु शिरश्चिच्छेद चारिहा । क्षुरप्रेण सुतीक्ष्णेन स हतो न्यपतद्भुवि ।
तस्मिन् हते महेष्वासे तव पुत्त्रे महारथे । नामृष्यन्त रणे शूराः सोदर्य्याः सप्त मारिष ।　　३९००
आदित्यकेतुर्व्बह्वाशी कुण्डधारो महोदरः । अपराजितः पण्डितको विशालाक्षः सुदुर्जयः ।
पाण्डवं चित्रसन्नाहा विचित्रकवचायुधाः । अभ्यवर्त्तन्त सङ्ग्रामे योद्धुकामारिमर्द्दनाः ।
महोदरस्तु समरे भीमं विव्याध पत्त्रिभिः । नवभिर्व्वज्रसङ्काशैर्नमुचिं वृत्रहा यथा ।
आदित्यकेतुः सप्तत्या बह्वाशी चापि पञ्चभिः । नवत्या कुण्डधारस्तु विशालाक्षस्तु सप्तभिः ।
अपराजितो महाराज पराजिष्णुर्महारथः । शरैर्बहुभिरानर्च्छद्भीमसेनं महाबलं ।　　३९०५
रणे पण्डितकश्चैनं त्रिभिर्व्वाणैः समर्पयत् । स तन्नमम्षे भीमः शत्रुभिर्व्वधमाहवे ।
धनुः प्रपीड्य वामेन करेणामित्रकर्षणः । शिरश्चिच्छेद समरे शरेणानतपर्व्वणा ।
अपराजितस्य सुनसं तव पुत्त्रस्य संयुगे । पराजितस्य भीमेन निपपात शिरो महीं ।
अथापरेण भल्लेन कुण्डधारं महारथं । प्राहिणोन्मृत्युलोकाय सर्व्वसैन्यस्य पश्यतः ।
ततः पुनरमेयात्मा प्रसन्धाय शिलीमुखं । प्रेषयामास समरे पण्डितं प्रति भारत ।　　३९१०
स शरः पण्डितं हत्वा विवेश धरणीतलं । यथा नरं निहत्याशु भुजगः कालचोदितः ।
विशालाक्षशिरश्छित्त्वा पातयामास भूपते । त्रिभिः शरैरदीनात्मा स्मरन् क्लेशं पुरातनं ।
महोदरं महेष्वासं नाराचेन स्तनान्तरे । विव्याध समरे राजन् स हतो न्यपतद्भुवि ।
आदित्यकेतोश्छत्रस्य छित्त्वा वाणेन संयुगे । भल्लेन भृशतीक्ष्णेन शिरश्चिच्छेद भारत ।
बह्वाशिनं ततो भीमः शरेणानतपर्व्वणा । प्रेषयामास संक्रुद्धो यमस्य सदनं प्रति ।　　३९१५
प्रदुद्रुवुस्ततस्तेऽन्ये तव पुत्त्रा विशाम्पते । मन्यमाना हि तत्सत्यं सभायां तस्य भाषितं ।
ततो दुर्य्योधनो राजा भ्रातृव्यसनकर्षितः । अब्रवीत्तावकान् सर्व्वान् भीमोऽयं वध्यतामिति ।
एवमेते महेष्वासाः पुत्त्रास्तव विशाम्पते । भ्रातॄन् सन्दृश्य निहतान् प्रास्मरन् हि तद्वचः ।
यदुक्तवान् महाप्राज्ञः क्षत्ता हितमनामयं । तदिदं समनुप्राप्तं वचनं सत्यवादिनः ।
लोभमोहसमाविष्टः पुत्त्रप्रीत्या जनाधिप । न बुध्यसे पुरा यत्तु तथ्यमुक्तं हितं वचः ।　　३९२०
तथैव च वधार्थाय पुत्त्राणां पाण्डवो बली । नूनं जातो महाबाहुर्य्यथा हन्तीह कौरवान् ।
ततो दुर्य्योधनो राजा भीष्ममासाद्य मारिष । दुःखेन महता विष्टो विललापातिदुःखितः ।
निहता भ्रातरः शूरा भीमसेनेन मे युधि । यतमानास्तथाऽन्येऽपि हन्यन्ते सर्व्वसैनिकाः ।
भवान् मध्यस्थितत्तया नित्यमस्मानुपेक्षते । सोऽहं कापथमारूढः पश्य दैवमिदं मम ।

॥ सञ्जय उवाच ॥ एतच्छ्रुत्वा ततः क्रुद्धः पिता देवव्रतस्तव । सुयोधनमिदं वाक्यमब्रवीत् शान्तनोः सुतः । ३९१९

उक्तमेतन्मया पूर्व्वं द्रोणेन विदुरेण च । गान्धार्य्या च यशस्विन्या तत्त्वं तात न बुद्धवान् ।

समयश्च मया पूर्व्वं कृतो वः शत्रुकर्षण । नाहं युधि विमोक्तव्यो नाप्याचार्य्यः कथञ्चन ।

यं यं हि धार्त्तराष्ट्राणां भीमो द्रक्ष्यति संयुगे । हनिष्यति रणे तन्तं सत्यमेतद्ब्रवीमि ते ।

स त्वं राजन् स्थिरो भूत्वा दृढां कृत्वा रणे मतिं । योधयस्व रणे पार्थान् स्वर्गं कृत्वा परायणं ।

न शक्याः पाण्डवा जेतुं देवैरपि सवासवैः । तस्माद्युद्धे मतिं कृत्वा स्थिरां युध्यस्व भारत । ३९२०

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि आदित्यकेतुप्रभृतिवधे एकोननवतितमोऽध्यायः ॥ ८९ ॥

॥ धृतराष्ट्र उवाच ॥ दृष्ट्वा मम हतान् पुत्त्रान् बहूनेकेन सञ्जय । भीष्मो द्रोणः कृपश्चैव किमकुर्व्वत सञ्जय ।

अहन्यहनि मे पुत्त्राः क्षयं गच्छन्ति सञ्जय । मन्येऽहं सर्व्वथा सूत दैवेनोपहता भृशं ।

यत्र मे तनयाः सर्व्वे जीयन्ते न जयन्त्युत । यत्र द्रोणस्य भीष्मस्य कृपस्य च महात्मनः ।

सौमदत्तेश्च वीरस्य भगदत्तस्य चोभयोः । अश्वत्थाम्नस्तथा तात शूराणां सुमहात्मनां ।

अन्येषाञ्चैव शूराणां मध्यगास्तनया मम । यदहन्यन्त सङ्ग्रामे किमन्यद्भागधेयतः । ३९२५

न हि दुर्य्योधनो मन्दः पुरा प्रोक्तमबुध्यत । वार्य्यमाणो मया तात भीष्मेण विदुरेण च ।

गान्धार्य्या चैव दुर्म्मेधाः सततं प्रियकाम्यया । नावबुध्यत् पुरा मोहात्तस्य प्राप्तमिदं फलं ।

यद्भीमसेनः समरे पुत्त्रान्मम विशेषतः । अहन्यहनि संक्रुद्धो नयते यमसादनं ।

॥ सञ्जय उवाच ॥ इदं तत्समनुप्राप्तं क्षत्तुर्व्वचनमुत्तमं । न बुद्धवानसि विभो प्रोच्यमानं हितं तथा ।

निवारय सुतान् द्यूतात् पाण्डवान् माद्रुहेति च । सुहृदां हितकामानां ब्रुवतां तत्तदेव च । ३९३०

न शुश्रूषसि तद्वाक्यं मर्त्त्यः पथ्यमिवौषधं । तदेव त्वामनुप्राप्तं वचनं साधुभाषितं ।

विदुरद्रोणभीष्माणां तथाऽन्येषां हितैषिणां । अकृत्वा वचनं पथ्यं क्षयं गच्छन्ति कौरवाः ।

तदेतत् समनुप्राप्तं पूर्व्वमेव विशाम्पते । तस्मात्त्वं शृणु तत्त्वेन यथा युद्धमवर्त्तत ।

मध्याह्ने सुमहारौद्रः सङ्ग्रामः समपद्यत । लोकक्षयकरो राजंस्तन्मे निगदतः शृणु ।

ततः सर्व्वाणि सैन्यानि धर्म्मपुत्त्रस्य शासनात् । संरब्धान्यभ्यधावन्त भीष्ममेव जिघांसया । ३९३५

धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः । युक्तानीका महाराज भीष्ममेव समभ्ययुः ।

विराटो द्रुपदश्चैव सहितः सर्व्वसोमकैः । अभ्यद्रवन्त सङ्ग्रामे भीष्ममेव महारथाः ।

कैकेया धृष्टकेतुश्च कुन्तिभोजश्च दंशिताः । युक्तानीका महाराज भीष्ममेव समभ्ययुः ।

अर्ज्जुनो द्रौपदेयाश्च चेकितानश्च वीर्य्यवान् । दुर्य्योधनसमादिष्टान् राज्ञः सर्व्वान् समभ्ययुः ।

अभिमन्युस्तथा वीरो हैडिम्बश्च महारथः । भीमसेनश्च संक्रुद्धस्तेऽभ्यधावत कौरवान् । ३९४०

त्रिधाभूतैरवध्यन्त पाण्डवैः कौरवा युधि । तथैव कौरवै राजन्नवध्यन्त परे रणे ।

द्रोणस्तु रथिनां श्रेष्ठः सोमकान् सृञ्जयैः सह । अभ्यद्रवत संक्रुद्धः प्रेषयिष्यन्यमक्षयं ।

तत्राक्रन्दो महानासीत् सृञ्जयानां महात्मनां । बध्यतां समरे राजन् भारद्वाजेन धन्विना ।

द्रोणेन निहतास्तत्र क्षत्रिया बहवो रणे । विचेष्टन्तो व्यदृश्यन्त व्याधिक्लिष्टा नरा इव ।
कूजतां क्रन्दताञ्चैव स्तनताञ्चैव संयुगे । अनिशं श्रूयते शब्दः क्षुत्क्षामाणां नृणामिव । ३९५५
तथैव कौरवेयाणां भीमसेनो महाबलः । चकार कदनं घोरं क्रुद्धः काल इवापरः ।
वध्यतां तत्र सैन्यानामन्योऽन्येन महारणे । प्रावर्त्तत नदी घोरा रुधिरौघप्रवाहिनी ।
स सङ्ग्रामो महाराज घोररूपोऽभवन्महान् । कुरूणां पाण्डवानाञ्च यमराष्ट्रविवर्द्धनः ।
ततो भीमो रणे क्रुद्धो रभसश्च विशेषतः । गजानीकं समासाद्य प्रेषयामास मृत्यवे ।
तत्र भारत भीमेन नाराचाभिहता गजाः । पेतुः सेदुश्च नेदुश्च दिशश्च परिबभ्रमुः । ३९६०
छिन्नहस्ता महानागाश्छिन्नगात्राश्च मारिष । क्रौञ्चवद्व्यनदंश्चैव पृथिवीमधिशिश्यिरे ।
नकुलः सहदेवश्च हयानीकमभिद्रुतौ । ते हयाः काञ्चनापीडा रुक्मभाण्डपरिच्छदाः ।
वध्यमाना व्यदृश्यन्त शतशोऽथ सहस्रशः । पतद्भिश्च हयै राजन् समास्तीर्य्यत मेदिनी ।
निर्जिह्वैश्च श्वसद्भिश्च कूजद्भिश्च गतासुभिः । हयैर्बभौ नरश्रेष्ठ नानारूपधरैर्धरा ।
अर्ज्जुनेन हतैः सङ्ख्ये तथा भारत राजभिः । प्रबभौ वसुधा घोरा तत्र तत्र विशाम्पते । ३९६५
रथैर्भग्नैर्ध्वजैश्छिन्नैश्छत्रैश्च सुमहाप्रभैः । चामरव्यजनैश्छिन्नैर्निकृत्तैश्च महायुधैः ।
हारैर्निष्कैः सकेयूरैः शिरोभिश्च सकुण्डलैः । उष्णीषैरपविद्धैश्च पताकाभिश्च सर्व्वशः ।
अनुकर्षैः शुभै राजन् योक्त्रैश्च सहरश्मिभिः । संच्छन्ना वसुधा भाति वसन्ते कुसुमैरिव ।
एवमेष क्षयो वृत्तः पाण्डूनामपि भारत । क्रुद्धे शान्तनवे भीष्मे द्रोणे च रथिनाम्वरे ।
अश्वत्थाम्नि कृपे चैव तथैव कृतवर्म्मणि । तथेतरेषु क्रुद्धेषु तावकानामपि क्षयः । ३९७०
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वण्यष्टमदिवसयुद्धे नवतितमोऽध्यायः ॥ ९० ॥
॥ सञ्जय उवाच ॥ वर्त्तमाने तथा रौद्रे राजन् वीरवरक्षये । शकुनिः सौबलः श्रीमान् पाण्डवान् समुपाद्रवत् ।
तथैव सात्वतो राजन् हार्दिक्यः परवीरहा । अभ्यद्रवत सङ्ग्रामे पाण्डवानामनीकिनीं ।
तथा काम्बोजमुख्यानां नदीजानाञ्च वाजिनां । आरट्टानां महीजानां सिन्धुजानाञ्च सर्व्वशः ।
वनायुजानां शुभ्राणां तथा पर्व्वतवासिनां । वाजिनां बहुभिः सङ्ख्ये समन्तात्पर्य्यवारयत् ।
ये चापरे तित्तिरजा जवना वातरंहसः । सुवर्णालङ्कृतैस्तत्र वर्म्मवद्भिः सुकल्पितैः । ३९७५
हयैर्वातजवैर्मुख्यैः पाण्डवस्य सुतो बली । अभ्यवर्त्तत तत्सैन्यं हृष्टरूपः परन्तपः ।
अर्ज्जुनस्यात्मजः श्रीमान् इरावान्नाम वीर्य्यवान् । सुतायां नागराजस्य जातः पार्थेन धीमता ।
ऐरावतेन सा दत्ता ह्यनपत्या महात्मना । पत्यौ हते सुपर्णेन कृपणा दीनचेतना ।
भार्य्यार्थं ताञ्च जग्राह पार्थः कामवशानुगां । एवमेष समुत्पन्नः परक्षेत्रेऽर्ज्जुनात्मजः ।
स नागलोके संवृद्धो मात्रा च परिरक्षितः । पितृव्येण परित्यक्तः पार्थद्वेषाद्दुरात्मना । ३९८०
रूपवान् बलसम्पन्नो गुणवान् सत्यविक्रमः । इन्द्रलोकं जगामाशु श्रुत्वा तत्रार्ज्जुनं गतं ।
सोऽभिगम्य महाबाहुः पितरं सत्यविक्रमः । अभ्यवादयत व्यग्रो नियमेन कृताञ्जलिः ।

न्यवेदयत चात्मानमर्ज्जुनस्य महात्मनः । इरावानस्मि भद्रन्ते पुत्त्रश्चाहं तव प्रभो ।
मातुः समागमो यस्तु तत्सर्व्वं प्रत्यवेदयत् । तच्च सर्व्वं यथावृत्तं अनुसस्मार पाण्डवः ।
परिष्वज्य सुतञ्चापि सोऽात्मनः सदृशं गुणैः । प्रीतिमानभवत्पार्थो देवराजनिवेशने । ३९८५
सोऽर्जुनेन समादिष्टो देवलोके तदा नृप । प्रीतिपूर्व्वं महाबाहुः स्वकार्य्यं प्रति भारत ।
युद्धकाले त्वयाऽस्माकं सह्यं देयमिति प्रभो । वाढमित्येवमुक्त्वा च युद्धकाल उपागतः ।
कामवर्णजवैरश्वैः संवृतो बहुभिर्नृप । ते हयाः काञ्चनापीडा नानावर्णा महाजवाः ।
उत्पेतुः सहसा राजन् हंसा इव महोदधौ । ते त्वदीयान् समासाद्य हयसङ्घान् महाजवान् ।
क्रोडैः क्रोडानभिघ्नन्तो घोणाभिश्च परस्परं । निपेतुः सहसा राजन् स्ववेगाभिहता भुवि । ३९९०
निपतद्भिस्तथा तैश्च हयसङ्घैः परस्परं । शुश्रुवे दारुणः शब्दः सुपर्णपतने यथा ।
तथैव च महाराज समेत्यान्योऽन्यमाहवे । परस्परवधं घोरं चक्रुस्ते हयसादिनः ।
तस्मिंस्तदा वर्त्तमाने सङ्कुले तुमुले भृशं । उभयोरपि सम्भ्रान्ता हयसङ्घाः समन्ततः ।
प्रक्षीणसायकाः शूरा निहताश्वाः श्रमातुराः । विलयं समनुप्राप्तास्तक्ष्यमाणाः परस्परं ।
ततः क्षीणे हयानीके किञ्चिच्छिष्टे च भारत । सौबलस्यानुजाः शूरा निर्गता रणमूर्द्धनि । ३९९५
वायुवेगसमस्पर्शान् वायुवेगसमान् जवे । आरुह्य शीलसम्पन्नान् वयःस्थान् तुरगोत्तमान् ।
गजो गवाक्षो वृषभश्चर्म्मवानार्ज्जवः शुकः । षडेते बलसम्पन्ना निर्ययुर्महतो बलात् ।
वार्य्यमाणाः शकुनिना स्वैश्च योधैर्महाबलैः । सन्नद्धा युद्धकुशला रौद्ररूपा महाबलाः ।
तदनीकं महाबाहो भित्त्वा परमदुर्ज्जयं । बलेन महता युक्ताः स्वर्गाय विजयैषिणः ।
विविशुस्ते तदा हृष्टा गान्धारा युद्धदुर्मदाः । तान् प्रहृष्टांस्तदा दृष्ट्वा इरावानथ वीर्य्यवान् । ४०००
अब्रवीत् समरे योधान्विचित्राभरणायुधान् । यथैते धार्त्तराष्ट्रस्य योधाः सायुधवाहनाः ।
हन्यन्ते समरे सर्व्वे तथा नीतिर्विधीयतां । वाढमित्येवमुक्त्वा ते सर्व्वे योधा इरावतः ।
जघ्नुस्तेषां बलानीकं दुर्जयं समरे परैः । तदनीकमनीकेन समरे वीक्ष्य पातितं ।
अमृष्यमाणास्ते सर्व्वे सुबलस्यात्मजा रणे । इरावन्तमभिद्रुत्य सर्व्वतः पर्य्यवारयन् ।
ताडयन्तः शितैः प्रासैश्चोदयन्तः परस्परं । ते शूराः पर्य्यधावन्त कुर्व्वन्तो महदाकुलं । ४००५
इरावानपि निर्विद्धः प्रासैस्तीक्ष्णैर्महात्मभिः । स्रवता रुधिरेणाक्तस्तोत्त्रैर्विद्ध इव द्विपः ।
उरस्यपि च पृष्ठे च पार्श्वयोश्च भृशाहतः । एको बहुभिरत्यर्थं धैर्य्याद्राजन्न विव्यथे ।
इरावानथ संक्रुद्धः सर्व्वांस्तान्निशितैः शरैः । मोहयामास समरे विद्ध्वा परपुरञ्जयः ।
प्रासानुत्कृष्य सर्व्वांश्च स्वशरीरादरिन्दमः । तैरेव ताडयामास सुबलस्यात्मजान्रणे ।
निष्कृष्य च शितं खड्गं गृहीत्वा च शरावरं । पदातिस्तूर्णमागच्छज्जिघांसुः सौबलान् युधि । ४०१०
ततः प्रत्यागतप्राणाः सर्व्वे ते सुबलात्मजाः । भूयः क्रोधसमाविष्टा इरावन्तमभिद्रुताः ।
इरावानपि खड्गेन दर्शयन् पाणिलाघवं । अभ्यवर्त्तत तान् सर्व्वान् सौबलान् बलदर्प्पितः ।

लाघवेनाथ चरतः सर्व्वे ते सुबलात्मजाः । अन्तरं नाभ्यगच्छन्त चरन्तः शीघ्रगैर्हयैः ।
भूयिष्ठमथ तं सर्व्वे सम्प्रदृश्य ततः पुनः । परिवार्य्य भृशं सर्व्वे ग्रहीतुमुपचक्रमुः ।
अथाभ्यासगतानां स खड्गेनामित्रकर्षणः । अभिहस्तापहस्ताभ्यां तेषां गात्राण्यकृन्तत । ४०१५
आयुधानि च सर्व्वेषां बाहूनपि च भूषितान् । अपतन्त निकृत्ताङ्गा हता भूमौ गतासवः ।
वृषभस्तु महाराज बहुधा परिरक्षितः । अमुच्यत महारौद्रात्तस्माद्वीरावकर्त्तनात् ।
तान् सर्व्वान् पतितान् दृष्ट्वा सुतो दुर्य्योधनस्तव । अभ्यभाषत संक्रुद्धो राक्षसं घोरदर्शनं ।
आर्ष्यशृङ्गिं महेष्वासं मायाविनमरिन्दमं । वैरिणं भीमसेनस्य ख्यातं बकवधेन वै ।
पश्य वीर यथा ह्येष फाल्गुनस्य सुतो बली । मायावी विप्रियं घोरं माकार्षीन्मे बलक्षयं । ४०२०
त्वञ्च कामगमस्तात मायास्त्रे च विशारदः । कृतवैरश्च पार्थेन तस्मादेनं रणे जहि ।
बाढमित्येवमुक्त्वा तु राक्षसो घोरदर्शनः । प्रययौ सिंहनादेन यत्रार्जुनसुतो युवा ।
आरूढैर्युद्धकुशलैर्व्विमलप्रासयोधिभिः । वीरैः प्रहारिभिर्युक्तैः स्वैरनीकैः समावृतः ।
ततः शेषैर्महाराज द्विसाहस्रैर्हयोत्तमैः । निहन्तुकामः समरे इरावन्तं महाबलं ।
इरावानपि संक्रुद्धस्त्वरमाणः पराक्रमी । हन्तुकामममित्रघ्नो राक्षसं प्रत्यवारयत् । ४०२५
तमापतन्तं सम्प्रेक्ष्य राक्षसः सुमहाबलः । त्वरमाणस्ततो मायां प्रयोक्तुमुपचक्रमे ।
तेन मायामयाः सृष्टा हयास्तावन्त एव हि । आरूढा राक्षसैर्घोरैः शूलपट्टिशपाणिभिः ।
ते संरब्धाः समागम्य द्विसाहस्राः प्रहारिणः । अचिराद्गमयामासुः प्रेतलोकं परस्परं ।
तस्मिंस्तु निहते सैन्ये तावुभौ युद्धदुर्म्मदौ । सङ्ग्रामे व्यवतिष्ठेतां यथा वै वृत्रवासवौ ।
आद्रवन्तमभिप्रेक्ष्य राक्षसं युद्धदुर्म्मदं । इरावान् क्रोधसंरब्धो वारयन् सुमहाबलः । ४०३०
समभ्यासगतस्याजौ तस्य खड्गेन दुर्म्मतेः । चिच्छेद कार्म्मुकं क्षिप्रं शरान् वै पञ्च पञ्चधा ।
स निकृत्तं धनुर्दृष्ट्वा स्वञ्जवेन समाविशत् । इरावन्तमभिक्रुद्धं मोहयन्निव मायया ।
ततोऽन्तरीक्षमुत्पत्य इरावानपि राक्षसं । विमोहयित्वा मायाभिस्तस्य गात्राणि संयुगे ।
चिच्छेद सर्व्वधर्म्मज्ञः कामरूपो दुरासदः । तथा स राक्षसश्रेष्ठः कृत्तः कृत्तः पुनः पुनः ।
सम्बभूव महाराज समवाप्य च यौवनं । माया हि सहजा तेषां वयोरूपञ्च कामजं । ४०३५
एवं तद्राक्षसस्याङ्गं छिन्नं छिन्नं व्यरोहत । इरावानथ संक्रुद्धो राक्षसं तं महाबलं ।
परश्वधेन तीक्ष्णेन चिच्छेद च पुनः पुनः । स तेन बलिना वीरश्छिद्यमान इव द्रुमः ।
राक्षसो व्यनदद्घोरं स शब्दस्तुमुलोऽभवत् । परश्वधक्षतं रक्षः सुस्राव रुधिरं बहु ।
ततश्चुक्रोध बलवांश्चक्रे वेगञ्च संयुगे । आर्ष्यशृङ्गिस्ततो दृष्ट्वा समरे शत्रुमूर्ज्जितं ।
कृत्वा घोरं महद्रूपं ग्रहीतुमुपचक्रमे । अर्ज्जुनस्य सुतं वीरमिरावन्तं यशस्विनं । ४०४०
सङ्ग्रामशिरसो मध्ये सर्व्वेषां तत्र पश्यतां । तां दृष्ट्वा तादृशीं मायां राक्षसस्य महात्मनः ।
इरावानपि संक्रुद्धो मायां स्रष्टुं प्रचक्रमे । तस्य क्रोधाभिभूतस्य संयुगे ष्वनिवर्त्तिनः ।

योऽन्वयो मातृकस्तस्य स एनमभिपेदिवान्। स नागैर्बहुशो राजन् सर्व्वतः संवृतो रणे।
दधार सुमहद्रूपमनन्त इव वेगवान्। ततो बहुविधैर्नागैश्छादयामास राक्षसं।
छाद्यमानस्तु नागैः स ध्यात्वा राक्षसपुङ्गवः। सौपर्णं रूपमास्थाय भक्षयामास पन्नगान्। ४०३५
मायया भक्षिते तस्मिन्नन्वये तस्य मातृके। विमोहितमिरावन्तमसिना राक्षसोऽवधीत्।
सकुण्डलं समुकुटं पद्मेन्दुसदृशप्रभं। इरावतः शिरो रक्षः पातयामास भूतले।
तस्मिंस्तु निहते वीरे राक्षसेनार्ज्जुनात्मजे। विशोकाः समपद्यन्त धार्त्तराष्ट्राः सराजकाः।
तस्मिन् महति सङ्ग्रामे तादृशे भैरवे पुनः। महान् व्यतिकरो घोरः सैन्ययोः समपद्यत।
हया गजाः पदाताश्च विमिश्रा दन्तिभिर्हताः। रथाश्वा दन्तिनश्चैव पत्तिभिस्तत्र सूदिताः। ४०४०
तथा पत्तिरथौघाश्च हयाश्च बहवो रणे। रथिभिर्निहता राजंस्तव तेषाञ्च सङ्कुले।
अजानन्नर्ज्जुनश्चापि निहतं पुत्रमौरसं। जघान समरे शूरान् राजंस्तान् भीष्मरक्षिणः।
तथैव तावका राजन् सृञ्जयाश्च सहस्रशः। जुहुवुः समरे प्राणान्निजघ्नुरितरेतरं।
मुक्तकेशाश्च रथिनश्छिन्नवाहविकार्मुकाः। बाहुभिः समयुध्यन्त समवेताः परस्परं।
तथा मर्म्मातिगैर्भीष्मो निजघान महारथान्। कम्पयन् समरे सेनां पाण्डवानां महाबलः। ४०४५
तेन यौधिष्ठिरे सैन्ये बहवो मानवा हताः। दन्तिनः सादिनश्चैव रथिनोऽथ हयास्तथा।
तत्र भारत भीष्मस्य रणे दृष्ट्वा पराक्रमं। तथैव भीमसेनस्य पार्षतस्य च भारत।
रौद्रमासीत्तथा युद्धं सात्वतस्य च धन्विनः। दृष्ट्वा द्रोणस्य विक्रान्तं पाण्डवान् भयमाविशत्।
एक एव रणे शक्तो हन्तुमस्मान् ससैनिकान्। किं पुनः पृथिवीशूरैर्योधव्रातैः समावृतः।
इत्यब्रुवन्महाराज पार्था द्रोणेन पीडिताः। वर्त्तमाने तथा रौद्रे सङ्ग्रामे भरतर्षभ। ४०५०
उभयोः सेनयोः शूरा नामृष्यन्त परस्परं। आविष्टा इव युध्यन्ते रक्षोभूतैर्महाबलाः।
तावकाः पाण्डवेयाश्च संरब्धास्तात धन्विनः। न स्म पश्यामहे कश्चिद्यः प्राणान् परिरक्षति।
सङ्ग्रामे दैत्यसदृशे तस्मिन् वीरवरक्षये।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि इरावद्वधे एकनवततमोऽध्यायः॥ ९१ ॥
॥ धृतराष्ट्र उवाच ॥ इरावन्तन्तु निहतं श्रुत्वा पार्था महारथाः। सङ्ग्रामे यदकुर्व्वन्त तन्ममाचक्ष्व सञ्जय।
॥ सञ्जय उवाच ॥ इरावन्तन्तु निहतं सङ्ग्रामे वीक्ष्य राक्षसः। व्यनदत् सुमहानादं भैमसेनिर्घटोत्कचः। ४०५५
नदतस्तस्य शब्देन पृथिवी सागराम्बरा। सपर्व्वतवना राजंश्चचाल सुभृशं तदा।
अन्तरीक्षं दिशश्चैव सर्व्वाश्च प्रदिशस्तथा। तं श्रुत्वा सुमहानादं तव सैन्यस्य भारत।
ऊरुस्तम्भः समभवद्वेपथुः स्वेद एव च। सर्व्व एव च राजेन्द्र तावका दीनचेतसः।
सर्पवत् समवेष्टन्त सिंहाद्भीता गजा इव। निनदन् सुमहानादं निर्घातमिव राक्षसः।
ज्वलितं शूलमुद्यम्य रूपं कृत्वा विभीषणं। नानाप्रहरणैर्घोरैर्वृतो राक्षसपुङ्गवैः। ४०६०
आजगाम सुसंक्रुद्धः कालान्तकयमोपमः। तमापतन्तं सम्प्रेक्ष्य संक्रुद्धं भीमदर्शनं।

स्वं बलञ्च भयात्तस्य प्रायशो विमुखीकृतं । ततो दुर्य्योधनो राजा घटोत्कचमुपाद्रवत् ।
सङ्गृह्य सशरं चापं सिंहवद्विनदन्मुहुः । पृष्ठतोऽनुययौ चैनं स्रवद्भिः पर्व्वतोपमैः ।
कुञ्जरैर्दशसाहस्रैर्व्वङ्गानामधिपः स्वयं । तमापतन्तं सम्प्रेक्ष्य गजानीकेन संवृतं ।
पुत्त्रं तव महाराज चुकोप स निशाचरः । ततः प्रववृते युद्धं तुमुलं लोमहर्षणं । ४०७५
राक्षसानाञ्च राजेन्द्र दुर्य्योधनबलस्य तु । गजानीकञ्च सम्प्रेक्ष्य मेघवृन्दमिवोद्यतं ।
अभ्यधावन् सुसंक्रुद्धा राक्षसाः शस्त्रपाणयः । नदन्तो विविधान्नादान्मेघा इव सविद्युतः ।
शरशक्त्यृष्टिनाराचैर्निघ्नन्तो गजयोधिनः । भिन्दिपालैस्तथा शूलैर्मुद्गरैः सपरश्वधैः ।
पर्व्वताग्रैश्च वृक्षैश्च निजघ्नुस्ते महागजान् । भिन्नकुम्भान् विरुधिरान् भिन्नगात्रांश्च वारणान् ।
अपश्याम महाराज बध्यमानान्निशाचरैः । तेषु प्रक्षीयमाणेषु भग्नेषु गजयोधिषु । ४०८०
दुर्य्योधनो महाराज राक्षसान् समुपाद्रवत् । अमर्षवशमापन्नस्त्यक्त्वा जीवितमात्मनः ।
मुमोच निशितान् वाणान् राक्षसेषु महाबलः । जघान स महेष्वासः प्रधानांस्तत्र राक्षसान् ।
संक्रुद्धो भरतश्रेष्ठ पुत्त्रो दुर्य्योधनस्तव । वेगवन्तं महारौद्रं विद्युज्जिह्वं प्रमाथिनं ।
शरैश्चतुर्भिश्चतुरो निजघान महारथः । ततः पुनरमेयात्मा शरवर्षं दुरासदं ।
मुमोच भरतश्रेष्ठ निशाचरबलं प्रति । तत्तु दृष्ट्वा महत्कर्म्म तव पुत्त्रस्य मारिष । ४०८५
क्रोधेनाभिप्रजज्वाल भैमसेनिर्महाबलः । विस्फार्य्य स महच्चापमिन्द्राशनिसमप्रभं ।
अभिदुद्राव वेगेन दुर्य्योधनमरिन्दमं । तमापतन्तमुद्वीक्ष्य कालसृष्टमिवान्तकं ।
न विव्यथे महाराज पुत्त्रो दुर्य्योधनस्तव । तथैनमब्रवीत् क्रुद्धः क्रोधसंरक्तलोचनः ।
अद्यानृण्यं गमिष्यामि पितॄणां मातुरेव च । ये त्वया सुनृशंसेन दीर्घकालं प्रवासिताः ।
यच्च ते पाण्डवा राजन् पणद्यूते पराजिताः । यच्चैव द्रौपदी कृष्णा एकवस्त्रा रजस्वला । ४०९०
सभामानीय दुर्बुद्धे बहुधा क्लेशिता त्वया । तव च प्रियकामेन आश्रमस्था दुरात्मना ।
सैन्धवेन परिक्लिष्टा परिभूय पितॄन् मम । एतेषामवमानानामन्येषाञ्च कुलाधम ।
अन्तमद्य गमिष्यामि यदि नोत्सृज्यसे रणं । एवमुक्त्वा तु हैडिम्बो महद्विस्फार्य्य कार्मुकं ।
सन्दश्य दशनैरोष्ठं सृक्किणी परिसंलिहन् । महता शरवर्षेण दुर्य्योधनमवाकिरत् ।
पर्व्वतं वारिधाराभिः प्रावृषीव बलाहकः । ४०९५
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि हैडिम्बयुद्धे द्विनवतोऽध्यायः ॥ ९२ ॥
॥ सञ्जय उवाच ॥ ततस्तद्वाणवर्षन्तु दुःसहं दानवैरपि । दधार युधि राजेन्द्रो यथा वर्षं महाद्विपः ।
ततः क्रोधसमाविष्टो निश्वसन्निव पन्नगः । संशयं परमं प्राप्तः पुत्त्रस्ते भरतर्षभ ।
मुमोच निशितांस्तीक्ष्णान्नाराचान् पञ्चविंशतिं । तेऽपतन् सहसा राजंस्तस्मिन् राक्षसपुङ्गवे ।
आशीविषा इव क्रुद्धाः पर्व्वते गन्धमादने । स तैर्व्विद्धः स्रवद्रक्तः प्रभिन्न इव कुञ्जरः ।
दध्रे मतिं विनाशाय राज्ञः स पिशिताशनः । जग्राह च महाशक्तिं गिरीणामपि दारिणीं । ४१००

सम्प्रदीप्तां महोल्काभामशनीं ज्वलितामिव । समुद्यच्छन् महाबाहुर्जिघांसुस्तनये तव ।
तामुद्यतामभिप्रेक्ष्य वङ्गानामधिपस्त्वरन् । कुञ्जरं गिरिसङ्काशं राक्षसं प्रत्यचोदयत् ।
स नागप्रवरेणाजौ बलिना शीघ्रगामिना । यतो दुर्य्योधनरथस्तं मार्गं प्रत्यपद्यत ।
रथञ्च वारयामास कुञ्जरेण सुतस्य ते । मार्गमावारितं दृष्ट्वा राज्ञा वङ्गेन धीमता ।
घटोत्कचो महाराज क्रोधसंरक्तलोचनः । उद्यतां तां महाशक्तिं तस्मिंश्चिक्षेप वारणे । ४१०५
स तयाभिहतो राजंस्तेन बाहुविमुक्तया । सञ्जातरुधिरोत्पीडः पपात च ममार च ।
उत्पत्य च गजाच्चापि वङ्गानामीश्वरो बली । जवेन समभिद्रुत्य जगाम धरणीतलं ।
दुर्य्योधनोऽपि सम्प्रेक्ष्य पातितं वरवारणं । प्रभग्नञ्च बलं दृष्ट्वा जगाम परमां व्यथां ।
क्षत्त्रधर्म्मं पुरस्कृत्य आत्मनश्चाभिमानिता । प्राप्तेऽपक्रमणे राजा तस्थौ गिरिरिवाचलः ।
सन्धाय च शितं बाणं कालाग्निसमतेजसं । मुमोच परमक्रुद्धस्तस्मिन् घोरे निशाचरे । ४११०
तमापतन्तं सम्प्रेक्ष्य बाणमिन्द्राशनिप्रभं । लाघवान्मोचयामास महात्मा वै घटोत्कचः ।
भूयश्च विननादोग्रं क्रोधसंरक्तलोचनः । त्रासयन् सर्व्वसैन्यानि युगान्ते जलदो यथा ।
तं श्रुत्वा निनदं घोरं तस्य भीमस्य रक्षसः । आचार्य्यमुपसङ्गम्य भीष्मः शान्तनवोऽब्रवीत् ।
यथैष निनदो घोरः श्रूयते राक्षसेरितः । हैडिम्बो युध्यते नूनं राज्ञा दुर्य्योधनेन ह ।
नैष शक्यो हि सङ्ग्रामे जेतुं भूतेन केनचित् । तत्र गच्छत भद्रं वो राजानं परिरक्षत । ४११५
अभिद्रुतो महाभागो राक्षसेन महात्मना । एतद्धि परमं कृत्यं सर्व्वेषां नः परन्तपाः ।
पितामहवचः श्रुत्वा त्वरमाणा महारथाः । उत्तमं जवमास्थाय प्रययुर्यत्र कौरवः ।
द्रोणश्च सोमदत्तश्च वाह्लिकोऽथ जयद्रथः । कृपो भूरिश्रवाः शल्यश्चावन्त्यः सबृहद्बलः ।
अश्वत्थामा विकर्णश्च चित्रसेनो विविंशतिः । रथाश्चानेकसाहस्रा ये तेषामनुयायिनः ।
अभिद्रुतं परीप्सन्तः पुत्रं दुर्य्योधनं तव । तदनीकमनाधृष्यं पालितन्तु महारथैः । ४१२०
आततायिनमायान्तं प्रेक्ष्य राक्षससत्तमः । नाकम्पत महाबाहुर्मैनाक इव पर्व्वतः ।
प्रगृह्य विपुलं चापं ज्ञातिभिः परिवारितः । शूलमुद्गरहस्तैश्च नानाप्रहरणैरपि ।
ततः समभवद्युद्धं तुमुलं लोमहर्षणं । राक्षसानाञ्च मुख्यस्य दुर्य्योधनबलस्य च ।
धनुषां कूजतां शब्दः सर्व्वतस्तुमुलो रणे । अश्रूयत महाराज वंशानां दह्यतामिव ।
शस्त्राणां पात्यमानानां कवचेषु शरीरिणां । शब्दः समभवद्राजन्नद्रीणामिव भिन्दतां । ४१२५
वीरबाहुविसृष्टानां तोमराणां विशाम्पते । रूपमासीद्वियत्स्थानां सर्पाणामिव सर्पतां ।
ततः परमसंक्रुद्धो विस्फार्य्य सुमहद्धनुः । राक्षसेन्द्रो महाबाहुर्व्विनदन् भैरवं रवं ।
आचार्य्यस्यार्द्धचन्द्रेण क्रुद्धश्चिच्छेद कार्म्मुकं । सोमदत्तस्य भल्लेन ध्वजञ्चोन्मथ्य चानदत् ।
वाह्लिकञ्च त्रिभिर्व्वाणैः प्रत्यविध्यत् स्तनान्तरे । कृपमेकेन विव्याध चित्रसेनं त्रिभिः शरैः ।
पूर्णायतविसृष्टेन सम्यक्प्रणिहितेन च । जत्रुदेशे समासाद्य विकर्णं समताडयत् । ४१३०

व्यषीदत् स रथोपस्थे शोणितेन परिप्लुतः। ततः पुनरमेयात्मा नाराचान्दश पञ्च च।
भूरिश्रवसि संक्रुद्धः प्राहिणोद्भरतर्षभ। ते वर्म्म भित्त्वा तस्याशु प्राविशन् धरणीतलं।
विविंशतेश्च द्रौणेश्च यन्तारौ समताडयत्। तौ पेततू रथोपस्थे रश्मीनुत्सृज्य वाजिनां।
सिन्धुराज्ञोऽर्द्धचन्द्रेण वराहं स्वर्णभूषितं। उन्ममाथ महाराज द्वितीयेनाच्छिनद्धनुः।
चतुर्भिरथ नाराचैरावन्त्यस्य महात्मनः। जघान चतुरो वाहान् क्रोधसंरक्तलोचनः। ४१३५
पूर्णायतविसृष्टेन पीतेन निशितेन च। निर्ब्बिभेद महाराज राजपुत्त्रं बृहद्बलं।
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत्। भृशं क्रोधेन चाविष्टो रथस्थो राक्षसाधिपः।
चिक्षेप निशितांस्तीक्ष्णान् शरानाशीविषोपमान्। बिभिदुस्ते महाराज शल्यं युद्धविशारदं।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मबधपर्व्वणि हैडिम्बयुद्धे त्रिनवतोऽध्यायः॥ ९३ ॥

॥ सञ्जय उवाच ॥ विमुखीकृत्य तान् सर्व्वांस्तावकान् युधि राक्षसः। जिघांसुर्भरतश्रेष्ठ दुर्य्योधनमुपाद्रवत्।
तमापतन्तं सम्प्रेक्ष्य राजानं प्रति वेगितं। अभ्यधावन् जिघांसन्तस्तावका युद्धदुर्मदाः। ४१४०
तालमात्राणि चापानि विकर्षन्तो महारथाः। तमेकमभ्यधावन्त नदन्तः सिंहसङ्घवत्।
अथैनं शरवर्षेण समन्तात् पर्य्यवारयन्। पर्व्वतं वारिधाराभिः शरदीव बलाहकाः।
स गाढविद्धो व्यथितस्तोत्त्रार्दित इव द्विपः। उत्पपात तदाकाशं समन्ताद्वैनतेयवत्।
व्यनदत् सुमहानादं जीमूत इव शारदः। दिशः खं विदिशश्चैव नादयन् भैरवस्वनः।
राक्षसस्य ततः शब्दं श्रुत्वा राजा युधिष्ठिरः। उवाच भरतश्रेष्ठ भीमसेनमरिन्दमं। ४१४५
युध्यते राक्षसो नूनं धार्त्तराष्ट्रैर्महारथैः। यथाऽस्य श्रूयते शब्दो नदतो भैरवस्वनं।
अतिभारञ्च पश्यामि तस्मिन्राक्षसपुङ्गवे। पितामहश्च संक्रुद्धः पाञ्चालान् हन्तुमुद्यतः।
तेषाञ्च रक्षणार्थाय युध्यते फाल्गुनः परैः। एतच्छ्रुत्वा महाबाहो कार्य्यद्वयमुपस्थितं।
गच्छ रक्षस्व हैडिम्बं संशयं परमं गतं। भ्रातुर्व्वचनमाज्ञाय त्वरमाणो वृकोदरः।
प्रययौ सिंहनादेन त्रासयन् सर्व्वपार्थिवान्। वेगेन महता राजन् पर्व्वकाले यथोदधिः। ४१५०
तमन्वयात् सत्यधृतिः सौचित्तिर्युद्धदुर्मदः। श्रेणिमान्वसुदानश्च पुत्त्रः काश्यस्य चाभिभूः।
अभिमन्युमुखाश्चैव द्रौपदेया महारथाः। क्षत्त्रदेवश्च विक्रान्तः क्षत्त्रधर्म्मा तथैव च।
अनूपाधिपतिश्चैव नीलः स्वबलमास्थितः। महता शरवर्षेण हैडिम्बं पर्य्यवारयन्।
कुञ्जरैश्च महामत्तैः षट्सहस्रैः प्रहारिभिः। अभ्यरक्षन्त सहिता राक्षसेन्द्रं घटोत्कचं।
सिंहनादेन महता नेमिघोषेण चैव ह। खुरशब्दनिपातैश्च कम्पयन्तो वसुन्धरां। ४१५५
तेषामापततां श्रुत्वा शब्दं तं तावकं बलं। भीमसेनभयोद्विग्नं विवर्णवदनं तथा।
परिवृत्तं महाराज परित्यज्य घटोत्कचं। ततः प्रववृते युद्धं तत्र तेषां महात्मनां।
तावकानां परेषाञ्च सङ्ग्रामे ह्यनिवर्त्तिनां। नानारूपाणि शस्त्राणि विसृजन्तो महारथाः।
अन्योऽन्यमभिधावन्तः सम्प्रहारं प्रचक्रिरे। व्यतिषक्तं महारौद्रं युद्धं भीरुभयावहं।

हयैर्गजैः समाजग्मुः पदाता रथिभिः सह । अन्योऽन्यं समरे राजन्प्रार्थयमानाः समभ्ययुः । ४१६०
सहसा चाभवत्तीव्रं सन्निपातान्महद्रजः । रथाश्वगजपत्तीनां पादनेमिसमुद्धतं ।
धूमारुणरजस्तीव्रं रणभूमिं समावृणोत् । नैव स्वे न परे राजन् समजानन् परस्परं ।
पिता पुत्रं न जानीते पुत्रो वा पितरं तथा । निर्मर्य्यादे तथाभूते वैशसे लोमहर्षणे ।
शस्त्राणां भरतश्रेष्ठ मनुष्याणाञ्च गर्ज्जतां । सुमहानभवच्छब्दः प्रेतानामिव भारत ।
गजवाजिमनुष्याणां शोणितान्त्रां तरङ्गिणी । प्रावर्त्तत नदी तत्र केशशैवलशाद्वला । ४१६५
नराणां चैव कायेभ्यः शिरसां पततां रणे । शुश्रुवे सुमहान् शब्दः पततामश्मनामिव ।
विशिरस्कैर्मनुष्यैश्च छिन्नगात्रैश्च वारणैः । अश्वैः सम्भिन्नदेहैश्च सङ्कीर्णाऽभूद्वसुन्धरा ।
नानाविधानि शस्त्राणि विसृजन्तो महारथाः । अन्योऽन्यमभिधावन्तः सम्प्रहारार्थमुद्यताः ।
हया हयान् समासाद्य प्रेषिता हयसादिभिः । समाहत्य रणेऽन्योऽन्यं निपेतुर्गतजीविताः ।
नरा नरान् समासाद्य क्रोधरक्तेक्षणा भृशं । उरांस्युरोभिरन्योऽन्यं समाश्लिष्य निजघ्निरे । ४१७०
प्रेषिताश्च महामात्रैर्वारणाः परवारणैः । अभिघ्नन्ति विषाणाग्रैर्वारणानेव संयुगे ।
ते जातरुधिरापीडाः पताकाभिरलङ्कृताः । संसक्ताः प्रत्यदृश्यन्त मेघा इव सविद्युतः ।
केचिद्भिन्ना विषाणाग्रैर्भिन्नकुम्भाश्च तोमरैः । विनदन्तोऽभ्यधावन्त गर्ज्जमाना घना इव ।
केचिद्धस्तैर्द्विधा च्छिन्नैश्छिन्नगात्रास्तथा परे । निपेतुस्तुमुले तस्मिंश्छिन्नपक्षा इवाद्रयः ।
पार्श्वे सुदारितैरन्यैर्वारणैर्वरवारणाः । मुमुचुः शोणितं भूरि धातूनिव धराधराः । ४१७५
नाराचनिहतास्त्वन्ये तथा विद्धाश्च तोमरैः । हयारोहा व्यदृश्यन्त विशृङ्गा इव पर्व्वताः ।
केचित् क्रोधसमाविष्टा मदान्धा निरवग्रहाः । रथान्हयान् पदातींश्च मम्रदुः शतशो रणे ।
तथा हया हयारोहैस्ताडिताः प्रासतोमरैः । तेन तेनाभ्यवर्त्तन्त कुर्व्वन्तो व्याकुला दिशः ।
रथिनो रथिभिः सार्द्धं कुलपुत्रास्तनुत्यजः । परां शक्तिं समास्थाय चक्रुः कर्म्माण्यभीतवत् ।
स्वयम्बर इवामर्द्दे प्रजह्रुरितरेतरं । प्रार्थयाना यशो राजन् स्वर्गं वा युद्धशालिनः । ४१८०
तस्मिंस्तथा वर्त्तमाने सङ्ग्रामे लोमहर्षणे । धार्त्तराष्ट्रं महत् सैन्यं प्रायशो विमुखीकृतं ।
इति श्रीमहाभारते भीष्म पर्व्वणि भीष्मवधपर्व्वणि हैडिम्बयुद्धे चतुर्नवतोऽध्यायः ॥ ९४ ॥
॥ सञ्जय उवाच ॥ स्वसैन्यं निहतं दृष्ट्वा राजा दुर्य्योधनस्तदा । अभ्यधावत संक्रुद्धो भीमसेनमरिन्दमं ।
प्रगृह्य सुमहच्चापमिन्द्राशनिसमप्रभं । महता शरवर्षेण पाण्डवं समवाकिरत् ।
अर्द्धचन्द्रञ्च सन्धाय सुतीक्ष्णं लोमवाहिनं । भीमसेनस्य चिच्छेद चापं क्रोधसमन्वितः ।
तदन्तरे च सम्प्रेक्ष्य त्वरमाणो महारथः । प्रसन्दधे शितं बाणं गिरीणामवदारणं । ४१८५
तेनोरसि महाबाहुर्भीमसेनमताडयत् । स गाढविद्धो व्यथितः सृक्कणी परिलेलिहन् ।
समालम्बे तेजस्वी ध्वजं हेमपरिष्कृतं । तथा विमनसं दृष्ट्वा भीमसेनं घटोत्कचः ।
क्रोधेनाभिप्रजज्वाल दिधक्षन्निव पावकः । अभिमन्युमुखाश्चैव पाण्डवानां महारथाः ।

समभ्यधावन् क्रोशन्तो राजानं जातसंभ्रमाः। सम्प्रेक्ष्य तानापततः संक्रुद्धान् जातसंभ्रमान्।
भारद्वाजोऽब्रवीद्वाक्यं तावकानां महारथान्। क्षिप्रं गच्छत भद्रं वो राजानं परिरक्षत। ४१९०
संशयं परमं प्राप्तं मज्जन्तं व्यसनार्णवे। एते क्रुद्धा महेष्वासाः पाण्डवानां महारथाः।
भीमसेनं पुरस्कृत्य दुर्य्योधनमुपाद्रवन्। नानाविधानि शस्त्राणि विसृजन्तो जये धृताः।
नदन्तो भैरवान्नादांस्त्रासयन्तश्च भूमिमां। तदाचार्य्यवचः श्रुत्वा सोमदत्तपुरोगमाः।
तावकाः समधावन्त पाण्डवानामनीकिनीं। कृपो भूरिश्रवाः शल्यो द्रोणपुत्त्रो विविंशतिः।
चित्रसेनो विकर्णश्च सैन्धवोऽथ बृहद्बलः। आवन्त्यौ च महेष्वासौ कौरवं पर्य्यवारयन्। ४१९५
ते विंशतिपदं गत्वा सम्प्रहारं प्रचक्रिरे। पाण्डवा धार्त्तराष्ट्राश्च परस्परजिघांसवः।
एवमुक्त्वा महाबाहुर्महद्विस्फार्य्य कार्मुकं। भारद्वाजस्ततो भीमं षड्‌विंशत्या समार्दयत्।
भूयश्चैनं महाबाहुः शरैः शीघ्रमवाकिरत्। पर्व्वतं वारिधाराभिः प्रावृषीव बलाहकः।
तं प्रत्यविध्यद्दशभिर्भीमसेनः शिलीमुखैः। त्वरमाणो महेष्वासः सव्ये पार्श्वे महाबलः।
स गाढविद्धो व्यथितो वयोवृद्धश्च भारत। प्रनष्टसंज्ञः सहसा रथोपस्थ उपाविशत्। ४२००
गुरुं प्रव्यथितं दृष्ट्वा राजा दुर्य्योधनः स्वयं। द्रौणायनिश्च संक्रुद्धौ भीमसेनमभिद्रुतौ।
तावापतन्तौ संप्रेक्ष्य कालान्तकयमोपमौ। भीमसेनो महाबाहुर्गदामादाय सत्वरः।
अवप्लुत्य रथात्तूर्णं तस्थौ गिरिरिवाचलः। समुद्यम्य गदां गुर्व्वीं कालदण्डोपमां रणे।
तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणं। कौरवो द्रोणपुत्त्रश्च सहितावभ्यधावतां।
तावापतन्तौ सहितौ त्वरितौ बलिनां वरौ। अभ्यधावत वेगेन भीमसेनो महाबलः। ४२०५
तमापतन्तं सम्प्रेक्ष्य संक्रुद्धं भीमदर्शनं। समभ्यधावंस्त्वरिताः कौरवाणां महारथाः।
भारद्वाजमुखाः सर्व्वे भीमसेनजिघांसया। नानाविधानि शस्त्राणि भीमस्योरस्यपातयन्।
सहिताः पाण्डवं सर्व्वे पीडयन्तः समन्ततः। तं दृष्ट्वा संशयं प्राप्तं पीड्यमानं महारथं।
अभिमन्युप्रभृतयः पाण्डवानां महारथाः। अभ्यधावन् परीप्सन्तः प्राणांस्त्यक्त्वा सुदुस्त्यजान्।
अनूपाधिपतिः शूरो भीमस्य दयितः सखा। नीलो नीलाम्बुदप्रख्यः संक्रुद्धो द्रौणिमभ्ययात्। ४२१०
स्पर्द्धते हि महेष्वासो नित्यं द्रोणसुतेन सः। स विस्फार्य्य महच्चापं द्रौणिं विव्याध पत्त्रिणा।
यथा शक्रो महाराज पुरा विव्याध दानवं। विप्रचित्तिं दुराधर्षं देवतानां भयङ्करं।
येन लोकत्रयं क्रोधात्त्रासितं स्वेन तेजसा। तथा नीलेन निर्भिन्नः सुमुक्तेन पतत्त्रिणा।
सञ्जातरुधिरोत्पीडो द्रौणिः क्रोधसमन्वितः। स विस्फार्य्य धनुश्चित्रमिन्द्राशनिसमस्वनं।
दध्रे नीलविनाशाय मतिं मतिमतांवरः। ततः सन्धाय विमलान् भल्लान् कर्म्मारमार्ज्जितान्। ४२१५
जघान चतुरो वाहान् पातयामास च ध्वजं। सप्तमेन च भल्लेन नीलं विव्याध वक्षसि।
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत्। मोहितं वीक्ष्य राजानं नीलमभ्रचयोपमं।
घटोत्कचोऽपि संक्रुद्धो भ्रातृभिः परिवारितः। अभिदुद्राव वेगेन द्रौणिमाहवशोभिनं।

तथेतरे चाभ्यधावन् राक्षसा युद्धदुर्मदाः । तमापतन्तं सम्प्रेक्ष्य राक्षसं घोरदर्शनं ।
अभ्यधावत तेजस्वी भारद्वाजात्मजश्चरन् । निजघान तु संक्रुद्धो राक्षसान् भीमदर्शनान् । ४२१०
येऽभवन्नग्रतः क्रुद्धा राक्षसस्य पुरःसराः । विमुखांश्चैव तान् दृष्ट्वा द्रौणिचापच्युतैः शरैः ।
अक्रुध्यत महाकायो भैमसेनिर्घटोत्कचः । प्रादुश्चक्रे महामायां घोररूपां सुदारुणां ।
मोहयन् समरे द्रौणिं मायावी राक्षसाधिपः । ततस्ते तावकाः सर्व्वे मायया विमुखीकृताः ।
अन्योऽन्यं समपश्यन्त निकृत्ता मेदिनीतले । विचेष्टमानाः कृपणाः शोणितेन परिप्लुताः ।
द्रोणो दुर्य्योधनः शल्य अश्वत्थामा तथैव च । प्रवराश्च महेष्वासा ये प्रधानाः स्म कौरवाः । ४२१५
विध्वस्ता रथिनः सर्व्वे राजानश्च निपातिताः । हयाश्चैव हयारोहा विनिकृत्ताः सहस्रशः ।
तद्दृष्ट्वा तावकं सैन्यं विद्रुतं शिविरं प्रति । मम प्राक्रोशतो राजंस्तथा देवव्रतस्य च ।
युध्यध्वं मा पलायध्वं मायैषा राक्षसी रणे । घटोत्कचप्रयुक्तेति नातिष्ठन्त विमोहिताः ।
नैव ते श्रद्दधुर्भीता वदतोरावयोर्वचः । तांश्च प्रद्रवतो दृष्ट्वा जयं प्राप्ताश्च पाण्डवाः ।
घटोत्कचेन सहिताः सिंहनादान् प्रचक्रिरे । शङ्खदुन्दुभिनिर्घोषैः समन्तात् नेदिरे भृशं । ४२२०
एवं तव बलं सर्व्वं हैडिम्बेन दुरात्मना । सूर्य्यास्तमनवेलायां प्रभग्नं विद्रुतं दिशः ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि हैडिम्बमायायां पञ्चनवतोऽध्यायः ॥ ९५ ॥
॥ सञ्जय उवाच ॥ तस्मिन् महति संक्रन्दे राजा दुर्य्योधनस्तदा । गाङ्गेयमुपसंगम्य विनयेनाभिवाद्य च ।
तस्य सर्व्वं यथावृत्तमाख्यातुमुपचक्रमे । घटोत्कचस्य विजयमात्मनश्च पराजयं ।
कथयामास दुर्द्धर्षो विनिःश्वस्य पुनः पुनः । अब्रवीच्च तदा राजन् भीष्मं कुरुपितामहं ।
भवन्तं समुपाश्रित्य वासुदेवं यथा परैः । पाण्डवैर्व्विग्रहो घोरः समारब्धो मया प्रभो । ४२२५
एकादश समाख्याता अक्षौहिण्यश्च या मम । निदेशे तव तिष्ठन्ति मया सार्द्धं परन्तप ।
सोऽहं भरतशार्दूल भीमसेनपुरोगमैः । घटोत्कचं समाश्रित्य पाण्डवैर्य्युधि निर्जितः ।
तन्मे दहति गात्राणि शुष्कवृक्षमिवानलः । तदिच्छामि महाभाग त्वत्प्रसादात् परन्तप ।
राक्षसापसदं हन्तुं स्वयमेव पितामह । त्वां समाश्रित्य दुर्द्धर्षं तन्मे कर्त्तुं त्वमर्हसि ।
एतच्छ्रुत्वा तु वचनं राज्ञो भरतसत्तम । दुर्य्योधनमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत् । ४२३०
शृणु राजन् मम वचो यत्त्वां वक्ष्यामि कौरव । यथा त्वया महाराज वर्त्तितव्यं परन्तप ।
आत्मा रक्ष्यो रणे तात सर्व्वावस्थास्वरिन्दम । धर्म्मराजेन सङ्ग्रामस्त्वया कार्य्यः सदाऽनघ ।
अर्ज्जुनेन यमाभ्यां वा भीमसेनेन वा पुनः । राजधर्म्मं पुरस्कृत्य राजा राजानमर्च्छति ।
अहं द्रोणः कृपो द्रौणिः कृतवर्म्मा च सात्वतः । शल्यश्च सोमदत्तिश्च विकर्णश्च महारथः ।
तव च भ्रातरः शूरा दुःशासनपुरोगमाः । त्वदर्थं प्रतियोत्स्यामो राक्षसं तं महाबलं । ४२३५
तस्मिन् रौद्रे राक्षसेन्द्रे यदि ते हृच्छयो महान् । अयं वा गच्छतु रणे तस्य युद्धाय दुर्म्मतेः ।
भगदत्तो महीपालः पुरन्दरसमो युधि । एतावदुक्त्वा राजानं भगदत्तमथाब्रवीत् ।

स तच्च पार्थिवेन्द्रस्य वाक्यं वाक्यविशारदः । भीष्मं गच्छ महाराज हैडिम्बं युद्धदुर्मदं ।
वारयस्व रणे यत्तो मिषतां सर्व्वधन्विनां । राक्षसं क्रूरकर्माणं शक्रस्तारकं पुरा ।
तव शस्त्राणि दिव्यानि विक्रमश्च परन्तप । समागमश्च बहुभिः पुराऽसुरैः सह । ४२५०
त्वं तस्य राजशार्दूल प्रतियोद्धा महाहवे । स्वबलेनाभिसंवृतो राजन् जहि राक्षसपुङ्गवं ।
एतच्छ्रुत्वा तु वचनं भीष्मस्य पृतनापतेः । प्रययौ सिंहनादेन परानभिमुखो द्रुतं ।
तमाद्रवन्तं सम्प्रेक्ष्य गर्जन्तमिव तोयदं । अभ्यवर्त्तन्त संक्रुद्धाः पाण्डवानां महारथाः ।
भीमसेनोऽभिमन्युश्च राक्षसश्च घटोत्कचः । द्रौपदेयाः सत्यधृतिः क्षत्रदेवश्च मारिष ।
चेदिपो वसुदानश्च दशार्णाधिपतिस्तथा । सुप्रतीकेन तांश्चापि भगदत्तोऽभ्युपाद्रवत् । ४२५५
ततः समभवद्युद्धं घोररूपं भयानकं । पाण्डूनां भगदत्तेन यमराष्ट्रविवर्द्धनं ।
प्रयुक्ता रथिभिर्बाणा भीमवेगाः सुतेजनाः । ते निपेतुर्महाराज नागेषु च रथेषु च ।
प्रभिन्नाश्च महानागा विनीता हस्तिसादिभिः । परस्परं समासाद्य सन्निपेतुरभीतवत् ।
मदान्धा रोषसंरब्धा विषाणाग्रैर्महाहवे । बिभिदुर्दन्तमुसलैः समासाद्य परस्परं ।
हयाश्च चामरापीडाः प्रासपाणिभिरास्थिताः । चोदिताः सादिभिः क्षिप्रं सन्निपेतुरभीतवत् । ४२६०
पदाताश्च पदात्योघैस्ताडिताः शक्तितोमरैः । न्यपतन्त तदा भूमौ शतशोऽथ सहस्रशः ।
रथिनश्च रथै राजन् कर्णिनालीकसायकैः । निहत्य समरे वीरान् सिंहनादान्विनेदिरे ।
तस्मिंस्तथा वर्त्तमाने सङ्ग्रामे लोमहर्षणे । भगदत्तो महेष्वासो भीमसेनमथाद्रवत् ।
कुञ्जरेण प्रभिन्नेन सप्तधा स्रवता मदं । पर्व्वतेन यथा तोयं स्रवमाणेन सर्व्वशः ।
किरन् शरसहस्राणि सुप्रतीकशिरोगतः । ऐरावतस्थो भगवान् पुरन्दर इवाऽनघ । ४२६५
स भीमं शरधाराभिस्ताडयामास पार्थिवः । पर्व्वतं वारिधाराभिस्तपान्ते जलदो यथा ।
भीमसेनस्तु संक्रुद्धः पादरक्षान् परःशतान् । निजघान महेष्वासः संक्रुद्धः शरवृष्टिभिः ।
तान्दृष्ट्वा निहतान् क्रुद्धो भगदत्तः प्रतापवान् । चोदयामास नागेन्द्रं भीमसेनरथं प्रति ।
स नागः प्रेषितस्तेन बाणो ज्याचोदितो यथा । अभ्यधावत वेगेन भीमसेनमरिन्दमं ।
तमापतन्तं सम्प्रेक्ष्य पाण्डवानां महारथाः । अभ्यवर्त्तन्त वेगेन भीमसेनपुरोगमाः । ४२७०
केकयाश्चाभिमन्युश्च द्रौपदेयाश्च सर्व्वशः । दशार्णाधिपतिः शूरः क्षत्रदेवश्च मारिष ।
चेदिपश्चित्रकेतुश्च संक्रुद्धाः सर्व्व एव ते । उत्तमास्त्राणि दिव्यानि दर्शयन्तो महाबलाः ।
तमेकं कुञ्जरं क्रुद्धाः समन्तात् पर्य्यवारयन् । स विद्धो बहुभिर्बाणैर्व्यरोचत महाद्विपः ।
सञ्जातरुधिरोत्पीडो धातुचित्र इवाद्रिराट् । दशार्णाधिपतिश्चापि गजं भूमिधरोपमं ।
समास्थितोऽभिदुद्राव भगदत्तस्य वारणं । तमापतन्तं समरे गजं गजपतिः स च । ४२७५
दधार सुप्रतीकोऽपि वेलेव मकरालयं । वारितं प्रेक्ष्य नागेन्द्रं दाशार्णस्य महात्मनः ।
साधु साध्विति सैन्यानि पाण्डवान्यभ्यपूजयन् । ततः प्राग्ज्योतिषः क्रुद्धस्तोमरान् वै चतुर्दश ।

प्राहिणोत्तस्य नागस्य प्रमुखे नृपसत्तम । वर्म्म मुक्त्वा तनुत्राणं शातकुम्भपरिष्कृतं ।
विदार्य्य प्राविशन् क्षिप्रं वल्मीकमिव पन्नगाः । स गाढविद्धो व्यथितो नागो भरतसत्तम ।
उपावृत्तमदः क्षिप्रमभ्यवर्त्तत वेगितः । स प्रदुद्राव वेगेन प्रणदन् भैरवं रवं । ४२८५
संमर्दयानः स्वबलं वायुर्वृक्षानिवौजसा । तस्मिन् पराजिते नागे पाण्डवानां महारथाः ।
सिंहनादं विनद्योच्चैर्युद्धायैवोपतस्थिरे । ततो भीमं पुरस्कृत्य भगदत्तमुपाद्रवन् ।
किरन्तो विविधान् वाणान् शस्त्राणि विविधानि च । तेषामापततां राजन् संक्रुद्धानाममर्षिणां ।
श्रुत्वा स निनदं घोरममर्षाद्गतसाध्वसः । भगदत्तो महेष्वासः स्वं नागं प्रत्यचोदयत् ।
स नागप्रवरः सन्यगङ्कुशाङ्गुष्ठचोदितः । तस्मिन् क्षणे समभवत् सम्वर्त्तक इवानलः । ४२९०
रथसङ्घांस्तथा नागान् हयांश्च सह सादिभिः । अमृद्गन् समरे राजन् सम्प्रधावंस्ततस्ततः ।
पादातांश्च सुसंक्रुद्धः शतशोऽथ सहस्रशः । तेन संलोड्यमानन्तु पाण्डूनां तद्बलं महत् ।
सञ्चुकोच महाराज चर्म्मेवाग्नौ समाहितं । भग्नन्तु स्वबलं दृष्ट्वा भगदत्तेन धीमता ।
घटोत्कचोऽथ संक्रुद्धो भगदत्तमुपाद्रवत् । विकटः पुरुषो राजन् दीप्तास्यो दीप्तलोचनः ।
रूपं विभीषणं कृत्वा रोषेण प्रज्वलन्निव । जग्राह विमलं शूलं गिरीणामपि दारणं । ४२९५
नागं जिघांसुः सहसा चिक्षेप च महाबलः । सविस्फुलिङ्गमालाभिः समन्तात् परिवेष्टितः ।
तमापतन्तं सहसा दृष्ट्वा प्राग्ज्योतिषो नृपः । चिक्षेप रुचिरं तीक्ष्णं अर्द्धचन्द्रं सुदारुणं ।
चिच्छेद सुमहच्छूलं तेन वाणेन वेगवान् । उत्पपात द्विधा छिन्नं शूलं हेमपरिष्कृतं ।
महाशनिर्यथा भ्रष्टा शक्रमुक्ता नभोगता । शूलं निपतितं दृष्ट्वा द्विधा कृत्तं स पार्थिवः ।
रुक्मदण्डां महाशक्तिं जग्राहाग्निशिखोपमां । चिक्षेप तां राक्षसस्य तिष्ठतिष्ठेति चाब्रवीत् । ४३००
तामापतन्तीं संप्रेक्ष्य वियत्स्थामशनीमिव । उत्पत्य राक्षसस्तूर्णं जग्राह च ननाद च ।
बभञ्ज चैनां त्वरितो जानुन्यारोप्य भारत । पश्यतः पार्थिवेन्द्रस्य तदद्भुतमिवाभवत् ।
तदवेक्ष्य कृतं कर्म्म राक्षसेन वलीयसा । दिवि देवाः सगन्धर्व्वा मुनयश्चापि विस्मिताः ।
पाण्डवाश्च महाराज भीमसेनपुरोगमाः । साधुसाध्विति नादेन पृथिवीमन्वनादयन् ।
तं तु श्रुत्वा महानादं प्रहृष्टानां महात्मनां । नामृष्यत महेष्वासो भगदत्तः प्रतापवान् । ४३०५
स विस्फार्य्य महच्चापमिन्द्राशनिसमप्रभं । तर्ज्जयामास वेगेन पाण्डवानां महारथान् ।
विसृजन् विमलांस्तीक्ष्णान्नाराचान् ज्वलनप्रभान् । भीममेकेन विव्याध राक्षसं नवभिः शरैः ।
अभिमन्युं त्रिभिश्चैव केकयान् पञ्चभिस्तथा । पूर्णायतविसृष्टेन शरेणानतपर्व्वणा ।
बिभेद दक्षिणं बाहुं क्षत्रदेवस्य चाहवे । पपात सहसा तस्य सशरं धनुरुत्तमं ।
द्रौपदेयांस्ततः पञ्च पञ्चभिः समताडयत् । भीमसेनस्य च क्रोधान्निजघान तुरङ्गमान् । ४३१०
ध्वजं केसरिणं चास्य चिच्छेद विशिखैस्त्रिभिः । निर्बिभेद त्रिभिश्चान्यैः सारथिं चास्य पत्त्रिभिः ।
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् । विशोको भरतश्रेष्ठ भगदत्तेन संयुगे ।

ततो भीमो महाराज विरथो रथिनां वरः। गदां प्रगृह्य वेगेन प्रचस्कन्द महारथात्।
तमुद्यतगदं दृष्ट्वा सशृङ्गमिव पर्व्वतं। तावकानां भयं घोरं समपद्यत भारत।
एतस्मिन्नेव काले तु पाण्डवः कृष्णसारथिः। आजगाम महाराज निघ्नञ्छत्रून् समन्ततः। ४११५
यत्र तौ पुरुषव्याघ्रौ पितापुत्रौ महारथौ। प्राग्ज्योतिषेण सहितौ भीमसेनघटोत्कचौ।
दृष्ट्वा च पाण्डवो भ्रातॄन् युध्यमानान्महारथान्। त्वरितो भरतश्रेष्ठ तत्रायुध्यत् किरन् शरान्।
ततो दुर्य्योधनो राजा त्वरमाणो महारथः। सेनामचोदयत् क्षिप्रं रथनागसमाकुलां।
तामापतन्तीं सहसा कौरवाणां महाचमूं। अभिदुद्राव वेगेन पाण्डवः श्वेतवाहनः।
भगदत्तोऽपि समरे तेन नागेन भारत। विमृद्नन् पाण्डवबलं युधिष्ठिरमुपाद्रवत्। ४१२०
तदासीत्तुमुलं युद्धं भगदत्तस्य मारिष। पाञ्चालैः सृञ्जयैश्चैव केकयैश्चोद्यतायुधैः।
भीमसेनोऽपि समरे तावुभौ केशवार्जुनौ। आश्रावयद्यथावृत्तमिरावद्वधमुत्तमं।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भगदत्तपराक्रमे षण्णवतोऽध्यायः॥ ९६॥
॥ सञ्जय उवाच॥ पुत्रं तु निहतं श्रुत्वा इरावन्तं धनञ्जयः। दुःखेन महताविष्टो निःश्वसन् पन्नगो यथा।
अब्रवीत् समरे राजन् वासुदेवमिदं वचः। इदं नूनं महाप्राज्ञो विदुरो दृष्टवान् पुरा।
कुरूणां पाण्डवानाञ्च भयं घोरं महामतिः। ततो न्यवारयत वै धृतराष्ट्रं जनेश्वरं। ४१२५
अन्ये च बहवो वीराः सङ्ग्रामे मधुसूदन। निहताः कौरवैः सङ्ख्ये तथाऽस्माभिश्च कौरवाः।
अर्थहेतोर्नरश्रेष्ठ क्रियते कर्म्म कुत्सितं। धिगर्थान् यत्कृते ह्येवं क्रियते ज्ञातिसङ्क्षयः।
अधनस्य मृतं श्रेयो न च ज्ञातिवधाद्धनं। किन्नु प्राप्स्यामहे कृष्ण हत्वा ज्ञातीन् समागतान्।
दुर्य्योधनापराधेन शकुनेः सौबलस्य च। क्षत्रिया निधनं यान्ति कर्णदुर्म्मन्त्रितेन च।
इदानीञ्च विजानामि सुकृतं मधुसूदन। कृतं राज्ञा महाबाहो याचता च सुयोधनं। ४१३०
राज्यार्द्धं पञ्च ग्रामान् वा नाकार्षीत् स च दुर्म्मतिः। दृष्ट्वा च क्षत्रियाञ्छूरान् शयानान् धरणीतले।
निन्दामि भृशमात्मानं धिगस्तु क्षत्रजीविकां। अशक्तमिति मामेते ज्ञास्यन्ति क्षत्रिया रणे।
युद्धन्तु मे न रुचितं ज्ञातिभिर्मधुसूदन। सञ्चोदय हयान् क्षिप्रं धार्त्तराष्ट्रचमूं प्रति।
प्रतरिष्ये महापारं भुजाभ्यां समरोदधिं। नायं क्लीवयितुं कालो विद्यते माधव क्वचित्।
एवमुक्तस्तु पार्थेन केशवः परवीरहा। चोदयामास तानश्वान् पाण्डुरान् वातरंहसः। ४१३५
अथ शब्दो महानासीत्तव सैन्यस्य भारत। मारुतोद्धूतवेगस्य सागरस्येव पर्व्वणि।
अपराह्णे महाराज सङ्ग्रामः समपद्यत। पर्ज्जन्यसमनिर्घोषो भीष्मस्य सह पाण्डवैः।
ततो राजंस्तव सुता भीमसेनमुपाद्रवन्। परिवार्य्य रणे द्रोणं वसवो वासवं यथा।
ततः शान्तनवो भीष्मः कृपश्च रथिनां वरः। भगदत्तः सुशर्म्मा च धनञ्जयमुपाद्रवत्।
हार्द्दिक्यो वाह्लिकश्चैव सात्यकिं समभिद्रुतौ। अम्बष्ठकस्तु नृपतिरभिमन्युमवस्थितः। ४१४०
शेषास्त्वन्ये महाराज शेषानेव महारथान्। ततः प्रववृते युद्धं घोररूपं भयावहं।

भीमसेनस्तु संप्रेक्ष्य पुत्त्रांस्तव जनेश्वर । प्रजज्वाल रणे क्रुद्धो हविषा हव्यवाडिव ।
पुत्त्रास्तु तव कौन्तेयञ्छादयाञ्चक्रिरे शरैः । प्रावृषीव महाराज जलदाः पर्व्वतं यथा ।
संच्छाद्यमानो बहुधा पुत्त्रैस्तव विशाम्पते । सृक्किणी विलिहन् वीरः शार्दूल इव वेगवान् ।
व्यूढोरस्कं ततो भीमः पातयामास भारत । क्षुरप्रेण सुतीक्ष्णेन सोऽभवद्गतजीवितः । ४१२५
अपरेण तु भल्लेन पीतेन निशितेन च । अपातयत् कुण्डलिनं सिंहः क्षुद्रमृगं यथा ।
ततः सुनिशितान् पीतान् समादत्त शिलीमुखान् । ससर्ज्ज त्वरया युक्तः पुत्त्रांस्ते प्राप्य मारिष ।
प्रेषिता भीमसेनेन शरास्ते दृढधन्विना । अपातयन्त पुत्त्रांस्ते रथेभ्यः सुमहारथान् ।
अनाधृष्टिं कुण्डभेदं वैराटं दीर्घलोचनं । दीर्घबाहुं सुबाहुञ्च तथैव कनकध्वजं ।
प्रपतन्ति स्म ते वीरा विरेजुर्भरतर्षभ । वसन्ते पुष्पशबला चूताः प्रपतिता इव । ४१३०
ततः प्रदुद्रुवुः शेषाः पुत्त्रास्तव विशाम्पते । तं कालमिव मन्यन्तो भीमसेनं महाबलं ।
द्रोणस्तु समरे वीरं निर्दहन्तं सुतांस्तव । यथाऽद्रिं वारिधाराभिः समन्ताद्व्यकिरच्छरैः ।
तत्राद्भुतमपश्याम कुन्तीपुत्त्रस्य पौरुषं । द्रोणेन वार्य्यमाणोऽपि निजघ्ने यत् सुतांस्तव ।
यथा हि गोवृषो वर्षं सन्धारयति खात् पतत् । भीमस्तथा द्रोणमुक्तं शरवर्षमदीनवत् ।
अद्भुतञ्च महाराज तत्र चक्रे वृकोदरः । यत् सुतांस्तेऽवधीत् सङ्ख्ये द्रोणञ्चैव न्यवारयत् । ४१३५
पुत्त्रेषु तव वीरेषु चिक्रीडाऽर्जुनपूर्व्वजः । मृगेष्विव महाराज चरन् व्याघ्रो महाबलः ।
यथा हि पशुमध्यस्थो द्रावयेत पशून् वृकः । वृकोदरस्तव सुतांस्तथा व्यद्रावयद्रणे ।
गाङ्गेयो भगदत्तश्च गौतमश्च महारथः । पाण्डवं रभसं युद्धे वारयामासुरर्जुनं ।
अस्त्रैरस्त्राणि संवार्य्य तेषां सोऽतिरथो रणे । प्रवीरांस्तव सैन्येषु प्रेषयामास मृत्यवे ।
अभिमन्युश्च राजानमम्बष्ठं लोकविश्रुतं । विरथं रथिनां श्रेष्ठं कारयामास सायकैः । ४१४०
विरथो वध्यमानः स सौभद्रेण यशस्विना । अवप्लुत्य रथात्तूर्णं सव्रीडो मनुजाधिप ।
असिं चिक्षेप समरे सौभद्रस्य महात्मनः । आरुरोह रथं चैव हार्दिक्यस्य महाबलः ।
आपतन्तञ्च निस्त्रिंशं युद्धमार्गविशारदः । लाघवात् व्यंसयामास सौभद्रः परवीरहा ।
व्यंसितं वीक्ष्य निस्त्रिंशं सौभद्रेण रणे तथा । साधु साध्विति सैन्यानां प्रणादोऽभूद्विशाम्पते ।
धृष्टद्युम्नमुखास्त्वन्ये तव सैन्यमयोधयन् । तथैव तावकाः सर्व्वे पाण्डुसैन्यमयोधयन् । ४१४५
तत्राक्रन्दो महानासीत्तव तेषाञ्च भारत । निघ्नतां दृढमन्योऽन्यं कुर्व्वतां कर्म्म दुष्करं ।
अन्योऽन्यं हि रणे शूराः केशेष्वाक्षिप्य मारिष । नखैर्दन्तैरयुध्यन्त मुष्टिभिर्जानुभिस्तथा ।
तलैश्चैवाथ निस्त्रिंशैर्ब्बाहुभिश्च सुसंस्थितैः । विवरम्प्राप्य चान्योऽन्यमनयन् यमसादनं ।
न्यहनच्च पिता पुत्त्रं पुत्त्रश्च पितरं तथा । व्याकुलीकृतसर्व्वाङ्गा युयुधुस्तत्र मानवाः ।
रणे चारूणि चापानि हेमपृष्ठानि भारत । हतानामपविद्धानां कलापाश्च महाधनाः । ४१५०
जातरूपमयैः पुङ्खै राजतैर्निशिताः शराः । तैलधौता व्यराजन्त निर्मुक्तभुजगोपमाः ।

हस्तिदन्तत्सरून् खड्गान् जातरूपपरिष्कृतान्। चर्म्माणि चापविद्धानि रुक्मचित्राणि धन्विनां।
सुवर्णविकृतान् प्रासान् पट्टिशान् हेमभूषितान्। जातरूपमयी यष्टीः शक्तीश्च कनकोज्ज्वलाः।
सुवर्णांशांश्च पतितान् मुषलानि गुरूणि च। परिघान् पट्टिशांश्चैव भिन्दिपालांश्च मारिष।
पतितान् विविधान् चापान् चित्रहेमपरिष्कृतान्। कुथाश्च बहुधाकाराः चामरव्यजनानि च। ४१७५
नानाविधानि शस्त्राणि विसृज्य पतिता नराः। जीवन्त इव दृश्यन्ते गतसत्त्वा महारथाः।
गदाविमथितैर्गात्रैर्मुषलैर्भिन्नमस्तकाः। गजवाजिरथक्षुण्णाः शेरते स्म नराः क्षितौ।
तथैवाश्वनृनागानां शरीरैराबभौ तदा। संछन्ना वसुधा राजन् पर्व्वतैरिव सर्व्वशः।
समरे पतितैश्चैव शक्त्यृष्टिशरतोमरैः। निस्त्रिंशैः पट्टिशैः प्रासैरयःकुन्तैः परश्वधैः।
परिघैर्भिन्दिपालैश्च शतघ्नीभिस्तथैव च। शरीरैः शस्त्रभिन्नैश्च समास्तीर्य्यत मेदिनी। ४१८०
विशब्दैरल्पशब्दैश्च शोणितौघपरिप्लुतैः। गतासुभिरमित्रघ्न विबभौ संवृता मही।
सतलत्रैः सकेयूरैर्बाहुभिश्चन्दनोक्षितैः। हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनां।
बद्धचूडामणिधरैः शिरोभिश्च सकुण्डलैः। पातितैर्वृषभाक्षाणां बभौ भारत मेदिनी।
कवचैः शोणितादिग्धैर्विप्रकीर्णैश्च काञ्चनैः। रराज सुभृशं भूमिः शान्तार्च्चिर्भिरिवानलैः।
विप्रविद्धैः कलापैश्च पतितैश्च शरासनैः। विप्रकीर्णैः शरैश्चापि रुक्मपुङ्खैः समन्ततः। ४१८५
रथैश्च बहुभिर्भग्नैः किङ्किणीजालभूषितैः। वाजिभिश्च हतैः कीर्णैः स्रस्तजिह्वैः सशोणितैः।
अनुकर्षैः पताकाभिरुपासङ्गैर्ध्वजैरपि। प्रवीराणां महाशङ्खैर्विप्रकीर्णैः सुपाण्डुरैः।
स्रस्तहस्तैश्च मातङ्गैः शयानैर्विबभौ मही। नानारूपैरलङ्कारैः प्रमदेवाभ्यलङ्कृता।
दन्तिभिश्चापरैस्तत्र सप्रासैर्गाढवेदनैः। करैः शब्दं विमुञ्चद्भिः शीत्कारैश्च मुहुर्मुहुः।
विबभौ तद्रणस्थानं स्यन्दमानैरिवाचलैः। नानावर्णैः कम्बलैश्च परिस्तोमैश्च दन्तिनां। ४१९०
वैदूर्य्यमणिदण्डैश्च पतितैरङ्कुशैः शुभैः। घण्टाभिश्च गजेन्द्राणां पतिताभिः समन्ततः।
विपाटितविचित्राभिः कुथाभी राङ्कवैस्तथा। ग्रैवेयैश्चित्ररूपैश्च रुक्मकक्ष्याभिरेव च।
यन्त्रैश्च बहुधाच्छिन्नैस्तोमरैश्चापि काञ्चनैः। अश्वानां रेणुकपिलै रुक्मच्छन्नैरुरश्छदैः।
सादिनां च भुजैश्छिन्नैः पतितैः साङ्गदैस्तथा। प्रासैश्च विमलैस्तीक्ष्णैर्विमलाभिश्च यष्टिभिः।
उष्णीषैश्च तथा चित्रैर्विप्रविद्धैस्ततस्ततः। विचित्रैरर्द्धचन्द्रैश्च जातरूपपरिष्कृतैः। ४१९५
अश्वास्तरपरिस्तोमै राङ्कवैर्मृदितैस्तथा। नरेन्द्रचूडामणिभिर्विचित्रैश्च महाधनैः।
छत्रैस्तथापविद्धैश्च चामरव्यजनैरपि। पद्मेन्दुद्युतिभिश्चैव वदनैश्चारुकुण्डलैः।
कॢप्तश्मश्रुभिरत्यर्थं वीराणां समलङ्कृतैः। अपविद्धैर्महाराज सुवर्णोज्ज्वलकुण्डलैः।
ग्रहनक्षत्रशबला द्यौरिवासीद्वसुन्धरा। एवमेते महासेने मृदिते तत्र भारत।
परस्परं समासाद्य तव तेषाञ्च संयुगे। तेषु श्रान्तेषु भग्नेषु मृदितेषु च भारत। ४२००
रात्रिः समभवद्घोरा नापश्याम ततो रणं। ततोऽवहारं सैन्यानां प्रचक्रुः कुरुपाण्डवाः।

घोरे निशामुखे रौद्रे वर्त्तमाने सुदारुणे । अवहारं ततः कृत्वा सहिताः कुरुपाण्डवाः ।
न्यविशन्त यथाकालं गत्वा स्वं शिबिरं तदा ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि अष्टमदिवसयुद्धावहारे सप्तनवतितमोऽध्यायः ॥ ९७ ॥
॥ सञ्जय उवाच ॥ ततो दुर्य्योधनो राजा शकुनिश्चापि सौबलः । दुःशासनश्च पुत्रस्ते सूतपुत्रश्च दुर्ज्जयः ।
समागम्य महाराज मन्त्रं चक्रुर्विवक्षितं । कथं पाण्डुसुताः संख्ये जेतव्याः सगणा इति । ४४०५
ततो दुर्य्योधनो राजा सर्व्वांस्तानाह मन्त्रिणः । सूतपुत्रं समाभाष्य सौबलञ्च महाबलं ।
द्रोणो भीष्मः कृपः शल्यः सौमदत्तिश्च संयुगे । न पार्थान् प्रतिबाधन्ते न जाने तत्र कारणं ।
अवध्यमानास्ते चापि क्षपयन्ति बलं मम । सोऽस्मि क्षीणबलः कर्ण क्षीणशस्त्रश्च संयुगे ।
निकृतः पाण्डवैः शूरैरवध्यैर्दैवतैरपि । सोऽहं संशयमापन्नः प्रहरिष्ये कथं रणे ।
तमब्रवीन्महाराज सूतपुत्रो नराधिपं । ४४१०
॥ कर्ण उवाच ॥ मा शुचो भरतश्रेष्ठ करिष्येऽहं प्रियं तव । भीष्मः शान्तनवस्तूर्णमपयातु महारणात् ।
निवृत्ते युधि गाङ्गेये न्यस्तशस्त्रे च भारत । अहं पार्थान् हनिष्यामि सहितान् सर्व्वसोमकैः ।
पश्यतो युधि भीष्मस्य शपे सत्येन ते नृप । पाण्डवेषु दयां नित्यं स हि भीष्मः करोति वै ।
अशक्तश्च रणे भीष्मो जेतुमेतान् महारथान् । अभिमानी रणे भीष्मो नित्यं चापि रणप्रियः ।
स कथं पाण्डवान् युद्धे जेष्यते तात सङ्गतान् । स त्वं शीघ्रमितो गत्वा भीष्मस्य शिबिरं प्रति । ४४१५
अनुमान्य गुरुं वृद्धं शस्त्रं न्यासय भारत । न्यस्तशस्त्रे ततो भीष्मे निहतान् पश्य पाण्डवान् ।
मयैकेन रणे राजन् ससुहृद्गणबान्धवान् । एवमुक्तस्तु कर्णेन पुत्रो दुर्य्योधनस्तव ।
अब्रवीत् भ्रातरं तत्र दुःशासनमिदं वचः । अनुयात्रं यथा सज्जं सर्व्वं भवति सर्व्वशः ।
दुःशासन तथा क्षिप्रं सर्व्वमेवोपपादय । एवमुक्त्वा ततो राजन् कर्णमाह जनेश्वरः ।
अनुमान्य रणे भीष्ममेषोऽहं द्विपदाम्बरं । आगमिष्ये ततः क्षिप्रं त्वत्सकाशमरिन्दम । ४४२०
अपयाते ततो भीष्मे प्रहरिष्यसि संयुगे । निष्पपात ततस्तूर्णं पुत्रस्तव विशाम्पते ।
सहितो भ्रातृभिः सर्व्वैर्देवैरिव शतक्रतुः । ततस्तं नृपशार्दूलं शार्दूलसमविक्रमं ।
आरोहयद्धयं तूर्णं भ्राता दुःशासनस्तथा । अङ्गदी बद्धमुकुटो हस्ताभरणवान्नृप ।
धार्त्तराष्ट्रो महाराज विबभौ स पथि व्रजन् । भाण्डीपुष्पनिकाशेन तपनीयनिभेन च ।
अनुलिप्तः परार्द्ध्येन चन्दनेन सुगन्धिना । अरजोऽम्बरसंवीतः सिंहखेलगतिर्नृप । ४४२५
शुशुभे विमलार्च्चिष्मान्नभसीव दिवाकरः । तं प्रयान्तं नरव्याघ्रं भीष्मस्य शिबिरं प्रति ।
अनुजग्मुर्महेष्वासाः सर्व्वलोकस्य धन्विनः । भ्रातरश्च महेष्वासास्त्रिदशा इव वासवं ।
हयानन्ये समारुह्य गजानन्ये च भारत । रथानन्ये नरश्रेष्ठाः परिवव्रुः समन्ततः ।
आत्तशस्त्राश्च सुहृदो रक्षणार्थं महीपतेः । प्रादुर्ब्बभूवुः सहिताः शक्रस्येवामरा दिवि ।
सम्पूज्यमानः कुरुभिः कौरवाणां महाबलः । प्रययौ सदनं राजा गाङ्गेयस्य यशस्विनः । ४४३०

सम्पीयमानः सततं सोदरैः परिवारितः। दक्षिणं दक्षिणः काले संहृत्य स्वभुजं तदा।
हस्तिहस्तोपमं पीनं सर्व्वशत्रुनिवर्हणं। प्रगृह्य चाञ्जलीन् नृणामुद्यतान् सर्व्वतो दिशः।
शुश्राव मधुरा वाचो नानादेशनिवासिनां। संस्तूयमानः सूतैश्च मागधैश्च महायशाः।
पूजयानश्च तान् सर्व्वान् सर्व्वलोके महेश्वरः। प्रदीपैः काञ्चनैस्तत्र गन्धतैलावसेचितैः।
परिवव्रुर्महात्मानः प्रज्वलद्भिः समन्ततः। स तैः परिवृतो राजा प्रदीपैः काञ्चनैर्ज्वलन्। ४४३५
शुशुभे चन्द्रमा युक्तो दीप्तैरिव महाग्रहैः। काञ्चनोष्णीषिणस्तत्र वेत्रझर्झरपाणयः।
प्रोत्सारयन्तः शनकैस्तं जनं सर्व्वतो दिशं। सम्प्राप्य तु ततो राजा भीष्मस्य सदनं शुभं।
अवतीर्य्य हयाच्चापि भीष्मं प्राप्य जनेश्वरः। अभिवाद्य ततो भीष्मं निषण्णः परमासने।
काञ्चने सर्व्वतोभद्रे स्पर्द्ध्यास्तरणसंवृते। उवाच प्राञ्जलिर्भीष्मं वाष्पकण्ठोऽश्रुलोचनः।
त्वां वयं हि समाश्रित्य संयुगे शत्रुसूदन। उत्सहेम रणे जेतुं सेन्द्रानपि सुरासुरान्। ४४४०
किमु पाण्डुसुतान् वीरान् ससुहृद्गणबान्धवान्। तस्मादर्हसि गाङ्गेय कृपां कर्त्तुं मयि प्रभो।
जहि पाण्डुसुतान् वीरान् महेन्द्र इव दानवान्। अहं सर्व्वान् महाराज निहनिष्यामि सोमकान्।
पाञ्चालान् केकयैः सार्द्धं करूषांश्चेति भारत। त्वद्वचः सत्यमेवास्तु जहि पार्थान् समागतान्।
सोमकांश्च महेष्वासान् सत्यवाग्भव भारत। दयया यदि वा राजन् द्वेष्यभावान्मम प्रभो।
मन्दभाग्यतया वाऽपि यदि रक्षसि पाण्डवान्। अनुजानीहि समरे कर्णमाहवशोभिनं। ४४४५
स जेष्यति रणे पार्थान् ससुहृद्गणबान्धवान्। स एवमुक्ता नृपतिः पुत्त्रो दुर्य्योधनस्तव।
नोवाच वचनं किञ्चिद्भीष्मं भीमपराक्रमं।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मदुर्य्योधनसंवादे अष्टनवतोऽध्यायः ॥ ९८ ॥
॥ सञ्जय उवाच ॥ वाक्शल्यैस्तव पुत्त्रेण सोऽतिविद्धो महामनाः। महमानो यथा नागः प्रतुन्नो वाक्शलाकया।
दुःखेन महताविष्टो नोवाच प्रियमप्यपि। स ध्यात्वा सुचिरं कालं दुःखरोषसमन्वितः।
उद्धृत्य चक्षुषी कोपान्निर्दहन्निव भारत। सदेवासुरगन्धर्व्वं लोकं लोकविदां वरः। ४४५०
अब्रवीत् तव पुत्त्रं तु सामपूर्व्वमिदं वचः। किं त्वं दुर्य्योधनैवं मां वाक्शल्यैरपकृन्तसि।
घटमानं यथाशक्ति कुर्व्वाणञ्च तव प्रियं। जुह्वानं समरे प्राणांस्तवैव प्रियकाम्यया।
यदा तु पाण्डवः शूरः खाण्डवेऽग्निमतर्पयत्। पराजित्य रणे शक्रं पर्य्याप्तं तन्निदर्शनं।
यदा च त्वां महाबाहो गन्धर्व्वैर्हृतमोजसा। अमोचयत् पाण्डुसुतः पर्य्याप्तं तन्निदर्शनं।
द्रवमाणेषु शूरेषु सोदरेषु तव प्रभो। सूतपुत्त्रे च राधेये पर्य्याप्तं तन्निदर्शनं। ४४५५
यच्च नः सहितान् सर्व्वान् विराटनगरे तदा। एक एव समुद्यातः पर्य्याप्तं तन्निदर्शनं।
द्रोणञ्च युधि संरब्धं माञ्च निर्ज्जित्य संयुगे। वासांसि च समादत्त पर्य्याप्तं तन्निदर्शनं।
यथा द्रौणिं महेष्वासं शारद्वतमथापि च। गोग्रहे जितवान् पूर्व्वं पर्य्याप्तं तन्निदर्शनं।
विजित्य च यथा कर्णं सदा पुरुषमानिनं। उत्तरायै ददौ वस्त्रं पर्य्याप्तं तन्निदर्शनं।

निवातकवचान् युद्धे वासवेनापि दुर्जयान्। जितवान् समरे पार्थः पर्य्याप्तं तन्निदर्शनं। ४४६०
को हि शक्तो रणे जेतुं पाण्डवं रभसं तदा। यस्य गोप्ता जगद्गोप्ता शङ्खचक्रगदाधरः।
वासुदेवोऽनन्तशक्तिः सृष्टिसंहारकारकः। सर्व्वेश्वरो देवदेवः परमात्मा सनातनः।
उक्तो हि बहुशो राजन् नारदाद्यैर्महर्षिभिः। त्वन्तु मोहान्न जानीषे वाच्यावाच्यं सुयोधन।
मुमूर्षुर्हि नरः सर्व्वान् वृक्षान् पश्यति काञ्चनान्। तथा त्वमपि गान्धारे विपरीतानि पश्यसि।
स्वयं वैरं महत्कृत्वा पाण्डवैः सह सृञ्जयैः। युध्यस्व तानद्य रणे पश्यामः पुरुषो भव। ४४६५
अहन्तु सोमकान् सर्व्वान् पाञ्चालांश्च समागतान्। निहनिष्ये नरव्याघ्र वर्ज्जयित्वा शिखण्डिनं।
तैरहं निहतः सङ्ख्ये गमिष्ये यमसादनं। तान् वा निहत्य समरे प्रीतिं दास्याम्यहं तव।
पूर्व्वं हि स्त्री समुत्पन्ना शिखण्डी राजवेश्मनि। वरदानात् पुमान् जातः सैषा वै स्त्री शिखण्डिनी।
तमहं न हनिष्यामि प्राणत्यागेऽपि भारत। याऽसौ प्राङ्निर्म्मिता धात्रा सैषा वै स्त्री शिखण्डिनी।
सुखं स्वपिहि गान्धारे श्वोऽस्मि कर्त्ता महारणं। यं जनाः कथयिष्यन्ति यावत् स्थास्यति मेदिनी। ४४७०
एवमुक्तस्तव सुतो निर्ज्जगाम नरेश्वर। अभिवाद्य गुरुं मूर्द्ध्ना प्रययौ स्वं निवेशनं।
आगत्य तु ततो राजा विसृज्य च महाजनं। प्रविवेश ततस्तूर्णं क्षयं शत्रुक्षयङ्करः।
प्रविष्टः स निशां ताञ्च गमयामास पार्थिवः। प्रभातायाञ्च शर्व्वर्य्यां प्रातरुत्थाय तान्नृपः।
राज्ञः समाज्ञापयत सेना योजयतेति ह। अद्य भीष्मो रणे क्रुद्धो निहनिष्यति सोमकान्।
दुर्य्योधनस्य तच्छ्रुत्वा रात्रौ विलपितं बहु। मन्यमानः स तं राजन् प्रत्यादेशमिवात्मनः। ४४७५
निर्व्वेदं परमं गत्वा विनिन्द्य परवाच्यतां। दीर्घं दध्यौ शान्तनवो योद्धुकामोऽर्ज्जुनं रणे।
इङ्गितेन तु तज्ज्ञात्वा गाङ्गेयेन विचिन्तितं। दुर्य्योधनो महाराज दुःशासनमचोदयत्।
दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः। द्वाविंशतिमनीकानि सर्व्वाण्येवातिचोदय।
इदं हि समनुप्राप्तं वर्षपूगाभिचिन्तितं। पाण्डवानां ससैन्यानां वधो राज्यस्य चागमः।
तत्र कार्य्यतमं मन्ये भीष्मस्यैवाभिरक्षणं। स नो गुप्तः सहायः स्यात् हन्यात् पार्थांश्च संयुगे। ४४८०
अब्रवीद्धि विशुद्धात्मा नाहं हन्यां शिखण्डिनं। स्त्रीपूर्व्वको ह्यसौ राजन् तस्माद्वर्ज्यो मया रणे।
लोकस्तद्वेद यदहं पितुः प्रियचिकीर्षया। राज्यं स्फीतं महाबाहो स्त्रियश्च त्यक्तवान् पुरा।
नैव चाहं स्त्रियं जातु न स्त्रीपूर्व्वं कथञ्चन। हन्यां युधि नरश्रेष्ठ सत्यमेतद्ब्रवीमि ते।
अयं स्त्रीपूर्व्वको राजन् शिखण्डी यदि ते श्रुतः। उद्योगे कथितं यत्तत्तथा जाता शिखण्डिनी।
कन्या भूत्वा पुमान् जातः स च मां योधयिष्यति। तस्याहं प्रमुखे बाणान् न मुञ्चेयं कथञ्चन। ४४८५
युद्धे हि क्षत्रियांस्तात पाण्डवानां जयैषिणः। सर्व्वानन्यान् हनिष्यामि सम्प्राप्तान् रणमूर्द्धनि।
एवं मां भरतश्रेष्ठो गाङ्गेयः प्राह शास्त्रवित्। तत्र सर्व्वात्मना मन्ये गाङ्गेयस्यैव पालनं।
अरक्ष्यमाणं हि वृको हन्यात् सिंहं महावने। मा वृकेणेव गाङ्गेयं घातयेम शिखण्डिना।
मातुलः शकुनिः शल्यः कृपो द्रोणो विविंशतिः। यत्ता रक्षन्तु गाङ्गेयं तस्मिन् गुप्ते ध्रुवो जयः।

एतच्छ्रुत्वा तु ते सर्व्वे दुर्य्योधनवचस्तदा । सर्व्वतो रथवंशेन गाङ्गेयं पर्य्यवारयन् । ४४९०

पुत्राश्च तव गाङ्गेयं परिवार्य्य ययुस्तदा । कम्पयन्तो भुवं द्याञ्च क्षोभयन्तश्च पाण्डवान् ।

तैरथैः सुप्रसंयुक्तैर्द्दन्तिभिश्च महारथाः । परिवार्य्य रणे भीष्मं दंशिताः समवस्थिताः ।

यथा देवासुरे युद्धे त्रिदशा वज्रधारिणं । सर्व्वे ते स्म व्यतिष्ठन्त रक्षन्तस्तं महारथं ।

ततो दुर्य्योधनो राजा पुनर्भ्रातरमब्रवीत् । सव्यं चक्रं युधामन्युरुत्तमौजाश्च दक्षिणं ।

गोप्तारावर्ज्जुनस्यैतावर्ज्जुनोऽपि शिखण्डिनः । रक्ष्यमाणः स पार्थेन तथास्माभिर्विवर्ज्जितं । ४४९५

यथा भीष्मं स नो हन्यात् दुःशासन तथा कुरु । भ्रातुस्तद्वचनं श्रुत्वा पुत्त्रो दुःशासनस्तव ।

भीष्मं प्रमुखतः कृत्वा प्रययौ सह सेनया । भीष्मन्तु रथवंशेन दृष्ट्वा समभिसंवृतं ।

अर्ज्जुनो रथिनां श्रेष्ठो धृष्टद्युम्नमुवाच ह । शिखण्डिनं नरव्याघ्रं भीष्मस्य प्रमुखे नृप ।

स्थापयस्वाद्य पाञ्चाल्य तस्य गोप्ताहमित्युत ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि दुर्य्योधनदुःशासनसंवादे नवनवतोऽध्यायः ॥ ९९ ॥

॥ सञ्जय उवाच ॥ ततः शान्तनवो भीष्मो निर्ययौ सह सेनया । व्यूहञ्चाव्यूहत महत् सर्व्वतोभद्रमात्मना । ४५००

कृपश्च कृतवर्म्मा च शैब्यश्चैव महारथः । शकुनिः सैन्धवश्चैव काम्बोजश्च सुदक्षिणः ।

भीष्मेण सहिताः सर्व्वे पुत्त्रैश्च तव भारत । अग्रतः सर्व्वसैन्यानां व्यूहस्य प्रमुखे स्थिताः ।

द्रोणो भूरिश्रवाः शल्यो भगदत्तश्च मारिष । दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य दंशिताः ।

अश्वत्थामा सोमदत्तश्चावन्त्यौ च महारथौ । महत्या सेनया युक्ता वामं पक्षमपालयन् ।

दुर्य्योधनो महाराज त्रिगर्त्तैः सर्व्वतो वृतः । व्यूहमध्ये स्थितो राजन् पाण्डवान् प्रति भारत । ४५०५

अलम्बुषो रथिश्रेष्ठः श्रुतायुश्च महारथः । पृष्ठतः सर्व्वसैन्यानां स्थितौ व्यूहस्य दंशितौ ।

एवञ्च तं तदा व्यूहं कृत्वा भारत तावकाः । सन्नद्धाः समदृश्यन्त प्रतपन्त इवाग्नयः ।

ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः । नकुलः सहदेवश्च माद्रीपुत्त्रावुभावपि ।

अग्रतः सर्व्वसैन्यानां स्थिता व्यूहस्य दंशिताः । धृष्टद्युम्नो विराटश्च सात्यकिश्च महारथः ।

स्थिताः सैन्येन महता परानीकविनाशनाः । शिखण्डी विजयश्चैव राक्षसश्च घटोत्कचः । ४५१०

चेकितानो महाबाहुः कुन्तिभोजश्च वीर्य्यवान् । स्थिता रणे महाराज महत्या सेनया वृताः ।

अभिमन्युर्म्महेष्वासो द्रुपदश्च महाबलः । कैकेया भ्रातरश्चैव स्थिता युद्धाय दंशिताः ।

एवं तेऽपि महाव्यूहं प्रतिव्यूह्य सुदुर्ज्जयं । पाण्डवाः समरे शूराः स्थिता युद्धाय दंशिताः ।

तावकास्तु रणे यत्ताः सहसेना नराधिपाः । अभ्युद्ययू रणे पार्थान् भीष्मं कृत्वाऽग्रतो नृप ।

तथैव पाण्डवा राजन् भीमसेनपुरोगमाः । भीष्मं योद्धुमभीप्सन्तः सङ्ग्रामे विजयैषिणः । ४५१५

क्ष्वेडाः किलकिलाशब्दाः क्रकचा गोविषाणिकाः । भेरीमृदङ्गपणवान् नादयन्तश्च कुञ्जरान् ।

पाण्डवा अभ्यवर्त्तन्त नदन्तो भैरवान् रवान् । भेरीमृदङ्गशङ्खानां दुन्दुभीनाञ्च निःस्वनैः ।

चुक्रुशुः सिंहनादैश्च बलिनश्च पृथग्विधैः । वयं प्रतिनदन्तस्तान् गच्छामश्च त्वरान्विताः ।

सहसैवाभिसंक्रुद्धाः सहासीत्तुमुलं महत् । ततोऽन्योऽन्यं प्रधावन्तः सम्प्रहारं प्रचक्रिरे ।
ततः शब्देन महता प्रचकम्पे वसुन्धरा । पक्षिणश्च महाघोरं व्याहरन्तो विबभ्रमुः । ४५२०
सप्रभश्चोदितः सूर्य्यो निष्प्रभः समपद्यत । ववुश्च वातास्तुमुलाः शंसन्तः सुमहद्भयं ।
घोराश्च घोरनिर्ह्रादाः शिवास्तत्र ववाशिरे । वेदयन्त्यो महाराज महद्वैशसमागतं ।
दिशः प्रज्वलिता राजन् पांशुवर्षं पपात च । रुधिरेण समुन्मिश्रमस्थिवर्षं तथैव च ।
रुदतां वाहनानाञ्च नेत्रेभ्यः प्रापतज्जलं । सुस्रुवुश्च शकृन्मूत्रं प्रध्यायन्तो विशाम्पते ।
अन्तर्हिता महानादाः श्रूयन्ते भरतर्षभ । रक्षसां पुरुषादानां नदतां भैरवान् रवान् । ४५२५
सम्पतन्तश्च दृश्यन्ते गोमायुबकवायसाः । श्वानश्च विविधैर्नादैर्भषन्तस्तत्र मारिष ।
ज्वलिताश्च महोल्का वै समाहत्य दिवाकरं । निपेतुः सहसा भूमौ वेदयन्त्यो महद्भयं ।
महान्त्यनीकानि महासमुच्छ्रये ततस्तयोः पाण्डवधार्त्तराष्ट्रयोः । चकम्पिरे शङ्खमृदङ्गनिःस्वनैः प्रकम्पितानीव वनानि वायुना ।
नरेन्द्रनागाश्वसमाकुलानामभ्यागतानामशिवे मुहूर्त्ते । बभूव घोषस्तुमुलश्चमूनां वातोद्धुतानामिव सागराणां ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि उत्पातदर्शने शततमोऽध्यायः ॥ १०० ॥

॥ सञ्जय उवाच ॥ अभिमन्यूरथोदारः पिशङ्गैस्तुरगोत्तमैः । अभिदुद्राव तेजस्वी दुर्य्योधनबलं महत् । ४५३०
विकिरन् शरवर्षाणि वारिधारा इवाम्बुदः । न शेकुः समरे क्रुद्धं सौभद्रमरिसूदनं ।
शस्त्रौघिनं गाहमानं सेनासागरमक्षयं । निवारयितुमप्याजौ त्वदीयाः कुरुनन्दन ।
तेन मुक्ता रणे राजन् शराः शत्रुनिवर्हणाः । क्षत्रियाननयच्छूरान् प्रेतराजनिवेशनं ।
यमदण्डोपमान् घोरान् ज्वलिताशीविषोपमान् । सौभद्रः समरे क्रुद्धः प्रेषयामास सायकान् ।
सरथान् रथिनस्तूर्णं हयांश्चैव ससादिनः । गजारोहांश्च सगजान् दारयामास फाल्गुनिः । ४५३५
तस्य तत् कुर्व्वतः कर्म्म महत् संख्ये महीभृतः । पूजयाञ्चक्रिरे हृष्टाः प्रशशंसुश्च फाल्गुनिं ।
तान्यनीकानि सौभद्रो द्रावयामास भारत । तूलराशीनिवाकाशे मारुतः सर्व्वतो दिशं ।
तेन विद्राव्यमाणानि तव सैन्यानि भारत । त्रातारं नाध्यगच्छन्त पङ्के मग्ना इव द्विपाः ।
विद्राव्य सर्व्वसैन्यानि तावकानि नरोत्तम । अभिमन्युः स्थितो राजन् विधूमोऽग्निरिव ज्वलन् ।
न चैनं तावका राजन्विषेहुररिघातिनं । प्रदीप्तं पावकं यद्वत् पतङ्गाः कालचोदिताः । ४५४०
प्रहरन् सर्व्वशत्रुभ्यः पाण्डवानां महारथः । अदृश्यत महेष्वासः सवज्र इव वासवः ।
हेमपृष्ठं धनुश्चास्य ददृशे विचरद्दिशः । तोयदेषु यथा राजन् राजमाना शतह्रदाः ।
शराश्च निशिताः पीता निश्चरन्ति स्म संयुगे । वनात् फुल्लद्रुमाद्राजन् भ्रमराणामिव व्रजाः
तथैव चरतस्तस्य सौभद्रस्य महात्मनः । रथेन काञ्चनाङ्गेन ददृशुर्नान्तरं जनाः ।
मोहयित्वा कृपं द्रोणं द्रौणिञ्च सुमहद्बलं । सैन्धवञ्च महेष्वासो विचरन् लघु सुष्ठु च । ४५४५
मण्डलीकृतमेवास्य धनुः पश्यामि भारत । सूर्य्यमण्डलसङ्काशं दहतस्तव वाहिनीं ।

तं दृष्ट्वा क्षत्रियाः शूराः प्रपतन्तं तरस्विनं । द्विफाल्गुनमिमं लोकं मेनिरे तस्य कर्म्मभिः ।
तेनार्द्दिता महाराज भारती सा महाचमूः । व्यभ्रमत्तत्र तत्रैव योषिन्मदवशादिव ।
द्रावयित्वा महासैन्यं कम्पयित्वा महारथान् । ननन्दयामास सुहृदो मयं जित्वेव वासवः ।
तेन विद्राव्यमाणानि तव सैन्यानि संयुगे । चक्रुरार्त्तस्वरं घोरं पर्ज्जन्यनिनदोपमं ।　४५५०
तं श्रुत्वा निनदं घोरं तव सैन्यस्य भारत । मारुतोद्धूतवेगस्य सागरस्येव पर्व्वणि ।
दुर्य्योधनस्तदा राजन्नार्य्यशृङ्गिमभाषत । एषः कार्ष्णिर्म्महाबाहो द्वितीय इव फाल्गुनः ।
चमूं द्रावयते क्रोधाद्वृत्रो देवचमूमिव । तस्य चान्यं न पश्यामि संयुगे भेषजं महत् ।
ऋते त्वां राक्षसश्रेष्ठ सर्व्वविद्यासु पारगं । स गत्वा त्वरितं वीरं जहि सौभद्रमाहवे ।
वयं पार्थं हनिष्यामो भीष्मद्रोणपुरोगमाः । स एवमुक्तो बलवान् राक्षसेन्द्रः प्रतापवान् ।　४५५५
प्रययौ समरे तूर्णं तव पुत्रस्य शासनात् । नर्द्दमानो महानादं प्रावृषीव बलाहकः ।
तस्य शब्देन महता पाण्डवानां बलं महत् । प्राचलत् सर्व्वतो राजन् वातोद्धूत इवार्णवः ।
बहवश्च महाराज तस्य नादेन भीषिताः । प्रियान् प्राणान् परित्यज्य निपेतुर्द्धरणीतले ।
कार्ष्णिश्चापि मुदा युक्तः प्रगृह्य सशरं धनुः । नृत्यन्निव रथोपस्थे तद्रक्षः समुपाद्रवत् ।
ततः स राक्षसः क्रुद्धः संप्राप्यैवार्ज्जुनिं रणे । नातिदूरे स्थितां तस्य द्रावयामास वै चमूं ।　४५६०
तां वध्यमानाञ्च तथा पाण्डवानां महाचमूं । प्रत्युद्ययौ रणे रक्षो देवसेनां यथा बलः ।
विमर्द्दः सुमहानासीत् तस्य सैन्यस्य मारिष । रक्षसा घोररूपेण वध्यमानस्य संयुगे ।
ततः शरसहस्रैस्तां पाण्डवानां महाचमूं । व्यद्रावयद्रणे रक्षो दर्शयन् स्वपराक्रमं ।
सा वध्यमाना च तथा पाण्डवानामनीकिनी । रक्षसा घोररूपेण प्रदुद्राव महद्भयात् ।
प्रमृद्य च रणे सेनां पद्मिनीं वारणो यथा । ततोऽभिदुद्राव रणे द्रौपदेयान् महाबलः ।　४५६५
तेन क्रुद्धा महेष्वासा द्रौपदेयाः प्रहारिणः । राक्षसं दुद्रुवुः सङ्ख्ये ग्रहाः पञ्च रविं यथा ।
वीर्य्यवद्भिस्ततस्तैस्तु पीडितो राक्षसोत्तमः । यथा युगक्षये घोरे चन्द्रमाः पञ्चभिर्ग्रहैः ।
प्रतिविन्ध्यस्ततो रक्षो बिभेद निशितैः शरैः । सर्व्वपारशवैस्तूर्णमकुण्ठाग्रैर्म्महाबलः ।
स तैर्भिन्नतनुत्राणः शुशुभे राक्षसोत्तमः । मरीचिभिरिवार्कस्य संस्यूतो जलदो महान् ।
विषक्तैः स शरैश्चापि तपनीयपरिच्छदैः । आर्य्यशृङ्गिर्ब्बभौ राजन् दीप्तशृङ्ग इवाचलः ।　४५७०
ततस्ते भ्रातरः पञ्च राक्षसेन्द्रं महाहवे । विव्यधुर्न्निशितैर्व्वाणैस्तपनीयविभूषितैः ।
स निर्भिन्नः शरैर्घोरैर्भुजगैः कोपितैरिव । अलम्बुषो भृशं राजन् नागेन्द्र इव चुक्रुधे ।
सोऽतिविद्धो महाराज मुहूर्त्तमिव मारिष । प्रविवेश तमो दीर्घं पीडितस्तैर्म्महारथैः ।
प्रतिलभ्य ततः संज्ञां क्रोधेन द्विगुणीकृतः । चिच्छेद सायकांस्तेषां ध्वजांश्चैव धनूंषि च ।
एकैकं पञ्चभिर्व्वाणैराजघान स्मयन्निव । अलम्बुषो रथोपस्थे नृत्यन्निव महारथः ।　४५७५
त्वरमाणः सुसंरब्धो हयांस्तेषां महात्मनां । जघान राक्षसः क्रुद्धः सारथींश्च महाबलः ।

बिभेद च सुसंरब्धः पुनश्चैतान् सुसंशितैः । शरैर्बहुविधाकारैः शतशोऽथ सहस्रशः ।
विरथांश्च महेष्वासान् कृत्वा तत्र स राक्षसः । अभिदुद्राव वेगेन हन्तुकामो निशाचरः ।
तानर्द्दितान् रणे तेन राक्षसेन दुरात्मना । दृष्ट्वाऽर्ज्जुनसुतः संख्ये राक्षसं समुपाद्रवत् ।
तयोः समभवद्युद्धं वृत्रवासवयोरिव । ददृशुस्तावकाः सर्व्वे पाण्डवाश्च महारथाः । ४५८०
तौ समेतौ महायुद्धे क्रोधदीप्तौ परस्परं । महाबलौ महाराज क्रोधसंरक्तलोचनौ ।
परस्परमवेक्षेतां कालानलसमौ युधि । तयोः समागमो घोरो बभूव कटुकोदयः ।
यथा देवासुरे युद्धे शक्रशम्बरयोः पुरा ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि नवमदिवस युद्धारम्भे अलम्बुषाभिमन्युसमागमे एकाधिकशततमोऽध्यायः ॥ १०१ ॥

॥ धृतराष्ट्र उवाच ॥ आर्ज्जुनिं समरे शूरं विनिघ्नन्तं महारथान् । अलम्बुषः कथं युद्धे प्रत्ययुध्यत भारत ।
आर्ष्यशृङ्गिं कथञ्चैव सौभद्रः परवीरहा । तन्ममाचक्ष्व तत्त्वेन यथावृत्तं स्म संयुगे । ४५८५
भीमो वा रथिनां श्रेष्ठो राक्षसो वा घटोत्कचः । नकुलः सहदेवो वा सात्यकिर्व्वा महारथः ।
एतदाचक्ष्व मे सत्यं कुशलो ह्यसि सञ्जय । धनञ्जयश्च किं चक्रे मम सैन्येषु संयुगे ।
॥ सञ्जय उवाच ॥ हन्त तेऽहं प्रवक्ष्यामि सङ्ग्रामं लोमहर्षणं । यथाऽभूद्राक्षसेन्द्रस्य सौभद्रस्य च मारिष ।
अर्ज्जुनश्च यथा सङ्ख्ये भीमसेनश्च पाण्डवः । नकुलः सहदेवश्च रणे चक्रुः पराक्रमं ।
तथैव तावकाः सर्व्वे भीष्मद्रोणपुरःसराः । अद्भुतानि विचित्राणि चक्रुः कर्म्माण्यभीतवत् । ४५९०
अलम्बुषस्तु समरे अभिमन्युं महारथं । विनद्य सुमहानादं तर्ज्जयित्वा मुहुर्मुहुः ।
अभिदुद्राव वेगेन तिष्ठ तिष्ठेति चाब्रवीत् । अभिमन्युश्च वेगेन सिंहवद्विनदन्मुहुः ।
आर्ष्यशृङ्गिं महेष्वासं पितुरत्यन्तवैरिणं । ततः समीयतुः सङ्ख्ये त्वरितौ नरराक्षसौ ।
रथाभ्यां रथिनौ श्रेष्ठौ यथा वै देवदानवौ । मायावी राक्षसश्रेष्ठो दिव्यास्त्रज्ञश्च फाल्गुनिः ।
ततः कार्ष्णिर्महाराज निशितैः सायकैस्त्रिभिः । आर्ष्यशृङ्गिं रणे विद्ध्वा पुनर्व्विव्याध पञ्चभिः । ४५९५
अलम्बुषोऽपि संक्रुद्धः कार्ष्णिं नवभिराशुगैः । हृदि विव्याध वेगेन तोत्त्रैरिव महाद्विपं ।
ततः शरसहस्रेण क्षिप्रकारी निशाचरः । अर्ज्जुनस्य सुतं संख्ये पीडयामास भारत ।
अभिमन्युस्ततः क्रुद्धो नवभिर्नतपर्व्वभिः । बिभेद निशितैर्बाणैराक्षसेन्द्रं महोरसि ।
ते तस्य विविशुस्तूर्णं कायं निर्भिद्य मर्म्मसु । स तैर्व्विभिन्नसर्व्वाङ्गः शुशुभे राक्षसोत्तमः ।
पुष्पितैः किंशुकैराजन् संस्तीर्ण इव पर्व्वतः । संधारयाणश्च शरान् हेमपुङ्खान् महाबलः । ४६००
विबभौ राक्षसश्रेष्ठः सज्वाल इव पर्व्वतः । ततः क्रुद्धो महाराज आर्ष्यशृङ्गिरमर्षणः ।
महेन्द्रप्रतिमं कार्ष्णिं छादयामास पत्रिभिः । तेन ते विशिखा मुक्ता यमदण्डोपमाः शिताः ।
अभिमन्युं विनिर्भिद्य प्राविशन्त धरातलं । तथैवार्ज्जुनिना मुक्ताः शराः कनकभूषणाः ।
अलम्बुषं विनिर्भिद्य प्राविशन्त धरातलं । सौभद्रस्तु रणे रक्षः शरैः सन्नतपर्व्वभिः ।

चक्रे विमुखमासाद्य मयं शक्र इवाहवे । विमुखञ्च ततो रक्षो बध्यमानं रणेऽरिणा । ४९०५
प्रादुश्चक्रे महामायां तामसीं परतापनः । ततस्ते तमसा सर्व्वे हृतास्त्वासन् महीपते ।
नाभिमन्युमपश्यन्त नैव स्वान् न परान् रणे । अभिमन्युश्च तं दृष्ट्वा घोररूपं महत्तमं ।
प्रादुश्चक्रे सौरमस्त्रं भास्वरं कुरुनन्दनः । ततः प्रकाशमभवज्जगत् सर्व्वं महीपते ।
ताञ्चाभिजघ्निवान् मायां राक्षसस्य दुरात्मनः । संक्रुद्धश्च महावीर्य्यो राक्षसेन्द्रं नरोत्तमः ।
छादयामास समरे शरैः सन्नतपर्व्वभिः । बह्वीस्तथाऽन्या मायाश्च प्रयुक्तास्तेन रक्षसा । ४९१०
सर्व्वास्त्रविदमेयात्मा वारयामास फाल्गुनिः । हतमायन्ततो रक्षो बध्यमानञ्च सायकैः ।
रथं तत्रैव सन्त्यज्य प्राद्रवत् महतो भयात् । तस्मिन् विनिर्ज्जिते तूर्णं कूटयोधिनि राक्षसे ।
आर्ज्जुनिः समरे सैन्यं तावकं स ममर्द्द ह । मदान्धो वन्यनागेन्द्रः सपद्मां पद्मिनीमिव ।
ततः शान्तनवो भीष्मः सैन्यं दृष्ट्वाऽभिविद्रुतं । महता शरवर्षेण सौभद्रं पर्य्यवारयत् ।
कोष्ठीकृत्य च तं वीरं धार्त्तराष्ट्रा महारथाः । एकं सुबहवो युद्धे ततक्षुः सायकैर्दृढं । ४९१५
स तेषां रथिनां वीरः पितुस्तुल्यपराक्रमः । सदृशो वासुदेवस्य विक्रमेण बलेन च ।
उभयोः सदृशं कर्म्म स पितुर्म्मातुलस्य च । रणे बहुविधं चक्रे सर्व्वशस्त्रभृतां वरः ।
ततो धनञ्जयो वीरो विनिघ्नंस्तव सैनिकान् । आससाद रणे पुत्रं पुत्रप्रेप्सुरमर्षणः ।
तथैव समरे राजन् पिता देवव्रतस्तव । आससाद रणे पार्थं स्वर्भानुरिव भास्करं ।
ततः सरथनागाश्वाः पुत्रास्तव जनेश्वर । परिवव्रू रणे भीष्मं जुगुपुश्च समन्ततः । ४९२०
तथैव पाण्डवा राजन् परिवार्य्य धनञ्जयं । रणाय महते युक्ता दंशिता भरतर्षभ ।
शारद्वतस्ततो राजन् भीष्मस्य प्रमुखे स्थितं । अर्ज्जुनं पञ्चविंशत्या सायकानां समार्पयत् ।
प्रत्युद्गम्याथ विव्याध सात्यकिस्तं शितैः शरैः । पाण्डवप्रियकामार्थं शार्दूल इव कुञ्जरं ।
गौतमोऽपि त्वरायुक्तो माधवं नवभिः शरैः । हृदि विव्याध संक्रुद्धः कङ्कपत्रपरिच्छदैः ।
शैनेयोऽपि ततः क्रुद्धश्चापमानम्य वेगवान् । गौतमान्तकरं तूर्णं समाधत्त शिलीमुखं । ४९२५
तमापतन्तं वेगेन शक्राशनिसमद्युतिं । द्विधा चिच्छेद संक्रुद्धो द्रौणिः परमकोपनः ।
समुत्सृज्याथ शैनेयो गौतमं रथिनां वरः । अभ्यद्रवद्रणे द्रौणिं राहुः खे शशिनं यथा ।
तस्य द्रोणसुतश्चापं द्विधा चिच्छेद भारत । अथैनं छिन्नधन्वानं ताडयामास सायकैः ।
सोऽन्यत् कार्म्मुकमादाय शत्रुघ्नं भारसाधनं । द्रौणिं षष्ट्या महाराज बाह्वोरुरसि चार्पयत् ।
स विद्धो व्यथितश्चैव मुहूर्त्तं कश्मलान्वितः । निषसाद रथोपस्थे ध्वजयष्टिं समाश्रितः । ४९३०
प्रतिलभ्य ततः संज्ञां द्रोणपुत्त्रः प्रतापवान् । वार्ष्णेयं समरे क्रुद्धो नाराचेन समर्दयत् ।
शैनेयं स तु निर्भिद्य प्राविशद्धरणीतले । वसन्तकाले बलवान् बिलं सर्पशिशुर्यथा ।
अथापरेण भल्लेन माधवस्य ध्वजोत्तमं । चिच्छेद समरे द्रौणिः सिंहनादं मुमोच ह ।
पुनश्चैनं शरैर्घोरैश्छादयामास भारत । निदाघान्ते महाराज यथा मेघो दिवाकरं ।

सात्यकोऽपि महाराज शरजालं निहत्य तत् । द्रौणिमभ्याकिरत्तूर्णं शरजालैरनेकधा । ४६३५
तापयामास च द्रौणिं शैनेयः परवीरहा । विमुक्तो मेघजालेन यथैव तपनस्तथा ।
शराणाञ्च सहस्रेण पुनरेव समुद्यतः । सात्यकिश्छादयामास ननाद च महाबलः ।
दृष्ट्वा पुत्त्रं तथा ग्रस्तं राहुणेव निशाकरं । अभ्यद्रवत शैनेयं भारद्वाजः प्रतापवान् ।
विव्याध च सुतीक्ष्णेन पृषत्केन महामृधे । परीप्सन् स्वसुतं राजन् वार्ष्णेयेनाभिपीडितं ।
सात्यकिस्तु रणे हित्वा गुरुपुत्त्रं महारथं । द्रोणं विव्याध विंशत्या सर्व्वपारशवैः शरैः । ४६४०
तदन्तरममेयात्मा कौन्तेयः शत्रुतापनः । अभ्यद्रवद्रणे क्रुद्धो द्रोणं प्रति महारथः ।
ततो द्रोणस्य पार्थस्य समेयातां महामृधे । यथा बुधस्य शुक्रस्य महाराज नभस्तले ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे द्रोणार्ज्जुनसमागमे द्व्यधिकशततोऽध्यायः ॥ १०२ ॥
॥ धृतराष्ट्र उवाच ॥ कथं द्रोणो महेष्वासः पाण्डवश्च धनञ्जयः । समीयतू रणे यत्तौ तावुभौ पुरुषर्षभौ ।
प्रियो हि पाण्डवो नित्यं भारद्वाजस्य धीमतः । आचार्य्यश्च रणे नित्यं प्रियः पार्थस्य सञ्जय ।
तावुभौ रथिनौ सङ्ख्ये हृष्टौ सिंहाविवोत्कटौ । कथं समीयतुर्यत्तौ भारद्वाजधनञ्जयौ । ४६४५
॥ सञ्जय उवाच ॥ न द्रोणः समरे पार्थं जानीते प्रियमात्मनः । क्षत्त्रधर्म्मं पुरस्कृत्य पार्थो वा गुरुमाहवे ।
न क्षत्त्रिया रणे राजन् वर्ज्जयन्ति परस्परं । निर्म्मर्य्यादं हि युध्यन्ते पितृभिर्भ्रातृभिः सह ।
रणे भारत पार्थेन द्रोणो विद्धस्त्रिभिः शरैः । नाचिन्तयच्च तान् बाणान् पार्थचापच्युतान् युधि ।
शरवृष्ट्या पुनः पार्थं छादयामास तं रणे । स प्रजज्वाल रोषेण गहनेऽग्निरिवोर्ज्जितः ।
ततोऽर्ज्जुनं रणे द्रोणः शरैः सन्नतपर्व्वभिः । छादयामास राजेन्द्र न चिरादेव भारत । ४६५०
ततो दुर्य्योधनो राजा सुशर्म्माणमचोदयत् । द्रोणस्य समरे राजन् पार्ष्णिग्रहणकारणात् ।
त्रिगर्त्तराडपि क्रुद्धो भृशमायम्य कार्म्मुकं । छादयामास राजेन्द्र पार्थं बाणैरयोमुखैः ।
ताभ्यां मुक्ताः शरा राजन्नन्तरिक्षे विभेजिरे । हंसा इव महाराज शरत्काले नभस्तले ।
ते शराः प्राप्य कौन्तेयं समन्ताद्विविशुः प्रभो । फलभारनतं यद्वत् स्वादुवृक्षं विहङ्गमाः ।
अर्ज्जुनस्तु रणे नादं विनद्य रथिनां वरः । त्रिगर्त्तराजं समरे सपुत्त्रं विव्यधे शरैः । ४६५५
ते विध्यमानाः पार्थेन कालेनेव युगक्षये । पार्थमेवाभ्यवर्त्तन्त मरणे कृतनिश्चयाः ।
मुमुचुः शरवृष्टिञ्च पाण्डवस्य रथं प्रति । शरवृष्टिं ततस्तान्तु शरवर्षैः समन्ततः ।
प्रतिजग्राह राजेन्द्र तोयवृष्टिमिवाचलः । तत्राद्भुतमपश्याम बीभत्सोर्हस्तलाघवं ।
विमुक्तां बहुभिर्योधैः शस्त्रवृष्टिं दुरासदां । यदेको वारयामास मारुतोऽभ्रगणानिव ।
कर्म्मणा तेन पार्थस्य तुतुषुर्देवदानवाः । अथ क्रुद्धो रणे पार्थस्त्रिगर्त्तान् प्रति भारत । ४६६०
मुमोचास्त्रं महाराज वायव्यं पृतनामुखे । प्रादुरासीत्ततो वायुः क्षोभयाणो नभस्तलं ।
पातयन् वै तरुगणान् विनिघ्नंश्चैव सैनिकान् । ततो द्रोणोऽभिवीक्ष्यैव वायव्यास्त्रं सुदारुणं ।
शैलमन्यन्महाराज घोरमस्त्रं मुमोच ह । द्रोणेन युधि निर्म्मुक्ते तस्मिन्नस्त्रे नराधिप ।

प्रशशाम ततो वायुः प्रसन्नाश्च दिशो दश। ततः पाण्डुसुतो वीरस्त्रिगर्त्तस्य रथव्रजान्।
निरुत्साहांस्ततश्चक्रे विमुखान् विपराक्रमान्। ततो दुर्य्योधनश्चैव कृपश्च रथिनां वरः। ४६६५
अश्वत्थामा तथा शल्यः काम्बोजश्च सुदक्षिणः। विन्दानुविन्दावावन्त्यौ वाह्लिकः सह वाह्लिकैः।
महता रथवंशेन पार्थस्यावारयन् दिशः। तथैव भगदत्तश्च श्रुतायुश्च महाबलः।
गजानीकेन भीमस्य ताववारयतां दिशः। भूरिश्रवाः शलश्चैव सौबलश्च विशाम्पते।
शरौघैर्व्विमलैस्तीक्ष्णैर्म्माद्रीपुत्त्राववारयत। भीष्मस्तु सहितः सर्व्वैर्धार्त्तराष्ट्रैः ससैनिकैः।
युधिष्ठिरं समासाद्य सर्व्वतः पर्य्यवारयत्। आपतन्तं गजानीकं दृष्ट्वा पार्थो वृकोदरः। ४६७०
लेलिहन् सृक्कणी वीरो मृगराडिव कानने। भीमस्तु रथिनां श्रेष्ठो गदां गृह्य महाहवे।
अवप्लुत्य रथात्तूर्णं तव सैन्यमभीषयत्। तमुद्वीक्ष्य गदाहस्तं ततस्ते गजसादिनः।
परिवव्रू रणे यत्नात् भीमसेनं समन्ततः। गजमध्यमनुप्राप्तः पाण्डवः स व्यराजत।
मेघजालस्य महतो यथा मध्यगतो रविः। व्यधमत् स गजानीकं गदया पाण्डवर्षभः।
महाभ्रजालमतुलं मातरिश्वेव सन्ततं। ते बध्यमाना बलिना भीमसेनेन दन्तिनः। ४६७५
आर्त्तनादं रणे चक्रुर्गर्ज्जन्तो जलदा इव। बहुधा दारितश्चैव विषाणैस्तत्र दन्तिभिः।
फुल्लाशोकनिभः पार्थः शुशुभे रणमूर्द्धनि। विषाणे दन्तिनं गृह्य निर्व्विषाणमथाकरोत्।
विषाणेन च तेनैव कुम्भेऽभ्याहत्य दन्तिनं। पातयामास समरे दण्डहस्त इवान्तकः।
शोणिताक्तां गदां बिभ्रत् मेदोमज्जाकृतच्छविः। कृताभ्यङ्गः शोणितेन रुद्रवत् प्रत्यदृश्यत।
एवं ते बध्यमानास्तु हतशेषा महागजाः। प्राद्रवन्त दिशो राजन् विमृद्नन्तः स्वकं बलं। ४६८०
द्रवद्भिस्तैर्म्महानागैः समन्ताद्भरतर्षभ। दुर्य्योधनबलं सर्व्वं पुनरासीत् पराङ्मुखं।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीमपराक्रमे त्र्यधिकशततोऽध्यायः॥ १०३ ॥

॥ सञ्जय उवाच॥ मध्यन्दिने महाराज सङ्ग्रामः समपद्यत। लोकक्षयकरो रौद्रो भीष्मस्य सह सोमकैः।
गाङ्गेयो रथिनां श्रेष्ठः पाण्डवानामनीकिनीं। व्यधमन्निशितैर्व्बाणैः शतशोऽथ सहस्रशः।
संममर्द्द च तत् सैन्यं पिता देवव्रतस्तव। धान्यानामिव लूनानां प्रकरं गोगणा इव।
धृष्टद्युम्नः शिखण्डी च विराटो द्रुपदस्तथा। भीष्ममासाद्य समरे शरैर्ज्जघ्नुर्म्महारथं। ४६८५
धृष्टद्युम्नं ततो विद्ध्वा विराटञ्च शरैस्त्रिभिः। द्रुपदस्य च नाराचं प्रेषयामास भारत।
तेन विद्धा महेष्वासा भीष्मेणामित्रकर्षिणा। चुक्रुधुः समरे राजन् पादस्पृष्टा इवोरगाः।
शिखण्डी तञ्च विव्याध भारतानां पितामहं। स्त्रीमयं मनसा ध्यात्वा नास्मै प्राहरदच्युतः।
धृष्टद्युम्नस्तु समरे क्रोधेनाग्निरिव ज्वलन्। पितामहं त्रिभिर्व्बाणैर्ब्बाह्वोरुरसि चार्पयत्।
द्रुपदः पञ्चविंशत्या विराटो दशभिः शरैः। शिखण्डी पञ्चविंशत्या भीष्मं विव्याध सायकैः। ४६९०
सोऽतिविद्धो महाराज शोणितौघपरिप्लुतः। वसन्ते पुष्पशबलो रक्ताशोक इवाबभौ।
तान् प्रत्यविध्यत् गाङ्गेयस्त्रिभिस्त्रिभिरजिह्मगैः। द्रुपदस्य च भल्लेन धनुश्चिच्छेद मारिष।

सोऽन्यत् कार्म्मुकमादाय भीष्मं विव्याध पञ्चभिः । सात्यकिञ्च त्रिभिर्व्वाणैर्निशितैरणमूर्द्धनि ।
तथा भीमो महाराज द्रौपद्याः पञ्च चात्मजाः । कैकेया भ्रातरः पञ्च सात्यकिश्चैव सात्वतः ।
अभ्यद्रवन्त गाङ्गेयं युधिष्ठिरपुरोगमाः । रिरक्षिषन्तः पाञ्चाल्यं धृष्टद्युम्नपुरोगमान् । ४९९५
तथैव तावकाः सर्व्वे भीष्मरक्षार्थमुद्यताः । प्रत्युद्ययुः पाण्डुसेनां सहसैन्या नराधिप ।
तत्रासीत् सुमहद्युद्धं तव तेषाञ्च सङ्कुलं । नराश्वरथनागानां यमराष्ट्रविवर्द्धनं ।
रथी रथिनमासाद्य प्राहिणोद्यमसादनं । तथेतरान् समासाद्य नरनागाश्वसादिनः ।
अनयन् परलोकाय शरैः सन्नतपर्व्वभिः । शरैश्च विविधैर्घोरैस्तत्र तत्र विशाम्पते ।
रथास्तु रथिभिर्हीना हतसारथयस्तदा । विप्रद्रुताश्च समरे दिशो जग्मुः समन्ततः । ५०००
मृद्नमाना नराचाजन् हयांश्च सुबहून् रणे । वातायमाना दृश्यन्ते गन्धर्व्वनगरोपमाः ।
रथिनश्च रथैर्हीना वर्म्मिणस्तेजसा युताः । कुण्डलोष्णीषिणः सर्व्वे निष्काङ्गदविभूषणाः ।
देवपुत्रसमाः सर्व्वे शौर्य्ये शक्रसमा युधि । ऋद्धा वैश्रवणञ्चाति नयेन च बृहस्पतिं ।
सर्व्वलोकेश्वराः शूरास्तत्र तत्र विशाम्पते । विप्रद्रुता व्यदृश्यन्त प्राकृता इव मानवाः ।
दन्तिनश्च नरश्रेष्ठ हीनाः परमसादिभिः । मृद्नन्तः स्वान्यनीकानि निपेतुः सर्व्वशब्दगाः । ५००५
चर्म्मभिश्चामरैश्चित्रैः पताकाभिश्च मारिष । छत्रैः सितैर्हेमदण्डैश्चामरैश्च समन्ततः ।
विशीर्णैर्विप्रधावन्तो दृश्यन्ते स्म दिशो दश । नवमेघप्रतीकाशा जलदोपमनिस्वनाः ।
तथैव दन्तिभिर्हीना गजारोहा विशाम्पते । प्रधावन्तो व्यदृश्यन्त तव तेषाञ्च सङ्कुले ।
नानादेशसमुत्थांश्च तुरङ्गान् हेमभूषितान् । वातायमानानद्राक्षं शतशोऽथ सहस्रशः ।
अश्वारोहान् हतैरश्वैर्गृहीतासीन् समन्ततः । द्रवमाणानपश्याम द्राव्यमाणांश्च संयुगे । ५०१०
गजो गजं समासाद्य द्रवमाणं महाहवे । ययौ प्रमृद्य तरसा पदातान् वाजिनस्तथा ।
तथैव च रथान् राजन् प्रममर्द्द रणे गजः । रथांश्चैव समासाद्य पतितांस्तुरगान् भुवि ।
व्यमृद्नन् समरे राजंस्तुरङ्गांश्च नरान् रणे । एवं ते बहुधा राजन् प्रत्यमृद्नन् परस्परं ।
तस्मिन् रौद्रे तथा युद्धे वर्त्तमाने महाभये । प्रावर्त्तत नदी घोरा शोणितान्त्रतरङ्गिणी ।
अस्थिसङ्घातसम्बाधा केशशैवलशाद्वला । रथह्रदा शरावर्त्ता हयमीना दुरासदा । ५०१५
शीर्षोपलसमाकीर्णा हस्तिग्राहसमाकुला । कवचोष्णीषफेनौघा धनुर्व्वेगाऽसिकच्छपा ।
पताकाध्वजवृक्षाढ्या मर्त्यकूलापहारिणी । क्रव्यादहंससङ्कीर्णा यमराष्ट्रविवर्द्धिनी ।
तां नदीं क्षत्रियाः शूरा रथनागहयप्लवैः । प्रतेरुर्व्वहवो राजन् भयं त्यक्त्वा महारथाः ।
अपोवाह रणे भीरून् कश्मलेनाभिसंवृतान् । यथा वैतरणी प्रेतान् प्रेतराजपुरं प्रति ।
प्राक्रोशन् क्षत्रियास्तत्र दृष्ट्वा तद्वैशसं महत् । दुर्य्योधनापराधेन गच्छन्ति क्षत्रियाः क्षयं । ५०२०
गुणवत्सु कथं द्वेषं धृतराष्ट्रो जनेश्वरः । कृतवान् पाण्डुपुत्रेषु पापात्मा लोभमोहितः ।
एवं बहुविधा वाचः श्रूयन्ते स्म परस्परं । पाण्डवस्तवसंयुक्ताः पुत्राणां ते सुदारुणाः ।

ता निशम्य ततो वाचः सर्व्वयोधैरुदाहृताः। आगच्छत् सर्व्वलोकस्य पुत्रो दुर्य्योधनस्तव।
भीष्मं द्रोणं कृपञ्चैव शल्यञ्चोवाच भारत। युध्यध्वमनहङ्काराः किं चिरं कुरुथेति च।
ततः प्रववृते युद्धं कुरूणां पाण्डवैः सह। अक्षद्यूतकृतं राजन् सुघोरं वैशसं महत्। ४०२५
यत्पुरा न निगृह्णासि वार्य्यमाणो महात्मभिः। वैचित्रवीर्य्य तस्येदं फलं पश्यसि दारुणं।
न हि पाण्डुसुता राजन् ससैन्याः सपदानुगाः। रक्षन्ति समरे प्राणान् कौरवा वाऽपि संयुगे।
एतस्मात् कारणात् घोरो वर्त्तते स्वजनक्षयः। दैवाद्वा पुरुषव्याघ्र तव चापनयान्नृप।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे चतुरधिकशतोऽध्यायः॥ १०४॥
॥ सञ्जय उवाच॥ अर्ज्जुनस्तान् नरव्याघ्रो निघ्नन्ननुचरान्नृपान्। अनयत् प्रेतराजस्य सदनं सायकैः शितैः।
सुशर्म्माऽपि ततो वाणैः पार्थं विव्याध संयुगे। वासुदेवञ्च सप्तत्या पार्थञ्च नवभिः पुनः। ४०३०
तान्निवार्य्य शरौघेण शक्रसूनुर्म्महारथः। सुशर्म्मणो रणे योधान् प्राहिणोद्यमसादनं।
ते वध्यमानाः पार्थेन कालेनेव युगक्षये। व्यद्रवन्त रणे राजन् भये जाते महारथाः।
उत्सृज्य तुरगान् केचित् रथान् केचिच्च मारिष। गजानन्ये समुत्सृज्य प्राद्रवन्त दिशो दश।
अपरे तु तदादाय वाजिनागरथान्रणे। त्वरया परया युक्ताः प्राद्रवन्त विशाम्पते।
पदाताश्चापि शस्त्राणि समुत्सृज्य महारणे। निरपेक्षाय्यधावन्त तेन तेन स्म भारत। ४०३५
वार्य्यमाणाः सुबहुशस्त्रैगर्त्तेन सुशर्म्मणा। तथाऽन्यैः पार्थिवश्रेष्ठैर्न व्यतिष्ठन्त संयुगे।
तद्बलं प्रद्रुतं दृष्ट्वा पुत्रो दुर्य्योधनस्तव। पुरस्कृत्य रणे भीष्मं सर्व्वसैन्यपुरस्कृतः।
सर्व्वोद्योगेन महता धनञ्जयमुपाद्रवत्। त्रिगर्त्ताधिपतेरर्थे जीवितस्य विशाम्पते।
स एकः समरे तस्थौ किरन् बहुविधान् शरान्। भ्रातृभिः सहितः सर्व्वैः शेषा हि प्रद्रुता नराः।
तथैव पाण्डवा राजन् सर्व्वोद्योगेन दंशिताः। प्रययुः फाल्गुनार्थाय यत्र भीष्मो व्यतिष्ठत। ४०४०
ज्ञायमाना रणे वीर्य्यं घोरं गाण्डीवधन्वनः। हाहाकारकृतोत्साहा भीष्मं जग्मुः समन्ततः।
ततस्तालध्वजः शूरः पाण्डवानां वरूथिनीं। छादयामास समरे शरैः सन्नतपर्व्वभिः।
एकीभूतास्ततः सर्व्वे कुरवः सह पाण्डवैः। अयुध्यन्त महाराज मध्यं प्राप्ते दिवाकरे।
सात्यकिः कृतवर्म्माणं विद्ध्वा पञ्चभिराशुगैः। अतिष्ठदाहवे शूरः किरन् वाणान् सहस्रशः।
तथैव द्रुपदो राजा द्रोणं विद्ध्वा शितैः शरैः। पुनर्व्विव्याध सप्तत्या सारथिञ्चास्य पञ्चभिः। ४०४५
भीमसेनस्तु राजानं वाह्लिकं प्रपितामहं। विद्ध्वानदन्महानादं शार्द्दूल इव कानने।
आर्ज्जुनिश्चित्रसेनेन विद्धो बहुभिराशुगैः। चित्रसेनं त्रिभिर्व्वाणैर्व्विव्याध हृदये भृशं।
समागतौ तौ तु रणे महामात्रौ व्यरोचतां। यथाकाशे महाराज स्थितौ बुधशनैश्चरौ।
तस्याश्वांश्चतुरो हत्वा सूतञ्च नवभिः शरैः। ननाद बलवान्नादं सौभद्रः परवीरहा।
हताश्वात्तु रथात्तूर्णं सोऽवप्लुत्य महारथः। आरुरोह रथं तूर्णं दुर्म्मुखस्य विशाम्पते। ४०५०
द्रोणस्तु द्रुपदं भित्त्वा शरैः सन्नतपर्व्वभिः। सारथिञ्चास्य विव्याध त्वरमाणः पराक्रमी।

पीड्यमानस्ततो राजन् द्रुपदो वाहिनीमुखे । अपायाज्जवनैरश्वैः पूर्ववैरमनुस्मरन् ।
भीमसेनस्तु राजानं मुहूर्त्तादिव बाह्लिकं । व्यश्वसूतरथं चक्रे सर्व्वसैन्यस्य पश्यतः ।
ससम्भ्रमो महाराज संशयं परमं गतः । अवप्लुत्य ततो वाहाद्बाह्लिकः पुरुषोत्तमः ।
आरुरोह रथं तूर्णं लक्ष्मणस्य महाहवे । सात्यकिः कृतवर्म्माणं वारयित्वा महारणे । ४०५५
शरैर्बहुविधै राजन्नाससाद पितामहं । स विद्ध्वा भारतं षष्ट्या तु निशितैर्लोमवाहिभिः ।
नृत्यन्निव रथोपस्थे विधुन्वानो महद्धनुः । तस्यायसीं महाशक्तिं चिक्षेपाथ पितामहः ।
हेमचित्रां महावेगां नागकन्योपमां शुभां । तामापतन्तीं सहसा मृत्युकल्पां सुदुर्ज्जयां ।
ध्वंसयामास वार्ष्णेयो लाघवेन महायशाः । अनासाद्य तु वार्ष्णेयं शक्तिः परमदारुणा ।
न्यपतद्धरणीपृष्ठे महोल्केव महाप्रभा । वार्ष्णेयस्तु ततो राजन् स्वां शक्तिं कनकप्रभां । ४०६०
वेगवद्गृह्य चिक्षेप पितामहरथं प्रति । वार्ष्णेयभुजवेगेन प्रणुन्ना सा महाहवे ।
अभिदुद्राव वेगेन कालरात्रिर्यथा नरं । तामापतन्तीं सहसा द्विधा चिच्छेद भारत ।
क्षुरप्राभ्यां सुतीक्ष्णाभ्यां सा व्यशीर्य्यत मेदिनीं । छित्त्वा शक्तिन्तु गाङ्गेयः सात्यकिं नवभिः शरैः ।
आजघानोरसि क्रुद्धः प्रहसन् शत्रुकर्षणः । ततः सरथनागाश्वाः पाण्डवाः पाण्डुपूर्व्वज ।
परिवव्रूरणे भीष्मं माधवत्राणकारणात् । ततः प्रववृते युद्धं तुमुलं लोमहर्षणं । ४०६५
पाण्डवानां कुरूणाञ्च समरे विजयैषिणां ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मवार्ष्णेययुद्धे पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

॥ सञ्जय उवाच ॥ दृष्ट्वा भीष्मं रणे क्रुद्धं पाण्डवैरभिसंवृतं । यथा मेघैर्महाराज तपान्ते दिवि भास्करं ।
दुर्य्योधनो महाराज दुःशासनमभाषत । एष शूरो महेष्वासो भीष्मः शूरनिसूदनः ।
छादितः पाण्डवैः शूरैः समन्ताद्भरतर्षभ । तस्य कार्य्यं त्वया वीर रक्षणं सुमहात्मनः ।
रक्ष्यमाणोऽपि समरे भीष्मोऽस्माकं पितामहः । निहन्यात् समरे सर्व्वान् पाञ्चालान् पाण्डवैः सह । ४०७०
तत्र कार्य्यतमं मन्ये भीष्मस्यैवाभिरक्षणं । गोप्ता ह्येष महेष्वासो भीष्मोऽस्माकं महाव्रतः ।
स भवान् सर्व्वसैन्येन परिवार्य्य पितामहं । समरे कर्म्म कुर्व्वाणं दुष्करं परिरक्षतु ।
स एवमुक्तः समरे पुत्त्रो दुःशासनस्तव । परिवार्य्य स्थितो भीष्मं सैन्येन महता वृतः ।
ततः शतसहस्राणां हयानां सुबलात्मजः । विमलप्रासहस्तानामृष्टितोमरधारिणां ।
दर्पितानां सुवेगानां बलस्थानां पताकिनां । शिक्षितैर्युद्धकुशलैरुपेतानां नरोत्तमैः । ४०७५
नकुलं सहदेवञ्च धर्म्मराजञ्च पाण्डवं । न्यवारयन्नरश्रेष्ठान् परिवार्य्य समन्ततः ।
ततो दुर्य्योधनो राजा शूराणां हयसादिनां । अयुतं प्रेषयामास पाण्डवानां निवारणे ।
तैः प्रविष्टैर्महावेगैर्गरुत्मद्भिरिवाहवे । खुराहता धरा राजंश्चकम्पे च ननाद च ।
खुरशब्दश्च सुमहान् वाजिनां शुश्रुवे तदा । महावंशवनस्येव दह्यमानस्य पर्व्वते ।
उत्पतद्भिश्च तैस्तत्र समुद्भूतं महद्रजः । दिवाकरपथं प्राप्य छादयामास भास्करं । ४०८०

वेगवद्भिर्हयैस्तैस्तु चोभिता पाण्डवी चमूः । निपतद्भिर्महावेगैर्हंसैरिव महत्सरः ।
ह्रेषताञ्चैव शब्देन न प्राज्ञायत किञ्चन । ततो युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ ।
प्रत्यघ्नंस्तरसा वेगं समरे हयसादिनां । उद्धृतस्य महाराज प्रावृट्कालेऽतिपूर्य्यतः ।
पौर्णमास्यामम्बुवेगं यथा वेला महोदधेः । ततस्ते रथिनो राजन् शरैः सन्नतपर्व्वभिः ।
न्यकृन्तन्नुत्तमाङ्गानि शरेण हयसादिनां । ते निपेतुर्महाराज निहता दृढधन्वभिः । ४७८५
नागैरिव महानागा यथावत् गिरिगह्वरे । तेऽपि प्रासैः सुनिशितैः शरैः सन्नतपर्व्वभिः ।
न्यकृन्तन्नुत्तमाङ्गानि विचरन्तो दिशो दश । अथाहता हयारोहा ऋष्टिभिर्भरतर्षभ ।
अत्यजन्नुत्तमाङ्गानि फलानीव महाद्रुमाः । ससादिनो हया राजंस्तत्र तत्र निसूदिताः ।
पतिताः पात्यमानाश्च प्रत्यदृश्यन्त सर्व्वशः । बध्यमाना हयाश्चैव प्राद्रवन्त भयार्दिताः ।
यथा सिंहं समासाद्य मृगाः प्राणपरायणाः । पाण्डवाश्च महाराज जित्वा शत्रून्महामृधे । ४७९०
दध्मुः शङ्खांश्च भेरीश्च ताडयामासुराहवे । ततो दुर्य्योधनो दीनो दृष्ट्वा सैन्यं पराजितं ।
अब्रवीत् भरतश्रेष्ठ मद्रराजमिदं वचः । एष पाण्डुसुतो ज्येष्ठो यमाभ्यां सहितो रणे ।
पश्यतां वो महाबाहो सेनां द्रावयति प्रभो । तं वारय महाबाहो वेलेव मकरालयं ।
त्वं हि संश्रूयसेऽत्यर्थमसह्यबलविक्रमः । पुत्त्रस्य तव तद्वाक्यं श्रुत्वा शल्यः प्रतापवान् ।
स ययौ रथवंशेन यत्र राजा युधिष्ठिरः । तदापतद्वै सहसा शल्यस्य सुमहद्बलं । ४७९५
महौघवेगं समरे वारयामास पाण्डवः । मद्रराजञ्च समरे धर्म्मराजो महारथः ।
दशभिः सायकैस्तूर्णमाजघान स्तनान्तरे । नकुलः सहदेवश्च तं सप्तभिरजिह्मगैः ।
मद्रराजोऽपि तान् सर्व्वानाजघान त्रिभिस्त्रिभिः । युधिष्ठिरं पुनः षष्ट्या विव्याध निशितैः शरैः ।
माद्रीपुत्त्रौ च संभ्रान्तो द्वाभ्यां द्वाभ्यामताडयत् । ततो भीमो महाबाहुर्दृष्ट्वा राजानमाहवे ।
मद्रराजरथं प्राप्तं मृत्योरास्यगतं यथा । अभ्यपद्यत सङ्ग्रामे युधिष्ठिरममित्रजित् । ४८००
ततो युद्धं महाघोरं प्रावर्त्तत सुदारुणं । अपरां दिशमास्थाय पतमाने दिवाकरे ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि शल्यधर्मराजसमागमे षडधिकशतोऽध्यायः ॥ १०६ ॥
॥ सञ्जय उवाच ॥ ततः पिता तव क्रुद्धो निशितैः सायकोत्तमैः । आजघान रणे पार्थान् सहसेनान् समन्ततः ।
भीमं द्वादशभिर्विद्ध्वा सात्यकिं नवभिः शरैः । नकुलन्तु त्रिभिर्विद्ध्वा सहदेवञ्च सप्तभिः ।
युधिष्ठिरं द्वादशभिर्बाह्वोरुरसि चार्पयत् । धृष्टद्युम्नन्ततो विद्ध्वा ननाद सुमहाबलः ।
तं द्वादशार्धैर्नकुलो माधवश्च त्रिभिः शरैः । धृष्टद्युम्नश्च सप्तत्या भीमसेनश्च सप्तभिः । ४८०५
युधिष्ठिरो द्वादशभिः प्रत्यविध्यत् पितामहं । द्रोणस्तु सात्यकिं विद्ध्वा भीमसेनमविध्यत ।
एकैकं पञ्चभिर्ब्बाणैर्यमदण्डोपमैः शितैः । तौ च तं प्रत्यविध्येतां त्रिभिस्त्रिभिरजिह्मगैः ।
तोत्त्रैरिव महानागं द्रोणं ब्राह्मणपुङ्गवं । सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः ।
अभीषाहाः शूरसेनाः शिवयोऽथ वसातयः । संग्रामे नाजहुर्भीष्मं बध्यमानं शितैः शरैः ।

तथैवान्ये महीपाला नानादेशसमागताः। पाण्डवानभ्यवर्त्तन्त विविधायुधपाणयः। ४८१०
तथैव पाण्डवा राजन् परिवव्रुः पितामहं। स समन्तात् परिवृतो रथौघैरपराजितः।
गहनेऽग्निरिवोत्सृष्टः प्रजज्वाल दहन् परान्। रथाग्न्यगारश्चापार्च्चिरसिशक्तिगदेन्धनः।
शरस्फुलिङ्गो भीष्माग्निर्ददाह क्षत्रियर्षभान्। सुवर्णपुङ्खैरिषुभिर्गार्द्ध्रपक्षैः सुतेजनैः।
कर्णिनालीकनाराचैश्छादयामास तद्बलं। अपातयद्ध्वजांश्चैव रथिनश्च शितैः शरैः।
मुण्डतालवनानीव चकार स रथव्रजान्। निर्मनुष्यान् रथान् राजन् गजानश्वांश्च संयुगे। ४८१५
अकरोत् स महाबाहुः सर्वशस्त्रभृतां वरः। तस्य ज्यातलनिर्घोषं विस्फूर्ज्जितमिवाशनेः।
निशम्य सर्वभूतानि समकम्पन्त भारत। अमोघा ह्यपतन् बाणाः पितुस्ते भरतर्षभ।
नासज्जन्त तनुत्रेषु भीष्मचापच्युताः शराः। हतवीरान् रथान् राजन् संयुक्तान् जवनैर्हयैः।
अपश्याम महाराज ह्रियमाणान् रणाजिरे। चेदिकाशिकरूषाणां सहस्राणि चतुर्द्दश।
महारथाः समाख्याताः कुलपुत्रास्तनुत्यजः। अपरावर्त्तिनः सर्वे सुवर्णविकृतध्वजाः। ४८२०
संग्रामे भीष्ममासाद्य व्यादितास्यमिवान्तकं। निमग्नाः परलोकाय सवाजिरथकुञ्जराः।
भग्नाक्षोपस्करान् कांश्चिद्भग्नचक्रांश्च भारत। अपश्याम महाराज शतशोऽथ सहस्रशः।
सवरूथै रथैर्भग्नै रथिभिश्च निपातितैः। शरैः सुकवचैश्छिन्नैः पट्टिशैश्च विशाम्पते।
गदाभिर्भिन्दिपालैश्च निशितैश्च शिलीमुखैः। अनुकर्षैरुपासङ्गैश्चक्रैर्भग्नैश्च मारिष।
बाहुभिः कार्म्मुकैः खड्गैः शिरोभिश्च सकुण्डलैः। तलत्रैरङ्गुलित्रैश्च ध्वजैश्च विनिपातितैः। ४८२५
चापैश्च बहुधाच्छिन्नैः समास्तीर्यन्त मेदिनी। हतारोहा गजा राजन् हताश्च हयसादिनः।
न्यपतन्त गतप्राणाः शतशोऽथ सहस्रशः। यतमानाश्च ते वीरा द्रवमाणान् महारथान्।
नाशक्नुवन् वारयितुं भीष्मबाणप्रपीडितान्। महेन्द्रसमवीर्य्येण वध्यमाना महाचमूः।
अभज्यत महाराज न च द्वौ सह धावतः। आविद्धरथनागाश्वं पतितध्वजकूबरं।
अनीकं पाण्डुपुत्राणां हाहाभूतमचेतनं। अजघानात्र पिता पुत्रं पुत्रश्च पितरं तथा। ४८३०
प्रियं सखायञ्चाक्रन्दे सखा दैवबलात्कृतः। विमुच्य कवचानन्ये पाण्डुपुत्रस्य सैनिकाः।
प्रकीर्य्य केशान् धावन्तः प्रत्यदृश्यन्त सर्वशः। तद्गोकुलमिवोद्भ्रान्तमुद्भ्रान्तरथकुञ्जरं।
ददृशे पाण्डुपुत्रस्य सैन्यमार्त्तस्वरं तदा। प्रभज्यमानं सैन्यन्तु दृष्ट्वा यादवनन्दनः।
उवाच पार्थं बीभत्सुं निगृह्य रथमुत्तमं। अयं स कालः सम्प्राप्तः पार्थ यः काङ्क्षितस्तव।
प्रहरास्मै नरव्याघ्र न चेन्मोहाद्विमुह्यसि। यत् पुरा कथितं वीर राज्ञां तेषां समागमे। ४८३५
विराटनगरे पार्थ सञ्जयस्य समीपतः। भीष्मद्रोणमुखान् सर्व्वान् धार्त्तराष्ट्रस्य सैनिकान्।
सानुबन्धान् हनिष्यामि ये मां योत्स्यन्ति संयुगे। इति तत् कुरु कौन्तेय सत्यं वाक्यमरिन्दम।
क्षत्रधर्ममनुस्मृत्य युध्यस्व विगतज्वरः। इत्युक्तो वासुदेवेन तिर्य्यग्दृष्टिरधोमुखः।
अकाम इव बीभत्सुरिदं वचनमब्रवीत्। अवध्यानां वधं कृत्वा राज्यं वा नरकोत्तरं।

दुःखानि वनवासे वा किं नु मे व्याहतं भवेत् । चोदयाश्वान् हृषीकेश करिष्ये वचनं तव । ४८४०
पातयिष्यामि दुर्द्धर्षं भीष्मं कुरुपितामहं । स चाश्वान् रजतप्रख्यान् चोदयामास माधवः ।
यतो भीष्मस्ततो राजन् दुष्प्रेक्ष्यो रश्मिवानिव । ततस्तत् पुनरावृत्तं युधिष्ठिरबलं महत् ।
दृष्ट्वा पार्थं महाबाहुं भीष्मायोद्यतमाहवे । ततो भीष्मः कुरुश्रेष्ठ सिंहवद्विनदन्मुहुः ।
धनञ्जयरथं शीघ्रं शरवर्षैरवाकिरत् । क्षणेन स रथस्तस्य सहयः सहसारथिः ।
शरवर्षेण महता न प्राज्ञायत किञ्चन । वासुदेवस्त्वसम्भ्रान्तो धैर्य्यमास्थाय सत्वरः । ४८४५
चोदयामास तानश्वान् वितुन्नान् भीष्मसायकैः । ततः पार्थो धनुर्गृह्य दिव्यं जलदनिस्वनं ।
पातयामास भीष्मस्य धनुश्छित्वा शितैः शरैः । स च्छिन्नधन्वा कौरव्यः पुनरन्यन्महद्धनुः ।
निमेषान्तरमात्रेण सज्जं चक्रे पिता तव । अथास्य तदपि क्रुद्धश्चिच्छेद धनुरर्ज्जुनः ।
तस्य तत् पूजयामास लाघवं शान्तनोः सुतः । साधु साधु महाबाहो साधु कुन्तीसुतेति च ।
समाभाष्यैनमपरं प्रगृह्य रुचिरं धनुः । मुमोच समरे भीष्मः शरान् पार्थरथं प्रति । ४८५०
अदर्शयद्वासुदेवो हययाने परं बलं । मोघान् कुर्व्वन् शरांस्तस्य मण्डलानि विदर्शयन् ।
शुशुभाते नरव्याघ्रौ तौ भीष्मशरविक्षतौ । गोवृषाविव संक्रुद्धौ विषाणोल्लिखिताङ्कितौ ।
वासुदेवस्तु सम्प्रेक्ष्य पार्थस्य मृदुयुद्धतां । भीष्मञ्च शरवर्षाणि सृजन्तमनिशं युधि ।
प्रतपन्तमिवादित्यं मध्यमासाद्य सेनयोः । वरान् वरान् विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् ।
युगान्तमिव कुर्व्वाणं भीष्मं यौधिष्ठिरे बले । नामृष्यत महाबाहुर्माधवः परवीरहा । ४८५५
उत्सृज्य रजतप्रख्यान् हयान् पार्थस्य मारिष । क्रुद्धो नाम महायोगी प्रचस्कन्द महारथात् ।
अभिदुद्राव भीष्मं स भुजप्रहरणो बली । प्रतोदपाणिस्तेजस्वी सिंहवद्विनदन्मुहुः ।
दारयन्निव पद्भ्यां स जगतीं जगतीश्वरः । क्रोधताम्रेक्षणः कृष्णो जिघांसुरमितद्युतिः ।
ग्रसन्निव च चेतांसि तावकानां महाहवे । दृष्ट्वा माधवमाक्रन्दे भीष्मायोद्यतमन्तिके ।
हतो भीष्मो हतो भीष्म इति तत्र वचो महत् । अश्रूयत महाराज वासुदेवभयात्तदा । ४८६०
पीतकौषेयसंवीतो मणिश्यामो जनार्द्दनः । शुशुभे विद्रवन् भीष्मं विद्युन्मालीव तोयदः ।
स सिंह इव मातङ्गं यूथर्षभ इवर्षभं । अभिदुद्राव वेगेन विनदन् माधवर्षभः ।
तमापतन्तं संप्रेक्ष्य पुण्डरीकाक्षमाहवे । असम्भ्रमं रणे भीष्मो विचकर्ष महद्धनुः ।
उवाच चैनं गोविन्दमसम्भ्रान्तेन चेतसा । एह्येहि पुण्डरीकाक्ष देवदेव नमोऽस्तु ते ।
मामद्य सात्वतश्रेष्ठ पातयस्व महाहवे । त्वया हि देव संग्रामे हतस्यापि ममानघ । ४८६५
श्रेय एव परं कृष्ण लोके भवति सर्व्वतः । सम्भावितोऽस्मि गोविन्द त्रैलोक्येनाद्य संयुगे ।
प्रहरस्व यथेष्टं वै दासोऽस्मि तव चानघ । अन्वगेव ततः पार्थः समभिद्रुत्य केशवं ।
निजग्राह महाबाहुर्बाहुभ्यां परिगृह्य वै । निगृह्यमाणः पार्थेन कृष्णो राजीवलोचनः ।
जगाम चैनमादाय वेगेन पुरुषोत्तमः । पार्थस्तु विष्टभ्य बली चरणौ परवीरहा ।

निजग्राह हृषीकेशं कार्ष्णिर्दशमे पदे। तत एनमुवाचार्त्तः क्रोधपर्य्याकुलेक्षणं। ४८७०
निश्वसन्तं यथा नागमर्ज्जुनः परवीरहा। निवर्त्तस्व महाबाहो नानृतं कर्त्तुमर्हसि।
यत्त्वया कथितं पूर्व्वं न योत्स्यामीति केशव। मिथ्यावादीति लोकास्त्वां कथयिष्यन्ति माधव।
ममैष भारः सर्व्वो हि हनिष्यामि पितामहं। शपे केशव शस्त्रेण सत्येन सुकृतेन च।
अन्तं यथा गमिष्यामि शत्रूणां शत्रुसूदन। अद्यैव पश्य दुर्द्धर्षं पात्यमानं महारथं।
तारापतिमिवापूर्णमन्तकाले यदृच्छया। माधवस्तु वचः श्रुत्वा फाल्गुनस्य महात्मनः। ४८७५
अकिञ्चिदुक्त्वा सक्रोध आरुरोह रथं पुनः। तौ रथस्थौ नरव्याघ्रौ भीष्मः शान्तनवः पुनः।
ववर्ष शरवर्षेण मेघो वृष्ट्या इवाचलं। प्राणानाधत्त योधानां पिता देवव्रतस्तव।
गभस्तिभिरिवादित्यस्तेजांसि शिशिरात्यये। यथा कुरूणां सैन्यानि बभञ्जुर्युधि पाण्डवाः।
तथा पाण्डवसैन्यानि बभञ्ज युधि ते पिता। हत विद्रुतसैन्यास्तु निरुत्साहा विचेतसः।
मध्यं गतमिवादित्यं प्रतपन्तं स्वतेजसा। ते वध्यमाना भीष्मेण शतशोऽथ सहस्रशः। ४८८०
निरीक्षितुं न शेकुस्ते भीष्ममप्रतिमं रणे। कुर्व्वाणं समरे कर्म्मातिमानुषविक्रमं।
वीक्षाञ्चक्रुर्महाराज पाण्डवा भयपीडिताः। तथा पाण्डवसैन्यानि द्राव्यमाणानि भारत।
त्रातारं नाध्यगच्छन्त गावः पङ्कगता इव। पिपीलिका इव क्षुण्णा दुर्ब्बला बलिना रणे।
महारथं भारत दुष्प्रकम्प्यं शरौघिणं प्रतपन्तं नरेन्द्रान्। भीष्मं न शेकुः प्रतिवीक्षितुं ते शरार्च्चिषं सूर्य्यमिवातपन्तं।
विमृद्नतस्तस्य तु पाण्डुसेनामस्तं जगामाथ सहस्ररश्मिः। ततो बलानां श्रमकर्षितानां मनोऽवहारं प्रति सम्बभूव। ४८८४

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि नवमदिवसयुद्धसमाप्तौ सप्ताधिकशततोऽध्यायः ॥ १०७ ॥

॥ सञ्जय उवाच ॥ युध्यतामेव तेषान्तु भास्करेऽस्तमुपागते। सन्ध्या समभवद्घोरा नापश्याम ततो रणं।
ततो युधिष्ठिरो राजा सन्ध्यां सन्दृश्य भारत। वध्यमानञ्च भीष्मेण त्यक्तास्त्रं भयविह्वलं।
स्वसैन्यञ्च पराबृत्तं पलायनपरायणं। भीष्मञ्च युधि संरब्धं पीडयन्तं महारथं।
सोमकांश्च जितान् दृष्ट्वा निरुत्साहान् महारथान्। चिन्तयित्वा ततो राजा ह्यवहारमरोचयत्।
ततोऽवहारं सैन्यानां चक्रे राजा युधिष्ठिरः। तथैव तव सैन्यानामवहारो ह्यभूत्तदा। ४८९०
ततोऽवहारं सैन्यानां कृत्वा तत्र महारथाः। न्यविशन्त कुरुश्रेष्ठ संग्रामे क्षतविक्षताः।
भीष्मस्य समरे कर्म्म चिन्तयित्वा तु पाण्डवाः। नालभन्त ततः शान्तिं भीष्मबाणप्रपीडिताः।
भीष्मोऽपि समरे जित्वा पाण्डवान् सहसृञ्जयान्। पूज्यमानस्तव सुतैर्वन्द्यमानश्च भारत।
न्यविशत् कुरुभिः सार्द्धं हृष्टरूपैः समन्ततः। ततो रात्रिः समभवत् सर्व्वभूतप्रमोहिनी।
तस्मिन् रात्रिमुखे घोरे पाण्डवा वृष्णिभिः सह। सृञ्जयाश्च दुराधर्षा मन्त्राय समुपाविशन्। ४८९५
आत्मनिःश्रेयसं सर्व्वे प्राप्तकालं महाबलाः। मन्त्रयामासुरव्यग्रा मन्त्रनिश्चयकोविदाः।
ततो युधिष्ठिरो राजा मन्त्रयित्वा चिरं नृप। वासुदेवं समुद्वीक्ष्य वचनञ्चेदमाददे।
कृष्ण पश्य महात्मानं भीष्ममुग्रपराक्रमं। गजं नलवनानीव विमृद्नन्तं बलं मम।

न चैवैनं महात्मानमुत्सहामो निरीक्षितुं। लेलिह्यमानं सैन्येषु प्रवृद्धमिव पावकं।
यथा घोरो महानागस्तक्षको वै विषोल्वणः। तथा भीष्मो रणे क्रुद्धस्तीक्ष्णशस्त्रः प्रतापवान्। ४९००
गृहीतचापः समरे प्रमुञ्चन्निशितान् शरान्। शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च देवराट्।
वरुणः पाशभृच्चापि सगदो वा धनेश्वरः। न तु भीष्मः सुसंक्रुद्धो जेतुं शक्यो महाहवे।
सोऽहमेवं गते कृष्ण निमग्नः शोकसागरे। आत्मनो बुद्धिदौर्ब्बल्यात् भीष्ममासाद्य संयुगे।
वनं यास्यामि दुर्द्धर्ष श्रेयो मे तत्र वै गतं। न युद्धं रोचये कृष्ण हन्ति भीष्मो हि नः सदा।
यथा प्रज्वलितं वह्निं पतङ्गः समभिद्रवन्। एकतो मृत्युमभ्येति तथाऽहं भीष्ममीयिवान्। ४९०५
क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी। भ्रातरश्चैव मे शूराः सायकैर्भृशपीडिताः।
मत्कृते भ्रातृसौहार्द्दाद्राज्यभ्रष्टा वनं गताः। परिक्लिष्टा तथा कृष्णा मत्कृते मधुसूदन।
जीवितं बहुमन्येऽहं जीवितं ह्यद्य दुर्लभं। जीवितस्याद्य शेषेण चरिष्ये धर्म्ममुत्तमं।
यदि तेऽहमनुग्राह्यो भ्रातृभिः सह केशव। स्वधर्म्मस्याविरोधेन हितं व्याहर केशव।
एतत् श्रुत्वा वचस्तस्य कारुण्याद्बहुविस्तरं। प्रत्युवाच ततः कृष्णः सान्त्वयानो युधिष्ठिरं। ४९१०
धर्म्मपुत्र विषादं त्वं मा कृथाः सत्यसङ्गर। यस्य ते भ्रातरः शूरा दुर्ज्जयाः शत्रुसूदनाः।
अर्ज्जुनो भीमसेनश्च वाय्वग्निसमतेजसौ। माद्रीपुत्रौ च विक्रान्तौ त्रिदशानामिवेश्वरौ।
मां वापि युङ्क्ष्व सौहार्द्दात् योत्स्ये भीष्मेण पाण्डव। त्वत्प्रयुक्तो महाराज किं न कुर्य्यां महाहवे।
हनिष्यामि रणे भीष्ममाहूय पुरुषर्षभं। पश्यतां धार्त्तराष्ट्राणां यदि नेच्छति फाल्गुनः।
यदि भीष्मे हते वीरे जयं पश्यसि पाण्डव। हन्तास्म्येकरथेनाद्य कुरुवृद्धं पितामहं। ४९१५
पश्य मे विक्रमं राजन् महेन्द्रस्येव संयुगे। विमुञ्चन्तं महास्त्राणि पातयिष्यामि तं रथात्।
यः शत्रुः पाण्डुपुत्राणां मच्छत्रुः स न संशयः। मदर्था भवदीया ये ये मदीयास्तवैव ते।
तव भ्राता मम सखा सम्बन्धी शिष्य एव च। मांसान्युत्कृत्य दास्यामि फाल्गुनार्थे महीपते।
एष चापि नरव्याघ्रो मत्कृते जीवितं त्यजेत्। एष नः समयस्तात तारयेम परस्परं।
स मां नियुङ्क्ष्व राजेन्द्र यथा योद्धा भवाम्यहं। प्रतिज्ञातमुपप्लव्ये यत्तत् पार्थेन पूर्व्वतः। ४९२०
घातयिष्यामि गाङ्गेयमिति लोकस्य सन्निधौ। परिरक्ष्यमिदं तावत् वचः पार्थस्य धीमतः।
अनुज्ञातन्तु पार्थेन मया कार्य्यमसंशयः। अथ वा फाल्गुनस्यैष भारः परिमितो रणे।
स हनिष्यति सङ्ग्रामे भीष्मं परपुरञ्जयं। अशक्यमपि कुर्य्याद्धि रणे पार्थः समुद्यतः।
त्रिदशान् वा समुद्युक्तान् सहितान् दैत्यदानवैः। निहन्यादर्ज्जुनः सङ्ख्ये किमु भीष्मं नराधिप।
विपरीतो महावीर्य्यो गतसत्त्वोऽल्पचेतनः। भीष्मः शान्तनवो नूनं कर्त्तव्यं नावबुध्यते। ४९२५
॥ युधिष्ठिर उवाच ॥ एवमेतन्महाबाहो यथा वदसि माधव। सर्व्वे ह्येते न पर्य्याप्तास्तव वेगविधारणे।
नियतं समवाप्स्यामि सर्व्वमेतद्यथेप्सितं। यस्य मे पुरुषव्याघ्र भवान् पक्षे व्यवस्थितः।
सेन्द्रानपि रणे देवान् जयेयं जयतां वर। त्वया नाथेन गोविन्द किमु भीष्मं महारथं।

न तु त्वामनृतं कर्त्तुमुत्सहे स्वार्थगौरवात्। अयुध्यमानः साहाय्यं यथोक्तं कुरु माधव।
समयस्तु कृतः कश्चिन्मम भीष्मेण संयुगे। मन्त्रयिष्ये तवार्थाय न तु योत्स्ये कथञ्चन। ४९३०
दुर्य्योधनार्थे योत्स्यामि सत्यमेतदिति प्रभो। स हि राज्यस्य मे दाता मन्त्रस्यैव च माधव।
तस्माद्देवव्रतं भूयो वधोपायार्थमात्मनः। भवन्तः सहिताः सर्व्वे प्रयाम मधुसूदन।
ते वयं सहिता गत्वा भीष्ममाशु नरोत्तमं। न चिरात् सर्व्वे वार्ष्णेय मन्त्रं पृच्छाम कौरवं।
स वक्ष्यति हितं वाक्यं सत्यमस्मान् जनार्द्दन। यथा स वक्ष्यते कृष्ण तथा कर्त्ताऽस्मि संयुगे।
स नो जयस्य दाता स्यान्मन्त्रस्य च दृढव्रतः। बालाः पित्रा विहीनाश्च तेन संवर्द्धिता वयं। ४९३५
तञ्चेत् पितामहं वृद्धं हन्तुमिच्छामि माधव। पितुः पितरमिष्टं वै धिगस्तु क्षत्रजीविकां।
॥ सञ्जय उवाच ॥ ततोऽब्रवीन्महाराज वार्ष्णेयः कुरुनन्दनं। रोचते मे महाप्राज्ञ राजेन्द्र तव भाषितं।
देवव्रतः कृती भीष्मः प्रेक्षितेनापि निर्द्दहेत्। गम्यतां स वधोपायं प्रष्टुं सागरगासुतं।
वक्तुमर्हति सत्यं स त्वया पृष्टो विशेषतः। ते वयं तत्र गच्छामः प्रष्टुं कुरुपितामहं।
गत्वा शान्तनवं वृद्धं मन्त्रं पृच्छाम भारत। स नो दास्यति यं मन्त्रं तेन योत्स्यामहे परान्। ४९४०
एवमामन्त्र्य ते वीरा पाण्डवाः पाण्डुपूर्व्वजं। जग्मुस्ते सहिताः सर्व्वे वासुदेवश्च वीर्य्यवान्।
विमुक्तशस्त्रकवचा भीष्मस्य सदनं प्रति। प्रविश्य च तदा भीष्मं शिरोभिः प्रतिपेदिरे।
पूजयन्तो महाराज पाण्डवा भरतर्षभं। प्रणम्य शिरसा चैनं भीष्मं शरणमभ्ययुः।
तानुवाच महाबाहुर्भीष्मः कुरुपितामहः। स्वागतं तव वार्ष्णेय स्वागतन्ते धनञ्जय।
स्वागतं धर्म्मराजाय भीमाय यमयोस्तथा। किं वा कार्य्यं करोम्यद्य युष्माकं प्रीतिवर्द्धनं। ४९४५
सर्व्वात्मनाऽपि कर्त्तास्मि यद्यपि स्यात् सुदुष्करं। तथा ब्रुवाणं गाङ्गेयं प्रीतियुक्तं पुनःपुनः।
उवाच राजा दीनात्मा प्रीतियुक्तमिदं वचः। कथं जयेम सर्व्वज्ञ कथं राज्यं लभेमहि।
प्रजानां सङ्क्षयो न स्यात् कथं तन्मे वद प्रभो। भवान् हि नो वधोपायं ब्रवीतु स्वयमात्मनः।
भवन्तं समरे वीर विषहेम कथं वयं। न हि ते सूक्ष्ममप्यस्ति रन्ध्रं कुरुपितामह।
मण्डलेनैव धनुषा दृश्यसे संयुगे सदा। आददानं सन्दधानं विकर्षन्तं धनुश्च च। ४९५०
पश्यामस्त्वां महाबाहो रथे सूर्य्यमिवापरं। रथाश्वनरनागानां हन्तारं परवीरहन्।
कोऽस्य चोत्सहते जेतुं त्वां पुमान् भरतर्षभ। वर्षता शरवर्षेण संयुगे वैशसं कृतं।
क्षयं नीता हि पृतना संयुगे महती मम। यथा युधि जयेम त्वां यथा राज्यं भवेन्मम।
मम सैन्यस्य च क्षेमं तन्मे ब्रूहि पितामह। ततोऽब्रवीच्छान्तनवः पाण्डवान् पाण्डुपूर्व्वज।
न कथञ्चन कौन्तेय मयि जीवति संयुगे। जयो भवति सर्व्वज्ञ सत्यमेतद्ब्रवीमि ते। ४९५५
निर्ज्जिते मयि युद्धेन रणे जेष्यथ पाण्डवाः। क्षिप्रं मयि प्रहरध्वं यदीच्छथ रणे जयं।
अनुजानामि वः पार्थाः प्रहरध्वं यथासुखं। एवं हि सुकृतं मन्ये भवतां विदितोऽस्म्यहं।
हते मयि हतं सर्व्वं तस्मादेवं विधीयतां।

॥ युधिष्ठिर उवाच ॥ ब्रूहि तस्मादुपायं नो यथा युद्धे जयेमहि । भवन्तं समरे क्रुद्धं दण्डहस्तमिवान्तकं ।
शक्तो वज्रधरो जेतुं वरुणोऽथ यमस्तथा । न भवान् समरे शक्यः सेन्द्रैरपि सुरासुरैः । ४९१०

॥ भीष्म उवाच ॥ सत्यमेतन्महाबाहो यथा वदसि पाण्डव । नाहं जेतुं रणे शक्यः सेन्द्रैरपि सुरासुरैः ।
आत्तशस्त्रो रणे यत्तो गृहीतवरकार्म्मुकः । ततो मां न्यस्तशस्त्रं तु एते हन्युर्महारथाः ।
निक्षिप्तशस्त्रे पतिते विमुक्तकवचध्वजे । द्रवमाणे च भीते च तवास्मीति च वादिनि ।
स्त्रियां स्त्रीनामधेये च विकले चैकपुत्रिणि । अप्रशस्ते नरे चैव न युद्धं रोचते मम ।
इदं मे शृणु राजेन्द्र सङ्कल्पं पूर्व्वचिन्तितं । अमङ्गल्यध्वजं दृष्ट्वा न युध्येयं कदाचन । ४९१५
य एष द्रुपदो राजंस्तव सैन्ये महारथः । शिखण्डी समरामर्षी शूरश्च समितिञ्जयः ।
यथाऽभवच्च स्त्रीपूर्व्वं पश्चात् पुंस्त्वं समागतः । जानन्ति च भवन्तोऽपि सर्व्वमेतद्यथातथं ।
अर्ज्जुनः समरे शूरः पुरस्कृत्य शिखण्डिनं । मामेव विशिखैस्तीक्ष्णैरभिद्रवतु दंशितः ।
अमङ्गल्यध्वजे तस्मिन् स्त्रीपूर्व्वे च विशेषतः । न प्रहर्त्तुमभीप्सामि गृहीतेषुः कथञ्चन ।
तदन्तरं समासाद्य पाण्डवो मां धनञ्जयः । शरैर्घातयतु क्षिप्रं समन्तात् भरतर्षभ । ४९२०
न तं पश्यामि लोकेषु मां हन्यात् यः समुद्यतं । ऋते कृष्णान्महाभागात् पाण्डवाद्वा धनञ्जयात् ।
एष तस्मात् पुरोधाय कञ्चिदन्यं ममाग्रतः । आत्तशस्त्रो रणे यत्तो गृहीतवरकार्म्मुकः ।
मां पातयतु बीभत्सुरेवं तव जयो ध्रुवः । एतत् कुरुष्व राजेन्द्र यथोक्तं मम सुव्रत ।
संग्रामे धार्त्तराष्ट्रांश्च हन्याः सर्व्वान् समागतान् ।

॥ सञ्जय उवाच ॥ ते तु ज्ञात्वा ततः पार्था जग्मुः स्वशिबिरं प्रति । अभिवाद्य महात्मानं भीष्मं कुरुपितामहं । ४९२५
तथोक्तवति गाङ्गेये परलोकाय दीक्षिते । अर्ज्जुनो दुःखसन्तप्तः सव्रीडमिदमब्रवीत् ।
गुरुणा कुरुवृद्धेन कृतप्रज्ञेन धीमता । पितामहेन संग्रामे कथं योत्स्यामि माधव ।
क्रीडता हि मया बाल्ये वासुदेव महामनाः । पांशुरूषितगात्रेण महात्मा कलुषीकृतः ।
यस्याहमधिरुह्याङ्कं बालः किल गदाग्रज । तातेत्यवोचं पितरं पितुः पाण्डोर्महात्मनः ।
नाहं तातस्तव पितुस्तातोऽस्मि तव भारत । इति मामब्रवीद्बाल्ये यः स वध्यः कथं मया । ४९३०
कामं वध्यतु सैन्यं मे नाहं योत्स्ये महात्मना । जयो वधो वा मे भूयात् कथं वा कृष्ण मन्यसे ।

॥ वासुदेव उवाच ॥ प्रतिज्ञाय वधं जिष्णो पुरा भीष्मस्य संयुगे । क्षत्रधर्म्मस्थितः पार्थः कथं नैनं हनिष्यसि ।
पातयैनं रथात् पार्थ क्षत्रियं युद्धदुर्म्मदं । नाहत्वा युधि गाङ्गेयं विजयस्ते भविष्यति ।
दृष्टमेतत् पुरा देवैर्गमिष्यति यमक्षयं । यद्दृष्टं हि पुरा पार्थ तत्तथा न तदन्यथा ।
न हि भीष्मं दुराधर्षं व्यात्ताननमिवान्तकं । त्वदन्यः शक्नुयात् योद्धुमपि वज्रधरः स्वयं । ४९३५
जहि भीष्मं स्थिरो भूत्वा शृणु चेदं वचो मम । यथोवाच पुरा शक्रं महाबुद्धिर्बृहस्पतिः ।
ज्यायांसमपि चेत् वृद्धं गुणैरपि समन्वितं । आततायिनमायान्तं हन्यात् घातकमात्मनः ।
शाश्वतोऽयं स्थितो धर्म्मः क्षत्रियाणां धनञ्जय । योद्धव्यं रक्षितव्यञ्च यष्टव्यञ्चानसूयिभिः ।

॥ अर्ज्जुन उवाच ॥ शिखण्डी निधनं कृष्ण भीष्मस्य भविता ध्रुवं । दृष्ट्वैव हि सदा भीष्मः पाञ्चाल्यं विनिवर्त्तते ।
ते वयं प्रमुखे तस्य पुरस्कृत्य शिखण्डिनं । गाङ्गेयं पातयिष्याम उपायेनेति मे मतिः । ४९९०
अहमन्यान्महेष्वासान् वारयिष्यामि सायकैः । शिखण्ड्यपि युधां श्रेष्ठं भीष्ममेवाभियोधयेत् ।
श्रुतं हि कुरुमुख्यस्य नाहं हन्यां शिखण्डिनं । कन्या ह्येषा पुरा भूत्वा पुरुषः समपद्यत ।
इत्येवं निश्चयं कृत्वा पाण्डवाः सहमाधवाः । अनुमान्य महात्मानं प्रययुर्हृष्टमानसाः ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि नवमदिवसावहारोत्तरमन्त्रे अष्टाधिकशतोऽध्यायः ॥ १०८ ॥
॥ धृतराष्ट्र उवाच ॥ कथं शिखण्डी गाङ्गेयमभ्यवर्त्तत संयुगे । पाण्डवांश्च कथं भीष्मस्तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ ततस्ते पाण्डवाः सर्व्वे सूर्य्यस्योदयनं प्रति । ताड्यमानासु भेरीषु मृदङ्गेष्वानकेषु च । ४९९५
ध्मायत्सु दधिवर्णेषु जलजेषु समन्ततः । शिखण्डिनं पुरस्कृत्य निर्याताः पाण्डवा युधि ।
कृत्वा व्यूहं महाराज सर्व्वशत्रुनिवर्हणं । शिखण्डी सर्व्वसैन्यानामग्र आसीद्विशाम्पते ।
चक्ररक्षौ ततस्तस्य भीमसेनधनञ्जयौ । पृष्ठतो द्रौपदेयाश्च सौभद्रश्चैव वीर्य्यवान् ।
सात्यकिश्चेकितानश्च तेषां गोप्ता महारथः । धृष्टद्युम्नस्ततः पश्चात् पाञ्चालैरभिरक्षितः ।
ततो युधिष्ठिरो राजा यमाभ्यां सहितः प्रभुः । प्रययौ सिंहनादेन नादयन् भरतर्षभ । ५०००
विराटस्तु ततः पश्चात् स्वेन सैन्येन संवृतः । द्रुपदश्च महाबाहो ततः पश्चादुपाद्रवत् ।
केकया भ्रातरः पञ्च धृष्टकेतुश्च वीर्य्यवान् । जघनं पालयामासुः पाण्डुसैन्यस्य भारत ।
एवं व्यूह्य महासैन्यं पाण्डवास्तव वाहिनीं । अभ्यद्रवन्त सङ्ग्रामे त्यक्त्वा जीवितमात्मनः ।
तथैव कुरवो राजन् भीष्मं कृत्वा महारथं । अग्रतः सर्व्वसैन्यानां प्रययुः पाण्डवान् प्रति ।
पुत्त्रैस्तव दुराधर्षो रक्षितः सुमहाबलैः । ततो द्रोणो महेष्वासः पुत्त्रश्चास्य महाबलः । ५००५
भगदत्तस्ततः पश्चाद्गजानीकेन संवृतः । कृपश्च कृतवर्म्मा च भगदत्तमनुव्रतौ ।
काम्बोजराजो बलवान् ततः पश्चात् सुदक्षिणः । मागधश्च जयत्सेनः सौबलश्च बृहद्बलः ।
तथैवान्ये महेष्वासाः सुशर्म्मप्रमुखा नृपाः । जघनं पालयामासुस्तव सैन्यस्य भारत ।
दिवसे दिवसे प्राप्ते भीष्मः शान्तनवो युधि । आसुरानकरोद्व्यूहान् पैशाचानथ राक्षसान् ।
ततः प्रववृते युद्धं तव तेषाञ्च भारत । अन्योऽन्यं निघ्नतां राजन् यमराष्ट्रविवर्द्धनं । ५०१०
अर्ज्जुनप्रमुखाः पार्थाः पुरस्कृत्य शिखण्डिनं । भीष्मं युद्धेऽभ्यवर्त्तन्त किरन्तो विविधान् शरान् ।
तत्र भारत भीमेन ताडितास्तावकाः शरैः । रुधिरौघपरिक्लिन्नाः परलोकं ययुस्तदा ।
नकुलः सहदेवश्च सात्यकिश्च महारथः । तव सैन्यं समासाद्य पीडयामासुरोजसा ।
ते वध्यमानाः समरे तावका भरतर्षभ । नाशक्नुवन् वारयितुं पाण्डवानां महद्बलं ।
ततस्तत्तावकं सैन्यं वध्यमानं समन्ततः । सुसम्प्राप्तं दश दिशः काल्यमानं महारथैः । ५०१५
त्रातारं नाध्यगच्छन्त तावका भरतर्षभ । वध्यमानाः शितैर्व्बाणैः पाण्डवैः सह सृञ्जयैः ।
॥ धृतराष्ट्र उवाच ॥ पीड्यमानं बलं दृष्ट्वा पार्थैर्भीष्मः पराक्रमी । यदकार्षीद्रणे क्रुद्धस्तन्ममाचक्ष्व सञ्जय ।

कथं वा पाण्डवान् युद्धे प्रत्युद्यातः परन्तपः । विनिघ्नन् सोमकान् वीरस्तदाचक्ष्व ममानघ ।
॥ सञ्जय उवाच ॥ आचक्षे ते महाराज यदकार्षीत् पिता तव । पीडिते तव पुत्रस्य सैन्ये पाण्डवसृञ्जयैः ।
प्रहृष्टमनसः शूराः पाण्डवाः पाण्डुपूर्व्वज । अभ्यवर्त्तन्त निघ्नन्तस्तव पुत्रस्य वाहिनीं । ५०२०
तं विनाशं मनुष्येन्द्र नरवारणवाजिनां । नामृष्यत तदा भीष्मः सैन्यघातं रणे परैः ।
स पाण्डवान् महेष्वासः पाञ्चालांश्चैव सृञ्जयान् । नाराचैर्व्वत्सदन्तैश्च शितैरञ्जलिकैस्तथा ।
अभ्यवर्षत दुर्द्धर्षस्त्यक्त्वा जीवितमात्मनः । स पाण्डवानां प्रवरान् पञ्च राजन् महारथान् ।
आत्तशस्त्रो रणे यत्तान् वारयामास सायकैः । नानाशस्त्रास्त्रवर्षैस्तान् वीर्य्यामर्षप्रवेरितैः ।
निजघ्ने समरे क्रुद्धो हत्यश्वं चामितं बहु । रथिनो ऽपातयद्राजन् रथेभ्यः पुरुषर्षभ । ५०२५
सादिनश्चाश्वपृष्ठेभ्यः पदातींश्च समागतान् । गजारोहान् गजेभ्यश्च परेषां विदधद्भयं ।
तमेकं समरे भीष्मं त्वरमाणं महारथं । पाण्डवाः समवर्त्तन्त वज्रहस्तमिवासुराः ।
शक्राशनिसमस्पर्शान् विमुञ्चन्निशितान् शरान् । दिक्ष्वदृश्यत सर्व्वासु घोरं सन्धारयन् वपुः ।
मण्डलीभूतमेवास्य नित्यं धनुरदृश्यत । सङ्ग्रामे युध्यमानस्य शक्रचापोपमं महत् ।
तद्दृष्ट्वा समरे कर्म्म पुत्रास्तव विशाम्पते । विस्मयं परमं गत्वा पितामहमपूजयन् । ५०३०
पार्था विमनसो भूत्वा प्रैक्षन्त पितरं तव । युध्यमानं महाशूरं विप्रचित्तिमिवामराः ।
न चैनं वारयामासुर्व्यात्ताननमिवान्तकं । दशमे ऽहनि सङ्ग्रामे रथानीकं शिखण्डिनः ।
अदहन्निशितैर्ब्बाणैः कृष्णवर्त्मेव काननं । तं शिखण्डी त्रिभिर्ब्बाणैरभ्यविध्यत् स्तनान्तरे ।
आशीविषमिव क्रुद्धं कालसृष्टमिवान्तकं । स तेनातिभृशं विद्धः प्रेक्ष्य भीष्मः शिखण्डिनं ।
अनिच्छन्निव संक्रुद्धः प्रहसन्निदमब्रवीत् । काममभ्यस वा मा वा न त्वां योत्स्ये कथञ्चन । ५०३५
यैव हि त्वं कृता धात्रा सैव हि त्वं शिखण्डिनी । तस्य तद्वचनं श्रुत्वा शिखण्डी क्रोधमूर्च्छितः ।
उवाच भीष्मं समरे सृक्किणी परिसंलिहन् । जानामि त्वां महाबाहो क्षत्रियाणां क्षयङ्कर ।
मया श्रुतञ्च ते युद्धं जामदग्न्येन चैव हि । दिव्यश्च ते प्रभावो ऽयं मया च बहुशः श्रुतः ।
जानन्नपि प्रभावन्ते योत्स्ये ऽद्याहं त्वया सह । पाण्डवानां प्रियं कुर्व्वन्नात्मनश्च परन्तप ।
अद्य त्वां योधयिष्यामि रणे पुरुषसत्तम । ध्रुवञ्च त्वां हनिष्यामि शपे सत्येन ते ऽग्रतः । ५०४०
एतच्छ्रुत्वा च मद्वाक्यं यत् कृत्यं तत् समाचर । काममभ्यस वा मा वा न मे जीवन् विमोक्ष्यसे ।
सुदृष्टः क्रियतां भीष्म लोको ऽयं समितिञ्जय ।
॥ सञ्जय उवाच ॥ एवमुक्त्वा ततो भीष्मं पञ्चभिर्नतपर्व्वभिः । अविध्यत रणे भीष्मं सुतुदं वाक्यसायकैः ।
तस्य तद्वचनं श्रुत्वा सव्यसाची महारथः । कालो ऽयमिति सञ्चिन्त्य शिखण्डिनमचोदयत् ।
अहं त्वामनुयोत्स्यामि परान् विद्रावयन् शरैः । अभिद्रव सुसंरब्धो भीष्मं भीमपराक्रमं । ५०४५
न हि ते संयुगे पीडां शक्यं कर्त्तुं महाबल । तस्मादद्य महाबाहो यत्तो भीष्ममभिद्रव ।
अहत्वा समरे भीष्मं यदि यास्यसि मारिष । अवहास्यो ऽस्य लोकस्य भविष्यसि मया सह ।

नावहास्या वयं वीर भवेम परमाहवे। तथा कुरु रणे यत्नं साधयस्व पितामहं।
अहन्ते रक्षणं युद्धे करिष्यामि महाबल। वारयन् रथिनः सर्व्वान् साधयित्वा पितामहं।
द्रोणञ्च द्रोणपुत्रञ्च कृपञ्चाथ सुयोधनं। चित्रसेनं विकर्णञ्च सैन्धवञ्च जयद्रथं। ५०५०
विन्दानुविन्दावावन्त्यौ काम्बोजञ्च सुदक्षिणं। भगदत्तं तथा शूरं मागधञ्च महाबलं।
सौमदत्तिं तथा शूरमार्ष्यशृङ्गिञ्च राक्षसं। त्रिगर्त्तराजञ्च रणे सह सर्व्वैर्महारथैः।
अहमावारयिष्यामि वेलेव मकरालयं। कुरूंश्च सहितान् सर्व्वान् युध्यमानान् महाबलान्।
अहं निवारयिष्यामि साधयस्व पितामहं।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि दशमदिवसयुद्धारम्भे भीष्मशिखण्डिप्रलापे नवाधिकशततोऽध्यायः॥ १०९॥

॥ धृतराष्ट्र उवाच ॥ कथं शिखण्डी गाङ्गेयमभ्यधावत्पितामहं। पाञ्चाल्यः समरे क्रुद्धो धर्म्मात्मानं यतव्रतं। ५०५५
केऽरक्षन् पाण्डवानीके शिखण्डिनमुदायुधाः। त्वरमाणास्त्वराकाले जिगीषन्तो महारथाः।
कथं शान्तनवो भीष्मः स तस्मिन् दशमेऽहनि। अयुध्यत महावीर्य्यः पाण्डवैः सह सृञ्जयैः।
न मृष्यामि रणे भीष्मं प्रत्युद्यातं शिखण्डिनं। कच्चिन्न रथभङ्गोऽस्य धनुर्व्वाऽशीर्य्यतास्यतः।
॥ सञ्जय उवाच ॥ नाशीर्य्यत धनुस्तस्य रथभङ्गो न चाप्यभूत्। युध्यमानस्य सङ्ग्रामे भीष्मस्य भरतर्षभ।
निघ्नतः समरे शत्रून् शरैः सन्नतपर्व्वभिः। अनेकशतसाहस्रास्तावकानां महारथाः। ५०६०
तथा दन्तिगणा राजन् हयाश्चैव सुसज्जिताः। अभ्यवर्त्तन्त युद्धाय पुरस्कृत्य पितामहं।
यथाप्रतिज्ञं कौरव्य स चापि समितिञ्जयः। पार्थानामकरोद्भीष्मः सततं समितिक्षयं।
युध्यमानं महेष्वासं विनिघ्नन्तं परान् शरैः। पाञ्चालाः पाण्डवैः सार्द्धं सर्व्वे ते नाभ्यधारयन्।
दशमेऽहनि सम्प्राप्ते ततस्तां रिपुवाहिनीं। कीर्य्यमाणां शितैर्व्वाणैः शतशोऽथ सहस्रशः।
न हि भीष्मं महेष्वासं पाण्डवाः पाण्डुपूर्व्वज। अशक्नुवन् रणे जेतुं पाशहस्तमिवान्तकं। ५०६५
अथोपायान्महाराज सव्यसाची धनञ्जयः। त्रासयन् रथिनः सर्व्वान् बीभत्सुरपराजितः।
सिंहवद्विनदन्नुच्चैर्धनुर्ज्यां विक्षिपन्मुहुः। शरौघान् विसृजन् पार्थो व्यचरत् कालवद्रणे।
तस्य शब्देन वित्रस्तास्तावका भरतर्षभ। सिंहस्येव मृगा राजन् व्यद्रवन्त महाभयात्।
जयन्तं पाण्डवं दृष्ट्वा तत् सैन्यञ्चाभिपीडितं। दुर्य्योधनस्ततो भीष्ममब्रवीत् भयपीडितः।
एष पाण्डुसुतस्तात श्वेताश्वः कृष्णसारथिः। दहते मामकान् सर्व्वान् कृष्णवर्त्मेव काननं। ५०७०
पश्य सैन्यानि गाङ्गेय द्रवमाणानि सर्व्वशः। पाण्डवेन युधां श्रेष्ठ काल्यमानानि संयुगे।
यथा पशुगणान् पालः सङ्कालयति कानने। तथेदं मामकं सैन्यं काल्यते शत्रुतापन।
धनञ्जयशरैर्भग्नं द्रवमाणञ्च सर्व्वतः। भीमोऽप्येवं दुराधर्षो विद्रावयति मे बलं।
सात्यकिश्चेकितानश्च माद्रीपुत्रौ च पाण्डवौ। अभिमन्युः सविक्रान्तो वाहिनीं द्रवते मम।
धृष्टद्युम्नस्तथा शूरो राक्षसश्च घटोत्कचः। व्यद्रावयेतां सहसा सैन्यं मम महारणे। ५०७५
वध्यमानस्य सैन्यस्य सर्व्वैरेतैर्महारथैः। नान्याङ्गतिम्प्रपश्यामि स्थाने युद्धे च भारत।

ऋते त्वां पुरुषव्याघ्र देवतुल्यपराक्रमं । पर्य्याप्नोतु भवान् शीघ्रं पीडितानां गतिर्भव ।
एवमुक्तो महाराज पिता देवव्रतस्तव । चिन्तयित्वा मुहूर्त्तन्तु कृत्वा निश्चयमात्मनः ।
तव सन्धारयन् पुत्त्रमब्रवीच्छान्तनोः सुतः । दुर्य्योधन विजानीहि स्थिरो भूत्वा विशाम्पते ।
पूर्व्वकालं तव मया प्रतिज्ञातं महाबल । हत्वा दशसहस्राणि क्षत्त्रियाणां महात्मनां ।  ५०८०
सङ्ग्रामाद्व्यपयातव्यमेतत्कर्म्म ममाह्निकं । इति तत्कृतवांश्चाहं यथोक्तं भरतर्षभ ।
अद्य चापि महत्कर्म्म प्रकरिष्ये महाबल । अहं वा निहतः शेष्ये हनिष्ये वाऽद्य पाण्डवान् ।
अद्य ते पुरुषव्याघ्र प्रतिमोक्ष्ये ऋणन्तव । भर्त्तृपिण्डकृते राजन् निहतः पृतनामुखे ।
इत्युक्त्वा भरतश्रेष्ठ क्षत्त्रियान् प्रवपञ्छरैः । आससाद दुराधर्षः पाण्डवानामनीकिनीं ।
अनीकमध्ये तिष्ठन्तं गाङ्गेयं भरतर्षभ । आशीविषमिव क्रुद्धं पाण्डवाः प्रत्यवारयन् ।  ५०८५
दशमेऽहनि भीष्मस्तु दर्शयन् शक्तिमात्मनः । राजन् शतसहस्राणि सोऽबधीत्कुरुनन्दन ।
पाञ्चालानाञ्च ये श्रेष्ठा राजपुत्त्रा महारथाः । तेषामादत्त तेजांसि जलं सूर्य्य इवांशुभिः ।
हत्वा दशसहस्राणि कुञ्जराणां तरस्विनां । सारोहाणां महाराज हयानाञ्चायुतन्तथा ।
पूर्णे शतसहस्रे च पदातानां नरोत्तमः । प्रजज्वाल रणे भीष्मो विधूम इव पावकः ।
न चैनं पाण्डवेयानां केचिच्छेकुर्निरीक्षितुं । उत्तरं मार्गमास्थाय तपन्तमिव भास्करं ।  ५०९०
ते पाण्डवेयाः समरे महेष्वासेन पीडिताः । बधायाभ्यद्रवन् भीष्मं सृञ्जयाश्च महारथाः ।
संयुध्यमानो बहुभिर्भीष्मः शान्तनवस्तथा । अवकीर्णो महामेरुः शैलो मेघैरिवावृतः ।
पुत्त्रस्तु तव गाङ्गेयं समन्तात्पर्य्यवारयत् । महत्या सेनया सार्द्धं ततो युद्धमवर्त्तत ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मबधपर्व्वणि दुर्य्योधनभीष्मसंवादे दशाधिकशततोऽध्यायः ॥ ११० ॥
॥ सञ्जय उवाच ॥ अर्ज्जुनस्तु रणे राजन् दृष्ट्वा भीष्मस्य विक्रमं । शिखण्डिनमथोवाच समभ्येहि पितामहं ।
न चापि भीस्त्वया कार्य्या भीष्मादद्य कथञ्चन । अहमेनं शरैस्तीक्ष्णैः पातयिष्ये रथोत्तमात् ।  ५०९५
एवमुक्तस्तु पार्थेन शिखण्डी भरतर्षभ । अभ्यद्रवत गाङ्गेयं श्रुत्वा पार्थस्य भाषितं ।
धृष्टद्युम्नस्तथा राजन् सौभद्रश्च महारथः । हृष्टावाद्रवतो भीष्मं श्रुत्वा पार्थस्य भाषितं ।
विराटद्रुपदौ वृद्धौ कुन्तिभोजश्च दंशितः । अभ्यद्रवत गाङ्गेयं पुत्त्रस्य तव पश्यतः ।
नकुलः सहदेवश्च धर्म्मराजश्च वीर्य्यवान् । तथेतराणि सैन्यानि सर्व्वाण्येव विशाम्पते ।
प्रत्युद्ययुस्तावकाश्च समेतान् तान् महारथान् । यथाशक्ति यथोत्साहं तन्मे निगदतः शृणु ।  ५१००
चित्रसेनो महाराज चेकितानं समभ्ययात् । भीष्मप्रेप्सुं रणे यान्तं वृषं व्याघ्रशिशुर्यथा ।
धृष्टद्युम्नं महाराज भीष्मान्तिकमुपागतं । त्वरमाणं रणे यत्तं कृतवर्म्मा न्यवारयत् ।
भीमसेनं सुसंक्रुद्धं गाङ्गेयस्य बधैषिणं । त्वरमाणो महाराज सौमदत्तिर्न्यवारयत् ।
तथैव नकुलं शूरं किरन्तं सायकान् बहून् । विकर्णो वारयामास इच्छन् भीष्मस्य जीवितं ।
सहदेवं तथा राजन् यान्तं भीष्मरथं प्रति । वारयामास संक्रुद्धः कृपः शारद्वतो युधि ।  ५१०५

राक्षसं क्रूरकर्म्माणं भैमसेनिं महाबलं। भीष्मस्य निधनं प्रेप्सुर्दुर्मुखोऽभ्यद्रवद्बली ॥
सात्यकिं समरे यान्तं तव पुत्रो न्यवारयत्। अभिमन्युं महाराज यान्तं भीष्मरथं प्रति।
सुदक्षिणो महाराज काम्बोजः प्रत्यवारयत्। विराटद्रुपदौ वृद्धौ समेतावरिमर्द्दनौ।
अश्वत्थामा ततः क्रुद्धो वारयामास भारत। तथा पाण्डुसुतं ज्येष्ठं भीष्मस्य वधकाङ्क्षिणं।
भारद्वाजो रणे यत्तो धर्म्मपुत्रमवारयत्। अर्ज्जुनं रभसं युद्धे पुरस्कृत्य शिखण्डिनं। ५२२०
भीष्मप्रेप्सुं महाराज भासयन्तं दिशो दश। दुःशासनो महेष्वासो वारयामास संयुगे।
अन्ये च तावका योधाः पाण्डवानां महारथान्। भीष्मस्याभिमुखं यातान् वारयामासुराहवे।
धृष्टद्युम्नस्तु सैन्यानि प्राक्रोशंस्तु पुनःपुनः। अभ्यद्रवत संरब्धो भीष्ममेकं महारथः।
एषोऽर्ज्जुनो रणे भीष्मं प्रयाति कुरुनन्दन। अभ्यद्रवत माभैष्ट भीष्मो हि प्राप्स्यते न वः।
अर्ज्जुनं समरे योद्धुं नोत्सहेतापि वासवः। किमु भीष्मो रणे वीरो गतसत्त्वोऽल्पजीवितः। ५२२५
इति सेनापतेः श्रुत्वा पाण्डवना महारथाः। अभ्यद्रवन्त संहृष्टा गाङ्गेयस्य रथम्प्रति।
आगच्छमानान् समरे वार्य्यौघान् प्रबलानिव। अवारयन्त संहृष्टास्तावकाः पुरुषर्षभाः।
दुःशासनो महाराज भयं त्यक्त्वा महारथः। भीष्मस्य जीविताकाङ्क्षी धनञ्जयमुपाद्रवत्।
तथैव पाण्डवाः शूरा गाङ्गेयस्य रथम्प्रति। अभ्यद्रवन्त सङ्ग्रामे तव पुत्रान् महारथान्।
तत्राद्भुतमपश्याम चित्ररूपं विशाम्पते। दुःशासनरथं प्राप्य यत्पार्थो नात्यवर्त्तत। ५२३०
यथा वारयते वेला क्षुब्धतोयं महार्णवं। तथैव पाण्डवं क्रुद्धं तव पुत्रो न्यवारयत्।
उभौ तौ रथिनां श्रेष्ठावुभौ भारत दुर्ज्जयौ। उभौ चन्द्रार्कसदृशौ कान्त्या दीप्त्या च भारत।
तथा तौ जातसंरम्भावन्योऽन्यवधकाङ्क्षिणौ। समीयतुर्महासङ्ख्ये मयशक्रौ यथा पुरा।
दुःशासनो महाराज पाण्डवं विशिखैस्त्रिभिः। वासुदेवञ्च विंशत्या ताडयामास संयुगे।
ततोऽर्ज्जुनो जातमन्युर्वार्ष्णेयं वीक्ष्य पीडितं। दुःशासनं शतेनाजौ नाराचानां समर्पयत्। ५२३५
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे। दुःशासनस्ततः क्रुद्धः पार्थं विव्याध पञ्चभिः।
ललाटे भरतश्रेष्ठ शरैः सुनिशितैस्त्रिभिः। ललाटस्थैस्तु तैर्वाणैः शुशुभे पाण्डवो रणे।
यथा मेरुर्म्महाराज शृङ्गैरत्यर्थमुच्छ्रितैः। सोऽतिविद्धो महेष्वासः पुत्रेण तव धन्विना।
व्यराजत रणे पार्थः किंशुकः पुष्पवानिव। दुःशासनन्ततः क्रुद्धः पीडयामास पाण्डवः।
पर्व्वणीव सुसंक्रुद्धो राहुः पूर्णं निशाकरं। पीड्यमानो बलवता पुत्रस्तव विशाम्पते। ५२४०
विव्याध समरे पार्थं कङ्कपत्रैः शिलाशितैः। तस्य पार्थो धनुश्छित्त्वा रथञ्चास्य त्रिभिः शरैः।
आरोपीद्दिशिखान् घोरान् यमदण्डोपमान् बहून्। अप्राप्तानेव तान् बाणान् चिच्छेद तनयस्तव।
यतमानस्य पार्थस्य तदद्भुतमिवाभवत्। पार्थं सुनिशितैर्व्बाणैरविध्यत्तनयस्तव।
ततः क्रुद्धो रणे पार्थः शरान् सन्धाय कार्म्मुके। प्रेषयामास समरे स्वर्णपुङ्खान् शिलाशितान्।
न्यमज्जंस्ते महाराज तस्य काये महात्मनः। यथा हंसा महाराज तडागं प्राप्य भारत। ५२४५

पीडितश्चैव पुत्रस्ते पाण्डवेन महात्मना। छित्त्वा पार्थं रणे द्रुतं भीष्मस्य रथमाव्रजत्।
अगाधे मज्जतस्तस्य द्वीपो भीष्मोऽभवत्तदा। प्रतिलभ्य ततः संज्ञां पुत्रस्तव विशाम्पते।
अवारयत्ततः शूरो भूय एव पराक्रमी। शरैः सुनिशितैः पार्थं यथा वृत्रं पुरन्दरः।
निर्व्विभेद महाकायो विव्यथे नैव चार्ज्जुनः।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि अर्ज्जुनदुःशासनसमागमे एकादशाधिकशततमोऽध्यायः॥ १११ ॥

॥ सञ्जय उवाच ॥ सात्यकिं दंशितं युद्धे भीष्मायाभ्युद्यतं रणे। आर्ष्यशृङ्गिर्महेष्वासो वारयामास संयुगे। ५२४०
माधवस्तु सुसंक्रुद्धो राक्षसं नवभिः शरैः। आजघान रणे राजन् प्रहसन्निव भारत।
तथैव राक्षसो राजन् माधवं नवभिः शरैः। अर्द्दयामास राजेन्द्र संक्रुद्धः शिनिपुङ्गवं।
शैनेयः शरसङ्घन्तु प्रेषयामास संयुगे। राक्षसाय सुसंक्रुद्धो माधवः परवीरहा।
ततो रक्षो महाबाहुः सात्यकिं सत्यविक्रमं। विव्याध विशिखैस्तीक्ष्णैः सिंहनादं ननाद च।
माधवस्तु रणे विद्धो राक्षसेन भृशं तदा। धैर्य्यमालम्ब्य तेजस्वी जहास च ननाद च। ५२४५
भगदत्तस्ततः क्रुद्धो माधवं निशितैः शरैः। ताडयामास समरे तोत्त्रैरिव महागजं।
विहाय राक्षसं युद्धे शैनेयो रथिनाम्वरः। प्राग्ज्योतिषाय चिक्षेप शरान् सन्नतपर्व्वणः।
ततः प्राग्ज्योतिषो राजा माधवस्य महद्धनुः। चिच्छेद शितधारेण भल्लेन कृतहस्तवत्।
अथान्यद्धनुरादाय वेगवत् परवीरहा। भगदत्तं रणे क्रुद्धं विव्याध निशितैः शरैः।
सोऽतिविद्धो महेष्वासः सृक्किणी परिसंलिहन्। शक्तिं कनकवैदूर्य्यभूषितां दृढां। ५२५०
यमदण्डोपमां घोरां चिक्षेप परमाहवे। तामापतन्तीं सहसा तस्य बाहुबलेरितां।
सात्यकिः समरे राजन् द्विधा चिच्छेद सायकैः। ततः पपात सहसा महोल्केव हतप्रभा।
शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशाम्पते। महता रथवंशेन वारयामास माधवं।
तथा परिवृतं दृष्ट्वा वार्ष्णेयानां महारथं। दुर्य्योधनो भृशं क्रुद्धो भ्रातॄन् सर्व्वानुवाच ह।
तथा कुरुत कौरव्या यथा वः सात्यको युधि। न जीवन् प्रति निर्य्याति महतोऽस्मात् रथव्रजात्। ५२५५
तस्मिन् हते हतं मन्ये पाण्डवानां महद्बलं। तथेति च वचस्तस्य परिगृह्य महारथाः।
शैनेयं योधयामासुर्भीष्मस्य प्रमुखे तदा। अभिमन्युं तदायान्तं भीष्मस्याभ्युद्यतं रणे।
काम्बोजराजो बलवान् वारयामास संयुगे। आर्ज्जुनिर्नृपतिं विद्धा शरैः सन्नतपर्व्वभिः।
पुनरेव चतुःषष्ट्या राजन् विव्याध तं नृपं। सुदक्षिणस्तु समरे पुनर्व्विव्याध पञ्चभिः।
सारथिञ्चास्य नवभिरिच्छन् भीष्मस्य जीवितं। तद्युद्धमासीत् सुमहत्तयोस्तत्र समागमे। ५२६०
यदभ्यधावद्गाङ्गेयं शिखण्डी शत्रुकर्षणः। विराटद्रुपदौ वृद्धौ वारयन्तौ महाचमूं।
भीष्मस्य युधि संरब्धावाद्रवन्तौ महारथौ। अश्वत्थामा रणे क्रुद्धः समियाद्रथसत्तमः।
ततः प्रववृते युद्धं तवतेषाञ्च भारत। विराटो दशभिर्भल्लैराजघान परन्तप।
यतमानं महेष्वासं द्रौणिमाहवशोभिनं। द्रुपदश्च त्रिभिर्बाणैर्विव्याध निशितैस्तदा।

गुरुपुत्रं समासाद्य प्रहरन्तौ महाबलौ । अश्वत्थामा ततस्तौ तु विव्याध बहुभिः शरैः । ४१६५
विराटद्रुपदौ वीरौ भीष्मं प्रति समुद्यतौ । तत्राद्भुतमपश्याम द्वन्द्वयोश्चरितं महत् ।
यद्द्रौणिः सायकान् घोरान् प्रत्यवारयतां युधि । सहदेवं तथायान्तं कृपः शारद्वतोऽभ्ययात् ।
यथा नागो वने नागं मत्तो मत्तमुपाद्रवत् । कृपश्च समरे शूरो माद्रीपुत्रं महारथं ।
आजघान शरैस्तूर्णं सप्तत्या रुक्मभूषणैः । तस्य माद्रीसुतश्चापं द्विधा चिच्छेद सायकैः ।
अथैनं छिन्नधन्वानं विव्याध नवभिः शरैः । सोऽन्यत्कार्मुकमादाय समरे भारसाधनं । ४१७०
माद्रीपुत्रं सुसंहृष्टो दशभिर्निशितैः शरैः । आजघानोरसि क्रुद्ध इच्छन् भीष्मस्य जीवितं ।
तथैव पाण्डवो राजन् शारद्वतममर्षणं । आजघानोरसि क्रुद्धो भीष्मस्य वधकाङ्क्षया ।
ततो युद्धं समभवत् घोररूपं भयावहं । नकुलन्तु रणे क्रुद्धो विकर्णः शत्रुतापनः ।
विव्याध सायकैः षष्ट्या रक्षन् भीष्मं पितामहं । नकुलोऽपि भृशं विद्धस्तव पुत्रेण धीमता ।
विकर्णं सप्तसप्तत्या निर्बिभेद शिलीमुखैः । तत्र तौ नरशार्दूलौ भीष्महेतोः परन्तपौ । ४१७५
अन्योऽन्यं जघ्नतुर्वीरौ गोष्ठे गोवृषभाविव । घटोत्कचं रणेयान्तं निघ्नन्तं तव वाहिनीं ।
दुर्मुखः समरे प्रायात् भीष्महेतोः पराक्रमी । हैडिम्बस्तु रणे राजन् दुर्मुखं शत्रुतापनं ।
आजघानोरसि क्रुद्धः शरेणानतपर्व्वणा । भीमसेनसुतश्चापि दुर्मुखः सुमुखैः शरैः ।
षष्ट्या वीरो नदन् हृष्टो विव्याध रणमूर्द्धनि । धृष्टद्युम्नं तथायान्तं भीष्मस्य वधकाङ्क्षिणं ।
हार्द्दिक्यो वारयामास रथश्रेष्ठं महारथः । हार्द्दिक्यं पार्षतश्चापि विद्धा पञ्चभिरायसैः । ४१८०
पुनः पञ्चाशता तूर्णमाजघान स्तनान्तरे । तथैव पार्षतो राजन् हार्द्दिक्यं नवभिः शरैः ।
विव्याध निशितैस्तीक्ष्णैः कङ्कपत्रपरिच्छदैः । तयोः समभवद्युद्धं भीष्महेतोर्महारणे ।
अन्योऽन्यातिशयैर्युक्तं यथा वृत्रमहेन्द्रयोः । भीमसेनमथायान्तं भीष्मं प्रति महाबलं ।
भूरिश्रवास्त्वयात्तूर्णं तिष्ठतिष्ठेति चाब्रवीत् । सौमदत्तिरथो भीममाजघान स्तनान्तरे ।
नाराचेन सुतीक्ष्णेन रुक्मपुङ्खेन संयुगे । उरःस्थेन बभौ तेन भीमसेनः प्रतापवान् । ४१८५
स्कन्दशक्त्या यथा क्रौञ्चः पुरा नृपतिसत्तम । तौ शरान् सूर्य्यसङ्काशान् कर्म्मारपरिमार्ज्जितान् ।
अन्योऽन्यस्य रणे क्रुद्धौ विसृजाते नरर्षभौ । भीमो भीष्मवधाकाङ्क्षी सौमदत्तिं महारथं ।
तथा भीष्मजये गृध्नुः सौमदत्तिश्च पाण्डवं । कृतप्रतिकृते यत्तौ योधयामासतू रणे ।
युधिष्ठिरन्तु कौन्तेयं महत्या सेनया वृतं । भीष्माभिमुखमायान्तं भारद्वाजो न्यवारयत् ।
द्रोणस्य रथनिर्घोषं पर्जन्यनिनदोपमं । श्रुत्वा प्रभद्रका राजन् समकम्पन्त मारिष । ४१९०
सा सेना महती राजन् पाण्डुपुत्रस्य संयुगे । द्रोणेन द्राविता यत्ता न चचाल पदात् पदं ।
चेकितानं रणे यत्तं भीष्मं प्रति जनेश्वर । चित्रसेनस्तव सुतः क्रुद्धरूपमवारयत् ।
भीष्महेतोः पराक्रान्तश्चित्रहस्तो महारथः । चेकितानं परं शक्त्या योधयामास भारत ।
तथैव चेकितानोऽपि चित्रसेनमयोधयत् । तद्युद्धमासीत् सुमहत् तयोस्तत्र समागमे ।

अर्ज्जुनो वार्य्यमाणस्तु बहुशस्तव भारत । विमुखीकृत्य पुत्रं ते सेनां तव ममर्द्द ह । ५१९५
दुःशासनोऽपि परया शक्त्या पार्थमवारयत् । कथं भीष्मं न नो हन्यादिति निश्चित्य भारत ।
सा वध्यमाना समरे पुत्रस्य तव वाहिनी । लोड्यते रथिभिः श्रेष्ठैस्तत्र तत्रैव भारत ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि द्वन्द्वसमागमे द्वादशाधिकशततोऽध्यायः ॥ ११२ ॥
॥ सञ्जय उवाच ॥ अथ वीरो महेष्वासो मत्तवारणविक्रमः । समादाय महच्चापं मत्तवारणवारणं ।
विधुन्वानो नरश्रेष्ठो द्रावयाणो वरूथिनीं । पृतनां पाण्डवेयानां गाहमानो महाबलः ।
निमित्तानि निमित्तज्ञः सर्व्वतो वीक्ष्य वीर्य्यवान् । प्रतपन्तमनीकानि द्रोणः पुत्रमभाषत । ५२००
अयं स दिवसस्तात यत्र पार्थो महाबलः । जिघांसुः समरे भीष्मं परं यत्नं करिष्यति ।
उत्पतन्ति हि मे वाणा धनुः प्रस्फुरतीव च । योगमस्त्राणि च्छिन्दन्ति क्रूरं मे वर्त्तते मतिः ।
दिक्षुशान्तानि घोराणि व्याहरन्ति मृगद्विजाः । नीचैर्गृध्राणि लीयन्ते भारतानां चमूं प्रति ।
नष्टप्रभ इवादित्यः सर्व्वतो लोहिता दिशः । रसते व्यथते भूमिः कम्पतीव च सर्व्वशः ।
कङ्कगृध्रा बलाकाश्च व्याहरन्ति मुहुर्मुहुः । शिवाश्चैवाशिवा घोरा वेदयन्त्यो महद्भयं । ५२०५
पपात महती चोल्का मध्येनादित्यमण्डलात् । सकबन्धश्च परिघो भानुमावृत्य तिष्ठति ।
परिवेशस्तथा घोरश्चन्द्रभास्करयोरभूत् । वेदयानो भयं घोरं राज्ञां देहावकर्त्तनं ।
देवतायतनस्थाश्च कौरवेन्द्रस्य देवताः । कम्पन्ते च हसन्ते च नृत्यन्ति च रुदन्ति च ।
अपसव्यं ग्रहाश्चक्रुरलक्षणं दिवाकरं । अवाक्शिराश्च भगवानुपातिष्ठत चन्द्रमाः ।
वपूंषि च नरेन्द्राणां विगताभानि लक्षये । धार्त्तराष्ट्रस्य सैन्येन न च भ्राजन्ति दंशिताः । ५२१०
सेनयोरुभयोश्चैव समन्तात् श्रूयते महान् । पाञ्चजन्यस्य निर्घोषो गाण्डीवस्य च निःस्वनः ।
ध्रुवमास्थाय वीभत्सुरुत्तमास्त्राणि संयुगे । अपास्यान्यान् रणे योधानभ्येष्यति पितामहं ।
हृष्यन्ति रोमकूपाणि सीदतीव च मे मनः । चिन्तयित्वा महाबाहो भीष्मार्ज्जुनसमागमं ।
तञ्चेह निकृतिप्रज्ञं पाञ्चाल्यं पापचेतसं । पुरस्कृत्य रणे पार्थो भीष्मस्यायोधनं गतः ।
अब्रवीच्च पुरा भीष्मो नाहं हन्यां शिखण्डिनं । स्त्री ह्येषा विहिता धात्रा दैवाच्च स पुनः पुमान् । ५२१५
अमङ्गल्यध्वजश्चैव याज्ञसेनिर्महाबलः । न चामाङ्गलिके तस्मिन् प्रहरेदापगासुतः ।
एतद्विचिन्तयानस्य मनः सीदति मे भृशं । अभ्युद्यतो रणे क्रुद्धः कुरुवृद्धमुपाद्रवत् ।
युधिष्ठिरस्य च क्रोधो भीष्मस्यार्ज्जुनसङ्गतः । मम चास्त्रसमारम्भः प्रजानामशिवं ध्रुवं ।
मनस्वी बलवाञ्छूरः कृतास्त्रो लघुविक्रमः । दूरपाती दृढेषुश्च निमित्तज्ञश्च पाण्डवः ।
अजेयः समरे चापि देवैरपि सवासवैः । बलवान् बुद्धिमांश्चैव जितक्लेशो युधां वरः । ५२२०
विजयी च रणे नित्यं भैरवास्त्रश्च पाण्डवः । तस्य मार्गं परिहरन् द्रुतं गच्छ यतव्रत ।
पश्याद्यैतन्महाघोरे संयुगे वैशसं महत् । हेमचित्राणि शूराणां महन्ति च शुभानि च ।
कवचानि विदीर्य्यन्ते शरैः सन्नतपर्व्वभिः । छिद्यन्ते च ध्वजाग्राणि तोमराश्च धनूंषि च ।

प्रासाश्च विमलास्तीक्ष्णाः शराश्च कनकोज्ज्वलाः। वैजयन्तश्च नागानां संक्रुद्धेन किरीटिना।
नार्थं संरक्षितुं कालः प्राणान् पुत्रोपजीविभिः। याहि सर्वे पुरस्कृत्य यशसे विजयाय च। ५२२५
रथनागहयावर्त्तां महाघोरां सुदुर्गमां। रथेन संग्रामनदीं तरत्येष कपिध्वजः।
ब्रह्मण्यता दमो दानं तपश्च चरितं महत्। इहैव दृश्यते राज्ञि भ्राता यस्य धनञ्जयः।
भीमसेनश्च बलवान् माद्रीपुत्रौ च पाण्डवौ। वासुदेवश्च वार्ष्णेयो यस्य नाथो व्यवस्थितः।
तस्यैव मन्युप्रभवो धार्त्तराष्ट्रस्य दुर्मतेः। तपोदग्धशरीरस्य कोपो दहति भारतीं।
एष संदृश्यते पार्थो वासुदेवव्यपाश्रयः। दारयन् सर्व्वसैन्यानि धार्त्तराष्ट्राणि सर्व्वशः। ५२३०
एतदालोक्यते सैन्यं क्षोभ्यमाणं किरीटिना। महोर्म्मिनद्धं सुमहत्तिमिनक्रसमाकुलं।
हाहाकिलकिलाशब्दाः श्रूयन्ते च चमूमुखे। याहि पाञ्चालदायादमहं यास्ये युधिष्ठिरं।
दुर्गमं ह्यन्तरं राज्ञो व्यूहस्यामिततेजसः। समुद्रकुक्षिप्रतिमं सर्व्वतोऽतिरथैः स्थितैः।
सात्यकिश्चाभिमन्युश्च धृष्टद्युम्नवृकोदरौ। पर्य्यरक्षन्त राजानं यमौ च मनुजेश्वरं।
उपेन्द्रसदृशः श्यामो महाशाल इवोद्गतः। एष गच्छत्यनीकाग्रे द्वितीय इव फाल्गुनः। ५२३५
उत्तमास्त्राणि चाधत्स्व गृहीत्वा च महद्धनुः। पार्षतं याहि राजानं युध्यस्व च वृकोदरं।
को हि नेच्छेत् प्रियं पुत्रं जीवन्तं शाश्वतीः समाः। क्षत्रधर्म्मन्तु संप्रेक्ष्य ततस्त्वां नियुनज्म्यहं।
एष चाति रणे भीष्मो दहते वै महाचमूं। युद्धेषु सदृशस्तात यमस्य वरुणस्य च।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि द्रोणाश्वत्थामसंवादे चयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥
॥ सञ्जय उवाच ॥ एतत् श्रुत्वा वचस्तस्य द्रोणस्य च महात्मनः। भगदत्तः कृपः शल्यः कृतवर्म्मा तथैव च।
विन्दानुविन्दावावन्त्यौ सैन्धवश्च जयद्रथः। चित्रसेनो विकर्णश्च तथा दुर्म्मर्षणादयः। ५२४०
दशैते तावका योधा भीमसेनमयोधयन्। महत्या सेनया युक्ता नानादेशसमुत्थया।
भीष्मस्य समरे राजन् प्रार्थयाना महद्यशः। शल्यस्तु नवभिर्व्वाणैर्भीमसेनमताडयत्।
कृतवर्म्मा त्रिभिर्व्वाणैः कृपश्च नवभिः शरैः। चित्रसेनो विकर्णश्च भगदत्तश्च मारिष।
दशभिर्दशभिर्व्वाणैर्भीमसेनमताडयत्। सैन्धवश्च त्रिभिर्व्वाणैर्भीमसेनमताडयत्।
विन्दानुविन्दावावन्त्यौ पञ्चभिः पञ्चभिः शरैः। दुर्म्मर्षणश्च विंशत्या पाण्डवं निशितैः शरैः। ५२४५
स तान् सर्व्वान् महाराज राजमानान् पृथक् पृथक्। प्रवरान् सर्व्वलोकस्य धार्त्तराष्ट्रान् महारथान्।
जघान समरे वीरः पाण्डवः परवीरहा। सप्तभिः शल्यमाविध्यत् कृतवर्म्माणमष्टभिः।
कृपस्य सशरं चापं मध्ये चिच्छेद भारत। अथैनं छिन्नधन्वानं पुनर्व्विव्याध सप्तभिः।
विन्दानुविन्दौ च तथा त्रिभिस्त्रिभिरताडयत्। दुर्म्मर्षणञ्च विंशत्या चित्रसेनञ्च पञ्चभिः।
विकर्णं दशभिर्व्वाणैः पञ्चभिश्च जयद्रथं। विद्धा भीमोऽनदद्धृष्टः सैन्धवञ्च पुनस्त्रिभिः। ५२५०
अथान्यद्धनुरादाय गौतमो रथिनां वरः। भीमं विव्याध संरब्धो दशभिर्निशितैः शरैः।
स विद्धो दशभिर्व्वाणैस्तोत्त्रैरिव महाद्विपः। ततः क्रुद्धो महाराज भीमसेनः प्रतापवान्।

गौतमं ताडयामास शरैर्ब्बहुभिराहवे । सैन्धवस्य तथाऽश्वांश्च सारथिञ्च त्रिभिः शरैः ।
प्राहिणोन्मृत्युलोकाय कालान्तकसमद्युतिः । हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः ।
शरांश्चिक्षेप निशितान् भीमसेनस्य संयुगे । तस्य भीमो धनुर्म्मध्ये द्वाभ्यां चिच्छेद मारिष । ५२५५
भल्लाभ्यां भरतश्रेष्ठ सैन्धवस्य महात्मनः । स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
चित्रसेनरथं राजन्नारुरोह त्वरान्वितः । अत्यद्भुतं रणे कर्म्म कृतवांस्तत्र पाण्डवः ।
महारथान् शरैर्विद्ध्वा वारयित्वा च मारिष । विरथं सैन्धवं चक्रे सर्व्वलोकस्य पश्यतः ।
तदा न ममृषे शल्यो भीमसेनस्य विक्रमं । स सन्धाय शरांस्तीक्ष्णान् कर्म्मारपरिमार्ज्जितान् ।
भीमं विव्याध समरे तिष्ठतिष्ठेति चाब्रवीत् । कृपश्च कृतवर्म्मा च भगदत्तश्च वीर्य्यवान् । ५२६०
विन्दानुविन्दावावन्त्यौ चित्रसेनश्च संयुगे । दुर्म्मर्षणो विकर्णश्च सिन्धुराजश्च वीर्य्यवान् ।
भीमं ते विव्यधुस्तूर्णं शल्यहेतोररिन्दमाः । स च तान् प्रतिविव्याध पञ्चभिः पञ्चभिः शरैः ।
शल्यं विव्याध सप्तत्या पुनश्च दशभिः शरैः । तं शल्यो नवभिर्भित्त्वा पुनर्व्विव्याध पञ्चभिः ।
सारथिञ्चास्य भल्लेन गाढं विव्याध मर्म्मणि । विशोकं प्रेक्ष्य निर्भिन्नं भीमसेनः प्रतापवान् ।
मद्रराजं त्रिभिर्व्वाणैर्बाह्वोरुरसि चार्पयत् । तथेतरान् महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः । ५२६५
ताडयामास समरे सिंहवद्विननाद च । ते हि यत्ता महेष्वासाः पाण्डवं युद्धकोविदं ।
त्रिभिस्त्रिभिरकुण्ठाग्रैर्भृशं मर्म्मस्वताडयन् । सोऽतिविद्धो महेष्वासो भीमसेनो न विव्यथे ।
पर्व्वतो वारिधाराभिर्व्वर्षमाणैरिवाम्बुदैः । स तु क्रोधसमाविष्टः पाण्डवानां महारथः ।
मद्रेश्वरं त्रिभिर्व्वाणैर्भृशं विद्ध्वा महायशाः । प्राग्ज्योतिषं शतेनाजौ राजन् विव्याध सायकैः ।
कृपञ्च बहुभिर्व्वाणैर्भृशं विद्ध्वा महायशाः । ततस्तु सशरं चापं सात्वतस्य महात्मनः । ५२७०
क्षुरप्रेण सुतीक्ष्णेन चिच्छेद कृतहस्तवत् । तथाऽन्यद्धनुरादाय कृतवर्म्मा वृकोदरं ।
आजघान भ्रुवोर्म्मध्ये नाराचेन परन्तपः । भीमस्तु समरे विद्ध्वा शल्यं नवभिरायसैः ।
भगदत्तं त्रिभिश्चैव कृतवर्म्माणमष्टभिः । द्वाभ्यां द्वाभ्यान्तु विव्याध गौतमप्रभृतीन् रथान् ।
तेऽपि तं समरे राजन् विव्यधुर्निशितैः शरैः । स तथा पीड्यमानोऽपि सर्व्वशस्त्रैर्म्महारथैः ।
मत्वा तृणेन तान् तुल्यान् विचचार गतव्यथः । ते चापि रथिनां श्रेष्ठा भीमाय निशितान् शरान् । ५२७५
प्रेषयामासुरव्यग्राः शतशोऽथ सहस्रशः । तस्य शक्तिं महावेगां भगदत्तो महाबलः ।
चिक्षेप समरे वीरः स्वर्णदण्डां महात्मने । तोमरं सैन्धवो राजा पट्टिशञ्च महाभुजः ।
शतघ्नीञ्च कृपो राजन् शरं शल्यश्च संयुगे । अथेतरे महेष्वासाः पञ्च पञ्च शिलीमुखान् ।
भीमसेनं समुद्दिश्य प्रेषयामासुरोजसा । तोमरञ्च द्विधा चक्रे क्षुरप्रेणानिलात्मजः ।
पट्टिशञ्च त्रिभिर्व्वाणैश्चिच्छेद तिलकाण्डवत् । स बिभेद शतघ्नीञ्च नवभिः कङ्कपत्रिभिः । ५२८०
भीमसेनो रणश्लाघी त्रिधैकैकं समाच्छिनत् । तांश्च सर्व्वान् महेष्वासान् त्रिभिस्त्रिभिरताडयत् ।
ततो धनञ्जयस्तत्र वर्त्तमाने महारणे । आजगाम रथेनाजौ भीमं दृष्ट्वा महारथं ।

निघ्नन्तं समरे शत्रून् योधमानञ्च सायकैः । तौ तु तत्र महात्मानौ समेतौ वीक्ष्य पाण्डवौ ।
न शशंसुर्जयं तत्र तावकाः पुरुषर्षभाः । अथार्ज्जुनो रणे भीमं योधयन्तं महारथान् ।
भीष्मस्य निधनाकाङ्क्षी पुरस्कृत्य शिखण्डिनं । आससाद रणे वीरांस्तावकान् दश भारत । ५२८५
ये स्म भीमं रणे राजन् योधयन्तो व्यवस्थिताः । वीभत्सुस्तान् तथाऽविध्यत् भीमस्य प्रियकाम्यया ।
ततो दुर्य्योधनो राजा सुशर्म्माणमचोदयत् । अर्ज्जुनस्य वधार्थाय भीमसेनस्य चोभयोः ।
सुशर्म्मन् गच्छ शीघ्रं त्वं बलौघैः परिवारितः । जहि पाण्डुसुतावेतौ धनञ्जयवृकोदरौ ।
तच्छ्रुत्वा वचनं तस्य त्रैगर्त्तः प्रस्थलाधिपः । अभिद्रुत्य रणे भीममर्ज्जुनञ्चैव धन्विनौ ।
रथैरनेकसाहस्रैः समन्तात् पर्य्यवारयत् । ततः प्रववृते युद्धमर्ज्जुनस्य परैः सह । ५२९०
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीमसेनपराक्रमे चतुर्दशाधिकशततोऽध्यायः ॥ ११४ ॥
॥ सञ्जय उवाच ॥ अर्ज्जुनस्तु रणे शल्यं यतमानं महारथं । छादयामास समरे शरैः सन्नतपर्व्वभिः ।
सुशर्म्माणं कृपञ्चैव त्रिभिस्त्रिभिरविध्यत । प्राग्ज्योतिषञ्च समरे सैन्धवञ्च जयद्रथं ।
चित्रसेनं विकर्णञ्च कृतवर्म्माणमेव च । दुर्म्मर्षणञ्च राजेन्द्र आवन्त्यौ च महारथौ ।
एकैकं त्रिभिरानर्च्छत् कङ्कबर्हिणवाजितैः । शरैरतिरथो युद्धे पीडयन् वाहिनीं तव ।
जयद्रथो रणे पार्थं विद्ध्वा भारत सायकैः । भीमं विव्याध तरसा चित्रसेनरथे स्थितः । ५२९५
शल्यश्च समरे जिष्णुं कृपश्च रथिनां वरः । विव्यधाते महाराज बहुधा मर्म्मभेदिभिः ।
चित्रसेनादयश्चैव पुत्रास्तव विशाम्पते । पञ्चभिः पञ्चभिस्तूर्णं संयुगे निशितैः शरैः ।
आजघ्नुरर्ज्जुनं सङ्ख्ये भीमसेनञ्च मारिष । तौ तत्र रथिनां श्रेष्ठौ कौन्तेयौ भरतर्षभौ ।
अपीडयेतां समरे त्रिगर्त्तानां महाबलं । सुशर्म्माऽपि रणे पार्थं शरैर्नवभिराशुगैः ।
ननाद बलवन्नादं त्रासयानो महद्बलं । अन्ये च रथिनः शूरा भीमसेनधनञ्जयौ । ५३००
विव्यधुर्निशितैर्ब्बाणैः रुक्मपुङ्खैरजिह्मगैः । तेषान्तु रथिनां मध्ये कौन्तेयौ भरतर्षभौ ।
क्रीडमानौ रथोदारौ चित्ररूपौ व्यदृश्यतां । आमिषेप्सू गवां मध्ये सिंहाविव मदोत्कटौ ।
छित्त्वा धनूंषि शूराणां शरांश्च बहुधा रणे । पातयामासतुर्व्वीरौ शिरांसि शतशो नृणां ।
रथाश्च बहवो भग्ना हयाश्च शतशो हताः । गजाश्च सगजारोहाः पेतुरुर्व्व्यां महाहवे ।
रथिनः सादिनश्चैव तत्र तत्र निषूदिताः । दृश्यन्ते बहवो राजन् वेपमानाः समन्ततः । ५३०५
हतैर्गजैः पदात्योघैर्व्वाजिभिश्च निषूदितैः । रथैश्च बहुधा भग्नैः समास्तीर्य्यत मेदिनी ।
तत्राद्भुतमपश्याम रणे पार्थस्य विक्रमं । शरैः संवार्य्य तान् वीरान् स जघान महाबलः ।
पुत्रस्तु तव तं दृष्ट्वा भीमार्ज्जुनपराक्रमं । गाङ्गेयस्य रथाभ्याशमुपजग्मे महाबलः ।
कृपश्च कृतवर्म्मा च सैन्धवश्च जयद्रथः । विन्दानुविन्दावावन्त्यौ नाजह्रुः संयुगं तदा ।
ततो भीमो महेष्वासः फाल्गुनश्च महारथः । कौरवाणां चमूं घोरां भृशं दुद्रुवतू रणे । ५३१०
ततो बर्हिणवाजानामयुतान्यर्ब्बुदानि च । धनञ्जयरथे तूर्णं पातयन्ति स्म भूमिपाः ।

ततस्तान् शरजालेन सन्निवार्य्य महारथान्। पार्थः समन्तात् समरे प्रेषयामास मृत्यवे।
शल्यस्तु समरे जिष्णुं क्रीडन्निव महारथः। आजघानोरसि क्रुद्धो भल्लैः सन्नतपर्व्वभिः।
तस्य पार्थो धनुश्छित्त्वा हस्तावापञ्च पञ्चभिः। अथैनं सायकैस्तीक्ष्णैर्भृशं विव्याध मर्म्मणि।
अथान्यद्धनुरादाय समरे भारसाधनं। मद्रेश्वरो रणे जिष्णुं ताडयामास रोषितः। ५२१५
त्रिभिः शरैर्महाराज वासुदेवञ्च पञ्चभिः। भीमसेनञ्च नवभिर्बाह्वोरुरसि चार्पयत्।
ततो द्रोणो महाराज मागधश्च महारथः। दुर्य्योधनसमादिष्टौ तं देशमुपजग्मतुः।
यत्र पार्थो महाराज भीमसेनश्च पाण्डवः। कौरव्यस्य महासेनां जघ्नतुः सुमहारथौ।
जयत्सेनस्तु समरे भीमं भीमायुधं युधि। विव्याध निशितैर्बाणैरष्टभिर्भरतर्षभ।
तं भीमो दशभिर्विद्ध्वा पुनर्व्विव्याध पञ्चभिः। सारथिञ्चास्य भल्लेन रथनीडादपातयत्। ५२२०
उद्भ्रान्तैस्तुरगैः सोऽथ द्रवमाणैः समन्ततः। मागधोऽपहृतो राजा सर्व्वसैन्यस्य पश्यतः।
द्रोणस्तु विवरं दृष्ट्वा भीमसेनं शिलीमुखैः। विव्याध बाणैर्निशितैरष्टभिर्भरतर्षभ।
तं भीमः समरश्लाघी गुरुं पितृसमं रणे। विव्याध पञ्चभिर्भल्लैस्तथा षष्ट्या च भारत।
अर्ज्जुनस्तु सुशर्म्माणं विद्ध्वा बहुभिरायसैः। व्यधमत्तस्य तत्सैन्यं महाभ्राणि यथाऽनिलः।
ततो भीष्मश्च राजा च कौशल्यश्च बृहद्बलः। समवर्त्तन्त संक्रुद्धा भीमसेनधनञ्जयौ। ५२२५
तथैव पाण्डवाः शूरा धृष्टद्युम्नश्च पार्षतः। अभ्यद्रवन् रणे भीष्मं व्यादितास्यमिवान्तकं।
शिखण्डी तु समासाद्य भारतानां पितामहं। अभ्यद्रवत संहृष्टो भयं त्यक्त्वा महारथात्।
युधिष्ठिरमुखाः पार्थाः पुरस्कृत्य शिखण्डिनं। अयोधयन् रणे भीष्मं सहिताः सर्व्वसृञ्जयैः।
तथैव तावकाः सर्व्वे पुरस्कृत्य यतव्रतं। शिखण्डिप्रमुखान् पार्थान् योधयन्ति स्म संयुगे।
ततः प्रववृते युद्धं कौरवाणां भयावहं। तत्र पाण्डुसुतैः सार्द्धं भीष्मस्य विजयं प्रति। ५२३०
तावकानां जये भीष्मो ग्लह आसीद्विशाम्पते। तत्र हि द्यूतमासक्तं विजयायेतराय च।
धृष्टद्युम्नस्तु राजेन्द्र सर्व्वसैन्यान्यचोदयत्। अभिद्रवत गाङ्गेयं माभैष्ट रथसत्तमाः।
सेनापतिवचः श्रुत्वा पाण्डवानां वरूथिनी। भीष्मं समभ्ययात्तूर्णं प्राणांस्त्यक्त्वा महाहवे।
भीष्मोऽपि रथिनां श्रेष्ठः प्रतिजग्राह तां चमूं। आपतन्तीं महाराज वेलामिव महोदधिः।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीमार्जुनपराक्रमे पञ्चदशाधिकशततोऽध्यायः॥ ११५ ॥
॥ धृतराष्ट्र उवाच ॥ कथं शान्तनवो भीष्मो दशमेऽहनि सञ्जय। अयुध्यत महावीर्य्यः पाण्डवैः सह सृञ्जयैः। ५२३५
कुरवश्च कथं युद्धे पाण्डवान् प्रत्यवारयन्। आचक्ष्व मे महायुद्धं भीष्मस्याहवशोभिनः।
॥ सञ्जय उवाच ॥ कुरवः पाण्डवैःसार्द्धं यदयुध्यन्त भारत। यथा च तदभूद्युद्धं तत्ते वक्ष्यामि साम्प्रतं।
गमिताः परलोकाय परमास्त्रैः किरीटिनः। अहन्यहनि संक्रुद्धास्तावकानां महारथाः।
यथाप्रतिज्ञं कौरव्यः स चापि समितिञ्जयः। पार्थानामकरोद्भीष्मः सततं समितिक्षयं।
कुरुभिः सहितं भीष्मं युध्यमानं परन्तप। अर्ज्जुनञ्च सपाञ्चाल्यं संशयो विजयेऽभवत्। ५२४०

दशमेऽहनि तस्मिंस्तु भीष्मार्ज्जुनसमागमे । प्रावर्त्तत महारौद्रः सततं समितिक्षयः ।
तस्मिन्नयुतशो राजन् भूयशश्च परन्तप । भीष्मः शान्तनवो योधान् जघान परमास्त्रवित् ।
येषामज्ञातकल्पानि नामगोत्राणि भारत । ते हतास्तत्र भीष्मेण शूराः सर्व्वेऽनिवर्त्तिनः ।
दशाहानि ततस्तप्त्वा भीष्मः पाण्डववाहिनीं । निरविद्यत धर्म्मात्मा जीवितेन परन्तप ।
स क्षिप्रं वधमन्विच्छन्नात्मनोऽभिमुखो रणे । न हन्यां मानवश्रेष्ठान् सङ्ग्रामे सुबहूनपि । ५२३५
चिन्तयित्वा महाबाहुः पिता देवव्रतस्तव । अभ्याशस्थं महाराज पाण्डवं वाक्यमब्रवीत् ।
युधिष्ठिर महाप्राज्ञ सर्व्वशास्त्रविशारद । शृणुष्व वचनं तात धर्म्म्यं स्वर्ग्यञ्च जल्पतः ।
निर्व्विण्णोऽस्मि भृशं तात देहेनानेन भारत । घ्नतश्च मे गतः कालः सुबहून् प्राणिनो रणे ।
तस्मात् पार्थं पुरोधाय पाञ्चालान् सृञ्जयांस्तथा । मद्वधे क्रियतां यत्नो मम चेदिच्छसि प्रियं ।
तस्य तन्मतमाज्ञाय पाण्डवः सत्यदर्शनः । भीष्मं प्रति ययौ राजा सङ्ग्रामे सह सृञ्जयैः । ५२४०
धृष्टद्युम्नस्ततो राजन् पाण्डवश्च युधिष्ठिरः । श्रुत्वा भीष्मस्य तां वाचं चोदयामासतुर्ब्बलं ।
अभिद्रवध्वं युध्यध्वं भीष्मं जयत संयुगे । रक्षिताः सत्यसन्धेन जिष्णुना रिपुजिष्णुना ।
अयञ्चापि महेष्वासः पार्षतो वाहिनीपतिः । भीमसेनश्च समरे पालयिष्यति वो ध्रुवं ।
मा वो भीष्माद्भयं किञ्चिदस्त्वद्य युधि सृञ्जयाः । ध्रुवं भीष्मं विजेष्याम पुरस्कृत्य शिखण्डिनं ।
ते तथा समयं कृत्वा दशमेऽहनि पाण्डवाः । ब्रह्मलोकपरा भूत्वा सञ्जग्मुः क्रोधमूर्च्छिताः । ५२४५
शिखण्डिनं पुरस्कृत्य पाण्डवञ्च धनञ्जयं । भीष्मस्य पातने यत्नं परमं ते समास्थिताः ।
ततस्तव सुतादिष्टा नानाजनपदेश्वराः । द्रोणेन सह पुत्रेण सहसेना महाबलाः ।
दुःशासनश्च बलवान् सह सर्व्वैः सहोदरैः । भीष्मं समरमध्यस्थं पालयाञ्चक्रिरे तदा ।
ततस्तु तावकाः शूराः पुरस्कृत्य महाव्रतं । शिखण्डिप्रमुखान् पार्थान् योधयन्ति स्म संयुगे ।
चेदिभिस्तु सपाञ्चालैः सहितो वानरध्वजः । ययौ शान्तनवं भीष्मं पुरस्कृत्य शिखण्डिनं । ५२५०
द्रोणपुत्त्रं शिनेर्नप्ता धृष्टकेतुस्तु पौरवं । युधामन्युः सहामात्यं दुर्य्योधनमयोधयत् ।
विराटस्तु सहानीकः सहसेनं जयद्रथं । वृद्धक्षत्रस्य दायादमाससाद परन्तप ।
मद्रराजं महेष्वासं सहसैन्यं युधिष्ठिरः । भीमसेनोऽभिगुप्तस्तु नागानीकमुपाद्रवत् ।
अप्रधृष्यमनाधृष्यं सर्व्वशस्त्रभृताम्वरं । द्रौणिं प्रति ययौ यत्तः पाञ्चाल्यः सह सोदरैः ।
कर्णिकारध्वजञ्चैव सिंहकेतुमरिन्दम । प्रत्युज्जगाम सौभद्रं राजपुत्रो बृहद्बलः । ५२५५
शिखण्डिनञ्च पुत्रास्ते पाण्डवञ्च धनञ्जयं । राजभिः समरे सार्द्धमभिपेतुर्जिघांसवः ।
तस्मिन्नतिमहाभीमे सेनयोर्व्वै पराक्रमे । सम्प्रधावत्स्वनीकेषु मेदिनी समकम्पत ।
तान्यनीकान्यनीकेषु समसज्जन्त भारत । तावकानां परेषाञ्च दृष्ट्वा शान्तनवं रणे ।
ततस्तेषां प्रतप्तानामन्योन्यमभिधावतां । प्रादुरासीन्महाशब्दो दिक्षु सर्व्वासु भारत ।
शङ्खदुन्दुभिघोषैश्च वारणानाञ्च बृंहितैः । सिंहनादैश्च सैन्यानां दारुणः समपद्यत । ५२६०

सा च सर्व्वनरेन्द्राणां चन्द्रार्कसदृशी प्रभा। वीराङ्गदकिरीटेषु निष्प्रभा समपद्यत।
रजो मेघाश्च संजग्मुः शस्त्रविद्युद्भिरावृताः। धनुषाञ्चापि निर्घोषो दारुणः समपद्यत।
बाणशङ्खप्रणादाश्च भेरीणाञ्च महास्वनाः। रथघोषश्च संजज्ञे सेनयोरुभयोरपि।
प्रासशक्त्यृष्टिसङ्घैश्च बाणौघैश्च समाकुलं। निःप्रकाशमिवाकाशं सेनयोः समपद्यत।
अन्योऽन्यं रथिनः पेतुर्वाजिनश्च महाहवे। कुञ्जरान् कुञ्जरा जघ्नुः पदातींश्च पदातयः। ५२७५
तत्रासीत् सुमहद्युद्धं कुरूणां पाण्डवैः सह। भीष्महेतोर्नरव्याघ्र श्येनयोरामिषे यथा।
तेषां समागमो घोरो बभूव युधि सङ्गतः। अन्योऽन्यस्य बधार्थाय जिगीषूणां महाहवे।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मबधपर्व्वणि भीष्मोपदेशे षोडशाधिकशततमोऽध्यायः॥ ११६ ॥
॥ सञ्जय उवाच ॥ अभिमन्युर्महाराज तव पुत्त्रमयोधयत्। महत्या सेनया युक्तं भीष्महेतोः पराक्रमी।
ततो दुर्य्योधनो कार्ष्णिं नवभिर्नतपर्व्वभिः। आजघानोरसि क्रुद्धः पुनश्चैव त्रिभिः शरैः।
तस्य शक्तिं रणे कार्ष्णिर्मृत्योर्घोरामिव स्वसां। प्रेषयामास संक्रुद्धो दुर्य्योधनरथं प्रति। ५२८०
तामापतन्तीं सहसा घोररूपां विशाम्पते। द्विधा चिच्छेद ते पुत्त्रः क्षुरप्रेण महारथः।
तद्युद्धमभवद्घोरं चित्ररूपञ्च भारत। इन्द्रियप्रीतिजननं सर्व्वपार्थिवपूजितं।
भीष्मस्य निधनार्थाय पार्थस्य विजयाय च। युयुधाते रणे वीरौ सौभद्रकुरुपुङ्गवौ।
सात्यकिं रभसं युद्धे द्रौणिर्ब्राह्मणपुङ्गवः। आजघानोरसि क्रुद्धो नाराचेन परन्तपः।
शैनेयोऽपि गुरोः पुत्त्रं सर्व्वमर्म्मसु भारत। अताडयदमेयात्मा नवभिः कङ्कवाजितैः। ५२८५
अश्वत्थामा तु समरे सात्यकिं नवभिः शरैः। त्रिंशता च पुनस्तूर्णं बाह्वोरुरसि चार्पयत्।
सोऽतिविद्धो महेष्वासो द्रोणपुत्त्रेण सात्वतः। द्रोणपुत्त्रं त्रिभिर्बाणैराजघान महायशाः।
पौरवो धृष्टकेतुञ्च शरैराच्छाद्य संयुगे। बहुधा दारयाञ्चक्रे महेष्वासं महारथः।
तथैव पौरवं युद्धे धृष्टकेतुर्महारथः। त्रिंशता निशितैर्बाणैर्विव्याधाशु महाबलः।
पौरवस्तु धनुश्छित्वा धृष्टकेतोर्महारथः। ननाद बलवान्नादं विव्याध च शितैः शरैः। ५२९०
सोऽन्यत् कार्म्मुकमादाय पौरवं निशितैः शरैः। आजघान महाराज त्रिसप्तत्या शिलीमुखैः।
तौ तु तत्र महेष्वासौ महामात्रौ महारथौ। महता शरवर्षेण परस्परमविध्यतां।
अन्योऽन्यस्य धनुश्छित्वा हयान् हत्वा च भारत। विरथावसियुद्धाय समीयतुरमर्षणौ।
आर्षभे चर्म्मणी चित्रे शतचन्द्रपरिष्कृते। तारकाशतचित्रे च निस्त्रिंशौ सुमहाप्रभौ।
प्रगृह्य विमलौ राजंस्तावन्योऽन्यमभिद्रुतौ। वासितासङ्गमे यत्तौ सिंहाविव महावने। ५२९५
मण्डलानि विचित्राणि गतप्रत्यागतानि च। चेरतुर्दर्शयन्तौ च प्रार्थयन्तौ परस्परं।
पौरवो धृष्टकेतुन्तु शङ्खदेशे महासिना। ताडयामास संक्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत्।
चेदिराजोऽपि समरे पौरवं पुरुषर्षभं। आजघान शिताग्रेण जत्रुदेशे महासिना।
तावन्योन्यं महाराज समासाद्य महाहवे। अन्योऽन्यवेगाभिहतौ निपेततुररिन्दमौ।

ततः स्वरथमारोप्य पौरवं तनयस्तव । जयत्सेनो रथेनाजावपोवाह रणाजिरात् ।  ५४००
धृष्टकेतुन्तु समरे माद्रीपुत्त्रः प्रतापवान् । अपोवाह रणे शूरः सहदेवः पराक्रमी ।
चित्रसेनः सुशर्म्माणं विद्ध्वा बहुभिरायसैः । पुनर्व्विव्याध तं षष्ट्या पुनश्च नवभिः शरैः ।
सुशर्म्मा तु रणे क्रुद्धस्तव पुत्त्रं विशाम्पते । दशभिर्द्दशभिश्चैव विव्याध निशितैः शरैः ।
चित्रसेनश्च तं राजंस्त्रिंशतानतपर्व्वभिः । आजघान रणे क्रुद्धः स च तं प्रत्यविध्यत ।
भीष्मस्य समरे राजन् यशो मानञ्च वर्द्धयन् । सौभद्रो राजपुत्त्रन्तु बृहद्बलमयोधयत् ।  ५४०५
पार्थहेतोः पराक्रान्तो भीष्मस्यायोधनं प्रति । आर्ज्जुनिं कोशलेन्द्रस्तु विद्ध्वा पञ्चभिरायसैः ।
पुनर्व्विव्याध विंशत्या शरैः सन्नतपर्व्वभिः । सौभद्रः कोशलेन्द्रन्तु विव्याधाष्टभिरायसैः ।
नाकम्पयत सङ्ग्रामे विव्याध च पुनः शरैः । कौशल्यस्य धनुश्चापि पुनश्चिच्छेद फाल्गुनिः ।
आजघान शरैश्चापि त्रिंशता कङ्कपत्त्रिभिः । सोऽन्यत् कार्म्मुकमादाय राजपुत्त्रो बृहद्बलः ।
फाल्गुनिं समरे क्रुद्धो विव्याध बहुभिः शरैः । तयोर्युद्धं समभवत् भीष्महेतोः परन्तप ।  ५४१०
संरब्धयोर्म्महाराज समरे चित्रयोधिनोः । यथा देवासुरे युद्धे बलिवासवयोरभूत् ।
भीमसेनो रथानीकं योधयन् बह्वशोभत । यथा शक्रो वज्रपाणिर्द्दारयन् पर्व्वतोत्तमान् ।
ते बध्यमानाः समरे मातङ्गा गिरिसन्निभाः । निपेतुरुर्व्व्यां सहिता नादयन्तो वसुन्धरां ।
गिरिमात्रा हि ते नागा भिन्नाञ्जनचयोपमाः । विरेजुर्व्वसुधां प्राप्ता विकीर्णा इव पर्व्वताः ।
युधिष्ठिरो महेष्वासो मद्रराजानमाहवे । महत्या सेनया गुप्तः पीडयामास सङ्गतं ।  ५४१५
मद्रेश्वरोऽथ समरे धर्म्मपुत्त्रं महारथं । पीडयामास समरे भीष्महेतोः पराक्रमी ।
विराटं सैन्धवो राजा विद्ध्वा सन्नतपर्व्वभिः । नवभिः सायकैस्तीक्ष्णैस्त्रिंशता पुनरर्पयत् ।
विराटश्च महाराज सैन्धवं वाहिनीपतिः । त्रिंशद्भिर्न्निशितैर्ब्बाणैराजघान स्तनान्तरे ।
चित्रकार्म्मुकनिस्त्रिंशौ चित्रवर्म्मायुधध्वजौ । रेजतुश्चित्ररूपौ तौ सङ्ग्रामे मत्स्यसैन्धवौ ।
द्रोणः पाञ्चालपुत्त्रेण समागम्य महारणे । महासमुदयं चक्रे शरैः सन्नतपर्व्वभिः ।  ५४२०
ततो द्रोणो महाराज पार्षतस्य महद्धनुः । छित्त्वा पञ्चाशतेषूणां पार्षतं समविध्यत ।
सोऽन्यत् कार्म्मुकमादाय पार्षतः परवीरहा । द्रोणाय चिक्षेप गदां यमदण्डोपमां रणे ।
तामापतन्तीं सहसा हेमपट्टविभूषितां । शरैः पञ्चाशता द्रोणो वारयामास संयुगे ।
सा छिन्ना बहुधा राजन् द्रोणचापच्युतैः शरैः । चूर्णीकृता विशीर्य्यन्ती पपात वसुधातले ।
गदां विनिहतां दृष्ट्वा पार्षतः शत्रुतापनः । द्रोणाय शक्तिं चिक्षेप सर्व्वपारशवीं शुभां ।  ५४२५
तां द्रोणो नवभिर्व्वाणैश्चिच्छेद युधि भारत । पार्षतञ्च महेष्वासं पीडयामास संयुगे ।
एवमेतन्महद्युद्धं द्रोणपार्षतयोरभूत् । भीष्मं प्रति महाराज घोररूपं भयानकं ।
अर्ज्जुनः प्राप्य गाङ्गेयं पीडयन्निशितैः शरैः । अभ्यद्रवत सम्मत्तो वने मत्तमिव द्विपं ।
प्रत्युद्ययौ च तं राजा भगदत्तः प्रतापवान् । अर्ज्जुनं शरवर्षेण वारयामास संयुगे ।

अर्ज्जुनश्च ततो नागमायान्तं रक्षसोपमम् । विशिखैरायसैस्तीक्ष्णैरविध्यत महारणे । ५४२०
शिखण्डिनञ्च कौन्तेयो याहि याहीत्यचोदयत् । भीष्मं प्रति महाराज जह्येनमिति चाब्रवीत् ।
प्राग्ज्योतिषस्ततो हित्वा पाण्डवं पाण्डुपूर्व्वज । प्रययौ त्वरितो राजन् द्रुपदस्य रथं प्रति ।
ततोऽर्ज्जुनो महाराज भीष्ममभ्यद्रवद्द्रुतं । शिखण्डिनं पुरस्कृत्य ततो युद्धमवर्त्तत ।
ततस्ते तावकाः शूराः पाण्डवं रभसं युधि । समभ्यधावन् क्रोशन्तस्तदद्भुतमिवाभवत् ।
नानाविधान्यनीकानि पुत्त्राणान्ते जनाधिप । अर्ज्जुनो व्यधमत्काले दिवीवाभ्राणि मारुतः । ५४२५
शिखण्डी तु समासाद्य भारतानां पितामहं । इषुभिस्तूर्णमव्यग्रो बहुभिः समवाचिनोत् ।
रथाग्न्यगारश्चापार्च्चिरसिशक्तिगदेन्धनः । शरसङ्घमहाज्वालः क्षत्रियान् समरेऽदहत् ।
यथाऽग्निः सुमहानिद्धः कक्षे चरति सानिलः । तथा जज्वाल भीष्मोऽपि दिव्यान्यस्त्राण्युदीरयन् ।
सोमकांश्च रणे भीष्मो जघ्ने पार्थपदानुगान् । न्यवारयत तत्सैन्यं पाण्डवस्य महारथः ।
सुवर्णपुङ्खैरिषुभिः शितैः सन्नतपर्व्वभिः । नादयन् स दिशो भीष्मः प्रदिशश्च महाहवे । ५४३०
पातयन् रथिनो राजन् हयांश्च हयसादिभिः । मुण्डतालवनानीव स चकार रथव्रजान् ।
निर्म्मनुष्यान् रथान् राजन् गजानश्वांश्च संयुगे । चकार समरे भीष्मः सर्व्वशस्त्रभृतां वरः ।
तस्य ज्यातलनिर्घोषं विस्फूर्ज्जितमिवाशनेः । निशम्य सर्व्वतो राजन् समकम्पन्त सैनिकाः ।
अमोघा न्यपतन् बाणाः पितुस्ते मनुजेश्वर । नासज्जन्त शरीरेषु भीष्मचापच्युताः शराः ।
निर्म्मनुष्यान् रथान् राजन् संयुक्तान् जवनैर्हयैः । वातायमानानद्राक्षं ह्रियमाणान् विशाम्पते । ५४३५
चेदिकाशिकरूषाणां सहस्राणि चतुर्द्दश । महारथाः समाख्याताः कुलपुत्त्रास्तनुत्यजः ।
अपरावर्त्तिनः शूराः सुवर्णविकृतध्वजाः । सङ्ग्रामे भीष्ममासाद्य सवाजिरथकुञ्जराः ।
जग्मुस्ते परलोकाय व्यादितास्यमिवान्तकं । न तत्रासीद्रणे राजन् सोमकानां महारथः ।
यः सम्प्राप्य रणे भीष्मं जीवमानः समाव्रजेत् । तांश्च सर्व्वान् रणे योधान् प्रेतराजपुरं प्रति ।
नीतानमन्यन्त जना दृष्ट्वा भीष्मपराक्रमं । न कश्चिदेनं समरे प्रत्युद्याति महारथः । ५४४०
ऋते पाण्डुसुतं वीरं श्वेताश्वं कृष्णसारथिं । शिखण्डिनञ्च समरे पाञ्चाल्यममितौजसं ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
॥ सञ्जय उवाच ॥ शिखण्डी तु रणे भीष्ममासाद्य पुरुषर्षभ । दशभिर्निशितैर्भल्लैराजघान स्तनान्तरे ।
शिखण्डिनन्तु गाङ्गेयः क्रोधदीप्तेन चक्षुषा । सम्प्रैक्षत कटाक्षेण निर्द्दहन्निव भारत ।
स्त्रीत्वं तस्य स्मरन् राजन् सर्व्वलोकस्य पश्यतः । नाजघान रणे भीष्मः स च तन्नावबुद्धवान् ।
अर्ज्जुनस्तु महाराज शिखण्डिनमभाषत । अभिद्रवस्व त्वरितं जहि चैनं पितामहं । ५४४५
किन्ते विवक्षया वीर जहि भीष्मं महारथं । न ह्यन्यमनुपश्यामि कञ्चिद्यौधिष्ठिरे बले ।
यः शक्तः समरे भीष्मं प्रतियोद्धुं महाहवे । ऋते त्वां पुरुषव्याघ्र सत्यमेतद्ब्रवीमि ते ।
एवमुक्तस्तु पार्थेन शिखण्डी भरतर्षभ । शरैर्नानाविधैस्तूर्णं पितामहमवाकिरत् ।

अचिन्तयित्वा तान् वाणान् पिता देवव्रतस्तव । अर्ज्जुनं समरे क्रुद्धं वारयामास सायकैः ।
तथैव च चमूं सर्व्वां पाण्डवानां महारथः । अप्रैषीत् स शरैस्तीक्ष्णैः परलोकाय मारिष । ५४६०
तथैव पाण्डवा राजन् सैन्येन महता वृताः । भीष्मं प्रच्छादयामासुर्मेघा इव दिवाकरं ।
स समन्तात् परिवृतो भारतो भरतर्षभ । निर्द्दहाह रणे शूरान् वने वह्निरिव ज्वलन् ।
तत्राद्भुतमपश्याम तव पुत्त्रस्य पौरुषं । अयोधयच्च यत् पार्थं जुगोप च पितामहं ।
कर्म्मणा तेन समरे तव पुत्त्रस्य धन्विनः । दुःशासनस्य तुतुषुः सर्व्वे लोका महात्मनः ।
यदेकः समरे पार्थान् सार्ज्जुनान् समयोधयत् । न चैनं पाण्डवा युद्धे वारयामासुरुल्वणं । ५४६५
दुःशासनेन समरे रथिनो विरथीकृताः । सादिनश्च महेष्वासा हस्तिनश्च महाबलाः ।
विनिर्भिन्नाः शरैस्तीक्ष्णैर्निपेतुर्वसुधातले । शरातुरास्तथैवान्ये दन्तिनो विद्रुता दिशः ।
यथाऽग्निरिन्धनं प्राप्य ज्वलेद्दीप्तार्च्चिरुल्वणं । तथा जज्वाल पुत्त्रस्ते पाण्डुसेनां विनिर्द्दहन् ।
तं भारत महामात्रं पाण्डवानां महारथः । जेतुं नोत्सहते कश्चिन्नाभ्युद्यातुं कथञ्चन ।
ऋते महेन्द्रतनयात् श्वेताश्वात् कृष्णसारथेः । स हि तं समरे राजन् निर्ज्जित्य विजयोऽर्ज्जुनः । ५४७०
भीष्ममेवाभिदुद्राव सर्व्वलोकस्य पश्यतः । विजितस्तव पुत्त्रस्तु भीष्मवाहुव्यपाश्रयः ।
पुनः पुनः समाश्वस्य प्रायुध्यत मदोत्कटः । अर्ज्जुनस्तु रणे राजन् योधयन् संव्यराजत ।
शिखण्डी तु रणे राजन् विव्याधैव पितामहं । शरैरशनिसंस्पर्शैस्तथा सर्पविषोपमैः ।
न च स्म ते रुजं चक्रुः पितुस्तव जनेश्वर । स्मयमानस्तु गाङ्गेयस्तान् वाणान् जगृहे तदा ।
उष्णार्त्तो हि नरो यद्वत् जलधाराः प्रतीच्छति । तथा जग्राह गाङ्गेयः शरधाराः शिखण्डिनः । ५४७५
तं क्षत्त्रिया महाराज ददृशुर्घोरमाहवे । भीष्मं दहन्तं सैन्यानि पाण्डवानां महात्मनां ।
ततोऽब्रवीत्तव सुतः सर्व्वसैन्यानि मारिष । अभिद्रवत संग्रामे फाल्गुनं सर्व्वतो रणे ।
भीष्मो वः समरे सर्व्वान् पालयिष्यति धर्म्मवित् । ते भयं सुमहत् त्यक्त्वा पाण्डवान् प्रत्ययुध्यत ।
हेमतालेन महता भीष्मस्तिष्ठति पालयन् । सर्व्वेषां धार्त्तराष्ट्राणां समरे शर्म्म वर्म्म च ।
विदशापि समुद्युक्ता नालं भीष्मं समासितुं । किमु पार्था महात्मानं मर्त्यभूता महाबलं । ५४८०
तस्माद्द्रवन्त मा योधा फाल्गुनं प्राप्य संयुगे । अहमद्य रणे यत्तो योधयिष्यामि पाण्डवं ।
सहितः सर्व्वतो यत्तैर्भवद्भिर्वसुधाधिपैः । तच्छ्रुत्वा तु वचो राजन् तव पुत्त्रस्य धन्विनः ।
सर्व्वे योधाः सुसंरब्धा बलवन्तो महाबलाः । ते विदेहाः कलिङ्गाश्च दासेरकगणाश्च ह ।
अभिपेतुर्निषादाश्च सौवीराश्च महारणे । वाह्लीका दरदाश्चैव प्रतीच्योदीच्यमालवाः ।
अभीषाहाः शूरसेनाः शिवयोऽथ वसातयः । शाल्वाः शकास्त्रिगर्त्ताश्च अम्बष्ठाः कैकयैः सह । ५४८५
अभिपेतू रणे पार्थं पतङ्गा इव पावकं । स तान् सर्व्वान् सतानीकान् महाराज महारथान् ।
दिव्यान्यस्त्राणि सञ्चिन्त्य प्रसन्धाय धनञ्जयः । स तैरस्त्रैर्महावेगैर्ददाहाशु महाबलः ।
शरप्रतापैर्बीभत्सुः पतङ्गानिव पावकः । तस्य वाणसहस्राणि सृजतो दृढधन्विनः ।

दीप्यमानमिवाकाशे गाण्डीवं समदृश्यत । ते शरार्त्ता महाराज विप्रकीर्णमहाध्वजाः ।
नाभ्यवर्त्तन्त राजानः सहिता वानरध्वजं । सध्वजा रथिनः पेतुर्हयारोहा हयैः सह । ५४९०
सगजाश्च गजारोहाः किरीटिशरताडिताः । ततोऽर्ज्जुनभुजोत्सृष्टैरावृतासीद्वसुन्धरा ।
विद्रवद्भिश्च बहुधा बलै राज्ञां समन्ततः । अथ पार्थो महाराज द्रावयित्वा वरूथिनीं ।
दुःशासनाय सङ्क्रुद्धः प्रेषयामास सायकान् । ते तु भित्त्वा तव सुतं दुःशासनमयोमुखाः ।
धरणीं विविशुः सर्व्वे वल्मीकमिव पन्नगाः । हयांश्चास्य ततो जघ्ने सारथिञ्च न्यपातयत् ।
विविंशतिञ्च विंशत्या विरथं कृतवान् प्रभुः । आजघान भृशञ्चैव पञ्चभिर्नतपर्व्वभिः । ५४९५
कृपं विकर्णं शल्यञ्च विद्ध्वा बहुभिरायसैः । चकार विरथांश्चैव कौन्तेयः श्वेतवाहनः ।
एवन्ते विरथाः सर्व्वे कृपः शल्यश्च मारिष । दुःशासनो विकर्णश्च तथैव च विविंशतिः ।
सम्प्राद्रवन्त समरे निर्ज्जिताः सव्यसाचिना । पूर्व्वाह्णे भरतश्रेष्ठ पराजित्य महारथान् ।
प्रजज्वाल रणे पार्थो विधूम इव पावकः । तथैव शरवर्षेण भास्करो रश्मिवानिव ।
अन्यानपि महाराज पातयामास पार्थिवान् । पराङ्मुखीकृत्य तथा शरवर्षैर्महारथान् । ५५००
प्रावर्त्तयत सङ्ग्रामे शोणितोदां महानदीं । मध्येन कुरुसैन्यानां पाण्डवानाञ्च भारत ।
गजाश्वरथसङ्घाश्च बहुधा रथिभिर्हताः । रथाश्च निहता नागैर्हयाश्चैव पदातिभिः ।
अन्तराच्छिद्यमानानि शरीराणि शिरांसि च । निपेतुर्दिक्षु सर्व्वासु गजाश्वरथयोधिनां ।
छन्नमायोधनं राजन् कुण्डलाङ्गदधारिभिः । पतितैः पात्यमानैश्च राजपुत्त्रैर्महारथैः ।
रथनेमिनिकृत्तैश्च गजैश्चैवावपोथितैः । पदाताश्चाप्यधावन्त साश्वाः सहयसादिनः । ५५०५
गजाश्च रथयोधाश्च परिपेतुः समन्ततः । विकीर्णाश्च रथा भूमौ भग्नचक्रयुगध्वजाः ।
तद्गजाश्वरथौघानां रुधिरेण समुक्षितं । छन्नमायोधनं रेजे रक्ताभ्रमिव शारदं ।
श्वानः काकाश्च गृध्राश्च वृका गोमायुभिः सह । प्रणेदुर्भक्ष्यमासाद्य विकृताश्च मृगद्विजाः ।
ववुर्बहुविधाश्चैव दिक्षु सर्व्वासु मारुताः । दृश्यमानेषु रक्षःसु भूतेषु च नदत्सु च ।
काञ्चनानि च दामानि पताकाश्च महाधनाः । धूयमाना व्यदृश्यन्त सहसा मारुतेरिताः । ५५१०
श्वेतच्छत्रसहस्राणि सध्वजाश्च महारथाः । विकीर्णाः समदृश्यन्त पतिता धरणीतले ।
ततो भीष्मो महाराज दिव्यमस्त्रमुदीरयन् । अभ्यधावत कौन्तेयं मिषतां सर्व्वधन्विनां ।
तं शिखण्डी रणे यान्तमभ्यद्रवत दंशितः । ततः समाहरत् भीष्मस्तदस्त्रं पावकोपमं ।
एतस्मिन्नेव काले तु कौन्तेयः श्वेतवाहनः । निजघ्ने तावकं सैन्यं मोहयित्वा पितामहं ।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥
॥ सञ्जय उवाच ॥ एवं व्यूढेष्वनीकेषु भूयिष्ठेष्वनिवर्त्तिनः । ब्रह्मलोकपराः सर्व्वे समपद्यन्त भारत । ५५१५
न ह्यनीकमनीकेन समसज्जत सङ्कुले । रथिनो रथिभिः सार्द्धं पदाताश्च पदातिभिः ।
अश्वाश्चाश्वैरयुध्यन्त गजाश्च गजयोधिभिः । उन्मत्तवन्महाराज युध्यन्ते स्म भारत ।

महान् व्यतिकरो रौद्रः सेनयोः समपद्यत । नरवाजिगणेष्वेवं व्यवकीर्णेषु सर्व्वशः ।
क्षये तस्मिन्महारौद्रे निर्विशेषमजायत । ततः शल्यः कृपश्चैव चित्रसेनश्च भारत ।
दुःशासनो विकर्णश्च रथानास्थाय भास्वरान् । पाण्डवानां रणे शूरा ध्वजिनीं समकम्पयन् । ५५१०
सा वध्यमाना समरे पाण्डुसेना महात्मभिः । भ्राम्यते बहुधा राजन् मारुतेनेव नौर्जले ।
यथा हि शैशिरः कालो गवां मर्म्माणि कृन्तति । तथा पाण्डुसुतानां वै भीष्मो मर्म्माणि कृन्तति ।
अतीव तव सैन्यस्य पार्थेन च महात्मना । नवमेघप्रतीकाशाः पातिता बहुधा गजाः ।
मृद्यमानाश्च दृश्यन्ते पार्थेन नरयूथपाः । इषुभिस्ताड्यमानाश्च नाराचैश्च सहस्रशः ।
पेतुरार्त्तस्वरं घोरं कृत्वा तत्र महागजाः । आबद्धाभरणैः कायैर्निहतानां महात्मनां । ५५१५
छन्नमायोधनं रेजे शिरोभिश्च सकुण्डलैः । तस्मिन्नेवं महाराज महावीरवरक्षये ।
भीष्मे च युधि विक्रान्ते पाण्डवे च धनञ्जये । ते पराक्रान्तमालोक्य राजन् युधि पितामहं ।
अभ्यवर्त्तन्त ते पुत्राः सर्व्वसैन्यपुरस्कृताः । इच्छन्तो निधनं युद्धे स्वर्गं कृत्वा परायणं ।
पाण्डवानभ्यवर्त्तन्त तस्मिन् वीरवरक्षये । पाण्डवाश्च महाराज स्मरन्तो विविधान् बहून् ।
क्लेशान् कृतान् सपुत्रेण त्वया पूर्व्वं नराधिप । भयं त्यक्त्वा रणे शूरा ब्रह्मलोकाय तत्पराः । ५५२०
तावकांस्तव पुत्रांश्च योधयन्ति प्रहृष्टवत् । सेनापतिस्तु समरे प्राह सेनां महारथः ।
अभिद्रवत गाङ्गेयं सोमकाः सृञ्जयैः सह । सेनापतिवचः श्रुत्वा सोमकाः सृञ्जयाश्च ते ।
अभ्यद्रवन्त गाङ्गेयं शरवृष्ट्या समन्ततः । वध्यमानस्ततो राजन् पिता शान्तनवस्तव ।
अमर्षवशमापन्नो योधयामास सृञ्जयान् । तस्य कीर्त्तिमतस्तात पुरा रामेण धीमता ।
सम्प्रदत्ताऽस्त्रशिक्षा वै परानीकविनाशिनी । स तां शिक्षामधिष्ठाय कुर्व्वन् परबलक्षयं । ५५२५
अहन्यहनि पार्थानां वृद्धः कुरुपितामहः । भीष्मो दशसहस्राणि जघान परवीरहा ।
तस्मिंस्तु दिवसे प्राप्ते दशमे भरतर्षभ । भीष्मेणैकेन मत्स्येषु पाञ्चालेषु च संयुगे ।
गजानामयुतं हत्वा हताः सप्त महारथाः । हत्वा पञ्चसहस्राणि रथानां प्रपितामहः ।
नराणाञ्च महायुद्धे सहस्राणि चतुर्द्दश । दन्तिनाञ्च सहस्राणि हयानामयुतं पुनः ।
शिक्षाबलेन निहतं पित्रा तव विशाम्पते । ततः सर्व्वमहीपानां क्षोभयित्वा वरूथिनीं । ५५३०
विराटस्य प्रियो भ्राता शतानीको निपातितः । शतानीकञ्च समरे हत्वा भीष्मः प्रतापवान् ।
सहस्राणि महाराज राज्ञां भल्लैरपातयत् । ये च केचन पार्थानामभियाता धनञ्जयं ।
राजानो भीष्ममासाद्य गतास्ते यमसादनं । एवं दश दिशो भीष्मः शरजालैः समन्ततः ।
अतीत्य सेनां पार्थानामवतस्थे समन्ततः । स कृत्वा सुमहत् कर्म्म तस्मिन् वै दशमेऽहनि ।
सेनयोरन्तरे तिष्ठन् प्रगृहीतशरासनः । न चैनं पार्थिवाः केचिच्छक्ता राजन्निरीक्षितुं । ५५३५
मध्यं प्राप्तं यथा ग्रीष्मे तपन्तं भास्करं दिवि । यथा दैत्यचमूं शक्रस्तापयामास संयुगे ।
तथा भीष्मः पाण्डवेयांस्तापयामास भारत । तथा चैनं पराक्रान्तमालोक्य मधुसूदनः ।

उवाच देवकीपुत्त्रः प्रीयमाणो धनञ्जयं । एष शान्तनवो भीष्मः सेनयोरन्तरे स्थितः ।
सन्निहत्य बलादेनं विजयस्ते भविष्यति । यत्नात् संस्तम्भयस्वैनं यत्रैषा भिद्यते चमूः ।
न हि भीष्मशरानन्यः सोढुमुत्सहते विभो । ततस्तस्मिन् क्षणे राजंश्चोदितो वानरध्वजः । ५५८०
सध्वजं सरथं साश्वं भीष्ममन्तर्दधे शरैः । स चापि कुरुमुख्यानामृषभः पाण्डवेरिताम् ।
शरव्रातैः शरव्रातान् बहुधा विदुद्राव तान् । ततः पाञ्चालराजश्च धृष्टकेतुश्च वीर्य्यवान् ।
पाण्डवो भीमसेनश्च धृष्टद्युम्नश्च पार्षतः । यमौ च चेकितानश्च केकयाः पञ्च चैव हि ।
सात्यकिश्च महाबाहुः सौभद्रोऽथ घटोत्कचः । द्रौपदेयाः शिखण्डी च कुन्तिभोजश्च वीर्य्यवान् ।
सुशर्म्मा च विराटश्च पाण्डवेया महाबलाः । एते चान्ये च बहवः पीडिता भीष्मसायकैः । ५५८५
समुद्धृताः फाल्गुनेन निमग्नाः शोकसागरे । ततः शिखण्डी वेगेन प्रगृह्य परमायुधं ।
भीष्ममेवाभिदुद्राव रक्ष्यमाणः किरीटिना । ततोऽस्यानुचरान् हत्वा सर्व्वान् रणविभागवित् ।
भीष्ममेवाभिदुद्राव बीभत्सुरपराजितः । सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः ।
विराटो द्रुपदश्चैव माद्रीपुत्त्रौ च पाण्डवौ । दुद्रुवुर्भीष्ममेवाजौ रक्षिता दृढधन्विना ।
अभिमन्युश्च समरे द्रौपद्याः पञ्च चात्मजाः । दुद्रुवुः समरे भीष्मं समुद्यतमहायुधाः । ५५९०
ते सर्व्वे दृढधन्वानः संयुगेष्वपलायिनः । बहुधा भीष्ममानर्च्छुर्मार्गणैः क्षतमार्गणैः ।
विधूय तान् बाणगणान् ये मुक्ताः पार्थिवोत्तमैः । पाण्डवानामदीनात्मा व्यगाहत वरूथिनीं ।
चक्रे शरविघातञ्च क्रीडन्निव पितामहः । नाभिसन्धत्त पाञ्चाल्ये स्मयमानो मुहुर्मुहुः ।
स्त्रीत्वं तस्य तु संस्मृत्य भीष्मो बाणान् शिखण्डिने । जघान द्रुपदानीके रथान् सप्त महारथः ।
ततः किलकिलाशब्दः क्षणेन समभूत्तदा । मत्स्यपाञ्चालचेदीनां तमेकमभिधावतां । ५५९५
ते नराश्वरथव्रातैर्मार्गणैश्च परन्तप । तमेकं छादयामासुर्मेघा इव दिवाकरं ।
भीष्मं भागीरथीपुत्त्रं प्रतपन्तं रणे रिपून् । ततस्तस्य च तेषाञ्च युद्धे देवासुरोपमे ।
किरीटी भीष्ममानर्च्छत्पुरस्कृत्य शिखण्डिनं ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मपराक्रमे एकोनविंशाधिकशततमोऽध्यायः ॥ ११९ ॥

॥ सञ्जय उवाच । एवन्ते पाण्डवाः सर्व्वे पुरस्कृत्य शिखण्डिनं । विव्यधुः समरे भीष्मं परिवार्य्य समन्ततः ।
शतघ्नीभिः सुघोराभिः परिघैश्च परश्वधैः । मुद्गरैर्मुसलैः प्रासैः क्षेपणीयैश्च सर्व्वशः । ५६००
शरैः कनकपुङ्खैश्च शक्तितोमरकम्पनैः । नाराचैर्वत्सदन्तैश्च भुशुण्डीभिश्च सर्व्वशः ।
अताडयन् रणे भीष्मं सहिताः सर्व्वसृञ्जयाः । स विशीर्णतनुत्राणः पीडितो बहुभिस्तदा ।
न विव्यथे तदा भीष्मो भिद्यमानेषु मर्म्मसु । सन्दीप्तशरचापार्च्चिरस्त्रप्रसृतमारुतः ।
नेमिनिर्ह्रादसन्तापो महास्त्रोदयपावकः । चित्रचापमहाज्वालो वीरक्षयमहेन्धनः ।
युगान्ताग्निसमप्रख्यः परेषां समपद्यत । विहृत्य रथसङ्घानामन्तरेण विनिःसृतः । ५६०५
दृश्यते स्म नरेन्द्राणां पुनर्मध्यगतश्चरन् । ततः पाञ्चालराजञ्च धृष्टकेतुमविन्त्य च ।

पाण्डवानीकिनीमध्यमाससाद विशाम्पते । ततः सात्यकिभीमौ च पाण्डवश्च धनञ्जयं ।
द्रुपदश्च विराटश्च धृष्टद्युम्नश्च पार्षतं । भीमघोषैस्तथावेगैर्मर्म्मावरणभेदिभिः ।
अभ्येतान्निशितैर्भीष्मः प्रविव्याधाश्ममैः शरैः । तस्य ते निशितान् बाणान् सन्निवार्य्य महारथाः ।
दशभिर्दशभिर्भीष्ममर्दयामासुरोजसा । शिखण्डी तु महाबाणान् यान्मुमोच महारथः । ५५८०
ते भीष्मं विविशुस्तूर्णं स्वर्णपुङ्खाः शिलाशिताः । ततः किरीटी संरब्धो भीष्ममेवाभ्यधावत ।
शिखण्डिनं पुरस्कृत्य धनुश्चैव समाच्छिनत् । ते भीष्मधनुषश्छेदं नामृष्यन्त महारथाः ।
द्रोणश्च कृतवर्म्मा च सैन्धवश्च जयद्रथः । भूरिश्रवाः शलः शल्यो भगदत्तस्तथैव च ।
सप्तैते परमक्रुद्धाः किरीटिनमभिद्रुताः । तत्र शस्त्राणि दिव्यानि दर्शयन्तो महारथाः ।
अभिपेतुर्भृशं क्रुद्धाश्छादयन्तश्च पाण्डवं । तेषामापततां शब्दः फाल्गुनस्य रथं प्रति । ५५८५
तं शब्दं तुमुलं श्रुत्वा पाण्डवानां महारथाः । अभिधावन् परीप्सन्तः फाल्गुनं भरतर्षभं ।
सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः । विराटद्रुपदौ चोभौ राक्षसश्च घटोत्कचः ।
अभिमन्युश्च संक्रुद्धः सप्तैते क्रोधमूर्च्छिताः । समभ्यधावंस्त्वरिताश्चित्रकार्म्मुकधारिणः ।
तेषां समभवद्युद्धं तुमुलं लोमहर्षणं । सङ्ग्रामे भरतश्रेष्ठ देवानां दानवैरिव ।
शिखण्डी तु रणे श्रेष्ठो रक्ष्यमाणः किरीटिना । अविध्यद्दशभिर्भीष्मं छिन्नधन्वानमाहवे । ५५९०
सारथिं दशभिश्चास्य ध्वजञ्चैकेन चिच्छिदे । सोऽन्यत् कार्म्मुकमादाय गाङ्गेयो वेगवत्तरं ।
तदप्यस्य शितैर्बाणैस्त्रिभिश्चिच्छेद फाल्गुनः । एवं स पाण्डवः क्रुद्ध आत्तमात्तं पुनः पुनः ।
धनुश्चिच्छेद भीष्मस्य सव्यसाची परन्तपः । स छिन्नधन्वा संक्रुद्धः सृक्किणी परिसंलिहन् ।
शक्तिं जग्राह तरसा गिरीणामपि दारणीं । ताञ्च चिक्षेप संक्रुद्धः फाल्गुनस्य रथं प्रति ।
तामापतन्तीं संप्रेक्ष्य ज्वलन्तीमशनीमिव । समादत्त शितान् भल्लान् पञ्च पाण्डवनन्दनः । ५५९५
तस्य चिच्छेद तां शक्तिं पञ्चधा पञ्चभिः शरैः । संक्रुद्धो भरतश्रेष्ठ भीष्मबाहुप्रवेरितां ।
सा पपात रथाच्छिन्ना संक्रुद्धेन किरीटिना । मेघवृन्दपरिभ्रष्टा विच्छिन्नेव शतह्रदा ।
छिन्नां तां शक्तिमालोक्य भीष्मः क्रोधसमन्वितः । अचिन्तयद्रणे वीरो बुद्ध्या परपुरञ्जयः ।
शक्तोऽहं धनुषैकेन निहन्तुं सर्व्वपाण्डवान् । यद्येषां न भवेद्गोप्ता विष्वक्सेनो महाबलः ।
कारणद्वयमास्थाय नाहं योत्स्यामि पाण्डवान् । अवध्यत्वाच्च पाण्डूनां स्त्रीभावाच्च शिखण्डिनः । ५६००
पित्रा तुष्टेन मे पूर्व्वं यदा कालीमुपावहत् । स्वच्छन्दमरणं दत्तमवध्यत्वं रणे तथा ।
तस्मान्मृत्युमहं मन्ये प्राप्तकालमिवात्मनः । एवं ज्ञात्वा व्यवसितं भीष्मस्यामिततेजसः ।
ऋषयो वसवश्चैव वियत्स्था भीष्ममब्रुवन् । यत्ते व्यवसितं तात तदस्माकमपि प्रियं ।
तत्कुरुष्व महाराज युद्धे बुद्धिं निवर्त्तय । अस्य वाक्यस्य निधने प्रादुरासीच्छिवोऽनिलः ।
अनुलोमः सुगन्धी च पृषतश्च समन्ततः । देवदुन्दुभयश्चैव सम्प्रणेदुर्महास्वनाः । ५६०५
पपात पुष्पवृष्टिश्च भीष्मस्योपरि मारिष । न च तत् शुश्रुवे कश्चित्तेषां संवदतां नृप ।

हते भीष्मं महाबाहुं साध्वापि मुनितेजसा। संभ्रमश्च महानासीत् त्रिदशानां विशाम्पते।
पतिष्यति रथाद्भीष्मे सर्व्वलोकप्रिये तदा। इति देवगणानाञ्च वाक्यं श्रुत्वा महात्मनः।
ततः शान्तनवो भीष्मो बीभत्सुं नाभ्यवर्त्तत। भिद्यमानः शितैर्वाणैः सर्व्वावरणभेदिभिः।
शिखण्डी तु महाराज भरतानां पितामहं। आजघानोरसि क्रुद्धो नवभिर्निशितैः शरैः। ५६१०
स तेनाभिहतः सङ्ख्ये भीष्मः कुरुपितामहः। नाकम्पत महाराज क्षितिकम्पे यथाऽचलः।
ततः प्रहस्य बीभत्सुर्व्याक्षिपन् गाण्डिवं धनुः। गाङ्गेयं पञ्चविंशत्या क्षुद्रकाणां समर्पयत्।
पुनः शरशतैरेनं त्वरमाणो धनञ्जयः। सर्व्वगात्रेषु संक्रुद्धः सर्व्वमर्म्मस्वताडयत्।
एवमन्यैरपि भृशं विध्यमानः सहस्रशः। तानप्याशु शरैर्भीष्मः प्रविव्याध महारथः।
तैश्च मुक्ताञ्छरान् भीष्मो युधि सत्यपराक्रमः। निवारयामास शरैः समं सन्नतपर्व्वभिः। ५६१५
शिखण्डी तु रणे वाणान् यान् मुमोच महारथः। न चक्रुस्ते रुजं तस्य रुक्मपुङ्खाः शिलाशिताः।
ततः किरीटी संक्रुद्धो भीष्ममेवाभ्यवर्त्तत। शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत्।
तथैनन्दशभिर्भित्त्वा ध्वजमेकेन चिच्छिदे। सारथिं विशिखैश्चास्य दशभिः समकम्पयत्।
सोऽन्यत् कार्म्मुकमादाय गाङ्गेयो बलवत्तरं। तदप्यस्य शितैर्भल्लैस्त्रिधा त्रिभिरपाहरत्।
निमेषान्तरमात्रेण आत्तमात्तं महारणे। एवमस्य धनूंष्याजौ चिच्छेद सकलान्यपि। ५६२०
ततः शान्तनवो भीष्मो बीभत्सुं नाभ्यवर्त्तत। अथैनं पञ्चविंशत्या क्षुद्रकाणां समर्पयत्।
सोऽतिविद्धो महेष्वासो दुःशासनमभाषत। एष पार्थो रणे क्रुद्धः पाण्डवानां महारथः।
शरैरनेकसाहस्रैर्मामेवाभ्यसते रणे। न चैष समरे शक्यो जेतुं वज्रभृता अपि।
न चापि सहिता वीरा देवदानवराक्षसाः। माञ्चापि शक्ता निर्ज्जेतुं किमु मर्त्त्या महारथाः।
एवं तयोः संवदतोः फाल्गुनो निशितैः शरैः। शिखण्डिनं पुरस्कृत्य भीष्मं विव्याध संयुगे। ५६२५
ततो दुःशासनं भूयः स्मयमान इवाब्रवीत्। अतिविद्धः शितैर्वाणैर्भृशं गाण्डीवधन्वना।
वज्राशनिसमस्पर्शा अर्ज्जुनेन शरा युधि। मुक्ताः सर्व्वेऽव्यवच्छिन्ना नेमे बाणाः शिखण्डिनः।
निकृन्तमाना मर्म्माणि दृढावरणभेदिनः। मुषला इव मे घ्नन्ति नेमे बाणाः शिखण्डिनः।
ब्रह्मदण्डसमस्पर्शा वज्रवेगदुरासदाः। मम प्राणानारुजन्ति नेमे बाणाः शिखण्डिनः।
नाशयन्तीव मे प्राणान् यमदूता इवाहिताः। गदापरिघसंस्पर्शा नेमे बाणाः शिखण्डिनः। ५६३०
भुजगा इव संक्रुद्धा लेलिहाना विषोल्बणाः। ममाविशन्ति मर्म्माणि नेमे बाणाः शिखण्डिनः।
अर्ज्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः। कृन्तन्ति मम गात्राणि माघमासे गवा इव।
सर्व्वे ह्यपि न मे दुःखं कुर्य्युरन्ये नराधिपाः। वीरं गाण्डीवधन्वानमृते जिष्णुं कपिध्वजं।
इति ब्रुवन् शान्तनवो दिधक्षुरिव पाण्डवान्। शक्तिं चिक्षेप पार्थाय ततो भीष्मः प्रतापवान्।
तामस्य विशिखैश्छित्त्वा त्रिधा त्रिभिरपातयत्। पश्यतां कुरुवीराणां सर्व्वेषां तव भारत। ५६३५
चर्म्म चादत्त गाङ्गेयो जातरूपपरिष्कृतं। खड्गं चान्यतरं प्रेप्सुर्मृत्योरग्रे जयाय वा।

तस्य तच्छतधा चर्म्म व्यधमत् सायकैस्तथा । रथादनवरूढस्य तदद्भुतमिवाभवत् ।
ततो युधिष्ठिरो राजा स्वान्यनीकान्यचोदयत् । अभिद्रवत गाङ्गेयं मा वोऽस्तु भयमण्वपि ।
अथ ते तोमरैः प्रासैर्बाणौघैश्च समन्ततः । पट्टिशैश्च सुनिस्त्रिंशैर्नाराचैश्च तथा शितैः ।
वत्सदन्तैश्च भल्लैश्च तमेकमभिदुद्रुवुः । सिंहनादस्ततो घोरः पाण्डवानामभूत्तदा । ५६४०
तथैव तव पुत्राश्च राजन् भीष्मजयैषिणः । तमेकमभ्यवर्त्तन्त सिंहनादांश्च नेदिरे ।
तत्रासीत्तुमुलं युद्धं तावकानां परैः सह । दशमेऽहनि राजेन्द्र भीष्मार्ज्जुनसमागमे ।
आसीत् गाङ्ग इवावर्त्तो मुहूर्त्तमुदधेरिव । सैन्यानां युध्यमानानां निघ्नतामितरेतरं ।
असौम्यरूपा पृथिवी शोणिताक्ताऽभवत्तदा । समञ्च विषमञ्चैव न प्राज्ञायत किञ्चन ।
योधानामयुतं हत्वा तस्मिन् स दशमेऽहनि । अतिष्ठदाहवे भीष्मो भिद्यमानेषु मर्म्मसु । ५६४५
ततः सेनामुखे तस्मिन् स्थितः पार्थो धनुर्द्धरः । मध्येन कुरुसैन्यानां द्रावयामास वाहिनीं ।
वयं श्वेतहयाद्भीताः कुन्तीपुत्राद्धनञ्जयात् । पीड्यमानाः शितैः शस्त्रैः प्राद्रवाम रणे तदा ।
सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः । अभीषाहाः शूरसेनाः शिवयोऽथ वसातयः ।
शाल्वाः शयास्त्रिगर्त्ताश्च अम्बष्ठाः केकयैः सह । सर्व्व एते महात्मानः शरार्त्ता व्रणपीडिताः ।
सङ्ग्रामे नाजहुर्भीष्मं युध्यमानं किरीटिना । ततस्तमेकं बहवः परिवार्य्य समन्ततः । ५६५०
परिभूय कुरून् सर्व्वान् शरवर्षैरवाकिरन् । निपातयत गृह्णीत युध्यध्वं विनिकृन्तत ।
इत्यासीत् तुमुलः शब्दो राजन् भीष्मरथं प्रति । निहत्य समरे राजन् शतशोऽथ सहस्रशः ।
न तस्यासीदनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरं । एवम्भूतस्तव पिता शरैर्विशकलीकृतः ।
शिताग्रैः फाल्गुनेनाजौ प्राक्शिराः प्रापतद्रथात् । किञ्चिच्छेषे दिनकरे पुत्राणां तव पश्यतां ।
हाहेति दिवि देवानां पार्थिवानाञ्च भारत । पतमाने रथाद्भीष्मे बभूव सुमहास्वनः । ५६५५
सम्पतन्तमभिप्रेक्ष्य महात्मानं पितामहं । सह भीष्मेण सर्व्वेषां प्रापतन् हृदयानि नः ।
स पपात महाबाहुर्वसुधां समकम्पयन् । इन्द्रध्वज इवोत्सृष्टः केतुः सर्व्वधनुष्मतां ।
धरणीं न स पस्पर्श शरसङ्घैः समाचितः । शरतल्पे महेष्वासं शयानं पुरुषर्षभं ।
रथात् प्रपतितं चैनं दिव्यो भावः समाविशत् । अभ्यवर्षच्च पर्ज्जन्यः प्राकम्पत च मेदिनी ।
पतन् स ददृशे चापि दक्षिणेन दिवाकरं । संज्ञाञ्चोपालभद्वीरः कालं सञ्चिन्त्य भारत । ५६६०
अन्तरीक्षे च शुश्राव दिव्या वाचः समन्ततः । कथं महात्मा गाङ्गेयः सर्व्वशस्त्रभृतां वरः ।
कालं कर्त्ता नरव्याघ्रः सम्प्राप्ते दक्षिणायने । स्थितोऽस्मीति च गाङ्गेयस्तच्छ्रुत्वा वाक्यमब्रवीत् ।
धारयामास च प्राणान् पतितोऽपि महीतले । उत्तरायणमन्विच्छन् भीष्मः कुरुपितामहः ।
तस्य तन्मतमाज्ञाय गङ्गा हिमवतः सुता । महर्षीन् हंसरूपेण प्रेषयामास तत्र वै ।
ततः सम्पातिनो हंसास्त्वरिता मानसौकसः । आजग्मुः सहिता द्रष्टुं भीष्मं कुरुपितामहं । ५६६५
यत्र शेते नरश्रेष्ठः शरतल्पे पितामहः । ते तु भीष्मं समासाद्य मुनयो हंसरूपिणः ।

अपश्यन् भरतश्रेष्ठं भीष्मं कुरुकुलोद्वहम्। ते तं दृष्ट्वा महात्मानं कृत्वा चापि प्रदक्षिणम्।
गाङ्गेयं भरतश्रेष्ठं दक्षिणे चैव भास्करि। इतरेतरमामन्त्र्य प्राब्रुवन् मनीषिणः।
भीष्मः कथं महात्मा सन् संस्थाता दक्षिणायने। इत्युक्त्वा प्रस्थिता हंसा दक्षिणामभितो दिशम्।
संप्रेक्ष्य वै महाबुद्धिश्चिन्तयित्वा च भारत। तानब्रवीच्छान्तनवो नाहं गन्ता कथञ्चन। ५६००
दक्षिणावर्त्त आदित्ये एतन्मे मनसि स्थितम्। गमिष्यामि स्वकं स्थानमासीद्यन्मे पुरातनम्।
उदगायन आदित्ये हंसाः सत्यं ब्रवीमि वः। धारयिष्याम्यहं प्राणान् उत्तरायणकाङ्क्षया।
ऐश्वर्य्यभूतः प्राणानामुत्सर्गे हि यतो मम। तस्मात् प्राणान् धारयिष्ये मुमूर्षुरुदगायने।
यश्च दत्तो वरो मह्यं पित्रा तेन महात्मना। छन्दतो मृत्युरित्येवं तस्य चास्तु वरस्तथा।
धारयिष्ये ततः प्राणानुत्सर्गे नियते सति। इत्युक्त्वा तांस्तदा हंसान् स शेते शरतल्पगः। ५६०५
एवं कुरूणां पतिते शृङ्गे भीष्मे महौजसि। पाण्डवाः सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे।
तस्मिन् हते महासत्त्वे भरतानां पितामहे। न किञ्चित् प्रत्यपद्यन्त पुत्रास्ते भरतर्षभ।
संमोहश्चैव तुमुलः कुरूणामभवत्तदा। कृपदुर्य्योधनमुखा निःश्वस्य रुरुदुस्ततः।
विषादाच्च चिरं कालमतिष्ठन् विगतेन्द्रियाः। दध्युश्चैव महाराज न युद्धे दधिरे मनः।
ऊरुग्राहगृहीताश्च नाभ्यधावन्त पाण्डवान्। अवध्ये शान्तनोः पुत्रे हते भीष्मे महौजसि। ५६१०
अभावः सहसा राजन् कुरुराजस्य तर्कितः। हतप्रवीरास्तु वयं निकृत्ताश्च शितैः शरैः।
कर्त्तव्यं नाभिजानीमो निर्ज्जिताः सव्यसाचिना। पाण्डवास्तु जयं लब्ध्वा परत्र च परां गतिम्।
सर्व्वे दध्मुर्महाशङ्खान् शूराः परिघबाहवः। सोमकाश्च सपाञ्चालाः प्राहृष्यन्त जनेश्वर।
ततस्तूर्य्यसहस्रेषु नदत्सु सुमहाबलः। आस्फोटयामास भृशं भीमसेनो ननाद च।
सेनयोरुभयोश्चापि गाङ्गेये निहते विभौ। संन्यस्य वीराः शस्त्राणि प्राध्यायन्त समन्ततः। ५६१५
प्राक्रोशन् प्राद्रवंश्चान्ये जग्मुर्मोहं तथा परे। क्षत्रं चान्येऽभ्यनिन्दन्त भीष्मं चान्येऽभ्यपूजयन्।
ऋषयः पितरश्चैव प्रशशंसुर्महाव्रतम्। भरतानाञ्च ये पूर्व्वे ते चैनं प्रशशंसिरे।
महोपनिषदश्चैव योगमास्थाय वीर्य्यवान्। जपन् शान्तनवो धीमान् कालाकाङ्क्षी स्थितोऽभवत्।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मनिपातने विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥
॥ धृतराष्ट्र उवाच ॥ कथमासंस्तदा योधा हीना भीष्मेण सञ्जय। बलिना देवकल्पेन गुर्व्वर्थे ब्रह्मचारिणा।
तदैव निहतान् मन्ये कुरूनन्यांश्च पाण्डवैः। न प्राहरद्यदा भीष्मो घृणित्वाद् द्रुपदात्मजम्। ५६२०
ततो दुःखतरं मन्ये किमन्यत् प्रभविष्यति। यदद्य पितरं श्रुत्वा निहतं मम दुर्म्मतिः।
अश्मसारमयं नूनं हृदयं मम सञ्जय। श्रुत्वा विनिहतं भीष्मं शतधा यन्न दीर्य्यते।
यदत्र निहतेनाजौ भीष्मेण जयमिच्छता। चेष्टितं कुरुसिंहेन तन्मे कथय सुव्रत।
पुनः पुनर्न मृष्यामि हतं देवव्रतं रणे। न हतो जामदग्न्येन दिव्यैरस्त्रैः पुरा।
स हतो द्रौपदेयेन पाञ्चाल्येन शिखण्डिना। ५६२५

॥ सञ्जय उवाच ॥ सायाह्ने निहतो भूमौ धार्त्तराष्ट्रान् विषादयन्। पाञ्चालानां ददौ हर्षं भीष्मः कुरुपितामहः।
स शेते शरतल्पस्थो मेदिनीमस्पृशंस्तथा। भीष्मे रथात् प्रपतिते प्रच्युते धरणीतले।
हाहेति तुमुलः शब्दो भूतानां समपद्यत। सीमावृक्षे निपतिते कुरूणां समितिक्षये।
सेनयोरुभयोराजन् क्षत्रियान् भयमाविशत्। भीष्मं शान्तनवं दृष्ट्वा विशीर्णकवचध्वजं।
कुरवः पर्य्यवर्त्तन्त पाण्डवाश्च विशाम्पते। खं तमः संवृतमभूदासीद्भानुर्गतप्रभः। ५०००
ररास पृथिवी चैव भीष्मे शान्तनवे हते। अयं ब्रह्मविदां श्रेष्ठो अयं ब्रह्मविदां गतिः।
इत्यभाषन्त भूतानि शयानं पुरुषर्षभं। अयं पितरमाज्ञाय कामार्त्तं शान्तनुं पुरा।
ऊर्द्ध्वरेतसमात्मानं चकार पुरुषर्षभः। इति स्म शरतल्पस्थं भारतानां महत्तमं।
ऋषयस्त्वभ्यभाषन्त सहिताः सिद्धचारणैः। हते शान्तनवे भीष्मे भरतानां पितामहे।
न किञ्चित् प्रत्यपद्यन्त पुत्रास्तव हि मारिष। विवर्णवदनाश्चासन् हतश्रीकाश्च भारत। ५००५
अतिष्ठन् व्रीडिताश्चैव ह्रिया युक्ता ह्यधोमुखाः। पाण्डवाश्च जयं लब्ध्वा संग्रामशिरसि स्थिताः।
सर्व्वे दध्मुर्महाशङ्खान् हेमजालपरिष्कृतान्। हर्षात् तूर्य्यसहस्रेषु वाद्यमानेषु चानघ।
अपश्याम महाराज भीमसेनं महाबलं। विक्रीडमानं कौन्तेयं हर्षेण महता युतं।
निहत्य तरसा शत्रुं महाबलसमन्वितं। संमोहश्चापि तुमुलः कुरूणामभवत्तदा।
कर्णदुर्य्योधनौ चापि निःश्वसेतां मुहुर्मुहुः। तथा निपतिते भीष्मे कौरवाणां पितामहे। ५०१०
हाहाभूतमभूत् सर्व्वं निर्म्मर्य्यादमवर्त्तत। दृष्ट्वा च पतितं भीष्मं पुत्रो दुःशासनस्तव।
उत्तमं जवमास्थाय द्रोणानीकमुपाद्रवत्। भ्रात्रा प्रस्थापितो वीरः स्वेनानीकेन दंशितः।
प्रययौ पुरुषव्याघ्रः स्वसैन्यञ्च विषादयन्। तमायान्तमभिप्रेक्ष्य कुरवः पर्य्यवारयन्।
दुःशासनं महाराज किमयं वक्ष्यतीति च। ततो द्रोणाय निहतं भीष्ममाचष्ट कौरवः।
द्रोणस्तदाप्रियं श्रुत्वा सहसा न्यपतद्रथात्। स संज्ञामुपलभ्याशु भारद्वाजः प्रतापवान्। ५०१५
निवारयामास तदा स्वान्यनीकानि मारिष। विनिवृत्तान् कुरून् दृष्ट्वा पाण्डवास्तु स्वसैनिकान्।
दूतैः शीघ्राश्वसंयुक्तैः समन्तात् पर्य्यवारयन्। निवृत्तेषु च सैन्येषु पारम्पर्य्येण सर्व्वशः।
निर्मुक्तकवचाः सर्व्वे भीष्ममीयुर्नराधिपाः। व्युपरम्य ततो युद्धाद्योधाः शतसहस्रशः।
उपतस्थुर्महात्मानं प्रजापतिमिवामराः। ते तु भीष्मं समासाद्य शयानं भरतर्षभं।
अभिवाद्यावतिष्ठन्त पाण्डवाः कुरुभिः सह। अथ पाण्डून् कुरूंश्चैव प्रणिपत्याग्रतः स्थितान्। ५०२०
अभ्यभाषत धर्म्मात्मा भीष्मः शान्तनवस्तदा। स्वागतं वो महाभागाः स्वागतं वो महारथाः।
तुष्यामि दर्शनाच्चाहं युष्माकममरोपमाः। अभिनन्द्याथ तानेवं शिरसा लम्बताऽब्रवीत्।
शिरो मे लम्बतेऽत्यर्थमुपधानं प्रदीयतां। ततो नृपाः समाजह्रुस्तनूनि च मृदूनि च।
उपधानानि मुख्यानि नैच्छत्तानि पितामहः। अथाब्रवीन्नरव्याघ्रः प्रहसन्निव तान् नृपान्।
नैतानि वीरशय्यासु युक्तरूपाणि पार्थिवाः। ततो वीक्ष्य नरश्रेष्ठमभ्यभाषत पाण्डवं। ५०२५

धनञ्जयं दीर्घबाहुं सर्व्वलोकमहारथं। धनञ्जय महाबाहो शिरो मे तात लम्बते।
दीयतामुपधानं वै यद्युक्तमिह मन्यसे।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि दशमदिवसावहारे एकविंशत्यधिकशततमोऽध्यायः॥ १२१॥
॥ सञ्जय उवाच॥ समारोप्य महच्चापमभिवाद्य पितामहं। नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत्।
आज्ञापय कुरुश्रेष्ठ सर्व्वशस्त्रभृतां वर। प्रेष्योऽहं तव दुर्द्धर्ष क्रियतां किं पितामह।
तमब्रवीच्छान्तनवः शिरो मे तात लम्बते। उपधानं कुरुश्रेष्ठ फाल्गुनोपनयस्व मे। ॥५७२०
शयनस्यानुरूपं वै शीघ्रं वीर प्रयच्छ मे। त्वं हि पार्थ समर्थो वै श्रेष्ठः सर्व्वधनुष्मतां।
क्षत्त्रधर्म्मस्य वेत्ता च बुद्धिसत्त्वगुणान्वितः। फाल्गुनोऽपि तथेत्युक्त्वा व्यवसायमरोचयत्।
प्रगृह्यामन्त्र्य गाण्डीवं शरान् सन्नतपर्व्वणः। अनुमान्य महात्मानं भरतानां महारथं।
त्रिभिस्तीक्ष्णैर्महावेगैरन्वगृह्णाच्छिरः शरैः। अभिप्राये तु विदिते धर्म्मात्मा सव्यसाचिना।
अतुष्यद्भरतश्रेष्ठो भीष्मो दृष्ट्वाथ तत्त्ववित्। उपधानेन दत्तेन प्रत्यनन्दद्धनञ्जयं। ॥५७२५
प्राह सर्व्वान् समुद्वीक्ष्य भरतान् भारतं प्रति। कुन्तीपुत्रं युधां श्रेष्ठं सुहृदां प्रीतिवर्द्धनं।
शयनस्यानुरूपं मे पाण्डवोपहृतं त्वया। यद्यन्यथा प्रपद्येथाः शपेयं त्वामहं रुषा।
एवमेव महाबाहो धर्म्मेषु परितिष्ठता। स्वप्तव्यं क्षत्त्रियेणाजौ शरतल्पगतेन वै।
एवमुक्त्वा तु बीभत्सुं सर्व्वांस्तानब्रवीद्वचः। राज्ञश्च राजपुत्रांश्च सर्व्वांस्तानभिसंस्थितान्।
पश्यध्वमुपधानं मे पाण्डवेनाभिसन्धितं। शेष्येऽहमस्यां शय्यायां यावदावर्त्तनं रवेः। ॥५७३०
ये तदा मां गमिष्यन्ति ते च द्रक्ष्यन्ति मां नृपाः। दिशं वैश्रवणाक्रान्तां यदा गन्ता दिवाकरः।
नूनं सप्ताश्वयुक्तेन रथेनोत्तमतेजसा। विमोक्ष्येऽहं तदा प्राणान् सुहृदः सुप्रियानपि।
परिखा खन्यतामत्र ममावसदने नृपाः। उपासिष्ये विवस्वन्तमेवं शरशताचितः।
उपारमध्वं सङ्ग्रामात् वैरमुत्सृज्य पार्थिवाः।
॥ सञ्जय उवाच॥ उपातिष्ठन्नथो वैद्याः शल्योद्धरणकोविदाः। सर्व्वोपकरणैर्युक्ताः कुशलैः साधु शिक्षिताः। ॥५७३५
तान् दृष्ट्वा जाह्नवीपुत्रः प्रोवाच तनयं तव। धनं दत्त्वा विसृज्यन्तां पूजयित्वा चिकित्सकाः।
एवं गते मयेदानीं वैद्यैः कार्य्यमिहास्ति किं। क्षत्त्रधर्म्मे प्रशस्तां हि प्राप्तोऽस्मि परमां गतिं।
नैष धर्म्मो महीपालाः शरतल्पगतस्य मे। एभिरेव शरैर्दग्धव्योऽस्मि नराधिपाः।
तच्छ्रुत्वा वचनं तस्य पुत्रो दुर्य्योधनस्तव। वैद्यान् विसर्ज्जयामास पूजयित्वा यथार्हतः।
ततस्ते विस्मयं जग्मुर्नानाजनपदेश्वराः। स्थितिं धर्म्मपरां दृष्ट्वा भीष्मस्यामिततेजसः। ॥५७४०
उपधानं ततो दत्त्वा पितुस्ते मनुजेश्वराः। सहिताः पाण्डवाः सर्व्वे कुरवश्च महारथाः।
उपगम्य महात्मानं शयानं शयने शुभे। तेऽभिवाद्य महात्मानं कृत्वा च त्रिःप्रदक्षिणं।
विधाय रक्षां भीष्मस्य सर्व्व एव समन्ततः। वीराः स्वशिबिराण्येव ध्यायन्तः परमातुराः।
निवेशायाभ्युपागच्छन् सायाह्ने रुधिरोक्षिताः। निविष्टान् पाण्डवांश्चैव प्रीयमाणान् महारथान्।

भीष्मस्य पतने हृष्टानुपगम्य महाबलः। उवाच माधवः काले धर्म्मपुत्रं युधिष्ठिरं। ५७५५
दिष्ट्या जयसि कौरव्य दिष्ट्या भीष्मो निपातितः। अवध्यो मानुषैरेष सत्यसन्धो महारथः।
अथ वा दैवतैः सार्द्धं सर्व्वशस्त्रस्य पारगः। त्वां तु चक्षुर्हणं प्राप्य दग्धो घोरेण चक्षुषा।
एवमुक्तो धर्म्मराजः प्रत्युवाच जनार्द्दनं। तव प्रसादाद्विजयः क्रोधात्तव पराजयः।
त्वं हि नः शरणं कृष्ण भक्तानामभयङ्करः। अनाश्चर्य्यो जयस्तेषां येषां त्वमसि केशव।
रक्षिता समरे नित्यं नित्यञ्चापि हिते रतः। सर्व्वथा त्वां समासाद्य नाश्चर्य्यमिति मे मतिः। ५७६०
एवमुक्तः प्रत्युवाच स्मयमानो जनार्द्दनः। तवैवैतद्युक्तरूपं वचनं पार्थिवोत्तम।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मोपधानदाने द्वाविंशत्यधिकशततोऽध्यायः॥ १२२ ॥
॥ सञ्जय उवाच ॥ व्युष्टायान्तु महाराज शर्व्वर्य्यां सर्व्वपार्थिवाः। पाण्डवा धार्त्तराष्ट्राश्च उपातिष्ठन् पितामहं।
तं वीरशयने वीरं शयानं कुरुसत्तमं। अभिवाद्योपतस्थुर्वै क्षत्रियाः क्षत्रियर्षभं।
कन्याश्चन्दनचूर्णैश्च लाजैर्म्माल्यैश्च सर्व्वशः। अवाकिरन् शान्तनवं तत्र गत्वा सहस्रशः।
स्त्रियो वृद्धास्तथा बालाः प्रेक्षकाश्च पृथग्जनाः। समभ्ययुः शान्तनवं भूतानीव तमोनुदं। ५७६५
तूर्य्याणि गणिका वारास्तथैव नटनर्त्तकाः। शिल्पिनश्च तथा जग्मुः कुरुवृद्धं पितामहं।
उपारम्य च युद्धेभ्यः सन्नाहान् विप्रमुच्य ते। आयुधानि च निःक्षिप्य सहिताः कुरुपाण्डवाः।
अन्वासन्त दुराधर्षं देवव्रतमरिन्दमं। अन्योऽन्यं प्रीतिमन्तस्ते यथापूर्व्वं यथावयः।
सा पार्थिवशताकीर्णा समितिर्भीष्मशोभिता। शुशुभे भारती दीप्ता दिवीवादित्यमण्डलं।
विबभौ च नृपाणां सा गङ्गासुतमुपासतां। देवानामिव देवेशं पितामहमुपासतां। ५७७०
भीष्मस्तु वेदनां धैर्य्यान्निगृह्य भरतर्षभ। अभितप्तः शरैश्चैव निःश्वसन्नुरगो यथा।
शराभितप्तकायोऽपि शस्त्रसन्तापमूर्च्छितः। पानीयमिति संप्रेक्ष्य राज्ञस्तान् प्रत्यभाषत।
ततस्ते क्षत्रिया राजन् समाजह्रुः समन्ततः। भक्ष्यानुच्चावचान् राजन् वारिकुम्भांश्च शीतलान्।
उपानीतन्तु पानीयं दृष्ट्वा शान्तनवोऽब्रवीत्। नाद्य तात मया शक्या भोगाः केचन मानुषाः।
अपक्रान्तो मनुष्येभ्यः शरशय्यागतोऽस्म्यहं। प्रतीक्षमाणस्तिष्ठामि निवृत्तिं शशिसूर्य्ययोः। ५७७५
एवमुक्त्वा शान्तनवो निन्दन् वाक्येन पार्थिवान्। अर्ज्जुनं द्रष्टुमिच्छामीत्यभ्यभाषत भारत।
अथोपेत्य महाबाहुरभिवाद्य पितामहं। अतिष्ठत् प्राञ्जलिः प्रह्वः किं करोमीति चाब्रवीत्।
तं दृष्ट्वा पाण्डवं राजन्नभिवाद्याग्रतः स्थितं। अभ्यभाषत धर्म्मात्मा भीष्मः प्रीतो धनञ्जयं।
दह्यतीव शरीरं मे संवृतस्य तवेषुभिः। मर्म्माणि परिदूयन्ते मुखञ्च परिशुष्यति।
वेदनार्त्तशरीरस्य प्रयच्छापो ममार्ज्जुन। त्वं हि शक्तो महेष्वास दातुमापो यथाविधि। ५७८०
अर्ज्जुनस्तु तथेत्युक्त्वा रथमारुह्य वीर्य्यवान्। अधिज्यं बलवत् कृत्वा गाण्डीवं व्याक्षिपद्धनुः।
तस्य ज्यातलनिर्घोषं विस्फूर्ज्जितमिवाशनेः। वित्रेसुः सर्व्वसैन्यानि सर्व्वे श्रुत्वा च पार्थिवाः।
ततः प्रदक्षिणीकृत्य रथेन रथिनां वरः। शयानं भरतश्रेष्ठं सर्व्वशस्त्रभृतां वरं।

सन्धाय च शरं दीप्तमभिमन्त्र्य स पाण्डवः। पार्ज्जन्यास्त्रेण संयोज्य सर्व्वलोकस्य पश्यतः।
अविध्यत् पृथिवीं पार्थः पार्श्वे भीष्मस्य दक्षिणे। उत्पपात ततो धारा वारिणो विमला शुभा। ५०८५
शीतस्यामृतकल्पस्य दिव्यगन्धरसस्य च। अतर्पयत्ततः पार्थः शीतया जलधारया।
भीष्मं कुरूणामृषभं दिव्यकर्म्मपराक्रमं। कर्मणा तेन पार्थस्य शक्रस्येव विकुर्व्वतः।
विस्मयं परमं जग्मुस्ततस्ते वसुधाधिपाः। तत्कर्म्म प्रेक्ष्य बीभत्सोरतिमानुषविक्रमं।
सम्प्रावेपन्त कुरवो गावः शीतार्द्दिता इव। विस्मयाच्चोत्तरीयाणि व्याविध्यन् सर्व्वतो नृपाः।
शङ्खदुन्दुभिनिर्घोषः सर्व्वतस्तुमुलोऽभवत्। तृप्तः शान्तनवश्चापि राजन् बीभत्सुमब्रवीत्। ५०९०
सर्व्वपार्थिववीराणां सन्निधौ पूजयन्निव। नैतच्चित्रं महाबाहो त्वयि कौरवनन्दन।
कथितो नारदेनासि पूर्व्वर्षिरमितद्युते। वासुदेवसहायस्त्वं महत् कर्म्म करिष्यसि।
यन्नोत्सहति देवेन्द्रः सह देवैरपि ध्रुवं। विदुस्त्वां धन्विनं पार्थ सर्व्वक्षत्रस्य तद्विदः।
धनुर्द्धराणामेकस्त्वं पृथिव्यां प्रवरो नृषु। मनुष्या जगति श्रेष्ठाः पक्षिणां पतगेश्वरः।
सरितां सागरः श्रेष्ठो गौर्वरिष्ठा चतुष्पदां। आदित्यस्तेजसां श्रेष्ठो गिरीणां हिमवान् वरः। ५०९५
जातीनां ब्राह्मणः श्रेष्ठः श्रेष्ठस्त्वमसि धन्विनां।
नैव श्रुतं धार्त्तराष्ट्रेण वाक्यं मयोच्यमानं विदुरेण चैव। द्रोणेन रामेण जनार्द्दनेन मुहुर्म्मुहुः सञ्जयेनापि चोक्तं।
परीतबुद्धिर्हि विसंज्ञकल्पो दुर्य्योधनो न च तत् श्रद्दधाति। स शेष्यते वै निहतश्चिराय शास्त्रातिगो भीमबलाभिभूतः।
एतच्छ्रुत्वा तद्वचः कौरवेन्द्रो दुर्य्योधनो दीनमना बभूव। तमब्रवीच्छान्तनवोऽभिवीक्ष्य निबोध राजन्भव वीतमन्युः।
दृष्टं दुर्य्योधनेदन्ते यथा पार्थेन धीमता। जलधारास्य जनिताः शीतस्यामृतगन्धिनः। ५१००
एतस्य कर्त्ता लोकेऽस्मिन् नान्यः कश्चन विद्यते। आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवं।
ऐन्द्रं पाशुपतं चैव पारमेष्ठ्यं प्रजापतेः। धातुस्त्वष्टुश्च सवितुर्व्वैवस्वतमथापि वा।
सर्व्वस्मिन्मानुषे लोके वेत्त्येको हि धनञ्जयः। कृष्णो वा देवकीपुत्त्रो नान्यो वेदेह कश्चन।
अशक्यः पाण्डवस्तात युद्धे जेतुं सुरासुरैः। अमानुषाणि कर्म्माणि यस्यैतानि महात्मनः।
तेन सत्यवता सङ्ख्ये शूरेणाहवशोभिना। कृतिना समरे राजन् सन्धिर्भवतु माचिरं। ५१०५
यावत् कृष्णो महाबाहुः स्वाधीनः कुरुसत्तम। तावत् पार्थेन शूरेण सन्धिस्ते तात युज्यतां।
यावत्तिष्ठन्ति समरे हतशेषाः सहोदराः। नृपाश्च बहवो राजंस्तावत् सन्धिः प्रयुज्यतां।
न निर्द्दहति ते यावत् क्रोधदीप्तेक्षणश्चमूं। युधिष्ठिरो रणे तावत् सन्धिस्ते तात युज्यतां।
नकुलः सहदेवश्च भीमसेनश्च पाण्डवः। यावच्चमूं महाराज नाशयन्ति न सर्व्वशः।
तावत्ते पाण्डवैर्व्वीरैः सौहार्द्दं मम रोचते। युद्धं मदन्तमेवास्तु तात संशाम्य पाण्डवैः। ५११०
एतत्ते रोचतां वाक्यं यदुक्तोऽसि मयाऽनघ। एतत् क्षेममहं मन्ये तव चैव कुलस्य च।
त्यक्त्वा मन्युमुपशाम्यस्व पार्थैः पर्य्याप्तमेतद्यत् कृतं फाल्गुनेन। भीष्मस्यान्तादस्तु वः सौहृदञ्च जीवन्तु शेषाः साधु राजन् प्रसीद।

राज्यस्यार्द्धं दीयतां पाण्डवानामिन्द्रप्रस्थं धर्म्मराजोऽभियातु । मा मित्रध्रुक् पार्थिवानां जघन्यः पापां कीर्त्तिं प्राप्स्यसे कौरवेन्द्र ।

ममावसानाच्छान्तिरस्तु प्रजानां सङ्गच्छन्तां पार्थिवाः प्रीतिमन्तः । पिता पुत्रं मातुलं भागिनेयो भ्राता चैव भ्रातरं प्रैतु राजन् ।

न चेदेवं प्राप्तकालं वचो मे मोहाविष्टः प्रतिपत्स्यस्यबुद्ध्या । तप्स्यस्यन्ते एतदन्ताः स्थ सर्व्वे सत्यामेतां भारतीमीरयामि । ५८१५

एतद्वाक्यं सौहृदादापगेयो मध्ये राज्ञां भारतं श्रावयित्वा । तूष्णीमासीच्छल्यसन्तप्तमर्म्मा योज्यात्मानं वेदनां सन्नियम्य ।

॥ सञ्जय उवाच ॥ धर्म्मार्थसहितं वाक्यं श्रुत्वा हितमनामयं । नारोचयत पुत्रस्ते मुमूर्षुरिव भेषजं ।

इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मशिक्षाकथने त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

॥ सञ्जय उवाच ॥ ततस्ते पार्थिवाः सर्व्वे जग्मुः स्वानालयान् पुनः । तूष्णीं भूते महाराज भीष्मे शान्तनुनन्दने ।

श्रुत्वा तु निहतं भीष्मं राधेयः पुरुषर्षभः । ईषदागतसन्त्रासस्त्वरयोपजगाम ह ।

स ददर्श महात्मानं शरतल्पगतं तदा । जन्मशय्यागतं वीरं कार्त्तिकेयमिव प्रभुं । ५८२०

निमीलिताक्षं तं वीरं साश्रुकण्ठस्तदा वृषः । अभ्येत्य पादयोस्तस्य निपपात महाद्युतिः ।

राधेयोऽहं कुरुश्रेष्ठ नित्यमक्षिगतस्तव । द्वेष्योऽहं तव सर्व्वत्र इति चैनमुवाच ह ।

तच्छ्रुत्वा कुरुवृद्धोऽपि बलात् संवृतलोचनः । शनैरुद्वीक्ष्य सस्नेहमिदं वचनमब्रवीत् ।

रहितं धिष्ण्यमालोक्य समुत्सार्य्य च रक्षिणः । पितेव पुत्रं गाङ्गेयः परिरभ्यैकपाणिना ।

एह्येहि मे प्रतीप त्वं स्पर्द्धसे त्वं मया सह । यदि मां नाधिगच्छेथा न ते श्रेयो ध्रुवं भवेत् । ५८२५

कौन्तेयस्त्वं न राधेयो न तवाधिरथः पिता । श्रुतस्त्वं हि महाबाहो नरतो नारदान्मया ।

कृष्णद्वैपायनाच्चापि तच्च सत्यं न संशयः । न च द्वेषोऽस्ति मे तात त्वयि सत्यं ब्रवीमि ते ।

तेजोवधनिमित्तन्तु परुषं त्वां समब्रुवं । अकस्मात् पाण्डवान् सर्व्वानवक्षिपसि सुव्रत ।

जातोऽसि धर्म्मलोपेन ततस्ते बुद्धिरीदृशी । नीचाश्रयान्मत्सरेण द्वेषिणी गुणिनामपि ।

तेनासि बहुशो रूक्षं श्रावितः कुरुसंसदि । जानामि समरे वीर्य्यं शत्रुभिर्दुःसहं भुवि । ५८३०

ब्रह्मण्यता च शौर्य्यञ्च दाने च परमां स्थितिं । न त्वया सदृशः कश्चित् पुरुषेष्वमरोपम ।

कुलभेदभयाच्चाहं सदा परुषमुक्तवान् । इष्वस्त्रे चास्त्रसन्धाने लाघवेऽस्त्रबले तथा ।

सदृशः फाल्गुनेनासि कृष्णेन च महात्मना । कर्ण काशिपुरं गत्वा त्वयैकेन धनुष्मता ।

कन्यार्थे कुरुराजस्य राजानो मर्द्दिता युधि । तथा च बलवान् राजा जरासन्धो दुरासदः ।

समरे समरश्लाघी न त्वया सदृशोऽभवत् । ब्रह्मण्यः सत्ययोधी च तेजसा च बलेन च । ५८३५

देवगर्भसमः सङ्ख्ये मनुष्यैरधिको युधि । व्यपनीतोऽद्य मन्युर्मे यस्त्वां प्रति पुराकृतः ।

दैवं पुरुषकारेण न शक्यमतिवर्त्तितुं । सोदर्य्याः पाण्डवा वीरा भ्रातरस्तेऽरिसूदन ।

सङ्गच्छ तैर्महाबाहो मम चेदिच्छसि प्रियं । मया भवतु निर्वृत्तं वैरमादित्यनन्दन ।

पृथिव्यां सर्व्वराजानो भवन्त्वद्य निरामयाः ।

॥ कर्ण उवाच ॥ जानाम्येवं महाबाहो सर्व्वमेतन्न संशयः। यथा वदसि मे भीष्म कौन्तेयोऽहं न सूतजः। ५८४०
अवकीर्णस्त्वहं कुन्त्या सूतेन च विवर्द्धितः। भुक्त्वा दुर्य्योधनैश्वर्य्यं न मिथ्या कर्त्तुमुत्सहे।
वसुदेवसुतो यद्वत् पाण्डवार्थे दृढव्रतः। वसु चैव शरीरञ्च पुत्त्रदारास्तथा यशः।
सर्व्वं दुर्य्योधनस्यार्थे त्यक्तं मे भूरिदक्षिण। मा चैतद्व्याधिमरणं चत्रं स्यादिति कौरव।
कोपिताः पाण्डवा नित्यं समाश्रित्य सुयोधनं। अवश्यभावी ह्यर्थोऽयं यो न शक्यो निवारितुं।
दैवं पुरुषकारेण को निवर्त्तितुमुत्सहेत्। पृथिवीक्षयशंसीनि निमित्तानि पितामह। ५८४५
भवद्भिरुपलब्धानि कथितानि च संसदि। पाण्डवा वासुदेवश्च विदिता मम सर्व्वशः।
अजेयाः पुरुषैरन्यैरिति तांश्चोत्सहामहे। विजयिष्ये रणे पाण्डूनिति मे निश्चितं मनः।
न च शक्यमवसृष्टुं वैरमेतत् सुदारुणं। धनञ्जयेन योत्स्येऽहं स्वधर्मप्रीतमानसः।
अनुजानीष्व मां तात युद्धाय कृतनिश्चयं। अनुज्ञातस्त्वया वीर युध्येयमिति मे मतिः।
दुरुक्तं विप्रतीपं वा रभसाच्चापलात्तथा। यन्मयेह कृतं किञ्चित् तन्मे त्वं क्षन्तुमर्हसि। ५८५०
॥ भीष्म उवाच ॥ न चेच्छक्यमवसृष्टुं वैरमेतत् सुदारुणं। अनुजानामि कर्ण त्वं युध्यस्व स्वर्गकाम्यया।
निर्मन्युर्गतसंरम्भः कुरु कर्म नृपस्य हि। यथाशक्ति यथोत्साहं सतां वृत्तेषु वृत्तवान्।
अहं त्वामनुजानामि यदिच्छसि तदाप्नुहि। क्षत्त्रधर्मजितान् लोकानवाप्स्यसि धनञ्जयात्।
युध्यस्व निरहङ्कारो बलवीर्य्यव्यपाश्रयः। धर्म्याद्धि युद्धात् श्रेयोऽन्यत् क्षत्त्रियस्य न विद्यते।
प्रशमे हि कृतो यत्नः सुमहान् सुचिरं मया। न चैव शकितः कर्त्तुं कर्ण सत्यं ब्रवीमि ते। ५८५५
॥ सञ्जय उवाच ॥ इत्युक्तवति गाङ्गेये अभिवाद्य प्रसाद्य च। राधेयो रथमारुह्य प्रायात्तव सुतं प्रति।
इति श्रीमहाभारते भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मकर्णसमागमे चतुर्विंशत्यधिकशततोऽध्यायः॥ १२४ ॥
समाप्तञ्चेदं भीष्मपर्व्व ॥

# श्रीमहाभारतं

## ॥ अथ द्रोणपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्।

॥ जनमेजय उवाच ॥ तमप्रतिमसत्त्वौजोबलवीर्य्यपराक्रमं। हतं देवव्रतं श्रुत्वा पाञ्चाल्येन शिखण्डिना।

धृतराष्ट्रस्तदा राजा वाष्पव्याकुललोचनः। किमचेष्टत विप्रर्षे हते पितरि वीर्य्यवान्।

तस्य पुत्रो हि भगवन् भीष्मद्रोणमुखैरथैः। पराजित्य महेष्वासान् पाण्डवान् राज्यमिच्छति।

तस्मिन् हते स भगवन् केतौ सर्व्वधनुष्मतां। यदचेष्टत कौरव्यस्तन्मे ब्रूहि सुयोधन। ५

॥ वैशम्पायन उवाच ॥ निहतं पितरं श्रुत्वा धृतराष्ट्रो जनाधिपः। लेभे न शान्तिं कौरव्यश्चिन्ताशोकपरायणः।

तस्य चिन्तयतो दुःखमनिशं कौरवस्य तत्। आजगाम विशुद्धात्मा पुनर्गावल्गणिस्तदा।

शिविरात् सञ्जयं प्राप्तं निशि नागाह्वयं पुरं। आम्बिकेयो महाराज धृतराष्ट्रोऽन्वपृच्छत।

श्रुत्वा भीष्मस्य निधनमप्रहृष्टमना भृशं। पुत्राणां जयमाकाङ्क्षन्विललापातुरो यथा।

॥ धृतराष्ट्र उवाच ॥ संशोच्य तु महात्मानं भीष्मं भीमपराक्रमं। किमकार्षुः परं तात कुरवः कालचोदिताः। १०

तस्मिंस्तु निहते शूरे दुराधर्षे महात्मनि। किन्नुस्वित् कुरवोऽकार्षुर्निमग्नाः शोकसागरे।

तदुदीर्णं परं सैन्यं त्रैलोक्यस्यापि सञ्जय। भयमुत्पादयेत्तीव्रं पाण्डवानां महात्मनां।

देवव्रते तु निहते कुरूणामृषभे तदा। यदकार्षुर्नृपतयस्तन्ममाचक्ष्व सञ्जय।

॥ सञ्जय उवाच ॥ शृणु राजन्नेकमना वचनं ब्रुवतो मम। यत्ते पुत्रास्तदाकार्षुर्हते देवव्रते मृधे। १५

निहते तु तदा भीष्मे राजन् सत्यपराक्रमे। तावकाः पाण्डवेयाश्च प्राध्यायन्त पृथक् पृथक्।

विस्मिताश्च प्रहृष्टाश्च क्षत्रधर्म्मं विशाम्पते। स्वधर्म्मं पद्यमानास्ते प्रणिपत्य महात्मने।

शयनं कल्पयामासुर्भीष्मायामिततेजसे। सोपधानं नरव्याघ्राः शरैः सन्नतपर्व्वभिः।

विधाय रक्षां भीष्माय समाभाष्य परस्परं। अनुमान्य च गाङ्गेयं कृत्वा चापि प्रदक्षिणं।

क्रोधसंरक्तनयनाः समवेक्ष्य परस्परं। पुनर्युद्धाय निर्ज्जग्मुः क्षत्रियाः कालचोदिताः।

ततस्तूर्य्यनिनादैश्च भेरीणां निनदेन च । तावकानामनीकानि परेयाश्चैव निर्ययुः । २०
व्यावृत्तेऽहनि राजेन्द्र पतिते जाह्नवीसुते । अमर्षवशमापन्नाः कालोपहतचेतसः ।
अनादृत्य वचः पथ्यं गाङ्गेयस्य महात्मनः । निर्ययुर्भरतश्रेष्ठाः शस्त्राण्यादाय सत्वराः ।
मोहात्तव सपुत्रस्य वधाच्छान्तनवस्य च । कौरवा मृत्युनाक्रान्ताः सहिताः सर्व्वराजभिः ।
अजावय इवागोपा वने श्वापदसङ्कुले । भृशमुद्विग्नमनसो हीना देवव्रतेन ते ।
पतिते भरतश्रेष्ठे बभूव कुरुवाहिनी । द्यौरिवापेतनक्षत्रा हीनं खमिव वायुना । २५
विपन्नसस्येव मही वाक् चैवासंस्कृता यथा । आसुरीव यथा सेना निगृहीते पुरा बलौ ।
विधवेव वरारोहा शुष्कतोयेव निम्नगा । वृकैरिव वने रुद्धा पृषती हतयूथपा ।
शरभाहतसिंहेव महती गिरिकन्दरा । भारती भरतश्रेष्ठ पतिते जाह्नवीसुते ।
विष्वग्वाताहता रुग्णा नौरिवासीन्महार्णवे । बलिभिः पाण्डवैर्वीरैर्लब्धलक्षैर्भृशार्दिता ।
सा तदासीद्भृशं सेना व्याकुलाश्वरथद्विपा । विषण्णभूयिष्ठनरा कृपणा ध्यायमानसा । ३०
तस्यां त्रस्ता नृपतयः सैनिकाश्च पृथग्विधाः । पाताल इव मज्जन्तो हीना देवव्रतेन ते ।
कर्णं हि कुरवोऽस्मार्षुः स हि देवव्रतोपमः । सर्व्वशस्त्रभृतां श्रेष्ठं रोचमानमिवातिथिं ।
बन्धुमापद्गतस्येव तमेवोपागमन्मनः । चुक्रुशुः कर्ण कर्णेति तत्र भारत पार्थिवाः ।
राधेयं हितमस्माकं सूतपुत्रं तनुत्यजं । स हि नायुध्यत तदा दशाहानि महायशाः ।
सामात्यबन्धुः कर्णो वै तमाह्वयत माचिरं । भीष्मेण हि महाबाहुः सर्व्वक्षत्रस्य पश्यतः । ३५
रथेषु गण्यमानेषु बलविक्रमशालिषु । सङ्ख्यातोऽर्द्धरथः कर्णो द्विगुणः सन्नरर्षभः ।
रथातिरथसङ्ख्यायां योऽग्रणीः शूरसम्मतः । पितृवित्ताम्बुदेवेशानपि यो योद्धुमुत्सहेत् ।
स तु तेनैव कोपेन राजन् गाङ्गेयमुक्तवान् । त्वयि जीवति कौरव्य नाहं योत्स्ये कदाचन ।
त्वया तु पाण्डवेयेषु निहतेषु महामृधे । दुर्य्योधनमनुज्ञाप्य वनं यास्यामि कौरव ।
पाण्डवैर्वा हते भीष्म त्वयि स्वर्गमुपेयुषि । हन्तास्म्येकरथेनैव कृत्स्नान् यान्मन्यसे रथान् । ४०
एवमुक्त्वा महाबाहुर्दशाहानि महायशाः । नायुध्यत ततः कर्णः पुत्रस्य तव सम्मते ।
भीष्मः समरविक्रान्तः पाण्डवेयस्य भारत । जघान समरे योधानसङ्ख्येयपराक्रमः ।
तस्मिंस्तु निहते शूरे सत्यसन्धे महौजसि । त्वत्सुताः कर्णमस्मार्षुस्तर्त्तुकामा इव प्लवं ।
तावकास्तव पुत्राश्च सहिताः सर्व्वराजभिः । हा कर्ण इति चाक्रन्दन् कालोऽयमिति चाब्रुवन् ।
जामदग्न्याभ्यनुज्ञातमस्त्रे दुर्व्वारपौरुषं । अगमन्नो मनः कर्णं बन्धुमात्ययिकेष्विव । ४५
स हि शक्तो रणे राजन् त्रातुमस्मान् महाभयात् । त्रिदशानिव गोविन्दः सततं सुमहाभयात् ।
॥ वैशम्पायन उवाच ॥ तथा तु सञ्जयं कर्णं कीर्त्तयन्तं पुनः पुनः । आशीविषवदुच्छ्वस्य धृतराष्ट्रोऽब्रवीद्वचः ।
॥ धृतराष्ट्र उवाच ॥ यत्तु वैकर्त्तनं कर्णमगमद्वो मनस्तदा । अप्यपश्यन्त राधेयं सूतपुत्रं तनुत्यजं ।
अपि तन्न मृषा कर्णो युधि सत्यपराक्रमः । सम्भ्रान्तानां तदार्त्तानां त्रस्तानां त्राणमिच्छतां ।

अपि तत्पूरयाञ्चक्रे धनुर्द्धरवरो युधि । यत्तद्विनिहते भीष्मे कौरवाणामुपाश्रये । १०
तत्खण्डं पूरयन् कर्णः परेषामादधद्भयं । कृतवान् मम पुत्त्राणां जयाशां सफलामपि ।

इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि धृतराष्ट्रप्रश्ने प्रथमोऽध्यायः ॥ १ ॥

॥ सञ्जय उवाच ॥ हतं भीष्ममाधिरथिर्व्विदित्वा भिन्नां नावमिवात्यगाधे कुरूणां । सोदर्य्यवद्व्यसनात् सूतपुत्त्रः सन्तारयिष्यंस्तव पुत्त्रसेनां ।

श्रुत्वा तु कर्णः पुरुषेन्द्रमच्युतं निपातितं शान्तनवं महारथं । अथोपयायात् सहसारिकर्षणो धनुर्द्धराणां प्रवरस्तदा नृप ।
हते तु भीष्मे रथसत्तमे परैर्न्निमज्जतीं नावमिवार्णवे कुरून् । पितेव पुत्त्रांस्त्वरितोऽभ्ययात्ततः सन्तारयिष्यंस्तव पुत्त्रसेनां ।
॥ कर्ण उवाच ॥ यस्मिन् धृतिर्बुद्धिपराक्रमौजः सत्यं दमो वीरगुणाश्च सर्व्वे । अस्त्राणि दिव्यान्यथ सन्नतिर्ह्रीः प्रिया च वागनुसूया च भीष्मे । ५५
सदा कृतज्ञे द्विजशत्रुघातके सनातने चन्द्रमसीव लक्ष्म । स चेत् प्रशान्तः परवीरहन्ता मन्ये हतानेव हि सर्व्वयोधान् ।
नेह ध्रुवं किञ्चन जातु विद्यते लोके ह्यस्मिन् कर्म्मणो नित्ययोगात् । सूर्य्योदये को हि विमुक्तसंशयो भावं कुर्व्वीताद्य महाव्रते हते ।
वसुप्रभावे वसुवीर्य्यसम्भवे गते वसूनेव वसुन्धराधिपे । वसूनि पुत्त्रांश्च वसुन्धरां तथा कुरूंश्च शोचध्वमिमाञ्च वाहिनीं ।
॥ सञ्जय उवाच ॥ महाप्रभावे वरदे निपातिते लोकेश्वरे शान्तनवे महौजसि । पराजितेषु भरतेषु दुर्म्मनाः कर्णो भृशञ्चाश्रु सदश्रु वर्त्तयन् ।
इदन्तु राधेयवचो निशम्य ते सुताश्च राजंस्तव सैनिकाश्च ह । परस्परं चुक्रुशुरार्त्तिजं भृशं तदाऽस्रु नेत्रैर्मुमुचुर्हि शब्दवत् । ६०
प्रवर्त्तमाने तु पुनर्म्महाहवे विगाह्यमानासु चमूषु पार्थिवैः । अथाब्रवीद्धर्षकरं वचस्तदा रथर्षभान् सर्व्वमहारथर्षभः ।
जगत्यनित्ये सततं प्रधावति सञ्चिन्तयन्नस्थिरमेव लक्षये । भवत्सु तिष्ठत्स्विह पातितो रणे गिरिप्रकाशः कुरुपुङ्गवः कथं ।
निपातिते शान्तनवे महारथे दिवाकरे भूतलमाश्रिते यथा । न पार्थिवाः सोढुमलं धनञ्जयं गिरिप्रवोढारमिवानिलं द्रुमाः ।
हतप्रधानं त्विदमार्त्तरूपं परैर्हतोत्साहमनाथमद्य वै । मया कुरूणां परिपाल्यमाहवे बलं यथा तेन महात्मना तथा ।
समाहितं चात्मनि भारमीदृशं जगत्तथानित्यमिदञ्च लक्षये । निपातितञ्चाहवशौण्डमाहवे कथं न कुर्य्यामहमाहवे भयं । ६५
अहन्तु तान् कुरुवृषभानजिह्मगैः प्रवेशयन् यमसदने रणे चरन् । यशः परं जगति विभाव्य वर्त्तिता परैर्हतो युधि शयिताऽथ वा पुनः ।
युधिष्ठिरो धृतिमतिधर्म्मसत्त्ववान् वृकोदरो गजशततुल्यविक्रमः । तथार्ज्जुनस्त्रिदशवरात्मजो युवा न तद्बलं सुजयमिहामरैरपि ।
यमौ रणे यत्र यमोपमौ बले ससात्यकिर्य्यत्र च देवकीसुतः । न तद्बलं कापुरुषोऽभ्युपेयिवान् निवर्त्तते मृत्युमुखादिवासुहृत् ।
तपो ह्युदीर्णं तपसैव बाध्यते बलं बलेनैव तथा मनस्विभिः । मनश्च मे शत्रुनिवारणे ध्रुवं सुरक्षणे वा बलवद्व्यवस्थितं ।

भुवस्त्वेषां बाधमानं प्रभावं गत्वैवाहं तान् प्रसहिष्यामि सूत । मित्रद्रोहो मर्षणीयो न मेऽयं भग्ने सैन्ये यः समेयात् स मित्रं । ७०

कर्त्तास्म्येतत् पुरुषा आत्मकर्म त्यक्त्वा प्राणाननुयास्यामि भीष्मं । सर्व्वान् सङ्ख्ये शत्रुसङ्घान् हनिष्ये हतस्तैर्व्वा वीरलोकं गमिष्ये ।

सम्प्राक्रुष्टे रुदितस्त्रीकुमारे परिभूते पौरुषे धार्त्तराष्ट्रे । मया कृत्यमिति जानामि सूत तस्माच्छत्रून् राज्ञो विजेष्ये ।

कुरून् रक्षन् पाण्डुपुत्त्रान् जिघांसन् त्यक्त्वा प्राणान् घोररूपे रणेऽस्मिन् । सर्व्वान् सङ्ख्ये शत्रुसङ्घान् निहत्य दास्याम्यहं धार्त्तराष्ट्राय राज्यं ।

निबध्यतां मे कवचं विचित्रं हैमं शुभ्रं मणिरत्नावभासि । शिरस्त्राणं चार्कसमानभासं धनुः शरांश्चाग्निविषाहिकल्पान् ।

उपासङ्गान् षोडश योजयध्वं धनूंषि दिव्यानि तथा हरन्तु । शरांश्च शक्तीश्च गदाश्च गुर्व्वीः शङ्खञ्च जाम्बूनदचित्रभागं । ७५

इमां रौक्मीं नागकक्षां विचित्रां ध्वजञ्चैव दिव्यमिन्दीवराभं । श्लक्ष्णैर्व्वस्त्रैर्व्विप्रमृज्यानयस्व चित्रां मालाञ्चानुबद्धां सजालां ।

अश्वानग्र्यान् पाण्डुराभ्रप्रकाशान् पुष्टान् स्नातान् मन्त्रपूताभिरद्भिः । तप्तैर्भाण्डैः काञ्चनैरभ्युपेतान् शीघ्राञ्छीघ्रं सूत पुत्त्रानयस्व ।

रथं चाग्र्यं हेममालावनद्धं रत्नैश्चित्रं चन्द्रसूर्य्यप्रकाशैः । द्रव्यैर्युक्तं सम्प्रहारोपपन्नैर्व्वाहैर्युक्तं तूर्णमावर्त्तयस्व ।

चित्राणि चापानि च वेगवन्ति ज्याश्चोत्तमाः संहननोपपन्नाः । तूणांश्च पूर्णान् महतः शराणामासज्ज गात्रावरणानि चैव ।

प्रायात्रिकं चानय चाशु सर्व्वं दध्ना पूर्णं वीर कांस्यञ्च हैमं । आनीय मालामवबध्य चाङ्गे प्रवादयन्त्वाशु जयाय भेरीः । ८०

प्रयाहि सूताशु यतः किरीटी वृकोदरो धर्म्मपुत्त्रो यमौ च । तान् वा हनिष्यामि समेत्य सङ्ख्ये भीष्माय वैष्यामि हतो द्विषद्भिः ।

यस्मिन् राजा सत्यधृतिर्युधिष्ठिरः समास्थितो भीमसेनार्ज्जुनौ च । वासुदेवः सात्यकिः सृञ्जयाश्च मन्ये बलं तदजय्यं महीपैः ।

तञ्चेन्मृत्युः सर्व्वहरोऽभिरक्षेत् सदाऽप्रमत्तः समरे किरीटिनं । तथाऽपि हन्तास्मि समेत्य सङ्ख्ये यास्यामि वा भीष्मपथा यमाय ।

न त्वेवाहं न गमिष्यामि तेषां मध्ये शूराणां तच्च चाहं ब्रवीमि । मित्रद्रुहो दुर्ब्बलभक्तयो ये पापात्मानो न ममैते सहायाः ।

॥ सञ्जय उवाच ॥ समृद्धिमन्तं रथमुत्तमं दृढं सकूबरं हेमपरिष्कृतं शुभं । पताकिनं वातजवैर्हयोत्तमैर्युक्तं समास्थाय ययौ जयाय सः । ८५

सम्पूज्यमानः कुरुभिर्म्महात्मा रथर्षभैर्द्देवगणैर्यथेन्द्रः । ययौ तदायोधनमुग्रधन्वा यत्रावसानं भरतर्षभस्य ।

वरूथिना महता सध्वजेन सुवर्णमुक्तामणिरत्नमालिना । सदश्वयुक्तेन रथेन कर्णो मेघस्वनेनार्क इवामितौजाः ।

हुताशनाभः स हुताशनप्रभे शुभः शुभे वै स्वरथे धनुर्द्धरः। स्थितो रराजाधिरथिर्म्महारथः स्वयं विमाने सुरराडिव स्थितः।

इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि कर्णनिर्याणे द्वितीयोऽध्यायः ॥ २ ॥

॥ सञ्जय उवाच ॥ शरतल्पे महात्मानं शयानममितौजसं। महावातसमूहेन समुद्रमिव शोषितं।

दृष्ट्वा पितामहं भीष्मं सर्व्वक्षत्रान्तकं गुरुं। दिव्यैरस्त्रैर्म्महेष्वासं पातितं सव्यसाचिना। ९०

जयाशा तव पुत्राणां संभग्ना वर्म्म शर्म्म च। अपाराणामिव द्वीपमगाधे गाधमिच्छतां।

स्रोतसा यामुनेनेव शरौघेण परिप्लुतः। महेन्द्रेणेव मैनाकमसह्यं भुवि पातितं।

नभश्च्युतमिवादित्यं पातितं धरणीतले। शतक्रतुमिवाचिन्त्यं पुरा वृत्रेण निर्ज्जितं।

मोहनं सर्व्वसैन्यस्य युधि भीष्मस्य पातनं। ककुदं सर्व्वसैन्यानां लक्ष्म सर्व्वधनुष्मतां।

धनञ्जयशरव्याप्तं पितरं ते महाव्रतं। तं वीरशयने वीरं शयानं पुरुषर्षभं। ९५

भीष्ममाधिरथिर्दृष्ट्वा भारतानां पितामहं। अवतीर्य्य रथादार्त्तः शोकमोहपरिप्लुतः।

पद्भ्यामेव जगामार्त्तो वाष्पव्याकुललोचनः। अभिवाद्याञ्जलिं बद्ध्वा वन्दमानोऽभ्यभाषत।

कर्णोऽहमस्मि भद्रन्ते वद मामभि भारत। पुण्यया क्षेमया वाचा चक्षुषा चावलोकय।

न नूनं सुकृतस्येह फलं कश्चित् समश्नुते। यत्र धर्म्मपरो वृद्धः शेते भुवि भवान् हतः।

कोशसञ्जनने मन्त्रे व्यूहे प्रहरणेषु च। नाहमन्यं प्रपश्यामि कुरूणां कुरुसत्तम। १००

बुद्ध्या विशुद्धया युक्तो यः कुरूंस्तारयेद्भयात्। योधांस्तु बहुधा हत्वा पितृलोकं गमिष्यसि।

अद्य प्रभृति संक्रुद्धा व्याघ्रा इव मृगक्षयं। पाण्डवा भरतश्रेष्ठ करिष्यन्ति कुरुक्षयं।

अद्य गाण्डीवघोषस्य वीर्य्यज्ञाः सव्यसाचिनः। कुरवः सन्त्रसिष्यन्ति वज्रपाणेरिवासुराः।

अद्य गाण्डीवमुक्तानामशनीनामिव स्वनाः। त्रासयिष्यन्ति वाणानां कुरूनन्यांश्च पार्थिवान्।

समिद्धोऽग्निर्यथा वीर महाज्वालो द्रुमान् दहेत्। धार्त्तराष्ट्रान् प्रधक्ष्यन्ति तथा वाणाः किरीटिनः। १०५

येन येन प्रसरतो वाय्वग्नी सहितौ वने। तेन तेन प्रदहतो भूरि गुल्मतृणद्रुमान्।

यादृशोऽग्निः समिद्धस्तु तादृक्पार्थो न संशयः। यथा वायुर्नरव्याघ्र तथा कृष्णो न संशयः।

नदतः पाञ्चजन्यस्य रसतो गाण्डिवस्य च। श्रुत्वा सर्व्वाणि सैन्यानि त्रासं यास्यन्ति भारत।

कपिध्वजस्योत्पततो रथस्यामित्रकर्षिणः। शब्दं सोढुं न शक्ष्यन्ति त्वामृते वीर पार्थिवाः।

को ह्यर्ज्जुनं योधयितुं त्वदन्यः पार्थिवोऽर्हति। यस्य दिव्यानि कर्म्माणि प्रवदन्ति मनीषिणः। ११०

अमानुषश्च संग्रामस्त्र्यम्बकेण महात्मना। तस्माच्चैव वरं प्राप्तो दुष्प्रापमकृतात्मभिः।

कोऽन्यः शक्तो रणे जेतुं पूर्व्वं यो न जितस्त्वया। पाण्डुपुत्रो बलश्लाघी माधवेन च रक्षितः।

जितो येन रणे रामो भवता वीर्य्यशालिना। क्षत्रियान्तकरो घोरो देवदानवपूजितः।

तमद्याहं पाण्डवयुद्धशौण्डममृष्यमाणो भवता चानुशिष्टः। आशीविषं दृष्टिहरं सुघोरं शूरं शक्ष्याम्यस्त्रबलान्निहन्तुं।

इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि कर्णवाक्ये तृतीयोऽध्यायः॥ ३ ॥

तस्य लालप्यमानस्य कुरुवृद्धः पितामहः । देशकालोचितं वाक्यमब्रवीत् प्रीतमानसः । ११५
समुद्र इव सिन्धूनां ज्योतिषामिव भास्करः । सत्यस्य च यथा सन्तो बीजानामिव चोर्व्वरा ।
पर्ज्जन्य इव भूतानां प्रतिष्ठा सुहृदां तव । बान्धवास्त्वानुजीवन्तु सहस्राक्षमिवामराः ।
मानहा भव शत्रूणां मित्राणां नन्दिवर्द्धनः । कौरवाणामपि भवान् यथा विष्णुर्दिवौकसां ।
स्वबाहुबलवीर्य्येण धार्त्तराष्ट्रप्रियैषिणा । कर्ण राजपुरं गत्वा काम्बोजा निर्जितास्त्वया ।
गिरिव्रजगताश्चापि नग्नजित्प्रमुखा नृपाः । अम्बष्ठाश्च विदेहाश्च गान्धाराश्च जितास्त्वया । १२०
हिमवद्दुर्गनिलयाः किराता रणकर्कशाः । दुर्य्योधनस्य वशगाः कृताः कर्ण त्वया पुरा ।
उत्कला मेकलाः पौण्ड्राः कलिङ्गान्ध्राश्च संयुगे । निषादाश्च त्रिगर्त्ताश्च वाह्लीकाश्च जितास्त्वया ।
तत्र तत्र च सङ्ग्रामे दुर्य्योधनहितैषिणा । बहवो निर्ज्जिता वीर त्वया कर्ण महौजसः ।
यथा दुर्य्योधनस्तात सज्ञातिकुलबान्धवः । तथा त्वमपि सर्व्वेषां कौरवाणां गतिर्भव ।
शिवेनाभिवदामि त्वां गच्छ युध्यस्व शत्रुभिः । अनुशाधि कुरून् सङ्ख्ये धत्स्व दुर्य्योधने जयं । १२५
भवान् पौत्रसमोऽस्माकं यथा दुर्य्योधनस्तथा । तथाऽपि धर्म्मतः सर्व्वे यथा तस्य वयं तथा ।
यौनात्सम्बन्धकाल्लोके विशिष्टं सङ्गतं सतां । सद्भिः सह नरश्रेष्ठ प्रवदन्ति मनीषिणः ।
स सत्यसङ्गतो भूत्वा ममेदमिति निश्चितं । कुरूणां पालय बलं यथा दुर्य्योधनस्तथा ।
निशम्य वचनं तस्य चरणावभिवाद्य च । ययौ वैकर्त्तनः कर्णः समीपं सर्व्वधन्विनां ।
सोऽभिवीक्ष्य नरौघाणां स्थानमप्रतिमं महत् । व्यूढप्रहरणोरस्कं सैन्यं तत्समबृंहयत् । १३०
हर्षिताः कुरवः सर्व्वे दुर्य्योधनपुरोगमाः । तमागतं महाबाहुं सर्व्वानीकपुरःसरं ।
कर्णं दृष्ट्वा महात्मानं युद्धाय समुपस्थितं । क्ष्वेडितास्फोटितरवैः सिंहनादरवैरपि ।
धनुःशब्दैश्च विविधैः कुरवः समपूजयन् ।

इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि कर्णाश्वासे चतुर्थोऽध्यायः ॥ ४ ॥

॥ सञ्जय उवाच ॥ रथस्थं पुरुषव्याघ्रं दृष्ट्वा कर्णमवस्थितं । हृष्टो दुर्य्योधनो राजन्निदं वचनमब्रवीत् ।
सनाथमिव मन्येऽहं भवता पालितं बलं । मन्ये किं नु समर्थं यत् हितं तत् सम्प्रधार्य्यतां । १३५
॥ कर्ण उवाच ॥ ब्रूहि नः पुरुषव्याघ्र त्वं हि प्राज्ञतमो नृपः । यथा चार्थपतिः कृत्यं पश्यते न तथेतरः ।
ते स्म सर्व्वे तव वचः श्रोतुकामा नरेश्वराः । नान्याय्यं हि भवान् वाक्यं ब्रूयादिति मतिर्म्मम ।
॥ दुर्य्योधन उवाच ॥ भीष्मः सेनाप्रणेतासीत् वयसा विक्रमेण च । श्रुतेन चोपसम्पन्नः सर्व्वैर्य्योधगुणैस्तथा ।
तेनातियशसा कर्ण घ्नता शत्रुगणान्मम । सुयुद्धेन दशाहानि पालिताः स्मो महात्मना ।
तस्मिन्नसुकरं कर्म्म कृतवत्यास्थिते दिवं । कर्ण सेनाप्रणेतारं मन्यसे तदनन्तरं । १४०
न विना नायकं सेना मुहूर्त्तमपि तिष्ठति । आहवेष्वाहवश्रेष्ठ कर्ण हीनेव नौर्ज्जले ।
यथा ह्यकर्णधारा नौरथो वाऽसारथिर्यथा । द्रवेद्यथेष्टं तद्वत्स्यादृते सेनापतिं बलं ।
अदेशिको यथा सार्थः सर्व्वं कृच्छ्रं समर्च्छति । अनायका तथा सेना सर्व्वान् दोषान् समर्च्छति ।

स भवान् वीक्ष्य सर्व्वेषु मामकेषु महात्मसु। पश्य सेनापतिं युक्तमनु शान्तनवादिह।
यं हि सेनाप्रणेतारं भवान् द्रक्ष्यति संयुगे। तं वयं सहिताः सर्व्वे करिष्यामो न संशयः। १४५
॥ कर्ण उवाच ॥ सर्व्व एव महात्मान इमे पुरुषसत्तमाः। सेनापतित्वमर्हन्ति नात्र कार्य्या विचारणा।
कुलसंहननज्ञानैर्बलविक्रमबुद्धिभिः। युक्ताः कृतज्ञा धीमन्त आहवेष्वनिवर्त्तिनः।
युगपन्न तु ते शक्याः कर्त्तुं सर्व्वे पुरःसराः। एक एव तु कर्त्तव्यो यस्मिन् वैशेषिका गुणाः।
अन्योऽन्यस्पर्द्धिनां तेषां यद्येकं सत्करिष्यसि। शेषा विमनसो व्यक्तं न योत्स्यन्ति हितास्तव।
अयञ्च सर्व्वयोधानामाचार्य्यः स्थविरो गुरुः। युक्तः सेनापतिः कर्त्तुं द्रोणः शस्त्रभृताम्बरः। १५०
को हि तिष्ठति दुर्द्धर्षे द्रोणे ब्रह्मविदुत्तमे। सेनापतिः स्यादन्यस्माच्छुक्राङ्गिरसदर्शनात्।
न च सोऽप्यस्ति ते योधः सर्व्वराजसु भारत। द्रोणं यः समरे यान्तं नानुयास्यति संयुगे।
एष सेनाप्रणेतॄणामेष शस्त्रभृतामपि। एष बुद्धिमतां श्रेष्ठो राजंस्तव गुरुश्च ते।
एवं दुर्य्योधनाचार्य्यमाशु सेनापतिं कुरु। जिगीषन्तोऽसुरान् सङ्ख्ये कार्त्तिकेयमिवामराः।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि कर्णवाक्ये पञ्चमोऽध्यायः ॥ ५ ॥
॥ सञ्जय उवाच ॥ कर्णस्य वचनं श्रुत्वा राजा दुर्य्योधनस्तदा। सेनामध्यगतं द्रोणमिदं वचनमब्रवीत्। १५५
॥ दुर्य्योधन उवाच ॥ वर्णश्रैष्ठ्यात् कुलोत्पत्त्या श्रुतेन वयसा धिया। वीर्य्याद्दाक्ष्यादधृष्यत्वादर्थज्ञानान्नयाज्जयात्।
तपसा च कृतज्ञत्वाद् वृद्धः सर्व्वगुणैरपि। युक्तो भवत्समो गोप्ता राज्ञामन्यो न विद्यते।
स भवान् पातु नः सर्व्वान् विबुधानिव वासवः। भवन्नेत्राः परान् जेतुमिच्छामो द्विजसत्तम।
रुद्राणामिव कापाली वसूनामिव पावकः। कुबेर इव यक्षाणां मरुतामिव वासवः।
वशिष्ठ इव विप्राणां तेजसामिव भास्करः। पितॄणामिव धर्म्मेन्द्रो यादसामिव चाम्बुराट्। १६०
नक्षत्राणामिव शशी दितिजानामिवोशनाः। श्रेष्ठः सेनाप्रणेतॄणां स नः सेनापतिर्भव।
अक्षौहिण्यो दशैका च वशगाः सन्तु तेऽनघ। ताभिः शत्रून् प्रतिव्यूह्य जहीन्द्रो दानवानिव।
प्रयातु नो भवानग्रे देवानामिव पावकिः। अनुयास्यामहे त्वाजौ सौरभेया इवर्षभं।
उग्रधन्वा महेष्वासो दिव्यं विस्फारयन् धनुः। अग्रेभवं त्वान्तु दृष्ट्वा नार्ज्जुनः प्रहरिष्यति।
ध्रुवं युधिष्ठिरं सङ्ख्ये सानुबन्धं सबान्धवं। जेष्यामि पुरुषव्याघ्र भवान् सेनापतिर्य्यदि। १६५
॥ सञ्जय उवाच ॥ एवमुक्ते ततो द्रोणं जयेत्यूचुर्न्नराधिपाः। सिंहनादेन महता हर्षयन्तस्तवात्मजं।
सैनिकाश्च मुदा युक्ता वर्द्धयन्ति द्विजोत्तमं। दुर्य्योधनं पुरस्कृत्य प्रार्थयन्तो महद्यशः।
दुर्य्योधनं ततो राजन् द्रोणो वचनमब्रवीत्।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि दुर्य्योधनप्रोत्साहे षष्ठोऽध्यायः ॥ ६ ॥
॥ द्रोण उवाच ॥ वेदं षडङ्गं वेदाहमर्थविद्याञ्च मानवीं। त्रैयम्बकमथेष्वस्त्रमस्त्राणि विविधानि च।
ये चाप्युक्ता मयि गुणा भवद्भिर्ज्जयकाङ्क्षिभिः। चिकीर्षुस्तानहं सर्व्वान् योधयिष्यामि पाण्डवान्। १७०
पार्षतन्तु रणे राजन् न हनिष्ये कथञ्चन। स हि सृष्टो बधार्थाय ममैव पुरुषर्षभ।

योधयिष्यामि सैन्यानि नाशयन् सर्व्वसोमकान् । न च मां पाण्डवा युद्धे योधयिष्यन्ति हर्षिताः ।
॥ सञ्जय उवाच ॥ स एवमभ्यनुज्ञातश्चक्रे सेनापतिं ततः । द्रोणन्तव सुतो राजन् विधिदृष्टेन कर्म्मणा ।
अथाभिषिषिचुर्द्रोणं दुर्य्योधनमुखा नृपाः । सैनापत्ये यथा स्कन्दं पुरा शक्रमुखाः सुराः ।
ततो वादित्रघोषेण शङ्खानाञ्च महास्वनैः । प्रादुरासीत् कृते द्रोणे हर्षः सेनापतौ तदा । १७५
ततः पुण्याहघोषेण स्वस्तिवादस्वनेन च । संस्तवैर्गीतशब्दैश्च सूतमागधवन्दिनां ।
जयशब्दैर्द्विजाग्र्याणां सुतानां नर्त्तितैस्तथा । सत्कृत्य विधिना द्रोणं मेनिरे पाण्डवान् जितान् ।
॥ सञ्जय उवाच ॥ सैनापत्यन्तु सम्प्राप्य भारद्वाजो महारथः । युयुत्सुर्व्यूह्य सैन्यानि प्रायात्तव सुतैः सह ।
सैन्धवश्च कलिङ्गश्च विकर्णश्च तवात्मजः । दक्षिणं पार्श्वमास्थाय समतिष्ठन्त दंशिताः ।
प्रपक्षः शकुनिस्तेषां प्रवरैर्हयसादिभिः । ययौ गान्धारकैः सार्द्धं विमलप्रासयोधिभिः । १८०
कृपश्च कृतवर्म्मा च चित्रसेनो विविंशतिः । दुःशासनमुखा यत्ताः सव्यं पक्षमपालयन् ।
तेषां प्रपक्षाः काम्बोजाः सुदक्षिणपुरःसराः । ययुरश्वैर्महावेगैः शकाश्च यवनैः सह ।
मद्रास्त्रिगर्त्ताः साम्बष्ठाः प्रतीच्योदीच्यमालवाः । शिवयः शूरसेनाश्च शूद्राश्च मलदैः सह ।
सौवीराः कितवाः प्राच्या दाक्षिणात्याश्च सर्व्वशः । तवात्मजं पुरस्कृत्य सूतपुत्रस्य पृष्ठतः ।
हर्षयन्तः स्वसैन्यानि बलेषु बलमादधत् । ययौ वैकर्त्तनः कर्णः प्रमुखे सर्व्वधन्विनां । १८५
तस्य दीप्तो महाकायः स्वान्यनीकानि हर्षयन् । हस्तिकक्षो महाकेतुर्बभौ सूर्य्यसमद्युतिः ।
न भीष्मव्यसनं कश्चिद्दृष्ट्वा कर्णममन्यत । विशोकाश्चाभवन् सर्व्वे राजानः कुरुभिः सह ।
हृष्टाश्च बहवो योधास्तत्राजल्पन्त सङ्गताः । न हि कर्णं रणे दृष्ट्वा युधि स्थास्यन्ति पाण्डवाः ।
कर्णो हि समरे शक्तो जेतुं देवान् सवासवान् । किमु पाण्डुसुतान् युद्धे हीनवीर्य्यपराक्रमान् ।
भीष्मेण तु रणे पार्थाः पालिता बाहुशालिना । तांस्तु कर्णः शरैस्तीक्ष्णैर्नाशयिष्यति संयुगे । १९०
एवं ब्रुवन्तस्तेऽन्योऽन्यं हृष्टरूपा विशाम्पते । राधेयं पूजयन्तश्च प्रशंसन्तश्च निर्ययुः ।
अस्माकं शकटव्यूहो द्रोणेन विहितोऽभवत् । परेषां क्रौञ्च एवासीद्व्यूहो राजन् महात्मनां ।
प्रीयमाणेन विहितो धर्म्मराजेन भारत । व्यूहप्रमुखतस्तेषां तस्थतुः पुरुषर्षभौ ।
वानरध्वजमुच्छ्रित्य विष्वक्सेनधनञ्जयौ । ककुदं सर्व्वसैन्यानां धाम सर्व्वधनुष्मतां ।
आदित्यपथगः केतुः पार्थस्यामिततेजसः । दीपयामास तत्सैन्यं पाण्डवस्य महात्मनः । १९५
यथा प्रज्वलितः सूर्य्यो युगान्ते वै वसुन्धरां । प्रदहन्दृश्यते तद्वत् केतुः पार्थस्य धीमतः ।
योधानामर्ज्जुनः श्रेष्ठो गाण्डीवं धनुषां वरं । वासुदेवश्च भूतानां चक्राणाञ्च सुदर्शनं ।
चत्वार्य्येतानि तेजांसि वहन् श्वेतहयो रथः । परेषामग्रतस्तस्थौ कालचक्रमिवोद्यतं ।
एवं तौ सुमहात्मानौ बलसेनाग्रगावुभौ । तावकानां मुखे कर्णः परेषाञ्च धनञ्जयः ।
तौ जातावभिसंरब्धौ परस्परवधैषिणौ । अवेक्षेतां तदान्योऽन्यं समरे कर्णपाण्डवौ । २००
ततः प्रयाते सहसा भारद्वाजे महारथे । आर्त्तनादेन घोरेण वसुधा समकम्पत ।

ततस्तुमुलमाकाशमावृणोत् सदिवाकरं । वातोद्धूतं रजस्तीव्रं कौशेयनिकरोपमं ।
ववर्ष द्यौरनभ्राऽपि मांसास्थिरुधिराण्युत । गृध्राः श्येना बलाः कङ्का वायसाश्च सहस्रशः ।
उपर्य्युपरि सेनान्ते तदा पर्य्यपतन्नृप । गोमायवश्च प्राक्रोशन् भयदा दारुणाः खगाः ।
अकार्षुरपसव्यञ्च बहुशः पृतनां तव । बिभक्षिषन्तो मांसानि पिपासन्तश्च शोणितं । २०५
अपतद्दीप्यमाना च सनिर्घाता सकम्पना । उल्का ज्वलन्ती सङ्ग्रामे पुच्छेनावृत्य सर्व्वशः ।
परिवेशो महांश्चापि सविद्युत्स्तनयित्नुमान् । भास्करस्याभवद्राजन् प्रयाते वाहिनीपतौ ।
एते चान्ये च बहवः प्रादुरासन् सुदारुणाः । उत्पाता युधि वीराणां जीवितक्षयकारकाः ।
ततः प्रववृते युद्धं परस्परवधैषिणां । कुरुपाण्डवसेनानां शब्देनापूरयज्जगत् ।
ते त्वन्योऽन्यं सुसंरब्धाः पाण्डवाः कौरवैः सह । प्रत्यघ्नन्निशितैः शस्त्रैर्जयगृद्धाः प्रहारिणः । २१०
स पाण्डवानां महता महेष्वासो महाद्युतिः । वेगेनाभ्यद्रवत् सैन्यं किरन् शरशतैः शितैः ।
द्रोणमभ्युद्यतं दृष्ट्वा पाण्डवाः सह सृञ्जयैः । प्रत्यगृह्णंस्तदा राजञ्छरवर्षैः पृथक् पृथक् ।
संक्षोभ्यमाणा द्रोणेन भिद्यमाना महाचमूः । व्यशीर्य्यत सपाञ्चाला वातेनेव बलाहकाः ।
बहूनीह विकुर्व्वाणो दिव्यान्यस्त्राणि संयुगे । अपीडयत् क्षणेनैव द्रोणः पाण्डवसृञ्जयान् ।
ते वध्यमाना द्रोणेन वासवेनेव दानवाः । पाञ्चालाः समकम्पन्त धृष्टद्युम्नपुरोगमाः । २१५
ततो दिव्यास्त्रविच्छूरो याज्ञसेनिर्महारथः । अभिनच्छरवर्षेण द्रोणानीकमनेकधा ।
द्रोणस्य शरवर्षेण शरवर्षाणि पार्षतः । सन्निवार्य्य ततः सर्व्वान् कुरूनप्यवधीद्बली ।
संहृत्य तु ततो द्रोणः समवस्थाप्य चाहवे । स्वमनीकं महाबाहुः पार्षतं समुपाद्रवत् ।
स बाणवर्षं सुमहदसृजत् पार्षतं प्रति । मघवान् समभिक्रुद्धः सहसा दानवेष्विव ।
ते कम्प्यमाना द्रोणेन बाणैः पाण्डवसृञ्जयाः । पुनः पुनरभज्यन्त सिंहेनेवेतरे मृगाः । २२०
तथा पर्य्यचरद्द्रोणः पाण्डवानां बलं बली । अलातचक्रवद्राजंस्तदद्भुतमिवाभवत् ।
खचरनगरकल्पं कल्पितं शास्त्रदृष्ट्या चलदनिलपताकं ह्रादिनं चारुताश्वं ।
स्फटिकविमलकेतुं त्रासयन् शात्रवाणां रथवरमधिरूढः सञ्जहारारिसेनां ।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि द्रोणपराक्रमे सप्तमोऽध्यायः ॥ ७ ॥
॥ सञ्जय उवाच ॥ तथा द्रोणमभिघ्नन्तं साश्वसूतरथद्विपान् । व्यथिताः पाण्डवा दृष्ट्वा न चैनं पर्य्यवारयन् ।
ततो युधिष्ठिरो राजा धृष्टद्युम्नधनञ्जयौ । अब्रवीत् सर्व्वतो यत्तैः कुम्भयोनिर्निवार्य्यतां । २२५
तत्रैनमर्ज्जुनश्चैव पार्षतश्च सहानुगः । पर्य्यगृह्णंस्ततः सर्व्वे समापेतुर्महारथाः ।
केकया भीमसेनश्च सौभद्रश्च घटोत्कचः । युधिष्ठिरो यमौ मत्स्या द्रुपदस्यात्मजास्तथा ।
द्रौपदेयाश्च संहृष्टा धृष्टकेतुः ससात्यकिः । चेकितानश्च संक्रुद्धो युयुत्सुश्च महारथः ।
ये चान्ये पार्थिवा राजन् पाण्डवस्यानुयायिनः । कुलवीर्य्यानुरूपाणि चक्रुः कर्म्माण्यनेकशः ।
संरक्ष्यमाणां तां दृष्ट्वा पाण्डवैर्वाहिनीं रणे । व्यावृत्य चक्षुषी कोपात् भारद्वाजोऽन्ववैक्षत । २३०

स तीव्रकोपमास्थाय रथे समरदुर्म्मदः । व्यधमत् पाण्डवानीकमभ्राणीव सदागतिः ।
रथानश्वान्नरान्नागानभिधावंस्ततस्ततः । चचार मत्तवद्‌द्रोणो वृद्धोऽपि तरुणो यथा ।
तस्य शोणितदिग्धाङ्गाः शोणास्ते वातरंहसः । आजानेया हया राजन्नविभ्रान्ताः श्रियं दधुः ।
तमन्तकमिव क्रुद्धमापतन्तं यतव्रतं । दृष्ट्वा संप्राद्रवन् योधाः पाण्डवस्य ततस्ततः ।
तेषां प्रद्रवतां भीमः पुनरावर्त्ततामपि । वीक्षतां तिष्ठतां चासीच्छब्दः परमदारुणः । २३५
शूराणां हर्षजननो भीरूणां भयवर्द्धनः । द्यावापृथिव्योर्व्विवरं पूरयामास सर्व्वतः ।
ततः पुनरपि द्रोणो नाम विश्रावयन् युधि । अकरोद्रौद्रमात्मानं किरन् शरशतैः परान् ।
स तथा तेष्वनीकेषु पाण्डुपुत्रस्य मारिष । कालवच्चचरद्‌द्रोणो युवेव स्थविरो बली ।
उत्कृत्य च शिरांस्युग्रो बाहूनपि सभूषणान् । कृत्वा शून्यान् रथोपस्थानुदक्रोशन्महारवान् ।
तस्य हर्षप्रणादेन बाणवेगेन वा विभो । प्राकम्पन्त रणे योधा गावः शीतार्द्दिता इव । २४०
द्रोणस्य रथघोषेण मौर्व्वीनिष्पेषणेन च । धनुःशब्देन चाकाशे शब्दः समभवन्महान् ।
अथास्य धनुषो बाणा निश्चरन्तः सहस्रशः । व्याप्य सर्व्वा दिशः पेतुर्नागाश्वरथपत्तिषु ।
तं कार्म्मुकमहावेगमस्त्रज्वलितपावकं । द्रोणमासादयाञ्चक्रुः पाञ्चालाः पाण्डवैः सह ।
तान् सकुञ्जरपत्त्यश्वान् प्राहिणोद्यमसादनं । चक्रेऽचिरेण च द्रोणो महीं शोणितकर्द्दमां ।
तन्वता परमास्त्राणि शरान् सन्ततमस्यता । द्रोणेन निहितं दिक्षु बाणजालमदृश्यत । २४५
पदातिस्यन्दनाश्वेषु रथेष्वपि च सर्व्वशः । तस्य विद्युदिवाभ्रेषु चरन् केतुरदृश्यत ।

स केकयानां प्रवरांश्च पञ्च पाञ्चालराजञ्च शरैः प्रमथ्य । युधिष्ठिरानीकमदीनसत्त्वो द्रोणोऽभ्ययात् कार्म्मुकबाणपाणिः ।
तं भीमसेनश्च धनञ्जयश्च शिनेश्च नप्ता द्रुपदात्मजाश्च । शैब्यात्मजः काशिपतिः शिविश्च हृष्टा नदन्तो व्यकिरन् शरौघैः ।
तेषामथ द्रोणधनुर्व्विमुक्ताः पतत्रिणः काञ्चनचित्रपुङ्खाः । भित्त्वा शरीराणि गजाश्वयूनां जग्मुर्म्महीं शोणितदिग्धवाजाः ।
सा योधसङ्घैश्च रथैश्च भूमिः शरैर्व्विभिन्नैर्गजवाजिभिश्च । प्रच्छाद्यमाना पतितैर्ब्बभूव समावृता द्यौरिव कालमेघैः । २५०
शैनेयभीमार्ज्जुनवाहिनीशं सौभद्रपाञ्चालसकाशिराजं । अन्यांश्च वीरान् समरे ममर्द्द द्रोणः सुतानां तव भूतिकामः ।
एतानि चान्यानि च कौरवेन्द्र कर्म्माणि कृत्वा समरे महात्मा । प्रताप्य लोकानिव कालसूर्य्यो द्रोणो गतः स्वर्गमितो हि राजन् ।

स तु कृत्वा महत् कर्म्म द्रोणः परबलार्द्दनः । एवं रुक्मरथः शूरो हत्वा शतसहस्रशः ।
पाण्डवानां रणे योधान् पार्षतेन निपातितः । अक्षौहिणीभ्यामधिकां शूराणामनिवर्त्तिनां ।
निहत्य पश्चाद्धृतिमानगच्छत् परमां गतिं । पाण्डवैः सह पाञ्चालैरशिवैः क्रूरकर्म्मभिः । २५५
हतो रुक्मरथो राजन् कृत्वा कर्म्म सुदुष्करं । ततो निनादो भूतानामाकाशे समजायत ।
सैन्यानाञ्च ततो राजन्नाचार्य्ये निहते युधि । द्यां धरां खं दिशो वापि प्रदिशश्चानुनादयन् ।
अहोधिगिति भूतानां शब्दः समभवद्भृशं । देवताः पितरश्चैव सर्व्वे ये चास्य बान्धवाः ।

दृष्ट्वा तु निहतं तत्र भारद्वाजं महारथं। पाण्डवास्तु जयं लब्ध्वा सिंहनादान् प्रचक्रिरे।
सिंहनादेन महता समकम्पत मेदिनी। २६०

इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि द्रोणवधश्रवणेऽष्टमोऽध्यायः॥ ८॥

॥ धृतराष्ट्र उवाच॥ किं कुर्व्वाणं रणे द्रोणं जघ्नुः पाण्डवसृञ्जयाः। तथा निपुणमस्त्रेषु सर्व्वशस्त्रभृतामपि।
रथभङ्गो बभूवास्य धनुर्व्वाऽशीर्य्यतास्यतः। प्रमत्तो वाऽभवद्द्रोणस्ततो मृत्युमुपेयिवान्।
कथन्नु पार्षतस्तात शत्रुभिर्दुष्प्रधर्षणं। किरन्तमिषुसङ्घातान् रुक्मपुङ्खाननेकशः।
क्षिप्रहस्तं द्विजश्रेष्ठं कृतिनं चित्रयोधिनं। दूरेषुपातिनं दान्तं शस्त्रयुद्धेषु पारगं।
पाञ्चालपुत्रो न्यवधीत् दिव्यास्त्रधरमच्युतं। कुर्व्वाणं दारुणं कर्म्म रणे यत्तं महारथं। २६५
व्यक्तं हि दैवं बलवत् पौरुषादिति मे मतिः। यद्द्रोणो निहतः शूरः पार्षतेन महात्मना।
अस्त्रं चतुर्व्विधं वीरे यस्मिन्नासीत् प्रतिष्ठितं। तमिष्वस्त्रधराचार्य्यं द्रोणं शंससि मे हतं।
श्रुत्वा हतं रुक्मरथं वैयाघ्रपरिवारितं। जातरूपपरिष्कारं नाद्य शोकमुपानुदे।
न नूनं परदुःखेन म्रियते कोऽपि सञ्जय। यत्र द्रोणमहं श्रुत्वा हतं जीवामि मन्दभाक्।
दैवमेव परं मन्ये नन्वनर्थं हि पौरुषं। अश्मसारमयं नूनं हृदयं सुदृढं मम। २७०
यच्छ्रुत्वा निहतं द्रोणं शतधा यन्न दीर्य्यते। ब्राह्मे दैवे तथेष्वस्त्रे यमुपासन् गुणार्थिनः।
ब्राह्मणा राजपुत्राश्च स कथं मृत्युना हृतः। शोषणं सागरस्येव मेरोरिव विसर्पणं।
पातनं भास्करस्येव न मृष्ये द्रोणपातनं। दुष्टानां प्रतिषेद्धासीद्धार्म्मिकाणाञ्च रक्षिता।
योऽहासीत् कृपणस्यार्थे प्राणानपि परन्तपः। मन्दानां मम पुत्राणां जयाशा यस्य विक्रमे।
बृहस्पत्युशनस्तुल्यो बुद्ध्या स निहतः कथं। ते च शोणा बृहन्तोऽश्वाश्छन्ना जालैर्हिरण्मयैः। २७५
रथे वातजवा युक्ताः सर्व्वशस्त्रातिगा रणे। बलिनो ह्रेषिणो दान्ताः सैन्धवाः साधुवाहिनः।
दृढाः सङ्ग्राममध्येषु केचिदासन् न विह्वलाः। करिणां बृंहतां युद्धे शङ्खदुन्दुभिनिस्वनैः।
ज्याक्षेपशरवर्षाणां शस्त्राणाञ्च सहिष्णवः। आशंसन्तः परान् जेतुं जितश्वासा जितव्यथाः।
हयाः पराजिताः शीघ्रा भारद्वाजरथोद्वहाः। ते स्म रुक्मरथे युक्ता नरवीरसमाहिताः।
कथं नाभ्यतरंस्तात पाण्डवानामनीकिनीं। जातरूपपरिष्कारमास्थाय रथमुत्तमं। २८०
भारद्वाजः किमकरोत् शूरसंक्रन्दनो युधि। विद्यां यस्योपजीवन्ति सर्व्वलोकधनुर्द्धराः।
स सत्यसन्धो बलवान् द्रोणः किमकरोद्युधि। दिवि शक्रमिव श्रेष्ठं महामात्रं धनुर्भृतां।
के नु ते रौद्रकर्म्माणं युद्धे प्रत्युद्ययू रथाः। ननु रुक्मरथं दृष्ट्वा प्राद्रवन्ति स्म पाण्डवाः।
दिव्यमस्त्रं विकुर्व्वाणं रणे तस्मिन्महाबलं। उताहो सर्व्वसैन्येन धर्म्मराजः सहानुजः।
पाञ्चाल्यप्रग्रहो द्रोणं सर्व्वतः पर्य्यवारयत्। नूनमावारयत् पार्थो रथिनोऽन्यानजिह्मगैः। २८५
ततो द्रोणं समारोहत् पार्षतः पापकर्म्मकृत्। न ह्यहं परिपश्यामि बधे कञ्चन शुष्मिणः।
धृष्टद्युम्नादृते रौद्रात् पाल्यमानात् किरीटिना। तैर्वृतः सर्व्वतः शूरैः पाञ्चाल्यापसदस्ततः।

कैकेयैश्चेदिकारूषैर्मत्स्यैरन्यैश्च भूमिपैः। व्याकुलीकृतमाचार्य्यं पिपीलैरुरगं यथा।
कर्म्मण्यसुकरे सक्तं जघानेति मतिर्मम। योऽधीत्य चतुरो वेदान् साङ्गानाख्यानपञ्चमान्।
ब्राह्मणानां प्रतिष्ठासीत् स्रोतसामिव सागरः। क्षत्रस्य ब्रह्म चैवेह योऽभ्यतिष्ठत् परन्तपः। २९०
स कथं ब्राह्मणो वृद्धः शस्त्रेण बधमाप्तवान्। अमर्षणो मर्षितवान् क्लिश्यमानः सदा मया।
अनर्हमाणः कौन्तेयात् कर्म्मणस्तस्य तत्फलं। यस्य कर्म्मानुजीवन्ति लोके सर्व्वधनुर्भृतः।
स सत्यसन्धः सुकृती श्रीकामैर्निहतः कथं। दिवि शक्र इव श्रेष्ठो महासत्त्वो महाबलः।
स कथं निहतः पार्थैः क्षुद्रमत्स्यैर्यथा तिमिः। क्षिप्रहस्तश्च बलवान् दृढधन्वारिमर्द्दनः।
न यस्य विजयाकाङ्क्षी विषयं प्राप्य जीवति। यन्द्वौ नजहतः शब्दौ जीवमानं कदाचन। २९५
ब्राह्मश्च वेदकामानां ज्याघोषश्च धनुष्मतां। अदीनं पुरुषव्याघ्रं श्रीमन्तमपराजितं।
नाहं मृष्ये हतं द्रोणं सिंहद्विरदविक्रमं। कथं सञ्जय दुर्द्धर्षमनाधृष्ययशोबलं।
पश्यतां पुरुषेन्द्राणां समरे पार्षतोऽवधीत्। के पुरस्तादयुध्यन्त रक्षन्तो द्रोणमन्तिकात्।
के तु पश्चादवर्त्तन्त गच्छन्तो दुर्लभां गतिं। केऽरक्षन् दक्षिणं चक्रं सव्यं के च महात्मनः।
पुरस्तात् के च वीरस्य युध्यमानस्य संयुगे। के च तत्र तनूस्त्यक्त्वा प्रतीपं मृत्युमाव्रजन्। ३००
द्रोणस्य समरे वीराः केऽकुर्व्वन्त परां गतिं। कच्चिन्नूनं भयान्मन्दाः क्षत्रिया व्यजहन् रणे।
रक्षितारस्ततः शून्ये कच्चिन्नैको हतः परैः। न स पृष्ठमवत्रासाद्रणे द्रोणः प्रदर्शयेत्।
परामप्यापदं प्राप्य कथं स निहतः परैः। एतदार्य्येण कर्त्तव्यं कृच्छ्रास्वापत्सु सञ्जय।
पराक्रमेद्यथा शक्त्या तच्च तस्मिन् प्रतिष्ठितं। मुह्यते मे मनस्तात कथा तावन्निवर्त्यतां।
भूयस्तु लब्धसंज्ञस्त्वां परिप्रक्ष्यामि सञ्जय। ३०५
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि धृतराष्ट्रशोके नवमोऽध्यायः॥ ९॥

॥ वैशम्पायन उवाच॥ एवं पृष्ट्वा सूतपुत्रं हृच्छोकेनार्द्दितो भृशं। जये निराशः पुत्राणां धृतराष्ट्रोऽपतत् क्षितौ।
तं विसंज्ञं निपतितं सिषिचुः परिचारकाः। जलेनात्यर्थशीतेन वीजन्तः पुण्यगन्धिना।
पतितं चैनमालोक्य समन्ताद्भरतस्त्रियः। परिवव्रुर्म्महाराजमस्पृशंश्चैव पाणिभिः।
उत्थाप्य चैनं शनकै राजानं पृथिवीतलात्। आसनं प्रापयामासुर्व्बाष्पकण्ठ्यो वराङ्गनाः।
आसनं प्राप्य राजा तु मूर्च्छयाभिपरिप्लुतः। निश्चेष्टोऽतिष्ठत तदा वीज्यमानः समन्ततः। ३१०
स लब्ध्वा शनकैः संज्ञां वेपमानो महीपतिः। पुनर्गावल्गणिं सूतं पर्य्यपृच्छद्यथातथं।
॥ धृतराष्ट्र उवाच॥ यः स उद्यन्निवादित्यो ज्योतिषा प्रणुदंस्तमः। अजातशत्रुमायान्तं कस्तं द्रोणादवारयत्।
प्रभिन्नमिव मातङ्गं यथा क्रुद्धं तरस्विनं। प्रसन्नवदनं दृष्ट्वा प्रतिद्विरदगामिनं।
वाशितासङ्गमे यद्वदजय्यं प्रतियूथपैः। निजघान रणे वीरान् वीरः पुरुषसत्तमः।
यो ह्येको हि महाबाहुर्निर्द्दहेद्घोरचक्षुषा। कृत्स्नं दुर्य्योधनबलं धृतिमान् सत्यसङ्गरः। ३१५
चक्षुर्हणं जये सक्तमिष्वासधरमच्युतं। दान्तं बहुमतं लोके के शूराः समवारयन्।

के दुष्प्रधर्षं राजानमिष्वासधरमच्युतं । समासेदुर्नरव्याघ्रं कौन्तेयं तत्र मामकाः ।
तरसैवाभिपद्याथ यो वै द्रोणमुपाद्रवत् । यः करोति महत्कर्म्म शत्रूणां वै महाबलः ।
महाकायो महोत्साहो नागायुतसमो बले । तं भीमसेनमायान्तं के शूराः पर्य्यवारयन् ।
यदायाज्जलदप्रख्यो रथः परमवीर्य्यवान् । पर्ज्जन्य इव बीभत्सुस्तुमुलामशनीमिव ।　　३२०
विसृजन् शरजालानि वर्षाणि मघवानिव । अवस्फूर्ज्जन् दिशः सर्व्वास्तलनेमिस्वनेन च ।
चापविद्युत्प्रभो घोरो रथगुल्मबलाहकः । रथनेमिघोषस्तनितः शरशब्दातिबन्धुरः ।
रोषनिर्ज्जितजीमूतो मनोऽभिप्रायशीघ्रगः । मर्म्मातिगो बाणधरस्तुमुलः शोणितोदकैः ।
संप्लावयन् दिशः सर्व्वा मानवैरन्तको यथा । भीमनिस्वनितो रौद्रो दुर्य्योधनपुरोगमान् ।
युद्धेऽभ्यषिञ्चद्विजयो गार्द्ध्रपत्रैः शिलाशितैः । गाण्डीवं धारयन् धीमान् कीदृशं वो मनस्तदा ।　　३२५
इषुसम्बाधमाकाशं कुर्व्वन् कपिवरध्वजः । यदायात् कथमासीत्तु तदा पार्थं समीक्ष्य तं ।
कच्चिद्गाण्डीवशब्देन प्रणाश्यत तव वै बलं । यद्वः स भैरवं कुर्व्वन्नर्ज्जुनो भृशमभ्ययात् ।
कच्चिन्नापानुदत्प्राणानिषुभिर्व्वो धनञ्जयः । वातो मेघानिवाविध्यन् प्रावाच्छरवणानि च ।
को हि गाण्डीवधन्वानं रणे सोढुं नरोऽर्हति । यमुपश्रुत्य सेनाग्रे जनः सर्व्वो विदीर्य्यते ।
यत्सेनाः समकम्पन्त यद्वीरानस्पृशद्भयं । के तत्र नाजहुर्द्रोणं के क्षुद्राः प्राद्रवन् भयात् ।　　३३०
के वा तत्र तनूंस्त्यक्त्वा प्रतीपं मृत्युमाव्रजन् । अमानुषाणां जेतारं युद्धेष्वपि धनञ्जयं ।
न च वेगं सिताश्वस्य संसहिष्यन्ति मामकाः । गाण्डीवस्य च निर्घोषं प्रावृड्जलदनिःस्वनं ।
विष्वक्सेनो यस्य यन्ता यस्य योद्धा धनञ्जयः । अशक्यः स रथो जेतुं मन्ये देवासुरैरपि ।
सुकुमारो युवा शूरो दर्शनीयस्र पाण्डवः । मेधावी निपुणो धीमान् युधि सत्यपराक्रमः ।
आरावं विपुलं कुर्व्वन् व्यथयन् सर्व्वसैनिकान् । यदायान्नकुलो द्रोणं के शूराः पर्य्यवारयन् ।　　३३५
आशीविष इव क्रुद्धः सहदेवो यदाऽभ्ययात् । कदनं करिष्यंश्छत्रूणां श्वेताश्वो दुर्ज्जयो युधि ।
आर्य्यव्रतममोघेषुं ह्रीमन्तमपराजितं । सहदेवं समायान्तं के शूराः पर्य्यवारयन् ।
यस्तु सौवीरराजस्य प्रमथ्य महतीं चमूं । आदत्त महिषीं भोजां काम्यां सर्व्वाङ्गशोभनां ।
सत्यं धृतिश्च शौर्य्यञ्च ब्रह्मचर्य्यञ्च केवलं । सर्व्वाणि युयुधाने च नित्यानि पुरुषर्षभे ।
बलिनं सत्यकर्म्माणमदीनमपराजितं । वासुदेवसमं युद्धे वासुदेवादनन्तरं ।　　३४०
धनञ्जयोपदेशेन श्रेष्ठमिष्वस्त्रकर्म्मणि । पार्थेन सममस्त्रेषु कस्तं द्रोणादवारयत् ।
वृष्णीनां प्रवरं वीरं शूरं सर्वधनुष्मतां । रामेण सममस्त्रेषु यशसा विक्रमेण च ।
सत्यं धृतिर्म्मतिः शौर्य्यं ब्राह्म्यं चास्त्रमनुत्तमं । सात्वते तानि सर्व्वाणि त्रैलोक्यमिव केशवे ।
तदेवं गुणसम्पन्नं दुर्व्वारमपि दैवतैः । समासाद्य महेष्वासं के शूराः पर्य्यवारयन् ।
पाञ्चालेषूत्तमं वीरमुत्तमाभिजनप्रियं । नित्यमुत्तमकर्म्माणमुत्तमौजसमाहवे ।　　३४५
युक्तं धनञ्जयहिते ममानर्थाय चोत्थितं । यमवैश्रवणादित्यमहेन्द्रवरुणोपमं ।

महारथं समाख्यातं द्रोणायोद्यतमाहवे। त्यजन्तं तुमुले प्राणान् के शूराः समवारयन्।
एकोऽपसृत्य चेदिभ्यः पाण्डवान् यः समाश्रितः। धृष्टकेतुं समायान्तं द्रोणं कस्तं न्यवारयत्।
योऽवधीत् केतुमान् वीरो राजपुत्तं दुरासदं। अपक्रान्तं गिरिद्वारे द्रोणात् कस्तमवारयत्।
स्त्रीपुंसयोर्नरव्याघ्रो यः सवेद गुणागुणान्। शिखण्डिनं याज्ञसेनिमम्लानमनसं युधि। ११०
देवव्रतस्य समरे हेतुं मृत्योर्महात्मनः। द्रोणायाभिमुखं यान्तं के वीराःपर्य्यवारयन्।
वृष्णीनां प्रवरं शूरं वरं सर्व्वधनुष्मतां। यस्मिन्नभ्यधिका वीरे गुणाः सर्व्वे धनञ्जयात्।
यस्मिन्नस्त्राणि सत्यञ्च ब्रह्मचर्य्यञ्च सर्व्वदा। वासुदेवसमं वीर्य्ये धनञ्जयसमं बले।
तेजसादित्यसदृशं वृहस्पतिसमं मतौ। अभिमन्युं महात्मानं व्यात्ताननमिवान्तकं।
द्रोणायाभिमुखं यान्तं के शूराः समवारयन्। तरुणस्तरुणप्रज्ञः सौभद्रः परवीरहा। ११५
यदाभ्यधावद्वै द्रोणं तदासीद्वो मनः कथं। द्रौपदेया नरव्याघ्राः समुद्रमिव सिन्धवः।
यद्द्रोणमाद्रवन् सङ्ख्ये के शूरास्तानवारयन्। ये ते द्वादशवर्षाणि क्रीडामुत्सृज्य बालकाः।
अस्त्रार्थमवसन् भीष्मे बिभ्रतो व्रतमुत्तमं। क्षत्रञ्जयः क्षत्रदेवः क्षत्रवर्म्मा च मानदः।
धृष्टद्युम्नात्मजा वीराः के तान् द्रोणादवारयन्। शतादिशिष्टं यं युद्धे समंमन्यन्त वृष्णयः।
चेकितानं महेष्वासं कस्तं द्रोणादवारयत्। भ्रातरः पञ्च कैकेया धार्म्मिकाः सत्यविक्रमाः। १२०
इन्द्रगोपकसङ्काशा रक्तवर्म्मायुधध्वजाः। मातृष्वसुः सुता वीराः पाण्डवानां जयार्थिनः।
तान् द्रोणं हन्तुमायातान् के वीराः पर्य्यवारयन्। यं योधयन्तो राजानो नाजयन् वारणावते।
षण्मासानपि संरब्धान् जिघांसन्तो युधां पतिं। धनुष्मतां वरं शूरं सत्यसन्धं महाबलं।
द्रोणात् कस्तं नरव्याघ्रं युयुत्सुं पर्य्यवारयत्। यः पुत्त्रं काशिराजस्य वाराणस्यां महारथं।
समरे स्त्रीषु गृध्यन्तं भल्लेनापाहरद्रथात्। धृष्टद्युम्नं महेष्वासं पार्थानां मन्त्रधारिणं। १२५
युक्तं दुर्य्योधनानर्थे सृष्टं द्रोणवधाय च। निर्द्दहन्तं रणे योधान् दारयन्तञ्च सर्व्वशः।
द्रोणाभिमुखमायान्तं के शूराः पर्य्यवारयन्। उत्सङ्ग इव संवृद्धं द्रुपदस्यास्त्रवित्तमं।
शिखण्डिनं शस्त्रगुप्तं के वा द्रोणादवारयन्। य इमां पृथिवीं कृत्स्नां चर्म्मवत् परिवेष्टयेत्।
महता रथघोषेण मुख्यारिघ्नो महारथः। दशाश्वमेधानाजह्रे स्वन्नपानान् सुदक्षिणान्।
निरर्गलान् सर्व्वमेधान् पुत्त्रवत् पालयन्प्रजाः। गङ्गाश्रोतसु यावत्यः सिकतास्ताप्यशेषतः। १३०
तावतीर्गा ददौ वीर उशीनरसुतोऽध्वरे। न पूर्व्वे नापरे चक्रुरिदं केचन मानवाः।
इतीदं चुक्रुशुर्द्देवाः कृते कर्म्मणि दुष्करे। पश्यामस्त्रिषु लोकेषु न तं संस्थास्नुचारिषु।
जातं वापि जनिष्यन्तं द्वितीयञ्चापि साम्प्रतं। अन्यमौशीनराच्छैब्याद्धुरो वोढारमित्युत।
गतिं यस्य न यास्यन्ति मानुषा लोकवासिनः। तस्य नप्तारमायान्तं शैब्यं कः समवारयत्।
विराटस्य रथानीकं मत्स्यस्यामित्रघातिनः। प्रेप्सन्तं समरे द्रोणं के वीराः पर्य्यवारयन्। १३५
सद्यो वृकोदराज्जातो महाबलपराक्रमः। मायावी राक्षसो वीरो यस्मान्मम महद्भयं।

पार्थानां जयकामं तं पुत्राणां मम शत्रवं। घटोत्कचं महाकायं कथं द्रोणाद्वारयत् ।
एते चान्ये च बहवो येषामर्थाय सञ्जय। त्यक्तारः संयुगे प्राणान् किन्तेषामजितं युधि।
येषाञ्च पुरुषव्याघ्रः शार्ङ्गधन्वा व्यपाश्रयः । हितार्थी चापि पार्थानां कथं तेषां पराजयः।
लोकानां गुरुरत्यर्थं लोकनाथः सनातनः। नारायणो रणे नाथो दिव्यो दिव्यात्मवान्प्रभुः। ३८०
यस्य दिव्यानि कर्म्माणि प्रवदन्ति मनीषिणः। तान्यहं कीर्त्तयिष्यामि भक्त्या स्थैर्य्यार्थमात्मनः।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि धृतराष्ट्रवाक्ये दशमोऽध्यायः ॥ १० ॥

॥ धृतराष्ट्र उवाच ॥ शृणु दिव्यानि कर्म्माणि वासुदेवस्य सञ्जय। कृतवान् यानि गोविन्दो यथा नान्यः पुमान् क्वचित्।
संवर्द्धता गोपकुले बालेनैव महात्मना। विख्यापितं बलं बाह्वोस्त्रिषु लोकेषु सञ्जय ।
उच्चैःश्रवस्तुल्यबलं वायुवेगसमं जवे। जघान हयराजानं यमुनावनवासिनं।
दानवं घोरकर्म्माणं गवां मृत्युमिवोत्थितं। वृषरूपधरं बाल्ये भुजाभ्यां निजघान ह। ३८५
प्रलम्बं नरकं जम्भं पीठं वाऽपि महासुरं। मुरञ्चामरसङ्काशमवधीत् पुष्करेक्षणः।
तथा कंसो महातेजा जरासन्धेन पालितः। विक्रमेणैव कृष्णेन सगणः पातितो रणे।
सुनामा रणविक्रान्तः समग्राक्षौहिणीपतिः। भोजराजस्य मध्यमो भ्राता कंसस्य वीर्य्यवान्।
बलदेवद्वितीयेन कृष्णेनामित्रघातिना। तरस्वी समरे दग्धः ससैन्यः शूरसेनराट्।
दुर्व्वासा नाम विप्रर्षिस्तथा परमकोपनः। आराधितः सदारेण स चास्मै प्रददौ वरान्। ३९०
तथा गान्धारराजस्य सुतां वीरः स्वयम्बरे। निर्ज्जित्य पृथिवीपालानावहत् पुष्करेक्षणः।
अमृष्यमाणा राजानो यस्य जात्या हया इव। रथे वैवाहिके युक्ताः प्रतोदेन कृतव्रणाः।
जरासन्धं महाबाहुमुपायेन जनार्द्दनः। परेण घातयामास समग्राक्षौहिणीपतिं।
चेदिराजञ्च विक्रान्तं राजसेनापतिं बली। अर्घे विवदमानञ्च जघान पशुवत्तदा।
सौभं दैत्यपुरं स्वस्थं शाल्वगुप्तं दुरासदं। समुद्रकुक्षौ विक्रम्य पातयामास माधवः। ९५
अङ्गान् वङ्गान् कलिङ्गांश्च मागधान् काशिकोशलान् । वात्स्यगार्ग्यकरूषांश्च पौण्ड्रांश्चाप्यजयद्रणे ।
आवन्त्यान् दाक्षिणात्यांश्च पार्व्वतीयान् दशेरकान्। काश्मीरकानौरसिकान् पिशाचांश्च समुद्गलान्।
काम्बोजान् वाटधानांश्च चोलान् पाण्ड्यांश्च सञ्जय। त्रिगर्त्तान्मालवांश्चैव दरदांश्च सुदुर्ज्जयान्।
नानादिग्भ्यश्च सम्प्राप्तान् खसांश्चैव शकांस्तथा। जितवान् पुण्डरीकाक्षो यवनञ्च सहानुगं।
प्रविश्य मकरावासं यादोभिरभिसंवृतं। जिगाय वरुणं सङ्ख्ये सलिलान्तर्गतं पुरा। ४००
युधि पञ्चजनं हत्वा पातालतलवासिनं। पाञ्चजन्यं हृषीकेशो दिव्यं शङ्खमवाप्तवान्।
खाण्डवे पार्थसहितस्तोषयित्वा हुताशनं। आग्नेयमस्त्रं दुर्द्धर्षं चक्रं लेभे महाबलः।
वैनतेयं समारुह्य त्रासयित्वाऽमरावतीं। महेन्द्रभवनाद्वीरः पारिजातमुपानयत्।
तच्च मर्षितवान् शक्रो जानंस्तस्य पराक्रमं। राज्ञां चाप्यजितं कञ्चित् कृष्णेनेह न शुश्रुम।
यच्च तन्महदाश्चर्य्यं सभायां मम सञ्जय। कृतवान् पुण्डरीकाक्षः कस्तदन्य इहार्हति। ४०५

लब्धभक्त्या प्रसन्नोऽहमद्राक्षं कृष्णमीश्वरं। तस्मै सुविदितं सर्व्वं प्रत्यक्षमिव चागमं।
नान्तं विक्रमयुक्तस्य बुद्ध्या युक्तस्य वा पुनः। कर्म्मणा शक्यते गन्तुं हृषीकेशस्य सञ्जय।
तथा गदस्य शाम्बस्य प्रद्युम्नोऽथ विदूरथः। अगावहोऽनिरुद्धश्च चारुदेष्णः ससारणः।
उल्मुको निशठश्चैव झिल्लीबभ्रुश्च वीर्य्यवान्। पृथुश्च विपृथुश्चैव शमीकोऽथारिमेजयः।
एतेऽन्ये बलवन्तश्च वृष्णिवीराः प्रहारिणः। कथञ्चित्पाण्डवानीकं श्रयेयुः समरे स्थिताः। ४१०
आहूता वृष्णिवीरेण केशवेन महात्मना। ततः संशयितं सर्व्वं भवेदिति मतिर्मम।
नागायुतबलो वीरः कैलासशिखरोपमः। वनमाली हली रामस्तत्र यत्र जनार्द्दनः।
यमाहुः सर्व्वपितरं वासुदेवं द्विजातयः। अपि वा ह्येष पाण्डूनां योत्स्यतेऽर्थाय सञ्जय।
स यदा तात सन्नह्येत् पाण्डवार्थाय सञ्जय। न तदा प्रतिसंयोद्धा भविता तस्य कश्चन।
यदि स्म कुरवः सर्व्वे जयेयुर्नाम पाण्डवान्। वार्ष्णेयोऽर्थाय तेषां वै गृह्णीयाच्छस्त्रमुत्तमं। ४१५
ततः सर्व्वान्नरव्याघ्रो हत्वा नरपतीन् रणे। कौरवांश्च महाबाहुः कुन्त्यै दद्यात् स मेदिनीं।
यस्य यन्ता हृषीकेशो योद्धा यस्य धनञ्जयः। रथस्य तस्य कः संख्ये प्रत्यनीको भवेद्रथः।
न केनचिदुपायेन कुरूणां दृश्यते जयः। तस्मान्मे सर्व्वमाचक्ष्व यथा युद्धमवर्त्तत।
अर्ज्जुनः केशवस्यात्मा कृष्णोऽप्यात्मा किरीटिनः। अर्ज्जुने विजयो नित्यं कृष्णे कीर्त्तिश्च शाश्वती।
सर्व्वेष्वपि च लोकेषु बीभत्सुरपराजितः। प्राधान्येनैव भूयिष्ठममेयाः केशवे गुणाः। ४२०
मोहात् दुर्य्योधनः कृष्णं यो न वेत्तीह केशवं। मोहितो दैवयोगेन मृत्युपाशपुरस्कृतः।
न वेद कृष्णं दाशार्हमर्ज्जुनं चैव पाण्डवं। पूर्व्वदेवौ महात्मानौ नरनारायणावुभौ।
एकात्मानौ द्विधाभूतौ दृश्येते मानवैर्भुवि। मनसाऽपि हि दुर्द्धर्षौ सेनामेतां यशस्विनौ।
नाशयेतामिहेच्छन्तौ मानुषत्वाच्च नेच्छतः। युगस्येव विपर्य्यासो लोकानामिव मोहनं।
भीष्मस्य च वधस्तात द्रोणस्य च महात्मनः। न ह्येव ब्रह्मचर्य्येण न वेदाध्ययनेन च। ४२५
न क्रियाभिर्न चास्त्रेण मृत्योः कश्चिन्निवार्य्यते। लोकसम्भावितौ वीरौ कृतास्त्रौ युद्धदुर्म्मदौ।
भीष्मद्रोणौ हतौ श्रुत्वा किं नु जीवामि सञ्जय। यान्तां श्रियमसूयाम पुरा दृष्ट्वा युधिष्ठिरे।
अद्य तामनुजीवामो भीष्मद्रोणवधेन ह। मत्कृते चाप्यनुप्राप्तः कुरूणामेष सङ्क्षयः।
पक्वानां हि वधे सूत वज्रायन्ते तृणान्यपि। अनन्तमिदमैश्वर्य्यं लोके प्राप्तो युधिष्ठिरः।
यस्य कोपान्महेष्वासौ भीष्मद्रोणौ निपातितौ। प्राप्तः प्रकृतितो धर्म्मो न धर्म्मो मामकान् प्रति। ४३०
क्रूरः सर्व्वविनाशाय कालोऽसौ नातिवर्त्तते। अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभिः।
अन्यथैव विपद्यन्ते दैवादिति मतिर्मम। तस्मादपरिहार्य्येऽर्थे सम्प्राप्ते कृच्छ्र उत्तमे।
अपारणीये दुश्चिन्त्ये यथाभूतं प्रचक्ष्व मे।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि धृतराष्ट्रविलापे एकादशोऽध्यायः॥ ११ ॥
॥ सञ्जय उवाच ॥ हन्त ते कथयिष्यामि सर्व्वं प्रत्यक्षदर्शिवान्। यथा सन्न्यपतद्द्रोणः सादितः पाण्डुसृञ्जयैः।

सेनापतित्वं सम्प्राप्य भारद्वाजो महारथः । मध्ये सर्व्वस्य सैन्यस्य पुत्त्रं ते वाक्यमब्रवीत् । ४२५
यत् कौरवाणामृषभादापगेयादनन्तरं । सैनापत्येन मां राजन्नद्य सत्कृतवानसि ।
सदृशं कर्म्मणस्तस्य फलमाप्नुहि भारत । करोमि कामं कन्तेऽद्य प्रवृणीष्व यमिच्छसि ।
ततो दुर्य्योधनो राजा कर्णदुःशासनादिभिः । तमथोवाच दुर्द्धर्षमाचार्य्यं जयतां वरं ।
ददासि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरं । गृहीत्वा रथिनां श्रेष्ठं मत्समीपमिहानय ।
ततः कुरूणामाचार्य्यः श्रुत्वा पुत्त्रस्य ते वचः । सैन्यं प्रहर्षयन् सर्व्वमिदं वचनमब्रवीत् । ४३०
धन्यः कुन्तीसुतो राजा यस्य ग्रहणमिच्छसि । न वधार्थं सुदुर्द्धर्ष वरमन्यं प्रयाचसे ।
किमर्थञ्च नरव्याघ्र न वधं तस्य काङ्क्षसि । नाशंससि क्रियामेतां मत्तो दुर्य्योधन ध्रुवं ।
आहोस्विद्धर्म्मराजस्य द्वेष्टा तस्य न विद्यते । यदिच्छसि त्वं जीवन्तं कुलं रक्षसि चात्मनः ।
अथ वा भरतश्रेष्ठ निर्ज्जित्य युधि पाण्डवान् । राज्यं सम्प्रति दत्त्वा च सौभ्रात्रं कर्त्तुमिच्छसि ।
धन्यः कुन्तीसुतो राजा सुजातञ्चास्य धीमतः । अजातशत्रुता तस्य सत्यं यत् स्निह्यते भवान् । ४३५
द्रोणेन त्वेवमुक्तस्य तव पुत्त्रस्य भारत । सहसा निःसृतो भावो योऽस्य नित्यं हृदि स्थितः ।
नाकारो गूहितुं शक्यो बृहस्पतिसमैरपि । तस्मात्तव सुतो राजन् प्रहृष्टो वाक्यमब्रवीत् ।
बधे कुन्तीसुतस्याजौ नाचार्य्य विजयो मम । हते युधिष्ठिरे पार्थो हन्यात् सर्व्वान् हि नो ध्रुवं ।
न च शक्या रणे सर्व्वे निहन्तुममरैरपि । य एव तेषां शेषः स्यात् स एवास्मानशेषयेत् ।
सत्यप्रतिज्ञे त्वानीते पुनर्द्यूतेन निर्ज्जिते । पुनर्यास्यन्त्यरण्याय पाण्डवास्तमनुव्रताः । ४४०
सोऽयं मम जयो व्यक्तं दीर्घकालं भविष्यति । अतो न बधमिच्छामि धर्म्मराजस्य कर्हिचित् ।
तस्य जिह्ममभिप्रायं ज्ञात्वा द्रोणोऽर्थतत्त्ववित् । तं वरं सान्तरं तस्मै ददौ सञ्चिन्त्य बुद्धिमान् ।
॥ द्रोण उवाच ॥ न चेद्युधिष्ठिरं वीरः पालयत्यर्ज्जुनो युधि । मन्यस्व पाण्डवश्रेष्ठमानीतं वशमात्मनः ।
न हि शक्यो रणे पार्थः सेन्द्रैर्द्देवासुरैरपि । प्रत्युद्यातुमतस्तात नैतदामर्षयाम्यहं ।
असंशयं स शिष्यो मे मत्पूर्व्वश्चास्त्रकर्म्मणि । तरुणः सुकृतैर्युक्त एकायनगतश्च ह । ४४५
अस्त्राणीन्द्राच्च रुद्राच्च भूयः स समवाप्तवान् । अमर्षितश्च ते राजन् ततो नामर्षयाम्यहं ।
स चापक्रमतां युद्धात् येनोपायेन शक्यते । अपनीते ततः पार्थे धर्म्मराजो जितस्त्वया ।
ग्रहणे हि जयस्तस्य न बधे पुरुषर्षभ । एतेन चाप्युपायेन ग्रहणं समुपैष्यति ।
अहं गृहीत्वा राजानं सत्यधर्म्मपरायणं । आनयिष्यामि ते राजन् वशमद्य न संशयः ।
यदि स्थास्यति सङ्ग्रामे मुहूर्त्तमपि मेऽग्रतः । अपनीते नरव्याघ्रे कुन्तीपुत्त्रे धनञ्जये । ४५०
फाल्गुनस्य समक्षन्तु न हि शक्यो युधिष्ठिरः । ग्रहीतुं समरे राजन् सेन्द्रैरपि सुरासुरैः ।
॥ सञ्जय उवाच ॥ सान्तरं तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे । गृहीतं तममन्यन्त तव पुत्त्राः सुवालिशाः ।
पाण्डवेषु च सापेक्षं द्रोणं जानाति ते सुतः । ततः प्रतिज्ञास्थैर्य्यार्थं स मन्त्रो बहुलीकृतः ।

ततो दुर्य्योधनेनापि ग्रहणं पाण्डवस्य तत्। सैन्यस्थानेषु सर्व्वेषु सुघोषितमरिन्दम।

इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि द्रोणवरदाने द्वादशोऽध्यायः॥ १२ ॥

॥ सञ्जय उवाच ॥ अन्तरे तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे। ततस्ते सैनिकाः श्रुत्वा तं युधिष्ठिरनिग्रहं। ४६५

सिंहनादरवांश्चक्रुर्व्वाणशङ्खरवैः सह। तत्तु सर्व्वं यथान्यायं धर्म्मराजेन भारत।

आप्तैराशु परिज्ञातं भरद्वाजचिकीर्षितं। ततः सर्व्वान् समानाय्य भ्रातॄनन्यांश्च सर्व्वशः।

अब्रवीद्धर्म्मराजस्तु धनञ्जयमिदं वचः। श्रुतन्ते पुरुषव्याघ्र द्रोणस्याद्य चिकीर्षितं।

यथा तन्न भवेत् सत्यं तथा नीतिर्व्विधीयतां। सान्तरं हि प्रतिज्ञातं द्रोणेनामित्रकर्षिणा।

तच्चान्तरं महेष्वास त्वयि तेन समाहितं। स त्वमद्य महाबाहो युध्यस्व मदनन्तरं। ४७०

यथा दुर्य्योधनः कामं नेमं द्रोणादवाप्नुयात्।

॥ अर्ज्जुन उवाच ॥ यथा मे न वधः कार्य्य आचार्य्यस्य कदाचन। तथा तव परित्यागे न मे राजंश्चिकीर्षितं।

अप्येवं पाण्डव प्राणानुत्सृजेयमहं युधि। प्रतीपो नाहमाचार्य्ये भवेयं वै कथञ्चन।

त्वां निगृह्याहवे राज्यं धार्त्तराष्ट्रोऽयमिच्छति। न स तं जीवलोकेऽस्मिन् कामं प्राप्येत् कथञ्चन।

प्रपतेत् द्यौः सनक्षत्रा पृथिवी शकलीभवेत्। न त्वां द्रोणो निगृह्णीयात् जीवमाने मयि ध्रुवं। ४७५

यदि तस्य रणे साह्यं कुरुते वज्रभृत् स्वयं। विष्णुर्व्वा सहितो देवैर्न त्वां प्राप्स्यत्यसौ मृधे।

मयि जीवति राजेन्द्र न भयं कर्त्तुमर्हसि। द्रोणादस्त्रभृतां श्रेष्ठात् सर्व्वशस्त्रभृतामपि।

अन्यच्च ब्रूयां राजेन्द्र प्रतिज्ञा मम निश्चला। न स्मराम्यनृतां वाचं न स्मरामि पराजयं।

न स्मरामि प्रतिश्रुत्य किञ्चिदप्यनृतं कृतं।

॥ सञ्जय उवाच ॥ ततः शङ्खाश्च भेर्य्यश्च मृदङ्गाश्चानकैः सह। प्रावाद्यन्त महाराज पाण्डवानां निवेशने। ४८०

सिंहनादश्च सञ्जज्ञे पाण्डवानां महात्मनां। धनुर्ज्यातलशब्दश्च गगनस्पृक् सुभैरवः।

तं श्रुत्वा शङ्खनिर्घोषं पाण्डवस्य महौजसः। त्वदीयेष्वप्यनीकेषु वादित्राण्यभिजघ्निरे।

ततो व्यूढान्यनीकानि तव तेषाञ्च भारत। शनैरुपेयुरन्योऽन्यं योत्स्यमानानि संयुगे।

ततः प्रववृते युद्धं तुमुलं लोमहर्षणं। पाण्डवानां कुरूणाञ्च द्रोणपाञ्चालयोरपि।

यतमानाः प्रयत्नेन द्रोणानीकविशातने। न शेकुः सृञ्जया युद्धे तद्धि द्रोणेन पालितं। ४८५

तथैव तव पुत्रस्य रथोदाराः प्रहारिणः। न शेकुः पाण्डवीं सेनां पाल्यमानां किरीटिना।

आस्तां ते स्तिमिते सेने रक्ष्यमाणे परस्परं। सम्प्रसुप्ते यथा नक्तं वनराज्यौ सुपुष्पिते।

ततो रुक्मरथो राजन्नर्क्केणेव विराजता। वरूथिनीं विनिष्पिष्य व्यचरत् पृतनान्तरे।

तमुद्यतरथेनैकमाशुकारिणमाहवे। अनेकमिव सन्त्रासं मेनिरे पाण्डुसृञ्जयाः।

तेन मुक्ताः शरा घोरा विचेरुः सर्व्वतो दिशः। त्रासयन्तो महाराज पाण्डवेयस्य वाहिनीः। ४९०

मध्यन्दिनमनुप्राप्तो गभस्तिशतसंवृतः। यथा दृश्येत घर्म्मांशुस्तथा द्रोणो व्यदृश्यत।

न चैनं पाण्डवेयानां कश्चिच्छक्नोति भारत। वीक्षितुं समरे क्रुद्धं महेन्द्रमिव दानवः।

मोहयित्वा ततः सैन्यं भारद्वाजः प्रतापवान् । धृष्टद्युम्नबलं तूर्णं व्यधमन्निशितैः शरैः ।
स दिशः सर्व्वतो दृष्ट्वा संहत्य रुक्मजिह्मगैः । पार्षतो यत्र तत्रैव ममर्द्द पाण्डुवाहिनीं ।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि युधिष्ठिरग्रहणप्रतिज्ञायां त्रयोदशोऽध्यायः ॥ १३ ॥

॥ सञ्जय उवाच ॥ ततः स पाण्डवानीके जनयंस्तुमुलं महत् । व्यचरत् पृतनां द्रोणो दहन् कक्षमिवानलः । ४९५
निर्द्दहन्तमनीकानि साक्षादग्निमिवोत्थितं । दृष्ट्वा रुक्मरथं क्रुद्धं समकम्पन्त सृञ्जयाः ।
प्रततं त्वस्यतः सङ्ख्ये धनुषोऽस्याशुकारिणः । ज्याघोषः शुश्रुवेऽत्यर्थं विस्फूर्ज्जितमिवाशनेः ।
रथिनः सादिनश्चैव नागानश्वान् पदातिनः । रौद्रा हस्तवता मुक्ताः संमृद्नन्ति स्म सायकाः ।
नानद्यमानः पर्ज्जन्यः सानिलः शुचिसंक्षये । अश्मवर्षमिवावर्षन् परेषामावहद्भयं ।
विचरन् स तदा राजन् सेनाः सङ्क्षोभयन् प्रभुः । वर्द्धयामास सन्त्रासं शात्रवाणाममानुषं । ५००
तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतं । भ्रमद्रथाम्बुदे तस्मिन् दृश्यते स्म पुनः पुनः ।
स वीरः सत्यवान् प्राज्ञो धर्म्मनित्यः सदा पुनः । युगान्तकाले संक्रुद्धो रौद्रां प्रावर्त्तयन्नदीं ।
अमर्षवेगप्रभवां क्रव्यादगणसङ्कुलां । बलौघैः सर्व्वतः पूर्णां वीरवृक्षापहारिणीं ।
शोणितोदां रथावर्त्तां हस्त्यश्वकृतरोधसां । कवचोत्पलसंयुक्तां मांसपङ्कसमाकुलां ।
मेदोमज्जास्थिसिकतामुष्णीषवरफेनिलां । सङ्ग्रामजलदापूर्णां प्रासमत्स्यसमाकुलां । ५०५
नरनागाश्वकलिलां शरवेगौघवाहिनीं । शरीरदारुसङ्घट्टां रथकच्छपसङ्कुलां ।
उत्तमाङ्गोपलतटां निस्त्रिंशझषसङ्कुलां । रथनागह्रदोपेतां नानाभरणभूषितां ।
महारथशतावर्त्तां भूमिरेणूर्म्मिमालिनीं । महावीर्य्यवतां सङ्ख्ये सुतरां भीरुदुस्तरां ।
शरीरशतसम्बाधां कङ्कगृध्रनिषेवितां । महारथसहस्राणि नयन्तीं यमसादनं ।
शूरव्यालसमाकीर्णां प्राणिराजिनिषेवितां । छिन्नच्छत्रमहाहंसां मुकुटाण्डजसेवितां । ५१०
चक्रकूर्म्मां गदानक्रां शरक्षुद्रझषाकुलां । बकगृध्रसृगालानां घोरसङ्घैर्निषेवितां ।
निहतान् प्राणिनः सङ्ख्ये द्रोणेन बलिना रणे । वहन्तीं पितृलोकाय शतशो राजसत्तम ।
शरीरशतसम्बाधां केशशैवलशाद्वलां । नदीं प्रावर्त्तयद्राजन् भीरूणां भयवर्द्धिनीं ।
तर्ज्जयन्तमनीकानि तानि तानि महारथं । सर्व्वतोऽभ्यद्रवन्द्रोणं युधिष्ठिरपुरोगमाः ।
तानभिद्रवतः शूरांस्तावका दृढविक्रमाः । सर्व्वतः प्रत्यगृह्णन्त तदभूल्लोमहर्षणं । ५१५
शतमायस्तु शकुनिः सहदेवं समाद्रवत् । सनियन्तृध्वजरथं विव्याध निशितैः शरैः ।
तस्य माद्रीसुतः केतुं धनुः सूतं हयानपि । नातिक्रुद्धः शरैश्छित्वा षष्ट्या विव्याध सौबलं ।
सौबलस्तु गदां गृह्य प्रचस्कन्द रथोत्तमात् । स तस्य गदया राजन् रथात् सूतमपातयत् ।
ततस्तौ विरथौ राजन् गदाहस्तौ महाबलौ । चिक्रीडतू रणे शूरौ सशृङ्गाविव पर्व्वतौ ।
द्रोणः पञ्चालराजानं विद्ध्वा दशभिराशुगैः । बहुभिस्तेन चाभ्यस्तस्तं विव्याध ततोऽधिकैः । ५२०
विविंशतिं भीमसेनो विंशत्या निशितैः शरैः । विद्ध्वा नाकम्पयद्वीरस्तदद्भुतमिवाभवत् ।

विविंशतिस्तु सहसा व्यश्वकेतुशरासनं । भीमं चक्रे महाराज ततः सैन्यान्यपूजयन् ।
स तं न मम्षे वीरः शत्रोर्व्विक्रममाहवे । ततोऽस्य गदया दान्तान् हयान् सर्व्वानपातयत् ।
हताश्वात् स रथाद्राजन् गृह्य चर्म्म महाबलः । अभ्ययाद्भीमसेनन्तु मत्तो मत्तमिव द्विपं ।
शल्यस्तु नकुलं वीरः स्वस्त्रीयं प्रियमात्मनः । विव्याध प्रहसन् बाणैर्लालयन् कोपयन्निव । ४२५
तस्याश्वानातपत्रञ्च ध्वजं सूतमथो धनुः । निपात्य नकुलः शङ्खं शङ्खं दध्मौ प्रतापवान् ।
धृष्टकेतुः कृपेणास्तांश्छित्त्वा बहुविधान् शरान् । कृपं विव्याध सप्तत्या लक्ष्म चाप्यहनत्त्रिभिः ।
तं कृपः शरवर्षेण महता समवारयत् । निवार्य्य च रणे विप्रो धृष्टकेतुमयोधयत् ।
सात्यकिः कृतवर्म्माणं नाराचेन स्तनान्तरे । विद्ध्वा विद्ध्वाऽथ सप्तत्या पुनरन्यैः स्मयन्निव ।
तं भोजः सप्तसप्तत्या विद्ध्वा सुनिशितैः शरैः । नाकम्पयत शैनेयं शीघ्रो वायुरिवाचलं । ४३०
सेनापतिः सुशर्म्माणं भृशं मर्म्मस्वताडयत् । स चापि तं तोमरेण जत्रुदेशेऽभ्यताडयत् ।
वैकर्त्तनन्तु समरे विराटः प्रत्यवारयत् । सह मत्स्यैर्महावीर्य्यैस्तदद्भुतमिवाभवत् ।
तत् पौरुषमभूत्तत्र सूतपुत्रस्य दारुणं । यत्सैन्यं वारयामास शरैः सन्नतपर्व्वभिः ।
द्रुपदस्तु स्वयं राजा भगदत्तेन सङ्गतः । तयोर्युद्धं महाराज चित्ररूपमिवाभवत् ।
भगदत्तस्तु राजानं द्रुपदं नतपर्व्वभिः । सनियन्तृध्वजरथं विव्याध पुरुषर्षभः । ४३५
द्रुपदस्तु ततः क्रुद्धो भगदत्तं महारथं । आजघानोरसि क्षिप्रं शरेणानतपर्व्वणा ।
युद्धे योधवरौ लोके सौमदत्तिशिखण्डिनौ । भूतानां त्रासजननं चक्राते ऽस्त्रविशारदौ ।
भूरिश्रवा रणे राजन् याज्ञसेनिं महारथं । महता सायकौघेन छादयामास वीर्य्यवान् ।
शिखण्डी तु ततः क्रुद्धः सौमदत्तिं विशाम्पते । नवत्या सायकानान्तु कम्पयामास भारत ।
राक्षसौ रौद्रकर्म्माणौ हैडिम्बालम्बुषावुभौ । चक्रातेऽत्यद्भुतं युद्धं परस्परजयैषिणौ । ४४०
मायाशतसृजौ दृप्तौ मायाभिरितरेतरौ । अन्तर्हितौ चेरतुस्तौ भृशं विस्मयकारिणौ ।
चेकितानोऽनुविन्देन युयुधे चातिभैरवः । यथा देवासुरे युद्धे बलशक्रौ महाबलौ ।
लक्ष्मणः क्षत्त्रदेवेन विमर्द्दमकरोद्भृशं । यथा विष्णुः पुरा राजन् हिरण्याक्षेण संयुगे ।
ततः प्रचलिताश्वेन विधिवत् कल्पितेन च । रथेनाभ्यपतद्राजन् सौभद्रं पौरवोऽनदत् ।
ततोऽभ्ययात् स त्वरितो युद्धाकाङ्क्षी महाबलः । तेन चक्रे महद्युद्धमभिमन्युररिन्दमः । ४४५
पौरवस्त्वथ सौभद्रं शरव्रातैरवाकिरत् । तस्यार्ज्जुनिर्ध्वजं छत्त्रं धनुश्चोर्व्व्यामपातयत् ।
सौभद्रः पौरवं त्वन्यैर्व्विद्ध्वा सप्तभिराशुगैः । पञ्चभिस्तस्य विव्याध हयान् सूतञ्च सायकैः ।
ततः प्रहर्षयन् सेनां सिंहवद्विनदन्मुहुः । समादत्तार्ज्जुनिस्तूर्णं पौरवान्तकरं शरं ।
तन्तु सन्धितमाज्ञाय सायकं घोरदर्शनं । द्वाभ्यां शराभ्यां हार्द्दिक्यश्चिच्छेद सशरं धनुः ।
तदुत्सृज्य धनुश्छिन्नं सौभद्रः परवीरहा । उद्ववर्ह सितं खड्गमाददानः शरावरं । ४५०
स तेनानेकतारेण चर्म्मणा कृतहस्तवत् । भ्रान्तासिरचरन्मार्गं दर्शयन् वीर्य्यमात्मनः ।

भ्रामितं पुनरुद्भ्रान्तमाधूतं पुनरुत्थितं । चर्म्मनिस्त्रिंशयोराजन् निर्व्विशेषमदृश्यत ।
स पौरवरथस्येषामाप्लुत्य सहसा नदन् । पौरवं रथमास्थाय केशपक्षे परामृशन् ।
जघानास्य पदा सूतमसिनाऽपातयत् ध्वजं । विक्षोभ्याम्भोनिधिं तार्क्ष्यस्तन्नागमिव चाक्षिपत् ।
तमागलितकेशान्तं ददृशुः सर्व्वपार्थिवाः । उक्षाणमिव सिंहेन पात्यमानमचेतसं । ५८५
तमार्ज्जुनिवशं प्राप्तं कृष्यमाणमनाथवत् । पौरवं पतितं दृष्ट्वा नामृष्यत जयद्रथः ।
स बर्हिणं महाराज किङ्किणीशतजालवत् । चर्म्म चादाय खड्गञ्च नदन् पर्य्यपतद्रथात् ।
ततः सैन्धवमालोक्य कार्ष्णिरुत्सृज्य पौरवं । उत्पपात रथात्तूर्णं श्येनवन्निपपात च ।
प्रासपट्टिशनिस्त्रिंशाञ्छत्रुभिः सम्प्रचोदितान् । चिच्छेदाथासिना कार्ष्णिश्चर्म्मणा संरुरोध च ।
सन्दर्शयित्वा सैन्यानां स्वबाहुबलमात्मनः । तमुद्यम्य महाखड्गं चर्म्म चाथ पुनर्व्वली । ५९०
वृद्धक्षत्रस्य दायादं पितुरत्यन्तवैरिणं । ससाराभिमुखः शूरः शार्दूल इव कुञ्जरं ।
तौ परस्परमासाद्य खड्गदन्तनखायुधौ । हृष्टवत् संप्रजह्राते व्याघ्रकेशरिणाविव ।
सम्पातेष्वभिघातेषु निपातेष्वसिचर्म्मणोः । न तयोरन्तरं कश्चिद्ददर्श नरसिंहयोः ।
अवक्षेपोऽसिनिर्ह्रादः शस्त्रान्तरनिदर्शनं । बाह्यान्तरनिपातश्च निर्व्विशेषमदृश्यत ।
बाह्यमभ्यन्तरञ्चैव चरन्तौ मार्गमुत्तमं । ददृशाते महात्मानौ सपक्षाविव पर्व्वतौ । ५९५
ततो विक्षिपतः खड्गं सौभद्रस्य यशस्विनः । शरावरणपक्षान्ते प्रजहार जयद्रथः ।
रुक्मपक्षान्तरे सक्तस्तस्मिन् चर्म्मणि भारत । सिन्धुराजबलोद्धूतः सोऽभज्यत महानसिः ।
भग्नमाज्ञाय निस्त्रिंशं सोऽवप्लुत्य पदानि षट् । अदृश्यत निमेषेण स्वरथं पुनराश्रितः ।
तं कार्ष्णिं समरान्मुक्तमास्थितं रथमुत्तमं । सहिताः सर्व्वराजानः परिवव्रुः समन्ततः ।
ततश्चर्म्म च खड्गञ्च समुत्क्षिप्य महाबलः । ननादार्ज्जुनदायादः प्रेक्षमाणो जयद्रथं । ६००
सिन्धुराजं पराजित्य सौभद्रः परवीरहा । तापयामास तत्सैन्यं भुवनं भास्करो यथा ।
तस्य सर्व्वायसीं शक्तिं शल्यः कनकभूषणां । चिक्षेप समरे घोरां दीप्तामग्निशिखामिव ।
तामवप्लुत्य जग्राह विकोशं चाकरोदसिं । वैनतेयो यथा कार्ष्णिः पतन्तमुरगोत्तमं ।
तस्य लाघवमाज्ञाय सत्त्वञ्चामिततेजसः । सहिताः सर्व्वराजानः सिंहनादमथानदन् ।
ततस्तामेव शल्यस्य सौभद्रः परवीरहा । मुमोच भुजवीर्य्येण वैदूर्य्यविकृताजिरां । ६०५
सा तस्य रथमासाद्य निर्म्मुक्तभुजगोपमा । जघान सूतं शल्यस्य रथाच्चैनमपातयत् ।
ततो विराटद्रुपदौ धृष्टकेतुर्युधिष्ठिरः । सात्यकिः केकयो भीमो धृष्टद्युम्नशिखण्डिनौ ।
यमौ च द्रौपदेयाश्च साधु साध्विति चुक्रुशुः । बाणशब्दाश्च विविधाः सिंहनादाश्च पुष्कलाः ।
प्रादुरासन् हर्षयन्तः सौभद्रमपलायिनं । तन्नामृष्यन्त पुत्रास्ते शत्रोर्व्विजयलक्षणं ।
अथैनं सहसा सर्व्वे समन्तान्निशितैः शरैः । अभ्याकिरन् महाराज जलदा इव पर्व्वतं । ६१०

तेषाञ्च प्रियमन्विच्छन् सूतस्य च पराभवं। आर्त्तायनिरमित्रघ्नः क्रुद्धः सौभद्रमभ्ययात्।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि अभिमन्युपराक्रमे चतुर्द्दशोऽध्यायः ॥ १४ ॥
॥ धृतराष्ट्र उवाच ॥ बहूनि भुवि चित्राणि द्वन्द्वयुद्धानि सञ्जय। त्वयोक्तानि निशम्याहं स्पृहयामि सचक्षुषां।
आश्चर्य्यभूतं लोकेषु कथयिष्यन्ति मानवाः। कुरूणां पाण्डवानाञ्च युद्धं देवासुरोपमं।
न हि मे तृप्तिरस्तीह शृण्वतो युद्धमुत्तमं। तस्मादार्त्तायनेर्युद्धं सौभद्रस्य च शंस मे।
॥ सञ्जय उवाच ॥ सादितं प्रेक्ष्य यन्तारं शल्यः सर्व्वायसीं गदां। समुत्क्षिप्य नदन् क्रुद्धः प्रचस्कन्द रथोत्तमात्। १८५
तं दीप्तमिव कालाग्निं दण्डहस्तमिवान्तकं। जवेनाभ्यपतद्भीमः प्रगृह्य महतीं गदां।
सौभद्रोऽप्यशनिप्रख्यां प्रगृह्य महतीं गदां। एह्येहीत्यब्रवीच्छल्यं यत्नाद्भीमेन वारितः।
वारयित्वा तु सौभद्रं भीमसेनः प्रतापवान्। शल्यमासाद्य समरे तस्थौ गिरिरिवाचलः।
तथैव मद्रराजोऽपि भीमं दृष्ट्वा महाबलः। ससाराभिमुखस्तूर्णं शार्दूल इव कुञ्जरं।
ततस्तूर्य्यनिनादश्च शङ्खानाञ्च सहस्रशः। सिंहनादश्च सञ्जज्ञे भेरीणाञ्च महास्वनः। १९०
पश्यतां शतशो ह्यासीदन्योऽन्यमभिधावतां। पाण्डवानां कुरूणाञ्च साधुसाध्विति निःस्वनः।
न हि मद्राधिपादन्यः सर्व्वराजसु भारत। सोढुमुत्सहते वेगं भीमसेनस्य संयुगे।
तथा मद्राधिपस्यापि गदावेगं महात्मनः। सोढुमुत्सहते लोके को ह्यन्यो युधि वृकोदरात्।
पट्टैर्जाम्बूनदैर्बद्धा बभूव जनहर्षिणी। प्रजज्वाल तदा विद्धा भीमेन महती गदा।
तथैव चरतो मार्गान् मण्डलानि च भागशः। महाविद्युत्प्रतीकाशा शल्यस्य शुशुभे गदा। १९५
तौ वृषाविव नर्द्दन्तौ मण्डलानि विचेरतुः। आवर्त्तितगदाशृङ्गावुभौ शल्यवृकोदरौ।
मण्डलावर्त्तमार्गेषु गदाविहरणेषु च। निर्व्विशेषमभूद्युद्धं तयोः पुरुषसिंहयोः।
ताडिता भीमसेनेन शल्यस्य महती गदा। साग्निज्वाला महारौद्रा तदा तूर्णमशीर्य्यत।
तथैव भीमसेनस्य द्विषताऽभिहता गदा। वर्षाप्रदोषे खद्योतैर्वृतो वृक्ष इवाबभौ।
गदा क्षिप्ता तु समरे मद्रराजेन भारत। व्योम दीपयमाना सा ससृजे पावकं मुहुः। २००
तथैव भीमसेनेन द्विषते प्रेषिता गदा। तापयामास तत्सैन्यं महोल्का पतती यथा।
ते चैवोभे गदे श्रेष्ठे समासाद्य परस्परं। श्वसन्त्यौ नागकन्येव ससृजाते विभावसुं।
नखैरिव महाव्याघ्रौ दन्तैरिव महागजौ। तौ विचेरतुरासाद्य गदाग्राभ्यां परस्परं।
ततो गदाग्राभिहतौ क्षणेन रुधिरोक्षितौ। ददृशाते महात्मानौ पुष्पिताविव किंशुकौ।
शुश्रुवे दिक्षु सर्व्वासु तयोः पुरुषसिंहयोः। गदाभिघातसंह्रादः शक्राशनिरवोपमः। २०५
गदया मद्रराजेन सव्यदक्षिणमाहतः। नाकम्पत तदा भीमो भिद्यमान इवाचलः।
तथा भीमगदावेगैस्ताड्यमानो महाबलः। धैर्य्यान्मद्राधिपस्तस्थौ वज्रैरिव गिरिर्हतः।
आपेततुर्महावेगौ समुच्छ्रितमहागदावुभौ। पुनरन्तरमार्गस्थौ मण्डलानि विचेरतुः।

अथाप्लुत्य पदान्यष्टौ सन्निपत्य गजाविव । सहसा लोहदण्डाभ्यामन्योऽन्यमभिजघ्नतुः ।
तौ परस्परवेगाच्च गदाभ्याञ्च भृशाहतौ । युगपत् पेततुर्वीरौ क्षिताविन्द्रध्वजाविव । ६१०
ततो विह्वलमानं तं निःश्वसन्तं पुनः पुनः । शल्यमभ्यपतत्तूर्णं कृतवर्म्मा महारथः ।
दृष्ट्वा चैनं महाराज गदयाऽभिनिपीडितं । विचेष्टन्तं यथा नागं मूर्च्छयाऽभिपरिप्लुतं ।
ततः सरथमारोप्य मद्राणामधिपं रणे । अपोवाह रणात्तूर्णं कृतवर्म्मा महारथः ।
क्षीववद्विह्वलो वीरो निमेषात् पुनरुत्थितः । भीमोऽपि सुमहाबाहुर्गदापाणिरदृश्यत ।
ततो मद्राधिपं दृष्ट्वा तव पुत्राः पराङ्मुखं । सनागपत्त्यश्वरथाः समकम्पन्त मारिष । ६१५
ते पाण्डवैरर्द्यमानास्तावका जितकाशिभिः । भीता दिशोऽन्वपद्यन्त वातनुन्ना घना इव ।
निर्ज्जित्य पाण्डवेयास्तान् धार्त्तराष्ट्रान् महारथाः । व्यरोचन्त रणे राजन् दीप्यमाना इवाग्नयः ।
सिंहनादान् भृशं चक्रुः शङ्खान् दध्मुश्च हर्षिताः । भेरीश्च वादयामासुर्मृदङ्गांश्चानकैः सह ।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि शल्यापयाने पञ्चदशोऽध्यायः ॥ १५ ॥

॥ सञ्जय उवाच ॥ तद्बलं सुमहद्दीर्णं त्वदीयं प्रेक्ष्य वीर्य्यवान् । दधारैको रणे राजन् वृषसेनोऽस्त्रमायया ।
शरा दश दिशो मुक्ता वृषसेनेन संयुगे । विचरन्तो विनिर्भिद्य नरवाजिरथद्विपान् । ६२०
तस्य दीप्ता महाबाणा विनिश्चेरुः सहस्रशः । भानोरिव महाराज घर्म्मकाले मरीचयः ।
तेनार्द्दिता महाराज रथिनः सादिनस्तथा । निपेतुरुर्व्यां सहसा वातभग्ना इव द्रुमाः ।
हयौघांश्च रथौघांश्च गजौघांश्च महारथः । अपातयद्रणे राजञ्छतशोऽथ सहस्रशः ।
दृष्ट्वा तमेकं समरे विचरन्तमभीतवत् । सहिताः सर्व्वराजानः परिवव्रुः समन्ततः ।
नाकुलिस्तु शतानीको वृषसेनं समभ्ययात् । विव्याध दशभिश्चैनं नाराचैर्म्मर्म्मभेदिभिः । ६२५
तस्य कर्णात्मजश्चापं छित्त्वा केतुमपातयत् । तं भ्रातरं परीप्सन्तो द्रौपदेयाः समभ्ययुः ।
कर्णात्मजं शरव्रातैश्चक्रुरादृश्यमञ्जसा । तान्नदन्तोऽभ्यधावन्त द्रोणपुत्रमुखा रथाः ।
छादयन्तो महाराज द्रौपदेयान् महारथान् । शरैर्न्नानाविधैस्तूर्णं पर्व्वतान् जलदा इव ।
तान् पाण्डवाः प्रत्यगृह्णंस्त्वरिताः पुत्रगृद्धिनः । पाञ्चालाः केकया मत्स्याः सृञ्जयाश्चोद्यतायुधाः ।
तद्युद्धमभवद्घोरं सुमहल्लोमहर्षणं । त्वदीयैः पाण्डुपुत्राणां देवानामिव दानवैः । ६३०
एवं युयुधिरे वीराः संरब्धाः कुरुपाण्डवाः । परस्परमुदीक्षन्तः परस्परकृतागसः ।
तेषां ददृशिरे कोपात् वपूंष्यमिततेजसां । युयुत्सूनामिवाकाशे पतत्त्रिवरभोगिनां ।
भीमकर्णकृपद्रोणद्रौणिपार्षतसात्यकैः । बभासे स रणोद्देशः कालसूर्य्य इवोदितः ।
तदासीत् तुमुलं युद्धं निघ्नतामितरेतरं । महाबलानां बलिभिर्द्दानवानां यथा सुरैः ।
ततो युधिष्ठिरानीकमुदीर्णार्णवनिस्वनं । त्वदीयमवधीत् सैन्यं सम्प्रद्रुतमहारथं । ६३५
तत् प्रभग्नं बलं दृष्ट्वा शत्रुभिर्भृशविक्षतं । अलं द्रुतेन वः शूरा इति द्रोणोऽभ्यभाषत ।
ततः शोणहयः क्रुद्धश्चतुर्दन्त इव द्विपः । प्रविश्य पाण्डवानीकं युधिष्ठिरमुपाद्रवत् ।

तमविध्यच्छितैर्वाणैः कङ्कपत्रैरजिह्मगैः । तस्य द्रोणो धनुश्छित्त्वा तं हन्तुं समुपाद्रवत् ।
चक्ररक्षः कुमारस्तु पाञ्चालानां यशस्करः । दधार द्रोणमायान्तं वेलेव सरितां पतिं ।
द्रोणं निवारितं दृष्ट्वा कुमारेण द्विजर्षभं । सिंहनादरवो ह्यासीत् साधु साध्विति भाषितं । ६४०
कुमारस्तु ततो द्रोणं सायकेन महाहवे । विव्याधोरसि संक्रुद्धः सिंहवच्चानदन्मुहुः ।
संवार्य्य तु रणे द्रोणं कुमारस्य महाबलः । शरैरनेकसाहस्रैः कृतहस्तो जितक्लमः ।
तं शूरमार्य्यव्रतिनं मन्त्रास्त्रकृतनिश्रमं । चक्ररक्षं परामृद्नात् कुमारं द्विजपुङ्गवः ।
स मध्यं प्राप्य सैन्यानां सर्व्वाः परिचरन् दिशः । तव सैन्यस्य गोप्ताऽऽसीत् भारद्वाजो द्विजर्षभः ।
शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसं । नकुलं पञ्चभिर्विद्ध्वा सहदेवञ्च सप्तभिः । ६४५
युधिष्ठिरं द्वादशभिर्द्रौपदेयांस्त्रिभिस्त्रिभिः । सात्यकिं पञ्चभिर्विद्ध्वा मत्स्यञ्च दशभिः शरैः ।
व्यक्षोभयद्रणे योधान् यथामुख्यानभिद्रवन् । अभ्यवर्त्तत सम्प्रेप्सुः कुन्तीपुत्रं युधिष्ठिरं ।
युगन्धरस्ततो राजन् भारद्वाजं महारथं । वारयामास संक्रुद्धं वातोद्धूतमिवार्णवं ।
युधिष्ठिरं स विद्ध्वा तु शरैः सन्नतपर्व्वभिः । युगन्धरन्तु भल्लेन रथनीडादपातयत् ।
ततो विराटद्रुपदौ कैकेयाः सात्यकिः शिबिः । व्याघ्रदत्तश्च पाञ्चाल्यः सिंहसेनश्च वीर्य्यवान् । ६५०
एते चान्ये च बहवः परीप्सन्तो युधिष्ठिरं । आवव्रुस्तस्य पन्थानं किरन्तः सायकान् बहून् ।
व्याघ्रदत्तस्तु पाञ्चाल्यो द्रोणं विव्याध मार्गणैः । पञ्चाशद्भिः शितैराजंस्तत उच्चुक्रुशुर्जनाः ।
त्वरितं सिंहसेनस्तु द्रोणं विद्ध्वा महारथं । प्राहसत् सहसा हृष्टस्त्रासयन् वै महारथान् ।
ततो विस्फार्य्य नयने धनुर्ज्यामवमृज्य च । तलशब्दं महत् कृत्वा द्रोणस्तं समुपाद्रवत् ।
ततस्तु सिंहसेनस्य शिरः कायात् सकुण्डलं । व्याघ्रदत्तस्य चाक्रम्य भल्लाभ्यामाहरद्बली । ६५५
तान् प्रमृद्य शरव्रातैः पाण्डवानां महारथान् । युधिष्ठिररथाभ्याशे तस्थौ मृत्युरिवान्तकः ।
ततोऽभवन्महाशब्दो राजन् यौधिष्ठिरे बले । हतो राजेति योधानां समीपस्थे यतव्रते ।
अब्रुवन् सैनिकास्तत्र दृष्ट्वा द्रोणस्य विक्रमं । अद्य राजा धार्त्तराष्ट्रः कृतार्थो वै भविष्यति ।
अस्मिन् मुहूर्त्ते द्रोणस्तु पाण्डवं गृह्य हर्षितः । आगमिष्यति नो नूनं धार्त्तराष्ट्रस्य संयुगे ।
एवं सञ्जल्पतां तेषां तावकानां महारथः । आयाज्जवेन कौन्तेयो रथघोषेण नादयन् । ६६०
शोणितोदां रथावर्त्तां कृत्वा विशसने नदीं । शूरास्थिचयसङ्कीर्णां प्रेतकूलापहारिणीं ।
तां शरौघमहाफेनां प्रासमत्स्यसमाकुलां । नदीमुत्तीर्य्य वेगेन कुरून् विद्राव्य पाण्डवः ।
ततः किरीटी सहसा द्रोणानीकमुपाद्रवत् । छादयन्निषुजालेन महता मोहयन्निव ।
शीघ्रमभ्यस्यतो बाणान् सन्दधानस्य चानिशं । नान्तरं ददृशे कश्चित् कौन्तेयस्य यशस्विनः ।
न दिशो नान्तरिक्षञ्च न द्यौर्नैव च मेदिनी । अदृश्यन्त महाराज बाणभूता इवाभवन् । ६६५
नादृश्यत तदा राजंस्तत्र किञ्चन संयुगे । बाणान्धकारे महति कृते गाण्डीवधन्वना ।
सूर्य्ये चास्तमनुप्राप्ते रजसा चाभिसंवृते । नाज्ञायत तदा शत्रुर्न सुहृन्न च कश्चन ।

ततोऽवहारं चक्रुस्ते द्रोणदुर्य्योधनादयः । तान् विदित्वा भृशत्रस्तानुत्साहविमुखान् परान् ।
स्वान्यनीकानि बीभत्सुः शनकैरवहारयत् । ततोऽभितुष्टुवुः पार्थं प्रहृष्टाः पाण्डुसृञ्जयाः ।
पाञ्चालाश्च मनोज्ञाभिर्वाग्भिः सूर्य्यमिवर्षयः । एवं स्वशिबिरं प्रायाज्जित्वा शत्रून् धनञ्जयः ।      ७००
पृष्ठतः सर्व्वसैन्यानां मुदितो वै सकेशवः ।
मसारगल्वर्कसुवर्णरूप्यैर्वज्रप्रवालस्फटिकैश्च मुख्यैः । चित्रे रथे पाण्डुसुतो बभासे नक्षत्रचित्रे वियतीव चन्द्रः ।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि अर्ज्जुनजये षोडशोऽध्यायः ॥ समाप्तञ्च द्रोणाभिषेकपर्व्व ॥ १६ ॥

## ॥ अथ संशप्तकवधपर्व्व ॥

॥ सञ्जय उवाच ॥ ते सेने शिबिरं गत्वा न्यविशेतां विशाम्पते । यथाभागं यथान्यायं यथागुल्मञ्च सर्व्वशः ।
कृत्वाऽवहारं सैन्यानां द्रोणः परमदुर्म्मनाः । दुर्य्योधनमभिप्रेक्ष्य सव्रीडमिदमब्रवीत् ।
उक्तमेतन्मया पूर्व्वं न तिष्ठति धनञ्जये । शक्यो ग्रहीतुं सङ्ग्रामे देवैरपि युधिष्ठिरः ।      ७०५
इति तद्वः प्रयततां कृतं पार्थेन संयुगे । माविशङ्कीर्व्वचो मह्यमजेयौ कृष्णपाण्डवौ ।
अपनीते तु योगेन केनचिच्छ्वेतवाहने । तत एष्यति मे राजन् वशमद्य युधिष्ठिरः ।
कश्चिदाह्वयतां सङ्ख्ये देशमन्यं प्रकर्षतु । तमजित्वा न कौन्तेयो निवर्त्तेत कथञ्चन ।
एतस्मिन्नन्तरे शून्ये धर्म्मराजमहं नृप । ग्रहीष्यामि चमूं भित्त्वा धृष्टद्युम्नस्य पश्यतः ।
अर्ज्जुनेन विहीनस्तु यदि नोत्सृजते रणं । मामुपायान्तमालोक्य गृहीतं विद्धि पाण्डवं ।      ७१०
एवन्तेऽहं महाराज धर्म्मपुत्रं युधिष्ठिरं । समानेष्यामि सगणं वशमद्य न संशयः ।
यदि तिष्ठति सङ्ग्रामे मुहूर्त्तमपि पाण्डवः । समानयामि सङ्ग्रामाद्विजयात्तद्विशिष्यते ।
॥ सञ्जय उवाच ॥ द्रोणस्य तद्वचः श्रुत्वा त्रिगर्त्ताधिपतिस्तदा । भ्रातृभिः सहितो राजन्निदं वचनमब्रवीत् ।
वयं विनिकृता राजन् सदा गाण्डीवधन्वना । अनागःस्वपि चागस्कृदस्मासु भरतर्षभ ।
ते वयं स्मरमाणास्तान् विनिकारान् पृथग्विधान् । क्रोधाग्निना दह्यमाना न शेमहि सदा निशि ।      ७१५
स नो दिष्ट्याऽस्त्रसम्पन्नश्चक्षुर्विषयमागतः । कर्त्तारः स्म वयं कर्म्म यच्चिकीर्षाम हृद्गतं ।
भवतश्च प्रियं यत् स्यादस्माकञ्च यशस्करं । वयमेनं हनिष्यामो निकृष्यायोधनाद्बहिः ।
अद्यास्त्वनर्ज्जुना भूमिरत्रिगर्त्ताऽथ वा पुनः । सत्यं ते प्रतिजानीमो नैतन्मिथ्या भविष्यति ।
एवं सत्यरथश्चोक्त्वा सत्यवर्म्मा च भारत । सत्यव्रतश्च सत्येषुः सत्यकर्म्मा तथैव च ।
सहिता भ्रातरः पञ्च रथानामयुतेन च । न्यवर्त्तन्त महाराज कृत्वा शपथमाहवे ।      ७२०
मालवास्तुण्डिकेराश्च रथानामयुतैस्त्रिभिः । सुशर्म्मा च नरव्याघ्रस्त्रिगर्त्तः प्रस्थलाधिपः ।
मावेल्लकैर्ल्ललित्थैश्च सहितो मद्रकैरपि । रथानामयुतेनैव सोऽगमत् भ्रातृभिः सह ।
नानाजनपदेभ्यश्च रथानामयुतेन च । समुत्थितं विशिष्टानां शपथार्थमुपागमत् ।
ततो ज्वलनमानाय्य कृत्वा सर्व्वे पृथक् पृथक् । जगृहुः कुशचीराणि चित्राणि कवचानि च ।

ते च बद्धतनुत्राणा घृताक्ताः कुशचीरिणः । मौर्व्वीमेखलिनो वीराः सहस्रशतदक्षिणाः । ६९५
यज्वानः पुत्त्रिणो लोक्याः कृतकृत्यास्तनुत्यजः । योक्ष्यमाणास्तदाऽऽत्मानं यशसा विजयेन च ।
ब्रह्मचर्य्यश्रुतिमुखैः क्रतुभिश्चाप्तदक्षिणैः । प्राप्य लोकान् सुयुद्धेन क्षिप्रमेव यियासवः ।
ब्राह्मणांस्तर्पयित्वा च निष्कान् दत्त्वा पृथक् पृथक् । गाश्च वासांसि च पुनः समाभाष्य परस्परं ।
प्रज्वाल्य कृष्णवर्त्मानमुपगम्य रणे व्रतं । तस्मिन्नग्नौ तदा चक्रुः प्रतिज्ञां दृढनिश्चयाः ।
शृण्वतां सर्व्वभूतानामुच्चैर्वाचो बभाषिरे । धृतं धनञ्जयबधे प्रतिज्ञाञ्चापि चक्रिरे । ७००
ये वै लोकाश्चानृतिनां ये च वै ब्रह्मघातिनां । मद्यपस्य च लोका ये गुरुदाररतस्य च ।
ब्रह्मस्वहारिणश्चैव राजपिण्डापहारिणः । शरणागतं वा त्यजतो याचमानं तथा घ्नतः ।
अगारदाहिनाञ्चैव ये च गां निघ्नतामपि । अपकारिणाञ्च ये लोका ये च ब्रह्मद्विषामपि ।
स्वभार्य्यामृतुकालेषु यो मोहान्नाभिगच्छति । श्राद्धमैथुनिकानाञ्च ये चाप्यात्मापकारिणां ।
न्यासापहारिणां ये च श्रुतं नाशयताञ्च ये । क्लीवेन युध्यमानानां ये च दीनानुसारिणां । ७०५
नास्तिकानाञ्च ये लोका येऽग्निमातृपरित्यजां । तानाप्नुयामहे लोकान् ये च पापकृतामपि ।
यद्यहत्वा वयं सर्व्वे निवर्त्तेम धनञ्जयं । तेन चाभ्यर्द्दितास्त्रासाद्भवेमहि पराङ्मुखाः ।
यदि त्वसुकरं लोके कर्म्म कुर्य्याम संयुगे । इष्टान् लोकान् प्राप्नुयाम वयमत्र न संशयः ।
एवमुक्त्वा ततो राजंस्तेऽभ्यवर्त्तन्त संयुगे । आह्वयन्तोऽर्ज्जुनं वीराः पितृजुष्टां दिशं प्रति ।
आहूतस्तैर्नरव्याघ्रः पार्थः परपुरञ्जयः । धर्म्मराजमिदं वाक्यमपदान्तरमब्रवीत् । ७१०
आहूतो न निवर्त्तेयमिति मे व्रतमाहितं । संशप्तकाश्च मां राजन्नाह्वयन्ति महामृधे ।
एष च भ्रातृभिः सार्द्धं सुशर्म्माह्वयते रणे । बधाय सगणस्यास्य मामनुज्ञातुमर्हसि ।
नैतच्छक्नोमि संसोढुमाह्वानं पुरुषर्षभ । सत्यं ते प्रतिजानामि हतान् विद्धि परान् युधि ।
॥ युधिष्ठिर उवाच ॥ श्रुतन्ते तत्त्वतस्तात यद्द्रोणेन चिकीर्षितं । यथा तदनृतं तस्य भवेत्तत् त्वं समाचर ।
द्रोणो हि बलवान् शूरः कृतास्त्रश्च जितश्रमः । प्रतिज्ञातञ्च तेनैतत् ग्रहणं मे महारथ । ७१५
॥ अर्ज्जुन उवाच ॥ अयं वै सत्यजिद्राजन्नद्य त्वां रक्षिता युधि । ध्रियमाणे तु पाञ्चाल्ये नाचार्य्यः काममाप्स्यति ।
हते तु पुरुषव्याघ्रे रणे सत्यजिति प्रभो । सर्व्वैरपि समेतैर्वा न स्थातव्यं कथञ्चन ।
॥ सञ्जय उवाच ॥ अनुज्ञातस्ततो राज्ञा परिष्वक्तश्च फाल्गुनः । प्रेम्णा दृष्टश्च बहुधा ह्याशिषश्चास्य योजिताः ।
विधायैवं ततः पार्थस्त्रिगर्त्तान् प्रत्ययाद्बली । क्षुधितः क्षुद्विघातार्थं सिंहो मृगगणानिव ।
ततो दौर्य्योधनं सैन्यं मुदा परमया युतं । गतेऽर्ज्जुने भृशं क्रुद्धं धर्म्मराजस्य निग्रहे । ७२०
ततोऽन्योन्येन ते सैन्ये समाजग्मतुरोजसा । गङ्गासरय्वोर्वेगेन प्रावृषीवोल्बणोदके ।
इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकबधपर्व्वणि धनञ्जययाने सप्तदशोऽध्यायः ॥ १७ ॥
॥ सञ्जय उवाच ॥ ततः संशप्तका राजन् समे देशे व्यवस्थिताः । व्यूह्यानीकं रथैरेव चन्द्राकारं मुदा युताः ।
ते किरीटिनमायान्तं दृष्ट्वा हर्षेण मारिष । उदक्रोशन्नरव्याघ्राः शब्देन महता तदा ।

स शब्दः प्रदिशः सर्व्वा दिशः खञ्च समावृणोत्। आवृतत्वाच्च लोकस्य नासीत्तत्र प्रतिस्वनः।
सोऽतीवसम्प्रहृष्टांस्तानुपलभ्य धनञ्जयः। किञ्चिदभ्युत्स्मयन् कृष्णमिदं वचनमब्रवीत्। ७२५
पश्यैतान् देवकीमातर्मुमूर्षूनद्य संयुगे। भ्रातॄंस्त्रैगर्त्तकानेवं रोदितव्ये प्रहर्षितान्।
अथ वा हर्षकालोऽयं त्रैगर्त्तानामसंशयं। कुनरैर्दुरवापान् हि लोकान् प्राप्स्यन्त्यनुत्तमान्।
एवमुक्त्वा महाबाहुं हृषीकेशं ततोऽर्ज्जुनः। आससाद रणे व्यूढां त्रिगर्त्तानामनीकिनीं।
स देवदत्तमादाय शङ्खं हेमपरिष्कृतं। दध्मौ वेगेन महता घोषेणापूरयन् दिशः।
तेन घोषेण सन्त्रस्ता संशप्तकवरूथिनी। निश्चेष्टाऽवस्थिता सङ्ख्ये अश्मसारमयी यथा। ७३०
वाहास्तेषां विवृत्ताक्षाः स्तब्धकर्णशिरोधराः। विष्टब्धचरणा मूत्रं रुधिरञ्च प्रसुस्रुवुः।
उपलभ्य ततः संज्ञामवस्थाप्य च वाहिनीं। युगपत् पाण्डुपुत्राय चिक्षिपुः कङ्कपत्रिणः।
तान्यर्ज्जुनः सहस्राणि दशपञ्चभिराशुगैः। अनागतान्येव शरैश्चिच्छेदाशुपराक्रमः।
ततोऽर्ज्जुनं शितैर्बाणैर्दशभिर्दशभिः पुनः। प्रत्यविध्यंस्ततः पार्थस्तानविध्यत् त्रिभिस्त्रिभिः।
एकैकस्तु ततः पार्थं राजन् विव्याध पञ्चभिः। स च तान् प्रतिविव्याध द्वाभ्यां द्वाभ्यां पराक्रमी। ७३५
भूय एव तु संक्रुद्धास्तेऽर्ज्जुनं सहकेशवं। आपूरयन् शरैस्तीक्ष्णैस्तडागमिव वृष्टिभिः।
ततः शरसहस्राणि प्रापतन्नर्ज्जुनं प्रति। भ्रमराणामिव व्राताः फुल्लं द्रुमगणं वने।
ततः सुबाहुस्त्रिंशद्भिरद्रिसारमयैः शरैः। अविध्यदिषुभिर्गाढं किरीटे सव्यसाचिनः।
तैर्व्विद्धैः किरीटस्थैर्हेमपुङ्खैरजिह्मगैः। शातकुम्भ इवापीडो बभौ सूर्य्य इवोत्थितः।
हस्तावापं सुबाहोस्तु भल्लेन युधि पाण्डवः। चिच्छेद तञ्चैव पुनः शरवर्षैरवाकिरत्। ७४०
ततः सुशर्म्मा दशभिः सुरथश्च किरीटिनं। सुधर्म्मा सुधनुश्चैव सुबाहुश्च समार्प्पयन्।
तांस्तु सर्व्वान् पृथग्बाणैर्वानरप्रवरध्वजः। प्रत्यविध्यद्ध्वजांश्चैषां भल्लैश्चिच्छेद काञ्चनान्।
सुधन्वनो धनुश्छित्त्वा हयांश्चास्यावधीच्छरैः। अथास्य सशिरस्त्राणं शिरः कायादपाहरत्।
तस्मिन्निपतिते वीरे त्रस्तास्तस्य पदानुगाः। व्यद्रवन्त भयाद्भीता येन दौर्य्योधनं बलं।
ततो जघान संक्रुद्धो वासविस्तां महाचमूं। शरजालैरविच्छिन्नैस्तमः सूर्य्य इवांशुभिः। ७४५
ततो भग्ने बले तस्मिन् विप्रलीने समन्ततः। सव्यसाचिनि संक्रुद्धे त्रैगर्त्तान् भयमाविशत्।
ते वध्यमानाः पार्थेन शरैः सन्नतपर्व्वभिः। अमुह्यंस्तत्र तत्रैव त्रस्ता मृगगणा इव।
ततस्त्रिगर्त्तराट् क्रुद्धस्तानुवाच महारथान्। अलं द्रुतेन वः शूरा न भयं कर्त्तुमर्हथ।
शप्त्वाऽथ शपथान् घोरान् सर्व्वसैन्यस्य पश्यतः। गत्वा दौर्य्योधनं सैन्यं किं वा वक्ष्यथ मुख्यशः।
नावहास्याः कथं लोके कर्म्मणा तेन संयुगे। भवेम सहिताः सर्व्वे निवर्त्तध्वं यथाबलं। ७५०
एवमुक्तास्तु ते राजन्नुदक्रोशन्मुहुर्म्मुहुः। शङ्खांश्च दध्मिरे वीरा हर्षयन्तः परस्परं।
ततस्ते संन्यवर्त्तन्त संशप्तकगणाः पुनः। नारायणाश्च गोपाला मृत्युं कृत्वा निवर्त्तनं।
इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकवधपर्व्वणि सुधन्ववधे अष्टादशोऽध्यायः॥ १८॥

॥ सञ्जय उवाच ॥ दृष्ट्वा तु सन्निवृत्तांस्तान् संशप्तकगणान् पुनः । वासुदेवं महात्मानमर्ज्जुनः समभाषत ।
चोदयाश्वान् हृषीकेश संशप्तकगणान् प्रति । नैते हास्यन्ति सङ्ग्रामं जीवन्त इति मे मतिः ।
पश्य मेऽद्य बलं घोरं बाह्वोरिष्वासनस्य च । अद्यैतान् पातयिष्यामि क्रुद्धो रुद्रः पशूनिव । ७५५
ततः कृष्णः स्मितं कृत्वा प्रतिनन्द्य शिवेन तं । प्रावेशयत दुर्द्धर्षो यत्र यत्रैच्छदर्ज्जुनः ।
स रथो भ्राजतेऽत्यर्थमुह्यमाने रणे तदा । उह्यमानमिवाकाशे विमानैः पाण्डुरैर्हयैः ।
मण्डलानि ततश्चक्रे गतप्रत्यागतानि च । यथा शक्ररथो राजन् युद्धे देवासुरे पुरा ।
अथ नारायणाः क्रुद्धा विविधायुधपाणयः । छादयन्तः शरव्रातैः परिवव्रुर्धनञ्जयं ।
अदृश्यञ्च मुहूर्त्तेन चक्रुस्ते भरतर्षभ । कृष्णेन सहितं युद्धे कुन्तीपुत्रं धनञ्जयं । ७६०
क्रुद्धस्तु फाल्गुनः सङ्ख्ये द्विगुणीकृतविक्रमः । गाण्डीवं धनुरामृज्य तूर्णं जग्राह संयुगे ।
बद्ध्वा च भ्रुकुटिं वक्त्रे क्रोधस्य प्रतिलक्षणं । देवदत्तं महाशङ्खं पूरयामास पाण्डवः ।
अथास्त्रमरिसङ्घघ्नं त्वाष्ट्रमभ्यस्यदर्ज्जुनः । ततो रूपसहस्राणि प्रादुरासन् पृथक् पृथक् ।
आत्मनः प्रतिरूपैस्तैर्नानारूपैर्विमोहिताः । अन्योन्यमर्ज्जुनं मत्वा स्वमात्मानञ्च जघ्निरे ।
अयमर्ज्जुनोऽयं गोविन्द इमौ पाण्डवयादवौ । इति ब्रुवाणाः सम्मूढा जघ्नुरन्योऽन्यमाहवे । ७६५
मोहिताः परमास्त्रेण क्षयं जग्मुः परस्परं । अशोभन्त रणे योधाः पुष्पिता इव किंशुकाः ।
ततः शरसहस्राणि तैर्व्विमुक्तानि भस्मसात् । कृत्वा तदस्त्रं तान् वीराननयद्यमसादनं ।
अथ प्रहस्य बीभत्सुर्ललित्थान्मालवानपि । माचेल्लकांस्त्रिगर्त्तांश्च यौधेयांश्चार्द्दयच्छरैः ।
ते हन्यमाना वीरेण क्षत्रियाः कालचोदिताः । व्यसृजञ्छरजालानि पार्थे नानाविधानि च ।
ततो नैवार्ज्जुनस्तत्र न रथो न च केशवः । प्रत्यदृश्यन्त घोरेण शरवर्षेण संवृताः । ७७०
ततस्ते लब्धलक्ष्यत्वादन्योऽन्यमभिचुक्रुशुः । हतौ कृष्णाविति प्रीता वासांस्यादुधुवुस्तदा ।
भेरीमृदङ्गशङ्खांश्च दध्मुर्व्वीराः सहस्रशः । सिंहनादरवांश्चापि चक्रिरे तत्र मारिष ।
ततः प्रसिष्विदे कृष्णः खिन्नश्चार्ज्जुनमब्रवीत् । क्वासि पार्थ न पश्ये त्वां कच्चिज्जीवसि शत्रुहन् ।
तस्य तद्भाषितं श्रुत्वा त्वरमाणो धनञ्जयः । वायव्यास्त्रेण तैरस्तां शरवृष्टिमपाहरत् ।
ततः संशप्तकव्रातान् साश्वद्विपरथायुधान् । उवाह भगवान् वायुः शुष्कपर्णचयानिव । ७७५
उह्यमानास्तु ते राजन् व्यशोभन्त वायुना । उड्डीनाः पक्षिणः काले वृक्षेभ्य इव मारिष ।
तांस्तथा व्याकुलीकृत्य त्वरमाणो धनञ्जयः । जघान निशितैर्बाणैः सहस्राणि शतानि च ।
शिरांसि भल्लैरहरद्बाहूनपि च सायुधान् । हस्तिहस्तोपमांश्चोरूञ्छरैरुर्व्यामपातयत् ।
पृष्ठच्छिन्नान् विचरणान् बाहुपृष्ठेक्षणाकुलान् । नानाङ्गावयवैर्हीनान् चकारारीन् धनञ्जयः ।
गन्धर्व्वनगराकारान् विधिवत्कल्पितान् रथान् । शरैर्व्विशकलीकुर्व्वन् चक्रे व्यश्वरथद्विपान् । ७८०
मुण्डतालवनानीव तत्र तत्र चकाशिरे । छिन्नध्वजरथव्राताः केचित्तत्र क्वचित् क्वचित् ।
सोत्तरायुधिनो नागाः सपताकाङ्कुशध्वजाः । पेतुः शक्राशनिहता द्रुमवन्त इवाचलाः ।

चामरापीडकवचाः स्रस्तास्तरणवाससः । सारोहास्तुरगाः पेतुः पार्थबाणहताः क्षितौ ।
विप्रविद्धासिनखराश्छिन्नवर्मासिशक्तयः । पत्तयश्छिन्नवर्माणः कृपणाः शेरते हताः ।
तैर्हतैर्हन्यमानैश्च पतद्भिः पतितैरपि । भ्रमद्भिर्निष्टनद्भिश्च क्रूरमायोधनं बभौ । ७८५
रजश्च महदुद्भूतं शान्तं रुधिरवृष्टिभिः । मही चाप्यभवद्दुर्गा कबन्धशतसङ्कुला ।
तद्बभौ रौद्रबीभत्सं बीभत्सोर्यानमाहवे । आक्रीड इव रुद्रस्य घ्नतः कालात्यये पशून् ।
ते वध्यमानाः पार्थेन व्याकुलाश्वरथद्विपाः । तमेवाभिमुखाः क्षीणाः शक्रस्यातिथितां गताः ।
सा भूमिर्भरतश्रेष्ठ निहतैस्तैर्महारथैः । आस्तीर्णा सम्बभौ सर्व्वा प्रेतीभूतैः समन्ततः ।
एतस्मिन्नन्तरे चैव प्रमत्ते सव्यसाचिनि । व्यूढानीकस्ततो द्रोणो युधिष्ठिरमुपाद्रवत् । ७९०
तं प्रत्यगृह्णंस्त्वरिता व्यूढानीकाः प्रहारिणः । युधिष्ठिरं परीप्सन्तस्तदासीत्तुमुलं महत् ।
इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकवधपर्व्वणि अर्ज्जुनयुद्धे एकोनविंशोऽध्यायः ॥ १९ ॥
॥ सञ्जय उवाच ॥ परिणाम्य निशान्तान्तु भारद्वाजो महारथः । उक्तस्तवाहं राजेन्द्र वचनं वै सुयोधनं ।
विधाय योगं पार्थेन संशप्तकगणैः सह । निष्क्रान्ते च तदा पार्थे संशप्तकवधं प्रति ।
व्यूढानीकस्ततो द्रोणः पाण्डवानां महाचमूं । अभ्ययाद्भरतश्रेष्ठ धर्म्मराजजिघृक्षया ।
व्यूहं दृष्ट्वा सुपर्णन्तु भारद्वाजेन तत्तदा । व्यूहेन मण्डलार्द्धेन प्रत्यव्यूहद्युधिष्ठिरः । ७९५
मुखं त्वासीत् सुपर्णस्य भारद्वाजो महारथः । शिरो दुर्य्योधनो राजा सोदर्य्यैः सानुगैर्वृतः ।
चक्षुषी कृतवर्म्मा च गौतमश्चास्य भास्वरः । भूतवर्म्मा क्षेमशर्म्मा करकाषश्च वीर्य्यवान् ।
कलिङ्गाः सिंहलाः प्राच्याः शूराभीरा दशेरकाः । शका यवनकाम्बोजास्तथा हंसपदाश्च ये ।
ग्रीवायां शूरसेनाश्च दरदा मद्रकेकयाः । गजाश्वरथपत्त्यौघास्तस्थुः शतसहस्रशः ।
भूरिश्रवास्तथा शल्यः सोमदत्तश्च वाह्लिकः । अक्षौहिण्या वृता वीरा दक्षिणं पार्श्वमाश्रिताः । ८००
विन्दानुविन्दावावन्त्यौ काम्बोजश्च सुदक्षिणः । वामं पार्श्वं समाश्रित्य द्रोणपुत्राग्रतः स्थिताः ।
पृष्ठे कलिङ्गाः साम्बष्ठा मागधाः पौण्ड्रमद्रकाः । गान्धाराः शकुनाः प्राच्याः पार्व्वतीया वसातयः ।
पुच्छे वैकर्त्तनः कर्णः सपुत्रज्ञातिबान्धवः । महत्या सेनया तस्थौ नानाजनपदोत्थया ।
जयद्रथो भीमरथः सम्पातिर्ऋषभो जयः । भूमिञ्जयो वृषः क्राथो नैषधश्च महाबलः ।
वृता बलेन महता ब्रह्मलोकपरिष्कृताः । व्यूहस्योरसि ते राजन् स्थिता युद्धविशारदाः । ८०५
द्रोणेन विहितो व्यूहः पदात्यश्वरथद्विपैः । वातोद्धूतार्णवाकारः प्रनृत्यन्निव लक्ष्यते ।
तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः । सविद्युत्स्तनिता मेघाः सर्व्वदिग्भ्य इवोष्णगे ।
तस्य प्राग्ज्योतिषो मध्ये विधिवत् कल्पितं गजं । आस्थितः शुशुभे राजन्नंशुमानुदये यथा ।
माल्यदामवता राजन् श्वेतच्छत्रेण धार्य्यता । कृत्तिकायोगयुक्तेन पौर्णमास्यामिवेन्दुना ।
नीलाञ्जनचयप्रख्यो मदान्धो द्विरदो बभौ । अतिवृष्टो महामेघैर्यथा स्यात् पर्व्वतो महान् । ८१०
नानानृपतिभिर्वीरैर्विविधायुधभूषणैः । समन्वितः पार्व्वतीयैः शक्रो देवगणैरिव ।

ततो युधिष्ठिरः प्रेक्ष्य व्यूढं तमतिमानुषं । अभेद्यमरिभिः संख्ये पार्षतं वाक्यमब्रवीत् ।
ब्राह्मणस्य वशं नाहमियामद्य यथा प्रभो । पारावतसवर्णाश्व तथा नीतिर्विधीयतां ।
॥ धृष्टद्युम्न उवाच ॥ द्रोणस्य यतमानस्य वशं नैष्यसि सुव्रत । अहमावारयिष्यामि द्रोणमद्य सहानुगं ।
मयि जीवति कौरव्य नोद्वेगं कर्त्तुमर्हसि । न हि शक्तो रणे द्रोणो विजेतुं मां कथञ्चन । ८१५
॥ सञ्जय उवाच ॥ एवमुक्त्वा किरन् बाणान् द्रुपदस्य सुतो बली । पारावतसवर्णाश्वः स्वयं द्रोणमुपाद्रवत् ।
अनिष्टदर्शनं दृष्ट्वा धृष्टद्युम्नमवस्थितं । क्षणेनैवाभवद्द्रोणो नातिहृष्टमना इव ।
तन्तु सम्प्रेक्ष्य पुत्रस्ते दुर्मुखः शत्रुकर्षणः । प्रियं चिकीर्षुर्द्रोणस्य धृष्टद्युम्नमवारयत् ।
स संप्रहारस्तुमुलः सुघोरः समपद्यत । पार्षतस्य च शूरस्य दुर्मुखस्य च भारत ।
पार्षतः शरजालेन क्षिप्रं प्रच्छाद्य दुर्मुखं । भारद्वाजं शरौघेण महता समवारयत् । ८२०
द्रोणमावारितं दृष्ट्वा भृशमायस्तवात्मजः । नानालिङ्गैः शरव्रातैः पार्षतं सममोहयत् ।
तयोर्विषक्तयोः संख्ये पाञ्चाल्यकुरुमुख्ययोः । द्रोणो यौधिष्ठिरं सैन्यं बहुधा व्यधमच्छरैः ।
अनिलेन यथाऽभ्राणि विच्छिन्नानि समन्ततः । तथा पार्थस्य सैन्यानि विच्छिन्नानि क्वचित् क्वचित् ।
मुहूर्त्तमिव तद्युद्धमासीन्मधुरदर्शनं । तत उन्मत्तवद्राजन् निर्मर्य्यादमवर्त्तत ।
नैव स्वे न परे राजन्नाज्ञायन्त परस्परं । अनुमानेन संज्ञाभिर्युद्धं तत् समवर्त्तत । ८२५
चूडामणिषु निष्केषु भूषणेष्वपि वर्मसु । तेषामादित्यवर्णाभा रश्मयः प्रचकाशिरे ।
तत्प्रकीर्णपताकानां रथवारणवाजिनां । बलाकाशबलाभ्राभं ददृशे रूपमाहवे ।
नरानेव नरा जघ्नुरुदग्राश्च हया हयान् । रथांश्च रथिनो जघ्नुर्वारणान् वरवारणाः ।
समुच्छ्रितपताकानां गजानां परमद्विपैः । क्षणेन तुमुलो घोरः संग्रामः समपद्यत ।
तेषां संसक्तगात्राणां कर्षतामितरेतरं । दन्तसङ्घातसंघर्षात् सधूमोऽग्निरजायत । ८३०
विप्रकीर्णपताकास्ते विषाणजनिताग्नयः । बभूवुः खं समासाद्य सविद्युत इवाम्बुदाः ।
विक्षिपद्भिर्नदद्भिश्च निपतद्भिश्च वारणैः । सम्बभूव मही कीर्णा मेघैर्द्यौरिव शारदी ।
तेषामाहन्यमानानां बाणतोमरवृष्टिभिः । वारणानां रवो जज्ञे मेघानामिव संप्लवे ।
तोमराभिहताः केचिदाविद्धाः परमद्विपाः । विनेदुः सर्वनागानां शब्दमेवापरेऽव्रजन् ।
विषाणाभिहताश्चापि केचित्तत्र गजा गजैः । चक्रुरार्त्तस्वनं घोरमुत्पातजलदा इव । ८३५
प्रतीपाः क्रियमाणाश्च वारणा वरवारणैः । उन्मथ्य पुनराजग्मुः प्रेरिताः परमाङ्कुशैः ।
महामात्रैर्महामात्रास्ताडिताः शरतोमरैः । गजेभ्यः पृथिवीं जग्मुर्मुक्तप्रहरणाङ्कुशाः ।
निर्मनुष्याश्च मातङ्गा विनदन्तस्ततस्ततः । छिन्नाभ्राणीव सम्पेतुः सम्प्रविश्य परस्परं ।
हतान् परिवहन्तश्च पातितान् पतितायुधान् । दिशो जग्मुर्महानागाः केचिदेकचरा इव ।
ताडितास्ताड्यमानाश्च तोमरर्ष्टिपरश्वधैः । पेतुरार्त्तस्वरं कृत्वा तदा विशसने गजाः । ८४०
तेषां शैलोपमैः कायैर्निपतद्भिः समन्ततः । आहता सहसा भूमिश्चकम्पे च ननाद च ।

सादितैः सगजारोहैः सपताकैः समन्ततः। मातङ्गैः शुशुभे भूमिर्विकीर्णैरिव पर्व्वतैः।
गजस्थाश्च महामात्रा निर्भिन्नहृदया रणे। रथिभिः पातिता भल्लैर्विकीर्णाङ्कुशतोमराः।
क्रौञ्चवद्विनदन्तोऽन्ये नाराचाभिहता गजाः। परान् स्वांश्चापि मृद्नन्तः परिपेतुर्दिशो दश।
गजाश्वरथयोधानां शरीरौघसमावृता। बभूव पृथिवी राजन् मांसशोणितकर्द्दमा। ८४५
प्रमथ्य च विषाणाग्रैः समुत्क्षिप्ताश्च वारणैः। सचक्राश्च विचक्राश्च रथैरेव महारथाः।
रथाश्च रथिभिर्हीना निर्म्मनुष्याश्च वाजिनः। हतारोहाश्च मातङ्गा दिशो जग्मुर्भयातुराः।
जघानात्र पिता पुत्रं पुत्रश्च पितरं तथा। इत्यासीत्तुमुलं युद्धं न प्राज्ञायत किञ्चन।
आगुल्फेभ्योऽवसीदन्ते नरा शोणितकर्द्दमैः। दीप्यमानैः परिक्षिप्ता दावैरिव महाद्रुमाः।
शोणितैः सिच्यमानानि वस्त्राणि कवचानि च। छत्राणि च पताकाश्च सर्व्वं रक्तमदृश्यत। ८५०
हयौघाश्च रथौघाश्च नरौघाश्च निपातिताः। संवृत्ताः पुनरावृत्य बहुधा रथनेमिभिः।
स गजौघमहावेगः परासुनरशैवलः। रथौघतुमुलावर्त्तः प्रबभौ सैन्यसागरः।
तं वाहनमहानौभिर्योधा जयधनैषिणः। अवगाह्याप्यमज्जन्तो वैरमोहं प्रचक्रिरे।
शरवर्षाभिवृष्टेषु योधेष्वावितलक्ष्मसु। न तेषु चिन्तितां लेभे कश्चिदाहतलक्षणः।
वर्त्तमाने तथा युद्धे घोररूपे भयङ्करे। मोहयित्वा परान् द्रोणो युधिष्ठिरमुपाद्रवत्। ८५५
इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकवधपर्व्वणि सङ्कुलयुद्धे विंशोऽध्यायः॥ २०॥
॥ सञ्जय उवाच ॥ ततो युधिष्ठिरं द्रोणो दृष्ट्वाऽन्तिकमुपागतं। महता शरवर्षेण प्रत्यगृह्णादभीतवत्।
ततो हलहलाशब्द आसीद्यौधिष्ठिरे बले। जिघृक्षति महासिंहे गजानामिव यूथपं।
दृष्ट्वा द्रोणं ततः शूरः सत्यजित् सत्यविक्रमः। युधिष्ठिरमभिप्रेप्सुराचार्य्यं समुपाद्रवत्।
तत आचार्य्यपाञ्चाल्यौ युयुधाते महाबलौ। विक्षोभयन्तौ तत्सैन्यमिन्द्रवैरोचनाविव।
ततो द्रोणं महेष्वासः सत्यजित् सत्यविक्रमः। अविध्यन्निशिताग्रेण परमास्त्रं व्यदर्शयत्। ८६०
तथाऽस्य सारथेः पञ्च शरान् सर्पविषोपमान्। अमुञ्चदन्तकप्रख्यान् सम्मुमोहास्य सारथिः।
अथाऽस्य सहसाऽविध्यद्धयान् दशभिराशुगैः। दशभिर्दशभिः क्रुद्ध उभौ च पार्ष्णिसारथी।
मण्डलन्तु समावृत्य विचरन् पृतनामुखे। ध्वजं चिच्छेद च क्रुद्धो द्रोणस्यामित्रकर्षणः।
द्रोणस्तु तत्समालोक्य चरितं तस्य संयुगे। मनसा चिन्तयामास प्राप्तकालमरिन्दमः।
ततः सत्यजितं तीक्ष्णैर्दशभिर्मर्म्मभेदिभिः। अविध्यच्छीघ्रमाचार्य्यश्छित्त्वाऽस्य सशरं धनुः। ८६५
स शीघ्रतरमादाय धनुरन्यत् प्रतापवान्। द्रोणमभ्यहनद्राजंस्त्रिंशद्भिः कङ्कपत्रिभिः।
दृष्ट्वा सत्यजिता द्रोणं ग्रस्यमानमिवाहवे। चुक्रुशुः पाण्डवा राजन् वस्त्राणि दुधुवुश्च ह।
वृकस्तु परमः क्रुद्धो द्रोणं षष्ट्या स्तनान्तरे। विव्याध बलवान् राजंस्तदद्भुतमिवाभवत्।
द्रोणस्तु शरवर्षेण च्छाद्यमानो महारथः। वेगं चक्रे महावेगः क्रोधादुद्वृत्य चक्षुषी।
ततः सत्यजितश्चापं छित्त्वा द्रोणो वृकस्य च। षड्भिः ससूतं सहयं शरैर्द्रोणोऽवधीद्वृकं। ८७०

अथान्यद्धनुरादाय सत्यजिद्वेगवत्तरं। साश्वं ससूतं विशिखैर्द्रोणं विव्याध सध्वजं।
स तं न ममृषे द्रोणः पाञ्चाल्येनार्द्दितो मृधे। ततस्तस्य विनाशाय सत्वरं व्यसृजच्छरान्।
हयान् ध्वजान् धनुर्मुष्टिमुभौ च पार्ष्णिसारथी। अवाकिरंस्ततो द्रोणः शरवर्षैः सहस्रशः।
तथा संछिद्यमानेषु कार्म्मुकेषु पुनः पुनः। पाञ्चाल्यः परमास्त्रज्ञः शोणिताश्वमयोधयत्।
स सत्यजितमालोक्य तथोदीर्णं महाहवे। अर्द्धचन्द्रेण चिच्छेद शिरस्तस्य महात्मनः। ८७५
तस्मिन् हते महामात्रे पाञ्चालानां महारथे। अपायाज्जवनैरश्वैर्द्रोणात्त्रस्तो युधिष्ठिरः।
पाञ्चालाः केकया मत्स्याश्चेदिकारूषकोशलाः। युधिष्ठिरमभीप्सन्तो दृष्ट्वा द्रोणमुपाद्रवन्।
ततो युधिष्ठिरं प्रेप्सुराचार्य्यः शत्रुपूगहा। व्यधमत्तान्यनीकानि तूलराशिमिवानलः।
निर्द्दहन्तमनीकानि तानि तानि पुनःपुनः। द्रोणं मत्स्यादवरजः शतानीकोऽभ्यवर्त्तत।
सूर्य्यरश्मिप्रतीकाशैः कर्म्मारपरिमार्ज्जितैः। षड्भिः ससूतं सहयं द्रोणं विद्ध्वाऽनदद्भृशं। ८८०
क्रूराय कर्म्मणे युक्तश्चिकीर्षुः कर्म्म दुष्करं। अवाकिरच्छरशतैर्भारद्वाजं महारथं।
तस्य नानदतो द्रोणः शिरः कायात् सकुण्डलं। क्षुरेणापाहरत्तूर्णं ततो मत्स्याः प्रदुद्रुवुः।
मत्स्यान्जित्वाऽजयच्चेदीन् कारूषान् केकयानपि। पाञ्चालान् सृञ्जयान् पाण्डून् भारद्वाजः पुनः पुनः।
तं दहन्तमनीकानि क्रुद्धमग्निं यथा वनं। दृष्ट्वा रुक्मरथं वीरं समकम्पन्त सृञ्जयाः।
उत्तमं चाददानस्य धनुरस्याशुकारिणः। ज्याघोषो निघ्नतोऽमित्रान् दिक्षु सर्व्वासु शुश्रुवे। ८८५
नागानश्वान् पदातींश्च रथिनो गजसादिनः। रौद्रा हस्तवतो मुक्ताः प्रमथ्नन्ति स्म सायकाः।
नानद्यमानः पर्ज्जन्यो मिश्रवातो हिमात्यये। अश्मवर्षमिवावर्षन् परेषां भयमादधत्।
सर्व्वा दिशः समचरन् सैन्यं विक्षोभयन्निव। बली शूरो महेष्वासो मित्राणामभयङ्करः।
तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतं। दिक्षु सर्व्वासु पश्याम द्रोणस्यामिततेजसः।
शोभमानां ध्वजे चास्य वेदीमद्राक्ष्म भारत। हिमवच्छिखराकारां चरतः संयुगे भृशं। ८९०
द्रोणस्तु पाण्डवानीके चकार कदनं महत्। यथा दैत्यगणे विष्णुः सुरासुरनमस्कृतः।
स शूरः सत्यवाक् प्राज्ञो बलवान् सत्यविक्रमः। महानुभावः कल्पान्ते रौद्रीं भीरुविभीषणां।
कवचोर्म्मिध्वजावर्त्तां मर्त्यकूलापहारिणीं। गजवाजिमहाग्राहामसिमीनां दुरासदां।
वीरास्थिशर्करां रौद्रां भेरीमुरजकच्छपां। चर्म्मवर्म्मप्लवां घोरां केशशैवलशाद्वलां।
शरौघिणीं धनुःस्रोतां बाहुपन्नगसङ्कुलां। रणभूमिवहां तीव्रां कुरुसृञ्जयवाहिनीं। ८९५
मनुष्यशीर्षपाषाणां शक्तिमीनां गदोडुपां। उष्णीषफेनवसनां विकीर्णान्त्रसरीसृपां।
वीरापहारिणीमुग्रां मांसशोणितकर्द्दमां। हस्तिग्राहां केतुवृक्षां क्षत्रियाणां निमज्जनीं।
क्रूरां शरीरसङ्घट्टां सादिनक्रां दुरत्ययां। द्रोणः प्रावर्त्तयत्तत्र नदीमन्तकगामिनीं।
क्रव्यादगणसञ्जुष्टां श्वसृगालगणायुतां। निषेवितां महारौद्रैः पिशिताशैः समन्ततः।
तं दहन्तमनीकानि रथोदारं कृतान्तवत्। सर्व्वतोऽभ्यद्रवन्द्रोणं कुन्तीपुत्रपुरोगमाः। ९००

ते द्रोणं सहिताः शूराः सर्व्वतः प्रत्यवारयन्। गभस्तिभिरिवादित्यं तपन्तं भुवनं यथा।
तन्तु शूरं महेष्वासं तावकाभ्युद्यतायुधाः। राजानो राजपुत्त्राश्च समन्तात् पर्य्यवारयन्।
शिखण्डी तु ततो द्रोणं पञ्चभिर्नतपर्व्वभिः। क्षत्त्रधर्म्मा च विंशत्या वसुदानश्च पञ्चभिः।
उत्तमौजास्त्रिभिर्वाणैः क्षत्त्रदेवश्च पञ्चभिः। सात्यकिश्च शतेनाजौ युधामन्युस्तथाऽष्टभिः।
युधिष्ठिरो द्वादशभिर्द्रोणं विव्याध सायकैः। धृष्टद्युम्नश्च दशभिश्चेकितानस्त्रिभिः शरैः। ९०५
ततो द्रोणः सत्यसन्धः प्रभिन्न इव कुञ्जरः। अभ्यतीत्य रथानीकं दृढसेनमपातयत्।
ततो राजानमासाद्य प्रहरन्तमभीतवत्। अविध्यन्नवभिः क्षेमं स हतः प्रापतद्रथात्।
समध्यं प्राप्य सैन्यानां सर्व्वाः प्रविचरन्दिशः। त्राता ह्यभवदन्येषां न त्रातव्यः कथञ्चन।
शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसं। वसुदानञ्च भल्लेन प्रेषयद्यमसादनं।
अशीत्या क्षेमवर्म्माणं षड्विंशत्या सुदक्षिणं। क्षत्त्रदेवन्तु भल्लेन रथनीडादपातयत्। ९१०
युधामन्युं चतुःषष्ट्या त्रिंशता चैव सात्यकिं। विद्धा रुक्मरथस्तूर्णं युधिष्ठिरमुपाद्रवत्।
ततो युधिष्ठिरः क्षिप्रं गुरुतो राजसत्तमः। अपायाज्जवनैरश्वैः पाञ्चाल्यो द्रोणमभ्ययात्।
तं द्रोणः सधनुष्कन्तु साश्वयन्तारमाक्षिणोत्। स हतः प्रापतद्भूमौ रथाज्ज्योतिरिवाम्बरात्।
तस्मिन् हते राजपुत्त्रे पाञ्चालानां यशस्करे। हतद्रोणं हतद्रोणमित्यासीन्निःस्वनो महान्।
तांस्तथा भृशसंरब्धान् पाञ्चालान् मत्स्यकैकयान्। सृञ्जयान् पाण्डवांश्चैव द्रोणो व्यक्षोभयद्बली। ९१५
सात्यकिं चेकितानञ्च धृष्टद्युम्नशिखण्डिनौ। वार्द्धक्षेमिञ्चैत्रसेनिं सेनाविन्दुं सुवर्च्चसं।
एतांश्चान्यांश्च सुबहून्नानाजनपदेश्वरान्। सर्व्वान् द्रोणोऽजयद्युद्धे कुरुभिः परिवारितः।
तावकाश्च महाराज जयं लब्ध्वा महाहवे। पाण्डवेयान् रणे जघ्नुर्द्रवमाणान् समन्ततः।
ते दानवा इवेन्द्रेण बध्यमानाः समन्ततः। पाञ्चालाः कैकया मत्स्याः समकम्पन्त भारत।
इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकबधपर्व्वणि द्रोणयुद्धे एकविंशोऽध्यायः॥ २१ ॥
॥ धृतराष्ट्र उवाच ॥ भारद्वाजेन भग्नेषु पाण्डवेषु महामृधे। पाञ्चालेषु च सर्व्वेषु कश्चिदन्योऽभ्यवर्त्तत। ९२०
आर्य्यां युद्धे मतिं कृत्वा क्षत्त्रियाणां यशस्करीं। असेवितां कापुरुषैः सेवितां पुरुषर्षभैः।
अहो नासीत्पुमान् कश्चिद्दृष्ट्वा द्रोणं व्यवस्थितं। जृम्भमाणमिव व्याघ्रं प्रभिन्नमिव कुञ्जरं।
त्यजन्तमाहवे प्राणान् सन्नद्धं चित्रयोधिनं। महेष्वासं नरव्याघ्रं द्विषतां भयवर्द्धनं।
कृतज्ञं सत्यनिरतं दुर्य्योधनहितैषिणं। भारद्वाजं तथाऽनीके दृष्ट्वा शूरमवस्थितं।
के वीराः संन्यवर्त्तन्त तन्ममाचक्ष्व सञ्जय। ९२५
॥ सञ्जय उवाच ॥ तान् दृष्ट्वा चलितान् सङ्ख्ये प्रणुन्नान् द्रोणसायकैः। पाञ्चालान् पाण्डवान् मत्स्यान् सृञ्जयांश्चेदिकेकयान्।
द्रोणचापविमुक्तेन शरौघेनाशुहारिणा। सिन्धोरिव महौघेन ह्रियमाणान् यथा प्लवान्।
कौरवाः सिंहनादेन नानावाद्यस्वनेन च। रथद्विपनराश्चैव सर्व्वतः समवारयन्।

तान् पश्यन् सैन्यमध्यस्थो राजा स्वजनसंवृतः । दुर्य्योधनोऽब्रवीत्कर्णं प्रहृष्टः प्रहसन्निव ।

॥ दुर्य्योधन उवाच ॥ पश्य राधेय पाञ्चालान् प्रकम्पान् द्रोणसायकैः । सिंहेनेव मृगान् वन्यान् त्रासितान् दृढधन्विना ।                    ९१०

नैते जातु पुनर्युद्धमीहेयुरिति मे मतिः । यथा तु भग्ना द्रोणेन वातेनेव महाद्रुमाः ।
अर्द्यमानाः शरैरेते रुक्मपुङ्खैर्महात्मना । पथा नैकेन गच्छन्ति घूर्णमानास्ततस्ततः ।
संनिरुद्धाश्च कौरव्यैर्द्रोणेन च महात्मना । एतेऽन्ये मण्डलीभूताः पावकेनेव कुञ्जराः ।
भ्रमरैरिव चाविष्टा द्रोणस्य निशितैः शरैः । अन्योऽन्यं समलीयन्त पलायनपरायणाः ।
एष भीमो महाक्रोधी हीनः पाण्डवसृञ्जयैः । मदीयैरावृतो योधैः कर्ण नन्दयतीव मां ।                    ९१५
व्यक्तं द्रोणमयं लोकमद्य पश्यति दुर्म्मतिः । निराशो जीवितान्नूनमद्य राज्याच्च पाण्डवः ।
॥ कर्ण उवाच ॥ नैष जातु महाबाहुर्जीवन्नाहवमुत्सृजेत् । न चेमान् पुरुषव्याघ्र सिंहनादान् सहिष्यति ।
न चापि पाण्डवा युद्धे भज्येरन्निति मे मतिः । शूराश्च बलवन्तश्च कृतास्त्रा युद्धदुर्म्मदाः ।
विषाग्निद्यूतसंक्लेशान् वनवासञ्च पाण्डवाः । स्मरमाणा न हास्यन्ति संग्राममिति मे मतिः ।
निवृत्तो हि महाबाहुरमितौजा वृकोदरः । वरान् वरान् हि कौन्तेयो रथोदारान् हनिष्यति ।                    ९२०
असिना धनुषा शक्त्या हयैर्नागैर्नरै रथैः । आयसेन च दण्डेन व्रातान् व्रातान् हनिष्यति ।
तमेनमन्ववर्त्तन्त सात्यकिप्रमुखा रथाः । पाञ्चालाः केकया मत्स्याः पाण्डवाश्च विशेषतः ।
शूराश्च बलवन्तश्च विक्रान्ताश्च महारथाः । विशेषतश्च भीमेन संरब्धेनाभिचोदिताः ।
ते द्रोणमभिवर्त्तन्तः सर्व्वतः कुरुपुङ्गवाः । वृकोदरं परीप्सन्तः सूर्य्यमभ्रगणा इव ।
एकायनगता ह्येते पीडयेयुर्यतव्रतं । अरक्ष्यमाणं शलभा यथा दीपं मुमूर्षवः ।                    ९२५
असंशयं कृतास्त्राश्च पर्य्याप्ताश्चापि वारणे । अतिभारमहं मन्ये भारद्वाजे समाहितं ।
ते शीघ्रमनुगच्छामो यत्र द्रोणो व्यवस्थितः । कोका इव महानागं मा वै हन्युर्यतव्रतं ।
॥ सञ्जय उवाच ॥ राधेयस्य वचः श्रुत्वा राजा दुर्य्योधनस्ततः । भ्रातृभिः सहितो राजन् प्रायाद्द्रोणरथं प्रति ।
तत्र रावो महानासीदेकं द्रोणं जिघांसतां । पाण्डवानां निवृत्तानां नानावर्णैर्हयोत्तमैः ।
इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकवधपर्व्वणि द्रोणयुद्धे द्वाविंशोऽध्यायः ॥ २२ ॥
॥ धृतराष्ट्र उवाच ॥ सर्व्वेषामेव मे ब्रूहि रथचिह्नानि सञ्जय । ये द्रोणमभ्यवर्त्तन्त क्रुद्धा भीमपुरोगमाः ।                    ९३०
॥ सञ्जय उवाच ॥ ऋष्यवर्णैर्हयैर्दृष्ट्वा व्यायच्छन्तं वृकोदरं । रजताश्वस्ततः शूरः शैनेयः संन्यवर्त्तत ।
सारङ्गाश्च युधामन्युः स्वयमानो हयोत्तमैः । पर्य्यवर्त्तत दुर्द्धर्षः क्रुद्धो द्रोणरथं प्रति ।
पारावतसवर्णैस्तु हेमभाण्डैर्महाजवैः । पाञ्चालराजस्य सुतो धृष्टद्युम्नो न्यवर्त्तत ।
पितरन्तु परिप्रेप्सुः क्षत्रधर्म्मा यतव्रतः । सिद्धिञ्चास्य परां काङ्क्षन् शोणाश्वः संन्यवर्त्तत ।
पद्मपत्रनिभांस्त्वश्वान् मल्लिकाक्षान् स्वलङ्कृतान् । शैखण्डिः क्षत्रदेवस्तु स्वयं संत्वरयन् ययौ ।                    ९३५
दर्शनीयास्तु काम्बोजाः शुकपत्रपरिच्छदाः । वहन्तो नकुलं शीघ्रं तावकानभिदुद्रुवुः ।

ऋष्टाश्च मेघसङ्काशा अवहन्नुत्तमौजसं । दुर्द्धर्षायाभिसन्धाय क्रुद्धा युद्धाय भारत ।
तथा तित्तिरकल्माषा हया वातसमा जवे । अवहंस्तुमुले युद्धे सहदेवमुदायुधं ।
दन्तवर्णास्तु राजानं कालवाला युधिष्ठिरं । भीमवेगा नरव्याघ्रमवहन् वातरंहसः ।
हेमोत्तमप्रतिच्छन्नैर्हयैर्वातसमैर्ज्जवे । अभ्यवर्त्तन्त सैन्यानि सर्व्वाण्येव युधिष्ठिरं । ९६०
राज्ञस्त्वनन्तरो राजा पाञ्चाल्यो द्रुपदोऽभवत् । जातरूपपरिच्छन्नः सर्व्वैस्तैरभिरक्षितः ।
ललामैर्हरिभिर्युक्तः सर्व्वशब्दसहैर्युधि । राज्ञां मध्ये महेष्वासः शान्तभीरभ्यवर्त्तत ।
तं विराटोऽन्वयाच्छीघ्रं सह सर्व्वैर्महारथैः । कैकयाश्च शिखण्डी च धृष्टकेतुस्तथैव च ।
स्वैः स्वैः सैन्यैः परिवृता मत्स्यराजानमन्वयुः । तन्तु पाटलपुष्पाणां समवर्णा हयोत्तमाः ।
वहमाना व्यराजन्त मत्स्यस्यामित्रघातिनः । हरिद्रासमवर्णाश्च जवना हेममालिनः । ९६५
पुत्त्रं विराटराजस्य सत्वरं समुदावहन् । इन्द्रगोपकवर्णैश्च भ्रातरः पञ्च कैकयाः ।
जातरूपसमाभासाः सर्व्वे लोहितकध्वजाः । ते हेममालिनः शूराः सर्व्वे युद्धविशारदाः ।
वर्षन्त इव जीमूताः प्रत्यदृश्यन्त दंशिताः । आमपात्रनिकाशास्तु पाञ्चाल्यममितौजसं ।
दन्तवर्णास्तु तुरगाः शिखण्डिनमुदावहन् । तथा द्वादशसाहस्राः पाञ्चालानां महारथाः ।
तेषान्तु षट्सहस्राणि ये शिखण्डिनमन्वयुः । पुत्त्रन्तु शिशुपालस्य नरसिंहस्य मारिष । ९७०
आक्रीडन्तो वहन्ति स्म सारङ्गशवला हयाः । धृष्टकेतुस्तु चेदीनामृषभोऽतिबलान्वितः ।
काम्बोजैः शबलैरश्वैरभ्यवर्त्तत दुर्ज्जयः । बृहत्क्षत्त्रन्तु कैकेयं सुकुमारा हयोत्तमाः ।
पलालधूमसङ्काशाः सैन्धवाः शीघ्रमावहन् । मल्लिकाक्षाः पद्मवर्णा वाह्लिजाताः स्वलङ्कृताः ।
शूरं शिखण्डिनः पुत्त्रं क्षत्त्रदेवमुदावहन् । रुक्मभाण्डप्रतिच्छन्नाः कौशेयसदृशा हयाः ।
क्षमावन्तोऽवहन् संख्ये सेनाविन्दुमरिन्दमं । युवानमवहन् युद्धे क्रौञ्चवर्णा हयोत्तमाः । ९७५
काश्यस्याभिमुखं पुत्त्रं सुकुमारं महारथं । श्वेतास्तु प्रतिविन्ध्यन्तं कृष्णग्रीवा मनोजवाः ।
यन्तुः प्रीतिकरा राजन् राजपुत्त्रमुदावहन् । सुतसोमं तु यं सोमात् पार्थः पुत्त्रमयाचत ।
माषपुष्पसवर्णास्तमवहन् वाजिनो रणे ।
सहस्रसोमप्रतिमो बभूव पुरे कुरूणामुदयेन्दुनाम्नि । तस्मिन् स्यातः सोमसंक्रन्दमध्ये यस्मात्तस्मात् सुतसोमोऽभवत् सः ।
नाकुलिन्तु शतानीकं शालपुष्पनिभा हयाः । आदित्यतरुणप्रख्याः श्लाघनीयमुदावहन् । ९८०
काञ्चनप्रतिमैर्योक्त्रैर्मयूरग्रीवसन्निभाः । द्रौपदेयं नरव्याघ्रं श्रुतकर्म्माणमाहवे ।
श्रुतकीर्त्तिं श्रुतनिधिं द्रौपदेयं हयोत्तमाः । ऊहुः पार्थसमं युद्धे चाषपत्त्रनिभा हयाः ।
यमाहुरध्यर्द्धगुणं कृष्णात् पार्थाच्च संयुगे । अभिमन्युं पिशङ्गास्तं कुमारमवहन् रणे ।
एकस्तु धार्त्तराष्ट्रेभ्यः पाण्डवान् यः समाश्रितः । तं बृहन्तो महाकाया युयुत्सुमवहन् रणे ।
पलालकाण्डवर्णास्तु वार्द्धक्षेमिं तरस्विनं । ऊहुः सुतुमुले युद्धे हया हृष्टाः स्वलङ्कृताः । ९८५
कुमारं शितिपादास्तु रुक्मपत्रैरुरश्छदैः । सौचित्तिमवहन् युद्धे यन्तुः प्रेष्यकरा हयाः ।

ऋक्षपृष्ठावकीर्णास्तु कौशेयसदृशा हयाः । सुवर्णमालिनः क्षान्ताः शैखण्डिमुदावहन् ।
अस्त्राणाञ्च धनुर्व्वेदे ब्राह्मे वेदे च पारगं । तं सत्यधृतिमायान्तमरुणाः समुदावहन् ।
यः स पाञ्चालसेनानीर्द्रोणमंशमकल्पयत् । पारावतसवर्णाश्वा धृष्टद्युम्नमुदावहन् ।
तमन्वयात् सत्यधृतिः सौचित्तिर्युद्धदुर्म्मदः । श्रेणिमान्वसुदानश्च पुत्रः काश्यस्य मे विभुः । ९९०
युक्तैः परमकाम्बोजैर्जवनैर्हेममालिभिः । भीषयन्तो द्विषां सैन्यं यमवैश्रवणोपमाः ।
प्रभद्रकास्तु काम्बोजाः षट्सहस्राण्युदायुधाः । नानावर्णैर्हयश्रेष्ठैर्हेमचित्ररथध्वजाः ।
शरव्रातैर्विधुन्वन्तः शत्रून् विततकार्मुकाः । समानमृत्यवो भूत्वा धृष्टद्युम्नं समन्वयुः ।
बभ्रुकौशेयवर्णास्तु सुवर्णवरमालिनः । ऊहुरम्लानमनसश्चेकितानं हयोत्तमाः ।
इन्द्रायुधसवर्णैस्तु कुन्तिभोजो हयोत्तमैः । आयात् सदश्वैः पुरुजिन्मातुलः सव्यसाचिनः । ९९५
अन्तरिक्षसवर्णास्तु तारकाचित्रिता इव । राजानं रोचमानं ते हयाः सङ्ख्ये समावहन् ।
अमलोहितवर्णाश्च पाण्डुरोद्गतराजयः । पाञ्चाल्यं गोपतेः पुत्रं सिंहसेनमुदावहन् ।
पाञ्चालानां नरव्याघ्रो यः ख्यातो जनमेजयः । तस्य सर्षपपुष्पाणां तुल्यवर्णा हयोत्तमाः ।
माषवर्णाश्च जवना बृहन्तो हेममालिनः । दधिपृष्ठाश्चन्द्रमुखाः पाञ्चाल्यमवहन् द्रुतं ।
शूराश्च भद्रकाश्चैव शरकाण्डनिभा हयाः । पद्मकिञ्जल्कवर्णाभा दण्डधारमुदावहन् । १०००
रासभारुणवर्णाभाः पृष्ठतो मूषिकप्रभाः । वल्गन्त इव संयत्ता व्याघ्रदत्तमुदावहन् ।
हरयः कालकाश्चित्राश्चित्रमाल्यविभूषिताः । सुधन्वानं नरव्याघ्रं पाञ्चाल्यं समुदावहन् ।
इन्द्राशनिसमस्पर्शा इन्द्रगोपकसन्निभाः । कायैश्चित्रान्तराश्चित्राश्चित्रायुधमुदावहन् ।
बिभ्रतो हेममालास्तु चक्रवाकोदरा हयाः । कोशलाधिपतेः पुत्रं सुक्षत्रं वाजिनोऽवहन् ।
शबलास्तु बृहन्तोऽश्वा दान्ता जाम्बूनदस्रजः । युद्धे सत्यधृतिं क्षैमिमवहन् प्रांशवः शुभाः । १००५
एकवर्णेन सर्व्वेण ध्वजेन कवचेन च । अश्वैश्च धनुषा चैव शुक्लैः शुक्लोऽभ्यवर्त्तत ।
समुद्रसेनपुत्रन्तु सामुद्रा रुद्रतेजसं । अश्वाः शशाङ्कसदृशाश्चन्द्रसेनमुदावहन् ।
नीलोत्पलसवर्णास्तु तपनीयविभूषिताः । शैब्यं चित्ररथं सङ्ख्ये चित्रमाल्यावहन् हयाः ।
कलायपुष्पवर्णास्तु श्वेतलोहितराजयः । रथसेनं हयश्रेष्ठाः समूहुर्युद्धदुर्म्मदं ।
यन्तु सर्व्वमनुष्येभ्यः प्राहुः शूरतरं नृपं । तं पटच्चरहन्तारं शुकवर्णावहन् हयाः । १०१०
चित्रायुधं चित्रमाल्यं चित्रवर्म्मायुधध्वजं । ऊहुः किंशुकवर्णानां समवर्णा हयोत्तमाः ।
एकवर्णेन सर्व्वेण ध्वजेन कवचेन च । धनुषा रथवाहैश्च नीलैर्नीलोऽभ्यवर्त्तत ।
नानारूपै रत्नचित्रैर्वरूथध्वजकार्मुकैः । वाजिध्वजपताकाभिश्चित्रैश्चित्रोऽभ्यवर्त्तत ।
ये तु पुष्करवर्णस्य तुल्यवर्णा हयोत्तमाः । ते रोचमानस्य सुतं हेमवर्णमुदावहन् ।
योधाश्च भद्रकाराश्च शरदण्डानुदण्डजः । श्वेताण्डाः कुक्कुटाण्डाश्च दण्डकेतुं हयावहन् । १०१५
केशवेन हते सङ्ख्ये पितर्य्यथ नराधिप । भिन्ने कपाटे पाण्ड्यानां विद्रुतेषु च बन्धुषु ।

भीष्माद्वाप्य चास्त्राणि द्रोणाद्रामात् कृपात्तथा । अस्त्रैः समत्वं सम्प्राप्य रुक्मिकृष्णार्ज्जुनाच्युतैः ।
इयेष द्वारकां हन्तुं कृत्स्नां जेतुञ्च मेदिनीं । निवारितस्ततः प्राज्ञैः सुहृद्भिर्हितकाम्यया ।
वैरानुबन्धमुत्सृज्य स्वराज्यमनुशास्ति यः । स सागरध्वजः पाण्ड्यश्चन्द्ररश्मिनिभैर्हयैः ।
वैदूर्य्यजालसञ्छन्नैर्वीर्य्यद्रविणमाश्रितः । दिव्यं विस्फारयंश्चापं द्रोणमभ्यद्रवद्बली ।     १०२०
आटरूषकवर्णाभा हयाः पाण्ड्यानुयायिनां । अवहन् रथमुख्यानामयुतानि चतुर्द्दश ।
नानावर्णेन रूपेण नानाकृतिमुखा हयाः । रथचक्रध्वजं वीरं घटोत्कचमुदावहन् ।
भरतानां समेतानामुत्सृज्यैको मतानि यः । गतो युधिष्ठिरं भक्त्या त्यक्त्वा सर्व्वमभीप्सितं ।
लोहिताक्षं महाबाहुं सुहन्तं तमरिध्वजाः । महासत्त्वा महाकायाः सौवर्णस्यन्दने स्थितं ।
सुवर्णवर्णा धर्म्मज्ञमनीकस्थं युधिष्ठिरं । राजश्रेष्ठं हयश्रेष्ठाः सर्व्वतः पृष्ठतोऽन्वयुः ।     १०२५
वर्णैरुच्चावचैरन्यैः सद्मानां प्रभद्रकाः । सन्न्यवर्त्तन्त युद्धाय बहवो देवरूपिणः ।
ते यत्ता भीमसेनेन सहिताः काञ्चनध्वजाः । प्रत्यदृश्यन्त राजेन्द्र सेन्द्रा इव दिवौकसः ।
प्रत्यरोचत तान् सर्व्वान् धृष्टद्युम्नः समागतान् । सर्व्वाण्यति च सैन्यानि भारद्वाजो व्यरोचत ।
अतीव शुशुभे तस्य ध्वजः कृष्णाजिनोत्तरः । कमण्डलुर्महाराज जातरूपमयः शुभः ।
ध्वजन्तु भीमसेनस्य वैदूर्य्यमणिलोचनं । भ्राजमानं महासिंहं राजतं दृष्टवानहं ।     १०३०
ध्वजन्तु कुरुराजस्य पाण्डवस्य महौजसः । दृष्टवानस्मि सौवर्णं सोमं ग्रहगणान्वितं ।
मृदङ्गौ चात्र विपुलौ दिव्यौ नन्दोपनन्दकौ । यन्त्रेणाहन्यमानौ च सुस्वनौ हर्षवर्द्धनौ ।
शरभं पृष्ठसौवर्णं नकुलस्य महाध्वजं । अपश्याम रथेऽत्युग्रं भीषणार्थमवस्थितं ।
हंसस्तु राजतः श्रीमान् ध्वजे घण्टापताकवान् । सहदेवस्य दुर्द्धर्षो द्विषतां शोकवर्द्धनः ।
पञ्चानां द्रौपदेयानां प्रतिमाध्वजभूषणं । धर्म्ममारुतशक्राणामश्विनोश्च महात्मनोः ।     १० ५
अभिमन्योः कुमारस्य शार्ङ्गपक्षी हिरण्मयः । रथे ध्वजवरो राजंस्तप्तचामीकरोज्ज्वलः ।
घटोत्कचस्य राजेन्द्र ध्वजे गृध्रो व्यरोचत । अश्वाश्च कामगास्तस्य रावणस्य यथा पुरा ।
माहेन्द्रञ्च धनुर्द्दिव्यं धर्म्मराजे युधिष्ठिरे । वायव्यं भीमसेनस्य धनुर्द्दिव्यमभून्नृप ।
त्रैलोक्यरक्षणार्थाय ब्रह्मणा सृष्टमायुधं । तद्दिव्यमजरञ्चैव फाल्गुनार्थाय वै धनुः ।
वैष्णवं नकुलार्थाय सहदेवाय चाश्विनं । घटोत्कचाय पौलस्त्यं धनुर्द्दिव्यं भयानकं ।     १०४०
रौद्रमाग्नेयकौवेर्य्यं याम्यं गिरिशमेव च । पञ्चानां द्रौपदेयानां धनूरत्नानि भारत ।
रौद्रं धनुर्वरं श्रेष्ठं लेभे यं रौहिणीसुतः । तं तुष्टः प्रददौ रामः सौभद्राय महात्मने ।
एते चान्ये च बहवो ध्वजा हेमविभूषिताः । तत्रादृश्यन्त शूराणां द्विषतां शोकवर्द्धनाः ।
तदभूद्ध्वजसम्बाधमकापुरुषसेवितं । द्रोणानीकं महाराज पटे चित्रमिवार्पितं ।
शुश्रुवुर्नामगोत्राणि वीराणां संयुगे तदा । द्रोणमाद्रवतां राजन् स्वयम्बर इवाहवे ।     १०४५
इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकवधपर्व्वणि ध्वजादिकथने त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ धृतराष्ट्र उवाच ॥ व्यथयेयुरिमे सेनां देवानामपि सञ्जय। आहवे न्यवर्त्तन्त वृकोदरमुखा नृपाः।
संप्रयुक्तः किलैवायं दिष्टे भवति पूरुषः। तस्मिन्नेव च सर्व्वार्थाः प्रदृश्यन्ते पृथग्विधाः।
दीर्घं विप्रोषितः कालमरण्ये जटिलोऽजिनी। अज्ञातश्चैव लोकस्य विजहार युधिष्ठिरः।
स एव महतीं सेनां समावर्त्तयदाहवे। किमन्यद्दैवसंयोगान्मम पुत्त्रस्य चाभवत्।
युक्त एव हि भाग्येन ध्रुवमुत्पद्यते नरः। स तथा कृष्यते तेन न यथा स्वयमिच्छति। १०५०
द्यूतव्यसनमासाद्य क्लेशितो हि युधिष्ठिरः। स पुनर्भागधेयेन सहायानुपलब्धवान्।
अर्द्ध मे केकया लब्धाः काशिकाः कोशलाश्च ये। चेदयश्चापरे वङ्गा मामेव समुपाश्रिताः।
पृथिवी भूयसी तात मम पार्थस्य नो तथा। इति मामब्रवीत् सूत मन्दो दुर्य्योधनः पुरा।
तस्य सेनासमूहस्य मध्ये द्रोणः सुरक्षितः। निहतः पार्षतेनाजौ किमन्यद्भागधेयतः।
मध्ये राज्ञां महाबाहुं सदा युद्धाभिनन्दनं। सर्व्वास्त्रपारगं द्रोणं कथं मृत्युमुपेयिवान्। १०५५
समनुप्राप्तकृच्छ्रोऽहं मोहं परममागतः। भीष्मद्रोणौ हतौ श्रुत्वा नाहं जीवितुमुत्सहे।
यन्मां क्षत्ताब्रवीत्तात प्रपश्यन् पुत्त्रगृद्धिनं। दुर्य्योधनेन तत् सर्व्वं प्राप्तं सूत मया सह।
नृशंसन्तु परं तु स्यात् त्यक्त्वा दुर्य्योधनं यदि। पुत्त्रशेषं चिकीर्षेयं कृत्स्नेन मरणं व्रजेत्।
यो हि धर्म्मं परित्यज्य भवत्यर्थपरो नृपः। सोऽस्माच्च हीयते लोकात् क्षुद्रभावञ्च गच्छति।
अद्य चाप्यस्य राष्ट्रस्य हतोत्साहस्य सञ्जय। अवशेषं न पश्यामि ककुदे मृदिते सति। १०६०
कथं स्यादवशेषो हि धुर्य्ययोरभ्यतीतयोः। यौ नित्यमुपजीवामः क्षमिणौ पुरुषर्षभौ।
व्यक्तमेव च मे शंस यथा युद्धमवर्त्तत। केऽयुध्यन् केऽप्यपाकर्षन् के क्षुद्राः प्राद्रवन् भयात्।
धनञ्जयश्च मे शंस यद्यच्चक्रे रथर्षभः। तस्माद्भयं नो भूयिष्ठं भ्रातृव्याच्च वृकोदरात्।
यथासीच्च निवृत्तेषु पाण्डवेयेषु सञ्जय। मम सैन्यावशेषस्य सन्निपातः सुदारुणः।
कथञ्च वो मनस्तात निवृत्तेष्वभवत्तदा। मामकानाञ्च के शूरास्तांस्तत्र न्यवारयन्। १०६५
इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकवधपर्व्वणि धृतराष्ट्रवाक्ये चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ सञ्जय उवाच ॥ महद्भैरवमासीन्नः सन्निवृत्तेषु पाण्डुषु। दृष्ट्वा द्रोणं छाद्यमानं तैर्भास्करमिवाम्बुदैः।
तैश्चोद्धूतं रजस्तीव्रमवचक्रे चमूस्तव। ततो हतममंस्याम द्रोणं दृष्टिपथे हते।
तांस्तु शूरान् महेष्वासान् क्रूरं कर्म्म चिकीर्षतः। दृष्ट्वा दुर्य्योधनस्तूर्णं स्वसैन्यं समचूचुदत्।
यथाशक्ति यथोत्साहं यथासत्त्वं नराधिपाः। वारयध्वं यथायोगं पाण्डवानामनीकिनीं।
ततो दुर्म्मर्षणो भीममभ्यगच्छत् सुतस्तव। आराद्दृष्ट्वा किरन् बाणैरिच्छन् द्रोणस्य जीवितं। १०७०
बाणैः समाचिनोद्भीमं क्रुद्धो मृत्युरिवाहवे। तञ्च भीमोऽतुदद्बाणैस्तदासीत्तुमुलं महत्।
त ईश्वरसमादिष्टाः प्राज्ञाः शूराः प्रहारिणः। राज्यं मृत्युभयं त्यक्त्वा प्रत्यतिष्ठन् परान् युधि।
कृतवर्म्मा शिनेः पौत्त्रं मत्तो मत्तमिव द्विपं। सैन्धवः क्षत्रवर्म्माणमायान्तं निशितैः शरैः।
उग्रधन्वा महेष्वासं यत्तो द्रोणादवारयत्। कृतवर्म्मा सिन्धुपतेश्छित्त्वा केतनकार्म्मुके।

नाराचैर्दशभिः क्रुद्धः सर्व्वमर्म्मस्वताडयत्। अथान्यद्धनुरादाय सैन्धवः क्षतहस्तवत्। १०७५
विव्याध क्षत्रवर्म्माणं रणे सर्व्वायसैः शरैः। युयुत्सुं पाण्डवार्थाय यतमानं महारथं।
सुबाहुर्भ्रातरं शूरं यत्तो द्रोणादवारयत्। सुबाहोः सधनुर्व्वाणौ अस्यतः परिघोपमौ।
युयुत्सुः शितपीताभ्यां क्षुराभ्यामच्छिनद्भुजौ। राजानं पाण्डवश्रेष्ठं धर्म्मात्मानं युधिष्ठिरं।
वेलेव सागरं क्षुब्धं मद्रराट् समवारयत्। तं धर्म्मराजो बहुभिर्म्मर्म्मभिद्भिरवाकिरत्।
मद्रेशस्तं चतुःषष्ट्या शरैर्विद्ध्वाऽनदद्भृशं। तस्य नानदतः केतुमुच्चकर्त्त च कार्म्मुकं। १०८०
क्षुराभ्यां पाण्डवश्रेष्ठस्तत उच्चुक्रुशुर्जनाः। तथैव राजा वाह्लीको राजानं द्रुपदं शरैः।
आद्रवन्तं सहानीको महानीकं न्यवारयत्। तद्युद्धमभवद्घोरं वृद्धयोः सहसेनयोः।
यथा महायूथपयोर्द्विपयोः सम्प्रभिन्नयोः। विन्दानुविन्दावावन्त्यौ विराटं मत्स्यमार्च्छतां।
सह सैन्यैः सहानीकं यथेन्द्राग्नी पुरा वलिं। तदुत्पिञ्जलकं युद्धमासीद्देवासुरोपमं।
मत्स्यानां केकयैः सार्द्धमभीताश्वरथद्विपं। नाकुलिन्तु शतानीकं भूतकर्म्मा सभापतिः। १०८५
अस्यन्तमिषुजालानि यान्तं द्रोणादवारयत। ततो नकुलदायादस्त्रिभिर्भल्लैः सुसंशितैः।
चक्रे विवाहुशिरसं भूतकर्म्माणमाहवे। सुतसोमन्तु विक्रान्तमायान्तं तं शरौघिणं।
द्रोणायाभिमुखं वीरं विविंशतिरवारयत्। सुतसोमस्तु संक्रुद्धः स्वपितृव्यमजिह्मगैः।
विविंशतिं शरैर्भित्त्वा नाभ्यवर्त्तत दंशितः। अथ भीमरथः शाल्वमाशुगैरायसैः शितैः।
षड्भिः साश्वनियन्तारमनयद्यमसादनं। श्रुतकर्म्माणमायान्तं मयूरसदृशैर्हयैः। १०९०
चित्रसेनिर्महाराज तव पौत्रमवारयत्। तौ पौत्रौ तव दुर्द्धर्षौ परस्परवधैषिणौ।
पितॄणामर्थसिद्ध्यर्थं चक्रतुर्युद्धमुत्तमं। तिष्ठन्तमग्रे तं दृष्ट्वा प्रतिविन्ध्यं महाहवे।
द्रौणिर्म्मानं पितुः कुर्व्वन् मार्गणैः समवारयत्। तं क्रुद्धं प्रतिविव्याध प्रतिविन्ध्यः शितैः शरैः।
सिंहलाङ्गूललक्ष्माणं पितुरर्थे व्यवस्थितं। प्रवपन्निव वीजानि वीजकाले नरर्षभ।
द्रौणायनिं द्रौपदेयाः शरवर्षैरवाकिरन्। आर्ज्जुनिं श्रुतकीर्त्तिन्तु द्रौपदेयं महारथं। १०९५
द्रोणायाभिमुखं यान्तं दौःशासनिरवारयत्। तस्य कृष्णसमः कार्ष्णिस्त्रिभिर्भल्लैः सुसंशितैः।
धनुर्ध्वजञ्च सूतञ्च छित्त्वा द्रोणान्तिकं ययौ। यस्तु शूरतमो राजन्नुभयोः सेनयोर्म्मतः।
तं पटच्चरहन्तारं लक्ष्मणः समवारयत्। स लक्ष्मणस्येष्वसनं छित्त्वा लक्ष्म च भारत।
लक्ष्मणे शरजालानि विसृजन् बह्वशोभत। विकर्णस्तु महाप्राज्ञो याज्ञसेनिं शिखण्डिनं।
पर्य्यवारयदायान्तं युवानं समरे युवा। ततस्तमिषुजालेन याज्ञसेनिः समावृणोत्। ११००
विधूय तद्वाणजालं वभौ तव सुतो वली। अङ्गदोऽभिमुखं वीरमुत्तमौजसमाहवे।
द्रोणायाभिमुखं यान्तं शरौघेण न्यवारयत्। स सम्प्रहारस्तुमुलस्तयोः पुरुषसिंहयोः।
सैनिकानाञ्च सर्व्वेषां तयोश्च प्रीतिवर्द्धनः। दुर्म्मुखस्तु महेष्वासो वीरं पुरुजितं वली।
द्रोणायाभिमुखं यान्तं वत्सदन्तैरवारयत्। स दुर्म्मुखं भ्रुवोर्म्मध्ये नाराचेनाभ्यताडयत्।

तस्य तद्विबभौ वक्त्रं सनालमिव पङ्कजं। कर्णस्तु केकयान् भ्रातॄन् पञ्च लोहितकध्वजान्। ११०५
द्रोणायाभिमुखं यान्तं शरवर्षैरवारयत्। ते चैनं भृशसन्तप्ताः शरवर्षैरवाकिरन्।
स च तान् छादयामास शरजालैः पुनः पुनः। नैव कर्णो न ते पञ्च ददृशुर्बाणसंवृताः।
साश्वसूतध्वजरथाः परस्परशराचिताः। पुत्रास्ते दुर्ज्जयश्चैव जयश्च विजयश्च ह।
नीलकाश्यजयत्सेनांस्त्रयस्त्रीन् प्रत्यवारयन्। तद्युद्धमभवद्घोरमीक्षितृप्रीतिवर्द्धनं।
सिंहव्याघ्रतरक्षूणां यथर्क्षमहिषर्षभैः। क्षेमधूर्त्तिबृहन्तौ तु भ्रातरौ सात्वतं युधि। १११०
द्रोणाभिमुखमायान्तं शरैस्तीक्ष्णैस्ततक्षतुः। तयोस्तस्य च तद्युद्धमत्यद्भुतमिवाभवत्।
सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने। राजानन्तु तथाऽम्बष्ठमेकं युद्धाभिनन्दिनं।
चेदिराजः शरानस्यन् क्रुद्धो द्रोणादवारयत्। ततोऽम्बष्ठोऽस्थिभेदिन्या निरभिद्यच्छलाकया।
स त्यक्त्वा सशरं चापं रथात् भूमिमुपागमत्। वार्द्धक्षेमिन्तु वार्ष्णेयं कृपः शारद्वतः शरैः।
अक्षुद्रः क्षुद्रकैर्बाणैः क्रुद्धरूपमवारयत्। युध्यन्तौ कृपवार्ष्णेयौ येऽपश्यंश्चित्रयोधिनौ। १११५
ते युद्धासक्तमनसो नान्यां बुबुधिरे क्रियां। सौमदत्तिस्तु राजानं मणिमन्तमतन्द्रितं।
पर्य्यवारयदायान्तं यशो द्रोणस्य वर्द्धयन्। स सौमदत्तेस्त्वरितश्छित्त्वेष्वासनकेतने।
पुनः पताकां सूतञ्च छत्रं चापातयद्रथात्। अथाप्लुत्य रथात्तूर्णं यूपकेतुरमित्रहा।
साश्वसूतध्वजरथं तं चकर्त्त वरासिना। रथञ्च स्वं समास्थाय धनुरादाय चापरं।
स्वयं यच्छन् हयान् राजन् व्यधमत् पाण्डवीं चमूं। पाण्ड्यमिन्द्रमिवायान्तमसुरान् प्रति सत्वरं। ११२०
समर्थः सायकौघेन वृषसेनो न्यवारयत्। गदापरिघनिस्त्रिंशपट्टिशायोघनाश्मभिः।
मुषलैर्मुद्गरैश्चक्रैर्भिन्दिपालपरश्वधैः। पांशुवाताग्निसलिलैर्भस्मलोष्ट्रतृणद्रुमैः।
आरुजन् प्ररुजन् भञ्जन् निघ्नन् विद्रावयन् क्षिपन्। सेनां विभीषयन्नायाद्द्रोणं प्रेप्सुर्घटोत्कचः।
तन्तु नानाप्रहरणैर्नानायुद्धविशेषणैः। राक्षसं राक्षसः क्रुद्धः समाजघ्ने ह्यलम्बुषः।
तयोस्तदभवद्युद्धं रक्षोग्रामणिमुख्ययोः। तादृक् यादृक् पुरा वृत्तं शम्बरामरराजयोः। ११२५
एवं द्वन्द्वशतान्यासन् रथवारणवाजिनां। पदातीनाञ्च भद्रन्ते तव तेषाञ्च सङ्कुले।
नैतादृशो दृष्टपूर्व्वः सङ्ग्रामो नैव च श्रुतः। द्रोणस्याभावभावे तु प्रसक्तानां यथाऽभवत्।
इदं घोरमिदं चित्रमिदं रौद्रमिति प्रभो। तत्र युद्धान्यदृश्यन्त प्रततानि बहूनि च।
इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकवधपर्व्वणि द्वन्द्वयुद्धे पञ्चविंशोऽध्यायः॥ २५ ॥
॥ धृतराष्ट्र उवाच ॥ तेष्वेवं सन्निवृत्तेषु प्रत्युद्यातेषु भागशः। कथं युयुधिरे पार्था मामकाश्च तरस्विनः।
किमर्ज्जुनश्चाप्यकरोत् संशप्तकरथं प्रति। संशप्तका वा पार्थस्य किमकुर्व्वत सञ्जय। ११३०
॥ सञ्जय उवाच ॥ तथा तेष्वंनिवृत्तेषु प्रत्युद्यातेषु भागशः। स्वयमभ्यद्रवद्भीमं नागानीकेन ते सुतः।
स नाग इव नागेन गोवृषेणेव गोवृषः। समाहूतः स्वयं राज्ञा नागानीकमुपाद्रवत्।
स युद्धकुशलः पार्थो बाहुवीर्य्येण चान्वितः। अभिनत् कुञ्जरानीकमचिरेणैव मारिष।

ते गजा गिरिसङ्काशाः क्षरन्तः सर्व्वतोमदं । भीमसेनस्य नाराचैर्व्विमुखा विमदीकृताः ।
विधमेदभ्रजालानि यथा वायुः समुद्धतः । व्यधमत्तान्यनीकानि तथैव पवनात्मजः । ११३५
स तेषु विसृजन् वाणान् भीमो नागेष्वशोभत । भुवनेष्विव सर्व्वेषु गभस्तीनुदितो रविः ।
ते भीमवाणाभिहताः संस्यूता विबभुर्गजाः । गभस्तिभिरिवार्कस्य व्योम्नि नानाबलाहकाः ।
तथा गजानां कदनं कुर्व्वाणमनिलात्मजं । क्रुद्धो दुर्य्योधनोऽभ्येत्य प्रत्यविध्यत् शितैः शरैः ।
ततः क्षणेन क्षितिपं क्षतजप्रतिमेक्षणः । क्षयं निनीषुर्निशितैर्भीमो विव्याध पत्रिभिः ।
स शरार्पितसर्व्वाङ्गः क्रुद्धो विव्याध पाण्डवं । नाराचैरर्करश्म्याभैर्भीमसेनं स्मयन्निव । ११४०
तस्य नागं मणिमयं रत्नचित्रं ध्वजे स्थितं । भल्लाभ्यां कार्म्मुकञ्चैव क्षिप्रं चिच्छेद पाण्डवः ।
दुर्य्योधनं पीड्यमानं दृष्ट्वा भीमेन मारिष । चुक्षोभयिषुरभ्यागादङ्गो मातङ्गमास्थितः ।
तमापतन्तं नागेन्द्रमम्बुदप्रतिमस्वनं । कुम्भान्तरे भीमसेनो नाराचेनार्दयद्भृशं ।
तस्य कायं विनिर्भिद्य न्यमज्जद्धरणीतले । ततः पपात द्विरदो वज्राहत इवाचलः ।
तस्यावर्ज्जितनागस्य म्लेच्छस्य च पतिष्यतः । शिरश्चिच्छेद भल्लेन क्षिप्रकारी वृकोदरः । ११४५
तस्मिन्निपतिते वीरे सम्प्राद्रवत सा चमूः । सम्भ्रान्ताश्वद्विपरथा पदातीनवमृद्नती ।
तेष्वनीकेषु भग्नेषु विद्रवत्सु समन्ततः । प्राग्ज्योतिषस्ततो भीमं कुञ्जरेण समाद्रवत् ।
चरणाभ्यामथो द्वाभ्यां संहतेन करेण च । व्यावृत्तनयनः क्रुद्धः प्रदहन्निव पाण्डवं ।
वृकोदररथं साश्वमविशेषमचूर्णयत् । पद्भ्यां भीमोऽप्यथो धावन् तस्य गात्रेष्वलीयत ।
जानन्नञ्जलिकावेधं न व्यक्रामत पाण्डवः । गात्राभ्यन्तरगो भूत्वा करेणाताडयन्मुहुः । ११५०
लालयामास तं नागं वधाकाङ्क्षिणमव्ययं । कुलालचक्रवन्नागस्तदा तूर्णमथाभ्रमत् ।
नागायुतबली श्रीमान् कालयानो वृकोदरः । भीमोऽपि निष्क्रम्य ततः सुप्रतीकाग्रतोऽभवत् ।
भीमं करेणावनम्य जानुभ्यामभ्यपातयत् । ग्रीवायां वेष्टयित्वैनं स गजो हन्तुमैहत ।
करवेष्टं भीमसेनो भ्रमं दत्त्वा व्यमोचयत् । पुनर्गात्राणि नागस्य प्रविवेश वृकोदरः ।
यावत् प्रतिगजायातं स्वबलस्थमवैक्षत । भीमोऽपि नागगात्रेभ्यो विनिष्क्रम्य ययौ जवात् । ११५५
ततः सर्व्वस्य सैन्यस्य नादः समभवन्महान् । अहो धिङ्निहतो भीमः कुञ्जरेणेति मारिष ।
तेन नागेन सन्त्रस्ता पाण्डवानामनीकिनी । सहसाऽभ्यद्रवद्राजन् यत्र तस्थौ वृकोदरः ।
ततो युधिष्ठिरो राजा हतं मत्वा वृकोदरं । भगदत्तं सपाञ्चाल्यः सर्व्वतः समवारयत् ।
तं रथै रथिनां श्रेष्ठः परिवार्य्य समन्ततः । अवाकिरच्छरैस्तीक्ष्णैः शतशोऽथ सहस्रशः ।
स विघातं पृषत्कानामङ्कुशेन समाचरन् । गजेन पाण्डुपाञ्चालान् व्यधमत् पर्व्वतेश्वरः । ११६०
तदद्भुतमपश्याम भगदत्तस्य संयुगे । तथा वृद्धस्य चरितं कुञ्जरेण विशाम्पते ।
ततो राजा दशार्णानां प्राग्ज्योतिषमुपाद्रवत् । तिर्य्यग्गमेन नागेन समदेनाशुगामिना ।
तयोर्युद्धं समभवन्नागयोर्भीमरूपयोः । सपक्षयोः पर्व्वतयोर्यथा सद्रुमयोः पुरा ।

प्राग्ज्योतिषपतेर्नागः सन्निवृत्यापसृत्य च। पार्थं दशार्णाधिपतेर्भित्त्वा नागमघातयत्।
तोमरैः सूर्य्यरश्म्याभैर्भगदत्तोऽथ सप्तभिः। जघान द्विरदस्थं तं शत्रुं प्रचलितासनं। ११६५
व्यवच्छिद्य तु राजानं भगदत्तं युधिष्ठिरः। रथानीकेन महता सर्व्वतः पर्य्यवारयत्।
स कुञ्जरस्थो रथिभिः शुशुभे सर्व्वतोवृतः। पर्व्वते वनमध्यस्थो ज्वलन्निव हुताशनः।
मण्डलं सर्व्वतः श्लिष्टं रथिनामुग्रधन्विनां। किरतां शरवर्षाणि स नागः पर्य्यवस्थितः।
ततः प्राग्ज्योतिषो राजा परिगृह्य महागजं। प्रेषयामास तं नागं युयुधानरथं प्रति।
शिनेः पौत्रस्य तु रथं परिगृह्य महाद्विपः। अभिचिक्षेप वेगेन युयुधानस्त्वपाक्रमत्। ११७०
बृहतः सैन्धवानश्वान् समुत्थाप्याथ सारथिः। तस्थौ सात्यकिमासाद्य स सुप्लुतं रथं प्रति।
स तु लब्ध्वाऽन्तरं नागस्त्वरितो रथमण्डलात्। निश्चक्राम ततः सर्व्वान् परिचिक्षेप पार्थिवान्।
ते त्वाशुगतिना तेन त्रास्यमाना नरर्षभाः। तमेकं द्विरदं सङ्ख्ये मेनिरे शतशो द्विपान्।
ते गजस्थेन काल्यन्ते भगदत्तेन पाण्डवाः। तेषां प्राद्रवतां भीमः पाञ्चालानामितस्ततः।
गजवाजिकृतः शब्दः सुमहान् समजायत। भगदत्तेन समरे काल्यमानेषु पाण्डुषु। ११७५
प्राग्ज्योतिषमभिक्रुद्धः पुनर्भीमः समभ्ययात्। तस्याभिद्रवतो वाहान् हस्तमुक्तेन वारिणा।
सिक्त्वा व्यत्रासयन्नागस्तं भीमः प्राकिरन्ततः। ततस्तमभ्ययात्तूर्णं रुचिपर्व्वा कृतीसुतः।
प्रवर्षन् शरवर्षेण रथस्थोऽन्तकसन्निभः। ततः स रुचिपर्व्वाणं शरेणानतपर्व्वणा।
सुपर्व्वा पर्व्वतपतिर्निन्ये वैवस्वतक्षयं। तस्मिन्निपतिते वीरे सौभद्रो द्रौपदीसुताः।
चेकितानो धृष्टकेतुर्युयुत्सुश्चार्दयन् द्विपं। त एनं शरधाराभिर्धाराभिरिव तोयदाः। ११८०
सिषिचुर्भैरवान्नादान् विनदन्तो जिघांसवः। ततः पार्ष्ण्यङ्कुशाङ्गुष्ठैः कृतिना चोदितो द्विपः।
प्रसारितकरः प्रायात् स्तब्धकर्णेक्षणो द्रुतं। सोऽधिष्ठाय पदा वाहान् युयुत्सोः सूतमारुजत्।
युयुत्सुस्तु रथाद्राजन्नपाक्रामत् त्वरान्वितः। ततः पाण्डवयोधास्ते नागराजं शरैर्द्रुतं।
सिषिचुर्भैरवान्नादान् विनदन्तो जिघांसवः। पुत्रस्तु तव सम्भ्रान्तः सौभद्रस्य द्रुतो रथं।
स कुञ्जरस्थो विसृजन्निषूनरिषु पार्थिवः। बभौ रश्मीनिवादित्यो भुवनेषु समुत्सृजन्। ११८५
तमार्ज्जुनिर्द्वादशभिर्युयुत्सुर्दशभिः शरैः। त्रिभिस्त्रिभिर्द्रौपदेया धृष्टकेतुश्च विव्यधुः।
सोऽतियत्नार्पितैर्बाणैराचितो द्विरदो बभौ। संस्यूत इव सूर्य्यस्य रश्मिभिर्जलदो महान्।
नियन्तुः शिल्पयत्नाभ्यां प्रेरितोऽरिशराहतः। परिचिक्षेप तान्नागः स रिपून् सव्यदक्षिणं।
गोपाल इव दण्डेन यथा पशुगणान् वने। आवेष्टयत तां सेनां भगदत्तस्तथा मुहुः।
क्षिप्रं श्येनाभिपन्नानां वायसानामिव स्वनः। बभूव पाण्डवेयानां भृशं विद्रवतां स्वनः। ११९०

स नागराजः प्रवराङ्कुशाहतः पुरा सपक्षोऽद्रिवरो यथा नृप। भयं तदा रिपुषु समादधद्भृशं वणिग्जनानामभितो यथाऽर्णवः।

ततो ध्वनिर्द्विरदरथाश्वपार्थिवैर्भयाद्द्रवद्भिर्जनितोऽतिभैरवः। क्षितिं वियद्द्यां विदिशो दिशस्तथा समावृणोत् पार्थिव संयुगे ततः।

स तेन नागप्रवरेण पार्थिवो भृशं जगाहे द्विषतामनीकिनीं । पुरा सुगुप्तां विबुधैरिवाहवे विरोचनो देववरूथिनीमिव ।
भृशं ववौ ज्वलनसखो वियद्रजः समावृणोन्मुहुरपि चैव सैनिकान् । तमेव नागं गणशो यथा गजान् समन्ततो द्रुतमथ
मेनिरे जनाः ।

इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकवधपर्व्वणि भगदत्तयुद्धे षड्विंशोऽध्यायः ॥ २६ ॥

॥ सञ्जय उवाच ॥ यन्मां पार्थस्य सङ्ग्रामे कर्म्माणि परिपृच्छसि । तच्छृणुष्व महाबाहो पार्थो यदकरोन्मृधे । ११९५
रजो दृष्ट्वा समुद्भूतं श्रुत्वा च जननिस्वनं । भगदत्ते विकुर्व्वाणे कौन्तेयः कृष्णमब्रवीत् ।
यथा प्राग्ज्योतिषो राजा गजेन मधुसूदन । त्वरमाणोऽभिनिष्क्रान्तो ध्रुवं तस्यैष निस्वनः ।
इन्द्रादनवरः सङ्ख्ये गजयानविशारदः । प्रथमो वा द्वितीयो वा पृथिव्यामिति मे मतिः ।
स चापि द्विरदश्रेष्ठः सदाऽप्रतिगजो युधि । सर्व्वशस्त्रातिगः सङ्ख्ये कृतकर्म्मा जितक्लमः ।
सोढा शस्त्रनिपातानामग्निस्पर्शस्य चानघ । स पाण्डवबलं सर्व्वमद्यैको नाशयिष्यति । १२००
नचावाभ्यामृतेऽन्योऽस्ति शक्तस्तं प्रतिबाधितुं । त्वरमाणस्ततो याहि यतः प्राग्ज्योतिषाधिपः ।
शक्रसख्यं द्विपबलं वयसा चापि विस्मितं । अद्यैनं प्रेषयिष्यामि बलहन्तुः प्रियातिथिं ।
वचनादथ कृष्णस्तु प्रययौ सव्यसाचिनः । दीर्य्यते भगदत्तेन यत्र पाण्डववाहिनी ।
तं प्रयान्तं ततः पश्चादाह्वयन्तो महारथाः । संशप्तकाः समारोहन् सहस्राणि चतुर्द्दश ।
दशैव तु सहस्राणि त्रिगर्त्तानां महारथाः । चत्वारि च सहस्राणि वासुदेवस्य चानुगाः । १२०५
दीर्य्यमाणां चमूं दृष्ट्वा भगदत्तेन मारिष । आहूयमानस्य च तैरभवद्धृदयं द्विधा ।
किन्नु श्रेयस्करं कर्म्म भवेदद्येति चिन्तयन् । इह वा विनिवर्त्तेयं गच्छेयं वा युधिष्ठिरं ।
तस्य बुद्ध्या विचार्य्यैवमर्ज्जुनस्य कुरूद्वह । अभवद्भूयसी बुद्धिः संशप्तकवधे स्थिरा ।
स सन्निवृत्तः सहसा कपिप्रवरकेतनः । एको रथसहस्राणि निहन्तुं वासवीरणे ।
साहि दुर्य्योधनस्यासीन्मतिः कर्णस्य चोभयोः । अर्ज्जुनस्य वधोपाये तेन द्वैधमकल्पयत् । १२१०
स तु दोलायमानो वा द्वैधीभावेन पाण्डवः । वधेन तु नराग्राणामकरोत्तां मृषा तदा ।
ततः शतसहस्राणि शराणां नतपर्व्वणां । व्यसृजन्नर्ज्जुने राजन् संशप्तकमहारथाः ।
नैव कुन्तीसुतः पार्थो नैव कृष्णो जनार्द्दनः । न हया न रथो राजन् दृश्यन्ते स्म शरैश्चिताः ।
यदा मोहमनुप्राप्तः सस्वेदश्च जनार्द्दनः । ततस्तान् प्रायशः पार्थो ब्रह्मास्त्रेण निजघ्निवान् ।
शतशः पाणयश्छिन्नाः सेषुज्यातलकार्म्मुकाः । केतवो वाजिनः सूता रथिनश्चापतन् क्षितौ । १२१५
द्रुमाचलाग्राम्बुधरैः समकायाः सुकल्पिताः । हतारोहाः क्षितौ पेतुर्द्विपाः पार्थशराहताः ।
विप्रविद्धकुथावल्गाश्छिन्नभाण्डाः परासवः । सारोहास्तुरगाः पेतुर्मथिता मार्गणैर्भृशं ।
सर्ष्टिप्रासासिनखराः समुद्गरपरश्वधाः । संच्छिन्ना बाहवः पेतुर्नृणां भल्लैः किरीटिना ।
बालादित्याम्बुजेन्दूनां तुल्यरूपाणि मारिष । संच्छिन्नान्यर्ज्जुनशरैः शिरांस्युर्व्वीं प्रपेदिरे ।
जज्वालालङ्कृतैः सेना पत्रिभिः प्राणभोजनैः । नानारूपस्तदामित्रान् क्रुद्धे निघ्नति फाल्गुने । १२२०

क्षोभयन्तं तथा सेनां द्विरदं नलिनीमिव । धनञ्जयं भूतगणाः साधु साध्वित्यपूजयन् ।
दृष्ट्वा तत् कर्म पार्थस्य वासवस्येव माधवः । विस्मयं परमं गत्वा प्राञ्जलिस्तमुवाच ह ।
कर्म्मैतत् पार्थ शक्रेण यमेन धनदेन च । दुष्करं समरे यत्ते कृतमद्येति मे मतिः ।
युगपत् समरे यत्ते शतशोऽथ सहस्रशः । पतिता इव मे दृष्टाः संशप्तकमहारथाः ।
ततः संशप्तकान् हत्वा भूयिष्ठं ये व्यवस्थिताः । भगदत्ताय याहीति कृष्णं पार्थोऽभ्यचोदयत् । १२२५
इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकवधपर्व्वणि संशप्तकवधे सप्तविंशोऽध्यायः ॥ २७ ॥

॥ सञ्जय उवाच ॥ यियासतस्ततः कृष्णः पार्थस्याश्वान् मनोजवान् । सम्प्रैषीद्धेमसञ्छन्नान् द्रोणानीकाय पाण्डुरान् ।
तं प्रयान्तं कुरुश्रेष्ठं स्वान् त्रातुं द्रोणतापितान् । सुशर्म्मा भ्रातृभिः सार्द्धं युद्धार्थी पृष्ठतोऽन्वयात् ।
ततः श्वेतहयः कृष्णमब्रवीदजितञ्जयः । एष मां भ्रातृभिः सार्द्धं सुशर्म्माह्वयतेऽच्युत ।
दीर्य्यते चोत्तरेणैव तत् सैन्यं मधुसूदन । द्वैधीभूतं मनो मेऽद्य कृतं संशप्तकैरिदं ।
किन्नु संशप्तकान् हन्मि स्वान् रक्षाम्यहितार्द्दितान् । इति मे त्वं मतं वेत्थ तत्र किं सुकृतं भवेत् । १२३०
एवमुक्तस्तु दाशार्हः स्यन्दनं प्रत्यवर्त्तयत् । येन त्रिगर्त्ताधिपतिः पाण्डवं समुपाह्वयत् ।
ततोऽर्ज्जुनः सुशर्म्माणं विद्ध्वा सप्तभिराशुगैः । ध्वजं धनुश्चास्य रथे क्षुराभ्यां समकृन्तत ।
त्रिगर्त्ताधिपतेश्चापि भ्रातरं षड्भिराशुगैः । साश्वं ससूतं त्वरितः पार्थः प्रैषीद्यमक्षयं ।
ततो भुजगसङ्काशां सुशर्म्मा शक्तिमायसीं । चिक्षेपार्ज्जुनमादिश्य वासुदेवाय तोमरं ।
शक्तिं त्रिभिः शरैश्छित्त्वा तोमरं त्रिभिरर्ज्जुनः । सुशर्म्माणं शरव्रातैर्म्मोहयित्वा न्यवर्त्तयत् । १२३५
तं वासवमिवायान्तं भूरिवर्षशरौघिणं । राजंस्तावकसैन्यानां नोग्रं कश्चिदवारयत् ।
ततो धनञ्जयो बाणैः सर्व्वानेव महारथान् । आयाद्विनिघ्नन् कौरव्यान् दहन् कक्षमिवानलः ।
तस्य वेगमसह्यं तु कुन्तीपुत्रस्य धीमतः । नाशक्नुवंस्ते संसोढुं स्पर्शमग्नेरिव प्रजाः ।
संवेष्टयन्ननीकानि शरवर्षेण पाण्डवः । सुपर्णपातवद्राजन् प्रायात् प्राग्ज्योतिषं प्रति ।
यत्तदा नामयज्जिष्णुर्भरतानामपापिनां । धनुः क्षेमकरं सङ्ख्ये द्विषतामश्रुवर्द्धनं । १२४०
तदेव तव पुत्रस्य राजन् दुर्द्यूतदेविनः । कृते क्षत्रविनाशाय धनुरायच्छदर्ज्जुनः ।
तथा विक्षोभ्यमाणा सा पार्थेन तव वाहिनी । व्यशीर्य्यत महाराज नौरिवासाद्य पर्व्वतं ।
ततो दशसहस्राणि न्यवर्त्तन्त धनुष्मतां । मतिं कृत्वा रणे क्रूरा वीरा जयपराजये ।
व्यपेतहृदयत्रासा आवव्रुस्तं महारथाः । अथ पार्थो गुरुं भारं सर्व्वभारसहो युधि ।
यथा पद्मवनं क्रुद्धः प्रविष्टः षष्टिहायनः । मर्दयेत्तद्वदायस्तः पार्थोऽमृद्नाच्चमूं तव । १२४५
तस्मिन् प्रमथिते सैन्ये भगदत्तो नराधिपः । तेन नागेन सहसा धनञ्जयमुपाद्रवत् ।
तं रथेन नरव्याघ्रः प्रत्यगृह्णाद्धनञ्जयः । स सन्निपातस्तुमुलो बभूव रथनागयोः ।
कल्पिताभ्यां यथाशास्त्रं रथेन च गजेन च । सङ्ग्रामे चेरतुर्वीरौ भगदत्तधनञ्जयौ ।
ततो जीमूतसङ्काशान्नागादिन्द्र इव प्रभुः । अभ्यवर्षच्छरौघेण भगदत्तो धनञ्जयं ।

सचापि शरवर्षं तत् शरवर्षेण वासविः। अप्राप्तमेव चिच्छेद भगदत्तस्य वीर्य्यवान्। १२५०
ततः प्राग्ज्योतिषो राजा शरवर्षं निवार्य्य तत्। शरैर्ज्जघ्ने महाबाहुं पार्थं कृष्णञ्च मारिष।
ततः स्म शरजालेन महताऽभ्यवकीर्य्य तौ। चोदयामास तं नागं बधायाच्युतपार्थयोः।
तमापतन्तं द्विरदं दृष्ट्वा क्रुद्धमिवान्तकं। चक्रेऽपसव्यं त्वरितः स्यन्दनेन जनार्द्दनः।
तम्प्राप्तमपि नेयेष परावृत्तं महाद्विपं। सारोहं मृत्युसात्कर्त्तुं स्मरन् धर्म्मं धनञ्जयः।
स तु नागो द्विपरथान् हयांश्चारुज्य मारिष। प्राहिणोन्मृत्युलोकाय ततः क्रुद्धो धनञ्जयः। १२५५
इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकबधपर्व्वणि भगदत्तयुद्धे अष्टाविंशोऽध्यायः॥ २८॥
॥ धृतराष्ट्र उवाच॥ पार्थः क्रुद्धः किमकरोद्भगदत्तस्य पाण्डवः। प्राग्ज्योतिषो वा पार्थस्य तन्मे शंस यथातथं।
॥ सञ्जय उवाच॥ प्राग्ज्योतिषेण संसक्तावुभौ दाशार्हपाण्डवौ। मृत्युदंष्ट्रान्तिकं प्राप्तौ सर्व्वभूतानि मेनिरे।
तथास्य शरवर्षाणि पातयत्यनिशं प्रभो। गजस्कन्धान्महाराज कृष्णयोः स्यन्दनस्थयोः।
अथ कार्ष्णायसैर्वाणैः पूर्णकार्म्मुकनिःसृतैः। अविध्यद्देवकीपुत्त्रं हेमपुङ्खैः शिलाशितैः।
अग्निस्पर्शसमाकीर्णा भगदत्तेन चोदिताः। निर्भिद्य देवकीपुत्त्रं क्षितिं जग्मुः सुवाससः। १२६०
तस्य पार्थो धनुश्छित्त्वा परिचारं निहत्यच। लालयन्निव राजानं भगदत्तमयोधयत्।
सोऽर्करश्मिनिभांस्तीक्ष्णांस्तोमरान् वै चतुर्द्दश। प्रेरयन् सव्यसाची तु त्रिधैकैकमथाच्छिनत्
ततो नागस्य तद्वर्म्म व्यधमत् पाकशासनिः। शरजालेन महता तद्व्यशीर्य्यत भूतले।
विशीर्णवर्म्मा सगजः शरैः सुभृशमर्द्दितः। बभौ धारानिपाताक्तो व्यभ्रः पर्व्वतराडिव।
ततः प्राग्ज्योतिषः शक्तिं हेमदण्डमयोमयीं। व्यसृजद्वासुदेवाय द्विधा तामर्ज्जुनोऽच्छिनत्। १२६५
ततश्छत्त्रं ध्वजञ्चैव च्छित्त्वा राज्ञोऽर्ज्जुनः शरैः। विव्याध दशभिस्तूर्णमुत्स्मयन् पर्व्वतेश्वरं।
सोऽतिविद्धोऽर्ज्जुनशरैः सुपुङ्खैः कङ्कपत्त्रिभिः। भगदत्तस्ततः क्रुद्धः पाण्डवस्य जनाधिप।
व्यसृजत्तोमरान्मूर्द्ध्नि श्वेताश्वस्योन्ननाद च। तैरर्ज्जुनस्य समरे किरीटं परिवर्त्तितं।
परिवृत्तकिरीटं तत् यमयन्निव फाल्गुनः। सुदृष्टः क्रियतां लोक इति राजानमब्रवीत्।
एवमुक्तस्तु संक्रुद्धः सरवर्षेण पाण्डवं। अभ्यवर्षत् सगोविन्दं धनुरादाय भास्वरं। १२७०
तस्य पार्थो धनुश्छित्वा तूणीरान् संनिकृत्य च। त्वरमाणो द्विसप्तत्या सर्व्वमर्म्मस्वताडयत्।
विद्धस्ततो विव्यथितो वैष्णवास्त्रमुदीरयन्। अभिमन्त्र्याङ्कुशं क्रुद्धो व्यसृजत् पाण्डवोरसि।
विसृष्टं भगदत्तेन तदस्त्रं सर्व्वघाति वै। उरसा प्रतिजग्राह पार्थं संच्छाद्य केशवः।
वैजयन्त्यभवन्माला तदस्त्रं केशवोरसि। ततोऽर्ज्जुनः क्लान्तमनाः केशवं प्रत्यभाषत।
अयुध्यमानस्तुरगान् संयन्तास्मि तवानघ। इत्युक्त्वा पुण्डरीकाक्ष प्रतिज्ञां स्वां न रक्षसि। १२७५
यद्यहं व्यसनी वा स्यामशक्तो वा निवारणे। ततस्त्वयैव कार्य्यं स्यान्न तत् कार्य्यं मयि स्थिते।
सवाणः सधनुश्चाहं ससुरासुरमानुषान्। शक्तो लोकानिमान् जेतुं तच्चापि विदितं तव।
ततोऽर्ज्जुनं वासुदेवः प्रत्युवाचाथ तद्वचः। शृणु गुह्यमिदं पार्थ पुरावृत्तं यथाऽनघ।

चतुर्मूर्त्तिरहं शश्वल्लोकत्राणार्थमुद्यतः । आत्मानं परिभज्येह लोकानां हितमादधे ।
एका मूर्त्तिस्तपश्चर्य्यां कुरुते मे भुवि स्थिता । अपरा पश्यति जगत् कुर्व्वाणं साध्वसाधुनी । १२८०
अपरा कुरुते कर्म्म मानुषं लोकमाश्रिता । शेते चतुर्थी त्वपरा निद्रां वर्षसहस्रिकीं ।
याऽसौ वर्षसहस्रान्ते मूर्त्तिरुत्तिष्ठते मम । वरार्हेभ्यो वरान् श्रेष्ठान् तस्मिन् काले ददाति सा ।
तन्तु कालमनुप्राप्तं विदित्वा पृथिवी तदा । अयाचत वरं यन्मां नरकार्थाय तच्छृणु ।
देवानामसुराणाञ्च अवध्यस्तनयोऽस्तु मे । उपेतो वैष्णवास्त्रेण तन्मे त्वं दातुमर्हसि ।
एवं वरमहं श्रुत्वा जगत्यास्तनये तदा । अमोघमस्त्रं प्रायच्छं वैष्णवं परमं पुरा । १२८५
अवोचञ्चैतदस्त्रं वै ह्यमोघं भवतु क्षिते । नरकस्याभिरक्षार्थं नैनं कश्चिद्वधिष्यति ।
अनेनास्त्रेण ते गुप्तः सुतः परबलार्द्दनः । भविष्यति दुराधर्षः सर्व्वलोकेषु सर्व्वदा ।
तथेत्युक्त्वा गता देवी कृतकामा मनस्विनी । स चाप्यासीद्दुराधर्षो नरकः शत्रुतापनः ।
तस्मात् प्राग्ज्योतिषं प्राप्तं तदस्त्रं पार्थ मामकं । नास्यावध्योऽस्ति लोकेषु सेन्द्ररुद्रेषु मारिष ।
तन्मया त्वत्कृते चैतदन्यथा व्यपनायितं । विमुक्तं परमास्त्रेण जहि पार्थ महासुरं । १२९०
वैरिणं युधि दुर्द्धर्षं भगदत्तं सुरद्विषं । यथाऽहं जघ्निवान् पूर्व्वं हितार्थं नरकन्तथा ।
एवमुक्तस्तदा पार्थः केशवेन महात्मना । भगदत्तं शितैर्व्वाणैः सहसा समवाकिरत् ।
ततः पार्थो महाबाहुरसंभ्रान्तो महामनाः । कुम्भयोरन्तरे नागं नाराचेन समार्पयत् ।
स समासाद्य तं नागं बाणो वज्र इवाचलं । अभ्यगात् सह पुङ्खेन वल्मीकमिव पन्नगः ।
स गजो भगदत्तेन प्रेर्य्यमाणो मुहुर्म्मुहुः । न करोति वचस्तस्य दरिद्रस्येव योषितः । १२९५
स तु विष्टभ्य गात्राणि दन्ताभ्यामवनिं ययौ । नदन्नार्त्तस्वरं प्राणानुत्ससर्ज्ज महाद्विपः ।
ततश्चन्द्रार्द्धबिम्बेन बाणेनानतपर्व्वणा । बिभेद हृदयं राज्ञो भगदत्तस्य पाण्डवः ।
स भिन्नहृदयो राजा भगदत्तः किरीटिना । शरासनं शरांश्चैव गतासुः प्रमुमोच ह ।
शिरसस्तस्य विभ्रष्टं प्रपपात वरांशुकं । नालताडनविभ्रष्टं पलाशं नलिनादिव ।

स हेममाली तपनीयभाण्डात् पपात नागाद्गिरिसन्निकाशात् । सुपुष्पितो मारुतवेगरुग्णो महीधराग्रादिव कर्णिकारः । १३००
निहत्य तं नरपतिमिन्द्रविक्रमं सखायमिन्द्रस्य तदैन्द्रिराहवे । ततोऽपरांस्तव जयकाङ्क्षिणो नरान् बभञ्ज वायुर्ब्बलवान् द्रुमानिव ।

इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकवधपर्व्वणि भगदत्तवधे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

॥ सञ्जय उवाच ॥ प्रियमिन्द्रस्य सततं सखायममितौजसं । हत्वा प्राग्ज्योतिषं पार्थः प्रदक्षिणमवर्त्तत ।
ततो गान्धारराजस्य सुतौ परपुरञ्जयौ । आर्द्दतामर्ज्जुनं संख्ये भ्रातरौ वृषकाचलौ ।
तौ समेत्यार्ज्जुनं वीरौ पुरः पश्चाच्च धन्विनौ । अविध्येतां महावेगैर्निशितैराशुगैर्भृशं ।
वृषकस्य हयान् सूतं धनुश्छत्रं ध्वजं रथं । तिलशो व्यधमत् पार्थः सौबलस्य शितैः शरैः । १३०५
ततोऽर्ज्जुनः शरव्रातैर्नानाप्रहरणैरपि । गान्धारानाकुलांश्चक्रे सौबलप्रमुखान् पुनः ।

ततः पञ्चशतान् वीरान् गान्धारानुद्यतायुधान् । प्राहिणोन्मृत्युलोकाय क्रुद्धो बाणैर्धनञ्जयः ।
हताश्वात्तु रथात्तूर्णमवतीर्य्य महाभुजः । आरुरोह रथं भ्रातुरन्यच्च धनुराददे ।
तावेकं रथमारूढौ भ्रातरौ वृषकाचलौ । शरवर्षेण बीभत्सुमविध्येतां मुहुर्म्मुहुः ।
श्यालौ तव महात्मानौ राजानौ वृषकाचलौ । भृशं निजघ्नतुः पार्थमिन्द्रं वृत्रबलाविव । १२१०
लब्धलक्षौ तु गान्धारावहतां पाण्डवं पुनः । निदाघवार्षिकौ मासौ लोकं घर्म्माम्बुभिर्यथा ।
तौ रथस्थौ नरव्याघ्रौ राजानौ वृषकाचलौ । संश्लिष्टाङ्गौ स्थितौ राजन् जघानैकेषुणार्ज्जुनः ।
तौ रथात् सिंहसङ्काशौ लोहिताक्षौ महाभुजौ । गतासू पेततुर्व्वीरौ सोदर्य्यावेकलक्षणौ ।
तयोर्भूमिं गतौ देहौ रथाद्बन्धुजनप्रियौ । यशो दशदिशः पुण्यं गमयित्वा व्यवस्थितौ ।
दृष्ट्वा विनिहतौ वीरौ मातुलावपलायिनौ । भृशं मुमुचुरस्राणि पुत्रास्तव विशाम्पते । १२१५
निहतौ भ्रातरौ दृष्ट्वा मायाशतविशारदः । कृष्णौ संमोहयन्मायां विदधे शकुनिस्ततः ।
लगुडायोगुडाश्मानः शतघ्न्यश्च सशक्तयः । गदापरिघनिस्त्रिंशशूलमुद्गरपट्टिशाः ।
सकम्पनर्ष्टिनखरा मुषलानि परश्वधाः । क्षुराः क्षुरप्रनालीका वत्सदन्तास्थिसन्धयः ।
चक्राणि विशिखाः प्रासा विविधान्यायुधानि च । प्रपेतुः सर्व्वतो दिग्भ्यः प्रदिग्भ्यश्चार्ज्जुनं प्रति ।
खरोष्ट्रमहिषा व्याघ्राः सिंहाः सृमरचिल्लकाः । ऋक्षाः शालावृका गृध्राः कपयश्च सरीसृपाः । १२२०
विविधानि च रक्षांसि क्षुधितान्यर्ज्जुनं प्रति । संक्रुद्धान्यभ्यधावन्त विविधानि वयांसि च ।
ततो दिव्यास्त्रविच्छूरः कुन्तीपुत्रो धनञ्जयः । विसृजन्निषुजालानि सहसा तान्यताडयत् ।
ते हन्यमानाः शूरेण प्रवरैः सायकैर्दृढैः । विरुवन्तो महारावं विनेशुः सर्व्वतो हताः ।
ततस्तमः प्रादुरभूदर्ज्जुनस्य रथं प्रति । तस्माच्च तमसो वाचः क्रूराः पार्थमभर्त्सयन् ।
तत्तमो भैरवं घोरं भयकर्त्तृ महाहवे । उत्तमास्त्रेण महता ज्योतिष्केणार्ज्जुनोऽवधीत् । १२२५
हते तस्मिन् जलौघास्तु प्रादुरासन् भयानकाः । अम्भसस्तु विनाशार्थमादित्यास्त्रमथार्ज्जुनः ।
प्रयुक्ताम्भस्ततस्तेन प्रायशोऽस्त्रेण शोषितं । एवं बहुविधा माया सौबलस्य कृताः कृताः ।
जघानास्त्रबलेनाशु प्रहसन्नर्ज्जुनस्तदा । तथा हतासु मायासु त्रस्तोऽर्ज्जुनशराहतः ।
अपायाज्जवनैरश्वैः शकुनिः प्राकृतो यथा । ततोऽर्ज्जुनोऽस्त्रविच्छ्रैष्ठ्यं दर्शयन्नात्मनोऽरिषु ।
अभ्यवर्षच्छरौघेण कौरवाणामनीकिनीं । सा हन्यमाना पार्थेन तव पुत्रस्य वाहिनी । १२३०
द्वैधीभूता महाराज गङ्गेवासाद्य पर्व्वतं । द्रोणमेवान्वपद्यन्त केचित्तत्र नरर्षभाः ।
केचिद्दुर्य्योधनं राजन्नर्द्यमानाः किरीटिना । नापश्याम ततस्त्वेनं सैन्ये वै रजसावृते ।
गाण्डीवस्य च निर्घोषः श्रुतो दक्षिणतो मया । शङ्खदुन्दुभिनिर्घोषं वादित्राणाञ्च निःस्वनं ।
गाण्डीवस्य तु निर्घोषो व्यतिक्रम्यास्पृशद्दिवं । ततः पुनर्दक्षिणतः सङ्ग्रामश्चित्रयोधिनां ।
सु युद्धं चार्ज्जुनस्यासीदहन्तु द्रोणमन्वयां । यौधिष्ठिराण्यनीकानि प्रहरन्ति ततस्ततः । १२३५
नानाविधान्यनीकानि पुत्राणां तव भारत । अर्ज्जुनो व्यधमत् काले दिवीवाभ्राणि मारुतः ।

तं वासवमिवायान्तं भूरिवर्षं शरौघिणम्। महेष्वासं नरव्याघ्रं नायं कश्चिदवारयत्।
ते हन्यमानाः पार्थेन त्वदीया व्यथिता भृशं। स्वानेव बहवो जघ्नुर्विद्रवन्तस्ततस्ततः।
तेऽर्ज्जुनेन शरा मुक्ताः कङ्कपत्रास्तनुच्छिदः। शलभा इव सम्पेतुः संवृण्वाना दिशो दश।
तुरङ्गं रथिनं नागं पदातिमपि मारिष। विनिर्भिद्य क्षितिं जग्मुर्वल्मीकमिव पन्नगाः। १२४०
न च द्वितीयं व्यसृजत् कुञ्जराश्वनरेषु सः। पृथगेकशराहता निपेतुस्ते गतासवः।
हतैर्मनुष्यैर्द्विरदैश्च सर्व्वतः शराभिवृष्टैश्च हयैर्निपातितैः। तदा श्वगोमायुबलाभिनादितं विचित्रमायोधनशिरो बभूव तत्।
पिता सुतं त्यज्य सुहृद्वरं सुहृत्तथैव पुत्रं पितरः शरातुराः। स्वरक्षणे कृतमतयस्तदा जनास्त्यजन्ति वाहानपि पार्थ
पीड़िताः।

इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकवधपर्व्वणि शकुनिपलायने त्रिंशोऽध्यायः॥ ३०॥

॥ धृतराष्ट्र उवाच ॥ तेष्वनीकेषु भग्नेषु पाण्डुपुत्रेण सञ्जय। चलितानां द्रुतानाञ्च कथमासीन्मनो हि वः।
अनीकानां प्रभग्नानामवस्थानमपश्यताम्। दुष्करं प्रतिसन्धानं तन्ममाचक्ष्व सञ्जय। १२४५
॥ सञ्जय उवाच ॥ तथाऽपि तव पुत्रस्य प्रियकामा विशाम्पते। यशः प्रवीरा लोकेषु रक्षन्तो द्रोणमन्वयुः।
समुद्यतेषु शस्त्रेषु सम्प्राप्ते च युधिष्ठिरे। अकुर्व्वन्नार्य्यकर्म्माणि भैरवे सत्यभीतवत्।
अन्तरं भीमसेनस्य प्रापतन्नमितौजसः। सात्यकेश्चैव वीरस्य धृष्टद्युम्नस्य वा विभो।
द्रोणं द्रोणमिति क्रूराः पाञ्चालाः समचोदयन्। मा द्रोणमिति पुत्रास्ते कुरून् सर्व्वानचोदयन्।
द्रोणं द्रोणमिति ह्येके मा द्रोणमिति चापरे। कुरूणां पाण्डवानाञ्च द्रोणद्यूतमवर्त्तत। १२५०
यं यं प्रमथते द्रोणः पाञ्चालानां रथव्रजं। तत्र तत्र तु पाञ्चाल्यो धृष्टद्युम्नोऽभ्यवर्त्तत।
तथा भागविपर्य्यासे सङ्ग्रामे भैरवे सति। वीराः समासदन् वीरान् कुर्व्वन्तो भैरवं रवं।
अकम्पनीयाः शत्रूणां बभूवुस्तत्र पाण्डवाः। आकम्पयंस्त्वनीकानि स्मरन्तः क्लेशमात्मनः।
तेऽमर्षवशसम्प्राप्ता ह्रीमन्तः सत्त्वचोदिताः। त्यक्त्वा प्राणान् न्यवर्त्तन्त घ्नन्तो द्रोणं महाहवे।
अयसामिव सम्पातः शिलानामिव चाभवत्। दीव्यतां तुमुले युद्धे प्राणैरमिततेजसाम्। १२५५
न तु स्मरन्ति सङ्ग्राममपि वृद्धास्तथाविधं। दृष्टपूर्व्वं महाराज श्रुतपूर्व्वमथापि वा।
प्राकम्पतेव पृथिवी तस्मिन् वीरावसादने। प्रवर्त्तता बलौघेन महता भारपीड़िता।
घूर्णतोऽपि बलौघस्य दिवं स्तब्ध्वेव निःस्वनः। अजातशत्रोस्तत्सैन्यमाविवेश सुभैरवः।
समासाद्य तु पाण्डूनामनीकानि सहस्रशः। द्रोणेन चरता सङ्ख्ये प्रभग्नानि शितैः शरैः।
तेषु प्रमथ्यमानेषु द्रोणेनाद्भुतकर्म्मणा। पर्य्यवारयदासाद्य द्रोणं सेनापतिः स्वयं। १२६०
तदद्भुतमपश्याम द्रोणपाञ्चाल्ययोस्तदा। नैव तस्योपमा काचिदिति मे निश्चिता मतिः।
ततो नीलोऽनलप्रख्यो ददाह कुरुवाहिनीं। शरस्फुलिङ्गश्चापार्च्चिर्दहन् कक्षमिवानलः।
तं दहन्तमनीकानि द्रोणपुत्रः प्रतापवान्। पूर्व्वाभिभाषी सुश्लक्ष्णं स्मयमानोऽभ्यभाषत।
नील किं बहुभिर्दग्धैस्तव योधैः शरार्च्चिषा। मयैकेन हि युध्यस्व क्रुद्धः प्रहर चाशु मां।

तं पद्मनिकराकारं पद्मपत्रनिभेचणं। व्याकोषपद्माभिमुखं नीलो विव्याध सायकैः। १२६६
तेनातिविद्धः सहसा द्रौणिर्भल्लैः शितैस्त्रिभिः। धनुर्ध्वजञ्च छत्रञ्च दिषतः समकृन्तत।
सोऽवप्लुत्य रथात्तस्मान्नीलश्चर्म्मवरासिभृत्। द्रौणायणेः शिरः कायाद्धर्त्तुमैच्छत् पतत्त्रिवत्।
तस्योन्नतांसं सुनसं शिरः कायात् सकुण्डलं। भल्लेनापाहरद्द्रौणिः स्मयमान इवानघ।
सम्पूर्णचन्द्राभमुखः पद्मपत्रनिभेचणः। प्रांशुरुत्पलपत्राभो निहतो न्यपतत् चितौ।
ततः प्रविव्यथे सेना पाण्डवी भृशमाकुला। आचार्य्यपुत्त्रेण हते नीले ज्वलिततेजसि। १२७०
अचिन्तयंश्च ते सर्व्वे पाण्डवानां महारथाः। कथं नो वासविस्त्रायाच्छत्रुभ्य इव मारिष।
दचिणेन तु सेनायाः कुरुते कदनं बली। संशप्तकावशेषस्य नारायणबलस्य च।
इति श्रीमहाभारते द्रोणपर्व्वणि संशप्तकवधपर्व्वणि नीलवधे एकत्रिंशोऽध्यायः॥ ३१ ॥
॥ सञ्जय उवाच॥ प्रतिघातन्तु सैन्यस्य नामृष्यत वृकोदरः। सोऽभ्यहन् वाह्लिकं षष्ट्या कर्णञ्च दशभिः शरैः।
तस्य द्रोणः शितैर्व्वाणैस्तीक्ष्णधारैरजिह्मगैः। जीवितान्तमभिप्रेप्सुर्म्मर्म्मण्याशु जघान ह।
आनन्तर्य्यमभिप्रेप्सुः षड्विंशत्या समार्पयत्। कर्णो द्वादशभिर्व्वाणैरश्वत्थामा च सप्तभिः। १२७५
षड्भिर्दुर्य्योधनो राजा तत एनमथाकिरत्। भीमसेनोऽपि तान् सर्व्वान् प्रत्यविध्यन्महाबलः।
द्रोणं पञ्चाशतेषूणां कर्णञ्च दशभिः शरैः। दुर्य्योधनं द्वादशभिर्द्रौणिं चाष्टभिराशुगैः।
आरावं तुमुलं कुर्व्वन्नभ्यवर्त्तत तद्रणे। तस्मिन् सन्त्यजति प्राणान् मृत्युसाधारणीकृते।
अजातशत्रुस्तान् योधान् भीमं चातित्यचोदयत्। ते ययुर्भीमसेनस्य समीपममितौजसः।
युयुधानप्रभृतयो माद्रीपुत्त्रौ च पाण्डवौ। ते समेत्य सुसंरब्धाः सहिताः पुरुषर्षभाः। १२८०
महेष्वासवरैर्गुप्ता द्रोणानीकं विभित्सवः। समापेतुर्म्महावीर्य्या भीमप्रभृतयो रथाः।
तान् प्रत्यगृह्णादव्यग्रो द्रोणोऽपि रथिनां वरः। महारथानतिबलान् वीरान् समरयोधिनः।
राज्यं मृत्युभयं त्यक्त्वा तावकाः पाण्डवान् ययुः। सादिनः सादिनोऽभ्यघ्नंस्तथैव रथिनो रथाः।
आसीच्छक्त्यसिसम्पातो युद्धमासीत् परश्वधैः। प्रकृष्टमसियुद्धञ्च बभूव कटुकोदयं।
कुञ्जराणाञ्च सम्पातैर्युद्धमासीत् सुदारुणं। अपतत् कुञ्जरादन्यो हयादन्यस्त्ववाक्शिराः। १२८५
नरो वाणविनिर्भिन्नो रथादन्यश्च मारिष। तत्रान्यस्य च संमर्द्दे पतितस्य विवर्म्मणः।
शिरः प्रध्वंसयामास वचस्याक्रम्य कुञ्जरः। अपरांश्चापरेऽमृद्नन् वारणाः पातितान् नरान्।
विषाणैश्चावनिं गत्वा व्यभिन्दन् रथिनो बहून्। नाराचैः केचिदपरे विषाणालग्नसंस्रवैः।
बभ्रमुः समरे नागा मृद्नन्तः शतशो नरान्। कार्ष्णायसतनुत्राणान्नराश्वरथकुञ्जरान्।
पतितान् पोथयाञ्चक्रुर्द्विपाः स्थूलनलानिव। गृध्रपत्राधिवासांसि शयनानि नराधिपाः। १२९०
ह्रीमन्तः कालसम्पक्वान् सुदुःखान्यनुशेरते। हन्ति स्मात्र पिता पुत्त्रं रथेनाभ्यतिवर्त्तते।
पुत्त्रश्च पितरं मोहान्निर्म्मर्य्यादमवर्त्तत। अचो भग्नो ध्वजश्छिन्नश्छत्रमुर्व्व्यां निपातितं।
युगार्द्धं छिन्नमादाय प्रदुद्राव तथा हयः। सासिर्व्वाहुर्न्निपतितः शिरश्छिन्नं सकुण्डलं।

गजेनाक्षिप्य बलिना रथः सञ्चूर्णितः क्षितौ । सारोहश्चापतद्वाजी गजेनाभ्याहतो भृशं ।
निर्म्मर्य्यादं महद्युद्धमवर्त्तत सुदारुणं । हा तात हा पुत्र सखे क्वासि तिष्ठ क्व धावसि । ११९५
प्रहराहर जह्येनं स्मितक्ष्वेडितगर्ज्जितैः । इत्येवमुच्चरन्तिस्म श्रूयन्ते विविधा गिरः ।
नरस्याश्वस्य नागस्य समसज्जत शोणितं । उपाशाम्यद्रजो भौमं भीरून् कश्मलमाविशत् ।
चक्रेण चक्रमासाद्य वीरो वीरस्य संयुगे । अतीतेऽस्त्रपथे काले जहार गदया शिरः ।
आसीत् केशपरामर्शो मुष्टियुद्धं सुदारुणं । नखैर्द्दन्तैश्च शूराणामद्वीपे द्वीपमिच्छतां ।
तत्राच्छिद्यत शूरस्य सखड्गो बाहुरुद्यतः । सधनुश्चापरस्यापि सशरः साङ्कुशस्तथा । १२००
प्राक्रोशदन्यमन्योऽत्र तथाऽन्यो विमुखोऽभवत् । अन्यः प्राप्तस्य चान्यस्य शिरः कायादपाहरत् ।
सशब्दमद्रवच्चान्यः शब्दादन्योऽत्रसद्भृशं । स्वानन्योऽथ परानन्यो जघान निशितैः शरैः ।
गिरिशृङ्गोपमश्चात्र नाराचेन निपातितः । मातङ्गो न्यपतद्भूमौ नदीरोध इवोष्णगे ।
तथैव रथिनं नागः क्षरन् गिरिरिवारुजत् । अध्यतिष्ठत्पदा भूमौ सहाश्वं सहसारथिं ।
शूरान् प्रहरतो दृष्ट्वा कृतास्त्रान् रुधिरोक्षितान् । बहूनप्याविशन्मोहो भीरून् हृदयदुर्ब्बलान् । १२०५
सर्व्वमाविग्नमभवन्न प्राज्ञायत किञ्चन । सैन्येन रजसा ध्वस्तं निर्म्मर्य्यादमवर्त्तत ।
ततः सेनापतिः शीघ्रमयं काल इति ब्रुवन् । नित्याभित्वरितानेव त्वरयामास पाण्डवान् ।
कुर्व्वन्तः शासनं तस्य पाण्डवा बाहुशालिनः । सरो हंसा इवापेतुर्घ्नन्तो द्रोणरथं प्रति ।
गृह्णीताद्रवतान्योऽन्यं माविभीत निकृन्तत । इत्यासीत्तुमुलः शब्दो दुर्द्धर्षस्य रथं प्रति ।
ततो द्रोणः कृपः कर्णो द्रौणी राजा जयद्रथः । विन्दानुविन्दावावन्त्यौ शल्यश्च तान्न्यवारयत् । १२१०
ते त्वार्य्यधर्म्मसंरब्धा दुर्निवारा दुरासदाः । शरार्त्ता न जहुर्द्रोणं पाञ्चालाः पाण्डवैः सह ।
ततो द्रोणोऽतिसंक्रुद्धो विसृजञ्छतशः शरान् । चेदिपाञ्चालपाण्डूनामकरोत् कदनं महत् ।
तस्य ज्यातलनिर्घोषः शुश्रुवे दिक्षु मारिष । वज्रसंह्रादसङ्काशस्त्रासयन्मानवान् बहून् ।
एतस्मिन्नन्तरे जिष्णुर्जित्वा संशप्तकान् बहून् । अभ्ययात्तत्र यत्रासौ द्रोणः पाण्डून् प्रमर्द्दति ।
तान् शरौघमहावर्त्तान् शोणितोदान्महाह्रदान् । तीर्णः संशप्तकान् हत्वा प्रत्यदृश्यत फाल्गुनः । १२१५
तस्य कीर्त्तिमतो लक्ष्म सूर्य्यप्रतिमतेजसः । दीप्यमानमपश्याम तेजसा वानरध्वजं ।
संशप्तकसमुद्रं तमुच्छोष्यास्त्रगभस्तिभिः । स पाण्डवयुगान्तार्कः कुरूनप्यभ्यतीतपत् ।
प्रददाह कुरून् सर्व्वानर्ज्जुनः शस्त्रतेजसा । युगान्ते सर्व्वभूतानि धूमकेतुरिवोत्थितः ।
तेन बाणसहस्रौघैर्गजाश्वरथयोधिनः । ताड्यमानाः क्षितिं जग्मुर्मुक्तकेशाः शरार्द्दिताः ।
केचिदार्त्तस्वरं चक्रुर्विनेदुरपरे पुनः । पार्थबाणहताः केचिन्निपेतुर्विगतासवः । १२२०
तेषामुत्पतितान् कांश्चित् पतितांश्च पराङ्मुखान् । न जघानार्ज्जुनो योधान् योधव्रतमनुस्मरन् ।
ते विकीर्णरथ श्चित्राः प्रायशश्च पराङ्मुखाः । कुरवः कर्ण कर्णेति हाहेति च विचुक्रुशुः ।
तमाधिरथिराक्रन्दं विज्ञाय शरणैषिणां । माभैष्टेति प्रतिश्रुत्य ययावभिमुखोऽर्ज्जुनं ।

स भारतरथश्रेष्ठः सर्व्वभारतहर्षणः। प्रादुश्चक्रे तदाग्नेयमस्त्रमस्त्रविदां वरः।
तस्य दीप्तशरौघस्य दीप्तचापधरस्य च। शरौघान् शरजालेन विदुद्राव धनञ्जयः। १४२५
तथैवाधिरथिस्तस्य वाणान् ज्वलिततेजसः। अस्त्रमस्त्रेण संवार्य्य प्राणदद्विसृजन् शरान्।
धृष्टद्युम्नश्च भीमश्च सात्यकिश्च महारथः। विव्यधुः कर्णमासाद्य त्रिभिस्त्रिभिरजिह्मगैः।
अर्ज्जुनास्त्रन्तु राधेयः संवार्य्य शरवृष्टिभिः। तेषां त्रयाणां चापानि चिच्छेद विशिखैस्त्रिभिः।
ते निकृत्तायुधा वीरा निर्व्विषा भुजगा इव। रथात् शक्तीः समुत्क्षिप्य भृशं सिंहा इवानदन्।
ता भुजाग्रैर्महावेगा विसृष्टा भुजगोपमाः। दीप्यमाना महाशक्त्यो जग्मुराधिरथिं प्रति। १४३०
ता निहत्य शरव्रातैस्त्रिभिस्त्रिभिरजिह्मगैः। ननाद बलवान् कर्णः पार्थाय विसृजञ्छरान्।
अर्ज्जुनश्चापि राधेयं विद्धा सप्तभिराशुगैः। कर्णादवरजं वाणैर्जघान निशितैः शरैः।
ततः शत्रुञ्जयं हत्वा पार्थः षड्भिरजिह्मगैः। जहार सद्यो भल्लेन विपाठस्य शिरो रथात्।
पश्यतां धार्त्तराष्ट्राणामेकेनैव किरीटिना। प्रमुखे सूतपुत्रस्य सोदर्य्या निहतास्त्रयः।
ततो भीमः समुत्पत्य स्वरथाद्वैनतेयवत्। वरासिना कर्णपक्षान् जघान दश पञ्च च। १४३५
पुनः स्वरथमास्थाय धनुरादाय चापरं। विव्याध दशभिः कर्णं सूतमश्वांश्च पञ्चभिः।
धृष्टद्युम्नोऽप्यसिवरं चर्म्म चादाय भास्वरं। जघान चन्द्रवर्म्माणं वृहत्क्षत्रञ्च नैषधं।
ततः स्वरथमास्थाय पाञ्चाल्योऽन्यच्च कार्म्मुकं। आदाय कर्णं विव्याध त्रिसप्तत्या नदन् रणे।
शैनेयोऽप्यन्यदादाय धनुरिन्द्रसमद्युतिः। सूतपुत्रं चतुःषष्ट्या विद्धा सिंह इवानदत्।
भल्लाभ्यां साधुमुक्ताभ्यां छित्त्वा कर्णस्य कार्म्मुकं। पुनः कर्णं त्रिभिर्व्वाणैर्बाह्वोरुरसि चार्प्पयत्। १४४०
ततो दुर्य्योधनो राजा द्रोणश्चैव जयद्रथः। निमज्जमानं राधेयमुज्जह्रुः सात्यकार्णवात्।
पत्त्यश्वरथमातङ्गास्त्वदीयाः शतशोऽपरे। कर्णमेवाभ्यधावन्त त्रासयानाः प्रहारिणः।
धृष्टद्युम्नश्च भीमश्च सौभद्रोऽर्ज्जुन एव च। नकुलः सहदेवश्च सात्यकिं जुगुपू रणे।
एवमेष महारौद्रः क्षयार्थं सर्व्वधन्विनां। तावकानां परेषाञ्च त्यक्त्वा प्राणानभूद्रणः।
पदातिरथनागाश्वा गजाश्च रथपत्तिभिः। रथिनो नागपत्त्यश्वैरथपत्ती रथद्विपैः। १४४५
अश्वैरश्वा गजैर्नागा रथिनो रथिभिः सह। संयुक्ताः समदृश्यन्त पत्तयश्चापि पत्तिभिः।
एवं सुकलिलं युद्धमासीत् क्रव्यादहर्षणं। महद्भिस्तैरभीतानां यमराष्ट्रविवर्द्धनं।
ततो हता नररथवाजिकुञ्जरैरनेकशो द्विपरथपत्तिवाजिनः। गजैर्गजा रथिभिरुदायुधै रथैर्हयैर्हयाः पत्तिगणैश्च पत्तयः।
रथैर्द्विपा द्विरदवरैर्महाहया हयैर्नरा वररथिभिश्च वाजिनः। निरस्तजिह्वादशनेक्षणाः क्षितौ क्षयं गताः प्रमथितवर्म्मभूषणाः।
तथापरैर्बहुकरणैर्वरायुधैर्हता गजाः प्रतिभयदर्शनाः क्षितिं। विपोथिता हयगजपादताडिता भृशाकुला रथखुरनेमिभिः क्षताः। १४५०

पार्श्वेन: सिन्धुराजस्य व्यराजन्त महारथाः । ततः प्रववृते युद्धं तुमुलं लोमहर्षणं । १५०५
तावकानां परेषाञ्च मृत्युं कृत्वा निवर्त्तनं ।

इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि चक्रव्यूहनिर्माणे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ सञ्जय उवाच ॥ तदनीकमनाधृष्यं भारद्वाजेन पालितं । पार्थाः समभ्यवर्त्तन्त भीमसेनपुरोगमाः ।
सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः । कुन्तिभोजश्च विक्रान्तो द्रुपदश्च महारथः ।
आर्ज्जुनिः क्षत्रधर्म्मा च बृहत्क्षत्रश्च वीर्य्यवान् । चेदिपो धृष्टकेतुश्च माद्रीपुत्रौ घटोत्कचः ।
युधामन्युश्च विक्रान्तः शिखण्डी चापराजितः । उत्तमौजाश्च दुर्द्धर्षो विराटश्च महारथः । १५१०
द्रौपदेयाश्च संरब्धाः शैशुपालिश्च वीर्य्यवान् । केकयाश्च महावीर्य्याः सृञ्जयाश्च सहस्रशः ।
एते चान्ये च सगणाः कृतास्त्रा युद्धदुर्म्मदाः । समभ्यधावन् सहसा भारद्वाजं युयुत्सवः ।
समीपे वर्त्तमानांस्तान् भारद्वाजोऽपि वीर्य्यवान् । असम्भ्रान्तः शरौघेण महता समवारयत् ।
महौघः सलिलस्येव गिरिमासाद्य दुर्भिदं । द्रोणं तेनाभ्यवर्त्तन्त वेलामिव जलाशयाः ।
पीड्यमानाः शरै राजन् द्रोणचापविनिःसृतैः । न शेकुः प्रमुखे स्थातुं भारद्वाजस्य पाण्डवाः । १५१५
तदद्भुतमपश्याम द्रोणस्य भुजयोर्ब्बलं । यदेनं नाभ्यवर्त्तन्त पाञ्चालाः सृञ्जयैः सह ।
तमायान्तमभिक्रुद्धं द्रोणं दृष्ट्वा युधिष्ठिरः । बहुधा चिन्तयामास द्रोणस्य प्रतिवारणं ।
अशक्यन्तु तमन्येन द्रोणं मत्वा युधिष्ठिरः । अविषह्यं गुरुं भारं सौभद्रे समवासृजत् ।
वासुदेवादनवरं फाल्गुनाच्चामितौजसं । अब्रवीत् परवीरघ्नमभिमन्युमिदं वचः ।
एत्य नो नार्ज्जुनो गर्हेद्यथा तात तथा कुरु । चक्रव्यूहस्य न वयं विद्म भेदं कथञ्चन । १५२०
त्वं वाऽर्ज्जुनो वा कृष्णो वा भिन्द्यात् प्रद्युम्न एव वा । चक्रव्यूहं महाबाहो पञ्चमो नोपपद्यते ।
अभिमन्यो वरं तात याचतां दातुमर्हसि । पितॄणां मातुलानाञ्च सैन्यानाञ्चैव सर्व्वशः ।
धनञ्जयो हि नस्तात गर्हयेदेत्य संयुगात् । क्षिप्रमस्त्रं समादाय द्रोणानीकं विशातय ।
॥ अभिमन्युरुवाच ॥ द्रोणस्य दृढमत्युग्रमनीकप्रवरं युधि । पितॄणां जयमाकाङ्क्षन्नवगाहेऽविलम्बितं ।
उपदिष्टो हि मे पित्रा योगोऽनीकविशातने । नोत्सहे तु विनिर्गन्तुमहं कस्याञ्चिदापदि । १५२५
॥ युधिष्ठिर उवाच ॥ भिन्ध्यनीकं युधां श्रेष्ठ द्वारं सञ्जनयस्व नः । वयं त्वाऽनुगमिष्यामो येन त्वं तात यास्यसि ।
धनञ्जयसमं युद्धे त्वां वयं तात संयुगे । प्रणिधायानुयास्यामो रक्षन्तः सर्व्वतोमुखाः ।
॥ भीम उवाच ॥ अहं त्वाऽनुगमिष्यामि धृष्टद्युम्नोऽथ सात्यकिः । पाञ्चालाः केकया मत्स्यास्तथा सर्व्वे प्रभद्रकाः ।
सकृद्भिन्नं त्वया व्यूहं तत्र तत्र पुनः पुनः । वयं प्रध्वंसयिष्यामो निघ्नमाना वरान् वरान् ।
॥ अभिमन्युरुवाच ॥ अहमेतत् प्रवेक्ष्यामि द्रोणानीकं दुरासदं । पतङ्ग इव संक्रुद्धो ज्वलितं जातवेदसं । १५३०
तत्कर्म्माद्य करिष्यामि हितं यद्वंशयोर्द्वयोः । मातुलस्य च यत् प्रीतिं करिष्यामि पितुश्च मे ।
शिशुनैकेन सङ्ग्रामे काल्यमानानि सङ्घशः । द्रक्ष्यन्ति सर्व्वभूतानि द्विषत्सैन्यानि वै मया ।
नाहं पार्थेन जातः स्यां न च जातः सुभद्रया । यदि मे संयुगे कश्चिज्जीवितो नाद्य मुच्यते ।

यदि नैकरथेनाहं समग्रं चत्रमण्डलं। न करोम्यष्टधा युद्धे न भवाम्यर्ज्जुनात्मजः।
॥ युधिष्ठिर उवाच॥ एवन्ते भाषमाणस्य बलं सौभद्र वर्द्धतां। यत्त्वमुत्सहसे भेत्तुं द्रोणानीकं दुरासदं। १५३५
रचितं पुरुषव्याघ्रैर्म्महेष्वासैर्म्महाबलैः। साध्यरुद्रमरुत्कल्पैर्व्वस्वग्न्यादित्यविक्रमैः।
॥ सञ्जय उवाच॥ तस्य तद्वचनं श्रुत्वा स यन्तारमचोदयत्। सुमित्राश्वान् रणे चिप्रं द्रोणानीकाय चोदय।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युबधपर्व्वणि अभिमन्युप्रतिज्ञायां पञ्चत्रिंशोऽध्यायः॥ ३५॥
॥ सञ्जय उवाच॥ सौभद्रस्तद्वचः श्रुत्वा धर्म्मराजस्य धीमतः। अचोदयत यन्तारं द्रोणानीकाय भारत।
तेन सञ्चोद्यमानस्तु याहि याहीति सारथिः। प्रत्युवाच ततो राजन्नभिमन्युमिदं वचः।
अतिभारोऽयमायुष्मन्नाहितस्त्वयि पाण्डवैः। सम्प्रधार्य्य चमं बुद्ध्या ततस्त्वं योद्धुमर्हसि। १५४०
आचार्य्यो हि कृती द्रोणः परमास्त्रे कृतश्रमः। अत्यन्तसुखसंवृद्धस्त्वञ्चात्यन्तविशारदः।
ततोऽभिमन्युः प्रहसन् सारथिं वाक्यमब्रवीत्। सारथे को न्वयं द्रोणः समग्रं चत्त्रमेव वा।
ऐरावतगतं शक्रं सहामरगणैरहं। योधयेयं रणमुखे न मे चत्त्रेऽद्य विस्मयः।
न ममैतद्द्विषत्सैन्यं कलामर्हति षोडशीं। अपि विश्वजितं विष्णुं मातुलं प्राप्य सूतज।
पितरं चार्ज्जुनं युद्धे न भीर्म्मामनुयास्यति। ततोऽभिमन्युस्तां वाचं कदर्थीकृत्य सारथेः। १५४५
याहीत्येवाब्रवीदेनं द्रोणानीकाय माचिरं। ततः सञ्चोदयामास हयानस्य त्रिहायणान्।
नातिहृष्टमनाः सूतो हेमभाण्डपरिच्छदान्। ते प्रेषिताः सुमित्रेण द्रोणानीकाय वाजिनः।
द्रोणमभ्यद्रवन्राजन् महावेगपराक्रमाः। तमुदीक्ष्य तथायान्तं सर्व्वे द्रोणपुरोगमाः।
अभ्यवर्त्तन्त कौरव्याः पाण्डवाश्च तमन्वयुः।
सकर्णिकारप्रवरोच्छ्रितध्वजः सुवर्म्मवर्म्मार्ज्जुनिरर्जुनावरः। युयुत्सया द्रोणमुखानभीतवत् समासदत् सिंहशिशुर्य्यथा
द्विपान्। १५५०
ते विंशन्तं मुदा युक्ताः सम्प्रहारं प्रचक्रिरे। आसीत् गाङ्ग इवावर्त्तो मुहूर्त्तमुदधाविव।
शूराणां युध्यमानानां निघ्नतामितरेतरं। सङ्ग्रामस्तुमुलो राजन् प्रावर्त्तत सुदारुणः।
प्रवर्त्तमाने सङ्ग्रामे तस्मिन्नतिभयङ्करे। द्रोणस्य मिषतो व्यूहं भित्त्वा प्राविशदार्ज्जुनिः।
तं प्रविष्टं विनिघ्नन्तं शत्रुमध्ये महाबलं। हस्त्यश्वरथपत्त्योघाः परिवव्रुर्म्मुदान्विताः।
नानावादित्रनिर्घोषैः क्ष्वेडितास्फोटगर्ज्जितैः। हुङ्कारैः सिंहनादैश्च तिष्ठ तिष्ठेति निःस्वनैः। १५५५
घोरैर्हलहलाशब्दैर्म्मागास्तिष्ठेऽहमामिति। असावहममुत्रेति प्रवदन्ति मुहुर्म्मुहुः।
वृंहितैः शिञ्जितैर्हासैः खुरनेमिस्वनैरपि। सन्नादयन्तो वसुधामभिदुद्रुवुरार्ज्जुनिं।
तेषामापततां वीरः शीघ्रं पूर्व्वमथो दृढं। चिप्रास्त्रो न्यवधीद्व्रात्हन् मर्म्मज्ञो मर्म्मभेदिभिः।
ते हन्यमाना विवशा नानालिङ्गैः शितैः शरैः। अभिपेतुस्तमेवाजौ शलभा इव पावकं।
ततस्तेषां शरीरैश्च शरीरावयवैश्च सः। सन्तस्तार तदा भूमिं कुशैर्व्वेदीमिवाध्वरे। १५६०
बद्धगोधाङ्गुलित्राणान् सशरासनसायकान्। सासिचर्म्माङ्कुशाभीषून् सतोमरपरश्वधान्।
सगदायोगुडप्रासान् सर्ष्टितोमरपट्टिशान्। सभिन्दिपालपरिघान् सशक्तिशरकम्पनान्।

तान् शरौघेण महता साश्वसूतान्महारथान् । विमुखीकृत्य सौभद्रः सिंहनादमथानदत् ।
तस्य नादं ततः श्रुत्वा सिंहस्येवामिषैषिणः । नामृष्यन्त सुसंरब्धाः पुनर्द्रोणमुखा रथाः ।
त एनं कोष्ठकीकृत्य रथवंशेन मारिष । व्यसृजन्निषुजालानि नानालिङ्गानि सङ्घशः ।
तान्यन्तरिक्षे चिच्छेद पौत्रस्तव शितैः शरैः । तांश्चैव प्रतिविव्याध तदद्भुतमिवाभवत् । १८९५
ततस्ते कोपितास्तेन शरैराशीविषोपमैः । परिवव्रुर्जिघांसन्तः सौभद्रमपलायिनं ।
समुद्रमिव पर्य्यस्तं त्वदीयं तं बलार्णवं । दधारैकोऽर्ज्जुनिर्व्वाणैर्व्वेलेव भरतर्षभ ।
शूराणां युध्यमानानां निघ्नतामितरेतरं । अभिमन्योः परेषाञ्च नासीत्कश्चित्पराङ्मुखः ।
तस्मिंस्तु घोरसङ्ग्रामे वर्त्तमाने भयङ्करे । दुःसहो नवभिर्व्वाणैरभिमन्युमविध्यत ।
दुःशासनो द्वादशभिः कृपः शारद्वतस्त्रिभिः । द्रोणस्तु सप्तदशभिः शरैराशीविषोपमैः । १९००
विविंशतिश्च सप्तत्या कृतवर्म्मा च सप्तभिः । बृहद्बलस्तथाष्टाभिरश्वत्थामा च सप्तभिः ।
भूरिश्रवास्त्रिभिर्व्वाणैर्मद्रेशः षड्भिराशुगैः । द्वाभ्यां शराभ्यां शकुनिस्त्रिभिर्दुर्य्योधनो नृप ।
स तु तान् प्रतिविव्याध त्रिभिस्त्रिभिरजिह्मगैः । नृत्यन्निव महाराज चापहस्तः प्रतापवान् ।
ततोऽभिमन्युः संक्रुद्धस्त्रास्यमानस्तवात्मजैः । विदर्शयन् वै सुमहच्छिक्षाभ्यासकृतम्बलं ।
गरुडानिलरंहोभिर्यन्तुर्व्वाक्यकरैर्हयैः । दान्तैरश्मकदायादं त्वरमाणमवारयत् । १९०५
स्थित्वा तस्याग्रतः श्रीमानश्मकस्य सुतो बली । विव्याध दशभिर्व्वाणैस्तिष्ठतिष्ठेति चाब्रवीत् ।
तस्याभिमन्युर्दशभिर्व्वाणैः सूतं हयान् ध्वजान् । बाहू धनुः शिरश्चोर्व्व्यां स्मयमानो न्यपातयत् ।
ततस्तस्मिन् हते वीरे सौभद्रेणाश्मकेश्वरे । सञ्चचाल बलं सर्व्वं पलायनपरायणं ।
ततः कर्णः कृपो द्रोणो द्रौणिर्गान्धारराट् शलः । शल्यो भूरिश्रवाः क्राथः सोमदत्तो विविंशतिः ।
वृषसेनः सुषेणश्च कुण्डभेदी प्रतर्द्दनः । वृन्दारको ललित्थश्च प्रबाहुर्दीर्घलोचनः । १९१०
दुर्य्योधनश्च संक्रुद्धः शरवर्षैरवाकिरत् । सोऽतिविद्धो महेष्वासैरभिमन्युरजिह्मगैः ।
शरमादत्त कर्णाय वर्म्मकायावभेदिनं । तस्य भित्त्वा तनुत्राणं देहं निर्भिद्य चाशुगः ।
प्राविशद्धरणीं राजन् वल्मीकमिव पन्नगः । स तेनातिप्रहारेण व्यथितो विह्वलन्निव ।
सञ्चचाल रणे कर्णः क्षितिकम्पे यथाऽचलः । तथाऽन्यैर्निशितैर्व्वाणैः सुषेणं दीर्घलोचनं ।
कुण्डभेदिञ्च संक्रुद्धस्त्रिभिस्त्रीनवधीद्बली । कर्णस्तम्पञ्चविंशत्या नाराचानां समार्पयत् । १९१५
अश्वत्थामा च विंशत्या कृतवर्म्मा च सप्तभिः । स शराचितसर्व्वाङ्गः क्रुद्धः शक्रात्मजात्मजः ।
विचरन् ददृशे सैन्यैः पाशहस्त इवान्तकः । शल्यञ्च शरवर्षेण समीपस्थमवाकिरत् ।
उदक्रोशन्महाबाहुस्तव सैन्यानि भीषयन् । ततः स विद्धोऽस्त्रविदा मर्म्मभिद्भिरजिह्मगैः ।
शल्यो राजन् रथोपस्थे निषसाद मुमोह च । तं हि दृष्ट्वा तथा विद्धं सौभद्रेण यशस्विना ।
सम्प्राद्रवच्चमूः सर्व्वा भारद्वाजस्य पश्यतः । तं प्रेक्षन्तं महाबाहुं रुक्मपुङ्खैः समावृतं । १९२०
त्वदीयाः प्रपलायन्त मृगाः सिंहार्द्दिता इव ।

स तु रणयशसाऽभिपूज्यमानः पितृसुरचारणसिद्धयक्षसङ्घैः । अवनितलगतैश्च भूतसङ्घैरतिविबभौ हुतभुग्यथाज्यसिक्तः ।

इति श्रीमहाभारते द्रोणपर्व्वण्यभिमन्युवधपर्व्वणि अभिमन्युपराक्रमे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

॥ धृतराष्ट्र उवाच ॥ तथा प्रमथमानं तं महेष्वासानजिह्मगैः । आर्ज्जुनिं मामकाः सञ्जय के त्वेनं समवारयन् ।
॥ सञ्जय उवाच ॥ शृणु राजन् कुमारस्य रणे विक्रीडितं महत् । बिभित्सतो रथानीकं भारद्वाजेन रक्षितं ।
मद्रेशं सादितं दृष्ट्वा सौभद्रेणाशुगै रणे । शल्यादवरजः क्रुद्धः किरन् वाणान् समभ्ययात् । १९०५
तस्यार्ज्जुनिः शिरोग्रीवं पाणिपादं धनुर्हयान् । छत्रं ध्वजं नियन्तारं त्रिवेणुं शम्यमेव च ।
चक्रे युगेषां तूणीरावनुकर्षञ्च सायकैः । पताकां चक्रगोप्तारौ सर्व्वोपकरणानि च ।
लघुहस्तः प्रचिच्छेद ददृशे तं न कश्चन । स पपात क्षितौ क्षीणः प्रविद्धाभरणाम्बरः ।
वायुनेव महाचैत्यः सम्भग्नोऽमिततेजसा । अनुगाश्चास्य वित्रस्ताः प्राद्रवन् सर्व्वतोदिशं ।
आर्ज्जुनेः कर्म तद्दृष्ट्वा सम्प्रणेदुः समन्ततः । नादेन सर्व्वभूतानि साधु साध्विति भारत । १९१०
शल्यभ्रातर्य्यथारुग्णे बहुशस्तस्य सैनिकाः । कुलाधिवासनामानि श्रावयन्तोऽर्ज्जुनात्मजं ।
अभ्यधावन्त संक्रुद्धा विविधायुधपाणयः । रथैरश्वैर्गजैश्चान्ये पद्भिश्चान्ये बलोत्कटाः ।
वाणशब्देन महता रथनेमिस्वनेन च । हुङ्कारैः क्ष्वेडितोत्क्रुष्टैः सिंहनादैश्च गर्ज्जितैः ।
ज्यातलत्रस्वनैरन्यैर्गर्ज्जन्तोऽर्ज्जुननन्दनं । ब्रुवन्तश्च न नो जीवन्मोक्ष्यसे जीवितादपि ।
तांस्तथा ब्रुवतो दृष्ट्वा सौभद्रः प्रहसन्निव । यो यः प्राहरत् पूर्व्वं तं तं विव्याध पत्रिभिः । १९१५
संदर्शयिष्यन्नस्त्राणि विचित्राणि लघूनि च । आर्ज्जुनिः समरे शूरो मृदुपूर्व्वमयुध्यत ।
वासुदेवादुपात्तं यदस्त्रं यच्च धनञ्जयात् । अदर्शयत तत् कार्ष्णिः कृष्णाभ्यामविशेषवत् ।
दूरमस्य गुरुं भारं साध्वसञ्च पुनः पुनः । सन्दधद्विसृजंश्चेषून् निर्विशेषमदृश्यत ।
चापमण्डलमेवास्य विस्फुरद्दिक्ष्वदृश्यत । सुदीप्तस्य शरत्काले सवितुर्मण्डलं यथा ।
ज्याशब्दः शुश्रुवे तस्य तलशब्दश्च भारत । महाशनिमुचः काले पयोदस्येव निस्वनः । १९२०
ह्रीमानमर्षी सौभद्रो मानकृत् प्रियदर्शनः । सम्मिमानयिषुर्व्वीरानिष्वस्त्रेणाप्ययुध्यत ।
मृदुर्भूत्वा महाराज दारुणः समपद्यत । वर्षाभ्यतीतो भगवान् शरदीव दिवाकरः ।
शरान् विचित्रान् सुबहून् रुक्मपुङ्खान् शिलाशितान् । मुमोच शतशः क्रुद्धो गभस्तीनिव भास्करः ।
क्षुरप्रैर्वत्सदन्तैश्च विपाठैश्च महायशाः । नाराचैरर्द्धचन्द्राभैर्भल्लैरञ्जलिकैरपि ।
अवाकिरद्रथानीकं भारद्वाजस्य पश्यतः । ततस्तत्सैन्यमभवद्विमुखं शरपीडितं । १९२५

इति श्रीमहाभारते द्रोणपर्व्वण्यभिमन्युवधपर्व्वणि अभिमन्युपराक्रमे अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

॥ धृतराष्ट्र उवाच ॥ द्वैधीभवति मे चित्तं ह्रिया तुष्ट्या च सञ्जय । मम पुत्रस्य यत् सैन्यं सौभद्रः समवारयत् ।
विस्तरेणैव मे शंस सर्व्वं गावल्गणे पुनः । विक्रीडितं कुमारस्य स्कन्दस्येवासुरैः सह ।
॥ सञ्जय उवाच ॥ हन्त ते सम्प्रवक्ष्यामि विमर्द्दमतिदारुणं । एकस्य च बहूनाञ्च यथासीत्तुमुलो रणः ।
अभिमन्युः कृतोत्साहः कृतोत्साहानरिन्दमान् । रथस्थो रथिनः सर्व्वांस्तावकानभ्यवर्षत ।

द्रोणं कर्णं कृपं शल्यं द्रौणिं भोजं बृहद्बलं। दुर्य्योधनं सैामदत्तिं शकुनिञ्च महाबलं। १६५०
नानानृपान्नृपसुतान् सैन्यानि विविधानि च। अलातचक्रवत्सर्व्वान् त्वरमाणः समार्पयत्।
निघ्नन्नमित्रान् सैाभद्रः परमास्त्रैः प्रतापवान्। अदर्शयत तेजस्वी दिक्षु सर्व्वासु भारत।
तद्दृष्ट्वा चरितं तस्य सौभद्रस्यामितौजसः। समकम्पन्त सैन्यानि त्वदीयानि पुनः पुनः।
अथाब्रवीन्महाप्राज्ञो भारद्वाजः प्रतापवान्। हर्षेणोत्फुल्लनयनः कृपमाभाष्य सत्वरं।
घटयन्निव मर्म्माणि पुत्त्रस्य तव भारत। अभिमन्युं रणे दृष्ट्वा तदा रणविशारदं। १६५५
एष गच्छति सैाभद्रः पार्थानामग्रतो युवा। नन्दयन् सुहृदः सर्व्वान् राजानञ्च युधिष्ठिरं।
नकुलं सहदेवञ्च भीमसेनञ्च पाण्डवं। बन्धून् सम्बन्धिनश्चान्यान्मध्यस्थान् सुहृदस्तथा।
नास्य युद्धे समं मन्ये कञ्चिदन्यं धनुर्द्धरं। इच्छन् हन्यादिमां सेनां किमर्थमपि नेच्छति।
द्रोणस्य प्रीतिसंयुक्तं श्रुत्वा वाक्यं तवात्मजः। आर्ज्जुनिं प्रति संक्रुद्धो द्रोणं दृष्ट्वा स्मयन्निव।
अथ दुर्य्योधनः कर्णमब्रवीद्बाह्लिकं नृपं। दुःशासनं मद्रराजं तांस्तान् चान्यान्महारथान्। १६६०
सर्व्वमूर्द्धाभिषिक्तानामाचार्य्यो ब्रह्मवित्तमः। अर्ज्जुनस्य सुतं मूढो नायं हन्तुमिहेच्छति।
नह्यस्य समरे मुच्येदन्तकोऽप्याततायिनः। किमङ्ग पुनरेवान्यो मर्त्यः सत्यं ब्रवीमि वः।
अर्ज्जुनस्य सुतं त्वेष शिष्यत्वादभिरक्षति। शिष्याः पुत्त्राश्च दयितास्तदपत्यञ्च धर्म्मिणं।
संरक्ष्यमाणो द्रोणेन मन्यते वीर्य्यमात्मनः। आत्मसम्भावितो मूढस्तं प्रमथ्नीत माचिरं।
एवमुक्तास्तु ते राजन् सात्वतीपुत्त्रमभ्ययुः। संरब्धास्ते जिघांसन्तो भारद्वाजस्य पश्यतः। १६६५
दुःशासनस्तु तच्छ्रुत्वा दुर्य्योधनवचस्तदा। अब्रवीत् कुरुशार्द्दूलो दुर्य्योधनमिदं वचः।
अहमेनं हनिष्यामि महाराज ब्रवीमि ते। मिषतां पाण्डुपुत्त्राणां पाञ्चालानाञ्च पश्यतां।
ग्रसिष्याम्यद्य सैाभद्रं यथा राहुर्दिवाकरं। उत्क्रुश्य चाब्रवीद्वाक्यं कुरुराजमिदं पुनः।
श्रुत्वा कृष्णौ मया ग्रस्तं सैाभद्रमतिमानिनौ। गमिष्यतः प्रेतलोकं जीवलोकान्न संशयः।
तौ च श्रुत्वा मृतौ व्यक्तं पाण्डोः क्षेत्रोद्भवाः सुताः। एकाह्ना ससुहृद्वर्गाः क्लैव्याद्धास्यन्ति जीवितं। १६७०
तस्मादस्मिन् हते शत्रौ हताः सर्व्वेऽहितास्तव। शिवेन ध्याहि मां राजन्नेष हन्मि रिपूंस्तव।
एवमुक्त्वा नदन् राजन् पुत्त्रो दुःशासनस्तव। सैाभद्रमभ्ययात् क्रुद्धः शरवर्षैरवाकिरत्।
तमतिक्रुद्धमायान्तं तव पुत्त्रमरिन्दम। अभिमन्युः शरैस्तीक्ष्णैः षड्विंशत्या समार्प्पयत्।
दुःशासनस्तु संक्रुद्धः प्रभिन्न इव कुञ्जरः। अयोधयत सैाभद्रमभिमन्युश्च तं रणे।
तौ मण्डलानि चित्राणि रथाभ्यां सव्यदक्षिणं। चरमाणावयुध्येतां रथशिक्षाविशारदौ। १६७५
अथ पणवमृदङ्गदुन्दुभीनां क्रकचमहानकभेरिझर्झराणां। निनदमतिभृशं नराः प्रचक्रुर्लवणजलोद्भवसिंहनादमिश्रं।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युबधपर्व्वणि दुःशासनयुद्धे एकोनचत्वारिंशोऽध्यायः॥ ३९ ॥
॥ सञ्जय उवाच ॥ शरविक्षतगात्रस्तु प्रत्यमित्रमवस्थितं। अभिमन्युः स्मयन्धीमान् दुःशासनमथाब्रवीत्।
दिष्ट्या पश्यामि सङ्ग्रामे मानिनं शूरमागतं। निष्ठुरन्त्यक्तधर्म्माणमाक्रोशनपरायणं।

धनुर्म्मण्डलनिर्मुक्तैः शरैराशीविषोपमैः । सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव ।
कर्णः पञ्चास्य चिक्षेप बाणान् सन्नतपर्व्वणः । अव्यग्रस्तांश्च तान् सर्व्वानग्रहीत् फाल्गुनात्मजः । १७१०
ततो मुहूर्त्तात् कर्णस्य बाणेनैकेन वीर्य्यवान् । सध्वजं कार्म्मुकं वीरश्छित्त्वा भूमावपातयत् ।
ततः कृच्छ्रगतं कर्णं दृष्ट्वा कर्णादनन्तरः । सौभद्रमभ्ययात्तूर्णं दृढमायम्य कार्म्मुकं ।
तत उच्चुक्रुशुः पार्थास्तेषां चानुचरा जनाः । वादित्राणि च सञ्जघ्नुः सौभद्रञ्चापि तुष्टुवुः ।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि दुःशासनकर्णपराजये चत्वारिंशोऽध्यायः ॥ ४० ॥
॥ सञ्जय उवाच ॥ सोऽनुगर्ज्जन् धनुष्पाणिर्ज्यां विकर्षन् पुनः पुनः । तयोर्महात्मनोस्तूर्णं रथान्तरमपातयत् ।
सोऽविध्यद्दशभिर्ब्बाणैरभिमन्युं दुरासदं । सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव । १७१५
पितृपैतामहं कर्म्म कुर्व्वाणमतिमानुषं । दृष्ट्वाऽर्द्दितं शरैः कार्ष्णिं त्वदीया हर्षिताभवन् ।
तस्याभिमन्युरायम्य स्मयन्नेकेन पत्रिणा । शिरः प्रच्यावयामास स रथात् प्रापतद्भुवि ।
कर्णिकारमिवाधूतं वातेनापतितं नगात् । भ्रातरं निहतं दृष्ट्वा राजन् कर्णो व्यथां ययौ ।
विमुखीकृत्य कर्णन्तु सौभद्रः कङ्कपत्रिभिः । अन्यानपि महेष्वासांस्तूर्णमेवाभिदुद्रुवे ।
ततस्तद्विविधं सैन्यं हस्त्यश्वरथपत्तिमत् । क्रुद्धोऽभिमन्युरभिनत्तिग्मतेजा महायशाः । १७२०
कर्णस्तु बहुभिर्ब्बाणैरर्द्यमानोऽभिमन्युना । अपायाज्जवनैरश्वैस्ततोऽनीकमभज्यत ।
शलभैरिव चाकाशे धाराभिरिव चावृते । अभिमन्योः शरै राजन्न प्राज्ञायत किञ्चन ।
तावकानान्तु योधानां वध्यतां निशितैः शरैः । अन्यत्र सैन्धवाद्राजन् न स्म कश्चिदतिष्ठत ।
सौभद्रस्तु ततः शङ्खं प्रध्माप्य पुरुषर्षभ । शीघ्रमभ्यपतत् सेनां भारतीं भरतर्षभ ।
स कक्षेऽग्निरिवोत्सृष्टो निर्द्दहंस्तरसा रिपून् । मध्ये भारतसैन्यानामार्ज्जुनिः पर्य्यवर्त्तत । १७२५
रथनागाश्वमनुजानर्द्दयन्निशितैः शरैः । सम्प्रविश्याकरोद्भूमिं कबन्धगणसङ्कुलां ।
सौभद्रचापप्रभवैर्निकृत्ताः परमेषुभिः । स्वानेवाभिमुखान् घ्नन्तः प्राद्रवन् जीवितार्थिनः ।
ते घोरा रौद्रकर्म्माणो विपाठा बहवः शिताः । निघ्नन्तो रथनागाश्वान् जग्मुराशु वसुन्धरां ।
सायुधाः साङ्गुलित्राणाः सगदाः साङ्गदा रणे । दृश्यन्ते बाहवश्छिन्ना हेमाभरणभूषिताः ।
शरांश्चापानि खड्गांश्च शरीराणि शिरांसि च । सकुण्डलानि स्रग्वीणि भूमावासन् सहस्रशः । १७३०
सोपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः । अक्षैर्व्विमथितैश्चक्रैर्भग्नैश्च बहुधा युगैः ।
शक्तिचापासिभिश्चैव पतितैश्च महाध्वजैः । चर्म्मचापशरैश्चैव व्यपकीर्णैः समन्ततः ।
निहतैः क्षत्रियैरश्वैर्व्वारणैश्च विशाम्पते । अगम्यकल्पा पृथिवी क्षणेनासीत् सुदारुणा ।
वध्यतां राजपुत्राणां क्रन्दतामितरेतरं । प्रादुरासीन्महाशब्दो भीरूणां भयवर्द्धनः ।
स शब्दो भरतश्रेष्ठ दिशः सर्व्वा व्यनादयत् । सौभद्रश्चाद्रवत् सेनां निघ्नन् वराश्वरथद्विपान् । १७३५
कक्षमग्निरिवोत्सृष्टो निर्द्दहंस्तरसा रिपून् । मध्ये भारतसैन्यानामार्ज्जुनिः समदृश्यत ।
विचरन्तं दिशः सर्व्वाः प्रदिशश्चापि भारत । तं तदा नानुपश्याम सैन्येन रजसा वृतः ।

आददानं गजाश्वानां नृणाञ्चायूंषि भारत। क्षणेन भूयः पश्यामि सूर्य्यं मध्यन्दिने यथा।
अभिमन्युं महाराज प्रतपन्तं द्विषद्गणान्। स वासवसमः सङ्ख्ये वासवस्यात्मजात्मजः।
अभिमन्युर्महाराज सैन्यमध्ये व्यरोचत। १५४०

इति श्रीमहाभारते द्रोणपर्व्वण्यभिमन्युवधपर्व्वण्यभिमन्युपराक्रमे एकचत्वारिंशोऽध्यायः॥ ४१ ॥

॥ धृतराष्ट्र उवाच॥ बालमत्यन्तसुखिनं स्वबाहुबलदर्पितं। युद्धेषु कुशलं वीरं कुलपुत्रं तनुत्यजं।
गाहमानमनीकानि सदश्वैस्त्रिहायणैः। अपि यौधिष्ठिरात् सैन्यात् कश्चिदन्वपतद्बली।
॥ सञ्जय उवाच॥ युधिष्ठिरो भीमसेनः शिखण्डी सात्यकिर्यमौ। धृष्टद्युम्नो विराटश्च द्रुपदश्च सकेकयः।
धृष्टकेतुश्च संरब्धो मत्स्याश्चान्वपतन् रणे। तेनैव तु पथा याताः पितरो मातुलैः सह।
अभ्यद्रवन् परीप्सन्तो व्यूढानीकाः प्रहारिणः। तान् दृष्ट्वा द्रवतः शूरान् त्वदीया विमुखाभवन्। १५४५
ततस्तद्विमुखं दृष्ट्वा तव सूनोर्महद्बलं। जामाता तव तेजस्वी विष्टम्भयिषुराद्रवत्।
सैन्धवस्य महाराज पुत्रो राजा जयद्रथः। स पुत्रगृद्धिनः पार्थान् सह सैन्यानवारयत्।
उग्रधन्वा महेष्वासो दिव्यमस्त्रमुदीरयन्। वार्द्धक्षत्रिरुपासेधत् प्रवणादिव कुञ्जरः।
॥ धृतराष्ट्र उवाच॥ अतिभारमहं मन्ये सैन्धवे सञ्जयाहितं। यदेकः पाण्डवान् क्रुद्धान् पुत्रप्रेप्सूनवारयत्।
अत्यद्भुतमहं मन्ये बलं शौर्य्यञ्च सैन्धवे। तस्य प्रब्रूहि मे वीर्य्यं कर्म्म चार्य्यं महात्मनः। १५५०
किं दत्तं हुतमिष्टं वा सुतप्तमथ वा तपः। सिन्धुराजो हि येनैकः क्रुद्धान् पार्थानवारयत्।
॥ सञ्जय उवाच॥ द्रौपदीहरणे यत्तत् भीमसेनेन निर्ज्जितः। मानात् स तप्तवान् राजा वरार्थी सुमहत्तपः।
इन्द्रियाणीन्द्रियार्थेभ्यः प्रियेभ्यः सन्निवर्त्त्य सः। क्षुत्पिपासातपसहः कृशो धमनिसन्ततः।
देवमाराधयच्छर्व्वं गृणन् ब्रह्म सनातनं। भक्तानुकम्पी भगवान् तस्य चक्रे ततो दयां।
स्वप्नान्तेऽप्यथ चैवाह हरः सिन्धुपतेः सुतं। वरं वृणीष्व प्रीतोऽस्मि जयद्रथ किमिच्छसि। १५५५
एवमुक्तस्तु शर्व्वेण सिन्धुराजो जयद्रथः। उवाच प्रणतो रुद्रं प्राञ्जलिर्नियतात्मवान्।
पाण्डवेयानहं सङ्ख्ये भीमवीर्य्यपराक्रमान्। वारयामि रथेनैकः समस्तानिति भारत।
एवमुक्तस्तु देवेशो जयद्रथमथाब्रवीत्। ददामि ते वरं सौम्य विना पार्थं धनञ्जयं।
वारयिष्यसि सङ्ग्रामे चतुरः पाण्डुनन्दनात्। एवमस्त्विति देवेशमुक्त्वाबुध्यत पार्थिव।
स तेन वरदानेन दिव्येनास्त्रबलेन च। एकः सन्धारयामास पाण्डवानामनीकिनीं। १५६०
तस्य ज्यातलघोषेण क्षत्रियान् भयमाविशत्। परांस्तव तु सैन्यस्य हर्षः परमकोऽभवत्।
दृष्ट्वा तु क्षत्रिया भारं सैन्धवे सर्व्वमर्पितं। उत्क्रुश्याभ्यद्रवन् राजन् येन यौधिष्ठिरं बलं।

इति श्रीमहाभारते द्रोणपर्व्वण्यभिमन्युवधपर्व्वणि जयद्रथयुद्धे द्विचत्वारिंशोऽध्यायः॥ ४२ ॥

॥ सञ्जय उवाच॥ यन्मां पृच्छसि राजेन्द्र सिन्धुराजस्य विक्रमं। शृणु तत् सर्व्वमाख्यास्ये यथा पाण्डूनयोधयत्।
तमूहुः सारथेर्वश्याः सैन्धवाः साधुवाहिनः। विकुर्व्वाणा बृहन्तोऽश्वाः श्वसनोपमरंहसः।
गन्धर्व्वनगराकारं विधिवत् कल्पितं रथं। तस्याभ्यशोभयत् केतुर्वाराहो राजतो महान्। १५६५

श्वेतच्छत्रपताकाभिश्चामरव्यजनेन च। स बभौ राजलिङ्गैस्तैस्तारापतिरिवाम्बरे।
मुक्तावज्रमणिस्वर्णैर्भूषितन्तमयस्मयं। वरूथं विबभौ तस्य ज्योतिर्भिः खमिवावृतं।
स विस्फार्य्य महच्चापं किरन्निषुगणान् बहून्। तं व्यूहं पूरयामास यद्व्यदारयदार्ज्जुनिः।
स सात्यकिं त्रिभिर्ब्बाणैरष्टाभिश्च वृकोदरं। धृष्टद्युम्नं तथा षष्ट्या विराटं दशभिः शरैः।
द्रुपदं पञ्चभिस्तीक्ष्णैर्दशभिश्च शिखण्डिनं। केकयान् पञ्चविंशत्या द्रौपदेयांस्त्रिभिस्त्रिभिः। १०००
युधिष्ठिरं तु सप्तत्या ततः शेषानपानुदत्। इषुजालेन महता तदद्भुतमिवाभवत्।
अथास्य सितपीतेन भल्लेनारिन्दम कार्म्मुकं। चिच्छेद प्रहसन् राजन् धर्म्मपुत्त्रः प्रतापवान्।
अक्ष्णोर्निमेषमात्रेण सोऽन्यदादाय कार्म्मुकं। विव्याध दशभिः पार्थं तांश्चैवान्यांस्त्रिभिस्त्रिभिः।
तस्य तल्लाघवं ज्ञात्वा भीमो भल्लैस्त्रिभिः पुनः। धनुर्ध्वजञ्च छत्रञ्च क्षितौ क्षिप्रमपातयत्।
सोऽन्यदादाय बलवान् सज्यं कृत्वा च कार्म्मुकं। भीमस्यापातयत् केतुं धनुरश्वांश्च मारिष। १००५
स हताश्वादवप्लुत्य छिन्नधन्वा रथोत्तमात्। सात्यकेराप्लुतो यानं गिर्य्यग्रमिव केशरी।
ततस्त्वदीयाः संहृष्टाः साधु साध्विति चुक्रुशुः। सिन्धुराजस्य तत् कर्म्म पूजयन्तो मुहुर्मुहुः।
संक्रुद्धान् पाण्डवानेको यद्धारायास्त्रतेजसा। तत्तस्य कर्म्म भूतानि सर्व्वाण्येवाभ्यपूजयन्।
सौभद्रेण हतैः पूर्व्वं सोत्तरायोधिभिर्द्विपैः। पाण्डूनां दर्शितः पन्थाः सैन्धवेन निवारितः।
यतमानास्तु ते वीरा मत्स्यपाञ्चालकेकयाः। पाण्डवाश्चान्वपद्यन्त प्रतिसेहुर्न सैन्धवं। १०१०
यो यो हि यतते भेत्तुं द्रोणानीकं तवाहितः। तन्तमेव वरं प्राप्य सैन्धवः प्रत्यवारयत्।
इति श्रीमहाभारते द्रोणपर्व्वण्यभिमन्युबधपर्व्वणि जयद्रथयुद्धे द्विचत्वारिंशोऽध्यायः॥ ४२ ॥
॥ सञ्जय उवाच ॥ सैन्धवेन निरुद्धेषु जयगृद्धिषु पाण्डुषु। सुघोरमभवद्युद्धं त्वदीयानां परैः सह।
प्रविश्याथार्ज्जुनिः सेनां सत्यसन्धो दुरासदः। व्यक्षोभयत तेजस्वी मकरः सागरं यथा।
तन्तथा शरवर्षेण क्षोभयन्तमरिन्दमं। यथाप्रधानं सौभद्रमभ्ययुर्व्वरसत्तमाः।
तेषां तस्य च सम्मर्द्दो दारुणः समपद्यत। सृजतां शरवर्षाणि प्रसक्तममितौजसां। १०१५
रथव्रजेन संरुद्धस्तैरमित्रैस्तथार्ज्जुनिः। वृषसेनस्य यन्तारं हत्वा चिच्छेद कार्म्मुकं।
तस्य विव्याध बलवान् शरैरश्वानजिह्मगैः। वातायमानैरथ तैरश्वैरपहृतो रणात्।
तेनान्तरेणाभिमन्योर्यन्ताऽपासारयद्रथं। रथव्रजास्ततो हृष्टाः साधु साध्विति चुक्रुशुः।
तं सिंहमिव संक्रुद्धं प्रमथ्नन्तं शरैररीन्। आराद्यान्तमभ्येत्य वसातीयोऽभ्ययाद्द्रुतं।
सोऽभिमन्युं शरैः षष्ट्या रुक्मपुङ्खैरवाकिरत्। अब्रवीच्च न मे जीवन् जीवतो युधि मोक्ष्यसे। १०२०
तमयस्मयवर्म्माणमिषुणा दूरपातिना। विव्याध हृदि सौभद्रः स पपात व्यसुः क्षितौ।
वसातीयं हतं दृष्ट्वा क्रुद्धाः क्षत्रियपुङ्गवाः। परिवव्रुस्तथा राजंस्तव पौत्रं जिघांसवः।
विस्फारयन्तश्चापानि नानारूपाण्यनेकशः। तद्युद्धमभवद्रौद्रं सौभद्रस्यारिभिः सह।
तेषां शरान् सेष्वसनान् शरीराणि शिरांसि च। सकुण्डलानि स्रग्वीणि क्रुद्धश्चिच्छेद फाल्गुनिः।

सखड्गाः साङ्गुलित्राणाः सपट्टिशपरश्वधाः। अदृश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः। १७९५
स्रग्भिराभरणैर्वस्त्रैः पातितैश्च महाध्वजैः। वर्म्मभिश्चर्म्मभिर्हारैर्मुकुटैश्छत्रचामरैः।
उपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः। अक्षैर्विमथितैश्चक्रैर्भग्नैश्च बहुधा युगैः।
अनुकर्षैः पताकाभिस्तथा सारथिवाजिभिः। रथैश्च भग्नैर्नागैश्च हयैः कीर्णाऽभवन्मही।
निहतैः क्षत्रियैः शूरैर्नानाजनपदेश्वरैः। जयगृद्धैर्वृता भूमिर्दारुणा समपद्यत।
दिशो विचरतस्तस्य सर्व्वाश्च प्रदिशस्तथा। रणेऽभिमन्योः क्रुद्धस्य रूपमन्तरधीयत। १८००
काञ्चनं यद्यदस्यासीद्वर्म्म चाभरणानि च। धनुषश्च शराणाञ्च तदपश्याम केवलं।
तं तदा नाशकत् कश्चिच्चक्षुर्भ्यामभिवीक्षितुं। आददानं शरैर्योधान् मध्ये सूर्य्यमिव स्थितं।
इति श्रीमहाभारते द्रोणपर्व्वण्यभिमन्युवधपर्व्वणि अभिमन्युपराक्रमे चतुश्चत्वारिंशोऽध्यायः॥ ४४॥

॥ सञ्जय उवाच ॥ आददानस्तु शूराणामायूंष्यभवदार्ज्जुनिः। अन्तकः सर्व्वभूतानां प्राणान् काल इवागते।
स शक्र इव विक्रान्तः शक्रसूनोः सुतो बली। अभिमन्युस्तदानीकं लोडयन् बह्वशोभत।
प्रविश्य स तु राजेन्द्र क्षत्रियेन्द्रान्तकोपमः। सत्यश्रवसमादत्त व्याघ्रो मृगमिवोल्बणः। १८०५
सत्यश्रवसि चाक्षिप्ते त्वरमाणा महारथाः। प्रगृह्य विविधं शस्त्रमभिमन्युमुपाद्रवन्।
अहं पूर्व्वमहं पूर्व्वमिति क्षत्रियपुङ्गवाः। स्पर्द्धमानाः समाजग्मुर्जिघांसन्तोऽर्ज्जुनात्मजं।
क्षत्रियाणामनीकानि प्रद्रुतान्यभिधावतां। जग्रास तिमिरासाद्य क्षुद्रमत्स्यानिवार्णवे।
ये केचनागतास्तस्य समीपमपलायिनः। न ते प्रतिन्यवर्त्तन्त समुद्रादिव सिन्धवः।
महावातग्रहीतेव वातवेगभयार्द्दिता। समकम्पत सा सेना विभ्रान्ता नौरिवार्णवे। १८१०
अथ रुक्मरथो नाम मद्रेश्वरसुतो बली। त्रस्तामाश्वासयन् सेनामत्रस्तो वाक्यमब्रवीत्।
अलं त्रासेन वः शूरा नैष कश्चिन्मयि स्थिते। अहमेनं ग्रहीष्यामि जीवग्राहं न संशयः।
एवमुक्त्वा तु सौभद्रमभिदुद्राव वीर्य्यवान्। सुकल्पितेनोह्यमानः स्यन्दनेन विराजता।
सोऽभिमन्युं त्रिभिर्वाणैर्भित्त्वा वक्षस्यथानदत्। त्रिभिश्च दक्षिणे बाहौ सव्ये च निशितैस्त्रिभिः।
स तस्येष्वासनं छित्त्वा फाल्गुनिः सव्यदक्षिणौ। भुजौ शिरश्च स्वक्षिभ्रु क्षितौ क्षिप्रमपातयत्। १८१५
दृष्ट्वा रुक्मरथं भग्नं पुत्रं शल्यस्य मानिनं। जीवग्राहं जिघृक्षन्तं सौभद्रेण यशस्विना।
सङ्ग्रामदुर्म्मदा राजन् राजपुत्राः प्रहारिणः। वयस्याः शल्यपुत्रस्य सुवर्णविकृतध्वजाः।
तालमात्राणि चापानि विकर्षन्तो महारथाः। आर्ज्जुनिं शरवर्षेण समन्तात् पर्य्यवारयन्।
शूरैः शिक्षाबलोपेतैस्तरुणैरत्यमर्षणैः। दृष्ट्वैकं समरे शूरं सौभद्रमपराजितं।
छाद्यमानं शरव्रातैर्हृष्टो दुर्य्योधनोऽभवत्। वैवस्वतस्य च गृहं गतं एनममन्यत। १८२०
सुवर्णपुङ्खैरिषुभिर्नानालिङ्गैस्त्रिभिस्त्रिभिः। अदृश्यमार्ज्जुनिं चक्रुर्निमेषात्ते नृपात्मजाः।
ससूताश्वं ध्वजं तस्य स्यन्दनं तञ्च मारिष। आचितं समपश्याम श्वाविद्धं शललैरिव।
स गाढविद्धः क्रुद्धस्तु तोत्त्रैर्गज इवार्द्दितः। गान्धर्व्वमस्त्रमायच्छद्रथमायाञ्च भारत।

अर्ज्जुनेन तपस्तप्त्वा गन्धर्व्वेभ्यो यदाहृतं। तुम्बुरुप्रमुखेभ्यो वै तेनामोहयताहितान्।
एकधा शतधा राजन् दृश्यन्ते स्म सहस्रधा। अलातचक्रवत्संख्ये क्षिप्रमस्त्राणि दर्शयन्। १८२५
रथचर्य्यास्त्रमायाभिर्मोहयित्वा परान्नृप। बिभेद शतधा राजन् शरीराणि महीक्षितां।
प्राणाः प्राणभृतां चैव प्रेषिता निशितैः शरैः। राजन् प्रापुरमुं लोकं शरीराण्यवनिं ययुः।
धनूंष्यश्वान्नियन्तृंश्च ध्वजान् बाहूंश्च साङ्गदान्। शिरांसि च शितैर्भल्लैस्तेषां चिच्छेद फाल्गुनिः।
चूतारामो यथा भग्नः पञ्चवर्षफलोपगः। राजपुत्त्रशतं तद्वत् सौभद्रेणापतद्धतं।
क्रुद्धाशीविषसङ्काशान् सुकुमारान् यथोचितान्। एकेन निहतान्दृष्ट्वा भीतो दुर्य्योधनोऽभवत्। १८३०
रथिनः कुञ्जरानश्वान् पदातींश्चावमर्द्दितः। दृष्ट्वा दुर्य्योधनः क्षिप्रमुपायात्तममर्षितः।
तयोः क्षणमिवापूर्णः सङ्ग्रामस्तुमुलोऽभवत्। अथाभवत्ते विमुखः पुत्त्रः शरशतार्द्दितः।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युबधपर्व्वणि दुर्य्योधनपराजये पञ्चचत्वारिंशोऽध्यायः॥ ४५ ॥
॥ धृतराष्ट्र उवाच॥ यथा वदसि मे सूत एकस्य बहुभिः सह। सङ्ग्रामं तुमुलं घोरं जयञ्चैव महात्मनः।
अश्रद्धेयमिवाश्चर्य्यं सौभद्रस्याथ विक्रमं। किन्तु नात्यद्भुतं मन्ये येषां धर्म्मो व्यपाश्रयः।
दुर्य्योधने तु विमुखे राजपुत्त्रशते हते। सौभद्रे प्रतिपत्तिं कां प्रत्यपद्यन्त मामकाः। १८३५
॥ सञ्जय उवाच॥ संशुष्कास्याश्चलनेत्राः प्रस्विन्ना लोमहर्षणाः। पलायनकृतोत्साहा निरुत्साहा द्विषज्जये।
हतान् भ्रातॄन् पितॄन् पुत्त्रान् सुहृत्सम्बन्धिबान्धवान्। उत्सृज्योत्सृज्य सञ्जग्मुस्त्वरयन्तो हयद्विपान्।
तान् प्रभग्नांस्ततो दृष्ट्वा द्रोणो द्रौणिर्बृहद्बलः। कृपो दुर्य्योधनः कर्णः कृतवर्म्मा च सौबलः।
अभ्यधावन् सुसंक्रुद्धाः सौभद्रमपराजितं। तेऽपि पौत्त्रेण ते राजन् प्रायशो विमुखीकृताः।
एकस्तु सुखसंवृद्धो बाल्याद्दर्पाच्च निर्भयः। इष्वस्त्रविन्महातेजा लक्ष्मणोऽर्ज्जुनिमभ्ययात्। १८४०
तमन्वगेवास्य पिता पुत्त्रगृद्धी न्यवर्त्तत। अनु दुर्य्योधनं चान्ये न्यवर्त्तन्त महारथाः।
तन्तेऽभिषिषिचुर्बाणैर्म्मेघा गिरिमिवाम्बुभिः। स च तान् प्रममाथैको विश्वग्वातो यथाम्बुदान्।
पौत्त्रन्तु तव दुर्द्धर्षं लक्ष्मणं प्रियदर्शनं। पितुः समीपे तिष्ठन्तं शूरमुद्यतकार्म्मुकं।
अत्यन्तसुखसंवृद्धं धनेश्वरसुतोपमं। आससाद रणे कार्ष्णिर्मत्तो मत्तमिव द्विपं।
लक्ष्मणेन तु सङ्गम्य सौभद्रः परवीरहा। शरैः सुनिशितैस्तीक्ष्णैर्बाह्वोरुरसि चार्पितः। १८४५
संक्रुद्धो वै महाबाहुर्दण्डाहत इवोरगः। पौत्त्रस्तव महाराज तव पौत्त्रमभाषत।
सुदृष्टः क्रियतां लोको ह्यमुं लोकं गमिष्यसि। पश्यतां बान्धवानां त्वां नयामि यमसादनं।
एवमुक्त्वा ततो भल्लं सौभद्रः परवीरहा। उद्बबर्ह महाबाहुर्निर्मुक्तोरगसन्निभं।
स तस्य भुजनिर्म्मुक्तो लक्ष्मणस्य सुदर्शनं। सुनसं सुभ्रुकेशान्तं शिरोऽहार्षीत् सकुण्डलं।
लक्ष्मणं निहतं दृष्ट्वा हाहेत्युच्चुक्रुशुर्ज्जनाः। ततो दुर्य्योधनः क्रुद्धः प्रिये पुत्त्रे निपातिते। १८५०
हतैनमिति चुक्रोश क्षत्त्रियान् क्षत्त्रियर्षभः। ततो द्रोणः कृपः कर्णो द्रोणपुत्त्रो बृहद्बलः।
कृतवर्म्मा च हार्द्दिक्यः षड्रथाः पर्य्यवारयन्। स तान् विद्ध्वा शितैर्बाणैर्विमुखीकृत्य फाल्गुनिः।

वेगेनाभ्यपतत् क्रुद्धः सैन्धवस्य महद्बलं । आवव्रुस्तस्य पन्थानं गजानीकेन दंशिताः ।
कालिङ्गाश्च निषादाश्च क्राथपुत्रश्च वीर्य्यवान् । तत्प्रसक्तमिवात्यर्थं युद्धमासीद्विशाम्पते ।
ततस्तत् कुञ्जरानीकं व्यधमद्धृष्टमार्ज्जुनिः । यथा वायुर्नित्यगतिर्जलदान् शतशोऽम्बरे । १८५५
ततः क्राथः शरव्रातैरार्ज्जुनिं समवारयत् । अथेतरे सन्निवृत्ताः पुनर्द्रोणमुखा रथाः ।
परमास्त्राणि तन्वानाः सौभद्रमभिदुद्रुवुः । तान्निवार्य्यार्ज्जुनिर्बाणैः क्राथपुत्रमथार्द्दयत् ।
शरौघेणाप्रमेयेण त्वरमाणो जिघांसया । स धनुर्ब्बाणकेयूरौ बाहू समुकुटं शिरः ।
छत्रं ध्वजं नियन्तारमश्वांश्चास्य न्यपातयत् । कुलशीलश्रुतबलैः कीर्त्त्या चास्त्रबलेन च ।
युक्ते तस्मिन् हते वीराः प्रायशो विमुखाभवन् । १८६०
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि क्राथपुत्रवधे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
॥ धृतराष्ट्र उवाच ॥ तथा प्रविष्टं तरुणं सौभद्रमपराजितं । कुलानुरूपं कुर्व्वाणं सङ्ग्रामेष्वपलायिनं ।
आजानेयैः सुबलिभिर्युक्तमश्वैस्त्रिहायनैः । प्लवमानमिवाकाशे के शूराः पर्य्यवारयन् ।
॥ सञ्जय उवाच ॥ अभिमन्युः प्रविश्यैव तावकान्निशितैः शरैः । अकरोद्विमुखान् सर्व्वान् पार्थिवान् पाण्डुनन्दनः ।
तं तु द्रोणः कृपः कर्णो द्रौणिश्च स बृहद्बलः । कृतवर्म्मा च हार्द्दिक्यः षड्रथाः पर्य्यवारयन् ।
दृष्ट्वा तु सैन्धवे भारमतिमात्रं समाहितं । सैन्यं तव महाराज युधिष्ठिरमुपाद्रवत् । १८६५
सौभद्रमितरे वीरमभ्यवर्षञ्छराम्बुभिः । तालमात्राणि चापानि विकर्षन्तो महाबलाः ।
तांस्तु सर्व्वान् महेष्वासान् सर्व्वविद्यासु निष्ठितान् । व्यष्टम्भयद्रणे बाणैः सौभद्रः परवीरहा ।
द्रोणं पञ्चाशताऽविध्यत् विंशत्या च बृहद्बलं । अशीत्या कृतवर्म्माणं कृपं षष्ट्या शिलीमुखैः ।
रुक्मपुङ्खैर्महावेगैराकर्णसमचोदितैः । अविध्यद्दशभिर्बाणैरश्वत्थामानमार्ज्जुनिः ।
स कर्णं कर्णिना कर्णे पीतेन च शितेन च । फाल्गुनिर्द्विषतां मध्ये विव्याध परमेषुणा । १८७०
पातयित्वा कृपस्याश्वान् तथोभौ पार्ष्णिसारथी । अथैनं दशभिर्बाणैः प्रत्यविध्यत् स्तनान्तरे ।
ततो वृन्दारकं वीरं कुरूणां कीर्त्तिवर्द्धनं । पुत्राणां तव वीराणां पश्यतामवधीद्बली ।
तं द्रौणिः पञ्चविंशत्या क्षुद्रकाणां समार्प्पयत् । वरं वरममित्राणामारुजन्तमभीतवत् ।
स तु बाणैः शितैस्तूर्णं प्रत्यविध्यत मारिष । पश्यतां धार्त्तराष्ट्राणामश्वत्थामानमार्ज्जुनिः ।
षष्ट्या शराणां तं द्रौणिस्तिग्मधारैः सुतेजनैः । उग्रैर्नाकम्पयद्विद्ध्वा मैनाकमिव पर्व्वतं । १८७५
स तु द्रौणिं त्रिसप्तत्या हेमपुङ्खैरजिह्मगैः । प्रत्यविध्यन्महातेजा बलवानपकारिणं ।
तस्मिन् द्रोणो बाणशतं पुत्रगृद्धी न्यपातयत् । अश्वत्थामा तथा षष्टिं परीप्सन् पितरं रणे ।
कर्णो द्वाविंशतिं भल्लान् कृतवर्म्मा चतुर्द्दश । बृहद्बलस्तु पञ्चाशत् कृपः शारद्वतो दश ।
तांस्तान् प्रत्यवधीत् सर्व्वान् दशभिर्दशभिः शरैः । तं कोशलानामधिपः कर्णिनाताडयद्धृदि ।
स तस्याश्वान् ध्वजं चापं सूतञ्चापातयत् क्षितौ । अथ कोशलराजस्तु विरथः खड्गचर्म्मभृत् । १८८०
इयेष फाल्गुनेः कायात् शिरो हर्त्तुं सकुण्डलं । कोशलानां स भर्त्तारं राजपुत्रं बृहद्बलं ।

हृदि विव्याध वाणेन स भिन्नहृदयोऽपतत् । बभञ्ज च सहस्राणि दश राज्ञां महात्मनां ।
सृजतामशिवा वाचः खड्गकार्म्मुकधारिणां । तथा वृहद्वलं हत्वा सौभद्रो व्यचरद्रणे ।
व्यष्टम्भयन्महेष्वासान् योधांस्तव शराम्बुभिः ।

इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युबधपर्व्वणि वृहद्वलवधे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

॥ सञ्जय उवाच ॥ स कर्णं कर्णिना कर्णे पुनर्विव्याध फाल्गुनिः । शरैः पञ्चाशता चैनमविध्यत् कोपयन् भृशं । १८८८
प्रतिविव्याध राधेयस्तावद्भिरथ तं पुनः । शरैराचितसर्व्वाङ्गो बह्वशोभत भारत ।
कर्णश्चाथ शरान् क्रुद्धो रुधिरोत्पीडवाहिनं । कर्णोऽपि विबभौ शूरः शरैश्चित्रोऽसृगाप्लुतः ।
तौ तथा शरचित्राङ्गौ रुधिरेण समुक्षितौ । बभूवतुर्महात्मानौ पुष्पिताविव किंशुकौ ।
अथ कर्णस्य सचिवान् षट्शूरांश्चित्रयोधिनः । साश्वसूतध्वजरथान् सौभद्रो निजघान ह ।
तथैवान्यान्महेष्वासान् दशभिर्दशभिः शरैः । प्रत्यविध्यदसम्भ्रान्तस्तदद्भुतमिवाभवत् । १८९०
मागधस्य पुनः पुत्रं हत्वा षड्भिरजिह्मगैः । साश्वं ससूतं तरुणमश्वकेतुमपातयत् ।
मार्त्तिकावतिकं भोजं ततः कुञ्जरकेतनं । क्षुरप्रेण समुन्मथ्य ननाद विसृजन् शरान् ।
तस्य दौःशासनिर्विद्ध्वा चतुर्भिश्चतुरो हयान् । सूतमेकेन विव्याध दशभिश्चार्ज्जुनात्मजं ।
ततो दौःशासनिं कार्ष्णिर्विद्ध्वा दशभिराशुगैः । संरम्भाद्रक्तनयनो वाक्यमुच्चैरथाब्रवीत् ।
पिता तवाहवं त्यक्त्वा गतः कापुरुषो यथा । दिष्ट्या त्वमपि जानीषे योद्धुं न त्वद्य मोक्ष्यसे । १८९५
एतावदुक्त्वा वचनं कर्म्मारपरिमार्ज्जितं । नाराचं विससर्ज्जाशु तं द्रौणिस्त्रिभिराच्छिनत् ।
तस्यार्ज्जुनिर्ध्वजं छित्त्वा शल्यं त्रिभिरताडयत् । तं शल्यो नवभिर्व्वाणैर्गार्द्धपत्रैरताडयत् ।
हृदयेऽसम्भ्रान्तवद्राजन् तदद्भुतमिवाभवत् । तस्यार्ज्जुनिर्ध्वजं छित्त्वा हत्वोभौ पार्ष्णिसारथी ।
तं विव्याधायसैः षड्भिः सोऽपाक्रामत् रथान्तरं । शत्रुञ्जयं चन्द्रकेतुं महामेघं सुवर्च्चसं ।
सूर्य्यभासञ्च पञ्चैतान् हत्वा विव्याध सौबलं । तं सौबलस्त्रिभिर्विद्ध्वा दुर्य्योधनमथाब्रवीत् । १९००
सर्व्वं एनं प्रमथ्नीमः पुरैकैकं हिनस्ति नः । बधोपायं विन्त्यतां वै नृप द्रोणकृपादिभिः ।
अथाब्रवीत्ततो द्रोणं कर्णो वैकर्त्तनो रणे । पुरा सर्व्वान्प्रमथ्नाति ब्रूह्यस्य बधमाशु नः ।
ततो द्रोणो महेष्वासः सर्व्वांस्तान् प्रत्यभाषत । अस्ति चास्यान्तरं किञ्चित् कुमारस्यापि पश्यत ।
अण्वप्यस्यान्तरं ह्यद्य चरतः सर्व्वतो दिशं । शीघ्रतां नरसिंहस्य पाण्डवेयस्य पश्यत ।
धनुर्म्मण्डलमेवास्य रथमार्गेषु दृश्यते । सन्दधानस्य विशिखान् शीघ्रञ्चैव विमुञ्चतः । १९०५
आरुजन्नपि मे प्राणान् मोहयन्नपि सायकैः । प्रहर्षयति मां भूयः सौभद्रः परवीरहा ।
अति मां नन्दयत्येष सौभद्रो विचरन् रणे । अन्तरं यस्य संरब्धा न पश्यन्ति महारथाः ।
अस्यतो लघुहस्तस्य दिशः सर्व्वा महेषुभिः । न विशेषं प्रपश्यामि रणे गाण्डीवधन्वनः ।
अथ कर्णः पुनर्द्रोणमाहार्ज्जुनिशराहतः । स्थातव्यमितितिष्ठामि पीड्यमानोऽभिमन्युना ।
तेजस्विनः कुमारस्य शराः परमदारुणाः । क्षिण्वन्ति हृदयं मेऽद्य घोराः पावकतेजसः । १९१०

तमाचार्य्योऽब्रवीत् कर्णं शनकैः प्रहसन्निव । अभेद्यमस्य कवचं युवा चाक्षपराक्रमः ।
उपदिष्टा मया ह्यस्य पितुः कवचधारणा । तामेष निखिलां वेत्ति ध्रुवं परपुरञ्जयः ।
शक्यं त्वस्य धनुश्छेत्तुं ज्याश्च बाणैः समाहितैः । अभीषू च हयांश्चैव तथोभौ पार्ष्णिसारथी ।
एतत्कुरु महेष्वास राधेय यदि शक्यते । अथैनं विमुखीकृत्य पश्चात् प्रहरणं कुरु ।
सधनुष्को न शक्योऽयमपि जेतुं सुरासुरैः । विरथं विधनुष्कञ्च कुरुष्वैनं यदीच्छसि । १९१५
तदाचार्य्यवचः श्रुत्वा कर्णो वैकर्त्तनस्त्वरन् । अस्यतो लघुहस्तस्य पृषत्कैर्धनुराच्छिनत् ।
अश्वानस्यावधीद्भोजो गौतमः पार्ष्णिसारथी । शेषास्तु छिन्नधन्वानं शरवर्षैरवाकिरन् ।
त्वरमाणास्त्वराकाले विरथं षण्महारथाः । शरवर्षैरकरुणा बालमेकमवाकिरन् ।
स च्छिन्नधन्वा विरथः स्वं धर्म्ममनुपालयन् । खड्गचर्म्मधरः श्रीमानुत्पपात विहायसा ।
मार्गैः स कौशिकाद्यैश्च लाघवेन बलेन च । आर्ज्जुनिर्व्यचरद्व्योम्नि भृशं वै पक्षिराडिव ।
मय्येव निपतत्येष सासिरित्यूर्द्ध्वदृष्टयः । विव्यधुस्तं महेष्वासाः समरे छिद्रदर्शिनः ।
तस्य द्रोणोऽच्छिनन्मुष्टौ खड्गं मणिमयत्सरुं । क्षुरप्रेण महातेजास्त्वरमाणः सपत्नजित् ।
राधेयो निशितैर्बाणैर्व्यधमच्चर्म्म चोत्तमं । व्यसिचर्म्मेषुपूर्णाङ्गः सोऽन्तरीक्षात् पुनः क्षितिं ।
आस्थितश्चक्रमुद्यम्य द्रोणं क्रुद्धोऽभ्यधावत ।
सचक्ररेणूज्ज्वलशोभिताङ्गो बभावतीवोन्नतचक्रपाणिः । रणेऽभिमन्युः क्षणमास रौद्रः स वासुदेवानुकृतिं प्रकुर्व्वन् । १९२५
स्रुतरुधिरकृतैकरागवक्त्रो भ्रुकुटिपुटाकुटिलोऽतिसिंहनादः । प्रभुरमितबलो रणेऽभिमन्युर्नृपवरमध्यगतो विराजते स्म ।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि अभिमन्युयुद्धे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ सञ्जय उवाच ॥ विष्णोः स्वसुर्नन्दकरः सविष्ण्वायुधभूषितः । रराजातिरथः सङ्ख्ये जनार्द्दन इवापरः ।
मारुतोद्धूतकेशान्तमुद्यतारिवरायुधं । वपुः समीक्ष्य पृथ्वीशा दुःसमीक्ष्यं सुरैरपि ।
तच्चक्रं भृशमुद्विग्नाः सञ्चिच्छिदुरनेकधा । महारथस्ततः कार्ष्णिः सञ्जग्राह महागदां ।
विधनुःस्यन्दनासिस्तैर्व्विचक्रश्चारिभिः कृतः । अभिमन्युर्म्महाबाहुरश्वत्थामानमाद्रवत् । १९३०
स गदामुद्यतां दृष्ट्वा ज्वलन्तीमशनीमिव । अपाक्रमद्रथोपस्थाद्विक्रमांस्त्रीन्नरर्षभः ।
तस्याश्वान् गदया हत्वा तथोभौ पार्ष्णिसारथी । शराचिताङ्गः सौभद्रः श्वाविद्वत् प्रत्यदृश्यत ।
ततः सुबलदायादं कालिकेयमपोथयत् । जघान चास्यानुचरान् गान्धारान् सप्तसप्ततिं ।
पुनर्ब्रह्मवसातीयान् जघान रथिनो दश । केकयानां रथान् सप्त हत्वा च दश कुञ्जरान् ।
दौःशासनिरथं साश्वं गदया समपोथयत् । ततो दौःशासनिः क्रुद्धो गदामुद्यम्य मारिष । १९३५
अभिदुद्राव दुर्द्धर्षस्तिष्ठ तिष्ठेति चाब्रवीत् । तावुद्यतगदौ वीरावन्योऽन्यवधकाङ्क्षिणौ ।
भ्रातृव्यौ सम्प्रजह्राते पुरेव त्र्यम्बकान्धकौ । तावन्योऽन्यं गदाग्राभ्यामाहत्य पतितौ क्षितौ ।
इन्द्रध्वजाविवोत्सृष्टौ रणमध्ये परन्तपौ । दौःशासनिरथोत्थाय कुरूणां कीर्त्तिवर्द्धनः ।
उत्तिष्ठमानं सौभद्रं गदया मूर्द्ध्न्यताडयत् । गदावेगेन महता व्यायामेन च मोहितः ।

विचेता न्यपतद्भूमौ सौभद्रः परवीरहा । एवं विनिहतो राजन्नेको बहुभिराहवे । १९७०
क्षोभयित्वा चमूं सर्व्वां नलिनीमिव कुञ्जरः । अशोभत हतो वीरो व्याधैर्वनगजो यथा ।
तं तथा पतितं शूरं तावकाः पर्य्यवारयन् । दावं दग्ध्वा यथा शान्तं पावकं शिशिरात्यये ।
विमृद्य तरुशृङ्गाणि सन्निवृत्तमिवानिलं । अस्तं गतमिवादित्यं तप्त्वा भारतवाहिनीं ।
उपप्लुतं यथा सोमं संशुष्कमिव सागरं । पूर्णचन्द्राभवदनं काकपक्षवृताक्षकं ।
तं भूमौ पतितं दृष्ट्वा तावकास्ते महारथाः । मुदा परमया युक्ताश्चुक्रुशुः सिंहवन्मुहुः । १९७५
आसीत्परमको हर्षस्तावकानां विशाम्पते । इतरेषान्तु वीराणां नेत्रेभ्यः प्रापतज्जलं ।
अन्तरिक्षे च भूतानि प्राक्रोशन्त विशाम्पते । दृष्ट्वा निपतितं शूरं च्युतं चन्द्रमिवाम्बरात् ।
द्रोणकर्णमुखैः षड्भिर्धार्त्तराष्ट्रैर्महारथैः । एकोऽयं निहतः शेते नैष धर्म्मो मतो हि नः ।
तस्मिंस्तु निहते वीरे बह्वशोभत मेदिनी । द्यौर्यथा पूर्णचन्द्रेण नक्षत्रगणमालिनी ।
रुक्मपुङ्खैश्च सङ्कीर्णा रुधिरौघैश्च संवृता । उत्तमाङ्गैश्च वीराणां भ्राजमानैः सकुण्डलैः । १९८०
विचित्रैश्च महाच्छोपैः पताकाभिश्च संवृता । चामरैश्च कुथाभिश्च प्रविद्धैश्चास्त्रमायुधैः ।
रथाश्वनरनागानामलङ्कारैश्च सुप्रभैः । खड्गैश्च निशितैः पीतैर्निर्मुक्तैर्भुजगैरिव ।
चापैश्च विशिखैश्छिन्नैः शक्त्यृष्टिप्रासकम्पनैः । विविधैश्चायुधैश्चान्यैः संवृता भूरशोभत ।
वाजिभिश्चापि निर्जीवैः श्वसद्भिः शोणितोक्षितैः । सारोहैर्विषमा भूमिः सौभद्रेण निपातितैः ।
साङ्कुशैः समहामात्रैः सवर्म्मायुधकेतुभिः । पर्व्वतैरिव विध्वस्तैर्विशिखोन्मथितैर्गजैः । १९८५
पृथिव्यामनुकीर्णैश्च व्यश्वसारथियोधिभिः । ह्रदैरिव प्रक्षुभितैर्हतनागै रथोत्तमैः ।
पदातिसङ्घैश्च हतैर्विविधायुधभूषणैः । भीरूणां त्रासजननी घोररूपाऽभवन्मही ।
तं दृष्ट्वा पतितं भूमौ चन्द्रार्कसदृशद्युतिं । तावकानां परा प्रीतिः पाण्डूनाञ्चाभवद्व्यथा ।
अभिमन्यौ हते राजन् शिशुकेऽप्राप्तयौवने । सम्प्राद्रवच्चमूः सर्व्वा धर्म्मराजस्य पश्यतः ।
दीर्य्यमाणं बलं दृष्ट्वा सौभद्रे विनिपातिते । अजातशत्रुस्तान् वीरानिदं वचनमब्रवीत् । १९९०
स्वर्गमेष गतः शूरो यो हतो न पराङ्मुखः । संस्तम्भयत मा भैष्ट विजेष्यामो वयं रिपून् ।
इत्येवं स महातेजा दुःखितेभ्यो महाद्युतिः । धर्म्मराजो युधां श्रेष्ठो ब्रुवन् दुःखमपानुदत् ।
युद्धे ह्याशीविषाकारान् राजपुत्रान् रणे रिपून् । पूर्व्वं निहत्य संग्रामे पश्चादार्ज्जुनिरन्वयात् ।
हत्वा दशसहस्राणि कौसल्यञ्च महारथं । कृष्णार्ज्जुनसमः कार्ष्णिः शक्रसद्म गतो ध्रुवं ।
रथाश्वनरमातङ्गान् विनिहत्य सहस्रशः । अवितृप्तः स सङ्ग्रामादशोच्यः पुण्यकर्म्मकृत् । १९९५
गतः पुण्यकृतां लोकान् शाश्वतान् पुण्यनिर्ज्जितान् ।

इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि अभिमन्युवधे एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

॥ सञ्जय उवाच ॥ वयन्तु प्रवरं हत्वा तेषां तैः शरपीडिताः । निवेशायाभ्युपायाम सायाह्ने रुधिरोक्षिताः ।
निरीक्ष्यमाणास्तु वयं परे चायोधनं शनैः । अपयाता महाराज ग्लानिं प्राप्ता विचेतसः ।

ततो निशाया दिवसस्य चाशिवः शिवारुतैः सन्धिरवर्त्तताद्भुतः । कुशेशयापीडनिभे दिवाकरे विलम्बमानेऽस्तमुपेत्य पर्व्वतं ।
वराशिशक्त्यृष्टिवरूथचर्म्मणां विभूषणानाञ्च समाक्षिपन् प्रभाः । दिवञ्च भूमिञ्च समानयन्निव प्रियां तनुं भानुरुपैति पावकं । १९७०

महाभ्रकूटाचलशृङ्गसन्निभैर्गजैरनेकैरिव वज्रपातितैः । सवैजयन्त्यङ्कुशवर्म्मयन्तृभिर्निपातितैर्नष्टगतिश्चिता क्षितिः ।
हतेश्वरैश्चूर्णितपत्त्युपस्करैर्हताश्वसूतैर्विपताककेतुभिः । महारथैर्भूः शुशुभे विचूर्णितैः पुरैरिवामित्रहतैर्नराधिप ।
रथाश्ववृन्दैः सहसादिभिर्हतैः प्रविद्धभाण्डाभरणैः पृथग्विधैः । निरस्तजिह्वादशनान्त्रलोचनैर्धरा बभौ घोरविरूपदर्शना ।
प्रविद्धवर्म्माभरणाम्बरायुधा विपन्नहस्त्यश्वरथानुगा नराः । महार्हशय्यास्तरणोचितास्तदा क्षितावनाथा इव शेरते हताः ।
अतीव हृष्टाः श्वसृगालवायसा बकाः सुपर्णाः सह काकतरक्षवः । वयांस्यसृक्पान्यथ रक्षसां गणाः पिशाचसङ्घाश्च सुदारुणा रणे । १९७५
त्वचो विनिर्भिद्य पिबन्वसामसृक् तथैव मज्जाः पिशितानि चाश्नुवन् । वपां विलुम्पन्ति हसन्ति राक्षसाः प्रकर्षमाणाः कुणपान्यनेकशः ।
शरीरसङ्घातवहा असृग्जला रथोडुपा कुञ्जरशैलसङ्कटा । मनुष्यशीर्षोत्पलमांसकर्द्दमा प्रविद्धनानाविधशस्त्रमालिनी ।
भयावहा वैतरणीव दुस्तरा प्रवर्त्तिता योधवरैस्तदा नदी । उवाह मध्येन रणाजिरं भृशं भयावहा जीवमृतप्रवाहिनी ।
पिबन्ति चाश्नन्ति च यत्र दुर्दृशाः पिशाचसङ्घाश्च नदन्ति भैरवाः । सुनन्दिताः प्राणभृतां भयङ्कराः समानभक्षाः श्वसृगालपक्षिणः ।
तथा तदायोधनमुग्रदर्शनं निशामुखे पितृपतिराष्ट्रवर्द्धनं । निरीक्षमाणाः शनकैर्जहुर्नराः समुत्थिताकृत्यकबन्धसङ्कुलं । १९८०
अपेतविध्वस्तमहार्हभूषणं निपातितं शक्रसमं महारथं । रणेऽभिमन्युं ददृशुस्तदा जना व्यपेतहव्यं सदसीव पावकं ।

इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि समरभूमिवर्णने पञ्चाशोऽध्यायः ॥ ५० ॥

॥ सञ्जय उवाच ॥ तस्मिंस्तु निहते वीरे सौभद्रे रथयूथपे । विमुक्तरथसन्नाहाः सर्व्वे निक्षिप्तकार्म्मुकाः ।
उपोपविष्टा राजानं परिवार्य्य युधिष्ठिरं । तदेव दुःखं ध्यायन्तः सौभद्रगतमानसाः ।
ततो युधिष्ठिरो राजा विललाप सुदुःखितः । अभिमन्यौ हते वीरे भ्रातृपुत्त्रे महारथे ।
द्रोणानीकमसम्बाधं मम प्रियचिकीर्षया । भित्त्वा व्यूहं प्रविष्टोऽसौ गोमध्यमिव केशरी । १९८५
यस्य शूरा महेष्वासाः प्रत्यनीकगता रणे । प्रभग्ना विनिवर्त्तन्ते कृतास्त्रा युद्धदुर्मदाः ।
अत्यन्तशत्रुरस्माकं येन दुःशासनः शरैः । क्षिप्रं ह्यभिमुखः सङ्ख्ये विसंज्ञो विमुखीकृतः ।
स तीर्त्वा दुस्तरं वीरो द्रोणानीकमहार्णवं । प्राप्य दौःशासनिं कार्ष्णिर्यातो वैवस्वतक्षयं ।
कथं द्रक्ष्यामि कौन्तेयं सौभद्रे निहतेऽर्ज्जुनं । सुभद्रां वा महाभागां प्रियं पुत्त्रमपश्यतीं ।
किंस्विद्वयमपेतार्थमश्लिष्टमसमञ्जसं । तावुभौ प्रतिवक्ष्यामो हृषीकेशधनञ्जयौ । १९९०
अहमेव सुभद्रायाः केशवार्ज्जुनयोरपि । प्रियकामो जयाकाङ्क्षी कृतवानिदमप्रियं ।
न लुब्धो बुध्यते दोषान्मोहाल्लोभः प्रवर्त्तते । मधुलिप्सुर्हि नापश्यं प्रपातमहमीदृशं ।
योऽहि भोज्ये पुरस्कार्य्यो यानेषु शयनेषु च । भूषणेषु च सोऽस्माभिर्बालो युधि पुरस्कृतः ।

कथं हि बालतरुणो युद्धानामविशारदः । सदश्व इव सम्बाधे विषमे क्षेममर्हति ।
अथो ह्यद्य वयमप्येनं महीमनुशयीमहि । बीभत्सोः कोपदीप्तस्य दग्धाः क्रोधचक्षुषा ।  १९९५
अलुब्धो मतिमान् श्रीमान् क्षमावान् रूपवान् बली । वपुष्मान्मानकृद्वीरः प्रियः सत्यपरायणः ।
यस्य श्लाघन्ति विबुधाः कर्म्माण्यूर्जितकर्म्मणः । निवातकवचान् जघ्ने कालकेयांश्च वीर्य्यवान् ।
महेन्द्रशत्रवो येन हिरण्यपुरवासिनः । अक्ष्णोर्निमेषमात्रेण पौलोमाः सगणा हताः ।
परेभ्योऽप्यभयार्थिभ्यो यो ददात्यभयं विभुः । तस्यास्माभिर्न शकितस्त्रातुमद्यात्मजो भयात् ।
भयन्तु सुमहत् प्राप्तं धार्त्तराष्ट्रान्महाबलात् । पार्थः पुत्त्रवधात् क्रुद्धः कौरवान् शोषयिष्यति ।  २०००
क्षुद्रः क्षुद्रसहायश्च स्वपक्षक्षयकारकः । व्यक्तं दुर्य्योधनो दृष्ट्वा शोचन् हास्यति जीवितं ।
न मे जयः प्रीतिकरो न राज्यं न चामरत्वं न सुरैः सलोकता । इमं समीक्ष्याप्रतिवीर्य्यपौरुषं निपातितं देववरात्मजात्मजं ।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि युधिष्ठिरविलापे एकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ सञ्जय उवाच ॥ अथैनं विलपन्तं तं कुन्तीपुत्त्रं युधिष्ठिरं । कृष्णद्वैपायनस्तत्र आजगाम महानृषिः ।
तमर्च्चित्वा यथान्यायमुपविष्टो युधिष्ठिरः । अब्रवीच्छोकसन्तप्तो भ्रातुः पुत्त्रवधेन सः ।
अधर्म्मयुक्तैर्बहुभिः परिवार्य्य महारथैः । युध्यमानो महेष्वासैः सौभद्रो निहतो रणे ।  २००५
बालश्चाबालबुद्धिश्च सौभद्रः परवीरहा । अनुपायेन सङ्ग्रामे युध्यमानो विशेषतः ।
मयाऽप्युक्तः स सङ्ग्रामे द्वारं सञ्जनयस्व नः । प्रविष्टेऽभ्यन्तरे तस्मिन् सैन्धवेन निवारिताः ।
ननु नाम समं युद्धमेष्टव्यं युद्धजीविभिः । इदञ्चैवासमं युद्धमीदृशं यत्कृतं परैः ।
तेनास्मि भृशसन्तप्तः शोकवाष्पसमाकुलः । शमं नैवाधिगच्छामि चिन्तयानः पुनः पुनः ।
॥ सञ्जय उवाच ॥ तं तथा विलपन्तं वै शोकवेगसमाकुलं । उवाच भगवान् व्यासो युधिष्ठिरमिदं वचः ।  २०१०
॥ व्यास उवाच ॥ युधिष्ठिर महाप्राज्ञ सर्व्वशास्त्रविशारद । व्यसनेषु न मुह्यन्ति त्वादृशा भरतर्षभ ।
स्वर्गमेष गतः शूरः शत्रून् हत्वा बहून्रणे । अबालसदृशं कर्म्म कृत्वा वै पुरुषोत्तमः ।
अनतिक्रमणीयो वै विधिरेष युधिष्ठिर । देवदानवगन्धर्व्वान्मृत्युर्हरति भारत ।
॥ युधिष्ठिर उवाच ॥ इमे वै पृथिवीपालाः शेरते पृथिवीतले । निहताः पृतनामध्ये मृतसंज्ञा महाबलाः ।
नागायुतबलाश्चान्ये वायुवेगबलास्तथा । त एते निहताः सङ्ख्ये तुल्यरूपा नरैर्नराः ।  २०१५
नैषां पश्यामि हन्तारं प्राणिनां संयुगे क्वचित् । विक्रमेणोपपन्ना हि तेजोबलसमन्विताः ।
जेतव्यमिति चान्योऽन्यं नित्यं येषां हृदि स्थितं । अथ चेमे हताः प्राज्ञाः शेरते विगतायुषः ।
मृता इति च शब्दोऽयं वर्त्तते च ततोऽर्थवत् । इमे मृता महीपालाः प्रायशो भीमविक्रमाः ।
निश्चेष्टा निरभीमानाः शूराः शत्रुवशङ्गताः । राजपुत्त्राश्च संरब्धा वैश्वानरमुखङ्गताः ।
अत्र मे संशयः प्राप्तः कुतः संज्ञा मृता इति । कस्य मृत्युः कुतो मृत्युः कथं संहरते प्रजाः ।  २०२०
हरत्यमरसङ्काश तन्मे ब्रूहि पितामह ।
॥ सञ्जय उवाच ॥ तन्तथा परिपृच्छन्तं कुन्तीपुत्त्रं युधिष्ठिरं । आश्वासनमिदं वाक्यमुवाच भगवानृषिः ।

॥ व्यास उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं । अकम्पनस्य कथितं नारदेन पुरा नृप ।
स चापि राजा राजेन्द्र पुत्रव्यसनमुत्तमं । अप्रसह्यतमं लोके प्राप्तवानिति मे मतिः ।
तदहं संप्रवक्ष्यामि मृत्योः प्रभवमुत्तमं । ततस्त्वं मोक्ष्यसे दुःखात्स्नेहबन्धनसंश्रयात् । २०२५
पुरावृत्तमिदं तात शृणु कीर्त्तयतो मम । धन्यमाख्यानमायुष्यं शोकघ्नं पुष्टिवर्द्धनं ।
पवित्रमरिसङ्घघ्नं मङ्गलानाञ्च मङ्गलं । यथैव वेदाध्ययनमुपाख्यानमिदन्तथा ।
श्रवणीयं महाराज प्रातर्नित्यं द्विजोत्तमैः । पुत्रानायुष्मतो राज्यमीहमानैः श्रियन्तथा ।
पुरा कृतयुगे तात आसीद्राजा ह्यकम्पनः । स शत्रुवशमापन्नो मध्ये सङ्ग्राममूर्द्धनि ।
तस्य पुत्रो हरिर्नाम नारायणसमो बले । श्रीमान् कृतास्त्रो मेधावी युधि शक्रोपमो बली । २०३०
स शत्रुभिः परिवृतो बहुधा रणमूर्द्धनि । व्यस्यन् बाणसहस्राणि योधेषु च गजेषु च ।
स कर्म्म दुष्करं कृत्वा सङ्ग्रामे शत्रुतापनः । शत्रुभिर्निहतः सङ्ख्ये पृतनायां युधिष्ठिर ।
स राजा प्रेतकार्य्याणि तस्य कृत्वा शुचान्वितः । शोचन्नहनि रात्रौ च नालभत्सुखमात्मनः ।
तस्य शोकं विदित्वा तु पुत्रव्यसनसम्भवं । अथाजगाम देवर्षिर्नारदोऽस्य समीपतः ।
स तु राजा महाभागो दृष्ट्वा देवर्षिमागतं । पूजयित्वा यथान्यायं कथामकथयत्तदा । २०३५
सर्व्वं तस्य समाचष्ट यथावृत्तं नरेश्वरः । शत्रुभिर्विजयं सङ्ख्ये पुत्रस्य च वधन्तथा ।
मम पुत्रो महावीर्य्य इन्द्रविष्णुसमद्युतिः । शत्रुभिर्ब्बहुभिः सङ्ख्ये पराक्रम्य हतो बली ।
क एष मृत्युर्भगवन् किम्वीर्य्यबलपौरुषः । एतदिच्छामि तत्त्वेन श्रोतुं मतिमताम्वर ।
तस्य तद्वचनं श्रुत्वा नारदो वरदः प्रभुः । आख्यानमिदमाचष्ट पुत्रशोकापहं महत् ।
॥ नारद उवाच ॥ शृणु राजन्महाबाहो आख्यानं बहुविस्तरं । यथा वृत्तं श्रुतं चैव मयाऽपि वसुधाधिप । २०४०
प्रजाः सृष्ट्वा तदा ब्रह्मा आदिसर्गे पितामहः । असंहृतं महातेजा दृष्ट्वा जगदिदं पुनः ।
तस्य चिन्ता समुत्पन्ना संहारं प्रति पार्थिव । चिन्तयन्न ह्यसौ वेद संहारं वसुधाधिप ।
तस्य रोषान्महाराज खेभ्योऽग्निरुदतिष्ठत । तेन सर्व्वा दिशो व्याप्ताः सान्तर्देशा दिधक्षता ।
ततो दिवं भुवं खञ्च ज्वालामालासमाकुलं । चराचरं जगत्सर्व्वं ददाह भगवान् प्रभुः ।
ततो हतानि भूतानि चराणि स्थावराणि च । महता क्रोधवेगेन त्रासयन्निव वीर्य्यवान् । २०४५
ततो हरो जटी स्थाणुर्निशाचरपतिः शिवः । जगाम शरणं देवं ब्रह्माणं परमेष्ठिनं ।
तस्मिन्नभिपतिते स्थाणौ प्रजानां हितकाम्यया । अब्रवीत्परमो देवो ज्वलन्निव महामुनिः ।
किं कुर्म्मः कामं कामार्ह कामाज्जातोऽसि पुत्रक । करिष्यामि प्रियं सर्व्वं ब्रूहि स्थाणो यदिच्छसि ।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि शोकापनोदने द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ स्थाणुरुवाच ॥ प्रजासर्गनिमित्तं हि कृतो यत्नस्त्वया विभो । त्वया सृष्टाश्च वृद्धाश्च भूतग्रामाः पृथग्विधाः ।
तास्तवेह पुनः क्रोधात्प्रजा दह्यन्ति सर्व्वशः । ता दृष्ट्वा मम कारुण्यं प्रसीद भगवन् प्रभो । २०५०
॥ ब्रह्मोवाच ॥ संहर्त्तुं नच कामो मे एतदेवं भवेदिति । पृथिव्या हितकामं तु ततो मां मन्युराविशत् ।

इयं हि मां सदा देवी भारार्त्ता समचूचुदत्। संहारार्थं महादेव भारेणाभिहता सती।
ततोऽहं नाधिगच्छामि तथा बहुविधं धिया। संहारमप्रमेयस्य ततो मां मन्युराविशत्।
॥ रुद्र उवाच ॥ संहारार्थं प्रसीदस्व मा रुषो वसुधाधिप। मा प्रजाः स्थावराश्चैव जङ्गमाश्च व्यनीनशः।
तव प्रसादाद्भगवन्निदं वर्त्तेत्त्रिधा जगत्। अनागतमतीतञ्च यच्च संप्रति वर्त्तते। २०५५
भगवान् क्रोधसन्दीप्तः क्रोधादग्निमिवासृजत्। स दहत्यद्रिकूटानि द्रुमांश्च सरितस्तथा।
पल्वलानि च सर्व्वाणि सर्व्वांश्चैव तृणाश्रयाः। स्थावरं जङ्गमञ्चैव निःशेषं कुरुते जगत्।
तदेतद्भस्मसाद्भूतं जगत्स्थावरजङ्गमं। प्रसीद भगवंस्त्वं रोषो न स्याद्वरो मम।
सर्व्वे हि नष्टा नश्यन्ति तव देव कथञ्चन। तस्मान्निवर्त्ततां तेजस्त्वय्येवेह प्रलीयतां।
तत्पश्य देव सुभृशं प्रजानां हितकाम्यया। यथेमे प्राणिनः सर्व्वे निवर्त्तेरंस्तथा कुरु। २०६०
अभावं नेह गच्छेयुरुत्पन्नजनना प्रजाः। अधिदैवे नियुक्तोऽस्मि त्वया लोकेषु लोककृत्।
मा विनश्येज्जगन्नाथ जगत् स्थावरजङ्गमं। प्रसादाभिमुखं देवं तस्मादेवं ब्रवीम्यहं।
॥ नारद उवाच ॥ श्रुत्वा हि वचनं देवः प्रजानां हितकाम्यया। तेजः सन्धारयामास पुनरेवान्तरात्मनि।
ततोऽग्निमुपसंहृत्य भगवान् लोकसत्कृतः। प्रवृत्तिञ्च निवृत्तिञ्च कथयामास स प्रभुः।
उपसंहरतस्तस्य तमग्निं रोषजं तदा। प्रादुर्ब्बभूव विश्वेभ्यो गोभ्यो नारी महात्मनः। २०६५
कृष्णा रक्ता तथा पिङ्गा रक्तजिह्वास्यलोचना। कुण्डलाभ्यां च राजेन्द्र तप्ताभ्यां तप्तभूषणा।
सा निःसृत्य तथा खेभ्यो दक्षिणां दिशमाश्रिता। स्मयमाना च सावेक्ष्य देवौ विश्वेश्वरावुभौ।
तामाहूय तदा देवो लोकादिनिधनेश्वरः। मृत्यो इति महीपाल जहि चेमाः प्रजा इति।
त्वं हि संहारबुद्ध्याऽथ प्रादुर्भूता रुषो मम। तस्मात्संहर सर्व्वास्त्वं प्रजाः सजडपण्डिताः।
मम त्वं हि नियोगेन ततः श्रेयो ह्यवाप्स्यसि। एवमुक्ता तु सा तेन मृत्युः कमललोचना। २०७०
दध्यौ चात्यर्थमबला प्ररुरोद च सुस्वरं। पाणिभ्यां प्रतिजग्राह तान्यश्रूणि पितामहः।
सर्व्वभूतहितार्थाय तां चाप्यनुनयंस्तदा।

इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि मृत्युकथने त्रिपञ्चाशोऽध्यायः॥ ५३ ॥

॥ नारद उवाच ॥ विनीय दुःखमबला आत्मन्येव प्रजापतिं। उवाच प्राञ्जलिर्भूत्वा लतेवावर्जिता पुनः।
॥ मृत्युरुवाच ॥ त्वया सृष्टा कथं नारी ईदृशी वदतांवर। क्रूरं कर्म्माहितं कुर्य्यां तदेव किमु जानती।
बिभेम्यहमधर्म्माद्धि प्रसीद भगवन् प्रभो। प्रियान् पुत्रान् वयस्यांश्च भ्रातॄन् पितॄन् पतींस्तथा। २०७५
अपध्यास्यन्ति मे देव मृतेभ्यस्तेभ्यो बिभेम्यहं। कृपणानां विवदतां ये पतन्त्यश्रुबिन्दवः।
तेभ्योऽहं भगवन् भीता शरणं त्वाऽहमागता। यमस्य भवनं देव न गच्छेयं सुरोत्तम।
प्रसादये त्वां वरद मूर्द्धाहं प्रणतेन च। एतदिच्छाम्यहं कामं त्वत्तो लोकपितामह।
इच्छेयं त्वत्प्रसादाद्धि तपस्तप्तुं प्रजेश्वर। प्रदिशेमं वरं देव त्वं मह्यं भगवन् प्रभो।

त्वया युक्ता गमिष्यामि धेनुकाश्रममुत्तमं। तत्र तप्स्ये तपस्तीव्रं तवैवाराधने रता। २०८०
नहि शक्ष्यामि देवेश प्राणान् प्राणभृतां प्रियान्। हर्त्तुं विलपमानानामधर्म्मात्त्वभिरक्ष मां।
॥ ब्रह्मोवाच ॥ मृत्यो सङ्कल्पिताऽसि त्वं प्रजासंहारहेतुना। गच्छ संहर सर्व्वास्त्वं प्रजा मा ते विचारणा।
भविता त्वेतदेवं हि नैतज्जात्वन्यथा भवेत्। भवत्वनिन्दिता लोके कुरुष्व वचनं मम।
॥ नारद उवाच ॥ एवमुक्ताऽभवत्प्रीता प्राञ्जलिर्भगवन्मुखी। संहारे नाकरोद्बुद्धिं प्रजानां हितकाम्यया।
तूष्णीमासीत्तदा देवः प्रजानामीश्वरेश्वरः। प्रसादश्चागमत्क्षिप्रमात्मनैव पितामहः। २०८५
स्मयमानश्च लोकेशो लोकान् सर्व्वानवेक्ष्य च। लोकास्त्वासन् यथा पूर्व्वं दृष्टास्ते नापमृत्युना।
निवृत्तरोषे तस्मिंस्तु भगवत्यपराजिते। सा कन्याप्यजगामाथ समीपात्तस्य धीमतः।
अपसृत्याप्रतिश्रुत्य प्रजासंहरणं तदा। त्वरमाणा च राजेन्द्र मृत्युर्द्धेनुकमभ्यगात्।
सा तत्र परमं तीव्रं चचार व्रतमुत्तमं। सा तदा ह्येकपादेन तस्थौ पद्मानि षोडश।
पञ्च चाब्दानि कारुण्यात्प्रजानाञ्च हितैषिणी। इन्द्रियाणीन्द्रियार्थेभ्यः प्रजाभ्यः सन्निवर्त्य सा। २०९०
ततस्त्वेकेन पादेन पुनरन्यानि सप्त वै। तस्थौ पद्मानि षट् चैव सप्त चैकञ्च पार्थिव।
ततः पद्मायुतञ्चैव मृगैः सह चचार सा। पुनर्गत्वा ततो नन्दां पुण्यां शीतामलोदकां।
अप्सु वर्षसहस्राणि सप्त चैकञ्च साऽनयत्। धारयित्वा तु नियमं नन्दायां वीतकल्मषा।
सा पूर्व्वं कौशिकीं पुण्यां जगाम नियमे धृता। तत्र वायुजलाहारा चचार नियमं पुनः।
पञ्चगङ्गेषु सा पुण्या कन्या वेतसकेषु च। तपोविशेषैर्बहुभिः कर्षयद्देहमात्मनः। २०९५
ततो गत्वाऽथ गङ्गां सा महामेरुञ्च केवलं। तस्थौ चाश्मेव निश्चेष्टा प्राणायामपरायणा।
पुनर्हिमवतो मूर्द्ध्नि यत्र देवाः पुरायजन्। तत्राङ्गुष्ठेन सा तस्थौ निखर्व्वं परमा शुभा।
पुष्करेष्वथ गोकर्णे नैमिषे मलये तथा। अपाकर्षत्स्वकं देहं नियमैर्म्मनसः प्रियैः।
अनन्यदेवता नित्यं दृढभक्त्या पितामहे। तस्थौ पितामहञ्चैव तोषयामास सर्व्वतः।
ततस्तामब्रवीत्प्रीतो लोकानां प्रभवोऽव्ययः। सौम्येन मनसा राजन् प्रीतः प्रीतमनास्तदा। २१००
मृत्यो किमिदमत्यर्थं तपांसि चरसीति ह। ततोऽब्रवीत्पुनर्मृत्युर्भगवन्तं पितामहं।
नाहं हन्यां प्रजा देव स्वस्थाश्चाक्रोशतीस्तदा। एतदिच्छामि सर्व्वेश त्वत्तो वरमहं प्रभो।
अधर्म्मभयभीताऽस्मि ततोऽहं तप आस्थिता। भीतायास्तु महाभाग प्रयच्छाभयमव्ययं।
आर्त्ता चानागसी नारी याचामि भव मे गतिः। तामब्रवीत्ततो देवो भूतभव्यभविष्यवित्।
अधर्म्मो नास्ति ते मृत्यो संहरन्त्या इमाः प्रजाः। मया चोक्तं मृषा भद्रे भविता न कथञ्चन। २१०५
तस्मात्संहर कल्याणि प्रजाः सर्व्वाश्चतुर्व्विधाः। धर्म्मः सनातनस्त्वां सर्व्वथा पावयिष्यति।
लोकपालो यमश्चैव सहाया व्याधयश्च ते। अहञ्च विबुधाश्चैव पुनर्द्दास्यामि ते वरं।
यथा त्वमेनसा युक्ता विरजा ख्यातिमेष्यसि। सैवमुक्ता महाराज कृताञ्जलिरिदं विभुं।

पुनरेवाब्रवीद्वाक्यं प्रसाद्य शिरसा तदा । यद्येवमेतत्कर्त्तव्यं मया नस्यादिना विभो ।
तवाज्ञा मूर्द्ध्नि मे न्यस्ता यत्तु वक्ष्यामि तच्छृणु । लोभः क्रोधोऽभ्यसूयेर्ष्या द्रोहो मोहश्च देहिनां । २११०
अह्रीश्चान्योऽन्यपरुषा देहं भिन्द्युः पृथग्विधाः ।
॥ ब्रह्मोवाच ॥ तथा भविष्यते मृत्यो साधु संहर वै प्रजाः । अधर्म्मस्ते न भविता नापध्यास्याम्यहं शुभे ।
यान्यश्रुविन्दूनि करे ममासते ते व्याधयः प्राणिनामात्मजाताः । ते मारयिष्यन्ति नरान् गतासून्नाधर्म्मस्ते भविता मास्म भैषीः ।
नाधर्म्मस्ते भविता प्राणिनां वै त्वं वै धर्म्मस्त्वंहि धर्म्मस्य चेशा । धर्म्या भूत्वा धर्म्मनित्या धरित्री तस्मात्प्राणान्सर्व्वथेमान्नियच्छ ।
सर्व्वेषां वै प्राणिनां कामरोषौ सन्त्यज्य त्वं संहरस्वेह जीवं । एवं धर्म्मस्त्वां भजिष्यत्यनन्तो मिथ्यावृत्तान् मारयिष्यत्य
धर्म्मः । २११५
तेनात्मानं पावयस्वात्मना त्वं पापेनात्मानं मज्जयिष्यत्यसन्तं । तस्मात्कामं रोषमप्यागतं त्वं सन्त्यज्यान्तः संहरस्वेति जीवान् ।
॥ नारद उवाच ॥ सा वै भीता मृत्युसंज्ञोपदेशाच्छापाद्भीता वाढमित्यब्रवीत्तं । सा च प्राणं प्राणिनामन्तकाले कामक्रोधौ
त्यज्य हरत्यसक्ता ।
मृत्युस्तेषां व्याधयस्तत्प्रसूता व्याधी रोगो रुज्यते येन जन्तुः । सर्व्वेषां वै प्राणिनां प्रायणान्ते तस्माच्छोकं माकृथा निष्फलं त्वं ।
सर्व्वे देवाः प्राणिभिः प्रायणान्ते गत्वा वृत्ताः सन्निवृत्तास्तथैव । एवं सर्व्वे प्राणिनस्तत्र गत्वा वृत्ता देवा मर्त्यवद्राजसिंह ।
वायुर्भीमो भीमनादो महौजा भेत्ता देहान् प्राणिनां सर्व्वगोऽसौ । नोवा वृत्तिं नैव वृत्तं कदाचित् प्राप्नोत्युग्रोऽनन्ततेजो
विशिष्टः । २१२०
सर्व्वे देवा मर्त्यसंज्ञाविशिष्टास्तस्मात्पुत्रं माशुचो राजसिंह । स्वर्गं प्राप्तो मोदते त्वत्तनूजो नित्यं रम्यान् वीरलोकानवाप्य ।
त्यक्त्वा दुःखं सङ्गतः पुण्यकृद्भिरेषा मृत्युर्देवदिष्टा प्रजानां । प्राप्ते काले संहरन्ती यथावत् स्वयं कृता प्राणहरा प्रजानां ।
आत्मानं वै प्राणिनो घ्नन्ति सर्व्वे नैनं मृत्युर्दण्डपाणिर्हिनस्ति । तस्मान्मृतान्नानुशोचन्ति धीराः सत्यं ज्ञात्वा निश्चयं ब्रह्मसृष्टं ।
इत्थं सृष्टिं देवकृतां विदित्वा पुत्रान्नष्टाच्छोकमाशु त्यजस्व ।
॥ व्यास उवाच ॥ एतच्छ्रुत्वार्थवद्वाक्यं नारदेन प्रकाशितं । उवाचाकम्पनो राजा सखायं नारदन्तथा । २१२५
व्यपेतशोकः प्रीतोऽस्मि भगवन्नृषिसत्तम । श्रुत्वेतिहासं त्वत्तस्तु कृतार्थोऽस्म्यभिवादये ।
तथोक्तो नारदस्तेन राज्ञा ऋषिवरोत्तमः । जगाम नन्दनं शीघ्रं देवर्षिरमितात्मवान् ।
पुण्यं यशस्यं स्वर्ग्यञ्च धन्यमायुष्यमेव च । अस्येतिहासस्य सदा श्रवणं श्रावणं तथा ।
एतदर्थपदं श्रुत्वा तदा राजा युधिष्ठिरः । क्षत्त्रधर्म्मं च विज्ञाय शूराणां च परां गतिं ।
सम्प्राप्तोऽसौ महावीर्य्यः स्वर्गलोकं महारथः । अभिमन्युः परान् हत्वा प्रमुखे सर्व्वधन्विनां । २१३०
युध्यमानो महेष्वासो हतः सोऽभिमुखो रणे । असिना गदया शक्त्या धनुषा च महारथः ।
विरजाः सोमसूनुः स पुनस्तत्र प्रलीयते । तस्मात्परां धृतिं कृत्वा भ्रातृभिः सह पाण्डवः ।
अप्रमत्तः सुसंक्रुद्धः शीघ्रं योद्धुमुपाक्रमत् ।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि मृत्युप्रजापतिसंवादे चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
॥ सञ्जय उवाच ॥ श्रुत्वा मृत्युसमुत्पत्तिं कर्म्माण्यनुपमानि च । धर्म्मराजः पुनर्वाक्यं प्रसाद्यैनमथाब्रवीत् ।

॥ युधिष्ठिर उवाच ॥ गुरवः पुण्यकर्म्माणः शक्रप्रतिमविक्रमाः । स्थाने राजर्षयो ब्रह्मन्ननघाः सत्यवादिनः । २१३५
भूय एव तु मां तथ्यैर्वचोभिरभिबृंहय । राजर्षीणां पुराणानां समाश्वासय कर्म्मभिः ।
कियन्त्यो दक्षिणा दत्ताः कैश्च दत्ता महात्मभिः । राजर्षिभिः पुण्यकृद्भिस्तद्भवान् प्रब्रवीतु मे ।
॥ व्यास उवाच ॥ श्वैत्यस्य नृपतेः पुत्रः सृञ्जयो नाम नामतः । सखायौ तस्य चैवोभौ ऋषी पर्व्वतनारदौ ।
तौ कदाचिद्गृहं तस्य प्रविष्टौ तद्दिदृक्षया । विधिवच्चार्च्चितौ तेन प्रीतौ तत्रोषतुः सुखं ।
तं कदाचित्सुखासीनं ताभ्यां सह शुचिस्मिता । दुहिताभ्यागमत्कन्या सृञ्जयस्य वरवर्णिनी । २१४०
तयाऽभिवादितः कन्यामभ्यनन्दद्यथाविधि । तत्सलिङ्गाभिराशीर्भिरिष्टाभिरभितः स्थिता ।
तां निरीक्ष्याब्रवीद्वाक्यं पर्व्वतः प्रहसन्निव । कस्येयं चञ्चलापाङ्गी सर्व्वलक्षणसम्मता ।
उताहो भाः स्विदर्कस्य ज्वलनस्य शिखा त्वियं । श्रीर्ह्रीः कीर्त्तिर्धृतिः पुष्टिः सिद्धिश्चन्द्रमसः प्रभा ।
एवं ब्रुवाणं देवर्षिं नृपतिः सृञ्जयोऽब्रवीत् । ममेयं भगवन् कन्या मत्तो वरमभीप्सति ।
नारदस्त्वब्रवीदेनं देहि मह्यमिमां नृप । भार्य्यार्थं सुमहच्छ्रेयः प्राप्तुञ्चेदिच्छसे नृप । २१४५
ददानीत्येव संहृष्टः सृञ्जयः प्राह नारदं । पर्व्वतस्तु सुसंक्रुद्धो नारदं वाक्यमब्रवीत् ।
हृदयेन मया पूर्व्वं वृतां वै वृतवानसि । यस्माद्वृता त्वया विप्र मागाः स्वर्गं यथेप्सया ।
एवमुक्तो नारदस्तं प्रत्युवाचोत्तरं वचः । मनोवाग्बुद्धिसम्भाषा दत्ता चोदकपूर्व्वकं ।
पाणिग्रहणमन्त्राश्च प्रथितं वरलक्षणं । न त्वेषा निश्चिता निष्ठा निष्ठा सप्तपदी स्मृता ।
अनुत्पन्ने च भार्य्यार्थे मामत्वं व्याहृतवानसि । तस्मात्त्वमपि न स्वर्गं गमिष्यसि मया विना । २१५०
अन्योऽन्यमेवं शप्त्वा वै तस्थतुस्तत्र तावृषी । अथ सोऽपि नृपो विप्रान्पानाच्छादनभोजनैः ।
पुत्रकामः परं शक्त्या यत्नेनोपाचरच्छुचिः । तस्य प्रसन्ना विप्रेन्द्राः कदाचित्पुत्रमीप्सवः ।
तपःस्वाध्यायनिरता वेदवेदाङ्गपारगाः । सहिता नारदं प्राहुर्देह्यस्मै पुत्रमीप्सितं ।
तथेत्युक्त्वा द्विजैरुक्तः सृञ्जयं नारदोऽब्रवीत् । तुभ्यं प्रसन्ना राजर्षे पुत्रमीप्सन्ति ब्राह्मणाः ।
वरं वृणीष्व भद्रं ते यादृशं पुत्रमीप्सितं । तथोक्तः प्राञ्जली राजा पुत्रं वव्रे गुणान्वितं । २१५५
यशस्विनं कीर्त्तिमन्तं तेजस्विनमरिन्दमं । यस्य मूत्रं पुरीषञ्च क्लेदः स्वेदश्च काञ्चनं ।
सुवर्णष्ठीविरित्येवं तस्य नामाभवत्क्षितौ । तस्मिन् वरप्रदानेन वर्द्धयत्यमितं धनं ।
कारयामास नृपतिः सौवर्णं सर्व्वमीप्सितं । गृहप्राकारदुर्गाणि ब्राह्मणावसथान्यपि ।
शय्यासनानि यानानि स्थालीपिठरभाजनं । तस्य राज्ञोऽपि यद्वेश्म वाह्याश्चोपस्कराश्च ये ।
सर्व्वं तत्काञ्चनमयं कालेन परिवर्द्धितं । अथ दस्युगणाः श्रुत्वा दृष्ट्वा चैनं तथाविधं २१६०
सम्भूय तस्य नृपतेः समारब्धाश्चिकीर्षितुं । केचित्तत्राब्रुवन् राज्ञः पुत्रं गृह्णीम वै स्वयं ।
सोऽस्याकरः काञ्चनस्य तस्य यत्नं चरामहे । ततस्ते दस्यवो लुब्धाः प्रविश्य नृपतेर्गृहं ।
राजपुत्रं ततो जह्रुः सुवर्णष्ठीविनं बलात् । गृहीत्वैनमनुपायज्ञा नीत्वारण्यमचेतसः ।
हत्वा विशस्य चापश्यन् लुब्धा वसु किञ्चन । तस्य प्राणैर्विमुक्तस्य नष्टं तद्वरदं वसु ।

इत्यस्य तथान्योऽन्यं जघ्नुर्मूर्खा विचेतसः। हत्वा परस्परं नष्टाः कुमारं चाद्भुतं भुवि। २१६५
असम्भाव्यं गता घोरं नरकन्दुष्टकारिणः। तं दृष्ट्वा निहतं पुत्त्रं वरदत्तं महातपाः।
विललाप सुदुःखार्त्तो बहुधा करुणं नृपः। विलपन्तं निशम्याथ पुत्त्रशोकहतं नृपं।
प्रत्यदृश्यत देवर्षिर्नारदो नृपसन्निधौ। उवाच चैनं दुःखार्त्तं विलपन्तमचेतसं।
सृञ्जयं नारदोऽभ्येत्य तन्निबोध युधिष्ठिर। कामानामवितृप्तस्त्वं सृञ्जयेह मरिष्यसि।
यस्य चैते वयङ्गेहे उषिता ब्रह्मवादिनः। आविक्षितं मरुत्तञ्च मृतं सृञ्जय शुश्रुम। २१७०
सम्वर्त्तं याजयामास स्पर्द्धया वै बृहस्पतेः। यस्मै राजर्षये प्रादाद्धनं स भगवान् प्रभुः।
हैमं हिमवतः पादं यियक्षोर्व्विविधैः सवैः। यस्य सेन्द्रामरगणा बृहस्पतिपुरोगमाः।
देवा विश्वसृजः सर्व्वे यजनान्ते समासते। यज्ञवाटस्य सौवर्णाः सर्व्वे चासन्परिच्छदाः।
यस्य सर्व्वं तदा ह्यन्नं मनोऽभिप्रायगं शुचि। कामतो बुभुजुर्व्विप्राः सर्व्वे चान्नार्थिनो द्विजाः।
पयोदधिघृतं चौद्रं भक्ष्यभोज्यञ्च शोभनं। यस्य यज्ञेषु सर्व्वेषु वासांस्याभरणानि च। २१७५
ईप्सितान्युपतिष्ठन्ते प्रहृष्टान्वेदपारगान्। मरुतः परिवेष्टारो मरुत्तस्याभवन् गृहे।
आविक्षितस्य राजर्षेर्व्विश्वेदेवाः सभासदः। यस्य वीर्य्यवतो राज्ञः सुवृष्ट्या शस्यसम्पदः।
हविर्भिस्तर्पिता येन सम्यक् क्लृप्तैर्दिवौकसः। ऋषीणाञ्च पितॄणाञ्च देवानां सुखजीविनां।
ब्रह्मचर्य्यश्रुतिमुखैः सर्व्वैर्दानैश्च सर्व्वदा। शयनासनयानानि स्वर्णराशीश्च दुस्त्यजा।
तत्सर्व्वममितं वित्तन्दत्तं विप्रेभ्य इच्छया। सोऽनुध्यातस्तु शक्रेण प्रजाः कृत्वा निरामयाः। २१८०
श्रद्दधानो जिताल्लोकान् गतः पुण्यदुहोऽक्षयान्। सप्रजः सनृपामात्यसदारापत्यबान्धवः।
यौवनेन सहस्राब्दं मरुत्तो राज्यमन्वशात्। स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया।
पुत्त्रात्पुण्यतरस्तुभ्यं मा पुत्त्रमनुतप्यथाः। अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरम्।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोडशराजिके पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
॥ नारद उवाच ॥ सुहोत्रं नाम राजानं मृतं सृञ्जय शुश्रुम। एकवीरमधृष्यन्तममरैरभिवीक्षितं।
यः प्राप्य राज्यं धर्म्मेण ऋत्विग्ब्रह्मपुरोहितान्। अपृच्छदात्मनः श्रेयः पृष्ट्वा तेषां मते स्थितः। २१८५
प्रजानां पालनं धर्म्मो दानमिज्या द्विषज्जयः। एतत्सुहोत्रो विज्ञाय धर्म्मेणैच्छद्धनागमं।
धर्म्मेणाराधयन्देवान्बाणैः शत्रून् जयंस्तथा। सर्व्वाण्यपि च भूतानि स्वगुणैरप्यरञ्जयत्।
यो भुक्त्वेमां वसुमतीं म्लेच्छाटविकवर्ज्जितां। यस्मै ववर्ष पर्ज्जन्यो हिरण्यं परिवत्सरान्।
हैरण्यास्तत्र वाहिन्यः स्वैरिण्यो व्यभवन् पुरा। ग्राहान्कर्कटकांश्चैव मत्स्यांश्च विविधान् बहून्।
कामान्वर्षति पर्ज्जन्यो रूपाणि विविधानि च। सौवर्णान्यप्रमेयाणि वाप्यश्च क्रोशसम्मिताः। २१९०
सहस्रवामनान् कुब्जान् नक्रान्मकरकच्छपान्। सौवर्णान् विहितान् दृष्ट्वा ततोऽस्मयत वै तदा।
तत्सुवर्णमपर्य्यन्तं राजर्षिः कुरुजाङ्गले। ईजानो वितते यज्ञे ब्राह्मणेभ्यो ह्यमन्यत।
सोऽश्वमेधसहस्रेण राजसूयशतेन च। पुण्यैः क्षत्त्रिययज्ञैश्च प्रभूतवरदक्षिणैः।

काम्यनैमित्तिकाजस्रैरिष्ट्वा तुष्टिमवाप्नुयात्। स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः। अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन्। २१९८
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोडशराजिके षट्पञ्चाशोऽध्यायः॥ ५६॥
॥ नारद उवाच॥ राजानं पौरवं वीरं मृतं सृञ्जय शुश्रुम। यः सहस्रं सहस्राणां श्वेतानश्वानवासृजत्।
तस्याश्वमेधे राजर्षेर्देशाद्देशात्समेयुषां। शिक्षाक्षरविधिज्ञानां नासीत्संख्या विपश्चितां।
वेदविद्याव्रतस्नाता वदान्याः प्रियदर्शनाः। सुभिक्षाच्छादनगृहाः सुशय्यासनवाहनाः।
नटनर्त्तनगन्धर्व्वैः पूर्णकैर्वर्द्धमानकैः। नित्योद्योगैश्च क्रीड़द्भिस्तत्र स्म परिहर्षिताः।
यज्ञे यज्ञे यथा कालं दक्षिणाः सोऽत्यकालयत्। द्विपा दशसहस्राख्याः प्रमदाः काञ्चनप्रभाः। २२००
सध्वजाः सपताकाश्च रथा हेममयास्तथा। यः सहस्रं सहस्राणां कन्या हेमविभूषिताः।
धूर्य्यश्वग्रामगणारूढाः सगृहक्षेत्रगोशताः। शतं शतसहस्राणि स्वर्णमाली महात्मनां।
गवां सहस्रानुचरान् दक्षिणामत्यकालयत्। तत्रास्य गाथा गायन्ति ये पुराणविदो जनाः।
हेमशृङ्ग्यो रौप्यखुराः सवत्साः कांस्यदोहनाः। दासीदासखरोष्ट्रांश्च प्रादादाजाविकं बहु।
रत्नानां विविधानाञ्च विविधांश्चान्नपर्व्वतान्। तस्मिन् संवितते यज्ञे दक्षिणामत्यकालयत्। २२०५
अङ्गस्य यजमानस्य स्वधर्म्माधिगताः शुभाः। गुणोत्तरास्तु क्रतवस्तस्यासन् सार्व्वकामिकाः।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन्।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोडशराजिके सप्तपञ्चाशोऽध्यायः॥ ५७॥
॥ नारद उवाच॥ शिविमौशीनरञ्चापि मृतं सृञ्जय शुश्रुम। य इमां पृथिवीं सर्व्वां चर्म्मवत्पर्य्यवेष्टयत्।
साद्रिद्वीपार्णववनां रथघोषेण नादयन्। स शिविर्य्यद्रिपून्नित्यं मुख्यान्निघ्नन् सपत्नजित। २२१०
तेन यज्ञैर्बहुविधैरिष्टं पर्य्याप्तदक्षिणैः। स राजा वीर्य्यवान् धीमानवाप्य वसु पुष्कलं।
सर्व्वमूर्द्धाभिषिक्तानां सम्मतः सोऽभवद्युधि। अयजच्चाश्वमेधैर्य्यो विजित्य पृथिवीमिमां।
निरर्गलैर्बहुफलैर्निष्ककोटिसहस्रदः। हस्त्यश्वपशुभिर्धान्यैर्मृगैर्गोऽजाविभिस्तथा।
विविधां पृथिवीं पुण्यां शिविर्ब्राह्मणसात्करोत्। यावत्यो वर्षतो धारा यावत्यो दिवि तारकाः।
यावत्यः सिकता गाङ्ग्यो यावन्मेरोर्महोपलाः। उदन्वति च यावन्ति रत्नानि प्राणिनोऽपि च। २२१५
तावतीरददद्गा वै शिविरौशीनरोऽध्वरे। नो यन्तारं धुरन्तस्य कञ्चिदन्यं प्रजापतिः।
भूतं भव्यं भवन्तं वा नाध्यगच्छन्नरेश्वरं। तस्यासन् विविधा यज्ञाः सर्व्वकामैः समन्विताः।
हेमयूपासनगृहा हेमप्राकारतोरणाः। शुचि स्वाद्वन्नपानञ्च ब्राह्मणाः प्रयुतायुताः।
नानाभक्ष्यैः प्रियकथाः पयोदधिमहाह्रदाः। तस्यासन् यज्ञवाटेषु नद्यः शुभ्रान्नपर्व्वताः।
पिबत स्नात खादध्वमिति यत्रोच्यते जनाः। तस्मै प्रादाद्वरं रुद्रस्तुष्टः पुण्येन कर्म्मणा। २२२०
अक्षयं ददतो वित्तं श्रद्धा कीर्त्तिस्तथा क्रियाः। यथोक्तमेव भूतानां प्रियत्वं सर्व्वमुत्तमं।

एतांल्लब्ध्वा वरानिष्टान् शिविः काले दिवङ्गतः । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुण्यात्पुण्यतरस्तुभ्यं मा पुत्त्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युबधपर्व्वणि षोडशराजिके अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

॥ नारद उवाच ॥ रामं दाशरथिञ्चैव मृतं सृञ्जय शुश्रुम । यं प्रजा अन्वमोदन्त पिता पुत्त्रानिवौरसान् ।
असंख्येया गुणा यस्मिन्नासन्नमिततेजसि । यश्चतुर्द्दशवर्षाणि निदेशात्पितुरच्युतः । २२२५
वने वनितया सार्द्धमवसल्लक्ष्मणाग्रजः । जघान च जनस्थाने राक्षसान् मनुजर्षभः ।
तपस्विनां रक्षणार्थं सहस्राणि चतुर्द्दश । तत्रैव वसतस्तस्य रावणो नाम राक्षसः ।
जहार भार्य्यां वैदेहीं संमोह्यैनं सहानुगं । तमागस्कारिणं रामः पौलस्त्यमजितं परैः ।
जघान समरे क्रुद्धः पुरेव त्र्यम्बकोऽन्धकं । सुरासुरैरबध्यन्तं देवब्राह्मणकण्टकं ।
जघान स महाबाहुः पौलस्त्यं सगणं रणे । स प्रजानुग्रहं कृत्वा त्रिदशैरभिपूजितः । २२३०
व्याप्य कृत्स्नं जगत् कीर्त्त्या सुरर्षिगणसेवितः । स प्राप्य विविधं राज्यं सर्व्वभूतानुकम्पकः ।
आजहार महायज्ञं प्रजा धर्म्मेण पालयन् । निरर्गलं सजारूथ्यमश्वमेधशतं विभुः ।
आजहार सुरेशस्य हविषामुदमावहत् । अन्यैश्च विविधैर्यज्ञैरीजे बहुगुणैर्नृप ।
क्षुत्पिपासेऽजयद्रामः सर्व्वरोगांश्च देहिनां । सततं गुणसम्पन्नो दीप्यमानः स्वतेजसा ।
अति सर्व्वाणि भूतानि रामो दाशरथिर्व्वभौ । ऋषीणां देवतानाञ्च मानुषाणाञ्च सर्व्वशः । २२३५
पृथिव्यां सह वासोऽभूद्रामे राज्यं प्रशासति । नाहीयन्त तदा प्राणाः प्राणिनां न तदन्यथा ।
प्राणापानसमानाश्च रामे राज्यं प्रशासति । पर्य्यदीप्यन्त तेजांसि तथानर्थाश्च नाभवन् ।
दीर्घायुषः प्रजाः सर्व्वा युवा न म्रियते तदा । वेदैश्चतुर्भिः सुप्रीताः प्राप्नुवन्ति दिवौकसः ।
हव्यं कव्यञ्च विविधं निष्पूर्त्तं हुतमेव च । अदंशमशका देशा नष्टव्यालसरीसृपाः ।
नाप्सु प्राणभृतां मृत्युर्नाकाले ज्वलनोऽदहत् । अधर्म्मरुचयो लुब्धा मूर्खा वा नाभवंस्तदा । २२४०
प्रजाः शिष्टेष्टकर्म्माणः सर्व्वे वर्णास्तदाऽभवन् । स्वधा पूजाश्च रक्षोभिर्जनस्थाने प्रणाशित ।
प्रादान्निहत्य रक्षांसि पितृदेवेभ्य ईश्वरः । सहस्रपुत्त्राः पुरुषा दशवर्षशतायुषः ।
न च ज्येष्ठाः कनिष्ठेभ्यस्तदा श्राद्धान्यकारयन् । युवा श्यामो लोहिताक्षो मत्तमातङ्गविक्रमः ।
आजानुबाहुः सुभुजः सिंहस्कन्धो महाबलः । दशवर्षसहस्राणि दशवर्षशतानि च ।
सर्व्वभूतमनःकान्तो रामो राज्यमकारयत् । रामो रामो राम इति प्रजानामभवत् कथा । २२४५
रामात् रामं जगदभूद्रामे राज्यं प्रशासति । चतुर्विधाः प्रजा रामः स्वर्गं नीत्वा दिवं गतः ।
आत्मानं सम्प्रतिष्ठाप्य राजवंशमिहाष्टधा । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुण्यात् पुण्यतरस्तुभ्यं मा पुत्त्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युबधपर्व्वणि षोडशराजिके एकोनषष्टोऽध्यायः ॥ ५९ ॥

॥ नारद उवाच ॥ भगीरथञ्चैव राजानं मृतं सृञ्जय शुश्रुम । येन भागीरथी गङ्गा चयनैः काञ्चनैश्चिता ।

यः सहस्रं सहस्राणां कन्या हेमविभूषिताः । राज्ञश्च राजपुत्रांश्च ब्राह्मणेभ्यो ह्यमन्यत । २२५०
सर्व्वा रथगताः कन्या रथाः सर्व्वे चतुर्युजः । रथे रथे शतं नागाः सर्व्वे वै हेममालिनः ।
सहस्रमश्वा एकैकं राजानं पृष्ठतोऽन्वयुः । अश्वे अश्वे शतं गावो गवां पश्चादजाविकं ।
तेनाक्रान्ता जनौघेन दक्षिणा भूयसीर्ददत् । उपह्वरेऽतिव्यथिता तस्याङ्के निषसाद ह ।
तथा भागीरथी गङ्गा उर्व्वशी चाभवत् पुरा । दुहितृत्वं गता राज्ञः पुत्त्रत्वमगमत्तदा ।
तान्तु गाथां जगुः प्रीता गन्धर्व्वाः सूर्य्यवर्चसः । पितृदेवमनुष्याणां शृण्वतां वल्गुवादिनां । २२५५
भगीरथं यजमानमैक्ष्वाकं भूरिदक्षिणं । गङ्गा समुद्रगा देवी वव्रे पितरमीश्वरं ।
तस्य सेन्द्रैः सुरगणैर्देवैर्यज्ञः स्वलङ्कृतः । सम्यक्परिगृहीतश्च शान्तविघ्नो निरामयः ।
यो यदिच्छेत विप्रो वै यत्र यत्रात्मनः प्रियं । भगीरथस्तदा प्रीतस्तत्र तत्रानयद्वशी ।
नादेयं ब्राह्मणेभ्यासीत् यस्य यत् स्यात् प्रियं धनं । सोऽपि विप्रप्रसादेन ब्रह्मलोकगतो नृपः ।
येन यातौ मखमुखौ दिशाविहपादपाः । तेनावस्थातुमिच्छन्ति तं गत्वाराजमीश्वरं । २२६०
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्त्रात् पुण्यतरस्तुभ्यं मा पुत्त्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ।

इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोडशराजिके षष्टितमोऽध्यायः ॥ ६० ॥

॥ नारद उवाच ॥ दिलीपं वै चैलविलं मृतं सृञ्जय शुश्रुम । यस्य यज्ञशतेष्वासन् प्रयुतायुतशो द्विजाः ।
तत्त्वज्ञानार्थसम्पन्ना यज्वानः पुत्त्रपौत्रिणः । स इमां वसुसंपूर्णां वसुधां वसुधाधिपः ।
ईजानो विविधैर्य्यज्ञैर्ब्राह्मणेभ्यो ह्यमन्यत । दिलीपस्य च यज्ञेषु कृतः पन्था हिरण्मयः । २२६५
तं धर्म्ममिव कुर्व्वाणाः सेन्द्रा देवाः समाश्रयन् । चषालं प्रचषालञ्च यस्य यूपे हिरण्मये ।
रागखाण्डवभोज्यैश्च मत्ताः पथिषु शेरते । तदेतदद्भुतं मन्ये अन्यैर्न सदृशं नृपः ।
यदप्सु युध्यमानस्य चक्रे न परिपेततुः । राजानं दृढधन्वानं दिलीपं सत्यवादिनं ।
येऽपश्यन् भूरिदाक्षिण्यं तेऽपि स्वर्गजितो नराः । पञ्च शब्दा न जीर्य्यन्ते खट्वाङ्गस्य निवेशने ।
स्वाध्यायघोषो ज्याघोषः पिबताश्नीत खादत । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । २२७०
पुत्त्रात् पुण्यतरस्तुभ्यं मा पुत्त्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ।

इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोडशराजिके एकषष्टोऽध्यायः ॥ ६१ ॥

॥ नारद उवाच ॥ मान्धाता चेद्यौवनाश्वो मृतं सृञ्जय शुश्रुम । देवासुरमनुष्याणां त्रैलोक्यविजयी नृपः ।
यं देवावश्विनौ गर्भात् पितुः पूर्व्वं चकर्षतुः । मृगयां विचरन् राजा तृषितः क्लान्तवाहनः ।
धूमं दृष्ट्वाऽगमत् सत्रं पृषदाज्यमवाप सः । तं दृष्ट्वा युवनाश्वस्य जठरे सुनुतां गतं ।
गर्भाद्विजह्रतुर्देवावश्विनौ भिषजाम्वरौ । तं दृष्ट्वा पितुरुत्सङ्गे शयानं देववर्चसं । २२७५
अन्योऽन्यमब्रुवन् देवाः कमयं धास्यतीति वै । मामेवायं धयत्वग्रे इति ह स्माह वासवः ।
ततोऽङ्गुलिभ्यो हीन्द्रस्य प्रादुरासीत् पयोऽमृतं । मां धास्यतीति कारुण्यात् यदीन्द्रो ह्यन्वकम्पयत् ।

तस्मात्तु मान्धातेत्येवं नाम तस्य तु तैः कृतं। ततस्तु धाराः पयसो घृतस्य च महात्मनः।
तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत्। अपिबत् पाणिमिन्द्रस्य तमासाद्य व्यवर्द्धत।
सोऽभवद्द्वादशसमो द्वादशाहेन वीर्य्यवान्। इमाञ्च पृथिवीं कृत्स्नामेकाह्ना स व्यजीजयत्। २२८०
धर्म्मात्मा धृतिमान् वीरः सत्यसन्धो जितेन्द्रियः। जनमेजयं सुधन्वानं गयं पूरुं बृहद्रथं।
असितञ्च नृगञ्चैव मान्धाता मनुजाऽजयत्। उदेति च यतः सूर्य्यो यत्र च प्रतितिष्ठति।
तत्सर्व्वं यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते। सोऽश्वमेधशतैरिष्ट्वा राजसूयशतेन च।
अददद्रोहितान्मत्स्यान् ब्राह्मणेभ्यो विशाम्पते। हैरण्यान् योजनोत्सेधान् आयतान् दशयोजनं।
बहुप्रकारान् सुस्वादून् भक्ष्यभोज्यान्नपर्व्वतान्। अतिरिक्तं ब्राह्मणेभ्यो भुञ्जानाद्धीयते जनः। २२८५
भक्ष्यान्नपाननिचयाः शुशुभुस्त्वन्नपर्व्वताः। घृतह्रदाः सूपपङ्का दधिफेना गुडोदकाः।
रुरुधुः पर्व्वतान् नद्यो मधुक्षीरवहाः शुभाः। देवासुरनरा यक्षा गन्धर्व्वोरगपक्षिणः।
विप्रास्तत्रागतास्त्वासन् वेदवेदाङ्गपारगाः। ब्राह्मणा ऋषयश्चापि नासंस्तत्राविपश्चितः।
समुद्रान्तां वसुमतीं वसुपूर्णाञ्च सर्व्वतः। स तां ब्राह्मणसात् कृत्वा जगामास्तं तदा नृपः।
गतः पुण्यकृताल्लोकान् सुव्याप्य यशसा दिशः। स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। २२९०
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः। अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन्।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युबधपर्व्वणि षोडशराजिके द्विषष्टोऽध्यायः॥ ६२॥
॥ नारद उवाच॥ ययातिं नाहुषञ्चैव मृतं सृञ्जय शुश्रुम। राजसूयशतैरिष्ट्वा सोऽश्वमेधशतेन च।
पुण्डरीकसहस्रेण वाजपेयशतैस्तथा। अतिरात्रसहस्रेण चातुर्मास्यैश्च कामतः।
अग्निष्टोमैश्च विविधैः सत्रैश्च प्राज्यदक्षिणैः। अब्राह्मणानां यद्वित्तं पृथिव्यामस्ति किञ्चन।
तत् सर्व्वं परिसङ्ख्याय ततो ब्राह्मणसात्करोत्। व्यूढे देवासुरे युद्धे कृत्वा देवसहायतां। २२९५
चतुर्द्धा व्यभजत् सर्व्वां चतुर्भ्यः पृथिवीमिमां। यज्ञैर्नानाविधैरिष्ट्वा प्रजामुत्पाद्य चोत्तमां।
देवयान्याञ्चौशनस्यां शर्म्मिष्ठायाञ्च धर्म्मतः। देवारण्येषु सर्व्वेषु विजहारामरोपमः।
आत्मनः कामचारेण द्वितीय इव वासवः। यदा नाभ्यगमच्छान्तिं कामानां सर्व्ववेदवित्।
ततो गाथामिमां गीत्वा सदारः प्राविशद्वनं। यत् पृथिव्यां ब्रीहियवं हिरण्यं पशवः स्त्रियः।
नालमेकस्य तत्सर्व्वमिति मत्वा शमं व्रजेत्। एवं कामान् परित्यज्य ययातिर्धृतिमेत्य च। २३००
पूरुं राज्ये प्रतिष्ठाप्य प्रयातो वनमीश्वरः। स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः। अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन्।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युबधपर्व्वणि षोडशराजिके त्रिषष्टोऽध्यायः॥ ६३॥
॥ नारद उवाच॥ नाभागमम्बरीषञ्च मृतं सृञ्जय शुश्रुम। यः सहस्रं सहस्राणां राज्ञाञ्चैकस्त्वयोधयत्।
जिगीषमाणान् सङ्ग्रामे समन्तादैरिणोऽभ्ययात्। अस्त्रयुद्धविदो घोराः सृजन्तश्चाशिवा गिरः।
बललाभादमीकृत्य तेषां सोऽस्त्रबलेन च। छत्रायुधध्वजरथान् छित्त्वा प्रासान् गतव्यथः। २३०५

त एनं मुक्तसन्नाहाः प्रार्थयन् जीवितैषिणः । शरण्यमीयुः शरणं तव स्म इति वादिनः ।
स तु तान् वशगान् कृत्वा जित्वा चेमां वसुन्धरां । ईजे यज्ञशतैरिष्टैर्यथाशास्त्रं तथाऽनघ ।
बुभुजुः सर्व्वसम्पन्नमन्नमन्ये जनास्तदा । तस्मिन् यज्ञे तु विप्रेन्द्राः सुहृष्टाः परमार्च्चिताः ।
मोदकान् पूरिकान् पूपान् स्वादुपूर्णाश्च शष्कुलीः । करम्भान् पृथुमृद्वीका अन्नानि सुकृतानि च ।
सूपान् मैरेयकान् पूपान् रागखाण्डवपानकान् । मिष्टान्नानि सुयुक्तानि बहूनि सुरभीणि च । २२१०
घृतं मधु पयस्तोयं दधीनि रसवन्ति च । फलं मूलञ्च सुस्वादु द्विजास्तत्रोपभुञ्जते ।
मादनीयानि पानानि विदित्वा चात्मनः सुखं । अपिबन्त यथाकामं पानपा गीतवादितैः ।
तत्र स्म गाथा गायन्ति क्षीवा हृष्टाः पठन्ति च । नाभागस्तुतिसंयुक्ता ननृतुश्च सहस्रशः ।
तेषु यज्ञेष्वम्बरीषो दक्षिणामत्यकालयत् । राज्ञां शतसहस्राणि दशप्रयुतयाजिनां ।
हिरण्यकवचान् सर्व्वान् श्वेतच्छत्रप्रकीर्णकान् । हिरण्यस्यन्दनारूढान् सानुयात्रपरिच्छदान् । २२१५
ईजानो विविधैर्यज्ञैर्दक्षिणामत्यकालयत् । मूर्द्धाभिषिक्तांश्च नृपान् राजपुत्रशतानि च ।
सदण्डकोषनिचयान् ब्राह्मणेभ्यो ह्यमन्यत । नैवं पूर्व्वजनाश्चक्रुर्न करिष्यन्ति चापरे ।
यदम्बरीषो नृपतिः करोत्यमितदक्षिणः । इत्येवमनुमोदन्ते प्रीता यस्य महर्षयः ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् । २२२०
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोडशराजिके चतुःषष्टोऽध्यायः ॥ ६४ ॥

॥ नारद उवाच ॥ शशविन्दुञ्च राजानं मृतं शुश्रुम सृञ्जय । ईजे स विविधैर्यज्ञैः श्रीमान् सत्यपराक्रमः ।
तस्य भार्य्यासहस्राणां शतमासीन्महात्मनः । एकैकस्याञ्च भार्य्यायां सहस्रं तनयाभवन् ।
ते कुमाराः पराक्रान्ताः सर्व्वे नियुतयाजिनः । राजानः क्रतुभिर्मुख्यैरीजाना वेदपारगाः ।
हिरण्यकवचाः सर्व्वे सर्व्वे चोत्तमधन्विनः । सर्व्वेऽश्वमेधैरीजानाः कुमाराः शाशविन्दवाः ।
तानश्वमेधे राजेन्द्रो ब्राह्मणेभ्योऽददत् पिता । शतं शतं रथगजा एकैकं पृष्ठतोऽन्वयुः । २२२५
राजपुत्त्रं तदा कन्यास्तपनीयस्वलङ्कृताः । कन्यां कन्यां शतं नागा नागे नागे शतं रथाः ।
रथे रथे शतञ्चाश्वा वाजिनो हेममालिनः । अश्वे अश्वे सहस्राणि गवां पञ्चाशदाविकाः ।
एतद्धनमपर्य्यन्तमश्वमेधे महामखे । शशविन्दुर्महाभागो ब्राह्मणेभ्यो ह्यमन्यत ।
वार्क्षास्तु यूपा यावन्तो अश्वमेधे महामखे । ते तथैव पुनश्चान्ये तावन्तः काञ्चनाभवन् ।
भक्ष्यान्नपाननिचयाः पर्व्वताः क्रोशमुच्छ्रिताः । तस्याश्वमेधे निर्वृत्ते राज्ञः शिष्टास्त्रयोदश । २२३०
तुष्टपुष्टजनाकीर्णाः शान्तविघ्नाश्च नामयाः । शशविन्दुरिमां भूमिं चिरं भुक्त्वा दिवं गतः ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोडशराजिके पञ्चषष्टोऽध्यायः ॥ ६५ ॥

॥ नारद उवाच ॥ गयश्चामूर्त्तरयसं मृतं सृञ्जय शुश्रुम । यो वै वर्षशतं राजा हुतशिष्टाशनोऽभवत् ।
तस्मै ह्यग्निर्व्वरं प्रादात्ततो वव्रे वरं गयः । तपसा ब्रह्मचर्य्येण व्रतेन नियमेन च । २२३५
गुरूणाञ्च प्रसादेन वेदानिच्छामि वेदितुं । स्वधर्म्मेणाविहिंस्यान्यान्धनमिच्छामि चाक्षयं ।
विप्रेषु ददतश्चैव श्रद्धा भवति नित्यशः । अनन्यासु सवर्णासु पुत्त्रजन्म च मेभवेत् ।
अन्नं मे ददतः श्रद्धा धर्म्मे मे रमतां मनः । अविघ्नं चास्तु मे नित्यं धर्म्मकार्य्येषु पावक ।
तथा भविष्यतीत्युक्त्वा तत्रैवान्तरधीयत । गयो ह्यवाप्य तत् सर्व्वं धर्म्मेणारीनजीजयत् ।
स दर्शपौर्णमासाभ्यां कालेष्वाग्रयणेषु च । चातुर्म्मास्यैश्च विविधैर्यज्ञैश्चावाप्तदक्षिणैः । २२४०
अयजच्छ्रद्धया राजा परिसम्वत्सरान् शतं । गवां शतसहस्राणि शतमश्वशतानि च ।
शतं निष्कसहस्राणि गवाञ्चाप्ययुतानि षट् । उत्थायोत्थाय संप्रादात् परिसम्वत्सरान्शतं ।
नक्षत्रेषु च सर्व्वेषु ददन्नक्षत्रदक्षिणाः । ईजे च विविधैर्यज्ञैर्यथा सोमोऽङ्गिरा यथा ।
सौवर्णां पृथिवीं कृत्वा य इमां मणिशर्करां । विप्रेभ्यः प्राददद्राजा अश्वमेधे महामखे ।
जाम्बूनदमया यूपाः सर्व्वे रत्नपरिच्छदाः । गयस्यासन् समृद्धास्तु सर्व्वभूतमनोहराः । २२४५
सर्व्वकामसमृद्धांश्च प्रादात्तांश्च गयस्तथा । ब्राह्मणेभ्यः प्रहृष्टेभ्यः सर्व्वभूतेभ्य एव च ।
ससमुद्रवनद्वीपनदीनदवनेषु च । नगरेषु च राष्ट्रेषु दिवि व्योम्नि च येऽवसन् ।
भूतग्रामाश्च विविधाः संतृप्ता यज्ञसम्पदा । गयस्य सदृशो यज्ञो नास्त्यन्य इति तेऽब्रुवन् ।
षट्त्रिंशद्योजनायामा त्रिंशद्योजनमायता । पश्चात्पुरस्तुच्विंशद्वेदी ह्यासीद्धिरण्मयी ।
गयस्य यजमानस्य मुक्तावज्रमणिस्तृता । प्रादात् स ब्राह्मणेभ्योऽथ वासांस्याभरणानि च । २२५०
यथोक्ता दक्षिणाश्चान्या विप्रेभ्यो भूरिदक्षिणः । यत्र भोजनशिष्टस्य पर्व्वताः पञ्चविंशतिः ।
कुल्याः सुकृतवाहिन्यो रसानामभवंस्तदा । वस्त्राभरणगन्धानां राशयश्च पृथग्विधाः ।
यस्य प्रभावाच्च गयस्त्रिषु लोकेषु विश्रुतः । वटश्चाक्षय्यकरणः पुण्यं ब्रह्मसरश्च तत् ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्त्रात् पुण्यतरस्तुभ्यं मा पुत्त्रमनुतप्यथाः ।
अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् । २२५५
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युबधपर्व्वणि षोडशराजिके षट्षष्टोऽध्यायः ॥ ६६ ॥
॥ नारद उवाच ॥ साङ्कृतिं रन्तिदेवञ्च मृतं सृञ्जय शुश्रुम । यस्य द्विशतसाहस्रा आसन् सूदा महात्मनः ।
गृहानभ्यागतान विप्रानतिथीन् परिवेशकाः । पक्वापक्वं दिवारात्रमपर्य्याप्तं धनं तदा ।
न्यायेनाधिगतं वित्तं ब्राह्मणेभ्यो ह्यमन्यत । वेदानधीत्य धर्म्मेण यश्चक्रे द्विषतो वशे ।
उपस्थितास्च पशवः स्वयं यं शंसितव्रतं । बहवः स्वर्गमिच्छन्तो विधिवत्सत्रयाजिनं ।
नदी महानसाद्यस्य प्रवृत्ता चर्म्मराशितः । तस्माच्चर्म्मण्वती पूर्व्वमग्निहोत्रेऽभवत् पुरा । २२६०
ब्राह्मणेभ्योऽददन्निष्कं सौवर्णस्य प्रभावतः । तुभ्यन्निष्कन्तुभ्यन्निष्कमिति हस्म प्रभाषते ।
तुभ्यं तुभ्यमिति प्रादात् निष्कान् निष्कान् सहस्रशः । ततः पुनः समाश्वास्य निष्कानेव प्रयच्छति ।

अयं दत्तं मयाद्येति निष्ककोटिं प्रदाय सः । एकाह्ना दास्यति पुनः कोऽन्यस्तत् सम्प्रदास्यति ।
द्विजपाणिवियोगेन दुःखं मे शाश्वतं महत् । भविष्यति न सन्देह एवं राजाऽददद्वसु ।
सहस्रशश्च सौवर्णान् वृषभान् गोशतानुगान् । साष्टं शतं सुवर्णानां निष्कमाहुर्धनं तदा । २२६५
अध्यर्द्धमासमददद्ब्राह्मणेभ्यः समाः शतं । अग्निहोत्रोपकरणं यज्ञोपकरणञ्च यत् ।
ऋषिभ्यः करकान् कुम्भान् स्थालीः पिठरमेव च । शयनासनयानानि प्रासादांश्च गृहाणि च ।
वृक्षांश्च विविधान् दद्यादन्नानि विविधानि च । सर्वं सौवर्णमेवासीद्रन्तिदेवस्य धीमतः ।
तत्र स्म गाथा गायन्ति ये पुराणविदो जनाः । रन्तिदेवस्य तान्दृष्ट्वा समृद्धिमतिमानुषीं ।
नैतादृशं दृष्टपूर्वं कुवेरसदनेष्वपि । धनञ्च पूर्य्यमाणं नः किं पुनर्मनुजेष्वपि । २२७०
व्यक्तं वस्वोकसारेयमित्यूचुस्तत्र विस्मिताः । सांकृते रन्तिदेवस्य यां रात्रिमतिथिर्वसेत् ।
आलभ्यन्त तदा गावः सहस्राण्येकविंशतिः । तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः ।
सूपं भूयिष्ठमश्नीध्वं नाद्य मांसं यथा पुरा । रन्तिदेवस्य यत्किञ्चित् सुवर्णमभवत्तदा ।
तत् सर्वं वितते यज्ञे ब्राह्मणेभ्यो ह्यमन्यत । प्रत्यक्षं तस्य हव्यानि प्रतिगृह्णन्ति देवताः ।
कव्यानि पितरः काले सर्वकामान् द्विजोत्तमाः । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । २२७५
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभि श्वैत्येति व्याहरन् ।
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोडशराजिके सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

॥ नारद उवाच ॥ दौष्मन्तं भरतञ्चापि मृतं सृञ्जय शुश्रुम । कर्माण्यसुकराण्यन्यैः कृतवान् यः शिशुर्वने ।
हिमावदातान् यः सिंहान्नखदंष्ट्रायुधान् बली । निर्वीर्यांस्तरसा कृत्वा विचकर्ष बबन्ध च ।
क्रूरांश्चोग्रतरान् व्याघ्रान् दमित्वा चाकरोद्वशे । मनःशिलासमायुक्तान् सम्पृक्तान् धातुराशिभिः ।
व्यालादींश्चातिबलवान् सुप्रतीकान् गजानपि । दंष्ट्रासु गृह्य विमुखान् शुष्कास्यानकरोद्वशे । २२८०
महिषानप्यतिबलान् बलिनो विचकर्ष ह । सिंहानां च सुदृप्तानां शतान्यदमयद्बलात् ।
बलिनः सृमरान् खड्गान्नानासत्त्वानि चाप्युत । कृच्छ्रप्राणं वने बद्ध्वा दमयित्वाप्यवासृजत् ।
तं सर्वदमनेत्याहुस्ते द्विजास्तेन कर्म्मणा । तम्प्रत्यषेधज्जननी मा सत्त्वानि विजीजहि ।
सोऽश्वमेधशतेनेष्ट्वा यमुनामनु वीर्य्यवान् । त्रिशताश्वान् सरस्वत्यां गङ्गामनु चतुःशतान् ।
सोऽश्वमेधसहस्रेण राजसूयशतेन च । पुनरीजे महायज्ञैः समाप्तवरदक्षिणैः । २२८५
अग्निष्टोमातिरात्राभ्यामुक्थ्यैर्विश्वजिता अपि । वाजपेयसहस्राणां सहस्रैश्च सुसंवृतैः ।
इष्ट्वा शाकुन्तलो राजा तर्पयित्वा द्विजान् धनैः । सहस्रं यत्र पद्मानां कण्वाय भरतो ददौ ।
जाम्बूनदस्य शुद्धस्य कनकस्य महायशाः । यस्य यूपः शतव्यामः परिणाहेन काञ्चनः ।
समागम्य द्विजैः सार्द्धं सेन्द्रैर्देवैः समुच्छ्रितः । अलङ्कृतान् राजमानान् सर्वरत्नैर्मनोहरैः ।
हैरण्यानश्वान् द्विरदान् रथानुष्ट्रानजाविकं । दासीदासं धनं धान्यं गाः सवत्साः पयस्विनीः । २२९०
ग्रामान् गृहाणि क्षेत्राणि विविधांश्च परिच्छदान् । कोटीशतायुतांश्चैव ब्राह्मणेभ्यो ह्यमन्यत ।

चक्रवर्त्ती ह्यदीनात्मा जितारिस्त्वजितः परैः। स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया।
पुत्त्रात् पुण्यतरस्तुभ्यं मा पुत्त्रमनुतप्यथाः। अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन्।

इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युबधपर्व्वणि षोडशराजिके अष्टषष्टोऽध्यायः॥ ६८॥

॥ नारद उवाच॥ पृथुं वैण्यञ्च राजानं मृतं सृञ्जय शुश्रुम। यमभ्यषिञ्चन् साम्राज्ये राजसूये महर्षयः।
यत्नतः प्रथितेत्यूचुः सर्व्वानभिभवन्पृथुः। क्षतान्नस्त्रास्यते सर्व्वान् इत्येवं क्षत्त्रियोऽभवत्। २३९५
पृथुं वैण्यं प्रजा दृष्ट्वा रक्ताः स्मेति यदब्रुवन्। ततो राजेति नामास्य ह्यनुरागादजायत।
अकृष्टपच्या पृथिवी आसीद्वैण्यस्य कामधुक्। सर्व्वाः कामदुघा गावः पुटके पुटके मधु।
आसन् हिरण्मया दर्भाः सुखस्पर्शाः सुखावहाः। तेषां चीराणि सम्वीताः प्रजास्तेष्वेव शेरते।
फलान्यमृतकल्पानि स्वादूनि च मृदूनि च। तेषामासीत्तदाहारो निराहाराश्च नाभवन्।
अरोगाः सर्व्वसिद्धार्था मनुष्या ह्यकुतोभयाः। न्यवसन्त यथाकामं वृक्षेषु च गुहासु च। २४००
प्रविभागो न राष्ट्राणां पुराणाञ्चाभवत्तदा। यथासुखं यथाकामं तथैता मुदिताः प्रजाः।
तस्य संस्तम्भिता ह्यापः समुद्रानभियास्यतः। पर्व्वताश्च ददुर्म्मार्गं ध्वजभङ्गश्च नाभवत्।
तं वनस्पतयः शैलादेवाऽसुरनरोरगाः। सप्तर्षयः पुण्यजना गन्धर्व्वाप्सरसोऽपि च।
पितरश्च सुखासीनमभिगम्येदमब्रुवन्। सम्राडसि क्षत्त्रियोऽसि राजा गोप्ता पितासि नः।
देह्यस्मभ्यं महाराज प्रभुः सन्नीप्सितान् वरान्। यैर्वयं शाश्वतीस्तृप्तिर्वर्त्तयिष्यामहे सुखं। २४०५
तथेत्युक्त्वा पृथुर्व्वैण्यो गृहीत्वाजगवं धनुः। शरांश्चाप्रतिमान् घोरान् चिन्तयित्वाब्रवीन्महीं।
एह्येहि वसुधे क्षिप्रं क्षरैभ्यः काङ्क्षितं पयः। ततो दास्यामि भद्रं ते अन्नं यस्य यथेप्सितं।
॥ वसुधोवाच॥ दुहितृत्वेन मां वीर सङ्कल्पयितुमर्हसि। तथेत्युक्त्वा पृथुः सर्व्वं विधानमकरोद्वशी।
ततो भूतनिकायास्तां वसुधां दुदुहुस्तदा। तां वनस्पतयः पूर्व्वं समुत्तस्थुर्दुधुक्षवः।
सातिष्ठद्वत्सला वत्सं दोग्ध्री पात्राणि चेच्छती। वत्सोऽभूत्पुष्पितः शालः प्लक्षो दोग्धाऽभवत्तदा। २४१०
छिन्नप्ररोहणं दुग्धं पात्रमौदुम्बरं शुभं। उदयः पर्व्वतो वत्सो मेरुर्दोग्धा महागिरिः।
रत्नान्योषधयो दुग्धं पात्रमश्ममयं तदा। दोग्धा चासीत्तदा देवो दुग्धमूर्ज्जस्करं प्रियं।
असुरा दुदुहुर्म्मायमामपात्रे तु ते तदा। दोग्धा द्विमूर्द्धा तत्रासीद्वत्सश्चासीद्विरोचनः।
कृषिञ्च शस्यञ्च नरा दुदुहुः पृथिवीतले। स्वायम्भुवो मनुर्वत्सस्तेषां दोग्धाऽभवत् पृथुः।
अलावुपात्रे च तदा विषं दुग्धा वसुन्धरा। धृतराष्ट्रोऽभवद्दोग्धा तेषां वत्सस्तु तक्षकः। २४१५
सप्तर्षिभिर्ब्रह्म दुग्धं तथा चाक्लिष्टकर्म्मभिः। दोग्धा बृहस्पतिः पात्रं छन्दो वत्सश्च सोमराट्।
अन्तर्धानं चामपात्रे दुग्धं पुण्यजनैर्विराट्। दोग्धा वैश्रवणस्तेषां वत्सश्चासीद्वृषध्वजः।
पुण्यगन्धान् पद्मपात्रे गन्धर्व्वाप्सरसोऽदुहन्। वत्सश्चित्ररथस्तेषां दोग्धा विश्वरुचिः प्रभुः।
स्वधां रजतपात्रेषु दुदुहुः पितरश्च तां। वत्सो वैवस्वतस्तेषां यमो दोग्धान्तकस्तदा।

एवं निकायैस्तैर्दुग्धा पयोऽभीष्टानि सा विराट्। येनैव वर्त्तयन्ति ते स्म पात्रैर्येन नित्यशः। २२२०
यज्ञैश्च विविधैरिष्ट्वा पृथुर्वैन्यः प्रतापवान्। सन्तर्पयित्वा भूतानि सर्व्वैः कामैर्मनःप्रियैः।
हैरण्यानकरोद्राजा ये केचित् पार्थिवा भुवि। तान् ब्राह्मणेभ्यः प्रायच्छदश्वमेधे महामखे।
षष्टिं नागसहस्राणि षष्टिं नागशतानि च। सौवर्णानकरोद्राजा ब्राह्मणेभ्यश्च तान् ददौ।
इमाञ्च पृथिवीं सर्व्वां मणिरत्नविभूषितां। सौवर्णीमकरोद्राजा ब्राह्मणेभ्यश्च तां ददौ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः। २२२५
अयज्वानमदाक्षिण्यमभि श्वैत्येति व्याहरन्।

इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोडशराजिके एकोनसप्ततितमोऽध्यायः॥ ६९॥

॥ नारद उवाच ॥ रामो महातपाः शूरो वीरलोकनमस्कृतः। जामदग्न्योऽप्यतियशा अवितृप्तो मरिष्यति।
यस्मादिममनुपर्य्येति भूमिं कुर्व्वन्निमां सुखां। न चासीद्विक्रिया यस्य प्राप्य श्रियमनुत्तमां।
यः क्षत्रियैः परामृष्टे वत्से पितरि चाब्रुवन्। ततोऽवधीत् कार्त्तवीर्य्यमजितं समरे परैः।
क्षत्रियाणां चतुःषष्टिमयुतानि सहस्रशः। तदा मृत्योः समेतानि एकेन धनुषाऽजयत्। २२३०
ब्रह्मद्विषाञ्चाथ तस्मिन् सहस्राणि चतुर्दश। पुनरन्यानि जग्राह दन्तकूरं जघान च।
सहस्रं मुषलेनाहन् सहस्रमसिनाऽवधीत्। उद्बन्धनात् सहस्रन्तु हैहयाः समरे हताः।
सरथाश्वगजा वीरा निहतास्तस्य शेरते। पितुर्वधामर्षितेन जामदग्न्येन धीमता।
निजघ्ने दशसाहस्रान् रामः परशुना तदा। न ह्यमृष्यत ता वाचो याभिर्भृशमुदीरिताः।
भृगो रामाभिधावेति यदाऽक्रन्दन् द्विजोत्तमाः। ततः काश्मीरदरदान् कुन्तिक्षुद्रकमालवान्। २२३५
अङ्गवङ्गकलिङ्गांश्च विदेहान् ताम्रलिप्तकान्। रक्षोवाहान् वीतहोत्रान् त्रिगर्त्तान् मार्त्तिकावतान्।
शिवीनन्यांश्च राजन्यान् देशाद्देशात् सहस्रशः। निजघान शितैर्बाणैर्जामदग्न्यः प्रतापवान्।
कोटीशतसहस्राणि क्षत्रियाणां सहस्रशः। इन्द्रगोपकवर्णस्य बन्धुजीवनिभस्य च।
रुधिरस्य परीवाहान् पूरयित्वा सरांसि च। सर्व्वानष्टादशद्वीपान् वशमानीय भार्गवः।
ईजे क्रतुशतैः पुण्यैः समाप्तवरदक्षिणैः। वेदीमष्टनलोत्सेधां सौवर्णां विधिनिर्म्मितां। २२४०
सर्व्वरत्नशतैः पूर्णां पताकाशतमालिनीं। ग्राम्यारण्यैः पशुगणैः सम्पूर्णाञ्च महीमिमां।
रामस्य जामदग्न्यस्य प्रतिजग्राह कश्यपः। ततः शतसहस्राणि द्विपेन्द्रान् हेमभूषणान्।
निर्दस्युं पृथिवीं कृत्वा शिष्टेष्टजनसङ्कुलां। कश्यपाय ददौ रामो हयमेधे महामखे।
त्रिःसप्तवारान् पृथिवीं कृत्वा निःक्षत्रियां प्रभुः। इष्ट्वा क्रतुशतैर्वीरो ब्राह्मणेभ्यो ह्यमन्यत।
सप्तद्वीपां वसुमतीं मारीचोऽगृह्णत द्विजः। रामं प्रोवाच निर्गच्छ वसुधातो ममाज्ञया। २२४५
स कश्यपस्य वचनात् प्रोत्सार्य्य सरितां पतिं। इषुपातैर्युधां श्रेष्ठः कुर्व्वन् ब्राह्मणशासनं।
अध्यावसद्गिरिश्रेष्ठं महेन्द्रं पर्व्वतोत्तमं। एवं गुणशतैर्जुष्टो भृगूणां कीर्त्तिवर्द्धनः।

जामदग्न्योऽप्यतियशा मरिष्यति महाद्युतिः। त्वया चतुर्भद्रतरः पुत्रात् पुण्यतरस्तव।
अयज्वानमदाक्षिण्यं मा पुत्रमनुतप्यथाः। एते चतुर्भद्रतरास्त्वया भद्रशताधिकाः।
मृता नरवरश्रेष्ठ मरिष्यन्ति च सृञ्जय। २४५०
इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युबधपर्व्वणि षोडशराजिके सप्ततितमोऽध्यायः ॥ ७० ॥
॥ व्यास उवाच ॥ पुण्यमाख्यानमायुष्यं श्रुत्वा षोडशराजिकं। अव्याहरन्नरपतिस्तूष्णीमासीत् स सृञ्जयः।
तमब्रवीत्तथासीनं नारदो भगवानृषिः। श्रुतं कीर्त्तयतो मह्यं गृहीतन्ते महाद्युते।
आहोस्विदं ततो नष्टं श्राद्धं शूद्रापतेरिव। स एवमुक्तः प्रत्याह प्राञ्जलिः सृञ्जयस्तदा।
एतत् श्रुत्वा महाबाहो धन्यमाख्यानमुत्तमं। राजर्षीणां पुराणानां यज्वनां दक्षिणावतां।
विस्मयेन हृते शोके तमसीवार्कतेजसा। विपाप्मास्म्यव्यथोपेतो ब्रूहि किं करवाण्यहं। २४५५
॥ नारद उवाच ॥ दिष्ट्याऽपहृतशोकस्त्वं वृणीष्वेह यदिच्छसि। तत्तत् प्रपत्स्यसे सर्व्वं न मृषावादिनो वयं।
॥ सृञ्जय उवाच ॥ एतेनैव प्रतीतोऽहं प्रसन्नो यद्भवान्मम। प्रसन्नो यस्य भगवान् न तस्यास्तीह दुर्लभं।
॥ नारद उवाच ॥ मृतं ददामि ते पुत्रं दस्युभिर्निहतं वृथा। उद्धृत्य नरकात् कष्टात् पशुवत् प्रोक्षितं यथा।
॥ व्यास उवाच ॥ प्रादुरासीत्ततः पुत्रः सृञ्जयस्याद्भुतः प्रभुः। प्रसन्नेनर्षिणा दत्तः कुवेरतनयोपमः।
ततः सङ्गम्य पुत्रेण प्रीतिमानभवन्नृपः। ईजे च क्रतुभिः पुण्यैः समाप्तवरदक्षिणैः। २४६०
अकृतार्थश्च भीतस्य नच सान्नाहिको हतः। अयज्वा त्वनपत्यश्च ततोऽसौ जीवितः पुनः।
शूरो वीरः कृतार्थश्च प्रताप्यारीन् सहस्रशः। अभिमन्युर्गतो वीरः पृतनाभिमुखो हतः।
ब्रह्मचर्य्येण यान् कांश्चित् प्रज्ञया च श्रुतेन च। इष्टैश्च क्रतुभिर्यान्ति तांस्ते पुत्रोऽक्षयान् गतः।
विद्वांसः कर्म्मभिः पुण्यैः स्वर्गमीहन्ति नित्यशः। नतु स्वर्गादयं लोकः काम्यते स्वर्गवासिभिः।
तस्मात् स्वर्गगतं पुत्रमर्ज्जुनस्य हतं रणे। नचेहानयितुं शक्यं किञ्चिदप्राप्यमीहितं। २४६५
यां योगिनो ध्यानविविक्तदर्शनाः प्रयान्ति याञ्चोत्तमयज्विनो जनाः। तपोभिरिद्धैरनुयान्ति यत्तथा तामक्षयां ते तनयो
गतो गतिं।
अन्तात् पुनर्भावगतो विराजते राजेव वीरो ह्यमृतात्मरश्मिभिः। तामैन्दवीमात्मतनुं द्विजेप्सितां गतोऽभिमन्युर्न स शोकम
र्हति।
एवं ज्ञात्वा स्थिरो भूत्वा जह्यरीन् धैर्य्यमाप्नुहि। जीवन्त एव नः शोच्या नतु स्वर्गगतानघ।
शोचतो हि महाराज अघमेव विवर्द्धते। तस्माच्छोकं परित्यज्य श्रेयसे प्रयतेद्बुधः।
प्रहर्षमभिमानञ्च सुखप्राप्तिञ्च चिन्तयेत्। एतद्बुद्ध्वा बुधाः शोकं न शोकः शोक उच्यते। २४७०
एवं विद्धि समुत्तिष्ठ प्रयतो भव मा शुचः। श्रुतस्ते सम्भवो मृत्योस्तपांस्यनुपमानि च।
सर्व्वभूतसमत्वञ्च चञ्चलाश्च विभूतयः। सृञ्जयस्य तु तं पुत्रं मृतं सञ्जीवितं पुनः।
एवं विद्वन् महाराज माशुचः साधु याम्यहं। एतावदुक्त्वा भगवांस्तत्रैवान्तरधीयत।
वागीशाने भगवति व्यासे व्यभ्रनभःप्रभे। गते मतिमतां श्रेष्ठे समाश्वास्य युधिष्ठिरं।

पूर्व्वेषां पार्थिवेन्द्राणां महेन्द्रप्रतिमौजसां । न्यायाधिगतवित्तानां तां श्रुत्वा चरितसम्पदं । २८७५

संपूज्य मनसा विद्वान् विशोकोऽभूद्युधिष्ठिरः । पुनश्चाचिन्तयद्दीनः किं स्विद्वक्ष्ये धनञ्जयं ।

इति श्रीमहाभारते द्रोणपर्व्वणि अभिमन्युबधपर्व्वणि षोडशराजिके एकसप्ततोऽध्यायः ॥ ७१ ॥ समाप्तञ्च अभिमन्युबध पर्व्व ॥

॥ अथ प्रतिज्ञापर्व्व ॥

॥ सञ्जय उवाच ॥ तस्मिन्नहनि निर्वृत्ते घोरे प्राणभृतां क्षये । आदित्येऽस्तं गते श्रीमान् सन्ध्याकाल उपस्थिते ।

व्यपयातेषु वासाय सैन्येषु भरतर्षभ । हत्वा संशप्तकव्रातान् दिव्यैरस्त्रैः कपिध्वजः ।

प्रायात् स्वशिविरं जिष्णुर्जैत्रमास्थाय तं रथं । गच्छन्नेव च गोविन्दं सन्नकण्ठोऽभ्यभाषत ।

किन्नु मे हृदयं त्रस्तं वाक् च सज्जति केशव । स्पन्दन्ति चाप्यनिष्टानि गात्रं सीदति चाच्युत । २८८०

अनिष्टञ्चैव मे श्लिष्टं हृदयान्नापसर्पति । भुवि ये दिक्षु चाप्युग्रा उत्पातास्त्रासयन्ति मां ।

बहुप्रकारा दृश्यन्ते सर्व्वत्र चापशंसिनः । अपि स्वस्ति भवेद्राज्ञः सामात्यस्य गुरोर्मम ।

॥ वासुदेव उवाच ॥ व्यक्तं शिवं तव भ्रातुः सामात्यस्य भविष्यति । मा शुचः किञ्चिदेवान्यत् तत्रानिष्टं भविष्यति ।

॥ सञ्जय उवाच ॥ ततः सन्ध्यामुपास्यैव वीरौ वीरावसादने । कथयन्तौ रणे वृत्तं प्रयातौ रथमास्थितौ ।

ततः स्वशिविरं प्राप्तौ हतानन्दं हतत्विषं । वासुदेवोऽर्ज्जुनश्चैव कृत्वा कर्म्म सुदुष्करं । २८८५

ध्वस्ताकारं समालक्ष्य शिबिरं परवीरहा । बीभत्सुरब्रवीत् कृष्णमस्वस्थहृदयस्ततः ।

नदन्ति नाद्य तूर्य्याणि मङ्गल्यानि जनार्द्दन । मिश्रा दुन्दुभिनिर्घोषैः शङ्खाश्चाडम्बरैः सह ।

वीणा नैवाद्य वाद्यन्ते शम्यातालस्वनैः सह । मङ्गल्यानि च गीतानि न गायन्ति पठन्ति च ।

स्तुतियुक्तानि रम्याणि ममानीकेषु वन्दिनः । योधाश्चापि हि मां दृष्ट्वा निवर्त्तन्ते ह्यधोमुखाः ।

कर्म्माणि च यथापूर्व्वं कृत्वा नाभिवदन्ति मां । अपि स्वस्ति भवेदद्य भ्रातृभ्यो मम माधव । २८९०

न हि शुध्यति मे भावो दृष्ट्वा स्वजनमाकुलं । अपि पाञ्चालराजस्य विराटस्य च मानद ।

सर्व्वेषाञ्चैव योधानां सामग्र्यं स्यान्ममाच्युत । न च मामद्य सौभद्रः प्रहृष्टो भ्रातृभिः सह ।

रणादायान्तमुचितं प्रत्युद्याति हसन्निव ।

॥ सञ्जय उवाच ॥ एवं संकथयन्तौ तौ प्रविष्टौ शिबिरं स्वकं । ददृशाते भृशास्वस्थान् पाण्डवान्नष्टचेतसः ।

दृष्ट्वा भ्रातॄंश्च पुत्रांश्च विमना वानरध्वजः । अपश्यंश्चैव सौभद्रमिदं वचनमब्रवीत् । २८९५

मुखवर्णोऽप्रसन्नो वः सर्व्वेषामेव लक्ष्यते । न चाभिमन्युं पश्यामि न च मां प्रतिनन्दथ ।

मया श्रुतश्च द्रोणेन चक्रव्यूहो विनिर्म्मितः । न च वस्तस्य भेत्ताऽस्ति विना सौभद्रमर्भकं ।

न चोपदिष्टस्तस्यासीन्मयाऽनीकाद्विनिर्गमः । कच्चिन्न बालो युष्माभिः परानीकं प्रवेशितः ।

भित्त्वाऽनीकं महेष्वासः परेषां बहुशो युधि । कच्चिन्न निहतः शेते सौभद्रः परवीरहा ।

लोहिताक्षं महाबाहुं जातं सिंहमिवाद्रिषु । उपेन्द्रसदृशं ब्रूत कथमायोधने हतः । २९००

सुभद्रायाः प्रियं पुत्त्रं द्रौपद्याः केशवस्य च। अम्बायाश्च प्रियं नित्यं कोऽवधीत् कालमोहितः।
सदृशो वृष्णिवीरस्य केशवस्य महात्मनः। विक्रमश्रुतिमाहात्म्यैः कथमायोधने हतः।
वार्ष्णेयीदयितं शूरं मया सततलालितं। यदि पुत्त्रं न पश्यामि पश्यामि यमसादनं।
मृदुकुञ्चितकेशान्तं बालं बालमृगेक्षणं। मत्तद्विरदविक्रान्तं शालपोतमिवोद्गतं।
स्मिताभिभाषिणं शान्तं गुरुवाक्यकरं सदा। बाल्येऽप्यबालकर्म्माणं प्रियवाक्यममत्सरं। २५०५
महोत्साहं महावीर्य्यं दीर्घराजीवलोचनं। भक्तानुकम्पिनं दान्तं नच नीचानुसारिणं।
कृतज्ञं ज्ञानसम्पन्नं कृतास्त्रमनिवर्त्तिनं। युद्धाभिनन्दिनं नित्यं द्विषतां भयवर्द्धनं।
स्वेषां प्रियहिते युक्तं पितॄणां जयगृद्धिनं। नच पूर्व्वप्रहर्त्तारं सङ्ग्रामे नष्टसम्भ्रमं।
यदि पुत्त्रं न पश्यामि यास्यामि यमसादनं। रथेषु गण्यमानेषु गणितं तं महारथं।
मयाऽध्यर्द्धगुणं सङ्ख्ये तरुणं बाहुशालिनं। प्रद्युम्नस्य प्रियं नित्यं केशवस्य ममैव च। २५१०
यदि पुत्त्रं न पश्यामि यास्यामि यमसादनं। सुनसं सुललाटान्तं स्वक्षिभ्रूदशनच्छदं।
अपश्यतस्तद्वदनं का शान्तिर्हृदयस्य मे। तन्त्रीस्वनमुखं रम्यं पुंस्कोकिलसमध्वनिं।
अशृण्वतस्तस्य स्वनं का शान्तिर्हृदयस्य मे। रूपं चाप्रतिमं तस्य त्रिदशेष्वतिदुर्लभं।
अपश्यतो हि वीरस्य का शान्तिर्हृदयस्य मे। अभिवादनदक्षं तं पितॄणां वचने रतं।
नाद्याहं यदि पश्यामि का शान्तिर्हृदयस्य मे। सुकुमारः सदा वीरो महार्हशयनोचितः। २५१५
भूमावनाथवच्छेते नूनं नाथवतां वरः। शयानं समुपासन्ति यं पुण्यममरस्त्रियः।
भ्रमन्त्यो विप्रविद्धाङ्गमुपासन्त्यशिवाः शिवाः। यः पुरा बोध्यते सुप्तः सूतमागधवन्दिभिः।
बोधयन्त्यद्य तं नूनं श्वापदा विकृतैः स्वनैः। छत्त्रच्छायासमुचितं तस्य तद्वदनं शुभं।
नूनमद्य रजोध्वस्तं रणे रेणुः करिष्यति। हापुत्त्रकावितृप्तस्य सततं पुत्त्रदर्शने।
भाग्यहीनस्य कालेन यथा मे नीयसे बलात्। साऽद्य संयमनी नूनं सदा सुकृतिनां गतिः। २५२०
स्वभाभिर्मोदिता रम्या त्वयाऽत्यर्थं विराजते। नूनं वैवस्वतश्च त्वां वरुणश्च प्रियातिथिं।
शतक्रतुर्द्धनेशश्च प्राप्तमर्च्चन्त्यभीरुकं। एवं विलप्य बहुधा भिन्नपोतो वणिग्यथा।
दुःखेन महताविष्टो युधिष्ठिरमपृच्छत। कच्चित् स कदनं कृत्वा परेषां कुरुनन्दन।
स्वर्गतोऽभिमुखः सङ्ख्ये युध्यमानो नरर्षभैः। स नूनं बहुभिर्यत्तै र्युध्यमानो नरर्षभैः।
असहायः सहायार्थी मामनुध्यातवान् ध्रुवं। पीड्यमानः शरैस्तीक्ष्णैः कर्णद्रोणकृपादिभिः। २५२५
नानालिङ्गैः सुधौताग्रैर्मम पुत्त्रोऽल्पचेतनः। इह मे स्यात् परित्राणं पितेति स पुनःपुनः।
इति विप्रलपन् मन्ये नृशंसैर्भुवि पातितः। अथवा मत्प्रसूतः स स्वस्रीयो माधवस्य च।
सुभद्रायाश्च संभूतो नचैवं वक्तुमर्हति। वज्रसारमयं नूनं हृदयं सुदृढं मम।
अपश्यतो दीर्घबाहुं रक्ताक्षं यन्न दीर्य्यते। कथम्बाले महेष्वासा नृशंसा मर्म्मभेदिनः।
स्वस्रीये वासुदेवस्य मम पुत्त्रेऽक्षिपन् शरान्। यो मां नित्यमदीनात्मा प्रत्युद्गम्याभिनन्दति। २५३०

उपयान्तं रिपून् हत्वा सोऽद्य मां किं न पश्यति । नूनं स पतितः शेते धरायां रुधिरोक्षितः ।
शोभयन्मेदिनीं गात्रैरादित्य इव पातितः । सुभद्रामनुशोचामि या पुत्रमपलायिनं ।
रणेऽभिनिहतं श्रुत्वा शोकार्त्ता वै विनङ्क्ष्यति । सुभद्रा वक्ष्यते किं मां अभिमन्युमपश्यती ।
द्रौपदी चैव दुःखार्त्ते तेऽपि वक्ष्यामि किन्वहं । वज्रसारमयं नूनं हृदयं यन्न यास्यति ।
सहस्रधा वधूं दृष्ट्वा रुदतीं शोककर्षितां । दृप्तानां धार्त्तराष्ट्राणां सिंहनादो मया श्रुतः । २५३५
युयुत्सुश्चापि कृष्णेन श्रुतो वीरानुपालभन् । अशक्नुवन्तो बीभत्सुं बालं हत्वा महारथाः ।
किं मोदध्वमधर्म्मज्ञाः पाण्डवं दृश्यतां बलं । किन्तयोर्विप्रियं कृत्वा केशवार्ज्जुनयोर्म्मृधे ।
सिंहवन्नदथ प्रीताः शोककाल उपस्थिते । आगमिष्यति वः क्षिप्रं फलं पापस्य कर्म्मणः ।
अधर्म्मो हि कृतस्तीव्रः कथं स्यादफलश्चिरं । इति तान् परिभाषन् वै वैश्यापुत्रो महामतिः ।
अपायाच्छस्त्रमुत्सृज्य कोपदुःखसमन्वितः । किमर्थमेतन्नाख्यातं त्वया कृष्ण रणे मम । २५४०
अधक्ष्यन्तानहं क्रूरांस्तदा सर्व्वान् महारथान् ।

॥ सञ्जय उवाच ॥ पुत्रशोकार्द्दितं पार्थं ध्यायन्तं साश्रुलोचनं । निगृह्य वासुदेवस्तं पुत्राधिभिरभिप्लुतं ।
मैवमित्यब्रवीत् कृष्णस्तीव्रशोकसमन्वितं । सर्व्वेषामेष वै पन्थाः शूराणामनिवर्त्तिनां ।
क्षत्रियाणां विशेषेण येषां युद्धेन जीविका । एषा वै युध्यमानानां शूराणामनिवर्त्तिनां ।
विहिता धर्म्मशास्त्रज्ञैर्गतिर्मतिमतां वर । ध्रुवं हि युद्धे मरणं शूराणामपलायिनां । २५४५
गतः पुण्यकृतां लोकानभिमन्युर्न संशयः । एतच्च सर्व्ववीराणां काङ्क्षितं भरतर्षभ ।
सङ्ग्रामेऽभिमुखा मृत्युं प्राप्नुयामेति मानद । स च वीरान् रणे हत्वा राजपुत्रान् महाबलान् ।
वीरैराकाङ्क्षितं मृत्युं सम्प्राप्तोऽभिमुखं रणे । मा शुचः पुरुषव्याघ्र पूर्व्वैरेष सनातनः ।
धर्म्मकृद्भिः कृतो धर्म्मः क्षत्रियाणां रणे क्षयः । इमे ते भ्रातरः सर्व्वे दीना भरतसत्तम ।
त्वयि शोकसमाविष्टे नृपाश्च सुहृदस्तव । एतांश्च वचसा साम्ना समाश्वासय मानद । २५५०
विदितं वेदितव्यं ते न शोकं कर्त्तुमर्हसि । एवमाश्वासितः पार्थः कृष्णेनाद्भुतकर्म्मणा ।
ततोऽब्रवीत्तदा भ्रातॄन् सर्व्वान् पार्थः सगद्गदान् । स दीर्घबाहुः पृथ्वंसो दीर्घराजीवलोचनः ।
अभिमन्युर्यथावृत्तः श्रोतुमिच्छाम्यहं तथा । सनागस्यन्दनहयान् द्रक्ष्यध्वं निहतान्मया ।
सङ्ग्रामे सानुबन्धांस्तान् मम पुत्रस्य वैरिणः । कथञ्च वः कृतास्त्राणां सर्व्वेषां शस्त्रपाणिनां ।
सौभद्रो निधनं गच्छेद्वज्रिणापि समागतः । यद्येवमहमज्ञास्यमशक्तान् रक्षणे मम । २५५५
पुत्रस्य पाण्डुपाञ्चालान् मया गुप्तो भवेत्ततः । कथञ्च वै रथस्थानां शरवर्षाणि मुञ्चतां ।
नीतोऽभिमन्युर्निधनं कदर्थीकृत्य वः परैः । अहो वः पौरुषं नास्ति न च वोऽस्ति पराक्रमः ।
यत्राभिमन्युः समरे पश्यतां वो निपातितः । आत्मानमेव गर्हेयं यदहं वै सुदुर्ब्बलान् ।
युष्मानाज्ञाय निर्यातो भीरूनकृतनिश्चयान् । आहोस्वित् भूषणार्थानि वर्म्मशस्त्रायुधानि वः ।
वाचश्च वक्तुं संसत्सु मम पुत्रमरक्षतां । एवमुक्त्वा ततो वाक्यं तिष्ठंश्चापवरासिमान् । २५६०

नस्माशक्यत बीभत्सुः केनचित् प्रसमीक्षितुं । तमन्तकमिव क्रुद्धं निःश्वसन्तं मुहुर्म्मुहुः ।
पुत्त्रशोकाभिसन्तप्तमश्रुपूर्णमुखन्तदा । न भाषितुं शक्नुवन्ति द्रष्टुं वा सुहृदोऽर्ज्जुनं ।
अन्यत्र वासुदेवाद्वा ज्येष्ठाद्वा पाण्डुनन्दनात् । सर्व्वास्ववस्थासु हि तावर्ज्जुनस्य मनोऽनुगौ ।
बहुमानात् प्रियत्वाच्च तावेनं वक्तुमर्हतः । ततस्तं पुत्त्रशोकेन भृशं पीडितमानसं ।
राजीवलोचनं क्रुद्धं राजा वचनमब्रवीत् । २५६५

इति श्रीमहाभारते द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि अर्ज्जुनकोपे द्विसप्ततोऽध्यायः ॥ ७२ ॥

॥ युधिष्ठिर उवाच ॥ त्वयि याते महाबाहो संशप्तकबलं प्रति । स यत्नमकरोत्तीव्रमाचार्य्यो ग्रहणे मम ।
व्यूढानीकं वयं द्रोणं वारयामः स्म सर्व्वशः । प्रतिव्यूह्य रथाऽनीकं यतमानं तथा रणे ।
स वार्य्यमाणो बहुभिर्म्मयि चापि सुरक्षिते । अस्मानभिजघानाशु पीडयन्निशितैः शरैः ।
ते पीड्यमाना द्रोणेन द्रोणानीकं न शक्नुमः । प्रतिवीक्षितुमप्याजौ भेत्तुं तत् कुत एव तु ।
वयं त्वप्रतिमं वीर्य्ये सर्व्वे सौभद्रमात्मजं । उक्तवन्तः स्म तं तात भिन्ध्यनीकमिति प्रभो । २५७०
स तथाचोदितोऽस्माभिः सदश्व इव वीर्य्यवान् । असह्यमपि तं भारं वोढुमेवोपचक्रमे ।
स तवास्त्रोपदेशेन वीर्य्येण च समन्वितः । प्राविशत्तद्बलं बालः सुपर्ण इव सागरं ।
तेऽनुयाता वयं वीरं सात्वतीपुत्त्रमाहवे । प्रवेष्टुकामास्तेनैव येन स प्राविशच्चमूं ।
ततः सैन्धवको राजा क्षुद्रस्तात जयद्रथः । वरदानेन रुद्रस्य सर्व्वान्नः समवारयत् ।
ततो द्रोणः कृपः कर्णो द्रौणिः कौशल्य एव च । कृतवर्म्मा च सौभद्रं षड्रथाः पर्य्यवारयन् । २५७५
परिवार्य्य तु तैः सर्व्वैर्युधि बालो महारथैः । यतमानः परं शक्त्या बहुभिर्विरथीकृतः ।
ततो दौःशासनिः क्षिप्रं ततस्तैर्विरथीकृतं । संशयं परमं प्राप्य दिष्टान्तेनाभ्ययोजयत् ।
स तु हत्वा सहस्राणि नराश्वरथदन्तिनां । अष्टौ रथसहस्राणि नव दन्तिशतानि च ।
राजपुत्त्रसहस्रे द्वे वीरांश्चालक्षितान् बहून् । बृहद्बलञ्च राजानं स्वर्गेणाजौ प्रयोज्य ह ।
ततः परमधर्म्मात्मा दिष्टान्तमुपजग्मिवान् । एतावदेव निर्वृत्तमस्माकं शोकवर्द्धनं । २५८०
स चैवं पुरुषव्याघ्रः स्वर्गलोकमवाप्तवान् । ततोऽर्ज्जुनो वचः श्रुत्वा धर्म्मराजेन भाषितं ।
हा पुत्त्र इति निःश्वस्य व्यथितो न्यपतद्भुवि । विषन्नवदनाः सर्व्वे परिवार्य्य धनञ्जयं ।
नेत्रैरनिमिषैर्द्दीनाः प्रत्यवेक्षन् परस्परं । प्रतिपद्य ततः संज्ञां वासविः क्रोधमूर्च्छितः ।
कम्पमानो ज्वरेणेव निःश्वसंश्च मुहुर्म्मुहुः । पाणिं पाणौ विनिष्पिष्य श्वसमानोऽश्रुनेत्रवान् ।
उन्मत्त इव विप्रेक्षन् इदं वचनमब्रवीत् । २५८५

॥ अर्ज्जुन उवाच ॥ सत्यं वः प्रतिजानामि श्वो निहन्ता जयद्रथं । न चेद्वधभयाद्भीतो धार्त्तराष्ट्रान् प्रहास्यति ।
न चास्मान् शरणं गच्छेत्कृष्णं वा पुरुषोत्तमं । भवन्तं वा महाराज श्वोऽस्मि हन्ता जयद्रथं ।
धार्त्तराष्ट्रप्रियकरं मयि विस्मृतसौहृदं । पापं बालवधे हेतुं सोऽस्मि हन्ता जयद्रथं ।
रक्षमाणाश्च तं सङ्ख्ये ये मां योत्स्यन्ति केचन । अपि द्रोणः कृपो राजन् छादयिष्यामि तान् शरैः ।

स जिगीषति दुर्ब्बुद्धिर्मां किलैष यमक्षयं । तत्स्वस्ति वोऽस्तु यास्यामि स्वगृहं जीवितेप्सया ।
अथवाऽस्त्रप्रतिबलास्त्रात मां क्षत्रियर्षभाः । पार्थेन प्रार्थितं वीरास्ते सन्दत्त ममाभयं ।
द्रोणदुर्य्योधनकृपाः कर्णमद्रेशबाह्लिकाः । दुःशासनादयः शक्तास्त्रातुमप्यन्तकार्द्दितं ।
किमङ्ग पुनरेकेन फाल्गुनेन जिघांसता । न त्रायेयुर्भवन्तो मां समस्ताः पतयः क्षितेः ।　　२६२०
प्रहर्षं पाण्डवेयानां श्रुत्वा मम महद्भयं । सीदन्ति मम गात्राणि मुमूर्षोरिव पार्थिवाः ।
वधो नूनं प्रतिज्ञातो मम गाण्डीवधन्वना । तथा हि हृष्टाः क्रोशन्ति शोककाले स्म पाण्डवाः ।
तत्र देवा न गन्धर्व्वा नासुरोरगराक्षसाः । उत्सहन्तेऽन्यथाकर्त्तुं कुतएव नराधिपाः ।
तस्मान्मामनुजानीत भद्रं वोऽस्तु नरर्षभाः । अदर्शनं गमिष्यामि न मां द्रक्ष्यन्ति पाण्डवाः ।
एवं विलपमानं तं भयाद्व्याकुलचेतसं । आत्मकार्य्यगरीयस्त्वाद्राजा दुर्य्योधनोऽब्रवीत् ।　　२६२५
न भेतव्यं नरव्याघ्र को हि त्वां पुरुषर्षभ । मध्ये क्षत्रियवीराणां तिष्ठन्तं प्रार्थयेद्युधि ।
अहं वैकर्त्तनः कर्णश्चित्रसेनो विविंशतिः । भूरिश्रवाः शलः शल्यो वृषसेनो दुरासदः ।
पुरुमित्रो जयो भोजः काम्बोजश्च सुदक्षिणः । सत्यव्रतो महाबाहुर्विकर्णो दुर्मुखश्च ह ।
दुःशासनः सुबाहुश्च कलिङ्गश्चाप्युदायुधः । विन्दानुविन्दावावन्त्यौ द्रोणो द्रौणिश्च सौबलः ।
एते चान्ये च बहवो नानाजनपदेश्वराः । ससैन्यास्त्वाऽभियास्यन्ति व्येतु ते मानसो ज्वरः ।　　२६३०
त्वञ्चापि रथिनां श्रेष्ठः स्वयं शूरोऽमितद्युते । स कथं पाण्डवेयेभ्यो भयं पश्यसि सैन्धव ।
अक्षौहिण्यो दशैकाच मदीयास्तव रक्षणे । यत्ता योत्स्यन्ति मा भैस्त्वं सैन्धव व्येतु ते भयं ।
॥ सञ्जय उवाच ॥ एवमाश्वासितो राजन् पुत्त्रेण तव सैन्धवः । दुर्य्योधनेन सहितो द्रोणं रात्रावुपागमत् ।
उपसङ्ग्रहणं कृत्वा द्रोणाय स विशाम्पते । उपोपविश्य प्रणतः पर्य्यपृच्छदिदं तदा ।
निमित्ते दूरपातित्वे लघुत्वे दृढवेधने । मम ब्रवीतु भगवान् विशेषं फाल्गुनस्य च ।　　२६३५
विद्याविशेषमिच्छामि ज्ञातुमाचार्य्य तत्त्वतः । ममार्ज्जुनस्य चैवाह यथातत्त्वं प्रचक्ष्व मे ।
॥ द्रोण उवाच ॥ सममाचार्य्यकं तात तव चैवार्ज्जुनस्य च । योगाद्दुःखोषितत्वाच्च तस्मात्त्वत्तोऽधिकोऽर्ज्जुनः ।
न तु ते युधि सन्त्रासः कार्य्यः पार्थात् कथञ्चन । अहं हि रक्षिता तात भयात्त्वां नात्र संशयः ।
न हि मद्बाहुगुप्तस्य प्रभवन्त्यमरा अपि । व्यूहयिष्यामि तं व्यूहं यं पार्थो न तरिष्यति ।
तस्माद्युध्यस्व मा भैस्त्वं स्वधर्ममनुपालयन् । पितृपैतामहं मार्गमनुयाहि महारथ ।　　२६४०
अधीत्य विधिवद्वेदानग्नयः सुहुतास्त्वया । इष्टं च बहुभिर्य्यज्ञैर्न ते मृत्युभयाद्भयं ।
दुर्लभं मानुषैर्मन्दैर्महाभाग्यमवाप्य तु । भुजवीर्य्यार्ज्जितान् लोकान् दिव्यान् प्राप्स्यस्यनुत्तमान् ।
कुरवः पाण्डवाश्चैव वृष्णयोऽन्ये च मानवाः । अहञ्च सहपुत्त्रेण अध्रुवा इति चिन्त्यतां ।
पर्य्यायेण वयं सर्व्वे कालेन बलिना हताः । परलोकं गमिष्यामः स्वैः स्वैः कर्म्मभिरन्विताः ।
तपस्तप्त्वा तु यान् लोकान् प्राप्नुवन्ति तपस्विनः । क्षत्रधर्म्माश्रिता वीराः क्षत्रियाः प्राप्नुवन्ति तान् ।　　२६४५
एवमाश्वासितो राजा भारद्वाजेन सैन्धवः । अपानुदद्भयं पार्थाद्युद्धाय च मनो दधे ।

ततः प्रहर्षः सेनानां तवाप्यासीद्विशाम्पते । वादित्राणां ध्वनिर्घोरः सिंहनादरवैः सह ।

इति श्रीमहाभारते द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि जयद्रथाश्वासे चतुःसप्ततोऽध्यायः ॥ ७४ ॥

॥ सञ्जय उवाच ॥ प्रतिज्ञाते तु पार्थेन सिन्धुराजवधे तदा । वासुदेवो महाबाहुर्धनञ्जयमभाषत ।
भ्रातृणां मतमाज्ञाय त्वया वापि प्रतिश्रुतं । सैन्धवञ्चास्मि हन्तेति तत्साहसमिदं कृतं ।
असंमन्त्र्य मया सार्द्धमतिभारोऽयमुद्यतः । कथं नु सर्व्वलोकस्य नावहास्या भवेमहि । २६५०
धार्त्तराष्ट्रस्य शिविरे मया प्रणिहिताश्चराः । त इमे शीघ्रमागम्य प्रवृत्तिं वेदयन्ति नः ।
त्वया वै सम्प्रतिज्ञाते सिन्धुराजवधे प्रभो । सिंहनादः सवादित्रः सुमहानिह तैः श्रुतः ।
तेन शब्देन वित्रस्ता धार्त्तराष्ट्राः सबान्धवाः । नाकस्मात् सिंहनादोऽयमिति मत्वा व्यवस्थिताः ।
सुमहाञ्छब्दसम्पातः कौरवाणां महाभुज । आसीन्नागाश्वपत्तीनां रथघोषश्च भैरवः ।
अभिमन्योर्वधं श्रुत्वा ध्रुवमार्त्तो धनञ्जयः । रात्रौ निर्य्यास्यति क्रोधादिति मत्वा व्यवस्थिताः । २६५५
तैर्यतद्भिरियं सत्या श्रुता सत्यव्रतस्तव । प्रतिज्ञा सिन्धुराजस्य वधे राजीवलोचन ।
ततो विमनसः सर्व्वे त्रस्ताः क्षुद्रमृगा इव । आसन् सुयोधनामात्याः स च राजा जयद्रथः ।
अथोत्थाय सहामात्यैर्दीनः शिविरमात्मनः । आयात् सौवीरसिन्धूनामीश्वरो भृशदुःखितः ।
समन्त्रकाले संमन्त्र्य सर्व्वा नैःश्रेयसीः क्रियाः । सुयोधनमिदं वाक्यमब्रवीद्राजसंसदि ।
मामसौ पुत्रहन्तेति श्वोऽभियाता धनञ्जयः । प्रतिज्ञातो हि सेनाया मध्ये तेन वधो मम । २६६०
तान्न देवा न गन्धर्व्वा नासुरोरगराक्षसाः । उत्सहन्तेऽन्यथाकर्त्तुं प्रतिज्ञां सव्यसाचिनः ।
ते मां रक्षत सङ्ग्रामे मा वो मूर्द्ध्नि धनञ्जयः । पदं कृत्वाप्नुयाल्लक्ष्यं तस्मादत्र विधीयतां ।
अथ रक्षा न मे सङ्ख्ये क्रियते कुरुनन्दन । अनुजानीहि मां राजन् गमिष्यामि गृहान्प्रति ।
एवमुक्तस्त्ववाक्शीर्षो विमनाः स सुयोधनः । श्रुत्वा तं सभयं तस्य ध्यानमेवान्वपद्यत ।
तमार्त्तमभिसम्प्रेक्ष्य राजा किल स सैन्धवः । मृदु चात्महितं चैव सापेक्षमिदमुक्तवान् । २६६५
नेह पश्यामि भवतां तथा वीर्यं धनुर्द्धरं । योऽर्जुनस्यास्त्रमस्त्रेण प्रतिहन्यान्महाहवे ।
वासुदेवसहायस्य गाण्डीवं धुन्वतो धनुः । कोऽर्जुनस्याग्रतस्तिष्ठेत् साक्षादपि शतक्रतुः ।
महेश्वरोऽपि पार्थेन श्रूयते योधितः पुरा । पदातिना महावीर्य्यो गिरौ हिमवति प्रभुः ।
दानवानां सहस्राणि हिरण्यपुरवासिनां । अघ्नदेकरथेनैव देवराजप्रचोदितः ।
समायुक्तो हि कौन्तेयो वासुदेवेन धीमता । सामरानपि लोकांस्त्रीन् हन्यादिति मतिर्मम । २६७०
सोऽहमिच्छाम्यनुज्ञातुं रक्षितं वा महात्मना । द्रोणेन सहपुत्रेण वीरेण यदि मन्यसे ।
स राज्ञा स्वयमाचार्य्यो भृशमर्थितोऽर्ज्जुन । संविधानं च विहितं रथाश्वाः किल सज्जिताः ।
कर्णो भूरिश्रवा द्रौणिर्वृषसेनश्च दुर्जयः । कृपश्च मद्रराजश्च षडेते स्युः पुरोगमाः ।
शकटः पद्मकश्चार्द्धव्यूहो द्रोणेन निर्म्मितः । पद्मकर्णिकमध्यस्थः सूचीपार्श्वे जयद्रथः ।
स्थास्यते रक्षितो वीरैः सिन्धुराट् युद्धदुर्मदः । धनुष्यस्त्रे च वीर्य्ये च प्राणे चैव तथौरसे । २६७५

अविषह्यतमा ह्येते निश्चिताः पार्थ षड्रथाः । एतानजित्वा षड्रथान् नैव प्राप्यो जयद्रथः ।
तेषामेकैकशो वीर्य्यं षण्णान्त्वमनुचिन्तय । सहिता हि नरव्याघ्र न शक्या जेतुमञ्जसा ।
भूयस्तु मन्त्रयिष्यामि नीतिमात्महिताय वै । मन्त्रज्ञैः सचिवैः सार्द्धं सुहृद्भिः कार्य्यसिद्धये ।
इति श्रीमहाभारते द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि कृष्णवाक्ये पञ्चसप्ततोऽध्यायः ॥ ७५ ॥
॥ अर्जुन उवाच ॥ षड्रथान् धार्त्तराष्ट्रस्य मन्यसे यान्बलाधिकान् । तेषां वीर्य्यं ममार्द्धेन न तुल्यमिति मे मतिः ।
अस्त्रमस्त्रेण सर्व्वेषामेतेषां मधुसूदन । मया द्रक्ष्यन्ति निर्भिन्नं जयद्रथवधैषिणा । २६८०
द्रोणस्य मिषतश्चाहं सगणस्य विलपतः । मूर्द्धानं सिन्धुराजस्य पातयिष्यामि भूतले ।
यदि साध्याश्च रुद्राश्च वसवश्च सहाश्विनः । मरुतश्च सहेन्द्रेण विश्वे देवाः सहेश्वराः ।
पितरः सहगन्धर्व्वाः सुपर्णः सागराद्रयः । द्यौर्व्वियत् पृथिवी चेयं दिशश्च सदिगीश्वराः ।
ग्राम्यारण्यानि भूतानि स्थावराणि चराणि च । त्रातारः सिन्धुराजस्य भवन्ति मधुसूदन ।
तथाऽपि वाणैर्निहतं श्वो द्रष्टासि मया रणे । सत्येन च शपे कृष्ण तथैवायुधमालभे । २६८५
यस्य गोप्ता महेष्वासस्तस्य पापस्य दुर्मतेः । तमेव प्रथमं द्रोणमभियास्यामि केशव ।
तस्मिन् द्यूतमिदं बद्धं मन्यते स सुयोधनः । तस्मात्तस्यैव सेनाग्रं भित्त्वा यास्यामि सैन्धवं ।
द्रष्टासि श्वो महेष्वासान् नाराचैस्तिग्मतेजितैः । शृङ्गाणीव गिरेर्वज्रैर्दीर्य्यमाणान्मया युधि ।
नरनागाश्वदेहेभ्यो विस्रविष्यति शोणितं । पतद्भिः पतितेभ्यश्च विभिन्नेभ्यः शितैः शरैः ।
गाण्डीवप्रेषिता वाणाः मनोऽनिलसमा जवे । नृनागाश्वान्विदेहासून् कर्त्तारश्च सहस्रशः । २६९०
यमात्कुवेराद्वरुणादिन्द्राद्रुद्राच्च यन्मया । उपात्तमस्त्रं घोरं तद्द्रष्टारोऽत्र नरा युधि ।
ब्राह्मेणास्त्रेण चास्त्राणि हन्यमानानि संयुगे । मया द्रष्टासि सर्व्वेषां सैन्धवस्याभिरक्षिणां ।
शरवेगसमुत्कृत्तैराज्ञां केशव मूर्द्धभिः । आस्तीर्य्यमाणां पृथिवीं द्रष्टासि श्वो मया युधि ।
क्रव्यादांस्तर्पयिष्यामि द्रावयिष्यामि शात्रवान् । सुहृदो नन्दयिष्यामि प्रमथिष्यामि सैन्धवं ।
बह्वागस्कृत्कुसम्बन्धी पापदेशसमुद्भवः । मया सैन्धवको राजा हतः स्वान् शोचयिष्यति । २६९५
सर्व्वचीराणि भोक्तारं पापाचारं रणाजिरे । मया सराजकं वाणैर्भिन्नं द्रक्ष्यसि सैन्धवं ।
तथा प्रभाते कर्त्तास्मि यथा कृष्ण सुयोधनः । नान्यं धनुर्द्धरं लोके मंस्यते मत्समं युधि ।
गाण्डीवञ्च धनुर्दिव्यं योद्धा चाहं नरर्षभ । त्वञ्च यन्ता हृषीकेश किं नु स्यादजितं मया ।
तव प्रसादाद्भगवन् किं नावाप्तं रणे मम । अविषह्यं हृषीकेश किञ्जानन्मां विगर्हसे ।
यथा लक्ष्मीः स्थिरा चन्द्रे समुद्रे च यथा जलं । एवमेतां प्रतिज्ञां मे सत्यां विद्धि जनार्द्दन । २७००
मावमंस्था ममास्त्राणि मावमंस्था धनुर्दृढं । मावमंस्था बलं बाह्वोर्मावमंस्था धनञ्जयं ।
तथाभियामि सङ्ग्रामं न जीयेयं जयामि च । तेन सत्येन सङ्ग्रामे हतं विद्धि जयद्रथं ।
ध्रुवं वै ब्राह्मणे सत्यं ध्रुवा साधुषु सन्नतिः । श्रीर्ध्रुवाऽपि च यज्ञेषु ध्रुवो नारायणे जयः ।
॥ सञ्जय उवाच ॥ एवमुक्त्वा हृषीकेशं स्वयमात्मानमात्मनः । सन्दिदेशार्ज्जुनो नर्द्दन् वासविः केशवं प्रभुं ।

ऋतुकाले स्वकां भार्य्यां गच्छतां या मनीषिणां। परस्त्रीभ्यो निवृत्तानां तां गतिं व्रज पुत्रक।
साम्ना ये सर्व्वभूतानि पश्यन्ति गतमत्सराः। नारुन्तुदानां क्षमिणां या गतिस्तामवाप्नुहि।
मधुमांसनिवृत्तानां मदाद्दम्भात्तथाऽनृतात्। परोपतापत्यक्तानां तां गतिं व्रज पुत्रक।
ह्रीमन्तः सर्व्वशास्त्रज्ञा ज्ञानतृप्ता जितेन्द्रियाः। यां गतिं साधवो यान्ति तां गतिं व्रज पुत्रक। २०६५
एवं विलपतीं दीनां सुभद्रां शोककर्षितां। अभ्यपद्यत पाञ्चाली वैराटीसहिता तदा।
ताः प्रकामं रुदित्वा च विलप्य च सुदुःखिताः। उन्मत्तवत्तदा राजन् विसंज्ञा न्यपतन् क्षितौ।
सोपचारस्तु कृष्णश्च दुःखितां भृशदुःखितः। सिक्त्वाऽम्भसा समाश्वास्य तत्तदुक्त्वा हितं वचः।
विसंज्ञकल्पां रुदतीं मर्म्मविद्धां प्रवेपतीं। भगिनीं पुण्डरीकाक्ष इदं वचनमब्रवीत्।
सुभद्रे मा शुचः पुत्रं पाञ्चाल्याश्वासयोत्तरां। गतोऽभिमन्युः प्रथितां गतिं क्षत्रियपुङ्गवः। २०७०
ये चान्येऽपि कुले सन्ति पुरुषा नो वरानने। सर्व्वे ते तां गतिं यान्तु याऽभिमन्योर्यशस्विनः।
कुर्य्याम तद्वयं कर्म्म क्रियासु सुहृदश्च नः। कृतवान् यादृशं चैकस्तव पुत्रो महारथः।
एवमाश्वास्य भगिनीं द्रौपदीमपि चोत्तरां। पार्थस्यैव महाबाहुः पार्श्वमागादरिन्दमः।
ततोऽभ्यनुज्ञाय नृपान् कृष्णो बन्धूंस्तथाऽर्ज्जुनं। विवेशान्तःपुरे राजंस्ते च जग्मुर्यथालयं।
इति श्रीमहाभारते द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि सुभद्राविलापे अष्टसप्ततोऽध्यायः ॥ ७८ ॥
॥ सञ्जय उवाच ॥ ततोऽर्ज्जुनस्य भवनं प्रविश्याप्रतिमं विभुः। स्पृष्ट्वाम्भः पुण्डरीकाक्षः स्थण्डिले शुभलक्षणे। २०७५
सन्तस्तार शुभां शय्यां दर्भैर्वैदूर्य्यसन्निभैः। ततो माल्येन विधिवल्लाजैर्गन्धैः सुमङ्गलैः।
अलञ्चकार तां शय्यां परिवार्य्यायुधोत्तमैः। ततः स्पृष्टोदके पार्थे विनीताः परिचारकाः।
निशायां नैत्यिकं चक्रुस्त्रैयम्बकं बलिं। ततः प्रीतमनाः पार्थो गन्धमाल्यैश्च माधवं।
अलङ्कृत्योपहारन्तन्नैशं तस्मै न्यवेदयत्। स्मयमानस्तु गोविन्दः फाल्गुनं प्रत्यभाषत।
सुप्यतां पार्थ भद्रन्ते कल्याणाय व्रजाम्यहं। स्थापयित्वा ततो द्वास्थान् गोप्तॄंश्चात्तायुधान्नरान्। २०८०
दारुकानुगतः श्रीमान् विवेश शिविरं स्वकं। शिश्ये च शयने शुभ्रे बहुकृत्यं विचिन्तयन्।
पार्थाय सर्व्वं भगवान् शोकदुःखापहं विधिं। व्यदधात्पुण्डरीकाक्षस्तेजोद्युतिविवर्द्धनं।
योगमास्थाय युक्तात्मा सर्व्वेषामीश्वरेश्वरः। श्रेयस्कामः पृथुयशा विष्णुर्जिष्णोः प्रियङ्करः।
न पाण्डवानां शिविरे कश्चित्सुष्वाप तां निशां। प्रजागरः सर्व्वजनं ह्याविवेश विशाम्पते।
पुत्रशोकाभितप्तेन प्रतिज्ञातो महात्मना। सहसा सिन्धुराजस्य बधो गाण्डीवधन्वना। २०८५
तत्कथं सुमहाबाहुर्वासविः परवीरहा। प्रतिज्ञां सफलां कुर्य्यादिति ते समचिन्तयन्।
कष्टं हीदं व्यवसितं पाण्डवेन महात्मना। स च राजा महावीर्य्यः पारयत्वर्ज्जुनः स तां।
पुत्रशोकाभितप्तेन प्रतिज्ञा महती कृता। भ्रातरश्चापि विक्रान्ता बहुलानि बलानि च।
धृतराष्ट्रस्य पुत्रेण सर्व्वं तस्मै निवेदितं। स हत्वा सैन्धवं सङ्ख्ये पुनरेतु धनञ्जयः।
जित्वा रिपुगणांश्चैव पारयत्वर्ज्जुनो व्रतं। सोऽहत्वा सिन्धुराजस्य धूमकेतुं प्रवेक्ष्यति। २०९०

न ह्यसावनृतं कर्त्तुमलं पार्थो धनञ्जयः । धर्म्मपुत्त्रः कथं राजा भविष्यति मृतेऽर्ज्जुने ।
तस्मिन्हि विजयः कृत्स्नः पाण्डवेन समाहितः । यदि नोऽस्ति कृतं किञ्चिद्यदि दत्तं हुतं यदि ।
फलेन तस्य सर्व्वस्य सव्यसाची जयत्वरीन् । एवं कथयतां तेषां जयमाशंसतां प्रभो ।
कृच्छ्रेण महता राजन् रजनी व्यत्यवर्त्तत । तस्या रजन्या मध्ये तु प्रतिबुद्धो जनार्द्दनः ।
स्मृत्वा प्रतिज्ञां पार्थस्य दारुकं प्रत्यभाषत । अर्ज्जुनेन प्रतिज्ञातमार्त्तेन हतबन्धुना । २७९५
जयद्रथं बधिष्यामि श्वोभूत इति दारुक । तत्तु दुर्य्योधनः श्रुत्वा मन्त्रिभिर्मन्त्रयिष्यति ।
यथा जयद्रथं पार्थो न हन्यादिति संयुगे । अक्षौहिण्यो हि ताः सर्व्वा रक्षिष्यन्ति जयद्रथं ।
द्रोणश्च सह पुत्त्रेण सर्व्वास्त्रविधिपारगः । एको वीरः सहस्राक्षो दैत्यदानवदर्पहा ।
सोऽपि तन्नोत्सहेताजौ हन्तुं द्रोणेन रक्षितं । सोऽहं श्वस्तत् करिष्यामि यथा कुन्तीसुतोऽर्ज्जुनः ।
अप्राप्तेऽस्तन्दिनकरे हनिष्यति जयद्रथं । न हि दारा न मित्त्राणि ज्ञातयो न च बान्धवाः । २८००
कश्चिदन्यः प्रियतरः कुन्तीपुत्त्रान्ममार्ज्जुनात् । अनर्ज्जुनमिमं लोकं मुहूर्त्तमपि दारुक ।
उदीक्षितुं न शक्तोऽहं भविता न च तत्तथा । अहं विजित्य तान्सर्व्वान् सहसा सहयद्विपान् ।
अर्ज्जुनार्थे हनिष्यामि सकर्णान् ससुयोधनान् । श्वो निरीक्षन्तु मे वीर्य्यं त्रयो लोका महाहवे ।
धनञ्जयार्थे समरे पराक्रान्तस्य दारुक । श्वो नरेन्द्रसहस्राणि राजपुत्त्रशतानि च ।
साश्वद्विपरथान्याजौ विद्रविष्यन्ति दारुक । श्वस्तांश्चक्रप्रमथितां द्रक्ष्यसे नृपवाहिनीं । २८०५
मया क्रुद्धेन समरे पाण्डवार्थे निपातितां । श्वः सदेवाः सगन्धर्व्वाः पिशाचोरगराक्षसाः ।
ज्ञास्यन्ति लोकाः सर्व्वे मां सुहृदं सव्यसाचिनः । यस्तं द्वेष्टि स मां द्वेष्टि यस्तं चानु स मामनु ।
इति सङ्कल्पतां बुद्ध्या शरीरार्द्धं ममार्ज्जुनः । यथा त्वं मे प्रभातायामस्यां निशि रथोत्तमं ।
कल्पयित्वा यथाशास्त्रमादाय व्रज संयुतः । गदां कौमोदकीं दिव्यां शक्तिचक्रं धनुःशरान् ।
आरोप्य वै रथे सूत सर्व्वोपकरणानि च । स्थानञ्च कल्पयित्वाऽथ रथोपस्थे ध्वजस्य मे । २८१०
वैनतेयस्य वीरस्य समरे रथशोभिनः । छत्रं जाम्बूनदैर्जालैरर्कज्वलनसप्रभैः ।
विश्वकर्म्मकृतैर्द्दिव्यैरश्वानपि विभूषितान् । बलाहकं मेघपुष्पं शैव्यं सुग्रीवमेव च ।
युक्त्वा वाजिवरान्यत्तः कवची तिष्ठ दारुक । पाञ्चजन्यस्य निर्घोषमार्षभेणैव पूरितं ।
श्रुत्वा च भैरवं नादमुपायास्त्वं जवेन मां । एकाह्नाऽहममर्षञ्च सर्व्वदुःखानि चैव ह ।
भ्रातुः पैतृष्वसेयस्य व्यपनेष्यामि दारुक । सर्व्वोपायैर्यतिष्यामि यथा बीभत्सुराहवे । २८१५
पश्यतां धार्त्तराष्ट्राणां हनिष्यति जयद्रथं । यस्य यस्य च बीभत्सुर्बधे यत्नं करिष्यति ।
आशंसे सारथे तत्र भविताऽस्य ध्रुवो जयः ।
॥ दारुक उवाच ॥ जय एव ध्रुवस्तस्य कुत एव पराजयः । यस्य त्वं पुरुषव्याघ्र सारथ्यमुपजग्मिवान् ।
एवं चैतत्करिष्यामि यथा मामनुशासति । सुप्रभातामिमां रात्रिं जयाय विजयस्य ह ।
इति श्रीमहाभारते द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि कृष्णदारुकसम्भाषणे ऊनषष्ततोऽध्यायः ॥ ७९ ॥

स्निग्धाञ्जनचयाकारं सम्प्राप्तः कालपर्व्वतं । ब्रह्मतुङ्गं नदीश्चान्यास्तथा जनपदानपि। २८५०
सुतुङ्गं शतशृङ्गञ्च शर्य्यातिवनमेव च । पुण्यमश्वशिरःस्थानं स्थानमाथर्व्वणस्य च ।
वृषदंशञ्च शैलेन्द्रं महामन्दरमेव च । अप्सरोभिः समाकीर्णं किन्नरैश्चैव शोभितं ।
तस्मिन्शैले व्रजन्पार्थः सकृष्णः समवैचत । शुभैः प्रस्रवणैर्जुष्टां हेमधातु विभूषितां ।
चन्द्ररश्मिप्रतापाङ्गीं पृथिवीं पुरमालिनीं । समुद्रांश्चाद्भुताकारानपश्यन्बहुलाकरान् ।
वियद्द्यां पृथिवीं चैव तथा विष्णुपदं व्रजन् । विस्मितः सह कृष्णेन चिप्तो वाण इवाभ्यगात् । २८५५
ग्रहनचत्रसोमानां सूर्य्याग्न्योश्च समत्विषं । अपश्यत तदा पार्थो ज्वलन्तमिव पर्व्वतं ।
समासाद्य तु तं शैलं शैलाग्रे समवस्थितं । तपोनित्यं महात्मानमपश्यद्वृषभध्वजं ।
सहस्रमिव सूर्य्याणां दीप्यमानं स्वतेजसा । शूलिनं जटिनं गौरं वल्कलाजिनवाससं ।
नयनानां सहस्रैश्च विचित्राङ्गं महौजसं । पार्व्वत्या सहितं देवम्भूतसङ्घैश्च भास्वरैः ।
गीतवादित्रसन्नादैर्हास्यलास्यसमन्वितं । वल्गितास्फोटितोत्कृष्टैः पुण्यैर्गन्धैश्च शोभितं । २८६०
स्तूयमानः स्तवैर्दिव्यैरृषिभिर्ब्रह्मवादिभिः । गोप्तारं सर्व्वभूतानामिष्वासधरमच्युतं ।
वासुदेवस्तु तं दृष्ट्वा जगाम शिरसा चितिं । पार्थेन सह धर्मात्मा गृणन्ब्रह्म सनातनं ।
लोकादिं विश्वकर्म्माणमजमीशानमव्ययं । मनसः परमां योनिं खम्वायुं ज्योतिषां निधिं ।
स्रष्टारं वारिधाराणां भुवश्च प्रकृतिं परां । देवदानवयक्षाणां मानवानांच साधनं ।
योगानाञ्च परं ब्रह्म दृष्टं ब्रह्मविदान्निधिं । चराचरस्य स्रष्टारं प्रतिहर्त्तारमेवच । २८६५
कालकोपं महात्मानं शक्रसूर्य्यगुणोदयं । ववन्दे तं तदा कृष्णो वाङ्मनोबुद्धिकर्म्मभिः ।
यम्प्रपद्यन्ति विद्वांसः सूक्ष्माध्यात्मपदैषिणः । तमजं कारणात्मानं जग्मतुः शरणं भवं ।
अर्जुनश्चापि तन्देवं भूयो भूयोऽप्यवन्दत । ज्ञात्वा तं सर्व्वभूतादिं भूतभव्यभवोद्भवं ।
ततस्तावागतौ दृष्ट्वा नरनारायणावुभौ । सुप्रसन्नमनाः सर्व्वः प्रोवाच प्रहसन्निव ।
आगतं वां नरश्रेष्ठावुत्तिष्ठेतां गतक्लमौ । किञ्च वामीप्सितं वीरौ मनसः चिप्रमुच्यतां । २८७०
येन कार्य्येण सम्प्राप्तौ युवान्तत्साधयामि किं । व्रियतामात्मनः श्रेयस्तत्सर्व्वं प्रददामि वां ।
ततस्तद्वचनं श्रुत्वा प्रत्युत्थाय कृताञ्जली । वासुदेवार्जुनौ सर्व्वं तुष्टुवाते महामती ।
भक्त्या स्तवेन दिव्येन महात्मानमनिन्दितौ ।
॥ कृष्णार्ज्जुनावूचतुः ॥ नमो भवाय सर्व्वाय रुद्राय वरदाय च ।
पशूनां पतये नित्यमुग्राय च कपर्द्दिने । महादेवाय भीमाय त्र्यम्बकाय च शान्तये । २८७५
ईशानाय मखघ्नाय नमोऽस्त्वन्धकघातिने । कुमारगुरवे तुभ्यं नीलग्रीवाय वेधसे ।
पिनाकिने हविष्याय सत्याय विभवे सदा । विलोहिताय धूम्राय व्याध्याय नपराजिते ।
नित्यं नीलशिखण्डाय शूलिने दिव्यचक्षुषे । होत्रे पोत्रे त्रिनेत्राय व्याधाय वसुरेतसे ।
अचिन्त्यायाम्बिकाभर्त्रे सर्व्वदेवस्तुताय च । वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे ।

तप्यमानाय सलिले स्थाणवेऽयाजिताय च। विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते। २८८०
नमो नमस्ते सेव्याय भूतानाम्प्रभवे सदा। ब्रह्मवक्त्राय सर्व्वाय शङ्कराय शिवाय च।
नमोऽस्तु वाचाम्पतये प्रजानां पतये नमः। नमो विश्वस्य पतये महतां पतये नमः।
नमः सहस्रशिरसे सहस्रभुजमन्यवे। सहस्रनेत्रपादाय नमोऽसंख्येयकर्म्मणे।
नमो हिरण्यवर्णाय हिरण्यकवचाय च। भक्तानुकम्पिने नित्यं सिध्यतां नो वरः प्रभो।
॥ सञ्जय उवाच ॥ एवं स्तुत्वा महादेवं वासुदेवः सहार्ज्जुनः। प्रसादयामास भवं तदा शस्त्रोपलब्धये। २८८५
इति श्रीमहाभारते द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि अर्ज्जुनस्वप्नदर्शने अशीतितमोऽध्यायः ॥ ८० ॥
॥ सञ्जय उवाच ॥ ततः पार्थः प्रसन्नात्मा प्राञ्जलिर्वृषभध्वजं। ददर्शोत्फुल्लनयनः समस्ततेजसां निधिं।
तञ्चोपहारं स्वकृतं नैशं नैत्यकमात्मनः। ददर्श त्र्यम्बकाभ्याशे वासुदेवनिवेदितं।
ततोऽभिपूज्य मनसा कृष्णं शर्व्वञ्च पाण्डवः। इच्छाम्यहं दिव्यमस्त्रमित्यभाषत शङ्करं।
ततः पार्थस्य विज्ञाय वरार्थे वचनं तदा। वासुदेवार्ज्जुनौ देवः स्मयमानोऽभ्यभाषत।
स्वागतं वां नरश्रेष्ठौ विज्ञातं मनसेप्सितं। येन कामेन सम्प्राप्तौ भवद्भ्यां तद्ददाम्यहं। २८९०
सरोऽमृतमयं दिव्यमभ्याशे शत्रुसूदनौ। तत्र मे तद्धनुर्दिव्यं शरश्च निहितः पुरा।
येन देवारयः सर्व्वे मया युधि निपातिताः। तत आनीयतां कृष्णौ सशरं धनुरुत्तमं।
तथेत्युक्त्वा तु तौ वीरौ सर्व्वपारिषदैः सह। प्रस्थितौ तत्सरो दिव्यं दिव्याश्चर्य्यशतैर्युतं।
निर्द्दिष्टं यद्वृषाङ्केण पुण्यं सर्व्वार्थसाधकं। तौ जग्मतुरसम्भ्रान्तौ नरनारायणावृषी।
ततस्तौ तत्सरो गत्वा सूर्य्यमण्डलसन्निभं। नागमन्तर्ज्जले घोरं ददृशातेऽर्ज्जुनाच्युतौ। २८९५
द्वितीयं चापरं नागं सहस्रशिरसं वरं। वमन्तं विपुलां ज्वालां ददृशातेऽग्निवर्च्चसं।
ततः कृष्णश्च पार्थश्च संस्पृश्यापः कृताञ्जली। तौ नागावुपतस्थाते नमस्यन्तौ वृषध्वजं।
गृणन्तौ वेदविद्वांसौ तद्ब्रह्म शतरुद्रियं। अप्रमेयं प्रणमन्तौ गत्वा सर्व्वात्मना भवं।
ततस्तौ रुद्रमाहात्म्याद्धित्वा रूपं महोरगौ। धनुर्व्बाणश्च शत्रुघ्नं तद्द्वन्द्वं समपद्यत।
तौ तज्जगृहतुः प्रीतौ धनुर्व्बाणं च सुप्रभं। आजह्रतुश्च महात्मानौ ददतुश्च महात्मने। २९००
ततः पार्श्वाद्वृषाङ्कस्य ब्रह्मचारी न्यवर्त्तत। पिङ्गाक्षस्तपसः क्षेत्रं बलवान्नीललोहितः।
स तद्गृह्य धनुःश्रेष्ठं तस्थौ स्थानं समाहितः। विचकर्षाथ विधिवत् सशरन्धनुरुत्तमं।
तस्य मौर्वीञ्च मुष्टिञ्च स्थानं चालक्ष्य पाण्डवः। श्रुत्वा मन्त्रं भवप्रोक्तं जग्राहाचिन्त्यविक्रमः।
स सरस्येव तं वाणं मुमोचातिबलः प्रभुः। चकार च पुनर्व्वीरस्तस्मिन् सरसि तद्धनुः।
ततः प्रीतं भवं ज्ञात्वा स्मृतिमानर्ज्जुनस्तदा। वरमारण्यके दत्तं दर्शनं शङ्करस्य च। २९०५
मनसा चिन्तयामास तन्मे सम्पद्यतामिति। तस्य तन्मतमाज्ञाय प्रीतः प्रादाद्वरम्भवः।
तच्च पाशुपतं घोरं प्रतिज्ञायाश्च पारणं। ततः पाशुपतं दिव्यमवाप्य पुनरीश्वरात्।
संहृष्टरोमा दुर्द्धर्षः कृतं कार्य्यममन्यत। ववन्दतुश्च संहृष्टौ शिरोभ्यान्तं महेश्वरं।

अनुज्ञातौ क्षणे तस्मिन् भवेनार्ज्जुनकेशवौ । प्राप्तौ स्वशिबिरं वीरौ मुदा परमया युतौ ।
तथा भवेनानुमतौ महासुरनिघातिना । इन्द्रविष्णू यथा प्रीतौ जम्भस्य वधकाङ्क्षिणौ । २९१०
इति श्रीमहाभारते द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि पाशुपतास्त्रप्राप्तौ एकाशीतोऽध्यायः ॥ ८१ ॥
॥ सञ्जय उवाच ॥ तयोः संवदतोरेवं कृष्णदारुकयोस्तदा । साऽत्यगाद्रजनी राजन्नथ राजाऽन्वबुध्यत ।
पठन्ति पाणिस्वनिका मागधा मधुपर्किकाः । वैतालिकाश्च सूताश्च तुष्टुवुः पुरुषर्षभं ।
नर्त्तकाश्चाप्यनृत्यन्त जगुर्गीतानि गायकाः । कुरुवंशस्तवार्थानि मधुरं रक्तकण्ठिनः ।
मृदङ्गा झर्झरा भेर्य्यः पणवानकगोमुखाः । आडम्बराश्च शङ्खाश्च दुन्दुभ्यश्च महास्वनाः ।
एवमेतानि सर्व्वाणि तथान्यान्यपि भारत । वादयन्ति सुसंहृष्टाः कुशलाः साधुशिक्षिताः । २९१५
स मेघस्वननिर्घोषो महाशब्दोऽस्पृशद्दिवं । पार्थिवप्रवरं सुप्तं युधिष्ठिरमबोधयत् ।
प्रतिबुद्धः सुखं सुप्तो महार्हे शयनोत्तमे । उत्थायावश्यकार्य्यार्थं ययौ स्नानगृहं नृपः ।
ततः शुक्लाम्बराः स्नातास्तरुणाः शतमष्ट च । स्नातकाः काञ्चनैः कुम्भैः पूर्णैः समुपतस्थिरे ।
भद्रासने सूपविष्टः परिधायाम्बरं लघु । सस्नौ चन्दनसंयुक्तैः पानीयैरभिमन्त्रितैः ।
उत्सादितः कषायेण बलवद्भिः सुशिक्षितैः । आप्लुतः साधिवासेन जलेन सुसुगन्धिना । २९२०
राजहंसनिभं प्राप्य उष्णीषं शिथिलार्पितं । जलक्षयनिमित्तं वै वेष्टयामास मूर्द्धनि ।
हरिणा चन्दनेनाङ्गमुपलिप्य महाभुजः । स्रग्वी चाक्लिष्टवसनः प्राङ्मुखः प्राञ्जलिः स्थितः ।
जजाप जप्यं कौन्तेयः सतां मार्गमनुष्ठितः । तथाग्निशरणं दीप्तं प्रविवेश विनीतवत् ।
समिद्भिः सुपवित्राभिरग्निमाहुतिभिस्तथा । मन्त्रपूताभिरर्च्चित्वा निश्चक्राम गृहात्ततः ।
द्वितीयां पुरुषव्याघ्रः कक्षां निर्गम्य पार्थिवः । तत्र वेदविदो वृद्धानपश्यद्ब्राह्मणर्षभान् । २९२५
दान्तान् वेदव्रतस्नातान् स्नातानवभृथेषु च । सहस्रानुचरान् सौरान् सहस्रं चाष्ट चापरान् ।
अक्षतैः सुमनोभिश्च वाचयित्वा महाभुजः । तान् द्विजान्मधुसर्पिर्भ्यां फलश्रेष्ठैः सुमङ्गलैः ।
प्रादात्काञ्चनमेकैकं निष्कं विप्राय पाण्डवः । अलङ्कृतं चाश्वशतं वासांसीष्टाश्च दक्षिणाः ।
तथा गाः कपिला दोग्ध्रीः सवत्साः पाण्डुनन्दनः । हेमशृङ्गी रौप्यखुरा दत्त्वा चक्रे प्रदक्षिणं ।
स्वस्तिकान्वर्द्धमानांश्च नन्द्यावर्त्तांश्च काञ्चनान् । माल्यञ्च जलकुम्भांश्च ज्वलितं च हुताशनं । २९३०
पूर्णान्यक्षतपात्राणि रुचकान् रोचनांस्तथा । स्वलङ्कृताः शुभाः कन्या दधिसर्पिर्मधूदकं ।
मङ्गल्यान्पक्षिणश्चैव यच्चान्यदपि पूजितं । दृष्ट्वा स्पृष्ट्वा च कौन्तेयो बाह्यां कक्षां ततोऽगमत् ।
ततस्तस्यां महाबाहोस्तिष्ठन्तः परिचारकाः । सौवर्णं सर्व्वतोभद्रं मुक्तावैदूर्य्यमण्डितं ।
परार्घ्यास्तरणास्तीर्णं सोत्तरच्छदमृद्धिमत् । विश्वकर्म्मकृतं दिव्यमुपजह्रुर्वरासनं ।
तत्र तस्योपविष्टस्य भूषणानि महात्मनः । उपजह्रुर्महार्हाणि प्रेष्याः शुभ्राणि सर्व्वशः । २९३५
मुक्ताभरणवेशस्य कौन्तेयस्य महात्मनः । रूपमासीन्महाराज द्विषतां शोकवर्द्धनं ।
पाण्डुरैश्चन्द्ररश्म्याभैर्हेमदण्डैश्च चामरैः । दोधूयमानैः शुशुभे सविद्युदिव तोयदः ।

संस्तूयमानो भूतैश्च वन्द्यमानश्च वन्दिभिः। उपगीयमानो गन्धर्व्वैरास्ते स्म कुलनन्दनः।
ततो मुहूर्त्तादासीत्तु वन्दिनां निस्वनो महान्। नेमिघोषश्च रथिनां खुरघोषश्च वाजिनां।
ह्रादेन गजघण्टानां शङ्खानां निस्वनेन च। नराणां पदशब्देन कम्पतीव च मेदिनी। २९३०
ततः शुद्धान्तमासाद्य जानुभ्यां भूतले स्थितः। शिरसा वन्दनीयन्तमभिवाद्य जनेश्वरं।
कुण्डली बद्धनिस्त्रिंशः सन्नद्धकवचो युवा। अभिप्रणम्य शिरसा द्वाःस्थो धर्म्मात्मजाय वै।
न्यवेदयद्धृषीकेशमुपयातं महात्मने। सोऽब्रवीत्पुरुषव्याघ्रः स्वागतेनैव माधवं।
अर्घ्यञ्चैवासनं चास्मै दीयतां परमार्च्चितं। ततः प्रवेश्य वार्ष्णेयमुपवेश्य वरासने।
पूजयामास विधिवद्धर्म्मराजो युधिष्ठिरः। २९३५
इति श्रीमहाभारते द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि युधिष्ठिरसज्जायां द्व्यशीतोऽध्यायः॥ ८२ ॥
॥ सञ्जय उवाच॥ ततो युधिष्ठिरो राजा प्रतिनन्द्य जनार्द्दनं। उवाच परमप्रीतः कौन्तेयो देवकीसुतं।
सुखेन रजनी व्युष्टा कच्चित्ते मधुसूदन। कच्चिज्ज्ञानानि सर्व्वाणि प्रसन्नानि तवाच्युत।
वासुदेवोऽपि तद्युक्तं पर्य्यपृच्छद्युधिष्ठिरं। ततश्च प्रकृतीः क्षत्ता न्यवेदयदुपस्थिताः।
अनुज्ञातश्च राज्ञा स प्रावेशयत तं जनं। विराटं भीमसेनञ्च धृष्टद्युम्नञ्च सात्यकिं।
चेदिपं धृष्टकेतुञ्च द्रुपदञ्च महारथं। शिखण्डिनं यमौ चैव चेकितानं सकेकयं। २९४०
युयुत्सुञ्चैव कौरव्यं पाञ्चाल्यं चोत्तमौजसं। युधामन्युं सुबाहुञ्च द्रौपदेयांश्च सर्व्वशः।
एते चान्ये च बहवः क्षत्रियाः क्षत्रियर्षभं। उपतस्थुर्महात्मानं विविशुश्चासने शुभे।
एकस्मिन्नासने वीरावुपविष्टौ महाबलौ। कृष्णश्च युयुधानश्च महात्मानौ महाद्युती।
ततो युधिष्ठिरस्तेषां शृण्वतां मधुसूदनं। अब्रवीत्पुण्डरीकाक्षं समाभाष्य मधुरं वचः।
एकं त्वां वयमाश्रित्य सहस्राक्षमिवामराः। प्रार्थयामो जयं युद्धे शाश्वतानि सुखानि च। २९४५
त्वं हि राज्यविनाशञ्च द्विषद्भिश्च निराक्रियां। क्लेशांश्च विविधान् कृष्ण सर्व्वांस्तानपि वेत्थ नः।
त्वयि सर्व्वेश सर्व्वेषामस्माकं भक्तवत्सल। सुखमायत्तमत्यर्थं यात्रा च मधुसूदन।
स तथा कुरु वार्ष्णेय यथा त्वयि मनो मम। अर्ज्जुनस्य यथा सत्या प्रतिज्ञा स्याच्चिकीर्षिता।
स भवांस्तारयत्वस्माद्दुःखामर्षमहार्णवात्। पारन्तितीर्षतामद्य प्लवो नो भव माधव।
न हि तत्कुरुते संख्ये रथी रिपुवधोद्यतः। यथा वै कुरुते कृष्ण सारथिर्यत्नमास्थितः। २९५०
यथैव सर्व्वास्वापत्सु पासि वृष्णीन् जनार्द्दन। तथैवास्मान्महाबाहो वृजिनात्त्रातुमर्हसि।
त्वमगाधेऽप्लवे मग्नान् पाण्डवान् कुरुसागरे। समुद्धर प्लवो भूत्वा शङ्खचक्रगदाधर।
नमस्ते देवदेवेश सनातन विशातन। विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम।
नारदस्त्वां समाचख्यौ पुराणमृषिसत्तमं। वरदं शार्ङ्गिणं श्रेष्ठं तत्सत्यं कुरु माधव।
इत्युक्तः पुण्डरीकाक्षो धर्म्मराजेन संसदि। तोयमेघस्वनो वाग्मी प्रत्युवाच युधिष्ठिरं। २९५५
॥ कृष्ण उवाच ॥ सामरेष्वपि लोकेषु सर्व्वेषु न तथाविधः। शरासनधरः कश्चिद्यथा पार्थो धनञ्जयः।

वीर्य्यवानस्त्रसम्पन्नः पराक्रान्तो महाबलः । युद्धशौण्डः सदामर्षी तेजस्वी परमो नृणां ।
स युवा वृषभस्कन्धो दीर्घबाहुर्म्महाबलः । सिंहर्षभगतिः श्रीमान् द्विषतस्ते हनिष्यति ।
अहञ्च तत्करिष्यामि यथा कुन्तीसुतोऽर्ज्जुनः । धार्त्तराष्ट्रस्य सैन्यानि धक्ष्यति प्रतिबोधितः ।
अद्य तं पापकर्म्माणं क्षुद्रं सौभद्रघातिनं । अपुनर्द्दर्शनं मार्गमिषुभिः क्षिप्स्यतेऽर्ज्जुनः । २९००
तस्याद्य गृध्राः श्येनाश्च चण्डगोमायवस्तथा । भक्षयिष्यन्ति मांसानि ये चान्ये पुरुषादकाः ।
यद्यस्य देवा गोप्तारः सेन्द्राः सर्व्वे युधिष्ठिर । राजधानीं यमस्याद्य हतः प्राप्स्यति सङ्कुले ।
निहत्य सैन्धवं जिष्णुरद्य त्वामुपयास्यति । विशोको विज्वरो राजन् भव भूतिपुरस्कृतः ।
इति श्रीमहाभारते द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि श्रीकृष्णवाक्ये त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
॥ सञ्जय उवाच ॥ तथा सम्वदतां तेषां प्रादुरासीद्धनञ्जयः । दिदृक्षुर्भरतश्रेष्ठ राजानं ससुहृद्गणं ।
तं निविष्टं शुभां कक्षामभिवाद्याग्रतः स्थितं । समुत्थायार्ज्जुनं प्रेम्णा सस्वजे पाण्डवर्षभः । २९०५
मूर्द्ध्नि चैनमुपाघ्राय परिष्वज्य च बाहुना । आशिषः परमाः प्रोच्य स्मयमानोऽभ्यभाषत ।
व्यक्तमर्ज्जुन सङ्ग्रामे ध्रुवस्ते विजयो महान् । यादृग्रूपा च ते छाया प्रसन्नश्च जनार्द्दनः ।
तमब्रवीत्ततो जिष्णुर्म्महदाश्चर्य्यमुत्तमं । दृष्टवानस्मि भद्रन्ते केशवस्य प्रसादजं ।
ततस्तत्कथयामास यथादृष्टं धनञ्जयः । आश्वासनार्थं सुहृदां त्र्यम्बकेन समागमं ।
ततः शिरोभिरवनिं स्पृष्ट्वा सर्व्वे च विस्मिताः । नमस्कृत्य वृषाङ्काय साधु साध्विति चाब्रुवन् । २९१०
अनुज्ञातास्ततः सर्व्वे सुहृदो धर्म्मसूनुना । त्वरमाणाः सुसंरब्धा हृष्टा युद्धाय निर्य्ययुः ।
अभिवाद्य तु राजानं युयुधानाच्युतार्ज्जुनाः । हृष्टा विनिर्य्ययुस्ते वै युधिष्ठिरनिवेशनात् ।
रथेनैकेन दुर्द्धर्षौ युयुधानजनार्द्दनौ । जग्मतुः सहितौ वीरावर्ज्जुनस्य निवेशनं ।
तत्र गत्वा हृषीकेशः कल्पयामास सूतवत् । रथं रथवरस्याजौ वानरर्षभलक्षणं ।
स मेघसमनिर्घोषस्तप्तकाञ्चनसुप्रभः । बभौ रथवरः कॢप्तः शिशुर्द्दिवसकृद्यथा । २९१५
ततः पुरुषशार्दूलः सज्जं सज्जपुरःसरः । कृताह्निकाय पार्थाय न्यवेदयत तं रथं ।
तन्तु लोके वरं पुंसां किरीटी हेमवर्म्मभृत् । चापबाणधरो वाहं प्रदक्षिणमवर्त्तत ।
तपोविद्यावयोवृद्धैः क्रियावद्भिर्जितेन्द्रियैः । स्तूयमानो जयाशीर्भिरारुरोह महारथं ।
जैत्रैः साङ्ग्रामिकैर्म्मन्त्रैः पूर्व्वमेव रथोत्तमं । अभिमन्त्रितमर्च्चिष्मानुदयं भास्करो यथा ।
स रथे रथिनां श्रेष्ठः काञ्चने काञ्चनावृतः । विबभौ विमलोऽर्च्चिष्मान् मेराविव दिवाकरः । २९२०
अन्वारुरुहतुः पार्थं युयुधानजनार्द्दनौ । शर्य्यातेर्य्यज्ञमायान्तं यथेन्द्रं देवमश्विनौ ।
अथ जग्राह गोविन्दो रश्मीन् रश्मिवताम्बरः । मातलिर्व्वासवस्येव वृत्रं हन्तुं प्रयास्यतः ।
स ताभ्यां सहितः पार्थो रथप्रवरमास्थितः । सहितो बुधशुक्राभ्यां तमो निघ्नन् यथा शशी ।
सैन्धवस्य वधं प्रेप्सुः प्रयातः शत्रुपूगहा । सहाम्बुपतिमित्राभ्यां यथेन्द्रस्तारकामये ।
ततो वादित्रघोषैश्च माङ्गल्यैश्च स्तवैः शुभैः । प्रयान्तमर्ज्जुनं वीरं मागधाश्चैव तुष्टुवुः । २९२५

सजयाशीः सुपुण्याहः सूतमागधनिस्वनः । युक्तो वादित्रघोषेण तेषां रतिकरोऽभवत् ।
तमनुप्रयतो वायुः पुण्यगन्धवहः शुभः । ववौ संहर्षयन् पार्थं द्विषतश्चापि शोषयन् ।
ततस्तस्मिन् क्षणे राजन् विविधानि शुभानि च । प्रादुरासन् निमित्तानि विजयानि बहूनि च ।
पाण्डवानां त्वदीयानां विपरीतानि मारिष । दृष्ट्वाऽर्जुनो निमित्तानि विजयाय प्रदक्षिणं ।
युयुधानं महेष्वासमिदं वचनमब्रवीत् । युयुधानाद्य युद्धे मे दृश्यते विजयो ध्रुवः । ३०१०
यथाहीमानि लिङ्गानि दृश्यन्ते शिनिपुङ्गव । सोऽहं तत्र गमिष्यामि यत्र सैन्धवको नृपः ।
यियासुर्यमलोकाय मम वीर्य्यं प्रतीक्षते । यथा परमकं कृत्यं सैन्धवस्य वधो मम ।
तथैव सुमहत्कृत्यं धर्म्मराजस्य रक्षणं । स त्वमद्य महाबाहो राजानं परिपालय ।
यथैव हि मया गुप्तस्त्वया गुप्तो भवेत्तथा । न पश्यामि च तं लोके यस्त्वां युद्धे पराजयेत् ।
वासुदेवसमं सङ्ख्ये स्वयमप्यमरेश्वरः । त्वयि चाहं पराश्वस्तः प्रद्युम्ने वा महारथे । ३०१५
शक्नुयां सैन्धवं हन्तुमनपेक्षो नरर्षभ । मय्यपेक्षा न कर्त्तव्या कथञ्चिदपि सात्वत ।
राजन्येव परा गुप्तिः कार्य्या सर्व्वात्मना त्वया । नहि यत्र महाबाहुर्वासुदेवो व्यवस्थितः ।
किञ्चिद्व्यापद्यते तत्र यत्राहमपि च ध्रुवं । एवमुक्तस्तु पार्थेन सात्यकिः परवीरहा ।
तथेत्युक्त्वाऽगमत्तत्र यत्र राजा युधिष्ठिरः ।

इति श्रीमहाभारते द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि अर्ज्जुनवाक्ये चतुरशीतोऽध्यायः ॥ ८४ ॥ समाप्तञ्च प्रतिज्ञापर्व्व ॥

## ॥ अथ जयद्रथवधपर्व्व ॥

॥ धृतराष्ट्र उवाच ॥ श्वोभूते किमकार्षुस्ते दुःखशोकसमन्विताः । अभिमन्यौ हते तत्र केवाऽयुध्यन्त मामकाः । ३०२०
जानन्तस्तस्य कर्म्माणि कुरवः सव्यसाचिनः । कथं तत्किल्विषं कृत्वा निर्भया ब्रूहि मामकाः ।
पुत्रशोकाभिसन्तप्तं क्रुद्धं मृत्युमिवान्तकं । आयान्तं पुरुषव्याघ्रं कथं ददृशुराहवे ।
कपिराजध्वजं सङ्ख्ये विधुन्वानं महद्धनुः । दृष्ट्वा पुत्रपरिद्यूनं किमकुर्व्वत मामकाः ।
किन्नु सञ्जय सङ्ग्रामे वृत्तं दुर्य्योधनं प्रति । परिदेवो महानत्र श्रुतो मे नाभिनन्दनं ।
बभूवुर्ये मनोग्राह्याः शब्दाः श्रुतिसुखावहाः । न श्रूयन्तेऽद्य ते सर्व्वे सैन्धवस्य निवेशने । ३०२५
स्तुवतां नाद्य श्रूयन्ते पुत्राणां शिविरे मम । सूतमागधसङ्घानां नर्त्तकानाञ्च सर्व्वशः ।
शब्देन नादिताभीक्ष्णमभवद्यत्र मे श्रुतिः । दीनानामद्य तं शब्दं न शृणोमि समीरितं ।
निवेशने सत्यधृतेः सोमदत्तस्य सञ्जय । आसीनोऽहं पुरा तात शब्दमश्रौषमुत्तमं ।
तदद्य पुण्यहीनोऽहमार्त्तस्वरनिनादितं । निवेशनं गतोत्साहं पुत्राणां मम लक्षये ।
विविंशतेर्दुर्मुखस्य चित्रसेनविकर्णयोः । अन्येषाञ्च सुतानां मे न तथा श्रूयते ध्वनिः । ३०३०
ब्राह्मणाः क्षत्रिया वैश्या यं शिष्याः पर्य्युपासते । द्रोणपुत्रं महेष्वासं पुत्राणां मे परायणं ।
वितण्डालापसंलापैर्द्रुतवादित्रनादितैः । गीतैश्च विविधैरिष्टै रमते यो दिवानिशं ।

उपास्यमानो बहुभिः कुरुपाण्डवसात्वतैः। सूत तस्य गृहे शब्दो नाद्य द्रौणेर्यथा पुरा॥
द्रोणपुत्त्रं महेष्वासं गायना नर्त्तकाश्च ये। अत्यर्थमुपतिष्ठन्ति तेषां न श्रूयते ध्वनिः।
विन्दानुविन्दयोः सायं शिविरे यो महाध्वनिः। श्रूयते सोऽद्य न तथा कैकेयानाञ्च वेश्मसु। २०२५
नित्यं प्रमुदितानाञ्च तालगीतस्वनो महान्। नृत्यतां श्रूयते तात गणानां सोऽद्य न स्वनः।
सप्ततन्तून्वितन्वाना याजका यमुपासते। सोमदत्तिं श्रुतनिधिं तेषां न श्रूयते ध्वनिः।
ज्याघोषो ब्रह्मघोषश्च तोमरासिरथध्वनिः। द्रोणस्यासीदविरतो गृहे तन्न शृणोम्यहं।
नानादेशसमुत्थानां गीतानां योऽभवत्स्वनः। वादित्रनादितानां च सोऽद्य न श्रूयते महान्।
यदा प्रभृत्युपप्लव्याच्छान्तिमिच्छन् जनार्द्दनः। आगतः सर्व्वभूतानामनुकम्पार्थमच्युतः। २०३०
ततोऽहमब्रुवं सूत मन्दं दुर्य्योधनं तदा। वासुदेवेन तीर्थेन पुत्त्र संशाम्य पाण्डवैः।
कालप्राप्तमहं मन्ये मा त्वं दुर्य्योधनातिगाः। शमं चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवं।
हितार्थमभिजल्पन्तं न तवास्ति रणे जयः। प्रत्याचष्ट स दाशार्हमृषभं सर्व्वधन्विनां।
अनुनेयानि जल्पन्तमनयान्नान्वपद्यत। ततो दुःशासनस्यैव कर्णस्य च मतं द्वयोः।
अन्ववर्त्तत मां हित्वा कृष्टः कालेन दुर्मतिः। नह्यहं द्यूतमिच्छामि विदुरो न प्रशंसति। २०३५
सैन्धवो नेच्छति द्यूतं भीष्मो न द्यूतमिच्छति। शल्यो भूरिश्रवाश्चैव पुरुमित्रो जयस्तथा।
अश्वत्थामा कृपो द्रोणो द्यूतं नेच्छन्ति सञ्जय। एतेषां मतमादाय यदि वर्त्तेत पुत्त्रकः।
सज्ञातिमित्रः ससुखं चिरञ्जीवेदनामयः। श्लक्ष्णमधुरसम्भाषा ज्ञातिमध्ये प्रियंवदाः।
कुलीनाः सम्मताः प्राज्ञाः सुखं प्राप्स्यन्ति पाण्डवाः। धर्म्मापेक्षी नरो नित्यं सर्व्वत्र लभते सुखं।
प्रेत्यभावे च कल्याणं प्रसादं प्रतिपद्यते। अर्हन्त्यर्द्धं पृथिव्यास्ते भोक्तुं सामर्थ्यसाधनाः। २०४०
तेषामपि समुद्रान्ता पितृपैतामही मही। नियुज्यमानाः स्थास्यन्ति पाण्डवा धर्म्मवर्त्मनि।
सन्ति मे ज्ञातयस्तात येषां श्रोष्यन्ति पाण्डवाः। शल्यस्य सोमदत्तस्य भीष्मस्य च महात्मनः।
द्रोणस्याथ विकर्णस्य वाह्लीकस्य कृपस्य च। अन्येषाञ्चैव वृद्धानां भारतानां महात्मनां।
त्वदर्थं ब्रुवतां तात करिष्यन्ति वचोहितं। किंवा त्वं मन्यसे तेषां यस्त्वां ब्रूयादतोऽन्यथा।
कृष्णो धर्म्मं न सञ्जह्यात्सर्व्वे ते हि तदन्वयाः। मयापि चोक्तास्ते वीरा वचनं धर्म्मसंहितं। २०४५
नान्यथा प्रकरिष्यन्ति धर्म्मात्मानो हि पाण्डवाः। इत्यहं विलपन् सूत बहुशः पुत्त्रमुक्तवान्।
नच मे श्रुतवान्मूढो मन्ये कालस्य पर्य्ययं। वृकोदरार्ज्जुनौ यत्र वृष्णिवीरश्च सात्यकिः।
उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्ज्जयः। धृष्टद्युम्नश्च दुर्द्धर्षः शिखण्डी चापराजितः।
अश्मकाः कैकयाश्चैव क्षत्त्रधर्म्मा च सौमकिः। चैद्यश्च चेकितानश्च पुत्त्रः काश्यस्य वाभिभुः।
द्रौपदेया विराटश्च द्रुपदश्च महारथः। यमौ च पुरुषव्याघ्रौ मन्त्री च मधुसूदनः। २०५०
क एतान् जातु युध्येत लोकेऽस्मिन्वै जिजीविषुः। दिव्यमस्त्रं विकुर्व्वाणान् प्रसहेद्वा परान्मम।
अन्यो दुर्य्योधनात्कर्णात् शकुनेश्चापि सौवलात्। दुःशासनचतुर्थानां नान्यं पश्यामि पञ्चमं।

येषामभीषुहस्तः स्यादिन्द्रसेनो रथे स्थितः । सव्यसाची च योद्धा स्यात्तेषां नास्ति पराजयः ।
तेषामथ विलापानां नायं दुर्य्योधनः स्मरेत् । हतौ हि पुरुषव्याघ्रौ भीष्मद्रोणौ त्वमात्थ वै ।
तेषां विदुरवाक्यानामुक्तानां दीर्घदर्शिना । दृष्ट्वेमां फलनिर्वृत्तिं मन्ये शोचन्ति पुत्त्रकाः । ३००५
सेनां दृष्ट्वाऽभिभूतां मे शैनेयेनार्ज्जुनेन च । शून्यान् दृष्ट्वा रथोपस्थान् मन्ये शोचन्ति पुत्त्रकाः ।
हिमात्यये यथा कक्षं शुष्कं वातेरितो महान् । अग्निर्दहेत्तथा सेनां मामिकां स धनञ्जयः ।
आचक्ष्व मम तत्सर्व्वं कुशलो ह्यसि सञ्जय । यदुपायातसायाह्ने कृत्वा पार्थस्य किल्बिषं ।
अभिमन्यौ हते तात कथमासीन्मनो हि वः । न जातु तस्य कर्म्माणि युधि गाण्डीवधन्वनः ।
अपकृत्य महत्तात सोढुं शक्ष्यन्ति मामकाः । किन्नु दुर्य्योधनः कृत्यं कर्णः कृत्यं किमब्रवीत् । ३०१०
दुःशासनः सौबलश्च तेषामेवं गतेष्वपि । सर्व्वेषां समवेतानां पुत्त्राणां मम सञ्जय ।
यद्वृत्तं तात सङ्ग्रामे मन्दस्यापनयैर्भृशं । लोभानुमतस्य दुर्ब्बुद्धेः क्रोधेन विकृतात्मनः ।
राज्यकामस्य मूढस्य रागोपहतचेतसः । दुर्नीतं वा सुनीतं वः तन्ममाचक्ष्व सञ्जय ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि धृतराष्ट्रानुतापे पञ्चाशीतोऽध्यायः ॥ ८५ ॥
॥ सञ्जय उवाच ॥ हन्त ते सम्प्रवक्ष्यामि सर्व्वं प्रत्यक्षदर्शिवान् । शुश्रूषस्व स्थिरो भूत्वा तव ह्यपनयो महान् ।
गतोदके सेतुबन्धो यादृक् तादृगयन्तव । विलापो निष्फलो राजन् मा शुचो भरतर्षभ । ३०१५
अनतिक्रमणीयोऽयं कृतान्तस्याद्भुतो विधिः । मा शुचो भरतश्रेष्ठ दिष्टमेतत्पुरातनं ।
यदि त्वं हि पुरा द्यूतात् कुन्तीपुत्त्रं युधिष्ठिरं । निवर्त्तयेथाः पुत्त्रांश्च न त्वां व्यसनमाव्रजेत् ।
युद्धकाले पुनः प्राप्ते तदेव भवता यदि । निवर्त्तिताः स्युः संरब्धा न त्वां व्यसनमाव्रजेत् ।
दुर्य्योधनो चाविधेयं बध्नीतेति पुरा यदि । कुरूनवारयिष्यस्त्वं न त्वां व्यसनमाव्रजेत् ।
न ते बुद्धिव्यभीचारमुपालप्स्यन्ति पाण्डवाः । पाञ्चाला वृष्णयः सर्व्वे ये चान्येऽपि नराधिपाः । ३०२०
स कृत्वा पितृकर्म्म त्वं पुत्त्रं संस्थाप्य सत्पथे । वर्त्तेथा यदि धर्म्मेण न त्वां व्यसनमाव्रजेत् ।
त्वन्तु प्राज्ञतमो लोके हित्वा धर्म्मं सनातनं । दुर्य्योधनस्य कर्णस्य शकुनेश्चान्वगा मतं ।
तत्ते विलपितं सर्व्वं मया राजन्निशामितं । अर्थे निविशमानस्य विषमिश्रं यथा मधु ।
नामन्यत तदा कृष्णो राजानं पाण्डवं पुरा । न भीष्मं नैव च द्रोणं यथा त्वां मन्यते नृप ।
अजानन् स यदा तु त्वां राजधर्म्मादधश्च्युतं । तदाप्रभृति कृष्णस्त्वां न तथा बहु मन्यते । ३०२५
परुषाण्युच्यमानांश्च यदा पार्थानुपेक्षसे । तस्यानुबन्धः प्राप्तस्त्वां पुत्त्राणां राज्यकामुक ।
पितृपैतामहं राज्यमपवृत्तं तदाऽनघ । अथ पार्थैर्जितां कृत्स्नां पृथिवीं प्रत्यपद्यथाः ।
पाण्डुना निर्जितं राज्यं कौरवाणां यशस्तथा । ततश्चाप्यधिकं भूयः पाण्डवैर्धर्म्मचारिभिः ।
तेषां तत्तादृशं कर्म्म त्वामासाद्य सुनिष्फलं । यत्पित्र्याद्भ्रंशिता राज्यात्त्वयेहामिषगृद्धिना ।
यत्पुनर्युद्धकाले तु पुत्त्रान्गर्हयसे नृप । बहुधा व्याहरन्दोषान्न तदद्योपपद्यते । ३०३०
न हि रक्षन्ति राजानो युध्यन्तो जीवितं रणे । चमूं विगाह्य पार्थानां युध्यन्ते क्षत्त्रियर्षभाः ।

यान्तु कृष्णार्ज्जुनौ सेनां यां सात्यकिवृकोदरौ। रक्षेरन् को नु तां युध्येच्चमूमन्यत्र कौरवैः।
येषां योद्धा गुडाकेशो येषां मन्त्री जनार्द्दनः। येषां च सात्यकिर्गोप्ता येषां गोप्ता वृकोदरः।
को हि तान् विषहेद्योद्धुं मर्त्यधर्म्मा धनुर्द्धरः। अन्यत्र कौरवेयेभ्यो ये वा तेषां वशानुगाः।
यावत्तु शक्यते कर्त्तुमनुरक्तैर्जनाधिपैः। क्षत्रधर्म्मपरैः शूरैस्तावत्कुर्व्वन्ति कौरवाः। ३०८५
यथातु पुरुषव्याघ्रैर्युद्धं परमसङ्कटं। कुरूणां पाण्डवैः सार्द्धं तत्सर्व्वं शृणु तत्त्वतः।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथबधपर्व्वणि सञ्जयवाक्ये षडशीतोऽध्यायः ॥ ८६ ॥
॥ सञ्जय उवाच ॥ तस्यां निशायां व्युष्टायां द्रोणः शस्त्रभृतांवरः। स्वान्यनीकानि सर्व्वाणि प्राक्रामद्व्यूहितुं ततः।
शूराणां गर्जतां राजन् संक्रुद्धानाममर्षिणां। श्रूयन्ते स्म गिरश्चित्राः परस्परबधैषिणां।
विस्फार्य्य च धनूंष्यन्ये ज्याः परे परिमृज्य च। विनिःश्वसन्तः प्राक्रोशन् क्वेदानीं स धनञ्जयः।
विकोषान् सुत्सरूनन्ये कृतधारान् समाहितान्। पीतानाकाशसंकाशानसीन् केचिच्च चिक्षिपुः। ३०९०
चरन्तस्त्वसिमार्गांश्च धनुर्म्मार्गांश्च शिक्षया। सङ्ग्राममनसः शूरादृश्यन्तेस्म सहस्रशः।
सघण्टाश्चन्दनादिग्धाः स्वर्णवज्रविभूषिताः। समुत्क्षिप्य गदाश्चान्ये पर्य्यपृच्छन्त पाण्डवं।
अन्ये बलमदोन्मत्ताः परिघैर्ब्बाहुशालिनः। चक्रुः सम्बाधमाकाशमुच्छ्रितेन्द्रध्वजोपमैः।
नानाप्रहरणैश्चान्ये विचित्रस्रगलङ्कृताः। सङ्ग्राममनसः शूरास्तत्र तत्र व्यवस्थिताः।
क्वार्जुनः क्व स गोविन्दः क्वच मानी वृकोदरः। क्व च ते सुहृदस्तेषामाह्वयन्तो रणे तदा। ३०९५
ततः शङ्खमुपाध्माय त्वरयन्वाजिनः स्वयं। इतस्ततस्तान्रचयन् द्रोणश्चरति वेगितः।
तेष्वनीकेषु सर्व्वेषु स्थितेष्वाहवनन्दिषु। भारद्वाजो महाराज जयद्रथमथाब्रवीत्।
त्वं चैव सौमदत्तिश्च कर्णश्चैव महारथः। अश्वत्थामा च शल्यश्च वृषसेनः कृपस्तथा।
शतं चाश्वसहस्राणां रथानामयुतानि षट्। द्विरदानां प्रभिन्नानां सहस्राणि चतुर्द्दश।
पदातीनां सहस्राणि दंशितान्येकविंशतिः। गव्यूतिषु त्रिमात्रासु मामनासाद्य तिष्ठत। ३१००
तत्रस्थं त्वां न संसोढुं शक्ता देवाः सवासवाः। किं पुनः पाण्डवाः सर्व्वे समाश्वसिहि सैन्धव।
एवमुक्तः समाश्वस्तः सिन्धुराजो जयद्रथः। सम्प्रायात्सह गान्धारैर्वृतस्तैश्च महारथैः।
वर्म्मिभिः सादिभिर्यत्तैः प्राशपाणिभिरास्थितैः। चामरापीडिनः सर्व्वे जाम्बूनदविभूषिताः।
जयद्रथस्य राजेन्द्र हयाः साधुप्रवाहिनः। ते चैव सप्तसाहस्रास्त्रिसाहस्राश्च सैन्धवाः।
मत्तानां सुविरूढानां हस्त्यारोहैर्विशारदैः। नागानां भीमरूपाणां वर्म्मिणां रौद्रकर्म्मिणां। ३१०५
अध्यर्धेन सहस्रेण पुत्त्रो दुर्मर्षणस्तव। अग्रतः सर्व्वसैन्यानां युध्यमानो व्यवस्थितः।
ततो दुःशासनश्चैव विकर्णश्च तवात्मजौ। सिन्धुराजार्थसिद्ध्यर्थमग्रानीके व्यवस्थितौ।
दीर्घो द्वादशगव्यूतिः पश्चार्द्धे पञ्चविस्तृतः। व्यूहः सचक्रशकटो भारद्वाजेन निर्म्मितः।
नानानृपतिभिर्व्वीरैस्तत्र तत्र व्यवस्थितैः। रथाश्वगजपत्त्योघैर्द्रोणेन विहितः स्वयं।
पश्चार्द्धे तस्य पद्मस्य गर्भव्यूहः सुदुर्भिदः। सूचीपद्मस्य गर्भस्थो गूढो व्यूहः कृतः पुनः। ३११०

एवमेतं महाव्यूहं व्यूह्य द्रोणो व्यवस्थितः। सूचीमुखे महेष्वासः कृतवर्म्मा व्यवस्थितः॥

अनन्तरञ्च काम्बोजो जलसन्धश्च मारिष। दुर्य्योधनश्च कर्णश्च तदनन्तरमेव च॥

ततः शतसहस्राणि योधानामनिवर्त्तिनां। व्यवस्थितानि सर्व्वाणि शकटे मुखरक्षिणां॥

तेषाञ्च पृष्ठतो राजा बलेन महता वृतः। जयद्रथस्ततो राजन् सूचीपार्श्वे व्यवस्थितः॥

शकटस्य तु राजेन्द्र भारद्वाजो मुखे स्थितः। अनु तस्याभवद्भोजो जुगोपैनं ततः स्वयं॥ ३१५५

श्वेतवर्म्माम्बरोष्णीषो व्यूढोरस्को महाभुजः। धनुर्विस्फारयन् द्रोणस्तस्थौ क्रुद्ध इवान्तकः॥

पताकिनं शोणहयं वेद्यजिनध्वजं। द्रोणस्य रथमालोक्य प्रहृष्टाः कुरवोऽभवन्॥

सिद्धचारणसङ्घानां विस्मयः सुमहानभूत्। द्रोणेन विहितं दृष्ट्वा व्यूहं क्षुब्धार्णवोपमं॥

सशैलसागरवनां नानाजनपदाकुलां। ग्रसेद्व्यूहः क्षितिं सर्व्वामिति भूतानि मेनिरे॥

बहुरथमनुजाश्वपत्तिनागं प्रतिभयनिःस्वनमद्भुताकृतिरूपं। अहितहृदयभेदनं महद्वै शकटमवेक्ष्य कृतं ननन्द राजा॥ ३१६०

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि कौरवव्यूहनिर्म्माणे सप्ताशीतितमोऽध्यायः॥ ८७॥

॥ सञ्जय उवाच॥ ततो व्यूढेष्वनीकेषु समुत्क्रुष्टेषु मारिष। ताड्यमानासु भेरीषु मृदङ्गेषु नदत्सु च॥

अनीकानाञ्च संह्रादे वादित्राणां च निःस्वने। प्रध्मापितेषु शङ्खेषु सन्नादे लोमहर्षणे॥

अभिहारयत्सु शनकैर्भरतेषु युयुत्सुषु। रौद्रे मुहूर्त्ते संप्राप्ते सव्यसाची व्यदृश्यत॥

बलानां वायसानाञ्च पुरस्तात् सव्यसाचिनः। बहुलानि सहस्राणि प्राक्रीडंस्तत्र भारत॥

मृगाश्च घोरसन्नादाः शिवाश्चाशिवदर्शनाः। दक्षिणेन प्रयातानामस्माकं प्राणदंस्तदा॥ ३१६५

सनिर्घाता ज्वलन्त्यश्च पेतुरुल्काः सहस्रशः। चचाल च मही कृत्स्ना भये घोरे समुत्थिते॥

विष्वग्वाताः सनिर्घाता रूक्षाः शर्करकर्षिणः। ववुरायाति कौन्तेये सङ्ग्रामे समुपस्थिते॥

नाकुलिस्तु शतानीको धृष्टद्युम्नश्च पार्षतः। पाण्डवानामनीकानि प्राज्ञौ तौ व्यूहतुस्तदा॥

ततो रथसहस्रेण द्विरदानां शतेन च। त्रिभिरश्वसहस्रैश्च पदातीनां शतैः शतैः॥

अध्यर्द्धमात्रे धनुषां सहस्रे तनयस्तव। अग्रतः सर्व्वसैन्यानां स्थितो दुर्मर्षणोऽब्रवीत्॥ ३१७०

अद्य गाण्डीवधन्वानं तपन्तं युद्धदुर्म्मदं। अहमावारयिष्यामि वेलेव मकरालयं॥

अद्य पश्यन्तु सङ्ग्रामे धनञ्जयममर्षणं। विषक्तं मयि दुर्द्धर्षमश्मकूटमिवाश्मनि॥

तिष्ठध्वं रथिनो यूयं सङ्ग्राममभिकाङ्क्षिणः। युध्यामि संहतानेतान् यशो मानञ्च वर्द्धयन्॥

एवं ब्रुवन्महाराज महात्मा स महामतिः। महेष्वासैर्वृतो राजन्महेष्वासो व्यवस्थितः॥

ततोऽन्तक इव क्रुद्धः सवज्र इव वासवः। दण्डपाणिरिवासह्यो मृत्युः कालेन चोदितः॥ ३१७५

शूलपाणिरिवाक्षोभ्यो वरुणः पाशवानिव। युगान्ताग्निरिवार्च्चिष्मान् प्रधक्ष्यन् वै पुनः प्रजाः॥

क्रोधामर्षबलोद्धूतो निवातकवचान्तकः। जयो जेता स्थितः सत्ये पारयिष्यन्महाव्रतं॥

आमुक्तकवचः खड्गी जाम्बूनदकिरीटभृत्। शुक्लमाल्याम्बरधरः स्वङ्गदश्चारुकुण्डलः॥

रथप्रवरमास्थाय नरो नारायणानुगः। विधुन्वन् गाण्डिवं सङ्ख्ये बभौ सूर्य्य इवोदितः॥

सोऽग्रानीकस्य महत इषुपाते धनञ्जयः। व्यवस्थाप्य रथं राजन् शङ्खं दध्मौ प्रतापवान्। ३१३०
अथ कृष्णोऽप्यसंभ्रान्तः पार्थेन सह मारिष। प्राध्मापयत्पाञ्चजन्यं शङ्खप्रवरमोजसा।
तयोः शङ्खप्रणादेन तव सैन्ये विशाम्पते। आसन् संहृष्टरोमाणः कम्पिता गतचेतसः।
यथा त्रस्यन्ति भूतानि सर्व्वाण्यशनिनिःस्वनात्। तथा शङ्खप्रणादेन वित्रेसुस्तव सैनिकाः।
प्रसुस्रुवुः शकृन्मूत्रं वाहनानि च सर्व्वशः। एवं सवाहनं सर्व्वमाविग्नमभवद्बलं।
सीदन्ति स्म नरा राजन् शङ्खशब्देन मारिष। विसंज्ञाश्चाभवन् केचित् केचिद्राजन् वितत्रसुः। ३१३५
ततः कपिर्महानादं सह भूतैर्ध्वजालयैः। अकरोद्व्यादितास्यश्च भीषयंस्तव सैनिकाः।
ततः शङ्खाश्च भेर्य्यश्च मृदङ्गाश्चानकैः सह। पुनरेवाभ्यहन्यन्त तव सैन्यप्रहर्षणाः।
नानावादित्रसंह्रादैः क्ष्वेडितास्फोटिताकुलैः। सिंहनादैः समुत्क्रुष्टैः समाहूतैर्महारथैः।
तस्मिंस्तु तुमुले शब्दे भीरूणां भयवर्द्धने। अतीव हृष्टो दाशार्हमब्रवीत्पाकशासनिः।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि अर्ज्जुनरणप्रवेशेऽष्टाशीतोऽध्यायः॥ ८८॥

॥ अर्ज्जुन उवाच॥ चोदयाश्वान् हृषीकेश यत्र दुर्म्मर्षणः स्थितः। एतद्भित्त्वा गजानीकं प्रवेक्ष्याम्यरिवाहिनीं। ३१४०
॥ सञ्जय उवाच॥ एवमुक्तो महाबाहुः केशवः सव्यसाचिना। अचोदयद्धयान् तत्र यत्र दुर्म्मर्षणः स्थितः।
स सम्प्रहारस्तुमुलः सम्प्रवृत्तः सुदारुणः। एकस्य च बहूनाञ्च रथनागनरक्षयः।
ततः सायकवर्षेण पर्ज्जन्य इव वृष्टिमान्। परानवाकिरत्पार्थः पर्व्वतानिव नीरदः।
ते चापि रथिनः सर्व्वे त्वरिताः कृतहस्तवत्। अवाकिरन् बाणजालैस्ततः कृष्णधनञ्जयौ।
ततः क्रुद्धो महाबाहुर्व्वार्य्यमाणः परैर्युधि। शिरांसि रथिनां पार्थः कायेभ्योऽपाहरच्छरैः। ३१४५
उद्भ्रान्तनयनैर्वक्त्रैः सन्दष्टौष्ठपुटैः शुभैः। सकुण्डलशिरस्त्राणैर्वसुधा समकीर्य्यत।
पुण्डरीकवनानीव विध्वस्तानि समन्ततः। विनिकीर्णानि योधानां वदनानि चकाशिरे।
तपनीयतनुत्राणाः संसिक्ता रुधिरेण च। संसक्ता इव दृश्यन्ते मेघसङ्घाः सविद्युतः।
शिरसां पततां राजन् शब्दोऽभूद्वसुधातले। कालेन परिपक्वानां तालानां पततामिव।
ततः कबन्धं किञ्चित्तु धनुरालम्ब्य तिष्ठति। किञ्चित् खड्गं विनिष्कृष्य भुजेनोद्यम्य तिष्ठति। ३१५०
पतितानि न जानन्ति शिरांसि पुरुषर्षभाः। अमृष्यमाणाः सङ्ग्रामे कौन्तेयं जयगृद्धिनः।
हयानामुत्तमाङ्गैश्च हस्तिहस्तैश्च मेदिनी। बाहुभिश्च शिरोभिश्च वीराणां समकीर्य्यत।
अयं पार्थः कुतः पार्थ एष पार्थ इति प्रभो। तव सैन्येषु योधानां पार्थभूतमिवाभवत्।
अन्योऽन्यमपि चाजघ्नुरात्मानमपि चापरे। पार्थभूतममन्यन्त जगत्कालेन मोहिताः।
निष्टनन्तः सरुधिरा विसंज्ञा गाढवेदनाः। शयाना बहवो वीराः कीर्त्तयन्तः स्वबान्धवान्। ३१५५
सभिन्दिपालाः सप्रासाः सशक्त्यृष्टिपरश्वधाः। सनिर्व्यूहाः सनिस्त्रिंशाः सशरासनतोमराः।
सबाणवर्म्माभरणाः सगदाः साङ्गदा रणे। महाभुजगसङ्काशा बाहवः परिघोपमाः।
उद्वेष्टन्ति विचेष्टन्ति संवेष्टन्ति च सर्व्वशः। वेगं कुर्व्वन्ति संरब्धा निकृत्ताः परमेषुभिः।

यो यः स्म समरे पार्थं प्रतिसंरभते नरः । तस्य तस्यान्तको बाणः शरीरमुपसर्पति ।
नृत्यतो रथमार्गेषु धनुर्व्यायच्छतस्तथा । न कश्चित्तत्र पार्थस्य ददृशेऽन्तरमण्वपि । ३१७०
यत्तस्य घटमानस्य क्षिप्रं विसृजतः शरान् । लाघवात्पाण्डुपुत्रस्य व्यस्मयन्त परे जनाः ।
हस्तिनं हस्तियन्तारमश्वमाश्विकमेव च । अभिनत् फाल्गुनो बाणै रथिनञ्च ससारथिं ।
आवर्त्तमानमावृत्तं युध्यमानञ्च पाण्डवः । प्रमुखे तिष्ठमानञ्च न कञ्चिन्न निहन्ति सः ।
यथोदयन्वै गगने सूर्य्यो हन्ति महत्तमः । तथाऽर्जुनो गजानीकमवधीत्कङ्कपत्रिभिः ।
हस्तिभिः पतितैर्भिन्नैस्तव सैन्यमदृश्यत । अन्तकाले यथाभूमिर्व्यवकीर्णा महीधरैः । ३१७५
यथा मध्यन्दिने सूर्य्यो दुःप्रेक्ष्यः प्राणिभिः सदा । तथा धनञ्जयः क्रुद्धो दुष्प्रेक्ष्यो युधि शत्रुभिः ।
तत्तथा तव पुत्रस्य सैन्यं युधि परन्तप । प्रभग्नन्द्रुतमाविग्नमतीव शरपीडितं ।
मारुतेनेव महता मेघानीकं व्यदीर्य्यत । प्रकाल्यमानं तत्सैन्यं नाशकत्प्रतिवीक्षितुं ।
प्रतोदैश्चापि कोटीभिर्हुङ्कारैः साधुवाहितः । कशापार्ष्ण्यभिघातैश्च वाग्भिरुग्राभिरेव च ।
चोदयन्तो हयांस्तूर्णं पलायन्ते स्म तावकाः । सादिनो रथिनश्चैव पत्तयश्चार्ज्जुनार्द्दिताः । ३१८०
पार्ष्ण्यङ्गुष्ठाङ्कुशैर्नागं चोदयन्तस्तथा परे । संमोहिताः शरैश्चान्ये तमेवाभिमुखा ययुः ।
तव योधा हतोत्साहा विभ्रान्तमनसस्तदा ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि अर्जुनयुद्धे एकोननवतोऽध्यायः ॥ ८९ ॥

॥ धृतराष्ट्र उवाच ॥ तस्मिन्प्रभग्ने सैन्याग्रे वध्यमाने किरीटिना । के तु तत्र रणे वीराः प्रत्युदीयुर्धनञ्जयं ।
आहोस्विच्छकटव्यूहं प्रविष्टा मोघनिश्चयाः । द्रोणमाश्रित्य तिष्ठन्तः प्राकारमकुतोभयं ।
॥ सञ्जय उवाच ॥ तथार्जुनेन सम्भग्ने तस्मिंस्तव बलेऽनघ । हतवीरे हतोत्साहे पलायनकृतक्षणे । ३१८५
पाकशासनिनाऽभीक्ष्णं वध्यमाने शरोत्तमैः । न तत्र कश्चित्संग्रामे शशाकार्जुनमीक्षितुं ।
ततस्तव सुतो राजन् दृष्ट्वा सैन्यन्तथागतं । दुःशासनो भृशं क्रुद्धो युद्धायार्जुनमभ्यगात् ।
स काञ्चनविचित्रेण कवचेन समावृतः । जाम्बूनदशिरस्त्राणः शूरस्तीव्रपराक्रमः ।
नागानीकेन महता ग्रसन्निव महीमिमां । दुःशासनो महाराज सव्यसाचिनमावृणोत् ।
ह्रादेन गजघण्टानां शङ्खानां निनदेन च । ज्याक्षेपनिनदैश्चैव विरावेण च दन्तिनां । ३१९०
भूर्दिशश्चान्तरिक्षञ्च शब्देनासीत्समावृतं । स मुहूर्त्तः प्रतिभयो दारुणः समपद्यत ।
तान्दृष्ट्वापततस्तूर्णमङ्कुशैरभिचोदितान् । व्यालम्बहस्तान्संरब्धान्सपक्षानिव पर्व्वतान् ।
सिंहनादेन महता नरसिंहो धनञ्जयः । गजानीकममित्राणामभितो व्यधमच्छरैः ।
महोर्म्मिणमिवोद्धूतं श्वसनेन महार्णवं । किरीटी तद्गजानीकं प्राविशन्मकरो यथा ।
काष्ठातीत इवादित्यः प्रतपन् स युगक्षये । ददृशे दिक्षु सर्व्वासु पार्थः परपुरञ्जयः । ३१९५
खुरशब्देन चाश्वानां नेमिघोषेण तेन च । तेन चोत्क्रुष्टशब्देन ज्यानिनादेन तेन च ।
नानावादित्रशब्देन पाञ्चजन्यस्वनेन च । देवदत्तस्य घोषेण गाण्डीवनिनदेन च ।

मन्दवेगा नरा नागा बभूवुस्ते विचेतसः । शरैराशीविषस्पर्शैर्निर्भिन्नाः सव्यसाचिना ।
ते गजा विशिखैस्तीक्ष्णैर्युधि गाण्डीवचोदितैः । अनेकशतसाहस्रैः सर्व्वाङ्गेषु समर्पिताः ।
आरावं परमं कृत्वा बध्यमानाः किरीटिना । निपेतुरनिशं भूमौ च्छिन्नपक्षा इवाद्रयः । ३२००
अपरे दन्तवेष्टेषु कुम्भेषु च कटेषु च । शरैः समर्पिता नागाः क्रौञ्चवद्व्यनदन्मुहुः ।
गजस्कन्धगतानाञ्च पुरुषाणां किरीटिना । छिद्यन्ते चोत्तमाङ्गानि भल्लैः सन्नतपर्व्वभिः ।
सकुण्डलानां पततां शिरसां धरणीतले । पद्मानामिव सङ्घातैः पार्थश्चक्रे निवेदनं ।
यन्त्रबद्धा विकवचा व्रणार्त्ता रुधिरोक्षिताः । भ्रमत्सु युधि नागेषु मनुष्या विललम्बिरे ।
केचिदेकेन वाणेन सुमुक्तेन सुपत्रिणा । द्वौ त्रयश्च विनिर्भिन्ना निपेतुर्धरणीतले । ३२०५
अतिविद्धाश्च नाराचैर्व्वमन्तो रुधिरं मुखैः । सारोहा न्यपतन्भूमौ द्रुमवन्त इवाचलाः ।
मौर्व्वीं ध्वजन्धनुश्चैव युगमीषां तथैव च । रथिनां कुट्टयामास भल्लैः सन्नतपर्व्वभिः ।
न सन्दधन्नचाकर्षन् न विमुञ्चन् न चोद्वहन् । मण्डलेनैव धनुषा नृत्यन्पार्थः स्म दृश्यते ।
अतिविद्धाश्च नाराचैर्व्वमन्तो रुधिरं मुखैः । मुहूर्त्तान्न्यपतन्नन्ये वारणा वसुधातले ।
उत्थितान्यगणेयानि कवन्धानि समन्ततः । अदृश्यन्त महाराज तस्मिन्परमसङ्कुले । ३२१०
सचापाः साङ्गुलित्राणाः सखड्गाः साङ्गदा रणे । अदृश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः ।
सूपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः । चक्रैर्विमथितैरक्षैर्भग्नैश्च बहुधा युगैः ।
चर्म्मचापधरैश्चैव व्यवकीर्णैस्ततस्ततः । स्रग्भिराभरणैर्व्वस्त्रैः पतितैश्च महाध्वजैः ।
निहतैर्वारणैरश्वैः क्षत्त्रियैश्च निपातितैः । अदृश्यत मही तत्र दारुणप्रतिदर्शना ।
एवं दुःशासनबलं बध्यमानं किरीटिना । संप्राद्रवन्महाराज व्यथितं सहनायकं । ३२१५
ततो दुःशासनस्त्रस्तः सहानीकः शरार्द्दितः । द्रोणं त्रातारमाकाङ्क्षन्शकटव्यूहमभ्यगात् ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथबधपर्व्वणि दुःशासनसैन्यपराभवे नवतितमोऽध्यायः ॥ ९० ॥
॥ सञ्जय उवाच ॥ दुःशासनबलं हत्वा सव्यसाची महारथः । सिन्धुराजं परीप्सन् वै द्रोणानीकमुपाद्रवत् ।
स तु द्रोणं समासाद्य व्यूहस्य प्रमुखे स्थितं । कृताञ्जलिरिदं वाक्यं कृष्णस्यानुमतेऽब्रवीत् ।
शिवेन ध्याहि मां ब्रह्मन् स्वस्ति चैव वदस्व मे । भवत्प्रसादादिच्छामि प्रवेष्टुं दुर्भिदां चमूं ।
भवान् पितृसमो मह्यं धर्म्मराजसमोऽपि च । तथा कृष्णसमश्चैव सत्यमेतद्ब्रवीमि ते । ३२२०
अश्वत्थामा यथा तात रक्षणीयस्त्वयाऽनघ । तथाऽहमपि ते रक्ष्यः सदैव द्विजसत्तम ।
तव प्रसादादिच्छेयं सिन्धुराजानमाहवे । निहन्तुं द्विपदां श्रेष्ठ प्रतिज्ञां रक्ष मे विभो ।
॥ सञ्जय उवाच ॥ एवमुक्तस्तदाचार्य्यः प्रत्युवाच स्मयन्निव । मामजित्वा न बीभत्सो शक्यो जेतुं जयद्रथः ।
एतावदुक्त्वा तं द्रोणः शरव्रातैरवाकिरत् । सरथाश्वध्वजं तीक्ष्णैः प्रहसन्वै ससारथिं ।
ततोऽर्जुनः शरव्रातान् द्रोणस्याचार्य्यसायकैः । द्रोणमभ्यद्रवद्वाणैर्घोररूपैर्महत्तरैः । ३२२५
विव्याध च रणे द्रोणमनुमान्य विशाम्पते । क्षत्त्रधर्म्मं समास्थाय नवभिः सायकैः पुनः

तस्येषुमिषुभिश्छित्वा द्रोणो विव्याध तावुभौ। विषाग्निज्वलितप्रख्यैरिषुभिः कृष्णपाण्डवौ।
इयेष पाण्डवस्तस्य बाणैश्छेत्तुं शरासनं। तस्य चिन्तयतस्त्वेवं फाल्गुनस्य महात्मनः।
द्रोणः शरैरसंभ्रान्तो ज्यां चिच्छेदाशु वीर्य्यवान्। विव्याध च हयानस्य ध्वजं सारथिमेव च।
अर्ज्जुनञ्च शरैर्वीरः स्मयमानोऽभ्यवाकिरत्। एतस्मिन्नन्तरे पार्थः सज्यं कृत्वा महद्धनुः। १२१०
विशेषयिष्यन्नाचार्य्यं सर्व्वास्त्रविदुषां वरः। मुमोच षट्शतान् बाणान् गृहीत्वैकमिव द्रुतं।
पुनः सप्तशतानन्यान् सहस्रञ्चानिवर्त्तिनां। चिक्षेपायुतशश्चान्यांस्तेऽघ्नन् द्रोणस्य तां चमूं।
तैः सम्यगस्तैर्बलिना कृतिना चित्रयोधिना। मनुष्यवाजिमातङ्गा विद्धाः पेतुर्गतासवः।
विसूताश्वध्वजाः पेतुः संछिन्नायुधजीविताः। रथिनो रथमुख्येभ्यः सहसा शरपीडिताः।
चूर्णिताक्षिप्तदग्धानां वज्रानिलहुताशनैः। तुल्यरूपा गजाः पेतुर्गिर्य्यग्राम्बुदवेश्मनां। १२१५
पेतुरश्वसहस्राणि प्रहतान्यर्ज्जुनेषुभिः। हंसा हिमवतः पृष्ठे वारिविप्रहता इव।
रथाश्वद्विपपत्त्योघाः सलिलौघा इवाद्भुताः। युगान्तादित्यरश्म्याभैः पाण्डवास्त्रशरैर्हताः।

तं पाण्डवादित्यशरांशुजालं कुरुप्रवीरान् युधि निष्टपन्तं। स द्रोणमेघः शरवृष्टिवेगैः प्राच्छादयन्मेघ इवार्करश्मीन्।

अथात्यर्थं विसृष्टेन द्विषतामसुभोजिना। आजघ्ने वक्षसि द्रोणो नाराचेन धनञ्जयं।
स विह्वलितसर्व्वाङ्गः क्षितिकम्पे यथाचलः। धैर्य्यमालम्ब्य बीभत्सुर्द्रोणं विव्याध पत्रिभिः। १२२०
द्रोणस्तु पञ्चभिर्व्वाणैर्वासुदेवमताडयत्। अर्ज्जुनञ्च त्रिसप्तत्या ध्वजञ्चास्य त्रिभिः शरैः।
विशेषयिष्यन् शिष्यञ्च द्रोणो राजन् पराक्रमी। अदृश्यमर्ज्जुनं चक्रे निमेषाच्छरवृष्टिभिः।
प्रसक्तान् पततोऽद्राक्ष्म भारद्वाजस्य सायकान्। मण्डलीकृतमेवास्य धनुश्चादृश्यताद्भुतं।
तेऽभ्ययुः समरे राजन् वासुदेवधनञ्जयौ। द्रोणसृष्टाः सुबहवः कङ्कपत्रपरिच्छदाः।
तं दृष्ट्वा तादृशं युद्धं द्रोणपाण्डवयोस्तदा। वासुदेवो महाबुद्धिः कार्य्यवत्तामचिन्तयत्। १२२५
ततोऽब्रवीद्वासुदेवो धनञ्जयमिदं वचः। पार्थ पार्थ महाबाहो न नः कालात्ययो भवेत्।
द्रोणमुत्सृज्य गच्छामः कृत्यमेतन्महत्तरं। पार्थश्चाप्यब्रवीत् कृष्णं यथेष्टमिति केशव।
ततः प्रदक्षिणं कृत्वा द्रोणं प्रायान्महाभुजं। परिवृत्तश्च बीभत्सुरगच्छद्विसृजन् शरान्।
ततोऽब्रवीत् स्वयं द्रोणः क्वेदं पाण्डव गम्यते। ननु नाम रणे शत्रुमजित्वा न निवर्त्तसे।

॥ अर्ज्जुन उवाच ॥ गुरुर्भवान् न मे शत्रुः शिष्यः पुत्रसमोऽस्मि ते। न चास्ति स पुमाँल्लोके यस्त्वां युधि पराजयेत्। १२३०

॥ सञ्जय उवाच ॥ एवं ब्रुवाणो बीभत्सुर्जयद्रथवधोत्सुकः। त्वरायुक्तो महाबाहुस्त्वत्सैन्यं समुपाद्रवत्।
तं चक्ररक्षौ पाञ्चाल्यौ युधामन्यूत्तमौजसौ। अन्वयातां महात्मानौ विशन्तं तावकं बलं।
ततो जयो महाराज कृतवर्म्मा च सात्वतः। काम्बोजश्च श्रुतायुश्च धनञ्जयमवारयन्।
तेषां दशसहस्राणि रथानामनुयायिनां। अभीषाहाः शूरसेनाः शिवयोऽथ वसातयः।
मावेल्लका ललित्थाश्च केकया मद्रकास्तथा। नारायणाश्च गोपालाः काम्बोजानाञ्च ये गणाः। १२३५
कर्णेन विजिताः पूर्व्वं सङ्ग्रामे शूरसम्मताः। भारद्वाजं पुरस्कृत्य हृष्टात्मानोऽर्ज्जुनं प्रति।

पुत्त्रशोकाभिसन्तप्तं क्रुद्धं मृत्युमिवान्तकं । त्यजन्तं तुमुले प्राणान् सन्नद्धं चित्रयोधिनं ।
गाहमानमनीकानि मातङ्गमिव यूथपं । महेष्वासं पराक्रान्तं नरव्याघ्रमवारयन् ।
ततः प्रववृते युद्धं तुमुलं लोमहर्षणं । अन्योऽन्यं वै प्रार्थयतां योधानामर्ज्जुनस्य च ।
जयद्रथबधं प्रेप्सुमायान्तं पुरुषर्षभं । न्यवारयन्त सहिताः क्रिया व्याधिमिवोत्थितं । ३२६०

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथबधपर्व्वणि द्रोणातिक्रमे एकनवतोऽध्यायः ॥ ९१ ॥

॥ सञ्जय उवाच ॥ संनिरुद्धस्तु तैः पार्थो महाबलपराक्रमः । द्रुतं समनुयातश्च द्रोणेन रथिनां वरः ।
किरन्निषुगणान् तीक्ष्णान् स रश्मीनिव भास्करः । तापयामास तत् सैन्यं देहं व्याधिगणो यथा ।
अश्वो विद्धो रथश्छिन्नः सारोहः पातितो गजः । छत्राणि चापविद्धानि रथाश्चक्रैर्व्विनाकृताः ।
विद्रुतानि च सैन्यानि शरार्त्तानि समन्ततः । इत्यासीत्तुमुलं युद्धं न प्राज्ञायत किञ्चन ।
तेषां संयच्छतां सङ्ख्ये परस्परमजिह्मगैः । अर्ज्जुनो ध्वजिनीं राजन् अभीक्ष्णं समकम्पयत् । ३२६५
सत्यां चिकीर्षमाणस्तु प्रतिज्ञां सत्यसङ्गरः । अभ्यद्रवद्रथश्रेष्ठं शोणाश्वं श्वेतवाहनः ।
तं द्रोणः पञ्चविंशत्या मर्म्मभिद्भिरजिह्मगैः । अन्तेवासिनमाचार्य्यो महेष्वासं समार्पयत् ।
तं तूर्णमिव बीभत्सुः सर्व्वशस्त्रभृतां वरः । अभ्यधावदिषूनस्यन्निषुवेगविघातकान् ।
तस्याशु चिप्तान् भल्लान् हि भल्लैः सन्नतपर्व्वभिः । प्रत्यविध्यदमेयात्मा ब्रह्मास्त्रं समुदीरयन् ।
तदद्भुतमपश्याम द्रोणस्याचार्य्यकं युधि । यतमानो युवा नैनं प्रत्यविध्यद्यदर्ज्जुनः । ३२७०
चरन्निव महामेघो वारिधाराः सहस्रशः । द्रोणमेघः पार्थशैलं ववर्ष शरवृष्टिभिः ।
अर्ज्जुनः शरवर्षन्तं ब्रह्मास्त्रेणैव मारिष । प्रतिजग्राह तेजस्वी वाणान् वाणैर्व्विशातयन् ।
द्रोणस्तु पञ्चविंशत्या श्वेतवाहनमार्दयत् । वासुदेवञ्च सप्तत्या बाह्वोरुरसि चाशुगैः ।
पार्थस्तु प्रहसन् धीमानाचार्य्यं सशरौघिणं । विसृजन्तं शितान् वाणानवारयत तं युधि ।
अथ तौ बध्यमानौ तु द्रोणेन रथसत्तमौ । अवर्ज्जयेतां दुर्द्धर्षं युगान्ताग्निमिवोत्थितं । ३२७५
वर्ज्जयन्निशितान् वाणान्द्रोणचापविनिःसृतान् । किरीटमाली कौन्तेयो भोजानीकं व्यशातयत् ।
सोऽन्तरा कृतवर्म्माणं काम्बोजञ्च सुदक्षिणं । अभ्ययाद्वर्ज्जयं द्रोणं मैनाकमिव पर्व्वतं ।
ततो भोजो नरव्याघ्रो दुर्द्धर्षं कुरुसत्तमं । अविध्यत्तूर्णमव्यग्रो दशभिः कङ्कपत्त्रिभिः ।
तमर्ज्जुनः शतेनाजौ राजन् विव्याध पत्त्रिणा । पुनश्चान्यैस्त्रिभिर्व्वाणैर्म्मोहयन्निव सात्वतं ।
भोजस्तु प्रहसन् पार्थं वासुदेवञ्च माधवं । एकैकं पञ्चविंशत्या सायकानां समार्पयत् । ३२८०
तस्यार्ज्जुनो धनुश्छित्त्वा विव्याधैनं त्रिसप्तभिः । शरैरग्निशिखाकारैः क्रुद्धाशीविषसन्निभैः ।
अथान्यद्धनुरादाय कृतवर्म्मा महारथः । पञ्चभिः सायकैस्तूर्णं विव्याधोरसि भारत ।
पुनश्च निशितैर्व्वाणैः पार्थं विव्याध पञ्चभिः । तं पार्थो नवभिर्व्वाणैराजघान स्तनान्तरे ।
दृष्ट्वा विषक्तं कौन्तेयं कृतवर्म्मरथं प्रति । चिन्तयामास वार्ष्णेयो न नः कालात्ययो भवेत् ।
ततः कृष्णोऽब्रवीत्पार्थं कृतवर्म्मणि मा दयां । कुरु सम्बन्धकं हित्वा प्रमथ्यैनं विशातय । ३२८५

ततः स कृतवर्म्माणं मोहयित्वाऽर्ज्जुनः शरैः। अभ्ययाज्जवनैरश्वैः काम्बोजानामनीकिनीं।
अमर्षितस्तु हार्द्दिक्यः प्रविष्टे श्वेतवाहने। विधुन्वन् सशरं चापं पाञ्चाल्याभ्यां समागतः।
चक्ररक्षौ तु पाञ्चाल्यावर्ज्जुनस्य पदानुगौ। पर्य्यवारयदायान्तौ कृतवर्म्मा रथेषुभिः।
तावविध्यत् ततो भोजः कृतवर्म्मा शितैः शरैः। त्रिभिरेव युधामन्युं चतुर्भिश्चोत्तमौजसं।
तावप्येनं विविधतुर्द्दशभिर्द्दशभिः शरैः। त्रिभिरेव युधामन्युरुत्तमौजास्त्रिभिस्तथा। ३२९०
संचिच्छिदतुरप्यस्य ध्वजं कार्म्मुकमेव च। अथान्यद्धनुरादाय हार्द्दिक्यः क्रोधमूर्च्छितः।
कृत्वा विधनुषौ वीरौ शरवर्षैरवाकिरत्। तावन्ये धनुषी सज्ये कृत्वा भोजं विजघ्नतुः।
तेनान्तरेण बीभत्सुर्व्विवेशामित्रवाहिनीं। न लेभाते तु तौ द्वारं वारितौ कृतवर्म्मणा।
धार्त्तराष्ट्रेष्वनीकेषु यतमानौ नरर्षभौ। अनीकान्यर्द्दयत् युद्धे त्वरितः श्वेतवाहनः।
नावधीत् कृतवर्म्माणं प्राप्तमप्यरिसूदनः। तं दृष्ट्वा तु तथा यान्तं शूरो राजा श्रुतायुधः। ३२९५
अभ्यद्रवत् सुसंक्रुद्धो विधुन्वानो महद्धनुः। स पार्थं त्रिभिरानर्च्छत् सप्तत्या च जनार्द्दनं।
क्षुरप्रेण सुतीक्ष्णेण पार्थकेतुमताडयत्। ततोऽर्ज्जुनो नवत्या तु शराणां नतपर्व्वणां।
आजघान भृशं क्रुद्धस्तोत्त्रैरिव महाद्विपं। स तं न ममृषे राजन् पाण्डवेयस्य विक्रमं।
अथैनं सप्तसप्तत्या नाराचानां समार्पयत्। तस्यार्ज्जुनो धनुश्छित्त्वा शरावापं निकृत्य च।
आजघानोरसि क्रुद्धः सप्तभिर्नतपर्व्वभिः। अथान्यद्धनुरादाय स राजा क्रोधमूर्च्छितः। ३३००
वासविं नवभिर्व्वाणैर्व्वाह्वोरुरसि चार्पयत्। ततोऽर्ज्जुनः स्मयन्नेव श्रुतायुधमरिन्दमः।
शरैरनेकसाहस्रैः पीडयामास भारत। अश्वांश्चास्यावधीत्तूर्णं सारथिञ्च महारथः।
विव्याध चैनं सप्तत्या नाराचानां महाबलः। हताश्वं रथमुत्सृज्य स तु राजा श्रुतायुधः।
अभ्यद्रवद्रणे पार्थं गदामुद्यम्य वीर्य्यवान्। वरुणस्यात्मजो वीरः स तु राजा श्रुतायुधः।
पर्णाशा जननी यस्य शीततोया महानदी। तस्य माताऽब्रवीद्राजन् वरुणं पुत्रकारणात्। ३३०५
अवध्योऽयं भवेल्लोके शत्रूणां तनयो मम। वरुणस्त्वब्रवीत् प्रीतो ददाम्यस्मै वरं हितं।
दिव्यमस्त्रं सुतस्तेऽयं येनावध्यो भविष्यति। नास्ति चाप्यमरत्वं वै मनुष्यस्य कथञ्चन।
सर्व्वेणावश्यमर्त्तव्यं जातेन सरितांवरे। दुर्द्धर्षस्त्वेष शत्रूणां रणेषु भविता सदा।
अस्त्रस्यास्य प्रभावाद्वै व्येतु ते मानसो ज्वरः। इत्युक्त्वा वरुणः प्रादात् गदां मन्त्रपुरस्कृतां।
यामासाद्य दुराधर्षः सर्व्वलोके श्रुतायुधः। उवाच चैनं भगवान् पुनरेव जलेश्वरः। ३३१०
अयुध्यति न मोक्तव्या सा त्वय्येव पतेदिति। हन्यादेषा प्रतीपं हि प्रयोक्तारमपि प्रभो।
न चाकरोत् स तद्वाक्यं प्राप्ते काले श्रुतायुधः। स तया वीरघातिन्या जनार्द्दनमताडयत्।
प्रतिजग्राह तां कृष्णः पीनेनांसेन वीर्य्यवान्। नाकम्पयत शौरिं सा विन्ध्यं गिरिमिवानिलः।
प्रत्युद्यान्ती तमेवैषा कृत्येव दुरधिष्ठिता। जघान चास्थितं वीरं श्रुतायुधममर्षणं।
हत्वा श्रुतायुधं वीरं धरणीमन्वपद्यत। गदां निवर्त्तितां दृष्ट्वा निहतञ्च श्रुतायुधं। ३३१५

हाहाकारो महांस्तत्र सैन्यानां समजायत । स्वेनास्त्रेण हतं दृष्ट्वा श्रुतायुधमरिन्दमं ।
अयुध्यमानाय ततः केशवाय नराधिप । चिक्षेप श्रुतायुधेनाथ तस्मात्तमवधीद्गदा ।
यथोक्तं वरुणेनाजौ तथा स निधनं गतः । व्यसुश्चाप्यपतद्भूमौ प्रेक्षतां सर्व्वधन्विनां ।
पतमानस्तु स बभौ पर्णाशायाः प्रियः सुतः । स भग्न इव वातेन बहुशाखो वनस्पतिः ।
ततः सर्व्वाणि सैन्यानि सेनामुख्याश्च सर्व्वशः । प्राद्रवन्त हतं दृष्ट्वा श्रुतायुधमरिन्दमं । ३३१०
ततः काम्बोजराजस्य पुत्त्रः शूरः सुदक्षिणः । अभ्ययाज्जवनैरश्वैः फाल्गुनं शत्रुसूदनं ।
तस्य पार्थः शरान् सप्त प्रेषयामास भारत । ते तं शूरं विनिर्भिद्य प्राविशन् धरणीतलं ।
सोऽतिविद्धः शरैस्तीक्ष्णैर्गाण्डीवप्रेषितैर्मृधे । अर्ज्जुनं प्रतिविव्याध दशभिः कङ्कपत्त्रिभिः ।
वासुदेवं त्रिभिर्व्विद्ध्वा पुनः पार्थञ्च पञ्चभिः । तस्य पार्थो धनुश्छित्त्वा केतुं चिच्छेद मारिष ।
भल्लाभ्यां भृशतीक्ष्णाभ्यां तञ्च विव्याध पाण्डवः । सतु पार्थं त्रिभिर्विद्ध्वा सिंहनादमथानदत् । ३३१५
सर्व्वपारशवीञ्चैव शक्तिं शूरः सुदक्षिणः । सघण्टां प्राहिणोद्घोरां क्रुद्धो गाण्डीवधन्वने ।
सा ज्वलन्ती महोल्केव तमासाद्य महारथं । सविस्फुलिङ्गा निर्भिद्य निपपात महीतले ।
शक्त्या त्वभिहतो गाढं मूर्च्छयाति परिप्लुतः । समाश्वस्य महातेजाः सृक्कणी परिलेलिहन् ।
तं चतुर्द्दशभिः पार्थो नाराचैः कङ्कपत्त्रिभिः । साश्वध्वजधनुःसूतं विव्याधाचिन्त्यविक्रमः ।
रथञ्चान्यैः सुबहुभिश्चक्रे विशकलं शरैः । सुदक्षिणन्तु काम्बोजं मोघसङ्कल्पविक्रमं । ३३२०
बिभेद हृदि वाणेन पृथुधारेण पाण्डवः । स भिन्नवर्म्मा स्रस्ताङ्गः प्रभ्रष्टमुकुटाङ्गदः ।
पपाताभिमुखः शूरो यन्त्रमुक्त इव ध्वजः । गिरेः शिखरजः श्रीमान् सुशाखः सुप्रतिष्ठितः ।
निर्भग्न इव वातेन कर्णिकारो हिमात्यये । शेते स्म निहतो भूमौ काम्बोजास्तरणोचितः ।
महार्हाभरणोपेतः सानुमानिव पर्व्वतः । सुदर्शनीयस्ताम्राक्षः कर्णिना स सुदक्षिणः ।
पुत्त्रः काम्बोजराजस्य पार्थेन विनिपातितः । धारयन्नग्निसङ्काशां शिरसा काञ्चनीं स्रजं । ३३२५
अशोभत महाबाहुर्व्यसुर्भूमौ निपातितः । ततः सर्व्वाणि सैन्यानि व्यद्रवन्त सुतस्य ते ।
हतं श्रुतायुधं दृष्ट्वा काम्बोजञ्च सुदक्षिणं ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि श्रुतायुधसुदक्षिणबधे द्विनवतोऽध्यायः ॥ ९२ ॥

॥ सञ्जय उवाच ॥ हते सुदक्षिणे राजन् वीरे चैव श्रुतायुधे । जवेनाभ्यद्रवन् पार्थं कुपिताः सैनिकास्तव ।
अभीषाहाः शूरसेनाः शिवयोऽथ वशातयः । अभ्यवर्षंस्ततो राजन् शरवर्षैर्द्धनञ्जयं ।
तेषां षष्टिशतानन्यान् प्राधमत् पाण्डवः शरैः । ते स्म भीताः पलायन्ते व्याघ्रात् क्षुद्रमृगा इव । ३३३०
ते निवृत्ताः पुनः पार्थं सर्व्वतः पर्य्यवारयन् । रणे सपत्नान्निघ्नन्तं जिगीषन्तं परान् युधि ।
तेषामापततां तूर्णं गाण्डीवप्रेषितैः शरैः । शिरांसि पातयामास बाहूंश्चापि धनञ्जयः ।
शिरोभिः पतितैस्तत्र भूमिरासीन्निरन्तरा । अभ्रच्छायेव चैवासीद्ध्वाङ्क्षगृध्रबलैर्युधि ।
तेषु त्वेवं बाध्यमानेषु क्रोधामर्षसमन्वितौ । श्रुतायुश्चाच्युतायुश्च धनञ्जयमयुध्यतां ।

बलिनौ स्पर्द्धिनौ वीरौ कुलजौ बाहुशालिनौ। तावेनं शरवर्षाणि सव्यदक्षिणमस्यतां। ३३४५
त्वरायुक्तौ महाराज प्रार्थयानौ महद्यशः। अर्ज्जुनस्य वधप्रेप्सू पुत्रार्थे तव धन्विनौ।
तावर्ज्जुनं सहस्रेण पत्रिणां नतपर्व्वणां। पूरयामासतुः क्रुद्धौ तडागं जलदौ यथा।
श्रुतायुश्च ततः क्रुद्धस्तोमरेण धनञ्जयं। आजघान रथश्रेष्ठः पीतेन निशितेन च।
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्षणः। जगाम परमं मोहं मोहयन् केशवं रणे।
एतस्मिन्नेव काले तु सोऽच्युतायुर्महारथः। शूलेन भृशतीक्ष्णेन ताडयामास पाण्डवं। ३३५०
क्षते क्षारं हि स ददौ पाण्डवस्य महात्मनः। पार्थोऽपि भृशसंविद्धो ध्वजयष्टिं समाश्रितः।
ततः सर्व्वस्य सैन्यस्य तावकस्य विशाम्पते। सिंहनादो महानासीत् हतं मत्वा धनञ्जयं।
कृष्णश्च भृशसन्तप्तो दृष्ट्वा पार्थं विचेतनं। आश्वासयत् सुहृद्याभिर्व्वाग्भिस्तत्र धनञ्जयं।
ततस्तौ रथिनां श्रेष्ठौ लब्धलक्ष्यौ धनञ्जयं। वासुदेवञ्च वार्ष्णेयं शरवर्षैः समन्ततः।
सचक्रकूवररथं साश्वध्वजपताकिनं। अदृश्यं चक्रतुर्युद्धे तदद्भुतमिवाभवत्। ३३५५
प्रत्याश्वस्तस्तु बीभत्सुः शनकैरिव भारत। प्रेतराजपुरं प्राप्य पुनः प्रत्यागतो यथा।
संच्छन्नं शरजालेन रथं दृष्ट्वा सकेशवं। शत्रू चाभिमुखौ दृष्ट्वा दीप्यमानाविवानलौ।
प्रादुश्चक्रे ततः पार्थः शाक्रमस्त्रं महारथः। तस्मादासन् सहस्राणि शराणां नतपर्व्वणां।
ते जघ्नुस्तौ महेष्वासौ ताभ्यां मुक्ताश्च सायकाः। विचेरुराकाशगताः पार्थबाणविदारिताः।
प्रतिहत्य शरांस्तूर्णं शरवेगेन पाण्डवः। प्रतस्थे तत्र तत्रैव योधयन् वै महारथान्। ३३६०
तौ च फाल्गुनबाणौघैर्व्विबाहुशिरसौ कृतौ। वसुधामन्वपद्येतां वातनुन्नाविव द्रुमौ।
श्रुतायुषश्च निधनं वधश्चैवाच्युतायुषः। लोकविस्मापनमभूत् समुद्रस्येव शोषणं।
तयोः पदानुगान् हत्वा पुनः पञ्चाशतं रथान्। प्रत्यगात् भारतीं सेनां निघ्नन् पार्थो वरान् वरान्।
श्रुतायुषञ्च निहतं प्रेक्ष्य चैवाच्युतायुषं। नियतायुश्च संक्रुद्धो दीर्घायुश्चैव भारत।
पुत्रौ तयोर्नरश्रेष्ठौ कौन्तेयं प्रतिजग्मतुः। किरन्तौ विविधान् बाणान् पितृव्यसनकर्षितौ। ३३६५
तावर्ज्जुनो मुहूर्त्तेन शरैः सन्नतपर्व्वभिः। प्रेषयत् परमक्रुद्धो यमस्य सदनं प्रति।
लोडयन्तमनीकानि द्विपं पद्मसरो यथा। नाशक्नुवन् वारयितुं पार्थं क्षत्रियपुङ्गवाः।
अङ्गास्तु गजवारेण पाण्डवं पर्य्यवारयन्। क्रुद्धाः सहस्रशो राजन् शिक्षिता हस्तिसादिनः।
दुर्य्योधनसमादिष्टाः कुञ्जरैः पर्व्वतोपमैः। प्राच्याश्च दाक्षिणात्याश्च कलिङ्गप्रमुखा नृपाः।
तेषामापततां शीघ्रं गाण्डीवप्रेषितैः शरैः। निचकर्त्त शिरांस्युग्रो बाहूनपि सभूषणान्। ३३७०
तैः शिरोभिर्म्मही कीर्णा बाहुभिश्च सहाङ्गदैः। बभौ कनकपाषाणा भुजगैरिव संवृता।
बाहवो विशिखैश्छिन्नाः शिरांस्युन्मथितानि च। पतमानान्यदृश्यन्त द्रुमेभ्य इव पक्षिणः।
शरैः सहस्रशो विद्धा द्विपाः प्रस्रुतशोणिताः। अदृश्यन्ताद्रयः काले गैरिकाम्बुस्रवा इव।
निहताः शेरते स्मान्ये बीभत्सोर्न्निशितैः शरैः। गजपृष्ठगता म्लेच्छा नानाविकृतदर्शनाः।

नानावेशधरा राजन् नानाशस्त्रौघसंवृताः। रुधिरेणानुलिप्ताङ्गा भान्ति चित्रैः शरैर्हताः॥ ३३७५
शोणितं निर्वमन्ति स्म द्विपाः पार्थशराहताः। सहस्रशश्छिन्नगात्राः सारोहाः सपदानुगाः।
चुक्रुशुश्च निपेतुश्च बभ्रमुश्चापरे दिशः। भृशं त्रस्ताश्च बहवः स्वानेव ममृदुर्गजाः।
सान्तरायुधिनश्चैव द्विपास्तीक्ष्णविषोपमाः। विदन्त्यसुरमायां ये सुघोरा घोरचक्षुषः।
यवनाः पारदाश्चैव शकाश्च सह वाह्लिकैः। गोयोनिप्रभवा म्लेच्छाः कालकल्पाः प्रहारिणः।
दार्व्वातिसारा दरदाः पुण्ड्राश्चैव सहस्रशः। ते न शक्याः स्म सङ्ख्यातुं व्राताः शतसहस्रशः॥ ३३८०
अभ्यवर्षन्त ते सर्व्वे पाण्डवं निशितैः शरैः। अवाकिरंश्च ते म्लेच्छा नानायुद्धविशारदाः।
तेषामपि ससर्ज्जाशु शरवृष्टिं धनञ्जयः। सृष्टिस्तथाविधा ह्यासीच्छलभानामिवायतिः।
अभ्रच्छायामिव शरैः सैन्ये कृत्वा धनञ्जयः। मुण्डार्द्धमुण्डान् जटिलान् अशुचीञ्जटिलाननान्।
म्लेच्छानशातयत् सर्व्वान् समेतानस्त्रतेजसा। शरैश्च शतशो विद्धास्ते सङ्घा गिरिचारिणः।
प्राद्रवन्त रणे भीता गिरिगह्वरवासिनः। गजाश्वसादिम्लेच्छानां पतितानां शितैः शरैः॥ ३३८५
बकाः कङ्का वृका भूमावपिबन् रुधिरं मुदा। पत्त्यश्वरथनागैश्च प्रच्छन्नकृतसङ्क्रमां।
शरवर्षप्लवां घोरां केशशैवलशाद्वलां। प्रावर्त्तयन्नदीमुग्रां शोणितौघतरङ्गिणीं।
छिन्नाङ्गुलिक्षुद्रमत्स्यां युगान्ते कालसन्निभां। अकरोद्गजसम्बाधां नदीमुत्तरशोणितां।
देहेभ्यो राजपुत्राणां नागाश्वरथसादिनां। यथा स्थलञ्च निम्नञ्च न स्याद्वर्षति वासवे।
तथासीत् पृथिवी सर्व्वा शोणितेन परिप्लुता। षट्सहस्रान् हयान् वीरान् पुनर्दशशतान् वरान्॥ ३३९०
प्राहिणोन्मृत्युलोकाय क्षत्रियान् क्षत्रियर्षभः। शरैः सहस्रशो विद्धा विधिवत् कल्पिता द्विपाः।
शेरते भूमिमासाद्य शैला वज्रहता इव। सवाजिरथमातङ्गान् निघ्नन् व्यचरदर्ज्जुनः।
प्रभिन्न इव मातङ्गो मृद्नन् नडवनं यथा। भूरिद्रुमलतागुल्मं शुष्केन्धनतृणोलपं।
निर्द्दहेदनलोऽरण्यं यथा वायुसमीरितः। सैन्यारण्यं तव तथा कृष्णानिलसमीरितः।
शरार्च्चिरदहत् क्रुद्धः पाण्डवाग्निर्द्धनञ्जयः। शून्यान् कुर्व्वन् रथोपस्थान् मानवैः संस्तरन्महीं॥ ३३९५
प्रानृत्यदिव सम्बाधे चापहस्तो धनञ्जयः। वज्रकल्पैः शरैर्भूमिं कुर्व्वन्नुत्तरशोणितां।
प्राविशद्भारतीं सेनां संक्रुद्धो वै धनञ्जयः। तं श्रुतायुस्तथाम्बष्ठो व्रजमानं न्यवारयत्।
तस्यार्ज्जुनः शरैस्तीक्ष्णैः कङ्कपत्रपरिच्छदैः। न्यपातयद्धयान् शीघ्रं यतमानस्य मारिष।
धनुश्चास्यापरैश्छित्त्वा शरैः पार्थो विचक्रमे। अम्बष्ठस्तु गदां गृह्य क्रोधपर्य्याकुलेक्षणः।
आससाद रणे पार्थं केशवञ्च महारथं। ततः स प्रहरन् वीरो गदामुद्यम्य भारत॥ ३४००
रथमावार्य्य गदया केशवं समताडयत्। गदया ताडितं दृष्ट्वा केशवं परवीरहा।
अर्ज्जुनोऽथ भृशं क्रुद्धः सोऽम्बष्ठं प्रति भारत। ततः शरैर्हेमपुङ्खैः सगदं रथिनां वरं।
छादयामास समरे मेघः सूर्य्यमिवोदितं। अथापरैः शरैश्चापि गदां तस्य महात्मनः।
अचूर्णयत्तदा पार्थस्तदद्भुतमिवाभवत्। अथ तां पतितां दृष्ट्वा गृह्यान्यां च महागदां।

राजा शूरः कृती दक्षो जेतुं परपुरञ्जय । वीरः कथं प्रवाहेन यत्र पार्थो धनञ्जयः ।

॥ दुर्य्योधन उवाच ॥ कथं त्वामप्यतिक्रान्तः सर्व्वशस्त्रभृतां वरं । धनञ्जयो मया शक्य आचार्य्य प्रतिबाधितुं । ३३२९

अपि शक्रो रणे जेतुं वज्रहस्तः पुरन्दरः । नार्ज्जुनः समरे शक्यो जेतुं परपुरञ्जयः ।

येन भोजश्च हार्द्दिक्यो भवांश्च त्रिदशोपमः । अस्त्रप्रतापेन जितौ श्रुतायुश्च निवर्हितः ।

सुदक्षिणश्च निहतः स च राजा श्रुतायुधः । श्रुतायुश्चाच्युतायुश्च म्लेच्छाश्चायुतशो हताः ।

तं कथं पाण्डवं युद्धे दहन्तमिव पावकं । प्रतियोत्स्यामि दुर्द्धर्षं तमहं शस्त्रकोविदं ।

क्षमञ्च मन्यसे युद्धं मम तेनाद्य संयुगे । परवानस्मि भवति प्रेष्यवद्रक्ष मे यशः । ३३३०

॥ द्रोण उवाच ॥ सत्यं वदसि कौरव्य दुराधर्षो धनञ्जयः । अहन्तु तत् करिष्यामि यथैनं प्रसहिष्यसि ।

अद्भुतञ्चाद्य पश्यन्तु लोके सर्व्वधनुर्द्धराः । विषक्तं त्वयि कौन्तेयं वासुदेवस्य पश्यतः ।

एष ते कवचं राजंस्तथा बध्नामि काञ्चनं । यथा बाणा न चास्त्राणि प्रहरिष्यन्ति ते रणे ।

यदि त्वां सासुरसुराः सयक्षोरगराक्षसाः । योधयन्ति त्रयो लोकाः सनरा नास्ति ते भयं ।

न कृष्णो न च कौन्तेयो न चान्यः शस्त्रभृद्रणे । शरानर्पयितुं कश्चित् कवचे तव शक्ष्यति । ३३३५

स त्वं कवचमास्थाय क्रुद्धमद्य रणेऽर्ज्जुनं । त्वरमाणः स्वयं याहि न त्वासौ विसहिष्यति ।

॥ सञ्जय उवाच ॥ एवमुक्त्वा त्वरन्द्रोणः स्पृष्ट्वाम्भो वर्म्म भास्वरं । आबबन्धाद्भुततमं जपन् मन्त्रान् यथाविधि ।

रणे तस्मिन् सुमहति विजयाय सुतस्य ते । विसिस्मापयिषुर्लोकान् विद्यया ब्रह्मवित्तमः ।

॥ द्रोण उवाच ॥ करोतु स्वस्ति ते ब्रह्म ब्रह्मा चापि द्विजातयः । सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति भारत ।

ययातिर्नहुषश्चैव धुन्धुमारो भगीरथः । तुभ्यं राजर्षयः सर्व्वे स्वस्ति कुर्व्वन्तु सर्व्वशः । ३३४०

स्वस्ति तेऽस्त्वेकपादेभ्यो बहुपादेभ्य एव च । स्वस्त्यस्त्वपादकेभ्यश्च नित्यं तव महारणे ।

स्वाहा स्वधा शची चैव स्वस्ति कुर्व्वन्तु ते सदा । लक्ष्मीररुन्धती चैव कुरुतां स्वस्ति तेऽनघ ।

असितो देवलश्चैव विश्वामित्रस्तथाऽङ्गिराः । वसिष्ठः कश्यपश्चैव स्वस्ति कुर्व्वन्तु ते नृप ।

धाता विधाता लोकेशो दिशश्च सदिगीश्वराः । स्वस्ति तेऽद्य प्रयच्छन्तु कार्त्तिकेयश्च षण्मुखः ।

विवस्वान् भगवान् स्वस्ति करोतु तव सर्व्वशः । दिग्गजाश्चैव चत्वारः क्षितिश्च गगनं ग्रहाः । ३३४५

अधस्ताद्धरणीं योऽसौ सदा धारयते नृप । शेषश्च पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु ।

गान्धारे युधि विक्रम्य निर्ज्जिताः सुरसत्तमाः । पुरा वृत्रेण दैत्येन भिन्नदेहाः सहस्रशः ।

हृततेजोबलाः सर्व्वे तदा सेन्द्रा दिवौकसः । ब्रह्माणं शरणं जग्मुर्वृत्राद्भीता महासुरात् ।

॥ देवा ऊचुः ॥ प्रमर्द्दितानां वृत्रेण देवानां देवसत्तम । गतिर्भव सुरश्रेष्ठ त्राहि नो महतो भयात् ।

अथ पार्श्वे स्थितं विष्णुं शक्रादींश्च सुरोत्तमान् । प्राह तथ्यमिदं वाक्यं विषण्णान् सुरसत्तमान् । ३३५०

रक्ष्या मे सततं देवा सहेन्द्राः सद्विजातयः । त्वष्टुः सुदुर्द्धरं तेजो येन वृत्रो विनिर्म्मितः ।

त्वष्ट्रा पुरा तपस्तप्त्वा वर्षायुतशतं तदा । वृत्रो विनिर्म्मितो देवाः प्राप्यानुज्ञां महेश्वरात् ।

स तस्यैव प्रसादाद्वो हन्यादेव रिपुर्बली । नागत्वा शङ्करस्थानं भगवान् दृश्यते हरः ।

हृष्टा जेष्यथ वृत्रं तं क्षिप्रं गच्छत मन्दरं । यत्रास्ते तपसां योनिर्दक्षयज्ञविनाशनः ।
पिनाकी सर्व्वभूतेशो भगनेत्रनिपातनः । ते गत्वा सहिता देवा ब्रह्मणा सह मन्दरं । ३३६५
अपश्यंस्तेजसां राशिं सूर्य्यकोटिसमप्रभं । सोऽब्रवीत्स्वागतं देवा ब्रूत किं करवाण्यहं ।
अमोघं दर्शनं मह्यं कामप्राप्तिरतोऽस्तु वः । एवमुक्तास्तु ते सर्व्वे प्रत्यूचुस्तं दिवौकसः ।
तेजो हृतं नो वृत्रेण गतिर्भव दिवौकसां । मूर्त्तीरीक्षस्व नो देव प्रहारैर्ज्जर्जरीकृताः ।
शरणं त्वां प्रपन्नाः स्म गतिर्भव महेश्वर ।
॥ शर्व्व उवाच ॥ विदितं वो यथा देवाः कृत्येयं सुमहाबला । त्वष्टुस्तेजोभवा घोरा दुर्न्निवार्य्या कृतात्मभिः । ३३७०
अवश्यन्तु मया कार्य्यं साह्यं सर्व्वदिवौकसां । ममेदं गात्रजं शक्र कवचं गृह्य भास्वरं ।
बधानोऽनेन मन्त्रेण मानसेन सुरेश्वर ।
॥ द्रोण उवाच ॥ इत्युक्त्वा वरदः प्रादात् वर्म्म तन्मन्त्रमेव च । स तेन वर्म्मणा गुप्तः प्रायाद्वृत्रचमूं प्रति ।
नानाविधैश्च शस्त्रौघैः पात्यमानैर्म्महारणे । न सन्धिः शक्यते भेत्तुं वर्म्मबन्धस्य तस्य तु ।
ततो जघान समरे वृत्रं देवपतिः स्वयं । तञ्च मन्त्रमयं बन्धं वर्म्म चाङ्गिरसे ददौ । ३३७५
अङ्गिराः प्राह पुत्रस्य मन्त्रज्ञस्य बृहस्पतेः । बृहस्पतिरथोवाच अग्निवेश्याय धीमते ।
अग्निवेश्यो मम प्रादात्तेन बध्नामि वर्म्म ते । तवाद्य देहरक्षार्थं मन्त्रेण नृपसत्तम ।
॥ सञ्जय उवाच ॥ एवमुक्त्वा ततो द्रोणस्तव पुत्रं महाद्युतिं । पुनरेव वचः प्राह शनैराचार्य्यपुङ्गवः ।
ब्रह्मसूत्रेण बध्नामि कवचं तव पार्थिव । हिरण्यगर्भेण यथा बद्धं विष्णोः पुरा रणे ।
यथा च ब्रह्मणा बद्धं सङ्ग्रामे तारकामये । शक्रस्य कवचं दिव्यं तथा बध्नाम्यहं तव । ३३८०
बद्ध्वातु कवचं तस्य मन्त्रेण विधिपूर्व्वकं । प्रेषयामास राजानं युद्धाय महते द्विजः ।
स सन्नद्धो महाबाहुराचार्य्येण महात्मना । रथानाञ्च सहस्रेण त्रिगर्त्तानां प्रहारिणां ।
तथा दन्तिसहस्रेण मत्तानां वीर्य्यशालिनां । अश्वानां नियुतेनैव तथान्यैश्च महारथैः ।
वृतः प्रायान्महाबाहुरर्ज्जुनस्य रथं प्रति । नानावादित्रघोषेण यथा वैरोचनिस्तथा ।
ततः शब्दो महानासीत्सैन्यानां तव भारत । अगाधं प्रस्थितं दृष्ट्वा समुद्रमिव कौरवं । ३३८५
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि दुर्य्योधनकवचबन्धे चतुर्न्नवतोऽध्यायः ॥ ९४ ॥
॥ सञ्जय उवाच ॥ प्रविष्टयोर्म्महाराज पार्थवार्ष्णेययो रणे । दुर्य्योधने प्रयाते च पृष्ठतः पुरुषर्षभे ।
जवेनाभ्यद्रवन्द्रोणं महता निस्वनेन च । पाण्डवाः सोमकैः सार्द्धं ततो युद्धमवर्त्तत ।
तद्युद्धमभवत्तीव्रं तुमुलं लोमहर्षणं । कुरूणां पाण्डवानाञ्च व्यूहस्य पुरतोऽद्भुतं ।
राजन् कदाचिन्नास्माभिर्दृष्टं तादृक् न च श्रुतं । यादृङ्मध्यगते सूर्य्ये युद्धमासीद्विशाम्पते ।
धृष्टद्युम्नमुखाः पार्था व्यूढानीकाः प्रहारिणः । द्रोणस्य सैन्यं ते सर्व्वे शरवर्षैरवाकिरन् । ३३९०
वयं द्रोणं पुरस्कृत्य सर्व्वशस्त्रभृतां वरं । पार्षतप्रमुखान् पार्थानभ्यवर्षाम सायकैः ।
महामेघाविवोदीर्णौ मिश्रवातौ हिमात्यये । सेनाग्रे प्रचकाशे ते रुचिरे रथभूषिते ।

समेत्य तु महासेने चक्रतुर्वेगमुत्तमं । आस्रवीयमुने नद्यौ प्राहृषीवोल्बणोदके ।
नानाशस्त्रपुरोवातो द्विपाश्वरथसंवृतः । गदाविद्युन्महारौद्रः सङ्ग्रामजलदो महान् ।
भारद्वाजानिलोद्धूतः शरधारासहस्रवान् । अभ्यवर्षन्महासैन्यः पाण्डुसेनाग्निमुद्धतं । ३४००
समुद्रमिव घर्मान्ते विवन् घोरो महानिलः । व्यक्षोभयदनीकानि पाण्डवानां द्विजोत्तमः ।
तेऽपि सर्व्वप्रयत्नेन द्रोणमेव समाद्रवन् । बिभित्सन्तो महासेतुं वार्य्योघाः प्रबला इव ।
वारयामास तान् द्रोणो जलौघमचलो यथा । पाण्डवान् समरे क्रुद्धान् पाञ्चालांश्च सकेकयान् ।
अथापरे च राजानः परिवृत्य समन्ततः । महाबला रणे शूराः पाञ्चालानन्ववारयन् ।
ततो रणे नरव्याघ्रः पार्षतः पाण्डवैः सह । सञ्जघानासकृद्द्रोणं बिभित्सुररिवाहिनीं । ३४०५
यथैव शरवर्षाणि द्रोणो वर्षति पार्षते । तथैव शरवर्षाणि धृष्टद्युम्नोऽप्यवर्षत ।
सनिस्त्रिंशपुरोवातः शक्तिप्रासर्ष्टिसंवृतः । ज्याविद्युच्चापसंह्रादी धृष्टद्युम्नो बलाहकः ।
शरधाराश्मवर्षाणि व्यसृजत्सर्व्वतो दिशं । निघ्नन् रथवराश्वौघान् प्लावयामास वाहिनीं ।
यं यमार्च्छच्छरैर्द्रोणः पाण्डवानां रथव्रजं । ततस्ततः शरैर्द्रोणमपाकर्षत पार्षतः ।
तथा तु यतमानस्य द्रोणस्य युधि भारत । धृष्टद्युम्नं समासाद्य त्रिधा सैन्यमभिद्यत । ३४१०
भोजमेकेऽभ्यवर्त्तन्त जलसन्धं तथापरे । पाण्डवैर्हन्यमानाश्च द्रोणमेवापरे ययुः ।
सन्दृश्यति सैन्यानि द्रोणस्तु रथिनाम्वरः । व्यधमच्चापि तान्यस्य धृष्टद्युम्नो महारथः ।
धार्त्तराष्ट्रास्तथाभूता वध्यन्ते पाण्डुसृञ्जयैः । अगोपाः पशवोऽरण्ये बहुभिः श्वापदैरिव ।
कालस्य ग्रसतो योधान् धृष्टद्युम्नेन मोहितान् । सङ्ग्रामे तुमुले तस्मिन्निति संमेनिरे जनाः ।
कुनृपस्य यथा राष्ट्रं दुर्भिक्षव्याधितस्करैः । द्राव्यते तद्वदापन्ना पाण्डवैस्तव वाहिनी । ३४१५
अर्करश्मिविमिश्रेषु शस्त्रेषु कवचेषु च । चक्षूंषि प्रत्यहन्यन्त सैन्येन रजसा तथा ।
त्रिधाभूतेषु सैन्येषु वध्यमानेषु पाण्डवैः । अमर्षितस्ततो द्रोणः पाञ्चालान् व्यधमच्छरैः ।
मृद्नतस्तान्यनीकानि निघ्नतश्चापि सायकैः । बभूव रूपं द्रोणस्य कालाग्नेरिव दीप्यतः ।
रथं नागं हयञ्चापि पत्तिनञ्च विशाम्पते । एकैकेनेषुणा सङ्ख्ये निर्बिभेद महारथः ।
पाण्डवानान्तु सैन्येषु नास्ति कश्चित्स भारत । दधार यो रणे बाणान् द्रोणचापच्युतान् प्रभो । ३४२०
तप्यमानमर्केण द्रोणसायकतापितं । बभ्राम पाण्डवं सैन्यं तत्र तत्रैव भारत ।
तथैव पार्षतेनापि काल्यमानं बलं तव । अभवत्सर्व्वतो दीप्तं शुष्कं वनमिवाग्निना ।
बाध्यमानेषु सैन्येषु द्रोणपार्षतसायकैः । त्यक्त्वा प्राणान् परं शक्त्या युध्यन्ते सर्व्वतोमुखाः ।
तावकानां परेषाञ्च युध्यतां भरतर्षभ । नासीत्कश्चिन्महाराज योऽत्याक्षीत्संयुगं भयात् ।
भीमसेनन्तु कौन्तेयं सोदर्य्याः पर्य्यवारयन् । विविंशतिश्चित्रसेनो विकर्णश्च महारथः । ३४२५
विन्दानुविन्दावावन्त्यौ क्षेमधूर्त्तिश्च वीर्य्यवान् । त्रयाणां तव पुत्त्राणां त्रय एवानुयायिनः ।
वाह्लीकराजस्तेजस्वी कुलपुत्त्रो महारथः । सहसेनः सहामात्यो द्रौपदेयानवारयत् ।

शैव्यो गोवासनो राजा योधैर्व्रतावरैः । काश्यस्याभिभुवः पुत्रं पराक्रान्तमवारयत् ।
अजातशत्रुं कौन्तेयं ज्वलन्तमिव पावकं । मद्राणामीश्वरः शल्यो राजा राजानमावृणोत् ।
दुःशासनस्त्ववस्थाप्य स्वमनीकममर्षणः । सात्यकिं प्रययौ क्रुद्धः शूरो रथवरं युधि । ३४२०
स्वकेनाहमनीकेन सन्नद्धः कवचावृतः । चतुःशतैर्महेष्वासैश्चेकितानमवारयत् ।
शकुनिस्तु सहानीको माद्रीपुत्रमवारयत् । गान्धारकैः सप्तशतैश्चापशक्त्यसिपाणिभिः ।
विन्दानुविन्दावावन्त्यौ विराटं मत्स्यमार्च्छतां । प्राणांस्त्यक्त्वा महेष्वासौ मित्रार्थेऽभ्युद्यतायुधौ ।
शिखण्डिनं याज्ञसेनिं रुन्धानमपराजितं । वाह्लीकः प्रतिसंयत्तः पराक्रान्तमवारयत् ।
धृष्टद्युम्नं तु पाञ्चाल्यं क्रूरैः सार्द्धं प्रभद्रकैः । आवन्त्यः सह सौवीरैः क्रुद्धरूपमवारयत् । ३४२५
घटोत्कचं तथा शूरं राक्षसं क्रूरकर्मिणं । अलायुधोऽद्रवत्तूर्णं क्रुद्धमायान्तमाहवे ।
अलम्बुषं राक्षसेन्द्रं कुन्तिभोजो महारथः । सैन्येन महता युक्तः क्रुद्धरूपमवारयत् ।
सैन्धवः पृष्ठतस्त्वासीत्सर्व्वसैन्यस्य भारत । रक्षितः परमेष्वासैः कृपप्रभृतिभीरथैः ।
तस्यास्तां चक्ररक्षौ द्वौ सैन्धवस्य बृहत्तमौ । द्रौणिर्दक्षिणतो राजन् सूतपुत्रश्च वामतः ।
पृष्ठगोपास्तु तस्यासन् सौमदत्तिपुरोगमाः । कृपश्च वृषसेनश्च शलः शल्यश्च दुर्ज्जयः । ३४३०
नीतिमन्तो महेष्वासाः सर्व्वे युद्धविशारदाः । सैन्धवस्य विधायैवं रक्षां युयुधिरे ततः ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सङ्कुलयुद्धे पञ्चनवतोऽध्यायः ॥ ९५ ॥

॥ सञ्जय उवाच ॥ राजन् सङ्ग्राममाश्चर्य्यं शृणु कीर्त्तयतो मम । कुरूणां पाण्डवानाञ्च यथा युद्धमवर्त्तत ।
भारद्वाजं समासाद्य व्यूहस्य प्रमुखे स्थितं । अयोधयन् रणे पार्था द्रोणानीकं बिभित्सवः ।
रक्षमाणः स्वकं व्यूहं द्रोणोऽपि सह सैनिकैः । अयोधयद्रणे पार्थान् प्रार्थयानो महद्यशः ।
विन्दानुविन्दावावन्त्यौ विराटं दशभिः शरैः । आजघ्नतुः सुसंक्रुद्धौ तव पुत्रहितैषिणौ । ३४३४
विराटश्च महाराज तावुभौ समरे स्थितौ । पराक्रान्तौ समासाद्य योधयामास सानुगौ ।
तेषां युद्धं समभवद्दारुणं शोणितोदकं । सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने ।
वाह्लीकं रभसं युद्धे याज्ञसेनिर्महाबलः । आजघ्ने विशिखैस्तीक्ष्णैर्घोरैर्मर्म्मास्थिभेदिभिः ।
वाह्लीको याज्ञसेनिन्तु हेमपुङ्खैः शिलाशितैः । आजघान भृशं क्रुद्धो नवभिर्नतपर्व्वभिः ।
तद्युद्धमभवद्घोरं शरशक्तिसमाकुलं । भीरूणां त्रासजननं शूराणां हर्षवर्द्धनं । ३४३९
ताभ्यां तत्र शरैर्मुक्तैरन्तरिक्षं दिशस्तथा । अभवत्संवृतं सर्व्वं न प्राज्ञायत किञ्चन ।
शैव्यो गोवासनो युद्धे काश्यपुत्रं महारथं । स सैन्यो योधयामास गजः प्रतिगजं यथा ।
वाह्लीकराजः संक्रुद्धो द्रौपदेयान्महारथान् । मनःपञ्चेन्द्रियाणीव शुशुभे योधयन्रणे ।
अयोधयंस्ते सुभृशं तं शरौघैः समन्ततः । इन्द्रियार्था यथा देहं शश्वद्देहवतां वर ।
वार्ष्णेयं सात्यकिं युद्धे पुत्रो दुःशासनस्तव । आजघ्ने सायकैस्तीक्ष्णैर्नवभिर्नतपर्व्वभिः । ३४४४
सोऽतिविद्धो बलवता महेष्वासेन धन्विना । ईषन्मूर्च्छां जगामाशु सात्यकिः सत्यविक्रमः ।

समास्थस्तु वार्ष्णेयस्तव पुत्रं महारथं । विव्याध दशभिस्तूर्णं सायकैः कङ्कपत्रिभिः ।
तावन्योऽन्यं दृढं विद्धावन्योऽन्यशरपीडितौ । रेजतुः समरे राजन् पुष्पिताविव किंशुकौ ।
अलम्बुषस्तु संक्रुद्धः कुन्तिभोजशरार्द्दितः । अशोभत भृशं लक्ष्म्या पुष्पाढ्य इव किंशुकः ।
कुन्तिभोजं ततो रक्षो विद्धा बहुभिरायसैः । अनदद्भैरवं नादं वाहिन्याः प्रमुखे तत्र । ३५६०
ततस्तौ समरे शूरौ योधयन्तौ परस्परं । ददृशुः सर्व्वसैन्यानि शक्रजम्भौ यथा पुरा ।
शकुनिं रभसं युद्धे कृतवैरञ्च भारत । माद्रीपुत्त्रौ सुसंरब्धौ शरैश्चार्दयतां भृशं ।
तुमुलः स महाराज प्रावर्त्तत जनक्षयः । त्वया सञ्जनितोऽत्यर्थं कर्णेन च विवर्द्धितः ।
रक्षितस्तव पुत्त्रैश्च क्रोधमूलो हुताशनः । य इमां पृथिवीं राजन् दग्धुं सर्व्वां समुद्यतः ।
शकुनिः पाण्डुपुत्त्राभ्यां कृतः स विमुखः शरैः । न स्म जानाति कर्त्तव्यं युद्धे किञ्चित्पराक्रमं । ३५६५
विमुखं चैनमालोक्य माद्रीपुत्त्रौ महारथौ । ववर्षतुः पुनर्व्बाणैर्यथा मेघौ महागिरिं ।
स बध्यमानो बहुभिः शरैः सन्नतपर्व्वभिः । सम्प्रायाज्जवनैरश्वैर्द्रोणानीकाय सौबलः ।
घटोत्कचस्तथा शूरो राक्षसं तमलायुधं । अभ्ययाद्रभसं युद्धे वेगमास्थाय मध्यमं ।
तयोर्युद्धं महाराज चित्ररूपमिवाभवत् । यादृशं हि पुरा वृत्तं रामरावणयोर्मृधे ।
ततो युधिष्ठिरो राजा मद्रराजानमाहवे । विध्वा पञ्चाशतैर्व्बाणैः पुनर्विव्याध सप्तभिः । ३५७०
ततः प्रववृते युद्धं तयोरत्यद्भुतं नृप । यथा पूर्व्वमभूद्युद्धं शम्बरामरराजयोः ।
विविंशतिश्चित्रसेनो विकर्णश्च तवात्मजः । अयोधयन् भीमसेनं महत्या सेनया वृताः ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सङ्कुलयुद्धे षण्णवतितमोऽध्यायः ॥ ९६ ॥
॥ सञ्जय उवाच ॥ तथा तस्मिन्प्रवृत्ते तु सङ्ग्रामे लोमहर्षणे । कौरवेयांस्त्रिधाभूतान् पाण्डवाः समुपाद्रवन् ।
जलसन्धं महाबाहुं भीमसेनोऽभ्यवर्त्तत । युधिष्ठिरः सहानीकः कृतवर्म्माणमाहवे ।
किरंस्तु शरवर्षाणि रोचमान इवांशुमान् । धृष्टद्युम्नो महाराज द्रोणमभ्यद्रवद्रणे । ३५७५
ततः प्रववृते युद्धं त्वरतां सर्व्वधन्विनां । कुरूणां पाण्डवानाञ्च संक्रुद्धानां परस्परं ।
सङ्क्षये तु तथाभूते वर्त्तमाने महाभये । द्वन्द्वीभूतेषु सैन्येषु युध्यमानेष्वभीतवत् ।
द्रोणः पाञ्चालपुत्त्रेण बली बलवता सह । यदक्षिपत्सायकौघांस्तदद्भुतमिवाभवत् ।
पुण्डरीकवनानीव विध्वस्तानि समन्ततः । चक्राते द्रोणपाञ्चाल्यौ नृणां शीर्षाण्यनेकशः ।
विनिकीर्णानि वीराणामनीकेषु समन्ततः । वस्त्राभरणशस्त्राणि ध्वजवर्म्मायुधानि च । ३५८०
तपनीयतनुत्राणाः संसिक्ता रुधिरेण च । संसक्ता इव दृश्यन्ते मेघसङ्घाः सविद्युतः ।
कुञ्जराश्वनरानन्ये पातयन्ति स्म पत्रिभिः । तालमात्राणि चापानि विकर्षन्तो महारथाः ।
असिचर्म्माणि चापानि शिरांसि कवचानि च । विप्रकीर्य्यन्त शूराणां सम्प्रहारे महात्मनां ।
उत्थितान्यगणेयानि कबन्धानि समन्ततः । अदृश्यन्त महाराज तस्मिन्परमसङ्कुले ।
गृध्राः कङ्का बलाः श्येना वायसा जम्बुकास्तथा । बहुशः पिशिताशाश्च तत्रादृश्यन्त मारिष । ३५८५

भक्षयन्तश्च मांसानि पिबन्तश्चापि शोणितं । विलुम्पन्तश्च केशांश्च मज्जाश्च बहुधा नृप ।
आकर्षन्तः शरीराणि शरीरावयवांस्तथा । नराश्वगजसङ्घानां शिरांसि च ततस्ततः ।
कृतास्त्रा रणदीक्षाभिर्दीक्षिता रणशालिनः । रणे जयं प्रार्थयन्तो भृशं युयुधिरे तदा ।
असिमार्गान् बहुविधान् विचेरुः सैनिका रणे । ऋष्टिभिः शक्तिभिः प्रासैः शूलतोमरपट्टिशैः ।
गदाभिः परिघैश्चान्यैरायुधैश्च भुजैरपि । अन्योऽन्यं जघ्निरे क्रुद्धा युद्धरङ्गगता नराः । ३४९०
रथिनो रथिभिः सार्द्धं अश्वारोहाश्च सादिभिः । मातङ्गा वरमातङ्गैः पदाताश्च पदातिभिः ।
क्षीवा इवान्ये चोन्मत्ता रङ्गेष्विव च वारणाः । उच्चुक्रुशुस्तथान्योऽन्यं जघ्नुरन्योऽन्यमाहवे ।
वर्त्तमाने तथा युद्धे निर्मर्य्यादे विशाम्पते । धृष्टद्युम्नो हयानश्वैर्द्रोणस्य व्यत्यमिश्रयत् ।
ते हयाः साध्वशोभन्त मिश्रिता वातरंहसः । पारावतसवर्णाश्च रक्तशोणाश्च संयुगे ।
हयाः शुशुभिरे राजन् मेघा इव सविद्युतः । धृष्टद्युम्नस्तु सम्प्रेक्ष्य द्रोणमभ्याशमागतं । ३४९५
असिचर्म्माददे वीरो धनुरुत्सृज्य भारत । चिकीर्षुर्दुष्करं कर्म्म पार्षतः परवीरहा ।
ईषया समतिक्रम्य द्रोणस्य रथमाविशत् । अतिष्ठद्युगमध्ये स युगसन्नहनेषु च ।
जघनार्द्धेषु चाश्वानां तत्सैन्यान्यभ्यपूजयन् । खड्गेन चरतस्तस्य शोणाश्वानधितिष्ठतः ।
न ददर्शान्तरं द्रोणस्तदद्भुतमिवाभवत् । यथा श्येनस्य पतनं वनेष्वामिषगृद्धिनः ।
तथैवासीदभीसारस्तस्य द्रोणं जिघांसतः । ततः शरशतेनास्य शतचन्द्रं समाक्षिपत् । ३५००
द्रोणो द्रुपदपुत्रस्य खड्गञ्च दशभिः शरैः । हयांश्चैव चतुःषष्ट्या शराणां जघ्निवान् बली ।
ध्वजं छत्रञ्च भल्लाभ्यां तथोभौ पार्ष्णिसारथी । अथास्मै त्वरितो बाणमपरं जीवितान्तकं ।
आकर्णपूर्णं चिक्षेप वज्रं वज्रधरो यथा । तं चतुर्दशभिस्तीक्ष्णैर्बाणैश्चिच्छेद सात्यकिः ।
ग्रस्तमाचार्य्यमुख्येन धृष्टद्युम्नममोचयत् । सिंहेनेव मृगं ग्रस्तं नरसिंहेन मारिष ।
द्रोणेन मोचयामास पाञ्चाल्यं शिनिपुङ्गवः । सात्यकिं प्रेक्ष्य गोप्तारं पाञ्चाल्यस्य महाहवे । ३५०५
शराणां त्वरितो द्रोणः षड्विंशत्या समार्पयत् । ततो द्रोणं शिनेः पौत्रो ग्रसन्तमिव सृञ्जयान् ।
प्रत्यविध्यच्छितैर्बाणैः षड्विंशत्या स्तनान्तरे । ततः सर्व्वे रथास्तूर्णं पाञ्चाल्या जयगृद्धिनः ।
सात्वताभिसृते द्रोणे धृष्टद्युम्नमवाक्षिपन् ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सङ्कुलयुद्धे सप्तनवतोऽध्यायः ॥ ९७ ॥
॥ धृतराष्ट्र उवाच ॥ बाणे तस्मिन्निकृत्ते तु धृष्टद्युम्ने च मोचिते । तेन वृष्णिप्रवीरेण युयुधानेन सञ्जय ।
अमर्षितो महेष्वासः सर्व्वशस्त्रभृतांवरः । नरव्याघ्रे शिनेः पौत्रे द्रोणः किमकरोद्युधि । ३५१०
॥ सञ्जय उवाच ॥ स सम्प्रद्रुतः क्रोधविषो व्यादितास्यशरासनः । तीक्ष्णधारेषुदशनः शितनाराचदंष्ट्रवान् ।
संरम्भामर्षताम्राक्षो महोरग इव श्वसन् । नरवीरः प्रमुदितः शोणैरश्वैर्महाजवैः ।
उत्पतद्भिरिवाकाशं क्रामद्भिरिव पर्व्वतं । रुक्मपुङ्खान् शरानस्यन् युयुधानमुपाद्रवत् ।
शरपातमहावर्षं रथघोषबलाहकं । कार्मुकाकर्षविक्षेपं नाराचबहुविद्युतं ।

शक्तिखड्गाशनिधरं क्रोधवेगसमुत्थितं। द्रोणमेघमनावार्य्यं हयमारुतचोदितं। ३९१८
दृष्ट्वैवाभिपतन्तं तं शूरः परपुरञ्जयः। उवाच सूतं शैनेयः प्रहसन् युद्धदुर्म्मदः।
एनं वै ब्राह्मणं शूरं स्वकर्म्मण्यनवस्थितं। आश्रयं धार्त्तराष्ट्रस्य राज्ञो दुःखभयापहं।
शीघ्रं प्रजवितैरश्वैः प्रत्युद्याहि प्रहृष्टवत्। आचार्य्यं राजपुत्त्राणां सततं शूरमानिनं।
ततो रजतसङ्काशा माधवस्य हयोत्तमाः। द्रोणस्याभिमुखाः शीघ्रमगच्छन्वातरंहसः।
ततस्तौ द्रोणशैनेयौ युयुधाते परन्तपौ। शरैरनेकसाहस्रैस्ताडयन्तौ परस्परं। ३९२०
इषुजालावृतं व्योम चक्रतुः पुरुषर्षभौ। पूरयामासतुर्वीरावुभौ दशदिशः शरैः।
मेघाविवातपापाये धाराभिरितरेतरं। न स्म सूर्य्यस्तदा भाति न ववौ च समीरणः।
इषुजालावृतं घोरमन्धकारमनन्तरं। अनाधृष्यमिवान्येषां शूराणामभवत्तदा।
अन्धकारीकृते लोके द्रोणशैनेययोः शरैः। तयोः शीघ्रास्त्रविदुषो द्रोणसात्वतयोस्तदा।
नान्तरं शरवृष्टीनां ददृशे नरसिंहयोः। इषूणां सन्निपातेन शब्दो धाराभिघातजः। ३९२५
शुश्रुवे शक्रमुक्तानामशनीनामिव स्वनः। नाराचैर्व्यपविद्धानां शूराणां रूपमाबभौ।
आशीविषविदष्टाणां सर्पाणामिव भारत। तयोर्ज्यातलनिर्घोषः शुश्रुवे युद्धशौण्डयोः।
अजस्रं शैलशृङ्गाणां वज्रेणाहन्यतामिव। उभयोस्तौ रथौ राजन् ते चाश्वास्तौ च सारथी।
रुक्मपुङ्खैः शरैश्छन्ना चित्ररूपा बभुस्तदा। निर्म्मलानामजिह्मानां नाराचानां विशाम्पते।
निर्मुक्ताशीविषाभानां सम्पातोऽभूत्सुदारुणः। उभयोः पतिते छत्त्रे तथैव पतितौ ध्वजौ। ३९३०
उभौ रुधिरसिक्ताङ्गावुभौ च विजयैषिणौ। स्रवद्भिः शोणितं गात्रैः प्रस्रुताविव वारणौ।
अन्योऽन्यमभ्यविध्येतां जीवितान्तकरैः शरैः। गर्जितोत्क्रुष्टसन्नादाः शङ्खदुन्दुभिनिस्वनाः।
उपारमन्महाराज व्याजहार न कश्चन। तूष्णीम्भूतान्यनीकानि योधा युद्धादुपारमन्।
ददर्श द्वैरथं ताभ्यां जातकौतूहलो जनः। रथिनो हस्तियन्तारो हयारोहाः पदातिनः।
अवैक्षन्ताचलैर्नेत्रैः परिवार्य्य नरर्षभौ। हस्त्यनीकान्यतिष्ठन्त तथाऽनीकानि वाजिनां। ३९३५
तथैव रथवाहिन्यः प्रतिव्यूह्य व्यवस्थिताः। मुक्ताविद्रुमचित्रैश्च मणिकाञ्चनभूषितैः।
ध्वजैराभरणैश्चित्रैः कवचैश्च हिरण्मयैः। वैजयन्तीपताकाभिः परिस्तोमाङ्गकम्बलैः।
विमलैर्न्निशितैः शस्त्रैर्हयानाञ्च प्रकीर्णकैः। जातरूपमयीभिश्च राजतीभिश्च मूर्द्धसु।
गजानां कुम्भमालाभिर्द्दन्तवेष्टैश्च भारत। सबलाका सखद्योता ऐरावतशतह्रदाः।
अदृश्यन्तोष्णपर्य्याये मेघानामिव वागुराः। अपश्यन्नस्मदीयाश्च ते च यौधिष्ठिरादयः। ३९४०
तद्युद्धं युयुधानस्य द्रोणस्य च महात्मनः। विमानाग्रगता देवा ब्रह्मसोमपुरोगमाः।
सिद्धचारणसङ्घाश्च विद्याधरमहोरगाः। गतप्रत्यागताक्षेपैश्चित्रैः शस्त्रविघातिभिः।
विविधैर्व्विस्मयं जग्मुस्तयोः पुरुषसिंहयोः। हस्तलाघवमस्त्रेषु दर्शयन्तौ महाबलौ।
अन्योऽन्यप्रत्यविध्येतां शरैस्तौ द्रोणसात्यकी। ततो द्रोणस्य दाशार्हः शरांश्चिच्छेद संयुगे।

पत्रिभिः सुदृढैराशु धनुश्चैव महाद्युते । निमेषान्तरमात्रेण भारद्वाजोऽपरं धनुः । ३९७५
सज्यं चकार तदपि चिच्छेदास्य स सात्यकिः । ततस्त्वरन् पुनर्द्रोणो धनुर्हस्तो व्यतिष्ठत ।
सज्यं सज्यं धनुश्चास्य चिच्छेद नव सप्त च । ततोऽस्य संयुगे द्रोणो दृष्ट्वा कर्म्मातिमानुषं ।
युयुधानस्य राजेन्द्र मनसैतदचिन्तयत् । एतदस्त्रबलं रामे कार्त्तवीर्य्ये धनञ्जये ।
भीष्मे च पुरुषव्याघ्रे यदिदं सात्वतां वरे । तञ्चास्य मनसा द्रोणः पूजयामास विक्रमं ।
लाघवं वासवस्येव सम्प्रेक्ष्य द्विजसत्तमः । तुतोषास्त्रविदां श्रेष्ठस्तथा देवाः सवासवाः । ३९८०
न तामालोकयामासुर्लघुतां शीघ्रचारिणः । देवाश्च युयुधानस्य गन्धर्व्वाश्च विशाम्पते ।
सिद्धचारणसङ्घाश्च विदुर्द्रोणस्य कर्म्म तत् । ततोऽन्यद्धनुरादाय द्रोणः क्षत्रियमर्द्दनः ।
अस्त्रैरस्त्रविदां श्रेष्ठो योजयामास भारत । तस्यास्त्राण्यस्त्रमायाभिः प्रतिहत्य स सात्यकिः ।
जघान निशितैर्ब्बाणैस्तदद्भुतमिवाभवत् । तस्यातिमानुषं कर्म्म दृष्ट्वाऽन्यैरसमं रणे ।
युक्तं योगेन योगज्ञास्तावकाः समपूजयन् । यदस्त्रमस्यति द्रोणस्तदेवास्यति सात्यकिः । ३९८५
तमाचार्य्योऽथ सम्भ्रान्तोऽयोधयच्छत्रुतापनः । ततः क्रुद्धो महाराज धनुर्व्वेदस्य पारगः ।
वधाय युयुधानस्य दिव्यमस्त्रमुदैरयत् । तदाग्नेयं महाघोरं रिपुघ्नमुपलक्ष्य सः ।
दिव्यमस्त्रं महेष्वासो वारुणं समुदैरयत् । हाहाकारो महानासीद्दृष्ट्वा दिव्यास्त्रधारिणौ ।
न विचेरुस्तदाकाशे भूतान्याकाशगान्यपि । अस्त्रे ते वारुणाग्नेये ताभ्यां बाणसमाहिते ।
यावत्तावदभिपद्येतां व्यावर्त्तदथ भास्करः । ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः । ३९९०
नकुलः सहदेवश्च पर्य्यरक्षन्त सात्यकिं । धृष्टद्युम्नमुखैः सार्द्धं विराटश्च सकेकयः ।
मत्स्याः शाल्वेयसेनाश्च द्रोणमाजग्मुरञ्जसा । दुःशासनं पुरस्कृत्य राजपुत्राः सहस्रशः ।
द्रोणमभ्युपपद्यन्त सपत्नैः परिवारितं । ततो युद्धमभूद्राजन् तेषां तव च धन्विनां ।
रजसा संवृते लोके शरजालसमावृते । सर्व्वमाविग्नमभवन्न प्राज्ञायत किञ्चन ।
सैन्येन रजसा ध्वस्ते निर्म्मर्य्यादमवर्त्तत । ३९९५

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि द्रोणसात्यकियुद्धे अष्टनवतितमोऽध्यायः ॥ ९८ ॥

॥ सञ्जय उवाच ॥ विवर्त्तमाने त्वादित्ये तत्रास्तशिखरं प्रति । रजसा कीर्य्यमाणे च मन्दीभूते दिवाकरे ।
तिष्ठतां युध्यमानानां पुनरावर्त्ततामपि । भज्यतां जयताञ्चैव जगाम तदहः शनैः ।
तथा तेषु विषक्तेषु सैन्येषु जयगृद्धिषु । अर्ज्जुनो वासुदेवश्च सैन्धवायैव जग्मतुः ।
रथमार्गप्रमाणन्तु कौन्तेयो निशितैः शरैः । चकार तत्र पन्थानं ययौ येन जनार्द्दनः ।
यत्र यत्र रथो याति पाण्डवस्य महात्मनः । तत्र तत्रैव दीर्य्यन्ते सेनास्तव विशाम्पते । ४०००
रथशिक्षान्तु दाशार्हो दर्शयामास वीर्य्यवान् । उत्तमाधममध्यानि मण्डलानि विदर्शयन् ।
ते तु नामाङ्किताः पीताः कालज्वलनसन्निभाः । स्नायुनद्धाः सुपर्व्वाणः पृथवो दीर्घगामिनः ।
वैणवायसमायुक्ता ग्रसन्तो विविधानरीन् । रुधिरं पतगैः सार्द्धं प्राणिनां सपुराहवे ।

रथस्थितोऽयतः क्रोशं यानस्यत्यर्ज्जुनः शरान्। रथे क्रोशमतिक्रान्ते तस्य ते घ्नन्ति शात्रवान्।
तार्क्ष्यमारुतरंहोभिर्व्वाजिभिर्धुरवाहिभिः। तदाऽगच्छद्धृषीकेशः कृत्स्नं विस्मापयन् जगत्। ३९७५
न तथा गच्छति रथस्तपनस्य विशाम्पते। नेन्द्रस्य च न रुद्रस्य नापि वैश्रवणस्य च।
नान्यस्य समरे राजन् गतपूर्व्वस्तथा रथः। यथा ययावर्ज्जुनस्य मनोऽभिप्रायशीघ्रगः।
प्रविश्य तु रणे राजन् केशवः परवीरहा। सेनामध्ये हयांस्तूर्णं चोदयामास भारत।
ततस्तस्य रथौघस्य मध्यं प्राप्य हयोत्तमाः। कृच्छ्रेण रथमूहुस्तं क्षुत्पिपासासमन्विताः।
क्षताश्च बहुभिः शस्त्रैर्युद्धशौण्डैरनेकशः। मण्डलानि विचित्राणि विचेरुस्ते मुहुर्मुहुः। ३९८०
हतानां वाजिनागानां रथानाञ्च नरैः सह। उपरिष्टादतिक्रान्ताः शलभानां सहस्रशः।
एतस्मिन्नन्तरे वीरावावन्त्यौ भ्रातरौ नृप। सहसेनौ समार्च्छेतां पाण्डवं क्लान्तवाहनं।
तावर्ज्जुनं चतुःषष्ट्या सप्तत्या च जनार्द्दनं। शराणाञ्च शतैरश्वानविध्येतां मुदान्वितौ।
तावर्ज्जुनो महाराज नवभिर्नतपर्व्वभिः। आजघान रणे क्रुद्धो मर्म्मज्ञो मर्म्मभेदिभिः।
ततस्तौ तु शरौघेण बीभत्सुं सहकेशवं। आच्छादयेतां संरब्धौ सिंहनादञ्च चक्रतुः। ३९८५
तयोस्तु धनुषी चित्रे भल्लाभ्यां श्वेतवाहनः। चिच्छेद समरे तूर्णं ध्वजौ च कनकोज्ज्वलौ।
अथान्यद्धनुषी राजन् प्रगृह्य समरे तदा। पाण्डवं भृशसंक्रुद्धावर्दयामासतुः शरैः।
तयोस्तु भृशसंक्रुद्धः शराभ्यां पाण्डुनन्दनः। धनुषी चिच्छिदे तूर्णं भूय एव धनञ्जयः।
तथान्यैर्व्विशिखैस्तूर्णं रुक्मपुङ्खैः शिलाशितैः। जघानाश्वांस्तथा सूतौ पार्ष्णी च सपदानुगौ।
ज्येष्ठस्य च शिरः कायात् क्षुरप्रेण न्यकृन्तत। स पपात हतः पृथ्व्यां वातभग्न इव द्रुमः। ३९९०
विन्दन्तु निहतं दृष्ट्वा ह्यनुविन्दः प्रतापवान्। हताश्वं रथमुत्सृज्य गदां गृह्य महाबलः।
अभ्यवर्त्तत सङ्ग्रामे भ्रातुर्व्वधमनुस्मरन्। गदया रथिनां श्रेष्ठो नृत्यन्निव महारथः।
अनुविन्दस्तु गदया ललाटे मधुसूदनं। स्पृष्ट्वा नाकम्पयत् क्रुद्धो मैनाकमिव पर्व्वतं।
तस्यार्ज्जुनः शरैः षड्भिर्ग्रीवां पादौ भुजौ शिरः। विचकर्त्त स संच्छिन्नः पपाताद्रिचयो यथा।
ततस्तौ निहतौ दृष्ट्वा तयो राजन्पदानुगाः। अभ्यद्रवन्त संक्रुद्धाः किरन्तः शतशः शरान्। ३९९५
तानर्ज्जुनः शरैस्तूर्णं निहत्य भरतर्षभ। व्यरोचत यथा वह्निर्द्दावं दग्ध्वा हिमात्यये।
तयोः सेनामतिक्रम्य कृच्छ्रादिव धनञ्जयः। विबभौ जलदं हित्वा दिवाकर इवोदितः।
तं दृष्ट्वा कुरवस्त्रस्ताः प्रहृष्टाश्चाभवन्पुनः। अभ्यवर्त्तन्त पार्थञ्च समन्ताद्भरतर्षभ।
श्रान्तञ्चैनं समालक्ष्य ज्ञात्वा दूरे च सैन्धवं। सिंहनादेन महता सर्व्वतः पर्य्यवारयन्।
तांस्तु दृष्ट्वा सुसंरब्धानुत्स्मयन्पुरुषर्षभः। शनकैरिव दाशार्हमर्ज्जुनो वाक्यमब्रवीत्। ४०००
शरार्द्दिताश्च ग्लानाश्च हया दूरे च सैन्धवः। किमिहानन्तरं कार्य्यं ज्यायिष्ठं तव रोचते।
ब्रूहि कृष्ण यथा तत्त्वं त्वं हि प्राज्ञतमः सदा। भवन्नेत्रा रणे शत्रून् विजेष्यन्तीह पाण्डवाः।
मम त्वनन्तरं कृत्यं यद्वै तत्त्वं निबोध मे। हयान् विमुच्य हि सुखं विशल्यान् कुरु माधव।

एवमुक्तस्तु पार्थेन केशवः प्रत्युवाच तं । ममाप्येतन्मतं पार्थ यदिदं ते प्रभाषितं ।
॥ अर्ज्जुन उवाच ॥ अहमावारयिष्यामि सर्व्वसैन्यानि केशव । त्वमप्यत्र यथान्यायं कुरु कार्य्यमनन्तरं । ३३०५
॥ सञ्जय उवाच ॥ सोऽवतीर्य्य रथोपस्थादसम्भ्रान्तो धनञ्जयः । गाण्डीवं धनुरादाय तस्थौ गिरिरिवाचलः ।
तमभ्यधावन् क्रोशन्तः क्षत्रिया जयकाङ्क्षिणः । इदं छिद्रमिति ज्ञात्वा धरणीस्थं धनञ्जयं ।
तमेकं रथवंशेन महता पर्य्यवारयन् । विकर्षन्तश्च चापानि विसृजन्तश्च सायकान् ।
शस्त्राणि च विचित्राणि क्रुद्धास्तत्र व्यदर्शयन् । छादयन्तः शरैः पार्थं मेघा इव दिवाकरं ।
अभ्यद्रवन्त वेगेन क्षत्रियाः क्षत्रियर्षभं । नरसिंहं रथोदाराः सिंहं मत्ता इव द्विपाः । ३३१०
तत्र पार्थस्य भुजयोर्महद्बलमदृश्यत । यः क्रुद्धो बहुलाः सेनाः सर्व्वतः समवारयत् ।
अस्त्रैरस्त्राणि संवार्य्य द्विषतां सर्व्वतो विभुः । इषुभिर्ब्बहुभिस्तूर्णं सर्व्वानेव समावृणोत् ।
तत्रान्तरिक्षे बाणानां प्रगाढानां विशाम्पते । संघर्षेण महार्चिष्मान् पावकः समजायत ।
तत्र तत्र महेष्वासैः श्वसद्भिः शोणितोक्षितैः । हयैर्नागैश्च सम्भिन्नैर्नदद्भिश्चारिकर्षणैः ।
संरब्धैश्चारिभिर्व्वीरैः प्रार्थयद्भिर्ज्जयं मृधे । एकस्थैर्ब्बहुभिः क्रुद्धैरूष्मेव समजायत । ३३१५
शरोर्म्मिणं ध्वजावर्त्तं नागनक्रं दुरत्ययं । पदातिमत्स्यकलिलं शङ्खदुन्दुभिनिस्वनं ।
असंख्येयमपारञ्च रथोर्म्मिणमतीव च । उष्णीषकमठं छत्रपताकाफेनमालिनं ।
रथसागरमक्षोभ्यं मातङ्गाङ्गशिलान्वितं । वेलाभूतस्तदा पार्थः पत्रिभिः समवारयत् ।
ततो जनार्द्दनः संख्ये प्रियं पुरुषमुत्तमं । असम्भ्रान्तो महाबाहुरर्ज्जुनं वाक्यमब्रवीत् ।
उदपानमिहाश्वानां नालमस्ति रणेऽर्ज्जुन । परीप्सन्ते जलं चेमे पेयं नत्ववगाहनं । ३३२०
इदमस्तीत्यसम्भ्रान्तो ब्रुवन्नस्त्रेण मेदिनीं । अभिहत्यार्ज्जुनश्चक्रे वाजिपानं सरः शुभं ।
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितं । सुविस्तीर्णं प्रसन्नाम्भः प्रफुल्लवरपङ्कजं ।
कूर्म्ममत्स्यगणाकीर्णमगाधमृषिसेवितं । आगच्छन्नारदमुनिर्द्दर्शनार्थं कृतं क्षणात् ।
शरवंशं शरस्थूणं शराच्छादनमद्भुतं । शरवेश्माकरोत्पार्थस्त्वष्टेवाद्भुतकर्म्मकृत् ।
ततः प्रहस्य गोविन्दः साधु साध्विति चाब्रवीत् । शरवेश्मनि पार्थेन कृते तस्मिन् महात्मना । ३३२५
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि अर्ज्जुनसरोवरनिर्म्माणे एकोनशतोऽध्यायः ॥ ९९ ॥
॥ सञ्जय उवाच ॥ सलिले जनिते तस्मिन् कौन्तेयेन महात्मना । निवारिते द्विषत्सैन्ये कृते च शरवेश्मनि ।
वासुदेवो रथात्तूर्णमवतीर्य्य महाद्युतिः । मोचयामास तुरगान् विनुन्नान् कङ्कपत्रिभिः ।
अदृष्टपूर्व्वं तं दृष्ट्वा साधुवादो महानभूत् । सिद्धचारणसङ्घानां सैनिकानाञ्च सर्व्वशः ।
पदातीनां तु कौन्तेयं युध्यमानं महारथाः । नाशक्नुवन् वारयितुं तदद्भुतमिवाभवत् ।
आपतत्सु रथौघेषु प्रभूतगजवाजिषु । नासम्भ्रमत्तदा पार्थस्तदस्य पुरुषानति । ३३३०
व्यसृजन्त शरौघांस्ते पाण्डवं प्रति पार्थिवाः । न चाव्यथत धर्म्मात्मा वासविः परवीरहा ।
शतानि शरजालानि गदाः प्रासांश्च वीर्य्यवान् । आगतानग्रसत् पार्थः सरितः सागरो यथा ।

अश्ववेगेन महता पार्थौ बाहुबलेन च। सर्व्वेषां पार्थिवेन्द्राणामग्रतश्चक्ररोत्तमान्।
स पार्थः पार्थिवान् सर्व्वान् भूमिष्ठोऽपि रथस्थितान्। एको निवारयामास लोभः सर्व्वगुणानिव।
तत्र पार्थस्य विक्रान्तं वासुदेवस्य चोभयोः। अपूजयन्महाराज कौरवा महदद्भुतं। ३०३५
किमद्भुततमं लोके भविताऽप्यथवा ह्यभूत्। यदश्वान् पार्थगोविन्दौ मोचयामासतू रणे।
भयं विपुलमस्मासु तावधत्तां नरोत्तमौ। तेजो विदधतुश्चोग्रं विसृष्टौ रणमूर्द्धनि।
अथ स्मयन् हृषीकेशः स्त्रीमध्य इव भारत। अर्ज्जुनेन कृते सङ्ख्ये शरगर्भे गृहे तदा।
उपावर्त्तयदव्यग्रस्तानश्वान् पुष्करेक्षणः। मिषतां सर्व्वसैन्यानां त्वदीयानां विशाम्पते।
तेषां श्रमञ्च ग्लानिञ्च वेपथुञ्च पृथुव्रणात्। सर्व्वं व्यपानुदत् कृष्णः कुशलो ह्यश्वकर्म्मणि। ३०४०
शल्यानुद्धृत्य पाणिभ्यां परिमृज्य च तान् हयान्। उपावर्त्त्य यथान्यायं पाययामास वारि सः।
स तान् लब्धोदकान् स्नातान् जग्धान्नान् विगतक्लमान्। योजयामास संहृष्टः पुनरेव रथोत्तमे।
स तं रथवरं शौरिः सर्व्वशस्त्रभृताम्वरः। समास्थाय महातेजाः सार्ज्जुनः प्रययौ द्रुतं।
रथं रथवरस्याजौ युक्तं लब्धोदकैर्हयैः। दृष्ट्वा कुरुबलश्रेष्ठाः पुनर्व्विमनसोऽभवन्।
विनिश्वसन्तस्ते राजन् भग्नदंष्ट्रा इवोरगाः। धिगहो धिग्गतः पार्थः कृष्णश्चेत्यब्रुवन् पृथक्। ३०४५
सर्व्वक्षत्रस्य मिषतो रथेनैकेन दंशितौ। बालक्रीडनकेनेव कदर्थीकृत्य नो बलं।
क्रोशतां यतमानानामसंसक्तौ परन्तपौ। दर्शयित्वात्मनो वीर्य्यं प्रयातौ सर्व्वराजसु।
तौ प्रयातौ पुनर्दृष्ट्वा तदाऽन्ये सैनिकाब्रुवन्। त्वरध्वं कुरवः सर्व्वे वधे कृष्णकिरीटिनोः।
रथं युक्त्वा हि दाशार्हो मिषतां सर्व्वधन्विनां। जयद्रथे प्रयात्येष कदर्थीकृत्य नो रणे।
तत्र केचिन्मिथो राजन् समभाषन्त भूमिपाः। अदृष्टपूर्व्वं सङ्ग्रामे तद्दृष्ट्वा महदद्भुतं। ३०५०
सर्व्वसैन्यानि राजा च धृतराष्ट्रोऽत्ययं गतः। दुर्य्योधनापराधेन क्षत्रं कृत्स्ना च मेदिनी।
विलयं समनुप्राप्ता तच्च राजा न बुध्यते। इत्येवं क्षत्रियास्तत्र ब्रुवन्त्यन्ये च भारत।
सिन्धुराजस्य यत् कृत्यं गतस्य यमसादनं। तत् करोतु वृथादृष्टिर्धार्त्तराष्ट्रोऽनुपायवित्।
ततः शीघ्रतरं प्रायात् पाण्डवः सैन्धवं प्रति। विवर्त्तमाने तिग्मांशौ हृष्टैः पीतोदकैर्हयैः।
तं प्रयान्तं महाबाहुं सर्व्वशस्त्रभृताम्वरं। नाशक्नुवन् वारयितुं योधाः क्रुद्धमिवान्तकं। ३०५५
विद्राव्य तु ततः सैन्यं पाण्डवः शत्रुतापनः। यथा मृगगणान् सिंहः सैन्धवार्थे व्यलोडयत्।
गाहमानस्त्वनीकानि तूर्णमश्वानचोदयत्। बलाकाभन्तु दाशार्हः पाञ्चजन्यं व्यनादयत्।
कौन्तेयेनाग्रतः सृष्टा न्यपतन् पृष्ठतः शराः। तूर्णात्तूर्णतरं ह्यश्वाः प्राद्रवन्वातरंहसः।
ततो नृपतयः क्रुद्धाः परिवव्रुर्धनञ्जयं। क्षत्रिया बहवश्चान्ये जयद्रथवधैषिणं।
सैन्येषु विप्रयातेषु धिष्ठितं पुरुषर्षभं। दुर्य्योधनोऽन्वयात् पार्थं त्वरमाणो महाहवे। ३०६०
वातोद्धूतपताकन्तं रथं जलदनिस्वनं। घोरं कपिध्वजं दृष्ट्वा विषण्णा बहवोऽभवन्।

दिवाकरेऽथ रजसा सर्व्वतः संवृते भृशं । शरार्त्ताश्च रणे योधाः शेकुः कृष्णौ न वीक्षितुं ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सैन्यविस्मये शततमोऽध्यायः ॥ १०० ॥

॥ सञ्जय उवाच ॥ संसक्त इव राजानस्तावकानां भयान्नृप । तौ दृष्ट्वा समतिक्रान्तौ वासुदेवधनञ्जयौ ।
सर्व्वे तु प्रतिसंरब्धा ह्रीमन्तः सत्त्वचोदिताः । स्थिरीभूता महात्मानः प्रत्यगच्छन्धनञ्जयं ।
ये गताः पाण्डवं युद्धे रोषामर्षसमन्विताः । तेऽद्यापि न निवर्त्तन्ते सिन्धवः सागरादिव । ३०९५
असन्तस्तु न्यवर्त्तन्त वेदेभ्य इव नास्तिकाः । नरकं भजमानास्ते प्रत्यपद्यन्त किल्विषं ।
तावतीत्य रथानीकं विमुक्तौ पुरुषर्षभौ । ददृशाते यथा राहोरास्यान्मुक्तौ प्रभाकरौ ।
मत्स्याविव महाजालं विदार्य्य विगतक्लमौ । तथा कृष्णावदृश्येतां सेनाजालं विदार्य्य तत् ।
विमुक्तौ शस्त्रसम्बाधाद्द्रोणानीकात् सुदुर्भिदात् । अदृश्येतां महात्मानौ कालसूर्य्याविवोदितौ ।
अस्त्रसम्बाधनिर्मुक्तौ विमुक्तौ शस्त्रसङ्कटात् । अदृश्येतां महात्मानौ शत्रुसम्बाधकारिणौ । ३१००
विमुक्तौ ज्वलनस्पर्शान्मकरास्याज्झषाविव । व्यक्षोभयेतां सेनां तौ समुद्रं मकराविव ।
तावकास्तव पुत्राश्च द्रोणानीकस्थयोस्तयोः । नैतौ तरिष्यतो द्रोणमिति चक्रुस्तदा मतिं ।
तौ तु दृष्ट्वा व्यतिक्रान्तौ द्रोणानीकं महाद्युती । नाशंसुर्वै महाराज सिन्धुराजस्य जीवितं ।
आशा बलवती राजन् सिन्धुराजस्य जीविते । द्रोणहार्द्दिक्ययोः कृष्णौ न मोक्ष्येते इति प्रभो ।
तामाशां विफलीकृत्य सन्तीर्णौ तौ परन्तपौ । द्रोणानीकं महाराज भोजानीकञ्च दुस्तरं । ३१०५
अथ दृष्ट्वा व्यतिक्रान्तौ ज्वलिताविव पावकौ । निराशाः सिन्धुराजस्य जीवितं नाशशंसिरे ।
मिथश्च समभाषेतामभीतौ भयवर्द्धनौ । जयद्रथवधे वाचस्तास्ताः कृष्णधनञ्जयौ ।
असौ मध्ये कृतः षड्भिर्धार्त्तराष्ट्रैर्महारथैः । चक्षुर्विषयसम्प्राप्तो न मे मोक्ष्यति सैन्धवः ।
यद्यस्य समरे गोप्ता शक्रो देवगणैः सह । तथाऽप्येनं निहंस्याव इति कृष्णावभाषतां ।
इति कृष्णौ महाबाहू मिथः कथयतां तदा । सिन्धुराजमवेक्षन्तौ तत्पुत्रा बहु चुक्रुशुः । ३११०
अतीत्य मरुधन्वानं तृषितौ त्वरितौ गजौ । पीत्वा वारि समाश्वस्तौ तथैवास्तामरिन्दमौ ।
व्याघ्रसिंहगजाकीर्णानतिक्रम्य च पर्व्वतान् । वणिजाविव दृश्येतां हीनमृत्युजरातिगौ ।
तथाहि मुखवर्णोऽयमनयोरिति मेनिरे । तावका वीक्ष्य मुक्तौ तौ विक्रोशन्ति स्म सर्व्वतः ।
द्रोणादाशीविषाकाराज्ज्वलितादिव पावकात् । अन्येभ्यः पार्थिवेभ्यश्च भास्वन्ताविव भास्करौ ।
विमुक्तौ सागरप्रख्याद्द्रोणानीकादरिन्दमौ । अदृश्येतां मुदा युक्तौ समुत्तीर्य्यार्णवं यथा । ३११५
शस्त्रौघान्महतो मुक्तौ द्रोणहार्द्दिक्यरक्षितान् । रोचमानावदृश्येतामिन्द्राग्न्योः सदृशौ रणे ।
उद्भिन्नरुधिरौ कृष्णौ भारद्वाजस्य सायकैः । शितैश्चितौ व्यरोचेतां कर्णिकारैरिवाचलौ ।
द्रोणग्राहह्रदान्मुक्तौ शक्त्याशीविषसङ्कटात् । अयःशरोग्रमकरात्क्षत्रियप्रवराम्भसः ।
ज्याघोषतलनिर्ह्रादाद्गदानिस्त्रिंशविद्युतः । द्रोणास्त्रमेघान्निर्मुक्तौ सूर्य्येन्दू तिमिरादिव ।

याडुभ्यामिव संतीर्णौ सिन्धुषष्ठाः समुद्रगाः। तपान्ते सरितः पूर्णा महाग्राहसमाकुलाः। ३७९०
इति कृष्णौ महेष्वासौ यशसा लोकविश्रुतौ। सर्व्वभूतान्यमन्यन्त द्रोणास्त्रबलविस्मयात्।
जयद्रथं समीपस्थमवेक्षन्तौ जिघांसया। रुरुं निपाते लिप्सन्तौ व्याघ्रवत्तावतिष्ठताम्।
यथा हि मुखवर्णोऽयमनयोरिति मेनिरे। तव योधा महाराज हतमेव जयद्रथम्।
लोहिताक्षौ महाबाहू संयुक्तौ कृष्णपाण्डवौ। सिन्धुराजमभिप्रेक्ष्य हृष्टौ व्यनदतां मुहुः।
शौरेरभीषुहस्तस्य पार्थस्य च धनुष्मतः। तयोरासीत्प्रभा राजन् सूर्य्यपावकयोरिव। ३७९५
हर्ष एव तयोरासीद्द्रोणानीकप्रमुक्तयोः। समीपे सैन्धवं दृष्ट्वा श्येनयोरामिषं यथा।
तौ तु सैन्धवमालोक्य वर्त्तमानमिवान्तिके। सहसा पेततुः क्रुद्धौ क्षिप्रं श्येनाविवामिषम्।
तौ तु दृष्ट्वा व्यतिक्रान्तौ हृषीकेशधनञ्जयौ। सिन्धुराजस्य रक्षार्थं पराक्रान्तः सुतस्तव।
द्रोणेनाबद्धकवचो राजा दुर्य्योधनस्तदा। ययावेकरथेनाजौ हयसंस्कारवित्प्रभो।
कृष्णपार्थौ महेष्वासौ व्यतिक्रम्याथ ते सुतः। अग्रतः पुण्डरीकाक्षं प्रतीयाय नराधिपः। ३८००
ततः सर्व्वेषु सैन्येषु वादित्राणि प्रहृष्टवत्। प्रावाद्यन्त व्यतिक्रान्ते तव पुत्त्रे धनञ्जये।
सिंहनादरवाश्चासन् शङ्खशब्दविमिश्रिताः। दृष्ट्वा दुर्य्योधनं तत्र कृष्णयोः प्रमुखे स्थितम्।
ये च ते सिन्धुराजस्य गोप्तारः पावकोपमाः। तेऽप्यहृष्यन्त समरे दृष्ट्वा पुत्त्रं तव प्रभो।
दृष्ट्वा दुर्य्योधनं कृष्णो व्यतिक्रान्तं सहानुगम्। अब्रवीदर्जुनं राजन् प्राप्तकालमिदं वचः।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि दुर्य्योधनागमने एकाधिकशततोऽध्यायः॥ १०१ ॥
॥ वासुदेव उवाच ॥ सुयोधनमतिक्रान्तमेनं पश्य धनञ्जय। अत्यद्भुतमिमं मन्ये नास्त्यस्य सदृशो रथः। ३८०५
दूरपाती महेष्वासः कृतास्त्रो युद्धदुर्म्मदः। दृढास्त्रश्चित्रयोधी च धार्त्तराष्ट्रो महाबलः।
अत्यन्तसुखसंवृद्धो मानितश्च महारथैः। कृती च सततं पार्थ नित्यं द्वेष्टि च पाण्डवान्।
तेन युद्धमिमं मन्ये प्राप्तकालं तवानघ। अत्र वा द्यूतमायत्तं विजयायेतराय च।
अत्र क्रोधविषं पार्थ विमुञ्च चिरसम्भृतम्। एष मूलमनर्थानां पाण्डवानां महारथः।
सोऽयं प्राप्तस्तवाक्षेपे पश्य साफल्यमात्मनः। कथं हि राजा राज्यार्थी त्वया गच्छेत संयुगम्। ३८१०
दिष्ट्या त्विदानीं संप्राप्त एष ते बाणगोचरम्। यथाऽयं जीवितं जह्यात्तथा कुरु धनञ्जय।
ऐश्वर्य्यमदसंमूढो नैष दुःखमुपेयिवान्। न च ते संयुगे वीर्य्यं जानाति पुरुषर्षभ।
त्वां हि लोकास्त्रयः पार्थ ससुरासुरमानुषाः। नोत्सहन्ते रणे जेतुं किमुतैकः सुयोधनः।
स दिष्ट्या समनुप्राप्तस्तव पार्थ रथान्तिकम्। जह्येनं त्वं महाबाहो यथा वृत्रं पुरन्दरः।
एष ह्यनर्थे सततं पराक्रान्तस्तवानघ। निकृत्या धर्म्मराजञ्च द्यूते वञ्चितवानयम्। ३८१५
बहूनि सुनृशंसानि कृतान्येतेन मानद। युष्मासु पापमतिना ह्यपापेष्वेव नित्यदा।
तमनार्य्यं सदा क्रुद्धं पुरुषं कामरूपिणम्। आर्य्यां युद्धे मतिं कृत्वा जहि पार्थाविचारयन्।
निकृत्या राज्यहरणं वनवासञ्च पाण्डव। परिक्लेशञ्च कृष्णाया हृदि कृत्वा पराक्रम।

दिष्ट्यैष तव बाणानां गोचरे परिवर्त्तते। प्रतिघाताय कार्य्यस्य दिष्ट्या च यततेऽयतः।
दिष्ट्या जानाति सङ्ग्रामे योद्धव्यं हि त्वया सह। दिष्ट्या च सफलाः पार्थ सर्व्वे कामा ह्यकामिताः। ३८२०
तस्माज्जहि रणे पार्थ धार्त्तराष्ट्रं कुलाधमं। यथेन्द्रेण हतः पूर्व्वं जम्भो देवासुरे मृधे।
अस्मिन् हते त्वया सैन्यमनाथं भिद्यतामिदं। वैरस्यास्यास्त्ववभृथो मूलं छिन्धि दुरात्मनां।
॥ सञ्जय उवाच ॥ तं तथेत्यब्रवीत्पार्थः कृत्यरूपमिदं मम। सर्व्वमन्यदनादृत्य गच्छ यत्र सुयोधनः।
येनैतद्दीर्घकालं नो भुक्तं राज्यमकण्टकं। अप्यस्य युधि विक्रम्य छिन्द्यां मूर्द्धानमाहवे।
अपि तस्याप्यनर्हायाः परिक्लेशस्य माधव। कृष्णायाः शक्नुयां गन्तुं पदं केशप्रधर्षणे। ३८२५
इत्येवं वादिनौ कृष्णौ हृष्टौ श्वेतान् हयोत्तमान्। प्रेषयामासतुः सङ्ख्ये प्रेप्सन्तौ तं नराधिपं।
तयोः समीपं सम्प्राप्य पुत्त्रस्ते भरतर्षभ। न चकार भयं प्राप्ते भये महति मारिष।
तदस्य क्षत्रियास्तस्य सर्व्व एवाभ्यपूजयन्। यदर्ज्जुनहृषीकेशौ प्रत्युद्यातो न्यवारयत्।
ततः सर्व्वस्य सैन्यस्य तावकस्य विशाम्पते। महानादो ह्यभूत्तत्र दृष्ट्वा राजानमाहवे।
तस्मिन् जनसमुन्नादे प्रवृत्ते भैरवे सति। कदर्थीकृत्य ते पुत्त्रः प्रतिमित्रमवारयत्। ३८३०
आवारितस्तु कौन्तेयस्तव पुत्त्रेण धन्विना। संरम्भमगमद्भूयः स च तस्मिन्परन्तपः।
तौ दृष्ट्वा प्रतिसंरब्धौ दुर्य्योधनधनञ्जयौ। अभ्यवैक्षन्त राजानो भीमरूपाः समन्ततः।
दृष्ट्वा तु पार्थं संरब्धं वासुदेवञ्च मारिष। प्रहसन्निव पुत्त्रस्ते योद्धुकामः समाह्वयत्।
ततः प्रहृष्टो दाशार्हः पाण्डवश्च धनञ्जयः। व्यक्रोशेतां महानादं दध्मतुश्चाम्बुजोत्तमौ।
तौ हृष्टरूपौ संप्रेक्ष्य कौरवेयास्तु सर्व्वशः। निराशाः समपद्यन्त पुत्त्रस्य तव जीविते। ३८३५
शोकमापुः परे चैव कुरवः सर्व्व एव ते। अमन्यन्त च पुत्त्रं ते वैश्वानरमुखे हुतं।
तथा तु दृष्ट्वा योधास्ते प्रहृष्टौ कृष्णपाण्डवौ। हतो राजा हतो राजेत्यूचिरे च भयार्दिताः।
जनस्य सन्निनादन्तु श्रुत्वा दुर्य्योधनोऽब्रवीत्। व्येतु वो भीरहं कृष्णौ प्रेषयिष्यामि मृत्यवे।
इत्युक्त्वा सैनिकान् सर्व्वान् जयापेक्षी नराधिपः। पार्थमाभाष्य संरम्भादिदं वचनमब्रवीत्।
पार्थ यत्शिक्षितं तेऽस्त्रं दिव्यं पार्थिवमेव च। तद्दर्शय मयि क्षिप्रं यदि जातोऽसि पाण्डुना। ३८४०
यद्बलं तव वीर्य्यञ्च केशवस्य तथैव च। तत्कुरुष्व मयि क्षिप्रं पश्यामस्तव पौरुषं।
अस्मत्परोक्षं कर्म्माणि कृतानि प्रवदन्ति ते। स्वामिसत्कारयुक्तानि यानि तानीह दर्शय।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि दुर्य्योधनदम्भवाक्ये द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥
॥ सञ्जय उवाच ॥ एवमुक्त्वार्ज्जुनं राजा त्रिभिर्म्मर्मातिगैः शरैः। अभ्यविध्यन्महावेगैश्चतुर्भिश्चतुरो हयान्।
वासुदेवञ्च दशभिः प्रत्यविध्यत्स्तनान्तरे। प्रतोदं चास्य भल्लेन छित्त्वा भूमावपातयत्।
तञ्चतुर्दशभिः पार्थश्चित्रपुङ्खैः शिलाशितैः। अविध्यत्तूर्णमव्यग्रस्ते चाभ्रश्यन्त वर्म्मणि। ३८४५
तेषां नैष्फल्यमालोक्य पुनर्नव च पञ्च च। प्राहिणोन्निशितान्बाणान् ते चाभ्रश्यन्त वर्म्मणः।
अष्टाविंशत्तु तान्बाणानस्तान्विप्रेक्ष्य निष्फलान्। अब्रवीत्परवीरघ्नः कृष्णोऽर्ज्जुनमिदं वचः।

अदृष्टपूर्व्वं पश्यामि शिलानामिव सर्पणं । त्वया सम्प्रेरिताः पार्थ नार्थं कुर्व्वन्ति पत्रिणः ।
कच्चिद्गाण्डीवतः प्राणस्तथैव भरतर्षभ । मुष्टिश्च ते यथा पूर्व्वं भुजयोश्च बलं तव ।
नवा कच्चिदयं कालः प्राप्तः स्यादद्य पश्चिमः । तव चैवास्य शत्रोश्च तन्ममाचक्ष्व पृच्छतः । १८१०
विस्मयो मे महान्पार्थ तव दृष्ट्वा शरानिमान् । व्यर्थान् निपतितान् दृष्ट्वा दुर्य्योधनरथं प्रति ।
वज्राशनिसमा घोराः परकायावभेदिनः । शराः कुर्व्वन्ति ते नार्थं पार्थ काऽद्य विडम्बना ।
॥अर्ज्जुन उवाच॥ द्रोणेनैषा मतिः कृष्ण धार्त्तराष्ट्रे निवेशिता । अभेद्या हि ममास्त्राणामेषा कवचधारणा ।
अस्मिन्नन्तर्हितं कृष्ण त्रैलोक्यमपि वर्म्मणि । एको द्रोणो हि वेदैतदहं तस्माच्च सत्तमात् ।
न शक्यमेतत् कवचं वाणैर्भेत्तुं कथञ्चन । अपि वज्रेण गोविन्द स्वयं मघवता युधि । १८१५
जानंस्त्वमपि वै कृष्ण मां विमोहयसे कथं । यद्वृत्तं त्रिषु लोकेषु यच्च केशव वर्त्तते ।
तथा भविष्यच्च तत् सर्व्वं विदितं तव । नत्विदं वेद वै कश्चित् यथा त्वं मधुसूदन ।
एष दुर्य्योधनः कृष्ण द्रोणेन विहितामिमां । तिष्ठत्यभीतवत् संख्ये विभ्रत् कवचधारणां ।
यत्त्वत्र विहितं कार्य्यं नैष तद्वेत्ति माधव । स्त्रीवदेष बिभर्त्त्येतां युक्तां कवचधारणां ।
पश्य बाह्वोश्च मे वीर्य्यं धनुषश्च जनार्दन । पराजयिष्ये कौरव्यं कवचेनापि रक्षितं । १८२०
इदमङ्गिरसे प्रादाद्देवेशो वर्म्म भास्वरं । तथा बृहस्पतिः प्राप ततः प्राप पुरन्दरः ।
पुनर्ददौ सुरपतिर्मह्यं वर्म्म ससंग्रहं । दैवं यद्यस्य वर्म्मैतद्ब्रह्मणा वा स्वयं कृतं ।
नैनं गोप्स्यति दुर्बुद्धिमद्य वाणहतं मया ।
॥ सञ्जय उवाच ॥ एवमुक्त्वार्ज्जुनो वाणानभिमन्त्र्य व्यकर्षयत् । विकृष्यमाणांस्तेनैव धनुर्म्मध्यगतान् शरान् ।
तानस्यास्त्रेण चिच्छेद द्रौणिः सर्व्वास्त्रघातिना । तान्निकृत्तानिषून् दृष्ट्वा दूरतो ब्रह्मवादिना । १८२५
न्यवेदयत् केशवाय विस्मितः श्वेतवाहनः । नैतदस्त्रं मया शक्यं द्विः प्रयोक्तुं जनार्दन ।
अस्त्रं मामेव हन्याद्धि हन्याच्चापि बलं मम । ततो दुर्य्योधनः कृष्णौ नवभिर्नवभिः शरैः ।
अविध्यत रणे राजन् शरैराशीविषोपमैः । भूय एवाभ्यवर्षच्च समरे कृष्णपाण्डवौ ।
शरवर्षेण महता ततोऽहृष्यन्त तावकाः । चक्रुर्वादित्रनिनदान् सिंहनादरवांस्तथा ।
ततः क्रुद्धो रणे पार्थः सृक्किणी परिसंलिहन् । नापश्यच्च ततोऽस्याङ्गं यन्न स्याद्वर्म्मरक्षितं । १८३०
ततोऽस्य निशितैर्वाणैः सुमुक्तैरन्तकोपमैः । हयांश्चकार निर्देहानुभौ च पार्ष्णिसारथी ।
धनुरस्याच्छिनत्तूर्णं हस्तावापञ्च वीर्य्यवान् । रथञ्च शकलीकर्त्तुं सव्यसाची प्रचक्रमे ।
दुर्य्योधनञ्च वाणाभ्यां तीक्ष्णाभ्यां विरथीकृतं । अविध्यद्धस्ततलयोरुभयोरर्ज्जुनस्तथा ।
तं कृच्छ्रामापदं प्राप्तं दृष्ट्वा परमधन्विनं । समापेतुः परीप्सन्तो धनञ्जयशरार्द्दितं ।
तं रथैर्बहुसाहस्रैः कल्पितैः कुञ्जरैर्हयैः । पदात्योघैश्च संरब्धैः परिवव्रुर्धनञ्जयं । १८३५
अथ नार्ज्जुनगोविन्दौ न रथो वा व्यदृश्यत । अस्त्रवर्षेण महता जनौघेनापि चाहतौ ।
ततोऽर्ज्जुनोऽस्त्रवीर्य्येण निजघ्ने तां वरूथिनीं । तत्र व्यङ्गीकृताः पेतुः शतशोऽथ रथद्विपाः ।

ते हता हन्यमानाश्च न्यवर्त्तन्त रथोत्तमं । स रथस्तम्भितस्तस्थौ क्रोशमात्रे समन्ततः ।
ततोऽर्ज्जुनं वृष्णिवीरस्त्वरितो वाक्यमब्रवीत् । धनुर्व्विस्फारयात्यर्थमहं ध्मास्यामि चाम्बुजं ।
ततो विस्फार्य्य बलवत् गाण्डीवं जघ्निवान् रिपून् । महता शरवर्षेण तलशब्देन चार्ज्जुनः । ३८८०
पाञ्चजन्यञ्च बलवान्दध्मौ तारेण केशवः । रजसा ध्वस्तपक्ष्मान्तः प्रस्विन्नवदनो भृशं ।
तस्य शङ्खस्य नादेन धनुषो निस्वनेन च । निःसत्त्वाश्च ससत्त्वाश्च क्षितौ पेतुस्तदा जनाः ।
तैर्व्विमुक्तो रथो रेजे वाय्वीरित इवाम्बुदः । जयद्रथस्य गोप्तारस्ततो वै क्रुद्धाः सहानुगाः ।
ते दृष्ट्वा सहसा पार्थं गोप्तारः सैन्धवस्य तु । चक्रुर्नादान् महेष्वासाः कम्पयन्तो वसुन्धरां ।
बाणशब्दरवांश्चोग्रान् विमिश्राञ्छङ्खनिस्वनैः । प्रादुश्चक्रुर्महात्मानः सिंहनादरवानपि । ३८८५
तं श्रुत्वा निनदं घोरं तावकानां समुत्थितं । प्रदध्मतुः शङ्खवरौ वासुदेवधनञ्जयौ ।
तेन शब्देन महता पूरितेव वसुन्धरा । सशैला सार्णवद्वीपा सपाताला विशाम्पते ।
स शब्दो भरतश्रेष्ठ व्याप्य सर्व्वा दिशो दश । प्रतिसस्वान तत्रैव कुरुपाण्डवयोर्बले ।
तावका रथिनस्तत्र दृष्ट्वा कृष्णधनञ्जयौ । सम्भ्रमं परमं प्राप्तास्त्वरमाणा महारथाः ।
अथ कृष्णौ महाभागौ तावका वीक्ष्य दंशितौ । अभ्यद्रवन्त संक्रुद्धास्तदद्भुतमिवाभवत् । ३८९०
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि दुर्य्योधनपराजये त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
॥ सञ्जय उवाच ॥ तावका हि समीक्ष्यैव वृष्ण्यन्धककुरूत्तमौ । प्रागत्वरन् जिघांसन्तस्तथैव विजयः परान् ।
सुवर्णचित्रैर्व्वैयाघ्रैः स्वनवद्भिर्महारथैः । दीपयन्तो दिशः सर्व्वा ज्वलद्भिरिव पावकैः ।
रुक्मपृष्ठैश्च दुष्प्रेक्ष्यैः कार्म्मुकैः पृथिवीपते । कूजद्भिरतुलान्नादान् कोपितैस्तुरगैरिव ।
भूरिश्रवाः शलः कर्णो वृषसेनो जयद्रथः । कृपश्च मद्रराजश्च द्रौणिश्च रथिनाम्वरः ।
ते पिबन्त इवाकाशमश्वैरष्टौ महारथाः । व्यराजयन् दश दिशो वैयाघ्रैर्हेमचन्द्रकैः । ३८९५
ते दंशिताः सुसंरब्धा रथैर्मेघौघनिस्वनैः । समावृण्वन् दश दिशः पार्थस्य निशितैः शरैः ।
कौलूताश्च हया चित्रा वहन्तस्तान् महारथान् । व्यशोभन्त तदा शीघ्रा दीपयन्तो दिशो दश ।
आजानेयैर्महावेगैर्नानादेशसमुत्थितैः । पार्व्वतीयैर्नदीजैश्च सैन्धवैश्च हयोत्तमैः ।
कुरुयोधवरा राजंस्तव पुत्रं परीप्सवः । धनञ्जयरथं शीघ्रं सर्व्वतः समुपाद्रवन् ।
ते प्रगृह्य महाशङ्खान् दध्मुः पुरुषसत्तमाः । पूरयन्तो दिवं राजन् पृथिवीञ्च ससागरां । ३९००
तथैव दध्मतुः शङ्खौ वासुदेवधनञ्जयौ । प्रवरौ सर्व्वदेवानां सर्व्वशङ्खवरौ भुवि ।
देवदत्तञ्च कौन्तेयः पाञ्चजन्यञ्च केशवः । शब्दस्तु देवदत्तस्य धनञ्जयसमीरितः ।
पृथिवीञ्चान्तरीक्षञ्च दिशश्चैव समावृणोत् । तथैव पाञ्चजन्योऽपि वासुदेवसमीरितः ।
सर्व्वशब्दानतिक्रम्य पूरयामास रोदसी । तस्मिंस्तथा वर्त्तमाने दारुणे नादसङ्कुले ।
भीरूणां त्रासजनने शूराणां हर्षवर्द्धने । प्रवादितासु भेरीषु झर्झरेष्वानकेषु च । ३९०५
मृदङ्गेष्वपि राजेन्द्र वाद्यमानेष्वनेकशः । महारथाः समाहूता दुर्य्योधनहितैषिणः ।

अभ्यर्द्यमाणास्तं शब्दं क्रुद्धाः परमधन्विनः । नानादेश्या महीपालाः स्वसैन्यपरिरक्षिणः ।
अमर्षिता महाशङ्खान् दध्मुर्वीरा महारथाः । कृते प्रतिकरिष्यन्तः केशवस्यार्ज्जुनस्य च ।
बभूव तव तत्सैन्यं शङ्खशब्दसमीरितं । उद्विग्नरथनागाश्वमस्वस्थमिव वा विभो ।
तत्प्रविद्धमिवाकाशं शूरैः शङ्खनिनादितं । बभूव भृशमुद्विग्नं निर्घातैरिव नादितं । ३९९०
स शब्दः सुमहान् राजन् दिशः सर्व्वा व्यनादयत् । त्रासयामास तत्सैन्यं युगान्त इव सम्भृतः ।
ततो दुर्य्योधनोऽष्टौ च राजानस्ते महारथाः । जयद्रथस्य रक्षार्थं पाण्डवं पर्य्यवारयन् ।
ततो द्रौणिस्त्रिसप्तत्या वासुदेवमताडयत् । अर्ज्जुनञ्च त्रिभिर्भल्लैर्ध्वजमश्वांश्च पञ्चभिः ।
तमर्ज्जुनः पृषत्कानां शतैः षड्भिरताडयत् । अत्यर्थमिव संक्रुद्धः प्रतिविद्धे जनार्द्दने ।
कर्णं च दशभिर्व्विद्धा वृषसेनं त्रिभिस्तथा । शल्यस्य समरे चापं मुष्टौ चिच्छेद वीर्य्यवान् । ३९९५
गृहीत्वा धनुरन्यत्तु शल्यो विव्याध पाण्डवं । भूरिश्रवास्त्रिभिर्ब्बाणैर्हेमपुङ्खैः शिलाशितैः ।
कर्णो द्वात्रिंशता चैव वृषसेनश्च सप्तभिः । जयद्रथस्त्रिसप्तत्या कृपश्च दशभिः शरैः ।
मद्रराजश्च दशभिर्व्विव्यधुः फाल्गुनं रणे । ततः शराणां षष्ट्या तु द्रौणिः पार्थमवाकिरत् ।
वासुदेवञ्च विंशत्या पुनः पार्थञ्च पञ्चभिः । प्रहसंस्तु नरव्याघ्रः श्वेताश्वः कृष्णसारथिः ।
प्रत्यविध्यत् स तान् सर्व्वान् दर्शयन् पाणिलाघवं । कर्णं द्वादशभिर्व्विद्धा वृषसेनं त्रिभिः शरैः । ४०००
शल्यस्य समरे चापं मुष्टिदेशे न्यकृन्तत । सौमदत्तिं त्रिभिर्व्विद्धा शल्यञ्च दशभिः शरैः ।
शितैरग्निशिखाकारैर्द्रौणिं विव्याध चाष्टभिः । गौतमं पञ्चविंशत्या सैन्धवञ्च शतेन च ।
पुनर्द्रौणिञ्च सप्तत्या शराणां सोऽभ्यताडयत् । भूरिश्रवास्तु संक्रुद्धः प्रतोदं चिच्छिदे हरेः ।
अर्ज्जुनञ्च त्रिसप्तत्या बाणानामाजघान ह । ततः शरशतैस्तीक्ष्णैस्तानरीन् श्वेतवाहनः ।
प्रत्यषेधद्द्रुतं क्रुद्धो महावातो घनानिव । ४००५

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सङ्कुलयुद्धे चतुरधिकशतोऽध्यायः ॥ १०४ ॥

॥ धृतराष्ट्र उवाच ॥ ध्वजान् बहुविधाकारान् भ्राजमानानतिश्रिया । पार्थानां मामकानाञ्च तान् ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ ध्वजान् बहुविधाकारान् शृणु तेषां महात्मनां । रूपतो वर्णतश्चैव नामतश्च निबोध मे ।
तेषान्तु रथमुख्यानां रथेषु विविधा ध्वजाः । प्रत्यदृश्यन्त राजेन्द्र ज्वलिता इव पावकाः ।
काञ्चनाः काञ्चनापीडाः काञ्चनस्रगलङ्कृताः । काञ्चनानीव शृङ्गाणि काञ्चनस्य महागिरेः ।
अनेकवर्णा विविधा ध्वजाः परमशोभनाः । ते ध्वजाः संवृतास्तेषां पताकाभिः समन्ततः । ४०१०
नानावर्णविरागाभिः शुशुभुः सर्व्वतो वृताः । पताकाश्च ततस्तास्तु श्वसनेन समीरिताः ।
नृत्यमाना व्यदृश्यन्त रङ्गमध्ये विलासिकाः । इन्द्रायुधसवर्णाभाः पताका भरतर्षभ ।
दोधूयमाना रथिनां शोभयन्ति महारथान् । सिंहलाङ्गूलमुग्रास्यं ध्वजं वानरलक्षणं ।
धनञ्जयस्य सङ्ग्रामे प्रत्यदृश्यत भैरवं । स वानरवरो राजन् पताकाभिरलङ्कृतः ।
त्रासयामास तत्सैन्यं ध्वजो गाण्डीवधन्वनः । तथैव सिंहलाङ्गूलं द्रोणपुत्रस्य भारत । ४०१५

॥ धृतराष्ट्र उवाच ॥ अर्ज्जुने सैन्धवं प्राप्ते भारद्वाजेच सम्वृताः । पाञ्चालाः कुरुभिः सार्द्धं किमकुर्व्वत सञ्जय । ४९६५

॥ सञ्जय उवाच ॥ अपराह्णे महाराज सङ्ग्रामे लोमहर्षणे । पाञ्चालानां कुरूणाञ्च द्रोणे द्यूतमवर्त्तत ।

पाञ्चाला हि जिघांसन्तो द्रोणं संहृष्टचेतसः । अभ्यमुञ्चन्त गर्जन्तः शरवर्षाणि मारिष ।

ततस्तु तुमुलस्तेषां सङ्ग्रामोऽवर्त्ततात्भुतः । पाञ्चालानां कुरूणाञ्च घोरो देवासुरोपमः ।

सर्व्वे द्रोणरथं प्राप्य पाञ्चालाः पाण्डवैः सह । तदनीकं बिभित्सन्तो महास्त्राणि व्यदर्शयन् ।

द्रोणस्य रथपर्य्यन्तं रथिनो रथमास्थिताः । कम्पयन्तोऽभ्यवर्षन्त वेगमास्थाय मध्यमं । ४९७०

तमभ्ययाद्बृहत्क्षत्त्रः कैकयानां महारथः । प्रवपन्निशितान् वाणान्महेन्द्राशनिसन्निभान् ।

तन्तु प्रत्युद्ययौ शीघ्रं क्षेमधूर्त्तिर्म्महायशाः । विमुञ्चन्निशितान् वाणान् शतशोऽथ सहस्रशः ।

धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः । त्वरितोऽभ्यद्रवत्तूर्णं महेन्द्र इव शम्बरं ।

तमापतन्तं सहसा व्यादितास्यमिवान्तकं । बीरधन्वा महेष्वासस्त्वरमाणः समभ्ययात् ।

युधिष्ठिरं महाराजं जिगीषुं समवस्थितं । सहानीकं ततो द्रोणो न्यवारयत बीर्य्यवान् । ४९७५

नकुलं कुशलं युद्धे पराक्रान्तं पराक्रमी । अभ्यगच्छत् समायान्तं विकर्णस्ते सुतः प्रभो ।

सहदेवं तथायान्तं दुर्म्मुखः शत्रुकर्षणः । शरैरनेकसाहस्रैः समवाकिरदाशुगैः ।

सात्यकिन्तु नरव्याघ्रं व्याघ्रदत्तस्त्ववारयत् । शरैः सुनिशितैस्तीक्ष्णैः कम्पयन् वै मुहुर्मुहुः ।

द्रौपदेयान्नरव्याघ्रान्मुञ्चतः सायकोत्तमान् । संरब्धान्रथिनः श्रेष्ठान् सौमदत्तिरवारयत् ।

भीमसेनं तदा क्रुद्धं भीमरूपो भयानकः । प्रत्यवारयदायान्तमार्ष्यशृङ्गिर्महारथः । ४९८०

तयोः समभवद्युद्धं नरराक्षसयोर्म्मृधे । यादृगेव पुरा वृत्तं रामरावणयोर्नृप ।

ततो युधिष्ठिरो द्रोणं नवत्या नतपर्व्वणां । आजघ्ने भरतश्रेष्ठः सर्व्वमर्म्मसु भारत ।

तं द्रोणः पञ्चविंशत्या निजघान स्तनान्तरे । रोषितो भरतश्रेष्ठ कौन्तेयेन यशस्विना ।

भूय एव तु विंशत्या सायकानां समाचिनोत् । साश्वसूतध्वजं द्रोणः पश्यतां सर्व्वधन्विनां ।

तान् शरान् द्रोणमुक्तांस्तु शरवर्षेण पाण्डवः । अवारयत धर्म्मात्मा दर्शयन् पाणिलाघवं । ४९८५

ततो द्रोणो भृशं क्रुद्धो धर्म्मराजस्य संयुगे । चिच्छेद समरे धन्वी धनुस्तस्य महात्मनः ।

अथैनं छिन्नधन्वानं त्वरमाणो महारथः । शरैरनेकसाहस्रैः पूरयामास सर्व्वतः ।

अदृश्यं वीक्ष्य राजानं भारद्वाजस्य सायकैः । सर्व्वभूतान्यमन्यन्त हतमेव युधिष्ठिरं ।

केचिच्चैनममन्यन्त तथैव विमुखीकृतं । ततो राजेति राजेन्द्र ब्राह्मणेन महात्मना ।

स कृच्छ्रं परमं प्राप्तो धर्म्मराजो युधिष्ठिरः । त्यक्त्वा तत्कार्म्मुकं छिन्नं भारद्वाजेन संयुगे । ४९९०

आददेऽन्यद्धनुर्द्दिव्यं भास्वरं वेगवत्तरं । ततस्तान् सायकांस्तत्र द्रोणमुक्तान् सहस्रशः ।

चिच्छेद समरे बीरस्तदद्भुतमिवाभवत् । छित्वा तु ताञ्छरान्राजन् क्रोधसंरक्तलोचनः ।

शक्तिं जग्राह समरे गिरीणामपि दारिणीं । स्वर्णदण्डां महाघोरामष्टघण्टां भयावहां ।

समुत्क्षिप्य च तां हृष्टो ननाद बलवद्बली । नादेन सर्व्वभूतानि त्रासयन्निव भारत ।

शक्तिं समुद्यतां दृष्ट्वा धर्म्मराजेन संयुगे । स्वस्ति द्रोणाय सहसा सर्व्वभूतान्यथाब्रुवन् । ३९९९
सा राजभुजनिर्मुक्ता निर्मुक्तोरगसन्निभा । प्रज्वालयन्ती गगनं दिशः सप्रदिशस्तथा ।
द्रोणान्तिकमनुप्राप्ता दीप्तास्या पन्नगी यथा । तामापतन्तीं सहसा दृष्ट्वा द्रोणो विशाम्पते ।
प्रादुश्चक्रे ततो ब्राह्ममस्त्रमस्त्रविदाम्बरः । तदस्त्रं भस्मसात्कृत्वा तां शक्तिं घोरदर्शनां ।
जगाम स्यन्दनं तूर्णं पाण्डवस्य यशस्विनः । ततो युधिष्ठिरो राजा द्रोणास्त्रं तत्समुद्यतं ।
अशामयन्महाप्राज्ञो ब्रह्मास्त्रेणैव मारिष । विद्ध्वा तञ्च रणे द्रोणं पञ्चभिर्नतपर्व्वभिः । ४०००
क्षुरप्रेण सुतीक्ष्णेन चिच्छेदास्य महद्धनुः । तदपास्य धनुश्छिन्नं द्रोणः क्षत्रियमर्द्दनः ।
गदां चिक्षेप सहसा धर्म्मपुत्राय मारिष । तामापतन्तीं सहसा गदां दृष्ट्वा युधिष्ठिरः ।
गदामेवाग्रहीत् क्रुद्धश्चिक्षेप च परन्तप । ते गदे सहसा मुक्ते समासाद्य परस्परं ।
सङ्घर्षात् पावकं मुक्त्वा समेयातां महीतले । ततो द्रोणो भृशं क्रुद्धो धर्म्मराजस्य मारिष ।
चतुर्भिर्निशितैस्तीक्ष्णैर्हयान् जघ्ने शरोत्तमैः । चिच्छेदैकेन भल्लेन धनुश्चेन्द्रध्वजोपमं । ४००५
केतुमेकेन चिच्छेद पाण्डवञ्चार्द्दयत्त्रिभिः । हताश्वात्तु रथात्तूर्णमवप्लुत्य युधिष्ठिरः ।
तस्थावूर्द्ध्वभुजो राजा व्यायुधो भरतर्षभ । विरथं तं समालोक्य व्यायुधञ्च विशेषतः ।
द्रोणो व्यमोहयच्छत्रून् सर्व्वसैन्यानि वा विभो । मुञ्चन्निषुगणांस्तीक्ष्णान् लघुहस्तो दृढव्रतः ।
अभिदुद्राव राजानं सिंहो मृगमिवोल्बणः । तमभिद्रुतमालोक्य द्रोणेनामित्रघातिना ।
हाहेति सहसा शब्दः पाण्डूनां समजायत । हृतो राजा हृतो राजा भारद्वाजेन मारिष । ४०१०
इत्यासीत्सुमहान् शब्दः पाण्डुसैन्यस्य भारत । ततस्त्वरितमारुह्य सहदेवरथं नृपः ।
अपायाज्जवनैरश्वैः कुन्तीपुत्रो युधिष्ठिरः ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि युधिष्ठिरापयाने षडधिकशततमोऽध्यायः ॥ १०६ ॥

॥ सञ्जय उवाच ॥ बृहत्क्षत्रमथायान्तं केकयं दृढविक्रमं । क्षेमधूर्त्तिर्महाराज विव्याधोरसि मार्गणैः ।
बृहत्क्षत्रस्तु तं राजा नवत्या नतपर्व्वणां । आजघ्ने त्वरितो राजन् द्रोणानीकं बिभित्सया ।
क्षेमधूर्त्तिस्तु संक्रुद्धः केकयस्य महात्मनः । धनुश्चिच्छेद भल्लेन पीतेन निशितेन ह । ४०१५
अथैनं छिन्नधन्वानं शरेणानतपर्व्वणा । विव्याध समरे तूर्णं प्रवरं सर्व्वधन्विनां ।
अथान्यद्धनुरादाय बृहत्क्षत्रो हसन्निव । व्यश्वसूतरथञ्चक्रे क्षेमधूर्त्तिं महारथं ।
ततोऽपरेण भल्लेन पीतेन निशितेन च । जहार नृपतेः कायात् शिरो ज्वलितकुण्डलं ।
तच्छिन्नं सहसा तस्य शिरः कुञ्चितमूर्द्धजं । सकिरीटं महीं प्राप्य बभौ ज्योतिरिवाम्बरात् ।
तं निहत्य रणे हृष्टो बृहत्क्षत्रो महारथः । सहसाऽभ्यपतत् सैन्यं तावकं पार्थकारणात् । ४०२०
धृष्टकेतुं तथायान्तं द्रोणहेतोः पराक्रमी । वीरधन्वा महेष्वासो वारयामास भारत ।
तौ परस्परमासाद्य शरदंष्ट्रौ तरस्विनौ । शरैरनेकसाहस्रैरन्योऽन्यमभिजघ्नतुः ।
तावुभौ नरशार्द्दूलौ युयुधाते परस्परं । महावने तीव्रमदौ वारणाविव यूथपौ ।

गिरिगह्वरमासाद्य शार्दूलाविव रोषितौ। युयुधाते महावीर्य्यौ परस्परजिघांसया।
तद्युद्धमासीत्तुमुलं प्रेक्षणीयं विशाम्पते। सिद्धचारणसङ्घानां विस्मयाद्भुतदर्शनं। ४०२५
वीरधन्वा ततः क्रुद्धो धृष्टकेतोः शरासनं। द्विधा चिच्छेद भल्लेन प्रहसन्निव भारत।
तदुत्सृज्य धनुश्छिन्नं चेदिराजो महारथः। शक्तिं जग्राह विपुलां हेमदण्डामयस्मयीं।
तान्तु शक्तिं महावीर्य्यां दोर्भ्यामायम्य भारत। चिक्षेप सहसा यत्तो वीरधन्वरथम्प्रति।
तया तु वीरघातिन्या शक्त्या त्वभिहतो भृशं। निर्भिन्नहृदयस्तूर्णं निपपात रथान्महीं।
तस्मिन् विनिहते वीरे त्रैगर्त्तानां महारथे। बलन्तेऽभज्यत विभो पाण्डवेयैः समन्ततः। ४०३०
सहदेवे ततः षष्टिं सायकान् दुर्मुखोऽक्षिपत्। ननाद च महानादं तर्जयन् पाण्डवं रणे।
माद्रेयस्तु ततः क्रुद्धो दुर्म्मुखञ्च शितैः शरैः। भ्राता भ्रातरमायान्तं विव्याध प्रहसन्निव।
तं रणे रभसं दृष्ट्वा सहदेवो महाबलं। दुर्म्मुखं नवभिर्व्वाणैस्ताडयामास भारत।
दुर्म्मुखस्य तु भल्लेन छित्वा केतुं महाबलः। जघान चतुरो वाहांश्चतुर्भिर्निशितैः शरैः।
अथापरेण भल्लेन पीतेन निशितेन ह। चिच्छेद सारथेः कायाच्छिरो ज्वलितकुण्डलं। ४०३५
क्षुरप्रेण च तीक्ष्णेन कौरवस्य महद्धनुः। सहदेवो रणे छित्वा तञ्च विव्याध पञ्चभिः।
हताश्वन्तु रथं त्यक्त्वा दुर्म्मुखो विमनास्तदा। आरुरोह रथं राजन्निरमित्रस्य भारत।
सहदेवस्ततः क्रुद्धो निरमित्रं महाहवे। जघान पृतनामध्ये भल्लेन परवीरहा।
स पपात रथोपस्थान्निरमित्रो जनेश्वरः। त्रिगर्त्तराजस्य सुतो व्यथयंस्तव वाहिनीं।
तन्तु हत्वा महाबाहुः सहदेवो व्यरोचत। यथा दाशरथी रामः खरं हत्वा महाबलं। ४०४०
हाहाकारो महानासीत् त्रिगर्त्तानां जनेश्वर। राजपुत्रं हतं दृष्ट्वा निरमित्रं महारथं।
नकुलस्ते सुतं राजन् विकर्णं पृथुलोचनं। मुहूर्त्ताज्जितवान् लोके तदद्भुतमिवाभवत्।
सात्यकिं व्याघ्रदत्तस्तु शरैः सन्नतपर्व्वभिः। चक्रेऽदृश्यं साश्वसूतं सध्वजं पृतनान्तरे।
तान्निवार्य्य शरान् शूरः शैनेयः कृतहस्तवत्। साश्वसूतध्वजं वाणैर्व्याघ्रदत्तमपातयत्।
कुमारे निहते तस्मिन् मागधस्य सुते प्रभो। मागधाः सर्व्वतो यत्ता युयुधानमुपाद्रवन्। ४०४५
विसृजन्तः शरांश्चैव तोमरांश्च सहस्रशः। भिन्दिपालांस्तथा प्रासान् मुद्गरान् मुषलानपि।
अयोधयन्रणे शूराः सात्वतं युद्धदुर्म्मदं। तांस्तु सर्व्वान् स बलवान् सात्यकिर्युद्धदुर्म्मदः।
नातिकृच्छ्राद्धसन्नेव विजिग्ये पुरुषर्षभः। मागधान् त्वरतो दृष्ट्वा हतशेषान् समन्ततः।
बलन्तेऽभज्यत विभो युयुधानशरार्द्दितं। नाशयित्वा रणे सैन्यं त्वदीयं माधवोत्तमः।
विधुन्वानो धनुःश्रेष्ठं व्यभ्राजत महायशाः। भज्यमानं बलं राजन् सात्वतेन महात्मना। ४०५०
नाभ्यवर्त्तत युद्धाय त्रासितं दीर्घबाहुना। ततो द्रोणो भृशं क्रुद्धः सहसोद्वृत्य चक्षुषी।
सात्यकिं सत्यकर्म्माणं स्वयमेवाभिदुद्रुवे।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकियुद्धे सप्ताधिकशततमोऽध्यायः॥ १०७॥

॥ सञ्जय उवाच ॥ द्रौपदेयान्महेष्वासान् सौमदत्तिर्महायशाः। एकैकं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः।
ते पीडिता भृशं तेन रौद्रेण सहसा विभो। प्रमूढा नैव विविदुर्मृधे कृत्यं स्म किञ्चन।
नाकुलिस्तु शतानीकः सौमदत्तिं नरर्षभं। द्वाभ्यां विद्ध्वाऽनदद्धृष्टः शराभ्यां शत्रुकर्षणः। ४०५५
तथेतरे रणे यत्तास्त्रिभिस्त्रिभिरजिह्मगैः। विव्यधुः समरे तूर्णं सौमदत्तिममर्षणं।
स तान् प्रति महाराज चिक्षेप पञ्च सायकान्। एकैकं हृदि चाजघ्ने एकैकेन महायशाः।
ततस्ते भ्रातरः पञ्च शरैर्विद्ध्वा महात्मना। परिवार्य्य रणे वीरं विव्यधुः सायकैर्भृशं।
आर्ज्जुनिस्तु हयांस्तस्य चतुर्भिर्निशितैः शरैः। प्रेषयामास संक्रुद्धो यमस्य सदनं प्रति।
भैमसेनिर्धनुश्छित्त्वा सौमदत्तेर्महात्मनः। ननाद बलवान्नादं विव्याध च शितैः शरैः। ४०६०
यौधिष्ठिरिर्ध्वजं तस्य छित्त्वा भूमावपातयत्। नाकुलिश्चाथ यन्तारं रथनीडादपाहरत्।
साहदेविस्तु तं ज्ञात्वा भ्रातृभिर्विमुखीकृतं। क्षुरप्रेण शिरो राजन्निचकर्त्त महात्मनः।
तच्छिरो न्यपतद्भूमौ तपनीयविभूषितं। भ्राजयन्तं रणोद्देशं बालसूर्य्यसमप्रभं।
सौमदत्तेः शिरो दृष्ट्वा निहतं तन्महात्मनः। वित्रस्तास्तावका राजन् प्रदुद्रुवुरनेकधा।
अलम्बुषस्तु समरे भीमसेनं महाबलं। योधयामास संक्रुद्धो लक्ष्मणं रावणिर्यथा। ४०६५
संप्रयुद्धौ रणे दृष्ट्वा तावुभौ नरराक्षसौ। विस्मयः सर्व्वभूतानां प्रहर्षं समजायत।
आर्ष्यशृङ्गिं ततो भीमो नवभिर्निशितैः शरैः। विव्याध प्रहसन् राजन् राक्षसेन्द्रममर्षणं।
तद्रक्षः समरे विद्धं कृत्वा नादं भयावहं। अभ्यद्रवत्ततो भीमं ये च तस्य पदानुगाः।
स भीमं पञ्चभिर्विद्ध्वा शरैः सन्नतपर्व्वभिः। भैमान् परिजघानाशु रथांस्त्रिंशतमाहवे।
पुनश्चतुःशतान् हत्वा भीमं विव्याध पत्रिणा। सोऽतिविद्धस्तथा भीमो राक्षसेन महाबलः। ४०७०
निषसाद रथोपस्थे मूर्च्छयाभिपरिप्लुतः। प्रतिलभ्य ततः संज्ञां मारुतिः क्रोधमूर्च्छितः।
विकृष्य कार्मुकं घोरं भारसाधनमुत्तमं। अलम्बुषं शरैस्तीक्ष्णैरर्दयामास सर्व्वतः।
स विद्धो बहुभिर्ब्बाणैर्नीलाञ्जनचयोपमः। शुशुभे सर्व्वतो राजन् प्रफुल्ल इव किंशुकः।
स बध्यमानः समरे भीमचापच्युतैः शरैः। स्मरन् भ्रातृवधञ्चैव पाण्डवेन महात्मना।
घोरं रूपमथो कृत्वा भीमसेनमभाषत। तिष्ठेदानीं रणे पार्थ पश्य मेऽद्य पराक्रमं। ४०७५
वको नाम सुदुर्ब्बुद्धे राक्षसप्रवरो बली। परोक्षं मम तद्वृत्तं यद्भ्राता मे हतस्त्वया।
एवमुक्त्वा ततो भीममन्तर्द्धानं गतस्तदा। महता शरवर्षेण भृशं तं समवाकिरत्।
भीमस्तु समरे राजन्नदृश्ये राक्षसे तदा। आकाशं पूरयामास शरैः सन्नतपर्व्वभिः।
स बध्यमानो भीमेन निमेषाद्रथमास्थितः। जगाम धरणीञ्चैव क्षुद्रः खं सहसागमत्।
उच्चावचानि रूपाणि चकार सुबहूनि च। अणुर्बृहत् पुनः स्थूलो नादं मुञ्चन्निवाम्बुदः। ४०८०
उच्चावचास्तथा वाचो व्याजहार समन्ततः। निपेतुर्गगनाच्चैव शरधाराः सहस्रशः।
शक्तयः कुणपाः प्रासाः शूलपट्टिशतोमराः। शतघ्न्यः परिघाश्चैव भिन्दिपालाः परश्वधाः।

शिलाः खड्गागुडाश्चैव वृष्टिर्व्वज्राणि चैव ह । सा राक्षसविसृष्टा तु शस्त्रवृष्टिः सुदारुणा ।
जघान पाण्डुपुत्त्रस्य सैनिकान् रणमूर्द्धनि । तेन पाण्डवसैन्यानां सूदिता युधि वारणाः ।
हयाश्च बहवो राजन् पत्तयश्च तथा पुनः । रथेभ्यो रथिनः पेतुस्तस्य नुन्नाः स्म सायकैः । ४०८५
शोणितोदां रथावर्त्तां हस्तिग्राहसमाकुलां । छत्रहंसां कर्द्दमिनीं बाहुपन्नगसङ्कुलां ।
नदीं प्रावर्त्तयामास रक्षोगणसमाकुलां । हरन्तीं बहुधा राजंश्चेदिपाञ्चालसृञ्जयान् ।
तं तथा समरे राजन् विचरन्तमभीतवत् । पाण्डवा भृशसंविग्नाः प्रापश्यंस्तस्य विक्रमं ।
तावकानान्तु सैन्यानां प्रहर्षः समजायत । वादित्रनिनदश्चोग्रः सुमहान्रोमहर्षणः ।
तं श्रुत्वा निनदं घोरं तव सैन्यस्य पाण्डवः । नामृष्यत यथा नागस्तलशब्दं समीरितं । ४०९०
ततः क्रोधाभिताम्राक्षो निर्द्दहन्निव पावकः । सन्दधे त्वाष्ट्रमस्त्रं स स्वयं त्वष्टेव मारुतिः ।
ततः शरसहस्राणि प्रादुरासन् समन्ततः । तैः शरैस्तव सैन्यस्य विद्रवः सुमहानभूत् ।
तदस्त्रं प्रेरितं तेन भीमसेनेन संयुगे । राक्षसस्य महामायां हत्वा राक्षसमार्द्दयत् ।
स बध्यमानो बहुधा भीमसेनेन राक्षसः । सन्त्यज्य समरे भीमं द्रोणानीकमुपाद्रवत् ।
तस्मिंस्तु निर्ज्जिते राजन्राक्षसेन्द्रे महात्मना । अनादयन् सिंहनादैः पाण्डवाः सर्व्वतोदिशं । ४०९५
अपूजयन्मारुतिञ्च संहृष्टास्ते महाबलं । प्रह्लादं समरे जित्वा यथा शक्रं मरुद्गणाः ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथबधपर्व्वणि अलम्बुषपराजये ऽष्टाधिकशतोऽध्यायः ॥ १०८ ॥
॥ सञ्जय उवाच ॥ अलम्बुषं तथा युद्धे विचरन्तमभीतवत् । हैडिम्बिः प्रययौ तूर्णं विव्याध निशितैः शरैः ।
तयोः प्रतिभयं युद्धमासीद्राक्षससिंहयोः । कुर्व्वतोर्व्विविधा मायाः शक्रशम्बरयोरिव ।
अलम्बुषो भृशं क्रुद्धो घटोत्कचमताडयत् । तयोर्युद्धं समभवद्रक्षोग्रामणिमुख्ययोः ।
यादृगेव पुरा वृत्तं रामरावणयोः प्रभो । घटोत्कचस्तु विंशत्या नाराचानां स्तनान्तरे । ४१००
अलम्बुषमथो विद्ध्वा सिंहवद्व्यनदन्मुहुः । तथैवालम्बुषो राजन्हैडिम्बं युद्धदुर्म्मदं ।
विद्ध्वा विद्ध्वाऽनदद्धृष्टः पूरयन् खं समन्ततः । तथा तौ भृशसंक्रुद्धौ राक्षसेन्द्रौ महाबलौ ।
निर्व्विशेषमयुध्येतां मायाभिरितरेतरं । मायाशतसृजौ नित्यं मोहयन्तौ परस्परं ।
मायायुद्धेषु कुशलौ मायायुद्धमयुध्यतां । यां यां घटोत्कचो युद्धे मायां दर्शयते नृप ।
तां तामलम्बुषो राजन् माययैव निजघ्निवान् । तं तथा युध्यमानन्तु मायायुद्धविशारदं । ४१०५
अलम्बुषं राक्षसेन्द्रं दृष्ट्वाऽक्रुध्यन्त पाण्डवाः । त एनं भृशसंविग्नाः सर्व्वतः प्रवरा रथैः ।
अभ्यद्रवन्त संक्रुद्धा भीमसेनादयो नृप । त एनं कोष्ठकीकृत्य रथवंशेन मारिष ।
सर्व्वतो व्यकिरन् वाणैरुल्काभिरिव कुञ्जरं । स तेषामस्त्रवेगं तं प्रतिहत्यास्त्रमायया ।
तस्माद्रथव्रजान्मुक्तो वनदाहादिव द्विपः । स विस्फार्य्य धनुर्घोरमिन्द्राशनिसमस्वनं ।
मारुतिं पञ्चविंशत्या भैमसेनिञ्च पञ्चभिः । युधिष्ठिरं त्रिभिर्व्विद्ध्वा सहदेवञ्च सप्तभिः । ४११०
नकुलञ्च त्रिसप्तत्या द्रौपदेयांश्च मारिष । पञ्चभिः पञ्चभिर्व्विद्ध्वा घोरं नादं ननाद ह ।

तं भीमसेनो नवभिः सहदेवस्तु पञ्चभिः । युधिष्ठिरः शतेनैव राक्षसं प्रत्यविध्यत ।
नकुलस्तु चतुःषष्ट्या द्रौपदेयास्त्रिभिस्त्रिभिः । हैडिम्बो राक्षसं विद्ध्वा युद्धे पञ्चाशता शरैः ।
पुनर्विव्याध सप्तत्या ननाद च महाबलः । तस्य नादेन महता कम्पितेयं वसुन्धरा ।
सपर्व्वतवना राजन् सपादपजलाशया । सोऽतिविद्धो महेष्वासैः सर्व्वतस्तैर्महारथैः । ४११५
प्रतिविव्याध तान् सर्व्वान् पञ्चभिः पञ्चभिः शरैः । तं क्रुद्धं राक्षसं युद्धे प्रतिक्रुद्धस्तु राक्षसः ।
हैडिम्बो भरतश्रेष्ठ शरैर्विव्याध सप्तभिः । सोऽतिविद्धो बलवता राक्षसेन्द्रो महाबलः ।
व्यसृजत् सायकांस्तूर्णं स्वर्णपुङ्खान् शिलाशितान् । ते शरा नतपर्व्वाणो विविशू राक्षसं तदा ।
रुषिताः पन्नगा यद्वद्गिरिशृङ्गं महाबलाः । ततस्ते पाण्डवा राजन् समन्तान्निशिताञ्छरान् ।
प्रेषयामासुरुद्विग्ना हैडिम्बश्च घटोत्कचः । स वध्यमानः समरे पाण्डवैर्जितकाशिभिः । ४१२०
मर्त्यधर्म्ममनुप्राप्तः कर्त्तव्यं नाभ्यपद्यत । ततः समरशौण्डो वै भैमसेनिर्महाबलः ।
समीक्ष्य तदवस्थं तं वधायास्य मनो दधे । वेगञ्चक्रे महान्तञ्च राक्षसेन्द्ररथम्प्रति ।
दग्धाद्रिकूटशृङ्गाभं भिन्नाञ्जनचयोपमं । रथाद्रथमभिद्रुत्य क्रुद्धो हैडिम्बिराक्षिपत् ।
उद्बबर्ह रथाच्चापि पन्नगं गरुडो यथा । समुत्क्षिप्य च बाहुभ्यामाविध्य च पुनः पुनः ।
निष्पिपेष क्षितौ क्षिप्रं पूर्णं कुम्भमिवाश्मनि । बललाघवसम्पन्नः सम्पन्नो विक्रमेण च । ४१२५
भैमसेनीरणे क्रुद्धः सर्व्वसैन्यान्यभीषयत् । सविस्फुटितसर्व्वाङ्गश्चूर्णितास्थिर्व्विभीषणः ।
घटोत्कचेन वीरेण हतः शालकटङ्कटः । ततः सुमनसः पार्था हते तस्मिन्निशाचरे ।
चुक्रुशुः सिंहनादांश्च वासांस्यादुधुवुश्च ह । तावकाश्च हतं दृष्ट्वा राक्षसेन्द्रं महाबलं ।
अलम्बुषं तथा शूरा विशीर्णमिव पर्व्वतं । हाहाकारमकार्षुश्च सैन्यानि भरतर्षभ ।
जनाश्च तद्ददृशिरे रक्षः कौतूहलान्विताः । यदृच्छया निपतितं भूमावङ्गारकं यथा । ४१३०
घटोत्कचस्तु तद्धत्वा रक्षो बलवतांवरः । मुमोच बलवन्नादं बलं हत्वेव वासवः ।
स पूज्यमानः पितृभिः सबान्धवैर्घटोत्कचः कर्म्मणि दुष्करे कृते । रिपुं निहत्याभिननन्द वै तदा ह्यलम्बुषं पक्वमलम्बुषं यथा ।
ततो निनादः सुमहान् समुत्थितः सशङ्खनानाविधबाणघोषवान् । निशम्य तं प्रत्यनदंस्तु कौरवास्ततोध्वनिर्भुवनमथा-
स्पृशद्भृशं ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि अलम्बुषवधे नवाधिकशतोऽध्यायः ॥ १०९ ॥

॥ धृतराष्ट्र उवाच ॥ भारद्वाजं कथं युद्धे युयुधानो न्यवारयत् । सञ्जयाचक्ष्व तत्त्वेन परं कौतूहलं हि मे ।
॥ सञ्जय उवाच ॥ शृणु राजन् महाप्राज्ञ सङ्ग्रामं लोमहर्षणं । द्रोणस्य पाण्डवैः सार्द्धं युयुधानपुरोगमैः । ४१३५
वध्यमानं बलं दृष्ट्वा युयुधानेन मारिष । अभ्यद्रवत् स्वयं द्रोणः सात्यकिं सत्यविक्रमं ।
तमापतन्तं सहसा भारद्वाजं महारथं । सात्यकिः पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
द्रोणोऽपि युधि विक्रान्तो युयुधानं समाहितः । अविध्यत् पञ्चभिस्तूर्णं हेमपुङ्खैः शरैः शितैः ।
ते वर्म्म भित्त्वा सुदृढं दिषत्पिशितभोजनाः । अभ्यवुर्धरणीं राजन् श्वसन्त इव पन्नगाः ।

दीर्घबाहुरभिक्रुद्धस्तोत्त्रार्द्दित इव द्विपः । द्रोणं पञ्चाशताऽविध्यन्नाराचैरग्निसन्निभैः । ४९४०
भारद्वाजो रणे विद्धो युयुधानेन सत्वरं । सात्यकिं बहुभिर्व्बाणैर्यतमानमविध्यत ।
ततः क्रुद्धो महेष्वासो भूय एव महाबलः । सात्वतं पीडयामास शरेणानतपर्व्वणा ।
स बध्यमानः समरे भारद्वाजेन सात्यकिः । नान्वपश्यत कर्त्तव्यं किञ्चिदेव विशाम्पते ।
विषण्णवदनश्चापि युयुधानोऽभवन्नृप । भारद्वाजं रणे दृष्ट्वा विसृजन्तं शितान् शरान् ।
तन्तु सम्प्रेक्ष्य ते पुत्त्राः सैनिकाश्च विशाम्पते । प्रहृष्टमनसो भूत्वा सिंहवद्व्यनदन्मुहुः । ४९४५
तं श्रुत्वा निनदं घोरं पीड्यमानञ्च माधवं । युधिष्ठिरोऽब्रवीद्राजा सर्व्वसैन्यानि भारत ।
एष वृष्णिवरो वीरः सात्यकिः सत्यविक्रमः । ग्रस्यते युधि वीरेण भानुमानिव राहुणा ।
अभिद्रवत गच्छध्वं सात्यकिर्यत्र युध्यते । धृष्टद्युम्नञ्च पाञ्चाल्यमिदमाह जनाधिपः ।
अभिद्रव द्रुतं द्रोणं किमु तिष्ठसि पार्षत । न पश्यसि भयं द्रोणाद्घोरं नः समुपस्थितं ।
असौ द्रोणो महेष्वासो युयुधानेन संयुगे । क्रीडते सूत्रबद्धेन पक्षिणा बालको यथा । ४९५०
तत्रैव सर्व्वे गच्छन्तु भीमसेनपुरोगमाः । त्वयैव सहिताः सर्व्वे युयुधानरथं प्रति ।
पृष्ठतोऽनुगमिष्यामि त्वामहं सहसैनिकः । सात्यकिं मोचयस्वाद्य यमदंष्ट्रान्तरं गतं ।
एवमुक्त्वा ततो राजा सर्व्वसैन्येन भारत । अभ्यद्रवद्रणे द्रोणं युयुधानस्य कारणात् ।
तत्रारावो महानासीत् द्रोणमेकं युयुत्सतां । पाण्डवानाञ्च भद्रन्ते सृञ्जयानाञ्च सर्व्वशः ।
ते समेत्य नरव्याघ्र भारद्वाजं महारथं । अभ्यवर्षञ्छरैस्तीक्ष्णैः कङ्कबर्हिणवाजितैः । ४९५५
स्मयन्नेव तु तान् वीरान् द्रोणः प्रत्यग्रहीत् स्वयं । अतिथीनागतान् यद्वत् सलिलेनासनेन च ।
तर्पितास्ते शरैस्तस्य भारद्वाजस्य धन्विनः । आतिथेयं गृहं प्राप्य नृपतेऽतिथयो यथा ।
भारद्वाजञ्च ते सर्व्वे न शेकुः प्रतिवीक्षितुं । मध्यन्दिनमनुप्राप्तं सहस्रांशुमिव प्रभो ।
तांस्तु सर्व्वान् महेष्वासान् द्रोणः शस्त्रभृताम्वरः । अतापयच्छरव्रातैर्गभस्तिभिरिवांशुमान् ।
बध्यमाना महाराज पाण्डवाः सृञ्जयास्तथा । त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः । ४९६०
द्रोणस्य च व्यदृश्यन्त विसर्पन्तो महाशराः । गभस्तय इवार्कस्य प्रतपन्तः समन्ततः ।
तस्मिन् द्रोणेन निहताः पाञ्चालाः पञ्चविंशतिः । महारथाः समाख्याता धृष्टद्युम्नस्य सम्मताः ।
पाण्डूनां सर्व्वसैन्येषु पाञ्चालानां तथैव च । द्रोणं स्म ददृशुः शूरं विनिघ्नन्तं वरान् वरान् ।
केकयानां शतं हत्वा विद्राव्य च समन्ततः । द्रोणस्तस्थौ महाराज व्यादितास्य इवान्तकः ।
पाञ्चालान् सृञ्जयान्मत्स्यान् केकयांश्च नराधिप । द्रोणोऽजयन्महाबाहुः शतशोऽथ सहस्रशः । ४९६५
तेषां समभवच्छब्दो विद्धानां द्रोणसायकैः । वनौकसामिवारण्ये व्याप्तानां धूमकेतुना ।
तत्र देवाः सगन्धर्व्वाः पितरश्चाब्रुवन्नृप । एते द्रवन्ति पाञ्चालाः पाण्डवाश्च ससैनिकाः ।
तं तथा समरे द्रोणं निघ्नन्तं सोमकान् रणे । न चाप्यभिययुः केचिदपरे नैव विव्यधुः ।
वर्त्तमाने तथा रौद्रे तस्मिन् वीरवरक्षये । अशृणोत् सहसा पार्थः पाञ्चजन्यस्य निस्वनं ।

पूरितो वासुदेवेन शङ्खराट् स्वनते भृशं । युध्यमानेषु वीरेषु सैन्धवस्याभिरक्षिषु । ४९७०
नदत्सु धार्त्तराष्ट्रेषु विजयस्य रथम्प्रति । गाण्डीवस्य च निर्घोषे विप्रनष्टे समन्ततः ।
कश्मलाभिहतो राजा चिन्तयामास पाण्डवः । न नूनं स्वस्ति पार्थाय यथा नदति शङ्खराट् ।
कौरवाश्च यथा हृष्टा विनदन्ति मुहुर्मुहुः । एवं सञ्चिन्तयित्वा तु व्याकुलेनान्तरात्मना ।
अजातशत्रुः कौन्तेयः सात्वतं प्रत्यभाषत । वाष्पगद्गदया वाचा मुह्यमानो मुहुर्मुहुः ।
कृत्यस्यानन्तरापेक्षी शैनेयं शिनिपुङ्गवं । ४९७५

॥ युधिष्ठिर उवाच ॥ यः स धर्मः पुरा दृष्टः सद्भिः शैनेय शाश्वतः । साम्पराये सुहृत्कृत्ये तस्य कालोऽयमागतः ।
सर्व्वेष्वपि च योधेषु चिन्तयन् शिनिपुङ्गव । त्वत्तः सुहृत्तमं कञ्चिन्नाभिजानामि सात्यके ।
यो हि प्रीतमना नित्यं यश्च नित्यमनुव्रतः । स कार्य्यः साम्पराये तु नियोज्य इति मे मतिः ।
यथा च केशवो नित्यं पाण्डवानां परायणं । तथा त्वमपि वार्ष्णेय कृष्णतुल्यपराक्रमः ।
सोऽहं भारं समाधास्ये त्वयि तं वोढुमर्हसि । अभिप्रायञ्च मे नित्यं न वृथा कर्त्तुमर्हसि । ४९८०
स त्वं भ्रातुर्व्वयस्यस्य गुरोरपि च संयुगे । कुरु कृच्छ्रे सहायार्थमर्ज्जुनस्य नरर्षभ ।
त्वं हि सत्यव्रतः शूरो मित्राणामभयङ्करः । लोके विख्यायसे वीर कर्म्मभिः सत्यवागिति ।
यो हि शैनेय मित्रार्थे युध्यमानस्त्यजेत्तनुं । पृथिवीञ्च द्विजातिभ्यो यो दद्यात् स समो भवेत् ।
श्रुताश्च बहवोऽस्माभी राजानो ये दिवं गताः । दत्त्वेमां पृथिवीं कृत्स्नां ब्राह्मणेभ्यो यथाविधि ।
एवं त्वामपि धर्म्मात्मन् प्रयाचेऽहं कृताञ्जलिः । पृथिवीदानतुल्यं स्यादधिकम्वा फलं विभो । ४९८५
एक एव सदा कृष्णो मित्राणामभयङ्करः । रणे संत्यजति प्राणान् द्वितीयस्त्वञ्च सात्यके ।
विक्रान्तस्य च वीरस्य युद्धे प्रार्थयतो यशः । शूर एव सहायः स्यान्नेतरः प्राकृतो जनः ।
ईदृशे तु परामर्शे वर्त्तमानस्य माधव । त्वदन्यो हि रणे गोप्ता विजयस्य न विद्यते ।
श्लाघन्नेव हि कर्म्माणि शतशस्तव पाण्डवः । मम सञ्जनयन् हर्षं पुनः पुनरकीर्त्तयत् ।
लघुहस्तश्चित्रयोधी तथा लघुपराक्रमः । प्राज्ञः सर्व्वास्त्रविच्छूरो मुह्यते न च संयुगे । ४९९०
महास्कन्धो महोरस्को महाबाहुर्महाहनुः । महाबलो महावीर्य्यः स महात्मा महारथः ।
शिष्यो मम सखा चैव प्रियोऽस्याहं प्रियश्च मे । युयुधानः सहायो मे प्रमथिष्यति कौरवान् ।
अस्मदर्थञ्च राजेन्द्र सन्नह्येद्यदि केशवः । रामो वाप्यनिरुद्धो वा प्रद्युम्नो वा महारथः ।
गदो वा सारणो वापि साम्बो वा सहवृष्णिभिः । सहायार्थं महाराज सङ्ग्रामोत्तममूर्द्धनि ।
तथाप्यहं नरव्याघ्रं शैनेयं सत्यविक्रमं । साहाय्ये विनियोक्ष्यामि नास्ति योऽन्यो हि तत्समः । ४९९५
इति द्वैतवने तात मामुवाच धनञ्जयः । परोक्षे त्वद्गुणांस्तथ्यान् कथयन्नार्य्यसंसदि ।
तस्य त्वमेवं सङ्कल्पं न वृथा कर्त्तुमर्हसि । धनञ्जयस्य वार्ष्णेय मम भीमस्य चोभयोः ।
यच्चापि तीर्थानि चरन्नगच्छं द्वारकां प्रति । तत्राहमपि ते भक्तिमर्ज्जुनं प्रति दृष्टवान् ।
न तत् सौहृदमन्येषु मया शैनेय लक्षितं । यथा त्वमस्मान् भजसे वर्त्तमानानुपप्लवे ।

सोऽभिजात्या च भक्त्या च सख्यस्याचार्य्यकस्य च । सौहृदस्य च वीर्य्यस्य कुलीनत्वस्य माधव । ४२००
सत्यस्य च महाबाहो अनुकम्पार्थमेव च । अनुरूपं महेष्वास कर्म्म त्वं कर्त्तुमर्हसि ।
सुयोधनो हि सहसा गतो द्रोणेन दंशितः । पूर्व्वमेवानुयातास्ते कौरवाणां महारथाः ।
सुमहांश्चिनदश्चैव श्रूयते विजयं प्रति । स शैनेय जवेनाशु गन्तुमर्हसि मानद ।
भीमसेनो वयञ्चैव सम्पन्नाः सहसैनिकाः । द्रोणमावारयिष्यामो यदि त्वां प्रति यास्यति ।
पश्य शैनेय सैन्यानि द्रवमाणानि संयुगे । महान्तञ्च रणे शब्दं दीर्य्यमाणाञ्च भारतीं । ४२०५
महामारुतवेगेन समुद्रमिव पर्व्वसु । धार्त्तराष्ट्रबलं तात विक्षिप्तं सव्यसाचिना ।
रथैर्व्विपरिधावद्भिर्म्मनुष्यैश्च हयैश्च ह । सैन्यं रजः समुद्भूतमेतत् सम्परिवर्त्तते ।
संवृतः सिन्धुसौवीरैर्नखरप्रासयोधिभिः । अत्यन्तोपचितैः शूरैः फाल्गुनः परवीरहा ।
नैतद्बलमसंवार्य्य शक्यो जेतुं जयद्रथः । एते हि सैन्धवस्यार्थे सर्व्वे सन्त्यक्तजीविताः ।
शरशक्तिध्वजवरं हयनागसमाकुलं । पश्यैतद्धार्त्तराष्ट्राणामनीकं सुदुरासदं । ४२१०
शृणु दुन्दुभिनिर्घोषं शङ्खशब्दांश्च पुष्कलान् । सिंहनादरवांश्चैव रथनेमिस्वनांस्तथा ।
नागानां शृणु शब्दञ्च पत्तीनाञ्च सहस्रशः । सादिनां द्रवताञ्चैव शृणु कम्पयतां महीं ।
पुरस्तात् सैन्धवानीकं द्रोणानीकञ्च पृष्ठतः । बहुलाद्धि नरव्याघ्र देवेन्द्रमपि पीडयेत् ।
अपर्य्यन्ते बले मग्नो जह्यादपि च जीवितं । तस्मिंश्च निहते युद्धे कथं जीवेत मादृशः ।
सर्व्वथाऽहमनुप्राप्तः सुकृच्छ्रं त्वयि जीवति । श्यामो युवा गुडाकेशो दर्शनीयश्च पाण्डवः । ४२१५
लघ्वस्त्रश्चित्रयोधी च प्रविष्टस्तात भारतीं । सूर्य्योदये महाबाहुर्दिवसश्चातिवर्त्तते ।
तन्न जानामि वार्ष्णेय यदि जीवति वा नवा । कुरूणाञ्चापि तत्सैन्यं सागरप्रतिमं महत् ।
एक एव च बीभत्सुः प्रविष्टस्तात भारतीं । अविषह्यां महाबाहुः सुरैरपि महाहवे ।
न हि मे वर्त्तते बुद्धिरद्य युद्धे कथञ्चन । द्रोणोऽपि रभसो युद्धे मम पीडयते बलं ।
प्रत्यक्षन्ते महाबाहो यथाऽसौ चरति द्विजः । युगपच्च समेतानां कार्य्याणां त्वं विचक्षणः । ४२२०
महार्थं लघुसंयुक्तं कर्त्तुमर्हसि मानद । तस्य मे सर्व्वकार्य्येषु कार्य्यमेतन्मतं महत् ।
अर्ज्जुनस्य परित्राणं कर्त्तव्यमिति संयुगे । नाहं शोचामि दाशार्हं गोप्तारं जगतः पतिं ।
स हि शक्तो रणे तात त्रीन् लोकानपि सङ्गतान् । विजेतुं पुरुषव्याघ्रः सत्यमेतद्ब्रवीमि ते ।
किं पुनर्धार्त्तराष्ट्रस्य बलमेतत् सुदुर्ब्बलं । अर्ज्जुनस्त्वेष वार्ष्णेय पीडितो बहुभिर्युधि ।
प्रजह्यात् समरे प्राणान् तस्माद्विन्दामि कश्मलं । तस्य त्वं पदवीं गच्छ गच्छेयुस्तादृशा यथा । ४२२५
तादृशस्येदृशे काले मादृशेनाभिनोदितः । रणे वृष्णिप्रवीराणां द्वावेवातिरथौ स्मृतौ ।
प्रद्युम्नश्च महाबाहुस्त्वञ्च सात्वत विश्रुतः । अस्त्रे नारायणसमः सङ्कर्षणसमो बले ।
वीरतायां नरव्याघ्र धनञ्जयसमो ह्यसि । भीष्मद्रोणावतिक्रम्य सर्व्वयुद्धविशारदं ।
त्वामेव पुरुषव्याघ्रं लोके सन्तः प्रचक्षते । नाशक्यं विद्यते लोके सात्यकेरिति माधव ।

तत्त्वं यदभिवक्ष्यामि तत्कुरुष्व महाबल। यथावनं हि लोकस्य मम पार्थस्य चोभयोः। ४२२०
नान्यथा त्वं महाबाहो सम्प्रकर्त्तुमिहार्हसि। परित्यज्य प्रियान् प्राणान्रणे विचर वीरवत्।
न हि शैनेय दाशार्हो रणे रक्षति जीवितं। अयुद्धमनवस्थानं सङ्ग्रामे च पलायनं।
भीरूणामसतां मार्गो नैष दाशार्ह सेवितः। तवार्ज्जुनो गुरुस्तात धर्म्मात्मा शिनिपुङ्गव।
वासुदेवो गुरुश्चापि तव पार्थस्य धीमतः। कारणद्वयमेतद्धि जानंस्त्वामहमब्रुवं।
मावमंस्था वचो मह्यं गुरुस्तव गुरोर्ह्यहं। वासुदेवमतञ्चैव मम चैवार्ज्जुनस्य च। ४२२५
सत्यमेतन्मयोक्तन्ते याहि यत्र धनञ्जयः। एतद्वचनमाज्ञाय मम सत्यपराक्रम।
प्रविशैतद्बलं तात धार्त्तराष्ट्रस्य दुर्म्मतेः। प्रविश्य च यथान्यायं सङ्गम्य च महारथैः।
यथार्हमात्मनः कर्म्म रणे सात्वत दर्शय।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि युधिष्ठिरवाक्ये दशाधिकशततोऽध्यायः॥ ११०॥

॥ सञ्जय उवाच॥ प्रीतियुक्तञ्च हृद्यञ्च मधुराक्षरमेव च। कालयुक्तञ्च चित्रञ्च न्याय्यं चापि भाषितं।
धर्म्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गवः। सात्यकिर्भरतश्रेष्ठ प्रत्युवाच युधिष्ठिरं। ४२३०
श्रुतं ते गदतो वाक्यं सर्व्वमेतन्मयाच्युत। न्याययुक्तञ्च चित्रञ्च फाल्गुनार्थे यशस्करं।
एवंविधे तथा काले मादृशं प्रेक्ष्य सम्मतं। वक्तुमर्हसि राजेन्द्र यथा पार्थं तथैव मां।
न मे धनञ्जयस्यार्थे प्राणा रक्ष्याः कथञ्चन। त्वत्प्रयुक्तः पुनरहं किन्न कुर्य्यां महाहवे।
लोकत्रयं योधयेयं सदेवासुरमानुषं। त्वत्प्रयुक्तो नरेन्द्रेह किमुतैतत् सुदुर्ब्बलं।
सुयोधनबलन्त्वद्य योधयिष्ये समन्ततः। विजेष्ये च रणे राजन् सत्यमेतद्ब्रवीमि ते। ४२३५
कुशल्यहं कुशलिनं समासाद्य धनञ्जयं। हते जयद्रथे राजन् पुनरेष्यामि तेऽन्तिकं।
अवश्यन्तु मया सर्व्वं विज्ञाप्यस्त्वं नराधिप। वासुदेवस्य यद्वाक्यं फाल्गुनस्य च धीमतः।
दृढन्त्वभिपरीतोऽहमर्ज्जुनेन पुनः पुनः। मध्ये सर्व्वस्य सैन्यस्य वासुदेवस्य शृण्वतः।
अद्य माधव राजानमप्रमत्तोऽनुपालय। आर्य्यां युद्धे मतिं कृत्वा यावद्धन्मि जयद्रथं।
त्वयि चाहं महाबाहो प्रद्युम्ने वा महारथे। नृपं निक्षिप्य गच्छेयं निरपेक्षो जयद्रथं। ४२४०
जानीषे हि रणे द्रोणं कुरुषु श्रेष्ठसम्मतं। प्रतिज्ञातं हि तेनेदं शृण्वमानेन वै प्रभो।
ग्रहणे धर्म्मराजस्य भारद्वाजोऽपि गृध्यति। शक्तश्चापि रणे द्रोणो निग्रहीतुं युधिष्ठिरं।
एवं त्वयि समाधाय धर्म्मराजं नरोत्तमं। अहमद्य गमिष्यामि सैन्धवस्य वधाय हि।
जयद्रथञ्च हत्वाऽहं द्रुतमेष्यामि माधव। धर्म्मराजं न चेत् द्रोणो निगृह्णीयाद्रणे बलात्।
निगृहीते नरश्रेष्ठे भारद्वाजेन माधव। सैन्धवस्य वधो न स्यान्ममाप्रीतिस्तथा भवेत्। ४२४५
एवं गते नरश्रेष्ठे पाण्डवे सत्यवादिनि। अस्माकं गमनं व्यक्तं वनं प्रति भवेत्पुनः।
सोऽयं मम जयो व्यक्तं व्यर्थ एव भविष्यति। यदि द्रोणो रणे क्रुद्धो निगृह्णीयाद्युधिष्ठिरं।
स त्वमद्य महाबाहो प्रियार्थं मम माधव। जयार्थञ्च यशोऽर्थञ्च रक्ष राजानमाहवे।

स भवान्मयि निक्षेपो निक्षिप्तः सव्यसाचिना । भारद्वाजाद्भयं नित्यं मन्यमानेन वै प्रभो ।
तस्यापि च महाबाहो नित्यं पश्यामि संयुगे । नान्यं हि प्रतियोद्धारं रौक्मिणेयादृते प्रभो । ४२६०
माञ्चापि मन्यते युद्धे भारद्वाजस्य धीमतः । सोऽहं सम्भावनाञ्चैतामाचार्य्यवचनन्तु तत् ।
पृष्ठतो नोत्सहे कर्त्तुं त्वां वा त्यक्तुं महीपते । आचार्य्यो लघुहस्तत्वादभेद्यकवचावृतः ।
उपलभ्य रणे क्रीडेद्यथा शकुनिना शिशुः । यदि कार्ष्णिर्धनुष्पाणिरिह स्यान्मकरध्वजः ।
तस्मै त्वां विसृजेयं वै स त्वां रक्षेद्यथाऽर्जुनः । कुरु त्वमात्मनो गुप्तिं कस्ते गोप्ता गते मयि ।
यः प्रतीयाद्रणे द्रोणं यावद्गच्छामि पाण्डवं । मा च ते भयमद्यास्तु राजन्नर्जुनसम्भवं । ४२६५
न स जातु महाबाहुर्भारमुद्यम्य सीदति । ये च सौवीरका योधास्तथा सैन्धवपौरवाः ।
उदीच्या दाक्षिणात्याश्च ये चान्येऽपि महारथाः । ये च कर्णमुखा राजन् रथोदाराः प्रकीर्त्तिताः ।
एतेऽर्जुनस्य क्रुद्धस्य कलां नार्हन्ति षोडशीं । उद्युक्ता पृथिवी सर्व्वा ससुरासुरमानुषा ।
सराक्षसगणा राजन् सकिन्नरमहोरगा । जङ्गमाः स्थावराः सर्व्वे नालं पार्थस्य संयुगे ।
एवं ज्ञात्वा महाराज व्येतु ते भीर्धनञ्जये । यत्र वीरौ महेष्वासौ कृष्णौ सत्यपराक्रमौ । ४२७०
न तत्र कर्म्मणो व्यापत्कथञ्चिदपि विद्यते । दैवं कृतास्त्रतां योगममर्षमपि चाहवे ।
कृतज्ञतां दयाञ्चैव भ्रातुस्त्वमनुचिन्तय । मयि च व्यपयाते वै गच्छमानेऽर्जुनं प्रति ।
द्रोणे चित्रास्त्रतां सङ्ख्ये राजंस्त्वमनुचिन्तय । आचार्य्यो हि भृशं राजन्निग्रहे तव गृध्यति ।
प्रतिज्ञामात्मनो रक्षन् सत्यां कर्त्तुञ्च भारत । कुरुष्वाद्यात्मनो गुप्तिं कस्ते गोप्ता गते मयि ।
यस्याहं प्रत्ययात् पार्थ गच्छेयं फाल्गुनं प्रति । न ह्यहं त्वां महाराज अनिक्षिप्य महाहवे । ४२७५
क्वचिद्यास्यामि कौरव्य सत्यमेतद्ब्रवीमि ते । एतद्विचार्य्य बहुधा बुद्ध्या बुद्धिमतां वर ।
दृष्ट्वा श्रेयः परं बुद्ध्या ततो राजन् प्रशाधि मां ।
॥ युधिष्ठिर उवाच ॥ एवमेतन्महाबाहो यथा वदसि माधव । न तु मे शुध्यते भावः श्वेताश्वं प्रति मारिष ।
करिष्ये परमं यत्नमात्मनो रक्षणे ह्यहं । गच्छ त्वं समनुज्ञातो यत्र यातो धनञ्जयः ।
आत्मसंरक्षणं सङ्ख्ये गमनञ्चार्ज्जुनम्प्रति । विचार्य्यैतत् स्वयं बुद्ध्या गमनं तत्र रोचये । ४२८०
स त्वमातिष्ठ यानाय यत्र यातो धनञ्जयः । ममापि रक्षणं भीमः करिष्यति महाबलः ।
पार्षतश्च ससोदर्य्यः पार्थिवाश्च महाबलाः । द्रौपदेयाश्च मां तात रक्षिष्यन्ति न संशयः ।
केकया भ्रातरः पञ्च राक्षसश्च घटोत्कचः । विराटो द्रुपदश्चैव शिखण्डी च महारथः ।
धृष्टकेतुश्च बलवान् कुन्तिभोजश्च मारिष । नकुलः सहदेवश्च पाञ्चालाः सृञ्जयास्तथा ।
एते समाहितास्तात रक्षिष्यन्ति न संशयः । न द्रोणः सह सैन्येन कृतवर्म्मा च संयुगे । ४२८५
समासादयितुं शक्तो न च मां धर्षयिष्यति । धृष्टद्युम्नश्च समरे द्रोणं क्रुद्धं परन्तपः ।
वारयिष्यति विक्रम्य वेलेव मकरालयं । यत्र स्थास्यति सङ्ग्रामे पार्षतः परवीरहा ।
द्रोणो न सैन्यं बलवत् क्रामेत्तत्र कथञ्चन । एष द्रोणविनाशाय समुत्पन्नो हुताशनात् ।

कवची समरी खड्गी धन्वी च वराम्बरः । किमर्थं गच्छ शैनेय आचार्य्योऽर्थि मध्यमं ।
धृष्टद्युम्नो रणे क्रुद्धं द्रोणमावारयिष्यति । ४२९०

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि युधिष्ठिरवाक्ये एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

॥ सञ्जय उवाच ॥ धर्म्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गवः । स पार्थाद्भयमाशङ्कन् परित्यागान्महीपतेः ।
अपवादं ह्यात्मनश्च लोकाद्रक्षन् विशेषतः । न मां भीत इति ब्रूयुरायान्तं फाल्गुनं प्रति ।
निश्चित्य बहुधैवं स सात्यकिर्युद्धदुर्म्मदः । धर्म्मराजमिदं वाक्यमब्रवीत् पुरुषर्षभः ।
कृतां चेन्मन्यसे रक्षां स्वस्ति तेऽस्तु विशाम्पते । अनुयास्यामि बीभत्सुं करिष्ये वचनं तव ।
न हि मे पाण्डवात् कश्चित् त्रिषु लोकेषु विद्यते । यो मे प्रियतरो राजन् सत्यमेतद्ब्रवीमि ते । ४२९५
तस्याहं पदवीं यास्ये सन्देशात्तव मानद । त्वत्कृते न च मे किञ्चिदकर्त्तव्यं कथञ्चन ।
यथा हि मे गुरोर्वाक्यं विशिष्टं द्विपदाम्वर । तथा तवापि वचनं विशिष्टतरमेव मे ।
प्रिये हि तव वर्त्तेते भ्रातरौ कृष्णपाण्डवौ । तयोः प्रिये स्थितञ्चैव विद्धि मां राजपुङ्गव ।
तवाज्ञां शिरसा गृह्य पाण्डवार्थमहं प्रभो । भित्त्वेदं दुर्भिदं सैन्यं प्रयास्ये नरपुङ्गव ।
द्रोणानीकं विशाम्येष क्रुद्धो झष इवार्णवं । तत्र यास्यामि यत्रासौ राजन् राजा जयद्रथः । ४३००
यत्र सेनां समाश्रित्य भीतस्तिष्ठति पाण्डवात् । गुप्तो रथवरश्रेष्ठैर्द्रौणिकर्णकृपादिभिः ।
इतस्त्रियोजनं मन्ये तमध्वानं विशाम्पते । यत्र तिष्ठति पार्थोऽसौ जयद्रथवधोद्यतः ।
त्रियोजनगतस्यापि तस्य यास्याम्यहं पदं । आसैन्धववधाद्राजन् सुदृढेनान्तरात्मना ।
अनादिष्टस्तु गुरुणा को नु युद्ध्येत मानवः । आदिष्टस्तु यथा राजन् को न युद्ध्येत मादृशः ।
अभिजानामि तं देशं यत्र यास्याम्यहं प्रभो । हलशक्तिगदाप्रासचर्म्मखड्गर्ष्टितोमरं । ४३०५
इष्वस्त्रवरसम्बाधं क्षोभयिष्ये बलार्णवं । यदेतत् कुञ्जरानीकं सहस्रमनुपश्यसि ।
कुलमञ्जनकं नाम यत्रैते वीर्य्यशालिनः । आस्थिता बहुभिर्म्लेच्छैर्युद्धशौण्डैः प्रहारिभिः ।
नागा मेघनिभा राजन् क्षरन्त इव तोयदाः । नैते जातु निवर्त्तेरन् प्रेषिता हस्तिसादिभिः ।
अन्यत्र हि वधादेषां नास्ति राजन् पराजयः । अथ यान् रथिनो राजन् सहस्रमनुपश्यसि ।
एते रुक्मरथा नाम राजपुत्रा महारथाः । रथेष्वस्त्रेषु निपुणा नागेषु च विशाम्पते । ४३१०
धनुर्व्वेदे गताः पारं मुष्टियुद्धे च कोविदाः । गदायुद्धविशेषज्ञा नियुद्धकुशलास्तथा ।
खड्गप्रहरणे युक्ताः सम्पाते चासिचर्म्मणोः । शूराश्च कृतविद्याश्च स्पर्द्धन्ते च परस्परं ।
नित्यं हि समरे राजन् विजिगीषन्ति मानवान् । कर्णेन विहिता राजन् दुःशासनमनुव्रताः ।
एतांस्तु वासुदेवोऽपि रथोदारान् प्रशंसति । सततं प्रियकामाश्च कर्णस्यैते वशे स्थिताः ।
तस्यैव वचनाद्राजन् निवृत्ताः श्वेतवाहनात् । तेन क्लान्ता न च श्रान्ता दृढावरणकार्म्मुकाः । ४३१५
मदर्थं धिष्ठिता नूनं धार्त्तराष्ट्रस्य शासनात् । एतान् प्रमथ्य सङ्ग्रामे प्रियार्थं तव कौरव ।
प्रयास्यामि ततः पश्चात् पदवीं सव्यसाचिनः । यांस्त्वेतानपरान् राजन् नागान् सप्तशतानिमान् ।

प्रेक्षसे वर्म्मसंच्छन्नान् किरातैः समधिष्ठितान् । किरातराजो यान् प्रादात् द्विरदान् सव्यसाचिनः ।
स्वलङ्कृतांस्तथा प्रेष्यान् इच्छन् जीवितमात्मनः । आसन्नेते पुरा राजंस्तव कर्म्मकराः दृढं ।
त्वामेवाद्य युयुत्सन्ते पश्य कालस्य पर्य्ययं । एषामेते महामात्राः किराता युद्धदुर्म्मदाः । ४३२०
हस्तिशिक्षाविदश्चैव सर्व्वे चैवाग्नियोनयः । एते विनिर्ज्जिताः सङ्ख्ये सङ्ग्रामे सव्यसाचिना ।
मदर्थमद्य संयत्ता दुर्य्योधनवशानुगाः । एतान् हत्वा शरैराजन् किरातान् युद्धदुर्म्मदान् ।
सैन्धवस्य वधे यत्तमनुयास्यामि पाण्डवं । ये त्वेते सुमहानागा अञ्जनस्य कुलोद्भवाः ।
कर्कशाश्च विनीताश्च प्रभिन्नकरटामुखाः । जाम्बूनदमयैः सर्व्वैर्व्वर्म्मभिः सुविभूषिताः ।
लब्धलक्षा रणे राजन् ऐरावणसमा युधि । उत्तरात् पर्व्वतादेते तीक्ष्णैर्दस्युभिरास्थिताः । ४३२५
कर्कशैः प्रवरैर्य्योधैः कार्ष्णायसतनुच्छदैः । सन्ति गोयोनयश्चात्र सन्ति वानरयोनयः ।
अनेकयोनयश्चान्ये तथा मानुषयोनयः । अनीकं समवेतानां धूमवर्णमुदीर्य्यते ।
म्लेच्छानां पापकर्म्मणां हिमदुर्गनिवासिनां । एतद्दुर्य्योधनो लब्ध्वा समग्रं राजमण्डलं ।
कृपञ्च सौमदत्तिञ्च द्रोणञ्च रथिनाम्बरं । सिन्धुराजं तथा कर्णमवमन्यत पाण्डवान् ।
कृतार्थमथ चात्मानं मन्यते कालचोदितः । ते तु सर्व्वेऽद्य सम्प्राप्ता मम नाराचगोचरं । ४३३०
न विमोक्ष्यन्ति कौन्तेय यद्यपि स्युर्म्मनोजवाः । तेन सम्भाविता नित्यं परवीर्य्योपजीविना ।
विनाशमुपयास्यन्ति मच्छरौघप्रपीडिताः । ये त्वेते रथिनो राजन् दृश्यन्ते काञ्चनध्वजाः ।
एते दुर्व्वारणोनाम काम्बोजा यदि ते श्रुताः । शूराश्च कृतविद्याश्च धनुर्व्वेदे च निष्ठिताः ।
संहताश्च भृशं ह्येते अन्योऽन्यस्य हितैषिणः । अक्षौहिण्यश्च संरब्धा धार्त्तराष्ट्रस्य भारत ।
यत्ता मदर्थे तिष्ठन्ति कुरुवीराभिरक्षिताः । अप्रमत्ता महाराज मामेव प्रत्युपस्थिताः । ४३३५
तानहं प्रमथिष्यामि तृणानीव हुताशनः । तस्मात् सर्व्वानुपासङ्गान् सर्व्वोपकरणानि च ।
रथे कुर्व्वन्तु मे राजन् यथावद्रथकल्पकाः । अस्मिंस्तु किल संमर्द्दे ग्राह्यं विविधमायुधं ।
यथोपदिष्टमाचार्य्यैः कार्य्यः पञ्चगुणो रथः । काम्बोजैर्हि समेष्यामि तीक्ष्णैराशीविषोपमैः ।
नानाशस्त्रसमावापैर्व्विविधायुधयोधिभिः । किरातैश्च समेष्यामि विषकल्पैः प्रहारिभिः ।
लालितैः सततं राज्ञा दुर्य्योधनहितैषिभिः । शकैश्चापि समेष्यामि शक्रतुल्यपराक्रमैः । ४३४०
अग्निकल्पैर्दुराधर्षैः प्रदीप्तैरिव पावकैः । तथान्यैर्व्विविधैर्य्योधैः कालकल्पैर्दुरासदैः ।
समेष्यामि रणे राजन् बहुभिर्युद्धदुर्म्मदैः । तस्माद्वै वाजिनो मुख्या विश्रुताः शुभलक्षणाः ।
उपावृत्ताश्च पीताश्च पुनर्युज्यन्तु मे रथे ।
॥ सञ्जय उवाच ॥ तस्य सर्व्वानुपासङ्गान् सर्व्वोपकरणानि च । रथे चास्थापयद्राजा शस्त्राणि विविधानि च ।
ततस्तान् सर्व्वतो युक्तान् सदश्वांश्चतुरो जनाः । रसवत् पाययामासुः पानं मदसमीरणं । ४३४५
पीतोपवृत्तान् स्नातांश्च जग्धान्नान् समलङ्कृतान् । विनीतशल्यांस्तुरगांश्चतुरो हेममालिनः ।
तान्युक्तान् रुक्मवर्णाभान् विनीतान् शीघ्रगामिनः । संहृष्टमनसोऽव्यग्रान् विधिवत्कल्पिताञ्चथे ।

महाध्वजेन दिव्येन हेमकेसरमालिना । युतेन कौतुकैर्हैमैर्मणिविद्रुमचर्च्चितैः ।
पाण्डुराभ्रप्रकाशाभिः पताकाभिरलङ्कृते । हेमदण्डोच्छ्रितच्छत्रे बहुशस्त्रपरिच्छदे ।
योजयामास विधिवद्धेमभाण्डविभूषितान् । दारुकस्यानुजो भ्राता सूतस्तस्य प्रियः सखा । ४२५०
न्यवेदयद्रथं युक्तं वासवस्येव मातलिः । ततः स्नातः शुचिर्भूत्वा कृतकौतुकमङ्गलः ।
स्नातकानां सहस्रस्य स्वर्णनिष्कानवाचयत् । आशीर्व्वादैः परिष्वक्तः सात्यकिः श्रीमतां वरः ।
ततः स मधुपर्कार्हः पीत्वा कैलातकं मधु । लोहिताक्षो बभौ तत्र मदविह्वललोचनः ।
आलभ्य वीरकांस्यञ्च हर्षेण महतान्वितः । द्विगुणीकृततेजा हि प्रज्वलन्निव पावकः ।
उत्सङ्गे धनुरादाय सशरं रथिनाम्वरः । कृतस्वस्त्ययनो विप्रैः कवची समलङ्कृतः । ४२५५
लाजैर्गन्धैस्तथा माल्यैः कन्याभिश्चाभिनन्दितः । युधिष्ठिरस्य चरणावभिवाद्य कृताञ्जलिः ।
तेन मूर्द्धन्युपघ्रात आरुरोह महारथं । ततस्ते वाजिनो हृष्टाः सुपुष्टा वातरंहसः ।
अजय्या जैत्रमूहुस्तं विकुर्व्वाणाः स्म सैन्धवाः । तथैव भीमसेनोऽपि धर्म्मराजेन पूजितः ।
प्रायात्सात्यकिना सार्द्धमभिवाद्य युधिष्ठिरं । तौ दृष्ट्वा प्रविविक्षन्तौ तव सेनामरिन्दमौ ।
सपत्नास्तावकाः सर्व्वे तस्थुर्द्रोणपुरोगमाः । सन्नद्धमनुगच्छन्तं दृष्ट्वा भीमं स सात्यकिं । ४२६०
अभिनन्द्याब्रवीद्वीरस्तदा हर्षकरं वचः । अथ हर्षपरीताङ्गः सात्यकिर्भीममब्रवीत् ।
त्वं भीम रक्ष राजानमेतत्कार्य्यमतं हि ते । अहं भित्त्वा प्रवेक्ष्यामि कालपक्वमिदं बलं ।
आयत्याञ्च तदात्वे च श्रेयो राज्ञोऽभिरक्षणं । जानीषे मम वीर्य्यं त्वं तव चाहमरिन्दम ।
तस्माद्भीम निवर्त्तस्व मम चेदिच्छसि प्रियं । तथोक्तः सात्यकिं प्राह व्रज त्वं कार्य्यसिद्धये ।
अहं राज्ञः करिष्यामि रक्षां पुरुषसत्तम । एवमुक्तः प्रत्युवाच भीमसेनं स माधवः । ४२६५
गच्छ गच्छ ध्रुवं पार्थ ध्रुवो हि विजयो मम । यन्मे गुणानुरक्तस्त्वमद्य वश्यमास्थितः ।
निमित्तानि च धन्यानि यथा भीम वदन्ति मां । निहते सैन्धवे पापे पाण्डवेन महात्मना ।
परिष्वजिष्ये राजानं धर्म्मात्मानं युधिष्ठिरं । एतावदुक्त्वा भीमन्तु विसृज्य च महायशाः ।
सम्प्रैक्षत् तावकं सैन्यं व्याघ्रो मृगगणानिव । तं दृष्ट्वा प्रतिवीक्षन्तं सैन्यं तव जनाधिप ।
भूय एवाभवन्मूढं सुभृशं चाप्यकम्पत । ततः प्रयातः सहसा तव सैन्यं स सात्यकिः । ४२७०
दिदृक्षुरर्जुनं राजन् धर्म्मराजस्य शासनात् ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकिप्रवेशे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

॥ सञ्जय उवाच ॥ प्रयाते तव सैन्यन्तु युयुधाने युयुत्सया । धर्म्मराजो महाराज सेनानीकेन संवृतः ।
प्रायाद्द्रोणरथं प्रेप्सुर्युयुधानस्य पृष्ठतः । ततः पाञ्चालराजस्य पुत्त्रः समरदुर्म्मदः ।
प्राक्रोशत्पाण्डवानीके वसुदानश्च पार्थिवः । आगच्छत प्रहरत द्रुतं विपरिधावत ।
यथा सुखेन गच्छेत सात्यकिर्युद्धदुर्म्मदः । महारथा हि बहवो यतिष्यन्त्यस्य निर्जये । ४२७५
इति ब्रुवन्तो वेगेन निपेतुस्ते महारथाः । वयम्प्रतिजिगीषन्तस्तत्र तान् समभिद्रुताः

ततः शब्दो महानासीत् युयुधानरथम्प्रति। आकीर्य्यमाणा धावन्ती तव पुत्त्रस्य वाहिनी।
सात्त्वतेन महाराज शतधाऽभिव्यशीर्य्यत। तस्यां विदीर्य्यमाणायां शिनेः पुत्त्रो महारथः।
सप्तवीरान् महेष्वासान् अग्रानीकेष्वपोथयत्। अथान्यानपि राजेन्द्र नानाजनपदेश्वरान्।
शरैरनलसङ्काशैर्निन्ये वीरान् यमक्षयं। शतमेकेन विव्याध शतेनैकञ्च पत्त्रिणं। ४३८०
द्विपारोहान् द्विपांश्चैव हयारोहान् हयांस्तथा। रथिनः साश्वसूतांश्च जघानेशः पशूनिव।
तं तथा द्रुतकर्म्माणं शरसम्पातवर्षिणं। न केचनाभ्यधावन्वै सात्यकिं तव सैनिकाः।
ते भीता मृद्यमानाश्च प्रमृष्टा दीर्घबाहुना। आयोधनं जहुर्व्वीरा दृष्ट्वा तमतिमानिनं।
तमेकं बहुधा पश्यन्मोहितास्तस्य तेजसा। रथैर्व्विमथितैश्चैव भग्ननीडैश्च मारिष।
चक्रैर्व्विमथितैश्छत्त्रैर्ध्वजैश्च विनिपातितैः। अनुकर्षैः पताकाभिः शिरस्त्राणैः सकाञ्चनैः। ४३८५
बाहुभिश्चन्दनादिग्धैः साङ्गदैश्च विशाम्पते। हस्तिहस्तोपमैश्चापि भुजङ्गाभोगसन्निभैः।
ऊरुभिः पृथिवी च्छन्ना मनुजानां नराधिप। शशाङ्कसन्निभैश्चैव वदनैश्चारुकुण्डलैः।
पतितैर्ऋषभाक्षाणां सा बभावतिमेदिनी। गजैश्च बहुधाच्छिन्नैः शयानैः पर्व्वतोपमैः।
रराजातिभृशं भूमिर्व्विकीर्णैरिव पर्व्वतैः। तपनीयमयैर्योक्त्रैर्मुक्ताजालविभूषितैः।
उरश्छदैर्व्विचित्रैश्च व्यशोभन्त तुरङ्गमाः। गतसत्त्वा महीम्प्राप्य प्रमृष्टा दीर्घबाहुना। ४३९०
नानाविधानि सैन्यानि तव हत्वा तु सात्त्वतः। प्रविष्टस्तावकं सैन्यं द्रावयित्वा चमूं भृशं।
ततस्तेनैव मार्गेण येन यातो धनञ्जयः। इयेष सात्यकिर्गन्तुं ततो द्रोणेन वारितः।
भारद्वाजं समासाद्य युयुधानस्स सात्यकिः। न न्यवर्त्तत संक्रुद्धो वेलामिव जलाशयः।
निवार्य्य तु रणे द्रोणो युयुधानं महारथं। विव्याध निशितैर्व्बाणैः पञ्चभिर्म्मर्म्मभेदिभिः।
सात्यकिस्तु रणे द्रोणं राजन् विव्याध सप्तभिः। हेमपुङ्खैः शिलाधौतैः कङ्कबर्हिणवाजितैः। ४३९५
तं षड्भिः सायकैर्द्रोणः साश्वयन्तारमार्द्दयत्। ततो न ममृषे द्रोणं युयुधानो महारथः।
सिंहनादं ततः कृत्वा द्रोणं विव्याध सात्यकिः। दशभिः सायकैश्चान्यैः षड्भिरष्टाभिरेव च।
युयुधानः पुनर्द्रोणं विव्याध दशभिः शरैः। एकेन सारथिञ्चास्य चतुर्भिश्चतुरो हयान्।
ध्वजमेकेन बाणेन विव्याध युधि मारिष। तं द्रोणः साश्वयन्तारं सरथध्वजमाशुगैः।
त्वरन् प्राच्छादयद्बाणैः शलभानामिव व्रजैः। तथैव युयुधानोऽपि द्रोणं बहुभिराशुगैः। ४४००
आच्छादयत सम्भ्रान्तस्ततो द्रोण उवाच ह। तवाचार्य्यो रणं हित्वा गतः कापुरुषो यथा।
युध्यमानञ्च मां हित्वा प्रदक्षिणमवर्त्तत। त्वं हि मे युध्यतो नाद्य जीवन् यास्यसि माधव।
यदि मां त्वं रणे हित्वा न यास्याचार्य्यवद्द्रुतं।
॥ सात्यकिरुवाच॥ धनञ्जयस्य पदवीं धर्म्मराजस्य शासनात्। गच्छामि स्वस्ति ते ब्रह्मन् न मे कालात्ययो भवेत्।
आचार्य्यानुगतो मार्गः शिष्यैरन्वास्यते सदा। तस्मादेव व्रजाम्याशु यथा मे स गुरुर्गतः। ४४०५
॥ सञ्जय उवाच॥ एतावदुक्त्वा शैनेय आचार्य्यं परिवर्जयन्। प्रयातः सहसा राजन् सारथिञ्चेदमब्रवीत्।

द्रोणः करिष्यते यत्नं सर्व्वथा मम वारणे । यत्तो याहि रणे सूत शृणु चेदं वचः परं ।
एतदालोक्यते सैन्यमावन्त्यानां महाप्रभं । अस्यानन्तरतस्त्वेतत् दाक्षिणात्यं महद्बलं ।
तदनन्तरमेतच्च वाह्लिकानां महद्बलं । वाह्लिकाभ्याशतोयुक्तं कर्णस्य च महद्बलं ।
अन्योऽन्येन हि सैन्यानि भिन्नान्येतानि सारथे । अन्योऽन्यं समुपाश्रित्य विरचन्ति रणाजिरे । ४४१०
एतदन्तरमासाद्य चोदयाश्वान् प्रहृष्टवत् । मध्यमं जवमास्थाय वह मामत्र सारथे ।
वाह्लिका यत्र दृश्यन्ते नानाप्रहरणोद्यताः । दाक्षिणात्याश्च बहवः सूतपुत्त्रपुरोगमाः ।
हस्त्यश्वरथसम्बाधं यच्चानीकं विलोक्यते । नानादेशसमुत्थैश्च पदातिभिरधिष्ठितं ।
एतावदुक्त्वा यन्तारं ब्राह्मणं परिवर्ज्जयन् । मध्यतो याहि यत्रोग्रं कर्णस्य च महद्बलं ।
तं द्रोणोऽनुययौ क्रुद्धो विकिरन् विशिखान् बहून् । युयुधानं महाभागं गच्छन्तमनिवर्त्तिनं । ४४१५
कर्णस्य सैन्यं सुमहदभिहत्य शितैः शरैः । प्राविशद्भारतीं सेनामपर्य्यन्तां स सात्यकिः ।
प्रविष्टे युयुधाने तु सैनिकेषु द्रुतेषु च । अमर्षी कृतवर्म्मा तु सात्यकिं पर्य्यवारयत् ।
तमापतन्तं विशिखैः षड्भिराहत्य सात्यकिः । चतुर्भिश्चतुरोऽस्याश्वानाजघानाशु वीर्य्यवान् ।
ततः पुनः षोडशभिर्न्नतपर्व्वभिराशुगैः । सात्यकिः कृतवर्म्माणं प्रत्यविध्यत् स्तनान्तरे ।
सताड्यमानो विशिखैर्ब्बहुभिस्तिग्मतेजनैः । सात्वतेन महाराज कृतवर्म्मा न चक्षमे । ४४२०
स वत्सदन्तं सन्धाय जिह्मगानिलसन्निभं । आकृष्य राजन्नाकर्णाद्विव्याधोरसि सात्यकिं ।
स तस्य देहावरणं भित्त्वा देहञ्च सायकः । सपुङ्खपत्त्रः पृथिवीं विवेश रुधिरोक्षितः ।
अथास्य बहुभिर्ब्बाणैरच्छिनत् परमास्त्रवित् । स मार्गणगणं राजन् कृतवर्म्मा शरासनं ।
विव्याध च रणे राजन् सात्यकिं सत्यविक्रमं । दशभिर्व्विशिखैस्तीक्ष्णैरभिक्रुद्धः स्तनान्तरे ।
ततः प्रशीर्णे धनुषि शक्त्या शक्तिमतां वरः । जघान दक्षिणं बाहुं सात्यकिः कृतवर्म्मणः । ४४२५
ततोऽन्यत् सुदृढञ्चापं पूर्णमायम्य सात्यकिः । व्यसृजद्विशिखांस्तूर्णं शतशोऽथ सहस्रशः ।
सरथं कृतवर्म्माणं समन्तात् पर्य्यवारयत् । छादयित्वा रणे राजन् हार्द्दिक्यं स तु सात्यकिः ।
अथास्य भल्लेन शिरः सारथेः समकृन्तत । स पपात हतः सूतो हार्द्दिक्यस्य महारथात् ।
ततस्ते यन्तृरहिता प्राद्रवंस्तुरगा भृशं । अथ भोजस्तु सम्भ्रान्तो निगृह्य तुरगान् स्वयं ।
तस्थौ वीरो धनुष्पाणिस्तत्सैन्यान्यभ्यपूजयन् । समुहूर्त्तमिवाश्वस्य सदश्वान् समचोदयत् । ४४३०
व्यपेतभीरमित्राणामावहत् सुमहद्भयं । सात्यकिश्चाभ्यगात्तस्मात् सतु भीममुपाद्रवत् ।
युयुधानोऽपि राजेन्द्र भोजानीकाद्विनिःसृतः । प्रययौ त्वरितस्तूर्णं काम्बोजानां महाचमूं ।
स तत्र बहुभिः शूरैः सन्निरुद्धो महारथैः । न चचाल तदा राजन् सात्यकिः सत्यविक्रमः ।
सन्धाय च चमूं द्रोणो भोजे भारं निवेश्य च । अभ्यधावद्रणे यत्तो युयुधानं युयुत्सया ।
तथा तमनुधावन्तं युयुधानस्य पृष्ठतः । न्यवारयन्त संहृष्टाः पाण्डुसैन्ये वृहत्तमाः । ४४३५
समासाद्य च हार्द्दिक्यं रथानां प्रवरं रथं । पाञ्चाला विगतोत्साहा भीमसेनपुरोगमाः ।

विक्रम्य वारिता राजन् वीरेण कृतवर्म्मणा । यतमानांश्च तान् सर्व्वानीषद्विगतचेतसः ।
अभितस्तान् शरौघेण क्लान्तवाहानकारयत् । निगृहीतास्तु भोजेन भोजानीकेप्सवो रणे ।
अतिष्ठन्नार्य्यवद्वीराः प्रार्थयन्तो महद्यशः ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकिप्रवेशे त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥
॥ धृतराष्ट्र उवाच ॥ एवं बहुविधं सैन्यं एवं प्रविचितं बरं । व्यूढमेवं यथान्यायं एवं बहु च सञ्जय । ४४४०
नित्यं पूजितमस्माभिरभिकामञ्च नः सदा । प्रौढमत्यद्भुताकारं पुरस्ताद्दृढविक्रमं ।
नातिवृद्धमबालञ्च नाकृशं नापि पीवरं । लघुवृत्तायतप्राणं सारगात्रमनामयं ।
आत्तसन्नाहसंच्छन्नं बहुशस्त्रपरिच्छदं । शस्त्रग्रहणविद्यासु बह्वीषु परिनिष्ठितं ।
आरोहे पर्य्यवस्कन्धे सरणे सान्तरप्लुते । सम्यक्प्रहरणे याने व्यपयाने च कोविदं ।
नागेष्वश्वेषु बहुशो रथेषु च परीक्षितं । परीक्ष्य च यथान्यायं वेतनेनोपपादितं । ४४४५
नगोष्ठ्या नोपचारेण न सम्बन्धनिमित्ततः । नानाहूतं नाप्यभृतं मम सैन्यं बभूव ह ।
कुलीनार्य्यजनोपेतं तुष्टपुष्टमनुद्धतं । कृतमानोपचारञ्च यशस्वि च मनस्वि च ।
सचिवैश्चापरैर्मुख्यैर्बहुभिः पुण्यकर्म्मभिः । लोकपालोपमैस्तात पालितं नरसत्तमैः ।
बहुभिः पार्थिवैर्गुप्तमस्मत्प्रियचिकीर्षुभिः । अस्मानभिसृतैः कामात् सबलैः सपदानुगैः ।
पयोदधिमिवापूर्णमापगाभिः समन्ततः । अपक्षैः पक्षिसङ्काशैरथैरश्वैश्च संवृतं । ४४५०
प्रभिन्नकरटैश्चैव द्विरदैरावृतं महत् । यदहन्यत मे सैन्यं किमन्यद्भागधेयतः ।
योधाक्षय्यजलं भीमं वाहनोर्म्मितरङ्गिणं । क्षेपण्यसिगदाशक्तिशरप्रासझषाकुलं ।
ध्वजभूषणसम्बाधं रत्नोत्पलसुसञ्चितं । वाहनैरभिधावद्भिर्व्वायुवेगविकम्पितं ।
द्रोणगम्भीरपातालं कृतवर्म्ममहाह्रदं । जलसन्धमहाग्राहं कर्णचन्द्रोदयोद्धतं ।
गते सैन्यार्णवं भित्त्वा तरसा पाण्डवर्षभे । सञ्जयैकरथेनैव युयुधाने च मामकं । ४४५५
तत्र शेषं न पश्यामि प्रविष्टे सव्यसाचिनि । सात्वते च रथोदारे मम सैन्यस्य सञ्जय ।
तौ तत्र समतिक्रान्तौ दृष्ट्वाऽतीव तरस्विनौ । सिन्धुराजन्तु संप्रेक्ष्य गाण्डीवस्येषुगोचरे ।
किन्नु वा कुरवः कृत्यं विदधुः कालचोदिताः । दारुणैकायने काले कथं वा प्रतिपेदिरे ।
ग्रस्तान् हि कौरवान्मन्ये मृत्युना तात सङ्गतान् । विक्रमोऽपि रणे तेषां न तथा दृश्यते हि वै ।
अक्षतौ संयुगे तत्र प्रविष्टौ कृष्णपाण्डवौ । नच वारयिता कश्चित्तयोरस्तीह सञ्जय । ४४६०
भृताश्च बहवो योधाः परीक्ष्यैव महारथाः । वेतनेन यथायोगं प्रियवादेन चापरे ।
असत्कारभृतस्तात मम सैन्ये न विद्यते । कर्म्मणा ह्यनुरूपेण लभ्यते भक्तवेतनं ।
न चायोधोऽभवत् कश्चिन्मम सैन्ये तु सञ्जय । अल्पदानभृतस्तात तथा चाभृतको नरः ।
पूजितो हि यथाशक्त्या दानमानासनैर्म्मया । तथा पुत्रैश्च मे तात ज्ञातिभिश्च सबान्धवैः ।
ते च प्राप्यैव सङ्ग्रामे निर्ज्जिताः सव्यसाचिना । शैनेयेन परामृष्टाः किमन्यद्भागधेयतः । ४४६५

रक्ष्यते यश्च सङ्ग्रामे ये च सञ्जय रक्षिणः । एकः साधारणः पन्था रक्ष्यस्य सह रक्षिभिः ।
अर्ज्जुनं समरे दृष्ट्वा सैन्धवस्याग्रतः स्थितं । पुत्त्रो मम भृशं मूढः किं कार्य्यं प्रत्यपद्यत ।
सात्यकिञ्च रणे दृष्ट्वा प्रविशन्तमभीतवत् । किन्नु दुर्य्योधनः कृत्यं प्राप्तकालममन्यत ।
सर्व्वशस्त्रातिगौ सेनां प्रविष्टौ रथसत्तमौ । दृष्ट्वा कां वै मतिं युद्धे प्रत्यपद्यन्त मामकाः ।
दृष्ट्वा कृष्णन्तु दाशार्हमर्ज्जुनार्थे व्यवस्थितं । शिनीनामृषभञ्चैव मन्ये शोचन्ति पुत्त्रकाः । ४४७०
दृष्ट्वा सेनां व्यतिक्रान्तां सात्वतेनार्ज्जुनेन च । पलायमानांश्च कुरून् मन्ये शोचन्ति पुत्त्रकाः ।
विद्रुतान् रथिनो दृष्ट्वा निरुत्साहान् द्विषज्जये । पलायने कृतोत्साहान् मन्ये शोचन्ति पुत्त्रकाः ।
शून्यान् कृतान् रथोपस्थान् सात्वतेनार्ज्जुनेन च । हतांश्च योधान् संदृश्य मन्ये शोचन्ति पुत्त्रकाः ।
व्यश्वनागरथान् दृष्ट्वा तत्र वीरान् सहस्रशः । धावमानान् रणे व्यग्रान्मन्ये शोचन्ति पुत्त्रकाः ।
महानागान् विद्रवतो दृष्ट्वाऽर्ज्जुनशराहतान् । पतितान् पततश्चान्यान्मन्ये शोचन्ति पुत्त्रकाः । ४४७५
विहीनांश्च कृतानश्वान् विरथांश्च कृतान्नरान् । तत्र सात्यकिपार्थाभ्यां मन्ये शोचन्ति पुत्त्रकाः ।
हयौघान्निहतान् दृष्ट्वा द्रवमाणांस्ततस्ततः । रणे माधवपार्थाभ्यां मन्ये शोचन्ति पुत्त्रकाः ।
पत्तिसङ्घान् रणे दृष्ट्वा धावमानांश्च सर्व्वशः । निराशा विजये सर्व्वे मन्ये शोचन्ति पुत्त्रकाः ।
द्रोणस्य समतिक्रान्तावनीकमपराजितौ । क्षणेन दृष्ट्वा तौ वीरौ मन्ये शोचन्ति पुत्त्रकाः ।
संमूढोऽस्मि भृशं तात श्रुत्वा कृष्णधनञ्जयौ । प्रविष्टौ मामकं सैन्यं सात्वतेन सहाच्युतौ । ४४८०
तस्मिन् प्रविष्टे पृतनां शिनीनां प्रवरे रथे । भोजानीकं व्यतिक्रान्ते किमकुर्व्वत कौरवाः ।
तथा द्रोणेन समरे निगृहीतेषु पाण्डुषु । कथं युद्धमभूत्तत्र तन्ममाचक्ष्व सञ्जय ।
द्रोणो हि बलवान् श्रेष्ठः कृतास्त्रो युद्धदुर्म्मदः । पाञ्चालास्तं महेष्वासं प्रत्यविध्यन् कथं रणे ।
बद्धवैरास्ततो द्रोणे धनञ्जयजयैषिणः । भारद्वाजसुतस्तेषु दृढवैरो महारथः ।
अर्ज्जुनश्चापि यच्चक्रे सिन्धुराजवधम्प्रति । तन्मे सर्व्वं समाचक्ष्व कुशलो ह्यसि सञ्जय । ४४८५
॥ सञ्जय उवाच ॥ आत्मापराधात् सम्भूतं व्यसनं भरतर्षभ । प्राप्य प्राकृतवत् वीर मा त्वं शोचितुमर्हसि ।
पुरा यदुच्यसे प्राज्ञैः सुहृद्भिर्विदुरादिभिः । मा हार्षीः पाण्डवान् राजन्निति तन्न त्वया श्रुतं ।
सुहृदां हितकामानां वाक्यं यो न शृणोति ह । स महद्व्यसनम्प्राप्य शोचते वै यथा भवान् ।
याचितोऽसि पुरा राजन् दाशार्हेण शमम्प्रति । न च तं लब्धवान् कामं त्वत्तः कृष्णो महायशाः ।
तव निर्गुणतां ज्ञात्वा पक्षपातं सुतेषु च । द्वैधीभावं तथा धर्म्मे पाण्डवेषु च मत्सरं । ४४९०
तव जिह्ममभिप्रायं विदित्वा पाण्डवान् प्रति । आर्त्तप्रलापांश्च बहून् मनुजाधिपसत्तम ।
सर्व्वलोकस्य तत्त्वज्ञः सर्व्वलोकेश्वरः प्रभुः । वासुदेवस्ततो युद्धं कुरूणामकरोन्महत् ।
आत्मापराधात् सुमहान् प्राप्तस्ते विपुलः क्षयः । नैनं दुर्य्योधने दोषं कर्त्तुमर्हसि मानद ।
न हि ते सुकृतं किञ्चिदादौ मध्ये च भारत । दृश्यते पृष्ठतश्चैव त्वन्मूलो हि पराजयः ।
तस्मादवस्थितो भूत्वा ज्ञात्वा लोकस्य निर्णयं । शृणु युद्धं यथावृत्तं घोरं देवासुरोपमं । ४४९५

प्रविष्टे तव सैन्यन्तु शैनेये सत्यविक्रमे। भीमसेनमुखाः पार्थाः प्रतीयुर्व्वाहिनीन्तव।
आगच्छतस्तान् सहसा क्रुद्धरूपान् सहानुगान्। दधारैको रणे पाण्डून् कृतवर्म्मा महारथः।
यथोद्वृत्तं वारयते बेला वै सलिलार्णवं। पाण्डुसैन्यं तथा सङ्ख्ये हार्द्दिक्यः समवारयत्।
तत्राद्भुतमपश्याम हार्द्दिक्यस्य पराक्रमं। यदेनं सहिताः पार्था नातिचक्रमुराहवे।
ततो भीमस्त्रिभिर्व्विद्धा कृतवर्म्माणमाशुगैः। शङ्खं दध्मौ महाबाहुर्हर्षयन् सर्व्वपाण्डवान्। ४५००
सहदेवस्तु विंशत्या धर्म्मराजश्च पञ्चभिः। शतेन नकुलश्चापि हार्द्दिक्यं समविध्यत।
द्रौपदेयास्त्रिसप्तत्या सप्तभिश्च घटोत्कचः। धृष्टद्युम्नस्त्रिभिश्चापि कृतवर्म्माणमार्द्दयत्।
विराटो द्रुपदश्चैव याज्ञसेनिश्च पञ्चभिः। शिखण्डी चैव हार्द्दिक्यं विद्धा पञ्चभिराशुगैः।
पुनर्व्विव्याध विंशत्या सायकानां हसन्निव। कृतवर्म्मा ततो राजन् सर्व्वतस्तान् महारथान्।
एकैकं पञ्चभिर्व्विद्धा भीमं विव्याध सप्तभिः। धनुर्ध्वजञ्चास्य तदा रथाद्भूमावपातयत्। ४५०५
अथैनं छिन्नधन्वानं त्वरमाणो महारथः। आजघानोरसि क्रुद्धः सप्तत्या निशितैः शरैः।
स गाढविद्धो बलवान् हार्द्दिक्यस्य शरोत्तमैः। चचाल रथमध्यस्थः क्षितिकम्पे यथाऽचलः।
भीमसेनं तथा दृष्ट्वा धर्म्मराजपुरोगमाः। विसृजन्तः शरान् राजन् कृतवर्म्माणमार्द्दयन्।
तं तथा कोष्ठकीकृत्य रथवंशेन मारिष। विव्यधुः सायकैर्हृष्टा रक्षार्थं मारुतेर्म्मृधे।
प्रतिलभ्यां ततः संज्ञां भीमसेनो महाबलः। शक्तिं जग्राह समरे हेमदण्डामयस्मयीं। ४५१०
चिक्षेप च रथात्तूर्णं कृतवर्म्मरथम्प्रति। सा भीमभुजनिर्मुक्ता निर्म्मुक्तोरगसन्निभा।
कृतवर्म्माणमभितः प्रजज्वाल सुदारुणा। तामापतन्तीं सहसा युगान्ताग्निसमप्रभां।
द्वाभ्यां शराभ्यां हार्द्दिक्यो निजघान द्विधा तदा। सा च्छिन्ना पतिता भूमौ शक्तिः कनकभूषणा।
द्योतयन्ती दिशो राजन् महोल्केव नभश्च्युता। शक्तिं विनिहतां दृष्ट्वा भीमश्चुक्रोध वै भृशं।
ततोऽन्यद्धनुरादाय वेगवत्सुमहास्वनं। भीमसेनो रणे क्रुद्धो हार्द्दिक्यं समवारयत्। ४५१५
अथैनं पञ्चभिर्व्वाणैराजघान स्तनान्तरे। भीमो भीमबलो राजंस्तव दुर्म्मन्त्रितेन च।
भोजस्तु क्षतसर्व्वाङ्गो भीमसेनेन मारिष। रक्ताशोक इवोत्फुल्लो व्यभ्राजत रणाजिरे।
ततः क्रुद्धस्त्रिभिर्व्वाणैर्भीमसेनं हसन्निव। अभिहत्य दृढं युद्धे तान् सर्व्वान् प्रत्यविध्यत।
त्रिभिस्त्रिभिर्म्महेष्वासो यतमानान्महारथान्। तेऽपि तं प्रत्यविध्यन्त सप्तभिः सप्तभिः शरैः।
शिखण्डिनस्ततः क्रुद्धः क्षुरप्रेण महारथः। धनुश्चिच्छेद समरे प्रहसन्निव सात्वतः। ४५२०
शिखण्डी च ततः क्रुद्धश्छिन्ने धनुषि सत्वरः। असिं जग्राह समरे शतचन्द्रञ्च भास्वरं।
भ्रामयित्वा महच्चर्म्म चामीकरविभूषितं। तमसिं प्रेषयामास कृतवर्म्मरथं प्रति।
स तस्य सशरञ्चापं छित्वा राजन् महानसिः। अभ्यगाद्धरणीं राजन् च्युतं ज्योतिरिवाम्बरात्।
एतस्मिन्नेव काले च त्वरमाणं महारथाः। विव्यधुः सायकैर्गाढं कृतवर्म्माणमाहवे।
अथान्यद्धनुरादाय त्यक्त्वा तच्च महद्धनुः। विशीर्णं भरतश्रेष्ठ हार्द्दिक्यः परवीरहा। ४५२५

विव्याध पाण्डवान् युद्धे त्रिभिस्त्रिभिरजिह्मगैः । शिखण्डिनञ्च विव्याध त्रिभिः पञ्चभिरेव च ।
धनुरन्यत् समादाय शिखण्डी तु महायशाः । अवारयत् कूर्म्मनखैराशुगैर्हृदिकात्मजं ।
ततः क्रुद्धो रणे राजन् हृदिकस्यात्मसम्भवः । अभिदुद्राव वेगेन याज्ञसेनिं महारथं ।
भीष्मस्य समरे राजन् मृत्योर्हेतुं महात्मनः । विदर्शयन् बलं शूरः शार्दूल इव कुञ्जरं ।
तौ दिशागजसङ्काशौ ज्वलिताविव पावकौ । समापेततुरन्योन्यं शरसङ्घैररिन्दमौ । ५५३०
विधुन्वानौ धनुःश्रेष्ठे सन्दधानौ च सायकान् । विसृजन्तौ च शतशो गभस्तीनिव भास्करौ ।
तापयन्तौ शरैस्तीक्ष्णैरन्योऽन्यं तौ महारथौ । युगान्तप्रतिमौ वीरौ रेजतुर्भास्कराविव ।
कृतवर्म्मा च समरे याज्ञसेनिं महारथं । विद्ध्वेषुभिस्त्रिसप्तत्या पुनर्व्विव्याध सप्तभिः ।
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् । विसृजन् सशरञ्चापं मूर्च्छयाऽभिपरिप्लुतः ।
तं विषण्णं रणे दृष्ट्वा तावकाः पुरुषर्षभ । हार्द्दिक्यं पूजयामासुर्व्वासांस्याधुधुवुश्च ह । ५५३५
शिखण्डिनं तथा ज्ञात्वा हार्द्दिक्यशरपीडितं । अपोवाह रणाद्यन्ता त्वरमाणो महारथं ।
सादितन्तु रथोपस्थे दृष्ट्वा पार्थाः शिखण्डिनं । परिवव्रू रथैस्तूर्णं कृतवर्म्माणमाहवे ।
तत्राद्भुतं परञ्चक्रे कृतवर्म्मा महारथः । यदेकः समरे पार्थान् वारयामास सानुगान् ।
पार्थान् जित्वाऽजयच्चेदीन् पाञ्चालान् सृञ्जयानपि । केकयांश्च महावीर्य्यान् कृतवर्म्मा महारथः ।
ते वध्यमानाः समरे हार्द्दिक्येन स्म पाण्डवाः । इतश्चेतश्च धावन्तो नैव चक्रुर्धृतिं रणे । ५५४०
जित्वा पाण्डुसुतान् युद्धे भीमसेनपुरोगमान् । हार्द्दिक्यः समरेऽतिष्ठद्विधूम इव पावकः ।
ते द्राव्यमाणाः समरे हार्द्दिक्येन महारथाः । विमुखाः समपद्यन्त शरवृष्टिभिरर्द्दिताः ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि कृतवर्म्मपराक्रमे चतुर्दशाधिकशततोऽध्यायः ॥ ११४ ॥
॥ सञ्जय उवाच ॥ शृणुष्वैकमना राजन् यन्मां त्वं परिपृच्छसि । द्राव्यमाणे बले तस्मिन् हार्द्दिक्येन महात्मना ।
लज्जयावनते चापि प्रहृष्टैश्चापि तावकैः । द्वीपो य आसीत् पाण्डूनामगाधे गाधमिच्छतां ।
श्रुत्वा स निनदं भीमं तावकानां महाहवे । शैनेयस्त्वरितो राजन् कृतवर्म्माणमभ्ययात् । ५५४५
कृतवर्म्मा तु हार्द्दिक्यः शैनेयं निशितैः शरैः । अवाकिरत् सुसंक्रुद्धस्ततोऽक्रुध्यत् स सात्यकिः ।
अथाशु निशितं भल्लं शैनेयः कृतवर्म्मणः । प्रेषयामास समरे शरांश्च चतुरोऽपरान् ।
ते तस्य जघ्निरे वाहान् भल्लेनास्याच्छिनद्धनुः । पृष्ठरक्षन्तथा सूतमविध्यन्निशितैः शरैः ।
ततस्तं विरथं कृत्वा सात्यकिः सत्यविक्रमः । सेनामस्यार्द्दयामास शरैः सन्नतपर्व्वभिः ।
अभज्यताथ पृतना शैनेयशरपीडिता । ततः प्रायात् स त्वरितः सात्यकिः सत्यविक्रमः । ५५५०
शृणु राजन् यदकरोत् तव सैन्येषु वीर्य्यवान् । अतीत्य स महाराज द्रोणानीकमहार्णवं ।
पराजित्य तु संहृष्टः कृतवर्म्माणमाहवे । यन्तारमब्रवीत् शूरः शनैर्याहीत्यसम्भ्रमं ।
दृष्ट्वा तु तव तत्सैन्यं रथाश्वद्विपसङ्कुलं । पदातिजनसम्पूर्णमब्रवीत् सारथिं पुनः ।
यदेतन्मेघसङ्काशं द्रोणानीकस्य सव्यतः । सुमहत्कुञ्जरानीकं यस्य रुक्मरथो मुखं ।

एतेहि बहवः सूत दुर्न्निवाराश्च संयुगे। दुर्य्योधनसमादिष्टा मदर्थे त्यक्तजीविताः। ४५५
राजपुत्रा महेष्वासाः सर्व्वे विक्रान्तयोधिनः। त्रिगर्त्तानां रथोदाराः सुवर्णविकृतध्वजाः।
मामेवाभिमुखा वीरा योत्स्यमाना व्यवस्थिताः। अत्र मां प्रापय क्षिप्रमश्वांश्चोदय सारथे।
त्रिगर्त्तैः सह योत्स्यामि भारद्वाजस्य पश्यतः। ततः प्रायाच्छनैः सूतः सात्वतस्य मते स्थितः।
रथेनादित्यवर्णेन भास्वरेण पताकिना। तमूहुः सारथेर्व्वश्या वल्गमाना हयोत्तमाः।
वायुवेगसमाः सङ्ख्ये कुन्देन्दुरजतप्रभाः। आपतन्तं रणे तन्तु शङ्खवर्णैर्हयोत्तमैः। ४६०
परिवव्रुस्ततः शूरा गजानीकेन सर्व्वतः। किरन्तो विविधांस्तीक्ष्णान् सायकान् लघुवेधिनः।
सात्वतोऽपि शितैर्व्वाणैर्गजानीकमयोधयत्। पर्व्वतानिव वर्षेण तपान्ते जलदो महान्।
वज्राशनिसमस्पर्शैर्व्वध्यमानाः शरैर्गजाः। प्राद्रवन् रणमुत्सृज्य शिनिवीरसमीरितैः।
शीर्णदन्ता विरुधिरा भिन्नमस्तकपिण्डिकाः। विशीर्णकर्णास्यकरा विनियन्तृपताकिनः।
सम्भिन्नवर्म्मघण्टाश्च विनिकृत्तमहाध्वजाः। हतारोहा दिशो राजन् भेजिरे भ्रष्टकम्बलाः। ४६५
रुवन्तो विविधान्नादान् जलदोपमनिस्वनाः। नाराचैर्व्वत्सदन्तैश्च भल्लैरञ्जलिकैस्तथा।
क्षुरप्रैरर्द्धचन्द्रैश्च सात्वतेन विदारिताः। क्षरन्तोऽसृक् तथा मूत्रं पुरीषञ्च प्रदुद्रुवुः।
बभ्रमुश्चस्खलुश्चान्ये पेतुर्म्मम्लुस्तथापरे। एवं तत्कुञ्जरानीकं युयुधानेन पीडितं।
शरैरग्न्यर्कसङ्काशैः प्रदुद्राव समन्ततः। तस्मिन् हते गजानीके जलसन्धो महाबलः।
यत्तः सम्प्रापयन्नागं रजताश्वरथम्प्रति। रुक्मवर्म्मधरः शूरस्तपनीयाङ्गदः शुचिः। ४७०
कुण्डली मुकुटी खड्गी रक्तचन्दनरूषितः। शिरसा धारयन् दीप्तां तपनीयमयीं स्रजं।
उरसा धारयन्निष्कं कण्ठसूत्रञ्च भास्वरं। चापञ्च रुक्मविकृतं विधुन्वन् गजमूर्द्धनि।
अशोभत महाराज सविद्युदिव तोयदः। तमापतन्तं सहसा मागधस्य गजोत्तमं।
सात्यकिर्व्वारयामास वेलेव मकरालयं। नागं निवारितं दृष्ट्वा शैनेयस्य शरोत्तमैः।
अक्रुध्यत रणे राजन् जलसन्धो महाबलः। ततः क्रुद्धो महाराज मार्गणैर्भारसाधनैः। ४७५
अविध्यत शिनेः पौत्रं जलसन्धो महोरसि। ततोऽपरेण भल्लेन पीतेन निशितेन च।
अस्यतो वृष्णिवीरस्य निचकर्त्त शरासनं। सात्यकिं छिन्नधन्वानं प्रहसन्निव भारत।
अविध्यन्मागधो वीरः पञ्चभिर्न्निशितैः शरैः। स विद्धो बहुभिर्व्वाणैर्जलसन्धेन वीर्य्यवान्।
नाकम्पत महाबाहुस्तदद्भुतमिवाभवत्। अचिन्तयन् वै स शरान् नात्यर्थं सम्भ्रमाद्बली।
धनुरन्यत् समादाय तिष्ठ तिष्ठेत्युवाच ह। एतावदुक्त्वा शैनेयो जलसन्धं महोरसि। ४८०
विव्याध षष्ट्या सुभृशं शराणां प्रहसन्निव। क्षुरप्रेण सुतीक्ष्णेन मुष्टिदेशे महद्धनुः।
जलसन्धस्य चिच्छेद विव्याध च त्रिभिः शरैः। जलसन्धस्तु तत्त्यक्त्वा सशरं वै शरासनं।
तोमरं व्यसृजत्तूर्णं सात्यकिम्प्रतिमारिष। स निर्भिद्य भुजं सव्यं माधवस्य महारणे।
अभ्यगाद्धरणीं घोरः श्वसन्निव महोरगः। निर्भिन्ने तु भुजे सव्ये सात्यकिः सत्यविक्रमः।

त्रिंशद्भिर्व्विशिखैस्तीक्ष्णैर्जलसन्धमताडयत् । प्रगृह्य तु ततः खड्गं जलसन्धो महाबलः । ४८८
आर्षभञ्चर्म्म च महत् शतचन्द्रकसङ्कुलं । आविध्य च ततः खड्गं सात्वतायोत्ससर्ज्ज ह ।
शैनेयस्य धनुश्छित्त्वा सखड्गो न्यपतन्महीं । अलातचक्रवच्चैव व्यरोचत महीं गतः ।
अथान्यद्धनुरादाय सर्व्वकायावदारणं । शालस्कन्धप्रतीकाशमिन्द्राशनिसमस्वनं ।
विस्फार्य्य विव्याध क्रुद्धो जलसन्धं शरेण ह । ततः साभरणौ बाहू क्षुराभ्यां माधवोत्तमः ।
सात्यकिर्जलसन्धस्य चिच्छेद प्रहसन्निव । तौ बाहू परिघप्रख्यौ पेततुर्गजसत्तमात् । ४९०
वसुन्धराधराभ्रष्टौ पञ्चशीर्षाविवोरगौ । ततः सुदंष्ट्रं सुमहत् चारुकुण्डलमण्डितं ।
क्षुरेणास्य तृतीयेन शिरश्चिच्छेद सात्यकिः । तत्पातितशिरोबाहुं कबन्धं भीमदर्शनं ।
द्विरदं जलसन्धस्य रुधिरेणाभ्यषिञ्चत । जलसन्धं निहत्याजौ त्वरमाणस्तु सात्वतः ।
विमानं पातयामास गजस्कन्धाद्विशाम्पते । रुधिरेणावसिक्ताङ्गो जलसन्धस्य कुञ्जरः ।
विलम्बमानमवहत् संश्लिष्टं परमासनं । शरार्द्दितः सात्वतेन मर्द्दमानः स्ववाहिनीं । ४९५
घोरमार्त्तस्वरं कृत्वा विदुद्राव महागजः । हाहाकारो महानासीत्तव सैन्यस्य मारिष ।
जलसन्धं हतं दृष्ट्वा वृष्णीनामृषभेण तु । विमुखाश्चाभ्यधावन्त तव योधाः समन्ततः ।
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये । एतस्मिन्नन्तरे राजन् द्रोणः शस्त्रभृताम्वरः ।
अभ्ययाज्जवनैरश्वैर्युयुधानं महारथं । तमुदीर्णं तथा दृष्ट्वा शैनेयं कुरुपुङ्गवाः ।
द्रोणेनैव सह क्रुद्धाः सात्यकिं समुपाद्रवन् । ततः प्रववृते युद्धं कुरूणां सात्वतस्य च । ५००
द्रोणस्य च रणे राजन् घोरं देवासुरोपमं ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि जलसन्धवधे पञ्चदशाधिकशततोऽध्यायः ॥ ११५ ॥

॥ सञ्जय उवाच ॥ ते किरन्तः शरव्रातान् सर्व्वे यत्ताः प्रहारिणः । त्वरमाणा महाराज युयुधानमयोधयन् ।
तं द्रोणः सप्तसप्तत्या जघान निशितैः शरैः । दुर्म्मर्षणो द्वादशभिर्दुःसहो दशभिः शरैः ।
विकर्णश्चापि निशितैस्त्रिंशद्भिः कङ्कपत्रिभिः । विव्याध सव्ये पार्श्वे तु स्तनाभ्यामन्तरे तथा ।
दुर्मुखो दशभिर्व्वाणैस्तथा दुःशासनोऽष्टभिः । चित्रसेनश्च शैनेयं द्वाभ्यां विव्याध मारिष । ५०५
दुर्य्योधनश्च महता शरवर्षेण माधवं । अपीडयद्रणे राजन् शूराश्चान्ये महारथं ।
सर्व्वतः प्रतिविद्धस्तु तव पुत्त्रैर्म्महारथैः । तान् प्रत्यविध्यद्वार्ष्णेयः पृथक् पृथगजिह्मगैः ।
भारद्वाजं त्रिभिर्व्वाणैर्दुःसहं नवभिः शरैः । विकर्णं पञ्चविंशत्या चित्रसेनञ्च सप्तभिः ।
दुर्म्मर्षणं द्वादशभिरष्टाभिश्च विविंशतिं । सत्यव्रतञ्च नवभिर्व्विजयं दशभिः शरैः ।
ततो रुक्माङ्गदञ्चापि विधुन्वानो महारथः । अभ्ययात् सात्यकिस्तूर्णं पुत्त्रं तव महारथं । ५१०
राजानं सर्व्वलोकस्य सर्व्वलोकमहारथं । शरैरभ्याहनद्गाढं ततो युद्धमभूत्तयोः ।
विमुञ्चन्तौ शरांस्तीक्ष्णान् सन्दधानौ च सायकान् । अदृश्यं समरेऽन्योऽन्यं चक्रतुस्तौ महारथौ ।
सात्यकिः कुरुराजेन निर्व्विद्धो बह्वशोभत । अस्रवद्रुधिरं भूरि स्वरसं चन्दनो यथा ।

सात्वतेन च बाणौघैर्निर्व्विद्धस्तनयस्तव । शातकुम्भमयापीडो बभौ यूप इवोच्छ्रितः ।
माधवस्तु रणे राजन् कुरुराजस्य धन्विनः । धनुश्चिच्छेद समरे क्षुरप्रेण हसन्निव । ५११५
अथैनं छिन्नधन्वानं शरैर्ब्बहुभिराचिनोत् । निर्भिन्नश्च शरैस्तेन द्विषता क्षिप्रकारिणा ।
नामृष्यत रणे राजा शत्रोर्व्विजयलक्षणं । अथान्यद्धनुरादाय हेमपृष्ठं दुरासदं ।
विव्याध सात्यकिं तूर्णं सायकानां शतेन ह । सोऽतिविद्धो बलवता तव पुत्त्रेण धन्विना ।
अमर्षवशमापन्नस्तव पुत्त्रमपीडयत् । पीडितं नृपतिं दृष्ट्वा तव पुत्त्रा महारथाः ।
सात्यकिं शरवर्षेण छादयामासुरोजसा । स च्छाद्यमानो बहुभिस्तव पुत्त्रैर्म्महारथैः । ५१२०
एकैकं पञ्चभिर्व्विद्ध्वा पुनर्व्विव्याध सप्तभिः । दुर्य्योधनञ्च त्वरितो विव्याधाष्टभिराशुगैः ।
प्रहसंश्चास्य चिच्छेद कार्म्मुकं रिपुभीषणं । नागं मणिमयञ्चैव शरैर्ध्वजमपातयत् ।
हत्वा तु चतुरो वाहान् चतुर्भिर्निशितैः शरैः । सारथिं पातयामास क्षुरप्रेण महायशाः ।
एतस्मिन्नन्तरे चैव कुरुराजं महारथं । अवाकिरत् शरैर्हृष्टो बहुभिर्म्मर्म्मभेदिभिः ।
स बध्यमानः समरे शैनेयस्य शरोत्तमैः । प्राद्रवत् सहसा राजन् पुत्त्रो दुर्य्योधनस्तव । ५१२५
आप्लुतश्च ततो यानं चित्रसेनस्य धन्विनः । हाहाभूतं जगच्चासीत् दृष्ट्वा राजानमाहवे ।
ग्रस्यमानं सात्यकिना खे सोममिव राहुणा । तन्तु शब्दमथ श्रुत्वा कृतवर्म्मा महारथः ।
अभ्ययात् सहसा तत्र यत्रास्ते माधवः प्रभुः । विधुन्वानो धनुःश्रेष्ठञ्चोदयंश्चैव वाजिनः ।
भर्त्सयन् सारथिञ्चाग्रे याहि याहीति सत्वरं । तमापतन्तं सम्प्रेक्ष्य व्यादितास्यमिवान्तकं ।
युयुधानो महाराज यन्तारमिदमब्रवीत् । कृतवर्म्मा रथेनैष द्रुतमापतते शरी । ५१३०
प्रत्युद्याहि रथेनैनं प्रवरं सर्व्वधन्विनां । ततः प्रजविताश्वेन विधिवत् कल्पितेन च ।
आससाद रणे भोजं प्रतिमानं धनुष्मतां । ततः परमसंक्रुद्धौ ज्वलिताविव पावकौ ।
समेयातां नरव्याघ्रौ व्याघ्राविव तरस्विनौ । कृतवर्म्मा तु शैनेयं षड्विंशत्या समार्पयत् ।
निशितैः सायकैस्तीक्ष्णैर्यन्तारञ्चास्य पञ्चभिः । चतुरश्चतुरो वाहांश्चतुर्भिः परमेषुभिः ।
अविध्यत् साधुदान्तान्वै सैन्धवान् सात्वतस्य हि । रुक्मध्वजो रुक्मपृष्ठं महद्विस्फार्य्य कार्म्मुकं । ५१३५
रुक्माङ्गदी रुक्मवर्म्मा रुक्मपुङ्खैरवारयत् । ततोऽशीतिं शिनेः पौत्त्रः सायकान् कृतवर्म्मणे ।
प्राहिणोत्त्वरया युक्तो द्रष्टुकामो धनञ्जयं । सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः ।
समकम्पत दुर्द्धर्षः क्षितिकम्पे यथाऽचलः । त्रिषष्ट्या चतुरोऽस्याश्वान् सप्तभिः सारथिं तथा ।
विव्याध निशितैस्तूर्णं सात्यकिः सत्यविक्रमः । सुवर्णपुङ्खं विशिखं समाधाय च सात्यकिः ।
विसृजन्तं महाज्वालं संक्रुद्धमिव पन्नगं । सोऽविध्यत् कृतवर्म्माणं यमदण्डोपमः शरः । ५१४०
जाम्बूनदविचित्रञ्च वर्म्म निर्भिद्य भानुमत् । अभ्यगाद्धरणीमुग्रो रुधिरेण समुक्षितः ।
सञ्जातरुधिरश्चाजौ सात्वतेषुभिरर्द्दितः । सशरं धनुरुत्सृज्य न्यपतत् स्यन्दनोत्तमात् ।
स सिंहदंष्ट्रो जानुभ्यां पतितोऽमितविक्रमः । शरार्द्दितः सात्यकिना रथोपस्थे नरर्षभः ।

सहस्रबाहुसदृशमक्षोभ्यमिव सागरं । निवार्य्य कृतवर्म्माणं सात्यकिः प्रययौ ततः ।
खड्गशक्तिधनुःकीर्णां गजाश्वरथसङ्कुलां । प्रवर्त्तितोग्ररुधिरां शतशः क्षत्रियर्षभैः । ४५४५
प्रेक्षतां सर्व्वसैन्यानां मध्येन शिनिपुङ्गवः । अभ्यगाद्वाहिनीं हित्वा वृत्रहेवासुरीं चमूं ।
समाश्वस्य च हार्द्दिक्यो गृह्य चान्यन्महद्धनुः । तस्थौ स तत्र बलवान् वारयन् युधि पाण्डवान् ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि कृतवर्म्मपराजये षोडशाधिकशततोऽध्यायः ॥ ११६ ॥

॥ सञ्जय उवाच ॥ कम्पमानेषु सैन्येषु शैनेयेन ततस्ततः । भारद्वाजः शरव्रातैर्महद्भिः समवाकिरत् ।
स सम्प्रहारस्तुमुलो द्रोणसात्वतयोरभूत् । पश्यतां सर्व्वसैन्यानां बलिवासवयोरिव ।
ततो द्रोणः शिनेः पौत्रं चित्रैः सर्व्वायसैः शरैः । त्रिभिराशीविषाकारैर्ललाटे समविध्यत । ४५५०
तैर्ललाटार्पितैर्बाणैर्युयुधानस्त्वजिह्मगैः । व्यरोचत महाराज त्रिशृङ्ग इव पर्व्वतः ।
ततोऽस्य बाणानपरानिन्द्राशनिसमस्वनान् । भारद्वाजोऽन्तरप्रेक्षी प्रेषयामास संयुगे ।
तान् द्रोणचापनिर्म्मुक्तान् दाशार्हः पततः शरान् । द्वाभ्यां द्वाभ्यां सुपुङ्खाभ्यां चिच्छेद परमास्त्रवित् ।
तामस्य लघुतां द्रोणः समवेक्ष्य विशाम्पते । प्रहस्य सहसाऽविध्यत् त्रिंशता शिनिपुङ्गवं ।
पुनः पञ्चाशतेषूणां शतेन च समार्पयत् । लघुतां युयुधानस्य लाघवेन विशेषयन् । ४५५५
समुत्पतन्ति वल्मीकात् यथा क्रुद्धा महोरगाः । तथा द्रोणरथाद्राजन् आपतन्ति तनुच्छिदः ।
तथैव युयुधानेन सृष्टाः शतसहस्रशः । अवाकिरन् द्रोणरथं शरा रुधिरभोजनाः ।
लाघवात् द्विजमुख्यस्य सात्वतस्य च मारिष । विशेषं नाध्यगच्छाम समावास्तां नरर्षभौ ।
सात्यकिस्तु ततो द्रोणं नवभिर्नतपर्व्वभिः । आजघान भृशं क्रुद्धो ध्वजञ्च निशितैः शरैः ।
सारथिञ्च शतेनैव भारद्वाजस्य पश्यतः । लाघवं युयुधानस्य दृष्ट्वा द्रोणो महारथः । ४५६०
सप्तत्या सारथिं विद्ध्वा तुरगांश्च त्रिभिस्त्रिभिः । ध्वजमेकेन चिच्छेद माधवस्य रथे स्थितं ।
अथापरेण भल्लेन हेमपुङ्खेन पत्रिणा । धनुश्चिच्छेद समरे माधवस्य महात्मनः ।
सात्यकिस्तु ततः क्रुद्धो धनुस्त्यक्त्वा महारथः । गदां जग्राह महतीं भारद्वाजाय चाक्षिपत् ।
तामापतन्तीं सहसा पट्टबद्धामयस्मयीं । न्यवारयच्छरैर्द्रोणो बहुभिर्बहुरूपिभिः ।
अथान्यद्धनुरादाय सात्यकिः सत्यविक्रमः । विव्याध बहुभिर्व्वीरं भारद्वाजं शिलाशितैः । ४५६५
स विद्ध्वा समरे द्रोणं सिंहनादममुञ्चत । तं वै न ममृषे द्रोणः सर्व्वशस्त्रभृतां वरः ।
ततः शक्तिं गृहीत्वा तु रुक्मदण्डामयस्मयीं । तरसा प्रेषयामास माधवस्य रथम्प्रति ।
अनासाद्य तु शैनेयं सा शक्तिः कालसन्निभा । भित्त्वा रथं जगामोग्रा धरणीं दारुणस्वना ।
ततो द्रोणं शिनेः पौत्रो राजन् विव्याध पत्रिणा । दक्षिणं भुजमासाद्य पीडयन् भरतर्षभ ।
द्रोणोऽपि समरे राजन्माधवस्य महद्धनुः । अर्द्धचन्द्रेण चिच्छेद रथशक्त्या च सारथिं । ४५७०
मुमोह सारथिस्तस्य रथशक्त्या समाहतः । स रथोपस्थमासाद्य मुहूर्त्तं संन्यषीदत ।
चकार सात्यकी राजन् तत्र कर्म्मातिमानुषं । अयोधयच्च यद्द्रोणं रश्मीन् जग्राह च स्वयं ।

ततः शरशतेनैव युयुधानो महारथः। अविध्यद्ब्राह्मणं संख्ये हृष्टरूपो विशाम्पते।
तस्य द्रोणः शरान् पञ्च प्रेषयामास भारत। ते घोराः कवचं भित्त्वा पपुः शोणितमाहवे।
निर्व्विद्धस्तु शरैर्घोरैरक्रुध्यत् सात्यकिर्भृशं। सायकान् व्यसृजच्चापि वीरो रुक्मरथम्प्रति। ४९७५
ततो द्रोणस्य यन्तारं निपात्यैकेषुणा भुवि। अश्वान् व्यद्रावयद्बाणैर्हतसूतांस्ततस्ततः।
स रथः प्रद्रुतः संख्ये मण्डलानि सहस्रशः। चकार राजतो राजन् भ्राजमान इवांशुमान्।
अभिद्रवत गृह्णीत हयान् द्रोणस्य धावत। इति स्म चुक्रुशुः सर्व्वे राजपुत्त्राः सराजकाः।
ते सात्यकिमपास्याशु राजन् युधि महारथाः। यतो द्रोणस्ततः सर्व्वे सहसा समुपाद्रवन्।
तान् दृष्ट्वा प्रद्रुतान् संख्ये सात्वतेन शरार्द्दितान्। प्रभग्नं पुनरेवासीत्तव सैन्यं समाकुलं। ४९८०
व्यूहस्यैव पुनर्द्वारं गत्वा द्रोणो व्यवस्थितः। वाताय्यमानैस्तैरश्वैर्नीतो वृष्णिशरार्द्दितैः।
पाण्डुपाञ्चालसम्भिन्नं व्यूहमालोक्य वीर्य्यवान्। शैनेये नाकरोद्यत्नं व्यूहमेवाभ्यरक्षत।
निवार्य्य पाण्डुपाञ्चालान् द्रोणाग्निः प्रदहन्निव। तस्थौ द्रोणाग्निसन्दीप्तः कालसूर्य्य इवोदितः।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकिपराक्रमे सप्तदशाधिकशततोऽध्यायः॥ ११७॥

॥ सञ्जय उवाच॥ द्रोणं स जित्वा पुरुषप्रवीरस्तथैव हार्द्दिक्यमुखांस्त्वदीयान्। प्रहस्य सूतं वचनं बभाषे शिनिप्रवीरः कुरुपुङ्गवाग्य्रः।
निमित्तमात्रं वयमत्र सूत दग्धारयः केशवफाल्गुनाभ्यां। हतान्निहन्मेह नरर्षभेण वयं सुरेशात्मजसम्भवेन। ४९८५
तमेवमुक्त्वा शिनिपुङ्गवस्तदा महामृधे सोऽग्र्यधनुर्द्धरोऽरिहा। किरन् समन्तात् सहसा शरान् बली समापतत् श्येन इवामिषं यथा।
तं यान्तमश्वैः शशिशङ्खवर्णैर्व्विगाह्य सैन्यं पुरुषप्रवीरं। नाशक्नुवन् वारयितुं समन्तादादित्यरश्मिप्रतिमं रथाग्र्यं।
असह्यविक्रान्तमदीनसत्त्वं सर्व्वे गणा भारत ये त्वदीयाः। सहस्रनेत्रप्रतिमप्रभावं दिवीव सूर्य्यं जलदव्यपाये।
अमर्षपूर्णस्त्वतिचित्रयोधी शरासनी काञ्चनवर्म्मधारी। सुदर्शनः सात्यकिमापतन्तं न्यवारयद्राजवरः प्रसह्य।
तयोरभूद्भारत सम्प्रहारः सुदारुणस्तं समतिप्रशंसन्। योधास्त्वदीयाश्च हि सोमकाश्च वृत्रेन्द्रयोर्युद्धमिवामरौघाः। ४९९०
शरैः सुतीक्ष्णैः शतशोऽभ्यविध्यत् सुदर्शनः सात्वतमुख्यमाजौ। अनागतानेव तु तान् पृषत्कान् चिच्छेद राजन् शिनिपुङ्गवोऽपि।
तथैव शक्रप्रतिमोऽपि सात्यकिः सुदर्शने यान् क्षिपति स्म सायकान्। द्विधा त्रिधा तानकरोत्सुदर्शनः शरोत्तमैः स्यन्दनवर्य्यमास्थितः।
तान् वीक्ष्य बाणान् निहतांस्तदानीं सुदर्शनः सात्यकिबाणवेगैः। क्रोधाद्दिधक्षन्निव तिग्मतेजाः शरानमुञ्चत्तपनीयचित्रान्।
पुनः स बाणैस्त्रिभिरग्निकल्पैराकर्णपूर्णैर्निशितैः सुपुङ्खैः। विव्याध देहावरणं विभिद्य ते सात्यकेराविविशुः शरीरं।
तथैव तस्यावनिपालपुत्त्रः सन्धाय बाणैरपरैर्ज्वलद्भिः। आजघ्निवांस्तान् रजतप्रकाशान् चतुर्भिरश्वांश्चतुरः प्रसह्य। ४९९५
तथा तु तेनाभिहतस्तरस्वी नप्ता शिनेरिन्द्रसमानवीर्य्यः। सुदर्शनस्येषुगणैः सुतीक्ष्णैर्हयान्निहत्याशु ननाद नादं।

अथास्य सूतस्य शिरो निकृत्य भल्लेन शक्राशनिसन्निभेन । सुदर्शनस्यापि शिनिप्रवीरः क्षुरेण कालानलसन्निभेन ।
सकुण्डलं पूर्णशशिप्रकाशं भ्राजिष्णु वक्त्रं विचकर्त्त देहात् । यथा पुरा वज्रधरः प्रसह्य बलस्य संख्येऽतिबलस्य राजन् ।
निहत्य तं पार्थिवपुत्त्रपौत्त्रं रणे यदूनामृषभस्तरस्वी । मुदा समेतः परया महात्मा रराज राजन् सुरराजकल्पः ।
ततो ययावर्जुन एव येन निवार्य्य सैन्यं तव मार्गणौघैः । सदश्वयुक्तेन रथेन राजन् लोकं विविस्मापयिषुर्नृवीरः । ४३००
तत्तस्य विस्मापयनीयमग्र्यमपूजयन् योधवराः समेताः । प्रवर्त्तमानानिषुगोचरेऽरीन् ददाह बाणैर्हुतभुग्यथैव ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सुदर्शनवधेऽष्टादशाधिकशततोऽध्यायः ॥ ११८ ॥

॥ सञ्जय उवाच ॥ ततः स सात्यकिर्धीमान् महात्मा वृष्णिपुङ्गवः । सुदर्शनं निहत्याजौ यन्तारं पुनरब्रवीत् ।
रथाश्वनागकलिलं शरशक्त्यूर्म्मिमालिनं । खड्गमत्स्यं गदाग्राहं शूरायुधमहास्वनं ।
प्राणापहारिणं रौद्रं वादित्रोत्क्रुष्टनादितं । योधानामसुखस्पर्शं दुर्द्धर्षमजयैषिणां ।
तीर्णाः सुदुस्तरं तात द्रोणानीकमहार्णवं । जलसन्धबलेनाजौ पुरुषादैरिवावृतं । ४३०५
अतोऽन्यत् पृतनाशेषं मन्ये कुनदिकामिव । तर्त्तव्यामल्पसलिलां चोदयाश्वानसम्भ्रमं ।
हस्तप्राप्तमहं मन्ये साम्प्रतं सव्यसाचिनं । निर्जित्य दुर्द्धरं द्रोणं सपदानुगमाहवे ।
हार्द्दिक्यं योधवर्य्यञ्च मन्ये प्राप्तं धनञ्जयं । न हि मे जायते त्रासो दृष्ट्वा सैन्यान्यनेकशः ।
वह्नेरिव प्रदीप्तस्य वने शुष्कतृणोलपे । पश्य पाण्डवमुख्येन यातां भूमिं किरीटिना ।
पत्त्यश्वरथनागौघैः पतितैर्व्विषमीकृतां । द्रवते तद्यथा सैन्यं तेन भग्नं महात्मना । ४३१०
रथैर्व्विपरिधावद्भिर्गजैरश्वैश्च सारथे । कौशेयारुणसङ्काशमेतदुद्धूयते रजः ।
अभ्याशस्थमहं मन्ये श्वेताश्वं कृष्णसारथिं । स एष श्रूयते शब्दो गाण्डीवस्यामितौजसः ।
यादृशानि निमित्तानि मम प्रादुर्भवन्ति वै । अनस्तं गत आदित्ये हन्ता सैन्धवमर्ज्जुनः ।
शनैर्व्विश्रम्भयन्नश्वान् याहि यत्तारिवाहिनीं । यत्रैते सतनुत्राणाः सुयोधनपुरोगमाः ।
दंशिताः क्रूरकर्म्माणः काम्बोजा युद्धदुर्म्मदाः । शरबाणासनधरा यवनाश्च प्रहारिणः । ४३१५
शकाः किराता दरदा बर्व्वरास्ताम्रलिप्तकाः । अन्ये च बहवो म्लेच्छा विविधायुधपाणयः ।
यत्रैते सतनुत्राणाः सुयोधनपुरोगमाः । मामेवाभिमुखाः सर्व्वे तिष्ठन्ति समरार्थिनः ।
एतान् सरथनागाश्वान् निहत्याजौ सपत्तिनः । इदं दुर्गं महाघोरं तीर्णमेवोपधारय ।
॥ सूत उवाच ॥ न सम्भ्रमो मे वार्ष्णेय विद्यते सत्यविक्रम । यद्यपि स्यात्तव क्रुद्धो जामदग्न्योऽग्रतः स्थितः ।
द्रोणो वा रथिनां श्रेष्ठः कृपो मद्रेश्वरोऽपि वा । तथापि सम्भ्रमो न स्यात् त्वामाश्रित्य महाभुज । ४३२०
त्वया सुबहवो युद्धे निर्ज्जिताः शत्रुसूदन । दंशिताः क्रूरकर्म्माणः काम्बोजा युद्धदुर्म्मदाः ।
शरबाणासनधरा यवनाश्च प्रहारिणः । शकाः किराता दरदा बर्व्वरास्ताम्रलिप्तकाः ।
अन्ये च बहवो म्लेच्छा विविधायुधपाणयः । न च मे सम्भ्रमः कश्चिद्भूतपूर्व्वः कदाचन ।
किमुतैतत् समासाद्य धीर संयुगगोष्पदं । आयुष्मन् कतरेण त्वां प्रापयामि धनञ्जयं ।
केषां क्रुद्धोऽसि वार्ष्णेय केषां मृत्युरुपस्थितः । केषां संयमनीमद्य गन्तुमुत्सहते मनः । ४३२५

के त्वां युधि पराक्रान्तं कालान्तकयमोपमं। दृष्ट्वा विक्रमसंयुक्तं विद्रविष्यन्ति संयुगे।
केषां वैवस्वतो राजा स्मरतेऽद्य महाभुज।
॥ सात्यकिरुवाच ॥ मुण्डानेतान् हनिष्यामि दानवानिव वासवः। प्रतिज्ञां पारयिष्यामि काम्बोजानेव मां वह।
अद्यैषां कदनं कृत्वा प्रियं यास्यामि पाण्डवं। अद्य द्रक्ष्यन्ति मे वीर्य्यं कौरवाः ससुयोधनाः।
मुण्डानीके हते सूत सर्व्वसैन्येषु चासकृत्। अद्य कौरवसैन्यस्य दीर्य्यमाणस्य संयुगे। ४७३०
श्रुत्वा विरावं बहुधा सन्तप्स्यति सुयोधनः। अद्य पाण्डवमुख्यस्य श्वेताश्वस्य महात्मनः।
आचार्य्यस्य कृतं मार्गं दर्शयिष्यामि संयुगे। अद्य मद्बाणनिहतान् योधमुख्यान् सहस्रशः।
दृष्ट्वा दुर्य्योधनो राजा पश्चात्तापं गमिष्यति। अद्य मे चिप्रहस्तस्य चिपतः सायकोत्तमान्।
अलातचक्रप्रतिमं धनुर्द्रक्ष्यन्ति कौरवाः। मत्सायकचिताङ्गानां रुधिरं स्रवतां मुहुः।
सैनिकानां बधं दृष्ट्वा सन्तप्स्यति सुयोधनः। अद्य मे क्रुद्धरूपस्य निघ्नतश्च वरान् वरान्। ४७३५
द्विरर्ज्जुनमिमं लोकं मंस्यतेऽद्य सुयोधनः। अद्य राजसहस्राणि निहतानि मया रणे।
दृष्ट्वा दुर्य्योधनोराजा सन्तप्स्यति महामृधे। अद्य स्नेहञ्च भक्तिञ्च पाण्डवेषु महात्मसु।
हत्वा राजसहस्राणि दर्शयिष्यामि राजसु। बलं वीर्य्यं कृतज्ञत्वं मम ज्ञास्यन्ति कौरवाः।
॥ सञ्जय उवाच ॥ एवमुक्तस्तदा सूतः शिचितान् साधुवाहिनः। शशाङ्कसन्निकाशान्वै वाजिनो व्यनुदत् भृशं।
ते पिवन्त इवाकाशं युयुधानं हयोत्तमाः। प्रापयन् यवनान् शीघ्रं मनःपवनरंहसः। ४७४०
सात्यकिं ते समासाद्य पृतनास्वनिवर्त्तिनं। बहवो लघुहस्ताश्च शरवर्षैरवाकिरन्।
तेषामिषूनथास्त्राणि वेगवान्नतपर्व्वभिः। अच्छिनत् सात्यकीराजन् नैनं ते प्राप्नुवन् शराः।
रुक्मपुङ्खैः सुनिशितैर्गार्द्ध्रपत्रैरजिह्मगैः। उच्चकर्त्त शिरांस्युग्रो यवनानां भुजानपि।
शैक्यायसानि वर्म्माणि कांस्यानि च समन्ततः। भित्त्वा देहांस्तथा तेषां शरा जग्मुर्म्महीतलं।
ते हन्यमाना वीरेण म्लेच्छाः सात्यकिना रणे। शतशोऽभ्यपतंस्तत्र व्यसवोवसुधातले। ४७४५
सुपूर्णायतमुक्तैस्तानव्यवच्छिन्नपिण्डितैः। पञ्चषट्सप्त चाष्टौ च बिभेद यवनाञ्छरैः।
काम्बोजानां सहस्रैश्च शकानाञ्च विशाम्पते। शवराणां किरातानां वर्व्वराणां तथैव च।
अगम्यरूपां पृथिवीं मांसशोणितकर्द्दमां। कृतवांस्तत्र शैनेयः चपयंस्तावकं बलं।
दस्यूनां सशिरस्त्राणैः शिरोभिर्लूनमूर्द्धजैः। दीर्घकूर्च्चैर्म्मही कीर्णा विवर्हैरण्डजैरिव।
रुधिरोचितसर्व्वाङ्गैस्तैस्तदायोधनं बभौ। कवन्धैः संवृतं सर्व्वं ताम्राभैः खमिवावृतं। ४७५०
वज्राशनिसमस्पर्शैः सुपर्व्वभिरजिह्मगैः। ते सात्त्वतेन निहताः समावव्रुर्व्वसुन्धरां।
अल्पावशिष्टाः सम्भ्रान्ताः कृच्छ्रप्राणा विचेतसः। जिताः सङ्ख्ये महाराज युयुधानेन दंशिताः।
पार्ष्णिभिश्च कशाभिश्च ताडयन्तस्तुरङ्गमान्। जवमुत्तममास्थाय सर्व्वतः प्राद्रवन् भयात्।
काम्बोजसैन्यं विद्राव्य दुर्ज्जयं युधि भारत। यवनानाञ्च तत्सैन्यं शकानाञ्च महद्बलं।
ततः स पुरुषव्याघ्रः सात्यकिः सत्यविक्रमः। प्रविशंस्तावकान् जित्वा सूतं याहीत्यचोदयत्। ४७५५

तत्तस्य समरे कर्म दृष्ट्वाऽन्यैरकृतं पुरा । चारणाः सहगन्धर्व्वाः पूजयाञ्चक्रिरे भृशं ।
तं यान्तं पृष्ठगोप्तारमर्ज्जुनस्य विशाम्पते । चारणाः प्रेक्ष्य संहृष्टास्त्वदीयाश्चाभ्यपूजयन् ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि यवनपराजये एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥
॥ सञ्जय उवाच ॥ जित्वा यवनकाम्बोजान् युयुधानस्ततोऽर्ज्जुनं । जगाम तव सैन्यस्य मध्येन रथिनाम्वरः ।
चारुदंष्ट्रो नरव्याघ्रो विचित्रकवचध्वजः । मृगं व्याध इवाजिघ्नन् तव सैन्यमभीषयत् ।
स रथेन चरन्मार्गं धनुरभ्रामयद्भृशं । रुक्मपृष्ठं महावेगं रुक्मचन्द्रकसंकुलं । ४७५०
रुक्माङ्गदशिरस्त्राणो रुक्मवर्म्मसमावृतः । रुक्मध्वजधनुः शूरो मेरुशृङ्गमिवाबभौ ।
स धनुर्म्मण्डलं सङ्ख्ये तेजोभास्वररश्मिवान् । शरदीवोदितः सूर्य्यो नृसूर्य्यो विरराज ह ।
वृषभस्कन्धविक्रान्तो वृषभाक्षो नरर्षभः । तावकानां बभौ मध्ये गवां मध्ये यथा वृषः ।
मत्तद्विरदसङ्काशं मत्तद्विरदगामिनं । प्रभिन्नमिव मातङ्गं यूथमध्ये व्यवस्थितं ।
व्याघ्रा इव जिघांसन्तस्त्वदीयाः समुपाद्रवन् । द्रोणानीकमतिक्रान्तं भोजानीकञ्च दुस्तरं । ४७५५
जलसन्धार्णवं तीर्त्त्वा काम्बोजानाञ्च वाहिनीं । हार्द्दिक्यमकरान्मुक्तं तीर्णं वै सैन्यसागरं ।
परिवव्रुः सुसंक्रुद्धास्त्वदीयाः सात्यकिं रथाः । दुर्य्योधनश्चित्रसेनो दुःशासनविविंशती ।
शकुनिर्दुःसहश्चैव युवा दुर्द्धर्षणः क्रथः । अन्ये च बहवः शूराः शस्त्रवन्तो दुरासदाः ।
पृष्ठतः सात्यकिं यान्तमन्वधावन्नमर्षिणः । अथ शब्दो महानासीत्तव सैन्यस्य मारिष ।
मारुतोद्धूतवेगस्य सागरस्येव पर्व्वणि । तानभिद्रवतः सर्व्वान् समीक्ष्य शिनिपुङ्गवः । ४७६०
शनैर्याहीति यन्तारमब्रवीत् प्रहसन्निव । इदमेति समुद्धूतं धार्त्तराष्ट्रस्य यद्बलं ।
मामेवाभिमुखं तूर्णं गजाश्वरथपत्तिमत् । नादयद्वै दिशः सर्व्वा रथघोषेण सारथे ।
पृथिवीञ्चान्तरीक्षञ्च कम्पयत् सागरानपि । एतद्बलार्णवं सूत वारयिष्ये महारणे ।
पौर्णमास्यामिवोद्धूतं वेलेव मकरालयं । पश्य मे सूत विक्रान्तमिन्द्रस्येव महामृधे ।
एष सैन्यानि शत्रूणां विधमामि शितैः शरैः । निहतानाहवे पश्य पदात्यश्वरथद्विपान् । ४७६५
मच्छरैरग्निसङ्काशैर्व्विदेहान् सहस्रशः । इत्येवं ब्रुवतस्तस्य सात्वतेरमितौजसः ।
समीपे सैनिकास्ते तु शीघ्रमीयुर्युयुत्सवः । जह्यद्रवस्व तिष्ठेति पश्य पश्येति वादिनः ।
तानेवं ब्रुवतो वीरान् सात्यकिर्निशितैः शरैः । जघान त्रिशतानश्वान् कुञ्जरांश्च चतुःशतान् ।
स सम्प्रहारस्तुमुलस्तस्य तेषाञ्च धन्विनां । देवासुररणप्रख्यः प्रावर्त्तत जनक्षयः ।
मेघजालनिभं सैन्यं तव पुत्रस्य मारिष । प्रत्यगृह्णाच्छिनेः पौत्रः शरैराशीविषोपमैः । ४७७०
प्रच्छाद्यमानः समरे शरजालैः स वीर्य्यवान् । असम्भ्रमन्महाराज तावकानवधीद्बहून् ।
आश्चर्य्यं तत्र राजेन्द्र सुमहदृष्टवानहं । न मोघः सायकः कश्चित् सात्यकेरभवत् प्रभो ।
रथनागाश्वकलिलः पदात्यूर्म्मिसमाकुलः । शैनेयवेलामासाद्य स्थितः सैन्यमहार्णवः ।
सम्भ्रान्तनरनागाश्वमावर्त्तत मुहुर्म्मुहुः । तत्सैन्यमिषुभिस्तेन वध्यमानं समन्ततः ।

बभ्राम तत्र तत्रैव गावः शीतार्द्दिता इव। पदातिनं रथं नागं सादिनं तुरगन्तथा। ४७८५
अविद्धं तत्र नाद्राक्षं युयुधानस्य सायकैः। न तादृक् कदनं राजन् कृतवांस्तत्र फाल्गुनः।
यादृक् क्षयमनीकानामकरोत् सात्यकिर्नृप। अत्यर्ज्जुनं शिनेः पौत्रो युध्यते पुरुषर्षभ।
वीतभीर्लाघवोपेतः कृतित्वं सम्प्रदर्शयन्। ततो दुर्य्योधनो राजा सात्वतस्य त्रिभिः शरैः।
विव्याध सूतं निशितैश्चतुर्भिश्चतुरो हयान्। सात्यकिञ्च त्रिभिर्व्विद्ध्वा पुनरष्टाभिरेव च।
दुःशासनः षोडशभिर्व्विव्याध शिनिपुङ्गवं। शकुनिः पञ्चविंशत्या चित्रसेनश्च पञ्चभिः। ४७९०
दुःसहः पञ्चदशभिर्व्विव्याधोरसि सात्यकिं। उत्स्मयन् वृष्णिशार्दूलस्तथा बाणैः समाहतः।
तानविध्यन्महाराज सर्व्वानेव त्रिभिस्त्रिभिः। गाढविद्धानरीन् कृत्वा मार्गणैः सोऽतितेजनैः।
शैनेयः श्येनवत् सङ्ख्ये व्यचरल्लघुविक्रमः। सौबलस्य धनुश्छित्त्वा हस्तावापं निकृत्य च।
दुर्य्योधनं त्रिभिर्ब्बाणैरभ्यविध्यत् स्तनान्तरे। चित्रसेनं शतेनैव दशभिर्दुःसहं तथा।
दुःशासनन्तु विंशत्या विव्याध शिनिपुङ्गवः। अथान्यद्धनुरादाय स्यालस्तव विशाम्पते। ४७९५
अष्टाभिः सात्यकिं विद्ध्वा पुनर्व्विव्याध पञ्चभिः। दुःशासनश्च दशभिर्दुःसहश्च त्रिभिः शरैः।
दुर्मुखश्च द्वादशभी राजन् विव्याध सात्यकिं। दुर्य्योधनस्त्रिसप्तत्या विद्ध्वा भारत माधवं।
ततोऽस्य निशितैर्ब्बाणैस्त्रिभिर्व्विव्याध सारथिं। तान् सर्व्वान् सहितान् शूरान् यतमानान्महारथान्।
पञ्चभिः पञ्चभिर्ब्बाणैः पुनर्व्विव्याध सात्यकिः। ततः स रथिनां श्रेष्ठस्तव पुत्त्रस्य सारथिं।
आजघानाशु भल्लेन स हतो न्यपतद्भुवि। पतिते सारथौ तस्मिन् तव पुत्त्ररथः प्रभो। ४८००
वातायमानैस्तैरश्वैरपनीयत सङ्गरात्। ततस्तव सुता राजन् सैनिकाश्च विशाम्पते।
राज्ञो रथमभिप्रेक्ष्य विद्रुताः शतशोऽभवन्। विद्रुतं तत्र तत्सैन्यं दृष्ट्वा भारत सात्यकिः।
अवाकिरच्छरैस्तीक्ष्णै रुक्मपुङ्खैः शिलाशितैः। विद्राव्य सर्व्वसैन्यानि तावकानि समन्ततः।
प्रययौ सात्यकी राजन् श्वेताश्वस्य रथम्प्रति। तं शरानाददानञ्च रक्षमाणञ्च सारथिं।
आत्मानं पालयानञ्च तावकाः समपूजयन्। ४८०५

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकिप्रवेशे विंशत्यधिकशततोऽध्यायः ॥ १२० ॥

॥ धृतराष्ट्र उवाच ॥ सम्प्रमृद्य महत्सैन्यं यान्तं शैनेयमर्ज्जुनं। निर्ह्रीका मम ते पुत्त्राः किमकुर्व्वत सञ्जय।
कथं तेषां तदा युद्धे धृतिरासीन्मुमूर्षतां। शैनेये समनुप्राप्ते सदृशे सव्यसाचिना।
किन्नु वक्ष्यन्ति ते क्षत्रे सैन्यमध्ये पराजिताः। कथञ्च सात्यकिर्युद्धे व्यतिक्रान्तो महायशाः।
कथञ्च मम पुत्त्राणां जीवतां तत्र सञ्जय। शैनेयोऽभिययौ युद्धे तन्ममाचक्ष्व सञ्जय।
अत्यद्भुतमिदं तात त्वत्सकाशात् श्रुतं मया। एकस्य बहुभिर्युद्धं शत्रुभिस्तैर्महारथैः। ४८१०
विपरीतमहं दैवं मन्ये सूत सुतान् प्रति। यत्रावध्यन्त समरे सात्वतेन महारथाः।
एकस्य हि न पर्य्याप्तं मत्सैन्यं तस्य सञ्जय। क्रुद्धस्य युयुधानस्य सर्व्वे तिष्ठन्तु पाण्डवाः।
निर्जित्य समरे द्रोणं कृतिनं चित्रयोधिनं। यथा पशुगणान् सिंहस्तद्वद्धन्ता सुतान्मम।

कृतवर्म्मादिभिः शूरैर्यत्तैर्बहुभिराहवे । युयुधानो न शकितो हन्तुं जेष्यति मे सुतान् ।
नैतदीदृशकं युद्धं कृतवांस्तत्र फाल्गुनः । यादृशं कृतवान् युद्धं शिनेर्नप्ता महायशाः । ८८१५
॥ सञ्जय उवाच ॥ तव दुर्म्मन्त्रिते राजन् दुर्य्योधनकृतेन च । शृणुष्वावहितो भूत्वा यत्ते वक्ष्यामि भारत ।
ते पुनः संन्यवर्त्तन्त कृत्वा संशप्तका मिथः । परां युद्धे मतिं क्रूरां तव पुत्त्रस्य शासनात् ।
त्रीणि सादिसहस्राणि दुर्य्योधनपुरोगमाः । शककाम्बोज वाह्लीका यवनाः पारदास्तथा ।
कुलिङ्गास्तङ्गणाम्बष्ठाः पैशाचाश्च सबर्व्वराः । पार्व्वतीयाश्च राजेन्द्र क्रुद्धाः पाषाणपाणयः ।
अभ्यद्रवंस्ते शैनेयं शलभाः पावकं यथा । युक्ताः पञ्चशता राजन् शैनेयं समुपाद्रवन् । ८८२०
ततो रथसहस्रेण महारथशतेन च । द्विरदानां सहस्रेण द्विसाहस्रैश्च वाजिभिः ।
शरवर्षाणि मुञ्चन्तो विविधानि महारथाः । अभ्यद्रवंस्ते शैनेयमसङ्ख्येयाः परन्तप ।
तांश्च सञ्चोदयन् सर्व्वान् घ्नतैनमिति भारत । दुःशासनो महाराज सात्यकिं पर्य्यवारयत ।
तत्राद्भुतमपश्याम शैनेयचरितं महत् । यदेको बहुभिः सार्द्धमसम्भ्रान्तमयुध्यत ।
अवधीच्च रथानीकं द्विरदानाञ्च तद्बलं । सादिनश्चैव तान् सर्व्वान् दस्यूनपि च सर्व्वशः । ८८२५
तत्र चक्रैर्व्विमथितैर्भग्नैश्च परमायुधैः । अक्षैश्च बहुधा भग्नैरीषादण्डकबन्धुरैः ।
कुञ्जरैर्म्मथितैश्चापि ध्वजैश्च विनिपातितैः । वर्म्मभिश्चर्म्मभिश्चैव विकीर्णैश्च समन्ततः ।
स्रग्भिराभरणैर्व्वस्त्रैरनुकर्षैश्च मारिष । सञ्छन्ना वसुधा तत्र शरदि द्यौर्ग्रहैरिव ।
गिरिरूपधराश्चापि पतिताः कुञ्जरोत्तमाः । अञ्जनस्य कुले जाता वामनस्य च भारत ।
सुप्रतीककुले जाता महापद्मकुले तथा । ऐरावतकुले चैव तथाऽन्येषु कुलेषु च । ८८३०
जाता दन्तिवरा राजन् शेरते बहवो हताः । वानायुजान् पार्व्वतीयान् काम्बोजानथ वाह्लिकान् ।
तथा हयवरान् राजन् निजघ्ने तत्र सात्यकिः । नानादेशोद्भवान् पत्तीन्नानाजातींश्च सर्व्वशः ।
निजघ्ने तत्र शैनेयः शतशोऽथ सहस्रशः । तेषु प्रकाल्यमानेषु दस्यून् दुःशासनोऽब्रवीत् ।
निवर्त्तध्वमधर्म्मज्ञा युध्यध्वं किं सृतेन वः । तांश्चातिभग्नान् सम्प्रेक्ष्य पुत्त्रो दुःशासनस्तव ।
पाषाणयोधिनः शूरान् पार्व्वतीयानचोदयत् । अश्मयुद्धेषु कुशला नैतज्जानाति सात्यकिः । ८८३५
अश्मयुद्धमजानन्तं घ्नतैनं युद्धकामुकं । तथैव कुरवः सर्व्वे नाश्मयुद्धविशारदाः ।
अभिद्रवत माभैष्ट न वः प्राप्स्यति सात्यकिः । ते पार्व्वतीया राजानः सर्व्वे पाषाणयोधिनः ।
अभ्यद्रवन्त शैनेयं राजानमिव मन्त्रिणः । ततो गजशिरःप्रख्यैरुपलैः शैलवासिनः ।
उद्यतैर्य्युयुधानस्य पुरतस्तस्थुराहवे । क्षेपणीयैस्तथाऽप्यन्ये सात्वतस्य वधैषिणः ।
चोदितास्तव पुत्त्रेण सर्व्वतो रुरुधुर्द्दिशः । तेषामापततामेव शिलायुद्धं चिकीर्षतां । ८८४०
सात्यकिः प्रतिसन्धाय निशितान् प्राहिणोच्छरान् । तामश्मवृष्टिं तुमुलां पार्व्वतीयैः समीरितां ।
चिच्छेदोरगसङ्काशैर्नाराचैः शिनिपुङ्गवः । तैरश्मचूर्णैर्द्दीप्यद्भिः खद्योतानामिव व्रजैः ।
प्रायः सैन्यान्यहन्यन्त हाहाभूतानि मारिष । ततः पञ्चशताः शूराः समुद्यतमहाशिलाः ।

निकृत्तबाहवो राजन् निपेतुर्धरणीतले । पुनर्द्दशशतास्त्वन्ये शतसाहस्रिणस्तथा ।
सोपलैर्ब्बाहुभिश्छिन्नैः पेतुरप्राप्य सात्यकिं । पाषाणयोधिनः शूरान् पतमानानवस्थितान् । ४८४५
न्यवधीद्बहुसाहस्रांस्तदद्भुतमिवाभवत् । ततः पुनस्तु संभूय तेऽश्मवृष्टिं समन्ततः ।
अयोहस्ताः शूलहस्ता दरदाः खशतङ्गणाः । लम्पाकाश्च पुलिन्दाश्च चिक्षिपुस्तांश्च सात्यकिः ।
नाराचैः प्रतिचिच्छेद प्रतिपत्तिविशारदः । अद्रीणां भिद्यमानानामन्तरीक्षे शितैः शरैः ।
शब्देन प्राद्रवन् संख्ये रथाश्वगजपत्तयः । अश्मचूर्णैरवाकीर्णा मनुष्या गजवाजिनः ।
नाशक्नुवन्नवस्थातुं भ्रमरैरिव दंशिताः । हतशिष्टाः सरुधिरा भिन्नमस्तकपिण्डिकाः । ४८५०
कुञ्जरा वर्ज्जयामासुर्युयुधानरथं तदा । ततः शब्दः समभवत् तव सैन्यस्य मारिष ।
माधवेनार्द्यमानस्य सागरस्येव पर्व्वणि । तं शब्दं तुमुलं श्रुत्वा द्रोणो यन्तारमब्रवीत् ।
एष सूत रणे क्रुद्धः सात्वतानां महारथः । दारयन् बहुधा सैन्यं रणे चरति कालवत् ।
यत्रैष शब्दस्तुमुलस्तत्र सूत रथं नय । पाषाणयोधिभिर्नूनं युयुधानः समागतः ।
तथा हि रथिनः सर्व्वे ह्रियन्ते विद्रुतैर्हयैः । विशस्त्रकवचा रुग्णास्तत्र तत्र पतन्ति च । ४८५५
न शक्नुवन्ति यन्तारः संयन्तुं तुमुले हयान् । इत्येतद्वचनं श्रुत्वा भारद्वाजस्य सारथिः ।
प्रत्युवाच ततो द्रोणं सर्व्वशस्त्रभृताम्वरं । सैन्यं द्रवति चायुष्मन् कौरवेयं समन्ततः ।
पश्य योधान् रणे भग्नान् धावतो वै समन्ततः । इमे च संहताः शूरा पाञ्चालाः पाण्डवैः सह ।
त्वामेव हि जिघांसन्त आद्रवन्ति समन्ततः । अत्र कार्य्यं समाधत्स्व प्राप्तकालमरिन्दम ।
स्थाने वा गमने वापि दूरं यातश्च सात्यकिः । तथैवं वदतस्तस्य भारद्वाजस्य मारिष । ४८६०
प्रत्यदृश्यत शैनेयो निघ्नन् बहुविधान् रथान् । ते वध्यमानाः समरे युयुधानेन तावकाः ।
युयुधानरथं त्यक्त्वा द्रोणानीकाय दुद्रुवुः । यैस्तु दुःशासनः सार्द्धं रथैः पूर्व्वं न्यवर्त्तत ।
ते भीतास्त्वभ्यधावन्त सर्व्वे द्रोणरथम्प्रति ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकिप्रवेशे एकविंशत्यधिकशतोऽध्यायः ॥ १२१ ॥

॥ सञ्जय उवाच ॥ दुःशासनरथं दृष्ट्वा समीपे पर्य्यवस्थितं । भारद्वाजस्ततो वाक्यं दुःशासनमथाब्रवीत् ।
दुःशासन रथाः सर्व्वे कस्मादेते प्रविद्रुताः । कच्चित् क्षेमन्तु नृपतेः कच्चिज्जीवति सैन्धवः । ४८६५
राजपुत्रो भवानत्र राजभ्राता महारथः । किमर्थं द्रवसे युद्धे यौवराज्यमवाप्नुहि ।
दासी जितासि द्यूते त्वं यथाकामचरी भव । वाससां वाहिका राज्ञो भ्रातुर्ज्येष्ठस्य मे भव ।
न सन्ति पतयः सर्व्वे तेऽद्य षण्ढतिलैः समाः । दुःशासनैवं कस्मात्त्वं पूर्व्वमुक्त्वा पलायसे ।
स्वयं वैरं महत्कृत्वा पाञ्चालैः पाण्डवैः सह । एकं सात्यकिमासाद्य कथं भीतोऽसि संयुगे ।
न जानीषे पुरा त्वन्तु गृह्णन्नक्षान् दुरोदरे । शरा ह्येते भविष्यन्ति दारुणाशीविषोपमाः । ४८७०
अप्रियाणां हि वचसां पाण्डवेषु विशेषतः । द्रौपद्याश्च परिक्लेशस्त्वन्मूलो ह्यभवत् पुरा ।
क्व ते मानश्च दर्पश्च क्व ते वीर्य्यं क्व दर्प्पितं । आशीविषसमान् पार्थान् कोपयित्वा क्व यास्यसि ।

शोच्येयं भारती सेना राजा चैवं सुयोधनः । यस्य त्वं कर्कशो भ्राता पलायनपरायणः ।
ननु नाम त्वया वीर दीर्य्यमाणा भयार्हिता । स्वबाहुबलमास्थाय रक्षितव्या ह्यनीकिनी ।
स त्वमद्य रणं हित्वा भीतो हर्षयसे परान् । विद्रुते त्वयि सैन्यस्य नायके शत्रुसूदन । ४८७५
कोऽन्यः स्थास्यति सङ्ग्रामे भीतो भीतव्यपाश्रयः । एकेन सात्वतेनाद्य युध्यमानस्य तेऽनघ ।
पलायने तव मतिः सङ्ग्रामाद्धि प्रवर्त्तते । यदा गाण्डीवधन्वानं भीमसेनञ्च कौरव ।
यमौ वा युधि द्रष्टासि तदा त्वं किं करिष्यसि । युधि फाल्गुनबाणानां सूर्य्याग्निसमवर्च्चसां ।
न तुल्याः सात्यकिशराः येन भीतः पलायसे । यदि तावत् कृता बुद्धिः पलायनपरायणा ।
पृथिवी धर्म्मराजाय शमेनैव प्रदीयतां । यावत् फाल्गुननाराचा निर्म्मुक्तोरगसन्निभाः । ४८८०
नाविशन्ति शरीरन्ते तावत् संशाम्य पाण्डवैः । यावत्ते पृथिवीं पार्थो हत्वा भ्रातृशतं रणे ।
नाक्षिपन्ति महात्मानस्तावत् संशाम्य पाण्डवैः । यावत् क्रुध्यति नो राजा धर्म्मपुत्त्रो युधिष्ठिरः ।
कृष्णश्च समरश्लाघी तावत् संशाम्य पाण्डवैः । यावद्भीमो महाबाहुर्व्विगाह्य महतीञ्चमूं ।
सोदरांस्ते न गृह्णाति तावत् संशाम्य पाण्डवैः । पूर्व्वमुक्तश्च ते भ्राता भीष्मेणासौ सुयोधनः ।
अजेयाः पाण्डवाः सङ्ख्ये सौम्य संशाम्य तैः सह । नच तत् कृतवान् मन्दस्तव भ्राता सुयोधनः । ४८८५
स युद्धे धृतिमास्थाय यत्तो युध्यस्व पाण्डवैः । गच्छ तूर्णं रथेनैव यत्र तिष्ठति सात्यकिः ।
त्वया हीनं बलं ह्येतद्विद्रविष्यति भारत । आत्मार्थं योधय रणे सात्यकिं सत्यविक्रमं ।
एवमुक्तस्तव सुतो नाब्रवीत् किञ्चिदप्यसौ । श्रुतञ्चाश्रुतवत् कृत्वा प्रायाद्येन स सात्यकिः ।
सैन्येन महता युक्तो म्लेच्छानामनिवर्त्तिनां । आसाद्य च रणे यत्तो युयुधानमयोधयत् ।
द्रोणोऽपि रथिनां श्रेष्ठः पाञ्चालान् पाण्डवांस्तथा । अभ्यद्रवत संक्रुद्धो जवमास्थाय मध्यमं । ४८९०
प्रविश्य च रणे द्रोणः पाण्डवानां वरूथिनीं । द्रावयामास योधान् वै शतशोऽथ सहस्रशः ।
ततो द्रोणो महाराज नाम विश्राव्य संयुगे । पाण्डुपाञ्चालमत्स्यानां प्रचक्रे कदनं महत् ।
तं जयन्तमनीकानि भारद्वाजं ततस्ततः । पाञ्चालपुत्त्रो द्युतिमान् वीरकेतुः समभ्ययात् ।
स द्रोणं पञ्चभिर्व्विद्ध्वा शरैः सन्नतपर्व्वभिः । ध्वजमेकेन विव्याध सारथिञ्चास्य सप्तभिः ।
तत्राद्भुतं महाराज दृष्टवानस्मि संयुगे । यद्द्रोणो रभसो युद्धे पाञ्चाल्यं नाभ्यवर्त्तत । ४८९५
सन्निरुद्धं रणे द्रोणं पाञ्चाला वीक्ष्य मारिष । आवव्रुः सर्व्वतो राजन् धर्म्मपुत्त्रजयैषिणः ।
तैः शरैरग्निसङ्काशैस्तोमरैश्च महाधनैः । शस्त्रैश्च विविधैराजन् द्रोणमेकमवाकिरन् ।
निहत्य तान् बाणगणैर्द्रोणो राजन् समन्ततः । महाजलधरान् व्योम्नि मातरिश्वा इवाबभौ ।
ततः शरं महाघोरं सूर्य्यपावकसन्निभं । सन्दधे परवीरघ्नो वीरकेतोरथम्प्रति ।
स भित्त्वा तु शरो राजन् पाञ्चालकुलनन्दन । अभ्यगाद्धरणीं तूर्णं लोहितार्द्रो ज्वलन्निव । ४९००
ततोऽपतद्रथात्तूर्णं पाञ्चालकुलनन्दनः । पर्व्वताग्रादिव महांश्चम्पो वायुपीडितः ।
तस्मिन् हते महेष्वासे राजपुत्त्रे महाबले । पाञ्चालास्त्वरिता द्रोणं समन्तात् पर्य्यवारयन् ।

चित्रकेतुः सुधन्वा च चित्रवर्मा च भारत। तथा चित्ररथश्चैव भ्रातृव्यसनकर्षिताः।
अभ्यद्रवन्त सहिता भारद्वाजं युयुत्सवः। मुञ्चन्तः शरवर्षाणि तपान्ते जलदा इव।
स बध्यमानो बहुधा राजपुत्रैर्महारथैः। क्रोधमाहारयत्तेषामभावाय द्विजर्षभः। ४९०५
ततः शरमयं जालं द्रोणस्तेषामवासृजत्। ते हन्यमाना द्रोणस्य शरैराकर्णचोदितैः।
कर्त्तव्यं नाभ्यजानन्त कुमारा राजसत्तम। तान् विमूढान् रणे द्रोणः प्रहसन्निव भारत।
व्यश्वसूतरथांश्चक्रे कुमारान् कुपितो रणे। तथा शरैः सुनिशितैर्भल्लैस्तेषां महायशाः।
पुष्पाणीव विचिन्वान उत्तमाङ्गान्यपातयत्। ते रथेभ्यो हताः पेतुः क्षितौ राजन् सुवर्चसः।
देवासुरे पुरा युद्धे यथा दैतेयदानवाः। तान्निहत्य रणे राजन् भारद्वाजः प्रतापवान्। ४९१०
कार्मुकं भ्रामयामास हेमपृष्ठं दुरासदं। पाञ्चालान्निहतान् दृष्ट्वा देवकल्पान्महारथान्।
धृष्टद्युम्नो रणे क्रुद्धो नेत्राभ्यां पातयञ्जलं। अभ्यवर्त्तत संग्रामे क्रुद्धो द्रोणरथम्प्रति।
ततो हाहेति सहसा नादः समभवन्नृप। पाञ्चाल्येन रणे दृष्ट्वा द्रोणमावारितं शरैः।
स च्छाद्यमानो बहुधा पार्षतेन महात्मना। न विव्यथे ततो द्रोणः स्मयन्नेवान्वयुध्यत।
ततो द्रोणं महाराज पाञ्चाल्यः क्रोधमूर्च्छितः। आजघानोरसि क्रुद्धो नवत्या नतपर्व्वणां। ४९१५
स गाढविद्धो बलिना भारद्वाजो महायशाः। निषसाद रथोपस्थे कश्मलञ्च जगाम ह।
तं वै तथागतं दृष्ट्वा धृष्टद्युम्नः पराक्रमी। चापमुत्सृज्य शीघ्रन्तु असिं जग्राह वीर्य्यवान्।
अवप्लुत्य रथाच्चापि त्वरितः स महारथः। आरुरोह रथं तूर्णं भारद्वाजस्य मारिष।
हर्त्तुमिच्छन् शिरः कायात् क्रोधसंरक्तलोचनः। प्रत्याश्वस्तस्ततो द्रोणो धनुरादाय वीर्य्यवान्।
आसन्नमागतं दृष्ट्वा धृष्टद्युम्नं जिघांसया। शरैर्वैतस्तिकैराजन् विव्याधासन्नयोधिभिः। ४९२०
योधयामास समरे धृष्टद्युम्नं महारथं। ते हि वैतस्तिका नाम शरा आसन्नयोधिनः।
द्रोणस्य विदिता राजन् यैर्धृष्टद्युम्नमक्षिणोत्। स बध्यमानो बहुभिः सायकैस्तैर्महाबलः।
अवप्लुत्य रथात्तूर्णं भग्नवेगः पराक्रमी। आरुह्य स्वरथं वीरः प्रगृह्य च महद्धनुः।
विव्याध समरे द्रोणं धृष्टद्युम्नो महारथः। द्रोणश्चापि महाराज शरैर्विव्याध पार्षतं।
तदद्भुतमभूद्युद्धं द्रोणपाञ्चाल्ययोस्तदा। त्रैलोक्यकाङ्क्षिणोरासीच्छक्रप्रह्लादयोरिव। ४९२५
मण्डलानि विचित्राणि यमकानीतराणि च। चरन्तौ युद्धमार्गज्ञौ ततक्षतुरथेषुभिः।
मोहयन्तौ मनांस्याजौ योधानां द्रोणपार्षतौ। सृजन्तौ शरवर्षाणि वर्षास्विव बलाहकौ।
छादयन्तौ महात्मानौ शरैर्व्योम दिशो महीं। तदद्भुतं तयोर्युद्धं भूतसङ्घा ह्यपूजयन्।
क्षत्रियाश्च महाराज ये चान्ये तत्र सैनिकाः। अवश्यं समरे द्रोणो धृष्टद्युम्नेन सङ्गतः।
वशमेष्यति नो राजन् पाञ्चाला इति चुक्रुशुः। द्रोणस्तु त्वरितो युद्धे धृष्टद्युम्नस्य सारथेः। ४९३०
शिरः प्रच्यावयामास फलं पक्वं तरोरिव। ततस्तु प्रद्रुता वाहा राजंस्तस्य महात्मनः।
तेषु प्रद्रवमाणेषु पाञ्चालान् सृञ्जयांस्तथा। व्यद्रावयद्रणे द्रोणस्तत्र तत्र पराक्रमी।

विजित्य पाण्डुपाञ्चालान् भारद्वाजः प्रतापवान्। स्वं व्यूहं पुनरास्थाय प्रत्यतिष्ठदरिन्दमः।
नचैनं पाण्डवा युद्धे जेतुमुत्सेहिरे प्रभो।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि द्रोणपराक्रमे द्वाविंशत्यधिकशततमोऽध्यायः॥ १२२ ॥

॥ सञ्जय उवाच॥ ततो दुःशासनो राजन् शैनेयं समुपाद्रवत्। किरन् शरसहस्राणि पर्ज्जन्य इव वृष्टिमान्। ४८२५
स विद्ध्वा सात्यकिं षष्ट्या तथा षोडशभिः शरैः। नाकम्पयत् स्थितं युद्धे मैनाकमिव पर्व्वतं।
रथव्रातेन महता नानादेशोद्भवेन च। सर्व्वतो भरतश्रेष्ठो विसृजन् सायकान् बहून्।
पर्ज्जन्य इव घोषेण नादयन् वै दिशो दश। तमापतन्तमालोक्य सात्यकिः कौरवं रणे।
अभिद्रुत्य महाबाहुश्छादयामास सायकैः। ते छाद्यमाना बाणौघैर्दुःशासनपुरोगमाः।
प्राद्रवन् समरे भीतास्तव पुत्रस्य पश्यतः। तेषु द्रवत्सु राजेन्द्र पुत्रो दुःशासनस्तव। ४८३०
तस्थौ व्यपेतभी राजन् सात्यकिं चार्द्दयच्छरैः। चतुर्भिर्व्वाजिनस्तस्य सारथिञ्च त्रिभिः शरैः।
सात्यकिञ्च शतेनाजौ विद्ध्वा नादं मुमोच ह। ततः क्रुद्धो महाराज माधवस्तस्य संयुगे।
रथं सूतं ध्वजं तञ्च चक्रेऽदृश्यमजिह्मगैः। स तु दुःशासनं शूरं सायकैरावृणोद्भृशं।
मशकं समनुप्राप्तमूर्णनाभिरिवोर्णया। त्वरन् समावृणोद्बाणैर्दुःशासनममित्रजित्।
दृष्ट्वा दुःशासनं राजा तथा शरशताचितं। त्रिगर्त्तांश्चोदयामास युयुधानरथं प्रति। ४८३५
तेऽगच्छन् युयुधानस्य समीपं क्रूरकारिणः। त्रिगर्त्तानां त्रिसाहस्रा रथा युद्धविशारदाः।
ते तु तं रथवंशेन महता पर्य्यवारयन्। स्थिरां कृत्वा मतिं युद्धे भूत्वा संशप्तका मिथः।
तेषां प्रयततां युद्धे शरवर्षाणि मुञ्चतां। योधान् पञ्चशतान् मुख्यान् अग्रानीके न्यपातयत्।
ते पतन्ति हतास्तूर्णं शिनिप्रवरसायकैः। महामारुतवेगेन भग्ना इव नगाद्द्रुमाः।
नागैश्च बहुधाच्छिन्नैर्ध्वजैश्चैव विशाम्पते। हयैश्च कनकापीडैः पतितैस्तत्र मेदिनी। ४८४०
शैनेयशरसङ्कृत्तैः शोणितौघपरिप्लुतैः। अशोभत महाराज किंशुकैरिव पुष्पितैः।
ते वध्यमानाः समरे युयुधानेन तावकाः। त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः।
ततस्ते पर्य्यवर्त्तन्त सर्व्वे द्रोणरथं प्रति। भयात् पतगराजस्य गर्त्तानीव महोरगाः।
हत्वा पञ्चशतान् योधान् शरैराशीविषोपमैः। प्रायात् स शनकैर्व्वीरो धनञ्जयरथं प्रति।
तं प्रयान्तं नरश्रेष्ठं पुत्रो दुःशासनस्तव। विव्याध नवभिस्तूर्णं शरैः सन्नतपर्व्वभिः। ४८४५
स तु तं प्रतिविव्याध पञ्चभिर्निशितैः शरैः। रुक्मपुङ्खैर्महेष्वासो गार्द्धपत्रैरजिह्मगैः।
सात्यकिं तं महाराज प्रहसन्निव भारत। दुःशासनस्त्रिभिर्विद्ध्वा पुनर्व्विव्याध पञ्चभिः।
शैनेयस्तव पुत्रन्तु हत्वा पञ्चभिराशुगैः। धनुश्चास्य रणे छित्त्वा प्रहसन्नर्ज्जुनं ययौ।
ततो दुःशासनः क्रुद्धो वृष्णिवीराय गच्छते। सर्व्वपारशवीं शक्तिं विससर्ज्ज जिघांसया।
तान्तु शक्तिं तदा घोरां तव पुत्रस्य सात्यकिः। चिच्छेद स तदा राजन् निशितैः कङ्कपत्रिभिः। ४८५०
अथान्यद्धनुरादाय पुत्रस्तव जनेश्वर। सात्यकिञ्च शरैर्व्विद्ध्वा सिंहनादं ननाद ह।

सात्यकिस्तु रणे क्रुद्धो मोहयित्वा सुतं तव । शरैरग्निशिखाकारैराजघान स्तनान्तरे ।
सर्व्वाङ्गेस्तोत्त्रवद्भिश्चाप्यष्टाभिर्व्विव्यधे पुनः । दुःशासनस्तु विंशत्या सात्यकिं प्रत्यविध्यत ।
सात्वतोऽपि महाराज तं विव्याध स्तनान्तरे । त्रिभिरेव महाभागः शरैः सन्नतपर्व्वभिः ।
ततोऽस्य वाहान्निशितैः शरैर्जघ्ने महारथः । सारथिञ्च सुसंक्रुद्धः शरैः सन्नतपर्व्वभिः । ४८६५
धनुरेकेन भल्लेन हस्तावापञ्च पञ्चभिः । ध्वजञ्च रथशक्तिञ्च भल्लाभ्यां परमास्त्रवित् ।
चिच्छेद विशिखैस्तीक्ष्णैस्तथोभौ पार्ष्णिसारथी । स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
त्रिगर्त्तसेनापतिना स्वरथेनापवाहितः । तमभिद्रुत्य शैनेयो मुहूर्त्तमिव भारत ।
न जघान महाबाहुर्भीमसेनवचः स्मरन् । भीमसेनेन तु वधः सुतानां तव भारत ।
प्रतिज्ञातः सभामध्ये सर्व्वेषामेव संयुगे । ततो दुःशासनं जित्वा सात्यकिः संयुगे प्रभो । ४८७०
जगाम त्वरितो राजन् येन यातो धनञ्जयः ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकिप्रवेशे दुःशासनपराजये त्रयोविंशत्यधिकशततोऽध्यायः ॥१२३॥

॥ धृतराष्ट्र उवाच ॥ किं तस्यां मम सेनायां नासन् केचिन्महारथाः । ये तथा सात्यकिं यान्तं नैवाघ्नन्नाप्यवारयन् ।
एको हि समरे कर्म्म कृतवान् सत्यविक्रमः । शक्रतुल्यबलो युद्धे महेन्द्रो दानवेष्विव ।
अथ वा शून्यमासीत्तत् येन यातः स सात्यकिः । एको वै बहुलाः सेनाः प्रमृद्नन् सत्यविक्रमः ।
कथञ्च युध्यमानानामपक्रान्तो महात्मनां । एको बहूनां शैनेयस्तन्ममाचक्ष्व सञ्जय । ४८७५

॥ सञ्जय उवाच ॥ राजन् सेनासमुद्योगो रथनागाश्वपत्तिनां । तुमुलस्तव सैन्यानां युगान्तसदृशोऽभवत् ।
आह्निकेषु समूहेषु तव सैन्यस्य मानद । नाभूल्लोके समः कश्चित् समूह इति मे मतिः ।
तत्र देवास्त्वभाषन्त चारणाश्च समागताः । एतदन्ताः समूहा वै भविष्यन्ति महीतले ।
न च एतादृशो व्यूह आसीत् कश्चिद्विशाम्पते । यावज्जयद्रथवधे द्रोणेन विहितोऽभवत् ।
चण्डवातविभिन्नानां समुद्राणामिव स्वनः । रणेऽभवद्बलौघानामन्योऽन्यमभिधावतां । ४८८०
पार्थिवानां समेतानां बहून्यासन् नरोत्तम । त्वद्बले पाण्डवानाञ्च सहस्राणि शतानि च ।
संरब्धानां प्रवीराणां समरे दृढकर्म्मणां । तत्रासीत् सुमहान् शब्दस्तुमुलो लोमहर्षणः ।
अथाक्रन्दद्भीमसेनो धृष्टद्युम्नश्च मारिष । नकुलः सहदेवश्च धर्म्मराजश्च पाण्डवः ।
आगच्छत प्रहरत द्रुतं विपरिधावत । प्रविष्टावरिसेनां हि वीरौ माधवपाण्डवौ ।
यथासुखेन गच्छेतां जयद्रथरथम्प्रति । तथा प्रकुरुत क्षिप्रं इति सैन्यान्यचोदयत् । ४८८५
तयोरभावे कुरवः कृतार्थाः स्युर्व्वयं जिताः । ते यूयं सहिताः भूत्वा तूर्णमेव बलार्णवं ।
क्षोभयध्वं महावेगाः पवनः सागरं यथा । भीमसेनेन ते राजन् पाञ्चाल्येन च चोदिताः ।
आजघ्नुः कौरवान् सङ्ख्ये त्यक्त्वासूनात्मनः प्रियान् । इच्छन्तो निधनं युद्धे शस्त्रैरुत्तमतेजसः ।
स्वर्गेप्सवो मित्रकार्य्ये नाभ्यनन्दन्त जीवितं । तथैव तावका राजन् प्रार्थयन्तो महद्यशः ।
आर्य्यां युद्धे मतिं कृत्वा युद्धायैवावतस्थिरे । तस्मिंस्तु तुमुले युद्धे वर्त्तमाने भयावहे । ४८९०

जित्वा सर्व्वाणि सैन्यानि प्रायात् सात्यकिरर्ज्जुनं । कवचानाम्प्रभाभिश्च सूर्य्यरश्मिविराजितः ।
दृष्टीः सर्व्वे सैनिकानां प्रतिजग्मुः समन्ततः । तथा प्रयतमानानां पाण्डवानां महात्मनां ।
दुर्य्योधनो महाराज व्यगाहत महद्बलं । स सन्निपातस्तुमुलस्तेषां तस्य च भारत ।
अभवत् सर्व्वभूतानामभावकरणो महान् ।
॥ धृतराष्ट्र उवाच ॥ तथा यातेषु सैन्येषु तथा कृच्छ्रगतः स्वयं । कच्चिद्दुर्य्योधनः सूत नाकार्षीत् पृष्ठतो रणं । ४९९५
एकस्य च बहूनाञ्च सन्निपातो महाहवे । विशेषतो नरपतेर्व्विषमः प्रतिभाति मे ।
सोऽत्यन्तसुखसंवृद्धो लक्ष्म्या लोकस्य चेश्वरः । एकं बहून् समासाद्य कच्चिन्नासीत् पराङ्मुखः ।
॥ सञ्जय उवाच ॥ राजन् सङ्ग्राममाश्चर्य्यं तव पुत्त्रस्य भारत । एकस्य बहुभिः सार्द्धं शृणुष्व गदतो मम ।
दुर्य्योधनेन समरे पृतना पाण्डवी रणे । नलिनी द्विरदेनेव समन्तात् प्रतिलोडिता ।
ततस्तां प्रहतां सेनां दृष्ट्वा पुत्त्रेण ते नृप । भीमसेनपुरोगास्ते पाञ्चालाः समुपाद्रवन् । ५०००
स भीमसेनं दशभिः शरैर्व्विव्याध पाण्डवं । त्रिभिस्त्रिभिर्यमौ वीरौ धर्म्मराजञ्च सप्तभिः ।
विराटद्रुपदौ षड्भिः शतेन च शिखण्डिनं । धृष्टद्युम्नञ्च विंशत्या द्रौपदेयांस्त्रिभिस्त्रिभिः ।
शतशश्चापरान् योधान् सद्विपांश्च रथान् रणे । शरैरवचकर्त्तोग्रैः क्रुद्धोऽन्तक इव प्रजाः ।
न सन्दधन् विमुञ्चन् वा मण्डलीकृतकार्म्मुकः । अदृश्यत रिपून्निघ्नन् शिक्षयाऽस्त्रबलेन च ।
तस्य तान् निघ्नतः शत्रून् हेमपृष्ठं महद्धनुः । अजस्रं मण्डलीभूतं ददृशुः समरे जनाः । ५००५
ततो युधिष्ठिरो राजा भल्लाभ्यामच्छिनद्धनुः । तव पुत्त्रस्य कौरव्य यतमानस्य संयुगे ।
विव्याध चैनं दशभिः सम्यगस्तैः शरोत्तमैः । वर्म्म चाशु समासाद्य ते भग्नाः क्षितिमाविशन् ।
ततः प्रमुदिताः पार्थाः परिवव्रुर्युधिष्ठिरं । यथा वृत्रवधे देवाः पुरा शक्रं महर्षयः ।
ततोऽन्यद्धनुरादाय तव पुत्त्रः प्रतापवान् । तिष्ठ तिष्ठेति राजानं ब्रुवन् पाण्डवमभ्ययात् ।
तमायान्तमभिप्रेक्ष्य तव पुत्त्रं महाहवे । प्रत्युद्ययुः प्रमुदिताः पाञ्चाला जयगृद्धिनः । ५०१०
तान् द्रोणः प्रतिजग्राह परीप्सन् युधि पार्थिवं । चण्डवातोद्धुतान् मेघान् गिरिरम्बुमुचो यथा ।
तत्र राजन् महानासीत् सङ्ग्रामो लोमहर्षणः । पाण्डवानां महाबाहो तावकानाञ्च संयुगे ।
रुद्रस्याक्रीडसदृशः संहारः सर्व्वदेहिनां । ततः शब्दो महानासीत् पुनर्येन धनञ्जयः ।
अतीव सर्व्वशब्देभ्यो लोमहर्षकरः प्रभो । अर्ज्जुनस्य महाबाहो तावकानाञ्च धन्विनां ।
मध्ये भारतसैन्यस्य माधवस्य महारणे । द्रोणस्यापि परैः सार्द्धं व्यूहद्वारे महारणे । ५०१५
एवमेव क्षयो वृत्तः पृथिव्यां पृथिवीपते । क्रुद्धेऽर्ज्जुने तथा द्रोणे सात्वते च महारथे ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सङ्कुलयुद्धे चतुर्व्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥
॥ सञ्जय उवाच ॥ अपराह्णे महाराज सङ्ग्रामः सुमहानभूत् । पर्ज्जन्यसमनिर्घोषः पुनर्द्रोणस्य सोमकैः ।
शोणाश्वं रथमास्थाय नरवीरः समाहितः । समरेऽभ्यद्रवत् पाण्डून् जवमास्थाय मध्यमं ।
तव प्रियहिते युक्तो महेष्वासो महाबलः । चित्रपुङ्खैः शितैर्बाणैः कलशोत्तमसम्भवः ।

वरान् वरान् हि योधानां विचिन्वन्निव भारत। आक्रीडत रणे राजन् भारद्वाजः प्रतापवान्। ५०२०
तमभ्ययात् बृहत्क्षत्रः केकयानां महारथः। भ्रातॄणां नृप पञ्चानां श्रेष्ठः समरकर्कशः।
विमुञ्चन्विशिखांस्तीक्ष्णानाचार्य्यं भृशमर्द्दयत्। महामेघो यथा वर्षं विमुञ्चन् गन्धमादने।
तस्य द्रोणो महाराज स्वर्णपुङ्खाञ्छिलाशितान्। प्रेषयामास संक्रुद्धः सायकान् दश पञ्च च।
तांस्तु द्रोणविनिर्मुक्तान् क्रुद्धाशीविषसन्निभान्। एकैकं पञ्चभिर्ब्बाणैर्युधि चिच्छेद हृष्टवत्।
तदस्य लाघवं दृष्ट्वा प्रहस्य द्विजपुङ्गवः। प्रेषयामास विशिखानष्टौ सन्नतपर्व्वणः। ५०२५
तान् दृष्ट्वा पततस्तूर्णं द्रोणचापच्युताञ्छरान्। अवारयच्छरैरेव तावद्भिर्निशितैर्मृधे।
ततोऽभवन्महाराज तव सैन्यस्य विस्मयः। बृहत्क्षत्रेण तत्कर्म्म कृतं दृष्ट्वा सुदुष्करं।
ततो द्रोणो महाराज बृहत्क्षत्रं विशेषयन्। प्रादुश्चक्रे रणे दिव्यं ब्राह्ममस्त्रं सुदुर्ज्जयं।
कैकेयोऽस्त्रं समालोक्य मुक्तं द्रोणेन संयुगे। ब्रह्मास्त्रेणैव राजेन्द्र ब्राह्ममस्त्रमशातयत्।
ततोऽस्त्रे निहते ब्राह्मे बृहत्क्षत्रस्तु भारत। विव्याध ब्राह्मणं षष्ट्या स्वर्णपुङ्खैः शिलाशितैः। ५०३०
तं द्रोणो द्विपदां श्रेष्ठो नाराचेन समार्पयत्। स तस्य कवचं भित्त्वा प्राविशद्धरणीतलं।
कृष्णसर्पो यथा मुक्तो वल्मीकं नृपसत्तम। तथाऽभ्यगान्महीं बाणो भित्त्वा कैकेयमाहवे।
सोऽतिविद्धो महाराज कैकेयो द्रोणसायकैः। क्रोधेन महताविष्टो व्यावृत्य नयने शुभे।
द्रोणं विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः। सारथिञ्चास्य बाणेन भृशं मर्म्मस्वताडयत्।
द्रोणस्तु बहुभिर्व्विद्धो बृहत्क्षत्रेण मारिष। असृजद्विशिखांस्तीक्ष्णान् कैकेयस्य रथम्प्रति। ५०३५
व्याकुलीकृत्य तं द्रोणो बृहत्क्षत्रं महारथं। अश्वांश्चतुर्भिर्न्यवधीच्चतुरोऽस्य पतत्रिभिः।
सूतञ्चैकेन बाणेन रथनीडादपाहरत्। द्वाभ्यां ध्वजञ्च छत्रञ्च छित्त्वा भूमावपातयत्।
ततः साधुविसृष्टेन नाराचेन द्विजर्षभः। हृद्यविध्यत् बृहत्क्षत्रं स छिन्नहृदयोऽपतत्।
बृहत्क्षत्रे हते राजन् कैकेयानां महारथे। शैशुपालिरभिक्रुद्धो यन्तारमिदमब्रवीत्।
सारथे याहि यत्रैष द्रोणस्तिष्ठति दंशितः। विनिघ्नन् केकयान् सर्व्वान् पाञ्चालानाञ्च वाहिनीं। ५०४०
तस्य तद्वचनं श्रुत्वा सारथी रथिनां वरः। द्रोणाय प्रापयामास काम्बोजैर्ज्जवनैर्हयैः।
धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः। वधायाभ्यद्रवत् द्रोणं पतङ्ग इव पावकं।
सोऽविध्यत् तदा द्रोणं षष्ट्या साश्वरथध्वजं। पुनश्चान्यैः शरैस्तीक्ष्णैः सुप्तं व्याघ्रं तुदन्निव।
तस्य द्रोणो धनुर्म्मध्ये क्षुरप्रेण शितेन च। चकर्त्त गार्द्धपत्रेण यतमानस्य शुष्मिणः।
अथान्यद्धनुरादाय शैशुपालिर्म्महारथः। विव्याध सायकैर्द्रोणं कङ्कबर्हिणवाजितैः। ५०४५
तस्य द्रोणो हयान् हत्वा चतुर्भिश्चतुरः शरैः। सारथेश्च शिरः कायाच्चकर्त्त प्रहसन्निव।
अथैनं पञ्चविंशत्या सायकानां समार्पयत्। अवप्लुत्य रथाच्चैद्यो गदामादाय सत्वरः।
भारद्वाजाय चिक्षेप रुषितामिव पन्नगीं। तामापतन्तीमालोक्य कालरात्रिमिवोद्यतां।
अश्मसारमयीं गुर्व्वीं तपनीयविभूषितां। शरैरनेकसाहस्रैर्भारद्वाजोऽच्छिनच्छितैः।

सा च्छिन्ना बहुभिर्बाणैर्भारद्वाजेन मारिष। गदा पपात कौरव्य नादयन्ती धरातलं। ५०५०
गदां विनिहतां दृष्ट्वा धृष्टकेतुरमर्षणः। तोमरं व्यसृजद्वीरः शक्तिञ्च कनकोज्ज्वलां।
तोमरं पञ्चभिर्भित्त्वा शक्तिं चिच्छेद पञ्चभिः। तौ जग्मतुर्महीं छिन्नौ सर्पाविव गरुत्मता।
ततोऽस्य विशिखं तीक्ष्णं वधाय वधकाङ्क्षिणः। प्रेषयामास समरे भारद्वाजः प्रतापवान्।
स तस्य कवचं भित्त्वा हृदयञ्चामितौजसः। अभ्यगाद्धरणीं बाणो हंसः पद्मवनं यथा।
पतङ्गं हि ग्रसेच्चाषो यथा क्षुद्रं बुभुक्षितः। तथा द्रोणोऽग्रसच्छूरो धृष्टकेतुं महाहवे। ५०५५
निहते चेदिराजे तु तत्खण्डं पित्र्यमाविशत्। अमर्षवशमापन्नः पुत्रोऽस्य परमास्त्रवित्।
तमपि प्रहसन् द्रोणः शरैर्निन्ये यमक्षयं। महाव्याघ्रो महारण्ये मृगशावं यथा बली।
तेषु प्रक्षीयमाणेषु पाण्डवेयेषु भारत। जरासन्धसुतो वीरः स्वयं द्रोणमुपाद्रवत्।
स तु द्रोणं महाबाहुं शरधाराभिराहवे। अदृश्यमकरोत्तूर्णं जलदो भास्करं यथा।
तस्य तल्लाघवं दृष्ट्वा द्रोणः क्षत्रियमर्दनः। व्यसृजत् सायकांस्तूर्णं शतशोऽथ सहस्रशः। ५०६०
छादयित्वा रणे द्रोणो रथस्थं रथिनाम्वरं। जारासन्धिं जघानाशु मिषतां सर्व्वधन्विनां।
यो यः स्म नीयते तत्र तं द्रोणो ह्यन्तकोपमः। आदत्त सर्व्वभूतानि प्राप्तकाले यथाऽन्तकः।
ततो द्रोणो महाराज नाम विश्राव्य संयुगे। शरैरनेकसाहस्रैः पाण्डवेयान् समावृणोत्।
ते तु नामाङ्किता बाणा द्रोणेनास्ताः शिलाशिताः। नरान्नागान् हयांश्चैव निजघ्नुः शतशो मृधे।
ते वध्यमाना द्रोणेन शक्रेणेव महासुराः। समकम्पन्त पाञ्चाला गावः शीतार्दिता इव। ५०६५
ततो निष्टानको घोरः पाण्डवानामजायत। द्रोणेन वध्यमानेषु सैन्येषु भरतर्षभ।
प्रताप्यमानाः सूर्य्येण हन्यमानाश्च सायकैः। अन्वपद्यन्त पाञ्चालास्तदा संत्रस्तचेतसः।
मोहिता बाणजालेन भारद्वाजेन संयुगे। ऊरुग्राहगृहीतानां पाञ्चालानां महारथाः।
चेदयश्च महाराज सृञ्जयाः काशिकोशलाः। अभ्यद्रवन्त संहृष्टा भारद्वाजं युयुत्सया।
ब्रुवन्तश्च रणे द्रोणं चेदिपाञ्चालसृञ्जयाः। हत द्रोणं हत द्रोणमिति ते द्रोणमभ्ययुः। ५०७०
ते यतन्तो नरव्याघ्राः सर्व्वे शक्त्या महाद्युतिं। निनीषवो युधि द्रोणं यमस्य सदनं प्रति।
यतमानांश्च तान् शूरान् भारद्वाजः शिलीमुखैः। यमाय प्रेषयामास चेदिमुख्यान् विशेषतः।
तेषु प्रक्षीयमाणेषु चेदिमुख्येषु सर्व्वशः। पाञ्चालाः समकम्पन्त द्रोणसायकपीडिताः।
प्राक्रोशन् भीमसेनन्ते धृष्टद्युम्नञ्च भारत। दृष्ट्वा द्रोणस्य कर्म्माणि तथा रूपाणि मारिष।
ब्राह्मणेन तपो नूनं चरितं दुश्चरं महत्। तथा हि युधि संक्रुद्धो दहति क्षत्रियर्षभान्। ५०७५
धर्म्मो युद्धं क्षत्रियस्य ब्राह्मणस्य परन्तपः। तपस्वी कृतविद्यश्च प्रेक्षितेनापि निर्द्दहेत्।
द्रोणास्त्रमग्निं सम्पन्नं प्रविष्टाः क्षत्रियर्षभाः। बहवो दुस्तरं घोरं यत्रादह्यन्त भारत।
यथा बलं यथोत्साहं यथासत्त्वं महाद्युतिः। मोहयन् सर्व्वभूतानि द्रोणो हन्ति बलानि नः।
तेषां तद्वचनं श्रुत्वा क्षत्रधर्म्मा व्यवस्थितः। अर्द्धचन्द्रेण चिच्छेद क्षत्रधर्म्मा महाबलः।

क्रोधसंविग्नमनसो द्रोणस्य सशरं धनुः । सुसंरब्धतरो भूत्वा द्रोणः क्षत्रियमर्द्दनः । ५०८०
अन्यत् कार्म्मुकमादाय भास्वरं वेगवत्तरं । तत्राधाय शरं तीक्ष्णं परानीकविशातनं ।
आकर्णपूर्णमाचार्य्यो बलवानभ्यवासृजत् । स हत्वा क्षत्रधर्म्माणं जगाम धरणीतलं ।
स भिन्नहृदयो वाहात्यपतन्मेदिनीतले । ततः सैन्यान्यकम्पन्त धृष्टद्युम्नसुते हते ।
अथ द्रोणं समारोहच्चेकितानो महाबलः । स द्रोणं दशभिर्व्विद्ध्वा प्रत्यविध्यत् स्तनान्तरे ।
चतुर्भिः सारथिञ्चास्य चतुर्भिश्चतुरो हयान् । तस्याचार्य्यः षोडशभिरविध्यद्दक्षिणं भुजं । ५०८५
ध्वजं षोडशभिर्व्वाणैर्यन्तारञ्चास्य सप्तभिः । तस्य सूते हते तेऽश्वा रथमादाय विद्रुताः ।
समरे शरसंवीता भारद्वाजेन मारिष । चेकितानरथं दृष्ट्वा हताश्वं हतसारथिं ।
पाञ्चालान् पाण्डवांश्चैव महद्भयमथाविशत् । तान् समेतानथो शूरान् चेदिपाञ्चालसृञ्जयान् ।
समन्तात् द्रावयन् द्रोणो बह्वशोभत मारिष । आकर्णपलितः श्यामो वयसाऽशीतिपञ्चकः ।
रणे पर्य्यचरद्द्रोणो वृद्धः षोडशवर्षवत् । अथ द्रोणं महाराज विचरन्तमभीतवत् । ५०९०
वज्रहस्तममन्यन्त शत्रवः शत्रुसूदनं । ततोऽब्रवीन्महाबाहुर्द्रुपदो बुद्धिमान्नृप ।
लुब्धोऽयं क्षत्रियान् हन्ति व्याघ्रः क्षुद्रमृगानिव । कृच्छ्रान् दुर्य्योधनो लोकान् पापः प्राप्स्यति दुर्म्मतिः ।
यस्य लोभाद्विनिहताः समरे क्षत्रियर्षभाः । शतशः शेरते भूमौ निकृत्ता गोवृषा इव ।
रुधिरेण परीताङ्गाः श्वसृगालादनीकृताः । एवमुक्त्वा महाराज द्रुपदोऽक्षौहिणीपतिः ।
पुरस्कृत्य रणे पार्थान् द्रोणमभ्यद्रवद्द्रुतं । ५०९५

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि द्रोणपराक्रमे पञ्चविंशत्यधिकशततोऽध्यायः ॥ १२५ ॥

॥ सञ्जय उवाच ॥ व्यूहेष्वालोड्यमानेषु पाण्डवानां ततस्ततः । सुदूरमन्वयुः पार्थाः पाञ्चालाः सह सोमकैः ।
वर्त्तमाने तथा रौद्रे सङ्ग्रामे लोमहर्षणे । सङ्क्षये जगतस्तीव्रे युगान्त इव भारत ।
द्रोणे युधि पराक्रान्ते नर्दमाने मुहुर्मुहुः । पाञ्चालेषु च क्षीणेषु वध्यमानेषु पाण्डुषु ।
नापश्यच्छरणं किञ्चिद्धर्म्मराजो युधिष्ठिरः । चिन्तयामास राजेन्द्र कथमेतद्भविष्यति ।
ततो वीक्ष्य दिशः सर्व्वाः सव्यसाचिदिदृक्षया । युधिष्ठिरो ददर्शाथ नैव पार्थं न माधवं । ५१००
सोऽपश्यन्नरशार्दूलं वानरर्षभलक्षणं । गाण्डीवस्य च निर्घोषमशृण्वन् व्यथितेन्द्रियः ।
अपश्यन् सात्यकिञ्चापि वृष्णीनां प्रवरं रथं । चिन्तयाऽभिपरीताङ्गो धर्म्मराजो युधिष्ठिरः ।
नाध्यगच्छत्तदा शान्तिं तावपश्यन्नरोत्तमौ । लोकोपक्रोशभीरुत्वात् धर्म्मराजो महामनाः ।
अचिन्तयन्महाबाहुः शैनेयस्य रथम्प्रति । पदवीं प्रेषितश्चैव फाल्गुनस्य मया रणे ।
शैनेयः सात्यकिः सत्योमित्राणामभयङ्करः । तदिदं ह्येकमेवासीत् द्विधा जातं ममाद्य वै । ५१०५
सात्यकिश्च हि मे प्रेष्यः पाण्डवस्य धनञ्जयः । सात्यकिं प्रेषयित्वा तु पाण्डवस्य पदाऽनुगं ।
सात्वतस्यापि कं युद्धे प्रेषयिष्ये पदाऽनुगं । करिष्यामि प्रयत्नेन भ्रातुरन्वेषणं यदि ।
युयुधानमनन्विष्य लोको मां गर्हयिष्यति । भ्रातुरन्वेषणं कृत्वा धर्म्मपुत्रो युधिष्ठिरः ।

परित्यजति वार्ष्णेयं सात्यकिं सत्यविक्रमं । लोकापवादभीरुत्वात् सोऽहं पार्थं वृकोदरं ।
पदवीं प्रेषयिष्यामि माधवस्य महात्मनः । यथैव च मम प्रीतिरर्ज्जुने शत्रुसूदने । ५११०
तथैव वृष्णिवीरेऽपि सात्वते युद्धदुर्म्मदे । अतिभारे नियुक्तश्च मया शैनेयनन्दनः ।
स तु मित्रोपरोधेन गौरवाच्च महाबलः । प्रविष्टो भारतीं सेनां मकरः सागरं यथा ।
असौ हि श्रूयते शब्दः शूराणामनिवर्त्तिनां । मिथः संयुध्यमानानां वृष्णिवीरेण धीमता ।
प्राप्तकालं सुबलवत् निश्चितं बहुधा हि ते । तत्रैव पाण्डवेयस्य भीमसेनस्य धन्विनः ।
गमनं रोचते मह्यं यत्र यातौ महारथौ । न चाप्यसह्यं भीमस्य विद्यते भुवि किञ्चन । ५११५
शक्तो ह्येष रणे यत्तः पृथिव्यां सर्व्वधन्विनां । स्वबाहुबलमास्थाय प्रतिव्यूहितमञ्जसा ।
यस्य बाहुबलं सर्व्वे समाश्रित्य महात्मनः । वनवासान्निवृत्ताः स्म न च युद्धेषु निर्जिताः ।
इतो गते भीमसेने सात्वतं प्रति पाण्डवे । सनाथौ भवितारौ हि युधि सात्वतफाल्गुनौ ।
कामन्त्वशोचनीयौ तौ रणे सात्वतफाल्गुनौ । रक्षितौ वासुदेवेन स्वयमस्त्रविशारदौ ।
अवश्यन्तु मया कार्य्यमात्मनः शोकनाशनं । तस्माद्भीमं नियोक्ष्यामि सात्वतस्य पदानुगं । ५१२०
ततः प्रतिकृतं मन्ये विधानं सात्यकिम्प्रति । एवं निश्चित्य मनसा धर्म्मपुत्त्रो युधिष्ठिरः ।
यन्तारमब्रवीद्राजा भीमं प्रति नयस्व मां । धर्म्मराजवचः श्रुत्वा सारथिर्हयकोविदः ।
रथं हेमपरिष्कारं भीमान्तिकमुपानयत् । भीमसेनमनुप्राप्य प्राप्तकालमनुस्मरन् ।
कश्मलं प्राविशद्राजा बहु तत्र समादिशत् । स कश्मलसमाविष्टो भीममाहूय पार्थिवः ।
अब्रवीद्वचनं राजन् कुन्तीपुत्त्रो युधिष्ठिरः । यः स देवान् सगन्धर्व्वान् दैत्यांश्चैकरथोऽजयत् । ५१२५
तस्य लक्ष्म न पश्यामि भीमसेनानुजस्य ते । ततोऽब्रवीद्धर्म्मराजं भीमसेनस्तथागतं ।
नैवाद्राक्षं नचाश्रौषं तव कश्मलमीदृशं । पुराऽतिदुःखदीर्णानां भवान् गतिरभूद्धि नः ।
उत्तिष्ठोत्तिष्ठ राजेन्द्र शाधि किं करवाणि ते । न तु कार्य्यमसाध्यं वा विद्यते मम मानद ।
आज्ञापय कुरुश्रेष्ठ मा च शोके मनः कृथाः । तमब्रवीदश्रुपूर्णः कृष्णसर्प इव श्वसन् ।
भीमसेनमिदं वाक्यं प्रम्लानवदनो नृपः । यथा शङ्खस्य निर्घोषः पाञ्चजन्यस्य श्रूयते । ५१३०
पूरितो वासुदेवेन संरब्धेन यशस्विना । नूनमद्य हतः शेते तव भ्राता धनञ्जयः ।
तस्मिन् विनिहते नूनं युध्यतेऽसौ जनार्द्दनः । यस्य सत्त्ववतो वीर्य्यमुपजीवन्ति पाण्डवाः ।
यं भयेष्वभिगच्छन्ति सहस्राक्षमिवामराः । स शूरः सैन्धवप्रेप्सुरन्वयाद्भारतीं चमूं ।
तस्य वै गमनं विद्मो भीम नावर्त्तनं पुनः । श्यामो युवा गुडाकेशो दर्शनीयो महारथः ।
व्यूढोरस्को महाबाहुर्म्मत्तद्विरदविक्रमः । चकोरनेत्रस्ताम्राक्षो द्विषतां भयवर्द्धनः । ५१३५
तदिदं मम भद्रन्ते शोकस्थानमरिन्दम । अर्ज्जुनार्थे महाबाहो सात्वतस्य च कारणात् ।
वर्द्धते हविषेवाग्निरिध्यमानः पुनः पुनः । तस्य लक्ष्म न पश्यामि तेन विन्दामि कश्मलं ।
तस्मिन् कृष्णो हते नूनं युध्यते युद्धकोविदः । तं विद्धि पुरुषव्याघ्रं सात्वतञ्च महारथं ।

स तं महारथं पश्चादनुयातस्तवानुजं। तमपश्यन्महाबाहुमहं विन्दामि कश्मलं।
स तत्र गच्छ कौन्तेय यत्र यातो धनञ्जयः। सात्यकिश्च महावीर्य्यः कर्त्तव्यं यदि मन्यसे। ५२४०
वचनं मम धर्म्मज्ञ भ्राता ज्येष्ठो भवामि ते। न तेऽर्ज्जुनस्तथा ज्ञेयो ज्ञातव्यः सात्यकिर्यथा।
चिकीर्षुर्मत्प्रियं पार्थ स यातः सव्यसाचिनः। पदवीं दुर्गमां घोरामगम्यामकृतात्मभिः।
दृष्ट्वा कुशलिनौ कृष्णौ सात्वतञ्चैव सात्यकिं। सम्विदञ्चैव कुर्य्यास्त्वं सिंहनादेन पाण्डव।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि युधिष्ठिरचिन्तायां षड्विंशत्यधिकशततमोऽध्यायः॥ १२६ ॥
॥ भीम उवाच ॥ ब्रह्मेशानेन्द्रवरुणानवहद्यः पुरा रथः। तमास्थाय गतौ कृष्णौ न तयोर्व्विद्यते भयं।
आज्ञान्तु शिरसा बिभ्रदेष गच्छामि मा शुचः। समेत्य तान्नरव्याघ्रान् तव दास्यामि सम्विदं। ५२४५
॥ सञ्जय उवाच ॥ एतावदुक्त्वा प्रययौ परिदाय युधिष्ठिरं। धृष्टद्युम्नाय बलवान् सुहृद्भ्यश्च पुनःपुनः
धृष्टद्युम्नञ्चेदमाह भीमसेनो महाबलः। विदितन्ते महाबाहो यथा द्रोणो महारथः।
ग्रहणे धर्म्मराजस्य सर्व्वोपायेन वर्त्तते। न च मे गमने कृत्यं तादृक् पार्षत विद्यते।
यादृशं रक्षणे राज्ञः कार्य्यमात्ययिकं हि नः। एवमुक्तोऽस्मि पार्थेन प्रतिवक्तुञ्च नोत्सहे।
प्रयास्ये तत्र यत्रासौ मुमूर्षुः सैन्धवः स्थितः। धर्म्मराजस्य वचने स्थातव्यमविशङ्कया। ५२५०
यास्यामि पदवीं भ्रातुः सात्वतस्य च धीमतः। सोऽद्य यत्तो रणे पार्थं परिरक्ष युधिष्ठिरं।
एतद्धि सर्व्वकार्य्याणां परमं कृत्यमाहवे। तमब्रवीन्महाराज धृष्टद्युम्नो वृकोदरं।
ईप्सितं ते करिष्यामि गच्छ पार्थाविचारयन्। नाहत्वा समरे द्रोणो धृष्टद्युम्नं कथञ्चन।
निग्रहं धर्म्मराजस्य प्रकरिष्यति संयुगे। ततो निक्षिप्य राजानं धृष्टद्युम्ने च पाण्डवं।
अभिवाद्य गुरुं ज्येष्ठं प्रययौ येन फाल्गुनः। परिष्वक्तश्च कौन्तेयो धर्म्मराजेन भारत। ५२५५
आघ्रातश्च तथा मूर्द्ध्नि श्राविताश्चाशिषः शुभाः। कृत्वा प्रदक्षिणं विप्रानर्च्चितांस्तुष्टमानसान्।
आलभ्य मङ्गलान्यष्टौ पीत्वा कैलातकं मधु। द्विगुणद्रविणो वीरो मदरक्तान्तलोचनः।
विप्रैः कृतस्वस्त्ययनो विजयोत्पादसूचितः। पश्यन्नेवात्मनो बुद्धिं विजयानन्दकारिणीं।
अनुलोमानिलैश्चाशु प्रदर्शितजयो जयः। भीमसेनो महाबाहुः कवची शुभकुण्डली।
साङ्गदः सतलत्राणः सुरथो रथिनाम्वरः। तस्य कार्ष्णायसं वर्म्म हेमचित्रं महर्द्धिमत् ५२६०
विबभौ सर्व्वतः श्लिष्टं सविद्युत्तोयदोपमं। पीतरक्तासितसितैर्व्वासोभिश्च सुवेष्टितः।
कण्ठत्राणेन च बभौ सेन्द्रायुध इवाम्बुदः। प्रयाते भीमसेने तु तव सैन्यं युयुत्सया।
पाञ्चजन्यरवो घोरः पुनरासीद्विशाम्पते। तं श्रुत्वा निनदं घोरं त्रैलोक्यत्रासनं महत्।
पुनर्भीमं महाबाहुं धर्म्मपुत्रोऽभ्यभाषत। एष वृष्णिप्रवीरेण ध्मातः सलिलजो भृशं।
पृथिवीञ्चान्तरीक्षञ्च विनादयति शङ्खराट्। नूनं व्यसनमापन्ने सुमहत् सव्यसाचिनि। ५२६५
कुरुभिर्युध्यते सार्द्धं सर्व्वैश्चक्रगदाधरः। नूनमार्य्या महत्कुन्ती पापमद्य निदर्शनं।
द्रौपदी च सुभद्रा च पश्यन्ति सह बन्धुभिः। स भीम त्वरया युक्तो याहि यत्र धनञ्जयः।

मुह्यतीव हि मे सर्व्वं धनञ्जयविचिन्तया । दिशश्च प्रदिशः पार्थं सात्वतस्य च कारणात् ।
गच्छगच्छेति गुरुणा सोऽनुज्ञातो वृकोदरः । ततः पाण्डुसुतो राजन् भीमसेनः प्रतापवान् ।
बद्धगोधाङ्गुलित्राणः प्रगृहीतशरासनः । ज्येष्ठेन प्रहितो भ्रात्रा भ्राता भ्रातुः प्रियङ्करः । ५१७०
आहत्य दुन्दुभीन् भीमः शङ्खं प्रध्माप्य चासकृत् । विनद्य सिंहनादञ्च कृत्वा ज्याशब्दमेव च ।
तेन शब्देन वीराणां पातयित्वा मनांस्युत । दर्शयन् घोरमात्मानममित्रान् सहसाऽभ्ययात् ।
तमुह्यजवना दान्ता विकुर्व्वन्तो हयोत्तमाः । विशोकेनाभिसंयत्ता मनोमारुतरंहसः ।
आरुजन् विरुजन् पार्थो ज्यां विकर्षंश्च पाणिना । सोऽपकर्षन् विकर्षंश्च सेनाग्रं समलोडयत् ।
तं प्रयान्तं महाबाहुं पाञ्चालाः सहसोमकाः । पृष्ठतोऽनुययुः शूरा मघवन्तमिवामराः । ५१७५
तं समेत्य महाराज सोदर्य्याः पर्य्यवारयन् । दुःशलश्चित्रसेनश्च कुण्डभेदी विविंशतिः ।
दुर्मुखो दुःसहश्चैव विकर्णश्च शलस्तथा । विन्दानुविन्दौ सुमुखो दीर्घबाहुः सुदर्शनः ।
वृन्दारकः सुहस्तश्च सुषेणो दीर्घलोचनः । अभयो रौद्रकर्म्मा च सुवर्म्मा दुर्व्विमोचनः ।
शोभन्तो रथिनां श्रेष्ठाः सहसैन्यपदानुगाः । संयत्ताः समरे वीरा भीमसेनमुपाद्रवन् ।
तैः समन्ताद्वृतः शूरः समरेषु महारथः । तान् समीक्ष्य तु कौन्तेयो भीमसेनः पराक्रमी । ५१८०
अभ्यवर्त्तत वेगेन सिंहः क्षुद्रमृगानिव । ते महास्त्राणि दिव्यानि तत्र वीरा अदर्शयन् ।
छादयन्तः शरैर्भीमं मेघाः सूर्य्यमिवोदितं । स तानतीत्य वेगेन द्रोणानीकमुपाद्रवत् ।
अग्रतश्च गजानीकं शरवर्षैरवाकिरत् । सोऽचिरेणैव कालेन तद्गजानीकमाशुगैः ।
दिशः सर्व्वाः समभ्यस्य व्यधमत् पवनात्मजः । त्रासिताः शरभस्येव गर्ज्जितेन वने मृगाः ।
प्राद्रवन् द्विरदाः सर्व्वे नदन्तो भैरवान् रवान् । पुनश्चातीत्य वेगेन द्रोणानीकमुपाद्रवत् । ५१८५
तमवारयदाचार्य्यो वेलोद्वृत्तमिवार्णवं । ललाटे ताडयच्चैनं नाराचेन स्मयन्निव ।
ऊर्द्ध्वरश्मिरिवादित्यो विबभौ तत्र पाण्डवः । स मन्यमानस्त्वाचार्य्यो ममायं फाल्गुनो यथा ।
भीमः करिष्यते पूजामित्युवाच वृकोदरं । भीमसेन न ते शक्यं प्रवेष्टुमरिवाहिनीं ।
मामनिर्ज्जित्य समरे शत्रुमध्ये महाबल । यदि ते सानुजः कृष्णः प्रविष्टोऽनुमते मम ।
अनीकं न तु शक्यं मे प्रवेष्टुमिह वै त्वया । अथ भीमस्तु तच्छ्रुत्वा गुरोर्व्वाक्यमपेतभीः । ५१९०
क्रुद्धः प्रोवाच वै द्रोणं रक्तताम्रेक्षणस्त्वरन् । तवार्ज्जुनो नानुमते ब्रह्मबन्धो रणाजिरं ।
प्रविष्टः स हि दुर्द्धर्षः शक्रस्यापि विशेद्बलं । तेन वै परमां पूजां कुर्व्वता मानितो ह्यसि ।
नार्ज्जुनोऽहं घृणी द्रोण भीमसेनोऽस्मि ते रिपुः । पिता नस्त्वं गुरुर्बन्धुस्तथा पुत्रा हि ते वयं ।
इति मन्यामहे सर्व्वे भवन्तं प्रणताः स्थिताः । अद्य तद्विपरीतं ते वदतोऽस्मासु दृश्यते ।
यदि त्वं शत्रुमात्मानं मन्यसे तत्तथास्त्विह । एष ते सदृशं शत्रोः कर्म्म भीमः करोम्यहं । ५१९५
अथोद्भ्राम्य गदां भीमः कालदण्डमिवान्तकः । द्रोणाय व्यसृजद्राजन् स रथादवपुप्लुवे ।
साश्वसूतध्वजं यानं द्रोणस्यापोथयद्गदा । प्रामृद्नाच्च बहून् योधान् वायुर्वृक्षानिवौजसा ।

ते पुनः परिवव्रुस्ते तव पुत्रा रथोत्तमं। अन्वगात्तु रथमास्थाय द्रोणः प्रहरतां वरः।
व्यूहद्वारं समासाद्य कुरूंश्च समवस्थितः। ततः क्रुद्धो महाराज भीमसेनः पराक्रमी।
अयतः स्यन्दनानीकं शरवर्षैरवाकिरत्। ते वध्यमानाः समरे तव पुत्रा महारथाः। १२००
भीमं भीमबला युद्धे योधयन्ति जयैषिणः। ततो दुःशासनः क्रुद्धो रथशक्तिं समाक्षिपत्।
सर्व्वपारशवीं तीक्ष्णां जिघांसुः पाण्डुनन्दनं। आपतन्तीं महाशक्तिं तव पुत्रप्रचोदितां।
द्विधा चिच्छेद तां भीमस्तदद्भुतमिवाभवत्। अथान्यैर्निशितैर्बाणैः संक्रुद्धः कुण्डभेदिनं।
सुषेणं दीर्घनेत्रञ्च त्रिभिस्त्रीनवधीद्बली। ततो वृन्दारकं वीरं कुरूणां कीर्त्तिवर्द्धनं।
पुत्राणां तव वीराणां युध्यतामवधीत् पुनः। अभयं रौद्रकर्म्माणं दुर्व्विमोचनमेव च। १२०५
त्रिभिस्त्रीनवधीद्भीमः पुनरेव सुतांस्तव। वध्यमाना महाराज पुत्रास्तव बलीयसा।
भीमं प्रहरतां श्रेष्ठं समन्तात् पर्य्यवारयन्। ते शरैर्भीमकर्म्माणं ववृषुः पाण्डवं युधि।
मेघा इव तपापाये धाराभिर्धरणीधरं। स तद्बाणमयं वर्षमश्मवर्षमिवाचलः।
प्रतीच्छन् पाण्डुदायादो न प्राव्यथत शत्रुहा। विन्दानुविन्दौ सहितौ सुवर्म्माणञ्च ते सुतं।
प्रहसन्नेव कौन्तेयः शरैर्निन्ये यमक्षयं। ततः सुदर्शनं वीरं पुत्रन्ते भरतर्षभ। १२१०
विव्याध समरे तूर्णं स पपात ममार च। सोऽचिरेणैव कालेन तद्रथानीकमाशुगैः।
दिशः सर्व्वाः समालोक्य व्यधमत् पाण्डुनन्दनः। ततो वै रथघोषेण गर्ज्जितेन मृगा इव।
भज्यमानाश्च समरे तव पुत्रा विशाम्पते। प्राद्रवन् सहसा सर्व्वे भीमसेनभयार्द्दिताः।
अनुयायाच्च कौन्तेयः पुत्राणां ते महद्बलं। विव्याध समरे राजन् कौरवेयान् समन्ततः।
वध्यमाना महाराज भीमसेनेन तावकाः। त्यक्त्वा भीमं रणाज्जग्मुश्चोदयन्तो हयोत्तमान्। १२१५
तांस्तु निर्ज्जित्य समरे भीमसेनो महाबलः। सिंहनादरवं चक्रे बाहुशब्दञ्च पाण्डवः।
तलशब्दञ्च सुमहत् कृत्वा भीमो महाबलः। भीषयित्वा रथानीकं हत्वा योधान् वरान् वरान्।
व्यतीत्य रथिनश्चापि द्रोणानीकमुपाद्रवत्।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि भीमप्रवेशे भीमपराक्रमे सप्तविंशत्यधिकशततमोऽध्यायः॥ १२७॥

॥ सञ्जय उवाच ॥ समुत्तीर्णं रथानीकं पाण्डवं विहस्य वै। दिधारयिषुराचार्य्यः शरवर्षैरवाकिरत्।
पिबन्निव शरौघांस्तान् द्रोणचापपरिच्युतान्। सोऽभ्यद्रवत सोदर्य्यान्मायया मोहयन् बलं। १२२०
तं मृधे वेगमास्थाय नृपाः परमधन्विनः। चोदितास्तव पुत्रैश्च सर्व्वतः पर्य्यवारयन्।
स तैस्तु संवृतो भीमः प्रहसन्निव भारत। उदयच्छन् स गदां तेभ्यः सुघोरां सिंहवन्नदन्।
अवासृजच्च वेगेन शत्रुपक्षविनाशिनीं। इन्द्राशनिरिवेन्द्रेण प्रविद्धा संहतात्मना।
प्रामथ्नात् सा महाराज सैनिकांस्तव संयुगे। घोषेण महता राजन् पूरयन्तीव मेदिनीं।
ज्वलन्ती तेजसा भीमा त्रासयामास ते सुतान्। तां पतन्तीं महावेगां दृष्ट्वा तेजोऽभिसंवृतां। १२२५
प्राद्रवंस्तावकाः सर्व्वे नदन्तो भैरवान् रवान्। तञ्च शब्दमसह्यं वै तस्याः संवीक्ष्य मारिष।

प्रापतन्मनुजास्तत्र रथेभ्यो रथिनस्तदा । ते हन्यमाना भीमेन गदाहस्तेन तावकाः ।
प्राद्रवन्त रणे भीता व्याघ्रघ्राता मृगा इव । स तान् विद्राव्य कौन्तेयः सङ्ख्येऽमित्रान् दुरासदान् ।
सुपर्ण इव वेगेन पक्षिराडत्यगाच्चमूं । तथा तु विप्रकुर्व्वाणं रथयूथपयूथपं ।
भारद्वाजो महाराज भीमसेनं समभ्ययात् । भीमन्तु समरे द्रोणो वारयित्वा शरोर्म्मिभिः । ५२२०
अकरोत् सहसा नादं पाण्डूनां भयमादधत् । तद्युद्धमासीत् सुमहद्घोरं देवासुरोपमं ।
द्रोणस्य च महाराज भीमस्य च महात्मनः । यदा तु विशिखैस्तीक्ष्णैर्द्रोणचापविनिःसृतैः ।
वध्यन्ते समरे वीराः शतशोऽथ सहस्रशः । ततो रथादवप्लुत्य वेगमास्थाय पाण्डवः ।
निमील्य नयने राजन् पदातिर्द्रोणमभ्ययात् । यथा हि गोवृषो वर्षं प्रतिगृह्णाति लीलया ।
तथा भीमो नरव्याघ्रः शरवर्षं समग्रहीत् । स वध्यमानः समरे रथं द्रोणस्य मारिष । ५२२५
ईषायां पाणिना गृह्य प्रचिक्षेप महाबलः । द्रोणस्तु सत्वरो राजन् क्षिप्तो भीमेन संयुगे ।
रथमन्यं समारुह्य व्यूहद्वारमयाययौ । तस्मिन् क्षणे तस्य यन्ता तूर्णमश्वानचोदयत् ।
भीमसेनस्य कौरव्य तदद्भुतमिवाभवत् । ततः स्वरथमास्थाय भीमसेनो महाबलः ।
अभ्यवर्त्तत वेगेन तव पुत्रस्य वाहिनीं । स मृद्नन् क्षत्रियानाजौ वातो वृक्षानिवोद्धतः ।
अगच्छद्दारयन् सेनां सिन्धुवेगो नगानिव । भोजानीकं समासाद्य हार्द्दिक्येनाभिरक्षितं । ५२३०
प्रमथ्य बहुधा राजन् भीमसेनः समभ्ययात् । सन्त्रासयन्ननीकानि तलशब्देन मारिष ।
अजयत् सर्व्वसैन्यानि शार्दूल इव गोवृषान् । भोजानीकमतिक्रम्य काम्बोजानाञ्च वाहिनीं ।
तथा म्लेच्छगणांश्चान्यान् बहून् युद्धविशारदान् । सात्यकिञ्चापि संप्रेक्ष्य युध्यमानं नरर्षभ ।
रथेन यत्तः कौन्तेयो वेगेन प्रययौ तदा । भीमसेनो महाराज द्रष्टुकामो धनञ्जयं ।
अतीत्य समरे योधांस्तावकान् पाण्डुनन्दनः । सोऽपश्यदर्ज्जुनं तत्र युध्यमानं महारथं । ५२३५
सैन्धवस्य वधार्थं हि पराक्रान्तं पराक्रमी । तं दृष्ट्वा पुरुषव्याघ्रश्चुक्रोश महतो रवान् ।
प्रावृट्काले महाराज नदन्निव बलाहकः । तं तस्य निनदं घोरं पार्थः शुश्राव नर्द्दतः ।
वासुदेवश्च कौरव्य भीमसेनस्य संयुगे । तौ श्रुत्वा युगपद्वीरौ निनदं तस्य शुष्मिणः ।
पुनः पुनः प्रणदतो दिदृक्षन्तौ वृकोदरं । ततः पार्थो महानादं मुञ्चन्वै माधवश्च ह ।
अभ्ययातां महाराज नदन्तौ गोवृषाविव । भीमसेनरवं श्रुत्वा फाल्गुनस्य च धन्विनः । ५२४०
अप्रीयत महाराज धर्म्मपुत्रो युधिष्ठिरः । विशोकश्चाभवद्राजा श्रुत्वा तं निनदं तयोः ।
धनञ्जयस्य च रणे जयमाशास्तवान्विभुः । तथा तु नर्द्दमाने वै भीमसेने मदोत्कटे ।
स्मितं कृत्वा महाबाहुर्धर्म्मपुत्रो युधिष्ठिरः । हृद्गतं मनसा प्राह ध्यात्वा धर्म्मभृतां वरः ।
दत्ता भीम त्वया सम्वित् कृतं गुरुवचस्तथा । न हि तेषां जयो युद्धे येषां द्वेष्टासि पाण्डव ।
दिष्ट्या जीवति सङ्ग्रामे सव्यसाची धनञ्जयः । दिष्ट्या च कुशली वीरः सात्यकिः सत्यविक्रमः । ५२४५
दिष्ट्या शृणोमि गर्ज्जन्तौ वासुदेवधनञ्जयौ । येन शक्रं रणे जित्वा तर्पितो हव्यवाहनः ।

स हन्ता द्विषतां सङ्ख्ये दिष्ट्या जीवति फाल्गुनः । यस्य बाहुबलं सर्व्वे वयमाश्रित्य जीविताः ।
स हन्ता रिपुसैन्यानां दिष्ट्या जीवति फाल्गुनः । निवातकवचा येन देवैरपि सुदुर्जयाः ।
निर्ज्जिता धनुषैकेन दिष्ट्या पार्थः स जीवति । कौरवान् सहितान् सर्व्वान् गोग्रहार्थे समागतान् ।
योऽजयन्मत्स्यनगरे दिष्ट्या पार्थः स जीवति । कालकेयसहस्राणि चतुर्द्दश महारणे । ५२६०
योऽवधीद्भुजवीर्य्येण दिष्ट्या पार्थः स जीवति । गन्धर्व्वराजं बलिनं दुर्य्योधनकृतेन वै ।
जितवान् योऽस्त्रवीर्य्येण दिष्ट्या पार्थः स जीवति । किरीटमाली बलवान् श्वेताश्वः कृष्णसारथिः ।
मम प्रियश्च सततं दिष्ट्या जीवति फाल्गुनः । पुत्त्रशोकाभिसन्तप्तश्चिकीर्षन् कर्म्म दुष्करं ।
जयद्रथवधान्वेषी प्रतिज्ञां कृतवान् हि यः । कच्चित् स सैन्धवं सङ्ख्ये हनिष्यति धनञ्जयः ।
कच्चित्तीर्णप्रतिज्ञं हि वासुदेवेन रक्षितं । अनस्तमित आदित्ये समेष्याम्यहमर्ज्जुनं । ५२६५
कच्चित् सैन्धवको राजा दुर्य्योधनहिते रतः । नन्दयिष्यन्नमित्राणि फाल्गुनेन निपातितः ।
कच्चित् दुर्य्योधनो राजा फाल्गुनेन निपातितं । दृष्ट्वा सैन्धवकं सङ्ख्ये शममस्मासु धास्यति ।
दृष्ट्वा विनिहतान् भ्रातॄन् भीमसेनेन संयुगे । कच्चित् दुर्य्योधनो मन्दः शममस्मासु धास्यति ।
दृष्ट्वा चान्यान् महायोधान् पतितान् धरणीतले । कच्चित् दुर्य्योधनो मन्दः पश्चात्तापं करिष्यति ।
कच्चिद्भीष्मेण नो वैरं शममेकेन यास्यति । शेषस्य रक्षणार्थञ्च सन्धास्यति सुयोधनः । ५२७०
एवं बहुविधं तस्य राज्ञश्चिन्तयतस्तदा । कृपयाऽभिपरीतस्य घोरं युद्धमवर्त्तत ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि युधिष्ठिरहर्षेऽष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥
॥ धृतराष्ट्र उवाच ॥ तथा तु नर्द्दमानं तं भीमसेनं महाबलं । मेघस्तनितनिर्घोषं के वीराः पर्य्यवारयन् ।
न हि पश्याम्यहं तं वै त्रिषु लोकेषु सञ्जय । क्रुद्धस्य भीमसेनस्य यस्तिष्ठेदग्रतो रणे ।
गदामुद्यच्छमानस्य कालस्येव महामृधे । न हि पश्याम्यहं तात यस्तिष्ठेत रणाजिरे ।
रथं रथेन यो हन्यात् कुञ्जरं कुञ्जरेण च । कस्तस्य पुरतः स्थाता साक्षादपि शतक्रतुः । ५२७५
रणे क्रुद्धस्य भीमस्य मम पुत्त्रान् जिघांसतः । दुर्य्योधनहिते युक्ताः समतिष्ठन्त केऽग्रतः ।
भीमसेनदवाग्नेस्तु मम पुत्त्रतृणोपमान् । प्रधक्ष्यतो रणमुखे केऽतिष्ठन्नग्रतो नराः ।
काल्यमानान् हि मे पुत्त्रान् भीमेनावेक्ष्य संयुगे । कालेनेव प्रजाः सर्व्वाः के भीमं पर्य्यवारयन् ।
न मेऽर्ज्जुनाद्भयं तादृक् कृष्णाच्चापि च सात्यकात् । हुतभुग्जन्मनो नैव यादृग्भीमाद्भयं मम ।
भीमवह्नेः प्रदीप्तस्य मम पुत्त्रान् दिधक्षतः । के शूराः पर्य्यवर्त्तन्त तन्ममाचक्ष्व सञ्जय । ५२८०
॥ सञ्जय उवाच ॥ तथा तु नर्द्दमानं तं भीमसेनं महारथं । तुमुलेनैव शब्देन कर्णोऽप्यभ्यपतद्बली ।
व्याक्षिपन् बलवच्चापमतिमात्रममर्षणः । कर्णस्तु युद्धमाकाङ्क्षन् दर्शयिष्यन् बलं बली ।
रुरोध मार्गं भीमस्य वातस्येव महीरुहः । भीमोऽपि दृष्ट्वा सावेगं पुरो वैकर्त्तनं स्थितं ।
चुकोप बलवद्वीरश्चिक्षेपास्य शिलाशितान् । तान् प्रत्यगृह्णात् कर्णोऽपि प्रतीपं प्रेषयच्छरान् ।
ततस्तु सर्व्वयोधानां यततां प्रेक्षतां तदा । प्रावेपन्निव गात्राणि कर्णभीमसमागमे । ५२८५

रथिनां सादिनाञ्चैव तयोः श्रुत्वा तलस्वनं । भीमसेनस्य निनदं घोरं श्रुत्वा रणाजिरे ।
खञ्च भूमिञ्च संरुद्धां मेनिरे क्षत्रियर्षभाः । पुनर्घोरेण नादेन पाण्डवस्य महात्मनः ।
समरे सर्व्वयोधानां धनूंष्यभ्यपतन् क्षितौ । शस्त्राणि च सर्व्वाणि सङ्कस्रूनं प्रसुस्रुवुः ।
वाहनानि महाराज बभूवुर्व्विमनांसि च । प्रादुरासन्निमित्तानि घोराणि च बहूनि च ।
गृध्रकङ्कबलैश्चासीदन्तरीक्षं समावृतं । तस्मिंस्तु तुमुले राजन् भीमकर्णसमागमे । ५२९०
ततः कर्णस्तु विंशत्या शराणां भीममार्द्दयत् । विव्याध चास्य त्वरितः सूतं पञ्चभिराशुगैः ।
प्रहस्य भीमसेनस्तु कर्णम्प्रत्याद्रवद्रणे । सायकानां चतुःषष्ट्या क्षिप्रकारी महाबलः ।
तस्य कर्णो महाराज सायकांश्चतुरोऽक्षिपत् । असंप्राप्तांस्तु तान् भीमः सायकैर्नतपर्व्वभिः ।
चिच्छेद बहुधा राजन् दर्शयन् पाणिलाघवं । तं कर्णश्छादयामास शरव्रातैरनेकशः ।
सञ्छाद्यमानः कर्णेन बहुधा पाण्डुनन्दनः । चिच्छेद चापं कर्णस्य मुष्टिदेशे महारथः । ५२९५
विव्याध चैनं दशभिः सायकैर्नतपर्व्वभिः । अथान्यद्धनुरादाय सज्यं कृत्वा च सूतजः ।
विव्याध समरे भीमं भीमकर्म्मा महारथः । तस्य भीमो भृशं क्रुद्धस्त्रीन्शरान्नतपर्व्वणः ।
निचखानोरसि क्रुद्धः सूतपुत्रस्य वेगतः । तैः कर्णोऽराजत शरैरुरोमध्यगतैस्तदा ।
महीधर इवोदग्रस्त्रिशृङ्गो भरतर्षभ । सुस्राव चास्य रुधिरं विद्धस्य परमेषुभिः ।
धातुप्रस्यन्दिनः शैलाद्यथा गैरिकधातवः । किञ्चिद्विचलितः कर्णः सुप्रहाराभिपीडितः । ५३००
सशायकं धनुः कृत्वा भीमं विव्याध मारिष । चिक्षेप च पुनर्व्वाणान् शतशोऽथ सहस्रशः ।
स छाद्यमानः सहसा कर्णेन दृढधन्विना । धनुर्ज्यामच्छिनत्तूर्णमुत्स्मयन् पाण्डुनन्दनः ।
सारथिञ्चास्य भल्लेन प्राहिणोद्यमसादनं । वाहांश्च चतुरः सङ्ख्ये व्यसूंश्चक्रे महारथः ।
हताश्वात्तु रथात्तूर्णमवप्लुत्य विशाम्पते । स्यन्दनं वृषसेनस्य समारोहन्महारथः ।
निर्जित्य तु रणे कर्णं भीमसेनः प्रतापवान् । ननाद च महानादं पर्ज्जन्यनिनदोपमं । ५३०५
तस्य तन्निनदं श्रुत्वा प्रहृष्टोऽभूद्युधिष्ठिरः । कर्णन्तु निर्जितं मत्वा भीमसेनेन भारत ।
समन्ताच्छङ्खनिनदं पाण्डुसेनाऽकरोत्तदा । शत्रुसेनाध्वनिं श्रुत्वा तावका ह्यनदन् भृशं ।
गाण्डीवं प्राक्षिपत् पार्थः कृष्णोऽप्यब्जमवादयत् । तमन्तर्द्धाय निनदं ध्वनिर्भीमस्य नर्द्दतः ।
अश्रूयत महाराज सर्व्वसैन्येषु मारिष । ततो व्यायच्छतामस्त्रैः पृथक् पृथगजिह्मगः ।
मृदुपूर्व्वञ्च राधेयो दृढपूर्व्वञ्च पाण्डवः । ५३१०

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि कर्णपराजये एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

॥ सञ्जय उवाच ॥ तस्मिन् विलुलिते सैन्ये सैन्धवायार्ज्जुने गते । सात्वते भीमसेने च पुत्रस्ते द्रोणमभ्ययात् ।
त्वरन्नेकरथेनैव बहुकृत्यं विचिन्तयन् । स रथस्तव पुत्रस्य त्वरया परया युतः ।
तूर्णमभ्यद्रवत् द्रोणं मनोमारुतवेगवान् । उवाच चैनं पुत्रस्ते संरम्भाद्रक्तलोचनः ।
अर्ज्जुनो भीमसेनश्च सात्यकिश्चापराजितः । विजित्य सर्व्वसैन्यानि सुमहान्ति महारथाः ।

सम्प्राप्ताः सिन्धुराजस्य समीपमरिकर्षण । व्यायच्छन्ति च तत्रापि सर्व्व एवापराजिताः । ५३१५
विजित्य सर्व्वसैन्यानि सुमहान्ति महारथाः । कथं सात्यकिभीमाभ्यां व्यतिक्रान्तोऽसि मानद ।
आश्चर्य्यभूतं लोकेऽस्मिन् समुद्रस्येव शोषणं । निर्जयस्तव विप्राग्र्य सात्वतेनार्ज्जुनेन च ।
तथैव भीमसेनेन लोकः संवदते भृशं । कथं द्रोणो जितः सङ्ख्ये धनुर्व्वेदस्य पारगः ।
इत्येवं ब्रुवते योधा अश्रद्धेयमिदं तव । नाश एव तु मे नूनं मन्दभाग्यस्य संयुगे ।
यत्र त्वां पुरुषव्याघ्र व्यतिक्रान्तास्त्रयो रथाः । एवं गते तु कृत्येऽस्मिन् ब्रूहि यत्ते विवक्षितं । ५३२०
यद्गतं गतमेवेह शेषं चिन्तय मानद । यत् कृत्यं सिन्धुराजस्य प्राप्तकालमनन्तरं ।
तद्ब्रवीतु भवान् क्षिप्रं साधु तत् संविधीयतां ।
॥ द्रोण उवाच ॥ चिन्त्यं बहु महाराज यत्कृत्यं तच्च मे शृणु । त्रयो हि समतिक्रान्ताः पाण्डवानां महारथाः ।
यावत्तेषां भयं पश्चात्तावदेषां पुरःसरं । तद्गरीयस्तरं मन्ये यत्र कृष्णधनञ्जयौ ।
सा पुरस्ताच्च पश्चाच्च गृहीता भारती चमूः । तत्र कृत्यमहं मन्ये सैन्धवस्याभिरक्षणं । ५३२५
स नो रक्ष्यतमस्तात क्रुद्धाद्भीतो धनञ्जयात् । गतौ हि सैन्धवं वीरौ युयुधानवृकोदरौ ।
सम्प्राप्तं तदिदं द्यूतं यत्तच्छकुनिबुद्धिजं । न सभायां जयो वृत्तो नापि तत्र पराजयः ।
इह नो ग्लहमानानामद्य तावज्जयाजयौ । यान्स्म तान् ग्लहते घोरान् शकुनिः कुरुसंसदि ।
अक्षान् स मन्यमानः प्राक् शरास्ते हि दुरासदाः । यत्रऽस्य निहिता घोराः शरा युष्मत्तनुच्छिदः ।
यत्र ते बहवस्तात कुरवः पर्य्यवस्थिताः । सेनां दुरोदरं विद्धि शरानक्षान् विशाम्पते । ५३३०
ग्लहञ्च सैन्धवं राजंस्तत्र द्यूतस्य निश्चयः । सैन्धवे हि महद्द्यूतं समासक्तं परैः सह ।
अत्र सर्व्वे महाराज त्यक्त्वा जीवितमात्मनः । सैन्धवस्य रणे रक्षां विधिवत् कर्त्तुमर्हथ ।
तत्र नो ग्लहमानानां ध्रुवौ तात जयाजयौ । यत्र ते परमेष्वासा यत्ता रक्षन्ति सैन्धवं ।
तत्र याहि ध्रुवं शीघ्रं तांश्च रक्षस्व रक्षिणः । इहैव त्वहमासिष्ये प्रेषयिष्यामि चापरान् ।
निरोत्स्यामि च पाञ्चालान् सहितान् पाण्डुसृञ्जयैः । ततो दुर्य्योधनः प्रायात्तूर्णमाचार्य्यशासनात् । ५३३५
उद्यम्यात्मानमुग्राय कर्म्मणे सपदानुगः । चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
वाह्येन सेनामभ्येत्य जग्मतुः सव्यसाचिनं । यौ हि पूर्व्वं महाराज वारितौ कृतवर्म्मणा ।
प्रविष्टेऽर्ज्जुने राजंस्तव सैन्यं युयुत्सया । पार्श्वेन सेनामायान्तौ कुरुराजो ददर्श ह ।
ताभ्यां दुर्य्योधनः सार्द्धं समार्च्छद्युद्धमुत्तमं । त्वरितस्त्वरमाणाभ्यां भ्रातृभ्यां भारतो बली ।
तावभिद्रवतामेनमुभावुद्यतकार्म्मुकौ । महारथसमाख्यातौ क्षत्रियप्रवरौ युधि । ५३४०
तमविध्यद्युधामन्युस्त्रिंशता कङ्कपत्रिभिः । विंशत्या सारथिञ्चापि चतुर्भिश्चतुरो हयान् ।
दुर्य्योधनो युधामन्योर्ध्वजमेकेषुणाऽच्छिनत् । एकेन कार्म्मुकञ्चास्य चिच्छेद तनयस्तव ।
सारथिञ्चास्य भल्लेन रथनीडादपाहरत् । ततो विव्याध चतुरस्तीक्ष्णैश्चतुर्भिश्चतुरो हयान् ।
युधामन्युश्च संक्रुद्धः शरांस्त्रिंशतमाहवे । व्यसृजत्तव पुत्रस्य त्वरमाणः स्तनान्तरे ।

तथोत्तमौजाः संक्रुद्धः शरैर्हेमविभूषितैः । अविध्यत्सारथिञ्चास्य प्राहिणोद्यमसादनं । ५२४५
दुर्य्योधनोऽपि राजेन्द्र पाञ्चाल्यस्योत्तमौजसः । जघान चतुरोऽश्वांस्तान् उभौ च पार्ष्णिसारथी ।
उत्तमौजा हताश्वस्तु हतसूतश्च संयुगे । आरुरोह रथं भ्रातुर्युधामन्योरभित्वरन् ।
स रथं प्राप्य तं भ्रातुर्दुर्य्योधनहयान् शरैः । बहुभिस्ताडयामास ते हताः प्रापतन् भुवि ।
हयेषु पतितेष्वस्य चिच्छेद परमेषुणा । युधामन्युर्धनुः शीघ्रं शरावापञ्च वीर्य्यवान् ।
हताश्वसूतात् स रथादवप्लुत्य नरर्षभः । गदामादाय ते पुत्त्रः पाञ्चाल्यावभ्यधावत । ५२५०
तमापतन्तं सम्प्रेक्ष्य क्रुद्धं परपुरञ्जयं । अवप्लुतौ रथोपस्थात् युधामन्यूत्तमौजसौ ।
ततः स हेमचित्रं तं स्यन्दनप्रवरं गदी । गदया पोथयामास साश्वसूतध्वजं रणे ।
हत्वा चैवं स पुत्त्रस्ते हताश्वो हतसारथिः । मद्रराजरथं तूर्णमारुरोह परन्तपः ।
पाञ्चालानान्तु मुख्यौ तौ राजपुत्त्रौ महारथौ । रथावन्यौ समारुह्य बीभत्सुमभिजग्मतुः ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि दुर्य्योधनयुद्धे त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥
॥ सञ्जय उवाच ॥ वर्त्तमाने महाराज सङ्ग्रामे लोमहर्षणे । व्याकुलेषु च सर्व्वेषु पीड्यमानेषु सर्व्वशः । ५२५५
राधेयो भीममानर्च्छद्युद्धाय भरतर्षभ । यथा नागो वने नागं मत्तो मत्तमभिद्रवन् ।
॥ धृतराष्ट्र उवाच ॥ यौ तौ कर्णश्च भीमश्च सम्प्रयुद्धौ महाबलौ । अर्ज्जुनस्य रथोपान्ते कीदृशः सोऽभवद्रणः ।
पूर्व्वं हि निर्जितः कर्णो भीमसेनेन संयुगे । कथम्भूयस्तु राधेयो भीममागान्महारथः ।
भीमो वा सूततनयं प्रत्युद्यातः कथं रणे । महारथं समाख्यातं पृथिव्यां प्रवरं रथं ।
भीष्मद्रोणावतिक्रम्य धर्म्मपुत्त्रो युधिष्ठिरः । नान्यतो भयमादत्त विना कर्णं धनुर्द्धरं । ५२६०
भयान्न शेते सततं चिन्तयन्वै महारथं । तं कथं सूतपुत्त्रं हि भीमोऽयुध्यत संयुगे ।
ब्रह्मण्यं वीर्य्यसम्पन्नं समरेष्वनिवर्त्तिनं । कथं कर्णं युधां श्रेष्ठं भीमोऽयुध्यत सञ्जय ।
यौ तौ समीयतुर्व्वीरावर्ज्जुनस्य रथं प्रति । कथन्नु तावयुध्येतां सूतपुत्त्रवृकोदरौ ।
भ्रातृत्वं दर्शितं पूर्व्वं घृणी चापि स सूतजः । कथं भीमेन युयुधे कुन्त्या वाक्यमनुस्मरन् ।
भीमो वा सूतपुत्त्रेण स्मरन् वैरं पुराकृतं । सोऽयुध्यत कथं वीरः कर्णेन सह संयुगे । ५२६५
आशास्ते च सदा सूत पुत्त्रो दुर्य्योधनो मम । कर्णो जेष्यति सङ्ग्रामे सहितान् पाण्डवानिति ।
जयाशा यत्र मन्दस्य पुत्त्रस्य मम संयुगे । स कथं भीमकर्म्माणं भीमसेनमयुध्यत ।
यं समाश्रित्य पुत्त्रैर्मे कृतं वैरं महारथैः । तं सूततनयं तात कथं भीमो ह्ययोधयत् ।
अनेकान्विप्रकारांश्च सूतपुत्त्रसमुद्भवान् । स्मरमाणः कथं भीमो युयुधे सूतसूनुना ।
योऽजयत् पृथिवीं सर्व्वां रथेनैकेन वीर्य्यवान् । तं सूततनयं युद्धे कथं भीमो ह्ययोधयत् । ५२७०
यो जातः कुण्डलाभ्याञ्च कवचेन सहैव च । तं सूतपुत्त्रं समरे भीमः कथमयोधयत् ।
यथा तयोर्युद्धमभूत् यश्चासीद्विजयस्तयोः । तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय ।
॥ सञ्जय उवाच ॥ भीमसेनस्तु राधेयमुत्सृज्य रथिनां वरं । इयेष गन्तुं यत्रास्तां वीरौ कृष्णधनञ्जयौ ।

तं प्रयान्तमभिद्रुत्य राधेयः कङ्कपत्रिभिः । अभ्यवर्षन्महाराज मेघो वृष्ट्येव पर्व्वतं ।
फुल्लता पङ्कजेनेव वक्त्रेणाभ्युत्स्मयन् बली । आजुहाव रणे यान्तं भीममाधिरथिस्तदा । ५३७५
॥ कर्ण उवाच ॥ भीमाहितैस्तव रणः स्वप्नेऽपि न विभावितः । तद्दर्शयसि कस्मान्मे पृष्ठं पार्थदिदृक्षया ।
कुन्त्याः पुत्त्रस्य सदृशं नेदं पाण्डवनन्दन । तेन मामभितः स्थित्वा शरवैर्षैरवाकिर ।
भीमसेनस्तदाह्वानं कर्णेनामर्षयद्युधि । अर्द्धमण्डलमावृत्य सूतपुत्त्रमयोधयत् ।
अवक्रगामिभिर्व्वाणैरभ्यवर्षन्महायशाः । द्वैरथे दंशितं यान्तं सर्व्वशस्त्रविशारदं ।
विधित्सन् कलहस्यान्तं जिघांसुः कर्णमाचिणोत् । तांस्तु हत्वेतरान् सर्व्वान् भीमसेनो महाबलः । ५३८०
तस्मै प्रासृजदुग्राणि विविधानि परन्तपः । अमर्षत् पाण्डवः क्रुद्धः शरवर्षाणि मारिष ।
तस्य तानीषुवर्षाणि मत्तद्विरदगामिनः । सूतपुत्त्रोऽस्त्रमायाभिरग्रसत् स महाबलः ।
स यथावन्महाराज विद्यया वै सुपूजितः । आचार्य्यवन्महेष्वासः कर्णः पर्य्यचरद्रणे ।
संरम्भेण तु युध्यन्तं भीमसेनं स्मयन्निव । अवामन्यत राधेयस्तममर्षी वृकोदरं ।
तन्नामृष्यत कौन्तेयः कर्णस्य स्मितमाहवे । युध्यमानेषु वीरेषु पश्यत्सु च समन्ततः । ५३८५
तं भीमसेनः सम्प्राप्तं वत्सदन्तैः स्तनान्तरे । विव्याध बलवान् क्रुद्धस्तोत्त्रैरिव महाद्विपं ।
पुनस्तु सूतपुत्त्रन्तु सुपुङ्खैर्निशितैः शरैः । सुमुक्तैश्चित्रवर्म्माणं निर्ब्बिभेद त्रिसप्तभिः ।
कर्णो जाम्बूनदैर्ज्जालैः सञ्छन्नान् वातरंहसः । विव्याध तुरगान् वीरः पञ्चभिः पञ्चभिः शरैः ।
ततो वाणमयं जालं भीमसेनरथम्प्रति । कर्णेन विहितं राजन् निमेषार्द्धाददृश्यत ।
सरथः सध्वजस्तत्र ससूतः पाण्डवस्तदा । प्राच्छाद्यत महाराज कर्णचापच्युतैः शरैः । ५३९०
तस्य कर्णस्तुःषष्ट्या व्यधमत् कवचं दृढं । क्रुद्धश्चाप्यहनत् पार्थं नाराचैर्म्मर्म्मभेदिभिः ।
ततोऽचिन्त्य महाबाहुः कर्णकार्म्मुकनिःसृतान् । समाश्लिष्यदसम्भ्रान्तः सूतपुत्त्रं वृकोदरः ।
स कर्णचापप्रभवानिषूनाशीविषोपमान् । बिभ्रद्भीमो महाराज न जगाम व्यथां रणे ।
ततो द्वात्त्रिंशता भल्लैर्न्निशितैस्तिग्मतेजनैः । विव्याध समरे कर्णं भीमसेनः प्रतापवान् ।
अयत्नेनैव तं कर्णः शरैर्भृशमवाकिरत् । भीमसेनं महाबाहुं सैन्धवस्य बधैषिणं । ५३९५
मृदुपूर्ब्बं हि राधेयो भीममाजावयोधयत् । क्रोधपूर्ब्बं तथा भीमः पूर्ब्बवैरमनुस्मरन् ।
तं भीमसेनो नामृष्यदवमानममर्षणः । स तस्मै व्यसृजत्तूर्णं शरवर्षममित्रहा ।
ते शराः प्रेषितास्तेन भीमसेनेन संयुगे । निपेतुः सर्व्वतो वीरे कूजन्त इव पक्षिणः ।
हेमपुङ्खाः प्रसन्नाग्रा भीमसेनधनुश्च्युताः । प्राच्छादयंस्ते राधेयं शलभा इव पावकं ।
कर्णस्तु रथिनां श्रेष्ठश्छाद्यमानः समन्ततः । राजन् व्यसृजदुग्राणि शरवर्षाणि भारत । ५४००
तस्य तानशनिप्रख्यानिषून् समरशोभिनः । चिच्छेद बहुभिर्भल्लैरसंप्राप्तान् वृकोदरः ।
पुनश्च शरवर्षेण छादयामास भारत । कर्णो वैकर्त्तनो युद्धे भीमसेनमरिन्दमः ।
तत्र भारत भीमन्तु दृष्टवन्तः स्म सायकैः । समाचिततनुं सङ्ख्ये श्वाविधं शललैरिव ।

हेमपुङ्खान्शिलाधौतान् कर्णचापच्युतान्शरान् । व्यचरत् समरे वीरः स्वरश्मीनिव रश्मिवान् ।
रुधिरोक्षितसर्व्वाङ्गो भीमसेनो व्यराजत । सम्फुल्लकुसुमापीडो वसन्तेऽशोकवृक्षवत् । ५३०५
तत्तु भीमो महाबाहोः कर्णस्य चरितं रणे । नामृष्यत महाबाहुः क्रोधादुद्वृत्तलोचनः ।
स कर्णं पञ्चविंशत्या नाराचानां समार्पयत् । महीधरमिव श्वेतं गूढपादैर्विषोल्बणैः ।
पुनरेव च विव्याध षड्भिरष्टाभिरेव च । मर्म्मस्वमरविक्रान्तः सूतपुत्रं तनुत्यजं ।
पुनरन्येन बाणेन भीमसेनः प्रतापवान् । चिच्छेद कार्मुकं तूर्णं कर्णस्य प्रहसन्निव ।
जघान चतुरश्चाश्वान् सूतञ्च त्वरितः शरैः । नाराचैरर्करश्म्याभैः कर्णं विव्याध चोरसि । ५३१०
ते जग्मुर्धरणीमाशु कर्णं निर्भिद्य पत्त्रिणः । यथा जलधरं भित्त्वा दिवाकरमरीचयः ।
स वैकल्यं महत् प्राप्य छिन्नधन्वा शरार्द्दितः । तथा पुरुषमानी स प्रत्यपायाद्रथान्तरं ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि कर्णपराजये एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

॥ धृतराष्ट्र उवाच ॥ यस्मिन् जयाशा महती पुत्राणां मम सञ्जय । तं भीमाद्विमुखं दृष्ट्वा किन्नु दुर्य्योधनोऽब्रवीत् ।
कथञ्च युयुधे भीमो वीर्य्यश्लाघी महाबलः । कर्णो वा समरे तात किमकार्षीदतः परं ।
भीमसेनं रणे दृष्ट्वा ज्वलन्तमिव पावकं । ५३१५
॥ सञ्जय उवाच ॥ रथमन्यं समास्थाय विधिवत्कल्पितं पुनः । अभ्ययात् पाण्डवं कर्णो वातोद्धूत इवार्णवः ।
क्रुद्धमाधिरथिं दृष्ट्वा पुत्रास्तव विशाम्पते । भीमसेनममन्यन्त वैश्वानरमुखे हुतं ।
चापशब्दं ततः कृत्वा तलशब्दञ्च भैरवं । अभ्यवर्त्तत राधेयो भीमसेनरथम्प्रति ।
पुनरेव तयो राजन् घोर आसीत् समागमः । वैकर्त्तनस्य शूरस्य भीमस्य च महात्मनः ।
संरब्धौ हि महाबाहू परस्परवधैषिणौ । अन्योऽन्यमीक्षाञ्चक्राते दहन्ताविव लोचनैः । ५३२०
क्रोधरक्तेक्षणौ तीव्रौ निःश्वसन्ताविवोरगौ । शूरावन्योऽन्यमासाद्य ततक्षतुररिन्दमौ ।
व्याघ्राविव सुसंरब्धौ श्येनाविव च शीघ्रगौ । शरभाविव संक्रुद्धौ युयुधाते परस्परं ।
ततो भीमः स्मरन् क्लेशानक्षद्यूते वनेऽपि च । विराटनगरे चैव दुःखं प्राप्तमरिन्दमः ।
राष्ट्राणां स्फीतरत्नानां हरणञ्च तवात्मजैः । सततञ्च परिक्लेशान् सपुत्रेण त्वया कृतान् ।
दग्धुमैच्छश्च यत् कुन्तीं सपुत्रां त्वमनागसं । कृष्णायाश्च परिक्लेशं सभामध्ये दुरात्मभिः । ५३२५
केशपक्षग्रहञ्चैव दुःशासनकृतं तथा । परुषाणि च वाक्यानि कर्णेनोक्तानि भारत ।
पतिमन्यं परीप्स त्वं न सन्ति पतयस्तव । पतिता नरके पार्थाः सर्व्वे षण्ढतिलोपमाः ।
समक्षं तव कौरव्य यदूचुः कुरवस्तदा । दासभावेन कृष्णाञ्च भोक्तुकामाः सुतास्तव ।
यच्चापि तान् प्रव्रजतः कृष्णाजिननिवासिनः । परुषाण्युक्तवान् कर्णः सभायां सन्निधौ तव ।
तृणीकृत्य यथा पार्थांस्तव पुत्रो ववल्ग ह । विषमस्थान् समस्थो हि संरब्धो गतचेतसः । ५३३०
बाल्यात् प्रभृति चारिघ्नः स्वानि दुःखानि चिन्तयन् । निरविद्यत धर्म्मात्मा जीवितेन वृकोदरः ।
ततो विस्फार्य्य सुमहद्धेमपृष्ठं दुरासदं । चापं भरतशार्दूल त्यक्तात्मा कर्णमभ्ययात् ।

स सायकमयैर्जालैर्भीमः कर्णरथम्प्रति। भानुमद्भिः शिलाधौतैर्भानोः प्राच्छादयत् प्रभां।
ततः प्रहस्याधिरथिस्तूर्णमस्य शिलाशितैः। व्यधमद्भीमसेनस्य शरजालानि पत्रिभिः।
महारथो महाबाहुर्महाबाणैर्महाबलः। विव्याधाधिरथिर्भीमं नवभिर्निशितैस्तदा। ५४३५
स तोत्त्रैरिव मातङ्गो वार्य्यमाणः पतत्रिभिः। अभ्यधावत सम्भ्रान्तः सूतपुत्रं वृकोदरः।
तमापतन्तं वेगेन रभसं पाण्डवर्षभं। कर्णः प्रत्युद्ययौ क्रुद्धो मत्तो मत्तमिव द्विपं।
ततः प्रध्माप्य जलजं भेरीशतसमस्वनं। अक्षुभ्यत बलं हर्षादुद्धूत इव सागरः।
तदुद्धूतं बलं दृष्ट्वा नागाश्वरथपत्तिमत्। भीमः कर्णं समासाद्य छादयामास सायकैः।
अश्वानृक्षसवर्णांस्तु हंसवर्णैर्हयोत्तमैः। व्यामिश्रयद्रणे कर्णः पाण्डवं छादयन् शरैः। ५४४०
ऋक्षवर्णान् हयान् हंसैर्मिश्रान् मारुतरंहसः। निरीक्ष्य तव पुत्राणां हाहाकृतमभूद्बलं।
ते हया बह्वशोभन्त मिश्रिता वातरंहसः। सितासिता महाराज यथा व्योम्नि बलाहकाः।
संरब्धौ क्रोधताम्राक्षौ प्रेक्ष्य कर्णवृकोदरौ। सन्त्रस्ताः समकम्पन्त त्वदीया वै महारथाः।
यमराष्ट्रोपमं घोरमासीदायोधनं तयोः। दुर्दर्शं भरतश्रेष्ठ प्रेतराजपुरं यथा।
समाजमिव तच्चित्रं प्रेक्षमाणा महारथाः। नालक्षयन् जयं व्यक्तमेकस्यैव महारणे। ५४४५
तयोः प्रैक्षन्त संमर्द्दं सन्निकृष्टं महास्त्रयोः। तव दुर्मन्त्रिते राजन् सपुत्रस्य विशाम्पते।
छादयन्तौ हि शत्रुघ्नावन्योऽन्यं सायकैः शितैः। शरजालावृतं व्योम चक्रातेऽद्भुतविक्रमौ।
तावन्योऽन्यं जिघांसन्तौ शरैस्तीक्ष्णैर्महारथौ। प्रेक्षणीयतरावास्तां वृष्टिमन्ताविवाम्बुदौ।
सुवर्णविकृतान् बाणान् प्रमुञ्चन्तावरिन्दमौ। भास्वरं व्योम चक्राते महोल्काभिरिव प्रभो।
ताभ्यां मुक्ताः शरा राजन् गार्द्ध्रपत्राश्चकाशिरे। श्रेण्यः शरदि मत्तानां सारसानामिवाम्बरे। ५४५०
संसक्तं सूतपुत्रेण दृष्ट्वा भीममरिन्दमं। अतिभारममन्येतां भीमे कृष्णधनञ्जयौ।
ततोऽधिरथिभीमाभ्यां शरैर्मुक्तैर्दृढं हताः। इषुपातमतिक्रम्य पेतुरश्वनरद्विपाः।
पतद्भिः पतितैश्चान्यैर्गतासुभिरनेकशः। कृतो राजन्महाराज पुत्राणां ते जनः क्षयः।
मनुष्याश्वगजानाञ्च शरीरैर्गतजीवितैः। क्षणेन भूमिः सञ्जज्ञे संवृता भरतर्षभ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि भीमकर्णयुद्धे द्वात्रिंशदधिकशततमोऽध्यायः॥ १३२ ॥
॥ धृतराष्ट्र उवाच॥ अत्यद्भुतमहं मन्ये भीमसेनस्य विक्रमं। यत्कर्णं योधयामास समरे लघुविक्रमं। ५४५५
त्रिदशानपि चोद्युक्तान् सर्व्वशस्त्रधरान् युधि। वारयेद्यो रणे कर्णः सयक्षासुरमानवान्।
स कथं पाण्डवं युद्धे भ्राजमानमिव श्रिया। नातरत् संयुगे पार्थं तन्ममाचक्ष्व सञ्जय।
कथञ्च युद्धं सम्भूतं तयोः प्राणदुरोदरे। अत्र मन्ये समायत्तो जयो वाऽजय एव च।
कर्णम्प्राप्य रणे सूत मम पुत्रः सुयोधनः। जेतुमुत्सहते पार्थान् सगोविन्दान् ससात्वतान्।
श्रुत्वा तु निर्जितं कर्णमसकृद्भीमकर्म्मणा। भीमसेनेन समरे मोहश्चाविशतीव मां। ५४६०
विनष्टान् कौरवान्मन्ये मम पुत्रस्य दुर्नयैः। नहि कर्णो महेष्वासान् पार्थान् जेष्यति सञ्जय।

कृतवान् यानि युद्धानि कर्णः पाण्डुसुतैः सह । सर्व्वेच पाण्डवाः कर्णमजयन्त रणाजिरे ।
अजेयाः पाण्डवास्तात देवैरपि सवासवैः । नच तद्बुध्यते मन्दः पुत्त्रो दुर्य्योधनो मम ।
धनं धनेश्वरस्येव हृत्वा पार्थस्य मे सुतः । मधुप्रेप्सुरिवाबुद्धिः प्रपातं नावबुध्यते ।
निकृत्या निकृतिप्रज्ञो राज्यं हृत्वा महात्मनां । जितमित्येव मन्वानः पाण्डवानवमन्यते । ५३९५
पुत्त्रस्नेहाभिभूतेन मया चाप्यकृतात्मना । धर्म्मे स्थिता महात्मानो निकृताः पाण्डुनन्दनाः ।
शमकामः सदा पार्थो दीर्घप्रेक्षी युधिष्ठिरः । अशक्त इति मन्वानैः पुत्त्रैर्मम निराकृतः ।
तानि दुःखान्यनेकानि विप्रकारांश्च सर्व्वशः । हृदि कृत्वा महाबाहुर्भीमोऽयुध्यत सूतजं ।
तस्मान्मे सञ्जय ब्रूहि कर्णभीमौ यथा रणे । अयुध्येतां युधि श्रेष्ठौ परस्परवधैषिणौ ।
॥ सञ्जय उवाच ॥ शृणु राजन् यथावृत्तं सङ्ग्रामं कर्णभीमयोः । परस्परं वधप्रेप्स्वोर्व्वने कुञ्जरयोरिव । ५४००
राजन्वैकर्त्तनो भीमं क्रुद्धः क्रुद्धमरिन्दमं । पराक्रान्तं पराक्रम्य विव्याध त्रिंशता शरैः ।
महावेगैः प्रसन्नाग्रैः शातकुम्भपरिष्कृतैः । अहनद्भरतश्रेष्ठ भीमं वैकर्त्तनः शरैः ।
तस्यास्यतो धनुर्भीमश्चकर्त्त निशितैस्त्रिभिः । रथनीडाच्च यन्तारं भल्लेनापातयत् क्षितौ ।
स काङ्क्षन् भीमसेनस्य बधं वैकर्त्तनो भृशं । शक्तिं कनकवैदूर्य्यचित्रदण्डां परामृशत् ।
प्रगृह्य च महाशक्तिं कालशक्तिमिवापरां । समुत्क्षिप्य च राधेयः सन्धाय च महाबलः । ५४०५
चिक्षेप भीमसेनाय जीवितान्तकरीमिव । शक्तिं विसृज्य राधेयः पुरन्दर इवाशनिं ।
ननाद सुमहानादं बलवान् सूतनन्दनः । तञ्च नादं ततः श्रुत्वा पुत्त्रास्ते हर्षिताभवन् ।
तां कर्णभुजनिर्मुक्तामर्कवैश्वानरप्रभां । शक्तिं वियति चिच्छेद भीमः सप्तभिराशुगैः ।
छित्त्वा शक्तिं ततो भीमो निर्मुक्तोरगसन्निभां । मार्गमाण इव प्राणान् सूतपुत्त्रस्य मारिष ।
प्राहिणोत् कृतसंरम्भः शरान् बर्हिणवाससः । स्वर्णपुङ्खान् शिलाधौतान् यमदण्डोपमान्मृधे । ५४१०
कर्णोऽप्यन्यद्धनुर्गृह्य हेमपृष्ठं दुरासदं । विकृष्य च महातेजा व्यसृजत् सायकांस्तदा ।
तान् पाण्डुपुत्त्रश्चिच्छेद नवभिर्नतपर्व्वभिः । वसुषेणेन निर्मुक्तान्नरराज महाशरान् ।
छित्त्वा भीमो महाराज नादं सिंहइवानदत् । तौ वृषाविव नर्द्दन्तौ बलिनौ वाशितान्तरे ।
शार्दूलाविव चान्योऽन्यमामिषार्थेऽभ्यगर्जतां । अन्योऽन्यं प्रजिहीर्षन्तावन्योऽन्यस्यान्तरैषिणौ ।
अन्योऽन्यमभिवीक्षन्तौ गोष्ठेष्विव महर्षभौ । महागजाविवासाद्य विषाणाग्रैः परस्परं । ५४१५
शरैः पूर्णायतोत्सृष्टैरन्योऽन्यमभिजघ्नतुः । निर्द्दहन्तौ महाराज शरवृष्ट्या परस्परं ।
अन्योऽन्यमभिवीक्षन्तौ कोपाद्विवृतलोचनौ ।
प्रहसन्तौ तथाऽन्योऽन्यं भर्त्सयन्तौ मुहुर्मुहुः । शङ्खशब्दञ्च कुर्व्वाणौ युयुधाते परस्परं ।
तस्य भीमः पुनश्चापं मुष्टौ चिच्छेद मारिष । शङ्खवर्णांश्च तानश्वान्बाणैर्निन्ये यमक्षयं ।
सारथिञ्च तथाऽप्यस्य रथनीडादपातयत् । ततो वैकर्त्तनः कर्णश्चिन्तां प्राप दुरत्ययां । ५४१९
संछाद्यमानः समरे हताश्वो हतसारथिः । मोहितः शरजालेन कर्त्तव्यं नाभ्यपद्यत ।

तथा तक्रगतं दृष्ट्वा कर्णं दुर्य्योधनो नृपः । वेपमान इव क्रोधाद्व्यादिदेशाथ दुर्जयं ।
गच्छ दुर्जय राधेयं पुरो ग्रसति पाण्डवः । जहि तुवरकं चिप्रं कर्णस्य बलमादधत् ।
एवमुक्तस्तथेत्युक्त्वा तव पुत्त्रस्तवात्मजं । अभ्यद्रवद्भीमसेनं व्यासक्तं विकिरञ्छरैः ।
स भीमं नवभिर्व्वाणैरश्वानष्टभिरार्द्दयत् । षड्भिः सूतं त्रिभिः केतुं पुनस्तञ्चापि सप्तभिः ।     ५४९५
भीमसेनोऽपि संक्रुद्धः साश्वयन्तारमाशुगैः । दुर्जयं भिन्नमर्म्माणमनयद्यमसादनं ।
स्वलङ्कृतं चितौ चिप्तं चेष्टमानं यथोरगं । रुदन्नार्त्तस्तव सुतं कर्णश्चक्रे प्रदचिणं ।
स तु तं विरथं कृत्वा स्मयन्नत्यन्तवैरिणं । समाचिनोद्बाणगणैः शतघ्नीमिव शङ्कुभिः ।
तथाऽप्यतिरथः कर्णो भिद्यमानः स सायकैः । न जहौ समरे भीमं क्रुद्धरूपं परन्तपः ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि कर्णभीमयुद्धे चयस्त्रिंशदधिकशततोऽध्यायः ॥ १३३ ॥
॥ सञ्जय उवाच ॥ सर्व्वथा विरथः कर्णः पुनर्भीमेन निर्जितः । रथमन्यं समास्थाय सद्यो विव्याध पाण्डवं ।     ५५००
महागजाविवासाद्य विषाणाग्रैः परस्परं । शरैः पूर्णायतोत्सृष्टैरन्योऽन्यमभिजघ्नतुः ।
अथ कर्णः शरव्रातैर्भीमसेनं समार्पयत् । ननाद बलवन्नादं पुनर्व्विव्याध चोरसि ।
तं भीमो दशभिर्व्वाणैः प्रत्यविध्यदजिह्मगैः । पुनर्व्विव्याध विंशत्या शराणां नतपर्व्वणां ।
कर्णस्तु नवभिर्भीमं विद्ध्वा राजन्स्तनान्तरे । ध्वजमेकेन विव्याध सायकेन शितेन ह ।
सायकानां ततः पार्थं त्रिषष्ट्या प्रत्यविध्यत । तोत्त्रैरिव महानागं कशाभिरिव वाजिनं ।     ५५०५
सोऽति विद्धो महाराज पाण्डवेन यशस्विना । सृक्कणी लेलिहन् वीरः क्रोधसंरक्तलोचनः ।
ततः शरं महाराज सर्व्वकायावदारणं । प्राहिणोद्भीमसेनाय वधायेन्द्र इवाशनिं ।
स निर्भिद्य रणे पार्थं सूतपुत्त्रधनुश्च्युतः । अगच्छद्दारयन् भूमिं चित्रपुङ्खः शिलीमुखः ।
ततो भीमो महाबाहुः क्रोधसंरक्तलोचनः । वज्रकल्पां चतुष्किष्कुं गुर्व्वीं रुक्माङ्गदीं गदां ।
प्राहिणोत् सूतपुत्त्राय षडस्रिमविचारयन् । तया जघानाधिरथेः सदश्वान् साधुवाहिनः ।     ५५१०
गदया भारतः क्रुद्धो वज्रेणेन्द्र इवासुरान् । ततो भीमो महाबाहुः चुराभ्यां भरतर्षभ ।
ध्वजमाधिरथेश्छित्त्वा सूतमभ्यहनच्छरैः । हताश्वसूतमुत्सृज्य स रथं पतितध्वजं ।
विस्फारयन् धनुः कर्णस्तस्थौ भारत दुर्म्मनाः । तत्राद्भुतमपश्याम राधेयस्य पराक्रमं ।
विरथो रथिनां श्रेष्ठो वारयामास यद्रिपुं । विरथं तं नरश्रेष्ठं दृष्ट्वाऽधिरथिमाहवे ।
दुर्य्योधनस्ततो राजन्नभ्यभाषत दुर्मुखं । एष दुर्मुख राधेयो भीमेन विरथीकृतः ।     ५५१५
तं रथेन नरश्रेष्ठं सम्पादय महारथं । दुर्य्योधनवचः श्रुत्वा ततो भारत दुर्मुखः ।
त्वरमाणोऽभ्ययात् कर्णं भीमञ्चावारयच्छरैः । दुर्मुखं प्रेच्य सङ्ग्रामे सूतपुत्त्रपदानुगं ।
वायुपुत्त्रः प्रहृष्टोऽभूत्सृक्कणी परिलेलिहन् । ततः कर्णं महाराज वारयित्वा शिलीमुखैः ।
दुर्मुखाय रथं शीघ्रं प्रेषयामास पाण्डवः । तस्मिन् चणे महाराज नवभिर्नतपर्व्वभिः ।
सुमुखैर्दुर्मुखं भीमः शरैर्निन्ये यमचयं । ततस्तमेवाधिरथिः स्यन्दनं दुर्मुखे हते ।     ५५२०

आस्थितः प्रबभौ राजन् दीप्यमान इवांशुमान्। शयानं भिन्नमर्माणं दुर्मुखं शोणितोक्षितं।
दृष्ट्वा कर्णोऽश्रुपूर्णाक्षो मुहूर्त्तं नाभ्यवर्त्तत। तं गतासुमतिक्रम्य कृत्वा कर्णः प्रदक्षिणं।
दीर्घमुष्णं श्वसन् वीरो न किञ्चित् प्रत्यपद्यत। तस्मिंस्तु विवरे राजन्नाराचान् गार्द्ध्रवाससः।
प्राहिणोत् सूतपुत्राय भीमसेनश्चतुर्द्दश। ते तस्य कवचं भित्त्वा स्वर्णपुङ्खा महौजसः।
हेमचित्रा महाराज द्योतयन्तो दिशो दश। अपिबन् सूतपुत्रस्य शोणितं रक्तभोजनाः। ५५२५
क्रुद्धा इव मनुष्येन्द्र भुजङ्गाः कालचोदिताः। प्रसर्पमाणा मेदिन्यां ते व्यरोचन्त मार्गणाः।
अर्द्धप्रविष्टाः संरब्धा बिलानीव महोरगाः। तं प्रत्यविध्यद्राधेयो जाम्बूनदविभूषितैः।
चतुर्द्दशभिरत्युग्रैर्नाराचैरविचारयन्। ते भीमसेनस्य भुजं सव्यं निर्भिद्य पत्रिणः।
प्राविशन्मेदिनीं भीमाः क्रौञ्चपत्ररथा इव। ते व्यरोचन्त नाराचाः प्रविशन्तो वसुन्धरां।
गच्छत्यस्तं दिनकरे दीप्यमाना इवांशवः। स निर्भिन्नो रणे भीमो नाराचैर्मर्म्मभेदिभिः। ५५३०
सुस्राव रुधिरं भूरि पर्व्वतः सलिलं यथा। स भीमस्त्रिभिरायस्तः सूतपुत्रं पतत्त्रिभिः।
सुपर्णवेगैर्व्विव्याध सारथिञ्चास्य सप्तभिः। स विह्वलो महाराज कर्णो भीमबलार्द्दितः।
प्राद्रवज्जवनैरश्वैरणं त्यक्त्वा महायशाः। भीमसेनस्तु विस्फार्य्य चापं हेमपरिष्कृतं।
आहवेऽतिरथोऽतिष्ठज्ज्वलन्निव हुताशनः।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि कर्णापयाने चतुस्त्रिंशदधिकशततमोऽध्यायः॥ १३४ ॥
॥ धृतराष्ट्र उवाच ॥ दैवमेव परं मन्ये धिक् पौरुषमनर्थकं। यत्राधिरथिरायत्तो नातरत् पाण्डवं रणे। ५५३५
कर्णः पार्थान् सगोविन्दान् जेतुमुत्सहते रणे। न च कर्णसमं योधं लोके पश्यामि कञ्चन।
इति दुर्य्योधनस्याहमश्रौषं जल्पतो मुहुः। कर्णो हि बलवान् शूरो दृढधन्वा जितक्लमः।
इति मामब्रवीत् सूत मन्दो दुर्य्योधनः पुरा। वसुषेणसहायं मां नालं देवापि संयुगे।
किमु पाण्डुसुता राजन् गतसत्त्वा विचेतसः। तत्र तं निर्जितं दृष्ट्वा भुजङ्गमिव निर्व्विषं।
युद्धात् कर्णमपक्रान्तं किं स्विद्दुर्य्योधनोऽब्रवीत्। अहो दुर्मुखमेवैकं युद्धानामविशारदं। ५५४०
प्रावेशयद्धुतवहं पतङ्गमिव मोहितः। अश्वत्थामा मद्रराजः कृपः कर्णश्च सङ्गताः।
न शक्ताः प्रमुखे स्थातुं नूनं भीमस्य सञ्जय। तेऽपि चास्य महाघोरं बलं नागायुतोपमं।
जानन्तो व्यवसायञ्च क्रूरं मारुततेजसः। किमर्थं क्रूरकर्म्माणं यमकालान्तकोपमं।
बलसंरम्भवीर्य्यज्ञाः कोपयिष्यन्ति संयुगे। कर्णस्त्वेको महाबाहुः स्वबाहुबलमाश्रितः।
भीमसेनमनादृत्य रणेऽयुध्यत सूतजः। योऽजयत् समरे कर्णं पुरन्दर इवासुरं। ५५४५
न स पाण्डुसुतो जेतुं शक्यः केनचिदाहवे। द्रोणं यः सम्प्रमथ्यैकः प्रविष्टो मम वाहिनीं।
भीमो धनञ्जयान्वेषी कस्तमर्च्छेज्जिजीविषुः। को हि सञ्जय भीमस्य स्थातुमुत्सहतेऽग्रतः।
उद्यताशनिवज्रस्य महेन्द्रस्येव दानवः। प्रेतराजपुरं प्राप्य निवर्त्तेतापि मानवः।
न भीमसेनं सम्प्राप्य निवर्त्तेत कदाचन। पतङ्गा इव वह्निं ते प्राविशन्नल्पचेतसः।

ये भीमसेनं संक्रुद्धमन्वधावन्विमोहिताः । यत्तत्सभायां भीमेन मम पुत्रवधाश्रयं । ५५५०
उक्तं संरम्भिणैकेन कृष्णायाः शृण्वतां तदा । तन्नूनमभिसञ्चिन्त्य दृष्ट्वा कर्णं विनिर्जितं ।
दुःशासनः सह भ्रात्रा भयाद्भीमादुपारमत् । यश्च सञ्जय दुर्बुद्धिरब्रवीत् समितौ मुहुः ।
कर्णो दुःशासनोऽहञ्च जेष्यामो युधि पाण्डवान् । स नूनं विरथं दृष्ट्वा कर्णं भीमेन निर्जितं ।
प्रत्याख्यानाच्च कृष्णस्य भृशं तप्यति सञ्जय । दृष्ट्वा भ्रातॄन् हतान् सङ्ख्ये भीमसेनेन दंशितान् ।
आत्मापराधे सुमहन्नूनं तप्यति पुत्रकः । को हि जीवितमन्विच्छन् प्रतीपं पाण्डवं व्रजेत् । ५५५५
भीमं भीमायुधं क्रुद्धं साक्षात्कालमिव स्थितं । वडवामुखमध्यस्थो मुच्येतापि हि मानवः ।
न भीममुखसम्प्राप्तो मुच्येदिति मतिर्मम । न पार्था न च पाञ्चाला न च केशवसात्यकी ।
जानन्ते युधि संरब्धा जीवितं परिरक्षितुं । अहो मम सुतानां हि विपन्नं सूत जीवितं ।
॥ सञ्जय उवाच ॥ यत्त्वं शोचसि कौरव्य वर्त्तमाने जनक्षये । त्वमस्य जगतो मूलं विनाशस्य न संशयः ।
स्वयं वैरं महत्कृत्वा पुत्राणां वचने स्थितः । उच्यमानो न गृह्णीषे मर्त्यः पथ्यमिवौषधं । ५५६०
स्वयं पीत्वा महाराज कालकूटं सुदुर्जरं । तस्येदानीं फलं कृत्स्नमवाप्नुहि नरोत्तम ।
यत्तु कुत्सयसे योधान् युध्यमानान् यथाबलं । तत्र ते वर्णयिष्यामि यथा युद्धमवर्त्तत ।
दृष्ट्वा कर्णन्तु पुत्रास्ते भीमसेनपराजितं । नामृष्यन्त महेष्वासाः सोदर्याः पञ्च मारिष ।
दुर्मर्षणो दुःसहश्च दुर्मदो दुर्धरो जयः । पाण्डवं चित्रसन्नाहास्तम्प्रतीपमुपाद्रवन् ।
ते समन्तान्महाबाहुं परिवार्य्य वृकोदरं । दिशः शरैः समावृण्वञ्छलभानामिव व्रजैः । ५५६५
आगच्छतस्तान् सहसा कुमारान् देवरूपिणः । प्रतिजग्राह समरे भीमसेनो हसन्निव ।
तव दृष्ट्वा तु तनयान् भीमसेनपुरोगमान् । अभ्यवर्त्तत राधेयो भीमसेनं महाबलं ।
विसृजन् विशिखांस्तीक्ष्णान् स्वर्णपुङ्खाञ्छिलाशितान् । तन्तु भीमोऽभ्ययात्तूर्णं वार्य्यमाणः सुतैस्तव ।
कुरवस्तु ततः कर्णं परिवार्य्य समन्ततः । अवाकिरन् भीमसेनं शरैः सन्नतपर्व्वभिः ।
तान् वाणैः पञ्चविंशत्या साश्वान् राजन्नरर्षभान् । सह सूतान् भीमधनुषो भीमो निन्ये यमक्षयं । ५५७०
प्रापतन् स्यन्दनेभ्यस्ते सार्द्धं सूतैर्गतासवः । चित्रपुष्पधरा भग्ना वातेनेव महाद्रुमाः ।
तदद्भुतमपश्याम भीमसेनस्य विक्रमं । संवार्य्याधिरथिं वाणैर्यज्जघान तवात्मजान् ।
स वार्य्यमाणो भीमेन शितैर्व्वाणैः समन्ततः । सूतपुत्रो महाराज भीमसेनमवैक्षत ।
तं भीमसेनः संरम्भात् क्रोधसंरक्तलोचनः । विस्फार्य्य तु महच्चापं मुहुः कर्णमवैक्षत ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि भीमपराक्रमे पञ्चविंशदधिकशततोऽध्यायः ॥ १२५ ॥
॥ सञ्जय उवाच ॥ तवात्मजांस्तु पतितान् दृष्ट्वा कर्णः प्रतापवान् । क्रोधेन महताविष्टो निर्व्विण्णोऽभूत्स जीवितात् । ५५७५
आगस्कृतमिवात्मानं मेने चाधिरथिस्तदा । यत्प्रत्यक्षं तव सुता भीमेन निहता रणे ।
भीमसेनस्ततः क्रुद्धः कर्णस्य निशितान् शरान् । निचखान स सम्भ्रान्तः पूर्व्ववैरमनुस्मरन् ।
स भीमं पञ्चभिर्व्विद्ध्वा राधेयः प्रहसन्निव । पुनर्व्विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ।

अविचिन्त्याथ तान् बाणान् कर्णेनास्तान् वृकोदरः । रणे विव्याध राधेयं शतेनानतपर्व्वणां ।
पुनश्च विशिखैस्तीक्ष्णैर्व्विद्धा मर्म्मसु पञ्चभिः । धनुश्चिच्छेद भल्लेन सूतपुत्रस्य मारिष । ॥५५८०
अथान्यद्धनुरादाय कर्णो भारत दुर्म्मनाः । इषुभिश्छादयामास भीमसेनं समन्ततः ।
तस्य भीमो हयान् हत्वा विनिहत्य च सारथिं । प्रजहास महाहासं कृते प्रतिकृते पुनः ।
इषुभिः कार्म्मुकञ्चास्य चकर्त्त पुरुषर्षभः । तत्पपात महाराज स्वर्णपृष्ठं महास्वनं ।
अवारोहद्रथात्तस्मादथ कर्णो महारथः । गदां गृहीत्वा समरे भीमाय प्राहिणोद्रुषा ।
तामापतन्तीं सहसा गदां दृष्ट्वा वृकोदरः । शरैरवारयद्राजन् सर्व्वसैन्यस्य पश्यतः । ॥५५८५
ततो बाणसहस्राणि प्रेषयामास पाण्डवः । सूतपुत्रवधाकाङ्क्षी त्वरमाणः पराक्रमी ।
तानिषूनिषुभिः कर्णो वारयित्वा महामृधे । कवचं भीमसेनस्य पातयामास सायकैः ।
अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् । पश्यतां सर्व्वसैन्यानां तदद्भुतमिवाभवत् ।
ततो भीमो महाराज नवभिर्नतपर्व्वभिः । प्रेषयामास संक्रुद्धः सूतपुत्रस्य मारिष ।
ते तस्य कवचं भित्त्वा तथा बाहुञ्च दक्षिणं । अभ्ययुर्द्धरणीं तीक्ष्णा वल्मीकमिव पन्नगाः । ॥५५९०
सञ्छाद्यमानो बाणौघैर्भीमसेनधनुश्च्युतैः । पुनरेवाभवत्कर्णो भीमसेनपराङ्मुखः ।
तं पराङ्मुखमालोक्य पदातिं सूतनन्दनं । कौन्तेयशरसञ्छन्नं राजा दुर्य्योधनोऽब्रवीत् ।
त्वरध्वं सर्व्वतो यत्ता राधेयस्य रथम्प्रति । ततस्तव सुता राजन् श्रुत्वा भ्रातुर्व्वचोऽद्भुतं ।
अभ्ययुः पाण्डवं युद्धे विसृजन्तः शिलीमुखान् । चित्रोपचित्रश्चित्राक्षश्चारुचित्रः शरासनः ।
चित्रायुधश्चित्रवर्म्मा समरे चित्रयोधिनः । तानापतत एवाशु भीमसेनो महारथः । ॥५५९५
एकैकेन शरेणाजौ पातयामास ते सुतान् । ते हता न्यपतन् भूमौ वातरुग्णा इव द्रुमाः ।
दृष्ट्वा विनिहतान् पुत्रांस्तव राजन् महारथान् । अश्रुपूर्णमुखः कर्णः क्षत्तुः सस्मार तद्वचः ।
रथमन्यं समास्थाय विधिवत् कल्पितं पुनः । अभ्ययात् पाण्डवं युद्धे त्वरमाणः पराक्रमी ।
तावन्योऽन्यं शरैर्व्विद्धा स्वर्णपुङ्खैः शिलाशितैः । व्यभ्राजेतां यथा मेघौ संस्यूतौ सूर्य्यरश्मिभिः ।
षट्त्रिंशद्भिस्ततो भल्लैर्न्निशितैस्तिग्मतेजनैः । व्यधमत्कवचं क्रुद्धः सूतपुत्रस्य पाण्डवः । ॥५६००
सूतपुत्रोऽपि कौन्तेयं शरैः सन्नतपर्व्वभिः । पञ्चाशता महाबाहुर्व्विव्याध भरतर्षभ ।
रक्तचन्दनदिग्धाङ्गौ शरैः कृतमहाव्रणौ । शोणिताक्तौ व्यराजेतां कालसूर्य्याविवोदितौ ।
तौ शोणितोक्षितैर्गात्रैः शरैश्छिन्नतनुच्छदौ । कर्णभीमौ व्यराजेतां निर्म्मुक्ताविव पन्नगौ ।
व्याघ्राविव नरव्याघ्रौ दंष्ट्राभिरितरेतरं । शरधाराम्बुदौ वीरौ मेघाविव ववर्षतुः ।
वारणाविव चान्योऽन्यं विषाणाभ्यामरिन्दमौ । निर्भिन्दन्तौ स्वगात्राणि सायकैश्चारुरेजतुः । ॥५६०५
नादयन्तौ प्रवर्षन्तौ विक्रीडन्तौ परस्परं । मण्डलानि विकुर्व्वाणौ रथाभ्यां रथसत्तमौ ।
वृषाविव च नर्दन्तौ बलिनौ वाशितान्तरे । सिंहाविव पराक्रान्तौ नरसिंहौ महाबलौ ।
परस्परं वीक्षमाणौ क्रोधसंरक्तलोचनौ । युयुधाते महावीर्य्यौ शक्रवैरोचनी यथा ।

ततो भीमो महाबाहुर्भुजाभ्यां व्याक्षिपन् धनुः । व्यरोचत रणे भीमः सविद्युदिव तोयदः ।
स चापघोषस्तनितः शरधारासुगो महान् । भीममेघो महाराज कर्णपर्व्वतमावृणोत् । ५११०
ततः शरसहस्रेण धनुर्मुक्तेन भारत । पाण्डवो व्यकिरत् कर्णं भीमो भीमपराक्रमः ।
तथापश्यंस्तव सुता भीमसेनस्य विक्रमं । सुपुङ्खैः कङ्कवासोभिर्यत् कर्णं छादयच्छरैः ।
स नन्दयन् रणे पार्थं केशवञ्च यशस्विनं । सात्यकिञ्चक्ररक्षौ च भीमः कर्णमयोधयत् ।
विक्रमं भुजयोर्वीर्यं धैर्य्यञ्च विदितात्मनः । पुत्त्रास्तव महाराज दृष्ट्वा विमनसोऽभवन् ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि भीमयुद्धे षट्‌विंशदधिकशततमोऽध्यायः ॥ १२६ ॥
॥ सञ्जय उवाच ॥ भीमसेनस्य राधेयः श्रुत्वा ज्यातलनिस्वनं । नामृष्यत यथा मत्तो गजः प्रतिगजस्वनं । ५११५
सोऽपक्रम्य मुहूर्त्तन्तु भीमसेनस्य गोचरात् । पुत्त्रांस्तव ददर्शाथ भीमसेनेन पातितान् ।
तानवेक्ष्य नरश्रेष्ठ विमना दुःखितस्तदा । निःश्वसन् दीर्घमुष्णञ्च पुनः पाण्डवमभ्ययात् ।
स ताम्रनयनः क्रोधात् श्वसन्निव महोरगः । बभौ कर्णः शरानस्यन् रश्मिवानिव भास्करः ।
रश्मिजालैरिवार्कस्य विततैर्भरतर्षभ । कर्णचापच्युतैर्व्वाणैः प्राच्छाद्यत वृकोदरः ।
कर्णचापच्युताश्चित्राः शरा बर्हिणवाससः । विविशुः सर्व्वतः पार्थं वासायेवाण्डजा द्रुमं । ५१२०
कर्णचापच्युता बाणाः सम्पतन्तस्ततस्ततः । रुक्मपुङ्खा व्यराजन्त हंसाः श्रेणीकृता इव ।
चापध्वजोपस्करेभ्यश्छत्रादीषामुखात् ध्वजात् । प्रभवन्तो व्यदृश्यन्त राजन्नाधिरथेः शराः ।
खं पूरयन्महावेगान् खगमान् गृध्रवाससः । सुवर्णविकृतांश्चित्रान्मुमोचाधिरथिः शरान् ।
तमन्तकमिवायत्तमापतन्तं वृकोदरः । त्यक्त्वा प्राणानतिक्रम्य विव्याध नवभिः शरैः ।
तस्य वेगमसह्यञ्च दृष्ट्वा कर्णस्य पाण्डवः । महतश्च शरौघांस्तान्नैवाव्यथत वीर्य्यवान् । ५१२५
ततो विव्याधाधिरथेः शरजालानि पाण्डवः । विव्याध कर्णं विंशत्या पुनरन्यैः शितैः शरैः ।
यथैव हि शरैः पार्थः सूतपुत्त्रेण छादितः । तथैव स रणे कर्णं छादयामास पाण्डवः ।
दृष्ट्वा तु भीमसेनस्य विक्रमं युधि भारत । अभ्यनन्दंस्त्वदीयाश्च संप्रहृष्टाश्च चारणाः ।
भूरिश्रवाः कृपो द्रौणिर्मद्रराजो जयद्रथः । उत्तमौजा युधामन्युः सात्यकिः केशवार्ज्जुनौ ।
कुरुपाण्डवप्रवरा दश राजन्महारथाः । साधु साध्विति वेगेन सिंहनादमथानदन् । ५१३०
तस्मिंस्तु तुमुले शब्दे प्रवृत्ते लोमहर्षणे । अभ्यभाषत पुत्त्रांस्ते राजा दुर्य्योधनस्त्वरन् ।
राज्ञः स राजपुत्त्रांश्च सोदरांश्च विशेषतः । कर्णं गच्छत भद्रं वः परीप्सन्तो वृकोदरात् ।
पुरा निघ्नन्ति राधेयं भीमचापच्युताः शराः । ते यतध्वं महेष्वासाः सूतपुत्त्रस्य रक्षणे ।
दुर्य्योधनसमादिष्टाः सोदर्य्याः सप्त मारिष । भीमसेनमभिद्रुत्य संरब्धाः पर्य्यवारयन् ।
ते समासाद्य कौन्तेयमावृण्वञ्छरवृष्टिभिः । पर्व्वतं वारिधाराभिः प्रावृषीव बलाहकाः । ५१३५
तेऽपीडयन् भीमसेनं क्रुद्धाः सप्त महारथाः । प्रजासंहरणे राजन् सोमं सप्त ग्रहा इव ।
ततो वामेन कौन्तेयः पीडयित्वा शरासनं । मुष्टिना पाण्डवो राजन् दृढेन सुपरिष्कृतं ।

मनुष्यसमतां ज्ञात्वा सप्त सन्धाय सायकान्। तेभ्यो व्यसृजदायस्तः सूर्य्यरश्मिनिभान् प्रभुः।
निरस्यन्निव देहेभ्यस्तनयानामसूंस्तव। भीमसेनो महाराज पूर्व्ववैरमनुस्मरन्।
ते क्षिप्ता भीमसेनेन शरा भारत भारतान्। विदार्य्य खं समुत्पेतुः स्वर्णपुङ्खाः शिलाशिताः। ५९४०
तेषां विदार्य्य चेतांसि शरा हेमविभूषिताः। व्यराजन्त महाराज सुपर्णा इव खेचराः।
शोणितादिग्धराजाग्रास्तप्तहेमपरिष्कृताः। पुत्राणां तव राजेन्द्र पीत्वा शोणितमुद्गताः।
ते शरैर्भिन्नमर्म्माणो रथेभ्यः प्रापतन् क्षितौ। गिरिसानुरुहा भग्ना द्विपेनेव महाद्रुमाः।
शत्रुञ्जयः शत्रुसहश्चित्रश्चित्रायुधो दृढः। चित्रसेनो विकर्णश्च सप्तैते विनिपातिताः।
पुत्राणां तव सर्व्वेषां निहतानां वृकोदरः। शोचत्यतिभृशं दुःखाद्विकर्णं पाण्डवः प्रियं। ५९४५
प्रतिज्ञेयं मया दत्ता निहन्तव्यास्तु संयुगे। विकर्ण तेनासि हतः प्रतिज्ञा रक्षिता मया।
त्वमागाः सङ्गरं वीर क्षात्रं धर्म्ममनुस्मरन्। विशेषतोऽपि नृपतेस्तथाऽस्माकं हिते रतः।
न्यायतो न्यायतो नैवमेकः शोको महाद्युतिः। तान्निहत्य महाराज राधेयस्यैव पश्यतः।
सिंहनादरवं घोरमसृजत् पाण्डुनन्दनः। स रवस्तस्य शूरस्य धर्म्मराजस्य भारत।
आचख्याविव तद्युद्धं विजयञ्चात्मनो महत्। श्रुत्वा तं सुमहानादं भीमसेनस्य धन्विनः। ५९५०
बभूव परमा प्रीतिर्धर्म्मराजस्य संयुगे। ततो हृष्टो महाराज वादित्राणां महास्वनैः।
सिंहनादरवं भ्रातुः प्रतिजग्राह पाण्डवः। अभ्ययात् समरे द्रोणं सर्व्वशस्त्रविदाम्वरः।
हर्षेण महता युक्तः कृतसंज्ञे वृकोदरे। एकत्रिंशन्महाराज पुत्रांस्तव निपातितान्।
हतान् दुर्य्योधनो दृष्ट्वा क्षत्तुः सस्मार तद्वचः। तदिदं समनुप्राप्तं क्षत्तुर्हितकरं वचः।
इति सञ्चिन्त्य राजाऽसौ नोत्तरम्प्रत्यपद्यत। यत् द्यूतकाले दुर्बुद्धिरब्रवीत्तनयस्तव। ५९५५
सभामानाय्य पाञ्चालीं कर्णेन सहितोऽल्पधीः। यच्च कर्णोऽब्रवीत् कृष्णां सभायां परुषं वचः।
प्रमुखे पाण्डुपुत्राणां तव चैव विशाम्पते। शृण्वतस्तव राजेन्द्र कौरवाणाञ्च सर्व्वशः।
विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः। पतिमन्यं वृणुष्वेति तस्येदं फलमागतं।
यच्च षण्ढतिलादीनि परुषाणि तवात्मजैः। श्रावितास्ते महात्मानः पाण्डवाः कोपयिष्णुभिः।
तं भीमसेनः क्रोधाग्निं त्रयोदशसमाः स्थितं। विसृजंस्तव पुत्राणामन्तं गच्छति कौरवः। ५९६०
विलपंश्च बहु क्षत्ता शमं नालभत त्वयि। सपुत्रो भरतश्रेष्ठ तस्य भुङ्क्ष्व फलोदयं।
त्वया वृद्धेन धीरेण कार्य्यतत्त्वार्थदर्शिना। न कृतं सुहृदां वाक्यं दैवमत्र परायणं।
तस्माच्छुचो नरव्याघ्र तवैवापनयो महान्। विनाशहेतुः पुत्राणां भवानेव मतो मम।
हतो विकर्णो राजेन्द्र चित्रसेनश्च वीर्य्यवान्। प्रवराश्चात्मजानां ते सुताश्चान्ये महारथाः।
यानन्यान् ददृशे भीमश्चक्षुर्व्विषयमागतान्। पुत्रांस्तव महाबाहो त्वरया तान् जघान ह। ५९६५
त्वत्कृतेऽप्यहमद्राक्षं दह्यमानां वरूथिनीं। सहस्रशः शरैर्मुक्तैः पाण्डवेन वृषेण च।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि भीमयुद्धे सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

॥ धृतराष्ट्र उवाच ॥ महानपनयः सूत ममैवात्र विशेषतः । स इदानीमनुप्राप्तो मन्ये सञ्जय शोचतः ।
यद्गतं तद्गतमिति ममासीन्मनसि स्थितं । इदानीमत्र किं कार्य्यं प्रकरिष्यामि सञ्जय ।
यथा ह्येष क्षयो वृत्तो ममापनयसम्भवः । वीराणां तन्ममाचक्ष्व स्थिरीभूतोऽस्मि सञ्जय ।
॥ सञ्जय उवाच ॥ कर्णभीमौ महाराज पराक्रान्तौ महाहवे । बाणवर्षाण्यवर्षेतां वृष्टिमन्ताविवाम्बुदौ ।　५९७०
भीमसेनाङ्किता बाणाः स्वर्णपुङ्खाः शिलाशिताः । विविशुः कर्णमासाद्य भिन्दन्त इव जीवितं ।
तथैव कर्णनिर्मुक्तैः सविषैरिव पन्नगैः । आकीर्य्यत रणे भीमः शतशोऽथ सहस्रशः ।
तयोः शरैर्महाराज सम्पतद्भिः समन्ततः । बभूव तव सैन्यानां सङ्क्षोभः सागरोपमः ।
भीमचापच्युतैर्ब्बाणैस्तव सैन्यमरिन्दम । अवध्यत चमूमध्ये घोरैराशीविषोपमैः ।
वारणैः पतितै राजन् वाजिभिश्च नरैः सह । अदृश्यत मही कीर्णा वातभग्नैरिव द्रुमैः ।　५९७५
ते वध्यमानाः समरे भीमचापच्युतैः शरैः । प्राद्रवंस्तावका योधाः किमेतदिति चाब्रुवन् ।
ततो व्युदस्तं तत्सैन्यं सिन्धुसौवीरकौरवं । प्रोत्सारितं महावेगैः कर्णपाण्डवयोः शरैः ।
ते शूरा हतभूयिष्ठा हताश्वहतवारणाः । उत्सृज्य भीमं कर्णञ्च व्यद्रवन् सर्व्वतो दिशः ।
नूनं पार्थार्थमेवास्मान्मोहयन्ति दिवौकसः । यत् कर्णभीमप्रभवैर्व्वध्यते नो बलं शरैः ।
एवं ब्रुवाणा योधास्ते तावका भयपीडिताः । शरपातं समुत्सृज्य स्थिता युद्धदिदृक्षवः ।　५९८०
ततः प्रावर्त्तत नदी घोररूपा रणाजिरे । शूराणां हर्षजननी भीरूणां भयवर्द्धिनी ।
वारणाश्वमनुष्याणां रुधिरौघसमुद्भवा । संवृता गतसत्त्वैश्च मनुष्यगजवाजिभिः ।
सानुकर्षपताकैश्च द्विपाश्वरथभूषणैः । स्यन्दनैरपविद्धैश्च भग्नचक्राक्षकूवरैः ।
जातरूपपरिष्कारैर्धनुर्भिः सुमहास्वनैः । सुवर्णपुङ्खैरिषुभिर्नाराचैश्च सहस्रशः ।
कर्णपाण्डवनिर्मुक्तैर्निर्मुक्तैरिव पन्नगैः । प्रासतोमरसङ्घातैः खड्गैश्च सपरश्वधैः ।　५९८५
सुवर्णविकृतैश्चापि गदामुसलपट्टिशैः । वज्रैश्च विविधाकारैः शक्तिभिः परिघैरपि ।
शतघ्नीभिश्च चित्राभिर्ब्बभौ भारत मेदिनी । कनकाङ्गदहारैश्च कुण्डलैर्मुकुटैस्तथा ।
वलयैरपविद्धैश्च तथैवाङ्गुलिवेष्टकैः । चूडामणिभिरुष्णीषैः स्वर्णसूत्रैश्च मारिष ।
तनुत्रैः सतलत्रैश्च हारैर्निष्कैश्च भारत । वस्त्रैश्छत्रैश्च विध्वस्तैश्चामरव्यजनैरपि ।
गजाश्वमनुजैर्भिन्नैः शोणिताक्तैश्च पत्त्रिभिः । तैस्तैश्च विविधैर्भिन्नैस्तत्र तत्र वसुन्धरा ।　५९९०
पतितैरपविद्धैश्च विबभौ द्यौरिव ग्रहैः । अचिन्त्यमद्भुतञ्चैव तयोः कर्म्मातिमानुषं ।
दृष्ट्वा चारणसिद्धानां विस्मयः समजायत । अग्नेर्व्वायुसहायस्य गतिः कक्ष इवाहवे ।
आसीद्भीमसहायस्य रौद्रमाधिरथेर्गतं । निपातितध्वजरथं हतवाजिनरद्विपं ।
गजाभ्यां सम्प्रयुक्ताभ्यामासीन्नलवनं यथा । मेघजालनिभं सैन्यमासीत्तव नराधिप ।
विमर्द्दः कर्णभीमाभ्यामासीच्च परमो रणे ।　५९९५
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि भीमकर्णयुद्धेऽष्टविंशदधिकशततोऽध्यायः ॥ १२८ ॥

॥ सञ्जय उवाच ॥ ततः कर्णो महाराज भीमं विद्धा त्रिभिः शरैः । मुमोच शरवर्षाणि विचित्राणि बहूनि च ।
वध्यमानो महाबाहुः सूतपुत्रेण पाण्डवः । न विव्यथे भीमसेनो भिद्यमान इवाचलः ।
स कर्णं कर्णिना कर्णे पीतेन निशितेन च । विव्याध सुभृशं सङ्ख्ये तैलधौतेन मारिष ।
सकुण्डलं महच्चारु कर्णस्यापातयद्भुवि । तपनीयं महाराज दीप्तं ज्योतिरिवाम्बरात् ।
अथापरेण भल्लेन सूतपुत्रं स्तनान्तरे । आजघान भृशं क्रुद्धो हसन्निव वृकोदरः । ५३००
पुनरस्य त्वरन् भीमो नाराचान्दश भारत । रणे प्रैषीन्महाबाहुर्निर्मुक्ताशीविषोपमान् ।
ते ललाटं विनिर्भिद्य सूतपुत्रस्य मारिष । विविशुश्चोदितास्तेन वल्मीकमिव पन्नगाः ।
ललाटस्थैस्ततो बाणैः सूतपुत्रो व्यरोचत । नीलोत्पलमयीं मालां धारयन् वै यथा पुरा ।
सोऽतिविद्धो भृशं कर्णः पाण्डवेन तरस्विना । रथकूवरमालम्ब्य न्यमीलयत लोचने ।
स मुहूर्त्तात् पुनः संज्ञां लब्ध्वा कर्णः परन्तपः । रुधिरोक्षितसर्व्वाङ्गः क्रोधमाहारयत् परं । ५३०५
ततः क्रुद्धो रणे कर्णः पीडितो दृढधन्वना । वेगञ्चक्रे महावेगो भीमसेनरथम्प्रति ।
तस्मै कर्णः शतं राजन्निषूणां गार्द्धवाससां । अमर्षी बलवान् क्रुद्धः प्रेषयामास भारत ।
ततः प्रासृजदुग्राणि शरवर्षाणि पाण्डवः । समरे तमनादृत्य तस्य वीर्य्यमचिन्तयन् ।
कर्णस्ततो महाराज पाण्डवं नवभिः शरैः । आजघानोरसि क्रुद्धः क्रुद्धरूपं परन्तप ।
तावुभौ नरशार्दूलौ शार्दूलाविव दंष्ट्रिणौ । जीमूताविव चान्योऽन्यं प्रववर्षतुराहवे । ५३१०
तलशब्दरवैश्चैव त्रासयेतां परस्परं । शरजालैश्च विविधैस्त्रासयामासतुर्मृधे ।
अन्योऽन्यं समरे क्रुद्धौ कृतप्रतिकृतैषिणौ । ततो भीमो महाबाहुः सूतपुत्रस्य भारत ।
क्षुरप्रेण धनुश्छित्वा ननाद परवीरहा । तदपास्य धनुश्छिन्नं सूतपुत्रो महारथः ।
अन्यत् कार्मुकमादत्त भारघ्नं वेगवत्तरं । दृष्ट्वा सकुरुसौवीरसिन्धुवीरबलक्षयं ।
सवर्म्मध्वजशस्त्रैश्च पतितैः संवृतां महीं । हस्त्यश्वरथदेहांश्च गतासून् प्रेक्ष्य सर्व्वतः । ५३१५
सूतपुत्रस्य संरम्भाद्दीप्तं वपुरजायत । स विस्फार्य्य महच्चापं कार्त्तस्वरविभूषितं ।
भीमं प्रैक्षत राधेयो राजन् घोरेण चक्षुषा । ततः क्रुद्धः शरानस्यन् सूतपुत्रो व्यरोचत ।
मध्यन्दिनगतोऽर्च्चिष्मान् शरदीव दिवाकरः । मरीचिविकचस्येव राजन् भानुमतो वपुः ।
आसीदाधिरथेर्घोरं वपुः शरशताचितं । कराभ्यामाददानस्य सन्दधानस्य चाशुगान् ।
कर्षतो मुञ्चतो बाणान्नान्तरं ददृशे रणे । अग्निचक्रोपमं घोरं मण्डलीकृतमायुधं । ५३२०
कर्णस्यासीन्महीपाल सव्यदक्षिणमस्यतः । स्वर्णपुङ्खाः सुनिशिताः कर्णचापच्युताः शराः ।
प्राच्छादयन्महाराज दिशः सूर्य्यस्य च प्रभाः । ततः कनकपुङ्खानां शराणां नतपर्व्वणां ।
धनुश्च्युतानां वियति ददृशे बहुधा व्रजः । बाणासनादाधिरथेः प्रभवन्ति स्म सायकाः ।
श्रेणीकृता व्यरोचन्त राजन् क्रौञ्चा इवाम्बरे । गार्द्धपत्राञ्छिलाधौतान् कार्त्तस्वरविभूषितान् ।
महावेगान् प्रदीप्ताग्रान्मुमोचाधिरथिः शरान् । ते तु चापबलोद्धूताः शातकुम्भविभूषिताः । ५३२५

अजस्रमपतन् बाणा भीमसेनरथम्प्रति। ते व्योम्नि रुक्मविकृता व्यकाशन्त सहस्रशः।
शलभानामिव व्राताः शराः कर्णसमीरिताः। चापाद्राधिरथेर्बाणाः प्रपतन्तश्चकाशिरे।
एको दीर्घ इवात्यर्थमाकाशे संस्थितः शरः। पर्व्वतं वारिधाराभिश्छादयन्निव तोयदः।
कर्णः प्राच्छादयत् क्रुद्धो भीमं सायकवृष्टिभिः। तत्र भारत भीमस्य बलं वीर्य्यं पराक्रमं।
व्यवसायञ्च पुत्रास्ते ददृशुः सहसैनिकाः। तां समुद्रमिवोद्धूतं शरवृष्टिं समुत्थितां। ५०३०
अचिन्तयित्वा भीमस्तु क्रुद्धः कर्णमुपाद्रवत्। रुक्मपृष्ठं महच्चापं भीमस्यासीद्विशाम्पते।
आकर्षान्मण्डलीभूतं शक्रचापमिवापरं। तस्माच्छराः प्रादुरासन् पूरयन्त इवाम्बरं।
सुवर्णपुङ्खैर्भीमेन सायकैर्नतपर्व्वभिः। गगने रचिता माला काञ्चनीव व्यरोचत।
ततो व्योम्नि विषक्तानि शरजालानि भागशः। आहतानि व्यशीर्य्यन्त भीमसेनस्य पत्रिभिः।
कर्णस्य शरजालौघैर्भीमसेनस्य चोभयोः। अग्निस्फुलिङ्गसंस्पर्शैरञ्जोगतिभिराहवे। ५०३५
तैस्तैः कनकपुङ्खानां द्यौरासीत् संवृता शरैः। नस्म सूर्य्यस्तदा भाति नस्म वाति समीरणः।
शरजालावृते व्योम्नि न प्राज्ञायत किञ्चन। स भीमं छादयन् बाणैः सूतपुत्रः पृथग्विधैः।
उपारोहदनादृत्य तस्य वीर्य्यं महात्मनः। तयोर्विसृजतोस्तत्र शरजालानि मारिष।
वायुभूतान्यदृश्यन्त संसक्तानीतरेतरं। अन्योऽन्यशरसंस्पर्शात्तयोर्मनुजसिंहयोः।
आकाशे भारतश्रेष्ठ पावकः समजायत। तथा कर्णः शितान् बाणान् कर्म्मारपरिमार्ज्जितान्। ५०४०
सुवर्णविकृतान् क्रुद्धः प्राहिणोद्वधकाङ्क्षया। तानन्तरीक्षे विशिखैस्त्रिधैकैकमशातयत्।
विशेषयन् सूतपुत्रं भीमस्तिष्ठेति चाब्रवीत्। पुनश्चासृजदुग्राणि शरवर्षाणि पाण्डवः।
अमर्षी बलवान् क्रुद्धो दिधक्षन्निव पावकः। ततश्चटचटाशब्दो गोधाघातादभूत्तयोः।
तलशब्दश्च सुमहान् सिंहनादश्च भैरवः। रथनेमिनिनादश्च ज्याशब्दश्चैव दारुणः।
योधा व्युपारमन् युद्धाद्दिदृक्षन्तः पराक्रमं। कर्णपाण्डवयो राजन् परस्परवधैषिणोः। ५०४५
देवर्षिसिद्धगन्धर्व्वाः साधु साध्वित्यपूजयन्। मुमुचुः पुष्पवर्षञ्च विद्याधरगणास्तथा।
ततो भीमो महाबाहुः संरम्भी दृढविक्रमः। अस्त्रैरस्त्राणि संवार्य्य शरैर्विव्याध सूतजं।
कर्णोऽपि भीमसेनस्य निवार्य्येषून्महाबलः। प्राहिणोन्नव नाराचानाशीविषसमान् रणे।
तावद्भिरथ तान् भीमो व्योम्नि चिच्छेद पत्रिभिः। नाराचान् सूतपुत्रस्य तिष्ठ तिष्ठेति चाब्रवीत्।
ततो भीमो महाबाहुः शरं क्रुद्धोऽन्तकोपमं। मुमोचाधिरथेर्व्वीरो यमदण्डमिवापरं। ५०५०
तमापतन्तं चिच्छेद राधेयः प्रहसन्निव। त्रिभिः शरैः शरं राजन् पाण्डवस्य प्रतापवान्।
पुनश्चासृजदुग्राणि शरवर्षाणि पाण्डवः। तस्य तान्याददे कर्णः सर्व्वाण्यस्त्राण्यभीतवत्।
युध्यमानस्य भीमस्य सूतपुत्रोऽस्त्रमायया। तस्येषुधी धनुर्ज्याञ्च बाणैः सन्नतपर्व्वभिः।
रश्मीन् योक्त्राणि चाश्वानां क्रुद्धः कर्णोऽच्छिनन्मृधे। तस्याश्वांश्च पुनर्हत्वा सूतं विव्याध पञ्चभिः।
सोऽपसृत्य द्रुतं सूतो युधामन्योरथं ययौ। विहसन्निव भीमस्य क्रुद्धः कालानलद्युतिः। ५०५५

ध्वजञ्चिच्छेद राधेयः पताकाञ्च न्यपातयत् । स विध्वा महाबाहुरथ शक्तिं पराम्रशत् ।
तामवासृजदाविध्य क्रुद्धः कर्णरथम्प्रति । तामाधिरथिरायस्तां शक्तिं कनकभूषणां ।
आपतन्तीं महोल्काभां चिच्छेद दशभिः शरैः । साऽपतद्दशधा छिन्ना कर्णस्य निशितैः शरैः ।
अस्यतः सूतपुत्रस्य मित्रार्थे चित्रयोधिनः । स चर्म्माऽऽदत्त कौन्तेयो जातरूपपरिष्कृतं ।
खड्गञ्चान्यतरं प्रेप्सुर्मृत्योरग्रे जयस्य वा । तदस्य तरसा कर्णो व्यधमच्चर्म्म सुप्रभं । ५०६०
शरैर्बहुभिरत्युग्रैः प्रहसन्निव भारत । स विचर्म्मा महाराज विरथः क्रोधमूर्च्छितः ।
असिं प्रासृजदत्युग्रं त्वरन् कर्णरथम्प्रति । स धनुः सूतपुत्रस्य सज्यं छित्वा महानसिः ।
पपात भुवि राजेन्द्र क्रुद्धः सर्प इवाम्बरात् । ततः प्रहस्याधिरथिरन्यदादाय कार्म्मुकं ।
शत्रुघ्नं समरे क्रुद्धो दृढज्यं वेगवत्तरं । व्यायच्छत शरान् कर्णः कुन्तीपुत्रजिघांसया ।
सहस्रशो महाराज रुक्मपुङ्खान् सुतेजनान् । स वध्यमानो बलवान् कर्णचापच्युतैः शरैः । ५०६५
वैहायसम्प्राक्रमदै कर्णस्य व्यथयन्मनः । स तस्य चरितं दृष्ट्वा सङ्ग्रामे विजयैषिणः ।
वञ्चमास्थाय राधेयो भीमसेनमवञ्चयत् । तञ्च दृष्ट्वा रथोपस्थे निलीनं व्यथितेन्द्रियं ।
ध्वजमस्य समारुह्य तस्थौ भीमो महीतले । तदस्य कुरवः सर्व्वे चारणाश्चाप्यपूजयन् ।
यदियेष रथात् कर्णं हर्त्तुं तार्क्ष्य इवोरगं । स च्छिन्नधन्वा विरथः स्वधर्म्ममनुपालयन् ।
स्वरथं पृष्ठतः कृत्वा युद्धायैव व्यवस्थितः । तद्विहत्यास्य राधेयस्तत एनं समभ्ययात् । ५०७०
संरम्भात् पाण्डवं सङ्ख्ये युद्धाय समुपस्थितं । तौ समेतौ महाराज स्पर्द्धमानौ महाबलौ ।
जीमूता इव घर्म्मान्ते गर्जमानौ नरर्षभौ । तयोरासीत् सम्प्रहारः क्रुद्धयोर्नरसिंहयोः ।
अमृष्यमाणयोः सङ्ख्ये देवदानवयोरिव । क्षीणशस्त्रस्तु कौन्तेयः कर्णेन समभिद्रुतः ।
दृष्ट्वाऽर्ज्जुनहतान्नागान् पतितान् पर्व्वतोपमान् । रथमार्गविघातार्थं व्यायुधः प्रविवेश ह ।
हस्तिनां व्रजमासाद्य रथदुर्गं प्रविश्य च । पाण्डवो जीविताकाङ्क्षी राधेयं नाभ्यहारयत् । ५०७५
व्यवस्थानमथाकाङ्क्षन् धनञ्जयशरैर्हतं । उद्यम्य कुञ्जरं पार्थस्तस्थौ परपुरञ्जयः ।
महौषधिसमायुक्तं हनूमानिव पर्व्वतं । तमस्य विशिखैः कर्णो व्यधमत् कुञ्जरं पुनः ।
हस्त्यङ्गान्यथ कर्णाय प्राहिणोत् पाण्डुनन्दनः । चक्राण्यश्वांस्तथा चान्यद्यत् पश्यति भूतले ।
तत्तदादाय चिक्षेप क्रुद्धः कर्णाय पाण्डवः । तदस्य सर्व्वं चिच्छेद क्षिप्तं क्षिप्तं शितैः शरैः ।
भीमोऽपि मुष्टिमुद्यम्य वज्रगर्भं सुदारुणं । हन्तुमिच्छन् सूतपुत्रं संस्मरन्नर्ज्जुनं क्षणात् । ५०८०
शक्तोऽपि नावधीत् कर्णं समर्थः पाण्डुनन्दनः । रक्षमाणः प्रतिज्ञां तां या कृता सव्यसाचिना ।
तमेव व्याकुलं भीमं भूयो भूयः शितैः शरैः । मूर्च्छयाभिपरीताङ्गमकरोत् सूतनन्दनः ।
व्यायुधं नावधीच्चैनं कर्णः कुन्त्या वचः स्मरन् । धनुषोऽग्रेण तं कर्णः समभिद्रुत्य पस्पृशत् ।
धनुषा स्पृष्टमात्रेण क्रुद्धः सर्प इव श्वसन् । आच्छिद्य स धनुस्तस्य कर्णं मूर्द्धन्यताडयत् ।
ताडितो भीमसेनेन क्रोधाद्रक्तान्तलोचनः । विहसन्निव राधेयो वाक्यमेतदुवाच ह । ५०८५

पुनः पुनस्तूवरक मूढौदरिक इति च । अकृतास्त्रक मा योत्सीर्बाल संग्रामकातर ।
यत्र भोज्यं बहुविधं भक्ष्यं पेयञ्च पाण्डव । तत्र त्वं दुर्मते योग्यो न युद्धेषु कथञ्चन ।
मूलपुष्पफलाहारो व्रतेषु नियमेषु च । उचितस्त्वं वने भीम न त्वं युद्धविशारदः ।
क्व युद्धं क्व मुनित्वञ्च वनं गच्छ वृकोदर । न त्वं युद्धोचितस्तात वनवासरतिर्भव ।
सूदान् भृत्यजनान्दासांस्त्वं गृहे त्वरयन् भृशं । योग्यस्ताडयितुं क्रोधात् भोजनार्थं वृकोदर । ५७९०
मुनिर्भूत्वाऽथ वा भीम फलान्याहर त्वं दुर्मते । वनाय व्रज कौन्तेय न त्वं युद्धविशारदः ।
फलमूलाशने युक्तस्त्वं तथाऽतिथिपूजने । न त्वां शस्त्रसमुद्योगे योग्यं मन्ये वृकोदर ।
कौमारे यानि वृत्तानि विप्रियाणि विशाम्पते । तानि सर्व्वाणि चाप्येनं रूक्षाण्यश्रावयद्भृशं ।
अथैनं तत्र संलीनमस्पृशद्धनुषा पुनः । प्रहसंश्च पुनर्व्वाक्यं भीममाह वृषस्तदा ।
योद्धव्यं मारिषान्यत्र न योद्धव्यन्तु मादृशैः । मादृशैर्युध्यमानानामेतच्चान्यच्च विद्यते । ५७९५
गच्छ वा यत्र तौ कृष्णौ तौ त्वां रक्षिष्यतो रणे । गृहं वा गच्छ कौन्तेय किन्ते युद्धेन बालक ।
कर्णस्य वचनं श्रुत्वा भीमसेनोऽतिदारुणं । उवाच कर्णं प्रहसन् सर्व्वेषां शृण्वतां वचः ।
जितस्त्वमसकृद्दुष्ट कत्थसे किं वृथात्मना । जयाजयौ महेन्द्रस्य लोके दृष्टौ पुरातनैः ।
मल्लयुद्धं मया सार्द्धं कुरु दुष्कुलसम्भव । महाबलो महाभोगी कीचको निहतो यथा ।
तथा त्वां घातयिष्यामि पश्यत्सु सर्व्वराजसु । भीमस्य मतमाज्ञाय कर्णो बुद्धिमताम्वरः । ५८००
विरराम रणात्तस्मात् पश्यतां सर्व्वधन्विनां । एवं तं विरथं कृत्वा कर्णो राजन् व्यकत्थत ।
प्रमुखे वृष्णिसिंहस्य पार्थस्य च महात्मनः । ततो राजन् शिलाधौतान् शरान् शाखामृगध्वजः ।
प्राहिणोत् सूतपुत्राय केशवेन प्रचोदितः । ततः पार्थभुजोत्सृष्टाः शराः कनकभूषणाः ।
गाण्डीवप्रभवाः कर्णं हंसाः क्रौञ्चमिवाविशन् । स भुजङ्गैरिवाविद्धो गाण्डीवप्रेषितैः शरैः ।
भीमसेनादपासेधत् सूतपुत्रं धनञ्जयः । स छिन्नधन्वा भीमेन धनञ्जयशराहतः । ५८०५
कर्णो भीमादपायासीद्रथेन महता द्रुतं । भीमोऽपि सात्यकेर्व्वाहं समारुह्य नरर्षभ ।
अन्वयाद्भ्रातरं सङ्ख्ये पाण्डवं सव्यसाचिनं । ततः कर्णं समुद्दिश्य त्वरमाणो धनञ्जयः ।
नाराचं क्रोधताम्राक्षः प्रैषीन्मृत्युमिवान्तकः । स गरुत्मानिवाकाशे प्रार्थयन् भुजगोत्तमं ।
नाराचोऽभ्यपतत् कर्णं तूर्णं गाण्डीवचोदितः । तमन्तरीक्षे नाराचं द्रौणिश्चिच्छेद पत्त्रिणा ।
धनञ्जयभयात् कर्णमुज्जिहीर्षुर्महारथः । ततो द्रौणिं चतुःषष्ट्या विव्याध कुपितोऽर्जुनः । ५८१०
शिलीमुखैर्महाराज मा गास्तिष्ठेति चाब्रवीत् । स तु मत्तगजाकीर्णमनीकं रथसङ्कुलं ।
तूर्णमभ्याविशद्द्रौणिर्धनञ्जयशरार्दितः । ततः सुवर्णपृष्ठानां चापानां कूजतां रणे ।
शब्दं गाण्डीवघोषेण कौन्तेयोऽभ्यभवद्बली । धनञ्जयस्तथायान्तं पृष्ठतो द्रौणिमभ्ययात् ।
नातिदीर्घमिवाध्वानं शरैः सन्त्रासयन् बली । विदार्य्य देहान्नाराचैर्नरवारणवाजिनां ।

कङ्कबर्हिणवाजैश्च बलं व्यधमदर्ज्जुनः । तद्बलं भरतश्रेष्ठ सवाजिद्विपमानवं । ५८२५
पाकशासनिरायस्तः पार्थः सन्निजघान ह ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि भीमकर्णयुद्धे एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

॥ धृतराष्ट्र उवाच ॥ अहन्यहनि मे दीप्तं यशः पतति सञ्जय । हता मे बहवो योधा मन्ये कालस्य पर्य्ययं ।
धनञ्जयः सुसंक्रुद्धः प्रविष्टो मामकं बलं । रक्षितं द्रोणकर्णाभ्यामप्रवेश्यं सुरैरपि ।
ताभ्यामूर्ज्जितवीर्य्याभ्यामाप्यायितपराक्रमः । सहितः कृष्णभीमाभ्यां शिनीनामृषभेण च ।
तदा प्रभृति मां शोको दहत्यग्निरिवाशयं । ग्रस्तानिव प्रपश्यामि भूमिपालान् ससैन्धवान् । ५८३०
अप्रियं सुमहत् कृत्वा सिन्धुराजः किरीटिनः । चक्षुर्विषयमापन्नः कथं जीवितमाप्नुयात् ।
अनुमानाच्च पश्यामि नास्ति सञ्जय सैन्धवः । युद्धन्तु तद्यथावृत्तं तन्ममाचक्ष्व तत्त्वतः ।
यच्च विक्षोभ्य महतीं सेनां संलोड्य चासकृत् । एकः प्रविष्टः संक्रुद्धो नलिनीमिव कुञ्जरः ।
तस्य मे वृष्णिवीरस्य ब्रूहि युद्धं यथातथं । धनञ्जयार्थे यत्तस्य कुशलो ह्यसि सञ्जय ।

॥ सञ्जय उवाच ॥ तथातु वैकर्त्तनपीडितं तं भीमं प्रयान्तं पुरुषप्रवीरं । समीक्ष्य राजन्नरवीरमध्ये शिनिप्रवीरोऽनुययौ
रथेन । ५८३५
नदन् यथा वज्रधरस्तपान्ते ज्वलन् यथा जलदान्ते च सूर्य्यः । निघ्नन्नमित्रान् धनुषा दृढेन सङ्कम्पयंस्तव पुत्रस्य सेनां ।
तं यान्तमश्वै रजतप्रकाशैरायोधने नीरदवन्नदन्तं । नाशक्नुवन् वारयितुं तवीयाः सर्व्वे तथा भारत माधवाग्र्यं ।
अमर्षपूर्णस्त्वनिवृत्तयोधी शरासनी काञ्चनवर्म्मधारी । अलम्बुषः सात्यकिं माधवाग्र्यमवारयद्राजवरोऽभिपत्य ।
तयोरभूद्भारत सम्प्रहारो यथाविधो नैव बभूव कश्चित् । प्रैक्षन्त सर्व्वाहवशोभिनौ तौ योधास्त्वदीयाश्च परे च सर्व्वे ।
आविध्यदेनं दशभिः पृषत्कैरलम्बुषो राजवरः प्रसह्य । अनागतानेव तु तान् पृषत्कांश्चिच्छेद बाणैः शिनिपुङ्गवोऽपि । ५८४०
पुनः स बाणैस्त्रिभिरग्निकल्पैराकर्णपूर्णैर्निशितैः सुपुङ्खैः । विव्याध देहावरणं विदार्य्य ते सात्यकेराविविशुः शरीरं ।
तैः कायमस्यानिलवह्निभावैर्व्विदार्य्य बाणैर्निशितैर्ज्वलद्भिः । आजघ्निवांस्तान् रजतप्रकाशानश्वांश्चतुर्भिश्चतुरः प्रसह्य ।
तथा तु तेनाभिहतस्तरस्वी नप्ता शिनेश्चक्रधरप्रभावः । अलम्बुषस्योत्तमवेगवद्भिर्हयांश्चतुर्भिर्न्निजघान बाणैः ।
अथास्य सूतस्य शिरो निकृत्य भल्लेन कालानलसन्निभेन । सकुण्डलं पूर्णशशिप्रकाशं भ्राजिष्णु वक्त्रं विचकर्त्त देहात् ।
निहत्य तं पार्थिवपुत्रपौत्रं सङ्ख्ये यदूनामृषभः प्रमाथी । ततोऽन्वयादर्ज्जुनमेव वीरः सैन्यानि राजंस्तव सन्निवार्य्य । ५८४५
अन्वागतं वृष्णिवीरं समीक्ष्य तथारिमध्ये परिवर्त्तमानं । घ्नन्तं कुरूणामिषुभिर्ब्बलानि पुनः पुनर्व्वायुमिवाभ्र
पूगान् ।
ततोऽवहन् सैन्धवाः साधुदान्ता गोक्षीरकुन्देन्दुहिमप्रकाशाः । सुवर्णजालावतताः सदश्वा यतो यतः कामयते नृसिंहः ।
अथात्मजास्ते सहिताभिपेतुरन्ये च योधास्त्वरितास्त्वदीयाः । कृत्वा मुखं भारत योधमुख्यं दुःशासनं त्वत्सुतमाज
मीढ ।
ते सर्व्वतः सम्परिवार्य्य सङ्ख्ये शैनेयमाजघ्नुरनीकसाहाः । स चापि तान् प्रवरः सात्वतानां न्यवारयद्बाणजालेन वीरः ।

निवार्य्य तांश्छत्रुमर्म्मिघाती नप्ता शिनेः पत्रिभिरग्निकल्पैः । दुःशासनस्याभिजघान वाहानुद्यम्य बाणासनमाजमीढ । ५८४०
ततोऽर्ज्जुनो हर्षमवाप सङ्ख्ये कृष्णस्य दृष्ट्वा पुरुषप्रवीरं ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि म्लेच्छवधे चत्वारिंशदधिकशततोऽध्यायः ॥ १४० ॥
॥ सञ्जय उवाच ॥ तमुद्यतं महाबाहुं दुःशासनरथम्प्रति । त्वरितं त्वरणीयेषु धनञ्जयजयैषिणं ।
त्रिगर्त्तानां महेष्वासाः सुवर्णविकृतध्वजाः । सेनासमुद्रमाविष्टमनन्तं पर्य्यवारयन् ।
अथैनं रथवंशेन सर्व्वतः सन्निवार्य्य ते । अवाकिरञ्छरव्रातैः क्रुद्धाः परमधन्विनः ।
अजयद्राजपुत्रांस्तान् यतमानान्महारणे । एकः पञ्चाशतं शत्रून् सात्यकिः सत्यविक्रमः । ५८४५
सम्प्राप्य भारतीमध्यं तलघोषसमाकुलं । असिशक्तिगदापूर्णमप्लवं सलिलं यथा ।
तत्राद्भुतमपश्याम शैनेयचरितं रणे । प्रतीच्यां दिशि तं दृष्ट्वा प्राच्यां पश्याम लाघवात् ।
उदीचीं दक्षिणां प्राचीं प्रतीचीं विदिशस्तथा । नृत्यन्निवाचरच्छूरो यथा रथशतं तथा ।
तद्दृष्ट्वा चरितं तस्य सिंहविक्रान्तगामिनः । त्रिगर्त्ताः सन्न्यवर्त्तन्त सन्तप्ताः स्वजनम्प्रति ।
तमन्ये शूरसेनानां शूराः सङ्ख्ये न्यवारयन् । नियच्छन्तः शरव्रातैर्मत्तं द्विपमिवाङ्कुशैः । ५८५०
तैर्व्यवाहरदार्य्यात्मा मुहूर्त्तमिव सात्यकिः । ततः कलिङ्गैर्युयुधे सोऽचिन्त्यबलविक्रमः ।
तांश्च सेनामतिक्रम्य कलिङ्गानां दुरत्ययां । अथ पार्थं महाबाहुर्धनञ्जयमुपासरत् ।
तरन्निव जलेऽश्रान्तो यथा स्थलमुपेयिवान् । तं दृष्ट्वा पुरुषव्याघ्रं युयुधानः समाश्वसत् ।
तमायान्तमभिप्रेक्ष्य केशवः पार्थमब्रवीत् । असावायाति शैनेयस्तव पार्थ पदानुगः ।
एष शिष्यः सखा चैव तव सत्यपराक्रमः । सर्व्वान् योधांस्तृणीकृत्य विजिग्ये पुरुषर्षभः । ५८५५
एष कौरवयोधानां कृत्वा घोरमुपद्रवं । तव प्राणैः प्रियतमः किरीटिन्नेति सात्यकिः ।
एष द्रोणं तथा भोजं कृतवर्म्माणमेव च । कदर्थीकृत्य विशिखैः फाल्गुनाभ्येति सात्यकिः ।
धर्म्मराजप्रियान्वेषी हत्वा योधान् वरान् वरान् । शूरश्चैव कृतास्त्रश्च फाल्गुनाभ्येति सात्यकिः ।
कृत्वा सुदुष्करं कर्म्म सैन्यमध्ये महाबलः । तव दर्शनमन्विच्छन् पाण्डवाभ्येति सात्यकिः ।
बहूनेकरथेनाजौ योधयित्वा महारथान् । आचार्य्यप्रमुखान् पार्थ प्रायात्येष स सात्यकिः । ५८६०
स्वबाहुबलमाश्रित्य विदार्य्य च वरूथिनीं । प्रेषितो धर्म्मपुत्रेण पार्थैषोऽभ्येति सात्यकिः ।
यस्य नास्ति समो योधः कौरवेषु कथञ्चन । सोऽयमायाति कौन्तेय सात्यकिर्युद्धदुर्म्मदः ।
कुरुसैन्याद्विमुक्तो वै सिंहो मध्याद्गवामिव । निहत्य बहुलाः सेनाः पार्थैषोऽभ्येति सात्यकिः ।
एष राजसहस्राणां वक्त्रैः पङ्कजसन्निभैः । आस्तीर्य्य वसुधां पार्थ क्षिप्रमायाति सात्यकिः ।
एष दुर्य्योधनं जित्वा भ्रातृभिः सहितं रणे । निहत्य जलसन्धञ्च क्षिप्रमायाति सात्यकिः । ५८६५
रुधिरौघवतीं कृत्वा नदीं शोणितकर्द्दमां । तृणवन्न्यस्य कौरव्यानेष ह्यायाति सात्यकिः ।
ततोऽप्रहृष्टः कौन्तेयः केशवं वाक्यमब्रवीत् । न मे प्रियं महाबाहो यन्मामभ्येति सात्यकिः ।
नहि जानामि वृत्तान्तं धर्म्मराजस्य केशव । सात्वतेन विहीनः स यदि जीवति वा न वा ।

एतेन हि महाबाहो रक्षितव्यः स पार्थिवः । तमेव कथमुत्सृज्य मम कृष्ण पदानुगः ।
राजा द्रोणाय चोत्सृष्टः सैन्धवश्चानिपातितः । प्रत्युद्याति च शैनेयमेष भूरिश्रवा रणे । ५८७०
सोऽयं गुरुतरो भारः सैन्धवार्थे समाहितः । ज्ञातव्यश्च हि मे राजा रक्षितव्यश्च सात्यकिः ।
जयद्रथश्च हन्तव्यो लम्बते च दिवाकरः । श्रान्तश्चैव महाबाहुरल्पप्राणश्च साम्प्रतं ।
परिश्रान्ता हयाश्चास्य हययन्ता च माधव । न च भूरिश्रवाः श्रान्तः ससहायश्च केशव ।
अपीदानीं भवेदस्य क्षेममस्मिन् समागमे । कच्चिन्न सागरं तीर्त्वा सात्यकिः सत्यविक्रमः ।
गोष्पदं प्राप्य सीदेत महौजाः शिनिपुङ्गवः । अपि कौरवमुख्येन कृतास्त्रेण महात्मना । ५८७५
समेत्य भूरिश्रवसा स्वस्तिमान् सात्यकिर्भवेत् । व्यतिक्रममिमं मन्ये धर्मराजस्य केशव ।
आचार्य्याद्भयमुत्सृज्य यः प्रेषयत सात्यकिं । ग्रहणं धर्मराजस्य खगः श्येन इवामिषं ।
नित्यमाशंसते द्रोणः कच्चित्स्यात् कुशली नृपः ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकार्ज्जुनदर्शने एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

॥ सञ्जय उवाच ॥ तमापतन्तं सम्प्रेक्ष्य सात्वतं युद्धदुर्म्मदं । क्रोधाद्भूरिश्रवा राजन् सहसा समुपाद्रवत् ।
तमब्रवीन्महाराज कौरव्यः शिनिपुङ्गवं । अद्य प्राप्तोऽसि दिष्ट्या मे चक्षुर्विषयमित्युत । ५८८०
चिराभिलषितं काममहं प्राप्स्यामि संयुगे । न हि मे मोक्ष्यसे जीवन् यदि नोत्सृजसे रणं ।
अद्य त्वां समरे हत्वा नित्यं शूराभिमानिनं । नन्दयिष्यामि दाशार्ह कुरुराजं सुयोधनं ।
अद्य मद्बाणनिर्दग्धं पतितं धरणीतले । द्रक्ष्यतस्त्वां रणे वीरौ सहितौ केशवार्ज्जुनौ ।
अद्य धर्मसुतो राजा श्रुत्वा त्वां निहतं मया । सव्रीडो भविता सद्यो येनासीह प्रवेशितः ।
अद्य मे विक्रमं पार्थो विज्ञास्यति धनञ्जयः । त्वयि भूमौ विनिहते शयाने रुधिरोक्षिते । ५८८५
चिराभिलषितो ह्येष त्वया सह समागमः । पुरा देवासुरे युद्धे शक्रस्य बलिना यथा ।
अद्य युद्धं महाघोरं तव दास्यामि सात्वत । ततो ज्ञास्यसि तत्त्वेन मद्वीर्य्यबलपौरुषं ।
अद्य संयमनीं याता मया त्वं निहतो रणे । यथा रामानुजेनाजौ रावणिर्लक्ष्मणेन ह ।
अद्य कृष्णश्च पार्थश्च धर्मराजश्च माधव । हते त्वयि निरुत्साहा रणं त्यक्ष्यन्त्यसंशयं ।
अद्य तेऽपचितिं कृत्वा शितैर्माधव सायकैः । तत्स्त्रियो नन्दयिष्यामि ये त्वया निहता रणे । ५८९०
मच्चक्षुर्विषयं प्राप्तो न त्वं माधव मोक्ष्यसे । सिंहस्य विषयम्प्राप्तो यथा क्षुद्रमृगस्तथा ।
युयुधानस्तु तं राजन् प्रत्युवाच हसन्निव । कौरवेय न सन्त्रासो विद्यते मम संयुगे ।
नाहं भीषयितुं शक्यो वाङ्मात्रेण तु केवलं । स मां निहन्यात् सङ्ग्रामे यो मां कुर्य्यान्निरायुधं ।
समास्तु शाश्वतीर्हन्याद्यो मां हन्याद्धि संयुगे । किं वृथोक्तेन बहुना कर्म्मणा तत् समाचर ।
शारदस्येव मेघस्य गर्जितं निष्फलं हि ते । श्रुत्वैतद्गर्जितं वीर हास्यं हि मम जायते । ५८९५
चिरकालेप्सितं लोके युद्धमद्यास्तु कौरव । त्वरते मे मतिस्तात तव युद्धाभिकाङ्क्षिणी ।
नाहत्वाऽहं निवर्त्तिष्ये त्वामद्य पुरुषाधम । अन्योऽन्यं तौ तथा वाग्भिस्तक्षन्तौ नरपुङ्गवौ ।

जिघांसूपरमक्रुद्धावभिजघ्नतुराहवे। समेतौ तौ महेष्वासौ शुष्मिणौ स्पर्द्धिनौ रणे।
द्विरदाविव संक्रुद्धौ वासितार्थे मदोत्कटौ। भूरिश्रवाः सात्यकिश्च ववर्षतुररिन्दमौ।
शरवर्षाणि घोराणि मेघाविव परस्परं। सौमदत्तिस्तु शैनेयं प्रच्छाद्येषुभिराशुगैः। ५९००
जिघांसुर्भरतश्रेष्ठ विव्याध निशितैः शरैः। दशभिः सात्यकिं विद्ध्वा सौमदत्तिरथापरान्।
मुमोच निशितान् वाणान् जिघांसुः शिनिपुङ्गवं। तानस्य विशिखांस्तीक्ष्णानन्तरीक्षे विशाम्पते।
अप्राप्तानस्त्रमायाभिरग्रसत् सात्यकिः प्रभो। तौ पृथक् शस्त्रवर्षाभ्यामवर्षेतां परस्परं।
उत्तमाभिजनौ वीरौ कुरुवृष्णियशस्करौ। तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ।
रथशक्तिभिरन्योऽन्यं विशिखैश्चाप्यकृन्ततां। निर्भिन्दन्तौ हि गात्राणि विचरन्तौ च शोणितं। ५९०५
व्यष्टम्भयेतामन्योऽन्यं प्राणद्यूताभिदेविनौ। एवमुत्तमकर्म्माणौ कुरुवृष्णियशस्करौ।
परस्परमयुध्येतां वारणाविव यूथपौ। तावदीर्घेण कालेन ब्रह्मलोकपुरस्कृतौ।
यियासन्तौ परं स्थानमन्योऽन्यं संजगर्जतुः। सात्यकिः सौमदत्तिश्च शरवृष्ट्या परस्परं।
हृष्टानां धार्त्तराष्ट्राणां पश्यतामभ्यवर्षतां। सम्प्रैक्षन्त जनास्तौ तु युध्यमानौ युधाम्पती।
यूथपौ वासिताहेतोः प्रयुद्धाविव कुञ्जरौ। अन्योऽन्यस्य हयान् हत्वा धनुषी विनिकृत्य च। ५९१०
विरथावसियुद्धाय समेयातां महारणे। आर्षभे चर्म्मणी चित्रे प्रगृह्य विपुले शुभे।
विकोषौ चाप्यसी कृत्वा समरे तौ विचेरतुः। चरन्तौ विविधन्मार्गान्मण्डलानि च भागशः।
मुहुराजघ्नतुः क्रुद्धावन्योऽन्यमरिमर्द्दनौ। सखड्गौ चित्रवर्म्माणौ सनिष्काङ्गदभूषणौ।
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतं। सम्पातं समुदीर्णञ्च दर्शयन्तौ यशस्विनौ।
असिभ्यां सम्प्रजह्राते परस्परमरिन्दमौ। उभौ छिद्रैषिणौ वीरावुभौ चित्रं ववल्गतुः। ५९१५
दर्शयन्तावुभौ शिक्षां लाघवं सौष्ठवं तथा। रणे रणकृतां श्रेष्ठावन्योऽन्यं पर्य्यकर्षतां।
मुहूर्त्तमिव राजेन्द्र समाहत्य परस्परं। पश्यतां सर्व्वसैन्यानां वीरावाश्वसतां पुनः।
असिभ्याञ्चर्म्मणी चित्रे शतचन्द्रे नराधिप। निकृत्य पुरुषव्याघ्रौ बाहुयुद्धं प्रचक्रतुः।
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ। बाहुभिः समसज्जेतामायसैः परिघैरिव।
तयोराजन् भुजाघातान्निग्रहप्रग्रहास्तथा। शिक्षावलसमुद्भूताः सर्व्वयोधप्रहर्षणाः। ५९२०
तयोर्नृवरयोराजन् समरे युध्यमानयोः। भीमोऽभवन्महाशब्दो वज्रपर्व्वतयोरिव।
द्विपाविव विषाणाग्रैः शृङ्गैरिव महर्षभौ। भुजयोक्त्रावबन्धैश्च शिरोभ्याञ्चावघातनैः।
पादावकर्षसन्दानैस्तोमराङ्कुशपाशनैः। पादोदरविबन्धैश्च भूमावुद्भ्रमणैस्तथा।
गतप्रत्यागताक्षेपैः पातनोत्थानकाप्लुतैः। युयुधाते महात्मानौ कुरुसात्त्वतपुङ्गवौ।
द्वात्रिंशत्करणानि स्युर्य्यानि युद्धानि भारत। तान्यदर्शयतां तत्र युध्यमानौ महाबलौ। ५९२५
क्षीणायुधे सात्त्वते युध्यमाने ततोऽब्रवीदर्ज्जुनं वासुदेवः। पश्यस्वैनं विरथं युध्यमानं रणे वरं सर्व्वधनुर्धराणां।
प्रविष्टो भारतीं भित्त्वा तव पाण्डव पृष्ठतः। योधितश्च महावीर्य्यैः सर्व्वैर्भारत भारतैः।

परिश्रान्तं युधां श्रेष्ठं सम्प्राप्तो भूरिदक्षिणः। युद्धाकाङ्क्षिणमायान्तमेतत्सममिवार्ज्जुन।
ततो भूरिश्रवाः क्रुद्धः सात्यकिं युद्धदुर्मदः। उद्यम्याभ्यहनद्राजन् मत्तो मत्तमिव द्विपं।
रथस्थयोर्द्वयोर्युद्धे क्रुद्धयोर्योधमुख्ययोः। केशवार्ज्जुनयो राजन् समरे प्रेक्षमाणयोः। ५९१०
अथ कृष्णो महाबाहुरर्ज्जुनं प्रत्यभाषत। पश्य वृष्ण्यन्धकव्याघ्रं सौमदत्तिवशं गतं।
परिश्रान्तं गतं भूमौ कृत्वा कर्म्म सुदुष्करं। तवान्तेवासिनं शूरं पालयार्ज्जुन सात्यकिं।
न वशं यज्ञशीलस्य गच्छेदेष वरोऽर्ज्जुन। त्वत्कृते पुरुषव्याघ्र तदाशु क्रियतां विभो।
अथाब्रवीत् हृष्टमना वासुदेवं धनञ्जयः। पश्य वृष्णिप्रवीरेण क्रीडन्तं कुरुपुङ्गवं।
महाद्विपेनेव वने मत्तेन हरियूथपं। इत्येवं भाषमाणे तु पाण्डवे वै धनञ्जये। ५९१५
हाहाकारो महानासीत्सैन्यानां भरतर्षभ। यदुद्यम्य महाबाहुः सात्यकिं न्यहनद्भुवि।
स सिंह इव मातङ्गं विकर्षन् भूरिदक्षिणः। व्यरोचत कुरुश्रेष्ठः सात्वतप्रवरं युधि।
अथ कोषाद्विनिष्कृष्य खड्गं भूरिश्रवा रणे। मूर्द्धजेषु निजग्राह पदा चोरस्यताडयत्।
ततोऽस्य छेत्तुमारब्धः शिरः कायात् सकुण्डलं। तावत्क्षणं सात्वतोऽपि शिरः समभ्रमयत्त्वरन्।
यथा रथाङ्गं कौलालो दण्डविद्धन्तु भारत। सहैव भूरिश्रवसो बाहुना केशधारिणा। ५९२०
तं तथा परिकृष्यन्तं दृष्ट्वा सात्वतमाहवे। वासुदेवस्ततो राजन् भूयोऽर्ज्जुनमभाषत।
पश्य वृष्ण्यन्धकव्याघ्रं सौमदत्तिवशं गतं। तव शिष्यं महाबाहो धनुष्यनवरं त्वया।
असत्यो विक्रमः पार्थ यत्र भूरिश्रवा रणे। विशेषयति वार्ष्णेयं सात्यकिं सत्यविक्रमं।
एवमुक्तो महाबाहुर्व्वासुदेवेन पाण्डवः। मनसा पूजयामास भूरिश्रवसमाहवे।
विकर्षन् सात्वतश्रेष्ठं क्रीडमान इवाहवे। संहर्षयति मां भूयः कुरूणां कीर्त्तिवर्द्धनः। ५९२५
प्रवरं वृष्णिवीराणां यन्न हन्याद्धि सात्यकिं। महाद्विपमिवारण्ये मृगेन्द्र इव कर्षति।
एवन्तु मनसा राजन् पार्थः सम्पूज्य कौरवं। वासुदेवं महाबाहुरर्ज्जुनः प्रत्यभाषत।
सैन्धवे सक्तदृष्टित्वान्नैनं पश्यामि माधव। एष त्वसुकरं कर्म्म यादवार्थे करोम्यहं।
इत्युक्त्वा वचनं कुर्व्वन् वासुदेवस्य पाण्डवः। ततः क्षुरप्रं निशितं गाण्डीवे समयोजयत्।
पार्थबाहुविसृष्टः स महोल्केव नभश्च्युता। सखड्गं यज्ञशीलस्य साङ्गदं बाहुमच्छिनत्। ५९३०
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि भूरिश्रवोबाहुच्छेदे द्विचत्वारिंशदधिकशततमोऽध्यायः॥ १४२॥
॥ सञ्जय उवाच॥ स बाहुर्न्यपतद्भूमौ सखड्गः सशुभाङ्गदः। आदधज्जीवलोकस्य दुःखमद्भुतमुत्तमं।
प्रहरिष्यन् हृतो बाहुरदृश्येन किरीटिना। वेगेन न्यपतद्भूमौ पञ्चास्य इव पन्नगः।
स मोघं कृतमात्मानं दृष्ट्वा पार्थेन कौरवः। उत्सृज्य सात्यकिं क्रोधाद्गर्हयामास पाण्डवं।
॥ भूरिश्रवा उवाच॥ नृशंसं बत कौन्तेय कर्म्मेदं कृतवानसि। अपश्यतोऽविषक्तस्य यन्मे बाहुमचिच्छिदः।
किन्नु वक्ष्यसि राजानं धर्म्मपुत्रं युधिष्ठिरं। किं कुर्व्वाणो मया सङ्ख्ये हतो भूरिश्रवा रणे। ५९३५
इदमिन्द्रेण ते साक्षादुपदिष्टं महात्मना। अस्त्रं रुद्रेण वा पार्थ द्रोणेनाथ कृपेण वा।

ततः स सर्व्वसेनानां जनः कृष्णधनञ्जयौ। गर्हयामास तत्रापि शंसन्तं पुरुषर्षभं।
निन्द्यमानौ तथा कृष्णौ नोचतुः किञ्चिदप्रियं। तथा प्रशस्यमानश्च नाहृष्यद्यूपकेतनः।
तांस्तथावादिनो राजन् पुत्रांस्तव धनञ्जयः। अमृष्यमाणो मनसा तेषां तस्य च भाषितं।
असंक्रुद्धमना वाचः स्मारयन्निव भारत। उवाच पाण्डुतनयः साक्षेपमिव फाल्गुनः। ६९९०
मम सर्व्वेऽपि राजानो जानन्त्येव महाव्रतं। न शक्यो मामको हन्तुं यो मे स्याद्बाणगोचरे।
यूपकेतोः समीक्ष्यैतन्न मामर्हसि गर्हितुं। न हि धर्म्ममविज्ञाय युक्तं गर्हयितुं परं।
आत्तशस्त्रस्य हि रणे वृष्णिवीरं जिघांसतः। यदहं बाहुमच्छैत्सं न स धर्म्मो विगर्हितः
न्यस्तशस्त्रस्य बालस्य विरथस्य विवर्म्मणः। अभिमन्योर्वधं तात धार्म्मिकः कोऽनुपूजयेत्।
एवमुक्तः स पार्थेन शिरसा भूमिमस्पृशत्। पाणिना चैव सव्येन प्राहिणोदस्य दक्षिणं। ६९९५
एतत् पार्थस्य तु वचस्ततः श्रुत्वा महाद्युतिः। यूपकेतुर्म्महाराज तूष्णीमासीदवाङ्मुखः।
॥ अर्ज्जुन उवाच ॥ या प्रीतिर्धर्म्मराजे मे भीमे च बलिनां वरे। नकुले सहदेवे च सा मे त्वयि शलाग्रज।
मया त्वं समनुज्ञातः कृष्णेन च महात्मना। गच्छ पुण्यकृतांल्लोकान् शिबिरौशीनरो यथा।
॥ वासुदेव उवाच ॥ ये लोका मम विमलाः सकृद्विभान्ति ब्रह्माद्यैः सुरवृषभैरपीष्यमाणाः।
तान् क्षिप्रं व्रज सततामिहोत्रयाजिन्मत्तुल्यो भव गरुडोत्तमाङ्गयानः। ७०००
॥ सञ्जय उवाच ॥ उत्थितः स तु शैनेयो विमुक्तः सौमदत्तिना। खड्गमादाय चिच्छित्सुः शिरस्तस्य महात्मनः।
निहतं पाण्डुपुत्रेण प्रमत्तं भूरिदक्षिणं। इयेष सात्यकिर्हन्तुं शलाग्रजमकल्मषं।
निकृत्तभुजमासीनं छिन्नहस्तमिव द्विपं। क्रोशतां सर्व्वसैन्यानां निन्द्यमानः सुदुर्म्मनाः।
वार्य्यमाणः स कृष्णेन पार्थेन च महात्मना। भीमेन चक्ररक्षाभ्यामश्वत्थाम्ना कृपेण च।
कर्णेन वृषसेनेन सैन्धवेन तथैव च। विक्रोशतां च सैन्यानामवधीत्तं यतव्रतं। ७००५
प्रायोपविष्टाय रणे पार्थेन छिन्नबाहवे। सात्यकिः कौरवेयाय खड्गेनापाहरच्छिरः।
नाभ्यनन्दन्त सैन्यानि सात्यकिं तेन कर्म्मणा। अर्ज्जुनेन हतं पूर्व्वं यज्जघान कुरूद्वहं।
सहस्राक्षसमं तत्र सिद्धचारणमानवाः। भूरिश्रवसमालोक्य युद्धे प्रायगतं हतं।
अपूजयन्त तं देवा विस्मितास्तस्य कर्म्मभिः। पक्षवादांश्च सुबहून् प्रावदंस्तव सैनिकाः।
न वार्ष्णेयस्यापराधो भवितव्यं हि तत्तथा। तस्मान्मन्युर्न वः कार्य्यः क्रोधो दुःखतरो नृणां। ७०१०
हन्तव्यश्चैष वीरेण नात्र कार्य्या विचारणा। विहितो ह्यस्य धात्रैव मृत्युः सात्यकिराहवे।
॥ सात्यकिरुवाच ॥ न हन्तव्यो न हन्तव्य इति यन्मां प्रभाषत। धर्म्मवादैरधर्म्मिष्ठा धर्म्मकञ्चुकमास्थिताः।
यदा बालः सुभद्रायाः सुतः शस्त्रविनाकृतः। युष्माभिर्निहतो युद्धे तदा धर्म्मः क्व वो गतः।
मया त्वेतत् प्रतिज्ञातं क्षेपे कस्मिंश्चिदेव हि। यो मां निष्पिष्य संग्रामे जीवन् हन्यात् पदा रुषा।
स मे वध्यो भवेच्छत्रुर्यद्यपि स्यान्मुनिव्रतः। चेष्टमानं प्रतीघाते सभुजं मां सचक्षुषः। ७०१५
मन्यध्वं मृतमित्येवमेतद्वो बुद्धिलाघवं। युक्तो ह्यस्य प्रतीघातः कृतो मे कुरुपुङ्गवाः।

यत्तु पार्थेन मे क्रोधात् प्रतिज्ञा चाभिरक्षिता। यद्यप्येष हतो बाहुरेतेनैवाभि वञ्चितः।
भवितव्यञ्च यद्भावि दैवं चेष्टयतीव च। सोऽयं हतो विमर्देऽस्मिन् किमत्राधर्म्मचेष्टितं।
अपि चायं पुरा गीतः श्लोको वाल्मीकिना भुवि। न हन्तव्याः स्त्रिय इति यद्ब्रवीषि प्लवङ्गम।
सर्व्वकालं मनुष्येण व्यवसायवता सदा। पीडाकरममित्राणां यत् स्यात् कर्त्तव्यमेव तत्। ६०२०
॥ सञ्जय उवाच ॥ एवमुक्ते महाराज सर्व्वे पाण्डवकौरवाः। न स्म किञ्चिदभाषन्त मनसा समपूजयन्।
मन्त्राभिपूतस्य महाध्वरेषु यशस्विनो भूरिसहस्रदस्य। मुनेरिवारण्यगतस्य तस्य न तत्र कश्चिद्वधमभ्यनन्दत्।
सुनीलकेशं वरदस्य तस्य शूरस्य पारावतलोहिताक्षं। अश्वस्य मेध्यस्य शिरो निकृत्तं न्यस्तं हविर्द्धानमिवान्तरेण।
स तेजसा शस्त्रहतेन पूतो महाहवे देहवरं विसृज्य। आक्रामदूर्द्ध्वं वरदो वरार्हो व्यावृत्य धर्म्मेण परेण रोदसी।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि भूरिश्रवोवधे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥
॥ धृतराष्ट्र उवाच ॥ अजितो द्रोणराधेयविकर्णकृतवर्म्मभिः। तीर्णः सैन्यार्णवं वीरः प्रतिश्रुत्य युधिष्ठिरे। ६०२५
स कथं कौरवेयेण समरेष्वनिवारितः। निगृह्य भूरिश्रवसा बलाद्भुवि निपातितः।
॥ सञ्जय उवाच ॥ शृणु राजन्निहोत्पत्तिं शैनेयस्य यथा पुरा। यथा च भूरिश्रवसो यत्र ते संशयो नृप।
अत्रेः पुत्त्रोऽभवत् सोमः सोमस्य तु बुधः स्मृतः। बुधस्यासीन्महेन्द्राभः पुत्त्र आसीत् पुरूरवाः।
पुरूरवस आयुस्तु आयुषो नहुषः सुतः। नहुषस्य ययातिस्तु राजर्षिर्देवसम्मितः।
ययातेर्देवयान्यान्तु यदुर्ज्येष्ठोऽभवत् सुतः। यदोरभूदन्ववाये देवमीढ इति श्रुतः। ६०३०
यादवस्तस्य तु सुतः शूरस्त्रैलोक्यसम्मतः। शूरस्य शौरिर्नृवरो वसुदेवो महायशाः।
धनुष्यनवरः शूरः कार्त्तवीर्य्यसमो युधि। तद्वीर्य्यश्चापि तत्रैव कुले शिनिरभून्नृप।
एतस्मिन्नेव काले तु देवकस्य महात्मनः। दुहितुः स्वम्वरे राजन् सर्व्वक्षत्रसमागमे।
तत्र वै देवकीं देवीं वसुदेवार्थमाशु वै। निर्जित्य पार्थिवान् सर्व्वान् रथमारोपयच्छिनिः।
तां दृष्ट्वा देवकीं शौरे रथस्थां पुरुषर्षभ। नामृष्यत महातेजाः सोमदत्तः शिनेर्नृप। ६०३५
तयोर्युद्धमभूद्राजन् दिनार्द्धं चित्रमद्भुतं। बाहुयुद्धं सुबलिनोः प्रसक्तं पुरुषर्षभ।
शिनिना सोमदत्तस्तु प्रसह्य भुवि पातितः। असिमुद्यम्य केशेषु प्रगृह्य च पदा हतः।
मध्ये राजसहस्राणां प्रेक्षकाणां समन्ततः। कृपया च पुनस्तेन स जीवेति विसर्ज्जितः।
तदवस्थः कृतस्तेन सोमदत्तोऽथ मारिष। प्रासादयन्महादेवममर्षवशमास्थितः।
तस्य तुष्टो महादेवो वरदानां महाप्रभुः। वरेण छन्दयामास स तु वव्रे वरं नृपः। ६०४०
पुत्त्रमिच्छामि भगवन् यो हि हन्याच्छिनेः सुतं। मध्ये राजसहस्राणां पदा हन्याच्च संयुगे।
तस्य तद्वचनं श्रुत्वा सोमदत्तस्य पार्थिव। एवमस्त्विति तत्रोक्त्वा स देवोऽन्तरधीयत।
स तेन वरदानेन लब्धवान् भूरिदक्षिणं। न्यपातयच्च समरे सौमदत्तिः शिनेः सुतं।
पश्यतां सर्व्वसैन्यानां पदा चैनमताडयत्। एतत्ते कथितं राजन् यन्मां त्वं परिपृच्छसि।
न च शक्या रणे जेतुं सात्वता मनुजर्षभैः। लब्धलक्ष्याश्च संग्रामे बहवश्चित्रयोधिनः। ६०४५

द्रौणिना रक्ष्यमाणश्च मया दुःशासनेन च। कथं प्राप्स्यति बीभत्सुः सैन्धवं कालचोदितः। ५०७५
युध्यन्ते बहवः शूरा लम्बते च दिवाकरः। शङ्के जयद्रथं पार्थो नैव प्राप्स्यति मानद।
स त्वं कर्ण मया सार्द्धं शूरैश्चान्यैर्महारथैः। द्रौणिना त्वं हि सहितो मद्रेशेन कृपेण च।
युध्यस्व यत्नमास्थाय परं पार्थेन संयुगे। एवमुक्तस्तु राधेयस्तव पुत्रेण मारिष।
दुर्य्योधनमिदं वाक्यं प्रत्युवाच कुरूत्तमं। दृढलक्षेण शूरेण भीमसेनेन धन्विना।
भृशं भिन्नतनुः सङ्ख्ये शरजालैरनेकशः। स्थातव्यमिति तिष्ठामि रणे सम्प्रति मानद। ५०८०
नाङ्गमिङ्गति किञ्चिन्मे सन्तप्तस्य महेषुभिः। योत्स्यामि तु यथाशक्त्या त्वदर्थं जीवितं मम।
यथा पाण्डवमुख्योऽसौ न हनिष्यति सैन्धवं। न हि मे युध्यमानस्य सायकानस्यतः शितान्।
सैन्धवम्प्राप्स्यते वीरः सव्यसाची धनञ्जयः। यत्तु भक्तिमता कार्य्यं सततं हितकाङ्क्षिणा।
तत्करिष्यामि कौरव्य जयो दैवे प्रतिष्ठितः। सैन्धवार्थे परं यत्नं करिष्याम्यद्य संयुगे।
त्वत्प्रियार्थं महाराज जयो दैवे प्रतिष्ठितः। अद्य योत्स्येऽर्ज्जुनमहं पौरुषं स्वमुपाश्रितः। ५०८५
त्वदर्थं पुरुषव्याघ्र जयो दैवे प्रतिष्ठितः। अद्य युद्धं कुरुश्रेष्ठ मम पार्थस्य चोभयोः।
पश्यन्तु सर्व्वसैन्यानि दारुणं लोमहर्षणं। कर्णकौरवयोरेवं रणे सम्भाषमाणयोः।
अर्ज्जुनो निशितैर्व्वाणैर्जघान तव वाहिनीं। चिच्छेद निशितैर्भल्लैः शूराणामनिवर्त्तिनां।
भुजान् परिघसङ्काशान् हस्तिहस्तोपमान् रणे। शिरांसि च महाबाहुश्चिच्छेद निशितैः शरैः।
हस्तिहस्तान् हयग्रीवान् रथाक्षांश्च समन्ततः। शोणिताक्तान् हयारोहान् गृहीतप्रासतोमरान्। ५०९०
क्षुरैश्चिच्छेद बीभत्सुर्द्विधैकैकं त्रिधैव च। हया वारणमुख्याश्च प्रापतन्त समन्ततः।
ध्वजाश्छत्राणि चापानि चामराणि शिरांसि च। कक्षमग्निरिवोद्भूतः प्रदहंस्तव वाहिनीं।
अचिरेण महीं पार्थश्चकार रुधिरोत्तरां। हतभूयिष्ठयोधन्तत् कृत्वा तव बलं बली।
आससाद दुराधर्षः सैन्धवं सत्यविक्रमः। बीभत्सुर्भीमसेनेन सात्वतेन च रक्षितः।
प्रबभौ भरतश्रेष्ठ ज्वलन्निव हुताशनः। तं तथाऽवस्थितं दृष्ट्वा त्वदीया वीर्य्यसम्मताः। ५०९५
नामृष्यन्त महेष्वासाः फाल्गुनं पुरुषर्षभाः। दुर्य्योधनश्च कर्णश्च वृषसेनोऽथ मद्रराट्।
अश्वत्थामा कृपश्चैव स्वयमेव च सैन्धवः। संरब्धाः सैन्धवस्यार्थे समावृण्वन् किरीटिनं।
नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनिःस्वनैः। सङ्ग्रामकोविदं पार्थं सर्व्वे युद्धविशारदाः।
अभीताः पर्य्यवर्त्तन्त व्यादितास्यमिवान्तकं। सैन्धवं पृष्ठतः कृत्वा जिघांसन्तोऽर्ज्जुनाच्युतौ।
सूर्य्यास्तमनमिच्छन्तो लोहितायति भास्करे। ते भुजैर्भोगिभोगाभैर्धनूंष्यानम्य सायकान्। ५१००
मुमुचुः सूर्य्यरश्म्याभाञ्छतशः फाल्गुनम्प्रति। तानस्तानस्यमानांश्च किरीटी युद्धदुर्मदः।
द्विधा त्रिधाष्टधैकैकं छित्त्वा विव्याध तान् रथे। सिंहलाङ्गूलकेतुस्तु दर्शयञ्छक्तिमात्मनः।
शारद्वतीसुतो राजन्नर्ज्जुनं प्रत्यवारयत्। स विद्ध्वा दशभिः पार्थं वासुदेवञ्च सप्तभिः।
अतिष्ठद्रथमार्गेषु सैन्धवं परिपालयन्। अथैनं कौरवश्रेष्ठाः सर्व्वे एव महारथाः।

महता रथवंशेन सर्व्वतः पर्य्यवारयन्। विस्फारयन्तश्चापानि विसृजन्तश्च सायकान्। ५९०८
सैन्धवं पर्य्यरक्षन्त शासनात्तनयस्य ते। तत्र पार्थस्य शूरस्य बाहोर्वलमदृश्यत।
इषूणामक्षयत्वञ्च धनुषो गाण्डिवस्य च। अस्त्रैरस्त्राणि संवार्य्य द्रौणेः शारद्वतस्य च।
एकैकं नवभिर्व्वाणैः सर्व्वानेव समार्पयत्। तं द्रौणिः पञ्चविंशत्या वृषसेनश्च सप्तभिः।
दुर्य्योधनस्तु विंशत्या कर्णशल्यौ त्रिभिस्त्रिभिः। त एनमभिगर्ज्जन्तो विध्यन्तश्च पुनः पुनः।
विधुन्वन्तश्च चापानि सर्व्वतः पर्य्यवारयन्। श्लिष्टञ्च सर्व्वतश्चक्रू रथमण्डलमाशु ते। ५९१०
सूर्य्योदयमनमिच्छन्तस्त्वरमाणा महारथाः। त एनमभिगर्ज्जन्तो विधुन्वाना धनूंषि च।
सिषिचुर्म्मार्गणैस्तीक्ष्णैर्गिरिं मेघा इवाम्बुभिः। ते महास्त्राणि दिव्यानि तत्र राजन् व्यदर्शयन्।
धनञ्जयस्य गात्रे तु शूराः परिघबाहवः। हतभूयिष्ठयोधं तत्कृत्वा तव बलं बली।
आससाद सुदुर्धर्षः सैन्धवं सत्यविक्रमः। तं कर्णः संयुगे राजन् प्रत्यवारयदाशुगैः।
मिषतो भीमसेनस्य सात्वतस्य च भारत। तं पार्थो दशभिर्व्वाणैः प्रत्यविध्यद्रणाजिरे। ५९१५
सूतपुत्रं महाबाहुः सर्व्वसैन्यस्य पश्यतः। सात्वतस्तु त्रिभिर्व्वाणैः कर्णं विव्याध मारिष।
भीमसेनस्त्रिभिश्चैव पुनः पार्थश्च सप्तभिः। तान् कर्णः प्रतिविव्याध षष्ट्या षष्ट्या महारथः।
तद्युद्धमभवद्राजन् कर्णस्य बहुभिः सह। तत्राद्भुतमपश्याम सूतपुत्रस्य मारिष।
यदेकः समरे क्रुद्धस्त्रीन् रथान् पर्य्यवारयत्। फाल्गुनस्तु महाबाहुः कर्णं वैकर्त्तनं मृधे।
सायकानां शतेनैव सर्व्वमर्म्मस्वताडयत्। रुधिरोक्षितसर्व्वाङ्गः सूतपुत्रः प्रतापवान्। ५९२०
शरैः पञ्चाशता वीरः फाल्गुनं प्रत्यविध्यत। तस्य तल्लाघवं दृष्ट्वा नामृष्यत रणेऽर्ज्जुनः।
तस्य पार्थो धनुश्छित्त्वा विव्याधैनं स्तनान्तरे। सायकैर्नवभिर्व्वीरस्त्वरमाणो धनञ्जयः।
वधार्थं तस्य समरे सायकं सूर्य्यवर्चसं। चिक्षेप त्वरया युक्तस्त्वराकाले धनञ्जयः।
तमापतन्तं वेगेन द्रौणिश्चिच्छेद सायकं। अर्द्धचन्द्रेण तीक्ष्णेन स छिन्नः प्रापतद्भुवि।
अथान्यद्धनुरादाय सूतपुत्रः प्रतापवान्। सायकैर्ब्बहुसाहस्रैश्छादयामास पाण्डवं। ५९२५
तां शरवृष्टिमतुलां कर्णचापसमुत्थितां। व्यधमत्सायकैः पार्थः शलभानिव मारुतः।
छादयामास च तदा सायकैरर्ज्जुनो रणे। पश्यतां सर्व्वयोधानां दर्शयन् पाणिलाघवं।
कर्णोऽपि द्विषतां हन्ता छादयामास फाल्गुनं। सायकैर्ब्बहुसाहस्रैः कृतप्रतिकृतैषिणा।
तौ वृषाविव नर्द्दन्तौ नरसिंहौ महारथौ। सायकौघैः प्रतिच्छन्नं चक्रतुः खमजिह्मगैः।
अदृश्यौ च शरौघैस्तौ निघ्नतामितरेतरं। पार्थोऽहमस्मि तिष्ठेति कर्णोऽहं तिष्ठ फाल्गुन। ५९३०
इत्येवं तर्ज्जमानौ तु वाक्शल्यैस्तुदतां तदा। युध्येतां समरे वीरौ चित्रं लघु च सुष्ठु च।
प्रेक्षणीयावभवतां सर्व्वयोधसमागमे। प्रशस्यमानौ समरे सिद्धचारणवातिकैः।
अयुध्येतां महाराज परस्परवधैषिणौ। ततो दुर्य्योधनो राजंस्तावकानभ्यभाषत।
यत्नाद्रक्षत राधेयं नाहत्वा समरेऽर्ज्जुनं। निवर्त्तिष्यति राधेय इति मामुक्तवान् वृषः।

एतस्मिन्नन्तरे राजन् दृष्ट्वा कर्णस्य विक्रमं । आकर्णमुक्तैरिषुभिः कर्णस्य चतुरो हयान् । ६१३५
अनयन्मृत्युलोकाय चतुर्भिः श्वेतवाहनः । सारथिञ्चास्य भल्लेन रथनीडादपाहरत् ।
छादयामास च शरैस्तव पुत्रस्य पश्यतः । स च्छाद्यमानः समरे हताश्वो हतसारथिः ।
मोहितः शरजालेन कर्त्तव्यं नाभ्यपद्यत । तं तथा विरथं दृष्ट्वा रथमारोप्य तं तदा ।
अश्वत्थामा महाराज भूयोऽर्ज्जुनमयोधयत् । मद्रराजस्तु कौन्तेयमविध्यत्त्रिंशता शरैः ।
शारद्वतस्तु विंशत्या वासुदेवं समार्पयत् । धनञ्जयं द्वादशभिराजघान शिलीमुखैः । ६१४०
चतुर्भिः सिन्धुराजश्च वृषसेनश्च सप्तभिः । पृथक् पृथङ्महाराज कृष्णपार्थावविध्यतां ।
तथैव तान् प्रत्यविध्यत् कुन्तीपुत्रो धनञ्जयः । द्रोणपुत्रं चतुःषष्ट्या मद्रराजं शतेन च ।
सैन्धवं दशभिर्भल्लैर्वृषसेनं त्रिभिः शरैः । शारद्वतञ्च विंशत्या विद्ध्वा पार्थः समुन्नदन् ।
ते प्रतिज्ञाप्रतीघातमिच्छन्तः सव्यसाचिनः । रोषितास्तावकास्तूर्णमभिपेतुर्धनञ्जयं ।
अथार्ज्जुनः सर्व्वतो वारुणास्त्रं प्रादुश्चक्रे त्रासयन् धार्त्तराष्ट्रान् । तं प्रत्युदीयुः कुरवः पाण्डुपुत्रं रथैर्म्महार्हैः शरवर्षा-
ण्यवर्षन् । ६१४५
ततस्तु तस्मिंस्तुमुले समुत्थिते सुदारुणे भारत मोहनीये । नामुह्यत प्राप्य स राजपुत्रं किरीटमाली विसृजन् पृष-
त्कान् ।
राज्यमीप्सुः सव्यसाची कुरूणां स्मरन् क्लेशान् द्वादशवर्षवृत्तान् । गाण्डीवमुक्तैरिषुभिर्महात्मा सर्व्वा दिशो व्यावृणो-
दप्रमेयः ।
प्रदीप्तोल्कमभवच्चान्तरीक्षं देहेषु भूरीण्यपतन् वयांसि । यत् पिङ्गलज्येन किरीटमाली क्रुद्धो रिपूनाजगवेन हन्ति ।
ततः किरीटी महता महायशाः शरासनेनास्य शराननीकजित् । हयप्रवेकोत्तमनागधूर्गतान् कुरुप्रवीरानिषुभिर्व्य-
पातयत् ।
गदाश्च गुर्व्वीः परिघानयस्मयानसींश्च शक्तीश्च रणे नराधिपाः । महान्ति शस्त्राणि च भीमदर्शनाः प्रगृह्य पार्थं सहसाऽ-
भिदुद्रुवुः । ६१५०
ततो युगान्ताभ्रसमस्वनं महत् महेन्द्रचापप्रतिमं स गाण्डिवं । चकर्ष दोर्भ्यां विहसन् भृशं यशो दहंस्तवारीणां यम-
राष्ट्रवर्द्धनः ।
स तानुदीर्णान् सरथान् सनागान् पदातिसङ्घांश्च धनुर्धरांश्च । विपन्नसर्व्वायुधजीवितान्वै चकार वीरो यमराष्ट्रवर्द्धनान् ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सङ्कुलयुद्धे पञ्चचत्वारिंशदधिकशततोऽध्यायः ॥ १४५ ॥
॥ सञ्जय उवाच ॥ श्रुत्वा निनादं धनुषश्च तस्य विस्फूर्जमुत्कृष्टमिवान्तकस्य । शक्राशनिस्फोटसमं सुघोरं विकृष्यमाणस्य
धनञ्जयेन ।
त्रासोद्विग्नं तदोद्भ्रान्तं त्वदीयं तद्बलं नृप । युगान्तवातसङ्क्षुब्धं चलद्वीचितरङ्गिणं ।
प्रक्षीणमीनमकरं सागराम्भ इवाभवत् । स रणे व्यचरत् पार्थः प्रेक्षणीयो धनञ्जयः । ६१५५
युगपद्दिक्षु सर्व्वासु चित्राण्यस्त्राणि दर्शयन् । आददानं महाराज सन्दधानञ्च पाण्डवं ।

प्रासासिशक्तिपरशुविशिखाहिदुरासदां । बलकङ्कमहानक्रां गोमायुमकरोत्कटां ।
गृध्रोदग्रमहाग्राहां शिवाभिरुतभैरवां । नृत्यत्प्रेतपिशाचाद्यैर्भूताकीर्णां सहस्रशः ।
गतासुयोधनिश्चेष्टशरीरशतवाहिनीं । महामतिभयां रौद्रां घोरां वैतरणीमिव ।
नदीं प्रवर्त्तयामास भीरूणां भयवर्द्धिनीं । तं दृष्ट्वा तस्य विक्रान्तमन्तकस्येव कुपितः । १९०
अभूतपूर्व्वं कुरुषु भयमागाद्रणाजिरे । तत आदाय घोराणामस्त्रैरस्त्राणि पाण्डवः ।
आत्मानं रौद्रमास्थाय रौद्रकर्म्मणि धिष्ठितः । ततो रथवरानाजावतिक्रामदर्जुनः ।
मध्यन्दिनगतं सूर्य्यं प्रतपन्तमिवाम्बरे । नशेकुः सर्व्वभूतानि पाण्डवं प्रतिवीक्षितुं ।
प्रसृतान् तस्य गाण्डीवाच्छरजालान्महात्मनः । सङ्ग्रामे समपश्याम हंसपङ्क्तीरिवाम्बरे ।
विनिवार्य्य स वीराणामस्त्रैरस्त्राणि सर्व्वशः । दर्शयन् रौद्रमात्मानमुग्रे कर्म्मणि धिष्ठितः । १९५
स तान् रथवरान् राजन्नभ्यक्रामत्तदाऽर्जुनः । मोहयन्निव नाराचैर्जयद्रथवधेप्सया ।
विसृजन् दिक्षु सर्व्वासु शरानसितसारथिः । स रथे यन्त्रवत्तूर्णं प्रेक्षणीयो धनञ्जयः ।
भ्रमन्त इव शूरस्य शरव्राता महात्मनः । अदृश्यन्तान्तरीक्षस्थाः शतशोऽथ सहस्रशः ।
आददानं महेष्वासं सन्दधानञ्च पाण्डवं । विसृजन्तञ्च कौन्तेयं नानुपश्यामहे तदा ।
तथा सर्व्वा दिशो राजन् सर्व्वांश्च रथिनो रणे । आकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत् । २००
विव्याध च चतुःषष्ट्या शराणां नतपर्व्वणां । सैन्धवाभिमुखं यान्तं योधाः सम्प्रेक्ष्य पाण्डवं ।
न्यवर्त्तन्त रणाद्वीरा निराशास्तस्य जीविते । यो योऽभ्यधावदाक्रन्दे तावकः पाण्डवं रणे ।
तस्य तस्यान्तगो बाणः शरीरे न्यपतत् प्रभो । कबन्धसङ्कुलञ्चक्रे तव सैन्यं महारथः ।
अर्जुनो जयतां श्रेष्ठः शरैरग्निशिखोपमैः । एवं तत्तव राजेन्द्र चतुरङ्गबलं तदा ।
आकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत् । द्रौणिं पञ्चाशताऽविध्यद्वृषसेनं त्रिभिः शरैः । २०५
कृपायमाणः कौन्तेयः कृपं नवभिरार्द्दयत् । शल्यं षोडशभिर्व्वाणैः कर्णं द्वात्रिंशता शरैः ।
सैन्धवञ्च चतुःषष्ट्या विद्ध्वा सिंह इवानदत् । सैन्धवस्तु तदा विद्धः शरैर्गाण्डीवधन्वना ।
न चक्षमे सुसंक्रुद्धस्तोत्त्रार्द्दित इव द्विपः । स वराहध्वजस्तूर्णं गार्द्धपत्रानजिह्मगान् ।
आशीविषसमप्रख्यान् कर्म्मारपरिमार्जितान् । आकर्णपूर्णांश्चिक्षेप फाल्गुनस्य रथम्प्रति ।
त्रिभिस्तु विद्ध्वा गोविन्दं नाराचैः षड्भिरर्जुनं । अष्टाभिर्व्वाजिनोऽविध्यद्ध्वजञ्चैकेन पत्रिणा । २१०
स विक्षिप्यार्जुनस्तीक्ष्णान् सैन्धवप्रहितान्छरान् । युगपत्तस्य चिच्छेद शराभ्यां सैन्धवस्य च ।
सारथेश्च शिरः कायात् ध्वजञ्च समलङ्कृतं । स छिन्नयष्टिः सुमहान् शीर्य्यमाणः शराहतः ।
वराहः सिन्धुराजस्य पपाताग्निशिखोपमः । एतस्मिन्नेव काले तु द्रुतं गच्छति भास्करे ।
अब्रवीत् पाण्डवं तत्र त्वरमाणो जनार्द्दनः । एष मध्ये कृतः षड्भिः पार्थ वीरैर्म्महारथैः ।
जीवितेप्सुर्म्महाबाहो भीतस्तिष्ठति सैन्धवः । एताननिर्जित्य रणे षड्रथान् पुरुषर्षभ । २१५
न शक्यः सैन्धवो हन्तुं यत्तो निर्व्याजमर्ज्जुन । योगमत्र विधास्यामि सूर्य्यस्यावरणं प्रति ।

अस्तं गत इति व्यक्तं द्रक्ष्यत्येकः स सिन्धुराट् । हर्षेण जीविताकाङ्क्षी विनाशार्थं तव प्रभो ।
न गोप्स्यति दुराचारः स आत्मानं कथञ्चन । तत्र छिद्रे प्रहर्त्तव्यं त्वयाऽस्य कुरुसत्तम ।
व्यपेक्षा नैव कर्त्तव्या गतोऽस्तमिति भास्करः । एवमस्त्विति बीभत्सुः केशवं प्रत्यभाषत ।
ततोऽसृजत्तमः कृष्णः सूर्य्यस्यावरणं प्रति । योगी योगेन संयुक्तो योगिनामीश्वरो हरिः । ६२८०
सृष्टे तमसि कृष्णेन गतोऽस्तमिति भास्करः । त्वदीया जहृषुर्योधाः पार्थनाशान्नराधिप ।
ते प्रहृष्टा रणे राजन्नापश्यन् सैनिका रविं । उन्नाम्य वक्त्राणि तदा स च राजा जयद्रथः ।
वीक्षमाणे ततस्तस्मिन् सिन्धुराजे दिवाकरं । पुनरेवाब्रवीत् कृष्णो धनञ्जयमिदं वचः ।
पश्य सिन्धुपतिं वीरं प्रेक्षमाणं दिवाकरं । भयं हि विप्रमुक्तं तत्त्वत्तो भरतसत्तम ।
अयं कालो महाबाहो वधायास्य दुरात्मनः । छिन्धि मूर्द्धानमस्याशु कुरु साफल्यमात्मनः । ६२८५
इत्येवं केशवेनोक्तः पाण्डुपुत्रः प्रतापवान् । न्यवधीत्तावकं सैन्यं शरैरर्काग्निसन्निभैः ।
कृपं विव्याध विंशत्या कर्णं पञ्चाशता शरैः । शल्यं दुर्योधनञ्चैव षड्भिः षड्भिरताडयत् ।
वृषसेनं तथाऽष्टाभिः षष्ट्या सैन्धवमेव च । तथैव च महाबाहुस्त्वदीयान् पाण्डुनन्दनः ।
गाढं विद्ध्वा शरै राजन् जयद्रथमुपाद्रवत् । तं समीपस्थितं दृष्ट्वा लेलिहानमिवानलं ।
जयद्रथस्य गोप्तारः संशयं परमं गताः । ततः सर्व्वे महाराज तव योधा जयैषिणः । ६२९०
सिषिचुः शरधाराभिः पाकशासनिमाहवे । छाद्यमानः स कौन्तेयः शरजालैरनेकशः ।
अक्रुध्यत् स महाबाहुरजितः कुरुनन्दनः । ततः शरमयं जालं तुमुलं पाकशासनिः ।
व्यसृजत् पुरुषव्याघ्रस्तव सैन्यजिघांसया । ते हन्यमाना वीरेण योधा राजन् रणे तव ।
प्रजहुः सैन्धवं भीता द्वौ समं नाप्यधावतां । तत्राद्भुतमपश्याम कुन्तीपुत्रस्य विक्रमं ।
तादृक्प्रभावो भूतो वा यच्चकार महायशाः । द्विपान् द्विपगतांश्चैव हयान् हयगतानपि । ६२९५
तथा सारथिनश्चैव न्यहन् रुद्रः पशूनिव । न तत्र समरे कश्चिन्मया दृष्टो नराधिप ।
गजो वाजी नरो वापि यो न पार्थशराहतः । रजसा तमसा चैव योधाः सञ्छन्नचक्षुषः ।
कश्मलं प्राविशन् घोरं नान्वजानन् परस्परं । ते शरैर्भिन्नमर्म्माणः सैनिकाः कालचोदिताः ।
बभ्रमुश्चस्खलुः पेतुः सेदुर्म्मम्लुश्च भारत । तस्मिन् महाभीषणके प्रजानामिव संक्षये ।
रणे महति दुष्पारे वर्त्तमाने सुदारुणे । शोणितस्य प्रसेकेन शीघ्रत्वादनिलस्य च । ६३००
अशाम्यत्तद्रजो भौममसृक्सिक्ते धरातले । आनाभि निरमज्जंश्च रथचक्राणि शोणितैः ।
मत्ता वेगवतो राजंस्तावकानां रणाङ्गणे । हस्तिनश्च हतारोहा दारिताङ्गाः सहस्रशः ।
स्वान्यनीकानि मृद्नन्त आर्त्तनादाः प्रदुद्रुवुः । हयाश्च पतितारोहाः पत्तयश्च नराधिप ।
प्रदुद्रुवुर्भयाद्राजन् धनञ्जयशराहताः । मुक्तकेशा विकवचाः क्षरन्तः क्षतजं क्षतैः ।
प्रपलायन्त सन्त्रस्ता व्यक्ता रणशिरो जनाः । ऊरुग्राहगृहीताश्च केचित्तत्राभवन् भुवि । ६३०५
हतानाञ्चापरे मध्ये द्विरदानां निलिल्यिरे । एवं तव बलं राजन् द्रावयित्वा धनञ्जयः ।

न्यवधीत् सायकैर्घोरैः सिन्धुराजस्य रक्षिणः । कर्णं द्रौणिं कृपं शल्यं वृषसेनं सुयोधनं ।
छादयामास तीव्रेण शरजालेन पाण्डवः । न गृह्णन्नक्षिपन्नाजन्न मुञ्चन्नापि सन्दधन् ।
अदृश्यतार्ज्जुनः सङ्ख्ये शीघ्रास्त्रत्वात् कथञ्चन । धनुर्म्मण्डलमेवास्य दृश्यते स्मास्यतः सदा ।
सायकाश्च व्यदृश्यन्त निश्चरन्तः समन्ततः । कर्णस्य तु धनुश्छित्वा वृषसेनस्य चैव ह । ६२५०
शल्यस्य सूतं भल्लेन रथनीडादपातयत् । गाढविद्धावुभौ कृत्वा शरैः स्वस्रीयमातुलौ ।
अर्ज्जुनो जयतां श्रेष्ठो द्रौणिशारद्वतौ रणे । एवं तान् व्याकुलीकृत्य त्वदीयानां महारथान् ।
उज्जहार शरं घोरं पाण्डवोऽनलसन्निभं । इन्द्राशनिसमप्रख्यं दिव्यमन्त्राभिमन्त्रितं ।
सर्व्वभारसहं शश्वत् गन्धमाल्यार्च्चितं महत् । वज्रेणास्त्रेण संयोज्य विधिवत् कुरुनन्दनः ।
समादधन्महाबाहुर्गाण्डीवे क्षिप्रमर्ज्जुनः । तस्मिन् सन्धीयमाने तु शरे ज्वलनतेजसि । ६२५५
अन्तरीक्षे महानादो भूतानामभवन्नृप । अब्रवीच्च पुनस्तत्र त्वरमाणो जनार्द्दनः ।
धनञ्जय शिरश्छिन्धि सैन्धवस्य दुरात्मनः । अस्तं महीधरं श्रेष्ठं यियासति दिवाकरः ।
शृणुष्वैव च मे वाक्यं जयद्रथवधम्प्रति । वृद्धक्षत्त्रः सैन्धवस्य पिता जगति विश्रुतः ।
स कालेनेह महता सैन्धवं प्राप्तवान् सुतं । जयद्रथममित्रघ्नं वागुवाचाशरीरिणी ।
नृपमन्तर्हिता वाणी मेघदुन्दुभिनिस्वना । तवात्मजोऽयं मर्त्त्येषु कुलशीलदमादिभिः । ६२६०
गुणैर्भविष्यति विभो सदृशो वंशयोर्द्वयोः । क्षत्त्रियप्रवरो लोके नित्यं शूराभिसत्कृतः ।
किन्त्वस्य युध्यमानस्य सङ्ग्रामे क्षत्त्रियर्षभः । शिरश्छेत्स्यति संक्रुद्धः शत्रुरालक्षितो भुवि ।
एतच्छ्रुत्वा सिन्धुराजो ध्यात्वा चिरमरिन्दमः । ज्ञातीन् सर्व्वानुवाचेदं पुत्त्रस्नेहाभिपीडितः ।
सङ्ग्रामे युध्यमानस्य वहतो महतीं धुरं । धरण्यां मम पुत्त्रस्य पातयिष्यति यः शिरः ।
तस्यापि शतधा मूर्द्धा फलिष्यति न संशयः । एवमुक्त्वा ततो राज्ये स्थापयित्वा जयद्रथं । ६२६५
वृद्धक्षत्त्रो वनं यातस्तपश्चेह समास्थितः । सोऽयं तप्यति तेजस्वी तपो घोरं दुरासदं ।
समन्तपञ्चकादस्माद्बहिर्व्वानरकेतन । तस्माज्जयद्रथस्य त्वं शिरश्छित्त्वा महामृधे ।
दिव्येनास्त्रेण रिपुहन् घोरेणाद्भुतकर्म्मणा । सकुण्डलं सिन्धुपतेः प्रभञ्जनसुतानुज ।
उत्सङ्गे पातयस्वाशु वृद्धक्षत्त्रस्य भारत । अथ त्वमस्य मूर्द्धानं पातयिष्यसि भूतले ।
तवापि शतधा मूर्द्धा फलिष्यति न संशयः । यथा चैतन्न जानीयात् स राजा पृथिवीपतिः । ६२७०
तथा कुरु कुरुश्रेष्ठ दिव्यमस्त्रमुपाश्रितः । न ह्यसाध्यमकार्य्यं वा विद्यते तव किञ्चन ।
समस्तेष्वपि लोकेषु त्रिषु वासवनन्दन । एतच्छ्रुत्वा तु वचनं सृक्किणी परिसंलिहन् ।
इन्द्राशनिसमस्पर्शं दिव्यं मन्त्राभिमन्त्रितं । सर्व्वभारसहं शश्वद्गन्धमाल्यार्च्चितं शरं ।
विससर्ज्जार्ज्जुनस्तूर्णं सैन्धवस्य वधे वृतं । स तु गाण्डीवनिर्म्मुक्तः शरः श्येन इवाशुगः ।
शकुन्तमिव वृक्षाग्रात् सैन्धवस्य शिरोऽहरत् । तदरन्तत पुनश्चैव शरैरूर्द्धं धनञ्जयः । ६२७५
दुर्हृदामप्रहर्षाय सुहृदां हर्षणाय च । शरैः कदम्बकीकृत्य काले तस्मिंश्च पाण्डवः ।

समन्तपञ्चकाद्वाह्यं शिरस्तस्य महात्मनः । एतस्मिन्नेव काले तु वृद्धक्षत्रो महीपतिः ।
सन्ध्यामुपास्ते तेजस्वी सम्बन्धी तव मारिष । उपासीनस्य तस्याथ कृष्णकेशं सकुण्डलं ।
सिन्धुराजस्य मूर्द्धानमुत्सङ्गे समपातयत् । तस्योत्सङ्गे निपतितं शिरस्तच्चारुकुण्डलं ।
वृद्धक्षत्रस्य नृपतेरलक्षितमरिन्दम । कृतजप्यस्य तस्याथ वृद्धक्षत्रस्य धीमतः । १२८०
उत्तिष्ठतस्तत् सहसा शिरोऽगच्छद्धरातलं । ततस्तस्य नरेन्द्रस्य पुत्रमूर्द्धनि भूतले ।
गते तस्यापि शतधा मूर्द्धाऽगच्छदरिन्दम । ततः सर्वाणि भूतानि विस्मयं जग्मुरुत्तमं ।
वासुदेवञ्च बीभत्सुं प्रशशंसुश्च सर्वशः । ततो विनिहते राजन् सिन्धुराजे किरीटिना ।
तमस्तद्वासुदेवेन संहृतं भरतर्षभ । पश्चाज्ज्ञातं महीपाल तव पुत्रैः सहानुगैः ।
वासुदेवप्रयुक्तेयं मायेति नृपसत्तम । एवं स निहतो राजन् पार्थेनामिततेजसा । १२८५
अक्षौहिणीरष्ट हत्वा जामाता तव सैन्धवः । ततो दृष्ट्वा विनिहतं सिन्धुराजं जयद्रथं ।
पुत्राणां तव नेत्रेभ्यो दुःखाद्बाष्पमपतद्भृशं । ततो जयद्रथे राजन् हते पार्थेन केशवः ।
दध्मौ शङ्खं महाबाहुरर्जुनश्च परन्तपः । भीमसेनोऽपि सङ्ग्रामे बोधयन्निव पाण्डवं ।
सिंहनादेन महता पूरयामास रोदसी । तं श्रुत्वा तु महानादं धर्म्मपुत्रो युधिष्ठिरः ।
सैन्धवं निहतं मेने फाल्गुनेन महात्मना । ततो वादित्रघोषेण स्वान् योधानभ्यहर्षयत् । १२९०
अभ्यवर्त्तत सङ्ग्रामे भारद्वाजं युयुत्सया । ततः प्रववृते राजन्नस्तं गच्छति भास्करे ।
द्रोणस्य सोमकैः सार्द्धं संग्रामो लोमहर्षणः । ते तु सर्व्वप्रयत्नेन भारद्वाजं जिघांसवः ।
सैन्धवे निहते राजन्नयुध्यन्त महारथाः । पाण्डवास्तु जयं लब्ध्वा सैन्धवं विनिहत्य च ।
अयोधयंस्ततो द्रोणं जयोन्मत्तास्ततस्ततः । अर्ज्जुनोऽपि रणे योधांस्तावकान् रथसत्तमान् ।
अयोधयन्महाराज तं हत्वा सैन्धवं नृपं । १२९५

स देवशत्रूनिव देवराजः किरीटमाली व्यधमत् समन्तात् । यथा तमांस्यभ्युदितस्तमोघ्नः पूर्व्वां प्रतिज्ञां समवाप्य वीरः ।

इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि जयद्रथवधे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

॥ धृतराष्ट्र उवाच ॥ तस्मिन् विनिहते वीरे सैन्धवे सव्यसाचिना । मामका यदकुर्व्वन्त तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ सैन्धवं निहतं दृष्ट्वा रणे पार्थेन मारिष । अमर्षवशमापन्नः कृपः शारद्वतस्तथा ।
महता शरवर्षेण पाण्डवं समवाकिरत् । द्रौणिश्चाभ्यद्रवत् पार्थं रथमास्थाय फाल्गुनं ।
तावेतौ रथिनां श्रेष्ठौ रथाभ्यां रथसत्तमौ । उभावुभयतस्तीक्ष्णैर्विशिखैरभ्यवर्षतां । १३००
स तथा शरवर्षाभ्यां सुमहद्भ्यां महाभुजः । पीड्यमानः परामार्त्तिमगमद्रथिनाम्वरः ।
स जिघांसुर्गुरुं सङ्ख्ये गुरोस्तनयमेव च । चकाराचार्य्यकं तत्र कुन्तीपुत्रो धनञ्जयः ।
अस्त्रैरस्त्राणि संवार्य्य द्रौणेः शारद्वतस्य च । मन्दवेगानिषूंस्ताभ्यामजिघांसुरवासृजत् ।
ते चापि भृशमभ्यघ्नन् विशिखा जयचोदिताः । बहुत्वात्तु परामार्त्तिं शराणां तावगच्छतां ।
अथ शारद्वतो राजन् कौन्तेयशरपीडितः । अवासीदद्रथोपस्थे मूर्च्छामभिजगाम च । १३०५

विलक्षणमभिप्रेक्ष्य भर्त्तारं शरपीड़ितं । हतोऽयमिति च ज्ञात्वा सारथिस्तमपाहरत् ।
तस्मिन् भग्ने महाराज कृपे शारद्वते युधि । अश्वत्थामाऽभ्यपायासीत् पाण्डवेयाद्रथान्तरं ।
दृष्ट्वा शारद्वतं पार्थो मूर्च्छितं शरपीड़ितं । रथएव महेष्वासः कृपणं पर्य्यदेवयत् ।
अश्रुपूर्णमुखो दीनो वचनञ्चेदमब्रवीत् । पश्यन्निदं महाप्राज्ञः क्षत्ता राजानमुक्तवान् ।
कुलान्तकरणे पापे जातमात्रे सुयोधने । नीयतां परलोकाय साध्वयं कुलपांसनः ।	६११०
अस्माद्धि कुरुमुख्यानां महदुत्पत्स्यते भयं । तदिदं समनुप्राप्तं वचनं सत्यवादिनः ।
तत्कृते ह्यद्य पश्यामि शरतल्पगतं गुरुं । धिगस्तु क्षात्रमाचारं धिगस्तु बलपौरुषं ।
को हि ब्राह्मणमाचार्य्यमभिद्रुह्येत मादृशः । ऋषिपुत्त्रो ममाचार्य्यो द्रोणस्य दयितः सखा ।
एष शेते रथोपस्थे मद्बाणैरभिपीड़ितः । अकामयानेन मया विशिखैरर्द्दितो भृशं ।
अवसीदन् रथोपस्थे प्राणान् पीड़यतीव मे । शरार्द्दितेन हि मया प्रेक्षणीयो महाद्युतिः ।	६११५
अभ्यस्तो बहुभिर्ब्बाणैर्दशधर्म्मगतेन वै । शोचयत्येष नितरां भूयः पुत्त्रवधाद्धि मां ।
कृपणं स्वरथे सन्नं पश्य कृष्ण यथागतं । उपाकृत्य तु वै विद्यामाचार्य्येभ्यो नरर्षभाः ।
प्रयच्छन्तीह ये कामान् देवत्वमुपयान्ति ते । ये तु विद्यामुपादाय गुरुभ्यः पुरुषाधमाः ।
घ्नन्ति तानेव दुर्वृत्तास्ते वै निरयगामिनः । तदिदं नरकायाद्य कृतं कर्म्म मया ध्रुवं ।
आचार्य्यं शरवर्षेण रथे सादयता भृशं । यत्तत्पूर्व्वमुपाकुर्व्वन्नस्त्रं मामब्रवीत् कृपः ।	६१२०
न कथञ्चन कौरव्य प्रहर्त्तव्यं गुराविति । तदिदं वचनं साधोराचार्य्यस्य महात्मनः ।
नानुष्ठितं तमेवाजौ विशिखैरभिवर्षता । नमस्तस्मै सुपूज्याय गौतमायापलायिने ।
धिगस्तु मम वार्ष्णेय यो ह्यस्मै प्रहराम्यहं । तथा विलपमाने तु सव्यसाचिनि तम्प्रति ।
सैन्धवं निहतं दृष्ट्वा राधेयः समुपाद्रवत् । तमापतन्तं राधेयमर्ज्जुनस्य रथं प्रति ।
पाञ्चाल्यौ सात्यकिश्चैव सहसा समुपाद्रवन् । उपायान्तन्तु राधेयं दृष्ट्वा पार्थो महारथः ।	६१२५
प्रहसन्देवकीपुत्त्रमिदं वचनमब्रवीत् । एष प्रयात्याधिरथिः सात्यकेः स्यन्दनम्प्रति ।
न मृष्यति हतं नूनं भूरिश्रवसमाहवे । यत्र यात्येष तत्र त्वं चोदयाश्वान् जनार्द्दन ।
मा सौमदत्तेः पदवीं गमयेत् सात्वतं वृषः । एवमुक्तो महाबाहुः केशवः सव्यसाचिना ।
प्रत्युवाच महातेजाः कालयुक्तमिदं वचः । अलमेष महाबाहुः कर्णायैको हि पाण्डव ।
किम्पुनर्द्रौपदेयाभ्यां सहितः सात्वतर्षभः । न च तावत्क्षमः पार्थ कर्णेन तव सङ्गरः ।	६१३०
प्रज्वलन्ती महोल्केव तिष्ठत्यस्य हि वासवी । त्वदर्थं पूज्यमाना वै रक्ष्यते परवीरहन् ।
अतः कर्णः प्रयात्वत्र सात्वतस्य यथातथा । अहं ज्ञास्यामि कौन्तेय कालमस्य दुरात्मनः ।
यत्रैनं विशिखैस्तीक्ष्णैः पातयिष्यसि भूतले ।
॥ धृतराष्ट्र उवाच ॥ योऽसौ कर्णेन वीरेण वार्ष्णेयस्य समागमः । हते च भूरिश्रवसि सैन्धवे च निपातिते ।
सात्यकिश्चापि विरथः कं समारूढवान् रथं । चक्ररक्षौ तु पाञ्चाल्यौ तन्ममाचक्ष्व सञ्जय ।	६१३५

॥ सञ्जय उवाच ॥ हन्त ते वर्त्तयिष्यामि यथावृत्तं महारणे । शुश्रूषस्व स्थिरो भूत्वा दुराचरितमात्मनः ।
पूर्व्वमेव हि कृष्णस्य मनोगतमिदं प्रभो । विजेतव्यो यथा वीरः सात्यकिर्यूपकेतुना ।
अतीतानागते राजन् स हि वेत्ति जनार्द्दनः । ततः सूतं समानीय दारुकं सन्दिदेश ह ।
रथो मे युज्यतां कल्यमिति राजन्महाबलः । न हि देवा न गन्धर्व्वा न यक्षोरगराक्षसाः ।
मानवाश्च विजेतारः कृष्णयोः सन्ति केचन । पितामहपुरोगाश्च देवाः सिद्धाश्च तं विदुः । ६२४०
तयोः प्रभावमतुलं शृणु युद्धन्तु तत्तथा । सात्यकिं विरथं दृष्ट्वा कर्णञ्चाभ्युद्यतं युधि ।
दध्मौ शङ्खं महानादमार्षभेणाथ माधवः । दारुको वेत्ति सन्देशं श्रुत्वा शङ्खस्य च स्वनं ।
रथमन्वानयत्तस्मै सुपर्णोच्छ्रितकेतनं । स केशवस्यानुमते रथं दारुकसंयुतं ।
आरुरोह शिनेः पौत्रो ज्वलनादित्यसन्निभं । कामगैः शैब्यसुग्रीवमेघपुष्पबलाहकैः ।
हयोदग्रैर्महावेगैर्हेमभाण्डविभूषितैः । युक्तं समारुह्य च तं विमानप्रतिमं रथं । ६२४५
अभ्यद्रवत राधेयं प्रवपन् सायकान् बहून् । चक्ररक्षावपि तदा युधामन्यूत्तमौजसौ ।
धनञ्जयरथं हित्वा राधेयं प्रत्युदीयतुः । राधेयोऽपि महाराज शरवर्षं समुत्सृजन् ।
अभ्यद्रवत् सुसंक्रुद्धो रणे शैनेयमच्युत । नैव दैवं न गान्धर्व्वं नासुरोरगराक्षसं ।
तादृशं भुवि नो युद्धं दिवि वा श्रुतमित्युत । उपारमत तत्सैन्यं सरथाश्वनरद्विपं ।
तयोर्दृष्ट्वा महाराज कर्म्म संमूढचेतनं । सर्व्वे च समपश्यन्त तद्युद्धमतिमानुषं । ६२५०
तयोर्नृवरयो राजन् सारथ्यं दारुकस्य च । गतप्रत्यागतावृत्तैर्मण्डलैः सन्निवर्त्तनैः ।
सारथेस्तु रथस्थस्य काश्यपेयस्य विस्मिताः । नभस्तलगताश्चैव देवगन्धर्व्वदानवाः ।
अतीवावहिता द्रष्टुं कर्णशैनेययो रणं । मित्रार्थे तौ पराक्रान्तौ स्पर्द्धिनौ शुष्मिणौ रणे ।
कर्णश्चामरसङ्काशो युयुधानश्च सात्यकिः । अन्योऽन्यं तौ महाराज शरवर्षैरवर्षतां ।
प्रममाथ शिनेः पौत्रं कर्णः सायकवृष्टिभिः । अमृष्यमाणो निधनं कौरव्यजलसन्धयोः । ६२५५
कर्णः शोकसमाविष्टो महोरग इव श्वसन् । स शैनेयं रणे क्रुद्धः प्रदहन्निव चक्षुषा ।
अभ्यद्रवत वेगेन पुनः पुनररिन्दम । तन्तु सम्प्रेक्ष्य संक्रुद्धं सात्यकिः प्रत्यविध्यत ।
महता शरवर्षेण गजः प्रतिगजं यथा । तौ समेत्य नरव्याघ्रौ व्याघ्राविव तरस्विनौ ।
अन्योऽन्यं सन्ततक्षाते रणेऽनुपमविक्रमौ । ततः कर्णं शिनेः पौत्रः सर्व्वपारसवैः शरैः ।
बिभेद सर्व्वगात्रेषु पुनः पुनररिन्दमं । सारथिञ्चास्य भल्लेन रथनीडादपाहरत् । ६२६०
अश्वांश्च चतुरः श्वेतान् निजघ्ने निशितैः शरैः । छित्वा ध्वजं शतेनैव शतधा पुरुषर्षभः ।
चकार विरथं कर्णं तव पुत्रस्य पश्यतः । ततो विमनसो राजंस्तावका भरतर्षभ ।
वृषसेनः कर्णसुतः शल्यो मद्राधिपस्तथा । द्रोणपुत्रश्च शैनेयं सर्व्वतः पर्य्यवारयन् ।
ततः पर्य्याकुलं सर्व्वं न प्राज्ञायत किञ्चन । तथा सात्यकिना वीरे विरथे सूतजे कृते ।
हाहाकारस्ततो राजन् सर्व्वसैन्येषु चाभवत् । कर्णोऽपि विह्वलो राजन् सात्वतेनार्दितः शरैः । ६२६५

दुर्य्योधनरथं राजन्नारुरोह विनिःश्वसन् । मानयंस्तव पुत्रस्य बाल्यात्प्रभृति सौहृदं ।
कृतां राज्यप्रदानेन प्रतिज्ञां परिपालयन् । तथा तु विरथं कर्णं पुत्रान् वै तव पार्थिव ।
दुःशासनमुखान् शूरान्नावधीत्सात्यकिर्व्वशी । रक्षन् प्रतिज्ञां भीमेन पार्थेन च कृतां पुरा ।
विरथान् विह्वलांश्चक्रे नतु प्राणैर्व्ययोजयत् । भीमसेनेन तु वधः पुत्राणां ते प्रतिश्रुतः ।
पुनर्द्यूते च पार्थेन वधः कर्णस्य संश्रुतः । वधे त्वकुर्व्वन् यत्नं ते तस्य कर्णमुखा रथाः । ६१७०
नाशक्नुवंश्च तं हन्तुं सात्यकिं प्रवरा रथाः । द्रौणिश्च कृतवर्म्मा च तथैवान्ये महारथाः ।
निर्जिता धनुषैकेन शतशः क्षत्रियर्षभाः । काङ्क्षता परलोकञ्च धर्म्मराजस्य च प्रियं ।
कृष्णयोः सदृशो वीर्य्ये सात्यकिः शत्रुकर्षणः । जितवान् सर्व्वसैन्यानि तावकानि हसन्निव ।
कृष्णो वापि भवेल्लोके पार्थो वापि धनुर्धरः । शैनेयो वा नरश्रेष्ठ चतुर्थो नोपलभ्यते ।
॥ धृतराष्ट्र उवाच ॥ अजय्यं रथमास्थाय वासुदेवस्य सात्यकिः । विरथं कृतवान् कर्णं वासुदेवसमो युधि । ६१७५
दारुकेण समायुक्तः स्वबाहुबलदर्पितः । कच्चिदन्यं समारूढः स रथं सात्यकिः पुनः ।
एतदिच्छाम्यहं श्रोतुं कुशलो ह्यसि भाषितुं । असह्यं तमहं मन्ये तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ शृणु राजन् यथा तस्य रथमन्यं महामतिः । दारुकस्यानुजस्तूर्णं कल्पनाविधिकल्पितं ।
आयसैः काञ्चनैश्चापि पट्टैः सन्नद्धकूवरं । तारासहस्रखचितं सिंहध्वजपताकिनं ।
अश्वैर्व्वातजवैर्युक्तं हेमभाण्डपरिच्छदैः । रथं सम्पादयामास मेघगम्भीरनिस्वनं । ६१८०
तं समारुह्य शैनेयस्तव सैन्यमुपाद्रवत् । दारुकोऽपि यथाकामं प्रययौ केशवान्तिकं ।
कर्णस्यापि महाराज शङ्खगोक्षीरपाण्डुरैः । चित्रकाञ्चनसन्नाहैः सदश्वैर्वेगवत्तरैः ।
हेमकक्षाध्वजोपेतं क्लृप्तयन्त्रपताकिनं । अग्र्यं रथं सुयन्तारं बहुशस्त्रपरिच्छदं ।
उपाजह्रुस्तमास्थाय कर्णोऽप्यभ्याद्रवद्रिपून् । एतत्ते सर्व्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
भूयश्चापि निबोध त्वं तवापनयजं क्षयं । एकत्रिंशत्तव सुता भीमसेनेन पातिताः । ६१८५
दुर्मुखं प्रमुखे कृत्वा सततं चित्रयोधिना । शतशो निहताः शूराः सात्वतेनार्ज्जुनेन च ।
भीष्मं प्रमुखतः कृत्वा भगदत्तञ्च मारिष । एवमेष क्षयो वृत्तो राजन् दुर्म्मन्त्रिते तव ।
इति श्रीमहाभारते द्रोणपर्व्वणि कर्णसात्यकियुद्धे सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥
॥ धृतराष्ट्र उवाच ॥ तथा गतेषु शूरेषु तेषां मम च संयुगे । किं वै भीमस्तदाकार्षीत्तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ विरथो भीमसेनो वै कर्णवाक्शल्यपीडितः । अमर्षवशमापन्नः फाल्गुनं वाक्यमब्रवीत् ।
पुनः पुनस्तूवरक मूढ औदरिकेति च । अकृतास्त्रक मा योत्सीर्बाल सङ्ग्रामकातर । ६१९०
इति मामब्रवीत् कर्णः पश्यतस्ते धनञ्जय । एवं वक्ता च मे वध्यस्तेन चोक्तोऽस्मि भारत ।
एतद्व्रतं महाबाहो त्वया सह कृतं मया । यथैतन्मम कौन्तेय तथा तव न संशयः ।
तत्पालय नरश्रेष्ठ स्मरैतद्वचनं मम । यथा भवति तत्सत्यं तथा कुरु धनञ्जय ।
तच्छ्रुत्वा वचनं तस्य भीमस्यामितविक्रमः । ततोऽर्ज्जुनोऽब्रवीत् कर्णं किञ्चिदभ्येत्य संयुगे ।

कर्ण कर्ण वृथादृष्टे सूतपुत्रात्मसंस्तुत । अधर्म्मबुद्धे शृणु मे यत्त्वां वक्ष्यामि साम्प्रतं । ६६९५
द्विविधं कर्म्म शूराणां युद्धे जयपराजयौ । तौ चाप्यनित्यौ राधेय वासवस्यापि युध्यतः ।
मुमूर्षुर्युयुधानेन विरथो विकलेन्द्रियः । मद्वध्यस्त्वमिति ज्ञात्वा जित्वा जीवन्विसर्ज्जितः ।
यदृच्छया भीमसेनं विरथं कृतवानसि । अधर्मस्त्वेष राधेय यत्त्वं भीममवोचथाः ।
नारिं जित्वा विकत्थन्ते न च जल्पन्ति दुर्व्वचः । न च किञ्चन निन्दन्ति सन्तः शूरा नरर्षभाः ।
त्वन्तु प्राकृतविज्ञानस्तत्तद्वदसि सूतज । युध्यमानं पराक्रान्तं शूरमार्य्यव्रते रतं । ६७००
यदवोचोऽप्रियं भीमं नैतत्सत्यं वचस्तव । पश्यतां सर्व्वसैन्यानां केशवस्य ममैव च ।
विरथो भीमसेनेन कृतोऽसि बहुशो रणे । न च त्वां परुषं किञ्चिदुक्तवान् पाण्डुनन्दनः ।
यस्मादत्र च रूक्षञ्च श्रावितस्ते वृकोदरः । परोक्षं यच्च सौभद्रो युष्माभिर्निहतो मम ।
तस्मादस्यावलेपस्य सद्यः फलमवाप्नुहि । त्वया तस्य धनुश्छिन्नमात्मनाशाय दुर्म्मते ।
तस्माद्वध्योऽसि मे मूढ सभृत्यबलवाहनः । कुरु त्वं सर्व्वकृत्यानि महत्ते भयमागतं । ६७०५
हन्तास्मि वृषसेनं ते प्रेक्षमाणस्य संयुगे । ये चान्ये तूपयास्यन्ति बुद्धिमोहेन मां नृपाः ।
तांश्च सर्व्वान् हनिष्यामि सत्येनायुधमालभे । त्वाञ्च मूढाकृतप्रज्ञमभिमानिनमाहवे ।
दृष्ट्वा दुर्य्योधनो मन्दो भ्रष्टं तप्स्यति पातितं । अर्जुनेन प्रतिज्ञाते वधे कर्णसुतस्य तु ।
महान् सुतुमुलः शब्दो बभूव रथिनां तदा । तस्मिन्नाकुलसङ्ग्रामे वर्त्तमाने भयावहे ।
मन्दरश्मिः सहस्रांशुरस्तं गिरिमुपागमत् । ततो राजन् हृषीकेशः सङ्ग्रामशिरसि स्थितं । ६७१०
तीर्णप्रतिज्ञं बीभत्सुं परिष्वज्येदमब्रवीत् । दिष्ट्या सम्पादिता जिष्णो प्रतिज्ञा महती त्वया ।
दिष्ट्या च निहतः पापो वृद्धक्षत्रः सहात्मजः । धार्त्तराष्ट्रबलं प्राप्य देवसेनापि भारत ।
सीदेत समरे जिष्णो नात्र कार्य्या विचारणा । न तं पश्यामि लोकेषु चिन्तयन् पुरुषं क्वचित् ।
त्वदृते पुरुषव्याघ्र य एतद्योधयेद्बलं । महाप्रभावा बहवस्त्वया तुल्याधिकापि वा ।
समेताः पृथिवीपाला धार्त्तराष्ट्रस्य कारणात् । ते त्वां प्राप्य रणे क्रुद्धं नाभ्यवर्त्तन्त दंशिताः । ६७१५
तव वीर्य्यं बलञ्चैव रुद्रशक्रान्तकोपमं । नेदृशं शक्नुयात् कश्चिद्रणे कर्त्तुं पराक्रमं ।
यादृशं कृतवानद्य त्वमेकः शत्रुतापन । एवमेव हते कर्णे सानुबन्धे दुरात्मनि ।
वर्द्धयिष्यामि भूयस्त्वां विजितारिं हतद्विषं । तमर्जुनः प्रत्युवाच प्रसादात्तव माधव ।
प्रतिज्ञेयं मया तीर्णा विबुधैरपि दुस्तरा । अनाश्चर्य्यो जयस्तेषां येषां नाथोऽसि केशव ।
त्वत्प्रसादान्महीं कृत्स्नां सम्प्राप्स्यति युधिष्ठिरः । तव प्रभावो वार्ष्णेय तवैव विजयः प्रभो । ६७२०
वर्द्धनीयास्तव वयं प्रेष्याश्च मधुसूदन । एवमुक्तः स्मयन् कृष्णः शनकैर्वाहयन् हयान् ।
दर्शयामास पार्थाय क्रूरमायोधनं महत् ।
॥ कृष्ण उवाच ॥ प्रार्थयन्तो जयं युद्धे प्रथितञ्च महद्यशः । पृथिव्यां शेरते शूराः पार्थिवास्त्वच्छरैर्हताः ।
विकीर्णशस्त्राभरणा विपन्नाश्वरथद्विपाः । संछिन्नभिन्नवर्म्माणो वैक्लव्यं परमं गताः ।

सवत्ता गतसत्त्वाश्च प्रभया परया युताः । क्लीबा इव नरव्याघ्र गतसत्त्वा नराधिप । ६४२५
तेषां शरैः स्वर्णपुङ्खैः शस्त्रैश्च विविधैस्तथा । वाहनैरायुधैश्चैव सम्पूर्णा पश्य मेदिनीं ।
चर्म्मभिर्व्यजनैर्हारैश्च शिरोभिश्च सकुण्डलैः । उष्णीषमुकुटैः स्रग्भिश्चूडामणिभिरेव च ।
कण्ठसूत्रैरङ्गदैश्च निष्कैरपि च सुप्रभैः । अन्यैश्चाभरणैश्चित्रैर्भाति भारत मेदिनी ।
अनुकर्षैरुपासङ्गैः पताकाभिर्ध्वजैस्तथा । उपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
चक्रैः प्रमथितैश्चित्रैरक्षैश्च बहुधा रणे । युगैर्योक्त्रैः कलापैश्च धनुर्भिः सायकैस्तथा । ६४३०
परिस्तोमैः कुथाभिश्च परिघैरङ्कुशैस्तथा । शक्तिभिर्भिन्दिपालैश्च तूणैः शूलैः परश्वधैः ।
प्रासैश्च तोमरैश्चैव कुन्तैर्यष्टिभिरेव च । शतघ्नीभिर्भुशुण्डीभिः खड्गैः परशुभिस्तथा ।
मुषलैर्मुद्गरैश्चैव गदाभिः कुणपैस्तथा । सुवर्णविकृताभिश्च कशाभिर्भरतर्षभ ।
घण्टाभिश्च गजेन्द्राणां भाण्डैश्च विविधैरपि । स्रग्भिश्च नानाभरणैर्वस्त्रैश्चैव महाधनैः ।
अपविद्धैर्व्वभौ भूमिर्ग्रहैर्द्यौरिव शारदी । पृथिव्यां पृथिवीहेतोः पृथिवीपतयो हताः । ६४३५
पृथिवीमुपगुह्याङ्गैः सुप्ताः कान्तामिव प्रियां । इमांश्च गिरिकूटाभान्नागानैरावतोपमान् ।
क्षरन्तः शोणितं भूरि शस्त्रच्छेददरीमुखैः । दरीमुखैरिव गिरीन् गैरिकाम्बुपरिस्रवान् ।
तांश्च बाणहतान् वीर पश्य निष्टनतः क्षितौ । हयांश्च पतितान् पश्य स्वर्णभाण्डविभूषितान् ।
गन्धर्व्वनगराकारान् रथांश्च निहतेश्वरान् । छिन्नध्वजपताकाक्षान् विचक्रान् हतसारथीन् ।
निकृत्तकूवरयुगान् भग्नेषाबन्धुरान् प्रभो । पश्य पार्थ हतान् भूमौ विमानोपमदर्शनान् । ६४४०
पत्तींश्च निहतान् वीर शतशोऽथ सहस्रशः । धनुर्भृतश्चर्म्मभृतः शयानान् रुधिरोक्षितान् ।
महीमालिङ्ग्य सर्व्वाङ्गैः पांशुध्वस्तशिरोरुहान् । पश्य योधान्महाबाहो त्वच्छरैर्भिन्नविग्रहान् ।
निपातितद्विपरथवाजिसङ्कुलमसृग्वसापिशितसमृद्धकर्द्दमं । निशाचरश्ववृककपिशाचमोदनं महीतलं नरवर पश्य दुर्द्दृशं ।
इदं महत्त्वय्युपपद्यते प्रभो रणाजिरे कर्म्म यशोऽभिवर्द्धनं । शतक्रतौ चापि च देवसत्तमे महाहवे जघ्नुषि दैत्यदानवान् ।
सन्दर्शयन्नेव किरीटिनेऽरिहा जनार्द्दनस्तामरिभूमिमच्युता । अजातशत्रुं समुपेत्य पाण्डवं निवेदयामास हतं जयद्रथं ।६४४५
चामरव्यजनैश्छत्रैर्ध्वजैश्चाम्बरथद्विपैः । विविधैश्च परिस्तोमैरश्वानाञ्च प्रकर्षणैः ।
कुथाभिश्च विचित्राभिर्व्वरथैश्च महाधनैः । संस्तीर्णां वसुधां पश्य चित्रपटैरिवाचितां ।
नागेभ्यः पतितानन्यान् कल्पितेभ्यो द्विपैः सह । सिंहान् वज्रप्रणुन्नेभ्यो गिर्य्यग्रेभ्य इव च्युतान् ।
संस्यूतान् वाजिभिः सार्द्धं धनुर्भिश्च तथापरान् । पदातीन् सादिनश्चैव क्षतजौघपरिच्युतान् ।
॥ सञ्जय उवाच ॥ एवं सन्दर्शयन् कृष्णो रणभूमिं किरीटिने । स्वैः समेतः समुदितैः पाञ्चजन्यं व्यनादयत् । ६४५०
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि युद्धभूमिदर्शनेऽष्टचत्वारिंशदधिकशततोऽध्यायः ॥ १४८ ॥
॥ सञ्जय उवाच ॥ ततो राजानमभ्येत्य धर्म्मपुत्रं युधिष्ठिरं । ववन्दे संप्रहृष्टात्मा हते पार्थेन सैन्धवे ।
दिष्ट्या वर्द्धसि राजेन्द्र हतशत्रुर्नरोत्तम । दिष्ट्या निस्तीर्णवांश्चैव प्रतिज्ञामनुजस्तव ।
सत्त्वेवमुक्तः कृष्णेन हृष्टः परपुरञ्जयः । ततो युधिष्ठिरो राजा रथादाप्लुत्य भारत ।

पर्य्यष्वजत्तदा कृष्णावानन्दाश्रुपरिप्लुतः । प्रमृज्य वदनं शुभ्रं पुण्डरीकसमप्रभं ।
अब्रवीद्वासुदेवञ्च पाण्डवञ्च धनञ्जयं । दिष्ट्या पश्यामि सङ्ग्रामे तीर्णभारौ महारथौ । ६५५
दिष्ट्या च निहतः पापः सैन्धवः पुरुषाधमः । कृष्णौ दिष्ट्या मम प्रीतिर्महती प्रतिपादिता ।
दिष्ट्या शत्रुगणाश्चैव निमग्नाः शोकसागरे । न तेषां दुष्कृतं किञ्चित्त्रिषु लोकेषु विद्यते ।
सर्व्वलोकगुरुर्येषां त्वन्नाथो मधुसूदन । त्वत्प्रसादाद्धि गोविन्द वयं जेष्यामहे रिपून् ।
यथा पूर्व्वं प्रसादात्ते दानवान् पाकशासनः । पृथिव्या विजयो वाऽपि त्रैलोक्यविजयोऽपि च ।
ध्रुवो हि तेषां वार्ष्णेय येषां तुष्टोऽसि मानद । न तेषां विद्यते पापं सङ्ग्रामे वा पराजयः । ६६०
त्रिदशेश्वरनाथस्त्वं येषां तुष्टोऽसि मानद । त्वत्प्रसादात् हृषीकेश शक्रः सुरगणेश्वरः ।
त्रैलोक्यविजयं श्रीमान् प्राप्तवान् रणमूर्द्धनि । तव चैव प्रसादेन त्रिदशास्त्रिदशेश्वर ।
अमरत्वं गताः कृष्ण लोकांश्चाश्नुवतेऽक्षयान् । त्वत्प्रसादसमुत्थेन विक्रमेणारिसूदन ।
सुरेशत्वं गतः शक्रो हत्वा दैत्यान् सहस्रशः । त्वत्प्रसादात् हृषीकेश जगत्स्थावरजङ्गमं ।
स्ववर्त्मनि स्थितं वीर जपहोमेषु वर्त्तते । एकार्णवमिदं पूर्व्वं सर्व्वमासीत्तमोमयं । ६६५
त्वत्प्रसादान्महाबाहो जगत् प्राप्तं नरोत्तम । स्रष्टारं सर्व्वलोकानां परमात्मानमव्ययं ।
ये पश्यन्ति हृषीकेशं न ते मुह्यन्ति कर्हिचित् । पुराणं परमं देवं देवदेवं सनातनं ।
ये प्रपन्नाः सुरगुरुं न ते मुह्यन्ति कर्हिचित् । अनादिनिधनं देवं लोककर्त्तारमव्ययं ।
ये भक्तास्त्वां हृषीकेश दुर्गाण्यति तरन्ति ते । परं पुराणं पुरुषं पराणां परमञ्च यत् ।
प्रपद्यतस्तत्परमं परा भूतिर्व्विधीयते । गायन्ति चतुरो वेदा यश्च वेदेषु गीयते । ६७०
तं प्रपद्य महात्मानं भूतिमस्राम्यनुत्तमां । परमेश परेशेश तिर्य्यगीश नरेश्वर ।
सर्व्वेश्वरेश्वरेशेश नमस्ते पुरुषोत्तम । त्वमीश ईश्वरेशान प्रभो वर्द्धस्व माधव ।
प्रभवाप्यय सर्व्वस्य सर्व्वात्मन् पृथुलोचन । धनञ्जयसखा यश्च धनञ्जयहितश्च यः ।
धनञ्जयस्य गोप्तारं प्रपद्य सुखमेधते । एवमुक्तौ महात्मानौ तदा केशवपाण्डवौ ।
तावब्रूतां तदा हृष्टौ राजानं पृथिवीपतिं । तव कोपाग्निना दग्धः पापो राजा जयद्रथः । ६७५
उदीर्णञ्चापि सुमहद्धार्त्तराष्ट्रबलं प्रभो । हन्यन्ते निहताश्चैव विनङ्क्ष्यन्ति च भारत ।
तव क्रोधाद्धता ह्येते कौरवाः शत्रुसूदन । त्वां हि चक्षुर्हणं वीर कोपयित्वा सुयोधनः ।
समित्रबन्धुः समरे प्राणांस्त्यक्ष्यति दुर्म्मतिः । तव क्रोधहतः पूर्व्वं देवैरपि दुरासदः ।
शरतल्पगतः शेते भीष्मः कुरुपितामहः । दुर्लभो हि जयस्तेषां सङ्ग्रामे रिपुसूदन ।
याता मृत्युवशं ते च येषां द्वेष्टा च पाण्डवः । राज्यं प्राणाः प्रियाः पुत्राः सौख्यानि विविधानि च । ६८०
अचिरात्तस्य नश्यन्ति यस्य क्रुद्धः परन्तप । विनष्टान् कौरवान्मन्ये सपुत्रपशुबान्धवान् ।
राजधर्म्मपरे नित्यं त्वयि क्रुद्धे परन्तप । ततो भीमो महाराज सात्यकिश्च महारथः ।
अभिवाद्य गुरुं ज्येष्ठं मार्गणैः क्षतविक्षतौ । स्थितावास्तां महेष्वासौ पाञ्चाल्यैः परिवारितौ ।

तौ दृष्ट्वा मुदितौ वीरौ प्राञ्जली समुपस्थितौ । अभ्यनन्दत कौन्तेयस्तावुभौ भीमसात्यकी ।
दिष्ट्या पश्यामि वां शूरौ विमुक्तौ सैन्यसागरात् । द्रोणग्राहाद्दुराधर्षात् हार्द्दिक्यमकरालयात् ।　　६८८५
दिष्ट्या नो निर्जिताः सर्व्वे पृथिव्यां सर्व्वपार्थिवाः ।
युवां विजयिनौ चापि दिष्ट्या पश्यामि संयुगे । दिष्ट्या द्रोणो जितः सङ्ख्ये हार्द्दिक्यश्च महारथः ।
दिष्ट्या विकर्णिभिः कर्णो रणे नीतः पराजयं । विमुखश्च कृतः शल्यो युवाभ्यां पुरुषर्षभौ ।
दिष्ट्या युवां कुशलिनौ सङ्ग्रामात् पुनरागतौ । पश्यामि रथिनां श्रेष्ठावुभौ युद्धविशारदौ ।
मम वाक्यकरौ वीरौ मम गौरवयन्त्रितौ । सैन्यार्णवं समुत्तीर्णौ दिष्ट्या पश्यामि वामहं ।　　६८९०
समरश्लाघिनौ वीरौ सङ्ग्रामेष्वपलायिनौ । मम प्राणसमौ चैव दिष्ट्या पश्यामि वामहं ।
इत्युक्त्वा पाण्डवो राजन् युयुधानवृकोदरौ । सस्वजे पुरुषव्याघ्रौ हर्षाद्वाष्पं मुमोच ह ।
ततः प्रमुदितं सर्व्वं बलमासीद्विशाम्पते । पाण्डवानां रणे हृष्टं युद्धाय च मनो दधे ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि युधिष्ठिरहर्षे एकोनपञ्चाशदधिकशततोऽध्यायः ॥ १४९ ॥
॥ सञ्जय उवाच ॥ सैन्धवे निहते राजन् पुत्रस्तव सुयोधनः । अश्रुक्लिन्नमुखो दीनो निरुत्साहो द्विषज्जये ।
दुर्म्मना निःश्वसन्नुष्णं भग्नदंष्ट्र इवोरगः । आगच्छत् सर्व्वलोकस्य पुत्रस्तेऽर्त्तिं परामगात् ।　　६८९५
दृष्ट्वा तत् कदनं घोरं स्वबलस्य कृतं महत् । जिष्णुना भीमसेनेन सात्वतेन च संयुगे ।
स विवर्णः कृशो दीनो वाष्पविप्लुतलोचनः । अमन्यतार्ज्जुनसमो न योद्धा भुवि विद्यते ।
न द्रोणो न च राधेयो नाश्वत्थामा कृपो न च । क्रुद्धस्य प्रमुखे स्थातुं पर्य्याप्ता इति मारिष ।
निर्जित्य हि रणे पार्थः सर्व्वान्मम महारथान् । अवधीत् सैन्धवं सङ्ख्ये नैनं कश्चिदवारयत् ।
सर्व्वथा हतमेवेदं पाण्डवैर्म्मे महद्बलं । न ह्यस्य विद्यते त्राता साक्षादपि पुरन्दरः ।　　६९००
यमुपाश्रित्य सङ्ग्रामे कृतः शस्त्रसमुद्यमः । स कर्णो निर्जितः सङ्ख्ये हतश्चैव जयद्रथः ।
यस्य वीर्य्यं समाश्रित्य शमं याचन्तमच्युतं । तृणवत्तमहं मन्ये स कर्णो निर्ज्जितो युधि ।
एवं क्लान्तमना राजन्नुपायात् द्रोणमीक्षितुं । आगस्कृत्सर्व्वलोकस्य पुत्रस्ते भरतर्षभ ।
ततस्तत्सर्व्वमाचख्यौ कुरूणां वैशसं महत् । परान्विजयतश्चापि धार्त्तराष्ट्रान्निमज्जतः ।
॥ दुर्य्योधन उवाच ॥ पश्य मूर्द्धाभिषिक्तानामाचार्य्य कदनं महत् । कृत्वा प्रमुखतो भीष्मं शूरं मम पितामहं ।　　६९०५
तं निहत्य प्रलुब्धोऽयं शिखण्डी पूर्णमानसः । पाञ्चालैः सहितः सर्व्वैः सेनाग्रमभिवर्त्तते ।
अपरश्चापि दुर्द्धर्षः शिष्यस्ते सव्यसाचिना । अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः ।
अस्मद्विजयकामानां सुहृदामुपकारिणां । गन्तास्मि कथमानृण्यं गतानां यमसादनं ।
ये मदर्थं परीप्सन्ते वसुधां वसुधाधिपाः । ते हित्वा वसुधैश्वर्य्यं वसुधामधिशेरते ।
सोऽहं कापुरुषः कृत्वा मित्राणां क्षयमीदृशं । नाश्वमेधसहस्रेण पातुमात्मानमुत्सहे ।　　६९१०
मम लुब्धस्य पापस्य तथा धर्म्मापचायिनः । व्यायामेन जिगीषन्तः प्राप्ता वैवस्वतक्षयं ।
कथं पतितवृत्तस्य पृथिवी सुहृदां द्रुहः । विवरं नाशकद्दातुं पृथिवी मम दुर्म्मतेः ।

योऽयं रुधिररक्ताङ्गो राज्ञां मध्ये पितामहः । किन्न्वक्ष्यति दुर्द्धर्षः समेत्य परलोकजित् ।
जलसन्धं महेष्वासं पश्य सात्यकिना हतं । मदर्थमुद्यतं शूरं प्राणांस्त्यक्त्वा महारथ ।
काम्बोजं निहतं दृष्ट्वा तथाऽलम्बुषमेव च । अन्यान् बहूंश्च सुहृदो जीवितार्थोऽद्य को मम । ६११५
व्यायच्छन्तो हताः शूरा मदर्थे येऽपराङ्मुखाः । यतमानाः परं शक्त्या विजेतुमहिताम्मम ।
तेषां गत्वाऽहमानृण्यमद्य शक्त्या परन्तप । तर्पयिष्यामि तानेव जलेन यमुनामनु ।
सत्यन्ते प्रतिजानामि सर्व्वशस्त्रभृताम्बर । इष्टापूर्त्तेन च शपे वीर्य्येण च सुतैरपि ।
निहत्य तान् रणे सर्व्वान् पाञ्चालान् पाण्डुभिः सह । शान्तिं गन्तास्मि तेषां वा रणे गन्तास्मि लोकतां ।
सोऽहं तत्र गमिष्यामि यत्र ते पुरुषर्षभाः । हता मदर्थं सङ्ग्रामे युध्यमानाः किरीटिना । ६१२०
नहीदानीं सहाया मे परीप्सन्त्यनुपस्कृताः । श्रेयो हि पाण्डून्मन्यन्ते न तथाऽस्मान्महाभुज ।
स्वयं हि मृत्युर्व्विहितः सत्यसन्धेन संयुगे । भवानुपेक्षां कुरुते शिष्यत्वादर्ज्जुनस्य तु ।
अतो हि निहताः सर्व्वे येऽस्मज्जयचिकीर्षवः । कर्णमेव तु पश्यामि सम्प्रत्यस्मज्जयैषिणं ।
यो हि मित्रमविज्ञाय याथातथ्येन मन्दधीः । मित्रार्थे योजयत्येनं तस्यार्थो ह्यवसीदति ।
तादृग्रूपं कृतमिदं मम कार्य्यं सुहृत्तमैः । मोहाल्लुब्धस्य पापस्य जिह्मस्य धनमीहतः । ६१२५
हतो जयद्रथो राजा सौमदत्तिश्च वीर्य्यवान् । अभीषाहाः शूरसेनाः शिवयोऽथ वसातयः ।
सोऽहमद्य गमिष्यामि यत्र ते पुरुषर्षभाः । हता मदर्थं सङ्ग्रामे युध्यमानाः किरीटिना ।
न हि मे जीवितेनार्थस्तानृते पुरुषर्षभान् । आचार्य्यः पाण्डुपुत्राणामनुजानातु नो भवान् ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि दुर्य्योधनानुतापे पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥
॥ धृतराष्ट्र उवाच ॥ सिन्धुराजे हते तात समरे सव्यसाचिना । तथैव भूरिश्रवसि किमासीद्वो मनस्तदा ।
दुर्य्योधनेन च द्रोणस्तथोक्तः कुरुसंसदि । किमुक्तवान् परं तस्मै तन्ममाचक्ष्व सञ्जय । ६१३०
॥ सञ्जय उवाच ॥ निष्टानको महानासीत् सैन्यानां तव भारत । सैन्धवं निहतं दृष्ट्वा भूरिश्रवसमेव च ।
अवामन्यन्त ते सर्व्वे तव पुत्रस्य मन्त्रितं । येन मन्त्रेण निहताः शतशः पुरुषर्षभाः ।
द्रोणस्तु तद्वचः श्रुत्वा तव पुत्रस्य दुर्मनाः । ध्यात्वा मुहूर्त्तं राजेन्द्र भृशमार्त्तोऽभ्यभाषत ।
॥ द्रोण उवाच ॥ दुर्य्योधन किमेवं मां वाक्शरैरुपविध्यसि । अजय्यं हि सदा सङ्ख्ये ब्रुवाणं सव्यसाचिनं ।
एतेनैवार्ज्जुनं ज्ञातुमलं कौरव संयुगे । यच्छिखण्ड्यवधीद्भीष्मं पाल्यमानः किरीटिना । ६१३५
अवध्यं निहतं दृष्ट्वा संयुगे देवदानवैः । तदैवाज्ञासिषमहं नेयमस्तीति भारती ।
यः पुंसां त्रिषु लोकेषु सर्व्वशूरममंस्महि । तस्मिन्निपतिते शूरे किं शेषं पर्य्युपास्महे ।
यान् स्म तान् ग्लहते तात शकुनिः कुरुसंसदि । अक्षान्न तेऽक्षा निशिता वाणास्ते शत्रुसाधनाः ।
तत्र ते घ्नन्ति नस्तात विशिखा जयनोदिताः । यांस्तदाख्यायमानस्त्वं विदुरेण न बुध्यसे ।
यास्ता विलपतश्चापि विदुरस्य महात्मनः । धीरस्य वाचो नाश्रौषीः क्षेमाय वदतः शुभाः । ६१४०
तदिदं वर्त्तते घोरमागतं वैशसं महत् । तस्यावमानाद्वाक्यस्य दुर्य्योधन कृते तव ।

योऽवमन्य वचः पथ्यं सुहृदामाप्तकारिणां । स्वमतं कुरुते मूढः स शोच्यो न चिरादिव ।
यच्च नः प्रेक्षमाणानां कृष्णामानाय्य तत्सभां । अनर्हतीं कुले जातां सर्व्वधर्म्मानुचारिणीं ।
तस्याधर्म्मस्य गान्धारे फलम्प्राप्तमिदं महत् । नो चेत्पापं परे लोके त्वमर्च्छेथास्ततोऽधिकं ।
यच्च त्वं पाण्डवान् द्यूते विषमेण विजित्य च । प्राव्राजयस्तदाऽरण्ये रौरवाजिनवाससः ।　६६४५
पुत्त्राणामिव तेषां वै धर्म्ममाचरतां सदा । द्रुह्येत्को नु नरो लोके मदन्यो ब्राह्मणब्रुवः ।
पाण्डवानामयं कोपस्त्वया शकुनिना सह । आहृतो धृतराष्ट्रस्य सम्मते कुरुसंसदि ।
दुःशासनेन संयुक्तः कर्णेन परिवर्द्धितः । क्षत्तुर्व्वाक्यमनादृत्य त्वयाऽभ्यस्तः पुनः पुनः ।
यत्ताः सर्व्वे पराभूताः पर्य्यवारयतार्ज्जुनं । सिन्धुराजमपाश्रित्य स वो मध्ये कथं हतः ।
कथञ्च त्वयि कर्णे च कृपे शल्ये च जीवति । अश्वत्थाम्नि च कौरव्य निधनं सैन्धवो गतः ।　६६५०
युध्यतः सर्व्वराजानस्तेजस्तिग्ममुपासते । सिन्धुराजं परित्रातुं स वो मध्ये कथं हतः ।
मय्येव हि विशेषेण तथा दुर्य्योधन त्वयि । आशंसत परित्राणमर्ज्जुनात् स महीपतिः ।
ततस्तस्मिन् परित्राणमलब्धवति फाल्गुनात् । न किञ्चिदपि पश्यामि जीवितस्थानमात्मनः ।
मज्जन्तमिव चात्मानं धृष्टद्युम्नस्य किल्बिषे । पश्याम्यहत्वा पाञ्चालान् सह तेन शिखण्डिना ।
तस्मात् किमभितप्यन्तं वाक्शरैरुपकृन्तसि । अशक्तः सिन्धुराजस्य भूत्वा त्राणाय भारत ।　६६५५
सौवर्णं सत्यसन्धस्य ध्वजमक्लिष्टकारिणः । अपश्यन् युधि भीष्मस्य कथमाशंससे जयं ।
मध्ये महारथानाञ्च यत्राहन्यत सैन्धवः । हतो भूरिश्रवाश्चैव किं शेषं तत्र मन्यसे ।
कृप एव च दुर्द्धर्षो यदि जीवति पार्थिव । यो नागात् सिन्धुराजस्य वर्त्म तं पूजयाम्यहं ।
यच्चापश्यं हतं भीष्मं पश्यतस्तेऽनुजस्य वै । दुःशासनस्य कौरव्य कुर्व्वाणं कर्म्म दुष्करं ।
अवध्यकल्पं सङ्ग्रामे देवैरपि सवासवैः । न ते वसुन्धराऽस्तीति तदाऽहं चिन्तये नृप ।　६६६०
इमानि पाण्डवानाञ्च सृञ्जयानाञ्च भारत । अनीकान्याद्रवन्ते मां सहितान्यद्य मारिष ।
नाहत्वा सर्व्वपाञ्चालान् कवचस्य विमोक्षणं । कर्त्तास्मि समरे कर्म्म धार्त्तराष्ट्रहितं तव ।
राजन् ब्रूयाः सुतं मे त्वमश्वत्थामानमाहवे । न सोमकाः प्रमोक्तव्या जीवितं परिरक्षता ।
यच्च पित्रानुशिष्टोऽसि तद्वचः परिपालय । आनृशंस्ये दमे सत्ये आर्ज्जवे च स्थिरो भव ।
धर्म्मार्थकामकुशलो धर्म्मार्थावप्यपीडयन् । धर्म्मप्रधानकार्य्याणि कुर्य्याश्चेति पुनः पुनः ।　६६६५
दक्षिणाभिश्च सन्तर्प्या विप्राः पूज्याश्च सर्व्वशः । न चैषां विप्रियं कार्य्यं ते हि वह्निशिखोपमाः ।
एष त्वहमनीकानि प्रविशाम्यरिसूदन । रणाय महते युक्तस्त्वया वाक्शल्यपीडितः ।
त्वञ्च दुर्य्योधन बलं यदि शक्तोऽसि धारय । रात्रावपि हि योत्स्यन्ति संरब्धाः कुरुसृञ्जयाः ।
एवमुक्त्वा ततः प्रायात् द्रोणः पाण्डवसृञ्जयान् । मुष्णन् क्षत्रियतेजांसि नक्षत्राणामिवांशुमान् ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि द्रोणवाक्ये एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥
॥ सञ्जय उवाच ॥ ततो दुर्य्योधनो राजा द्रोणेनैव प्रचोदितः । अमर्षवशमापन्नो युद्धायैव मनो दधे ।　६६७०

अब्रवीच्च तदा कर्णं पुत्त्रो दुर्य्योधनस्तव । पश्य कृष्णसहायेन पाण्डवेन किरीटिना ।
आचार्य्यविहितं व्यूहं भित्त्वा देवैः सुदुर्भिदं । तव व्यायच्छमानस्य द्रोणस्य च महात्मनः ।
मिषतां योधमुख्यानां सैन्धवो विनिपातितः । पश्य राधेय राजानः पृथिव्यां प्रवरा युधि ।
पार्थेनैकेन निहताः सिंहेनेवेतरे मृगाः । मम व्यायच्छमानस्य द्रोणस्य च महात्मनः ।
अल्पावशेषं सैन्यं मे कृतं शक्रात्मजेन हि । कथं नियच्छमानस्य द्रोणस्य युधि फाल्गुनः । ६९७५
प्रतिज्ञाया गतः पारं हत्वा सैन्धवमर्ज्जुनः । अनिच्छतः कथं वीर द्रोणस्य युधि पाण्डवः ।
भिन्द्यात् सुदुर्भिदं व्यूहं यतमानस्य संयुगे । प्रियो हि फाल्गुनोऽत्यर्थमाचार्य्यस्य महात्मनः ।
ततोऽस्य दत्तवान् द्वारमयुद्धेनैव संयुगे । अभयं सैन्धवस्यादौ दत्त्वा द्रोणः परन्तपः ।
प्रादात् किरीटिने द्वारं पश्य निर्गुणतां मम । यद्यदास्यदनुज्ञां वै पूर्व्वमेव गृहान् प्रति ।
सिन्धुराजस्य समरे नाभविष्यज्जनक्षयः । जयद्रथो जीवितार्थी गच्छमानो गृहान् प्रति । ६९८०
मयाऽनार्य्येण संरुद्धो द्रोणात् प्राप्याभयं रणे । अद्य मे भ्रातरः क्षीणाश्चित्रसेनादयो युधि ।
भीमसेनं समासाद्य पश्यतां नो दुरात्मनां ।
॥ कर्ण उवाच ॥ आचार्य्यं मा विगर्हस्व शक्त्या युध्यत्यसौ द्विजः । यथाबलं यथोत्साहं त्यक्त्वा जीवितमात्मनः ।
यदेनं समतिक्रम्य प्रविष्टः श्वेतवाहनः । नात्र सूक्ष्मोऽपि दोषः स्यादाचार्य्यस्य कथञ्चन ।
कृती दक्षो युवा शूरः कृतास्त्रो लघुविक्रमः । दिव्यास्त्रयुक्तमास्थाय रथं वानरलक्षणं । ६९८५
कृष्णेन च गृहीताश्वमभेद्यकवचावृतः । गाण्डीवमजरं दिव्यं धनुरादाय वीर्य्यवान् ।
प्रवर्षन्निशितान् वाणान् बाहुद्रविणदर्पितः । यदर्ज्जुनोऽभ्ययाद्द्रोणमुपपन्नं हि तस्य तत् ।
आचार्य्यः स्थविरो राजन् शीघ्रयाने तथाऽक्षमः । बाहुव्यायामचेष्टायामशक्तश्च नराधिप ।
तेनैनमभ्यतिक्रान्तः श्वेताश्वः कृष्णसारथिः । तस्माद्दोषं न पश्यामि द्रोणस्यानेन हेतुना ।
अजेयान् पाण्डवान्मन्ये द्रोणेनास्त्रविदा मृधे । तथा ह्येनमतिक्रम्य प्रविष्टः श्वेतवाहनः । ६९९०
दैवादिष्टोऽन्यथाभावो न मन्ये विद्यते क्वचित् । यतो नो युध्यमानानां परं शक्त्या सुयोधन ।
सैन्धवो निहतो युद्धे दैवमात्रं परं स्मृतं । परं यत्नं कुर्व्वताञ्च त्वया सार्द्धं रणाजिरे ।
हत्वाऽस्माकं पौरुषञ्च दैवं पश्चात् करोति नः । सततं चेष्टमानानां निकृत्या विक्रमेण च ।
दैवोपसृष्टः पुरुषो यत्कर्म्म कुरुते नृप । कृतं कृतं हि तत्तस्य दैवेन विनिपात्यते ।
यत् कर्त्तव्यं मनुष्येण व्यवसायवता सदा । तत् कार्य्यमविशङ्केन सिद्धिर्दैवे प्रतिष्ठिता । ६९९५
निकृत्या वञ्चिताः पार्था विषयोगैश्च भारत । दग्धा जतुगृहे चैव द्यूतेन च पराजिताः ।
राजनीतिं समाश्रित्य प्रहिताश्चैव काननं । यत्नेन च कृतं तत्तद्दैवेन विनिपातितं ।
युध्यस्व यत्नमास्थाय दैवं कृत्वा निरर्थकं । यततस्तव तेषाञ्च दैवं मार्गेण यास्यति ।
न तेषां मतिपूर्व्वं हि सुकृतं विद्यते क्वचित् । दुष्कृतं तव वा वीर बुद्ध्या हीनं कुरूद्वह ।
दैवं प्रमाणं सर्व्वस्य सुकृतस्येतरस्य वा । अनन्यकर्म्म दैवं हि जागर्त्ति स्वपतामपि । ७०००

बहूनि तव सैन्यानि योधाश्च बहवस्तव । न तथा पाण्डुपुत्राणामेवं युद्धमवर्त्तत ।
तैरप्येकैकशो यूयं सर्वे भीताः प्रहारिणः । मन्ये दैवस्य तत् कर्म्म पौरुषं येन नाशितं ।
॥ सञ्जय उवाच ॥ एवं सम्भाषमाणानां बहु तत्तज्जनाधिप । पाण्डवानामनीकानि समकृष्यन्त संयुगे ।
ततः प्रववृते युद्धं व्यतिषक्तरथद्विपं । तावकानां परैः सार्द्धं राजन् दुर्म्मन्त्रिते तव ।
इति श्रीमहाभारते द्रोणपर्व्वणि जयद्रथवधपर्व्वणि पुनर्युद्धारम्भे द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥ समाप्तञ्च जयद्रथवधपर्व्व ॥

## अथ घटोत्कचवधपर्व्व ॥

॥ सञ्जय उवाच ॥ तदुदीर्णं गजानीकं बलं तव जनाधिप । पाण्डुसेनामतिक्रम्य योधयामास सर्व्वतः । ६९०४
पाञ्चालाः कौरवाश्चैव योधयन्तः परस्परं । यमराष्ट्राय महते परलोकाय दीक्षिताः ।
शूराः शूरैः समागम्य शरतोमरशक्तिभिः । विव्यधुः समरे तूर्णं निन्युश्चैव यमक्षयं ।
रथिनां रथिभिः सार्द्धं रुधिरस्रावदारुणं । प्रावर्त्तत महद्युद्धं निघ्नतामितरेतरं ।
वारणाश्च महाराज समासाद्य परस्परं । विषाणैर्दारयामासुः सुसंक्रुद्धा मदोत्कटाः ।
हयारोहान् हयारोहाः प्रासशक्तिपरश्वधैः । विभिदुस्तुमुले युद्धे प्रार्थयन्तो महद्यशः । ६९१०
पत्तयश्च महाबाहो शतशः शस्त्रपाणयः । अन्योऽन्यमभ्यधावन्त नित्यं यत्ताः परन्तप ।
गोत्राणां नामधेयानां कुलानाञ्चैव मारिष । श्रवणाद्धि विजानीमः पाञ्चालान् कुरुभिः सह ।
अन्योऽन्यं समरे योधाः शरशक्तिपरश्वधैः । प्रेषयन् परलोकाय विचरन्तो ह्यभीतवत् ।
शरा दशदिशो राजंस्तेषां मुक्ताः सहस्रशः । न भ्राजन्ते यथातत्त्वं भास्करेऽस्तं गतेऽपि च ।
तथा प्रयुध्यमानेषु पाण्डवेयेषु भारत । दुर्य्योधनो महाराज व्यवागाहत तद्बलं । ६९१५
सैन्धवस्य वधेनैव भृशं दुःखसमन्वितः । मर्त्तव्यमिति सञ्चिन्त्य प्राविशत् द्विषतां बलं ।
नादयन् रथघोषेण कम्पयन्निव मेदिनीं । अभ्यवर्त्तत पुत्रस्ते पाण्डवानामनीकिनीं ।
स सन्निपातस्तुमुलस्तस्य तेषाञ्च भारत । अभवत् सर्व्वसैन्यानामभावकरणो महान् ।
यथा मध्यन्दिने सूर्य्यं प्रतपन्तमिवांशुभिः । तथा तव सुतं मध्ये प्रतपन्तं शरार्च्चिभिः ।
नाशकुर्भ्रातरं युद्धे पाण्डवाः प्रतिवीक्षितुं । पलायनकृतोत्साहा निरुत्साहा द्विषज्जये । ६९२०
पर्य्यधावन्त पाञ्चाला वध्यमाना महात्मना । रुक्मपुङ्खैः प्रसन्नाग्रैस्तव पुत्रेण धन्विना ।
अर्द्यमानाः शरैस्तूर्णं न्यपतन् पाण्डुसैनिकाः । न तादृशं रणे कर्म्म कृतवन्तः स्म पाण्डवाः ।
यादृशं कृतवान् राजा पुत्रस्तव विशाम्पते । पुत्रेण तव सा सेना पाण्डवी मथिता रणे ।
नलिनी द्विरदेनेव समन्तात् विप्रलोडिता । क्षीणतोयाऽनिलार्काभ्यां हतत्विडिव पद्मिनी ।
बभूव पाण्डवी सेना तव पुत्रस्य तेजसा । पाण्डुसेनां हतां दृष्ट्वा तव पुत्रेण भारत । ६९२५
भीमसेनपुरोगास्तु पाञ्चालाः समुपाद्रवन् । स भीमसेनं दशभिर्माद्रीपुत्रौ त्रिभिस्त्रिभिः ।

बभूव रजनी घोरा भीरूणां भयवर्द्धिनी। योधानामपि सा घोरा राजन्नन्तकगामिनी।
कुञ्जराश्वमनुष्याणां प्राणान्तकरणी तदा। तस्यां रजन्यां घोरायां नदन्त्यः सर्व्वतः शिवाः।
न्यवेदयन् भयं घोरं सज्वालकवलैर्मुखैः। उलूकाश्चाप्यदृश्यन्त शंसन्तो विपुलं भयं।
विशेषतः कौरवाणां ध्वजिन्यामतिदारुणाः। ततः सैन्येषु राजेन्द्र शब्दः समभवन्महान्।
भेरीशब्देन महता मृदङ्गानां स्वनेन च। गजानां गर्ज्जितैश्चापि तुरङ्गाणाञ्च हेषितैः। ६६६०
खुरशब्दनिनादैश्च तुमुलं सर्व्वतोऽभवत्। ततः समभवद्युद्धं सन्ध्यायामतिदारुणं।
द्रोणस्य च महाराज सृञ्जयानाञ्च सर्व्वशः। तमसा चावृते लोके न प्राज्ञायत किञ्चन।
सैन्येन रजसा चैव समन्तादुच्छ्रितेन च। नरस्याश्वस्य नागस्य समसज्जत शोणितं।
न पश्याम रजो भौमं कश्मलेनाभिसंवृताः। रात्रौ वंशवनस्येव दह्यमानस्य पर्व्वते।
घोरश्चटचटाशब्दः शस्त्राणां पततामभूत्। मृदङ्गानकनिर्ह्रादैर्झल्लकीपटहैस्तथा। ६६६५
चीत्कारैर्हेषिताकारैः सर्व्वमेवाकुलं विभो। नैव स्वे न परे राजन् प्राज्ञायन्त तमोवृते।
उन्मत्तमिव तत्सर्व्वं बभूव रजनीमुखे। भौमं रजोऽथ राजेन्द्र शोणितेन समुच्छ्रितं।
शातकौम्भैश्च कवचैर्भूषणैश्च तमोऽभ्यगात्। ततः सा भारती सेना मणिहेमविभूषिता।
द्यौरिवासीत् सनक्षत्रा रजन्यां भरतर्षभ। गोमायुबलसङ्घुष्टा शक्तिध्वजसमाकुला।
वारणाभिरुता घोरा क्ष्वेडितोत्क्रुष्टनादिता। ततोऽभवन्महाशब्दस्तुमुलो लोमहर्षणः। ६६७०
समावृण्वन् दिशः सर्व्वा महेन्द्राशनिनिस्वनः। सा निशीथे महाराज सेनाऽदृश्यत भारती।
अङ्गदैः कुण्डलैर्निष्कैः शस्त्रैश्चैवावभासिता। तत्र नागा रथाश्चैव जाम्बूनदविभूषिताः।
निशायां प्रत्यदृश्यन्त मेघा इव सविद्युतः। असिशक्तिगदाखड्गमुषलप्रासपट्टिशाः।
सम्पतन्तः स्म दृश्यन्ते भ्राजमाना इवाग्नयः। दुर्य्योधनपुरोवातां रथनागबलाहकां।
वादित्रघोषस्तनितां चापविद्युद्ध्वजैर्वृतां। द्रोणपाण्डवपर्ज्जन्यां खड्गशक्तिगदाशनीं। ६६७५
शरधाराम्बुपवनां भृशं शीतोष्णसङ्कुलां। घोरां विस्मापनीमुग्रां जीवितच्छेदविप्लुतां।
तां प्राविशन्नतिभयां सेनां युद्धचिकीर्षवः। तस्मिन् रात्रिमुखे घोरे महाशब्दनिनादिते।
भीरूणां त्रासजनने शूराणां हर्षवर्द्धने। रात्रियुद्धे महाघोरे वर्त्तमाने सुदारुणे।
द्रोणमभ्यद्रवन् क्रुद्धाः सहिताः पाण्डुसृञ्जयाः। ये ये प्रमुखतो राजन्न्यवर्त्तन्त महात्मनः।
तान् सर्व्वान् विमुखांश्चक्रे कांश्चिन्निन्ये यमक्षयं। तानि नागसहस्राणि रथानामयुतानि च। ६६८०
पदातिहयसङ्घानां प्रयुतान्यर्व्वुदानि च। द्रोणेनैकेन नाराचैर्निर्भिन्नानि निशामुखे।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि द्रोणयुद्धे चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥
॥ धृतराष्ट्र उवाच ॥ तस्मिन् प्रविष्टे दुर्द्धर्षे सृञ्जयानमितौजसि। अमृष्यमाणे संरब्धे का वोऽभूद्वै मतिस्तदा।
दुर्य्योधनं तथा पुत्त्रमुक्त्वा शास्त्रातिगं मम। यत् प्राविशदमेयात्मा किं पार्थः प्रत्यपद्यत।
निहते सैन्धवे वीरे भूरिश्रवसि चैव हि। यदभ्यगान्महातेजाः पाञ्चालानपराजितः।

न्यवारयन्महाबाहुस्तव पुत्त्रो विशाम्पते। महता शरवर्षेण छादयन्तो महारथाः। ६७१५
दुर्म्मदस्य ततो भीमः प्रहसन्निव संयुगे। सारथिञ्च हयांश्चैव शरैर्निन्ये यमक्षयं।
दुर्म्मदस्तु ततो यानं दुष्कर्णस्यावचक्रमे। तावेकरथमारूढौ भ्रातरौ परतापनौ।
सङ्ग्रामशिरसो मध्ये भीमं द्वावप्यधावतां। यथाम्बुपतिमित्रौ हि तारकं दैत्यसत्तमं।
ततस्तु दुर्म्मदश्चैव दुष्कर्णश्च तवात्मजौ। रथमेकं समारुह्य भीमं बाणैरविध्यतां।
ततः कर्णस्य मिषतो द्रौणेर्दुर्य्योधनस्य च। कृपस्य सोमदत्तस्य वाह्लीकस्य च पाण्डवः। ६७२०
दुर्म्मदस्य च वीरस्य दुष्कर्णस्य च तं रथं। पादप्रहारेण धरां प्रावेशयदरिन्दमः।
ततः सुतौ तौ बलिनौ शूरौ दुष्कर्णदुर्म्मदौ। मुष्टिनाहत्य संक्रुद्धो ममर्द्द च ननर्द्द च।
ततो हाहाकृते सैन्ये दृष्ट्वा भीमं नृपाब्रुवन्। रुद्रोऽयं भीमरूपेण धार्त्तराष्ट्रेषु दृश्यति।
एवमुक्त्वा पलायन्त सर्व्वे भारत पार्थिवाः। विसंज्ञा वाहयन् वाहान् न च द्वौ सह धावतः।

ततो बले भृशलुलिते निशामुखे सुपूजितो नृपवृषभैर्वृकोदरः। महाबलः कमलविबुद्धलोचनो युधिष्ठिरं नृपतिमपूजयद्बली। ६७२५

ततो यमौ द्रुपदविराटकेकया युधिष्ठिरश्चापि परां मुदं ययुः। वृकोदरं भृशमपूजयंश्च ते यथाऽन्धके प्रतिनिहते हरं सुराः।

ततः सुतास्ते वरुणात्मजोपमा रुषान्विताः सहगुरुणा महात्मना। वृकोदरं सरथपदातिकुञ्जरा युयुत्सवो भृशमभिपर्य्यवारयन्।

ततोऽभवत्तिमिरघनैरिवावृते महाभये भयदमतीव दारुणं। निशामुखे वृकबलदप्रमोदनं महात्मनां नृपवर युद्धमुत्तमं।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि भीमपराक्रमे पञ्चपञ्चाशदधिकशततमोऽध्यायः॥ १५५ ॥

॥ सञ्जय उवाच ॥ प्रायोपविष्टे तु हते पुत्रे सात्यकिना ततः। सोमदत्तो भृशं क्रुद्धः सात्यकिं वाक्यमब्रवीत्।
क्षत्रधर्म्मः पुरा दृष्टो यस्तु देवैर्महात्मभिः। तं त्वं सात्वत सन्त्यज्य दस्युधर्म्मे रतः कथं। ६७३०
पराङ्मुखाय दीनाय न्यस्तशस्त्राय याचते। क्षत्रधर्म्मरतः प्राज्ञः कथं नु प्रहरेद्रणे।
द्वावेव किल वृष्णीनां तत्र मुख्यौ महारथौ। प्रद्युम्नश्च महातेजास्त्वञ्चैव युधि सात्वत।
कथं प्रायोपविष्टाय पार्थेन छिन्नबाहवे। नृशंसं पतनीयञ्च तादृशं कृतवानसि।
दुश्चरित्रस्य तस्य त्वं फलं प्राप्नुहि संयुगे। अद्य छेत्स्यामि ते मूढ शिरो विक्रम्य पत्रिणा।
शपे सात्वत पुत्राभ्यामिष्टेन सुकृतेन च। अनतीतामिमां रात्रिं यदि त्वां वीरमानिनं। ६७३५
अरक्ष्यमाणं पार्थेन जिष्णुना ससुतानुजं। न हन्यां नरके घोरे पतेयं वृष्णिपांसन।
एवमुक्त्वा तु संक्रुद्धः सोमदत्तो महाबलः। दध्मौ शङ्खञ्च तारेण सिंहनादं ननाद च।
ततः कमलपत्राक्षः सिंहदंष्ट्रो महाबलः। सात्यकिर्भृशसंक्रुद्धः सोमदत्तमथाब्रवीत्।
कौरवेय न मे त्रासः कथञ्चिदपि विद्यते। त्वया सार्द्धमथान्यैश्च युध्यतो हृदि कश्चन।

यदि सर्व्वेण सैन्येन गुप्तो मां योधयिष्यसि । तथापि न व्यथा काचित्त्वयि स्यान्मम कौरव । ६७४०
युद्धसारेण वाक्येन सतामसम्मतेन च । मांहि भीषयितुं शक्तः यत्कृतं विकत्थसे ।
यदि तेऽस्ति युयुत्साऽद्य मया सह नराधिप । निर्द्दयो निशितैर्ब्बाणैः प्रहर प्रहरामि ते ।
हतो भूरिश्रवा राजंस्तव पुत्रो महारथः । शलश्चैव तदा वीर वृषसेनश्च कर्षितः ।
त्वाञ्चाप्यद्य वधिष्यामि सपुत्रं सहबान्धवं । तिष्ठेदानीं रणे यत्तः कौरवोऽसि महाबलः ।
यस्मिन् दानं दमः शौचमहिंसा ह्रीर्धृतिः क्षमा । अनपायानि सर्व्वाणि नित्यं राज्ञि युधिष्ठिरे । ६७४५
मृदङ्गकेतोस्तस्य त्वं तेजसा निहतः पुरा । सकर्णसौबलः सङ्ख्ये विनाशमुपयास्यसि ।
शपेऽहं कृष्णचरणैरिष्टापूर्त्तेन चैव हि । यदि त्वां ससुतं पापं नैव हन्यां युधि रोषितः ।
अपयास्यसि चेत्त्यक्त्वा ततो मुक्तो भविष्यसि । एवमाभाष्य चान्योऽन्यं क्रोधसंरक्तलोचनौ ।
प्रवृत्तौ शरसम्पातं कर्त्तुं पुरुषसत्तमौ । ततो रथसहस्रेण हयानामायुतेन च ।
दुर्य्योधनः सोमदत्तं परिवार्य्य व्यवस्थितः । शकुनिश्च सुसंक्रुद्धः सर्व्वशस्त्रपरिग्रहः । ६७५०
पुत्रपौत्रैः परिवृतो भ्रातृभिश्चेन्द्रविक्रमैः । स्यालस्तव महाराज वज्रसंहननो युवा ।
साग्रं शतसहस्रन्तु हयानां तस्य धीमतः । सोमदत्तं महेष्वासं समन्तात् पर्य्यवारयत् ।
रक्ष्यमाणश्च बलिभिश्छादयामास सात्यकिं । तं छाद्यमानं विशिखैर्दृष्ट्वा सन्नतपर्व्वभिः ।
धृष्टद्युम्नोऽभ्ययात् क्रुद्धः प्रगृह्य महतीञ्चमूं । चण्डवाताभिसृष्टानामुदधीनामिव स्वनः ।
आसीद्राजन् बलौघानामन्योऽन्यमभिनिघ्नतां । विव्याध सोमदत्तश्च सात्वतं नवभिः शरैः । ६७५५
सात्यकिर्नवभिश्चैनमवधीत् कुरुपुङ्गवं । सोऽतिविद्धो बलवता समरे दृढधन्विना ।
रथोपस्थं समासाद्य मुमोह गतचेतनः । तं विमूढं समालक्ष्य सारथिस्त्वरयाऽन्वितः ।
अपोवाह रणाद्वीरं सोमदत्तं महारथं । तं विसंज्ञं समालक्ष्य युयुधानशराहितं ।
अभ्यधावत्ततो द्रोणो यदुवीरजिघांसया । तमायान्तमभिप्रेक्ष्य युधिष्ठिरपुरोगमाः ।
परिवव्रुर्म्महात्मानं परीप्सन्तो यदूद्वहं । ततः प्रववृते युद्धं द्रोणस्य सह पाण्डवैः । ६७६०
बलेरिव सुरैः पूर्व्वं त्रैलोक्यजयकाङ्क्षया । ततः सायकजालेन पाण्डवानीकमावृणोत् ।
भारद्वाजो महातेजा विव्याध च युधिष्ठिरं । सात्यकिं दशभिर्व्बाणैर्व्विंशत्या पार्षतं शरैः ।
भीमसेनञ्च नवभिर्नकुलं पञ्चभिस्तथा । सहदेवं तथाऽष्टाभिः शतेन च शिखण्डिनं ।
द्रौपदेयान्महाबाहुः पञ्चभिः पञ्चभिः शरैः । विराटं मत्स्यमष्टाभि र्द्रुपदं दशभिः शरैः ।
युधामन्युं त्रिभिः षड्भिरुत्तमौजसमाहवे । अन्यांश्च सैनिकान्विद्ध्वा युधिष्ठिरमुपाद्रवत् । ६७६५
ते बध्यमाना द्रोणेन पाण्डुपुत्त्रस्य सैनिकाः । प्राद्रवन् वै भयाद्राजन् सार्त्तनादा दिशो दश ।
काल्यमानन्तु तत्सैन्यं दृष्ट्वा द्रोणेन फाल्गुनः । किञ्चिदागतसंरम्भो गुरुं पार्थोऽभ्ययाद्द्रुतं ।
दृष्ट्वा द्रोणस्तु बीभत्सुमभिधावन्तमाहवे । सन्न्यवर्त्तत तत्सैन्यं पुनर्य्यौधिष्ठिरं नृप ।
ततो युद्धमभूद्भूयो भारद्वाजस्य पाण्डवैः । द्रोणस्तव सुतैराजन् सर्व्वतः परिवारितः ।

व्यधमत् पाण्डुसैन्यानि तूलराशिमिवानलः । तं ज्वलन्तमिवादित्यं दीप्तानलसमद्युतिं । ७०७०
राजन्निशमत्यन्तं दृष्ट्वा द्रोणशरार्च्चिषं । मण्डलीकृतधन्वानं तपन्तमिव भास्करं ।
दहन्तमहितान् सैन्ये नैनं कश्चिदवारयत् । यो यो हि प्रमुखे तस्य तस्थौ द्रोणस्य पूरुषः ।
तस्य तस्य शिरश्छित्त्वा ययौ द्रोणस्य सायकाः । एवं सा पाण्डवी सेना वध्यमाना महात्मना ।
प्रदुद्राव पुनर्भीता पश्यतः सव्यसाचिनः । सम्प्रभग्नं बलं दृष्ट्वा द्रोणेन निशि भारत ।
गोविन्दमब्रवीज्जिष्णुर्गच्छ द्रोणरथं प्रति । ततो रजतगोक्षीरकुन्देन्दुसदृशप्रभान् । ७०७५
चोदयामास दाशार्हो हयान् द्रोणरथं प्रति । भीमसेनोऽपि तं दृष्ट्वा यान्तं द्रोणाय फाल्गुनं ।
स्वसारथिमुवाचेदं द्रोणानीकाय मां वह । सोऽपि तस्य वचः श्रुत्वा विशोकोऽवाहयद्धयान् ।
पृष्ठतः सत्यसन्धस्य जिष्णोर्भरतसत्तम । तौ दृष्ट्वा भ्रातरौ यत्तौ द्रोणानीकमभिद्रुतौ ।
पाञ्चालाः सृञ्जया मत्स्याश्चेदिकारूषकोशलाः । अन्वगच्छन्महाराज कैकयाश्च महारथाः ।
ततो राजन्नभूद्घोरः संग्रामो लोमहर्षणः । बीभत्सुर्दक्षिणं पार्श्वमुत्तरञ्च वृकोदरः । ७०८०
महद्भ्यां रथवृन्दाभ्यां बलं जगृहतुस्तव । तौ दृष्ट्वा पुरुषव्याघ्रौ भीमसेनधनञ्जयौ ।
धृष्टद्युम्नोऽभ्ययाद्राजन् सात्यकिश्च महाबलः । चण्डवाताभिपन्नानामुदधीनामिव स्वनः ।
आसीद्राजन् बलौघानां तदाऽन्योन्यमभिघ्नतां । सौमदत्तिवधात् क्रुद्धो दृष्ट्वा सात्यकिमाहवे ।
द्रौणिरभ्यद्रवत् क्रुद्धः कृत्वा रथमूर्द्धनि । तमापतन्तं समरे शैनेयस्य रथं प्रति ।
प्रत्युद्ययौ महद्रौद्रो भैमसेनिर्महाबलः । कार्ष्णायसं महाघोरमृक्षचर्म्मावृतं महत् । ७०८५
महान्तं रथमास्थाय त्रिंशन्नल्वान्तरान्तरं । विक्षिप्तयन्त्रकूबरं महामेघौघनिःस्वनं ।
युक्तं गजनिभैर्वाहैर्न हयैर्नापि वा गजैः । विक्षिप्तपक्षचरणविवृताक्षेण कूजता ।
ध्वजेनोच्छ्रितदण्डेन गृध्रराजेन राजता । लोहितार्द्रपताकञ्च अन्त्रमालाविभूषितं ।
अष्टचक्रसमायुक्तमास्थाय विपुलं रथं । शूलमुद्गरधारिण्या शैलपादपहस्तया ।
रक्षसां घोररूपाणामक्षौहिण्या समावृतः । तमुद्यतमहाचापं निशाम्य व्यथिता नृपाः । ७०९०
युगान्तकालसमये दण्डहस्तमिवान्तकं । ततस्तं गिरिशृङ्गाभं भीमरूपं भयावहं ।
दंष्ट्राकरालोग्रमुखं शङ्कुकर्णं महाहनुं । ऊर्द्ध्वकेशं विरूपाक्षं दीप्तास्यं निम्नोदरं ।
महाश्वभ्रगलद्वारं किरीटच्छन्नमूर्द्धजं । त्रासनं सर्व्वभूतानां व्यात्ताननमिवान्तकं ।
वीक्ष्य दीप्तमिवायान्तं रिपुविक्षोभकारकं । तमुद्यतमहाचापं राक्षसेन्द्रं घटोत्कचं ।
भयार्दिता प्रचुक्षोभ तव पुत्रस्य वाहिनी । वायुना क्षोभितावर्त्ता गङ्गेवोर्द्ध्वतरङ्गिणी । ७०९५
घटोत्कचप्रयुक्तेन सिंहनादेन भीषिताः । प्रसुस्रुवुर्गजा मूत्रं विव्यथुश्च नृपा भृशं ।
ततोऽश्मवृष्टिरत्यर्थमासीत्तत्र समन्ततः । सन्ध्याकालाधिकबलैर्मुक्ता राक्षसैः क्षितौ ।
आयसानि च चक्राणि भुशुण्ड्यः प्रासतोमराः । पतन्त्यविरताः शूलाः शतघ्न्यः पट्टिशास्तथा ।
तदुग्रमतिरौद्रञ्च दृष्ट्वा युद्धं नराधिपाः । तनयास्तव कर्णश्च व्यथिताः सम्प्रदुद्रुवुः ।

रविमांशुप्रभं द्रौणिं धाराभिरिव तोयदः। शरवृष्टिं शरैर्द्रौणिरप्राप्तां व्यशातयत्। ६८१०
ततोऽन्तरीक्षे बाणानां सङ्ग्रामोऽन्य इवाभवत्। अथास्त्रसम्पातकृतैर्विस्फुलिङ्गैस्तदा बभौ।
विभावरीमुखे व्योम खद्योतैरिव चित्रितं। निहत्य निहतां मायां द्रौणिना रणमानिना।
घटोत्कचस्तदा मायां ससर्ज्जान्तर्हितः पुनः। सोऽभवद्गिरिरत्युच्चः शिखरैस्तरुसङ्कटैः।
शूलप्रासासिमुषलजलप्रस्रवणो महान्। तमञ्जनचयप्रख्यं द्रौणिर्दृष्ट्वा महीधरं।
प्रपतद्भिश्च बहुभिः शस्त्रसङ्घैर्न चुक्षुभे। ततः स्मयन्निव द्रौणिर्वज्रमस्त्रमुदैरयत्। ६८१५
स तेनास्त्रेण शैलेन्द्रः क्षिप्तः क्षिप्रं व्यनश्यत। ततः स तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि।
अश्मवृष्टिभिरत्युग्रो द्रौणिं प्राच्छादयद्रणे। अथ सन्धाय वायव्यमस्त्रमस्त्रविदाम्वरः।
व्यधमत् द्रोणतनयो नीलमेघं समुत्थितं। स मार्गणगणैर्द्रौणिर्दिशः प्रच्छाद्य सर्व्वतः।
शतं रथसहस्राणां जघान द्विपदाम्वरः। स दृष्ट्वा पुनरायान्तं रथेनायतकार्मुकं।
घटोत्कचमसम्भ्रान्तं राक्षसैर्बहुभिर्वृतं। सिंहशार्दूलसदृशैर्मत्तद्विरदविक्रमैः। ६८२०
गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैरपि। विकृतास्यशिरोग्रीवैर्हैडिम्बोऽनुचरैः सह।
पौलस्त्यैर्यातुधानैश्च तामसैश्चोग्रविक्रमैः। नानाशस्त्रधरैर्वीरैर्नानाकवचभूषितैः।
महाबलैर्भीमरवैः क्रुद्धैः संरम्भोद्वृत्तलोचनैः। उपस्थितैस्ततो युद्धे राक्षसैर्युद्धदुर्म्मदैः।
विषण्णमभिसंप्रेक्ष्य पुत्रं ते द्रौणिरब्रवीत्। तिष्ठ दुर्य्योधनाद्य त्वं न कार्य्यः सम्भ्रमस्त्वया।
सहैभिर्भ्रातृभिर्व्वीरैः पार्थिवैश्चेन्द्रविक्रमैः। निहनिष्याम्यमित्रांस्ते तव नास्ति पराजयः। ६८२५
सत्यं ते प्रतिजानामि पर्य्याश्वासय वाहिनीं।
॥ दुर्य्योधन उवाच ॥ न त्वेतदद्भुतं मन्ये यत्ते महदिदं मनः। अस्मासु च परा भक्तिस्तव गौतमिनन्दन।
॥ सञ्जय उवाच ॥ अश्वत्थामानमुक्त्वैवं ततः सौबलमब्रवीत्। वृतः शतसहस्रेण रथानां रणशोभिनां।
षष्ट्या गजसहस्रैश्च प्रयाहि त्वं धनञ्जयं। कर्णश्च वृषसेनश्च कृपो नीलस्तथैव च।
उदीच्याः कृतवर्म्मा च पुरुमित्रश्रुताः पुनः। दुःशासनो निकुम्भश्च कुण्डभेदी पराक्रमः। ६८३०
पुरञ्जयो दृढरथः पताकी हेमपुङ्खकः। शल्योऽरुणीन्द्रसेनश्च सञ्जयो विजयो जयः।
कमलाक्षः परक्राथी जयवर्म्मा सुदर्शनः। एते त्वामनुयास्यन्ति पत्तीनामयुतानि षट्।
जहि भीमं यमौ चैव धर्म्मराजञ्च मातुल। असुरानिव देवेन्द्रो जयाशा त्वयि मे स्थिता।
दारितान् द्रौणिना बाणैर्भृशं विक्षतविग्रहान्। जहि मातुल कौन्तेयान् असुरानिव पावकिः।
एवमुक्तो ययौ शीघ्रं पुत्रेण तव सौबलः। पिप्रीषुस्ते सुतान्राजन् दिधक्षुश्चैव पाण्डवान्। ६८३५
अथ प्रववृते युद्धं द्रौणिराक्षसयोर्मृधे। विभावर्य्यां सुतुमुलं शक्रप्रह्लादयोरिव।
ततो घटोत्कचो बाणैर्दशभिर्गौतमीसुतं। जघानोरसि संक्रुद्धो विषाग्निप्रतिमैर्दृढैः।
स तैरभ्याहतो गाढं शरैर्भीमसुतेरितैः। चचाल रथमध्यस्थो वातोद्धूत इव द्रुमः।
भूयश्चाञ्जलिकेनाथ मार्गणेन महाप्रभं। द्रौणिहस्तस्थितं चापं चिच्छेदाशु घटोत्कचः।

धृष्टद्युम्नरथं गत्वा भैमसेनिस्ततो नृप। धनुर्घोरं समादाय महदिन्द्रायुधोपमं। ६८९०
मुमोच निशितान् बाणान् पुनर्द्रौणेर्महात्मनः। धृष्टद्युम्नोऽप्यसम्भ्रान्तो मुमोचाशीविषोपमान्।
सुवर्णपुङ्खान् प्रवरान् द्रोणपुत्रस्य वक्षसि। ततो मुमोच नाराचान् द्रौणिस्तांश्च सहस्रशः।
तावप्यग्निसमस्पर्शैर्जघ्नतुस्तस्य मार्गणान्। अतितीव्रमभूद्युद्धं तयोः पुरुषसिंहयोः।
योधानां प्रीतिजननं द्रौणेश्च भरतर्षभ। ततो रथसहस्रेण द्विरदानां त्रिभिः शतैः।
षड्भिर्वाजिसहस्रैश्च भीमस्तं देशमाव्रजत्। ततो भीमात्मजं वीरं धृष्टद्युम्नञ्च सानुगं। ६८९५
अयोधयत धर्मात्मा द्रौणिरक्लिष्टविक्रमः। तत्राद्भुततमं द्रौणिर्दर्शयामास विक्रमं।
अशक्यं कर्त्तुमन्येन सर्व्वभूतेषु भारत। निमेषान्तरमात्रेण साश्वसूतरथद्विपान्।
अक्षौहिणीं राक्षसानां शितैर्बाणैरशातयत्। मिषतो भीमसेनस्य हैडिम्बेः पार्षतस्य च।
यमयोर्धर्म्मपुत्रस्य विजयस्याच्युतस्य च। प्रगाढमञ्जोगतिभिर्नाराचैरथ ताडिताः।
निपेतुर्द्विरदा भूमौ विशृङ्गा इव पर्व्वताः। निकृत्तैर्हस्तिहस्तैश्च विचरद्भिरितस्ततः। ६९००
रराज वसुधा कीर्णा विसर्पद्भिरिवोरगैः। क्षिप्तैः काञ्चनदण्डैश्च नृपच्छत्रैः क्षितिर्बभौ।
द्यौरिवोदितचन्द्रार्का ग्रहाकीर्णा युगक्षये। प्रवृद्धध्वजमण्डूकां भेरीविस्तीर्णकच्छपां।
छत्रहंसावलीजुष्टां फेनचामरमालिनीं। कङ्कगृध्रमहाग्राहां नैकायुधझषाकुलां।
विस्तीर्णगजपाषाणां हताश्वमकराकुलां। रथक्षिप्तमहावप्रां पताकारुचिरद्रुमां।
शरमीनां महारौद्रां प्रासशक्त्यृष्टिडुण्डुभां। मज्जामांसमहापङ्कां कबन्धावर्जितोडुपां। ६९०५
केशशैवलकल्माषां भीरूणां कश्मलावहां। नागेन्द्रहययोधानां शरीरव्ययसम्भवां।
शोणितौघमहावेगां द्रौणिः प्रावर्त्तयन्नदीं। योधार्त्तरवनिर्घोषां क्षतजोर्म्मिसमाकुलां।
पदातिभिर्महाघोरां यमक्षयमहोदधिं। निपात्य राक्षसान् बाणैर्द्रौणिर्हैडिम्बिमार्द्दयत्।
पुनरप्यतिसंक्रुद्धः सवृकोदरपार्षतान्। स नाराचगणैः पार्थान् द्रौणिर्विद्ध्वा महारथान्।
जघान सुरथं नाम द्रुपदस्य सुतं विभुः। पुनः शत्रुञ्जयं नाम सुरथस्यानुजं रणे। ६९१०
बलानीकं जयानीकं जयञ्चाथ निजघ्निवान्। पुनः शरेण तीक्ष्णेन द्रौणिः सिंह इवानदन्।
जघान स पृषध्रञ्च चन्द्रदेवञ्च मानिनं। कुन्तीभोजसुतांश्चापि दशभिर्दश जघ्निवान्।
श्रुतायुषञ्च राजेन्द्र द्रौणिर्निन्ये यमक्षयं। त्रिभिश्चान्यैः शरैस्तीक्ष्णैः सुपुङ्खैरक्षलोचनैः।
शत्रुञ्जयञ्च बलिनं शक्रलोकं निनाय ह। अश्वत्थामा सुसंक्रुद्धः सन्धायोग्रमजिह्मगं।
मुमोचाकर्णपूर्णेन धनुषा शरमुत्तमं। यमदण्डोपमं घोरमुद्दिश्याशु घटोत्कचं। ६९१५
स भित्त्वा हृदयं तस्य राक्षसस्य महाशरः। विवेश वसुधां भित्त्वा सपुङ्खः पृथिवीपते।
तं हतं पतितं ज्ञात्वा धृष्टद्युम्नो महारथः। द्रौणेः सकाशाद्राजेन्द्र अपनिन्ये रथान्तरं।
तथा पराङ्मुखरथं सैन्यं यौधिष्ठिरं नृप। पराजित्य रिपून् वीरो द्रोणपुत्रो ननाद ह।
पूजितः सर्व्वलोकैश्च तव पुत्रैश्च मारिष।

अथ शरशतभिन्नकृत्तदेहैर्हतपतितैः क्षणदाचरैः समन्तात् । निधनमुपगतैर्मही बभूव भूमिर्गिरिशिखरैरिव दुर्गमा
तिरौद्रा । ६९६०

तं सिद्धगन्धर्व्वपिशाचसङ्घा नागाः सुपर्णाः पितरो वयांसि । रक्षोगणा भूतगणाश्च द्रौणिमपूजयन्नप्सरसः सुराश्च ।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि अश्वत्थामयुद्धे षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

॥ सञ्जय उवाच ॥ द्रुपदस्यात्मजान् दृष्ट्वा कुन्तिभोजसुतांस्तथा । द्रोणपुत्रेण निहतान् राक्षसांश्च सहस्रशः ।

युधिष्ठिरो भीमसेनो धृष्टद्युम्नश्च पार्षतः । युयुधानश्च संयत्ता युद्धायैव मनो दधुः ।

सोमदत्तसुतः क्रुद्धो दृष्ट्वा सात्यकिमाहवे । महता शरवर्षेण छादयामास भारत ।

ततः समभवद्युद्धमतीवाद्भुतदर्शनं । त्वदीयानां परेषाञ्च घोरं विजयकाङ्क्षिणां । ६९६५

दशभिः सात्वतस्यार्थे भीमो विव्याध कौरवं । सोमदत्तोऽपि तं वीरं शतेन प्रत्यविध्यत ।

सात्वतस्त्वभिसंक्रुद्धः पुत्राधिभिरभिप्लुतं । वृद्धं वृद्धगुणैर्युक्तं ययातिमिव नाहुषं ।

विव्याध दशभिस्तीक्ष्णैः शरैर्वज्रनिपातिभिः । शक्त्या चैनं विनिर्भिद्य पुनर्विव्याध सप्तभिः ।

ततस्तु सात्यकेरर्थे भीमसेनो नवं दृढं । मुमोच परिघं घोरं सोमदत्तस्य मूर्द्धनि ।

सात्वतोऽप्यग्निसङ्काशं मुमोच शरमुत्तमं । सोमदत्तोरसि क्रुद्धः सुपत्रं निशितं युधि । ६९७०

युगपत् पेततुर्व्वीरे घोरौ परिघमार्गणौ । शरीरे सोमदत्तस्य स पपात महारथः ।

व्यामोहिते तु तनये बाह्लीकः समुपाद्रवत् । विसृजन् शरवर्षाणि कालवर्षीव तोयदः ।

भीमोऽथ सात्वतस्यार्थे बाह्लीकं नवभिः शरैः । पीडयन् सुमहात्मानं विव्याध रणमूर्द्धनि ।

प्रातिपेयस्तु संक्रुद्धः शक्तिं भीमस्य वक्षसि । निचखान महाबाहुः पुरन्दर इवाशनिं ।

स तया निहतो भीमश्चकम्पे च मुमोह च । प्राप्य चेतश्च बलवान् गदामस्मै ससर्ज ह । ६९७५

सा पाण्डवेन प्रहिता बाह्लीकस्य शिरोऽहरत् । स पपात हतः पृथ्व्यां वज्राहत इवाद्रिराट् ।

तस्मिन्विनिहते वीरे बाह्लीके पुरुषर्षभे । पुत्रास्तेऽभ्यर्द्दयन् भीमं दश दाशरथेः समाः ।

नागदत्तो दृढरथो वीरबाहुरयोभुजः । दृढः सुहस्तो विरजाः प्रमाथ्युग्रोऽनुयाय्यपि ।

तान् दृष्ट्वा चुक्रुधे भीमो जगृहे भारसाधनान् । एकमेकं समुद्दिश्य पातयामास मर्म्मसु ।

ते विद्धा व्यसवः पेतुः स्यन्दनेभ्यो हतौजसः । चण्डवाताभिरुग्णास्तु पर्व्वताग्रादिव द्रुमाः । ६९८०

नाराचैर्दशभिर्भीमस्तान्निहत्य तवात्मजान् । कर्णस्य दयितं पुत्रं शरवर्षैरवाकिरत् ।

ततो वृकरथो नाम भ्राता कर्णस्य विश्रुतः । विव्याध भीमं नाराचैः स चैनमवधीद्बली ।

ततः सप्तरथान् वीरः श्यालानां तव भारत । निहत्य भीमो नाराचैः शतचन्द्रमपोथयत् ।

अमर्षयन्तो निहतं शतचन्द्रं महारथं । शकुनेर्भ्रातरो वीरा गवाक्षः शरभो विभुः ।

अभिद्रुत्य शरैस्तीक्ष्णैर्भीमसेनमताडयन् । स ताड्यमानो नाराचैर्वृष्टिवेगैरिवाचलः । ६९८५

जघान पञ्चभिर्बाणैः पञ्च तानतिरथान्नृपान् । तान् दृष्ट्वा निहतान् वीरान् विचेलुर्नृपसत्तमाः ।

ततो युधिष्ठिरः क्रुद्धस्तवानीकमशातयत् । मिषतः कुम्भयोनेश्च पुत्राणां तव चानघ ।

अम्बष्ठान् मालवान् शूरांस्त्रिगर्त्तान् सशिबीनपि । प्राहिणोन्मृत्युलोकाय गणान् युद्धे युधिष्ठिरः ।
अभीषाहान् शूरसेनान् वाह्लीकांश्च सवातिकान् । निकृत्य पृथिवीञ्चक्रे मांसशोणितकर्द्दमां ।
यौधेयान् मालवान् राजन् मद्रकांश्च गणान् युधि । प्राहिणोन्मृत्युलोकाय शूरान् वाणगणैः क्षणात् । ६९८०
हता हरत गृह्णीत विध्यत व्यवकृन्तत । इत्यासीत् तुमुलः शब्दो युधिष्ठिररथम्प्रति ।
सैन्यानि द्रावयन्तं तं द्रोणो दृष्ट्वा युधिष्ठिरं । चोदितस्तव पुत्रेण सायकैरभ्यवाकिरत् ।
द्रोणस्तु परमः क्रुद्धो वायव्यास्त्रेण पार्थिवं । विव्याध सोऽपि तद्दिव्यमस्त्रमस्त्रेण जघ्निवान् ।
तस्मिन्नस्त्रे विनिहते भारद्वाजो युधिष्ठिरे । वारुणं याम्यमाग्नेयं त्वाष्ट्रं सावित्रमेव च ।
चिक्षेप परमक्रुद्धो जिघांसुः पाण्डुनन्दनं । क्षिप्तानि क्षिप्यमाणानि तानि चास्त्राणि धर्म्मवित् । ६९८५
जघानास्त्रैर्महावाहुः कुम्भयोनेरविव्यथन् । सत्यां चिकीर्षमाणस्तु प्रतिज्ञां कुम्भसम्भवः ।
प्रादुश्चक्रेऽस्त्रमैन्द्रं वै प्राजापत्यञ्च भारत । जिघांसुर्धर्म्मतनयं तव पुत्रहिते रतः ।
पतिः कुरूणां गजसिंहगामी विशालवक्षाः पृथुलोहिताक्षः । प्रादुश्चकारास्त्रमहीनतेजा माहेन्द्रमन्यत् स जघान चास्त्रं ।
विहन्यमानेष्वस्त्रेषु द्रोणः क्रोधसमन्वितः । युधिष्ठिरवधप्रेप्सुर्ब्राह्ममस्त्रमुदैरयत् ।
नाज्ञासिष्म ततः किञ्चिद्घोरेण तमसा वृते । सर्व्वभूतानि च त्रासं परं जग्मुर्महीपते । ६९९०
ब्रह्मास्त्रमुद्यतं दृष्ट्वा कुन्तीपुत्रो युधिष्ठिरः । ब्रह्मास्त्रेणैव राजेन्द्र तदस्त्रं पर्य्यवारयत् ।
ततः सैनिकमुख्यास्ते प्रशशंसुर्नरर्षभौ । द्रोणपार्थौ महेष्वासौ सर्व्वयुद्धविशारदौ ।
ततः प्रमुच्य कौन्तेयं द्रोणो द्रुपदवाहिनीं । व्यधमत् सोऽस्त्रमन्त्रेण क्रोधपर्य्याकुलेक्षणः ।
ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन् भयात् । पश्यतो भीमसेनस्य पार्थस्य च महात्मनः ।
ततः किरीटी भीमश्च सहसा संन्यवर्त्ततां । महद्भ्यां रथवंशाभ्यां प्रतिगृह्य बलं तदा । ६९९५
वीभत्सुर्दक्षिणं पार्श्वमुत्तरञ्च वृकोदरः । भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षतां ।
केकयाः सृञ्जयाश्चैव पाञ्चालाश्च महौजसः । अन्वगच्छन् महाराज मत्स्याश्च सह सात्वतैः ।
ततः सा भारती सेना वध्यमाना किरीटिना । तमसा निद्रया चैव पुनरेव व्यदीर्य्यत ।
द्रोणेन वार्य्यमाणास्ते स्वयं तव सुतेन च । नाशक्यन्त महाराज योधा वारयितुं तदा ।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि द्रोणयुधिष्ठिरयुद्धे सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

॥ सञ्जय उवाच ॥ उदीर्य्यमाणं तद्दृष्ट्वा पाण्डवानां महद्बलं । अविषह्यञ्च मन्वानः कर्णं दुर्य्योधनोऽब्रवीत् । ७०००
अयं स कालः सम्प्राप्तो मित्राणां मित्रवत्सल । त्रायस्व समरे कर्ण सर्व्वान् योधान् महारथान् ।
पाञ्चालैः केकयैर्मत्स्यैः पाण्डवैश्च महारथैः । वृतान् समन्तात् संक्रुद्धैर्निःश्वसद्भिरिवोरगैः ।
एते नदन्ति संहृष्टाः पाण्डवा जितकाशिनः । शक्रोपमाश्च बहवः पाञ्चालानां रथव्रजाः ।
॥ कर्ण उवाच ॥ परित्रातुमिह प्राप्तो यदि पार्थं पुरन्दरः । तमप्याशु पराजित्य ततो हन्तास्मि पाण्डवं ।
सत्यं ते प्रतिजानामि समाश्वसिहि भारत । हन्तास्मि पाण्डुतनयान् पाञ्चालांश्च समागतान् । ७००५
जयन्ते प्रतिदास्यामि वासवस्येव पावकिः । प्रियं तव मया कार्य्यमिति वत्स समागमे ।

सर्व्वेषामेव पार्थानां फाल्गुनो बलवत्तरः । तस्यामोघां विमोक्ष्यामि शक्तिं शक्रविनिर्म्मितां ।
तस्मिन् हते महेष्वासे भ्रातरस्तस्य मानद । तव वश्या भविष्यन्ति वनं यास्यन्ति वा पुनः ।
मयि जीवति कौरव्य विषादं मा कृथाः क्वचित् । अहं जेष्यामि समरे सहितान् सर्व्वपाण्डवान् ।
पाञ्चालान् केकयांश्चैव वृष्णींश्चापि समागतान् । बाणौघैः शकलीकृत्य तव दास्यामि मेदिनीं । ६९८०
॥ सञ्जय उवाच ॥ एवं ब्रुवाणं कर्णन्तु कृपः शारद्वतोऽब्रवीत् । स्मयन्निव महाबाहुः सूतपुत्रमिदं वचः ।
शोभनं शोभनं कर्ण सनाथः कुरुपुङ्गवः । त्वया नाथेन राधेय वचसा यदि सिध्यति ।
बहुशः कत्थसे कर्ण कौरव्यस्य समीपतः । न तु ते विक्रमः कश्चिद्दृश्यते फलमेव वा ।
समागमः पाण्डुसुतैर्दृष्टस्ते बहुशो युधि । सर्व्वत्र निर्ज्जितश्चासि पाण्डवैः सूतनन्दन ।
ह्रियमाणे तदा कर्ण गन्धर्व्वैर्धृतराष्ट्रजे । तदाऽयुध्यन्त सैन्यानि त्वमेकोऽग्रे पलायिथाः । ६९८५
विराटनगरे चापि समेताः सर्व्वकौरवाः । पार्थेन निर्ज्जिता युद्धे त्वञ्च कर्ण सहानुजः ।
एकस्याप्यसमर्थस्त्वं फाल्गुनस्य रणाजिरे । कथमुत्सहसे जेतुं सकृष्णान् सर्व्वपाण्डवान् ।
अब्रुवन् कर्ण युध्यस्व कत्थसे बहु सूतज । अनुक्त्वा विक्रमेद्यस्तु तद्वै सत्पुरुषव्रतं ।
गर्ज्जित्वा सूतपुत्र त्वं शारदाभ्रमिवाफलं । निष्फलो दृश्यसे कर्ण तच्च राजा न बुध्यते ।
तावद्गर्ज्जसि राधेय यावत् पार्थं न पश्यसि । आरात् पार्थं हि ते दृष्ट्वा दुर्लभं गर्ज्जितं पुनः । ६९९०
त्वमनासाद्य तान् बाणान् फाल्गुनस्य विगर्ज्जसि । पार्थसायकविद्धस्य दुर्लभं गर्ज्जितं तव ।
बाहुभिः क्षत्रियाः शूरा वाग्भिः शूरा द्विजातयः । धनुषा फाल्गुनः शूरः कर्णः शूरो मनोरथैः ।
तोषितो येन रुद्रोऽपि कः पार्थं प्रतिघातयेत् । एवं स रुषितस्तेन तदा शारद्वतेन च ।
कर्णः प्रहरतां श्रेष्ठः कृपं वाक्यमथाब्रवीत् । शूरा गर्ज्जन्ति सततं प्रावृषीव बलाहकाः ।
फलञ्चाशु प्रयच्छन्ति बीजमुप्तं ऋताविव । दोषमत्र न पश्यामि शूराणां रणमूर्द्धनि । ६९९५
तत्तद्विकत्थमानानां भारञ्चोद्वहतां युधि । यं भारं पुरुषो वोढुं मनसा हि व्यवस्यति ।
दैवमस्य ध्रुवं तत्र साहाय्यायोपपद्यते । व्यवसायद्वितीयोऽहं मनसा भारमुद्वहन् ।
हत्वा पाण्डुसुतानाजौ सकृष्णान् सहसात्वतान् । गर्ज्जामि यद्यहं विप्र तव किन्तत्र नश्यति ।
वृथा शूरा न गर्ज्जन्ति शारदा इव तोयदाः । सामर्थ्यमात्मनो ज्ञात्वा ततो गर्ज्जन्ति पण्डिताः ।
सोऽहमद्य रणे यत्तौ सहितौ कृष्णपाण्डवौ । उत्सहे मनसा जेतुं ततो गर्ज्जामि गौतम । ७०००
पश्य त्वं गर्ज्जितस्यास्य फलं मे विप्र सानुगम् । हत्वा पाण्डुसुतानाजौ सहकृष्णान् ससात्वतान् ।
दुर्य्योधनाय दास्यामि पृथिवीं हतकण्टकां ।
॥ कृप उवाच ॥ मनोरथप्रलापो मे न ग्राह्यस्तव सूतज । सदा क्षिपसि वै कृष्णौ धर्म्मराजञ्च पाण्डवं ।
ध्रुवस्तत्र जयः कर्ण यत्र युद्धविशारदौ । देवगन्धर्व्वयक्षाणां मनुष्योरगपक्षिणां ।
दंशितानामपि रणे ह्यजेयौ कृष्णपाण्डवौ । ब्रह्मण्यः सत्यवाग्दान्तः पितृदैवतपूजकः । ७००५
सत्यधर्म्मरतश्चैव कृतास्त्रश्च विशेषतः । धृतिमांश्च कृतज्ञश्च धर्म्मपुत्रो युधिष्ठिरः ।

भ्रातरश्चास्य बलिनः सर्व्वास्त्रेषु कृतश्रमाः। गुरुवृत्तिरताः प्राज्ञा धर्म्मनित्या यशस्विनः।
सम्बन्धिनश्चेन्द्रवीर्य्याः स्वनुरक्ताः प्रहारिणः। धृष्टद्युम्नः शिखण्डी च दौर्म्मुखिर्जनमेजयः।
चन्द्रसेनो रुद्रसेनः कीर्त्तिवर्म्मा ध्रुवो धरः। वसुचन्द्रो दामचन्द्रः सिंहचन्द्रः सुतेजनः।
द्रुपदस्य तथा पुत्रा द्रुपदश्च महास्त्रवित्। येषामर्थाय संयत्तो मत्स्यराजः सहानुगः। ७०१०
गजानीकः श्रुतानीको वीरभद्रः सुदर्शनः। श्रुतध्वजो बलानीको जयानीको जयप्रियः।
विजयो लब्धलक्षश्च जयाश्वो रथवाहनः। चन्द्रोदयः कामरथो विराटभ्रातरः शुभाः।
यमौ च द्रौपदेयाश्च राक्षसश्च घटोत्कचः। येषामर्थाय युध्यन्ते न तेषां विद्यते क्षयः।
एते चान्ये च बहवो गणाः पाण्डुसुतस्य वै। कामं खलु जगत् सर्व्वं सदेवासुरमानुषं।
सयक्षराक्षसगणं सभूतभुजगद्विपं। निःशेषमस्त्रवीर्य्येण कुर्य्यातां भीमफाल्गुनौ। ७०१५
युधिष्ठिरश्च पृथिवीं निर्द्दहेद्घोरचक्षुषा। अप्रमेयबलः शौरिर्य्येषामर्थे च दंशितः।
कथं तान् संयुगे कर्ण जेतुमुत्सहसे परान्। महानपनयस्त्वेष तव नित्यं हि सूतज।
यस्त्वमुत्सहसे योद्धुं समरे शौरिणा सह।
॥ सञ्जय उवाच ॥ एवमुक्तस्तु राधेयः प्रहसन् भरतर्षभ। अब्रवीच्च तदा कर्णो गुरुं शारद्वतं कृपं।
सत्यमुक्तं त्वया ब्रह्मन् पाण्डवान् प्रति यद्वचः। एते चान्ये च बहवो गुणाः पाण्डुसुतेषु वै। ७०२०
अजेयास्च रणे पार्था देवैरपि सवासवैः। सदैत्ययक्षगन्धर्व्वैः पिशाचोरगराक्षसैः।
तथाऽपि पार्थान् जेष्यामि शक्त्या वासवदत्तया। ममाप्यमोघा दत्तेयं शक्तिः शक्रेण वै द्विज।
एतया निहनिष्यामि सव्यसाचिनमाहवे। हते तु पाण्डवे कृष्णो भ्रातरश्चास्य सोदराः।
अनर्ज्जुना न शक्ष्यन्ति महीं भोक्तुं कथञ्चन। तेषु सर्व्वेषु नष्टेषु पृथिवीयं ससागरा।
अयत्नात् कौरवेन्द्रस्य वशे स्थास्यति गौतम। सुनीतैरिह सर्व्वाणि सिध्यन्ते नात्र संशयः। ७०२५
एतमर्थमहं ज्ञात्वा ततो गर्ज्जामि गौतम। त्वन्तु वृद्धश्च विप्रश्च अशक्तश्चासि संयुगे।
कृतस्नेहश्च पार्थेषु ततो मामवमन्यसे। यद्येवं वक्ष्यसे भूयो ममाप्रियमिह द्विज।
ततस्ते खड्गमुद्यम्य जिह्वां छेत्स्यामि दुर्म्मते। यच्चापि पाण्डवान् विप्र स्तोतुमिच्छसि संयुगे।
भीषयन् सर्व्वसैन्यानि कौरवेयाणि दुर्म्मते। अत्रापि शृणु मे वाक्यं यथावच्छृणु गौतम।
दुर्य्योधनश्च द्रोणश्च शकुनिर्द्दुर्म्मुखो जयः। दुःशासनो वृषसेनो मद्रराजस्त्वमेव च। ७०३०
सोमदत्तश्च भूरिश्च तथा द्रौणिर्व्विविंशतिः। तिष्ठन्ति दंशिता यत्र सर्व्वे युद्धविशारदाः।
जयेदेतान् रणे को हि शक्रतुल्यबलोऽप्यरिः। शूराश्च हि कृतास्त्राश्च बलिनः स्वर्गलिप्सवः।
धर्म्मज्ञा युद्धकुशला हन्युर्युद्धे सुरानपि। एते स्थास्यन्ति सङ्ग्रामे पाण्डवानां वधार्थिनः।
जयमाकाङ्क्षमाणस्य कौरवेयस्य दंशिताः। दैवायत्तमहं मन्ये जयं सुबलिनामपि।
यत्र भीष्मो महाबाहुः शेते शरशताचितः। विकर्णश्चित्रसेनश्च बाह्लीकश्च जयद्रथः। ७०३५
भूरिश्रवा जयश्चैव जलसन्धः सुदक्षिणः। शलश्च रथिनां श्रेष्ठो भगदत्तश्च वीर्य्यवान्।

एते चान्ये च बहवो देवैरपि च दुर्जयाः । निहताः समरे शूरा पाण्डवैर्बलवत्तराः ।
किमन्यद्दैवसंयोगान्मन्यसे पुरुषाधम । यश्चैतान् सोऽपि सततं दुर्य्योधनरिपून् द्विज ।
तेषामपि हताः शूरा शतशोऽथ सहस्रशः । क्षीयन्ते सर्व्वसैन्यानि कुरूणां पाण्डवैः सह ।
प्रभावं नात्र पश्यामि पाण्डवानां कथञ्चन । यस्तान् बलवतो नित्यं मन्यसे हि नराधम । ७०३०
यतिष्येऽहं परं शक्त्या योद्धुं तैः सह संयुगे । दुर्य्योधन हितार्थाय जयो दैवे प्रतिष्ठितः ।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि कृपकर्णवाक्ये अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥
॥ सञ्जय उवाच ॥ तथा परुषितं दृष्ट्वा सूतपुत्रेण मातुलं । खड्गमुद्यम्य वेगेन द्रौणिरभ्यपतद्द्रुतं ।
ततः परमसंक्रुद्धः सिंहो मत्तमिव द्विपं । प्रेक्षतः कुरुराजस्य द्रौणिः कर्णं समभ्ययात् ।
॥ अश्वत्थामोवाच ॥ यदर्ज्जुनगुणांस्तथ्यान् कीर्त्तयानं नराधम । शूरं द्वेषात् सुदुर्बुद्धे त्वं भर्त्सयसि मातुलं ।
विकत्थमानः शौर्य्येण सर्व्वलोकधनुर्धरं । दर्पोत्सेकपरीतोऽद्य न कञ्चिद्गणयन्मृधे । ७०३५
क्व ते वीर्य्यं क्व चास्त्राणि यस्त्वां निर्जित्य संयुगे । गाण्डीवधन्वा हतवान् प्रेक्षतस्ते जयद्रथं ।
येन साक्षान्महादेवः समरे योधितः पुरा । तमिच्छसि वृथा जेतुं सूताधम मनोरथैः ।
यं हि कृष्णेन सहितं सर्व्वशस्त्रभृतां वरं । जेतुं न शक्ताः सहिताः सेन्द्रा अपि सुरासुराः ।
लोकैकवीरमजितमर्ज्जुनं सूत संयुगे । किम्पुनस्त्वमिमं जेतुं सहैभिर्व्वसुधाधिपैः ।
कर्ण पश्य सुदुर्बुद्धे तिष्ठेदानीं नराधम । एष तेऽद्य शिरः कायादुद्धरामि सुदुर्म्मते । ७०४०
॥ सञ्जय उवाच ॥ तमुद्यतन्तु वेगेन राजा दुर्य्योधनः स्वयं । न्यवारयन्महातेजाः कृपश्च द्विपदां वरः ।
॥ कर्ण उवाच ॥ शूरोऽयं समरश्लाघी दुर्म्मतिश्च द्विजाधमः । आसादयतु मद्वीर्य्यं मुञ्चेमं द्विजसत्तमं ।
॥ अश्वत्थामोवाच ॥ तवैतत् क्षम्यतेऽस्माभिः सूतात्मज सुदुर्म्मते । दर्पमुत्सिक्तमेतत्ते फाल्गुनो नाशयिष्यति ।
॥ दुर्य्योधन उवाच ॥ अश्वत्थामन् प्रसीदस्व क्षन्तुमर्हसि मानद । कोपः खलु न कर्त्तव्यः सूतपुत्रे त्वयाऽनघ ।
त्वयि कर्णे कृपे द्रोणे मद्रराजे च सौबले । महत् कार्य्यं समायत्तं प्रसीद द्विजसत्तम । ७०४५
एते ह्यभिमुखाः सर्व्वे राधेयेन युयुत्सवः । आयान्ति पाण्डवाः सर्व्वे आह्वयन्तः समन्ततः ।
॥ सञ्जय उवाच ॥ प्रसाद्यमानस्तु ततो राज्ञा द्रौणिर्महामनाः । प्रससाद महाराज क्रोधवेगसमन्वितः ।
ततः कृप उवाचेदमाचार्य्यः सुमहामनाः । सौम्यस्वभावाद्राजेन्द्र क्षिप्रमागतमार्द्दवः ।
॥ कृप उवाच ॥ तवैतत् क्षम्यतेऽस्माभिः सूतात्मज सुदुर्म्मते । दर्पमुत्सिक्तमेतत्ते फाल्गुनो नाशयिष्यति ।
॥ सञ्जय उवाच ॥ ततस्ते पाण्डवा राजन् पाञ्चालाश्च यशस्विनः । आजग्मुः सहितास्तत्र तर्ज्जयन्तः सहस्रशः । ७०५०
कर्णोऽपि रथिनां श्रेष्ठश्चापमुद्यम्य वीर्य्यवान् । कौरवाग्र्यैः परिवृतः शक्रो देवगणैरिव ।
पर्य्यतिष्ठत तेजस्वी स्वबाहुबलमाश्रितः । ततः प्रववृते युद्धं कर्णस्य सह पाण्डवैः ।
भीषणं सुमहाराज सिंहनादविराजितं । ततस्ते पाण्डवा राजन् पाञ्चालाश्च यशस्विनः ।
दृष्ट्वा कर्णं महाबाहुमुच्चैः शब्दमथानदन् । अयं कर्णः कुतः कर्णस्तिष्ठ कर्ण महारणे ।
युध्यस्व सहितोऽस्माभिर्दुरात्मन् पुरुषाधम । अन्ये तु दृष्ट्वा राधेयं क्रोधरक्तेक्षणाब्रुवन् । ७०५५

वध्यतामयमुत्सिक्तः सूतपुत्रोऽल्पचेतनः । सर्व्वैः पार्थिवशार्दूलैर्नानेनार्थोऽस्ति जीवता ।
अत्यन्तवैरी पार्थानां सततं पापपूरुषः । एष मूलं ह्यनर्थानां दुर्य्योधनमते स्थितः ।
हतैनमिति अन्योन्यं क्षत्त्रियाः समुपाद्रवन् । महता शरवर्षेण छादयन्तो महारथाः ।
वधार्थं सूतपुत्रस्य पाण्डवेयेन नोदिताः । तांस्तु सर्व्वांस्तथा दृष्ट्वा पाण्डुपुत्रान्महाबलान् ।
न विव्यथे सूतपुत्रो न च त्रासमगच्छत । दृष्ट्वा संहारकल्पं तमद्भुतं सैन्यसागरं ।    ७०७०
प्रियकृत्तव पुत्राणां सङ्ग्रामेष्वपराजितः । सायकौघेन बलवान् क्षिप्रकारी महाबलः ।
वारयामास तत् सैन्यं समन्ताद्भरतर्षभ । ततस्तु शरवर्षेण पाण्डवाः समवारयन् ।
धनूंषि ते विधुन्वानाः शतशोऽथ सहस्रशः । अयोधयन्त राधेयं शक्रं दैत्या यथा पुरा ।
शरवर्षन्तु तत् कर्णः पार्थिवैः समुदीरितं । शरवर्षेण महता समन्ताद्व्यधमद्विभो ।
तद्युद्धमभवत्तेषां कृतप्रतिकृतैषिणां । यथा देवासुरे युद्धे शक्रस्य सह दानवैः ।    ७०७५
तत्राद्भुतमपश्याम सूतपुत्रस्य लाघवं । यदेनं समरे यत्ता नाप्नुवन्त परे युधि ।
निवार्य्य च शरौघांस्तान् पार्थिवानां महारथः । युगेष्वीषासु छत्रेषु रथेषु च ध्वजेषु च ।
आत्मनामाङ्कितान् घोरान् राधेयः प्राहिणोच्छरान् । ततस्ते व्याकुलीभूता राजानः कर्णपीडिताः ।
बभ्रमुस्तत्र तत्रैव गावः शीतार्द्दिता इव । हयानां वध्यमानानां गजानां रथिनां तदा ।
तत्र तत्र स्म दृश्यन्ते सङ्घाः कर्णेन पीडिताः । शिरोभिः पतितै राजन् बाहुभिश्च समन्ततः ।    ७०८०
प्रकीर्णा वसुधा सर्व्वा शूराणामनिवर्त्तिनां । हतैश्च हन्यमानैश्च निष्टनद्भिश्च सर्व्वशः ।
बभूवायोधनं राजन् वैवस्वतपुरं यथा । दुर्य्योधनस्ततो राजन् दृष्ट्वा कर्णस्य विक्रमं ।
अश्वत्थामानमासाद्य ततो वाक्यमुवाच ह । युध्यते हि दृश्यते कर्णो दंशितः सर्व्वपार्थिवैः ।
पश्येमां द्रवतीं सेनां कर्णसायकपीडितां । कार्त्तिकेयसमुद्भूतामासुरीमिव तां चमूं ।
दृष्ट्वेमां निर्जितां सेनां रणे कर्णेन धीमता । अभियात्येष बीभत्सुः सूतपुत्रजिघांसया ।    ७०८५
तद्यथा पश्यमानानां सूतपुत्रं महारथं । न हन्यात् पाण्डवः सङ्ख्ये तथा नीतिर्व्विधीयतां ।
ततो द्रौणिः कृपः शल्यो हार्द्दिक्यश्च महारथः । प्रत्युद्ययुस्तदा पार्थं सूतपुत्रस्य रक्षिणः ।
आयान्तं वीक्ष्य कौन्तेयं शक्रं दैत्यचमूमिव । बीभत्सुरपि राजेन्द्र पाञ्चालैरभिसंवृतः ।
प्रत्युद्ययौ तदा कर्णं यथा वृत्रं पुरन्दरः ।
॥ धृतराष्ट्र उवाच ॥ संरब्धं फाल्गुनं दृष्ट्वा कालान्तकयमोपमं । कर्णो वैकर्त्तनः सूत प्रत्यपद्यत किमुत्तरं ।    ७०९०
योऽस्पर्द्धत च पार्थेन नित्यमेव महारथः । आशंसते च बीभत्सुमवजेतुं सुदारुणः ।
स तु तं सहसा प्राप्तं नित्यमत्यन्तवैरिणं । कर्णो वैकर्त्तनः सूत किमन्यत् प्रत्यपद्यत ।
॥ सञ्जय उवाच ॥ आयान्तं पाण्डवं दृष्ट्वा गजः प्रतिगजं यथा । असम्भ्रान्ततरः कर्णः प्रत्युदीयात् धनञ्जयं ।
तमापतन्तं वेगेन स्वर्णपुङ्खैरजिह्मगैः । छादयामास पार्थोऽथ कर्णस्तु विजयं शरैः ।
तं कर्णं शरजालेन छादयामास पाण्डवः । ततः कर्णः सुसंरब्धः शरैस्त्रिभिरविध्यत ।    ७०९५

तस्य तल्लाघवं दृष्ट्वा नामृष्यत महारथः। ततो बाणाञ्छिलाधौतान् प्रदीप्ताग्रानजिह्मगान्।
प्राहिणोत् सूतपुत्राय त्रिंशता शत्रुतापनः। विव्याध चैनं संरब्धात् बाणेनैकेन वीर्य्यवान्
सव्ये भुजाग्रे बलवान्नाराचेन हसन्निव। तस्य विद्धस्य वेगेन कराच्चापं पपात ह।
पुनरादाय तच्चापं निमेषार्द्धान्महाबलः। छादयामास बाणौघैः फाल्गुनं कृतहस्तवत्।
शरवृष्टिन्तु तां मुक्तां सूतपुत्रेण भारत। व्यधमच्छरवर्षेण स्मयन्निव धनञ्जयः। ७१००
तौ परस्परमासाद्य छादयेतां समन्ततः। शरजालैर्महेष्वासौ कृतप्रतिकृतैषिणौ।
तदद्भुतमभूद्युद्धं कर्णपाण्डवयोर्मृधे। उभयोर्वाशिताहेतोर्वन्ययोर्गजयोरिव।
ततः पार्थो महेष्वासो दृष्ट्वा कर्णस्य विक्रमं। मुष्टिदेशे धनुस्तस्य चिच्छेद त्वरयाऽन्वितः।
अश्वांश्च चतुरो भल्लैरनयद्यमसादनं। सारथेश्च शिरः कायादहरच्छत्रुतापनः।
अथैनं छिन्नधन्वानं हताश्वं हतसारथिं। विव्याध सायकैः पार्थश्चतुर्भिः पाण्डुनन्दनः। ७१०५
हताश्वात्तु रथात्तूर्णं अवप्लुत्य नरर्षभः। आरुरोह रथं तूर्णं कृपस्य शरपीडितः।
स तुन्नोऽर्जुनबाणौघैराचितः शल्यको यथा। जीवितार्थमभिप्रेप्सुः कृपस्य रथमारुहत्।
राधेयं निर्ज्जितं दृष्ट्वा तावका भरतर्षभ। धनञ्जयशरैर्नुन्नाः प्राद्रवन्त दिशो दश।
द्रवतस्तान् समालोक्य राजा दुर्य्योधनः स्वयं। निवर्त्तयामास तदा वाक्यञ्चेदमुवाच ह।
अलं द्रुतेन वः शूरास्तिष्ठध्वं क्षत्रियर्षभाः। एष पार्थवधायाहं स्वयं गच्छामि संयुगे। ७११०
अहं पार्थं हनिष्यामि सपाञ्चालं समागतं। अद्य मे युध्यमानस्य सह गाण्डीवधन्वना।
द्रक्ष्यन्ति विक्रमं पार्थाः कालस्येव युगक्षये। अद्य मद्बाणजालानि विमुक्तानि सहस्रशः।
द्रक्ष्यन्ति समरे पार्थाः शलभानामिवायतीः। अद्य बाणमयं वर्षं सृजतो मम धन्विनः।
जीमूतस्येव घर्मान्ते द्रक्ष्यन्ति मम सैनिकाः। जेष्याम्यद्य रणे पार्थं सायकैर्नतपर्व्वभिः।
तिष्ठध्वं समरे वीरा भयं त्यजत फाल्गुनात्। न हि मद्वीर्य्यमासाद्य फाल्गुनः प्रसहिष्यति। ७११५
यथा वेलां समासाद्य सागरो मकरालयः। इत्युक्त्वा प्रययौ राजा सैन्येन महता वृतः।
फाल्गुनं प्रति संरब्धः क्रोधसंरक्तलोचनः। तम्प्रयान्तं महाबाहुं दृष्ट्वा शारद्वतस्तदा।
अश्वत्थामानमासाद्य वाक्यञ्चेदमुवाच ह। एष राजा महाबाहुरमर्षी क्रोधमूर्च्छितः।
पतङ्गवृत्तिमास्थाय फाल्गुनं योद्धुमिच्छति। यावन्नः पश्यमानानां प्राणान् पार्थेन संयुगे।
न जह्यात् पार्थिवश्रेष्ठस्तावत् वारय कौरवं। यावत् फाल्गुनबाणानां गोचरं नाधिगच्छति। ७१२०
कौरव्यः पार्थिवो वीरस्तावत्तिष्ठति संयुगे। यावत् पार्थशरैर्घोरैर्निर्म्मुक्तोरगसन्निभैः।
न भस्मीक्रियते राजा तावद्युद्धान्निवर्त्यतां। अयुक्तमिव पश्यामस्तिष्ठत्स्वस्मासु मानद।
स्वयं युद्धाय यद्राजा रणं यात्यसहायवान्। दुर्लभं जीवितं मन्ये कौरवस्य किरीटिना।
युध्यमानस्य समरे शार्दूलेनेव हस्तिनः। मातुलेनैवमुक्तस्तु द्रौणिः शस्त्रभृतांवरः।
दुर्य्योधनमिदं वाक्यं त्वरितः समभाषत। मयि जीवति गान्धारे न युद्धं कर्त्तुमर्हसि। ७१२५

मामनादृत्य कौरव्य तव नित्यं हितैषिणं। न हि ते सम्भ्रमः कार्य्यः पार्थस्य विजयम्प्रति।
अहमावारयिष्यामि पार्थं तिष्ठ सुयोधन।
॥ दुर्य्योधन उवाच ॥ आचार्य्यः पाण्डुपुत्त्रान् वै पुत्त्रवत् परिरक्षति। त्वमप्युपेक्षां कुरुषे तेषु नित्यं ममारिषु।
मम वा मन्दभाग्यत्वान्मन्दस्ते विक्रमो युधि। धर्म्मराजप्रियार्थम्वा द्रौपद्या वा न विद्म तत्।
धिगस्तु मम लुब्धस्य यत्कृते सर्व्वबान्धवाः। सुखकामाः परं दुःखं प्राप्नुवन्ति पराजिताः। ७२१०
को हि शस्त्रभृतां श्रेष्ठो महेश्वरसमो युधि। शत्रुं न क्षपयेच्छक्तो यो न स्याद्गौतमीसुतः।
अश्वत्थामन् प्रसीदस्व नाशयैतान्ममाहितान्। तवास्त्रगोचरे शक्ताः स्थातुं देवा न दानवाः।
पाञ्चालान् सोमकांश्चैव जहि द्रौणे सहानुगान्। वयं शेषान् हनिष्यामस्त्वयैव परिरक्षिताः।
एते हि सोमका विप्र पाञ्चालाश्च यशस्विनः। मम सैन्येषु संक्रुद्धा विचरन्ति दवाग्निवत्।
तान् वारय महाबाहो कैकयांश्च नरोत्तम। पुरा कुर्व्वन्ति निःशेषं रक्ष्यमाणाः किरीटिना। ७२१५
अश्वत्थामंस्त्वरायुक्तो याहि शीघ्रमरिन्दम। आदौ वा यदि वा पश्चात्तवेदं कर्म्म ब्राह्मण।
त्वमुत्पन्नो महाबाहो पाञ्चालानां बधाय वै। करिष्यसि जगत्कृत्स्नमपाञ्चालं किलोद्यतः।
एवं सिद्धाब्रुवन्वाच्यो भविष्यति च तत्तथा। तस्मात्त्वं पुरुषव्याघ्र पाञ्चालान् जहि सानुगान्।
न तेऽस्त्रगोचरे शक्ताः स्थातुं देवाः सवासवाः। किमु पार्थाः सपाञ्चालाः सत्यमेतद्वचो मम।
न त्वां समर्थाः सङ्ग्रामे पाण्डवाः सह सोमकैः। बलाद्योधयितुं वीर सत्यमेतद्ब्रवीमि ते। ७२२०
गच्छ गच्छ महाबाहो न नः कालात्ययो भवेत्। इयं हि द्रवते सेना पार्थसायकपीडिता।
शक्तो ह्यसि महाबाहो दिव्येन स्वेन तेजसा। निग्रहे पाण्डुपुत्त्राणां पाञ्चालानाञ्च मानद।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचबधपर्व्वणि दुर्य्योधनवाक्ये एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

॥ सञ्जय उवाच ॥ दुर्य्योधनेनैवमुक्तो द्रौणिराहवदुर्म्मदः। चकारारिबधे यत्नमिन्द्रो दैत्यबधे यथा।
प्रत्युवाच महाबाहुस्तव पुत्त्रमिदं वचः। सत्यमेतन्महाबाहो यथा वदसि कौरव।
प्रिया हि पाण्डवा नित्यं मम चापि पितुश्च मे। तथैवावां प्रिया तेषां न युद्धे तु कथञ्चन। ७२२५
शक्तितस्तात युध्यामस्त्यक्त्वा प्राणानभीतवत्। अहं कर्णश्च शल्यश्च कृपो हार्द्दिक्य एव च।
निमेषात् पाण्डवीं सेनां क्षपयेयुर्नृपोत्तम। ते चापि कौरवीं सेनां निमेषात् कुरुसत्तम।
क्षपयेरन्महाबाहो यदि न स्याम संयुगे। युध्यतः पाण्डवान् शक्त्या तेऽपि चास्मान् युयुत्सवः।
तेजस्तु तेज आसाद्य प्रशमं याति भारत। अशक्या तरसा जेतुं पाण्डवानामनीकिनी।
जीवत्सु पाण्डुपुत्त्रेषु तद्धि सत्यं ब्रवीमि ते। आत्मार्थं युध्यमानास्ते समर्थाः पाण्डुनन्दनाः। ७२३०
किमर्थं तव सैन्यानि न हनिष्यन्ति भारत। त्वन्तु लुब्धतमो राजन्निकृतिज्ञश्च कौरव।
सर्व्वातिशङ्की मानी च ततोऽस्मानभिशङ्कसे। मन्ये त्वं कुत्सितो राजन् पापात्मा पापपूरुषः।
अस्मानपि स नः क्षुद्र शङ्कसे पापभावितः। अहन्तु यत्नमास्थाय त्वदर्थे त्यक्तजीवितः।
एष गच्छामि सङ्ग्रामं त्वत्कृते कुरुसत्तम। योत्स्यामि शत्रुभिः सार्द्धं हनिष्यामि परान् ब[illegible]।

पाञ्चालैः सह योत्स्यामि सोमकैः केकयैस्तथा । पाण्डवेयैश्च सङ्ग्रामे त्वत्प्रियार्थमरिन्दम । ७१५५
अद्य मद्बाणनिर्दग्धाश्चेदिपाञ्चालसोमकाः । सिंहेनेवार्द्दिता गावो विद्रविष्यन्ति सर्व्वतः ।
अद्य धर्म्मसुतो राजा दृष्ट्वा मम पराक्रमं । अश्वत्थाममयं लोकं मंस्यते सह सोमकैः ।
आगमिष्यति निर्व्वेदं धर्म्मपुत्रो युधिष्ठिरः । दृष्ट्वा विनिहतान् सङ्ख्ये पाञ्चालान् सह सोमकैः ।
ये मां युद्धे प्रयास्यन्ति तान् हनिष्यामि भारत । नहि ते वीर मोक्ष्यन्ते मद्बाहुबलपीडिताः ।
एवमुक्त्वा महाबाहुः पुत्रं दुर्य्योधनं तव । अभ्यवर्त्तत युद्धाय द्रावयन् सर्व्वधन्विनः । ७१६०
चिकीर्षुस्तव पुत्राणां प्रियं प्राणभृताम्वरः । ततोऽब्रवीत् सकैकेयान् पाञ्चालान् गौतमीसुतः ।
प्रहरध्वमितः सर्व्वे मम गात्रे महारथाः । स्थिरीभूताश्च युध्यध्वं दर्शयन्तोऽस्त्रलाघवं ।
एवमुक्तास्तु ते सर्व्वे शस्त्रवृष्टिमपातयन् । द्रौणिं प्रति महाराज जलं जलधरा इव ।
तान्निहत्य रणे द्रौणिर्दशवीरानपोथयत । प्रमुखे पाण्डुपुत्राणां धृष्टद्युम्नस्य वा विभो ।
निहन्यमानाः समरे पाञ्चालाः सोमकास्तथा । परित्यज्य रणे द्रौणिं व्यद्रवन्त दिशो दश । ७१६५
तान् दृष्ट्वा द्रवतः शूरान् पाञ्चालान् सह सोमकैः । धृष्टद्युम्नो महाराज द्रौणिमभ्यद्रवद्युधि ।
ततः काञ्चनचित्राणां सजलाम्बुदनादिनां । वृतः शतेन शूराणां रथानामनिवर्त्तिनां ।
पुत्रः पाञ्चालराजस्य धृष्टद्युम्नो महारथः । द्रौणिमित्यब्रवीद्वाक्यं दृष्ट्वा योधान्निपातितान् ।
आचार्य्यपुत्र दुर्बुद्धे किमन्यैर्निहतैस्तव । प्रयुध्यस्व मया सार्द्धं यदि शूरोऽसि संयुगे ।
अहं त्वां निहनिष्यामि तिष्ठेदानीं स्थिरो भव । ततस्तमाचार्य्यसुतं धृष्टद्युम्नः प्रतापवान् । ७१७०
मर्म्मभिद्भिः शरैस्तीक्ष्णैर्जघान भृशदारुणैः । ते तु पङ्क्तीकृता द्रौणिं शरा विविशुराशुगाः ।
रुक्मपुङ्खाः प्रसन्नाग्राः सर्व्वकायावदारणाः । मध्वर्थिन इवोद्दामा भ्रमराः पुष्पितं द्रुमं ।
सोऽतिविद्धो भृशं क्रुद्धः पादाक्रान्त इवोरगः । मानी द्रौणिरसम्भ्रान्तः शरपाणिरभाषत ।
धृष्टद्युम्न स्थिरो भूत्वा मुहूर्त्तं प्रतिपालय । यावत्त्वां निशितैर्भल्लैः प्रेषयामि यमक्षयं ।
द्रौणिरेवमथाभाष्य पार्षतं परवीरहा । छादयामास बाणौघैः समन्ताल्लघुहस्तवत् । ७१७५
सञ्छाद्यमानः समरे द्रौणिना युद्धदुर्म्मदः । द्रौणिं पाञ्चालतनयो वाग्भिरातर्ज्जयत्तदा ।
न जानीषे प्रतिज्ञां मे विप्रोत्पत्तिं तथैव च । द्रोणं हत्वा किल मया हन्तव्यस्त्वं सुदुर्म्मते ।
ततस्त्वाऽहं न हन्म्यद्य द्रोणे जीवति संयुगे । इमान्तु रजनीं प्राप्तां सुप्रभातां सुदुर्म्मते ।
निहत्य पितरं तेऽद्य ततस्त्वामपि संयुगे । नेष्यामि प्रेतलोकाय एतन्मे मनसि स्थितं ।
यस्ते पार्थेषु विद्वेषो या भक्तिः कौरवेषु च । तां दर्शय स्थिरो भूत्वा न मे जीवन् गमिष्यसि । ७१८०
यो हि ब्राह्मण्यमुत्सृज्य क्षत्त्रधर्म्मरतो द्विजः । स वध्यः सर्व्वलोकस्य यथा त्वं पुरुषाधम ।
इत्युक्तः परुषं वाक्यं पार्षतेन द्विजोत्तमः । क्रोधमाहारयत्तीव्रं तिष्ठतिष्ठेति चाब्रवीत् ।
निर्द्दहन्निव चक्षुर्भ्यां पार्षतं सोऽभ्यवैक्षत । छादयामास समरे निश्वसन्नुरगो यथा ।
स छाद्यमानः समरे द्रौणिना पार्षतः शरैः । सर्व्वपाञ्चालसेनाभिः संवृतो रथसत्तमः ।

नाकम्पत महाबाहुः स्ववीर्य्यं समुपाश्रितः। सायकांश्चैव विविधानस्यताशु मुमोच च। ७९८५
तौ पुनः सन्न्यवर्त्तेतां प्राणद्यूताभिदेविनौ। निवारयन्तौ बाणौघान् परस्परममर्षिणौ।
उत्सृजन्तौ महेष्वासौ शरवृष्टीः समन्ततः। द्रौणिपार्षतयोर्युद्धं घोररूपं भयावहम्।
दृष्ट्वा सम्पूजयामासुः सिद्धचारणवातिकाः। शरौघैः पूरयन्तौ तावाकाशं प्रदिशस्तथा।
अलक्ष्यौ समयुध्येतां महत् कृत्वा शरैस्तमः। नृत्यमानाविव रणे मण्डलीकृतकार्मुकौ।
परस्परबधे युक्तौ सर्व्वभूतभयङ्करौ। अयुध्येतां महाबाहू चित्रं लघु च सुष्ठु च। ७९९०
सम्पूज्यमानौ समरे योधमुख्यैः सहस्रशः। तौ प्रयुद्धौ रणे दृष्ट्वा वने वन्यौ गजाविव।
उभयोः सेनयोर्हर्षस्तुमुलः समपद्यत। सिंहनादरवाश्चासन् दध्मुः शङ्खांश्च सैनिकाः।
वादित्राण्यभ्यवाद्यन्त शतशोऽथ सहस्रशः। तस्मिंस्तु तुमुले युद्धे भीरूणां भयवर्द्धने।
मुहूर्त्तमिव तद्युद्धं समरूपमिवाभवत्। ततो द्रौणिर्महाराज पार्षतस्य महात्मनः।
धनुर्ध्वजं तथा छत्रं तथोभौ पार्ष्णिसारथी। सूतमश्वांश्च चतुरो निहत्याभ्यद्रवद्रणे। ७९९५
पाञ्चालांश्चैव तान् सर्व्वान् शरैः सन्नतपर्व्वभिः। व्यद्रावयदमेयात्मा शतशोऽथ सहस्रशः।
ततः प्रविव्यथे सेना पाण्डवी भरतर्षभ। दृष्ट्वा द्रौणेर्महत् कर्म्म वासवस्येव संयुगे।
शतेन च शतं हत्वा पाञ्चालानां महारथः। त्रिभिश्च निशितैर्ब्बाणैर्हत्वा त्रीन्वै नरर्षभान्।
द्रौणिर्द्रुपदपुत्रस्य फाल्गुनस्य च पश्यतः। नाशयामास पाञ्चालान् भूयिष्ठं ये व्यवस्थिताः।
ते बध्यमानाः पाञ्चालाः समरे सह सृञ्जयैः। अगच्छन् द्रौणिमुत्सृज्य विप्रकीर्णरथध्वजाः। ८०००
स जित्वा समरे शत्रून् द्रोणपुत्रो महारथः। ननाद सुमहानादं तपान्ते जलदो यथा।
स निहत्य बहून् शूरानश्वत्थामा व्यरोचत। युगान्ते सर्व्वभूतानि प्रदहन्निव पावकः।
सम्पूज्यमानो युधि कौरवेयैर्निर्जित्य सङ्घेऽरिगणान् सहस्रशः। व्यरोचत द्रोणसुतः प्रतापवान् यथा सुरेन्द्रोऽरिगणान्निपात्य वै।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचबधपर्व्वणि अश्वत्थामपराक्रमे नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

॥ सञ्जय उवाच ॥ ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः। द्रोणपुत्रं महाराज समन्तात् पर्य्यवारयन्।
ततो दुर्य्योधनो राजा भारद्वाजेन संवृतः। अभ्ययात् पाण्डवान् सङ्ख्ये ततो युद्धमवर्त्तत। ८००५
घोररूपं महाभीमं भीरूणां भयवर्द्धनम्। अम्बष्ठान्मालवान् वङ्गाञ्छिबींस्त्रैगर्त्तकानपि।
प्राहिणोन्मृत्युलोकाय गणान् क्रुद्धो युधिष्ठिरः। अभीषाहान् शूरसेनान् क्षत्रियान् युद्धदुर्मदान्।
निकृत्य पृथिवीञ्चक्रे भीमः शोणितकर्द्दमाम्। यौधेयानद्रिजान् राजन् मद्रकान्मालवानपि।
प्राहिणोन्मृत्युलोकाय किरीटी श्वेतवाहनः। प्रगाढमञ्जोगतिभिर्नाराचैरभिताडिताः।
निपेतुर्द्विरदा भूमौ द्विशृङ्गा इव पर्व्वताः। निकृत्तैर्हस्तिहस्तैश्च चेष्टमानैस्ततस्ततः। ८०१०
रराज वसुधा कीर्णा विसर्पद्भिरिवोरगैः। क्षिप्तैः कनकचित्रैश्च नृपच्छत्रैश्च भूर्ब्बभौ।
द्यौरिवादित्यचन्द्राद्यैर्ग्रहैः कीर्णा युगक्षये। हत प्रहरताभीता विध्यत व्यवकृन्तत।

इत्यासीत्तुमुलः शब्दः स शोणाश्वरथं प्रति । द्रोणस्तु परमक्रुद्धो वायव्यास्त्रेण संयुगे ।
व्यधमत्तान्महावायुर्मेघानिव दुरत्ययः । ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन् भयात् ।
पश्यतो भीमसेनस्य पार्थस्य च महात्मनः । किरीटी भीमसेनश्च सहसा सन्न्यवर्त्ततां । ७२१५
महता रथवंशेन परिगृह्य बलं महत् । बीभत्सुर्दक्षिणं पार्श्वमुत्तरञ्च वृकोदरः ।
भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षतां । तौ तथा सृञ्जयाश्चैव पाञ्चालाश्च महारथाः ।
अन्वगच्छन्महाराज मत्स्याश्च सह सोमकैः । तथैव तव पुत्रस्य रथोदाराः प्रहारिणः ।
महत्या सेनया राजन्नभ्युर्द्रोणरथम्प्रति । ततः सा भारती सेना वध्यमाना किरीटिना ।
तमसा निद्रया चैव पुनरेव व्यदीर्य्यत । द्रोणेन वार्य्यमाणास्ते स्वयं तव सुतेन च । ७२२०
नाशक्यन्त महाराज योधा वारयितुं तदा । सा पाण्डुपुत्रस्य शरैर्वध्यमाना महाचमूः ।
तमसा संवृता लोके व्यद्रवत् सर्व्वतोमुखी । उत्सृज्य शतशो वाहांस्तत्र केचिन्नराधिपाः ।
व्यद्रवन्त महाराज भयाविष्टाः समन्ततः ।
इति महाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि सङ्कुलयुद्धे एकषष्ट्यधिकशततोऽध्यायः ॥ १६१ ॥
॥ सञ्जय उवाच ॥ सोमदत्तस्तु संक्रुद्धो विधुन्वानो महद्धनुः । सात्यकिः प्राह यन्तारं सोमदत्ताय मां वह ।
न ह्यहत्वा रणे शत्रुं बाह्लीकं कौरवाधमं । निवर्त्तिष्ये रणे सूत सत्यमेतद्वचो मम । ७२२५
ततः सम्प्रेषयद्यन्ता सैन्धवांस्तान्महाजवान् । तुरङ्गमाञ्छङ्खवर्णान् सर्व्वशस्त्रातिगान्रणे ।
तेऽवहन् युयुधानन्तु मनोमारुतरंहसः । यथेन्द्रं हरयो राजन् पुरा दैत्यवधोद्यतं ।
तमापतन्तं सम्प्रेक्ष्य सात्वतं रभसं रणे । सोमदत्तो महाराज असम्भ्रान्तो न्यवर्त्तत ।
विमुञ्चञ्छरवर्षाणि पर्ज्जन्य इव वृष्टिमान् । छादयामास शैनेयं भास्करं जलदो यथा ।
असम्भ्रान्तश्च समरे सात्यकिः कुरुपुङ्गवं । छादयामास बाणौघैः समन्ताद्भरतर्षभ । ७२३०
सोमदत्तस्तु तं षष्ट्या विव्याधोरसि माधवं । सात्यकिश्चापि तं राजन् अविध्यत् सायकैः शितैः ।
तावन्योऽन्यं शरैः कृत्तौ व्यरोचेतां परस्परं । सुपुष्पौ पुष्पसमये पुष्पिताविव किंशुकौ ।
रुधिरोक्षितसर्व्वाङ्गौ कुरुवृष्णियशस्करौ । परस्परमवेक्षेतां दहन्ताविव लोचनैः ।
रथमण्डलमार्गेषु चरन्तावरिमर्द्दनौ । घोररूपौ हि तावास्तां वृष्टिमन्ताविवाम्बुदौ ।
शरसंभिन्नगात्रौ तौ सर्व्वतः शकलीकृतौ । श्वाविधाविव राजेन्द्र दृश्येतां शरविक्षतौ । ७२३५
सुवर्णपुङ्खैरिषुभिराचितौ तौ व्यरोचतां । खद्योतैरावृतौ राजन् प्रावृषीव वनस्पती ।
सम्प्रदीपितसर्व्वाङ्गौ सायकैस्तौ महारथौ । अदृश्येतां रणे क्रुद्धावुल्काभिरिव कुञ्जरौ ।
ततो युधि महाराज सोमदत्तो महारथः । अर्द्धचन्द्रेण चिच्छेद माधवस्य महद्धनुः ।
अथैनं पञ्चविंशत्या सायकानां समार्पयत् । त्वरमाणस्त्वराकाले पुनश्च दशभिः शरैः ।
अथान्यद्धनुरादाय सात्यकिर्व्वेगवत्तरं । पञ्चभिः सायकैस्तूर्णं सोमदत्तमविध्यत । ७२४०
ततोऽपरेण भल्लेन ध्वजञ्चिच्छेद काञ्चनं । बाह्लीकस्य रणे राजन् सात्यकिः प्रहसन्निव ।

सोमदत्तस्त्वसम्भ्रान्तो दृष्ट्वा केतुं निपातितं। शैनेयं पञ्चविंशत्या सायकानां समार्पयत्।
सात्वतोऽपि रणे क्रुद्धः सोमदत्तस्य धन्विनः। धनुश्चिच्छेद समरे क्षुरप्रेण शितेन च।
अथैनं रुक्मपुङ्खानां शतेन नतपर्व्वणां। आचिनोत् तं महाराज भग्नदंष्ट्रमिवोरगं।
अथान्यद्धनुरादाय सोमदत्तो महारथः। सात्यकिं छादयामास शरवृष्ट्या महाबलः। ७२४५
सोमदत्तञ्च संक्रुद्धो रणे विव्याध सात्यकिः। सात्यकिञ्चेषुजालेन सोमदत्तोऽभ्यपीडयत्।
दशभिः सात्वतस्यार्थे भीमोऽहन् बाह्लिकात्मजं। सोमदत्तोऽप्यसम्भ्रान्तो भीममार्च्छच्छितैः शरैः।
ततस्तु सात्वतः क्रुद्धो हेमदण्डं नवं दृढं। मुमोच परिघं घोरं सोमदत्तस्य वक्षसि।
तमापतन्तं वेगेन परिघं घोरदर्शनं। द्विधा चिच्छेद समरे प्रहसन्निव कौरवः।
स पपात द्विधा छिन्न आयसः परिघो महान्। महीधरस्येव महच्छिखरं वज्रताडितं। ७२५०
ततस्तु सात्यकी राजन् सोमदत्तस्य संयुगे। धनुश्चिच्छेद भल्लेन हस्तावापञ्च पञ्चभिः।
ततश्चतुर्भिश्च शरैस्तूर्णं तान् तुरगोत्तमान्। समीपं प्रेषयामास प्रेतराजस्य भारत।
सारथेश्च शिरः कायात् भल्लेनानतपर्व्वणा। जहार रथशार्दूलः प्रहसन्निव भारत।
ततः शरं महाघोरं ज्वलन्तमिव पावकं। मुमोच स्वर्णपुङ्खं तं तैलधौतं शिलाशितं।
स विमुक्तो बलवता शैनेयेन शरोत्तमः। घोरस्तस्योरसि विभो निपपाताशु शेनवत्। ७२५५
सोऽतिविद्धो बलवता सात्वतेन महारथः। सोमदत्तो महाराज पपात च ममार च।
तं दृष्ट्वा निहतं तत्र सोमदत्तं महारथं। तावका रथवंशेन युयुधानमुपाद्रवन्।
पाण्डवाश्च महाराज सह सर्व्वैः प्रभद्रकैः। महत्या सेनया सार्द्धं द्रोणानीकमुपाद्रवन्।
ततो युधिष्ठिरः क्रुद्धो भारद्वाजस्य सैनिकान्। शरैर्व्विद्रावयामास भारद्वाजस्य पश्यतः।
सैन्यानि द्रावयन्तञ्च द्रोणो दृष्ट्वा युधिष्ठिरं। अभिदुद्राव वेगेन क्रोधसंरक्तलोचनः। ७२६०
ततः सुनिशितैर्ब्बाणैः पार्थं विव्याध सप्तभिः। युधिष्ठिरोऽपि संक्रुद्धः प्रतिविव्याध पञ्चभिः।
सोऽतिविद्धो महेष्वासः सृक्किणी विलिहन्मुहुः। युधिष्ठिरस्य चिच्छेद ध्वजं कार्म्मुकमेव च।
ततो विधन्वा त्वरितस्त्वराकाले नृपोत्तमः। अन्यदादत्त वेगेन कार्म्मुकं समरे दृढं।
ततः शरसहस्रेण द्रोणं विव्याध पाण्डवः। साश्वसूतध्वजरथं तदद्भुतमिवाभवत्।
ततो मुहूर्त्तं व्यथितः शरघातप्रपीडितः। निषसाद रथोपस्थे द्रोणो ब्राह्मणपुङ्गवः। ७२६५
प्रतिलभ्य ततः संज्ञां निःश्वसन्नुरगो यथा। क्रोधेन महताविष्टो वायव्यास्त्रमथासृजत्।
असम्भ्रान्तस्ततः पार्थो धनुरादाय वीर्य्यवान्। तदस्त्रमस्त्रेण रणे स्तम्भयामास तस्य तु।
चिच्छेद च धनुर्द्दीर्घं ब्राह्मणस्य च पाण्डवः। अथान्यद्धनुरादाय द्रोणः क्षत्रियमर्द्दनः।
तदप्यस्य शितैर्भल्लैश्चिच्छेद कुरुपुङ्गवः। ततोऽब्रवीद्वासुदेवः कुन्तीपुत्रं युधिष्ठिरं।
युधिष्ठिर महाबाहो यत्त्वां वक्ष्यामि तच्छृणु। उपारमस्व युद्धात्त्वं द्रोणाद्भारतसत्तम। ७२७०
यतते हि सदा द्रोणो ग्रहणे तव संयुगे। नानुरूपमहं मन्ये युद्धमस्य त्वया सह।

योऽस्य सृष्टो विनाशाय स एवैनं वधिष्यति। परिवार्य्य गुरुं याहि यत्र राजा सुयोधनः।
राज्ञा राजा हि योद्धव्यो नाराज्ञा युद्धमिष्यते। तत्र त्वं याहि कौन्तेय हस्त्यश्वरथसंवृतः।
यावन्मात्रेण च मया सहायेन धनञ्जयः। भीमश्च नरशार्दूलो युध्यते कौरवैः सह।
वासुदेववचः श्रुत्वा धर्म्मराजो युधिष्ठिरः। मुहूर्त्तं चिन्तयित्वा तु ततो दारुणमाहवं। ७२७५
प्रायाद्द्रुतममित्रघ्नो यत्र भीमो व्यवस्थितः। विनिघ्नंस्तावकान् योधान् व्यादितास्य इवान्तकः।
रथघोषेण महता नादयन् वसुधातलं। स मेघ इव घर्म्मान्ते राजराजो युधिष्ठिरः।
भीमस्य निघ्नतः शत्रून् पार्ष्णिं जग्राह पाण्डवः। द्रोणोऽपि शत्रून् पाञ्चालान् व्यधमद्रजनीमुखे।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि रात्रियुद्धे सोमदत्तवधे द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥
॥ सञ्जय उवाच ॥ वर्त्तमाने तथा युद्धे घोररूपे भयानके। तमसा संवृते लोके रजसा च महीपते।
नापश्यन्त रणे योधाः परस्परमवस्थिताः। अनुमानेन संज्ञाभिर्युध्यन्ते क्षत्रियर्षभाः। ७२८०
नरनागाश्वपत्तीनां महारौद्रः क्षये विभो। द्रोणकर्णकृपा वीरा भीमपार्षतसात्यकाः।
अन्योऽन्यं क्षोभयामासुः सैन्यानि भरतर्षभ। वध्यमानानि सैन्यानि समन्तात्तैर्महारथैः।
तमसा संवृते चैव समन्ताद्विप्रदुद्रुवुः। ते सर्व्वतो विद्रवन्तो योधा विध्वस्तचेतसः।
अहन्यन्त महाराज धावमानाश्च सर्व्वतः। महारथसहस्राणि जघ्नुरन्योऽन्यमाहवे।
अन्धे तमसि मूढानि पुत्रस्य तव मन्त्रिते। ततः सर्व्वाणि भूतानि सेनामुख्याश्च भारत। ७२८५
व्यमुह्यन्त रणे तत्र तमसा संवृते सति।
॥ धृतराष्ट्र उवाच ॥ तेषां संलोड्यमानानां पाण्डवैर्निहतौजसां। अन्धे तमसि मग्नानामासीत् किं वो मनस्तदा।
कथं प्रकाशस्तेषां वा मम सैन्यस्य वा पुनः। बभूव लोके तमसा तथा सञ्जय संवृते।
॥ सञ्जय उवाच ॥ ततः सर्व्वाणि सैन्यानि हतशिष्टानि यानि वै। सेनागोप्तॄनथादिश्य पुनर्व्यूहमकल्पयन्।
द्रोणः पुरस्ताज्जघने तु शल्यस्तथा द्रौणिः पार्श्वतः सौबलश्च। स्वयन्तु सर्व्वाणि बलानि राजन् राजाऽचरदभ्यधिकं निशायां। ७२९०
उवाच सर्व्वांश्च पदातिसङ्घान् दुर्य्योधनः पार्थिवान् सान्त्वपूर्व्वं। उत्सृज्य सर्व्वे परमायुधानि गृह्णीत हस्तैर्ज्वलितान् प्रदीपान्।
ते चोदिताः पार्थिवसत्तमेन ततः प्रहृष्टा जगृहुः प्रदीपान्। देवर्षिगन्धर्व्वसुरर्षिसङ्घा विद्याधराश्चाप्सरसां गणाश्च।
नागाः सयक्षोरगकिन्नराश्च हृष्टा दिविस्था जगृहुः प्रदीपान्। दिग्दैवतेभ्यश्च समापतन्तोऽदृश्यन्त दीपाः ससुगन्धितैलाः।
विशेषतो नारदपर्व्वताभ्यां सम्बोध्यमानाः कुरुपाण्डवार्थं। सा चैव भूयो ध्वजिनी विभक्ता व्यरोचताग्निप्रभया निशायां।
महाधनैराभरणैश्च दीप्तैः शस्त्रैश्च दिव्यैरभिसम्पतद्भिः। रथे रथे पञ्च विरोचिकास्तु प्रदीपिका मत्तगजे त्रयश्च। ७२९५
प्रत्यश्वमेकश्च महाप्रदीपः कृतास्तु ताः पाण्डवकौरवेयैः। क्षणेन सर्व्वे विहिताः प्रदीपा व्यादीपयन्तो ध्वजिनीं तवाशु।

सर्व्वांस्तु सेनां परिशोभमानाः पदातिभिः पावकतैलहस्तैः। प्रकाश्यमाना ददृशुर्निशायां यथान्तरीक्षे जलदास्तडिद्भिः।

प्रकाशितायान्तु ततो ध्वजिन्यां द्रोणोऽग्निकल्पः प्रपतन् समन्तात्। रराज राजेन्द्र सुवर्णवर्म्मा मध्यङ्गतः सूर्य्य इवांशुमाली।

जाम्बूनदेष्वाभरणेषु चैव निष्केषु शुद्धेषु शरावरेषु। पीतेषु शस्त्रेषु च पावकस्य प्रतिप्रभास्तत्र तदा बभूवुः।

गदाश्च शैक्याः परिघाश्च शुभ्रा रथेषु शक्त्यश्च विवर्त्तमानाः। प्रतिप्रभा रश्मिभिराजमीढ पुनः पुनः सञ्जनयन्ति दीपान्। ७१००

छत्राणि बालव्यजनानि खड्गा दीप्ता महोल्काश्च तथैव राजन्। व्याघूर्णमानाश्च सुवर्णमाला व्यायच्छतां तत्र तदा विरेजुः।

शस्त्रप्रभाभिश्च विराजमानं दीपप्रभाभिश्च तदा बलन्तत्। प्रकाशितञ्चाभरणप्रभाभिर्भृशं प्रकाशं नृपते बभूव।

पीतानि शस्त्राण्यसृगुक्षितानि वीरावधूतानि शुभानि। दीप्तां प्रभां प्राजनयन्त तत्र तपात्यये विद्युदिवान्तरीक्षे।

प्रकम्पितानां महतामभिवेगैरभिघ्नतामापततां जवेन। वक्त्राण्यशोभन्त तदा नराणां वाय्वीरितानीव महाम्बुजानि।

महावने दारुमये प्रदीप्ते यथा प्रभा भास्करस्याधिका स्यात्। तथा तदासीत् ध्वजिनी प्रदीप्ता महाभये तत्र तु भीमरूपा। ७१०५

तत् सम्प्रदीप्तं बलमस्मदीयं निशम्य पार्थास्त्वरितास्तथैव। सर्व्वेषु सैन्येषु पदातिसङ्घानचोदयंस्तेऽपि च चक्रुरेवं।

गजे गजे सप्त कृताः प्रदीपा रथे रथे चैव दश प्रदीपाः। द्वावश्वपृष्ठे परिपार्श्वतोऽन्ये ध्वजेषु चान्ये जघनेषु चान्ये।

सेनासु सर्व्वासु च पार्श्वतोऽन्ये पश्चात् पुरस्ताच्च समन्ततश्च। मध्ये तथाऽन्ये ज्वलितप्रदीपाः सेनाद्वयेऽपि स्म तदा बभूवुः।

सर्व्वेषु सैन्येषु पदातिसङ्घाः सम्मिश्रिता हस्तिरथाश्ववृन्दैः। मध्ये तथाऽन्ये ज्वलिताग्निहस्ता व्यदीपयन् पाण्डुसुतस्य सेनां।

तस्तु प्रदीपैस्तु तथा प्रदीप्तं बलं बभासे बलवद्बलेन। भाः कुर्व्वता भानुमता ग्रहेण दिवाकरेणाग्निरिवाभिगुप्तः। ७११०

तयोः प्रभा पृथिवीमन्तरीक्षं सर्व्वां व्यतिक्रम्य दिशश्च ववृधुः। तेन प्रकाशेन भृशं प्रकाशं तथाभवत्तेषां तव चैव सैन्यं।

तेन प्रकाशेन दिवं गतेन सम्बोधिता देवगणाः समस्ताः। गन्धर्व्वयक्षाः सुरसिद्धसङ्घाः समागमन्नप्सरसश्च सर्व्वाः।

तद्देवगन्धर्व्वसमाकुलञ्च यक्षैश्च सिद्धाप्सरसां गणैश्च। हतैश्च योधैर्दिवमाविशद्भिरायोधनं दिव्यकल्पं बभूव।

रथाश्वनागाकुलदीप्तदीप्तं संरब्धयोधं हतविद्रुताश्वं। महद्बलं व्यूढनराश्वनागं सुरासुरव्यूहसमं बभूव।

तच्छक्तिसम्पर्कसुचण्डवातं महारथाभ्रं नरवाजिनागं। शरौघवर्षं रुधिराम्बुधारं निशि प्रवृत्तं नरदेवयुद्धं। ७११५

तस्मिन्महाग्निप्रतिमो महात्मा सन्तापयन् पाण्डवान् विप्रमुख्यः। गभस्तिभिर्मध्यगतो यथार्को वर्षात्यये तद्वदभून्नरेन्द्र।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि दीपोद्योतने त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

॥ सञ्जय उवाच ॥ प्रकाशिते तथा लोके रजसा च समावृते। समाजग्मुरथो वीराः परस्परवधैषिणः।

ते समेत्य रणे राजन् शस्त्रप्रासासिधारिणः। परस्परमुदैक्षन्त परस्परकृतागसः।

प्रदीपानां सहस्रैश्च दीप्यमानैः समन्ततः । रत्नाचितैः स्वर्णदण्डैर्गन्धतैलावसेचितैः ।
देवगन्धर्व्वदीपाद्यैः प्रभाभिरधिकोज्ज्वलैः । विरराज तदा भूमिर्ग्रहैर्द्यौरिव भारत । ७११०
उल्काशतैः प्रज्वलितैरणभूमिर्व्यराजत । दह्यमानेव लोकानामभावे च वसुन्धरा ।
व्यदीप्यन्त दिशः सर्व्वाः प्रदीपैस्तैः समन्ततः । वर्षाप्रदोषे खद्योतैर्वृता वृक्षा इवाबभुः ।
असज्जन्त तदा वीरा राजन् वीरैः पृथक्पृथक् । नागा नागैः समाजग्मुस्तुरगा हयसादिभिः ।
रथा रथवरैरेव समाजग्मुर्मुदा युताः । तस्मिन् रात्रिमुखे घोरे पुत्त्रस्य तव शासनात् ।
चतुरङ्गस्य सैन्यस्य सम्पातश्च महानभूत् । ततोऽर्ज्जुनो महाराज कौरवाणामनीकिनीं । ७११५
व्यधमत्त्वरया युक्तः क्षपयन् सर्व्वपार्थिवान् ।
॥ धृतराष्ट्र उवाच ॥ तस्मिन् प्रविष्टे संरब्धे मम पुत्त्रस्य वाहिनीं । अमृष्यमाणे दुर्द्धर्षे किं व आसीन्मनस्तदा ।
किममन्यन्त सैन्यानि प्रविष्टे परतापने । दुर्य्योधनश्च किं कृत्यं प्राप्तकालममन्यत ।
के चैनं समरे वीरं प्रत्युद्ययुररिन्दमाः । द्रोणञ्च के व्यरक्षन्त प्रविष्टे श्वेतवाहने ।
केऽरक्षन् दक्षिणञ्चक्रं के च द्रोणस्य सव्यतः । के पृष्ठतोऽन्वरक्षन्त वीरा वीरस्य युध्यतः । ७१२०
के पुरस्तादगच्छन्त निघ्नतः शात्रवान् रणे । यत्प्राविशन्महेष्वासः पाञ्चालानपराजितः ।
नृत्यन्निव नरव्याघ्रो रथमार्गेषु वीर्य्यवान् । यो ददाह शरैर्द्रोणः पाञ्चालानां रथव्रजान् ।
धूमकेतुरिव क्रुद्धः कथं मृत्युमुपेयिवान् । अव्यग्रानेव हि परान् कथयस्यपराजितान् ।
हृष्टानुदीर्णान् सङ्ग्रामे न तु सञ्जय मामकान् । हतांश्चैव विवर्णांश्च विप्रकीर्णांश्च शंससि ।
रथिनो विरथांश्चैव कृतान् युद्धेषु मामकान् । ७१२५
॥ सञ्जय उवाच ॥ द्रोणस्य मतमाज्ञाय योद्धुकामस्य तां निशां । दुर्य्योधनो महाराज वश्यान् भ्रातॄनभाषत ।
विकर्णं चित्रसेनञ्च सुपार्श्वन्तु तथैव च । दुर्द्धर्षं दीर्घबाहुञ्च ये च तेषां पदानुगाः ।
द्रोणं यत्ताः पराक्रान्ताः सर्व्वे रक्षन्तु पृष्ठतः । हार्द्दिक्यो दक्षिणञ्चक्रं शल्यश्चैवोत्तरं तथा ।
त्रिगर्त्तानाञ्च ये शूरा हतशेषा महारथाः । तांश्चैव पुरतः सर्व्वान् पुत्त्रस्ते समचोदयत् ।
आचार्य्यो हि समायुक्तो भृशं यत्ताश्च पाण्डवाः । तं रक्षध्वं सुसंयुक्ता निघ्नन्तं शात्रवान् रणे । ७१३०
द्रोणो ऽपि बलवान् युद्धे क्षिप्रहस्तः पराक्रमी । निर्जयेत्त्रिदशान् युद्धे किमु पार्थान् ससोमकान् ।
ते यूयं सहिताः सर्व्वे भृशं यत्ता महारणे । द्रोणं रक्षत दुर्द्धर्षं धृष्टद्युम्नान्महारथात् ।
पाण्डवेयेषु योधेषु योधं पश्याम्यहं न तं । यो जयेत रणे द्रोणं धृष्टद्युम्नादृते पुमान् ।
तत्र सर्व्वात्मना मन्ये भारद्वाजस्य रक्षणं । सुगुप्तः सोमकान् हन्यात् सृञ्जयांश्च समागतान् ।
सृञ्जयेषु च सर्व्वेषु निहतेषु चमूमुखे । धृष्टद्युम्नं रणे द्रौणिर्घातयिष्यत्यसंशयं । ७१३५
तथाऽर्ज्जुनं रणे कर्णो विजेष्यति महारथः । भीमसेनमुखांश्चाहं युद्धे जेष्यामि दंशितान् ।
शेषांश्च पाण्डवान् योधाः प्रसभं हीनतेजसः । सोऽयं मम जयो व्यक्तो दीर्घकालं भविष्यति ।
तस्माद्रक्षथ सङ्ग्रामे द्रोणमेव महारथं । इत्युक्त्वा भरतश्रेष्ठ पुत्त्रो दुर्य्योधनस्तव ।

व्यादिदृश तदा सैन्यं तस्मिंस्तमसि दारुणे। ततः प्रववृते युद्धं रात्रौ भरतसत्तम।
उभयोः सैन्ययो राजन् विजयं प्रतिकाङ्क्षिणोः। अर्ज्जुनः कौरवं सैन्यमर्ज्जुनञ्चापि कौरवाः। ७१५०
नानाशस्त्रसमावापैरन्योऽन्यं पर्य्यपीडयन्। द्रौणिः पाञ्चालराजानं भारद्वाजश्च सृञ्जयान्।
छादयाञ्चक्रिरे सङ्ख्ये शरैः सन्नतपर्व्वभिः। पाण्डुपाञ्चालसैन्यानां कौरवाणाञ्च भारत।
आसीन्निष्टानको घोरो निघ्नतामितरेतरं। नैवास्माभिर्न पूर्व्वैश्च दृष्टपूर्व्वं तथाविधं।
यादृशं युद्धमेवासीद्रात्रौ सुभयानकं।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि सङ्कुलयुद्धे चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥
॥ सञ्जय उवाच ॥ वर्त्तमाने तथा रौद्रे रात्रियुद्धे विशाम्पते। सर्व्वभूतक्षयकरे धर्म्मपुत्त्रो युधिष्ठिरः। ७१५५
अब्रवीत् पाण्डवांश्चैव पाञ्चालांश्च ससोमकान्। मनुष्यरथनागानामभावाय नराधिप।
युधिष्ठिरोऽब्रवीद्राजा तान् योधान् मनुजाधिपः। अभ्यद्रवत गच्छध्वं द्रोणमेव जिघांसया।
राज्ञस्ते वचनाद्राजन् पाञ्चालाः सोमकास्तथा। द्रोणमेवाभ्यधावन्त नदन्तो भैरवान् रवान्।
तान् वयं प्रतिगर्ज्जन्तः प्रत्युद्याताः स्म मर्षिताः। यथाशक्ति यथोत्साहं यथासत्त्वञ्च संयुगे।
कृतवर्म्मा तु हार्द्दिक्यो युधिष्ठिरमुपाद्रवत्। द्रोणं प्रति समायान्तं मत्तो मत्तमिव द्विपं। ७१६०
शैनेयं शरवर्षाणि विसृजन्तं समन्ततः। अभ्ययात् कौरवो राजन् भूरिः सङ्ग्राममूर्द्धनि।
सहदेवमथायान्तं द्रोणप्रेप्सुं महारथं। कर्णो वैकर्त्तनो राजन् वारयामास पाण्डवं।
भीमसेनं तथायान्तं रथेन रथिनां वरं। स्वयं दुर्य्योधनो युद्धे प्रतीपं मृत्युमाव्रजत्।
नकुलञ्च युधां श्रेष्ठं सर्व्वयुद्धविशारदं। शकुनिः सौबलो राजन् वारयामास सत्वरः।
शिखण्डिनमथायान्तं रथेन रथिनां वरः। कृपः शारद्वतो राजन् वारयामास संयुगे। ७१६५
प्रतिविन्ध्यमथायान्तं मयूरसदृशैर्हयैः। दुःशासनो महाराज यत्तो यत्नादवारयत्।
भैमसेनिमथायान्तं मायाशतविशारदं। अश्वत्थामा महाराज राक्षसं समवारयत्।
द्रुपदं वृषसेनस्तु ससैन्यं सपदानुगं। वारयामास समरे द्रोणप्रेप्सुं महाबलं।
विराटं द्रुतमायान्तं द्रोणस्य निधनं प्रति। मद्रराजः सुसंक्रुद्धो वारयामास भारत।
शतानीकमथायान्तं नाकुलिं रभसं रणे। चित्रसेनो रुरोधैनं शरैर्द्रोणवधेप्सया। ७१७०
अर्ज्जुनन्तु युधां श्रेष्ठं प्राद्रवन्तं महारथं। अलम्बुषो महाराज राक्षसेन्द्रो न्यवारयत्।
ततो द्रोणं महेष्वासं निघ्नन्तं शात्रवान् रणे। धृष्टद्युम्नोऽथ पाञ्चाल्यो हृष्टरूपमवारयत्।
तथाऽन्यान् पाण्डुपुत्त्राणां समायातान्महारथान्। तावका रथिनो राजन् वारयामासुरोजसा।
गजारोहा गजैस्तूर्णं सन्निपत्य महामृधे। योधयन्तश्च ममृदुः शतशोऽथ सहस्रशः।
निशीथे तुरगा राजन् द्रवन्तश्च परस्परं। समदृश्यन्त वेगेन पक्षवन्तो यथाऽद्रयः। ७१७५
सादिनः सादिभिः सार्द्धं प्रासशक्त्यृष्टिपाणयः। समागच्छन्महाराज विनदन्तः परस्परं।
नरास्तु बहवस्तत्र न्यहनन्त परस्परं। गदाभिर्मुषलैश्चैव नानाशस्त्रैश्च सङ्घशः।

कृतवर्म्मा तु हार्द्दिक्यो धर्म्मपुत्त्रं युधिष्ठिरं । वारयामास संक्रुद्धो वेलेवोद्धृतमर्णवं ।
युधिष्ठिरस्तु हार्द्दिक्यं विद्ध्वा पञ्चभिराशुगैः । पुनर्व्विव्याध विंशत्या तिष्ठ तिष्ठेति चाब्रवीत् ।
कृतवर्म्मा तु संक्रुद्धो धर्म्मराजस्य मारिष । धनुश्चिच्छेद भल्लेन तञ्च विव्याध सप्तभिः । ७३८०
अथान्यद्धनुरादाय धर्म्मपुत्त्रो महारथः । हार्द्दिक्यं दशभिर्ब्बाणैर्ब्बाह्वोरुरसि चार्पयत् ।
माधवस्तु रणे विद्धो धर्म्मपुत्त्रेण मारिष । प्राकम्पत च रोषेण सप्तभिश्चार्द्दयच्छरैः ।
तस्य पार्थो धनुश्छित्त्वा हस्तावापं निकृत्य तु । प्राहिणोन्निशितान् बाणान् पञ्च राजञ्छिलाशितान् ।
तस्य तत्कवचं भित्त्वा हेमपृष्ठं महाधनं । प्राविशन् धरणीमुग्रा वल्मीकमिव पन्नगाः ।
अक्ष्णोर्निमेषमात्रेण सोऽन्यदादाय कार्म्मुकं । विव्याध पाण्डवं षष्ट्या सूतञ्च दशभिः शरैः । ७३८५
तस्य शक्तिममेयात्मा चिक्षेप भुजगोपमां । पाण्डवेन तदा क्षिप्ता रथे न्यस्य महद्धनुः ।
सा हेमचित्रा महती पाण्डवेनानुप्रेषिता । निर्भिद्य दक्षिणं बाहुं प्राविशद्धरणीतलं ।
एतस्मिन्नेव काले तु गृह्य पार्थो महद्धनुः । हार्द्दिक्यं छादयामास शरैः सन्नतपर्व्वभिः ।
ततस्तु तव वै शूरो वृष्णीनां प्रवरो रथी । व्यश्वसूतरथञ्चक्रे निमेषार्द्धाद्युधिष्ठिरं ।
ततस्तु पाण्डवो ज्येष्ठः खड्गचर्म्म समाददे । तदस्य निशितैर्बाणैर्व्यधमन्माधवो रणे । ७३९०
तोमरन्तु ततो गृह्य स्वर्णदण्डं दुरासदं । अप्रैषीत् समरे तूर्णं हार्द्दिक्यस्य महात्मनः ।
तमापतन्तं सहसा युधिष्ठिरभुजच्युतं । द्विधा चिच्छेद हार्द्दिक्यः कृतहस्तः स्मयन्निव ।
ततः शरशतेनाजौ धर्म्मपुत्त्रमवाकिरत् । कवचञ्च रणे क्रुद्धो बाणजालैरवाकिरत् ।
हार्द्दिक्यशरसञ्छन्नं जाम्बूनदविभूषितं । व्यशीर्य्यत रणे राजंस्ताराजालमिवाम्बरात् ।
स छिन्नधन्वा विरथः कृतवर्म्मशराहतः । अपयातो रणात्तूर्णं धर्म्मपुत्त्रो युधिष्ठिरः । ७३९५
कृतवर्म्मा तु निर्ज्जित्य धर्म्मपुत्त्रं युधिष्ठिरं । पुनर्द्रोणस्य जुगुपे चक्रमेव महारथः ।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि युधिष्ठिरापयाने पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥
॥ सञ्जय उवाच ॥ भूरिस्तु समरे राजन् शैनेयं रथिनां वरं । आपतन्तमवाबाधत् प्रवणादिव कुञ्जरं ।
अथैनं सात्यकिः क्रुद्धः पञ्चभिर्न्निशितैः शरैः । विव्याध हृदये तस्य प्रास्रवत्तस्य शोणितं ।
तथैव कौरवो युद्धे शैनेयं युद्धदुर्म्मदं । दशभिर्व्विशिखैस्तीक्ष्णैरविध्यत भुजान्तरे ।
तावन्योऽन्यं महाराज ततक्षाते परस्परं । क्रोधसंरक्तनयनौ क्रुद्धौ विस्फार्य्य कार्म्मुके । ७४००
तयोरासीन्महाराज शस्त्रवृष्टिः सुदारुणा । क्रुद्धयोः सायकमुचोर्य्यमान्तकनिकाशयोः ।
तावन्योऽन्यं महाराज प्रच्छाद्य समरे स्थितौ । मुहूर्त्तञ्चैव तद्युद्धं समरूपमिवाभवत् ।
ततः क्रुद्धो महाराज शैनेयः प्रहसन्निव । धनुश्चिच्छेद समरे कौरवस्य महात्मनः ।
अथैनं छिन्नधन्वानं नवभिर्न्निशितैः शरैः । विव्याध हृदये तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ।
सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः । धनुरन्यत् समादाय सात्वतं प्रत्यविध्यत । ७४०५
स विद्ध्वा सात्वतं बाणैस्त्रिभिरेव विशाम्पते । धनुश्चिच्छेद भल्लेन सुतीक्ष्णेन हसन्निव ।

छिन्नधन्वा महाराज सात्यकिः क्रोधमूर्च्छितः। चिक्षेप सुमहावेगां शक्तिं तस्य महोरसि।
स तु शक्त्या विभिन्नाङ्गो निपपात रथोत्तमात्। लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया।
तन्तु दृष्ट्वा हतं शूरमश्वत्थामा महारथः। अभ्यधावत वेगेन शैनेयं प्रति भारत।
तिष्ठ तिष्ठेति चाभाष्य सात्यकिं स नराधिप। अभ्यवर्षच्छरौघेन मेरुं वृष्ट्या यथाऽम्बुदः। ७४१०
तमापतन्तं वेगेन शैनेयस्य रथम्प्रति। घटोत्कचोऽब्रवीद्राजन्नादं मुक्त्वा महारथः।
तिष्ठ तिष्ठ न मे जीवन् द्रोणपुत्र गमिष्यसि। एष त्वां निहनिष्यामि महिषं षण्मुखो यथा।
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे। इत्युक्त्वा रोषताम्राक्षो राक्षसः परवीरहा।
द्रौणिमभ्यद्रवत् क्रुद्धो गजेन्द्रमिव केशरी। रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः।
रथिनामृषभं द्रौणिं धाराभिरिव तोयदः। तां वाणवृष्टिमप्राप्तां शरैराशीविषोपमैः। ७४१५
शातयामास समरे तरसा द्रौणिराहवे। ततः शरशतैस्तीक्ष्णैर्मर्म्मभेदिभिराशुगैः।
समाचिनोद्राक्षसेन्द्रं घटोत्कचमरिन्दमं। स शरैराचितस्तेन राक्षसो रणमूर्द्धनि।
व्यकाशत महाराज श्वाविच्छललितो यथा। ततः क्रोधसमाविष्टो भैमसेनिः प्रतापवान्।
शरैरवचकर्त्तोग्रैर्द्रौणिं वज्राशनिस्वनैः। क्षुरप्रैरर्द्धचन्द्रैश्च नाराचैः सशिलीमुखैः।
वराहकर्णैर्नालीकैर्विकर्णैश्चाभ्यवीवृषत्। तां शस्त्रवृष्टिमतुलां वज्राशनिसमस्वनां। ७४२०
पतन्तीमुपरि क्रूरां द्रौणिरव्यथितेन्द्रियः। सुदुःसहां शरैर्घोरैर्दिव्यास्त्रपरिमन्त्रितैः।
व्यधमत् स महाराज महाभ्राणीव मारुतः। ततोऽन्तरीक्षे वाणानां संग्रामोऽन्य इवाभवत्।
घोररूपो महाराज योधानां हर्षवर्द्धनः। तयोस्तु संघर्षकृतैर्विस्फुलिङ्गैरितस्ततः।
बभौ निशामुखे व्योम खद्योतैरिव चित्रितं। स मार्गणगणैर्द्रौणिर्दिशः प्रच्छाद्य सर्व्वशः।
प्रियार्थं तव पुत्राणां राक्षसं समवाकिरत्। ततः प्रववृते युद्धं द्रौणिराक्षसयोः पुनः। ७४२५
विगाढे रजनीमध्ये शक्रप्रह्लादयोरिव। ततो घटोत्कचो वाणैर्दशभिर्द्रौणिमाहवे।
जघानोरसि संक्रुद्धः कालज्वलनसन्निभैः। स गाढविद्धो व्यथितो राक्षसेन महाबलः।
चचाल समरे द्रौणिर्वातनुन्न इव द्रुमः। स मोहमनुसंप्राप्तो ध्वजयष्टिं समाश्रितः।
ततो हाहाकृतं सैन्यं तव सर्व्वं जनाधिप। हतं स्म मेनिरे सर्व्वे तावकास्तं विशाम्पते।
तन्तु दृष्ट्वा तथाऽवस्थमश्वत्थामानमाहवे। पाञ्चालाः सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे। ७४३०
प्रतिलभ्य ततः संज्ञामश्वत्थामा महारथः। धनुः प्रपीड्य वामेन करेणामित्रकर्षणः।
मुमोचाकर्णपूर्णेन धनुषा शरमुत्तमं। यमदण्डोपमं घोरमुद्दिश्याशु घटोत्कचं।
स भित्त्वा हृदयं तस्य राक्षसस्य शरोत्तमः। विवेश वसुधामुग्रः सपुङ्खः पृथिवीपते।
सोऽतिविद्धो महाराज रथोपस्थ उपाविशत्। राक्षसेन्द्रः स बलवान् द्रौणिना रणमानिना।
दृष्ट्वा विमूढं हैडिम्बं सारथिस्तं रणाजिरात्। द्रौणेः सकाशात् सम्भ्रान्तस्त्वपनिन्ये त्वरान्वितः। ७४३५
तथा तु समरे विद्ध्वा राक्षसेन्द्रं घटोत्कचं। ननाद सुमहानादं द्रोणपुत्रो महारथः।

पूजितस्तव पुत्रैश्च सर्व्वैर्योधैश्च भारत । वपुषा प्रतिजज्वाल मध्याह्ने भास्करो यथा ।
भीमसेनन्तु युध्यन्तं भारद्वाजरथम्प्रति । स्वयं दुर्य्योधनो राजा प्रत्यविध्यच्छितैः शरैः ।
तं भीमसेनो नवभिः शरैर्व्विव्याध भारत । दुर्य्योधनोऽपि विंशत्या शराणां प्रत्यविध्यत ।
तौ सायकैः प्रतिच्छन्नावदृश्येतां रणाजिरे । मेघजालप्रतिच्छन्नौ नभसीवेन्दुभास्करौ । ७४४०
ततो दुर्य्योधनो राजा भीमं विव्याध पत्रिभिः । पञ्चभिर्भरतश्रेष्ठ तिष्ठ तिष्ठेति चाब्रवीत् ।
तस्य भीमो धनुश्छित्त्वा ध्वजञ्च निशितैः शरैः । विव्याध कौरवश्रेष्ठं नवत्या नतपर्व्वणां ।
ततो दुर्य्योधनः क्रुद्धो धनुरन्यन्महत्तरं । गृहीत्वा भरतश्रेष्ठो भीमसेनं शितैः शरैः ।
अपीडयद्रणमुखे पश्यतां सर्व्वधन्विनां । निहत्य तान् शरान् भीमो दुर्य्योधनधनुश्च्युतान् ।
कौरवं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् । दुर्य्योधनस्तु संक्रुद्धो भीमसेनस्य मारिष । ७४४५
क्षुरप्रेण धनुश्छित्त्वा दशभिः प्रत्यविध्यत । अथान्यद्धनुरादाय भीमसेनो महाबलः ।
विव्याध नृपतिं तूर्णं सप्तभिर्निशितैः शरैः । तदप्यस्य धनुः क्षिप्रं चिच्छेद लघुहस्तवत् ।
द्वितीयञ्च तृतीयञ्च चतुर्थं पञ्चमन्तथा । आत्तमात्तं महाराज भीमस्य धनुराच्छिनत् ।
तव पुत्रो महाराज जितकाशी मदोत्कटः । स तदा छिद्यमानेषु कार्म्मुकेषु पुनः पुनः ।
शक्तिञ्चिक्षेप समरे सर्व्वपारशवीं शुभां । मृत्योरिव स्वसारं हि दीप्तां केतुशिखामिव । ७४५०
सीमन्तमिव कुर्व्वन्तीं नभसोऽग्निसमप्रभां । अप्राप्तामेव तां शक्तिं त्रिधा चिच्छेद कौरवः ।
पश्यतः सर्व्वलोकस्य भीमसेनस्य चायतां । ततो भीमो महाराज गदां गुर्व्वीं महाप्रभां ।
चिक्षेपाविध्य वेगेन दुर्य्योधनरथम्प्रति । ततः सा सहसा वाहांस्तव पुत्रस्य संयुगे ।
सारथिञ्च गदा गुर्व्वी ममर्द्दास्य रथम्पुनः । पुत्रस्तु तव राजेन्द्र भीमाद्भीतः प्रनश्य च ।
आरुरोह रथञ्चान्यं नन्दकस्य महात्मनः । ततो भीमो हतं मत्वा निशामध्ये सुयोधनं । ७४५५
सिंहनादं महच्चक्रे तर्ज्जयन्निव कौरवान् । तावकाः सैनिकाश्चापि मेनिरे निहतं नृपं ।
ततस्ते विचुक्रुशुः सर्व्वे हा हेति च समन्ततः । तेषान्तु निनदं श्रुत्वा त्रस्तानां सर्व्वयोधिनां ।
भीमसेनस्य नादञ्च श्रुत्वा राजन्महात्मनः । ततो युधिष्ठिरो राजा हतं मत्वा सुयोधनं ।
अभ्यवर्त्तत वेगेन यत्र पार्थो वृकोदरः । पाञ्चालाः केकया मत्स्याः सृञ्जयाश्च विशाम्पते ।
सर्व्वोद्योगेनाभिजग्मुर्द्रोणमायुद्धकाङ्क्षया । तत्रासीत् सुमहद्युद्धं द्रोणस्याथ परैः सह । ७४६०
घोरे तमसि मग्नानां निघ्नतामितरेतरं ।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि दुर्य्योधनापयाने षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

॥ सञ्जय उवाच ॥ सहदेवमथायान्तं द्रोणप्रेप्सुं महारथं । कर्णो वैकर्त्तनो राजन् वारयामास संयुगे ।
सहदेवस्तु राधेयं विद्ध्वा नवभिराशुगैः । पुनर्व्विव्याध समरे नवभिर्नतपर्व्वभिः ।
तं कर्णः प्रतिविव्याध शतेन नतपर्व्वणां । सज्यञ्चास्य धनुः शीघ्रं चिच्छेद लघुहस्तवत् ।
ततोऽन्यद्धनुरादाय माद्रीपुत्रः प्रतापवान् । कर्णं विव्याध विंशत्या तदद्भुतमिवाभवत् । ७४६५

तस्य कर्णो हयान् हत्वा शरैः सन्नतपर्व्वभिः । सारथिञ्चास्य भल्लेन द्रुतं निन्ये यमक्षयं ।
विरथः सहदेवस्तु खड्गचर्म्म समाददे । तदप्यस्य शितैर्बाणैर्व्यधमत् प्रहसन्निव ।
ततो गुर्व्वीं गदां घोरां हेमचित्रां महाहवे । प्रेषयामास समरे वैकर्त्तनरथम्प्रति ।
तामापतन्तीं सहसा सहदेवेन प्रेषितां । व्यष्टम्भयच्छरैः कर्णो भूमावेवाभ्यपातयत् ।
गदां विनिहतां दृष्ट्वा सहदेवस्त्वरान्वितः । शक्तिं चिक्षेप कर्णाय तामप्यस्याच्छिनच्छरैः । ७५७०
माद्रीसुतस्ततस्तूर्णमवप्लुत्य रथोत्तमात् । प्रज्वलन्निव रोषेण दृष्ट्वा कर्णं व्यवस्थितं ।
रथचक्रं ततो गृह्य मुमोचाधिरथिम्प्रति । तदापतद्वै सहसा कालचक्रमिवोद्यतं ।
शरैरनेकसाहस्रैरच्छिनत् सूतनन्दनः । तस्मिंश्छिन्ने रथाङ्गे तु सहदेवस्तु मारिष ।
ईषाश्चक्रयोक्त्राणि युगानि विविधानि च । हस्त्यङ्गानि तथाऽश्वांश्च मृतांश्च पुरुषान् बहून् ।
चिक्षेप कर्णमुद्दिश्य कर्णस्तान् व्यधमच्छरैः । स निरायुधमात्मानं ज्ञात्वा माद्रवतीसुतः । ७५७५
वार्य्यमाणस्तु विशिखैः सहदेवो रणं जहौ । तमभिद्रुत्य राधेयो मुहूर्त्तं भरतर्षभ ।
अब्रवीत् प्रहसन् वाक्यं सहदेवं सुनिष्ठुरं । मा युध्यस्व रणे वीर विशिष्टै रथिभिः सह ।
सदृशैर्युध्य माद्रेय वचो मे मा विशङ्किथाः । अथैनं धनुषोऽग्रेण तुदन् भूयोऽब्रवीदिदं ।
एषोऽर्जुनो रणे यत्तो युध्यते कुरुभिः सह । तत्र वा गच्छ माद्रेय गृहं वा यदि मन्यसे ।
एवमुक्त्वा तु तं कर्णो रथेन रथिनाम्वरः । प्रायात् पाञ्चालराजस्य सैन्यानि प्रहसन्निव । ७५८०
वधप्राप्तन्तु माद्रेयं नावधीत् समरेऽरिहा । कुन्त्याः स्मृत्वा वचो राजन् सत्यसन्धो महारथः ।
सहदेवस्ततस्त्रस्तो विमनाः शरपीडितः । कर्णवाक्शल्यविद्धश्च जीवितान्निरविद्यत ।
आरुरोह रथं तूर्णं पाञ्चाल्यस्य महात्मनः । जनमेजयस्य समरे त्वरायुक्तो महारथः ।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि सहदेवापयाने सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥
॥ सञ्जय उवाच ॥ विराटं सहसेनन्तु द्रोणार्थे द्रुतमागतं । मद्रराजः शरौघेण छादयामास सर्वतः ।
तयोः समभवद्युद्धं समरे दृढधन्विनोः । यादृशं ह्यभवद्राजन् वज्रवासवयोः पुरा । ७५८५
मद्रराजो महाराज विराटं वाहिनीपतिं । आजघ्ने त्वरितस्तीक्ष्णैः शतेन नतपर्व्वणां ।
प्रतिविव्याध तं राजा नवभिर्निशितैः शरैः । पुनश्चैनं त्रिसप्तत्या भूयश्चैव शतेन तु ।
तस्य मद्राधिपो हत्वा चतुरो रथवाजिनः । छत्रं ध्वजञ्च समरे शराभ्यां समपातयत् ।
हताश्वात्तु रथात्तूर्णमवप्लुत्य महीपतिः । तस्थौ विस्फारयंश्चापं विमुञ्चन्निशिताञ्छरान् ।
शतानीकस्तु तं दृष्ट्वा भ्रातरं हतवाहनं । रथेनाभ्यपतत्तूर्णं सर्व्वलोकस्य पश्यतः । ७५९०
शतानीकमथायान्तं मद्रराजो महीपतिः । विशिखैर्बहुभिर्विद्ध्वा ततो निन्ये यमक्षयं ।
तस्मिंस्तु निहते वीरे विराटो वाहिनीपतिः । हतारोहाद्रथात्तूर्णं तमेवारुरुहे तदा ।
ततो विस्फार्य्य नयने क्रोधाद्द्विगुणविक्रमः । मद्रराजरथं तूर्णं छादयामास पत्रिभिः ।

ततो मद्राधिपः क्रुद्धः शतेन नतपर्व्वणां । आजघानोरसि शरं विराटं वाहिनीपतिं ।
सोऽतिविद्धो बलवता रथोपस्थ उपाविशत् । कश्मलं चाविशत्तूर्णं स विराटो महारथः । ७४९५
सारथिस्तमपोवाह समरे शरविक्षतं । ततः सा महती सेना प्राद्रवन्निशि भारत ।
वध्यमाना शरशतैः शल्येनाहवशोभिना । तां दृष्ट्वा द्रवतीं सेनां वासुदेवधनञ्जयौ ।
आयातौ तत्र राजेन्द्र यत्र शल्यो व्यवस्थितः । तौ तु प्रत्युद्ययौ राजन् राक्षसेन्द्रो ह्यलम्बुषः ।
अष्टचक्रसमायुक्तमास्थाय प्रवरं रथं । तुरङ्गवदनैर्युक्तं पिशाचैर्घोरदर्शनैः ।
लोहितार्द्रपताकं तं रथं माल्यविभूषितं । कार्ष्णायसमयं घोरमृक्षचर्म्मसमावृतं । ७५००
रौद्रेण चित्रपक्षेण विवृताक्षेण कूजता । ध्वजेनोच्छ्रितदण्डेन गृध्ररूपेण पक्षिणा ।
स बभौ राक्षसो राजन् भिन्नाञ्जनचयोपमः । रुरोधार्ज्जुनमायान्तं प्रभञ्जनमिवाद्रिराट् ।
किरन्बाणगणान् राजन् शतशोऽर्ज्जुनमूर्द्धनि । अतितीव्रमभूद्युद्धं नरराक्षसयोर्मृधे ।
द्रष्टॄणां प्रीतिजननं सर्व्वेषां तव भारत । गृध्रकाकबलोलूककङ्कगोमायुहर्षणं ।
तमर्ज्जुनः शरैः षड्भिरलम्बुषमपीडयत् । दशभिश्च शितैर्बाणैर्ध्वजं चिच्छेद तस्य तु । ७५०५
सारथिञ्च त्रिभिर्बाणैस्त्रिभिरेव त्रिवेणुकं । धनुरेकेन चिच्छेद चतुर्भिश्चतुरो हयान् ।
पुनः सज्यं कृतञ्चापं तदप्यस्य द्विधाऽच्छिनत् । अथैनं निशितैर्बाणैश्चतुर्भिर्भरतर्षभ ।
पार्थोऽविध्यद्राक्षसेन्द्रं स विद्धः प्राद्रवद्भयात् । तं विजित्यार्ज्जुनस्तूर्णं द्रोणान्तिकमुपाद्रवत् ।
किरञ्छरगणान् राजन् नरवारणवाजिषु । वध्यमाना महाराज पाण्डवेन यशस्विना ।
सैनिका न्यपतन्नुर्व्व्यां वातनुन्ना इव द्रुमाः । तेषु द्राव्यमाणेषु पाण्डवेन यशस्विना । ७५१०
सम्प्राद्रवन् बलं सर्व्वं मृगा इव भयार्द्दिताः ।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि अलम्बुषपराभवे अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥
॥ सञ्जय उवाच ॥ शतानीकं शरैस्तूर्णं निर्द्दहन्तं चमूं तव । चित्रसेनस्तव सुतो वारयामास भारत ।
नाकुलिश्चित्रसेनन्तु विद्ध्वा पञ्चभिराशुगैः । स च तं प्रतिविव्याध दशभिर्निशितैः शरैः ।
चित्रसेनो महाराज शतानीकं पुनर्युधि । नवभिर्निशितै राजञ्छरैर्व्विव्याध वक्षसि ।
नाकुलिस्तस्य विशिखैर्व्वर्म सन्नतपर्व्वभिः । गात्रात्सञ्च्यावयामास तदद्भुतमिवाभवत् । ७५१५
सोऽपेतवर्म्मा पुत्रस्ते विरराज भृशं नृप । उत्सृज्य काले राजेन्द्र निर्म्मोकमिव पन्नगः ।
ततोऽस्य निशितैर्बाणैर्ध्वजं चिच्छेद नाकुलिः । धनुश्चैव महाराज यतमानस्य संयुगे ।
स छिन्नधन्वा विरथो विवर्म्मा च महारथः । अथान्यद्धनुरादाय सुदृढं वेगवत्तरं ।
ततस्तूर्णं चित्रसेनो नाकुलिं नतपर्व्वभिः । शरैर्व्विव्याध समरे भरतानां महारथः ।
शतानीकोऽथ संक्रुद्धश्चित्रसेनस्य भारत । जघान चतुरो वाहान् सारथिञ्च महाबलः । ७५२०
आप्लुत्य स रथात्तस्माच्चित्रसेनो महायशाः । नाकुलिं पञ्चविंशत्या शराणामार्दयद्बली ।

तस्य तत्कुर्व्वतः कर्म्म नकुलस्य सुतो रणे। अर्द्धचन्द्रेण चिच्छेद चापं हेमपरिष्कृतं।
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः। आरुरोह रथं शीघ्रं हार्द्दिक्यस्य महात्मनः।
द्रुपदन्तु सहानीकं द्रोणप्रेप्सुं महारथं। वृषसेनो महाराज किरञ्छरशतैस्तदा।
यज्ञसेनस्तु समरे कर्णपुत्त्रं महारथं। षष्ट्या शराणां विव्याध बाह्वोरुरसि वा विभो। ७५२५
वृषसेनस्तु संक्रुद्धो यज्ञसेनं रथे स्थितं। बहुभिः सायकैस्तूर्णमाजघान स्तनान्तरे।
तावुभौ शरनुन्नाङ्गौ शरकण्टकिनौ रणे। व्यराजेतां महाराज श्वाविधौ शललैरिव।
रुक्मपुङ्खैरजिह्माग्रैः शरैः सन्नतपर्व्वभिः। रुधिरौघपरिक्लिन्नौ व्यराजेतां महामृधे।
तपनीयनिभौ चित्रौ कल्पवृक्षाविवाद्भुतौ। किंशुकाविव पुष्पाढ्यौ प्रकाशेतां रणाजिरे।
वृषसेनस्ततो राजन् द्रुपदं नवभिः शरैः। विद्ध्वा विव्याध सप्तत्या पुनश्चान्यैस्त्रिभिः शरैः। ७५३०
ततः शरसहस्राणि विमुञ्चन् विबभौ रणे। कर्णपुत्त्रो महाराज वर्षमाण इवाम्बुदः।
द्रुपदस्तु ततः क्रुद्धो वृषसेनस्य कार्म्मुकं। द्विधा चिच्छेद भल्लेन पीतेन निशितेन च।
सोऽन्यत् कार्म्मुकमादाय रुक्मबद्धं नवं दृढं। तूणादाकृष्य विमलं भल्लं पीतं शितं दृढं।
कार्म्मुके योजयित्वा तं द्रुपदं सन्निरीक्ष्य च। आकर्णपूर्णं मुमुचे त्रासयन् सर्व्वसोमकान्।
हृदयं तस्य भित्त्वा च जगाम वसुधातलं। कश्मलं प्राविशद्राजा वृषसेनशराहतः। ७५३५
सारथिस्तमपोवाह स्मरन् सारथिचेष्टितं। तस्मिन् प्रभग्ने राजेन्द्र पाञ्चालानां महारथे।
ततस्तु द्रुपदानीकं शरैश्छिन्नतनुच्छदं। सम्प्राद्रवच्चमूः सर्व्वा निशीथे भैरवे सति।
प्रदीपैर्हि परित्यक्तैः प्रज्वलद्भिः समन्ततः। व्यराजत मही राजन् वीताभ्रा द्यौरिव ग्रहैः।
तथाऽङ्गदैर्निपतितैर्व्यराजत वसुन्धरा। प्रावृट्काले महाराज विद्युद्भिरिव तोयदः।
ततः कर्णसुतत्रस्ताः समन्ताद्विप्रदुद्रुवुः। यथेन्द्रभयवित्रस्ता दानवास्तारकामये। ७५४०
तेनार्द्यमानाः संग्रामे पाञ्चालाः सोमकैः सह। व्यराजन्त महाराज प्रदीपैरिव भासिताः।
तांस्तु निर्ज्जित्य समरे कर्णपुत्त्रो व्यराजत। मध्यन्दिनमनुप्राप्तो घर्म्मांशुरिव भारत।
तेषु राजसहस्रेषु तावकेषु परेषु च। एक एव ज्वलंस्तस्थौ वृषसेनः प्रतापवान्।
स निर्ज्जित्य रणे शूरान् सोमकांश्च महारथान्। जगाम त्वरितो राजन् यत्र राजा युधिष्ठिरः।
प्रतिविन्ध्यं समायान्तं प्रदहन्तं रणे रिपून्। दुःशासनस्तव सुतः प्रत्यगच्छन्महारथं। ७५४५
तयोः समागमो राजंश्चित्ररूपो बभूव ह। व्यपेतजलदे व्योम्नि बुधभार्गवयोरिव।
प्रतिविन्ध्यन्तु समरे कुर्व्वाणं कर्म्म दारुणं। दुःशासनस्त्रिभिर्बाणैर्ललाटे समविध्यत।
सोऽतिविद्धो बलवता तव पुत्त्रेण धन्विना। विरराज महाराज सशृङ्ग इव पर्व्वतः।
दुःशासनन्तु समरे प्रतिविन्ध्यो महारथः। नवभिः सायकैर्व्विद्ध्वा पुनर्व्विव्याध सप्तभिः।
तत्र भारत पुत्त्रस्ते कृतवान् कर्म्म दुष्करं। प्रतिविन्ध्यहयानुग्रैः पातयामास सायकैः। ७५५०
सारथिञ्चास्य भल्लेन ध्वजञ्च समपातयत्। रथञ्च तिलशो राजन् व्यधमत्तस्य धन्विनः।

पताकाश्च महावीरो रश्मीन् योक्त्राणि च प्रभो । चिच्छेद तिलशः क्रुद्धः शरैः सन्नतपर्व्वभिः ।
विरथः स तु धर्म्मात्मा धनुष्पाणिरवस्थितः । अयोधयत्तव सुतं किरञ्छरशतान् बहून् ।
क्षुरप्रेण धनुस्तस्य चिच्छेद कृतहस्तवत् । अथैनं दशभिर्बाणैश्छिन्नधन्वानमार्द्दयत् ।
तं दृष्ट्वा भ्रातरं तव भ्रातरोऽस्य महारथाः । अभ्यवर्त्तन्त वेगेन महत्या सेनया सह । ७५५५
सोऽद्रवत्तु ततो यानं सुतसोमस्य भास्वरं । धनुर्गृह्य महाराज विव्याध तनयं तव ।
ततस्तु तावकाः सर्व्वे परिवार्य्य सुतं तव । अभ्यवर्त्तन्त वेगेन महत्या सेनया वृताः ।
ततः प्रववृते युद्धं तव तेषाञ्च भारत । निशीथे दारुणे काले यमराष्ट्रविवर्द्धनं ।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि शतानीकादियुद्धे एकोनसप्तत्यधिकशततमोऽध्यायः ॥१६९॥

॥ सञ्जय उवाच ॥ नकुलं रभसं युद्धे निघ्नन्तं तव वाहिनीं । अभ्ययात् सौबलः क्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ।
कृतवैरौ तु तौ शूरावन्योऽन्यवधकाङ्क्षिणौ । शरैः पूर्णायतोत्सृष्टैरन्योऽन्यमभिजघ्नतुः । ७५६०
यथैव नकुलो राजन् शरवर्षाण्यमुञ्चत । तथैव सौबलश्चापि शिक्षां सन्दर्शयन् युधि ।
तावुभौ समरे राजञ्छरकण्टकिनौ तदा । व्यभ्राजेतां महाराज श्वाविधौ शललैरिव ।
रुक्मपुङ्खैरजिह्माग्रैः शरैः छिन्नतनुच्छदौ । रुधिरौघपरिक्लिन्नौ व्यभ्राजेतां महामृधे ।
तपनीयनिभौ चित्रौ कल्पवृक्षाविव द्रुमौ । किंशुकाविव चोत्फुल्लौ प्रकाशेते रणाजिरे ।
तावुभौ समरे शूरौ शरकण्टकिनौ तदा । व्यराजेतां महाराज कण्टकैरिव शाल्मली । ७५६५
सुजिह्मं प्रेक्षमाणौ तौ राजन् विवृतलोचनौ । क्रोधसंरक्तनयनौ निर्द्दहन्तौ परस्परं ।
श्यालस्तव सुसंक्रुद्धो माद्रीपुत्रं हसन्निव । कर्णिनैकेन विव्याध हृदये निशितेन ह ।
नकुलस्तु भृशं विद्धः श्यालेन तव धन्विना । निषसाद रथोपस्थे कश्मलञ्चैनमाविशत् ।
अत्यन्तवैरिणं दृप्तं दृष्ट्वा शत्रुं तथा गतं । ननाद शकुनिस्तत्र तपान्ते जलदो यथा ।
प्रतिलभ्य ततः संज्ञां नकुलः पाण्डुनन्दनः । अभ्ययात् सौबलं भूयो व्यात्तानन इवान्तकः । ७५७०
स क्रुद्धः शकुनिं षष्ट्या विव्याध भरतर्षभ । पुनश्चैनं शतेनैव नाराचानां स्तनान्तरे ।
ततोऽस्य सशरञ्चापं मुष्टिदेशे द्विधाऽच्छिनत् । ध्वजञ्च त्वरितं छित्त्वा रथाद्भूमावपातयत् ।
विशिखेन च तीक्ष्णेन पीतेन निशितेन च । ऊरू निर्भिद्य चैकेन नकुलः पाण्डुनन्दनः ।
श्येनं सपक्षं व्याधेन पातयामास तं तदा । सोऽतिविद्धो महाराज रथोपस्थ उपाविशत् ।
ध्वजयष्टिं परिक्लिश्य कामिनीं कामुको यथा । तं विसंज्ञं निपतितं दृष्ट्वा श्यालं तवानघ । ७५७५
अपोवाह रथेनाशु सारथिर्ध्वजिनीमुखात् । ततः सचुक्रुशुः पार्था ये च तेषां पदानुगाः ।
निर्जित्य च रणे शत्रून् नकुलः शत्रुतापनः । अब्रवीत् सारथिं तत्र द्रोणानीकाय मां वह ।
तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य सारथिः । प्रायात्तेन तदा राजन् येन द्रोणो व्यवस्थितः ।
शिखण्डिनन्तु समरे द्रोणप्रेप्सुं महाबलं । कृपः शारद्वतो यत्तः प्रत्युद्गच्छत वेगितः ।
गौतमं द्रुतमायान्तं द्रोणान्तिकमरिन्दमः । विव्याध नवभिर्बाणैः शिखण्डी प्रहसन्निव । ७५८०

तमाचार्य्यो महाराज विद्ध्वा पञ्चभिराशुगैः । पुनर्व्विव्याध विंशत्या पुङ्खानां प्रियकृत्तव ।
महद्युद्धं तयोरासीद्घोररूपं विशाम्पते । यथा देवासुरे युद्धे शम्बरामरराजयोः ।
शरजालावृतं व्योम चक्रतुस्तौ महारथौ । मेघाविव तपापाये वीरौ समरदुर्म्मदौ ।
प्रकृत्या घोररूपं तदासीद्घोरतरं ततः । रात्रिश्च भरतश्रेष्ठ योधानां युद्धशालिनां ।
कालरात्रिनिभा चासीद्घोररूपा भयावहा । शिखण्डी तु महाराज गौतमस्य महद्धनुः । ७८८५
अर्द्धचन्द्रेण चिच्छेद सज्जं च शितान् शरान् । तस्य क्रुद्धः कृपो राजञ्छक्तिं चिक्षेप दारुणां ।
स्वर्णदण्डामकुण्ठाग्रां कर्म्मारपरिमार्जितां । तामापतन्तीं चिच्छेद शिखण्डी दशभिः शरैः ।
सा पपात च मेदिन्यां शक्तिर्हेमविभूषिता । अथान्यद्धनुरादाय गौतमो वदताम्बर ।
प्राच्छादयच्छितैर्व्वाणैर्महाराज शिखण्डिनं । स च्छाद्यमानः समरे गौतमेन महात्मना ।
व्यषीदत रथोपस्थे शिखण्डी रथिनाम्बरः । सीदन्तञ्चैनमालोक्य कृपः शारद्वतो युधि । ७८९०
आजघ्ने बहुभिर्व्वाणैर्जिघांसन्निव भारत । विमुखं तं रणे दृष्ट्वा याज्ञसेनिं महारथं ।
पाञ्चालाः सोमकाश्चैव परिवव्रुः समन्ततः । तथैव तव पुत्राश्च परिवव्रुर्द्विजोत्तमं ।
महत्या सेनया सार्द्धं ततो युद्धमभूत् पुनः । रथिनाञ्च रणे राजन्नन्योऽन्यमभिधावतां ।
बभूव तुमुलः शब्दो मेघानामिव भारत । द्रवतां सादिनाञ्चैव गजानाञ्च विशाम्पते ।
अन्योऽन्यं निघ्नतां राजन् क्रूरमायोधनं बभौ । पत्तीनां द्रवतां चैव पादशब्देन मेदिनी । ७८९५
अकम्पत महाराज भयत्रस्तेव चाङ्गना । रथिनो रथमारुह्य प्रद्रुता वेगवत्तरं ।
अग्रहन् बहवो राजन् शलभान् वायसा इव । तथा गजान् प्रभिन्नांश्च सुप्रभिन्ना महागजाः ।
तस्मिन्नेव पदे यत्ता निगृह्णन्ति स्म भारत । सादी सादिनमासाद्य पदातीश्च पदातिनं ।
समासाद्य रणेऽन्योऽन्यं संरब्धा नातिचक्रमुः । धावतां द्रवताञ्चैव पुनरावर्त्ततामपि ।
बभूव तत्र सैन्यानां शब्दस्तु तुमुलो निशि । दीप्यमानाः प्रदीपाश्च रथवारणवाजिषु । ७९००
अदृश्यन्त महाराज महोल्का इव खाच्च्युताः । सा निशा भरतश्रेष्ठ प्रदीपैरवभासिता ।
दिवसप्रतिमा राजन् बभूव रणमूर्द्धनि । आदित्येन यथा व्याप्तं तमो घोरं प्रणश्यति ।
तथा नष्टं तमो घोरं दीपैर्द्दीप्तैरणे कृतं । दिवञ्च पृथिवीञ्चैव दिशश्च प्रदिशस्तथा ।
रजसा तमसा व्याप्ता द्योतिताः प्रभया पुनः । शस्त्राणां कवचानाञ्च मणीनाञ्च महात्मनां ।
अन्तर्द्दधुः प्रभाः सर्व्वा दीपैस्तैरवभासिताः । तस्मिन् युद्धे महारौद्रे वर्त्तमाने निशामुखे । ७९०५
न कश्चिद्विदुरात्मानमयमस्मीति भारत । अवधीत् समरे पुत्रं पिता भरतसत्तम ।
पुत्रश्च पितरं मोहात् सखायञ्च तथा सखा । सम्बन्धिनञ्च सम्बन्धी स्वस्रीयञ्चापि मातुलः ।
स्वे स्वान् परे स्वकीयांश्च निजघ्नुस्तत्र भारत । निर्म्मर्य्यादमभूद्राजन् रात्रौ युद्धं भयानकं ।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि रात्रियुद्धे सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥
॥ सञ्जय उवाच ॥ तस्मिन् सुतुमुले युद्धे वर्त्तमाने भयावहे । धृष्टद्युम्नो महाराज द्रोणमेवाभ्यवर्त्तत ।

सन्दधानो धनुः श्रेष्ठं ज्यां विकर्षन् पुनः पुनः । अभ्यद्रवत द्रोणस्य रथं रुक्मविभूषितं । ७६१०
धृष्टद्युम्नमथायान्तं द्रोणस्यान्तं चिकीर्षया । परिवव्रुर्महाराज पाञ्चालाः पाण्डवैः सह ।
तथा परिवृतं दृष्ट्वा द्रोणमाचार्य्यसत्तमं । पुत्रास्ते सर्व्वतो यत्ता ररक्षुर्द्रोणमाहवे ।
बलार्णवौ ततस्तौ तु समेयातां निशामुखे । वातोद्धूतौ क्षुब्धसत्वौ भैरवौ सागराविव ।
ततो द्रोणं महाराज पाञ्चाल्यः पञ्चभिः शरैः । विव्याध हृदये तूर्णं सिंहनादं ननाद च ।
तं द्रोणः पञ्चविंशत्या विद्ध्वा भारत संयुगे । चिच्छेदान्येन भल्लेन धनुरस्य महाप्रभं । ७६१५
धृष्टद्युम्नस्तु निर्व्विद्धो द्रोणेन भरतर्षभ । उत्ससर्ज च धनुः शीघ्रं सन्दश्य दशनच्छदं ।
ततः क्रुद्धो महाराज धृष्टद्युम्नः प्रतापवान् । आददेऽन्यद्धनुः श्रेष्ठं द्रोणस्यान्तं चिकीर्षया ।
विकृष्य तद्धनुः शीघ्रमाकर्णात् परवीरहा । द्रोणस्यान्तकरं घोरं व्यसृजत् सायकं ततः ।
स विसृष्टो बलवता तस्मिन् घोरे महामृधे । भासयामास तत्सैन्यं दिवाकर इवोदितः ।
तन्तु दृष्ट्वा शरं घोरं देवगन्धर्व्वदानवाः । स्वस्त्यस्तु समरे राजन् द्रोणायेत्यब्रुवन् वचः । ७६२०
तन्तु सायकमप्राप्तमाचार्य्यस्य रथम्प्रति । कर्णो द्वादशधा राजंश्चिच्छेद कृतहस्तवत् ।
स छिन्नो बहुधा राजन् धृष्टद्युम्नस्य मारिष । निपपात शरस्तूर्णं निर्व्विषो भुजगो यथा ।
छित्त्वा तु समरे बाणान् शरैः सन्नतपर्व्वभिः । धृष्टद्युम्नं ततः कर्णो विव्याध निशितैः शरैः ।
पञ्चभिर्द्रोणपुत्रस्तु स्वयं द्रोणश्च पञ्चभिः । शल्यस्तु नवभिर्बाणैस्त्रिभिर्दुःशासनस्तथा ।
दुर्य्योधनस्तु विंशत्या शकुनिश्चापि पञ्चभिः । पाञ्चाल्यं त्वरिताविध्यन् सर्व्व एव महारथाः । ७६२५
स विद्धः सप्तभिर्व्वीरैर्द्रोणत्राणार्थमाहवे । स चापि प्रतिविव्याध सर्व्वानेव त्रिभिस्त्रिभिः ।
द्रोणं कर्णञ्च द्रौणिञ्च विव्याध तनयं तव । त्वरायुक्तो महाराज धृष्टद्युम्नो महामृधे ।
निर्भिन्ना धन्विना तेन धृष्टद्युम्नं पुनर्मृधे । विव्यधुः समवेतास्ते मुञ्चन्तो भैरवान् रवान् ।
द्रुमसेनस्तु संक्रुद्धो राजन् विव्याध पत्रिणा । पुनश्च विशिखैस्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ।
स तु तं प्रतिविव्याध त्रिभिस्तीक्ष्णैरजिह्मगैः । स्वर्णपुङ्खैः शिलाधौतैः प्राणान्तकरणैर्युधि । ७६३०
भल्लेनान्येन तु पुनः सुवर्णोज्ज्वलकुण्डलं । उन्ममाथ शिरः कायात् द्रुमसेनस्य संयुगे ।
तच्छिरः प्रापतद्भूमौ सन्दष्टौष्ठपुटं रणे । महावातसमुद्धूतं पक्वं तालफलं यथा ।
तांश्च विद्ध्वा पुनर्योधान् वीरः सुनिशितैः शरैः । राधेयस्याच्छिनत् भल्लैः कार्मुकं चित्रयोधिनः ।
न च तन्ममृषे कर्णो धनुषश्छेदनं तदा । विलेखनमिवात्युग्रो लाङ्गूलस्य यथा हरिः ।
सोऽन्यद्धनुः समादाय क्रोधरक्तेक्षणः श्वसन् । अभ्यवर्षच्छरौघेण धृष्टद्युम्नं महाबलं । ७६३५
दृष्ट्वा कर्णन्तु संरब्धं ते वीराः षड्रथर्षभाः । पाञ्चालपुत्रं त्वरिताः परिवव्रुर्जिघांसवः ।
षण्णां योधप्रवीराणां तावकानां पुरस्कृतं । मृत्योरास्यमनुप्राप्तं मेनिरे सैनिका विभो ।
एतस्मिन्नेव काले तु दाशार्हो विकिरन् शरान् । धृष्टद्युम्नं पराक्रान्तं सात्यकिः प्रत्यपद्यत ।
तमापतन्तं सम्प्रेक्ष्य सात्वतं युद्धदुर्म्मदं । राधेयो दशभिर्ब्बाणैस्ततो विव्याध संयुगे ।

तं सात्यकिर्म्महाराज विव्याध दशभिः शरैः । पश्यतां सर्व्ववीराणां मागास्तिष्ठेति चाब्रवीत् । ७९७०
स सात्यकेस्तु बलिनः कर्णस्य च महात्मनः । आसीत् समागमो राजन् बलिवासवयोरिव ।
त्रासयन् रथघोषेण क्षत्रियान् क्षत्रियर्षभः । राजीवलोचनं कर्णं सात्यकिः प्रत्यविध्यत ।
कम्पयन्निव घोषेण धनुषो वसुधां बली । सूतपुत्रो महाराज सात्यकिं प्रत्ययोधयत् ।
विपाठकर्णिनाराचैर्व्वत्सदन्तैः क्षुरैरपि । कर्णः शरशतैश्चापि शैनेयं प्रत्यविध्यत ।
तथैव युयुधानोऽपि वृष्णीनां प्रवरो युधि । अभ्यवर्षच्छरैः कर्णं तद्युद्धमभवत् समं । ७९७५
कर्णं प्रमुखतः कृत्वा पुत्त्रास्तव विशाम्पते । सात्यकिं विव्यधुः सर्व्वे समन्तान्निशितैः शरैः ।
अस्त्रैरस्त्राणि संवार्य्य तेषां कर्णस्य वा विभो । अविध्यत् सात्यकिस्तूर्णं वृषसेनं स्तनान्तरे ।
तेन वाणेन निर्व्विद्धो वृषसेनो महाद्युतिः । न्यपतच्च रथे तूर्णं धनुरुत्सृज्य वीर्य्यवान् ।
ततः कर्णो हतं मत्वा वृषसेनं महारथं । पुत्त्रशोकाभिसन्तप्तः सात्यकिं प्रत्यपीडयत् ।
पीड्यमानस्तु कर्णेन युयुधानो महारथः । विव्याध बहुभिः कर्णं त्वरमाणः पुनः पुनः । ७९८०
स कर्णं दशभिर्व्विद्ध्वा वृषसेनञ्च पञ्चभिः । सहस्तावापधनुषी तयोश्चिच्छेद सात्वतः ।
तावन्ये धनुषी सज्ये कृत्वा शत्रुभयङ्करे । युयुधानमविध्येतां समन्तान्निशितैः शरैः ।
वर्त्तमाने तथा रौद्रे तस्मिन् वीरवरक्षये । अतीव शुश्रुवे राजन् गाण्डीवस्य महास्वनः ।
श्रुत्वा तु रथनिर्घोषं गाण्डीवस्य च निस्वनं । सूतपुत्त्रोऽब्रवीद्राजन् दुर्य्योधनमिदं वचः ।
एष सर्व्वाश्चमूं हत्वा मुख्यश्चैव नरर्षभान् । कौरवांश्च महेष्वासान् गाण्डीवनिनदो महान् । ७९८५
श्रूयते रथनिर्घोषो वासवस्येव गर्ज्जतः । करोति पाण्डवो व्यक्तं कर्म्मौपयिकमात्मनः ।
एष पार्थो महाराज मर्द्दयेत् सुमहाचमूः । विप्रकीर्णान्यनेकानि नावतिष्ठन्ति कर्हिचित् ।
वातेनेव समुद्धूतमभ्रजालं विदीर्य्यते । सव्यसाचिनमासाद्य भिन्ना नौरिव सागरे ।
द्रवतां योधमुख्यानां गाण्डीवप्रेषितैः शरैः । पततां समरे राजन् श्रूयते निनदो महान् ।
शृणु दुन्दुभिनिर्घोषमर्ज्जुनस्य रथम्प्रति । निशीथे राजशार्दूल स्तनयित्नोरिवाम्बरे । ७९९०
हाहाकाररवांश्चैव सिंहनादांश्च पुष्कलान् । शृणु शब्दान् बहुविधानर्ज्जुनस्य रथम्प्रति ।
अयं मध्ये स्थितोऽस्माकं सात्यकिः सात्वताम्बरः । इह चेल्लभ्यते लक्ष्यं कृत्स्नान् जेष्यामहे परान् ।
एवं पाञ्चालराजस्य पुत्त्रो द्रोणेन सङ्गतः । सर्व्वतः संवृतः शूरैरथैः पुरुषसत्तमैः ।
सात्यकिं यदि हन्याम धृष्टद्युम्नञ्च पार्षतं । असंशयं महाराज ध्रुवो नो विजयो भवेत् ।
सौभद्रवदिमौ वीरौ परिवार्य्य महारथौ । प्रयताम महाराज निहन्तुं वृष्णिपार्षतौ । ७९९५
सव्यसाची पुरोऽभ्येति द्रोणानीकाय भारत । संसक्तं सात्यकिं ज्ञात्वा बहुभिः कुरुपुङ्गवैः ।
तत्र गच्छन्तु बहवः प्रवरा रथसत्तमाः । यावत् पार्थो न जानाति सात्यकिं बहुभिर्वृतं ।
ते त्वरध्वं महाशूराः शराणां मोक्षणे भृशं । यथा त्विह व्रजत्येष परलोकाय माधवः ।
कर्णस्य मतमाज्ञाय पुत्त्रस्ते प्राह सौबलं । यथेन्द्रः समरे राजन् प्राह विष्णुं महायशाः ।

वृतः सहस्रैर्दशभिर्गजानामनिवर्त्तिनां । रथैश्च दशसाहस्रैर्वृतो याहि धनञ्जयं । ७६७०
दुःशासनो दुर्व्विषहः सुबाहुर्दुष्प्रधर्षणः । एते त्वामनुयास्यन्ति पत्तिभिर्बहुभिर्वृताः ।
जहि कृष्णौ महेष्वासौ धर्म्मराजञ्च मातुल । नकुलं सहदेवञ्च भीमसेनञ्च पाण्डवं ।
देवानामिव देवेन्द्रे जयाशा मयि ते स्थिता । जहि मातुल कौन्तेयानसुरानिव पावकिः ।
एवमुक्तो ययौ पार्थान् तव पुत्त्रेण चोदितः । महता सेनया सार्द्धं तव पुत्त्रैश्च दंशितः ।
प्रियार्थं तव पुत्त्रस्य दिधक्षुः पाण्डुनन्दनान् । ततः प्रववृते युद्धं तावकानां परैः सह । ७६७५
प्रयाते सौबले राजन् पाण्डवानामनीकिनीं । बलेन महता युक्तः सूतपुत्त्रस्तु सात्वतं ।
अभ्ययात्त्वरितो युद्धे किरन् शरशतान् बहून् । तथैव तावकाः सर्व्वे सात्यकिं पर्य्यवारयन् ।
भारद्वाजस्ततो गत्वा धृष्टद्युम्नरथम्प्रति । महद्युद्धं तदा चक्रे निशीथे भरतर्षभ ।
धृष्टद्युम्नेन शूरेण पाञ्चालैश्च सहाद्भुतं ।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि सङ्कुलयुद्धे एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

॥ सञ्जय उवाच ॥ ततस्ते पार्थिवाः सर्व्वे त्वदीया युद्धदुर्म्मदाः । संरभ्यमाणाः संरब्धा युयुधानरथं प्रति । ७६८०
ते रथैः कल्पितै राजन् हेमरत्नविभूषितैः । सादिभिश्च गजैश्चैव परिवव्रुः स्म सात्वतं ।
अथैनं कोष्ठकीकृत्य सर्व्वतस्ते महारथाः । सिंहनादं महत् कृत्वा तर्ज्जयन्तस्तु हर्षिताः ।
तेऽभ्यवर्षञ्छरैस्तीक्ष्णैः सात्यकिं सत्यविक्रमं । त्वरमाणा महावीरा माधवस्य वधैषिणः ।
तान् दृष्ट्वापततस्तूर्णं शैनेयः परवीरहा । प्रत्यगृह्णान्महाबाहुः प्रमुञ्चन् विशिखान् बहून् ।
तत्र वीरो महेष्वासः सात्यकिर्युद्धदुर्म्मदः । निचकर्त्त शिरांस्युग्रैः शरैः सन्नतपर्व्वभिः । ७६८५
हस्तिहस्तान् हयग्रीवान् बाहूनपि च सायुधान् । क्षुरप्रैः शातयामास तावकानान्तु माधवः ।
पतितैश्चामरैश्चैव श्वेतच्छत्रैश्च भारत । बभूव धरणी पूर्णा नक्षत्रैर्द्यौरिव प्रभो ।
तेषान्तु युयुधानेन बध्यतां युधि भारत । बभूव तुमुलः शब्दः प्रेतानामिव क्रन्दतां ।
तेन शब्देन महता पूरितेयं वसुन्धरा । रात्रिः समभवच्चापि घोररूपा भयावहा ।
दीर्य्यमाणं बलं दृष्ट्वा युयुधानशराहतं । श्रुत्वा तु विपुलं नादं निशीथे लोमहर्षणं । ७६९०
सुतस्तवाब्रवीद्राजन् सारथिं रथिनाम्वरः । यत्रैष शब्दस्तत्राश्वाश्चोदयेति पुनः पुनः ।
तेन सञ्चोद्यमानस्तु ततस्तांस्तुरगोत्तमान् । सूतः सञ्चोदयामास युयुधानरथम्प्रति ।
ततो दुर्य्योधनो राजा दृढधन्वा जितक्लमः । शीघ्रहस्तश्चित्रयोधी युयुधानमुपाद्रवत् ।
ततः पूर्णायतोत्सृष्टैर्मांसशोणितभोजनैः । दुर्य्योधनं द्वादशभिर्माधवः प्रत्यविध्यत ।
दुर्य्योधनस्तेन तथा पूर्व्वमेवार्द्दितः शरैः । शैनेयं दशभिर्व्वाणैः प्रत्यविध्यदमर्षितः । ७६९५
ततः समभवद्युद्धमद्भुतोपमदर्शनं । पाञ्चालानाञ्च सर्व्वेषां तावकानाञ्च सर्व्वशः ।
शैनेयस्तु रणे क्रुद्धस्तव पुत्त्रं महारथं । सायकानामशीत्या तु विव्याधोरसि भारत ।
ततोऽस्य वाहान् समरे शरैर्निन्ये यमक्षयं । सारथिञ्च रथात्तूर्णं पातयामास पत्रिणा ।

हताश्वे तु रथे तिष्ठन् पुत्रस्तव विशाम्पते। मुमोच निशितान् बाणान् शैनेयस्य रथम्प्रति।
शरान् पञ्चाशतस्तांस्तु शैनेयः कृतहस्तवत्। चिच्छेद समरे राजन् प्रेषितांस्तनयेन ते। ७७००
अथापरेण भल्लेन मुष्टिदेशे महद्धनुः। चिच्छेद रभसा युद्धे तव पुत्रस्य माधवः।
विरथो विधनुष्कश्च सर्व्वलोकेश्वरः प्रभुः। आरुरोह रथं तूर्णं भास्वरं कृतवर्म्मणः।
दुर्य्योधने पराहृत्ते शैनेयस्तव वाहिनीं। द्रावयामास विशिखैर्निशामध्ये विशाम्पते।
शकुनिश्चार्जुनं राजन् परिवार्य्य समन्ततः। रथैरनेकसाहस्रैर्गजैश्चैव सहस्रशः।
तथा हयसहस्रैश्च तुमुलं सर्व्वतोऽकरोत्। ते महास्त्राणि दिव्यानि विकिरन्तोऽर्जुनं प्रति। ७७०५
अर्जुनं योधयन्ति स्म क्षत्रियाः कालचोदिताः। तान्यर्जुनः सहस्राणि रथवारणवाजिनां।
प्रत्यवारयदायस्तः प्रकुर्व्वन् विमुखं रिपुं। ततोऽर्जुनमरिघ्नन्तं विव्याध युधि सौबलः।
रोषताम्रेक्षणः क्रुद्धो विंशत्या सायकैर्भृशं। पुनश्चैव शतेनास्य संरुरोध महारथं।
तमर्जुनस्तु विंशत्या विव्याध युधि भारत। अथेतरान् महेष्वासांस्त्रिभिस्त्रिभिरविध्यत।
निवार्य्य तान् बाणगणान् युधि राजन् धनञ्जयः। निजघ्ने तावकान् योधान् वज्रवेगैः शरोत्तमैः। ७७१०
भुजैश्छिन्नैर्महाराज शरीरैश्च सहस्रशः। समास्तीर्णा धरा तत्र बभौ पुष्पैरिवावृता।
शिरोभिः सकिरीटैश्च सुनसैश्चारुकुण्डलैः। सन्दष्टौष्ठपुटैः क्रुद्धैस्तथैवोद्वृत्तलोचनैः।
निष्कचूडामणिधरैः क्षत्रियाणां प्रियम्वदैः। चम्पकैरिव विन्यस्तैः पर्व्वतैर्व्विबभौ मही।
कृत्वा तत्कर्म्म बीभत्सुरुग्रमुग्रपराक्रमः। स विद्ध्वा शकुनिं भूयः पञ्चभिर्नतपर्व्वभिः।
उलूकं पुनराजघ्ने युधि बाणेन रोषितः। तमुलूकं तथा विद्ध्वा सौबलस्यैव पश्यतः। ७७१५
ननाद च महानादं पूरयन् वसुधातलं। ततो देवेन्द्रतनयः शकुनेर्धनुराच्छिनत्।
निन्ये च चतुरो वाहान् यमस्य सदनं प्रति। ततो रथादवप्लुत्य सौबलो भरतर्षभ।
उलूकस्य रथं तूर्णमारुरोह त्वरान्वितः। तावेकरथमारूढौ पितापुत्रौ महारथौ।
पार्थं ववृषतुर्व्वाणैर्गिरिं मेघाविवोत्थितौ। ततो विद्ध्वा महाराज पाण्डवो निशितैः शरैः।
विद्रावयंस्तव चमूं शतशोऽथ सहस्रशः। अनिलेन यथाऽभ्राणि विच्छिन्नानि ततस्ततः। ७७२०
विच्छिन्नानि तथा राजन् बलान्यासन् विशाम्पते। तद्बलं भरतश्रेष्ठ बध्यमानं तदा निशि।
प्रदुद्राव दिशः सर्व्वा वीक्षमाणं भयार्द्दितं। उत्सृज्य वाहान् समरे चोदयन्तस्तथाऽपरे।
सम्भ्रान्ताः पर्य्यवर्त्तन्त तस्मिंस्तमसि दारुणे। निर्ज्जित्य समरे योधांस्तावकान् भरतर्षभ।
दध्मतुर्मुदितौ शङ्खौ वासुदेवधनञ्जयौ। धृष्टद्युम्नो महाराज द्रोणं विद्ध्वा त्रिभिः शरैः।
चिच्छेद धनुषस्तूर्णं ज्यां शितेन शरेण ह। स विहाय धनुर्भूमौ द्रोणः क्षत्रियमर्द्दनः। ७७२५
आददेऽन्यद्धनुः शूरो वेगवत् सारवत्तमं। धृष्टद्युम्नं ततो द्रोणो विद्ध्वा सप्तभिराशुगैः।
सारथिं पञ्चभिर्व्वाणैर्व्विव्याध भरतर्षभ। तं निवार्य्य शरैर्द्रोणं धृष्टद्युम्नो महारथः।
व्यधमत् कौरवीं सेनामासुरीं मघवानिव। बध्यमाने बले तस्मिंस्तव पुत्रस्य मारिष।

प्रावर्त्तत नदी घोरा शोणितौघतरङ्गिणी । उभयोः सेनयोर्मध्ये नराश्वद्विपवाहिनी ।
यथा वैतरणी राजन् यमराष्ट्रं प्रति प्रभो । द्रावयित्वा तु तत् सैन्यं धृष्टद्युम्नः प्रतापवान् । ७७३०
अभ्यराजत तेजस्वी शक्रो देवगणेष्विव । अथ दध्मुर्महाशङ्खान् धृष्टद्युम्नशिखण्डिनौ ।
यमौ च युयुधानश्च पाण्डवश्च वृकोदरः । जित्वा राजन् सहस्राणि तावकानां तरस्विनां ।
सिंहनादरवांश्चक्रुः पाण्डवा जितकाशिनः । पश्यतस्तव पुत्रस्य कर्णस्य च रणोत्कटाः ।
तथा द्रोणस्य शूरस्य द्रौणेश्चैव विशाम्पते ।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि सङ्कुलयुद्धे द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥
॥ सञ्जय उवाच ॥ विद्रुतं स्वबलं दृष्ट्वा वध्यमानं महात्मभिः । क्रोधेन महताविष्टः पुत्रस्तव विशाम्पते । ७७३५
अभ्येत्य सहसा कर्णं द्रोणञ्च जयतांवरं । अमर्षवशमापन्नो वाक्यज्ञो वाक्यमब्रवीत् ।
भवद्भ्यामिह सङ्ग्रामः क्रुद्धाभ्यां सम्प्रवर्त्तितः । आहवे निहतं दृष्ट्वा सैन्धवं सव्यसाचिना ।
निहन्यमानां पाण्डूनां बलेन मम वाहिनीं । भूत्वा तद्विजये शक्तावशक्ताविव पश्यतः ।
यद्यहं भवतोस्त्याज्यो न वाच्योऽस्मि तदैव हि । आवां पाण्डुसुतान् सङ्ख्ये जेष्याव इति मानदौ ।
तदैवाहं वचः श्रुत्वा भवद्भ्यामनुसम्मतं । नाकरिष्यमिदं पार्थैर्वैरं योधविनाशनं । ७७४०
यदि नाहं परित्याज्यो भवद्भ्यां पुरुषर्षभौ । युध्यतामनुरूपेण विक्रमेण सुविक्रमौ ।
वाक्प्रतोदेन तौ वीरौ प्रणुन्नौ तनयेन ते । प्रावर्त्तयेतां तौ युद्धं घट्टिताविव पन्नगौ ।
ततस्तौ रथिनां श्रेष्ठौ सर्व्वलोकधनुर्द्धरौ । शैनेयप्रमुखान् पार्थानभिदुद्रुवतू रणे ।
तथैव सहिताः पार्थाः स्वेन सैन्येन संवृताः । अभ्यवर्त्तन्त तौ वीरौ नर्दमानौ मुहुर्मुहुः ।
अथ द्रोणो महेष्वासो दशभिः शिनिपुङ्गवं । अविध्यत्त्वरितं क्रुद्धः सर्व्वशस्त्रभृतांवरः । ७७४५
कर्णश्च दशभिर्व्वाणैः पुत्रश्च तव सप्तभिः । दशभिर्वृषसेनश्च सौबलश्चापि सप्तभिः ।
एते कौरवसङ्क्रन्दे शैनेयं पर्य्यवाकिरन् । दृष्ट्वा च समरे द्रोणं निघ्नन्तं पाण्डवीं चमूं ।
विव्यधुः सोमकास्तूर्णं समन्ताच्छरवृष्टिभिः । ततो द्रोणोऽहरत् प्राणान् क्षत्रियाणां विशाम्पते ।
रश्मिभिर्भास्करो राजंस्तमांसीव समन्ततः । द्रोणेन वध्यमानानां पाञ्चालानां विशाम्पते ।
शुश्रुवे तुमुलः शब्दः क्रोशतामितरेतरं । पुत्रानन्ये पितॄनन्ये भ्रातॄनन्ये च मातुलान् । ७७५०
भागिनेयान् वयस्यांश्च तथा सम्बन्धिबान्धवान् । उत्सृज्योत्सृज्य गच्छन्ति त्वरिता जीवितैषिणः ।
अपरे मोहिता मोहात्तमेवाभिमुखा ययुः । पाण्डवानां रणे योधाः परलोकं गताः परे ।
तथा सा पाण्डवी सेना पीड्यमाना महात्मना । निशि सम्प्राद्रवद्राजन् विसृज्योल्काः समन्ततः ।
पश्यतो भीमसेनस्य विजयस्याच्युतस्य च । यमयोर्धर्मपुत्रस्य पार्षतस्य च पश्यतः ।
तमसा संवृते लोके न प्राज्ञायत किञ्चन । कौरवाणां प्रकाशेन दृश्यन्ते विद्रुताः परे । ७७५५
द्रवमाणन्तु तत् सैन्यं द्रोणकर्णौ महारथौ । जघ्नतुः पृष्ठतो राजन् किरन्तौ सायकान् बहून् ।
पाञ्चालेषु प्रभग्नेषु पीड्यमानेषु सर्व्वतः । जनार्द्दनो दीनमनाः प्रत्यभाषत फाल्गुनं ।

द्रोणकर्णौ महेष्वासावेतौ पार्षतसात्यकी । पाञ्चालैश्चैव सहितौ जग्मतुः सात्वकेर्युधि ।
सा तदा शरवर्षेण प्रभग्ना महती चमूः । वार्य्यमाणाऽपि कौन्तेय पृतना नावतिष्ठते ।
तांस्तु विद्रवतो दृष्ट्वा जगदतुः केशवार्ज्जुनौ । माभिद्रवत वित्रस्ता भयं त्यजत पाण्डवाः । ७७६०
एतावावां सर्व्वसैन्यैर्व्यूढौ सम्यगुदायुधौ । द्रोणञ्च सूतपुत्रञ्च प्रयातौ सम्प्रबाधितुं ।
वृकोदरमथायान्तं दृष्ट्वा तत्र जनार्द्दनः । पुनरेवाब्रवीद्राजन् हर्षयन्निव पाण्डवं ।
एष भीमो रणश्लाघी वृतः सोमकपाण्डवैः । अभ्यवर्त्तत वेगेन द्रोणकर्णौ महारथौ ।
एतेन सहितो युध्य पाञ्चालैश्च महारथैः । गच्छस्वान्तं त्वमप्यत्र सैन्यानां पाण्डुनन्दन ।
ततस्तौ पुरुषव्याघ्रावुभौ पाण्डवमाधवौ । द्रोणकर्णौ समासाद्य धिष्ठितौ रणमूर्द्धनि । ७७६५
॥ सञ्जय उवाच ॥ ततस्तत् पुनरावृत्तं युधिष्ठिरबलं महत । यतो द्रोणश्च कर्णश्च परान् ममृदतुर्युधि ।
सम्प्रहारस्तु तुमुलो निशीथे चाभवन्महान् । यथा सागरयो राजन् चन्द्रोदयसमुद्धयोः ।
तत उत्सृज्य पाणिभ्यां प्रदीपांस्तव वाहिनी । युयुधे पाण्डवैः सार्द्धमुन्मत्तमिव भारत ।
रजसा तमसा चैव सङ्ग्रामे भृशदारुणे । केवलं नाममात्रेण प्रायुध्यन्त रणाजिरे ।
अश्रूयन्त हि नामानि श्राव्यमाणानि पार्थिवैः । प्रहरद्भिर्महाराज स्वयम्बर इवाहवे । ७७७०
निःशब्दमासीत् सहसा पुनः शब्दो महानभूत् । क्रुद्धानां युध्यमानानां जयतां जीयतामपि ।
यत्र यत्र स्म दृश्यन्ते प्रदीपाः कुरुपुङ्गव । ते शूरास्तत्र तत्र स्म निपतन्ति पतङ्गवत् ।
तथा संयुध्यमानानां विगाढाऽभून्महानिशा । पाण्डवानाञ्च राजेन्द्र कौरवाणाञ्च भारत ।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि सङ्कुलयुद्धे त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥
॥ सञ्जय उवाच ॥ ततः कर्णो रणे दृष्ट्वा पार्षतं परवीरहा । आजघानोरसि शरैर्दशभिर्मर्म्मभेदिभिः ।
प्रतिविव्याध तं कर्णं धृष्टद्युम्नो महारथः । पञ्चभिः सायकैस्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् । ७७७५
तावन्योऽन्यं शरै राजन् सञ्छाद्य सुमहारणे । पुनः पूर्णायतोत्सृष्टैर्व्विव्याधाते परस्परं ।
ततः पाञ्चालमुख्यस्य धृष्टद्युम्नस्य संयुगे । सारथिञ्चतुरश्चाश्वान् कर्णो निन्ये यमक्षयं ।
कार्मुकप्रवरञ्चास्य चिच्छेद निशितैः शरैः । सारथिञ्चास्य भल्लेन रथनीडादपातयत् ।
धृष्टद्युम्नस्तु विरथो हताश्वो हतसारथिः । अवप्लुत्य रथात्तूर्णं गदामादाय वीर्य्यवान् ।
स वध्यमानः कर्णेन शरैः सन्नतपर्व्वभिः । गत्वा कर्णसमीपन्तु जघान चतुरो हयान् । ७७८०
पुनरावृत्य वेगेन पार्षतः परवीरहा । धनञ्जयरथं क्षिप्रमारुह्य रथिनाम्बरः ।
प्रयातुकामः कर्णाय वारितो धर्म्मसूनुना । कर्णस्तु सुमहातेजाः सिंहनादविमिश्रितं ।
धनुः शब्दं महच्चक्रे दध्मौ तारेण चाम्बुजं । दृष्ट्वा विनिर्जितं युद्धे पार्षतं ते महारथाः ।
अमर्षवशमापन्नाः पाञ्चालाः सह सोमकैः । सूतपुत्रवधार्थाय शस्त्राण्यादाय सर्व्वशः ।
प्रययुः कर्णमुद्दिश्य मृत्युं कृत्वा निवर्त्तनं । कर्णस्यापि रथे वाहानन्यान् सूतोऽप्ययोजयत् । ७७८५
शङ्खवर्णान् महावेगान् सैन्धवान् साधुवाहिनः । लब्धलक्ष्यस्तु राधेयः पाञ्चालानां महारथान् ।

अभ्यपीडयदायस्तः शरैर्मेघइवाचलं । सा पीड्यमाना कर्णेन पाञ्चालानामनीकिनी ।
सम्प्राद्रवत् सुसंत्रस्ता सिंहेनेवार्द्दिता मृगी । प्रपतन्तो रथेभ्यश्च गजेभ्यश्च महीपते ।
रथेभ्यो रथिनस्तूर्णमदृश्यन्त समन्ततः । धावमानस्य योधस्य क्षुरप्रैश्च महामृधे ।
बाहू चिच्छेद वै कर्णः शिरश्चैव सकुण्डलं । ऊरू चिच्छेद चान्यस्य गजस्थस्य विशाम्पते । ७७९०
वाजिपृष्ठगतस्यापि भूमिष्ठस्य च मारिष । नाज्ञासिषुर्धावमाना बहवोऽन्ये महारथाः ।
संच्छिन्नान्यात्मगात्राणि वाहनानि च संयुगे । बध्यमानाः शरैर्घोरैः पाञ्चालाः सृञ्जयैः सह ।
तृणविस्पन्दनाच्चापि सूतपुत्रश्च मेनिरे । अपि स्वं समरे योधं धावमानं विचेतसः ।
कर्णमेवाभ्यमन्यन्त ततो भीता द्रवन्ति ते । तान्यनीकानि भग्नानि द्रवमाणानि भारत ।
अभ्यद्रवद्द्रुतं कर्णः सर्व्वतो विकिरञ्छरान् । बध्यन्ते समरे योधा धावमाना विचेतसः । ७७९५
नावभ्रुवन्नवस्थातुं काल्यमाना महात्मना । कर्णेनाभ्याहता राजन् पाञ्चालाः परमेषुभिः ।
द्रोणेन च दिशः सर्व्वा वीक्षमाणाः प्रदुद्रुवुः । ततो युधिष्ठिरो राजा स्वसैन्यं प्रेक्ष्य विद्रुतं ।
अपयाने मतिं कृत्वा फाल्गुनं वाक्यमब्रवीत् । पश्य कर्णं महेष्वासं धनुष्पाणिमवस्थितं ।
निशीथे दारुणे काले तपन्तमिव भास्करं । कर्णसायकनुन्नानां क्रोशतामेष निस्वनः ।
अनिशं श्रूयते पार्थ त्वद्बन्धूनामनाथवत् । यथा विसृजतश्चास्य सन्दधानस्य चाशुगान् । ७८००
पश्यामि नान्तरं पार्थ क्षपयिष्यति बान्धवान् । यदत्रानन्तरं कार्य्यं प्राप्तकालं प्रपश्यसि ।
कर्णस्य वधसंयुक्तं तत्कुरुष्व धनञ्जय । एवमुक्तो महाराज पार्थः कृष्णमथाब्रवीत् ।
भीतो धर्म्मसुतो राजा राधेयस्याद्य विक्रमात् । एवङ्गते प्राप्तकालं कर्णानीके पुनः पुनः ।
भवान् व्यवस्यतां शीघ्रं द्रवते हि वरूथिनी । द्रोणसायकनुन्नानां भग्नानां मधुसूदन ।
कर्णेन त्रास्यमानानामवस्थानं न विद्यते । पश्यामीह तथा कर्णं विचरन्तमभीतवत् । ७८०५
द्रवमाणान् रथोदारान् किरन्तं निशितैः शरैः । नैनं शक्ष्यामि संसोढुं चरन्तं रणमूर्द्धनि ।
प्रत्यक्षं वृष्णिशार्दूल पादस्पर्शमिवोरगः । स भवांस्तत्र यात्वाशु यत्र कर्णो महारथः ।
अहमेनं बधिष्यामि मां वैष मधुसूदन ।
॥ वासुदेव उवाच ॥ पश्यामि कर्णं कौन्तेय देवराजमिवाहवे । विचरन्तं नरव्याघ्रमतिमानुषविक्रमं ।
न तथाऽन्योऽस्ति समरे प्रत्युद्याता धनञ्जय । ऋते त्वां पुरुषव्याघ्र राक्षसाद्वा घटोत्कचात् । ७८१०
न तु तावदहं मन्ये प्राप्तकालं तवानघ । समागमं महाबाहो सूतपुत्रेण संयुगे ।
दीप्यमाना महोल्केव तिष्ठत्यस्य हि वासवी । त्वदर्थञ्च महाबाहो सूतपुत्रेण संयुगे ।
रक्ष्यते शक्तिरेषा हि रौद्रं रूपं बिभर्त्ति च । सततञ्चानुरक्तो वै हितैषी च घटोत्कचः ।
घटोत्कचस्तु राधेयं प्रत्युद्यातु महाबलः । स हि भीमेन बलिना जातः सुरपराक्रमः ।
तस्मिन्नस्त्राणि दिव्यानि राक्षसान्यासुराणि च । विजेष्यति रणे कर्णमिति मे नास्ति संशयः । ७८१५
एवमुक्तो महाबाहुः पार्थः पुष्करलोचनः । आजुहावाथ तद्रक्षस्तच्चासीत् प्रादुरग्रतः ।

कवची समरः खड्गी सधन्वा च विराजते। अभिवाद्य ततः कृष्णं पाण्डवञ्च धनञ्जयं।
अब्रवीत् स तदा गर्व्वादयमस्मि समाधिश मां। ततस्तं मेघसङ्काशं दीप्तास्यं दीप्तकुण्डलं।
अभ्यभाषत हैडिम्बं दाशार्हः प्रहसन्निव।
॥ वासुदेव उवाच ॥ घटोत्कच विजानीहि यत्त्वां वक्ष्यामि तच्छृणु। प्राप्तो विक्रमकालोऽयं तव नान्यस्य कस्यचित्। ७८२०
स त्वं निमज्जतां युद्धे पाण्डवानां प्लवो भव। विविधानि तवास्त्राणि सन्ति माया च राक्षसी।
पश्य कर्णेन हैडिम्ब पाण्डवानामनीकिनी। काल्यमाना यथा गावः पालेन रणमूर्द्धनि।
एष कर्णो महेष्वासो मतिमान् दृढविक्रमः। पाण्डवानामनीकेषु दर्पति क्षत्रियर्षभान्।
किरन्तः शरवर्षाणि महान्ति दृढधन्विनः। नाशक्नुवन्नवस्थातुं पीड्यमानाः शरार्च्चिषा।
निशीथे सूतपुत्रेण शरवर्षेण पीडिताः। एते द्रवन्ति पाञ्चालाः सिंहेनेवार्द्दिता मृगाः। ७८२५
एतस्यैवं प्रवृत्तस्य सूतपुत्रस्य संयुगे। निषेद्धा विद्यते नान्यस्त्वदृते भीमविक्रम।
स त्वं कुरु महाबाहो कर्म युक्तमिहात्मनः। मातुलानां पितॄणाञ्च तेजसोऽस्त्रबलस्य च।
एतदर्थं हि हैडिम्ब पुत्रानिच्छन्ति मानवाः। कथं न तारयेद्दुर्गात् स त्वं तारय बान्धवान्।
इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्घटोत्कच। इह लोकात् परे लोके तारयिष्यन्ति ये हिताः।
तवाप्यस्त्रबलं घोरं बलं युद्धे महात्मनः। सङ्ग्रामे युध्यमानस्य न समस्तव विद्यते। ७८३०
पाण्डवानां प्रभग्नानां कर्णेन निशि सायकैः। मज्जतां धार्त्तराष्ट्रेषु भव पारं परन्तप।
रात्रौ हि राक्षसा भूयो भवन्त्यमितविक्रमाः। बलवन्तः सुदुर्द्धर्षाः शूरा विक्रान्तयोधिनः।
जहि कर्णं महेष्वासं निशीथे मायया रणे। पार्था द्रोणं वधिष्यन्ति धृष्टद्युम्नपुरोगमाः।
॥ सञ्जय उवाच ॥ केशवस्य वचः श्रुत्वा बीभत्सुरपि राक्षसं। अभ्यभाषत कौरव्य घटोत्कचमरिन्दमं।
घटोत्कच भवांश्चैव दीर्घबाहुश्च सात्यकिः। मतो मे सर्व्वसैन्येषु भीमसेनश्च पाण्डवः। ७८३५
स भवान् यातु कर्णेन द्वैरथं संयुगे निशि। सात्यकिः पृष्ठतो गोप्ता भविष्यति महारथः।
जहि कर्णं रणे शूरं सात्वतेन सहायवान्। यथेन्द्रस्तारकं पूर्व्वं स्कन्देन सह जघ्निवान्।
॥ घटोत्कच उवाच ॥ अलमेवास्मि कर्णाय द्रोणायालञ्च भारत। अन्येषां क्षत्रियाणां वै कृतास्त्राणां महात्मनां।
अद्य दास्यामि सङ्ग्रामं सूतपुत्राय तं निशि। यं जनाः सम्प्रवक्ष्यन्ति यावद्भूमिर्धरिष्यति।
न चात्र शूरान् मोक्ष्यामि न भीतान् न कृताञ्जलीन्। सर्व्वानेव वधिष्यामि राक्षसं धर्म्ममास्थितः। ७८४०
॥ सञ्जय उवाच ॥ एवमुक्त्वा महाबाहुर्हैडिम्बः परवीरहा। अभ्ययात्तुमुले कर्णं तव सैन्यं विभीषयन्।
तमापतन्तं सङ्क्रुद्धं दीप्तास्यं दीप्तमूर्द्धजं। प्रहसन् पुरुषव्याघ्रः प्रतिजग्राह सूतजः।
तयोः समभवद्युद्धं कर्णराक्षसयोर्म्मृधे। गर्ज्जतो राजशार्दूल शक्रप्रह्लादयोरिव।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि घटोत्कचयाने चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥
॥ सञ्जय उवाच ॥ दृष्ट्वा घटोत्कचं राजन् सूतपुत्ररथम्प्रति। प्रयातं महाबाहुं जिघांसुं कर्णमाहवे।
अब्रवीत्तव पुत्रस्तु दुःशासनमिदं वचः। एतद्रक्षो रणे दृष्ट्वा कर्णस्य विक्रमं। ७८४५

अभियाति रणे कर्णं तदारक्ष महारथं। वृतः सैन्येन महता याहि यत्र महाबलः।
कर्णो वैकर्त्तनो युद्धे राक्षसेन युयुत्सति। रक्ष कर्णं रणे यत्तो वृतः सैन्येन मानद।
मा कर्णं राक्षसो घोरः प्रमादान्नाशयिष्यति। एतस्मिन्नन्तरे राजन् जटासुरसुतो बली।
दुर्य्योधनमुपागम्य प्राह प्रहरताम्बरः। दुर्य्योधन तवामित्रान् प्रख्यातान् युद्धदुर्म्मदान्।
पाण्डवान् हन्तुमिच्छामि त्वयाज्ञप्तः सहानुगान्। जटासुरो मम पिता रक्षसाग्र्यो बली पुरा। ७८१०
प्रयुज्य कर्म्म रक्षोघ्नं क्षुद्रैः पार्थैर्निपातितः। तस्यापचितिमिच्छामि शत्रुशोणितपूजया।
शत्रुमांसैश्च राजेन्द्र मामनुज्ञातुमर्हसि। तमब्रवीत्ततो राजा प्रीयमाणः पुनः पुनः।
द्रोणकर्णादिभिः सार्द्धं पर्य्याप्तोऽहं द्विषज्जये। त्वन्तु गच्छ मयाज्ञप्तो जहि युद्धे घटोत्कचं।
राक्षसं क्रूरकर्म्माणं रक्षो मानुषसम्भवं। पाण्डवानां हितं नित्यं हस्त्यश्वरथघातिनं।
वैहायसगतं युद्धे प्रेषयेयमसादनं। तथेत्युक्त्वा महाकायः समाहूय घटोत्कचं। ७८१५
जाटासुरिर्भैमसेनिं नानाशस्त्रैरवाकिरत्। अलम्बुषञ्च कर्णञ्च कुरुसैन्यञ्च दुस्तरं।
हैडिम्बिः प्रममाथैको महावातोऽम्बुदानिव। ततो मायाबलं दृष्ट्वा रक्षस्तूर्णमलम्बुषः।
घटोत्कचं शरव्रातैर्नानालिङ्गैः समाकिरत्। विद्ध्वा तु बहुभिर्व्वाणैर्भैमसेनिमलम्बुषः।
व्यद्रावयच्छरैस्तूर्णं पाण्डवानामनीकिनीं। तेन विद्राव्यमाणानि पाण्डुसैन्यानि भारत।
निशीथे विप्रकीर्य्यन्त वातनुन्ना घना इव। घटोत्कचशरैर्नुन्ना तथैव तव वाहिनी। ७८२०
निशीथे प्राद्रवद्राजन्नुत्सृज्योल्का सहस्रशः। अलम्बुषस्ततः क्रुद्धो भैमसेनिं महामृधे।
आजघ्ने बहुभिर्व्वाणैस्तोत्रैरिव महाद्विपं। तिलशस्तस्य ततो यानं सूतं सर्व्वायुधानि च।
घटोत्कचः प्रचिच्छेद प्राहसच्चातिभैरवं। ततः कर्णं शरव्रातैः कुरूंश्चापि सहस्रशः।
अलम्बुषञ्चाभ्यवर्षन्मेघो मेरुमिवाचलं। ततः सञ्चुक्षुभे सैन्यं कुरूणां राक्षसार्द्दितं।
उपर्य्युपरि चान्योऽन्यं चतुरङ्गं ममर्द्द ह। जाटासुरिर्महाराज विरथो हतसारथिः। ७८२५
घटोत्कचं रणे क्रुद्धो मुष्टिनाऽभ्यहनच्च सः। मुष्टिनाऽभ्याहतः सोऽथ प्रचचाल घटोत्कचः।
क्षितिकम्पे यथा शैलः सवृक्षक्षुपगुल्मवान्। ततः स परिघाभेन द्विषद्घ्नेन तु बाहुना।
जाटासुरिं भैमसेनिरवधीत् क्रोधमूर्च्छितः। ततः प्रमथ्य तं क्रुद्धं तूर्णं हैडिम्बिराक्षिपत्।
द्वाभ्यां भुजाभ्यां संगृह्य निष्पिपेष महीतले। जाटासुरिर्मोचयित्वा आत्मानञ्च घटोत्कचात्।
पुनरुत्थाय वेगेन घटोत्कचमुपाद्रवत्। अलम्बुषोऽपि विक्षिप्य समुत्क्षिप्य च राक्षसं। ७८३०
घटोत्कचं रणे रोषान्निष्पिपेष महीतले। तयोः समभवद्युद्धं गर्ज्जतोरतिकाययोः।
घटोत्कचालम्बुषयोस्तुमुलं लोमहर्षणं। विशेषयन्तावन्योऽन्यं मायाभिरतिमानिनौ।
युयुधाते महावीर्य्याविन्द्रवैरोचनाविव। पावकाम्बुनिधी भूत्वा पुनर्गरुडतक्षकौ।
पुनर्म्मेघमहावातौ पुनर्व्वज्रमहाचलौ। पुनः कुञ्जरशार्दूलौ पुनः स्वर्भानुभास्करौ।
एवं मायाशतसृजावन्योन्यवधकाङ्क्षिणौ। भृशञ्चित्रमयुध्येतामलम्बुषघटोत्कचौ। ७८३५

परिघैश्च गदाभिश्च प्रासमुद्गरपट्टिशैः । मुषलैः पर्व्वताग्रैश्च तावन्योन्यं विजघ्नतुः ।
हयाभ्याञ्च गजाभ्याञ्च पदातिरथिनौ पुनः । युयुधाते महामायौ राक्षसानां प्रवरौ युधि ।
ततो घटोत्कचो राजन्नलम्बुषवधेप्सया । उत्पपात भृशं क्रुद्धः श्येनवन्निपपात च ।
गृहीत्वा च महाकायं राक्षसेन्द्रमलम्बुषं । उद्यतं न्यवधीद्भूमौ मयं विष्णुरिवाहवे ।
ततो घटोत्कचः खड्गमुद्गृह्याद्भुतदर्शनं । रौद्रस्य कायाच्छिरो भीमं विकृतदर्शनं । ७८८०
स्फुरतस्तस्य समरे नदतश्चातिभैरवं । चिच्छेद महाराज शत्रोरमितविक्रमः ।
शिरस्तच्चापि सङ्गृह्य केशेषु रुधिरोक्षितं । ययौ घटोत्कचस्तूर्णं दुर्य्योधनरथम्प्रति ।
अभ्येत्य च महाबाहुः स्मयमानः स राक्षसः । शिरो रथेऽस्य निक्षिप्य विकृताननमूर्द्धजं ।
प्राणदद्भैरवं नादं प्रावृषीव बलाहकः । अब्रवीच्च ततो राजन् दुर्य्योधनमिदं वचः ।
एष ते निहतो बन्धुस्त्वया संदृष्टविक्रमः । पुनर्द्रष्टासि कर्णस्य निष्ठामेतां तथात्मनः । ७८८५
स्वधर्म्ममर्थं कामञ्च त्रितयं योऽभिवाञ्छति । रिक्तपाणिर्न पश्येत राजानं ब्राह्मणं स्त्रियं ।
सुप्रीतस्तावत् तिष्ठस्व यावत् कर्णं बधाम्यहं । एवमुक्त्वा ततः प्रायात् कर्णम्प्रति नरेश्वर ।
किरञ्छरशतांस्तीक्ष्णान् विमुञ्चन् कर्णमूर्द्धनि । ततः समभवद्युद्धं घोररूपं भयानकं ।
विस्मापनं महाराज नरराक्षसयोर्म्मृधे ।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि अलम्बुषवधे पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

॥ धृतराष्ट्र उवाच ॥ यत्तद्वैकर्त्तनः कर्णो राक्षसश्च घटोत्कचः । निशीथे समसज्जेतां तद्युद्धमभवत् कथं । ७८९०
कीदृशञ्चाभवद्रूपं तस्य घोरस्य रक्षसः । रथश्च कीदृशस्तस्य हयाः सर्व्वायुधानि च ।
किम्प्रमाणा हयास्तस्य रथकेतुर्धनुस्तथा । कीदृशं वर्म्म चैवास्य शिरस्त्राणञ्च कीदृशं ।
पृष्टस्त्वमेतदाचक्ष्व कुशलो ह्यसि सञ्जय ।
॥ सञ्जय उवाच ॥ लोहिताक्षो महाकायस्ताम्रास्यो निम्नितोदरः । ऊर्द्ध्वरोमा हरित्श्मश्रुः शङ्कुकर्णो महाहनुः ।
आकर्णाद्दारितास्यश्च तीक्ष्णदंष्ट्रः करालवान् । सुदीर्घताम्रजिह्वोष्ठो लम्बभ्रूः स्थूलनासिकः । ७८९५
नीलाङ्गो लोहितग्रीवो गिरिवर्ष्मा भयङ्करः । महाकायो महाबाहुर्म्महाशीर्षो महाबलः ।
विकृतः परुषस्पर्शो विकटोद्बद्धपिण्डकः । स्थूलस्फिग्गूढनाभिश्च शिथिलोपचयो महान् ।
तथैव हस्ताभरणो महामायोऽङ्गदी तथा । उरसा धारयन्निष्कमग्निमालां यथाऽचलः ।
तस्य हेममयञ्चित्रं बहुरूपकशोभितं । तोरणप्रतिमं शुभ्रं किरीटं मूर्द्ध्न्यशोभत ।
कुण्डले बालसूर्य्याभे मालां हेममयीं शुभां । धारयन् विपुलं कांस्यं कवचञ्च महाप्रभं । ७९००
किङ्किणीशतनिर्घोषं रक्तध्वजपताकिनं । ऋक्षचर्म्मावनद्धाङ्गं नल्वमात्रं महारथं ।
सर्व्वायुधवरोपेतमास्थितं ध्वजमालिनं । अष्टचक्रसमायुक्तं मेघगम्भीरनिस्वनं ।
मत्तमातङ्गसङ्काशा लोहिताक्षा विभीषणाः । कामवर्णजवोपेता बलवन्तस्य ते हयाः ।
वहन्तो राक्षसं घोरं बलवन्तो जितश्रमाः । विपुलाभिः सटाभिस्ते ह्रेषमाणा मुहुर्म्मुहुः ।

राक्षसोऽस्य विरूपाक्षः सूतो दीप्तास्यकुण्डलः। रश्मिभिः सूर्यरश्म्याभैः सञ्जग्राह हयान्रणे। ७९०५
स तेन सहितस्तस्थावरुणेन यथा रविः। संसक्त इव चाभ्रेण यथाद्रिर्महता महान्।
दिवस्पृक् सुमहाकेतुः स्यन्दनेऽस्य समुच्छ्रितः। रक्तोत्तमाङ्गः क्रव्यादो गृध्रः परमभीषणः।
वासवाशनिनिर्घोषं दृढज्यमतिविक्षिपन्। व्यक्तं किष्कुपरीणाहं द्वादशारत्निकार्मुकं।
रथाक्षमात्रैरिषुभिः सर्व्वाः प्रच्छादयन् दिशः। तस्यां वीरापहारिण्यां निशायां कर्णमभ्ययात्।
तस्य विक्षिपतश्चापं रथे विष्टभ्य तिष्ठतः। अश्रूयत धनुर्घोषो विस्फूर्जितमिवाशनेः। ७९१०
तेन वित्रास्यमानानि तव सैन्यानि भारत। समकम्पन्त सर्व्वाणि सिन्धोरिव महोर्म्मयः।
तमापतन्तं सम्प्रेक्ष्य विरूपाक्षं विभीषणं। उत्स्मयन्निव राधेयस्त्वरमाणो न्यवारयत्।
ततः कर्णोऽभ्ययादेनमस्यन्नस्यन्तमन्तिकात्। मातङ्गमिव मातङ्गो यूथर्षभ इवर्षभं।
स सन्निपातस्तुमुलस्तयोरासीद्विशाम्पते। कर्णराक्षसयोराजन्निन्द्रशम्बरयोरिव।
तौ प्रगृह्य महाभीमे धनुषी भीमनिस्वने। प्राच्छादयेतामन्योन्यं तक्षमाणौ महेषुभिः। ७९१५
ततः पूर्णायतोत्सृष्टैः शरैः सन्नतपर्व्वभिः। व्यदारयेतामन्योन्यं कांस्ये निर्भिद्य वर्म्मणी।
तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ। रथशक्तिभिरन्योन्यं विशिखैश्च ततक्षतुः।
संछिन्दन्तौ च गात्राणि सन्दधानौ च सायकान्। धक्ष्यमाणौ शरव्रातैर्दुष्प्रेक्ष्यौ च बभूवतुः।
तौ शरक्षतसर्व्वाङ्गौ शोणितौघपरिप्लुतौ। विभ्राजेतां यथा वारिप्रस्रवौ गैरिकाचलौ।
तौ शराग्रविभिन्नाङ्गौ निर्भिन्दन्तौ परस्परं। नाकम्पयेतामन्योन्यं यतमानौ महारथौ। ७९२०
तत्प्रवृत्तं निशायुद्धं चिरं सममिवाभवत्। प्राणयोर्दीव्यतोराजन् कर्णराक्षसयोर्मृधे।
तस्य सन्दधतस्तीक्ष्णान् शरांश्चासक्तमस्यतः। धनुर्घोषेण वित्रस्ताः स्वे परे च तदाऽभवन्।
घटोत्कचं तदा कर्णो न विशेषयते नृप। प्रादुश्चक्रे ततो दिव्यमस्त्रमस्त्रविदाम्वरः।
कर्णेन सन्धितं दृष्ट्वा दिव्यमस्त्रं घटोत्कचः। प्रादुश्चक्रे ततो मायां राक्षसीं राक्षसेश्वरः।
शूलपर्व्वतधारिण्या शैलमुद्गरहस्तया। रक्षसां घोररूपाणां महत्या सेनया वृतः। ७९२५
समुद्यतमहाशस्त्रं दृष्ट्वा ते व्यथिता नृपाः। भूतान्तकमिवायान्तं कालदण्डोग्रधारिणं।
घटोत्कचप्रमुक्तेन सिंहनादेन भीषिताः। प्रसुस्रुवुर्गजा मूत्रं विव्यथुश्च नरा भृशं।
ततोऽश्मवृष्टिरत्युग्रा महत्यासीत् समन्ततः। अर्द्धरात्राधिकबलैर्व्विमुक्ता राक्षसैर्भृशं।
आयसानि च चक्राणि भुशुण्ड्यः शक्तितोमराः। पतन्त्यविरलाः शूलाः शतघ्न्यः पट्टिशास्तथा।
तमुग्रमतिरौद्रञ्च दृष्ट्वा युद्धं नराधिपाः। पुत्राश्च तव योधाश्च व्यथिता विप्रदुद्रुवुः। ७९३०
तत्रैकोऽस्त्रबलश्लाघी कर्णो मानी न विव्यथे। व्यधमत् स शरैर्मायां घटोत्कचविनिर्म्मितां।
मायान्तु निहतां दृष्ट्वा अमर्षात् स घटोत्कचः। विससर्ज्ज शरान् घोरान् सूतपुत्रवधेप्सया।
ततस्ते रुधिराभ्यक्ता भित्त्वा कर्णं महाहवे। विविशुर्द्धरणीं वाणाः संक्रुद्धा इव पन्नगाः।
सूतपुत्रस्तु संक्रुद्धो लघुहस्तः प्रतापवान्। घटोत्कचमतिक्रम्य विभेद दशभिः शरैः।

घटोत्कचो विनिर्भिन्नः सूतपुत्रेण मर्म्मसु । चक्रं दिव्यं सहस्रारमगृह्णाद्व्यथितो भृशं ।  ७९२५
क्षुरान्तं बालसूर्य्याभं मणिरत्नविभूषितं । चिक्षेपाधिरथेः क्रुद्धो भैमसेनिर्जिघांसया ।
प्रविद्धमतिवेगेन विच्छिन्नं कर्णसायकैः । अभाग्यस्येव सङ्कल्पस्तन्मोघमपतद्भुवि ।
घटोत्कचः सुसंक्रुद्धो दृष्ट्वा चक्रं निपातितं । कर्णं प्राच्छादयद्बाणैः स्वर्भानुरिव भास्करं ।
सूतपुत्त्रस्त्वसम्भ्रान्तो रुद्रोपेन्द्रेन्द्रविक्रमः । घटोत्कचरथं तूर्णं छादयामास पत्रिभिः ।
घटोत्कचेन तु गदा गजहेमाङ्गदा तदा । क्षिप्ता भ्राम्य शरैस्सापि कर्णेनाभ्याहताऽपतत् ।  ७९३०
ततोऽन्तरीक्षमुत्पत्य कालमेघ इवोन्नदन् । प्रववर्ष महाकायो द्रुमवर्षं नभस्तलात् ।
ततो मायाविनं कर्णो भीमसेनसुतं दिवि । मार्गणैरभिविव्याध घनं सूर्य्य इवांशुभिः ।
तस्य सर्व्वान् हयान् हत्वा सञ्छिद्य शतधा रथं । अभ्यवर्षच्छरैः कर्णः पर्जन्य इव वृष्टिमान् ।
न तस्यासीदनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरं । सोऽदृश्यत मुहूर्त्तेन श्वाविच्छललितो यथा ।
न हयान्न रथं तस्य न ध्वजं न घटोत्कचं । दृष्टवन्तः स्म समरे शरौघेनाभिसंवृतं ।  ७९३५
स तु कर्णस्य तद्दिव्यमस्त्रमस्त्रेण शातयन् । मायायुद्धेन मायावी सूतपुत्त्रमयोधयत् ।
सोऽयोधयत्तदा कर्णं मायया लाघवेन च । अलक्ष्यमाणानि दिवि शरजालानि सन्यतन् ।
भैमसेनिर्महामायो मायया कुरुसत्तम । विचचारात्मनात्मानं मोहयन्निव भारत ।
स तु कृत्वा विरूपाणि वदनान्यशुभानि च । अग्रसत् सूतपुत्त्रस्य दिव्यान्यस्त्राणि वीर्य्यवान् ।
पुनश्चापि महाकायः सञ्छिन्नः शतधा रणे । गतसत्त्वो निरुत्साहः पतितः समदृश्यत ।  ७९४०
हतं तं मन्यमानाश्च प्राणेदुः कुरुपुङ्गवाः । अथ देहैर्नवैरन्यैर्दिक्षु सर्व्वास्वदृश्यत ।
पुनश्चापि महाकायः शतशीर्षः शतोदरः । व्यदृश्यत महाराज मैनाक इव पर्व्वतः ।
अङ्गुष्ठमात्रो भूत्वा च पुनरेव स राक्षसः । सागरोर्म्मिरिवोद्धूतस्तिर्य्यगूर्द्ध्वमवर्त्तत ।
वसुधां दारयित्वा च पुनरप्सु न्यमज्जत । अदृश्यत तदा तत्र पुनरुन्मज्जितोऽन्यतः ।
सोऽवतीर्य्य पुनस्तस्थौ रथं हेमपरिष्कृतं । क्षितिं द्याञ्च दिशश्चैव माययाभ्येत्य दंशितः ।  ७९४५
गत्वा कर्णरथाभ्याशं विचलत्कुण्डलाननः । प्राह वाक्यमसम्भ्रान्तः सूतपुत्त्रं विशाम्पते ।
तिष्ठेदानीं क्व मे जीवन् सूतपुत्त्र गमिष्यसि । युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ।
इत्युक्त्वा रोषताम्राक्षं रक्षः क्रूरपराक्रमं । उत्पपातान्तरीक्षञ्च जहास च सुविस्तरं ।
कर्णमभ्यहनच्चैव गजेन्द्रमिव केसरी । रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः ।
रथिनामृषभं कर्णं धाराभिरिव तोयदः । शरवृष्टिञ्च तं कर्णो दूरात्प्राप्तामशातयत् ।  ७९५०
दृष्ट्वा च विहतां मायां कर्णेन भरतर्षभ । घटोत्कचस्ततो मायां ससर्ज्जान्तर्हितः पुनः ।
सोऽभवद्गिरिरत्युच्चः शिखरैस्तरुसङ्कटैः । शूलप्रासासिमुषलैर्जलप्रस्रवणो महान् ।
तमञ्जनचयप्रख्यं कर्णो दृष्ट्वा महीधरं । प्रपातैरायुधान्युग्राण्युद्वहन्तं न चुक्षुभे ।
स्मयन्निव ततः कर्णो दिव्यमस्त्रमुदैरयत् । ततः सोऽस्त्रेण शैलेन्द्रो विक्षिप्तो वै व्यनश्यत ।

ततः स तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि । कर्णमुद्दिश्य चरत्युग्रः शस्त्रवृष्टिमवाकिरत् ।    ७८६५
अथ सन्धाय वायव्यमस्त्रमस्त्रविदाम्बरः । व्यधमत् कालमेघं तं कर्णो वैकर्त्तनो वृषः ।
समार्गणगणैः कर्णो दिशः प्रच्छाद्य सर्व्वतः । अभ्यहनत्तं महाराज घटोत्कचसमीरितं ।
ततः प्रहस्य समरे भैमसेनिर्महाबलः । प्रादुश्चक्रे महामायां कर्णम्प्रति महारथं ।
स दृष्ट्वा पुनरायान्तं रथेन रथिनाम्वरं । घटोत्कचमसम्भ्रान्तं राक्षसैर्बहुभिर्वृतं ।
सिंहशार्दूलसदृशैर्मत्तमातङ्गविक्रमैः । गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैस्तथा ।    ७८७०
नानाशस्त्रधरैर्घोरैर्नानाकवचभूषणैः । वृतं घटोत्कचं क्रूरैर्मरुद्भिरिव वासवं ।
दृष्ट्वा कर्णो महेष्वासो योधयामास राक्षसं । घटोत्कचस्ततः कर्णं विद्ध्वा पञ्चभिराशुगैः ।
ननाद भैरवं नादं भीषयन् सर्व्वपार्थिवान् । भूयश्चाञ्जलिकेनाथ समार्गणगणं महत् ।
कर्णहस्तस्थितञ्चापं चिच्छेदाशु घटोत्कचः । अथान्यद्धनुरादाय दृढं भारसहं महत् ।
विचकर्ष बलात् कर्ण इन्द्रायुधमिवोच्छ्रितं । ततः कर्णो महाराज प्रेषयामास सायकान् ।    ७८७५
सुवर्णपुङ्खाञ्छत्रुघ्नान् खचरान् राक्षसान् प्रति । तद्बाणैरर्द्दितं यूथं रक्षसां पीनवक्षसां ।
सिंहेनेवार्द्दितं वन्यं गजानामाकुलं कुलं । विधम्य राक्षसान् कर्णः साश्वसूतायुधान् विभुः ।
ददाह भगवान् वह्निर्भूतानीव युगक्षये । स हत्वा राक्षसीं सेनां शुशुभे सूतनन्दनः ।
पुरेव त्रिपुरं दग्ध्वा दिवि देवो महेश्वरः । तेषु राजसहस्रेषु पाण्डवेयेषु मारिष ।
नैनं निरीक्षितुमपि कश्चिच्छक्नोति पार्थिव । ऋते घटोत्कचाद्राजन् राक्षसेन्द्रान्महाबलात् ।    ७८८०
भीमवीर्य्यबलोपेतात् क्रुद्धाद्वैवस्वतादिव । तस्य क्रुद्धस्य नेत्राभ्यां पावकः समजायत ।
महोल्काभ्यां यथा राजन् सार्च्चिषः स्नेहबिन्दवः । तलं तलेन संहत्य सन्दश्य दशनच्छदं ।
रथमास्थाय च पुनर्मायया निर्म्मितं ततः । युक्तं गजनिभैर्वाहैः पिशाचवदनैः खरैः ।
स सूतमब्रवीत् क्रुद्धः सूतपुत्राय मां वह । स ययौ घोररूपेण रथेन रथिनाम्वरः ।
द्वैरथं सूतपुत्रेण पुनरेव विशाम्पते । स चिक्षेप पुनः क्रुद्धः सूतपुत्राय राक्षसः ।    ७८८५
अष्टचक्रां महाघोरामशनिं रुद्रनिर्म्मितां । तामवप्लुत्य जग्राह कर्णो न्यस्य रथे धनुः ।
चिक्षेप चैनां तस्यैव स्यन्दनात् सोऽवपुप्लुवे । साश्वसूतध्वजं यानं भस्म कृत्वा महाप्रभा ।
विवेश वसुधां भित्वा सुरास्तत्र विसिस्मियुः । कर्णन्तु सर्व्वभूतानि पूजयामासुरञ्जसा ।
यदवप्लुत्य जग्राह देवसृष्टां महाशनीं । एवं कृत्वा रणे कर्ण आरुरोह रथं पुनः ।
ततो मुमोच विशिखान् सूतपुत्रः परन्तपः । अशक्यं कर्त्तुमन्येन सर्व्वभूतेषु मानद ।    ७८९०
यदकार्षीत्तदा कर्णः सङ्ग्रामे भीमदर्शने । स हन्यमानो नाराचैर्धाराभिरिव पर्व्वतः ।
गन्धर्व्वनगराकारः पुनरन्तरधीयत । एवं स वै महाकायो मायया लाघवेन च ।
अस्त्राणि तानि दिव्यानि जघान रिपुसूदनः । निहन्यमानेष्वस्त्रेषु मायया तेन रक्षसा ।
असम्भ्रान्तस्ततः कर्णस्तद्रक्षः प्रत्ययोधयत् । ततः क्रुद्धो महाराज भैमसेनिर्महाबलः ।

चकार बहुधात्मानं भीमकर्म्मा महाबलः । ततो दिशः समापेतुः सिंहव्याघ्रतरक्षवः । ७९९५
अग्निजिह्वाश्च भुजगा विहगाश्चाप्ययोमुखाः । स कीर्य्यमाणो निशितैः कर्णचापच्युतैः शरैः ।
नगराजप्रकाशस्तत्रैवान्तरधीयत । राक्षसाश्च पिशाचाश्च यातुधानास्तथैव च ।
शालावृकाश्च बहवो वृकाश्च विकृताननाः । ते कर्णं भक्षयिष्यन्तः सर्व्वतः समुपाद्रवन् ।
अथैनं वाग्भिरुग्राभिस्त्रासयाञ्चक्रिरे तदा । उद्यतैर्बहुभिर्घोरैरायुधैः शोणितोक्षितैः ।
तेषामनेकैरेकैकं कर्णो विव्याध सायकैः । प्रतिहत्य तु तां मायां दिव्येनास्त्रेण राक्षसीं । ८०००
आजघान हयान् घोरान् शरैः सन्नतपर्व्वभिः । ते भग्ना विकृताङ्गाश्च विच्छिन्नपृष्ठाश्च सायकैः ।
वसुधामभ्यपद्यन्त पश्यतस्तस्य रक्षसः । स भग्नमायो हैडिम्बिः कर्णं वैकर्त्तनं ततः ।
एष ते विदधे मृत्युमित्युक्त्वाऽन्तरधीयत ।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि कर्णघटोत्कचयुद्धे षट्सप्ततितमोऽध्यायः ॥ १७६ ॥
॥ सञ्जय उवाच ॥ तस्मिंस्तथा वर्त्तमाने कर्णराक्षसयोर्मृधे । अलायुधो राक्षसेन्द्रो वीर्य्यवानभ्यवर्त्तत ।
महत्या सेनया युक्तः सुयोधनमुपागमत् । राक्षसानां विरूपाणां सहस्रैः परिवारितः । ८००५
नानारूपधरैर्वीरैः पूर्व्ववैरमनुस्मरन् । तस्य ज्ञातिर्हि विक्रान्तो ब्राह्मणादो बको हतः ।
किर्म्मीरश्च महातेजा हिडिम्बश्च तथा सखा । स दीर्घकालाध्युषितं पूर्व्ववैरमनुस्मरन् ।
विज्ञायैतन्निशायुद्धं जिघांसुर्भीममाहवे । स मत्त इव मातङ्गः संक्रुद्ध इव चोरगः ।
दुर्य्योधनमिदं वाक्यमब्रवीद्युद्धलालसः । विदितं ते महाराज यथा भीमेन राक्षसाः ।
हिडिम्बबककिर्म्मीरा निहता मम बान्धवाः । परामर्शश्च कन्याया हिडिम्बायाः कृतः पुरा । ८०१०
किमन्यद्राक्षसानन्यानस्मांश्च परिभूय ह । तमहं सगणं राजन् सवाजिरथकुञ्जरं ।
हैडिम्बिञ्च सहामात्यं हन्तुमभ्यागतः स्वयं । अद्य कुन्तीसुतान् सर्व्वान् वासुदेवपुरोगमान् ।
हत्वा सम्भक्षयिष्यामि सर्व्वैरनुचरैः सह । निवारय बलं सर्व्वं वयं योत्स्याम पाण्डवान् ।
तस्य तद्वचनं श्रुत्वा हृष्टो दुर्य्योधनस्तदा । प्रतिपूज्याब्रवीद्वाक्यं भ्रातृभिः परिवारितः ।
त्वां पुरस्कृत्य सगणं वयं योत्स्यामहे परान् । नहि वैरान्तमनसः स्थास्यन्ति मम सैनिकाः । ८०१५
एवमस्त्विति राजानमुक्त्वा राक्षसपुङ्गवः । अभ्ययात्त्वरितो भीमं सहितः पुरुषादकैः ।
दीप्यमानेन वपुषा रथेनादित्यवर्च्चसा । तादृशेनैव राजेन्द्र यादृशेन घटोत्कचः ।
तस्याप्यतुलनिर्घोषो बहुतोरणचित्रितः । ऋक्षचर्म्मावनद्धाङ्गो नल्वमात्रो महारथः ।
तस्यापि तुरगाः शीघ्रं हस्तिकायाः खरस्वराः । शतं युक्ता महाकाया मांसशोणितभोजनाः ।
तस्यापि रथनिर्घोषो महामेघरवोपमः । तस्यापि सुमहच्चापं दृढज्यं बलवत्तरं । ८०२०
तस्याप्यक्षसमा बाणा रुक्मपुङ्खाः शिलाशिताः । सोऽपि वीरो महाबाहुर्यथैव स घटोत्कचः ।
तस्यापि गोमायुबलाभिगुप्तो बभूव केतुर्ज्वलनार्कतुल्यः । स चापि रूपेण घटोत्कचस्य श्रीमत्तमो व्याकुलदीपितास्यः ।
दीप्ताङ्गदो दीप्तकिरीटमाली बद्धस्रगुष्णीषनिबद्धखड्गः । गदी भुशुण्डी मुषली हली च शरासनी वारणतुल्यवर्ष्मा ।

रथेन तेनानलवर्चसा तदा विद्रावयन् पाण्डववाहिनीं तां । रराज संख्ये परिवर्त्तमानो विद्युन्माली मेघ इवान्तरीक्षे ।
ते चापि सैन्यप्रवरा नरेन्द्रा महाबला वर्म्मिणश्चर्म्मिणश्च । हर्षान्विता युयुधुस्तत्र राजन् समन्ततः पाण्डवयोधवीराः । ८०२१

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि अलायुधयुद्धे सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

॥ सञ्जय उवाच ॥ तमागतमभिप्रेक्ष्य भीमकर्म्माणमाहवे । हर्षमाहारयाञ्चक्रुः कुरवः सर्व्व एव ते ।

तथैव तव पुत्रास्ते दुर्य्योधनपुरोगमाः । अप्लवाः प्लवमासाद्य तर्त्तुकामा इवार्णवं ।

पुनर्जातमिवात्मानं मन्वानाः पार्थिवास्तदा । अलायुधं राक्षसेन्द्रं स्वागतेनाभ्यपूजयन् ।

तस्मिंस्त्वमानुषे युद्धे वर्त्तमाने भयावहे । कर्णराक्षसयोर्नक्तं दारुणप्रतिदर्शने ।

उपप्रैक्षन्त पाञ्चालाः स्मयमानाः सराजकाः । तथैव तावका राजन् रक्षमाणास्ततस्ततः । ८०२६

चुक्रुशुर्नेदमस्तीति द्रोणद्रौणिकृपादयः । तत्कर्म्म दृष्ट्वा सम्भ्रान्ता हैडिम्बस्य रणाजिरे ।

सर्व्वमाविग्नमभवत् हाहाभूतमचेतनं । तव सैन्यं महाराज निराशं कर्णजीविते ।

दुर्य्योधनस्तु सम्प्रेक्ष्य कर्णमार्त्तिं परां गतं । अलायुधं राक्षसेन्द्रमाहूयेदमथाब्रवीत् ।

एष वैकर्त्तनः कर्णो हैडिम्बेन समागतः । कुरुते कर्म्म सुमहद्यदस्यौपयिकं मृधे ।

पश्यैतान् पार्थिवान् शूरान् निहतान् भैमसेनिना । नानाशस्त्रैरभिहतान् पादपानिव दन्तिना । ८०३१

तवैष भागः समरे राजमध्ये मया कृतः । तवैवानुमते वीर तं विक्रम्य निवर्हय ।

पुरा वैकर्त्तनं कर्णमेष पापो घटोत्कचः । मायाबलमुपाश्रित्य मारयत्यरिकर्षण ।

एवमुक्तः स राज्ञा तु राक्षसस्तीव्रविक्रमः । तथेत्युक्त्वा महाबाहुर्घटोत्कचमुपाद्रवत् ।

ततः कर्णं समुत्सृज्य भैमसेनिरपि प्रभो । प्रत्यमित्रमुपायान्तं मर्द्दयामास मार्गणैः ।

ततः समभवद्युद्धं क्रुद्धयो राक्षसेन्द्रयोः । मत्तयोर्वाशिताहेतोर्द्विपयोरिव कानने । ८०३६

राक्षसाद्विप्रमुक्तस्तु कर्णोऽपि रथिनाम्वरः । अभ्यद्रवद्भीमसेनं रथेनादित्यवर्चसा ।

तमायान्तमनादृत्य दृष्ट्वा ग्रस्तं घटोत्कचं । अलायुधेन समरे सिंहेनेव गवाम्पतिं ।

रथेनादित्यवपुषा भीमः प्रहरताम्वरः । किरन् शरौघान् प्रययावलायुधरथम्प्रति ।

तमायान्तमभिप्रेक्ष्य स तदालायुधः प्रभो । घटोत्कचं समुत्सृज्य भीमसेनं ततोऽभ्ययात् ।

तं भीमः सहसाऽभ्येत्य राक्षसान्तकरः प्रभो । सगणं राक्षसेन्द्रं तं शरवर्षैरवाकिरत् । ८०४१

तथैवालायुधो राजंश्छित्वा धौतैरजिह्मगैः । अभ्यवर्षत कौन्तेयं पुनः पुनररिन्दमः ।

तथा ते राक्षसाः सर्व्वे भीमसेनमुपाद्रवन् । नानाप्रहरणा भीमास्त्वत्सुतानां जयैषिणः ।

स ताड्यमानो बहुभिर्भीमसेनो महाबलः । पञ्चभिः पञ्चभिः सर्व्वांस्तानविध्यच्छितैः शरैः ।

ते युध्यमाना भीमेन राक्षसाः क्रूरबुद्धयः । विनेदुश्च महानादान् दुद्रुवुश्च दिशो दश ।

तांस्त्रास्यमानान् भीमेन दृष्ट्वा रक्षो महाबलं । अभिदुद्राव वेगेन शरैश्चैनमवाकिरत् । ८०४६

तं भीमसेनः समरे तीक्ष्णाग्रैरक्षिणोच्छरैः । अलायुधस्ततस्तांस्तान् भीमेन विशिखान् रणे ।

चिच्छेद कांश्चित् समरे त्वरया कांश्चिदग्रहीत् । स तं दृष्ट्वा राक्षसेन्द्रं भीमो भीमपराक्रमः ।

गदां चिक्षेप वेगेन वज्रपातोपमां तदा। तामापतन्तीं वेगेन गदां ज्वालाकुलां ततः।
गदया ताडयामास सा गदा भीममाद्रवत्। स राक्षसेन्द्रं कौन्तेयः शरवर्षैरवाकिरत्।
तानप्यस्याकरोन्मोघान् राक्षसो निशितैः शरैः। ते चापि राक्षसाः सर्व्वे सैनिका भीमरूपिणः। ८०५५
शासनाद्राक्षसेन्द्रस्य निजघ्नुरथ कुञ्जरान्। पाञ्चालाः सृञ्जयाश्चैव वाजिनः परमद्विपाः।
न शान्तिं लेभिरे तत्र राक्षसैर्भृशपीडिताः। तं दृष्ट्वा तु महाघोरं वर्त्तमानं महाहवं।
अब्रवीत् पुरुषश्रेष्ठो धनञ्जयमिदं वचः। पश्य भीमं महाबाहुं राक्षसेन्द्रवशङ्गतं।
पदमस्यानुगच्छ त्वं मा विचारय पाण्डव। धृष्टद्युम्नः शिखण्डी च युधामन्यूत्तमौजसौ।
सहितौ द्रौपदेयाश्च कर्णं यान्तु महारथाः। नकुलः सहदेवश्च युयुधानश्च वीर्य्यवान्। ८०६०
इतरान् राक्षसान् घ्नन्तु शासनात्तव पाण्डव। त्वमपीमां महाबाहो चमूं द्रोणपुरस्कृतां।
वारयस्व महाबाहो महद्धि भयमागतं। एवमुक्ते तु कृष्णेन यथोद्दिष्टा रथोत्तमाः।
जग्मुर्वैकर्त्तनं कर्णं राक्षसांश्चेतरान् रणे। अथ पूर्णायतोत्सृष्टैः शरैराशीविषोपमैः।
धनुश्चिच्छेद भीमस्य राक्षसेन्द्रः प्रतापवान्। हयांश्चैव शितैर्भल्लैः सारथिञ्च महाबलः।
जघान मिषतः सङ्ख्ये भीमसेनस्य भारत। सोऽवतीर्य्य रथोपस्थाद्धताश्वो हतसारथिः। ८०६५
तस्मै गुर्व्वीं गदां घोरां स विनद्योत्ससर्ज ह। ततस्तां भीमनिर्घोषामापतन्तीं महागदां।
गदया राक्षसो घोरो निजघान ननाद च। तद्दृष्ट्वा राक्षसेन्द्रस्य घोरं कर्म्म भयावहं।
भीमसेनः प्रहृष्टात्मा गदामुग्रां पराम्रशत्। तयोः समभवद्युद्धं तुमुलं नररक्षसोः।
गदानिपातसंह्रादैर्भुवं कम्पयतो भृशं। गदाविमुक्तौ तौ भूयः समासाद्येतरेतरं।
मुष्टिभिर्वज्रसंह्रादैरन्योन्यमभिजघ्नतुः। रथचक्रैर्युगैरक्षैरधिष्ठानैरुपस्करैः। ८०७०
यथासन्नमुपादाय तौ जघ्नतुरमर्षणौ। तौ विक्षरन्तौ रुधिरं समासाद्येतरेतरं।
मत्ताविव महानागौ चकृषाते परस्परं। तदपश्यद्धृषीकेशः पाण्डवानां हिते रतः।
स भीमसेनरक्षार्थं हैडिम्बिं प्रत्यचोदयत्।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि अलायुधयुद्धे अष्टसप्तत्यधिकशततमोऽध्यायः॥ १७८॥
॥ सञ्जय उवाच॥ सन्दृश्य भीमं समरे रक्षसा ग्रस्तमन्तिकात्। वासुदेवोऽब्रवीद्वाक्यं घटोत्कचमिदं ततः।
पश्य भीमं महाबाहो रक्षसा ग्रस्तमाहवे। पश्यतां सर्व्वसैन्यानां तव चैव महाद्युते। ८०७५
स कर्णं त्वं समुत्सृज्य राक्षसेन्द्रमलायुधं। जहि क्षिप्रं महाबाहो पश्चात् कर्णं वधिष्यसि।
स वार्ष्णेयवचः श्रुत्वा कर्णमुत्सृज्य वीर्य्यवान्। युयुधे राक्षसेन्द्रेण बकभ्राता घटोत्कचः।
तयोस्तु तुमुलं युद्धं बभूव निशि रक्षसोः। अलायुधस्य चैवोग्रं हैडिम्बस्य च भारत।
अलायुधस्य योधांस्तु राक्षसान् घोरदर्शनान्। वेगेनापततः शूरान् प्रगृहीतशरासनान्।
आत्तायुधः सुसंक्रुद्धो युयुधानो महारथः। नकुलः सहदेवश्च विभिदुर्निशितैः शरैः। ८०८०
सर्व्वांश्च समरे राजन् किरीटी क्षत्रियर्षभान्। परिचिक्षेप बीभत्सुः सर्व्वतः प्रक्षिपन् शरान्।

कर्णश्च समरे राजन् व्यद्रावयत पार्थिवान्। धृष्टद्युम्नशिखण्ड्यादीन् पाञ्चालानां महारथान्।
तान् वध्यमानान् दृष्ट्वा तु भीमो भीमपराक्रमः। अभ्ययात्त्वरितः कर्णं विशिखान् विकिरञ्छितान्।
ततस्तेऽप्याययुर्हत्वा राक्षसान् यत्र सूतजः। नकुलः सहदेवश्च सात्यकिश्च महारथः।
ते कर्णं योधयामासुः पाञ्चाला द्रोणमेव तु। अलायुधस्तु संक्रुद्धो घटोत्कचमरिन्दमम्। ८०८५
परिघेणातिकायेन ताडयामास मूर्द्धनि। स तु तेन प्रहारेण भैमसेनिर्महाबलः।
ईषन्मूर्च्छान्वितात्मानं संस्तम्भयामास वीर्य्यवान्। ततो दीप्ताग्निसङ्काशां शतघण्टामलङ्कृताम्।
चिक्षेप समरे तस्मै गदां काञ्चनभूषणाम्। सा हयान् सारथिञ्चास्य रथञ्चास्य महास्वनम्।
चूर्णयामास वेगेन विसृष्टा भीमकर्मणा। स भग्नहयचक्राक्षाद्विशीर्णध्वजकूवरात्।
उत्पपात रथात्तूर्णं मायामास्थाय राक्षसीम्। स समास्थाय मायान्तु ववर्ष रुधिरं बहु। ८०९०
विद्युद्विभ्राजितञ्चासीत्तिमिराभ्राकुलं नभः। ततो वज्रनिपाताश्च साशनिस्तनयित्नवः।
महांश्चटचटाशब्दस्तत्रासीद्धि महाहवे। तां प्रेक्ष्य विहितां मायां राक्षसो राक्षसेन तु।
ऊर्द्ध्वमुत्पत्य हैडिम्बस्तां मायां माययाऽवधीत्। सोऽभिवीक्ष्य हतां मायां मायावी माययैव च।
अश्मवर्षं सुतुमुलं विससर्ज घटोत्कचे। अश्मवर्षं स तद्घोरं शरवर्षेण वीर्य्यवान्।
दिक्षु विध्वंसयामास तदद्भुतमिवाभवत्। ततो नानाप्रहरणैरन्योन्यमभिवर्षताम्। ८०९५
आयसैः परिघैः शूलैर्गदामुषलमुद्गरैः। पिनाकैः करवालैश्च तोमरप्रासकम्पनैः।
नाराचैर्निशितैर्भल्लैः शरैश्चक्रैः परश्वधैः। अयोगुडैर्भिन्दिपालैर्गोशीर्षोलूखलैरपि।
उत्पाट्य च महाशाखैर्विविधैर्जगतीरुहैः। शमीपीलुकरीरैश्च शम्याकैश्चैव भारत।
इङ्गुदीबदरीभिश्च कोविदारैश्च पुष्पितैः। पलाशैररिमेदैश्च प्लक्षन्यग्रोधपिप्पलैः।
महद्भिः संयुगे तस्मिन्नन्योन्यमभिजघ्नतुः। विविधैः पर्वताग्रैश्च नानाधातुभिराचितैः। ८१००
तेषां शब्दो महानासीद्वज्राणां भिद्यतामिव। युद्धं तदाभवद्घोरं भैमालायुधयोर्नृप।
हरीन्द्रयोर्यथा राजन् वालिसुग्रीवयोः पुरा। तौ युद्ध्वा विविधैर्घोरैरायुधैर्विशिखैस्तथा।
प्रगृह्य निशितौ खड्गावन्योन्यमभिजघ्नतुः। तावन्योन्यमभिद्रुत्य केशेषु सुमहाबलौ।
प्रभिन्नगात्रौ प्रस्वेदं सुस्रुवाते जनाधिप। रुधिरञ्च महाकायावभिवृष्टाविवाम्बुदौ।
अथाभिपत्य वेगेन समुद्भ्राम्य च राक्षसम्। बलेनाक्षिप्य हैडिम्बश्चकर्त्तास्य शिरो महत्। ८१०५
सोऽपहृत्य शिरस्तस्य कुण्डलाभ्यां विभूषितम्। ततः सुतुमुलं नादं ननाद सुमहाबलः।
हतं दृष्ट्वा महाकायं बकज्ञातिमरिन्दमम्। पाञ्चालाः पाण्डवाश्चैव सिंहनादान् विनेदिरे।
ततो भेरीसहस्राणि शङ्खानामयुतानि च। अवादयन् पाण्डवेयास्तस्मिन् रक्षसि पातिते।
अतीव सा निशा तेषां बभूव विजयावहा। विद्योतमाना विबभौ समन्ताद्दीपमालिनी।
अलायुधस्य तु शिरो भैमसेनिर्महाबलः। दुर्य्योधनस्य प्रमुखे चिक्षेप गतचेतसः। ८११०
अथ दुर्य्योधनो दृष्ट्वा हतं वीरमलायुधम्। बभूव परमोद्विग्नः सह सैन्येन भारत।

तेनहि च प्रतिज्ञातं भीमसेनवधं युधि । हन्तेति स्वयमागम्य स्मरता वैरमुत्तमं ।
ध्रुवं च तेन हन्तव्य इत्यमन्यत पार्थिवः । जीवितच्चिरकालाय भ्रातरंचास्य मन्यत ।
स तं दृष्ट्वा विनिहतं भीमसेनात्मजेन वै । प्रतिज्ञां भीमसेनस्य पूर्णामेवाभ्यमन्यत ।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि अलायुधवधे एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

॥ सञ्जय उवाच ॥ निहत्यालायुधं रक्षः प्रहृष्टात्मा घटोत्कचः । ननाद विविधान्नादान् वाहिन्याः प्रमुखे स्थितः । ८१९५
तस्य तं तुमुलं शब्दं श्रुत्वा कुञ्जरकम्पनं । तावकानां महाराज भयमासीत् सुदारुणं ।
अलायुधविषक्तन्तु भैमसेनिं महाबलं । दृष्ट्वा कर्णो महाबाहुः पाञ्चालान् समुपाद्रवत् ।
दशभिर्दशभिर्बाणैर्धृष्टद्युम्नशिखण्डिनौ । दृढैः पूर्णायतोत्सृष्टैर्बिभेद नतपर्व्वभिः ।
ततः परमनाराचैर्युधामन्यूत्तमौजसौ । सात्यकिञ्च रथोदारं कम्पयामास मार्गणैः ।
तेषामभ्यस्यतां सङ्ख्ये सर्व्वेषां सव्यदक्षिणं । मण्डलान्येव चापानि व्यदृश्यन्त जनाधिप । ८२००
तेषां ज्यातलनिर्घोषो रथनेमिस्वनश्च ह । मेघानामिव घर्म्मान्ते बभूव तुमुलो निशि ।
ज्यानेमिघोषस्तनयित्नुमांश्च धनुस्तडिन्मण्डलकेतुशृङ्गः । शरौघवर्षाकुलवृष्टिमांश्च संग्राममेघः स बभूव राजन् ।
तदद्भुतं शैल इवाप्रकम्प्यो वर्षं महाशैलसमानरूपः । विध्वंसयामास रणे नरेन्द्र वैकर्त्तनः शत्रुगणावमर्द्दी ।
स तोमरैर्व्वज्रनिपाततुल्यैः शितैः शरैः काञ्चनचित्रपुङ्खैः । शत्रून् व्यपोहन् समरे महात्मा वैकर्त्तनः पुत्त्रहिते रतश्च ।
संछिन्नभिन्नध्वजिनश्च केचित्केचिच्छरैरर्द्दितभिन्नदेहाः । केचिद्विसूता विहयाश्च केचिद्वैकर्त्तनेनाशु कृता बभूवुः । ८२०५
अविन्दमानास्त्वथ शर्म्म सङ्ख्ये यौधिष्ठिरं तद्बलमभ्यपद्यत । तान् प्रेक्ष्य भग्नान् विमुखीकृतांश्च घटोत्कचो रोषमतीव चक्रे ।
आस्थाय तं काञ्चनरत्नचित्रं रथोत्तमं सिंहवत् संननाद । वैकर्त्तनं कर्णमुपेत्य चापि विव्याध वज्रप्रतिमैः पृषत्कैः ।
तौ कर्णिनाराचशिलीमुखैश्च नालीकदण्डासनवत्सदन्तैः । वराहकर्णैः सविपाठशृङ्गैः क्षुरप्रवर्षैश्च ववर्षतुः खं ।
तदा शरवर्षोत्तमसन्तरीक्षं तिर्य्यग्गताभिः समरे रराज । सुवर्णपुङ्खज्वलितप्रभाभिर्व्विचित्रपुष्पाभिरिव स्रजोभिः ।
समं हि तावप्रतिमप्रभावावन्योन्यमाजघ्नतुरुत्तमास्त्रैः । तयोर्हि वीरोत्तमयोर्न कश्चिद्ददर्श तस्मिन् समरे विशेषं । ८२१०
अतीव तं चित्रमतुल्यरूपं बभूव युद्धं रविभीमसून्वोः । समाकुलं शस्त्रनिपातघोरं दिवीव राह्वंशुमतोः प्रदीप्तं ।
॥ सञ्जय उवाच ॥ घटोत्कचो यदा कर्णं न विशेषयते नृप । ततः प्रादुष्करोदुग्रमस्त्रमस्त्रविदाम्वरः ।
तेनास्त्रेण हयान् पूर्व्वं निहत्य तस्य राक्षसः । सारथिञ्चैव हैडिम्बः क्षिप्रमन्तरधीयत ।
॥ धृतराष्ट्र उवाच ॥ तथा त्वन्तर्हिते तस्मिन् कूटयोधिनि राक्षसे । मामकैः प्रतिपन्नं यत्तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ अन्तर्हितं राक्षसं तं विदित्वा सम्प्राक्रोशन् कुरवः सर्व्व एव । कथं नायं राक्षसः कूटयोधी हन्यात् कर्णं समरे पच्यमानः । ८२१५
ततः कर्णो लघुचित्रास्त्रयोधी सर्व्वा दिशो व्यावृणोद्बाणजालैः । न वै किञ्चिद्व्यपकृष्येत भूतं तमोभूते सायकैरन्तरीक्षे ।

नचाददानो न च सन्दधानो न चेषुधी स्पृश्यमानः कराग्रैः । अदृश्यदेवं लाघवात् सूतपुत्रः सर्व्वं चोपश्छादयानोऽन्तरीक्षं ।
ततो मायां विहितामन्तरीक्षे घोरां भीमां राक्षसीं दारुणेन । तां पश्यामो लोहिताभ्रप्रकाशां देदीप्यन्तीमग्निशिखा
मिवोग्रां ।
ततस्ततो विद्युतः प्रादुरासन्नुल्काश्चापि ज्वलिताः कौरवेन्द्र । घोरश्चासीत् प्रादुरासीत् सुघोरः सहस्रशो नदतां दुन्दु
भीनां ।
ततः शराः प्रापतन् रुक्मपुङ्खाः शक्त्यः प्रासा मुषलान्यायुधानि । परश्वधास्तैलधौताश्च खड्गाः प्रदीप्ताग्राः पट्टिशास्तो
मराश्च । ८१४०
मयूखिनः परिघा लोहबद्धा गदाश्चित्राः शितधाराश्च शूलाः । गुर्व्यो गदा हेमपट्टावनद्धाः शतघ्न्यश्च प्रादुरासन् समन्तात् ।
महाशिलाश्चापतंस्तत्र तत्र सहस्रशः साशनयश्च वज्राः । चक्राणि चानेकशतक्षुराणि प्रादुर्ब्बभूवुर्ज्वलनप्रभाणि ।
तां शक्तिपाषाणपरश्वधानां प्रासर्ष्टिवज्राशनिमुद्गराणां । दृष्टिं विशालां ज्वलितां पतन्तीं कर्णः शरौघैर्न शशाक हन्तुं ।
शराहतानां पततां हयानां वज्राहतानाञ्च महागजानां । शिलाहतानाञ्च महारथानां महानिनादः पततां बभूव ।
प्रतीपचानाविधशस्त्रपातैर्घटोत्कचेनाभिहतं समन्तात् । दौर्य्योधनं तद्बलमार्त्तमासीदावर्त्तमानं ददृशे भ्रमत्तत् । ८१४५
हाहाकृतं सम्परिवर्त्तमानं संलीयमानञ्च विषण्णरूपं । ते त्वार्य्यभावात् पुरुषप्रवीराः पराङ्मुखा न बभूवुस्तदानीं ।
तां राक्षसीं घोरतरां सुभीमां दृष्टिं महाशस्त्रमयीं पतन्तीं । दृष्ट्वा बलौघांश्च निपात्यमानान् महद्भयं तव पुत्रान् विवेश ।
शिवाश्च वैश्वानरदीप्तजिह्वाः सुभीमनादाः शतशो नदन्तीः । रक्षोगणान्नर्दतश्चाभिवीक्ष्य नरेन्द्रयोधा व्यथिता बभूवुः ।
ते दीप्तजिह्वाननतीक्ष्णदंष्ट्रा विभीषणाः शैलनिकाशकायाः । नभोगताः शक्तिविषक्तहस्ता मेघा व्यमुञ्चन्निव वृष्टिमुग्रां ।
तैराहतास्ते शरशक्तिशूलैर्गदाभिरुग्रैः परिघैश्च दीप्तैः । वज्रैः पिनाकैरशनिप्रहारैश्चक्रैः शतघ्न्या मथिताश्च पेतुः । ८१५०
शूलांश्च भुशुण्डीश्मगुडाः शतघ्न्यः स्थूणाश्च कार्ष्णायसपट्टनद्धाः । अवाकिरंस्तव पुत्रस्य सैन्यं ततो रौद्रं कश्मलं प्रादुरासीत् ।
विशीर्णशस्त्रा विहतैरन्त्रमालैः सञ्छिन्नगात्राः शेरते तत्र शूराः । छिन्ना हयाः कुञ्जराश्चावभग्नाः सञ्चूर्णिताश्चैव रथाः शिलाभिः ।
एवं महच्छस्त्रवर्षं सृजन्तस्ते यातुधाना भुवि घोररूपाः । मायाः सृष्टास्तत्र घटोत्कचेन नामुञ्चन् वै याचमानं न भीतं ।
तस्मिन् क्रूरे कुरुवीरावमर्द्दे कालोत्सृष्टे क्षत्रियाणामभावे । ते वै भग्नाः सहसा व्यद्रवन्त तथाक्रोशन् कौरवाः सर्व्व एव ।
पलायध्वं कौरवा नैतदस्ति सेन्द्रा देवा घ्नन्ति नः पाण्डवार्थे । तथो तेषां मज्जतां भारतानां न स्म द्वीपस्तत्र बभूव
कश्चित् । ८१५५
तस्मिन् संक्रन्दे तुमुले वर्त्तमाने सैन्ये भग्ने लीयमाने कुरूणां । अनीकानां प्रविभागे प्रकाशे न ज्ञायन्ते कुरवो नेतरे वै ।
निर्म्मर्य्यादे विद्रवे घोररूपे सर्व्वा दिशः प्रेक्षमाणाश्च शून्याः । तां शस्त्रवृष्टिं सहसा गाहमानं कर्णं त्वेकं तत्र राजन्नपश्यन् ।
ततो वाणैराद्वणोदन्तरीक्षं दिव्यां मायां योधयन्राक्षसस्य । ह्रीमान् कुर्व्वन् दुष्करं चार्य्यकर्म्म नैवामुह्यत् संयुगे सूतपुत्रः ।
ततो भीताः समुदैक्षन्त कर्णं राजन् सर्व्वे सैन्धवा वाह्लिकाश्च । असंमोहं पूजयन्तोऽस्य सङ्ख्ये संपश्यन्तो वै विजयं रा
क्षसस्य ।
तेनोत्सृष्टा चक्रयुक्ता शतघ्नी समं सर्व्वांश्चतुरोऽश्वान् जघान । ते जानुभिर्जगतीमन्वपद्यन् गतासवो निर्द्दशना विजिह्वाः । ८१६०

ततो हताश्चाहवदत्र बाणावन्तर्मनाः कुरुषु प्रद्रवत्सु। दिव्ये चास्त्रे मायया वध्यमाने नैवामुह्यत् विमनायन् प्राप्तकालं।

ततोऽब्रुवन् कौरवाः सर्व्व एव कर्णं दृष्ट्वा घोररूपाञ्च मायां। शक्त्या रक्षो जहि कर्णाद्य तूर्णं नश्यन्त्येते कुरवो धार्त्तराष्ट्राः।

करिष्यतः किञ्च नो भीमपार्थौ तपन्तमेनं जहि पापं निशीथे। यो नः सङ्ग्रामाद्घोररूपाद्विमुच्येत् स नः पार्थान् योत्स्यते संयुगेषु।

तस्मादेनं राक्षसं घोररूपं शक्त्या जहि त्वं दत्तया वासवेन। मा कौरवाः सर्व्व एवेन्द्रकल्पा रात्रियुद्धे कर्ण नेशुः सयोधाः।

अवध्यमाने राक्षसे वै निशीथे दृष्ट्वा राजंस्त्रास्यमानं बलञ्च। महत् श्रुत्वा निनदं कौरवाणां मतिं दध्रे शक्तिमोक्षाय कर्णः। ८६५

स वै क्रुद्धः सिंह इवात्यमर्षी नामर्षयत् प्रतिघातं रणेऽसौ। शक्तिं श्रेष्ठां वैजयन्तीमसह्यां समाददे तस्य वधं चिकीर्षुः।

याऽसौ राजन्निहिता वर्षपूगान् वधायाजौ सत्कृता फाल्गुनस्य। यां वै प्रादात् सूतपुत्राय शक्रः शक्तिं श्रेष्ठां कुण्डलाभ्यां निमाय।

तां वै घोरां लेलिहानां प्रदीप्तां पाशैर्युक्तामन्तकस्येव जिह्वां। मृत्योः स्वसारं ज्वलमानामिवोल्कां वैकर्त्तनः प्राहिणोद्राक्षसाय।

तामुत्तमां परकायापहन्त्रीं दृष्ट्वा सौतेर्बाहुसंस्थां ज्वलन्तीं। भीतं रक्षः सम्प्रदुद्राव राजन् कृत्वात्मानं विन्ध्यपादप्रमाणं।

दृष्ट्वा शक्तिं कर्णबाह्वन्तरस्थां नेदुर्भूतान्यन्तरीक्षे नरेन्द्र। ववुर्व्वातास्तुमुलाश्चापि राजन् सनिर्घाता चाशनिर्गां जगाम। ८७०

सा तां मायां भस्म कृत्वा ज्वलन्तीं भित्त्वा गाढं हृदयं राक्षसस्य। ऊर्द्ध्वं ययौ दीप्यमाना निशायां नक्षत्राणामन्तराण्याविवेश।

युद्ध्वा चित्रैर्व्विविधैः शस्त्रपूगैर्दिव्यैर्व्वीरो मानुषै राक्षसैश्च। नदन्नादान् विविधान् भैरवांश्च प्राणानिष्टांस्त्याजितः शक्रशक्त्या।

इदञ्चान्यच्चित्रमाश्चर्य्यरूपं चकारासौ कर्म्म शत्रुक्षयाय। तस्मिन् काले शक्तिनिर्भिन्नमर्म्मा बभौ राजन् मेघशैलप्रकाशः।

स तद्रूपं भैरवं भीमकर्म्मा भीमं कृत्वा हैमसेनिः पपात। हतोऽप्येवं तव सैन्यैकदेशं व्यपोथयत् स्वेन देहेन राजन्।

पतद्रक्षः स्वेन कायेन तूर्णमतिप्रमाणेन विवर्द्धता च। प्रियं कुर्व्वन् पाण्डवानां गतासुरक्षौहिणीं तव तूर्णं जघान। ८७५

ततो मिश्राः प्राणदन् सिंहनादैः शङ्खा भेर्य्यो मुरजाश्चानकाश्च। दग्धां मायां निहतं राक्षसञ्च दृष्ट्वा हृष्टाः प्राणदन् कौरवेयाः।

ततः कर्णः कुरुभिः पूज्यमानो यथा शक्रो वृत्रवधे मरुद्भिः। अन्वारूढस्तव पुत्रस्य यानं हृष्टश्चापि प्राविशत् तत् स्वसैन्यं।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि घटोत्कचवधे अशीत्यधिकशततोऽध्यायः॥ १८० ॥

॥ सञ्जय उवाच ॥ हैडिम्बं निहतं दृष्ट्वा विकीर्णमिव पर्व्वतं । बभूवुः पाण्डवाः सर्व्वे शोकवाष्पाकुलेक्षणाः ।
वासुदेवस्तु हर्षेण महताऽभिपरिप्लुतः । ननाद सिंहनादेन व्यथयन्निव पाण्डवान् ।
विनद्य च महानादं परिष्वजत पाण्डवं । स विनद्य महानादमभीषून् सन्नियम्य च । ८१८०
ननर्त्त हर्षसंवीतो वातोद्धूत इव द्रुमः । ततः परिष्वज्य पुनः पार्थमास्फोट्य चासकृत् ।
रथोपस्थगतो धीमान् प्राणदत् पुनरच्युतः । प्रहृष्टं तस्य तं ज्ञात्वा केशवस्य धनञ्जयः ।
अर्जुनोऽथाब्रवीद्राजन्नातिहृष्टमना इव । अतिहर्षोऽयमस्थाने तवाद्य मधुसूदन ।
शोकस्थाने परे प्राप्ते हैडिम्बस्य वधेन तु । विमुखानि तु सैन्यानि हतं दृष्ट्वा घटोत्कचं ।
वयञ्च भृशमुद्विग्ना हैडिम्बस्य निपातनात् । नैतत्कारणमल्पं हि भविष्यति जनार्द्दन । ८१८५
तदद्य शंस मे पृष्टः सत्यं सत्यवताम्वर । यद्येतन्न रहस्यन्ते वक्तुमर्हस्यरिन्दम ।
धैर्य्यस्य वैकृतं ब्रूहि त्वमद्य मधुसूदन । समुद्रस्येव सङ्क्षोभो मेरोरिव विसर्पणं ।
तथैतल्लाघवं मन्ये तव कर्म्म जनार्द्दन ।
॥ वासुदेव उवाच ॥ अतिहर्षमिमं प्राप्तं शृणु मे त्वं धनञ्जय । अतीव मनसः सद्यः प्रसादकरमुत्तमं ।
शक्तिं घटोत्कचेनेमां व्यंसयित्वा महाद्युते । कर्णं निहतमेवाजौ विद्धि सद्यो धनञ्जय । ८१९०
शक्तिहस्तं पुनः कर्णं न लोकेऽस्ति पुमानिह । य एनमभितस्तिष्ठेत् कार्त्तिकेयमिवाहवे ।
दिष्ट्याऽपनीतकवचो दिष्ट्याऽपहृतकुण्डलः । दिष्ट्या विध्वंसिता शक्तिरमोघास्य घटोत्कचे ।
यदि हि स्यात् सकवचस्तथैव स्यात् सकुण्डलः । सामरानपि लोकांस्त्रीनेकः कर्णो जयेद्वशी ।
वासवो वा कुवेरो वा वरुणो वा जलेश्वरः । यमो वा नोत्सहेत् कर्णं रणे प्रतिसमासितुं ।
गाण्डीवमुद्यम्य भवांश्चक्रञ्चाहं सुदर्शनं । न शक्तौ स्वो रणे जेतुं तथा युक्तं नरर्षभं । ८१९५
त्वद्धितार्थन्तु शक्रेण मायाऽपहृतकुण्डलः । विहीनकवचश्चायं कृतः परपुरञ्जयः ।
उत्कृत्य कवचं यस्मात् कुण्डले विमले च ते । प्रादाच्छक्राय कर्णो वै तस्माद्वैकर्त्तनः स्मृतः ।
आशीविष इव क्रुद्धः स्तम्भितो मन्त्रतेजसा । तथाऽद्य भाति कर्णो मे शान्तज्वाल इवानलः ।
यदाप्रभृति कर्णाय शक्तिर्दत्ता महात्मना । वासवेन महावाहो प्राप्ता याऽसौ घटोत्कचे ।
कुण्डलाभ्यां निमायाथ दिव्येन कवचेन च । तां प्राप्यामन्यत वृषः सततं त्वां हतं रणे । ८२००
एवङ्गतोऽपि शक्योऽयं हन्तुं नान्येन केनचित् । ऋते त्वां पुरुषव्याघ्र शपे सत्येन चानघ ।
ब्रह्मण्यः सत्यवादी च तपस्वी नियतव्रतः । रिपुष्वपि दयावांश्च तस्मात् कर्णो वृषः स्मृतः ।
युद्धशौण्डो महावाहुर्नित्योद्यतशरासनः । केशरीव वने मर्द्दन्मत्तान्मातङ्गयूथपान् ।
विमदान् रथशार्दूलान् कुरुते रणमूर्द्धनि । मध्यङ्गत इवादित्यो यो न शक्य उदीक्षितुं ।
त्वदीयैः पुरुषव्याघ्र योधमुख्यैर्महात्मभिः । शरजालसहस्रांशुः शरदीव दिवाकरः । ८२०५
तपान्ते जलदो यद्वत् शरधाराः क्षरन्मुहुः । दिव्यास्त्रजलदः कर्णः पर्जन्य इव वृष्टिमान् ।
त्रिदशैरपि चासृग्भिः शरवर्षैः समन्ततः । अशक्यस्तरसा जेतुं स्रवद्भिर्मांसशोणितं ।

कवचेन विहीनश्च कुण्डलाभ्याञ्च पाण्डव। सोऽद्य मानुषतां प्राप्तो विमुक्तः शक्रदत्तया।

एको हि योगोऽस्य भवेद्वधाय छिद्रे ह्येनं स्वप्रमत्तः प्रमत्तम्। कृच्छ्रप्राप्तं रथचक्रे निमग्ने हन्याः पूर्व्वं त्वन्तु संज्ञां विचार्य्य।

न सूतपुत्रं युधि हन्यादजय्यमप्येकवीरो बलजित् सवज्रः। जरासन्धश्चेदिराजो महात्मा महाबाहुश्चैकलव्यो निषादः। ८२१०

एकैकशो निहताः सर्व्व एते योगैस्तैस्तैस्त्वद्धितार्थं मयैव। अथापरे निहता राक्षसेन्द्रा हिडिम्बकिर्म्मीरबकप्रधानाः।

अलायुधः परसैन्यावमर्द्दी घटोत्कचश्चोग्रकर्म्मावमर्द्दी।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि कृष्णवाक्ये एकाशीत्यधिकशतोऽध्यायः ॥ १८१ ॥

॥ अर्जुन उवाच ॥ कथमस्मद्धितार्थं ते कैश्च योगैर्जनार्द्दन। जरासन्धप्रभृतयो घातिताः पृथिवीश्वराः।

॥ वासुदेव उवाच ॥ जरासन्धश्चेदिराजो नैषादिश्च महाबलः। यदि स्युर्न हताः पूर्व्वमिदानीं स्युर्भयङ्कराः।

दुर्य्योधनस्तानवश्यं वृणुयाद्रथसत्तमान्। तेऽस्माभिर्नित्यविद्विष्टाः संश्रयेयुश्च कौरवान्। ८२१५

ते हि वीरा महेष्वासाः कृतास्त्रा दृढयोधिनः। धार्त्तराष्ट्रञ्च ते सर्व्वे रक्षेयुरमरा इव।

सूतपुत्रो जरासन्धश्चेदिराजो निषादजः। सुयोधनं समाश्रित्य जयेयुः पृथिवीमिमाम्।

योगैरपि हता यैस्ते तन्मे शृणु धनञ्जय। अजय्या हि मृधे योगादृते ते दैवतैरपि।

एकैको हि पृथक् तेषां समस्तां सुरवाहिनीम्। योधयेत् समरे पार्थ लोकपालाभिरक्षिताम्।

जरासन्धोऽतिरुषितो रौहिणेयप्रधर्षितः। अस्मद्वधार्थं चिक्षेप गदां वै सर्व्वघातिनीम्। ८२२०

सीमन्तमिव कुर्व्वाणां नभसः पावकप्रभाम्। व्यदृश्यत पतन्ती सा शक्रमुक्ता इवाशनिः।

तामापतन्तीं दृष्ट्वैव गदां रौहिणिनन्दनः। प्रतिघातार्थमस्त्रं वै स्थूणाकर्णमवासृजत्।

अस्त्रवेगप्रतिहता सा गदा प्रापतद्भुवि। दारयन्ती धरां देवीं कम्पयन्तीव पर्व्वतान्।

तत्र स्म राक्षसी घोरा जरा नाम सुविक्रमा। सन्धयामास तं राजन् जरासन्धमरिन्दमम्।

द्वाभ्यां जातः स मातृभ्यामर्द्धदेहः पृथक् पृथक्। तया स सन्धितो यस्माज्जरासन्धस्ततोऽभवत्। ८२२५

सा तु भूमिं गता पार्थ हता ससुतबान्धवा। गदया तेन चास्त्रेण स्थूणाकर्णेन राक्षसी।

विनाभूतः स गदया जरासन्धो महामृधे। निहतो भीमसेनेन पश्यतस्ते धनञ्जय।

यदि हि स्याद्गदापाणिर्जरासन्धः प्रतापवान्। सेन्द्रा देवा न तं हन्तुं रणे शक्ता नरोत्तम।

त्वद्धितार्थञ्च नैषादिरङ्गुष्ठेन वियोजितः। द्रोणेनाचार्य्यकं कृत्वा छद्मना सत्यविक्रमः।

स हि बद्धाङ्गुलित्राणो नैषादिर्दृढविक्रमः। अतिमानी वनचरो बभौ राम इवापरः। ८२३०

एकलव्यं हि साङ्गुष्ठमशक्ता देवदानवाः। सराक्षसोरगाः पार्थ विजेतुं युधि कर्हिचित्।

किमु मानुषमात्रेण शक्यः सम्प्रति वीक्षितुं। दृढमुष्टिः कृती नित्यमस्यमानो दिवानिशं।

त्वद्धितार्थन्तु स मया हतः सङ्ग्राममूर्द्धनि। चेदिराजो हि विक्रान्तः प्रत्यक्षं निहतस्तव।

स चाप्यशक्यः संग्रामे जेतुं सर्व्वैः सुरासुरैः। वधार्थं तस्य जातोऽहमन्येषाञ्च सुरद्विषां।

त्वत्सहायो नरव्याघ्र लोकानां हितकाम्यया। हिडिम्बबककिर्म्मीरा भीमसेनेन पातिताः। ८२३५

रावणेन समप्राणा ब्रह्मयज्ञविनाशनाः । हतस्तथैव मायावी हैडिम्बिः पाण्डवायुधः ।
हैडिम्बस्त्वप्युपायेन शक्त्या कर्णेन घातितः । यदि ह्येनं नाहनिष्यत् कर्णः शक्त्या महामृधे ।
मया वध्योऽभविष्यत् स भैमसेनिर्घटोत्कचः । मया न निहतः पूर्व्वमेष युष्मत्प्रियेप्सया ।
एष हि ब्राह्मणद्वेषी यज्ञद्वेषी च राक्षसः । धर्म्मस्य लोप्ता पापात्मा तस्मादेवं निपातितः ।
व्यंसिता चाप्युपायेन शक्रदत्ता मयाऽनघ । ये हि धर्म्मस्य लोप्तारो वध्यास्ते मम पाण्डव । ८२४०
धर्म्मसंस्थापनार्थाय प्रतिज्ञैषा मया कृता । ब्रह्म सत्यं दमः शौचं धर्म्मो ह्रीः श्रीर्धृतिः क्षमा ।
यत्र यत्र भवेन्नित्यमहं तत्राभवं सदा । अप्रमादस्त्वया कार्य्यः कर्णं वैकर्त्तनम्प्रति ।
उपदेक्ष्याम्युपायेन येन तं प्रसहिष्यसि । सुयोधनञ्चापि रणे हनिष्यति वृकोदरः ।
तस्य चापि वधोपायं वक्ष्ये च तव पाण्डव । वर्द्धते तुमुलस्त्वेष शब्दः परचमूम्प्रति ।
विद्रवन्ति हि सैन्यानि त्वदीयानि दिशो दश । लब्धलक्ष्या हि कौरव्या विधमन्ति चमूं तव । ८२४५
दहत्येष च नः सङ्ख्ये द्रोणः प्रहरतां वरः ।
इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि कृष्णवाक्ये द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

॥ धृतराष्ट्र उवाच ॥ एकवीरवधे मोघा शक्तिः सूतात्मजे हि वै । कस्मात् सर्व्वान् समुत्सृज्य स तां पार्थे न मुक्तवान् ।
तस्मिन् हते हताः स्युर्हि सर्व्वे सृञ्जयपाण्डवाः । फाल्गुनस्य वधे कस्माद्युद्धे न जयमादधे ।
आहूतो न निवर्त्तेयमिति तेन व्रतं कृतं । स्वयमाकारितव्यः स सूतपुत्रेण फाल्गुनः ।
ततो द्वैरथमानीय फाल्गुनं शक्रदत्तया । न जघान वृषः कस्मात्तन्ममाचक्ष्व सञ्जय । ८२५०
नूनं बुद्धिविहीनश्चाप्यसहायश्च मे सुतः । शत्रुभिर्व्यंसितः पापः स कथं नु जयेदरीन् ।
या ह्यस्य परमा शक्तिर्जयस्य च परायणा । सा शक्तिर्वासुदेवेन व्यंसिता च घटोत्कचे ।
कुणेर्यथा हस्तगतं ह्रियेत् फलं बलीयसा । तथा शक्तिरमोघा सा मोघीभूता घटोत्कचे ।
यथा वराहस्य शुनश्च युद्धे तयोरभावे श्वपचस्य लाभः । मन्ये विद्वन् वासुदेवस्य तद्वद्वधे लाभः कर्णहैडिम्बयोर्वै ।
घटोत्कचो यदि हन्याद्धि कर्णं परो लाभः समरे पाण्डवानां । वैकर्त्तनो यदि वा तन्निहन्यात्तथा कृत्यं शक्तिनाशात् कृतं स्यात् । ८२५५
इति प्राज्ञः प्रज्ञयैवं विचार्य्य घटोत्कचं सूतपुत्रेण युद्धे । अयोधयद्वासुदेवो नृसिंहः प्रियं कुर्व्वन् पाण्डवानां हितञ्च ।
॥ सञ्जय उवाच ॥ एतच्चिकीर्षितं ज्ञात्वा कर्णस्य मधुहा नृप । नियोजयामास तदा द्वैरथे राक्षसेश्वरं ।
घटोत्कचं महावीर्य्यं महाबुद्धिर्जनार्द्दनः । अमोघाया विघातार्थं राजन् दुर्मन्त्रिते तव ।
तदैव कृतकार्य्या हि वयं स्याम कुरूद्वह । न रक्षेद्यदि कृष्णस्तं कर्णात् पार्थं महारथं ।
साश्वध्वजरथः सङ्ख्ये धृतराष्ट्र हतो भवेत् । विना जनार्द्दनं पार्थो योगानामीश्वरं प्रभुं । ८२६०
तैस्तैरुपायैर्बहुभी रक्ष्यमाणः स पार्थिवः । जयत्यभिमुखाञ्छत्रून् पार्थः कृष्णेन पालितः ।
सविशेषास्त्वमोघायाः कृष्णो रक्षति पाण्डवान् । हन्यात् क्षिप्रं हि कौन्तेयं शक्तिर्वृक्षमिवाशनिः ।
॥ धृतराष्ट्र उवाच ॥ विरोधी च कुमन्त्री च प्राज्ञमानी ममात्मजः । यस्यैष समतिक्रान्तो वधोपायो जयम्प्रति ।

स वा कर्णो महाबुद्धिः सर्व्वशस्त्रभृतांवरः । न मुक्तवान् कथं सूत ताममोघां धनञ्जये ।
तवापि समतिक्रान्तमेतद्गावल्गणे कथं । एतमर्थं महाबुद्धे त्वया नावबोधितः । ८२६५
॥ सञ्जय उवाच ॥ दुर्य्योधनस्य शकुनेर्म्मम दुःशासनस्य च । रात्रौ रात्रौ भवत्येषा नित्यमेव समर्थना ।
श्वः सर्व्वसैन्यमुत्सृज्य जहि कर्ण धनञ्जयं । प्रेष्यवत् पाण्डुपाञ्चालानुपभोक्ष्यामहे ततः ।
अथ वा निहते पार्थे पाण्डुष्वन्यतमं ततः । स्थापयेयुर्हि वार्ष्णेयस्तस्मात् कृष्णो निपात्यतां ।
कृष्णो हि मूलं पाण्डूनां पार्थः स्कन्ध इवोद्गतः । शाखा इवेतरे पार्थाः पाञ्चालाः पत्रसंज्ञकाः ।
कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः । कृष्णः परायणञ्चैषां ज्योतिषामिव चन्द्रमाः । ८२७०
तस्मात् पर्णानि शाखाश्च स्कन्धञ्चोत्सृज्य सूतज । कृष्णं हि विद्धि पाण्डूनां मूलं सर्व्वत्र सर्व्वदा ।
हन्याद्यदि हि दाशार्हं कर्णो यादवनन्दनं । कृत्स्ना वसुमती राजन् वशे ते स्यान्न संशयः ।
यदि स निहतः शयीत भूमौ यदुकुलपाण्डवनन्दनो महात्मा । ननु तव वसुधा नरेन्द्र सर्व्वा सगिरिसमुद्रवना वशं व्रजेत ।
सा तु बुद्धिः कृताऽप्येवं जाग्रति त्रिदशेश्वरे । अप्रमेये हृषीकेशे युद्धकाले व्यमुह्यत ।
अर्ज्जुनञ्चापि कौन्तेयं सदा रक्षति केशवः । नह्येनमैच्छत् प्रमुखे सौतेः स्थापयितुं रणे । ८२७५
अन्यांश्चास्मै रथोदारानुपस्थापयदच्युतः । अमोघां तां कथं शक्तिं मोघां कुर्य्यामिति प्रभो ।
यथैवं रक्षते पार्थं कर्णात् कृष्णो महामनाः । आत्मानं स कथं राजन् रक्षेत् पुरुषोत्तमः ।
परिचिन्त्य तु पश्यामि चक्रायुधमरिन्दमं । न सोऽस्ति त्रिषु लोकेषु यो जयेत जनार्द्दनं ।
॥ सञ्जय उवाच ॥ ततः कृष्णं महाबाहुं सात्यकिः सत्यविक्रमः । पप्रच्छ रथशार्दूल कर्णम्प्रति महारथं ।
अयञ्च प्रत्ययः कर्णे शक्तिश्चामितविक्रमा । किमर्थं सूतपुत्रेण न मुक्ता फाल्गुने तदा । ८२८०
॥ वासुदेव उवाच ॥ दुःशासनश्च कर्णश्च शकुनिश्च ससैन्धवः । सततं मन्त्रयन्ति स्म दुर्य्योधनपुरोगमाः ।
कर्ण कर्ण महेष्वास रणेऽमितपराक्रम । नान्यस्य शक्तिरेषा ते मोक्तव्या जयतांवर ।
ऋते महारथात् पार्थात् कुन्तीपुत्राद्धनञ्जयात् । स हि तेषामतियशा देवानामिव वासवः ।
तस्मिन् विनिहते सर्व्वे पाण्डवाः सृञ्जयैः सह । भविष्यन्ति हतात्मानः सुरा इव निरग्नयः ।
तथेति च प्रतिज्ञातं कर्णेन शिनिपुङ्गव । हृदि नित्यन्तु कर्णस्य वधो गाण्डीवधन्वनः । ८२८५
अहमेव तु राधेयं मोहयामि युधाम्बर । ततो नावासृजच्छक्तिं पाण्डवे श्वेतवाहने ।
फाल्गुनस्य हि तं मृत्युमनिवार्य्यं युयुत्सतः । न निद्रा मम मे हर्षो मनसोऽस्ति युधाम्बर ।
घटोत्कचे व्यंसितां तु दृष्ट्वा तां शिनिपुङ्गव । मृत्योरास्यान्तरान्मुक्तं पश्याम्यद्य धनञ्जयं ।
न पिता न च मे माता न यूयं भ्रातरस्तथा । न च प्राणास्तथा रक्ष्या यथा बीभत्सुराहवे ।
त्रैलोक्यराज्याद्यत्किञ्चिद्भवेदन्यत् सुदुर्लभं । नेच्छेयं सात्वताहं तद्विना पार्थं धनञ्जयं । ८२९०
अतः प्रहर्षः सुमहान् युयुधानाद्य मेऽभवत् । मृतं प्रत्यागतमिव दृष्ट्वा पार्थं धनञ्जयं ।
अतश्च प्रहितो युद्धे मया कर्णाय राक्षसः । न ह्यन्यः समरे रात्रौ शक्तः कर्णं प्रबाधितुं ।

मालेयापि कृता तेन कृतं यत्नं जनार्द्दन । पाण्डुरेतोगतं ज्ञात्वा पाण्डवं श्वेतवाहनं ।
यदा कृष्ण महेष्वासः काम्यके मामुपस्थितः । उषितश्च महाराजाभिर्यावदासीद्धनञ्जयः ।
गन्धमादनयात्रायां दुर्गेभ्यश्च स्म तारिताः । पाञ्चाली च परिश्रान्ता पृष्ठेनोढ़ा महात्मना ।
आभिमन्यवे युद्धानां यदेष कृतवान् प्रभो । मदर्थं दुष्करं कर्म्म कृतं तेन महात्मना । ८२०५
स्वभावाद्या च मे प्रीतिः सहदेवे जनार्द्दन । सैव मे द्विगुणा प्रीती राक्षसेन्द्रे घटोत्कचे ।
भक्तश्च मे महाबाहुः प्रियोऽस्याहं प्रियश्च मे । तेन विन्दामि वार्ष्णेय कश्मलं शोकतापितः ।
पश्य सैन्यानि वार्ष्णेय द्राव्यमाणानि कौरवैः । द्रोणकर्णौ च संयत्तौ पश्य युद्धे महारथौ ।
निशीथे पाण्डवं सैन्यमेतत् पश्य प्रमर्द्दितं । गजाभ्यामिव मत्ताभ्यां यथा नड़वनं महत् ।
अनादृत्य बलं बाहुभीमसेनस्य माधव । चित्रास्त्रताञ्च पार्थस्य विक्रमन्ति स्म कौरवाः । ८२१०
एष द्रोणश्च कर्णश्च राजा चैव सुयोधनः । निहत्य राक्षसं युद्धे हृष्टा नर्द्दन्ति संयुगे ।
कथमस्मासु जीवत्सु त्वयि चैव जनार्द्दन । हैडिम्बः प्राप्तवान् मृत्युं सूतपुत्रेण सङ्गतः ।
कदर्थीकृत्य नः सर्व्वान् पश्यतः सव्यसाचिनः । निहतो राक्षसः कृष्ण भैमसेनिर्महाबलः ।
यदाऽभिमन्युर्निहतो धार्त्तराष्ट्रैर्दुरात्मभिः । नासीत्तत्र रणे कृष्ण सव्यसाची महारथः ।
निरुद्धाश्च वयं सर्व्वे सैन्धवेन महात्मना । निमित्तमभवद्द्रोणः सपुत्रस्तत्र कर्म्मणि । ८२१५
उपदिष्टो वधोपायः कर्णस्य गुरुणा स्वयं । व्यायच्छतश्च खड्गेन द्विधा खड्गं चकार ह ।
व्यसने वर्त्तमानस्य कृतवर्म्मा नृशंसवत् । अश्वान् जघान सहसा तथोभौ पार्ष्णिसारथी ।
तथेतरे महेष्वासाः सौभद्रं युधि पातयन् । अल्पे च कारणे कृष्ण हतो गाण्डीवधन्वना ।
सैन्धवो यादवश्रेष्ठ तच्च नातिप्रियं मम । यदि शत्रुवधो न्याय्यो भवेत् कर्त्तुञ्च पाण्डवैः ।
द्रोणकर्णौ रणे पूर्व्वं हन्तव्याविति मे मतिः । एतौ मूलं हि दुःखानामस्माकं पुरुषर्षभ । ८२२०
एतौ रणे समासाद्य समाश्वस्तः सुयोधनः । यत्र वध्यो भवेद्द्रोणः सूतपुत्रश्च सानुगः ।
तत्रावधीन्महाबाहुः सैन्धवं दूरवासिनं । अवश्यन्तु मया कार्य्यः सूतपुत्रस्य निग्रहः ।
ततो यास्याम्यहं वीर सूतपुत्रजिघांसया । भीमसेनो महाबाहुर्द्रोणानीकेन संवृतः ।
एवमुक्त्वा ययौ कर्णं त्वरमाणो युधिष्ठिरः । स विस्फार्य्य महच्चापं शङ्खं प्रध्माप्य भैरवं ।
ततो रथसहस्राणां गजानाञ्च शतैस्त्रिभिः । वाजिभिः पञ्चसाहस्रैस्त्रिसाहस्रैः प्रभद्रकैः । ८२२५
वृतः शिखण्डी त्वरितो राजानं पृष्ठतोऽन्वयात् । ततो भेरीः समाजघ्नुः शङ्खान् दध्मुश्च दंशिताः ।
पाञ्चालाः पाण्डवाश्चैव युधिष्ठिरपुरोगमाः । ततोऽब्रवीन्महाबाहुर्वासुदेवो धनञ्जयं ।
एष प्रयाति त्वरितः क्रोधाविष्टो युधिष्ठिरः । जिघांसुः सूतपुत्रस्य तस्योपेक्षा न युज्यते ।
एवमुक्त्वा हृषीकेशः शीघ्रमश्वानचोदयत् । दूरञ्च यातं राजानमन्वगच्छज्जनार्द्दनः ।
तं दृष्ट्वा सहसा यान्तं सूतपुत्रजिघांसया । शोकोपहतसङ्कल्पं दह्यमानमिवाग्निना । ८२३०
अभिगम्याब्रवीद्व्यासो धर्म्मपुत्रं युधिष्ठिरं ।

॥ व्यास उवाच ॥ कर्णमासाद्य सङ्ग्रामे दिष्ट्या जीवति फाल्गुनः । सव्यसाचिवधाकाङ्क्षी शक्तिं रक्षितवान् हि सः ।
न चागाद्द्वैरथं जिष्णुर्दिष्ट्या तु भरतर्षभ । सृजेतां स्पर्द्धिनावेतौ दिव्यान्यस्त्राणि सर्व्वतः ।
वध्यमानेषु चास्त्रेषु पीडितः सूतनन्दनः । वासवीं समरे शक्तिं ध्रुवं मुञ्चेद्युधिष्ठिर ।
ततो भवेत्ते व्यसनं घोरं भरतसत्तम । दिष्ट्या रक्षो हतं युद्धे सूतपुत्त्रेण मानद । ८१५५
वासवीं कारणं कृत्वा कालेनापि हतो ह्यसौ । तवैव कारणाद्रक्षो निहतं तात संयुगे ।
मा क्रुधो भरतश्रेष्ठ मा च शोके मनः कृथाः । प्राणिनामिह सर्व्वेषामेषा निष्ठा युधिष्ठिर ।
भ्रातृभिः सहितः सर्व्वैः पार्थिवैश्च महात्मभिः । कौरवान् समरे सर्व्वानभियुध्यस्व भारत ।
पञ्चमे दिवसे चैव पृथिवी ते भविष्यति । नित्यञ्च पुरुषव्याघ्र धर्म्ममेव विचिन्तय ।
आनृशंस्यं तपो दानं क्षमा सत्यञ्च पाण्डव । सेवस्व परमप्रीतो यतो धर्म्मस्ततो जयः । ८१६०
इत्युक्त्वा पाण्डवं व्यासस्तत्रैवान्तरधीयत ।

इति श्रीमहाभारते द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि व्यासवाक्ये चतुरशीत्यधिकशततमोऽध्यायः ॥ समाप्तञ्च घटोत्कचवध पर्व्व ॥ १८४ ॥

## ॥ अथ द्रोणवधपर्व्व ॥

॥ सञ्जय उवाच ॥ व्यासेनैवमथोक्तस्तु धर्म्मराजो युधिष्ठिरः । स्वयं कर्णवधाद्वीरो निवृत्तो भरतर्षभ ।
घटोत्कचे तु निहते सूतपुत्त्रेण तां निशां । दुःखामर्षवशं प्राप्तो धर्म्मराजो युधिष्ठिरः ।
दृष्ट्वा भीमेन महतीं वार्य्यमाणाञ्चमूं तव । धृष्टद्युम्नमुवाचेदं कुम्भयोनिं निवारय ।
त्वं हि द्रोणविनाशाय समुत्पन्नो हुताशनात् । सशरः कवची खड्गी धन्वी च परतापनः । ८१६५
अभिद्रव रणे हृष्टो न च ते भीः कथञ्चन । जनमेजयः शिखण्डी च दौर्मुखिश्च यशोधरः ।
अभिद्रवन्तु संक्रुद्धाः कुम्भयोनिं समन्ततः । नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः ।
द्रुपदश्च विराटश्च पुत्त्रभ्रातृसमन्वितौ । सात्यकिः केकयाश्चैव पाण्डवश्च धनञ्जयः ।
अभिद्रवन्तु वेगेन भारद्वाजं जिघांसवः । तथैव रथिनः सर्व्वे हस्त्यश्वं यच्च किञ्चन ।
पादाताश्च रणे द्रोणं पातयन्तु महारथं । तथाज्ञप्तास्तु ते सर्व्वे पाण्डवेन महात्मना । ८१७०
अभ्यद्रवन्त वेगेन कुम्भयोनिं जयेप्सया । आगच्छतस्तान् सहसा सर्व्वोद्योगेन पाण्डवान् ।
प्रतिजग्राह समरे द्रोणः शस्त्रभृतां वरः । ततो दुर्य्योधनो राजा सर्व्वोद्योगेन पाण्डवान् ।
अभ्यद्रवत्सुसंक्रुद्ध इच्छन् द्रोणस्य जीवितं । ततः प्रववृते युद्धं श्रान्तवाहनसैनिकं ।
पाण्डवानां कुरूणाञ्च गर्जतामितरेतरं । निद्रान्धाश्च महाराज परिश्रान्ताश्च संयुगे ।
नाभ्यजानन्त समरे काञ्चिच्चेष्टां महारथाः । त्रियामा रजनी चैषा घोररूपा भयानका । ८१७५
सहस्रयामप्रतिमा बभूव प्राणहारिणी । बध्यतां च तथा तेषां क्षतानाञ्च विशेषतः ।
अर्द्धरात्रिः समाजग्मे निद्रान्धानां विशेषतः । सर्व्वे ह्यासन् निरुत्साहाः क्षत्रिया दीनचेतसः ।

तव सैन्ये परेषाञ्च गतास्त्वा विगतेषवः । ते तदा पारयन्तश्च ह्रीमन्तश्च मनस्विनः ।
स्वधर्म्ममनुपश्यन्तो न जहुः स्वामनीकिनीं । शस्त्राण्यन्ये समुत्सृज्य निद्रान्धाः शेरते जनाः ।
गजेष्वन्ये रथेष्वन्ये हयेष्वन्ये च भारत । निद्रान्धा नो बुबुधिरे काञ्चिच्चेष्टां नराधिप । ८३८०
तानन्ये समरे योधाः प्रेषयन्ति यमक्षयं । स्वप्नायमानास्त्वपरे परानिति विचेतसः ।
आत्मानं समरे जघ्नुः स्वानेव च परानपि । नानावाचो विमुञ्चन्तः प्रयुद्धास्ते महारणे ।
अस्माकन्तु महाराज परेभ्यो बहवो जनाः । योद्धव्यमिति तिष्ठन्तो निद्रासंरक्तलोचनाः ।
संसर्पन्तो रणे केचिन्निद्रान्धास्ते परस्परं । जघ्नुः शूरा रणे शूरांस्तस्मिंस्तमसि दारुणे ।
हन्यमानमथात्मानं परेभ्यो बहवो जनाः । नाभ्यजानन्त समरे निद्रया मोहिता भृशं । ८३८५
तेषामेतादृशीञ्चेष्टां विज्ञाय पुरुषर्षभ । उवाच वाक्यं बीभत्सुरुच्चैः सन्नादयन्निव ।
श्रान्ता भवन्तो निद्रान्धाः सर्व्वे एव सवाहनाः । तमसा च वृते सैन्ये रजसा बहुलेन च ।
ते यूयं यदि मन्यध्वमुपारमत सैनिकाः । निमीलयत चात्रैव रणभूमौ मुहूर्त्तकं ।
ततो विनिद्रा विश्रान्ताश्चन्द्रमस्युदिते पुनः । संसाधयिष्यथान्योन्यं स्वर्गाय कुरुपाण्डवाः ।
तद्वचः सर्व्वधर्म्मज्ञा धार्म्मिकस्य निशम्य ते । अरोचयन्त सैन्यानि तदा चान्योन्यमब्रुवन् । ८३९०
चुक्रुशुः कर्ण कर्णेति राजन् दुर्य्योधनेति च । उपारमत पाण्डूनां विरता हि वरूथिनी ।
तथा विक्रोशतस्तस्य फाल्गुनस्य ततस्ततः । उपारमत पाण्डूनां सेना तव च भारत ।
तामस्य वाचं देवाश्च ऋषयश्च महात्मनः । सर्व्वे सैन्यानि चाक्षुद्रां प्रहृष्टाः प्रत्यपूजयन् ।
तत् सम्पूज्य वचोऽक्रूरं सर्व्वसैन्यानि भारत । मुहूर्त्तमस्वपन्राजन् श्रान्तानि भरतर्षभ ।
सा तु सम्प्राप्य विश्रामं ध्वजिनी तव भारत । सुखमाप्तवती काममर्ज्जुनं प्रत्यपूजयन् । ८३९५
त्वयि वेदास्तथाऽस्त्राणि त्वयि बुद्धिपराक्रमौ । धर्म्मस्त्वयि महाबाहो दया भूतेषु चानघ ।
यच्चाश्वस्तास्तवेच्छामः शर्म्म पार्थ तदस्तु ते । मनसश्च प्रियानर्थान् वीर क्षिप्रमवाप्नुहि ।
इति ते तं नरव्याघ्रं प्रशंसन्तो महारथाः । निद्रया समराक्षिप्तास्तूष्णीमासन् विशाम्पते ।
अश्वपृष्ठेषु चाप्यन्ये रथनीडेषु चापरे । गजस्कन्धगताश्चान्ये शेरते चापरे क्षितौ ।
सायुधाः संगदाश्चैव सखड्गाः सपरश्वधाः । सप्रासकवचाश्चान्ये नराः सुप्ताः पृथक् पृथक् । ८४००
गजाः पन्नगभोगाभैर्हस्तैर्भूरेणुभूषितैः । निद्रान्धा वसुधाञ्चक्रुः प्राणनिश्वासशीतलां ।
गजाः शुशुभिरे तत्र निःश्वसन्तो महीतले । विकीर्णा गिरयो यद्वन्निश्वसद्भिर्महोरगैः ।
समाञ्च विषमाञ्चक्रुः खुराग्रैर्विक्षतां महीं । हयाः काञ्चनयोक्त्राश्च केसरालम्बिभिर्युगैः ।
सुषुपुस्तत्र राजेन्द्र युक्ता वाहेषु सर्व्वशः । एवं हयाश्च नागाश्च योधाश्च भरतर्षभ ।
युद्धाद्विरम्य सुषुपुः श्रमेण महतान्विताः । तत् तथा निद्रया मग्नमबोधमस्वपद्बलं । ८४०५
कुशलैरिव विन्यस्तं पटे चित्रमिवाद्भुतं ।
ते क्षत्रियाः कुण्डलिनो युवानः परस्परं सायकविक्षताङ्गाः । कुम्भेषु लीनाः सुषुपुर्गजानां कुचेषु लग्ना इव कामिनीनां ।

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना । नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ।
दशशताक्षककुब्दरिनिःसृतः किरणकेशरभासुरपिञ्जरः । तिमिरवारणयूथविदारणः समुदियादुदयाचलकेशरी ।
हरवृषोदरगात्रसमद्युतिः स्मरशरासनपूर्णसमप्रभः । नववधूस्मितचारुमनोहरः प्रविकसत्कुमुदाकरबान्धवः । ८३१०
ततो मुहूर्त्तात् स भगवान् पुरस्तात् शशलक्षणः । अरुणं दर्शयामास ग्रसन् ज्योतिःप्रभं प्रभुः ।
अरुणस्य च तस्यानु जातरूपसमप्रभं । रश्मिजालं महच्चन्द्रो मन्दं मन्दमिवासृजत् ।
उत्सारयन्तः प्रभया तमस्ते चन्द्ररश्मयः । प्रययुः शनकैः सर्व्वा दिशः खञ्च क्षितिं तथा ।
ततो मुहूर्त्ताद्भुवनं ज्योतिर्भूतमिवाभवत् । अप्रख्यमप्रकाशञ्च जगामाशु तमस्तथा ।
प्रतिप्रकाशिते लोके दिवाभूते निशाकरे । विचेरुर्न विचेरुश्च राजन्नक्तञ्चरास्ततः । ८३१५
बोध्यमानन्तु तत्सैन्यं राजंश्चन्द्रस्य रश्मिभिः । बुबुधे शतपत्राणां वनं महदिवाम्भसि ।
यथा चन्द्रोदयोद्धूतः क्षुभितः सागरोऽभवत् । तथा चन्द्रोदयोद्धूतः स बभूव बलार्णवः ।
ततः प्रववृते युद्धं पुनरेव विशाम्पते । लोके लोकविनाशाय लोकं परमभीप्सतां ।
इति महाभारते द्रोणपर्व्वणि द्रोणवधपर्व्वणि सैन्यनिद्रायां पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥
॥ सञ्जय उवाच ॥ ततो दुर्य्योधनो द्रोणमभिगम्येदमब्रवीत् । अमर्षवशमापन्नो जनयन् हर्षतेजसी ।
॥ दुर्य्योधन उवाच ॥ न मर्षणीयाः सङ्ग्रामे विश्रमन्तः श्रमान्विताः । सपत्ना ग्लानमनसो लब्धलक्षा विशेषतः । ८३२०
यत्तु मर्षितमस्माभिर्भवतः प्रियकाम्यया । तत एते परिश्रान्ताः पाण्डवा बलवत्तराः ।
सर्व्वथा परिहीनाः स्म तेजसा च बलेन च । भवता पाल्यमानास्ते वर्द्धन्ते स्म पुनः पुनः ।
दिव्यान्यस्त्राणि सर्व्वाणि ब्रह्मास्त्राणि च यान्यपि । तानि सर्व्वाणि तिष्ठन्ति भवत्येव विशेषतः ।
न पाण्डवेया न वयं नान्ये लोके धनुर्धराः । युध्यमानस्य ते तुल्याः सत्यमेतद्ब्रवीमि ते ।
ससुरासुरगन्धर्व्वानिमान् लोकान् द्विजोत्तम । सर्व्वास्त्रविद्भवान् हन्याद्दिव्यैरस्त्रैर्न संशयः । ८३२५
स भवान् मर्षयत्येतांस्त्वत्तो भीतान् विशेषतः । शिष्यत्वं वा पुरस्कृत्य मम वा मन्दभाग्यतां ।
॥ सञ्जय उवाच ॥ एवमुद्धर्षितो द्रोणः कोपितश्चात्मजेन ते । समन्युरब्रवीद्राजन् दुर्य्योधनमिदं वचः ।
स्थविरः सन् परं शक्त्या घटे दुर्य्योधनाहवे । अतः परं मया कार्य्यं क्षुद्रं विजयगृद्धिना ।
अनस्त्रविदयं सर्व्वो हन्तव्योऽस्त्रविदा जनः । यद्भवान् मन्यते चापि शुभं वा यदि वाऽशुभं ।
तद्वै कर्त्तास्मि कौरव्य वचनात्तव नान्यथा । निहत्य सर्व्वपाञ्चालान् युद्धे कृत्वा पराक्रमं । ८३३०
विमोक्ष्ये कवचं राजन् सत्येनायुधमालभे । मन्यसे यच्च कौन्तेयमर्जुनं श्रान्तमाहवे ।
तस्य वीर्य्यं महाबाहो शृणु सत्येन कौरव । तं न देवा न गन्धर्व्वा न यक्षा न च राक्षसाः ।
उत्सहन्ते रणे सोढुं कुपितं सव्यसाचिनं । खाण्डवे येन भगवान् प्रत्युद्यातः सुरेश्वरः ।
सायकैर्व्वारितश्चापि वर्षमाणो महात्मना । यक्षा नागास्तथा दैत्या ये चान्ये बलगर्व्विताः ।
निहताः पुरुषेन्द्रेण तच्चापि विदितं तव । गन्धर्व्वा घोषयात्रायां चित्रसेनादयो जिताः । ८३३५
यूयं तैर्ह्रियमाणाश्च मोक्षिता दृढधन्वना । निवातकवचाश्चापि देवानां शत्रवस्तथा ।

सुरैरवध्याः संग्रामे तेन वीरेण निर्जिताः । दानवानां सहस्राणि हिरण्यपुरवासिनां ।
विजिग्ये पुरुषव्याघ्रः स शक्यो मानुषैः कथं । प्रत्यक्षञ्चैव ते सर्व्वं यथा बलमिदं तव ।
क्षयितुं पाण्डुपुत्रेण चेष्टमानं विशाम्पते ।
॥ सञ्जय उवाच ॥ तं तथा वै प्रशंसन्तमर्ज्जुनं कुपितस्तदा । द्रोणं तव सुतो राजन् पुनरेवेदमब्रवीत् । ८३३०
अहं दुःशासनः कर्णः शकुनिर्मातुलश्च मे । हनिष्यामोऽर्ज्जुनं सङ्ख्ये द्वैधीकृत्याद्य भारतीं ।
तस्य तद्वचनं श्रुत्वा भारद्वाजो हसन्निव । अन्ववर्त्तत वेगेन स्वस्ति तेऽस्त्विति चाब्रवीत् ।
को हि गाण्डीवधन्वानं ज्वलन्तमिव तेजसा । अक्षयं क्षपयेत् कश्चित् क्षत्रियः क्षत्रियर्षभं ।
तं न वित्तपतिर्नेन्द्रो न यमो न जलेश्वरः । नासुरोरगरक्षांसि क्षपयेयुः सहायुधं ।
मूढास्त्वेवं प्रभाषन्ते यानीमान्यात्थ भारत । युद्धे त्वर्ज्जुनमासाद्य स्वस्तिमान् को व्रजेद्गृहान् । ८३३५
त्वं हि सर्व्वाभिशङ्कित्वान्निष्ठुरः पापनिश्चयः । श्रेयसस्त्वद्धिते युक्तांस्तत्तद्वक्तुमिहेच्छसि ।
गच्छ त्वमपि कौन्तेयमात्मार्थे तं प्रबाधितुं । त्वमथाशंससे युद्धं कुलजः क्षत्रियो ह्यसि ।
इमान् किं पार्थिवान् सर्व्वान् घातयिष्यस्यनागसः । त्वमस्य मूलं वैरस्य तस्मादासादयार्ज्जुनं ।
एष ते मातुलः प्राज्ञः क्षत्रधर्म्ममनुव्रतः । दुर्द्यूतदेवी गान्धारे प्रयात्वर्ज्जुनमाहवे ।
एषोऽक्षकुशलो जिह्मो द्यूतकृत् कैतवः शठः । देविता निकृतिप्राज्ञो युद्धे जेष्यति पाण्डवान् । ८३४०
त्वया कथितमत्यर्थं कर्णेन सह हृष्टवत् । असकृच्छून्यवन्मोहाद्धृतराष्ट्रस्य शृण्वतः ।
अहञ्च तात कर्णश्च भ्राता दुःशासनश्च मे । पाण्डुपुत्रान् हनिष्यामः सहिताः समरे त्रयः ।
इति ते कत्थमानस्य श्रुतं संसदि संसदि । अनुतिष्ठ प्रतिज्ञातं सत्यवाक् भव तैः सह ।
एष ते पाण्डवः शत्रुरविशङ्कोऽग्रतः स्थितः । क्षत्रधर्म्ममवेक्षस्व श्लाघ्यस्तव वधो जयात् ।
दत्तं भुक्तमधीतञ्च प्राप्तमैश्वर्य्यमीप्सितं । कृतकृत्योऽनृणश्चासि मा भैर्युध्यस्व पाण्डवं । ८३४५
इत्युक्त्वा समरे द्रोणो न्यवर्त्तत यतः परे । द्वैधीकृत्य ततः सेनां युद्धं समभवत्तदा ।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणवधपर्व्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥
॥ सञ्जय उवाच ॥ त्रिभागमात्रशेषायां रात्र्यां युद्धमवर्त्तत । कुरूणां पाण्डवानाञ्च संहृष्टानां विशाम्पते ।
अथ चन्द्रप्रभां मुष्णन्नादित्यस्य पुरःसरः । अरुणोऽभ्युदयाञ्चक्रे ताम्रीकुर्व्वन्निवाम्बरं ।
प्राच्यां दिशि सहस्रांशोररुणेनारुणीकृतं । तापनीयं यथा चक्रं भ्राजते रविमण्डलं ।
ततो रथाश्वांश्च मनुष्ययानान्युत्सृज्य सर्व्वे कुरुपाण्डुयोधाः । दिवाकरस्याभिमुखा जपन्तः सन्ध्यागताः प्राञ्जलयो बभूवुः । ८३५०
ततो द्वैधीकृते सैन्ये द्रोणः सोमकपाण्डवान् । अभ्यद्रवत् स पाञ्चालान् दुर्य्योधनपुरोगमः ।
द्वैधीकृतान् कुरून् दृष्ट्वा माधवोऽर्ज्जुनमब्रवीत् । सपत्नान् सव्यतः कृत्वा अपसव्यमिमं कुरु ।
स माधवमनुज्ञाप्य कुरुष्वेति धनञ्जयः । द्रोणकर्णौ महेष्वासौ सव्यतः पर्य्यवर्त्तत ।
अभिप्रायन्तु कृष्णस्य ज्ञात्वा परपुरञ्जयः । आजिशीर्षगतं पार्थं भीमसेनोऽभ्युवाच ह ।

॥ भीमसेन उवाच ॥ अर्जुनार्जुन बीभत्सो शृणुष्वेतद्वचो मम । यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः । ८७९५
अस्मिंश्चेदागते काले श्रेयो न प्रतिपत्स्यसे । असम्भावितरूपः सन्नानृशंस्यं करिष्यसि ।
सत्यश्रीधर्म्मयशसां वीर्य्येणानृण्यमाप्नुहि । भिन्ध्यनीकं युधां श्रेष्ठ अपसव्यमिमान् कुरु ।
॥ सञ्जय उवाच ॥ सव्यसाची स भीमेन चोदितः केशवेन च । कर्णद्रोणावतिक्रम्य समन्तात् पर्य्यवारयत् ।
तमाजिशीर्षमायान्तं दहन्तं क्षत्रियर्षभान् । पराक्रान्तं पराक्रम्य ततः क्षत्रियपुङ्गवाः ।
नाशक्नुवन् वारयितुं वर्द्धमानमिवानलं । अथ दुर्य्योधनः कर्णः शकुनिश्चापि सौबलः । ८८००
अभ्यवर्षञ्छरव्रातैः कुन्तीपुत्रं धनञ्जयं । तेषामस्त्राणि सर्व्वेषामुत्तमास्त्रविदाम्वरः ।
कदर्थीकृत्य राजेन्द्र शरवर्षैरवाकिरत् । अस्त्रैरस्त्राणि सन्वार्य्य लघुहस्तो जितेन्द्रियः ।
सर्व्वानविध्यन्निशितैर्द्दशभिर्द्दशभिः शरैः । उद्धूता रजसो वृष्टिः शरवृष्टिस्तथैव च ।
तमश्च घोरं शब्दश्च तदा समभवन्महान् । न द्यौर्न भूमिर्न दिशः प्राज्ञायन्त तथागते ।
सैन्येन रजसा मूढं सर्व्वमन्धमिवाभवत् । नैव ते न वयं राजन् प्राज्ञासिष्म परस्परं । ८८०५
उद्देशेन हि तेन स्म समयुध्यन्त पार्थिवाः । विरथा रथिनो राजन् समासाद्य परस्परं ।
केशेषु समसज्जन्त कवचेषु भुजेषु च । हताश्वा हतसूताश्च निश्चेष्टा रथिनस्तथा ।
जीवन्त इव तत्र स्म व्यदृश्यन्त भयार्द्दिताः । हतान् गजान् समाश्लिष्य पर्व्वतानिव वाजिनः ।
गतसत्त्वा व्यदृश्यन्त तथैव सह सादिभिः । ततस्त्वभ्यवसृत्यैव संग्रामादुत्तरां दिशं ।
अतिष्ठदाहवे द्रोणो विधूम इव पावकः । तमाजिशीर्षादेकान्तमपक्रान्तं निशम्य तु । ८८१०
समकम्पन्त सैन्यानि पाण्डवानां विशाम्पते । भ्राजमानं श्रिया युक्तं ज्वलन्तमिव तेजसा ।
दृष्ट्वा द्रोणं परे चेषुश्चेलुर्मम्लुश्च भारत । आह्वयन्तं परानीकं प्रभिन्नमिव वारणं ।
नैनमाशंसिरे जेतुं दानवा वासवं यथा । केचिदासन्निरुत्साहाः केचित् क्रुद्धा मनस्विनः ।
विस्मिताश्चाभवन् केचित् केचिदासन्नमर्षिताः । हस्तैर्हस्ताग्रमपरे प्रत्यपिंषन्नराधिपाः ।
अपरे दशनैरोष्ठानदशन् क्रोधमूर्च्छिताः । व्याक्षिपन्नायुधान्यन्ये ममृदुश्चापरे भुजान् । ८८१५
अन्ये चाभ्यपतन् द्रोणं जितात्मानो महौजसः । पाञ्चालास्तु विशेषेण द्रोणसायकपीडिताः ।
समसज्जन्त राजानं समरे भृशवेदनाः । ततो विराटद्रुपदौ द्रोणम्प्रतीयतू रणे ।
तथा चरन्तं संग्रामे भृशं परमदुर्ज्जयं । द्रुपदस्य ततः पौत्रास्त्रय एव विशाम्पते ।
चेदयश्च महेष्वासा द्रोणमेवाभ्ययुर्युधि । तेषां द्रुपदपौत्राणां त्रयाणां निशितैः शरैः ।
त्रिभिर्द्रोणोऽहरत् प्राणांस्ते हता न्यपतन् भुवि । ततो द्रोणोऽजयद्युद्धे चेदिकेकयसृञ्जयान् । ८८२०
मत्स्यांश्चैवाजयत्सर्व्वान् भारद्वाजो महारथः । ततस्तु द्रुपदः क्रोधात् शरवर्षं समासृजत् ।
द्रोणं प्रति महाराज विराटश्चैव संयुगे । तं निहत्येषुवर्षन्तु द्रोणः क्षत्रियमर्द्दनः ।
तौ शरैश्छादयामास विराटद्रुपदावुभौ । द्रोणेन छाद्यमानौ तौ क्रुद्धौ संग्राममूर्द्धनि ।
द्रोणं शरैर्विव्यधतुः परमं क्रोधमास्थितौ । ततो द्रोणो महाराज क्रोधामर्षसमन्वितः ।

भल्लाभ्यां भृशतीक्ष्णाभ्यां चिच्छेद धनुषी तयोः । ततो विराटः कुपितः समरे तोमरान् दश । ८४९५
दश चिक्षेप च शरान् द्रोणस्य वधकाङ्क्षया । शक्तिञ्च द्रुपदो घोरामायसीं स्वर्णभूषितां ।
चिक्षेप भुजगेन्द्राभां क्रुद्धो द्रोणरथम्प्रति । ततो भल्लैः सुनिशितैश्छित्वा तांस्तोमरान्दश ।
शक्तिं कनकवैदूर्य्यां द्रोणश्चिच्छेद सायकैः । ततो द्रोणः सुपीताभ्यां भल्लाभ्यामरिमर्द्दनः ।
द्रुपदञ्च विराटञ्च प्रैषीद्वैवस्वतक्षयं । हते विराटे द्रुपदे केकयेषु तथैव च ।
तथैव चेदिमत्स्येषु पाञ्चालेषु तथैव च । हतेषु त्रिषु वीरेषु द्रुपदस्य च नप्तृषु । ८५००
द्रोणस्य कर्म्म तद्दृष्ट्वा कोपदुःखसमन्वितः । शशाप रथिनां मध्ये धृष्टद्युम्नो महामनाः ।
इष्टापूर्त्तात्तथा क्षात्राद्ब्राह्मण्याच्च स नश्यतु । द्रोणो यस्याद्य मुच्येत यं वा द्रोणः पराभवेत् ।
इति तेषां प्रतिश्रुत्य मध्ये सर्व्वधनुष्मतां । आयाद्द्रोणं सहानीकः पाञ्चाल्यः परवीरहा ।
पाञ्चालास्त्वेकतो द्रोणमभ्यघ्नन् पाण्डवोऽन्यतः । दुर्य्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
सोदर्य्याश्च यथा मुख्यास्तेऽरक्षन् द्रोणमाहवे । रक्ष्यमाणं तथा द्रोणं समरे तैर्महात्मभिः । ८५०५
यतमानास्तु पाञ्चाला न शेकुः प्रतिवीक्षितुं । तत्राक्रुध्यद्भीमसेनो धृष्टद्युम्नस्य मारिष ।
स एनं वाग्भिरुग्राभिस्ततक्ष पुरुषर्षभ ।
॥ भीमसेन उवाच ॥ द्रुपदस्य कुले जातः सर्व्वास्त्रेष्वस्त्रवित्तम । कः क्षत्रियो मन्यमानः प्रेक्षेतारिमवस्थितं ।
पितृपुत्रवधम्प्राप्य पुमान् कः परिपालयेत् । विशेषतस्तु शपथं शपित्वा राजसंसदि ।
एष वैश्वानर इव समिद्धः स्वेन तेजसा । शरचापेन्धनो द्रोणः क्षत्रं दहति तेजसा । ८५१०
पुरा करोति निःशेषां पाण्डवानामनीकिनीं । स्थिताः पश्यत मे कर्म्म द्रोणमेव व्रजाम्यहं ।
इत्युक्त्वा प्राविशत् क्रुद्धो द्रोणानीकं वृकोदरः । शरैः पूर्णायतोत्सृष्टैर्द्रावयंस्तव वाहिनीं ।
धृष्टद्युम्नोऽपि पाञ्चाल्यः प्रविश्य महतीञ्चमूं । आससाद रणे द्रोणं तदासीत्तुमुलं महत् ।
नैव नस्तादृशं युद्धं दृष्टपूर्व्वं न च श्रुतं । यथा सूर्य्योदये राजन् समुत्पिञ्जोऽभवन्महान् ।
संसक्तान्येव चादृश्यन् रथवृन्दानि मारिष । हतानि च विकीर्णानि शरीराणि शरीरिणां । ८५१५
केचिदन्यत्र गच्छन्तः पथि चान्यैरुपद्रुताः । विमुखाः पृष्ठतश्चान्ये ताड्यन्ते पार्श्वतः परे ।
तथा संसक्तयुद्धन्तदभवद्भृशदारुणं । अथ सन्ध्यागतः सूर्य्यः क्षणेन समपद्यत ।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणवधपर्व्वणि सङ्कुलयुद्धे सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥
॥ सञ्जय उवाच ॥ ते तथैव महाराज दंशिता रणमूर्द्धनि । सन्ध्यागतं सहस्रांशुमादित्यमुपतस्थिरे ।
उदिते तु सहस्रांशौ तप्तकाञ्चनसंप्रभे । प्रकाशितेषु लोकेषु पुनर्युद्धमवर्त्तत ।
द्वन्द्वानि यानि तत्रासन् संसक्तानि पुरोदयात् । तान्येवाभ्युदिते सूर्य्ये समसज्जन्त भारत । ८५२०
रथैर्हया हयैर्नागाः पादाताश्चापि कुञ्जरैः । हया हयैः समाजग्मुः पादाताश्च पदातिभिः ।
रथा रथैरिभैर्नागा हयैश्च भरतर्षभ । संयुक्ताश्च वियुक्ताश्च योधाः सन्न्यपतन्रणे ।
ते रात्रौ कृतकर्म्माणः श्रान्ताः सूर्य्यस्य तेजसा । क्षुत्पिपासापरीताङ्गा विसंज्ञा बहवोऽभवन् ।

शङ्खभेरीमृदङ्गानां कुञ्जराणाञ्च गर्ज्जतां। विस्फारितविकृष्टानां कार्मुकाणाञ्च कूजतां।
शब्दः समभवद्राजन् दिवस्पृक् भरतर्षभ। द्रवताञ्च पदातीनां शस्त्राणां पततामपि। ८५२५
हयानां द्रवताञ्चैव रथानां विनिवर्त्ततां। क्रोशतां गर्ज्जताञ्चैव तदासीत्तुमुलं महत्।
विवृद्धस्तुमुलः शब्दो द्यामगच्छन्महांस्तदा। नानायुधनिकृत्तानां चेष्टतामातुरः स्वनः।
भूमावश्रूयत महांस्तदासीत् कृपणं महत्। पततां पतिताञ्च पत्त्यश्वरथदन्तिनां।
तेषु सर्व्वेष्वनीकेषु व्यतिषक्तेष्वनेकशः। स्वे स्वान् जघ्नुः परे चापि स्वान् परे च परान् रणे।
वीरबाहुविसृष्टाश्च योधेषु च गजेषु च। राशयः प्रत्यदृश्यन्त वाससां नेजनेष्विव। ८५३०
उद्यतप्रतिपिष्टानां खड्गानां वीरबाहुभिः। स एव शब्दस्तद्रूपो वाससां निज्यतामिव।
अर्द्धासिभिस्तथा खड्गैस्तोमरैः सपरश्वधैः। निकृष्टयुद्धं संसक्तं महदासीत् सुदारुणं।
गजाश्वकायप्रभवां नरदेहप्रवाहिनीं। शस्त्रमत्स्यसुसम्पूर्णां मांसशोणितकर्द्दमां।
आर्त्तनादस्वनवतीं पताकावस्त्रफेनिलां। नदीं प्रावर्त्तयन् वीराः परलोकप्रवाहिनीं।
शस्त्रशक्त्यर्द्दिताः श्रान्ता रात्रिमूढाल्पचेतसः। विष्टभ्य सर्व्वगात्राणि व्यतिष्ठन् गजवाजिनः। ८५३५
संशुष्कवदना वीराः शिरोभिश्चारुकुण्डलैः। युद्धोपकरणैश्चैव तत्र तत्र चकाशिरे।
क्रव्यादसङ्घैः सङ्कीर्णं मृतैरर्द्धमृतैरपि। नासीद्रथपथस्तत्र सर्व्वमायोधनं प्रति।
मज्जत्सु चक्रेषु रथान् सत्त्वमास्थाय वाजिनः। कथञ्चिदवहन् श्रान्ता वेपमानाः शरार्द्दिताः।
कुलसत्त्वबलोपेता वाजिनो वारणोपमाः। विह्वलं तत् समुद्भ्रान्तं सभयं भारतातुरं।
बलमासीत्तदा सर्व्वमृते द्रोणार्ज्जुनावुभौ। तावेवास्तां निलयनं तावार्त्तायनमेव च। ८५४०
तावेवान्ये समासाद्य जग्मुर्वैवस्वतक्षयं। आविग्नमभवत् सर्व्वं कौरवाणां महद्बलं।
पाञ्चालानाञ्च संसक्तं न प्राज्ञायत किञ्चन। अन्तकाक्रीडसदृशे भीरूणां भयवर्द्धने।
पृथिव्यां राजवंशानामाविग्ने महति क्षये। न तत्र कर्णं न द्रोणं नार्ज्जुनं न युधिष्ठिरं।
न भीमसेनं न यमौ न पाञ्चाल्यं न सात्यकिं। न च दुःशासनं द्रौणिं न दुर्य्योधनसौबलौ।
न कृपं मद्रराजं वा कृतवर्म्माणमेव च। न चान्यांश्चैव चात्मानं न क्षितिं न दिशस्तथा। ८५४५
पश्याम राजन् संसक्तान् सैन्येन रजसा वृतान्। सम्भ्रान्ते तुमुले घोरे रजोमेघे समुत्थिते।
द्वितीयामिव सम्प्राप्तामसन्यन्त निशां तदा। न ज्ञायन्ते कौरवेया न पाञ्चाला न पाण्डवाः।
न दिशो न दिवं नोर्व्वीं न समं विषमं तथा। हस्तसंस्पर्शमापन्नान् परान् वाप्यथ वा स्वकान्।
न्यपातयंस्तदा युद्धे नराः स्म विजयैषिणः। उद्धूतत्वाच्च रजसः प्रसेकाच्छोणितस्य च।
प्रशशाम रजो भौमं शीघ्रत्वादनिलस्य च। तत्र नागा हया योधा रथिनोऽथ पदातयः। ८५५०
पारिजातवनानीव व्यरोचन् रुधिरोक्षिताः। ततो दुर्य्योधनः कर्णो द्रोणो दुःशासनस्तथा।
पाण्डवैः समसज्जन्त चतुर्भिश्चतुरो रथाः। दुर्य्योधनः सह भ्रात्रा यमाभ्यां समसज्जत।
वृकोदरेण राधेयो भारद्वाजेन चार्ज्जुनः। तद्घोरं महदाश्चर्य्यं सर्व्वे प्रैक्षन्त सर्व्वतः।

रथमार्गैर्व्विचित्रैश्च विचित्ररथसङ्कुलं। रथर्षभानां मुख्यानां सन्निपातममानुषं।
अपश्यन्रथिनो युद्धं विचित्रञ्चित्रयोधिनां। यतमानाः पराक्रान्ताः परस्परजिगीषवः। ७५५५
जीमूता इव घर्म्मान्ते शरवर्षैरवाकिरन्। ते रथान् सूर्य्यसङ्काशानास्थिताः पुरुषर्षभाः।
अशोभन्त महामेघाः शारदाः समुपस्थिताः। योधास्ते तु महाराज क्रोधामर्षसमन्विताः।
स्पर्द्धिनः परमेष्वासाः कृतयत्ना धनुर्द्धराः। अभ्यगच्छंस्तथाऽन्योन्यं मत्ता गजवृषा इव।
न नूनं देहभेदोऽस्ति काले तस्मिन् समागमे। यत्र सर्व्वेण युगपद्व्यशीर्य्यन्त महारथाः।
बाहुभिश्चरणैश्छिन्नैः शिरोभिश्चारुकुण्डलैः। कार्म्मुकैर्व्विशिखैः प्रासैः खड्गैः परशुपट्टिशैः। ७५६०
नालीकैः क्षुरनाराचैर्नखरैः शक्तितोमरैः। अन्यैश्च विविधाकारैर्धौतैः प्रहरणोत्तमैः।
चित्रैश्च विविधाकारैः शरीरावरणैरपि। विचित्रैश्च रथैर्भग्नैर्हतैश्च गजवाजिभिः।
शून्यैश्च नगराकारैर्हतयोधैर्ध्वजै रथैः। अमनुष्यैर्हयैस्त्रस्तैः कृष्यमाणैस्ततस्ततः।
वातायमानैरसकृद्धतवीरैरलङ्कृतैः। व्यजनैः कङ्कटैश्चैव ध्वजैश्च विनिपातितैः।
छत्रैराभरणैर्व्वस्त्रैर्माल्यैश्च ससुगन्धिभिः। हारैः किरीटैर्मुकुटैरुष्णीषैः किङ्किणीगणैः। ७५६५
उरस्थैर्मणिभिर्न्निष्कैश्चूडामणिभिरेव च। आसीदायोधनं तत्र नभस्तारागणैरिव।
ततो दुर्य्योधनस्यासीन्नकुलेन समागमः। अमर्षितेन क्रुद्धस्य क्रुद्धेनामर्षितस्य च।
अपसव्यञ्चकाराथ माद्रीपुत्रस्तवात्मजं। किरञ्छरशतैर्हृष्टस्तत्र नादो महानभूत्।
अपसव्यं कृतः सङ्ख्ये भ्रातृव्येनात्यमर्षिणा। सोऽमर्षितस्तमप्याजौ प्रतिचक्रेऽपसव्यतः।
पुत्रस्तव महाराज राजा दुर्य्योधनोऽद्भुतं। ततः प्रतिचिकीर्षन्तमपसव्यन्तु ते सुतं। ७५७०
न्यवारयत तेजस्वी नकुलश्चित्रमार्गवित्। स सर्व्वतो निवार्य्यैनं शरजालेन पीडयन्।
विमुखं नकुलश्चक्रे तत्सैन्याः समपूजयन्। तिष्ठ तिष्ठेति नकुलो बभाषे तनयं तव।
संस्मृत्य बहुदुःखानि तव दुर्म्मन्त्रितेन च।

इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणवधपर्व्वणि नकुलयुद्धे अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

॥ सञ्जय उवाच ॥ ततो दुःशासनः क्रुद्धः सहदेवमुपाद्रवत्। रथवेगेन तीव्रेण कम्पयन्निव मेदिनीं।
तस्यापतत एवाशु भल्लेनामित्रकर्षणः। माद्रीसुतः शिरो यन्तुः सशिरस्त्राणमाच्छिनत्। ७५७५
नैनं दुःशासनः सूतं नापि कश्चन सैनिकः। कृत्तोत्तमाङ्गमाशुत्वात् सहदेवेन बुद्धवान्।
रथस्यासंग्रहीतत्वात् प्रयान्त्यश्वा यथासुखं। ततो दुःशासनः सूतं बुबुधे गतचेतसं।
स हयान् संनियम्याजौ स्वयं हयविशारदः। युयुधे रथिनां श्रेष्ठो लघु चित्रञ्च सुष्ठु च।
तदस्यापूजयन् कर्म्म स्वे परे चैव संयुगे। हतसूतरथेनाजौ व्यचरद्यदभीतवत्।
सहदेवस्तु तानश्वांस्तीक्ष्णैर्व्वाणैरवाकिरत्। पीड्यमानाः शरैश्चाशु प्राद्रवंस्ते ततस्ततः। ७५८०
स रश्मिषु विषक्तत्वादुत्ससर्ज्ज शरासनं। धनुषा कर्म्म कुर्व्वंस्तु रश्मीन् स पुनरुत्सृजन्।
छिद्रेषु तेषु तं वाणैर्माद्रीपुत्रोऽभ्यवाकिरत्। परीप्संस्त्वत्सुतं कर्णस्तदन्तरमापतत्।

वृकोदरस्ततः कर्णं त्रिभिर्भल्लैः समाहितः । आकर्णपूर्णैरभ्यघ्नन् बाह्वोरुरसि चार्पयत् ।
न्यवर्त्तत ततः कर्णः संहृष्ट इवोरगः । भीममावारयामास विकिरन्निशिताञ्छरान् ।
ततोऽभूत्तुमुलं युद्धं भीमराधेययोस्तदा । तौ वृषाविव नर्दन्तौ विवृत्तनयनावुभौ । ८५८५
वेगेन महताऽन्योन्यं संरब्धावभिपेततुः । अतिसंश्लिष्टयोस्तत्र तयोराहवशौण्डयोः ।
विच्छिन्नशरपातत्वात् गदायुद्धमवर्त्तत । गदया भीमसेनस्तु कर्णस्य रथकूवरं ।
बिभेदाशु ततो राजंस्तदद्भुतमिवाभवत् । ततो भीमस्य राधेयो गदामादाय वीर्यवान् ।
अवासृजद्रथे तान्तु बिभेद गदया गदां । ततो भीमः पुनर्गुर्व्वीं चिक्षेपाधिरथेर्गदां ।
तां शरैर्दशभिः कर्णः सुपुङ्खैः सुप्रवेजितैः । प्रत्यविध्यत् पुनश्चान्यैः सा भीमं पुनराव्रजत् । ८५९०
व्यालीव मन्त्राभिहता कर्णवाणैरभिद्रुता । तस्याः प्रतिनिपातेन भीमस्य विपुलो ध्वजः ।
पपात सारथिश्चास्य मुमोह गदया हतः । स कर्णे सायकानष्टौ व्यसृजत् क्रोधमूर्च्छितः ।
तैस्तस्य निशितैस्तीक्ष्णैर्भीमसेनो महाबलः । चिच्छेद परवीरघ्नः प्रहसन्निव भारत ।
ध्वजं शरासनञ्चैव शरावापञ्च भारत । कर्णोऽप्यन्यद्धनुर्गृह्य हेमपृष्ठं दुरासदं ।
ततः पुनस्तु राधेयो हयानस्य रथेषुभिः । ऋक्षवर्णान् जघानाशु तथोभौ पार्ष्णिसारथी । ८५९५
स विपन्नरथो भीमो नकुलस्याप्लुतो रथं । हरिर्यथा गिरेः शृङ्गं समाक्रामदरिन्दमः ।
तथा द्रोणार्ज्जुनौ चित्रमयुध्येतां महारथौ । आचार्य्यशिष्यौ राजेन्द्र कृतप्रहरणौ युधि ।
लघुसन्धानयोगाभ्यां रथयोश्चरणेन च । मोहयन्तौ मनुष्याणां चक्षूंषि च मनांसि च ।
उपारमन्त ते ऽन्योन्यं योधाश्चकम्पिरे तथा । अदृष्टपूर्व्वं पश्यन्तस्तद्युद्धं गुरुशिष्ययोः ।
विचित्रं पृतनामध्ये रथमार्गप्रदर्शिनोः । अन्योन्यमपसव्यन्तु कर्त्तुं वीरौ तदेषतुः । ८६००
पराक्रमं तयोर्योधा ददृशुस्तं सुविस्मिताः । तयोः समभवद्युद्धं द्रोणपाण्डवयोर्महत् ।
आमिषार्थे महाराज गगने श्येनयोरिव । यद्यच्चकार द्रोणस्तु कुन्तीपुत्रजिगीषया ।
तस्य तस्य विघातार्थं तत्तत् सकुरुते ऽर्ज्जुनः । यदा द्रोणो न शक्नोति पाण्डवस्य विशेषितुं ।
ततः प्रादुश्चकारास्त्रमस्त्रमार्गविशारदः । ऐन्द्रं पाशुपतं त्वाष्ट्रं वायव्यमथ वारुणं ।
मुक्तं मुक्तं द्रोणचापात्तज्जघान धनञ्जयः । अस्त्राण्यस्त्रैर्यदा तस्य विधिवद्धन्ति पाण्डवः । ८६०५
ततो ऽस्त्रैः परमैर्दिव्यैर्द्रोणः पार्थमवाकिरत् । यद्यदस्त्रं स पार्थाय प्रयुङ्क्ते विजिगीषया ।
तस्य तस्य विघाताय तत्तद्धि कुरुते ऽर्ज्जुनः । स बध्यमानेष्वस्त्रेषु दिव्येष्वपि यथाविधि ।
अर्ज्जुनेनार्ज्जुनं द्रोणो मनसैवाभ्यपूजयत् । मेने चात्मानमधिकं पृथिव्यामपि भारत ।
तेन शिष्येण सर्व्वेभ्यः शस्त्रविद्भ्यः परन्तपः । वार्य्यमाणस्तु पार्थेन तथा मध्ये महात्मनां ।
यतमानोऽर्ज्जुनं प्रीत्या प्रत्यवारयदुत्स्मयन् । ततोऽन्तरीक्षे देवाश्च गन्धर्व्वाश्च सहस्रशः । ८६१०
ऋषयः सिद्धसङ्घाश्च व्यदृश्यन्त समन्ततः । तदप्सरोभिराकीर्णं यक्षराक्षससङ्कुलं ।
श्रीमदाकाशमभवद्भूयो मेघाकुलं यथा । तत्र स्मान्तर्हिता वाचो विचरन्ति पुनः पुनः ।

द्रोणसंस्तवसंयुक्ताः पार्थस्य च महात्मनः । विसृज्यमानेष्वस्त्रेषु व्योमवत्सु ततस्ततः ।
ऋषिवंशाश्च सिद्धाश्च चारणाश्च समागताः । नैवेदं मानुषं युद्धं नासुरं न च राक्षसं ।
न दैवं न च गान्धर्व्वं ब्राह्मं ध्रुवमिदं परं । विचित्रमिदमाश्चर्य्यं न नो दृष्टं न च श्रुतं । ८६५५
अतिपाण्डवमाचार्य्यो द्रोणश्चाप्यतिपाण्डवं । नानयोरन्तरं द्रष्टुं शक्यमन्येन केनचित् ।
यदि रुद्रो द्विधाकृत्य युध्येतात्मानमात्मना । तत्र शक्योपमा कर्त्तुमन्यत्र न तु वर्त्तते ।
ज्ञानमेकस्थमाचार्य्ये ज्ञानं योगश्च पाण्डवे । शौर्य्यमेकस्थमाचार्य्ये बलं शौर्य्यञ्च पाण्डवे ।
नेमौ शक्यौ महेष्वासौ रणे क्षपयितुं परैः । इच्छमानौ पुनरिमौ हन्येतां सामरं जगत् ।
इत्यब्रुवन्महाराज दृष्ट्वा तौ पुरुषर्षभौ । अन्तर्हितानि भूतानि प्रकाशानि च सर्व्वशः । ८६६०
ततो द्रोणो ब्राह्ममस्त्रं प्रादुश्चक्रे महामतिः । सन्तापयन्रणे पार्थं भूतान्यन्तर्हितानि च ।
ततश्चचाल पृथिवी सपर्व्वतवनद्रुमा । ववौ च विषमो वायुः सागराश्चापि चुक्षुभुः ।
ततस्त्रासो महानासीत् कुरुपाण्डवसैन्ययोः । सर्व्वेषाञ्चैव भूतानामुद्यतेऽस्त्रे महात्मना ।
ततः पार्थोऽप्यसम्भ्रान्तस्तदस्त्रं प्रतिजघ्निवान् । ब्रह्मास्त्रेणैव राजेन्द्र ततः सर्व्वमशीशमत् ।
यदा न गम्यते पारं तयोरन्यतरस्य वा । तदा सङ्कुलयुद्धेन तद्युद्धं व्याकुलीकृतं । ८६६५
नाज्ञायत ततः किञ्चित् पुनरेव विशाम्पते । प्रवृत्ते तुमुले युद्धे द्रोणपाण्डवयोर्म्मृधे ।
शरजालैः समाकीर्णे मेघजालैरिवाम्बरे । न स्म सम्पतते कश्चिदन्तरीक्षचरस्तदा ।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणवधपर्व्वणि सङ्कुलयुद्धे एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥
॥ सञ्जय उवाच ॥ तस्मिंस्तदा वर्त्तमाने नराश्वगजसङ्क्षये । दुःशासनो महाराज धृष्टद्युम्नमयोधयत् ।
स तु रुक्मरथासक्तो दुःशासनशरार्द्दितः । अमर्षात्तव पुत्रस्य शरैर्वाहानवाकिरत् ।
क्षणेन स रथस्तस्य सध्वजः सहसारथिः । नादृश्यत महाराज पार्षतस्य शरैश्चितः । ८६७०
दुःशासनस्तु राजेन्द्र पाञ्चाल्यस्य महात्मनः । नाशकत् प्रमुखे स्थातुं शरजालप्रपीडितः ।
स तु दुःशासनं बाणैर्विमुखीकृत्य पार्षतः । किरन्शरसहस्राणि द्रोणमेवाभ्ययाद्रणे ।
प्रत्यपद्यत हार्द्दिक्यः कृतवर्म्मा त्वनन्तरं । सोदर्य्याणां त्रयश्चैव तथैनं पर्य्यवारयन् ।
तं यमौ पृष्ठतोऽन्वितौ रक्षन्तौ पुरुषर्षभौ । द्रोणायाभिमुखं यान्तं दीप्यमानमिवानलं ।
सम्प्रहारमकुर्व्वंस्ते सर्व्वे च सुमहारथाः । अमर्षिताः सत्त्ववन्तः कृत्वा मरणमग्रतः । ८६७५
शुद्धात्मानः शुद्धवृत्ता राजन् स्वर्गपुरस्कृताः । आर्य्यं युद्धमकुर्व्वंस्ते परस्परजिगीषवः ।
शुक्लाभिजनकर्म्माणो मतिमन्तो जनाधिपाः । धर्म्मयुद्धमयुध्यन्त पश्यन्तो गतिमुत्तमां ।
न तत्रासीदधर्म्मिष्ठमशस्त्रं युद्धमेव च । नात्र कर्णी न नालीको न लिप्तो न च वस्तिकः ।
न सूचीकपिशो नैव न गवास्थिगजास्थिकः । इषुरासीन्न संश्लिष्टो न पूतिर्न च जिह्मगः ।
ऋजून्येव हि शस्त्राणि सर्व्वे शस्त्राण्यधारयन् । सुयुद्धेन परान् लोकानीप्सन्तः कीर्त्तिमेव च । ८६८०
तदासीत्तुमुलं युद्धं सर्व्वदोषविवर्ज्जितं । चतुर्णां तव योधानां तैस्त्रिभिः पाण्डवैः सह ।

धृष्टद्युम्नस्तु तान् दृष्ट्वा तव राजन्नरर्षभान् । समाभ्यां वारितान् वीरान् शीघ्रास्त्रो द्रोणमभ्ययात् ।
निवारितास्तु ते वीरास्तयोः पुरुषसिंहयोः । समसज्जन्त समरे वाताः पर्वतयोरिव ।
द्वाभ्यां द्वाभ्यां यमौ सार्द्धं रथाभ्यां रथपुङ्गवौ । समासक्तौ ततो द्रोणं धृष्टद्युम्नोऽभ्यवर्त्तत ।
दृष्ट्वा द्रोणाय पाञ्चाल्यं व्रजन्तं युद्धदुर्म्मदं । समाभ्यां तांश्च संसक्तांस्तदन्तरमुपाद्रवत् । ८६७५
दुर्य्योधनो महाराज किरञ्छोणितभोजनान् । तं सात्यकिः शीघ्रतरं पुनरेवाभ्यवर्त्तत ।
तौ परस्परमासाद्य समीपे कुरुमाधवौ । हस्यमानौ नृशार्दूलावभितः समसज्जतां ।
बाल्ये वृत्तानि सर्व्वाणि प्रीयमाणौ विचिन्त्य तौ । तावन्योन्यं प्रेक्षमाणौ हसमानौ पुनः पुनः ।
अथ दुर्य्योधनो राजा सात्यकिं प्रत्यभाषत । प्रियं सखायं सततं गर्हयन् वृत्तमात्मनः ।
धिक् क्रोधं धिक् सखे लोभं धिक् मोहं धिगमर्षितं । धिगस्तु चात्रमाचारं धिगस्तु बलमौरसं । ८६८०
यत्र मामभिसन्धत्से त्वाञ्चाहं शिनिपुङ्गव । त्वं हि प्राणैः प्रियतरो ममाहञ्च तदा तव ।
स्मरामि तानि सर्व्वाणि बाल्ये वृत्तानि यानि नौ । तानि सर्व्वाणि जीर्णानि साम्प्रतं नौ रणाजिरे ।
किमन्यत् क्रोधलोभाभ्यां युद्धमेवाद्य सात्वत । तं तथावादिनं राजन् सात्वतः प्रत्यभाषत ।
प्रहसन् विशिखांस्तीक्ष्णानुद्यम्य परमास्त्रवित् । नेयं सभा राजपुत्र नचाचार्य्यनिवेशनं ।
यत्र क्रीडितमस्माभिस्तदा राजन् समागतैः ।
॥ दुर्य्योधन उवाच ॥ क्व सा क्रीडा गताऽस्माकं बाल्ये वै शिनिपुङ्गव । क्व च युद्धमिदं भूयः कालो हि दुरतिक्रमः । ८६८५
किन्नु नो विद्यते कृत्यं धनेन धनलिप्सया । यत्र युध्यामहे सर्व्वे धनलोभात् समागताः ।
॥ सञ्जय उवाच ॥ तं तथावादिनं तत्र राजानं सात्वतोऽब्रवीत् । एवं वृत्तं सदा चात्त्रं युध्यन्तीह गुरूनपि ।
यद्यहं ते प्रियो राजन् जहि मां मा चिरं कृथाः । त्वत्कृते सुकृतान् लोकान् गच्छेयं भरतर्षभ ।
या ते शक्तिर्ब्बलञ्चैव तत् क्षिप्रं मयि दर्शय । नेच्छामि तदहं द्रष्टुं मित्राणां व्यसनं महत् ।
इत्येवं व्यक्तमाभाष्य प्रतिभाष्य च सात्यकिः । अभ्ययात्तूर्णमव्यग्रो निरपेक्षो विशाम्पते । ८६९०
तमायान्तमभिप्रेक्ष्य प्रत्यगृह्णात्तवात्मजः । शरैश्चावाकिरद्राजन् शैनेयं तनयस्तव ।
ततः प्रववृते युद्धं कुरुमाधवसिंहयोः । अन्योन्यं क्रुद्धयोर्घोरं यथा द्विरदसिंहयोः ।
ततः पूर्णायतोत्सृष्टैः सात्वतं युद्धदुर्म्मदं । दुर्य्योधनः प्रत्यविध्यत् सात्वतं निशितैः शरैः ।
तं सात्यकिः प्रत्यविध्यत् सत्वरं निशितैः शरैः । पञ्चाशता पुनश्चाजौ विंशत्या दशभिश्च ह ।
सात्यकिन्तु रणे राजन् प्रहसंस्तनयस्तव । आकर्णपूर्णैर्निशितैर्व्विव्याध त्रिंशता शरैः । ८६९५
ततोऽस्य सशरं चापं क्षुरप्रेण द्विधाऽकरोत् । सोऽन्यत् कार्म्मुकमादाय लघुहस्तस्ततो दृढं ।
सात्यकिर्व्यसृजच्चापि शरश्रेणीं सुतस्य ते । तामापतन्तीं सहसा शरश्रेणीं जिघांसया ।
चिच्छेद बहुधा राजन् तत उच्चुक्रुशुर्जनाः । सात्यकिञ्च त्रिसप्तत्या पीडयामास वेगितः ।
स्वर्णपुङ्खैः शिलाधौतैराकर्णपूर्णनिःसृतैः । तस्य सन्दधतश्चेषून् संहितेषुञ्च कार्म्मुकं ।
अच्छिनत् सात्यकिस्तूर्णं शरैश्चैवाभ्यवीवृषत् । स गाढविद्धो व्यथितः प्रत्यपायाद्रथान्तरं । ८७००

दुर्य्योधनो महाराज दाशार्हशरपीडितः। समाश्वस्य तु पुत्रस्ते सात्यकिं पुनरभ्ययात्।
विसृजन्निषुजालानि युयुधानं रथम्प्रति। तथैव सात्यकिर्बाणान् दुर्य्योधनरथम्प्रति।
सततं व्यसृजद्राजंस्तत्सङ्कुलमवर्त्तत। तत्रेषुभिः क्षिप्यमाणैः पतद्भिश्च समन्ततः।
अग्नेरिव महाकक्षे शब्दः समभवन्महान्। तयोः शरसहस्रैश्च सञ्छन्नं वसुधातलं।
अगम्यरूपञ्च शरैराकाशं समपद्यत। तत्राभ्यधिकमालक्ष्य माधवं रथसत्तमं। ८६७५
क्षिप्रमभ्यपतत् कर्णः परीप्संस्तनयं तव। न तु तं मर्षयामास भीमसेनो महाबलः।
अभ्ययात्त्वरितः कर्णं व्यसृजत् सायकान् बहून्। तस्य कर्णः शितान् बाणान् प्रतिहन्य हसन्निव।
धनुः शरांश्च चिच्छेद सूतञ्चाभ्यहनच्छरैः। भीमसेनस्तु संक्रुद्धो गदामादाय पाण्डवः।
धनुर्ध्वजञ्च सूतञ्च सम्ममर्द्दाहवे रिपोः। रथचक्रञ्च कर्णस्य बभञ्ज स महाबलः।
भग्ने चक्रे रथे तिष्ठन्नाकम्पच्छैलराडिव। एकचक्रं रथं तस्य तमूहुः सुचिरं हयाः। ८६८०
एकचक्रमिवार्कस्य रथं सप्त हया यथा। अमृष्यमाणः कर्णस्तु भीमसेनमयुध्यत।
विविधैरिषुजालैश्च नानाशस्त्रैश्च संयुगे। भीमसेनस्तु संक्रुद्धः सूतपुत्रमयोधयत्।
तस्मिंस्तु वर्त्तमाने तु राजा धर्म्मसुतोऽब्रवीत्। पाञ्चालानां रथव्याघ्रान् मत्स्यांश्चैव नरर्षभान्।
ये नः प्राणाः शिरो ये च ये नो योधा महाबलाः। त एते धार्त्तराष्ट्रेषु विषक्ताः पुरुषर्षभाः।
किं तिष्ठत यथा मूढाः सर्व्वे विगतचेतसः। तत्र गच्छत यत्रैते युध्यन्ते मामका रथाः। ८६८५
क्षत्रधर्म्मं पुरस्कृत्य सर्व्व एव गतज्वराः। जयन्तो वध्यमाना वा गतिमिष्टां गमिष्यथ।
जित्वा च बहुभिर्यज्ञैर्यजध्वं भूरिदक्षिणैः। हता वा देवसाद्भूत्वा लोकान् प्राप्स्यथ पुष्कलान्।
ते राज्ञा चोदिता वीरा योत्स्यमाना महारथाः। क्षत्रधर्म्मं पुरस्कृत्य त्वरिता द्रोणमभ्ययुः।
पाञ्चालास्त्वेकतो द्रोणमभ्यघ्नन् बहुभिः शरैः। भीमसेनपुरोगाश्चाऽप्येकतः पर्य्यवारयन्।
आसंस्तु पाण्डुपुत्राणां त्रयो जिह्मा महारथाः। यमौ च भीमसेनश्च प्राक्रोशन्त धनञ्जयं। ८६९०
अभिद्रवार्ज्जुन क्षिप्रं कुरून् द्रोणादपानुद। तत एनं हनिष्यन्ति पाञ्चाला हतरक्षिणं।
कौरवेयांस्ततः पार्थः सहसा समुपाद्रवत्। पाञ्चालानेव तु द्रोणो धृष्टद्युम्नपुरोगमान्।
मम्लदुस्तरसा वीराः पञ्चमेऽहनि भारत।

इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणवधपर्व्वणि सङ्कुलयुद्धे नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

॥ सञ्जय उवाच ॥ पाञ्चालानां ततो द्रोणस्त्वकरोत् कदनं महत्। यथा क्रुद्धो रणे शक्रो दानवानां क्षयं पुरा।
द्रोणास्त्रेण महाराज वध्यमानाः परे युधि। नात्रसन्त रणे द्रोणात् सत्त्ववन्तो महारथाः। ८६९५
युध्यमाना महाराज पाञ्चालाः सृञ्जयास्तथा। द्रोणमेवाभ्ययुर्युद्धे योधयन्तो महारथाः।
तेषान्तु च्छाद्यमानानां पाञ्चालानां समन्ततः। अभवद्भैरवो नादो वध्यतां शरशक्तिभिः।
वध्यमानेषु संग्रामे पाञ्चालेषु महात्मना। उदीर्य्यमाणे द्रोणास्त्रे पाण्डवान् भयमाविशत्।
दृष्ट्वाऽश्वनरयोधानां विपुलञ्च क्षयं युधि। पाण्डवेया महाराज नाशशंसुर्जयं तदा।

कश्चित् द्रोणो न नः सर्व्वान् क्षपयेत् परमास्त्रवित् । समिद्धः शिशिरापाये दहन् कक्षमिवानलः । ८७००
न चैनं संयुगे कश्चित् समर्थः प्रतिवीक्षितुं । न चैनमर्ज्जुनो जातु प्रतियुध्येत धर्म्मवित् ।
त्रस्तान् कुन्तीसुतान् दृष्ट्वा द्रोणसायकपीडितान् । मतिमान् श्रेयसे युक्तः केशवोऽर्ज्जुनमब्रवीत् ।
नैष युद्धेन सङ्ग्रामे जेतुं शक्यः कथञ्चन । सधनुर्द्धन्विनां श्रेष्ठो देवैरपि सवासवैः ।
न्यस्तशस्त्रस्तु सङ्ग्रामे शक्यो हन्तुं भवेन्नृभिः । आस्थीयतां जये योगो धर्म्ममुत्सृज्य पाण्डवाः ।
यथा नः संयुगे सर्व्वान् न हन्याद्रुक्मवाहनः । अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम । ८७०५
तं हतं संयुगे कश्चिदस्मै शंसतु मानवः । एतन्नारोचयद्राजन् कुन्तीपुत्रो धनञ्जयः ।
अन्ये त्वरोचयन् सर्व्वे कृच्छ्रेण तु युधिष्ठिरः । ततो भीमो महाबाहुरनीके स्वे महागजं ।
जघान गदया राजन्नश्वत्थामानमित्युत । परप्रमथनं घोरं मालवस्येन्द्रवर्म्मणः ।
भीमसेनस्तु सव्रीड उपेत्य द्रोणमाहवे । अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह ।
अश्वत्थामेति हि गजः ख्यातो नाम्ना हतोऽभवत् । कृत्वा मनसि तं भीमो मिथ्या व्याहृतवांस्तदा । ८७१०
भीमसेनवचः श्रुत्वा द्रोणस्तत्परमाप्रियं । मनसा सन्नगात्रोऽभूत् यथा सैकतमम्भसि ।
शङ्कमानः स तन्मिथ्या वीर्य्यज्ञः स्वसुतस्य वै । हतः स इति च श्रुत्वा नैव धैर्य्यादकम्पत ।
स लब्ध्वा चेतनां द्रोणः क्षणेनैव समाश्वसत् । अनुचिन्त्यात्मनः पुत्रमविषह्यमरातिभिः ।
स पार्षतमभिद्रुत्य जिघांसुर्मृत्युमात्मनः । अवाकिरत् सहस्रेण तीक्ष्णानां कङ्कपत्रिणां ।
तं वै विंशतिसाहस्राः पाञ्चालानां रथर्षभाः । तथा चरन्तं सङ्ग्रामे सर्व्वतो व्यकिरन् शरैः । ८७१५
तैः शरैराचितं द्रोणं नापश्याम महारथं । भास्करं जलदैश्छन्नं वर्षास्विव विशाम्पते ।
विधूय तान् बाणगणान् पाञ्चालानां महारथः । प्रादुश्चक्रे ततो द्रोणो ब्राह्ममस्त्रं परन्तपः ।
वधाय तेषां शूराणां पाञ्चालानाममर्षितः । ततो व्यरोचत द्रोणो विधूमोऽग्निरिव ज्वलन् ।
तथैव च पुनः क्रुद्धो भारद्वाजः प्रतापवान् । ततो व्यरोचत द्रोणो विनिघ्नन् सर्व्वसोमकान् ।
शिरांस्यपातयच्चापि पाञ्चालानां महामृधे । तथैव परिघाकारान् बाहून् कनकभूषणान् । ८७२०
ते वध्यमानाः समरे भारद्वाजेन पार्थिवाः । मेदिन्यामन्वकीर्य्यन्त वातनुन्ना इव द्रुमाः ।
कुञ्जराणाञ्च पततां हयानाञ्चैव भारत । अगम्यरूपा पृथिवी मांसशोणितकर्द्दमा ।
हत्वा विंशतिसाहस्रान् पाञ्चालानां रथव्रजान् । अतिष्ठदाहवे द्रोणो विधूमोऽग्निरिव ज्वलन् ।
तथैव च पुनः क्रुद्धो भारद्वाजः प्रतापवान् । वसुदानस्य भल्लेन शिरः कायादपाहरत् ।
पुनः पञ्चशतान् मत्स्यान् षट्सहस्रांश्च सृञ्जयान् । हस्तिनामयुतं हत्वा जघानाश्वायुतं पुनः । ८७२५
क्षत्रियाणामभावाय दृष्ट्वा द्रोणमवस्थितं । ऋषयोऽभ्यागमंस्तूर्णं हव्यवाहपुरोगमाः ।
विश्वामित्रो जमदग्निर्भारद्वाजोऽपि गौतमः । वशिष्ठः कश्यपोऽत्रिश्च ब्रह्मलोकं निनीषवः ।
सिकताः पृश्नयो गर्गा वालिखिल्या मरीचिपाः । भृगवोऽङ्गिरसश्चैव सूक्ष्माश्चान्ये महर्षयः ।
त एनमब्रुवन् सर्व्वे द्रोणमाहवशोभिनं । अधर्म्मतः कृतं युद्धं समयो निधनस्य ते ।

न्यस्यायुधं रणे द्रोण समीक्ष्यास्मानिह स्थितान् । नातः क्रूरतरं कर्म्म पुनः कर्त्तुं त्वमर्हसि । ८७३०
वेदवेदाङ्गविदुषः सत्यधर्म्मपरस्य ते । ब्राह्मणस्य विशेषेण तवैतन्नोपपद्यते ।
न्यस्यायुधममोघस्त्वं तिष्ठ वर्त्मनि शाश्वते । परिपूर्णस्तु कालस्ते वस्तुं लोकेऽद्य मानुषे ।
ब्रह्मास्त्रेण त्वया दग्धा अनस्त्रज्ञा नरा भुवि । यदेतदीदृशं विप्र कृतं कर्म्म न साधु तत् ।
न्यस्यायुधं रणे क्षिप्रं द्रोण मा त्वं चिरं कृथाः । मा पापिष्ठतरं कर्म्म करिष्यसि पुनर्द्विज ।
इति तेषां वचः श्रुत्वा भीमसेनवचश्च तत् । धृष्टद्युम्नञ्च सम्प्रेक्ष्य रणे स विमनाभवत् । ८७३५
सन्दह्यमानो व्यथितः कुन्तीपुत्त्रं युधिष्ठिरं । अहतं वा हतं वेति पप्रच्छ सुतमात्मनः ।
स्थिरा बुद्धिर्हि द्रोणस्य न पार्थो वक्ष्यतेऽनृतं । त्रयाणामपि लोकानामैश्वर्य्यार्थे कथञ्चन ।
तस्मात्तं परिपप्रच्छ नान्यं कच्चिद्द्विजर्षभः । तस्मिंस्तस्य हि सत्याशा बाल्यात्प्रभृति पाण्डवे ।
ततो निष्पाण्डवामुर्व्वीं करिष्यन्तं युधाम्पतिं । द्रोणं ज्ञात्वा धर्म्मराजं गोविन्दो व्यथितोऽब्रवीत् ।
यद्यर्द्धदिवसं द्रोणो युध्यते मन्युमास्थितः । सत्यं ब्रवीमि ते सेना विनाशं समुपैष्यति । ८७४०
स भवांस्त्रातु नो द्रोणात् सत्याज्ज्यायोऽनृतं वचः । अनृतं जीवितस्यार्थे वदन्न स्पृश्यतेऽनृतैः ।
कामिनीषु विवाहेषु गवां भक्ते तथैव च । ब्राह्मणाभ्युपपत्तौ च अनृते नास्ति पातकं ।
तयोः संवदतोरेवं भीमसेनोऽब्रवीदिदं । श्रुत्वैवं ते महाराज वधोपायं महात्मनः ।
गाहमानस्य ते सेनां मालवस्येन्द्रवर्म्मणः । अश्वत्थामेति विक्रान्तो गजः शक्रगजोपमः ।
निहतो युधि विक्रम्य ततोऽहं द्रोणमब्रुवं । अश्वत्थामा हतो ब्रह्मन्निवर्त्तस्वाहवादिति । ८७४५
नूनं नाश्रद्दधद्वाक्यमेष मे पुरुषर्षभ । स त्वं गोविन्दवाक्यानि मानयस्व जयैषिणः ।
द्रोणाय निहतं शंस राजन् शारद्वतीसुतं । त्वयोक्तो नैष युध्येत जातु राजन् द्विजर्षभः ।
सत्यवान् हि त्रिलोकेऽस्मिन् भवान् ख्यातो जनाधिप । तस्य तद्वचनं श्रुत्वा कृष्णवाक्यप्रचोदितः ।
भावित्वाच्च महाराज वक्तुं समुपचक्रमे । तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः ।
अव्यक्तमब्रवीद्वाक्यं हतः कुञ्जर इत्युत । तस्य पूर्व्वं रथः पृथ्व्यां चतुरङ्गुलमुत्तमः । ८७५०
बभूवैवन्तु तेनोक्ते तस्य वाहाः स्पृशन्महीं । युधिष्ठिरात्तु तद्वाक्यं श्रुत्वा द्रोणो महारथः ।
पुत्त्रव्यसनसन्तप्तो निराशो जीविते ऽभवत् । आगस्कृतमिवात्मानं पाण्डवानां महात्मनां ।
ऋषिवाक्येन मन्वानः श्रुत्वा विनिहतं सुतं । विचेताः परमोद्विग्नो धृष्टद्युम्नमवेक्ष्य च ।
योद्धुं नाशक्नुवद्राजन् यथा पूर्व्वमरिन्दम ।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणवधपर्व्वणि युधिष्ठिरासत्यकथने एकनवत्यधिकशतोऽध्यायः ॥ १९१ ॥

॥ सञ्जय उवाच ॥ तं दृष्ट्वा परमोद्विग्नं शोकोपहतचेतसं । पाञ्चालराजस्य सुतो धृष्टद्युम्नः समाद्रवत् । ८७५५
य इष्ट्वा मनुजेन्द्रेण द्रुपदेन महामखे । लब्धो द्रोणविनाशाय समिद्धाद्धव्यवाहनात् ।
स धनुर्जैत्रमादाय घोरं जलदनिस्वनं । दृढज्यमजरं दिव्यं शरांस्वाशीविषोपमान् ।
सन्दधे कार्म्मुके तस्मिञ्छरमाशीविषोपमं । द्रोणं जिघांसुः पाञ्चाल्यो महाज्वालमिवानलं ।

सादिभिश्च हतैः शूरैः सङ्कीर्णा वसुधाऽभवत्। बाणपातनिकृत्तास्तु योधास्ते कुरुसत्तम।
चेष्टन्तो विविधाश्चेष्टा व्यदृश्यन्त महाहवे। वर्त्तमाने तथा युद्धे घोरे देवासुरोपमे।
अब्रवीत् क्षत्रियांस्तत्र धर्म्मराजो युधिष्ठिरः। अभिद्रवत संयत्ताः कुम्भयोनिं महारथाः। ८८२०
एष हि पार्षतो वीरो भारद्वाजेन सङ्गतः। घटते च यथाशक्ति भारद्वाजस्य नाशने।
यादृशानि हि रूपाणि दृश्यन्ते स्म महारणे। अद्य द्रोणस्य संक्रुद्धः पातयिष्यति पार्षतः।
ते यूयं सहिता भूत्वा युध्यध्वं कुम्भसम्भवं। युधिष्ठिरसमाज्ञप्ताः सृञ्जयानां महारथाः।
अभ्यद्रवन्त संयत्ता भारद्वाजं जिघांसवः। तान् समापततः सर्व्वान् भारद्वाजो महारथः।
अभ्यवर्त्तत वेगेन मर्त्तव्यमिति निश्चितः। प्रयाते सत्यसन्धे तु समकम्पत मेदिनी। ८८२५
ववुर्व्वातास्ततो घोरास्त्रासयाना वरूथिनीं। पपात महती चोल्का आदित्यान्निःसरन्निव।
दीपयन्तीव पातेन भ्रंषतीव महद्भयं। जज्वलुश्चैव शस्त्राणि भारद्वाजस्य मारिष।
रथाः स्वनन्ति चात्यर्थं हयाश्चाश्रूण्यपातयन्। हतौजा इव चाप्यासीद्भारद्वाजो महारथः।
प्रास्फुरन्नयनञ्चास्य वामबाहुस्तथैव च। विमनस्कोऽभवद्युद्धे दृष्ट्वा पार्षतमग्रतः।
ऋषीणां ब्रह्मवादीनां स्वर्गस्य गमनं प्रति। सुयुद्धेन ततः प्राणानुत्स्रष्टुमुपचक्रमे। ८८३०
ततश्चतुर्द्दिशं सैन्यैर्द्रुपदस्याभिसंवृतः। निर्द्दहन् क्षत्रियव्रातान् द्रोणः पर्य्यचरद्रणे।
हत्वा विंशतिसाहस्रान् क्षत्रियानरिमर्द्दनः। दशायुतानि तीक्ष्णाग्रैरवधीद्विशिखैः शितैः।
सोऽतिष्ठदाहवे यत्तो विधूम इव पावकः। क्षत्रियाणामभावाय ब्राह्ममस्त्रं समास्थितः।
पाञ्चाल्यं विरथं भीमो हतसर्व्वायुधं वशी। अविषण्णं महात्मानं त्वरमाणः समभ्ययात्।
ततः स्वरथमारोप्य पाञ्चाल्यमरिमर्द्दनः। अब्रवीदभिसम्प्रेक्ष्य द्रोणमस्यन्तमन्तिकात्। ८८३५
न त्वदन्य इहाचार्य्यं योद्धुमुत्सहते पुमान्। त्वरस्व प्राग्वधादस्य त्वयि भारः समाहितः।
स तथोक्तो महाबाहुः सर्व्वभारसहं नवं। अभिपत्याददे क्षिप्रमायुधप्रवरं दृढं।
संरब्धश्च शरानस्यन् द्रोणं दुर्व्वारणं रणे। विवारयिषुराचार्य्यं शरवर्षैरवाकिरत्।
तौ निवारयतां श्रेष्ठौ संरब्धौ रणशोभिनौ। उदीरयेतां ब्राह्माणि दिव्यान्यस्त्राण्यनेकशः।
स महास्त्रैर्महाराज द्रोणमाच्छादयद्रणे। निहत्य सर्व्वास्त्राणि भारद्वाजस्य पार्षतः। ८८४०
स वसातीन् शिबींश्चैव वाह्लिकान् कौरवानपि। रक्षिष्यमाणान् सङ्ग्रामे द्रोणं व्यधमदच्युतः।
धृष्टद्युम्नस्ततो राजन् गभस्तिभिरिवांशुमान्। बभौ प्रच्छादयन्नाशाः शरजालैः समन्ततः।
तस्य द्रोणो धनुश्छित्त्वा विद्ध्वा चैनं शिलीमुखैः। मर्म्माण्यभ्यहनद्भूयः स व्यथां परमामगात्।
ततो भीमो दृढक्रोधो द्रोणस्याश्लिष्य तं रथं। शनकैरिव राजेन्द्र द्रोणं वचनमब्रवीत्।
यदि नाम न युध्येरन् शिक्षिता ब्रह्मबन्धवः। स्वकर्म्मभिरसन्तुष्टा न स्म क्षत्रं क्षयं व्रजेत्। ८८४५
अहिंसा सर्व्वभूतेषु धर्म्मस्य विस्तरं विदुः। तस्य च ब्राह्मणो मूलं भवान् हि ब्रह्मवित्तमः।
श्वपाकवत् म्लेच्छगणान् हत्वा चान्यान् पृथग्विधान्। अज्ञानान्मूढवद्ब्रह्मन् पुत्रदारधनेप्सया।

एकस्यार्थे बहून्हत्वान् पुत्त्रस्याधर्म्मविद्यया । स्वकर्म्मस्थान् विकर्म्मस्थो न व्यपत्रपसे कथं ।
यस्यार्थे शस्त्रमादाय यमपेक्ष्य च जीवसि । स चाद्य पतितः शेते पृष्ठेनावेदितस्तव ।
धर्म्मराजेन यद्वाक्यं नाभिशङ्कितुमर्हसि । एवमुक्तस्ततो द्रोणो भीमेनोत्सृज्य तद्धनुः । ८८५०
सर्व्वाण्यस्त्राणि धर्म्मात्मा हातुकामोऽभ्यभाषत । कर्ण कर्ण महेष्वास कृप दुर्य्योधनेति च ।
सङ्ग्रामे क्रियतां यत्नो ब्रवीम्येष पुनः पुनः । पाण्डवेभ्यः शिवं वोऽस्तु शस्त्रमभ्युत्सृजाम्यहं ।
इति तत्र महाराज प्राक्रोशद्द्रौणिमेव च । स उत्सृज्य रणे शस्त्रं रथोपस्थो निविश्य च ।
अभयं सर्व्वभूतानां प्रददौ योगयुक्तवान् । तस्य तच्छिद्रमाज्ञाय धृष्टद्युम्नः समुत्थितः ।
सशरं तद्धनुर्घोरं संन्यस्याथ रथे ततः । खड्गी रथादवप्लुत्य सहसा द्रोणमभ्ययात् । ८८५५
हाहाकृतानि भूतानि मानुषाणीतराणि च । द्रोणं तथा गतं दृष्ट्वा धृष्टद्युम्नवशङ्गतं ।
हाहाकारं भृशञ्चक्रुरहो धिगिति चाब्रुवन् । द्रोणो ऽपि शस्त्राण्युत्सृज्य परमं साङ्ख्यमास्थितः ।
तथोक्त्वा योगमास्थाय ज्योतिर्भूतो महातपाः । पुराणं पुरुषं विष्णुं जगाम मनसा परं ।
मुखं किञ्चित् समुन्नाम्य विष्टभ्य उरमग्रतः । निमीलिताक्षः सत्त्वस्थो निक्षिप्य हृदि धारणां ।
ओमित्येकाक्षरं ब्रह्म ज्योतिर्भूतो महातपाः । स्मरित्वा देवदेवेशमक्षरं परमं प्रभुं । ८८६०
दिवमाक्रामदाचार्य्यः साक्षात् सद्भिर्दुराक्रमं । द्वौ सूर्य्याविति नो बुद्धिरासीत्तस्मिंस्तथा गते ।
एकाग्रमिव चासीद्धि ज्योतिर्भिः पूरितं नभः । समपद्यत चार्काभे भारद्वाजदिवाकरे ।
निमेषमात्रेण च तज्ज्योतिरन्तरधीयत । आसीत् किल किलाशब्दः प्रहृष्टानां दिवौकसां ।
ब्रह्मलोकं गते द्रोणे धृष्टद्युम्ने च मोहिते । वयमेव तदाद्राक्ष्म पञ्च मानुषयोनयः ।
योगयुक्तं महात्मानं गच्छन्तं परमाङ्गतिं । अहं धनञ्जयः पार्थो भारद्वाजस्य चात्मजः । ८८६५
वासुदेवश्च वार्ष्णेयो धर्म्मराजो ऽथ पाण्डवः । अन्ये सर्व्वे च नापश्यन् भारद्वाजस्य धीमतः ।
महिमानं महाराज योगयुक्तस्य गच्छतः । ब्रह्मलोकञ्च तद्दिव्यं देवगुह्यं हि तत्परं ।
गतिमैकान्तिकीं प्राप्तमजानन्तो नृयोनयः । नापश्यन् गच्छमानं हि तं सार्द्धमृषिपुङ्गवैः ।
आचार्य्यं योगमास्थाय ब्रह्मलोकमरिन्दम । वितुन्नाङ्गं शरव्रातैर्न्यस्तायुधमसृक्क्षरं ।
धिक्कृतः पार्षतस्तन्तु सर्व्वभूतैः परामृशत् । तस्य मूर्द्धानमालोक्य गतसत्त्वस्य देहतः । ८८७०
किञ्चिदब्रुवतः कायाद्विचकर्त्तासिना शिरः । हर्षेण महता युक्तो भारद्वाजे निपातिते ।
सिंहनादरवञ्चक्रे भ्रामयन् खड्गमाहवे । आकर्णपलितः श्यामो वयसाऽशीतिपञ्चकः ।
त्वत्कृते व्यचरत् सङ्ख्ये स तु षोडशवर्षवत् । उक्तवांश्च महाबाहुः कुन्तीपुत्त्रो धनञ्जयः ।
जीवन्तमानयाचार्य्यं मा वधीर्द्रुपदात्मज । न हन्तव्यो न हन्तव्य इति ते सैनिकाश्च ह ।
उत्क्रोशन्नर्ज्जुनश्चैव सानुक्रोशस्तमाद्रवत् । क्रोशमाने ऽर्जुने चैव पार्थिवेषु च सर्व्वशः । ८८७५
धृष्टद्युम्नोऽवधीद्द्रोणं रथतल्पे नरर्षभ । शोणितेन परिक्लिन्नो रथाद्भूमिमपातयत् ।
लोहिताङ्ग इवादित्यो दुर्द्धर्षः समपद्यत । एवं तं निहतं सङ्ख्ये ददृशे सैनिको जनः ।

धृष्टद्युम्नस्ततो राजन् भारद्वाजशिरो महत् । तावकानां महेष्वासः प्रमुखे तत्समाक्षिपत् ।
ते तु दृष्ट्वा शिरो राजन् भारद्वाजस्य तावकाः । पलायनकृतोत्साहा दुद्रुवुः सर्व्वतो दिशः ।
द्रोणस्तु दिवमास्थाय नक्षत्रपथमाविशत् । अहमेव तदाद्राक्षं द्रोणस्य निधनं नृप । ८८८०
ऋषेः प्रसादात् कृष्णस्य सत्यवत्याः सुतस्य तु । विधूमामिव संयान्तीमुल्कां प्रज्वलितामिव ।
अपश्याम दिवं स्तब्ध्वा गच्छन्तं तं महाद्युतिं । हते द्रोणे निरुत्साहाः कुरुपाण्डवसृञ्जयाः ।
अभ्यद्रवन्महावेगास्ततः सैन्यं व्यदीर्य्यत । निहता हतभूयिष्ठाः संग्रामे निशितैः शरैः ।
तावका निहते द्रोणे गतासव इवाभवन् । पराजयमथावाप्य परत्र च महद्भयं ।
उभयेनैव ते हीना नाविदन् धृतिमात्मनः । अन्विच्छन्तः शरीरन्तु भारद्वाजस्य पार्थिवाः । ८८८५
नान्वगच्छन्महाराज कबन्धायुतसंकुले । पाण्डवास्तु जयं लब्ध्वा परत्र च महद्यशः ।
बाणशङ्खरवांश्चक्रुः सिंहनादांश्च पुष्कलान् । भीमसेनस्ततो राजन् धृष्टद्युम्नश्च पार्षतः ।
वरूथिन्यामनृत्येतां परिष्वज्य परस्परं । अब्रवीच्च तदा भीमः पार्षतं शत्रुतापनः ।
भूयोऽहं त्वां विजयिनं परिष्वक्ष्यामि पार्षत । सूतपुत्रे हते पापे धार्त्तराष्ट्रे च संयुगे ।
एतावदुक्त्वा भीमस्तु हर्षेण महता युतः । बाहुशब्देन पृथिवीं कम्पयामास पाण्डवः । ८८९०
तस्य शब्देन वित्रस्ताः प्राद्रवंस्तावका युधि । क्षत्रधर्म्मं समुत्सृज्य पलायनपरायणाः ।
पाण्डवास्तु जयं लब्ध्वा हृष्टा ह्यासन् विशाम्पते । अरिक्षयञ्च संग्रामे तेन ते सुखमाप्नुवन् ।
इति श्रीमहाभारते द्रोणपर्व्वणि द्रोणवधपर्व्वणि द्रोणवधे त्रिनवत्यधिकशततमोऽध्यायः ॥ समाप्तञ्च द्रोणवधपर्व्व ॥

## अथ नारायणास्त्रमोक्षपर्व्व ॥

॥ सञ्जय उवाच ॥ ततो द्रोणे हते राजन् कुरवः शस्त्रपीडिताः । हतप्रवीरा विध्वस्ता भृशं शोकपरायणाः ।
उदीर्णांश्च परान् दृष्ट्वा कम्पमानाः पुनः पुनः । अश्रुपूर्णेक्षणास्त्रस्ता दीना ह्यासन् विशाम्पते ।
विचेतसो हतोत्साहाः कश्मलाभिहतौजसः । आर्त्तस्वरेण महता पुत्रन्ते पर्य्यवारयन् । ८८९५
रजस्वला वेपमाना वीक्षमाणा दिशो दश । अश्रुकण्ठा यथा दैत्या हिरण्याक्षे पुरा हते ।
स तैः परिवृतो राजंस्त्रस्तैः क्षुद्रमृगैरिव । अशक्नुवन्नवस्थातुमपायात्तनयस्तव ।
क्षुत्पिपासापरिम्लानास्ते योधास्तव भारत । आदित्येनेव सन्तप्ता भृशं विमनसोऽभवन् ।
भास्करस्येव पतनं समुद्रस्येव शोषणं । विपर्य्यासं यथा मेरोर्वासवस्येव निर्जयं ।
अमर्षणीयं तद्दृष्ट्वा भारद्वाजस्य पातनं । त्रस्तरूपतरा राजन् कौरवाः प्राद्रवन् भयात् । ८९००
गान्धारराजः शकुनिस्त्रस्तस्त्रस्ततरैः सह । हतं रुक्मरथं दृष्ट्वा प्राद्रवत् सहितो रथैः ।
वरूथिनीं वेगवतीं विद्रुतां सपताकिनीं । परिगृह्य महासेनां सूतपुत्रोऽपयाद्भयात् ।
रथनागाश्वकलिलामुपहृत्य तु वाहिनीं । मद्राणामीश्वरः शल्यो वीक्षमाणोऽपयाद्भयात् ।
हतप्रवीरैर्भूयिष्ठैर्द्विपैर्ब्बहुपदातिभिः । वृतः शारद्वतोऽगच्छत् कष्टं कष्टमिति ब्रुवन् ।

भोजानीकेन शिष्टेन कलिङ्गारट्टवाह्लिकैः । कृतवर्म्मा वृतो राजन् प्रायात् सुजवनैर्हयैः । ८९०५
पदातिगणसंयुक्तस्तो राजन् भयार्द्दितः । उलूकः प्राद्रवत्तत्र दृष्ट्वा द्रोणं निपातितं ।
दर्शनीयो युवा चैव शौर्य्ये च कृतलक्षणः । दुःशासनो भृशोद्विग्नः प्राद्रवद्गजसंवृतः ।
रथानामयुतं गृह्य त्रिसाहस्रांश्च दन्तिनः । वृषसेनो ययौ तूर्णं दृष्ट्वा द्रोणं निपातितं ।
गजाश्वरथसंयुक्तो वृतश्चैव पदातिभिः । दुर्य्योधनो महाराज प्रायात्तत्र महारथः ।
संशप्तकगणान् गृह्य हतशेषान् किरीटिना । सुशर्म्मा प्राद्रवद्राजन् दृष्ट्वा द्रोणं निपातितं । ८९१०
गजानथान् समारुह्य युक्त्वा च हयान् जनाः । प्राद्रवन् सर्व्वतः सर्व्वे दृष्ट्वा रुक्मरथं हतं ।
त्वरयन्तः पितॄनन्ये भ्रातॄनपि च मातुलान् । पुत्रानन्ये वयस्यांश्च प्राद्रवन् कुरवस्तथा ।
चोदयन्तश्च सैन्यानि स्वस्त्रीयांश्च तथा परे । सम्बन्धिनस्तथा चान्ये प्राद्रवन्त दिशो दश ।
प्रकीर्णकेशा विध्वस्ता न द्वावेकत्र धावतः । नेदमस्तीति पुरुषा हतोत्साहा हतौजसः ।
उत्सृज्य कवचानन्ये प्राद्रवंस्तावका विभो । अन्योन्यं ते समाक्रोशन् सैनिका भरतर्षभ । ८९१५
तिष्ठ तिष्ठेति न च ते स्वयं तत्रावतस्थिरे । धुर्य्यानुत्सृज्य तु रथान् भूषणैश्चाप्यलङ्कृतान् ।
अधिरुह्य हयान् योधाः क्षिप्रं पद्भिरचोदयन् । द्रवमाणे तथा सैन्ये त्रस्तरूपे हतौजसि ।
प्रतिस्रोत इव ग्राहो द्रोणपुत्रः परानियात् । तत्रासीत् सुमहद्युद्धं शिखण्डिप्रमुखैर्गणैः ।
प्रभद्रकैश्च पाञ्चालैश्चेदिभिश्च सकेकयैः । हत्वा बहुविधाः सेना पाण्डूनां युद्धदुर्म्मदाः ।
कथञ्चित्सङ्कटान्मुक्तो मत्तद्विरदविक्रमः । द्रवमाणं बलं दृष्ट्वा पलायनकृतक्षणं । ८९२०
दुर्य्योधनं समासाद्य द्रोणपुत्रोऽब्रवीदिदं । किमियं द्रवते सेना त्रस्तरूपेव भारत ।
द्रवमाणे च राजेन्द्र नावस्थापयसे रणे । त्वञ्चापि न यथा पूर्व्वं प्रकृतिस्थो नराधिप ।
कच्चिन्निदं कृते राजन्न च सिंहे बलं तव । एतामवस्थां सम्प्राप्तं तन्ममाचक्ष्व कौरव ।
कर्णप्रभृतयश्चेमे नावतिष्ठन्ति पार्थिव । अन्येष्वपि च युद्धेषु नैव सेनाऽद्रवत्तथा ।
कच्चित् क्षेमं महाराज तव सैन्यस्य भारत । तच्च दुर्य्योधनः श्रुत्वा द्रोणपुत्रस्य भाषितं । ८९२५
घोरमप्रियमाख्यातुं नाशकत् पार्थिवर्षभः । भिन्ना नौरिव ते पुत्रो निमग्नः शोकसागरे ।
वाष्पेणापिहितो दृष्ट्वा द्रोणपुत्रं रथे स्थितं । ततः शारद्वतं राजन् सव्रीडमिदमब्रवीत् ।
शंसेह पूर्व्वं भद्रन्ते यथा सैन्यमिदं द्रुतं । अथ शारद्वतो राजन्नार्त्तिमार्च्छन् पुनः पुनः ।
शशंस द्रोणपुत्राय यथा द्रोणो निपातितः ।
॥ कृप उवाच ॥ वयं द्रोणं पुरस्कृत्य पृथिव्यां प्रवरं रथं । प्रावर्त्तयाम सङ्ग्रामं पाञ्चालैरेव केवलैः । ८९३०
ततः प्रवृत्ते सङ्ग्रामे विमिश्राः कुरुसोमकाः । अन्योन्यमभिगर्ज्जन्तः शस्त्रैर्देहानपातयन् ।
वर्त्तमाने तथा युद्धे क्षीयमाणेषु संयुगे । धार्त्तराष्ट्रेषु सङ्क्रुद्धः पिता तेऽस्त्रमुदैरयत् ।
ततो द्रोणो ब्राह्ममस्त्रं विकुर्व्वाणो नरर्षभः । व्यहनच्छात्रवान् भल्लैः शतशोऽथ सहस्रशः ।
पाण्डवाः केकया मत्स्याः पाञ्चालाश्च विशाम्पते । सङ्ख्ये द्रोणरथम्प्राप्य व्यनशन् कालचोदिताः ।

सहस्रं नरसिंहानां दिशाहस्तस्य दन्तिनाम्। द्रोणो ब्रह्मास्त्रयोगेन प्रेषयामास मृत्यवे। ८९३५
आकर्णपलितः श्यामो वयसाऽशीतिपञ्चकः। रणे पर्य्यचरद्द्रोणो वृद्धः षोडशवर्षवत्।
क्लिश्यमानेषु सैन्येषु वध्यमानेषु राजसु। अमर्षवशमापन्नाः पाञ्चाला विमुखाभवन्।
तेषु किञ्चित् प्रभग्नेषु विमुखेषु सपत्नजित्। दिव्यमस्त्रं विकुर्व्वाणो बभूवार्क इवोदितः।
स मध्यं प्राप्य पाण्डूनां शररश्मिः प्रतापवान्। मध्यं गत इवादित्यो दुष्प्रेक्ष्यस्ते पिताऽभवत्।
ते दह्यमाना द्रोणेन सूर्य्येणेव विराजता। दग्धवीर्य्या निरुत्साहा बभूवुर्गतचेतसः। ८९४०
तान् दृष्ट्वा पीडितान् वाणैर्द्रोणेन मधुसूदनः। जयैषी पाण्डुपुत्राणामिदं वचनमब्रवीत्।
नैष जातु परैः शक्यो जेतुं शस्त्रभृताम्बरः। अपि वृत्रहणा संख्ये रथयूथपयूथपः।
ते यूयं धर्म्ममुत्सृज्य जयं रक्षत पाण्डवाः। यथा वः संयुगे सर्व्वान् न हन्याद्रुक्मवाहनः।
अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम। हतं तं संयुगे कश्चिदाख्यातस्मै मृषा नरः।
एतन्नारोचयद्वाक्यं कुन्तीपुत्रो धनञ्जयः। अरोचयंस्तु सर्व्वेऽन्ये कृच्छ्रेण तु युधिष्ठिरः। ८९४५
भीमसेनस्तु सव्रीडमब्रवीत् पितरं तव। अश्वत्थामा हत इति नाबाबुध्यत ते पिता।
स शङ्कमानस्तन्मिथ्या धर्म्मराजमपृच्छत। हतं वाऽप्यहतं वाजौ त्वां पिता पुत्रवत्सलः।
तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः। अश्वत्थामानमालोध्य हतं दृष्ट्वा महागजम्।
भीमेन गिरिवर्ष्माणं मालवस्येन्द्रवर्म्मणः। अभिसृत्य ततो द्रोणमुच्चैरिदमभाषत।
यस्यार्थे शस्त्रमाधत्से यमवेक्ष्य च जीवसि। पुत्रस्ते दयितो नित्यं सोऽश्वत्थामा निपातितः। ८९५०
शेते विनिहतो भूमौ वने सिंहशिशुर्यथा। जानन्नप्यनृतस्याथ दोषान् स द्विजसत्तमम्।
अव्यक्तमब्रवीद्राजा हतः कुञ्जर इत्युत। स त्वां निहतमाक्रन्दे श्रुत्वा सन्तापपीडितः।
नियम्य दिव्यान्यस्त्राणि नायुध्यत यथा पुरा। तं दृष्ट्वा परमोद्विग्नं शोकोपहतचेतसम्।
पाञ्चालराजस्य सुतः क्रूरकर्म्मा समाद्रवत्। तं दृष्ट्वा विहितं मृत्युं लोकतत्त्वविचक्षणः।
दिव्यान्यस्त्राण्यथोत्सृज्य रणे प्राय उपाविशत्। ततोऽस्य केशान् सव्येन गृहीत्वा पाणिना तदा। ८९५५
पार्षतः क्रोशमानानां वीराणामच्छिनच्छिरः। न हन्तव्यो न हन्तव्य इति ते सर्व्वतोऽब्रुवन्।
तथैव चार्ज्जुनो वाहादवरुह्यैनमाद्रवत्। उद्यम्य त्वरितो बाहू ब्रुवाणश्च पुनः पुनः।
जीवन्तमानयाचार्य्यं मावधीरपि धर्म्मवित्। तथापि वार्य्यमाणेन कौरवैरर्ज्जुनेन च।
हत एव नृशंसेन पिता तव नरर्षभ। सैनिकाश्च ततः सर्व्वे प्राद्रवन्त भयार्द्दिताः।
वयञ्चापि निरुत्साहा हते पितरि तेऽनघ। ८९६०
॥ सञ्जय उवाच ॥ तच्छ्रुत्वा द्रोणपुत्रस्तु निधनं पितुराहवे। क्रोधमाहारयत्तीव्रं पदाहत इवोरगः।
ततः क्रुद्धो रणे द्रौणिर्भृशं जज्वाल मारिष। यथेन्धनं महत् प्राप्य प्राज्वलद्धव्यवाहनः।
तलं तलेन निष्पिष्य दन्तैर्दन्तानुपस्पृशन्। निःश्वसन्नुरगो यद्वल्लोहिताक्षोऽभवत्तदा।
इति श्रीमहाभारते द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि अश्वत्थामक्रोधे चतुर्नवत्यधिकशततमोऽध्यायः॥ १९४ ॥

॥ धृतराष्ट्र उवाच ॥ अधर्म्मेण हतं श्रुत्वा धृष्टद्युम्नेन सञ्जय । ब्राह्मणं पितरं वृद्धमश्वत्थामा किमब्रवीत् ।
मानवं वारुणाग्नेयं ब्राह्ममस्त्रञ्च वीर्य्यवान् । ऐन्द्रं नारायणञ्चैव यस्मिन्नित्यं प्रतिष्ठितं । ८८९५
तमधर्म्मेण धर्म्मिष्ठं धृष्टद्युम्नेन संयुगे । श्रुत्वा निहतमाचार्य्यं सोऽश्वत्थामा किमब्रवीत् ।
येन रामादवाप्येह धनुर्व्वेदं महात्मना । प्रोक्तान्यस्त्राणि दिव्यानि पुत्राय गुणकाङ्क्षिणा ।
एकमेव हि लोकेऽस्मिन्नात्मनो गुणवत्तरं । इच्छन्ति पुत्रं पुरुषा लोके नान्यं कथञ्चन ।
आचार्य्याणां भवन्त्येव रहस्यानि महात्मनां । तानि पुत्राय वा दद्युः शिष्यायानुगताय वा ।
स शिष्यः प्राप्य तत्सर्व्वं सविशेषञ्च सञ्जय । शूरः शारद्वतीपुत्रः सङ्ख्ये द्रोणादनन्तरः । ८९००
रामस्यानुमतः शास्त्रे पुरन्दरसमो युधि । कार्त्तवीर्य्यसमो वीर्य्ये वृहस्पतिसमो मतौ ।
महीधरसमो धृत्या तेजसाऽग्निसमो युवा । समुद्र इव गाम्भीर्य्ये क्रोधे सर्पविषोपमः ।
स रथी प्रथमो लोके जितधन्वा जितक्लमः । शीघ्रोऽनिल इवाक्रन्दे चरन् क्रुद्ध इवान्तकः ।
अस्यता येन सङ्ग्रामे धरण्यभिनिपीड़िता । यो न व्यथति सङ्ग्रामे वीरः सत्यपराक्रमः ।
वेदस्नातो व्रतस्नातो धनुर्व्वेदे च पारगः । महोदधिरिवाक्षोभ्यो रामो दाशरथिर्यथा । ८९०५
तमधर्म्मेण धर्म्मिष्ठं धृष्टद्युम्नेन संयुगे । श्रुत्वा निहतमाचार्य्यं सोऽश्वत्थामा किमब्रवीत् ।
धृष्टद्युम्नस्य यो मृत्युः सृष्टस्तेन महात्मना । यथा द्रोणस्य पाञ्चाल्यो यज्ञसेनसुतोऽभवत् ।
तं नृशंसेन पापेन क्रूरेणात्यल्पदर्शिना । श्रुत्वा निहतमाचार्य्यमश्वत्थामा किमब्रवीत् ।
इति श्रीमहाभारते द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि अश्वत्थामक्रोधे पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥
॥ सञ्जय उवाच ॥ छद्मना निहतं श्रुत्वा पितरं पापकर्म्मणा । वाष्पेणापूर्य्यत द्रौणी रोषेण च नरर्षभ ।
तस्य क्रुद्धस्य राजेन्द्र वपुर्दिव्यमदृश्यत । अन्तकस्येव भूतानि जिहीर्षोः कालपर्य्यये । ८९१०
अश्रुपूर्णे ततो नेत्रे व्यपमृज्य पुनः पुनः । उवाच कोपान्निःश्वस्य दुर्य्योधनमिदं वचः ।
पिता मम यथा क्षुद्रैर्न्यस्तशस्त्रो निपातितः । धर्म्मध्वजवता पापं कृतं तद्विदितं मम ।
अनार्य्यं सुनृशंसस्य धर्म्मपुत्रस्य मे श्रुतं । युद्धेष्वपि प्रवृत्तानां ध्रुवौ जयपराजयौ ।
द्वयमेतद्भवेद्राजन् वधस्तत्र प्रशस्यते । न्यायवृत्तो वधो यस्तु सङ्ग्रामे युध्यतो भवेत् ।
न स दुःखाय भवति तथा दृष्टो हि स द्विजैः । गतः स वीरलोकाय पिता मम न संशयः । ८९१५
न शोच्यः पुरुषव्याघ्रस्तथा स निधनं गतः । यत्तु धर्म्मप्रवृत्तः सन् केशग्रहणमाप्तवान् ।
पश्यतां सर्व्वसैन्यानां तन्मे मर्म्माणि कृन्तति । मयि जीवति यत्तातः केशग्रहणमाप्तवान् ।
कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहां । कामात् क्रोधादवज्ञानाद्दर्पाद्बाल्येन वा पुनः ।
वैधर्म्मिकाणि कुर्व्वन्ति तथा परिभवन्ति च । तदिदं पार्षतेनेह महदाधार्म्मिकं कृतं ।
अवज्ञाय च मां नूनं नृशंसेन दुरात्मना । तस्यानुबन्धं स द्रष्टा धृष्टद्युम्नः सुदारुणं । ८९२०
अनार्य्यं परमं कृत्वा मिथ्यावादी च पाण्डवः । यो ह्यसौ छद्मनाचार्य्यं शस्त्रं सन्न्यासयत्तदा ।
तस्याद्य धर्म्मराजस्य भूमिः पास्यति शोणितं । सर्व्वे सत्येन कौरव्य इष्टापूर्त्तेन चैव हि ।

अहत्वा सर्व्वपाञ्चालान् जीवेयं न कथञ्चन । सर्व्वोपायैर्यतिष्यामि पाञ्चालानां महाहवे ।
धृष्टद्युम्नञ्च समरे हन्ताहं पापकारिणं । कर्म्मणा येन तेनेह मृदुना दारुणेन च ।
पाञ्चालानां वधं कृत्वा शान्तिं लब्धास्मि कौरव । यदर्थं पुरुषव्याघ्र पुत्त्रानिच्छन्ति मानवाः । ८९९५
प्रेत्य चेह च सम्प्राप्तांस्त्रायन्ते महतो भयात् । पित्रा तु मम साऽवस्था प्राप्ता निर्व्वन्धुना यथा ।
मयि शैलप्रतीकाशे पुत्त्रे शिष्ये ऽच जीवति । धिङ्ममास्त्राणि दिव्यानि धिक् बाहू धिक् पराक्रमं ।
यन्मां द्रोणः सुतं प्राप्य केशग्रहणमाप्तवान् । स तथाऽहं करिष्यामि यथा भरतसत्तम ।
परलोकगतस्यापि भविष्याम्यनृणः पितुः । आर्य्येण तु न वक्तव्या कदाचित् स्तुतिरात्मनः ।
पितुर्व्वधममृष्यंस्तु वक्ष्याम्यद्येह पौरुषं । अद्य पश्यन्तु मे वीर्य्यं पाण्डवाः सजनार्द्दनाः । ९०००
मृद्नतः सर्व्वसैन्यानि युगान्तमिव कुर्व्वतः । न हि देवा न गन्धर्व्वा नासुरोरगराक्षसाः ।
अद्य शक्ता रणे जेतुं रथस्थं मां नरर्षभाः । मदन्यो नास्ति लोके ऽस्मिन्नर्ज्जुनाद्वास्त्रवित् क्वचित् ।
अहं हि ज्वलतां मध्ये मयूखानामिवांशुमान् । प्रयोक्ता देवसृष्टानामस्त्राणां पृतनागतः ।
अस्त्रमिष्वासनोद्रस्य मत्प्रयुक्ता महाहवे । दर्शयन्तः शरा वीर्य्यं प्रमथिष्यन्ति पाण्डवान् ।
अद्य सर्व्वा दिशो राजन् धाराभिरिव संवृताः । आहताः पत्त्रिभिस्तीक्ष्णैर्द्रष्टारो मामकैरिह । ९००५
विकिरन् शरजालानि सर्व्वतो भैरवस्वनं । शत्रून्निपातयिष्यामि महावात इव द्रुमान् ।
न हि जानाति बीभत्सुस्तदस्त्रं न जनार्द्दनः । न भीमसेनो न यमौ न च राजा युधिष्ठिरः ।
न पार्षतो दुरात्मासौ न शिखण्डी न सात्यकिः । यदिदं मम कौरव्य सकल्पं सनिवर्त्तनं ।
नारायणाय मे पित्रा प्रणम्य विधिपूर्व्वकं । उपहारः पुरा दत्तो ब्रह्मरूप उपस्थितः ।
तं स्वयं प्रतिगृह्याथ भगवान् स वरं ददौ । वव्रे पिता मे परममस्त्रं नारायणं ततः । ९०१०
अथैनमब्रवीद्राजन् भगवान् देवसत्तमः । भविता त्वत्समो नान्यः कश्चिद्युधि नरः क्वचित् ।
न त्विदं सहसा ब्रह्मन् प्रयोक्तव्यं कथञ्चन । न ह्येतदस्त्रमन्यत्र वधाच्छत्रोर्निवर्त्तते ।
न चैतच्छक्यते ज्ञातुं कं न वध्येदिति प्रभो । अवध्यमपि हन्याद्धि तस्मान्नैतत् प्रयोजयेत् ।
अथ संख्ये रथस्यैव शस्त्राणाञ्च विसर्जनं । प्रयाचनञ्च शत्रूणां गमनं शरणस्य च ।
एते प्रशमने योगा महास्त्रस्य परन्तप । सर्व्वथा पीडितो हि स्यादवध्यान् पीडयन् रणे । ९०१५
तज्जग्राह पिता मह्यमब्रवीच्चैव स प्रभुः । त्वं वर्षिष्यसि दिव्यानि शस्त्रवर्षाण्यनेकशः ।
अनेनास्त्रेण संग्रामे तेजसा प्रज्वलिष्यसि । एवमुक्त्वा स भगवान् दिवमाचक्रमे प्रभुः ।
एतन्नारायणादस्त्रं तत् प्राप्तं पितृबन्धुना । तेनाहं पाण्डवांश्चैव पाञ्चालान्मत्स्यकेकयान् ।
विद्रावयिष्यामि रणे शचीपतिरिवासुरान् । यथा यथाऽहमिच्छेयं तथा भूत्वा शरा मम ।
निपतेयुः सपत्नेषु विक्रमत्स्वपि भारत । यथेष्टमश्मवर्षेण प्रवर्षिष्ये रणे स्थितः । ९०२०
अयोमुखैश्च विहगैर्द्रावयिष्ये रथोत्तमान् । परश्वधांश्च विविधानुत्स्रक्ष्ये ऽहमसंशयं ।
सो ऽहं नारायणास्त्रेण महता शत्रुतापनः । शत्रून् विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवान् ।

निघ्नन्नुरुद्वेषी आत्मकः सुविगर्हितः । पाञ्चाल्यापसदश्चाद्य न मे जीवन् विमोक्ष्यते ।
तच्छ्रुत्वा द्रोणपुत्रस्य पर्य्यवर्त्तत वाहिनी । ततः सर्व्वे महाशङ्खान् दध्मुः पुरुषसत्तमाः ।
भेरीश्चाभ्यहनन् हृष्टा डिण्डिमांश्च सहस्रशः । तथा ननाद वसुधा खुरनेमिप्रपीडिता । ९०२५
स शब्दस्तुमुलः खं द्यां पृथिवीञ्च व्यनादयत् । तं शब्दं पाण्डवाः श्रुत्वा पर्ज्जन्यनिनदोपमं ।
समेत्य रथिनां श्रेष्ठाः सहिताः सममन्त्रयन् । तथोक्त्वा द्रोणपुत्रो ऽपि वार्य्युपस्पृश्य भारत ।
प्रादुश्चकार तद्दिव्यमस्त्रं नारायणं तदा ।

इति श्रीमहाभारते द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि अश्वत्थामक्रोधे षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

॥ सञ्जय उवाच ॥ प्रादुर्भूते ततस्तस्मिन्नस्त्रे नारायणे तदा । प्रावात् सपृषतो वायुरनभ्रे स्तनयित्नुमान् ।
चचाल पृथिवी चापि समुद्राश्चैव चुक्षुभुः । प्रतिस्रोतः प्रवृत्ताश्च गन्तुं तत्र समुद्रगाः । ९०३०
शिखराणि व्यशीर्य्यन्त गिरीणां तत्र भारत । अपसव्यं मृगाश्चैव पाण्डुपुत्रान् प्रचक्रिरे ।
तमसा चावकीर्य्यन्त सूर्य्यश्च कलुषोऽभवत् । सम्पतन्ति च भूतानि क्रव्यादानि प्रहृष्टवत् ।
देवदानवगन्धर्व्वास्त्रस्ता आसन् विशाम्पते । कथं कथाऽभवत्तीव्रा दृष्ट्वा तद्व्याकुलं महत् ।
व्यथिताः सर्व्वराजानस्त्रस्ता आसन् विशाम्पते । तं दृष्ट्वा घोररूपन्तु द्रौणेरस्त्रं भयावहं ।
॥ धृतराष्ट्र उवाच ॥ निवर्त्तितेषु सैन्येषु द्रोणपुत्रेण संयुगे । भृशं शोकाभितप्तेन पितुर्व्वधममृष्यता । ९०३५
कुरूनापततो दृष्ट्वा धृष्टद्युम्नस्य रक्षणे । को मन्त्रः पाण्डवेष्वासीत्तन्ममाचक्ष्व सञ्जय ।
॥ सञ्जय उवाच ॥ प्रागेव विद्रुतान् दृष्ट्वा धार्त्तराष्ट्रान् युधिष्ठिरः । पुनश्च तुमुलं युद्धं श्रुत्वार्ज्जुनमथाब्रवीत् ।
॥ युधिष्ठिर उवाच ॥ आचार्य्ये निहते द्रोणे धृष्टद्युम्नेन संयुगे । निहते वज्रहस्तेन यथा वृत्रे महासुरे ।
नाशंसन्त जयं युद्धे दीनात्मानो धनञ्जय । आत्मत्राणे मतिं कृत्वा प्राद्रवन् कुरवो रणात् ।
केचिद्भ्रान्तै रथैस्तूर्णं निहतैः पार्ष्णियन्तृभिः । विपताकध्वजच्छत्रैः पार्थिवाः शीर्णकूवरैः । ९०४०
भग्ननीडैराकुलैश्च प्राद्रवन्त्यान् विचेतसः । भीताः पादैर्हयान् केचित् त्वरयन्तः स्वयं रथान् ।
युगचक्राक्षभग्नाश्च द्रुताः केचिद्भयातुराः । हयपृष्ठगताश्चान्ये क्रमन्तोऽर्द्धच्युतासनाः ।
गजस्कन्धेषु संस्यूता नाराचैश्चलितासनाः । शरार्त्तैर्विद्रुतैर्नागैर्हृताः केचिद्दिशो दश ।
विशस्त्रकवचाश्चान्ये वाहनेभ्यः क्षितिं गताः । संछिन्ना नेमिभिश्चैव मृदिताश्च हयद्विपैः ।
क्रोशन्तस्तात पुत्रेति पलायन्नपरे भयात् । नाभिजानन्ति चान्योन्यं कश्मलाभिहतौजसः । ९०४५
पुत्रान् पितॄन् सखीन् भ्रातॄन् समारोप्य दृढक्षतान् । जलेन क्लेदयन्त्यन्ये विमुच्य कवचान्यपि ।
अवस्थां तादृशीं प्राप्य हते द्रोणे द्रुतं बलं । पुनरावर्त्तितं केन यदि जानासि शंस मे ।
हयानां ह्रेषतां शब्दः कुञ्जराणाञ्च वृंहतां । रथनेमिस्वनैश्चात्र विमिश्रः श्रूयते महान् ।
एते शब्दा भृशं तीव्राः प्रवृत्ताः कुरुसागरे । मुहुर्म्मुहुरुदीर्य्यन्ते कम्पयन्ति हि मामकान् ।
य एष तुमुलः शब्दः श्रूयते लोमहर्षणः । सेन्द्रानप्येष लोकांस्त्रीन् ग्रसेदिति मतिर्म्मम । ९०५०

मन्ये वज्रधरस्येव निनदो भैरवस्वनः । द्रोणे हते कौरवार्थं व्यक्तमभ्येति वासवः ।
प्रहृष्टरोमकूपाः स्म संविग्ना रथयूथपाः । धनञ्जय गुरुं श्रुत्वा तत्र नादं विभीषणं ।
क एष भैरवान् दीर्णानवधाय महारथः । निवर्त्तति युद्धार्थं मृधे देवेश्वरो यथा ।
॥ अर्ज्जुन उवाच ॥ उद्यम्यात्मानमुग्राय कर्म्मणे धैर्य्यमास्थितः । धमन्ति कौरवाः शङ्खान् यस्य वीर्य्यमुपाश्रिताः ।
यत्र ते संशयो राजन् न्यस्तशस्त्रे गुरौ हते । धार्त्तराष्ट्रानवष्टभ्य क एष नदतीति हि । ९०५५
ह्रीमन्तं तं महाबाहुं मत्तद्विरदगामिनं । व्याघ्रास्यमुग्रकर्म्माणं कुरूणामभयङ्करं ।
यस्मिन् जाते ददौ द्रोणो गवां दशशतं धनं । ब्राह्मणेभ्यो महार्हेभ्यः सोऽश्वत्थामैष गर्ज्जति ।
जातमात्रेण वीरेण येनोच्चैःश्रवसा इव । ह्रेषता कम्पिता भूमिर्लोकाश्च सकलास्त्रयः ।
तच्छ्रुत्वान्तर्हितं भूतं नाम तस्याकरोत् प्रभो । अश्वत्थामेति सोऽद्यैष शूरो नदति पाण्डव ।
यो ह्यनाथ इवाक्रम्य पार्षतेन हतस्तदा । कर्म्मणा सुनृशंसेन तस्य नाथो व्यवस्थितः । ९०६०
गुरुं मे यत्र पाञ्चाल्यः केशपक्षे परामृशत् । तन्न जातु क्षमेद्द्रौणिर्जानन् पौरुषमात्मनः ।
उपचीर्णो गुरुर्मिथ्या भवता राज्यकारणात् । धर्म्मज्ञेन सता नाम सोऽधर्म्मः सुमहान् कृतः ।
चिरं स्थास्यति चाकीर्त्तिस्त्रैलोक्ये सचराचरे । रामे वालिवधाद्यद्वदेवं द्रोणे निपातिते ।
सर्व्वधर्म्मोपपन्नोऽयं मम शिष्यश्च पाण्डवः । नायं वक्ष्यति मिथ्येति प्रत्ययं कृतवांस्त्वयि ।
स सत्यकञ्चुकं नाम प्रविष्टेन ततोऽनृतं । आचार्य्य उक्तो भवता हतः कुञ्जर इत्युत । ९०६५
ततः शस्त्रं समुत्सृज्य निर्म्ममो गतचेतनः । आसीत् स विह्वलो राजन् यथा दृष्टस्त्वया विभुः ।
स तु शोकसमाविष्टो विमुखः पुत्रवत्सलः । शाश्वतं धर्म्ममुत्सृज्य शिष्येण निहतो गुरुः ।
न्यस्तशस्त्रमधर्म्मेण घातयित्वा गुरुं भवान् । रक्षत्विदानीं सामात्यो यदि शक्नोषि पार्षतं ।
ग्रस्तमाचार्य्यपुत्रेण क्रुद्धेन हतबन्धुना । सर्व्वे वयं परित्रातुं न शक्ष्यामोऽद्य पार्षतं ।
सौहार्द्दं सर्व्वभूतेषु यः करोत्यतिमानुषः । सोऽद्य केशग्रहं श्रुत्वा पितुर्धक्ष्यति नो रणे । ९०७०
विक्रोशमाने हि मयि भृशमाचार्य्यगृद्धिनि । अपाकीर्य्य स्वकं धर्म्मं शिष्येण निहतो गुरुः ।
यदा गतं वयो भूयः शिष्टमल्पतरञ्च नः । तस्येदानीं विकारोऽयमधर्म्मोऽयं कृतो महान् ।
पितेव नित्यं सौहार्द्दात् पितेव हि च धर्म्मतः । सोऽल्पकालस्य राज्यस्य कारणान्निहतो गुरुः ।
धृतराष्ट्रेण भीष्माय द्रोणाय च विशाम्पते । विसृष्टा पृथिवी सर्व्वा सह पुत्रैश्च तत्परैः ।
सम्प्राप्य तादृशीं वृत्तिं सत्कृतः सततं परैः । अवृणीत सदा पुत्रान् मामेवाभ्यधिकं गुरुः । ९०७५
अक्षीयमाणो न्यस्तास्त्रस्त्वद्वाक्येनाहवे हतः । नहि तं युध्यमानं वै हन्यादपि शतक्रतुः ।
तस्याचार्य्यस्य वृद्धस्य द्रोहो नित्योपकारिणः । कृतो ह्यनार्य्यैरस्माभी राज्यार्थे लघुवृत्तिभिः ।
अहो बत महत्पापं कृतं कर्म्म सुदारुणं । यद्राज्यसुखलोभेन द्रोणोऽयं साधु घातितः ।
पितॄन् भ्रातॄन् सुतान् दारान् जीवितञ्चैव वासविः । त्यजेत् सर्व्वं मम प्रेम्णा जानात्येतद्धि मे गुरुः ।

स मया राज्यकामेन हन्यमाने ह्युपेक्षितः । तस्मादवाक्शिरा राजन् प्राप्तोऽस्मि नरकं विभो । ९०८०
ब्राह्मणं वृद्धमाचार्य्यं न्यस्तशस्त्रं महामुनिम् । घातयित्वाऽद्य राज्यार्थं मृतं श्रेयो न जीवितम् ।
इति श्रीमहाभारते द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि अर्ज्जुनवाक्ये सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

॥ सञ्जय उवाच ॥ अर्ज्जुनस्य वचः श्रुत्वा नोचुस्तत्र महारथाः । अप्रियं वा प्रियं वापि महाराज धनञ्जयम् ।
ततः क्रुद्धो महाबाहुर्भीमसेनोऽभ्यभाषत । कुत्सयन्निव कौन्तेयमर्ज्जुनं भरतर्षभ ।
मुनिर्यथाऽरण्यगतो भाषते धर्म्मसंहितम् । न्यस्तदण्डो यथा पार्थ ब्राह्मणः संशितव्रतः ।
क्षतत्राता क्षताज्जीवन् क्षन्ता स्त्रीष्वपि साधुषु । क्षत्रियः क्षितिमाप्नोति क्षिप्रं धर्म्मं यशः श्रियः । ९०८५
स भवान् क्षत्रियगुणैर्युक्तः सर्व्वैः कुलोद्वहः । अविपश्चिद्यथा वाक्यं व्याहरन्नाद्य शोभसे ।
पराक्रमस्ते कौन्तेय शक्रस्येव शचीपतेः । न चातिवर्त्तसे धर्म्मं वेलामिव महोदधिः ।
न पूजयेत्त्वां कोऽन्वद्य यत्त्रयोदशवार्षिकम् । अमर्षं पृष्ठतः कृत्वा धर्म्ममेवाभिकाङ्क्षसे ।
दिष्ट्या तात मनस्तेऽद्य स्वधर्म्ममनुवर्त्तते । आनृशंस्ये च ते दिष्ट्या बुद्धिः सततमच्युत ।
यत्तु धर्म्मप्रवृत्तस्य हृतं राज्यमधर्म्मतः । द्रौपदी च परामृष्टा सभामानीय शत्रुभिः । ९०९०
वनं प्रव्राजिताश्चास्म वल्कलाजिनवाससः । अनर्हमाणास्तं भावं त्रयोदश समाः परैः ।
एतान्यमर्षस्थानानि मर्षितानि त्वयाऽनघ । क्षत्रधर्म्मप्रसक्तेन सर्व्वमेतदनुष्ठितम् ।
तमधर्म्ममपाक्रुष्टुं स्मृत्वाऽद्य सहितस्त्वया । सानुबन्धान् हनिष्यामि क्षुद्रान् राज्यहरानहम् ।
त्वया तु कथितं पूर्व्वं युद्धायाभ्युद्यता वयम् । घटाम च यथाशक्ति त्वन्तु नोऽद्य जुगुप्ससे ।
धर्म्मं नेच्छसि ज्ञातुं मिथ्यावचनमेव ते । भयार्द्दितानामस्माकं वाचा मर्म्माणि कृन्तसि । ९०९५
वपन् व्रणे क्षारमिव क्षतानां शत्रुकर्षण । विदीर्य्यते मे हृदयं त्वया वाक्शल्यपीडितम् ।
अधर्म्मतत्त्वं विपुलं धार्म्मिकः सन्न बुध्यसे । यत्त्वमात्मानमस्मांश्च प्रशस्यान्न प्रशंससि ।
वासुदेवे स्थिते चापि द्रोणपुत्त्रं प्रशंससि । यः कलां षोडशीं पूर्णां धनञ्जय न तेऽर्हति ।
स्वयमेवात्मनो दोषान् ब्रुवाणः किं न लज्जसे । दारयेयं महीं क्रोधाद्विकिरेयञ्च पर्व्वतान् ।
आविध्य तां गदां गुर्व्वीं भीमां काञ्चनमालिनीम् । गिरिप्रकाशान् क्षितिजान् भञ्ज्यामनिलो यथा । ९१००
द्रावयेयं शरैश्चापि सेन्द्रान् देवान् समागतान् । सराक्षसगणान् पार्थ सासुरोरगमानवान् ।
स त्वमेवंविधं ज्ञात्वा भ्रातरं मां नरर्षभ । द्रोणपुत्त्राद्भयं कर्त्तुं नार्हस्यमितविक्रम ।
अथवा तिष्ठ बीभत्सो सह सर्व्वैर्नरर्षभैः । अहमेनं गदापाणिर्जेष्याम्येको महारणे ।
संक्रुद्धमिव गर्ज्जन्तं हिरण्यकशिपुं हरिम् । ततः पाञ्चालराजस्य पुत्त्रः पार्थमथाब्रवीत् ।
॥ धृष्टद्युम्न उवाच ॥ बीभत्सो विप्रकर्म्माणि विहितानि मनीषिणाम् । याजनाध्यापने दानं तथा यज्ञप्रतिग्रहौ । ९१०५
षष्ठमध्ययनं नाम तेषां कस्मिन् प्रतिष्ठितः । हतो द्रोणो मया यत्तत् किं मां पार्थ विगर्हसे ।
अपक्रान्तः स्वधर्म्माच्च क्षत्रधर्म्ममुपाश्रितः । अमानुषेण हन्त्यस्मानस्त्रेण क्षुद्रकर्म्मकृत् ।
तथा मायां प्रयुञ्जानमसह्यं ब्राह्मणब्रुवम् । माययैव निहन्याद्यो न युक्तं तत्र पार्थ किम् ।

तस्मिंस्तथा मया शस्ते यदि द्रौणायनी रुषा । कुरुते भैरवं नादं तत्र किं मम हीयते ।
न चाद्भुतमिदं मन्ये यद्द्रौणिर्भैरवं तथा । घातयिष्यति कौरव्यान् परित्रातुमशक्नुवन् । ८९१०
यच्च मां धार्म्मिको भूत्वा ब्रवीषि गुरुघातिनं । तदर्थमहमुत्पन्नः पाञ्चाल्यस्य सुतोऽनलात् ।
यस्य कार्य्यमकार्य्यं वा युध्यतः स्यात् समं रणे । ब्राह्मणं तं कथं ब्रूयात् क्षत्रियं वा धनञ्जय ।
यो ह्यनस्त्रविदो हन्याद्ब्रह्मास्त्रैः क्रोधमूर्च्छितः । सर्व्वोपायैर्न स कथं वध्यः पुरुषसत्तम ।
विधर्म्मिणं धर्म्मविद्भिः प्रोक्तमेव विषोपमं । जानन् धर्म्मार्थतत्त्वज्ञः किमर्जुन विगर्हसे ।
नृशंसः स मयाक्रम्य रथ एव निपातितः । तं माभिनन्द्यं बीभत्सो किमर्थं नाभिनन्दसे । ८९१५
कालानलसमं पार्थ ज्वलनार्कविषोपमं । भीमं द्रोणशिरश्छिन्नं प्रशस्यं न प्रशंससि ।
यो ऽसौ ममैव नान्यस्य बान्धवान् युधि जघ्निवान् । छित्त्वापि तस्य मूर्द्धानं नैवास्मि विगतज्वरः ।
तच्च मे कृन्तते मर्म्म यन्न तस्य शिरो मया । निषादविषये क्षिप्तं जयद्रथशिरो यथा ।
अथावधस्य शत्रूणामधर्म्मः श्रूयतेऽर्ज्जुन । क्षत्रियस्य त्वयं धर्म्मो हन्याद्धन्येत वा पुनः ।
स शत्रुर्निहतः संख्ये मया धर्म्मेण पाण्डव । यथा त्वया हतः शूरो भगदत्तः पितुः सखा । ८९२०
पितामहं रणे हत्वा मन्यसे धर्म्ममात्मनः । मया शत्रौ हते कस्मात् पापे धर्म्मं न मन्यसे ।
सम्बन्धावनतं पार्थ न मां त्वं वक्तुमर्हसि । स्वगात्रकृतसोपानं निषण्णमिव दन्तिनं ।
क्षमामि ते सर्व्वमेव वाग्व्यतिक्रममर्ज्जुन । द्रौपद्या द्रौपदेयानां कृते नान्येन हेतुना ।
कुलक्रमागतं वैरं ममाचार्य्येण विश्रुतं । तथा जानात्ययं लोको न यूयं पाण्डुनन्दनाः ।
नानृती पाण्डवो ज्येष्ठो नाहं वाऽधार्म्मिकोऽर्ज्जुन । शिष्यद्रोही हतः पापो युध्यस्व विजयस्तव । ८९२५

इति श्रीमहाभारते द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि धृष्टद्युम्नवाक्ये अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

॥ धृतराष्ट्र उवाच ॥ साङ्गा वेदा यथान्यायं येनाधीता महात्मना । यस्मिन् साक्षाद्धनुर्वेदो ह्रीनिषेवे प्रतिष्ठितः ।
यस्मिन्नाक्रुश्यति द्रोणे महर्षितनये तथा । नीचात्मना नृशंसेन क्षुद्रेण गुरुघातिना ।
यस्य प्रसादात् कर्म्माणि कुर्व्वन्ति पुरुषर्षभाः । अमानुषाणि संख्येषु दैवैरसुकराणि च ।
तस्मिन्नाक्रुश्यति द्रोणं समक्षं पापकर्म्मणा । नामर्षं तत्र कुर्व्वन्ति धिक् क्षात्रं धिगमर्षितां ।
पार्थाः सर्व्वे च राजानः पृथिव्यां ये धनुर्द्धराः । श्रुत्वा किमाहुः पाञ्चाल्यं तन्ममाचक्ष्व सञ्जय । ८९३०
॥ सञ्जय उवाच ॥ श्रुत्वा द्रुपदपुत्रस्य ता वाचः क्रूरकर्म्मणः । तूष्णीम्भूतास्तदा राजन् सर्व्व एव विशाम्पते ।
अर्ज्जुनस्तु कटाक्षेण जिह्मं विप्रेक्ष्य पार्षतं । सवाष्पमतिनिःश्वस्य धिग्धिगित्येव चाब्रवीत् ।
युधिष्ठिरश्च भीमश्च यमौ कृष्णस्तथाऽपरे । आसन् सुव्रीडिता राजन् सात्यकिस्त्वब्रवीदिदं ।
न स्विह पुरुषः कश्चिद्य इमं पापपूरुषं । भाषमाणमकल्याणं शीघ्रं हन्यान्नराधमं ।
एते त्वां पाण्डवाः सर्व्वे कुत्सयन्ति विकुत्सया । कर्म्मणाऽनेन पापेन श्वपाकं ब्राह्मणा इव । ८९३५
एतत् कृत्वा महत् पापं निन्दितः सर्व्वसाधुभिः । न लज्जसे कथं वक्तुं समितिं प्राप्य शोभनां ।
कथञ्च शतधा जिह्वा न ते मूर्द्धाऽवदीर्य्यते । गुरुमाक्रोशतः क्षुद्र न चाधर्म्मेण पात्यसे ।

वाच्यस्त्वमसि पार्थैश्च सर्व्वैश्चान्धकवृष्णिभिः। यत् कर्म्म कलुषं कृत्वा श्लाघसे जनसंसदि।
अनार्य्यं तादृशं कृत्वा पुनरेव गुरुं क्षिपन्। वध्यस्त्वं न त्वया योऽस्ति मुहूर्त्तमपि जीवता।
कस्त्वद्व्यवसेदार्य्यस्त्वदन्यः पुरुषाधमः। निगृहीतस्य केशेषु वधं गुरोर्धर्म्मात्मनः सतः। ८९४०
सप्तावरे तथा पूर्व्वे बान्धवास्ते निपातिताः। यशसा च परित्यक्तास्त्वां प्राप्य कुलपांसनं।
उक्तवांश्चापि यत् पार्थं भीष्मम्प्रति नरर्षभं। तथाऽन्तो विहितस्तेन स्वयमेव महात्मना।
तस्यापि तव सोदर्य्यो निहन्ता पापकृत्तमः। नान्यः पाञ्चालपुत्रेभ्यो विद्यते भुवि पापकृत्।
स चापि सृष्टः पित्रा ते भीष्मस्यान्तकरः किल। शिखण्डी रक्षितस्तेन स च मृत्युर्महात्मनः।
पाञ्चालाश्चलिता धर्म्मात् क्षुद्रा मित्रगुरुद्रुहः। त्वं प्राप्य सहसोदर्य्यं धिक्कृतं सर्व्वसाधुभिः। ८९४५
पुनश्चेदीदृशीं वाचं मत्समीपे वदिष्यसि। शिरस्ते पातयिष्यामि गदया वज्रकल्पया।
त्वाञ्च ब्रह्महणं दृष्ट्वा जनः सूर्य्यमवेक्षते। ब्रह्महत्या हि ते पाप प्रायश्चित्तार्थमात्मनः।
पाञ्चालक सुदुर्बुद्धे ममैव गुरुमग्रतः। गुरोर्गुरुवधं भूयः क्षिपन्नेवेह लज्जसे।
तिष्ठ तिष्ठ सहस्वैकं गदापातमिमं मम। तव चापि सहिष्ये ऽहं गदापातानेकशः।
सात्वतेनैवमाक्षिप्तः पार्षतः परुषाक्षरं। संरब्धं सात्यकिं प्राह संक्रुद्धः प्रहसन्निव। ८९५०
॥ धृष्टद्युम्न उवाच ॥ श्रूयते श्रूयते चापि क्षम्यते चेति माधव। सदाऽनार्य्योऽशुभः साधुं पुरुषं क्षेप्तुमिच्छसि।
क्षमा प्रशस्यते लोके नतु पापोऽर्हति क्षमां। क्षमावन्तं हि पापात्मा जितोऽयमिति मन्यते।
स त्वं क्षुद्रसमाचारो नीचात्मा पापनिश्चयः। आकेशाग्रान्नखाग्राच्च वक्तव्यो वक्तुमिच्छसि।
यस्त्वं भूरिश्रवाश्छिन्नभुजः प्रायगतस्त्वया। वार्य्यमाणेन निहतस्ततः पापतरं नु किं।
व्यूहमानो मया द्रोणो दिव्येनास्त्रेण संयुगे। विसृष्टशस्त्रो निहतः किन्तत्र क्रूर दुष्कृतं। ८९५५
अयुध्यमानं यस्त्वाजौ तथा प्रायगतं मुनिं। छिन्नबाहुं परैर्हन्यात् सात्यके स कथं वदेत्।
निहत्य त्वां यदा भूमौ स विक्रामति वीर्य्यवान्। किन्तदा न निहंस्येनं भूत्वा पुरुषसत्तमः।
त्वया पुनरनार्य्येण पूर्व्वं पार्थेन निर्जितः। यदा तदा हतः शूरः सौमदत्तिः प्रतापवान्।
यत्र यत्र तु पाण्डूनां द्रोणो द्रावयते चमूं। किरञ्छरसहस्राणि तत्र तत्र प्रयाम्यहं।
स त्वमेवंविधं कृत्वा कर्म्म चाण्डालवत् स्वयं। वक्तुमिच्छसि वक्तव्यः कस्मात्त्वं परुषाण्यथ। ८९६०
कर्त्ता त्वं कर्म्मणोऽस्य नाहं वृष्णिकुलाधम। पापानाञ्च त्वमावासः कर्म्मणां मा पुनर्व्वद।
जोषमास्स्व न मां भूयो वक्तुमर्हस्यतः परं। अधरोत्तरमेतद्धि न मां त्वं वक्तुमर्हसि।
अथ वक्ष्यसि मां मौर्ख्याद्भूयः परुषमीदृशं। गमयिष्यामि बाणैस्त्वां युद्धे वैवस्वतक्षयं।
न चैवं मूर्ख धर्म्मेण केवलेनैव शक्यते। तेषामपि ह्यधर्म्मेण चेष्टितं शृणु यादृशं।
वञ्चितः पाण्डवः पूर्व्वमधर्म्मेण युधिष्ठिरः। द्रौपदी च परिक्लिष्टा तथाऽधर्म्मेण सात्यके। ८९६५
प्रव्राजिता वने सर्व्वे पाण्डवाः सह कृष्णया। सर्व्वस्वमपकृष्टञ्च तथाऽधर्म्मेण बालिश।
अधर्म्मेणाऽपकृष्टश्च मद्रराजः परैरितः। अधर्म्मेण तथा बालः सौभद्रो विनिपातितः।

हतोऽप्यधर्मेण हतो भीष्मः कुरुपितामहः । भूरिश्रवा ह्यधर्मेण त्वया धर्मविदा हतः ।
एवं परैराचरितं पाण्डवेयैश्च संयुगे । रक्षमाणैर्जयं वीरैर्धर्मज्ञैरपि सात्वत ।
दुर्ज्ञेयः स परो धर्मस्तथाऽधर्मः सुदुर्विदः । युध्यस्व कौरवैः सार्द्धं मा गाः पितृनिवेशनं । ९१००
॥ सञ्जय उवाच ॥ एवमादीनि वाक्यानि क्रूराणि परुषाणि च । श्रावितः सात्यकिः श्रीमानाकम्पित इवाऽभवत् ।
तच्छ्रुत्वा क्रोधताम्राक्षः सात्यकिराददे गदां । निःश्वस्य च यथा सर्पः प्रणिधाय रथे धनुः ।
ततोऽभिपत्य पाञ्चाल्यं संरम्भेणेदमब्रवीत् । न त्वां वक्ष्यामि परुषं हनिष्ये त्वां वधक्षमं ।
तमापतन्तं सहसा महाबलममर्षणं । पाञ्चाल्यायाभिसंक्रुद्धमन्तकायान्तकोपमं ।
चोदितो वासुदेवेन भीमसेनो महाबलः । अवप्लुत्य रथात्तूर्णं बाहुभ्यां समवारयत् । ९१०५
द्रवमाणं तथा क्रुद्धं सात्यकिं पाण्डवो बली । प्रस्कन्दमानमादाय जगाम बलिनं बलात् ।
स्थित्वा विष्टभ्य चरणौ भीमेन शिनिपुङ्गवः । निगृहीतः पदे षष्ठे बलेन बलिनाम्वरः ।
अवप्लुत्य रथात्तस्तु ध्रियमाणं बलीयसा । उवाच श्लक्ष्णया वाचा सहदेवो विशाम्पते ।
अस्माकं पुरुषव्याघ्र मित्रमन्यन्न विद्यते । परमन्धकवृष्णिभ्यः पाञ्चालेभ्यश्च माधव ।
तथैवान्धकवृष्णीनां तथैव च विशेषतः । कृष्णस्य च तथाऽस्मत्तो मित्रमन्यन्न विद्यते । ९११०
पाञ्चालानाञ्च वार्ष्णेय समुद्रान्तां विचिन्वतां । नान्यदस्ति परं मित्रं यथा पाण्डववृष्णयः ।
स भवानीदृशं मित्रं मन्यसे च तथा तव । भवन्तश्च यथाऽस्माकं भवतश्च तथा वयं ।
स एवं सर्व्वधर्मज्ञ मित्रधर्ममनुस्मरन् । नियच्छ मन्युं पाञ्चाल्यात् प्रशाम्य शिनिपुङ्गव ।
पार्षतस्य क्षम त्वं वै क्षमतां चैव पार्षतः । वयं क्षमयितारश्च किमन्यच्च शमाद्भवेत् ।
प्रशाम्यमाने शैनेये सहदेवेन मारिष । पाञ्चालराजस्य सुतः प्रहसन्निदमब्रवीत् । ९११५
मुञ्च मुञ्च शिनेः पौत्रं भीम युद्धमदान्वितं । आसादयतु मामेष धराधरमिवानिलः ।
यावदस्य शितैर्बाणैः संरम्भं पातयाम्यहं । युद्धश्रद्धाञ्च कौन्तेय जीवितञ्चास्य संयुगे ।
किन्नु शक्यं मया कर्त्तुं कार्य्यं यदिदमुद्यतं । सुमहत् पाण्डुपुत्राणामायान्त्येते हि कौरवाः ।
अथ वा फाल्गुनः सर्व्वान् वारयिष्यति संयुगे । अहमप्यस्य मूर्द्धानं पातयिष्यामि सायकैः ।
मन्यते छिन्नबाहुं मां भूरिश्रवसमाहवे । उद्यतोऽहमहं ह्येनमेष मां वा हनिष्यति । ९१२०
शृण्वन् पाञ्चाल्यवाक्यानि सात्यकिः सर्पवत् श्वसन् । भीमबाह्वन्तरे सक्तो विस्फुरत्यनिशं बली ।
तौ वृषाविव नर्द्दन्तौ बलिनौ बाहुशालिनौ । त्वरया वासुदेवश्च धर्म्मराजश्च मारिष ।
यत्नेन महता वीरौ वारयामासतुस्ततः । निवार्य परमेष्वासौ क्रोधसंरक्तलोचनौ ।
युयुत्सूनपरान् सङ्ख्ये प्रतीयुः क्षत्रियर्षभाः ।

इति श्रीमहाभारते द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि धृष्टद्युम्नसात्यकिक्रोधे नवनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

॥ सञ्जय उवाच ॥ ततः स कदनं चक्रे रिपूणां द्रोणनन्दनः । युगान्ते सर्व्वभूतानां कालसृष्ट इवान्तकः । ९१२५
ध्वजद्रुमं शस्त्रशृङ्गं हतनागमहाशिलं । अश्वकिम्पुरुषाकीर्णं शरासनलतावृतं ।

चकम्पे चाद्रवत्सर्व्वं भूतपक्षिगणाकुलं । निवृत्य स्रावयामास योऽर्च्चितो गुरुपर्व्वतं ।
ततो वेगेन महता विनद्य भरतर्षभ । प्रतिज्ञां श्रावयामास पुनरेव तवात्मजं ।
यस्माद्युध्यन्तमाचार्य्यं धर्म्मकञ्चुकमास्थितः । मुञ्च शस्त्रमिति प्राह कुन्तीपुत्रो युधिष्ठिरः ।
तस्मात्सम्पश्यतस्तस्य द्रावयिष्यामि वाहिनीं । विद्राव्य सर्व्वान् हन्तास्मि पाञ्चालं पापमेव च । ९२००
सर्व्वानेतान् हनिष्यामि यदि योत्स्यन्ति मां रणे । सत्यं ते प्रतिजानामि परावर्त्तय वाहिनीं ।
तच्छ्रुत्वा तव पुत्रस्तु वाहिनीं पर्य्यवर्त्तयत । सिंहनादेन महता व्यपोह्य सुमहद्भयं ।
ततः समागमो राजन् कुरुपाण्डवसेनयोः । पुनरेवाऽभवत्तीव्रः पूर्णसागरयोरिव ।
संरब्धा हि स्थिरीभूता द्रोणपुत्रेण कौरवाः । उदग्राः पाण्डुपाञ्चाला द्रोणस्य निधनेन च ।
तेषां परमहृष्टानां जयमात्मनि पश्यतां । संरब्धानां महावेगः प्रादुरासीद्रणाजिरे । ९२०५
यथा शिलोच्चये शैलः सागरे सागरो यथा । प्रतिहन्येत राजेन्द्र तथासन् कुरुपाण्डवाः ।
ततः शङ्खसहस्राणि भेरीणामयुतानि च । अवादयन्त संहृष्टाः कुरुपाण्डवसैनिकाः ।
यथा निर्मथ्यमानस्य सागरस्य तु निस्वनः । अभवत्तस्य सैन्यस्य सुमहानद्भुतोपमः ।
प्रादुश्चक्रे ततो द्रौणिरस्त्रं नारायणं तदा । अभिसन्धाय पाण्डूनां पाञ्चालानाञ्च वाहिनीं ।
प्रादुरासंस्ततो बाणा दीप्ताग्राः खे सहस्रशः । पाण्डवान् क्षपयिष्यन्तो दीप्तास्या इव पन्नगाः । ९२१०
ते दिशः खञ्च सैन्यञ्च समावृण्वन् महाहवे । मुहूर्त्ताद्भास्करस्येव राजन् लोके गभस्तयः ।
तथापरे द्योतमाना ज्योतींषीवाम्बरेऽमले । प्रादुरासन्महीपाल कार्ष्णायसमया गुडाः ।
चतुर्दिशं विचित्राश्च शतघ्न्योऽथ गुडा गदाः । चक्राणि च क्षुरान्तानि मण्डलानीव भास्वतः ।
शस्त्राकृतिभिराकीर्णमतीव भरतर्षभ । दृष्ट्वाऽन्तरीक्षमाविग्नाः पाण्डुपाञ्चालसृञ्जयाः ।
यथा यथा ह्ययुध्यन्त पाण्डवानां महारथाः । तथा तथा तदस्त्रं वै व्यवर्द्धत जनाधिप । ९२१५
वध्यमानास्तथाऽस्त्रेण तेन नारायणेन वै । दह्यमानानलेनेव सर्व्वतोऽभ्यर्द्दिता रणे ।
यथा हि शिशिरापाये दहेत्कक्षं हुताशनः । तथा तदस्त्रं पाण्डूनां ददाह ध्वजिनीं प्रभो ।
जगाम परमं त्रासं धर्म्मराजो युधिष्ठिरः । आपूर्य्यमाणेनास्त्रेण सैन्ये क्षीयति च प्रभो ।
द्रवमाणन्तु तत्सैन्यं दृष्ट्वा विगतचेतनं । मध्यस्थतां च पार्थस्य धर्म्मपुत्रोऽब्रवीदिदं ।
धृष्टद्युम्न पलायस्व सह पाञ्चालसेनया । सात्यके त्वञ्च गच्छस्व वृष्ण्यन्धकवृतः स्वयं । ९२२०
वासुदेवोऽपि धर्म्मात्मा करिष्यत्यात्मनः क्षमं । उपदेष्टुं समर्थोऽयं लोकस्य किमुतात्मनः ।
संग्रामस्तु न कर्त्तव्यः सर्व्वसैन्यान् ब्रवीमि वः । अहं हि सह सोदर्य्यैः प्रवेक्ष्ये हव्यवाहनं ।
भीष्मद्रोणार्णवं तीर्त्वा संग्रामे भीरुदुस्तरे । निमज्जिष्यामि सलिले सगणो द्रौणिगोष्पदे ।
कामः सम्पद्यतामस्य राज्ञो दुर्य्योधनस्य च । कल्याणवृत्तिराचार्य्यो मया युधि निपातितः ।
येन बालः स सौभद्रो युद्धानामविशारदः । समर्थैर्बहुभिः क्रूरैर्घातितो नाभिपालितः । ९२२५
येन विब्रुवती प्रश्नं तथा कृष्णा सभां गता । उपेक्षिता सपुत्रेण दासभावं नियच्छती ।

हाहाकृतानि भूतानि पाण्डवाश्च विशेषतः । भीमसेनमपश्यन्त तेजसा संवृतं तदा ।

इति श्रीमहाभारते द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि पाण्डवसैन्यास्त्रत्यागे द्विशतोऽध्यायः ॥ २०० ॥

॥ सञ्जय उवाच ॥ भीमसेनं समाकीर्णं दृष्ट्वाऽस्त्रेण धनञ्जयः । तेजसः प्रतिघातार्थं वारुणेन समावृणोत् ।
नालक्षयत तत् कश्चिद्वारुणास्त्रेण संवृतं । अर्ज्जुनस्य लघुत्वाच्च संवृतत्वाच्च तेजसः ।
साश्वसूतरथो भीमो द्रोणपुत्रास्त्रसंवृतः । अग्नावग्निरिव न्यस्तो ज्वालामाली सुदुर्दृशः । ९१९०
यथा रात्रिक्षये राजन् ज्योतींष्यस्तगिरिं प्रति । समापेतुस्तथा वाणा भीमसेनरथं प्रति ।
स हि भीमो रथश्चास्य हयाः सूतश्च मारिष । संवृतो द्रोणपुत्रेण पावकान्तर्गतोऽभवत् ।
यथा दग्ध्वा जगत् कृत्स्नं समये सचराचरं । गच्छेद्वह्निर्विभोरास्यं तथाऽस्त्रं भीममावृणोत् ।
सूर्य्यमग्निप्रविष्टः स्याद्यथा चाग्निं दिवाकरः । तथा प्रविष्टं तत्तेजो न प्राज्ञायत किञ्चन ।
विकीर्णमस्त्रं तद्दृष्ट्वा तथा भीमरथं प्रति । उदीर्य्यमाणं द्रौणिञ्च निष्प्रतिद्वन्द्वमाहवे । ९१९५
सर्व्वसैन्यानि पाण्डूनां न्यस्तशस्त्राण्यचेतसः । युधिष्ठिरपुरोगांश्च विमुखांस्तान्महारथान् ।
अर्ज्जुनो वासुदेवश्च त्वरमाणौ महाद्युती । अवप्लुत्य रथाद्वीरौ भीममाद्रवतां तदा ।
ततस्तौ द्रोणपुत्रस्य तेजोऽस्त्रबलसम्भवं । विगाह्य तौ सुबलिनौ मायामाविशतां तदा ।
न्यस्तशस्त्रौ ततस्तौ तु नादहत् सोऽस्त्रजोऽनलः । वारुणास्त्रप्रयोगाच्च वीर्य्यवत्त्वाच्च कृष्णयोः ।
ततश्चकृषतुर्भीमं तस्य सर्व्वायुधानि च । नारायणास्त्रशान्त्यर्थं नरनारायणौ बलात् । ९२००
आकृष्यमाणः कौन्तेयो नदत्येव महारथः । वर्द्धते चैव तद्घोरं द्रौणेरस्त्रं सुदुर्ज्जयं ।
तमब्रवीद्वासुदेवः किमिदं पाण्डुनन्दन । वार्य्यमाणोऽपि कौन्तेय यद्युद्धान्न निवर्त्तसे ।
यदि युद्धेन जेयाः स्युरिमे कौरवनन्दनाः । वयमप्यत्र युध्येम तथा चेमे नरर्षभाः ।
रथेभ्यस्त्ववतीर्णाः स्मः सर्व्व एव हि तावकाः । तस्मात्त्वमपि कौन्तेय रथात्तूर्णमपाक्रम ।
एवमुक्त्वा ततः कृष्णो रथाद्भूमिमपाहरत् । निःश्वसन्तं यथा नागं क्रोधसंरक्तलोचनं । ९२०५
यदाऽपकृष्टः स रथान्न्यासितश्चायुधं युधि । ततो नारायणास्त्रं तत् प्रशान्तं शत्रुतापनं ।
॥ सञ्जय उवाच ॥ तस्मिन् प्रशान्ते विधिना तथा तेजसि दुःसहे । बभूवुर्व्विमलाः सर्व्वा दिशः प्रदिश एव च ।
प्रववुश्च शिवा वाताः प्रशान्ता मृगपक्षिणः । वाहनानि प्रहृष्टानि योधाश्च मनुजेश्वर ।
व्यपोढे च ततो घोरे तस्मिंस्तेजसि भारत । बभौ भीमो निशापाये धीमान् सूर्य्य इवोदितः ।
हतशेषं बलं तत्र पाण्डवानामतिष्ठत । अस्त्रव्युपरमं दृष्ट्वा तव पुत्रजिघांसया । ९२१०
व्यवस्थिते बले तस्मिन्नस्त्रे प्रतिहते तथा । दुर्य्योधनो महाराज द्रोणपुत्रमथाब्रवीत् ।
अश्वत्थामन् पुनः शीघ्रमस्त्रमेतत् प्रयोजय । व्यवस्थिता हि पाञ्चालाः पुनरेव जयैषिणः ।
अश्वत्थामा तथोक्तस्तु तव पुत्रेण मारिष । सुदीनमभिनिःश्वस्य राजानमिदमब्रवीत् ।
नैतदावर्त्तते राजन्नस्त्रं द्विर्नोपपद्यते । आवृत्ते हि निहन्त्येतत् प्रयोक्तारं न संशयः ।
एष चास्त्रप्रतीघातं वासुदेवः प्रयुक्तवान् । अन्यथा विहितः संख्ये वधः शत्रोर्जनाधिप । ९२१५

पराजयो वा मृत्युर्वा श्रेयो मृत्युर्न निर्जयः। निर्जिताश्चारयो ह्येते शस्त्रोत्सर्गान्मृतोपमाः।
॥ दुर्य्योधन उवाच ॥ आचार्य्यपुत्र यद्येतत् स्थिरत्वं न प्रकुर्व्वते। अस्मैर्गुरुत्वा नयनामस्त्रेरक्षविदाम्बर
त्वयि दिव्यानि चास्त्राणि प्रत्यक्षे चामितौजसि। इच्छतो हि न ते मुच्येत् क्रुद्धस्यापि पुरन्दरः।
॥ धृतराष्ट्र उवाच ॥ तस्मिन्नस्त्रे प्रतिहते द्रोणे चोपाधिना हते। तथा दुर्य्योधनेनोक्तो द्रौणिः किमकरोत्पुनः।
दृष्ट्वा पार्थांश्च संग्रामे युद्धाय समुपस्थितान्। नारायणास्त्रनिर्म्मुक्तांश्चरतः पृतनामुखे। ९२९०
॥ सञ्जय उवाच ॥ जानन् पितुः स निधनं सिंहलाङ्गूलकेतनः। सक्रोधो भयमुत्सृज्य सोऽभिदुद्राव पार्षतं।
अभिद्रुत्य च विंशत्या क्षुद्रकाणां नरर्षभः। पञ्चभिश्चातिवेगेन विव्याध पुरुषर्षभः।
धृष्टद्युम्नस्ततो राजन् ज्वलन्तमिव पावकं। द्रोणपुत्रं चतुःषष्ट्या राजन् विव्याध पत्रिणां।
सारथिञ्चास्य विंशत्या स्वर्णपुङ्खैः शिलाशितैः। हयांश्च चतुरोऽविध्यच्चतुर्भिर्निशितैः शरैः।
विद्धा विद्धा नदन् द्रौणिः कम्पयन्निव मेदिनीं। आददे सर्व्वलोकस्य प्राणानिव महारणे। ९२९५
पार्षतस्तु बली राजन् कृतास्त्रः कृतनिश्चयः। द्रौणिमेवाभिदुद्राव कृत्वा मृत्युं निवर्त्तनं।
ततो बाणमयं वर्षं द्रोणपुत्रस्य मूर्द्धनि। अवासृजदमेयात्मा पाञ्चाल्यो रथिनाम्बरः।
तं द्रौणिः समरे क्रुद्धं छादयामास पत्रिभिः। विव्याध चैनं दशभिः पितुर्व्वधमनुस्मरन्।
द्वाभ्याञ्च सुविसृष्टाभ्यां क्षुराभ्यां ध्वजकार्म्मुके। छित्वा पाञ्चालराजस्य द्रौणिरन्यैः समार्द्दयत्।
व्यश्वसूतरथञ्चैव द्रौणिश्चक्रे महाहवे। तस्य चानुचरान् सर्व्वान् क्रुद्धः प्राच्छादयच्छरैः। ९३००
प्रदुद्राव ततः सैन्यं पाञ्चालानां विशाम्पते। सम्भ्रान्तरूपमार्त्तञ्च शरवर्षपरिक्षतं।
दृष्ट्वा तु विमुखान् योधान् धृष्टद्युम्नञ्च पीडितं। शैनेयोऽचोदयत्तूर्णं रथं द्रौणिरथम्प्रति।
अष्टभिर्निशितैश्चैव सोऽश्वत्थामानमार्द्दयत्। विंशत्या पुनराहत्य नानारूपैरमर्षणं।
विव्याध च तथा सूतं चतुर्भिश्चतुरो हयान्। धनुर्ध्वजञ्च संयत्तश्चिच्छेद कृतहस्तवत्।
स साश्वं व्यधमच्चापि रथं हेमपरिष्कृतं। हृदि विव्याध समरे त्रिंशता सायकैर्भृशं। ९३०५
एवं स पीडितो राजन्नश्वत्थामा महाबलः। शरजालैः परिवृतः कर्त्तव्यं नान्वपद्यत।
एवङ्गते गुरोः पुत्रे तव पुत्रो महारथः। कृपकर्णादिभिः सार्द्धं शरैः सात्वतमावृणोत्।
दुर्य्योधनस्तु विंशत्या कृपः शारद्वतस्त्रिभिः। कृतवर्म्माऽथ दशभिः कर्णः पञ्चाशता शरैः।
दुःशासनः शतेनैव वृषसेनश्च सप्तभिः। सात्यकिं विव्यधुस्तूर्णं समन्तान्निशितैः शरैः।
ततः स सात्यकी राजन् सर्व्वानेव महारथान्। विरथान् विमुखांश्चैव क्षणेनैवाकरोन्नृप। ९३१०
अश्वत्थामा तु सम्प्राप्य चेतनां भरतर्षभ। चिन्तयामास दुःखार्त्तो निःश्वसंश्च पुनः पुनः।
ततो रथान्तरं द्रौणिः समारुह्य परन्तपः। सात्यकिं वारयामास किरञ्छरशतान् बहून्।
तमापतन्तं सम्प्रेक्ष्य भारद्वाजसुतं रणे। विरथं विमुखञ्चैव पुनश्चक्रे महारथः।
ततस्ते पाण्डवा राजन् दृष्ट्वा सात्यकिविक्रमं। शङ्खशब्दान् भृशञ्चक्रुः सिंहनादांश्च नेदिरे।
एवं तं विरथं कृत्वा सात्यकिः सत्यविक्रमः। जघान वृषसेनस्य त्रिसाहस्रान्महारथान्। ९३१५

अयुतं दन्तिनां चाष्टौ जघान निजघान सः। पञ्चायुतानि चाश्वानां शकुनेर्निजघान च।
ततो द्रौणिर्महाराज रथमास्थाय वीर्य्यवान्। सात्यकिम्प्रति संक्रुद्धः प्रययौ तद्वधेप्सया।
पुनस्तमागतं दृष्ट्वा शैनेयो निशितैः शरैः। अदारयत् क्रूरतरैः पुनः पुनररिन्दमः।
सोऽतिविद्धो महेष्वासो नानालिङ्गैरमर्षणः। युयुधानेन वै द्रौणिः प्रहसन् वाक्यमब्रवीत्।
शैनेयाभ्युपपत्तिं ते जानाम्याचार्य्यघातिनि। न चैनं त्रास्यसि मया ग्रस्तमात्मानमेव च। ९११०
शपे तवाहं शैनेय सत्येन तपसा तथा। अहत्वा सर्व्वपाञ्चालान् यदि शान्तिमवाप्नुयां।
यद्बलं पाण्डवेयानां वृष्णीनामपि यद्बलं। क्रियतां सर्व्वमेवेह निहनिष्यामि सोमकान्।
एवमुक्त्वाऽर्करश्म्याभं सुपर्व्वाणं शरोत्तमं। व्यसृजत् सात्वते द्रौणिर्वज्रं वृत्रे यथा हरिः।
स तं निर्भिद्य तेनास्तः सायकः सशरावरं। विवेश वसुधां भित्त्वा श्वसन् विलमिवोरगः।
स भिन्नकवचः शूरस्तोत्त्रार्द्दित इव द्विपः। विमुच्य सशरं चापं भूरिव्रणपरिस्रवः। ९११५
सीदन् रुधिरसिक्तश्च रथोपस्थ उपाविशत्। सूतेनापहृतस्तूर्णं द्रोणपुत्राद्रथान्तरं।
अथान्येन सुपुङ्खेन शरेणानतपर्व्वणा। आजघान भ्रुवोर्मध्ये धृष्टद्युम्नं परन्तपः।
स पूर्व्वमतिविद्धश्च भृशं पश्चात् समर्द्दितः। ससाद युधि पाञ्चाल्यो व्यपाश्रयत च ध्वजं।
तं मत्तमिव सिंहेन राजन् कुञ्जरमर्द्दितं। जवेनाभ्यद्रवन् शूराः पञ्च पाण्डवतो रथाः।
किरीटी भीमसेनश्च वृद्धक्षत्रश्च पौरवः। युवराजश्च चेदीनां मालवश्च सुदर्शनः। ९१२०
एते हाहाकृताः सर्व्वे प्रगृहीतशरासनाः। वीरं द्रौणायनिं वीराः सर्व्वतः पर्य्यवारयन्।
ते विंशतिपदे यत्ता गुरुपुत्रममर्षणं। पञ्चभिः पञ्चभिर्बाणैरभ्यघ्नन् सर्व्वतः समं।
आशीविषाभैर्विंशद्भिः पञ्चभिश्च शितैः शरैः। चिच्छेद युगपद्द्रौणिः पञ्चविंशतिसायकान्।
सप्तभिश्च शितैर्बाणैः पौरवं द्रौणिरार्द्दयत्। मालवं त्रिभिरेकेन पार्थं षड्भिर्वृकोदरं।
ततस्ते विव्यधुः सर्व्वे द्रौणिं राजन् महारथाः। युगपच्च पृथक् चैव रुक्मपुङ्खैः शिलाशितैः। ९१२५
युवराजश्च विंशत्या द्रौणिं विव्याध पत्रिणां। पार्थश्च पुनरष्टाभिस्तथा सर्व्वे त्रिभिस्त्रिभिः।

ततोऽर्ज्जुनं षड्भिरथाजघान द्रौणायनिर्दशभिर्व्वासुदेवं। भीमं दशार्द्धैर्युवराजं चतुर्भिर्द्वाभ्यां द्वाभ्यां मालवं पौरवञ्च।
सूतं विद्ध्वा भीमसेनस्य षड्भिर्द्वाभ्यां छित्त्वा कार्म्मुकञ्च ध्वजञ्च। पुनः पार्थं शरवर्षेण विद्ध्वा द्रौणिर्घोरं सिंहनादं ननाद।
तस्यास्तः सुनिशितान् पीतधारान् द्रौणेः शरान् पृष्ठतश्चाग्रतश्च। धरा वियत् द्यौः प्रदिशो दिशश्च छन्ना बाणैरभवन् घोररूपैः।
आसन्नस्य स्वरथमुग्रतेजाः सुदर्शनस्येन्द्रकेतुप्रकाशौ। भुजौ शिरश्चेन्द्रसमानवीर्य्यस्त्रिभिः शरैर्युगपत् सञ्चकर्त्त। ९१३०
स पौरवं रथशक्त्याऽभिहत्य छित्त्वा रथं तिलशश्चापि बाणैः। छित्त्वा च बाहू वरचन्दनाक्तौ भल्लेन कायाच्छिर उच्चकर्त्त।
युवानमिन्दीवरदामवर्णं चेदिप्रभुं युवराजं प्रसह्य। बाणैर्ज्वलिताग्निकल्पैर्विद्ध्वा प्रादान्मृत्यवे साश्वसूतं।
मालवं पौरवञ्चैव युवराजञ्च चेदिपं। दृष्ट्वा समक्षं निहतं द्रोणपुत्रेण पाण्डवः।

भीमसेनो महाबाहुः क्रोधमाहारयत् परं । ततः शरशतैस्तीक्ष्णैः स क्रुद्धाशीविषोपमैः ।
छादयामास समरे द्रोणपुत्रं परन्तपः । ततो द्रौणिर्महातेजाः शरवर्षं निहत्य तं । ९१४५
विव्याध निशितैर्बाणैर्भीमसेनममर्षणः । ततो भीमो महाबाहुर्द्रौणेर्युधि महाबलः ।
क्षुरप्रेण धनुश्छित्वा द्रौणिं विव्याध पत्रिणा । तदपास्य धनुश्छिन्नं द्रोणपुत्रो महामनाः ।
अन्यत्कार्मुकमादाय भीमं विव्याध पत्रिभिः । तौ द्रौणिभीमौ समरे पराक्रान्तौ महाबलौ ।
अवर्षतां शरवर्षं वृष्टिमन्ताविवाम्बुदौ । भीमनामाङ्किता बाणाः स्वर्णपुङ्खाः शिलाशिताः ।
द्रौणिं सञ्छादयामासुर्घनौघा इव भास्करं । तथैव द्रौणिनिर्मुक्तैर्भीमः सन्नतपर्वभिः । ९१५०
अवाकीर्य्यत स क्षिप्रं शरैः शतसहस्रशः । सञ्छाद्यमानः समरे द्रौणिना रणशालिना ।
न विव्यथे महाराज तदद्भुतमिवाऽभवत् । ततो भीमो महाबाहुः कार्त्तस्वरविभूषितान् ।
नाराचान् दश सम्प्रैषीद्यमदण्डनिभान् शितान् । ते जत्रुदेशमासाद्य द्रोणपुत्रस्य मारिष ।
निर्भिद्य विविशुस्तूर्णं वल्मीकमिव पन्नगाः । सोऽतिविद्धो भृशं द्रौणिः पाण्डवेन महात्मना ।
ध्वजयष्टिं समाश्रित्य न्यमीलयत लोचने । स मुहूर्त्तात् पुनः संज्ञां लब्ध्वा द्रौणिर्नराधिप । ९१५५
क्रोधं परममातस्थौ समरे रुधिरोक्षितः । दृढं सोऽभिहतस्तेन पाण्डवेन महात्मना ।
वेगञ्चक्रे महाबाहुर्भीमसेनरथम्प्रति । तत आकर्णपूर्णानां शराणां तिग्मतेजसां ।
शतमाशीविषाभानां प्रेषयामास भारत । भीमोऽपि समरश्लाघी तस्य वीर्य्यमचिन्तयन् ।
तूर्णं प्रासृजदुग्राणि शरवर्षाणि पाण्डवः । ततो द्रौणिर्महाराज छित्त्वाऽस्य विशिखैर्धनुः ।
आजघानोरसि क्रुद्धः पाण्डवं निशितैः शरैः । ततोऽन्यद्धनुरादाय भीमसेनोऽत्यमर्षणः । ९१६०
विव्याध निशितैर्बाणैर्द्रौणिं पञ्चभिराहवे । जीमूताविव घर्मान्ते तौ शरौघप्रवर्षिणौ ।
अन्योन्यक्रोधताम्राक्षौ छादयामासतुर्युधि । तलशब्दैस्ततो घोरैस्त्रासयन्तौ परस्परं ।
अयुध्येतां सुसंरब्धौ कृतप्रतिकृतैषिणौ । ततो विस्फार्य्य सुमहच्चापं रुक्मविभूषितं ।
भीमम्प्रेक्षत स द्रौणिः शरानस्यन्तमन्तिकात् । शरदर्मध्यमगतो दीप्तार्चिरिव भास्करः ।
आददानस्य विशिखान् सन्दधानस्य चाशुगान् । विकर्षतो मुञ्चतश्च नान्तरं ददृशुर्जनाः । ९१६५
अलातचक्रप्रतिमं तस्य मण्डलमायुधं । द्रौणेरासीन्महाराज बाणान् विसृजतस्तदा ।
धनुश्च्युताः शरास्तस्य शतशोऽथ सहस्रशः । आकाशे प्रत्यदृश्यन्त शलभानामिवायतीः ।
ते तु द्रौणिधनुर्मुक्ताः शरा हेमविभूषिताः । अजस्रमन्वकीर्य्यन्त घोरा भीमरथम्प्रति ।
तत्राद्भुतमपश्याम भीमसेनस्य विक्रमं । बलं वीर्य्यं प्रभावञ्च व्यवसायञ्च भारत ।
तां समेघामिवोद्भूतां बाणवृष्टिं समन्ततः । जलवृष्टिं महाघोरां तपान्त इव चिन्तयन् । ९१७०
द्रोणपुत्रवधप्रेप्सुर्भीमो भीमपराक्रमः । अमुञ्चच्छरवर्षाणि प्रावृषीव बलाहकः ।
तद्रुक्मपृष्ठं भीमस्य धनुर्घोरं महद्रणे । विकृष्यमाणं विबभौ शक्रचापमिवापरं ।
तस्माच्छराः प्रादुरासन् शतशोऽथ सहस्रशः । सञ्छादयन्तः समरे द्रौणिमाहवशोभिनं ।

तयोर्व्विसृजतोरेवं शरजालानि मारिष । वायुरप्यन्तरा राजन्नाशक्नोत् विसर्पितुं ।
तथा द्रौणिर्महाराज शरान् हेमविभूषितान् । तैलधौतान् प्रसन्नाग्रान् प्राहिणोद्वधकाङ्क्षया । ९१७५
तानन्तरीक्षे विशिखैस्त्रिधैकैकमशातयत् । विशेषयन् द्रोणसुतं तिष्ठ तिष्ठेति चाब्रवीत् ।
पुनश्च शरवर्षाणि घोराण्युग्राणि पाण्डवः । व्यसृजद्बलवान् क्रुद्धो द्रोणपुत्रवधेप्सया ।
ततोऽस्त्रमायया तूर्णं शरवृष्टिं निवार्य्य तां । धनुश्चिच्छेद भीमस्य द्रोणपुत्रो महास्त्रवित् ।
शरैश्चैनं सुबहुभिः क्रुद्धः सङ्ख्ये पराभिनत् । स च्छिन्नधन्वा बलवान् रथशक्तिं सुदारुणं ।
वेगेनाविध्य चिक्षेप द्रोणपुत्ररथम्प्रति । तामापतन्तीं सहसा महोल्काभां शितैः शरैः । ९१८०
चिच्छेद समरे द्रौणिर्द्दर्शयन् पाणिलाघवं । एतस्मिन्नन्तरे भीमो दृढमादाय कार्म्मुकं ।
द्रौणिं विव्याध विशिखैः स्मयमानो वृकोदरः । ततो द्रौणिर्महाराज भीमसेनस्य सारथिं ।
ललाटे दारयामास शरेणानतपर्व्वणा । सोऽतिविद्धो बलवता द्रोणपुत्रेण सारथिः ।
व्यामोहमगमद्राजन् रश्मीनुत्सृज्य वाजिनां । ततोऽश्वाः प्राद्रवंस्तूर्णं मोहिते रथसारथौ ।
भीमसेनस्य राजेन्द्र पश्यतां सर्व्वधन्विनां । तं दृष्ट्वा प्रद्रुतैरश्वैरपकृष्टं रणाजिरात् । ९१८५
दध्मौ प्रमुदितः शङ्खं बृहन्तमपराजितः । ततः सर्व्वे च पाञ्चाला भीमसेनश्च पाण्डवः ।
धृष्टद्युम्नरथं त्यक्त्वा भीताः सम्प्राद्रवन् दिशः । तान् प्रभग्नांस्ततो द्रौणिः पृष्ठतो विकिरन् शरैः ।
अभ्यवर्त्तत वेगेन कालयन् पाण्डुवाहिनीं । ते वध्यमानाः समरे द्रोणपुत्रेण क्षत्रियाः ।
द्रोणपुत्रभयाद्राजन् दिशः सर्व्वाश्च भेजिरे ।

॥ इति श्रीमहाभारते द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि अश्वत्थामपराक्रमे एकाधिकद्विशततोऽध्यायः ॥ २०१ ॥

॥ सञ्जय उवाच ॥ तत् प्रभग्नं बलं दृष्ट्वा कुन्तीपुत्रो धनञ्जयः । न्यवारयदमेयात्मा द्रोणपुत्रवधेप्सया । ९१९०
ततस्ते सैनिका राजन्नैव तत्रावतस्थिरे । संवार्य्यमाणा यत्नेन गोविन्देनार्जुनेन वै ।
एक एव तु बीभत्सुः सोमकावयवैः सह । मत्स्यैरन्यैश्च सन्धाय पौरवैः स न्यवर्त्तत ।
ततो द्रुतमतिक्रम्य सिंहलाङ्गूलकेतनं । सव्यसाची महेष्वासमश्वत्थामानमब्रवीत् ।
या शक्तिर्यच्च ते वीर्य्यं यज्ज्ञानं यच्च पौरुषं । धार्त्तराष्ट्रेषु या प्रीतिः प्रद्वेषो ऽस्मासु यश्च ते ।
यच्च भूयोऽस्ति तेजस्तत्परमं मम दर्शय स एव द्रोणहन्ता ते दर्पं भेत्स्यति पार्षतः । ९१९५
कालानलसमप्रख्यं द्विषतामन्तकोपमं । समासादय पाञ्चाल्यं माञ्चापि सहकेशवं ।
दर्पं नाशयिताद्यस्य तवोद्धृतस्य संयुगे ।
॥ धृतराष्ट्र उवाच ॥ आचार्य्यपुत्रो मान्यार्हो बलवांश्चापि सञ्जय । प्रीतिर्धनञ्जये चास्य प्रियश्चापि महात्मनः ।
न भूतपूर्व्वं बीभत्सोर्व्वाक्यं परममीदृशं । अथ कस्मात् स कौन्तेयः सखायं रूक्षमब्रवीत् ।
॥ सञ्जय उवाच ॥ युवराजे हते राजन् वृद्धक्षत्रे च पौरवे । इष्वस्त्रविधिसम्पन्ने मालवे च सुदर्शने । ९२००
धृष्टद्युम्ने सात्यकौ च भीमे चापि पराजिते । युधिष्ठिरस्य तैर्व्वाक्यैर्मर्म्मण्यपि च घट्टिते ।
अन्तर्भेदे च संजाते दुःखं संस्मृत्य च प्रभो । अभूतपूर्व्वो बीभत्सोर्दुःखान्मन्युरजायत ।

तस्मादहमहं वीरमप्रियं द्रौणिमब्रवीत्। मान्यमाचार्य्यतनयं कृथं कापुरुषो यथा।
एवमुक्तश्च क्रोधात्मा द्रौण्यायत्तमो नृप। पार्थेन परुषं वाक्यं सर्व्वमर्म्मघ्नया गिरा।
द्रौणिश्चुकोप पार्थाय कृष्णाय च विशेषतः। स तु यत्तो रथे स्थित्वा वार्य्युपस्पृश्य वीर्य्यवान्। ९२५
देवैरपि सुदुर्द्धर्षमस्त्रमाग्नेयमाददे। दृश्यादृश्यानरिगणानुद्दिश्याचार्य्यनन्दनः।
सोऽभिमन्त्र्य शरं दीप्तं विधूममिव पावकं। सर्व्वतः क्रोधमाविश्य चिक्षेप परवीरहा।
ततस्तुमुलमाकाशे शरवर्षमजायत। पावकार्च्चिःपरीतं तत् पार्थमेवाभिपुप्लुवे।
उल्काश्च गगनात् पेतुर्दिशश्च न चकाशिरे। तमश्च सहसा रौद्रं चमूमवततार तां।
रक्षांसि च पिशाचाश्च विनेदुरभिसङ्गताः। ववुश्चाप्यशिवा वाताः सूर्य्यो नैव तताप च। ९३०
चुक्रुशुर्व्वायसाश्चापि दिक्षु सर्व्वासु भैरवं। रुधिरञ्चाभिवर्षन्तो विनेदुस्तोयदा दिवि।
पक्षिणः पशवो गावो मुनयश्चापि सुव्रताः। परमं प्रयतात्मानो न शान्तिमुपलेभिरे।
भ्रान्तसर्व्वमहाभूतमावर्त्तितदिवाकरं। त्रैलोक्यमभिसन्तप्तं ज्वराविष्टमिवाऽभवत्।
शरतेजोभिसन्तप्ता नागा भूमिशयास्तथा। निःश्वसन्तः समुत्पेतुस्तेजो घोरं मुमुक्षवः।
जलजानि च सत्वानि दह्यमानानि भारत। न शान्तिमुपजग्मुर्हि तप्यमानैर्जलाशयैः। ९३५
दिग्भ्यः प्रदिग्भ्यः खाद्भूमेः सर्व्वतः शरवृष्टयः। उच्चावचानि पेतुर्व्वै गरुडानिलरंहसः।
तैः शरैर्द्रोणपुत्रस्य वज्रवेगैः समाहताः। प्रदग्धाः शत्रवः पेतुरग्निदग्धा इव द्रुमाः।
दह्यमाना महानागाः पेतुरुर्व्व्यां समन्ततः। नदन्तो भैरवान्नादान् जलदोपमनिस्वनान्।
अपरे प्रद्रुतास्तत्र दह्यमाना महागजाः। त्रेसुस्तथा यथा घोरा वने दावाग्निसंवृताः।
द्रुमाणां शिखराणीव दावदग्धानि मारिष। अश्ववृन्दान्यदृश्यन्त रथवृन्दानि वा विभो। ९४०
अपतन्त रथौघाश्च तत्र तत्र सहस्रशः। तत्सैन्यं भगवानग्निर्ददाह युधि भारत।
युगान्ते सर्व्वभूतानि संवर्त्तक इवानलः। दृष्ट्वा तु पाण्डवीं सेनां दह्यमानां महाहवे।
प्रहृष्टास्तावका राजन् सिंहनादान् विनेदिरे। ततस्तूर्य्यसहस्राणि नानालिङ्गानि भारत।
तूर्णमाजघ्निरे हृष्टास्तावका जितकाशिनः। कृत्स्ना ह्यक्षौहिणी राजन् सव्यसाची च पाण्डवः।
तमसा संवृते लोके नादृश्यन्त महाहवे। नैव नस्तादृशं राजन् दृष्टपूर्व्वं न च श्रुतं। ९४५
यादृशं द्रोणपुत्रेण सृष्टमस्त्रममर्षिणा। अर्ज्जुनस्तु महाराज ब्राह्ममस्त्रमुदैरयत्।
सर्व्वास्त्रप्रतिघाताय विहितं पद्मयोनिना। ततो मुहूर्त्तादिव तत्तमो व्युपशशाम ह।
प्रववौ चानिलः शीतो दिशश्च विमला बभुः। तत्राद्भुतमपश्याम कृत्स्नामक्षौहिणीं हतां।
अनभिज्ञेयरूपाश्च प्रदग्धामस्त्रतेजसा। ततो वीरौ महेष्वासौ विमुक्तौ केशवार्ज्जुनौ।
सहितौ समदृश्येतां नभसीव तमोनुदौ। ततो गाण्डीवधन्वा च केशवश्चाक्षतावुभौ। ९५०
सपताकध्वजहयः सानुकर्षवरायुधः। प्रबभौ स रथो मुक्तस्तावकानां भयङ्करः।
ततः किलकिलाशब्दः शङ्खभेरीस्वनैः सह। पाण्डवानां प्रहृष्टानां क्षणेन समजायत।

हताविति तयोरासीत् सेनयोरुभयोर्मतिः। तरसाऽभ्यागतौ दृष्ट्वा विमुक्तौ केशवार्ज्जुनौ।
तावकास्तौ प्रमुदितौ दध्मतुर्व्वारिजोत्तमौ। दृष्ट्वा प्रमुदितान् पार्थांस्त्वदीया व्यथिता भृशं।
विमुक्तौ च महात्मानौ दृष्ट्वा द्रौणिः सुदुःखितः। मुहूर्त्तं चिन्तयामास किन्त्वेतदिति मारिष। ९३२५
चिन्तयित्वा तु राजेन्द्र ध्यानशोकपरायणः। निःश्वसन् दीर्घमुष्णञ्च विमनाश्चाभवत्ततः।
ततो द्रौणिर्धनुर्न्यस्य रथात् प्रस्कन्द्य वेगितः। धिग्धिक् सर्व्वमिदं मिथ्येत्युक्त्वा सम्प्राद्रवद्रणात्।
ततः स्निग्धाम्बुदाभासं वेदव्यासमकल्मषं। वेदव्यासं सरस्वत्यावासं व्यासं ददर्श ह।
तं द्रौणिरग्रतो दृष्ट्वा स्थितं कुरुकुलोद्वह। सन्नकण्ठोऽब्रवीद्वाक्यमभिवाद्य च दीनवत्।
भो भो माया यदृच्छा वा न विद्मः किमिदम्भवेत्। अस्त्रन्त्विदं कथं मिथ्या मम कश्च व्यतिक्रमः। ९३३०
अधरोत्तरमेतद्वा लोकानाञ्च पराभवः। यदिमौ जीवतः कृष्णौ कालो हि दुरतिक्रमः।
नासुरा न च गन्धर्व्वा न पिशाचा न राक्षसाः। न सर्पयक्षपतगा न मनुष्याः कथञ्चन।
उत्सहन्ते वृथा कर्त्तुमेतदस्त्रं मयेरितं। तदिदं केवलं हत्वा शान्तमक्षौहिणीं ज्वलत्।
सर्व्वघाति मया मुक्तमस्त्रं परमदारुणं। केन मानुषधर्म्माणौ नावधीत् केशवार्ज्जुनौ।
एतन्मे ब्रूहि भगवन् मया पृष्टो यथातथं। श्रोतुमिच्छामि तत्त्वेन सर्व्वमेतन्महामुने। ९३३५
॥ व्यास उवाच ॥ महान्तमेवमर्थं मां यत्त्वं पृच्छसि विस्मयात्। तम्प्रवक्ष्यामि ते सर्व्वं समाधाय मनः शृणु।
योऽसौ नारायणो नाम पूर्व्वेषामपि पूर्व्वजः। अजायत च कार्य्यार्थं पुत्त्रो धर्म्मस्य विश्वकृत्।
स तपस्तीव्रमातस्थे शिशिरं गिरिमाश्रितः। ऊर्द्ध्वबाहुर्महातेजा ज्वलनादित्यसन्निभः।
षष्टिं वर्षसहस्राणि तावन्त्येव शतानि च। अशोषयत्तदात्मानं वायुभक्षोऽम्बुजेक्षणः।
तथा परं तपस्तप्त्वा द्विस्ततोऽन्यत् पुनर्महत्। द्यावापृथिव्योर्व्विवरं तेजसा समपूरयत्। ९३४०
स तेन तपसा तात ब्रह्मभूतो यदाऽभवत्। ततो विश्वेश्वरं योनिं विश्वस्य जगतः पतिं।
ददर्श भृशदुर्द्दर्शं सर्व्वदेवेशमीश्वरं। अणीयसामणुभ्यश्च बृहद्भ्यश्च महत्तरं।
रुद्रमीशानमृषभं हरं शम्भुं कपर्द्दिनं। चेकितानं परं योनिं तिष्ठतो गच्छतश्च ह।
दुर्व्वारणं दुर्द्दृशं तिग्ममन्युं महात्मानं सर्व्वहरं प्रचेतसं। दिव्यञ्चापमिषुधी चाददानं हिरण्यवर्म्माणमनन्तवीर्य्यं।
पिनाकिनं वज्रिणं दीप्तशूलं परश्वधिनं गदिनं स्वायतासिं। शुभ्रं जटिलं मुषलिनं शूलपाणिं व्याघ्राजिनं परिदधानं
दण्डपाणिं। ९३४५
शुभाङ्गदं नागयज्ञोपवीतं विश्वैर्गणैः शोभितं भूतसङ्घैः। एकीभूतं तपसा सन्निधानं वयोतिगैः सुष्टु तमिष्टवाग्भिः।
जलं दिशं खं क्षितिं सूर्य्यचन्द्रौ तथा वाय्वग्नी प्रतिमानं जगच्च। नालं द्रष्टुं यमजं भिन्नवृत्ता ब्रह्मद्विषघ्नममृतस्य योनिं।
यं पश्यन्ति ब्राह्मणाः साधुवृत्ताः क्षीणे पापे मनसा यं विशोकाः। तं निष्ठपन्तं तपसा धर्म्ममीड्यं तद्भक्त्या वै विश्व
रूपं ददर्श।
दृष्ट्वा चैनं वाङ्मनोबुद्धिदेहैः संहृष्टात्मा मुमुदे वासुदेवः।
अक्षमालापरिक्षिप्तं ज्योतिषां परमं निधिं। ततो नारायणो देवं ववन्दे विश्वतोभवं। ९३५०

वरदं पृथुचार्व्वङ्ग्या पार्व्वत्या सहितं प्रभुं । क्रीडमानं महात्मानं भूतसङ्घगणैर्वृतं ।
अजमीशानमव्यक्तं कारणात्मानमच्युतं । अभिवाद्याथ रुद्राय सद्यो ऽन्धकनिपातिने ।
पद्माक्षस्तं विरूपाक्षमभितुष्टाव भक्तिमान् ।

॥ नारायण उवाच ॥ त्वत्सम्भूता भूतकृतो वरेण्य गोप्तारो ऽस्य भुवनस्यादिदेव । आविश्येमां धरणीं ये ऽभ्यरक्षन् पुरा पुराणीं तव देव सृष्टिं ।

सुरासुरान्नागरक्षःपिशाचान्नरान् सुपर्णानथ गन्धर्व्वयक्षान् । पृथग्विधान् भूतसङ्घांश्च विश्वांस्त्वत्सम्भूतान् विद्म सर्व्वांस्तथैव । ९४६१

ऐन्द्रं याम्यं वारुणं वैत्तपाल्यं पैत्रं त्वाष्ट्रं कर्म्म सौम्यञ्च तुभ्यं । रूपं ज्योतिः शब्द आकाशवायुः स्पर्शं स्वाद्यं सलिलं गन्ध उर्व्वी ।

कालो ब्रह्मा ब्रह्म च ब्राह्मणाश्च त्वत्सम्भूतं स्थास्नु चरिष्णु चेदं । अद्भ्यस्तोका यान्ति यथा पृथक्त्वं ताभिश्चैक्यं सङ्क्षये यान्ति भूयः ।

एवं विद्वान् प्रभवञ्चाप्ययञ्च मत्वा भूतानां तव सायुज्यमेति । दिव्यावृत्तौ मानसौ द्वौ सुपर्णौ वाचा शाखाः पिप्पलाः सप्त गोपाः ।

दश चाप्यन्ये ये पुरं धारयन्ति त्वया सृष्टास्त्वं हि तेभ्यः परश्च । भूतं भव्यं भविता चाप्रधृष्यं त्वत्सम्भूता भुवनानीह विश्वा ।
भक्तञ्च मां भजमानं भजस्व मारीरिषो मामहिताहितेन । आत्मानं त्वामात्मनानन्यबोधं विद्वानेवं गच्छति ब्रह्म शुक्रं ।
अशोचं त्वां तव सम्मानमिच्छन् विचिन्वन् वै सदृशं देववर्य्य । सुदुर्लभान् देहि वरान् ममेष्टानभिष्टुतः प्रविकार्षीश्च मायां । ९४७०

॥ व्यास उवाच ॥ तस्मै वरानचिन्त्यात्मा नीलकण्ठः पिनाकधृक् । अर्हते वासुदेवाय प्रायच्छदृषिसंस्तुतः ।
॥ श्रीभगवानुवाच ॥ मत्प्रसादान्मनुष्येषु देवगन्धर्व्वयोनिषु । अप्रमेयबलात्मा त्वं नारायण भविष्यसि ।
न च त्वां प्रसहिष्यन्ति देवासुरमहोरगाः । न पिशाचा न गन्धर्व्वा न नरा न च राक्षसाः ।
न सुपर्णास्तथा नागा न च विश्वे वियोनिजाः । न कश्चित्त्वाञ्च देवोऽपि समरेषु विजेष्यति । ४९५
न शस्त्रेण न वज्रेण नाग्निना न च वायुना । नचार्द्रेण न शुष्केण त्रसेन स्थावरेण च ।
कश्चित्तव रुजं कर्त्ता मत्प्रसादात् कथञ्चन । अपि चेत् समरं गत्वा भविष्यसि ममाधिकः ।
एवमेते पुरा लब्धा वरास्ते विद्धि शौरिणा । स एष देवश्चरति मायया मोहयन् जगत् ।
तस्यैव तपसो जातं नरं नाम महामुनिं । तुल्यमेतेन देवेन त्वं जानीह्यर्ज्जुनं सदा ।
तावेतौ पूर्व्वदेवानां परमौ पठितावृषी । लोकयात्राविधानार्थं सञ्जायेते युगे युगे । ९४८०
तथैव कर्म्मणा त्वञ्च महतस्तपसोऽपि च । तेजोमन्युश्च विश्वस्त्वं जातो रौद्रो महामुने ।
स भवान् देववत् प्राज्ञो ज्ञात्वा भवमयं जगत् । अवाकर्षस्त्वमात्मानं नियमैस्तत् प्रियेप्सया ।
शुभ्रं मन्त्रं हरिः कृत्वा महापुरुषविग्रहं । ईजिवांस्त्वं जपैर्होमैरुपहारैश्च मानद ।
स तथा पूज्यमानस्ते पूर्व्वदेवोऽप्यतूतुषत् । पुष्कलांश्च वरान् प्रादात्तव विद्वन् हृदि स्थितान् ।

अव्यक्तकर्म्मतपोयोगास्तयोस्तव च पुष्कलाः । ताभ्यां लिङ्गेऽर्च्चितो देवस्त्वयार्च्चायां युगे युगे । ९४८५
स एष रुद्रभक्तश्च केशवो रुद्रसम्भवः । सर्व्वरूपं भवं ज्ञात्वा लिङ्गमर्च्चयति प्रभुं ।
आत्मयोगाश्च तस्मिन् वै शास्त्रयोगाश्च शाश्वताः । एवमेवाचयन् देवाः सिद्धाश्च परमर्षयः ।
प्रार्थयन्ति परं लोके स्थाणुमेकं स सर्व्वकृत् । कृष्ण एव हि यष्टव्यो यज्ञैश्चैव सनातनः ।
सर्व्वभूतभवं ज्ञात्वा लिङ्गमर्च्चति यः प्रभुः । तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ।
॥ सञ्जयउवाच ॥ तस्य तद्वचनं श्रुत्वा द्रोणपुत्रो महारथः । नमश्चकार रुद्राय बहु मेने च केशवं । ९४९०
हृष्टरोमा च वश्यात्मा नमस्कृत्य महर्षये । वरूथिनीमभिप्रेक्ष्य ह्यवहारमकारयत् ।
ततः प्रत्यवहारोऽभूत् पाण्डवानां विशाम्पते । कौरवाणाञ्च दीनानां द्रोणे युधि निपातिते ।
युद्धं कृत्वा दिनान् पञ्च द्रोणो हत्वा वरूथिनीं । ब्रह्मलोके गतो राजन् ब्राह्मणो वेदपारगः ।
इति श्रीमहाभारते द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि व्यासवाक्ये द्व्यधिकद्विशततोऽध्यायः ॥ २०२ ॥
॥ धृतराष्ट्र उवाच ॥ तस्मिन्नतिरथे द्रोणे निहते पार्षतेन वै । मामकाः पाण्डवाश्चैव किमकुर्व्वंस्ततः परं ।
॥ सञ्जय उवाच ॥ तस्मिन्नतिरथे द्रोणे निहते पार्षतेन वै । कौरवेषु च भग्नेषु कुन्तीपुत्रो धनञ्जयः । ९४९५
दृष्ट्वा सुमहदाश्चर्य्यमात्मनो विजयावहं । यदृच्छया गतं व्यासं पप्रच्छ भरतर्षभ ।
॥ अर्जुन उवाच ॥ संग्रामे न्यहनं शत्रून् शरौघैर्व्विमलैरहं । अग्रतो लक्षये यान्तं पुरुषं पावकप्रभं ।
ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते । तस्यां दिशि विशीर्य्यन्ते शत्रवो मे महामुने ।
तेन भग्नानरीन् सर्व्वान्मद्भग्नान्मन्यते जनः । तेन भग्नानि सैन्यानि पृष्ठतोऽनु दहाम्यहं ।
भगवंस्तन्ममाचक्ष्व को वै स पुरुषोत्तमः । शूलपाणिर्म्मया दृष्टस्तेजसा सूर्य्यसन्निभः । ९५००
न पद्भ्यां स्पृशते भूमिं न च शूलं विमुञ्चति । शूलाच्छूलसहस्राणि निष्पेतुस्तस्य तेजसा ।
॥ व्यास उवाच ॥ प्रजापतीनां प्रथमं तेजसं पुरुषं प्रभुं । भुवनं भूर्भुवं देवं सर्व्वलोकेश्वरं प्रभुं ।
ईशानं वरदं पार्थ दृष्टवानसि शङ्करं । तं गच्छ शरणं देवं वरदं भुवनेश्वरं ।
महादेवं महात्मानमीशानं जटिलं शिवं । त्र्यक्षं महाभुजं रुद्रं शिखिनं चीरवाससं ।
महादेवं हरं स्थाणुं वरदं भुवनेश्वरं । जगत्प्रधानमधिकं जगत्प्रीतिमधीश्वरं । ९५०५
जगद्योनिं जगद्द्वीपं जयिनं जगतो गतिं । विश्वात्मानं विश्वसृजं विश्वमूर्त्तिं यशस्विनं ।
विश्वेश्वरं विश्वनरं कर्म्मणामीश्वरं प्रभुं । शम्भुं स्वयम्भुं भूतेशं भूतभव्यभवोद्भवं ।
योगं योगेश्वरं सर्व्वं सर्व्वलोकेश्वरेश्वरं । सर्व्वश्रेष्ठं जगच्छ्रेष्ठं वरिष्ठं परमेष्ठिनं ।
लोकत्रयविधातारमेकं लोकत्रयाश्रयं । सुदुर्जयं जगन्नाथं जन्ममृत्युजरातिगं ।
ज्ञानात्मानं ज्ञानगम्यं ज्ञानश्रेष्ठं सुदुर्व्विदं । दातारञ्चैव भक्तानां प्रसादविहितान् वरान् । ९५१०
तस्य पारिषदा दिव्या रूपैर्नानाविधैर्व्विभोः । वामना जटिला मुण्डा ह्रस्वग्रीवा महोदराः ।
महाकाया महोत्साहा महाकर्णास्तथापरे । आननैर्व्विकृतैः पादैः पार्थ वेशैश्च वैकृतैः ।
ईदृशैः स महादेवः पूज्यमानो महेश्वरः । स शिवस्तात तेजस्वी प्रसादाद्याति तेऽग्रतः ।

तस्मिन् घोरे सदा पार्थ सङ्ग्रामे लोमहर्षणे । द्रोणिकर्णकृपैर्गुप्तां महेष्वासैः प्रहारिभिः ।
कस्तां सेनां तदा पार्थ मनसाऽपि प्रधर्षयेत् । ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात् । ९५१५
स्थातुमुत्सहते कश्चिन्न तस्मिन्नग्रतः स्थिते । नहि भूतं समन्तेन त्रिषु लोकेषु विद्यते ।
गन्धेनापि हि सङ्ग्रामे तस्य क्रुद्धस्य शत्रवः । विसंज्ञा हतभूयिष्ठा वेपन्ति च पतन्ति च ।
तस्मै नमस्तु कुर्व्वन्तो देवास्तिष्ठन्ति वै दिवि । ये चान्ये मानवा लोके ये च स्वर्गजितो नराः ।
ये भक्ता वरदं देवं शिवं रुद्रमुमापतिं । इह लोके सुखं प्राप्य ते यान्ति परमाङ्गतिं ।
नमस्कुरुष्व कौन्तेय तस्मै शान्ताय वै सदा । रुद्राय शितिकण्ठाय कनिष्ठाय सुवर्च्चसे । ९५२०
कपर्द्दिने करालाय हर्य्यक्षवरदाय च । याम्यायारक्तकेशाय सद्वृत्ते शङ्कराय च ।
काम्याय हरिनेत्राय स्थाणवे पुरुषाय च । हरिकेशाय मुण्डाय कनिष्ठाय सुवर्च्चसे ।
भास्कराय सुतीर्थाय देवदेवाय रंहसे । बहुरूपाय सर्व्वाय प्रियाय प्रियवाससे ।
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे । गिरिशाय सुशान्ताय पतये चीरवाससे ।
हिरण्यबाहवे राजन्नुग्राय पतये दिशां । पर्जन्यपतये चैव भूतानां पतये नमः । ९५२५
वृक्षाणाम्पतये चैव गवाञ्च पतये तथा । वृक्षैरावृतकायाय सेनान्ये मध्यमाय च ।
स्रुवहस्ताय देवाय धन्विने भार्गवाय च । बहुरूपाय विश्वस्य पतये मुञ्जवाससे ।
सहस्रशिरसे चैव सहस्रनयनाय च । सहस्रबाहवे चैव सहस्रचरणाय च ।
शरणं गच्छ कौन्तेय वरदं भुवनेश्वरं । उमापतिं विरूपाक्षं दक्षयज्ञनिवर्हणं ।
प्रजानाम्पतिमव्यग्रं भूतानां पतिमव्ययं । कपर्द्दिनं वृषावर्त्तं वृषनाभं वृषध्वजं । ९५३०
वृषदर्पं वृषपतिं वृषशृङ्गं वृषर्षभं । वृषाङ्कं वृषभोदारं वृषभं वृषभेक्षणं ।
वृषायुधं वृषशरं वृषभूतं महेश्वरं । महोदरं महाकायं द्वीपिचर्म्मनिवासिनं ।
लोकेशं वरदं मुण्डं ब्रह्मण्यं ब्राह्मणप्रियं । त्रिशूलपाणिं वरदं खड्गचर्म्मधरं शुभं ।
पिनाकिनं खड्गधरं लोकानाम्पतिमीश्वरं । प्रपद्ये देवमीशानं शरण्यं चीरवाससं ।
नमस्तस्मै सुरेशाय यस्य वैश्रवणः सखा । सुवाससे नमो नित्यं सुव्रताय सुधन्विने । ९५३५
धनुर्धराय देवाय प्रियधन्वाय धन्विने । धन्वन्तराय धनुषे धन्वाचार्य्याय ते नमः ।
उग्रायुधाय देवाय नमः सुरवराय च । नमोऽस्तु बहुरूपाय नमस्ते बहुधन्विने ।
नमोऽस्तु स्थाणवे नित्यं नमस्तस्मै सुधन्विने । नमोऽस्तु त्रिपुरघ्नाय भगघ्नाय च वै नमः ।
वनस्पतीनाम्पतये नराणाम्पतये नमः । मातॄणाम्पतये चैव गणानाम्पतये नमः ।
गवाञ्च पतये नित्यं यज्ञानां पतये नमः । अपाञ्च पतये नित्यं देवानां पतये नमः । ९५४०
पूष्णोदन्तविनाशाय त्र्यक्षाय वरदाय च । हराय नीलकण्ठाय स्वर्णकेशाय वै नमः ।
कर्म्माणि यानि दिव्यानि महादेवस्य धीमतः । तानि ते कीर्त्तयिष्यामि यथाप्रज्ञं यथाश्रुतं ।
न सुरा नासुरा लोके न गन्धर्व्वा न राक्षसाः । सुखमेधन्ति कुपिते तस्मिन्नपि गुहागताः ।

दक्षस्य यजमानस्य विधिवत्संभृतं पुरा । विव्याध कुपितो यज्ञं निर्दयस्त्वभवत्तदा ।
धनुषा बाणमुत्सृज्य सघोषं विननाद च । तेन शर्म्म कुतः शान्तिं लेभिरे स्म सुरास्तदा । ९५४५
विद्रुते सहसा यज्ञे कुपिते च महेश्वरे । तेन ज्यातलघोषेण सर्व्वे देवाः समाकुलाः ।
बभूवुर्व्वशगाः पार्थ निपेतुश्च सुरासुराः । आपश्चुक्षुभिरे सर्व्वाश्चकम्पे च वसुन्धरा ।
पर्व्वताश्च व्यशीर्य्यन्त दिशो नागाश्च मोहिताः । अन्धेन तमसा लोका न प्राकाशन्त संवृताः ।
जघ्निवान् सह सूर्य्येण सर्व्वेषां ज्योतिषां प्रभां । चुक्षुभुर्भयभीताश्च शान्तिञ्चक्रुस्तथैव च ।
ऋषयः सर्व्वभूतानामात्मनश्च सुखैषिणः । पूषाणमभ्यद्रवत शङ्करः प्रहसन्निव । ९५५०
पुरोडाशं भक्षयतो दशनान् वै व्यशातयत् । ततो निश्चक्रमुर्द्देवा वेपमाना नताः स्म तं ।
पुनश्च सन्दधे दीप्तान् देवानां निशितान् शरान् । सधूमान् सस्फुलिङ्गांश्च विद्युत्तोयदसन्निभान् ।
तं दृष्ट्वा तु सुराः सर्व्वे प्रणिपत्य महेश्वरं । रुद्रस्य यज्ञभागञ्च विशिष्टं ते त्वकल्पयन् ।
भयेन त्रिदशा राजन् शरणञ्च प्रपेदिरे । तेन चैवातिकोपेन स यज्ञः सन्धितस्तदा ।
भग्नाश्चापि सुराश्चासन् भीताश्चाद्यापि तं प्रति । असुराणां पुराण्यासंस्त्रीणि वीर्य्यवतां दिवि । ९५५५
आयसं राजतञ्चैव सौवर्णं परमं महत् । सौवर्णं कमलाक्षस्य तारकाक्षस्य राजतं ।
तृतीयन्तु परं तेषां विद्युन्मालिन आयसं । न शक्तस्तानि मघवा भेत्तुं सर्व्वायुधैरपि ।
अथ सर्व्वे सुरा रुद्रं जग्मुः शरणमर्द्दिताः । ते तमूचुर्म्महात्मानं सर्व्वे देवाः सवासवाः ।
ब्रह्मदत्तवरा ह्येते घोरास्त्रिपुरवासिनः । पीडयन्त्यधिकं लोकं यस्मात्ते वरदर्पिताः ।
त्वदृते देवदेवेश नान्यः शक्तः कथञ्चन । हन्तुं दैत्यान्महादेव जहि तांस्त्वं सुरद्विषः । ९५६०
रुद्र रौद्रा भविष्यन्ति पशवः सर्व्वकर्म्मसु । निपातयिष्यसे चैतानसुरान् भुवनेश्वर ।
स तथोक्तस्तथेत्युक्त्वा देवानां हितकाम्यया । गन्धमादनविन्ध्यौ च कृत्वा वंशध्वजौ हरः ।
पृथ्वीं ससागरवनां रथं कृत्वा च शङ्करः । अक्षं कृत्वा तु नागेन्द्रं शेषं नाम त्रिलोचनः ।
चक्रे कृत्वा तु चन्द्रार्कौ देवदेवः पिनाकधृक् । अणी कृत्वैलपुत्रञ्च पुष्पदन्तञ्च त्र्यम्बकः ।
यूपं कृत्वा तु मलयं मवनाहञ्च तक्षकं । योक्त्राङ्गानि च सत्त्वानि कृत्वा सर्व्वः प्रतापवान् । ९५६५
वेदान् कृत्वाथ चतुरश्चतुरो अश्वान् महेश्वरः । उपवेदान् खलीनांश्च कृत्वा लोकत्रयेश्वरः ।
गायत्रीं प्रग्रहं कृत्वा सावित्रीञ्च महेश्वरः । कृत्वोङ्कारं प्रतोदञ्च ब्रह्माणञ्चैव सारथिं ।
गाण्डीवं मन्दरं कृत्वा गुणं कृत्वा च वासुकिं । विष्णुं शरोत्तमं कृत्वा शल्यमग्निं तथैव च ।
वायुं कृत्वाथ वाजाभ्यां पुङ्खे वैवस्वतं यमं । विद्युत्कृत्वाथ निश्रानं मेरुं कृत्वाथ वै ध्वजं ।
आरुह्य स रथं दिव्यं सर्व्वदेवमयं शिवः । त्रिपुरस्य वधार्थाय स्थाणुः प्रहरताम्वरः । ९५७०
असुराणामन्तकरः श्रीमानतुलविक्रमः । स्तूयमानः सुरैः पार्थ ऋषिभिश्च तपोधनैः ।
स्थानं माहेश्वरं कृत्वा दिव्यमप्रतिमं विभुः । अतिष्ठत् स्थाणुभूतः स सहस्रं परिवत्सरान् ।
यदा त्रीणि समेतानि अन्तरीक्षे पुराणि च । त्रिपर्व्वणा त्रिशल्येन तदा तानि बिभेद सः ।

पुराणि न च तं शेकुर्दानवाः प्रतिवीक्षितुं । शरं कालाग्निसंयुक्तं विष्णुसोमसमायुतं ।
पुराणि दग्धवन्तं तं देवी याता प्रवीक्षितुं । बालमङ्कगतं कृत्वा स्वयं पञ्चशिखं पुनः । ७८७५
उमा जिज्ञासमाना वै कोऽयमित्यब्रवीत् सुरान् । असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः ।
बाहुं सवज्रं तं तस्य क्रुद्धस्यास्तम्भयत् प्रभुः । प्रहस्य भगवांस्तूर्णं सर्व्वलोकेश्वरो विभुः ।
ततः संस्तम्भितभुजः शक्रो देवगणैर्वृतः । जगाम सह तैस्तूर्णं ब्रह्माणं प्रभुमव्ययं ।
ते तं प्रणम्य शिरसा प्रोचुः प्राञ्जलयस्तदा । किमप्यङ्कगतं ब्रह्मन् पार्व्वत्या भूतमद्भुतं ।
बालरूपधरं दृष्ट्वा नास्माभिरभिवादितः । तस्मात्त्वां प्रष्टुमिच्छामो निर्जिता येन वै वयं । ७८८०
अयुध्यता हि बालेन लीलया सपुरन्दराः । तेषां तद्वचनं श्रुत्वा ब्रह्मा ब्रह्मविदाम्वरः ।
ध्यात्वा स शम्भुं भगवान् बालञ्चामिततेजसं । उवाच भगवान् ब्रह्मा शक्रादींश्च सुरोत्तमान् ।
चराचरस्य जगतः प्रभुः स भगवान् हरः । तस्मात् परतरं नान्यत् किञ्चिदस्ति महेश्वरात् ।
यो दृष्टो ह्युमया सार्द्धं युष्माभिरमितद्युतिः । स पार्व्वत्याः कृते देवः कृतवान् बालरूपतां ।
ते मया सहिता यूयं प्रापयध्वं तमेव हि । स एव भगवान् देवः सर्व्वलोकेश्वरः प्रभुः । ७८८५
न सम्बुबुधिरे चैनं देवास्तं भुवनेश्वरं । सप्रजापतयः सर्व्वे बालार्कसदृशप्रभं ।
अथाभ्येत्य ततो ब्रह्मा दृष्ट्वा च स महेश्वरं । अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तं पितामहः ।
॥ ब्रह्मोवाच ॥ त्वं यज्ञो भुवनस्यास्य त्वं गतिस्त्वं परायणः । त्वं भवस्त्वं महादेवस्त्वं धाम परमं पदं ।
त्वया सर्व्वमिदं व्याप्तं जगत् स्थावरजङ्गमं । भगवन् भूतभव्येश लोकनाथ जगत्पते ।
प्रसादं कुरु शक्रस्य त्वया क्रोधार्द्दितस्य वै । ७८९०
॥ व्यास उवाच ॥ पद्मयोनेर्व्वचः श्रुत्वा ततः प्रीतो महेश्वरः । प्रसादाभिमुखो भूत्वा अट्टहासमथाकरोत् ।
ततः प्रसादयामासुरुमां रुद्रञ्च ते सुराः । अभवच्च पुनर्ब्बाहुः प्रकृतिस्थो हि वज्रिणः ।
तेषां प्रसन्नो भगवान् सपत्नीको वृषध्वजः । देवानां त्रिदशश्रेष्ठो दक्षयज्ञविनाशनः ।
स वै रुद्रः स च शिवः सोऽग्निः शर्व्वः स सर्व्ववित् । स चेन्द्रश्चैव वायुश्च सोऽश्विनौ स च विद्युतः ।
स भवः स च पर्ज्जन्यो महादेवः स चानघः । स चन्द्रमाः स चेशानः स सूर्य्यो वरुणश्च सः । ७८९५
स कालः सोऽन्तको मृत्युः स यमो रात्र्यहानि च । मासार्द्धमासा ऋतवः सन्ध्ये संवत्सराणि च ।
धाता च स विधाता च विश्वात्मा विश्वकर्म्मकृत् । सर्व्वासां देवतानाञ्च धारयत्यवपुर्व्वपुः ।
सर्व्वैर्द्देवैः स्तुतो देवः सैकधा बहुधा च सः । शतधा सहस्रधा चैव तथा शतसहस्रधा ।
द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः । घोरा चान्या शिवा चान्या ते तनू बहुधा पुनः ।
घोरा तु या तनुस्तस्य सोऽग्निर्व्विष्णुः स भास्करः । सौम्या तु पुनरेवास्य आपो ज्योतींषि चन्द्रमाः । ७९००
वेदाङ्गाः सोपनिषदः पुराणाध्यात्मनिश्चयाः । यदत्र परमं गुह्यं स वै देवो महेश्वरः ।
ईदृशश्च महादेवो भूयांश्च भगवानजः । नहि सर्व्वे मया शक्या वक्तुं भगवतो गुणाः ।
अपि वर्षसहस्रेण सततं पाण्डुनन्दन । सर्व्वैर्ग्रहैर्गृहीतान् वै सर्व्वपापसमन्वितान् ।

स मोचयति सुप्रीतः शरण्यः शरणागतान्। आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान्।
स ददाति मनुष्येभ्यः स चैवाक्षिपते पुनः। शक्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते। ९९०५
स चैव व्याहृतो लोके मनुष्याणां शुभाशुभे। ऐश्वर्याच्चैव कामानामीश्वरश्च स उच्यते।
महेश्वरश्च भूतानां महतामीश्वरश्च सः। बहुभिर्बहुधारूपैर्विश्वं व्याप्नोति वै जगत्।
तस्य देवस्य यद्वक्त्रं समुद्रे तदधिष्ठितं। वडवामुखेति व्याख्यातं पिबत्तोयमयं हविः।
एष चैव श्मशानेषु रुद्रो वसति नित्यशः। यजन्त्येनं जनास्तत्र वीरस्थान इतीश्वरं।
अस्य दीप्तानि रूपाणि घोराणि च बहूनि च। लोके यान्यस्य पूज्यन्ते मनुष्याः प्रवदन्ति च। ९९१०
नामधेयानि लोकेषु बहून्यस्य यथार्थवत्। निरुच्यन्ते महत्त्वाच्च विभुत्वात् कर्म्मणस्तथा।
वेदे चास्य समाख्यातं शतरुद्रियमुत्तमं। नाम्ना चानन्तरुद्रेति ह्युपस्थानं महात्मनः।
स कामानां प्रभुर्द्देवो ये दिव्या ये च मानुषाः। स विभुः स प्रभुर्द्देवो विश्वं व्याप्नोति वै महत्।
ज्येष्ठं भूतं वदन्त्येनं ब्राह्मणा मुनयस्तथा। प्रथमो ह्येष देवानां मुखादस्यानलोऽभवत्।
सर्व्वथा यत् पशून् पाति तैश्च यद्रमते पुनः। तेषामधिपतिर्यच्च तस्मात् पशुपतिः स्मृतः। ९९१५
दिव्यञ्च ब्रह्मचर्य्येण लिङ्गमस्य यथास्थितं। महयत्येष लोकांश्च महेश्वर इति स्थितः।
ऋषयश्चैव देवाश्च गन्धर्व्वाप्सरसस्तथा। लिङ्गमस्यार्च्चयन्ति स्म तच्चाप्यूर्द्ध्वं समास्थितं।
पूज्यमाने ततस्तस्मिन्मोदते च महेश्वरः। स्वयम्प्रीतश्च भवति प्रहृष्टश्चैव शङ्करः।
यदस्य बहुधा रूपं भूतभव्यभवस्थितं। स्थावरं जङ्गमञ्चैव बहुरूपस्ततः स्मृतः।
एकाक्षो जाज्वलन्नास्ते सर्व्वतोऽक्षिमयोऽपि वा। क्रोधाद्यच्चाविशल्लोकांस्तस्मात् सर्व्व इति स्मृतः। ९९२०
धूम्ररूपञ्च यत्तस्य धूर्जटिस्तेन चोच्यते। विश्वेदेवाश्च यत्तस्मिन् विश्वरूपस्ततः स्मृतः।
समेधयति यन्नित्यं सर्व्वार्थान् सर्व्वकर्म्मसु। शिवमिच्छन्मनुष्याणां तस्मादेव शिवः स्मृतः।
सहस्राक्षोऽयुताक्षो वा सर्व्वतोऽक्षिमयोऽपि वा। यच्च विश्वं महत् पाति महादेवस्ततः स्मृतः।
तिस्रो देवीर्यदा चैव भजते भुवनेश्वरः। द्यामपः पृथिवीञ्चैव त्र्यम्बकश्च ततः स्मृतः।
महत् पूर्व्वं स्थितो यच्च प्राणोत्पत्तिस्थितेश्च यत्। स्थितलिङ्गश्च यन्नित्यं तस्मात् स्थाणुरिति स्मृतः। ९९२५
सूर्य्याचन्द्रमसोर्लोके प्रकाशन्ते रुचश्च याः। ते केशसंज्ञितास्त्र्यक्षे व्योमकेशस्ततः स्मृतः।
कपिश्रेष्ठ इति प्रोक्तो धर्म्मश्च वृष उच्यते। स देवदेवो भगवान् कीर्त्यतेऽस्माद्वृषाकपिः।
ब्रह्माणमिन्द्रं वरुणं यमं धनदमेव च। निगृह्य हरते यस्मात् तस्माद्धर इति स्मृतः।
निमीलिताभ्यां नेत्राभ्यां बलाद्देवो महेश्वरः। ललाटे नेत्रमसृजत्तेन त्र्यक्षः स उच्यते।
विषमस्थः शरीरेषु समश्च प्राणिनामिह। स वायुर्विषमस्थेषु प्राणोपानः शरीरिषु। ९९३०
पूजयेद्विग्रहं यस्तु लिङ्गं वापि समर्च्चयेत्। लिङ्गं पूजयिता नित्यं महतीं श्रियमश्नुते।
ऊरुभ्यामर्द्धमाग्नेयं सोमार्द्धञ्च शिवा तनुः। आत्मनोऽर्द्धं तथा चाग्निः सोमार्द्धं पुनरुच्यते।
तैजसी महती दीप्ता देवेभ्योऽस्य शिवा तनुः। भास्वती मानुषेष्वस्य तनुर्घोराग्निरुच्यते।

ब्रह्मचर्य्यञ्चरत्येष शिवाचास्य तनुस्तथा । यास्य घोरतरा मूर्त्तिः सर्व्वानत्ति तथेश्वरः ।
यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान् । मांसशोणितमज्जादो यत्ततो रुद्र उच्यते । ९९१५
एष देवो महादेवो योऽसौ पार्थ तवाग्रतः । सततं शात्रवान्निघ्नंस्त्वया दृष्टः पिनाकधृक् ।
सिन्धुराजवधार्थाय प्रतिज्ञाय त्वयाऽनघ । कृष्णेन दर्शितः स्वप्ने यस्तु शैलेन्द्रमूर्द्धनि ।
एष वै भगवान् देवः संग्रामे याति तेऽग्रतः । तेन दत्तानि शस्त्राणि यैस्त्वया दानवा हताः ।
धन्यं यशस्यमायुष्यं पुण्यं वेदैश्च सम्मितं । देवदेवस्य ते पार्थ व्याख्यातं शतरुद्रियं ।
सर्व्वार्थसाधकं पुण्यं सर्व्वकिल्बिषनाशनं । सर्व्वपापप्रशमनं सर्व्वदुःखविनाशनं । ९९२०
चतुर्व्विधमिदं स्तोत्रं यः शृणोति नरः सदा । विजित्य सर्व्वान् शत्रून् स रुद्रलोके महीयते ।
चरितं महात्मनो दिव्यं सांग्रामिकमिदं शुभं । पठन् वै शतरुद्रीयं शृण्वंश्च सततोत्थितः ।
भक्तो विश्वेश्वरं देवं मानुषेषु तु यः सदा । वरान् सकामाल्लभते प्रसन्ने त्र्यम्बके नरः ।
गच्छ युध्यस्व कौन्तेय न तवास्ति पराजयः । यस्य मन्त्री च गोप्ता च पार्श्वस्थो हि जनार्द्दनः ।
॥ सञ्जय उवाच ॥ एवमुक्त्वाऽर्ज्जुनं संख्ये पराशरसुतस्तदा । जगाम भरतश्रेष्ठ यथागतमरिन्दम । ९९२५
युद्धं कृत्वा महाघोरं पञ्चाहानि महाबलः । ब्राह्मणो निहतो राजन् ब्रह्मलोकमितो गतः ।
स्वधीते यत् फलं वेदे तदस्मिन्नपि पर्व्वणि । क्षत्रियाणामभीरूणां स शुभं ख्यापयेद्यशः ।
पठेदिदं पर्व्वमहार्थसंयुतं रणे जयः पाण्डववृष्णिसिंहयोः । सदा शुभं यः शृणुयाच्च तत्परः स मुच्यते पापकृतैः स्वकर्म्मभिः ।
यज्ञावाप्तिर्ब्राह्मणस्येह नित्यं ख्यातिर्नित्यं क्षत्रियाणां जयश्च । शेषौ वर्णौ काममिष्टं लभेते पुत्रान् पौत्रान् नित्यमिष्टांस्तथैव ।
इति श्रीमहाभारते द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि शतरुद्रीये द्व्यधिकद्विशततमोऽध्यायः ॥ समाप्तञ्च नारायणास्त्रमोक्ष पर्व्व ॥

समाप्तमिदं वैयासिक्यां संहितायां द्रोणपर्व्व ।

अत्र पर्व्वणि व्यासकृतावान्तरपर्व्वश्लोकादिसङ्ख्यातो न्यूनाधिक्यं यदुपलभ्यते तदा पूर्व्वपूर्व्वादर्शलिपिकरप्रमादात्तदिति ज्ञेयं ॥